# चरकसंहिता।

महामुनिना भगवताग्निवेशेन प्रणीता
महर्षि चरकेण प्रतिसंस्कृता।

---

चरकचतुराननश्रीमच्चक्रपाणिदत्तप्रणीतया आयुर्व्वेददीपिकाख्यटीकया
महामहोपाध्याय श्रीगङ्गाधरकविरत्नकविराजविरचितया जल्प-
कल्पतरुसमाख्यया टीकया च समलङ्कृता।

---

कविराज श्रीनरेन्द्रनाथ सेनगुप्तेन
कविराज श्रीबलाइचन्द्र सेनगुप्तेन च
सम्पादिता संशोधिता प्रकाशिता च।

---

( आद्यः खण्डः। )

प्रथमं संस्करणम्।

कलिकातानगर्य्यां
कलुटोलाभ्यन्तरीणसप्ततिसंख्यकभवनस्थ-
धन्वन्तरि-स्टीम-मेशिनयन्त्रे
श्रीदीननाथदेवेन
मुद्रिता।

शकाब्दाः १८५५।

मूल्यं सार्द्धसप्तरूप्यकमितम्

# विज्ञापनम् ।

इह खलु निखिलचिकित्साशास्त्राणां प्राणभूताया आयुर्व्वेदसंहितानाम् मुकुटायमानाया गभीरार्थसङ्कुलतया विदुषामपि दुरधिगमायाश्चरक-संहिताया अध्ययनाध्यापनोपयोगिनो विशुद्धसंस्करणस्य सर्व्वथा अभावो-ऽनुभूयते आयुर्व्वेदानुरागिभिः सुधीभिः। अस्य प्रतिकारोपायं चिन्तयन्तः केचन महात्मानः संस्कृतटीकया भाषाटीकया च समन्वितामेनां मुद्रयित्वा प्रकाशितवन्तः। परन्तु असम्पूर्णतया दुष्प्रापतया विद्यार्थिनां मनसोऽननु-कूलतया च तयाप्यभावः स्वभावं नातिक्रान्तः। आयुर्व्वेदचिकित्सायाः प्रचारबहुले अस्मिन् काले कलिकातानगर्य्यामस्याः सर्व्वाङ्गसुन्दरं संस्करणं न जातमित्यनुशोचतां चिकित्सकानामनुरोधेन साम्प्रतमस्माभिरस्याः टीकाद्वय-सहितं संस्करणं प्रारब्धं, सूत्रस्थानात्मकः प्रथमखण्डः प्रकाश्यं नीतश्च। शेषाश्च सत्वरं प्रकाश्यन्ते।

महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्त-विरचिता आयुर्व्वेद-दीपिकाख्या टीका तथा सुगृहीतनाम्नो वैद्यगङ्गाधरस्य गङ्गाप्रवाहवत् वाञ्छिताधिकफलप्रसूः विपुलविमलकृतिः जल्पकल्पतरुसमाख्या व्याख्या अत्र संस्करणे सन्निवेशिता, सत्यप्यत्र नितरां व्ययबाहुल्ये परिश्रमबाहुल्ये च अध्यापकाध्ययनार्थिनां पठनपाठनासौकर्य्यार्थं सटीकचरकसंहिताया अभावपूरणार्थं गङ्गाधरस्य लुप्तप्रायकीर्त्तेरक्षार्थञ्च वयमत्र धनैः प्राणैश्च प्रयतामहे।

साम्प्रतमाशास्महे सुसंस्कृतेयं चरक-संहिता विद्यार्थिनामध्यापकानाम् आयुर्व्वेदानुरागिणाञ्च चित्ततोषमुत्पादयिष्यतीति।

एतादृशे यत्नबाहुल्येऽपि मुद्रणदोषात् वैद्युतिकयन्त्रसंघर्षाच्च अस्यां संयुक्तेकार-उकारादीनि अक्षराणि बहूनि त्रुटितानि, त्रुटिरेषा संशोधनीया सहृदयपाठकैः क्षन्तव्याश्च वयम्।

उपसंहारकाले वक्तव्यम्—अस्याश्चरकसंहितायाः संस्करणे संशोधने च अस्मदायुर्व्वेदविद्यालयाध्यापकेन आयुर्व्वेदशास्त्राटवीसञ्चरणपञ्चाननेन परम-पूज्यपादश्रीयुक्तकविराजचन्द्रशेखरकविरत्नेन असाधारणो यत्नः श्रमश्च कृतः,

अतो वयं तत्समीपे चिरकृतज्ञतापाशेन बद्धाः स्मः। आयुर्व्वेदशैलीकुशलेन कविराज-श्रीयुक्तकुञ्जविहारिकाव्यतीर्थ-धन्वन्तरिणा तथा कविराजवाग्मि-श्रीकार्त्तिकचन्द्र गुप्तेन अत्र महान् श्रमः कृतः अतस्तयोरपि सकाशे चिरकृतज्ञाः स्मः।

वैयाकरणकेशरी पण्डितप्रवरः श्रीयुक्तधीरानन्दकाव्यनिधिरपि अस्याः संशोधनादिविषये यादृशं यत्नं कृतवान् तस्मात् तमपि वयं सकृतज्ञाः स्मरामः।

संस्करणेऽस्मिन् अस्मद्भ्रातरोऽपि अतीव परिश्रमं कृतवन्तः, तेन वय-मानन्दसन्दोहं लभामहे।

आयुर्व्वेदाब्धिमन्थान् समभवदतुलः कौस्तुभो दिव्यरत्नं
तेने कान्तिं मनोज्ञां जगति च चरको यत्नतश्चक्रपाणेः।
काले क्षीणप्रभो यो विलसतु नितरां वैद्यवंशावतंस-
श्रीमद्गङ्गाधरस्यामलतरविवृतेराश्रयात् साम्प्रतं सः॥

शकाब्दाः—१८४९
श्रावणी पौर्णमासी।

कविराज-श्रीनरेन्द्रनाथ-सेनगुप्तः।
तथा
कविराज-श्रीबलाइचन्द्र-सेनगुप्तः।

## अष्टमोऽध्यायः ।



## नवमोऽध्यायः ।



## दशमोऽध्यायः ।

### सप्तदशोऽध्यायः



### अष्टादशोऽध्यायः ।

## द्वाविंशोऽध्यायः



## त्रयोविंशोऽध्यायः



## चतुर्विंशोऽध्यायः।

# सूत्रस्थानस्य सूचीपत्रम्

समाप्तमिदं सूत्रस्थानस्य सूचीपत्रम्

# चरक-संहिता।

## सूत्रस्थानम्।

### प्रथमोऽध्यायः।

अथातो दीर्घञ्जीवितीयमध्यायं व्याख्यास्यामः,
इति ह स्माह भगवानात्रेयः॥ १॥

गङ्गाधरः—यतः स्फुरन् दृष्टफलः स्वचित्ते येनोक्त आयुर्निगमः प्रमाणम्।
तस्मादिमात्तं पुरुषप्रधानं सेवामहेऽव्यक्तमहेतु तत्त्व॥

वक्तुर्दृष्टफलस्य यस्य परमेशेनोदितत्वादिह
प्रामाण्यं निगमेषु सिध्यति किलादृष्टार्थसामादिषु।
सत्यं शाश्वतमुत्तमोत्तमतमं शास्त्रेषु सर्व्वेषु वा
आयुर्व्वेदमुपास्महे वयमिमं तं सर्व्वविद्याकरम्॥

चक्रपाणिः—गुणत्रयविभेदेन मूर्त्तित्रयमुपेयुषे।
त्रयीभुवे त्रिनेत्राय त्रिलोकीपतये नमः॥
सरस्वत्यै नमो यस्याः प्रसादात् पुण्यकर्मभिः।
बुद्धिदर्पणसंक्रान्तं जगद्दृश्यमवीक्ष्यते॥
[illegible]
[illegible] नमः॥

एकैकमेकैकमुनिर्यदीयं मतं समाश्रित्य चकार शास्त्रम्।
जयत्यसौ सोऽखिलशास्त्रविद्या-कल्पद्रुमः सर्व्वफलोदयस्त्वा(?) ॥
व्याख्यायतेऽतिविशदं मया चरक-संहिता।
यत्नेन कविरत्नेन श्रीमद्गङ्गाधरेण तु ॥

अथ खलु सुकृतदुरितनिदानकसुखदुःखमोक्षनिदाननिखिलफलमुख्यचरम-परमानन्दमयमोक्षमुख्यप्रयोजनसाधनधर्म्मोत्पादनराजसतामसमानससकलमल-विशोधनविधिविहितकर्म्माचरणमूलयथाभीष्टधनगणसाधनकामनासिद्धौ परम-साधनमेव मानुषिकादिवैशेषिकदेहविधारणं तदपि दीर्घदीर्घतरजीवितमूलक-मित्येव मनसि निहिताकूतो विधूतभ्रमसंशयवितण्डः पण्डिताभियुक्तो युक्तोपलब्ध्युपलब्धत्रैकालिकत्रैलोकिकसकलतत्त्वो महातपा मुनिवरचरको भगवदात्रेय-पुनर्व्वसूपदिष्टायुर्व्वेद-व्यास-भगवन्मुनिवराग्निवेश-विततायुर्व्वेद-तन्त्रं प्रतिसंश्चिकीर्षयाऽतिविपुलस्थूलधीभिषजां हृदये विधारणाय परमानुजिघृक्षया विशद-मधुर-प्रसाद-गुणगणोज्ज्वल-वर्णपदमुक्ताफलजालैरशेषविशेषेणाखिलार्थ-तत्त्वसूत्रेणेमं चिन्तामणिद्रुमणिकान्तकान्ततरलत्रिहारहारं शारीरमानसागन्तु-दोष-दूषित-धातुवैषम्य-ज-सौम्याग्नेय-विकार-निकरोपहत-विकल-कलेवर-चेतसां स्वास्थ्यसंस्थापनोत्पादनार्थमतुलनिर्म्मलकरुणार्द्रचेतसाऽग्रन्थीत्।

तं बहुधा सुविचिन्त्य रविकान्तमिवानवशेषाद् भाष्यम्।
चिन्तामणिमयतरलं शेषभाषितमप्याग्यमस्य ॥

पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः।
मनोवाक्कायदोषाणां हर्त्रेऽहिपतये नमः ॥
नरदत्तगुरुच्छिष्ट-चरकार्थानुगामिनी।
क्रियते चक्रदत्तेन टीकायुर्वेददीपिका ॥

सभ्याः! सद्गुरुवाक्सुधाञ्जलिपरिस्फीतपुर्णाश्रयो
नाऽलं तोषयितुं पयोऽपयसा भाष्योर्मिभिस्तृप्यति।
व्याख्याभास्करसप्रकाशनमिदं त्वस्मिन् यदि प्राप्यते
क्वापि क्वापि कणो गुणस्य तदसौ कर्णे क्षणं दीयताम् ॥

इह हि धर्म्मार्थकाममोक्षपरिपन्थिरोगोपशमाय ब्रह्मप्रभृतिभिः प्रणीतायुर्वेदतन्त्राणामति-विस्तरत्वेन सम्प्रति वर्षशतमानात्यायुष्मतां पुरुषाणां न सम्यगर्थाधिगमः, तदनधिगमाच्च तद्विहितार्थानामननुष्ठाने तथैवोपप्लवो स्यादिति मन्वानः परमकारुणिकोऽग्निवेशोऽल्पायु-ष्मतां अस्माकमपि सुखोपलम्भार्थं नातिसंक्षेपविस्तरं कायचिकित्साप्रधानमायुर्वेदतन्त्रं अग्निवेशाख्य-

जल्पकल्पतरुरेष निर्मितः कल्पयत्यभिचिन्तितं फलम् ।
जल्पितो हि सुधिया सुधीगणैर्लभ्यमप्यमलं रसोत्तमम् ॥

तत्र प्रथममेव ग्रन्थसन्दर्भारम्भे तदसमापनकारणविघ्नविनाशनपरमाप्ताचारपरम्परापरिप्राप्तमङ्गलाचरणमुचितमिति तदाचरणीयत्वे प्रचुरतरविघ्नशङ्काशङ्कितचेतसा प्रचुरतरविघ्नप्रशमाय प्रचुरतरमङ्गलमेव शिष्यशिशिक्षयिषया प्रत्यध्यायमग्रतोऽथशब्दोपादानेनाचचार ।

तत्रादावेवोक्तसङ्गत्या दीर्घञ्जीवितस्य अतिशयप्रयोजनकत्वात् तन्निदानस्थानत्वेन दीर्घञ्जीवितीयाध्यायस्य प्राधान्यात् व्याख्यारम्भे प्रथमं मङ्गलमाचरति । अथात इत्यादि ।—अथशब्दो मङ्गलार्थः । यत्किञ्चित् कर्म्मोपक्रमे विघ्नोपशमाय मङ्गलमेवाचरणीयमिति प्रसिद्धसिद्धान्ते भगवता जगद्विधात्रा वर्णात्मकशब्दसिसृक्षया प्रेरितेन प्राणवायुना हृदिस्थितेनवोर्द्ध्वं चलता कण्ठस्थितोदानपवनेन मिलता प्रयत्नविशेषेणाहतादेव कण्ठादुत्पाद्यमानस्य तस्य ओङ्कारस्य चाग्र एवाविर्भावात् ।

अत इत्येतत् तु अव्यवच्छिन्ने सामीप्यावच्छिन्ने वा बुद्धिस्थे शक्तायुर्व्वेदीयतन्त्रोपस्थापकादेतच्छब्दादधिकरणे सप्तम्यास्तसिल्. तेन अत्र आयुर्व्वेदीयतन्त्रे

वान् । तस्मिंश्च श्लोकनिदानविमानशारीरेन्द्रियचिकित्सितकल्पसिद्धिस्थानात्मकेऽभिधातव्ये निखिलतन्त्रप्रधानार्थाभिधायकतया श्लोकस्थानमेवाग्रे वक्तव्यममन्यत । वक्ष्यते हि 'श्लोकस्थानं समुद्दिष्टं तन्त्रस्यास्य शिरः शुभम् । चतुष्काणां महार्थानां स्थानेऽस्मिन् संग्रहः कृतः" इति ।

तत्र च मूलस्थानेऽप्युपक्रमरोगग्रहणे त्वरया रोगोपघातिभेषजाभिधायिचतुष्केऽभिधातव्ये निखिलतन्त्रबीजभूतहेतुलिङ्गौषधात्मकं स्य तथा तन्त्रप्रवृत्तप्रयोजनवदायुर्व्वेदागमादेरभिधायकं दीर्घञ्जीवितीयमध्यायमभिधातुमारब्धवान् ।

श्रोतृजनप्रवृत्तिहेत्वभिधेयप्रयोजनसम्बन्धोपदर्शकं श्रोतृबुद्धिसमाधानाय व्याख्यानप्रतिज्ञापरमष्टपदम् अष्टसंख्याया मङ्गलत्वेनादौ सूत्रं निवेशितवान् 'अथातो दीर्घञ्जीवितीयमध्यायं व्याख्यास्यामः" इति । यतो निरभिधेये सप्रयोजने काकदन्तपरीक्षादौ साभिधेये वा प्रयोजनशून्ये काकदन्तपरीक्षादौ प्रेक्षावतां प्रवृत्तिर्नोपलभ्यते, तेनादावभिधेयप्रयोजनेऽभिधातव्ये, यदुक्तं "अभिधेयफलज्ञान-विरहस्तिमितोद्यमाः । श्रोतुमल्पमपि ग्रन्थं नाद्रियन्ते हि साधवः" । अभिधेयवत्प्रयोजनवत्सम्बन्धोऽप्यभिधेयशास्त्रयोरभिधानाभिधेयलक्षणः सम्बन्धः प्रयोजनशास्त्रयोश्च साध्यसाधनभावलक्षणोऽभिधातव्यः ।

तत्र ह्यभिधेयं हिताहितादिरूपेणायुः, वक्ष्यते हि "हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् । मानञ्च तच्च यत्रोक्तमायुर्व्वेदः स उच्यते" इति, । अत्र च सर्व्वाभिधेयावरोधो यथास्थानमेव व्यक्तकरणीयः । प्रयोजनं धातुसाम्यम्, यथोक्तं "धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्"

इत्यर्थः। किञ्च वाचनिकमङ्गलाचरणमन्तरेण मनसापि मङ्गलाचरणाद् विघ्नोपशमो भवतीति शिष्यशिक्षार्थं स्वयं मनसा कृताभिमतदेवताप्रणामेन आचरितमङ्गलज्ञापनार्थम् आनन्तर्य्यार्थकाथशब्दमादौ निबबन्ध। तथाच अत इत्येतच्छब्दात् पञ्चम्यास्तसिल्; तेनातो मनसा कृताभिमतदेवताप्रणामजनितमङ्गलाचरणात् अथानन्तरं दीर्घञ्जीवितीयमध्यायं व्याख्यास्याम इति योजना।

किञ्च शास्त्रं नासङ्गतं प्रयुञ्जीतेत्यत एतद्ग्रन्थप्रणयने का सङ्गतिरित्याशङ्कायां शिष्यजिज्ञासानन्तरमेतद्दीर्घञ्जीवितीयाध्यायाद्यनेकग्रन्थस्योत्तरत्वज्ञापनार्थमादौ

इति। सम्बन्धोऽप्यायुःशास्त्रयोरभिधानाभिधेयलक्षणः, प्रयोजनेन च धातुसाम्येन समस्तस्य शास्त्रस्य हेयोपादेयज्ञानावान्तरव्यापारस्य साध्यसाधनभावलक्षणः। तदेतत् सर्वं दीर्घञ्जीवितीयमित्यनेन पदेन दीर्घञ्जीवितशब्दमधिकृत्य कृतप्रयोजनाद्यभिधायकं "धातुसाम्यक्रिया चोक्ता" इत्यादिवाक्याभिधायकेन दर्शितं मन्तव्यम्।

ननु प्रयोजनाभिधानं शास्त्रप्रवृत्त्यर्थमिति यदुक्तं तन्न युक्तं, यतो न प्रयोजनाभिधानमात्रेण प्रयोजनवत्तावधारणम्, विप्रलम्भकसंसारमोचनप्रतिपादकादिशास्त्रेषु प्रयोजनाभिधानेऽपि निष्प्रयोजनत्वदर्शनात्। अथ मन्यसे—आप्तप्रयोजनाभिधानमेतत्, तत् कुतोऽयथार्थत्वम्? ननु भोः कथमयं प्रयोजनाभिधायी आप्तः? तदभिहितशास्त्रस्य यथार्थत्वादिति चेत्; हन्त, न यावच्छास्त्रस्य प्रयोजनवत्त्वावधारणं न तावच्छास्त्रप्रवृत्तिः, न यावच्छास्त्रप्रवृत्तिः न तावच्छास्त्रस्य यथार्थत्वावधारणम्, न यावच्छास्त्रस्य यथार्थत्वावधारणं न तावच्छास्त्रस्य कर्त्तुराप्तत्वमवधार्य्यते, आप्तत्वानवधृतौ च कुतस्तदभिहितप्रयोजनवत्तावधारणमिति चक्रकमापद्यते। अथ मन्यसे मा भवतु प्रयोजनवत्तावधारणम्, अर्थं रूपप्रयोजनवत्तासन्देह एव प्रवर्त्तको भविष्यति, कृष्यादावपि हि प्रवृत्तिरर्थसन्देहादेव, न हि तत्र कृषीवलानां फललाभावधारणं विद्यते, अन्तरा अवग्रहादेरपि सम्भाव्यमानत्वात्।

नन्वेवमसत्यपि प्रयोजनाभिधाने सप्रयोजननिष्प्रयोजनशास्त्रदर्शनात् शास्त्रत्वमेव प्रयोजनवत्तासन्देहोपपादकमस्तु, तथाप्यलं प्रयोजनाभिधानेन। नैवम्। न हि सामान्येन प्रयोजनसन्देहः प्रयोजनविशेषार्थिनं तथा प्रवर्त्तयति, यथाभिप्रेतप्रयोजनविशेषविषयः सन्देहः, अभिप्रेतविशेषविषयश्च सन्देहो न विशेषविषयस्मरणमन्तरा भवति, अतो ये तावदनवधृताग्निवेशप्रामाण्यास्तेषां धातुसाम्यसाधनमिदं शास्त्रं न वेत्येवमाकारविशेषसन्देहोपपादनार्थं प्रयोजनविशेषाभिधानम्। ये पुनः परमर्षेरग्निवेशस्याप्त एवावधृतप्रामाण्यास्तेषां तदभिहितप्रयोजनवत्तावधारणेनैव प्रवृत्तिरिति युक्तं प्रयोजनाभिधानं, प्रयोजनाभिधायिवाक्ये तु स्वल्पसमयबोध्ये प्रयोजनसामान्यसन्देहादेव प्रवृत्तिरुपपन्ना, न पुनरनेकसंवत्सरशक्यबोध्ये शास्त्रे। तदेवं यदुच्यते प्रयोजनाभिधायिवाक्यप्रवृत्तावपि प्रयोजनमभिधातव्यं तथा चानवस्थेति तन्निरस्तं भवति।

आनन्तर्य्यार्थोऽथशब्द निबद्धवान। तत्र शिष्याणामियं जिज्ञासा—इह खलु लोके लोकानां सकलदुःखमुक्ते मोक्षे गवेषणीये तत्त्वज्ञानमेव मूलं, तत्र पुनर्मुमुक्षुत्वं, तत्र शमदमादि, तत्र च पारत्रिकैहिकफलभोगविरागः, तत्र सत्यासत्यवस्तुविवेकः, तत्र बुद्धिः, तत्र मनःशुद्धिः, तत्र नित्यक्रिया, तत्र नैमित्तिककर्म्म गुरुदेवभूदेवाराधनं, तत्र धनं, तत्र जीवितं, तत्रारोग्यं हेतुः। तदारोग्यं दीर्घायुश्च कथं भवतीति जिज्ञासानन्तरं स्वस्थातुरपरायणायुर्व्वेदं तदारोग्यदीर्घजीवितोपायविधिजिज्ञासोर्ऽयस्य तदारोग्यदीर्घजीवितोपायविधिज्ञानस्य विषयतया आरोग्यदीर्घजीवितोपायविधिरूपसङ्गतिमतोऽत्राभिधानमपत्वमिति बोध्यम्। अतोऽथेत्यकरणात पञ्चम्याः सप्तम्याश्च तसिल् व्याख्याद्वयेन बोध्यः। तथा चातः शिष्यप्रश्नादथानन्तरमित्येकवारमन्वितमत इति पदमावृत्त्या सप्तम्यन्तत्वेनोपलभ्यमानं पुन-

अथेत्यादि सूत्रे अथशब्दो ब्रह्मादिप्रणीतनन्त्वं स्वल्पायुर्म्मेधसामर्थानवधारणस्य तथाभीष्टदेवतानमस्कारशास्त्रकरणार्थगुर्व्वाज्ञालाभयोरानन्तर्य्ये प्रयुक्तोऽपि शास्त्रादौ स्वरूपेण मङ्गलं भवति दकाहरणप्रवृत्तोदकुम्भदर्शनमिव प्रस्थितानाम् ग्रन्थादौ मङ्गलमेवाविरतान्तरायाणां ग्रन्थकृत् श्रोतणामविघ्नेनेष्टलाभो भवतीति युक्तं मङ्गलोपादानम्। अथशब्दस्य मङ्गलत्वे स्मृतिः "ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ"॥ शास्त्रान्तरे चादौ मङ्गलत्वेन दृष्टोऽयमथशब्दः, यथा "अथ शब्दानुशासनम्," "अथातो धर्म्मं व्याख्यास्यामः" इत्यादौ। अभीष्टदेवतानमस्कारस्तु ग्रन्थादौ शिष्टाचारप्राप्तः परमशिष्टेनाग्निवेशेन कृत एव, अन्यथा शिष्टाचारलङ्घनेन शिष्टत्वमेव न स्यात व्याख्यानान्तरायभयात्, तथा ग्रन्थानिवेशितत्वापि नमस्कारस्य प्रत्यवायापहत्वाच्च न ग्रन्थनिवेशनम्। यथा च गुर्व्वाज्ञालाभानन्तरमेतत् तन्त्रकरणं तथा "अथ मैत्रीपरः पुण्यम्" इत्यादौ स्फुटमेव। ग्रन्थकरणे च गुर्व्वानुमतिप्रतिपादनेन ग्रन्थस्योपादेयता प्रदर्शिता भवति। यत् पुनः शिष्यप्रश्नानन्तर्य्यार्थत्वमथशब्दस्य वर्ण्यते तत्र तां भिनत्ति, न हि शिष्यान् गुरो व्यवस्थाप्य शास्त्रं क्रियते। श्रोतृबुद्धिस्वीकारे तु शास्त्रकरणं युक्तम्, न च बुद्धिस्थीकृताः प्रष्टारो भवन्ति।

अतःशब्दोऽधिकारप्रागवच्युपदर्शकः, अत ऊर्द्ध्वं यदुपदेक्ष्यामो दीर्घंजीवितीयं तदिति। यदि वा हेतौ, येन, ब्रह्मादिप्रणीतायुर्व्वेदतन्त्राणामुक्तेन न्यायेनोत्सन्नत्वात्वमिव †, अतो हेतोर्दीर्घंजीवितीयं व्याख्यास्याम इति योजनीयम्।

दीर्घंजीवितीयमित्यत्र दीर्घंजीवितशब्दोऽस्मिन्नस्तीति मत्वर्थे "अध्यायानुवाकयोर्लुक् च" इति छप्रत्ययः, यदि वा दीर्घंजीवितमधिकृत्य कृतो ग्रन्थोऽध्यायरूपसन्दर्भो वा इत्यस्यां विवक्षायामधिकृत्य कृते ग्रन्थे इत्यधिकारात् "शिशुक्रन्दयमसभ" इत्यादिना छः। एवमन्यत्राप्येवं ज्ञातव्यम्। अत एवापि शास्त्रान्तरे दीर्घंजीवितशब्देनैव संज्ञा कृता, दीर्घंजीवित-

† उत्सन्नत्वमिवेति पाठान्तरम्।

दीर्घञ्जीवितीयादावन्वेतव्यम् । तेनातः शिष्यप्रश्नादथानन्तरमतोऽस्मिन् वक्तव्ये स्वस्थातुरपरायणायुर्व्वेदे दीर्घञ्जीवितीयाध्यायं व्याख्यास्याम इत्यर्थः । अथात्रोत्तरवचनप्रयोजकप्रश्नोद्देश्यज्ञानविषयो हि सङ्गतिः षोढा, यथोक्ता च— "उपोद्घातः प्रसङ्गश्च हेतुतावसरस्तथा । निर्व्वाहकैककार्य्यत्वे षोढा सङ्गतिरुच्यते ॥" तत्र प्रकृतोपपादकत्वमुपोद्घातकत्वम्, स्मृतस्योपेक्षानर्हत्वं प्रसङ्गत्वम्, हेतुता तस्य फलरूपार्थस्य कारणत्वम्, अवसरत्वं पूर्व्वोक्तस्य सामान्यस्य प्रभेदस्य चाशेषविशेषेण निरूपणादाकाङ्क्षाविरहः, अङ्गप्रत्यङ्गाभ्यां प्रकृतस्य निष्पादकत्वं निर्वाहकत्वम्, तत्कार्य्यहेतुत्वमेककार्य्यत्वमिति; आसु षट्सु सङ्गतिषु मध्येऽत्रोपोद्घात एव सङ्गतिः । स्वस्थातुरपरायणविधिबोधकवाक्यलक्षणोत्तरदर्शनात् पदार्थाख्यतत्रयुक्तौ वा आरोग्यदीर्घायुर्जननोपायविषयेव जिज्ञासायां

शब्दस्यैव प्रवचनादौ निवेशात् प्रशस्तत्वाच्च । दीर्घञ्जीवितशब्दोऽस्मिन्नस्तीति दीर्घञ्जीवितशब्दमधिकृत्य कृतो वेदनया व्युत्पत्त्या दीर्घञ्जीवितीयशब्दस्तस्मिन्नध्याये च प्रवर्त्तनीयः । तेन दीर्घञ्जीवितीयं व्याख्यास्याम इत्यनेन तन्त्रं प्रति व्याख्यानप्रतिज्ञा लब्धा भवति, पुनर्दीर्घञ्जीवितीयमिति पदस्यावर्त्तनेऽध्यायपदसमभिव्याहृतमध्यायव्याख्यानप्रतिज्ञां लम्भयति, इष्टश्चावृत्य पदस्य योजनम्, यथा अपामार्गतण्डुलीये "गौरवे शिरसः शूले पीनसे" इत्यादौ "शिरसः" इति पदं "गौरवे" इत्यनेन युज्यते आवृत्य "शूले" इत्यनेन । अतश्च यदुच्यते अकृततन्त्रप्रतिज्ञा अध्यायप्रतिज्ञा उत्पद्यमाना इति तन्निरस्तं भवति; यदि वा अध्यायप्रतिज्ञैवास्तु, तयैव तन्त्रप्रतिज्ञाप्यर्थलब्धैव, न ह्यध्यायस्तन्त्रव्यतिरिक्तस्तेनावयवव्याख्याने तन्त्रस्यावयविनो व्याख्या भवत्येव, यथा अङ्गुलीग्रहणेन देवदत्तोऽपि गृहीतो भवति । अथवात्रान्तरव्याख्यानप्रतिज्ञा तु न लभ्यते, तान्तु प्रत्यध्यायमेव करिष्यति ।

अध्यायमिति अधिपूर्व्वादिङः "इङश्च" इति कर्म्मणि घञा साध्यम्, तेन अधीयते असौ इत्यध्यायः, न चानया व्युत्पत्त्या प्रकरणं चतुष्कस्थानादिष्वतिप्रसङ्गः, यतो योगरूढ़ेयं संज्ञा, अध्यायस्य प्रकरणसमूहविशेष एव दीर्घञ्जीवितीयादिलक्षणे पङ्कजशब्दवद्वर्त्तते, न योगमात्रेण वर्त्तते, वक्ष्यति हि "अधिकृत्येयमध्यायनामसंज्ञा प्रतिष्ठिता" नामसंज्ञा योगरूढसंज्ञेत्यर्थः; यदि वा करणाधिकरणयोरर्थयोः "अध्यायन्यायस्यावसंहाराधाराश्चायाश्च" इति सूत्रेण निपातनादध्यायपदसिद्धिः, अधीयतेऽस्मिन्ननेन वा अर्थविशेष इत्यध्यायः, अतिप्रसक्तिनिषेधस्तूक्तन्यायः ।

व्याख्यास्याम इति व्याङ्पूर्व्वात् ख्यातेर्लृटा साध्यं, चक्षिङो हि प्रयोगेऽङित्त्वतोऽपि व्याख्यातुः क्रियाफलसम्बन्धस्य इति वाचस्वेन "स्वरितञितः" इत्यादिनात्मनेपदं स्यादिति । वीति विशेषे, विशेषाश्च व्याससमासादयः । आङोऽयं क्रियायोगे; ये तु मर्य्यादायामभिविधौ वा आङ्प्रयोगं मन्यन्ते, तेषामभिप्रायं न विद्मः; यतो मर्य्यादायामभिविधौ चाङः प्रातिपदिकेन योगः स्यात्, यथा "आसमुद्रक्षितीश," "आपाटलिपुत्राद् वृष्टो देवः" इत्यादौ, इहापि च तथा क्रियायोगविरहे

प्रकृतस्य तदारोग्यदीर्घायुर्व्विधिज्ञानस्य विषयारोग्यदीर्घायुर्व्विधेरुपपादकत्वात् । अथवा अत्राथशब्दोऽधिकारार्थः, तेनात ऊर्द्ध्वमधिकार इत्यर्थः । कः पुनरधिकार इत्यत आह— दीर्घञ्जीवितीयमिति । दीर्घञ्जीवितमधिकृत्य कृतं ग्रन्थमत ऊर्द्ध्वमधिकृत्य व्याख्यास्यामः । एवं सर्व्वत्राध्याये व्याख्येयम् ।

तत्रादौ स्ववाक्यस्य स्वयं वक्तुमनुचितत्वात् अपरमहर्षिवाक्यप्रतिसंस्कारकत्वमात्मनः ख्यापयितुमग्निवेशतन्त्रे विवरीतव्ये प्रथमतस्तत्सङ्गतिमत्त्वेनायुर्व्वेदप्रकाशाध्यायाश्रयत्वेन दीर्घञ्जीवितीयाध्यायस्य प्राधान्यात् तदुपन्यस्यति दीर्घञ्जीवितीयमध्यायं व्याख्यास्याम इति । व्याख्यास्याम इत्यनेन दीर्घञ्जीवितीयाध्यायस्य स्वसङ्कलितस्य ब्रह्मणा प्रोक्तायुर्वेदवाक्यानुसारीयत्वं व्यञ्जितम् । "एकादशेऽहनि पिता नाम कुर्य्यात्" इतिवत् शास्त्रकारिणोऽपि स्वग्रन्थे

"उपसर्गाः क्रियायोगे" इति नियमात् आङ उपसर्गत्वं न स्यात्, ततश्चानुपसर्गेणाङा व्यवधानात् वेरुपसर्गता न स्यात्, येनाव्यवहितः स्वजातीयव्यवहितो वा धातोरुपसर्गो भवति ; व्याङोरपि उभयोरनुपसर्गत्वे तत्प्रत्ययस्यौचित्यभूरिप्रातिपदिककल्पनागौरवप्रसङ्गात् ; तस्मात् क्रियायोगित्वमेवाङो न्याय्यम् । अथ, अतः, दीर्घं, जीवितीयं, अध्यायं, वि, आ, व्याख्यास्याम इत्यष्टपदत्वम् ।

ननु खलु कथमग्निवेशः सकलपदार्थाशेषज्ञानव्याख्येयमायुर्व्वेदं व्याख्यास्यति ? यतो न तावद्भेषजादीनामशेषविशेषः प्रत्यक्षज्ञेयः, सर्व्वपदार्थानां प्रत्यक्षाविषयत्वात् । अन्वयव्यतिरेकाभ्यान्तु सर्व्वपदार्थावधारणं दुष्करमेव, यत एकमेव मधु स्वरूपेण जीवयति, मारयति चोष्णं समघृतञ्च, कफप्रकृतेर्हितमहितं वातप्रकृतेः, आनूपे सात्म्यमसात्म्यं मरौ, शीते सेव्यमसेव्यं ग्रीष्मे, हितमवृद्धे वृद्धे चाहितं, अल्पं गुणकरम् आबाधकरमत्युपयुक्तं, आमतामुपगतमुदरे उपक्रमविरोधित्वादतिविषमकरम्, काकमाचीयुक्तञ्च मापकं पक्वं निकुचेन सह प्रयुक्तं मरणाय अथवा बलवर्णवीर्य्यतेजउपघाताय भवतीत्येवमादि तत्तद्युक्तं तत्तत्फलं करोति ; अत एव एकस्यैव मधुनो रूपं यदानेन प्रकारेण दुरधिगमं, तदा कैव कथा निखिलपदार्थाशेषविशेषज्ञानस्य, अजानंश्च व्याचक्षाणः कथमुपादेयवचन इति कृत्वा गुरोरासात् प्रतिपन्नं प्रतिपादयिष्याम इति दर्शयन् तामिमां शङ्कां निराचिकीर्षुर्गुरूक्तानुवादरूपतां स्वग्रन्थस्य दर्शयन्नाह— इति ह स्माह भगवानात्रेय इति ।

अत्र इतिशब्दो वक्ष्यमाणार्थपरामर्शकः, हशब्दोऽवधारणे, यथा "न ह वै शरीरस्य प्रियाप्रिययोरपहतिरस्ति" इति अत्र न ह इति नैवेत्यर्थः । अत्र "स्माह" इतिशब्दप्रयोगेण भूतमात्र एव क्रियार्थे "लट् स्म" इति लट्, न भूतानद्यतने परोक्षे, आत्रेयोपदेशस्याग्निवेशं प्रत्यपरोक्षत्वात्, यथा च भूतमात्रे लिङ् भवति तथा च दर्शयिष्यामः । भगं पूजितं ज्ञानं, तद्वान्, यथोक्तम् "उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति"

व्यवहारार्थं स्वाभिमतसंज्ञां कुर्य्युः, इत्यतः सर्व्वेषामेवाध्यायानामादौ यद्वाक्यं वाक्यार्थो वा वर्त्तते, तद्वाक्यवाक्यार्थान्यतरैकदेशेन स्वरूपपरत्वेन प्रातिपदिकसंज्ञायां तदधिकृत्य कृते ग्रन्थे इत्यर्थे तद्धितविधानेन शब्दबोधे ग्रन्थेऽत्राध्यायस्य संज्ञां चकार। तथा हि अध्यायादौ दीर्घञ्जीवितमन्विच्छन्नित्यादि-वाक्यस्यैकदेशदीर्घञ्जीवितेति-शब्दात् स्वरूपपरतया प्रातिपदिकसंज्ञकत्वात् दीर्घञ्जीवितमधिकृत्य कृत इत्यर्थे छतद्धितान्तमध्यायविशेषण दीर्घञ्जीवितीयमिति।

अध्यायमिति—अधीयते सङ्गतार्थबोधको यो ग्रन्थः सोऽध्यायस्तं तथा। व्याख्यास्याम इति—स्फुटार्थीकरणपूर्व्वकविस्तृतार्थीकरणानुकूलवाक्योत्पादनाव्यापारो व्याख्यानं, तत्फलशालित्वादध्यायस्य कर्म्मत्वं, बहुवचनम् "एकस्मिन् अस्मदि च" इत्यनेन। ननु एतेनाप्यध्यायस्य स्ववाक्यत्वसंशयः

यदि वा भगशब्दः समस्तैश्वर्य्यमाहात्म्यादिवचनः, यथोक्तं "ऐश्वर्य्यस्य समस्तस्य धर्म्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव * षण्णां भग इतीङ्गना"॥ अत्रेयपुत्रमात्रेयः, अनेन विशुद्धवंशत्वं दर्शितं भवति।

अत्रान्ये वर्णयन्ति चतुर्व्विधं सूत्रं भवति गुरुसूत्रं, शिष्यसूत्रं, प्रतिसंस्कर्त्तृसूत्रं, एकीयसूत्रम्, तत्र गुरुसूत्रं, यथा—"नैतद् बुद्धिमता द्रष्टव्यमग्निवेश" इत्यादि, प्रतिसंस्कर्त्तृसूत्रं यथा—"तमुवाच भगवानात्रेयः" इत्यादि, शिष्यसूत्रं यथा "नैतानि भगवन् पञ्चकषायशतानि पूर्य्यन्ते" इत्यादि, एकीयसूत्रं यथा "कुमारस्य शिरः पूर्व्वमभिनिर्व्वर्त्तते इति कुमारशिरा भरद्वाजः" इत्यादि। तेनाद्यं व्याख्यानप्रतिज्ञासूत्रं गुरोरेव, शिष्यस्याग्निवेशस्य व्याख्यानेऽनधिकारत्वात्, द्वितीयसूत्रं प्रतिसंस्कर्त्तुः इतिशब्देन च प्रकारवाचिना "दीर्घञ्जीवितीयं व्याख्यास्यामः" इति परामृश्यते। तेनाह स्मेति, भूतानद्यतनपरोक्ष एव भवति प्रतिसंस्कर्त्तारं प्रत्यात्रेयोपदेशस्य परोक्षत्वात्, अनेन न्यायेन च "तमुवाच भगवानात्रेयः" इत्यादावपि लिड्विधिरुपपन्नो भवति। सुश्रुते च "यथोवाच भगवान् धन्वन्तरिः" इति प्रतिसंस्कर्त्तृसूत्रमिति कृत्वा टीकाकृता लिड्विधिरुपपादितः। अत्र ब्रूमः, यत्तावदुक्तं शिष्यस्याग्निवेशस्य व्याख्यानानधिकारादिदं गुरोः सूत्रं, तन्न, न हि आत्यन्तिकी गुरुत्वमस्ति, यतः स एवात्रेयः स्वगुरुमपेक्ष्य शिष्यः, अग्निवेशादीनपेक्ष्य गुरुः, एवमग्निवेशोऽपि ग्रन्थकरणकाले स्वबुद्धिस्थिरीकृतान् शिष्यान् प्रति गुरुरिति न कश्चिद्दोषः। यत् पुनर्द्वितीयसूत्रस्य प्रतिसंस्कर्त्तृसूत्रतया भूतानद्यतनपरोक्षे लिड्विधिरुपपद्यते, तत्र विचार्य्यं, किमिदं द्वितीयं सूत्रं पूर्व्ववाक्यैकतापन्नं, न वा, यद्येकवाक्यतापन्नं, तदा सुश्रुते तथा व्याख्यास्यामो यथोवाच धन्वन्तरिरिति योजनीयं, तथा च व्याख्यास्याम-इतिक्रियैकवाक्यतापन्नम् उवाचेति पदं न भिन्नकर्त्तृकं भवितुमर्हति, तथा च कुतो लिड्विधिः? अथ नैकतापन्नं तदा गौरश्वः पुरुषो हस्तीतिवत्कार्थसङ्गतिः। किञ्च यत्तु

* कामस्याथ प्रयत्नस्य इति पाठान्तरम्।

दीर्घञ्जीवितमन्विच्छन् भरद्वाज उपागमत्।
इन्द्रमुग्रतपा बुद्ध्वा शरण्यममरेश्वरम् ॥

स्यात् तावदासार्थमाह—इति ह स्माह भगवानात्रेय इति। ननु यथोवाचात्रेय इत्यनेनैव सिद्धौ सत्यां भगवानिति यदुक्तं तेनात्रेयस्यापि तपःप्रभावजमित-युक्तज्ञानादिभाग्यवत्त्वं ख्यापितम्। उक्तं हि ;—"उत्पत्तिञ्च विनाशञ्च भूतानामागतिं गतिम्। वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति॥" ननु तदा किं भगवदात्रेयस्य स्ववाक्यं व्याख्यास्यते ? सोऽपि यदुवाच तत् किं तस्य स्वीयवाक्यम् ? तथात्वं चेत् तदा तस्यापि स्ववाक्यस्य प्रमाणतया स्वयं वक्तुमनुचितत्वं स्यादित्यत आह, इतिहेति—इतिहेतीत्थम्भूतलक्षणे तृतीयान्तं पारम्पर्य्योपदेशेनाह स्म उवाचेत्यर्थः, द्वितीयान्तं वा उपदेशानेकत्वाद् वेदस्य। एतेनाग्निवेशोक्तवाक्योत्तरतद्वाक्यस्यात्रोक्तिर्न विरुध्यते। पारम्पर्य्योपदेशानतिक्रमेण अन्यूनानतिरिक्तत्वेनायुर्व्वेदमात्रेयोऽग्निवेशायोवाचेति ध्वनितम् ॥१॥

गङ्गाधरः—स च कथं पारम्पर्य्योपदेशं लेभ इत्याकाङ्क्षायां तदात्रेयोक्त पारम्पर्य्योपदेशप्रकारं दर्शयति, दीर्घञ्जीवितमित्यादि। उग्रतपा भरद्वाजो मुनिः

जतूकर्णादौ प्रतिसंस्कर्त्तृश्रुतिगन्धोऽपि नास्ति, तत्कथं "नानाश्रुतपरिपूर्णकण्ठः शिष्यो जतूकर्णः प्राञ्जलिरधिगम्योवाच" इत्यादौ लिड्विधिः ? अनेन न्यायेन चरकेऽपि प्रतिसंस्कर्त्तृ-सूत्रपक्षे लिड्विधिर्नास्ति, तस्माच्चरकेऽग्निवेशः सुश्रुते सुश्रुत एव सूत्राणां प्रणेता, क्वचित् किञ्चिदर्थं स्तोतुं निन्दितुं वा आख्यायिकारूपं पुराकल्पं दर्शयन् किमपि सूत्रं गुरूक्तानुवादरूपतया किमप्येकीयमतानुवादरूपतया लिखति ; प्रतिसंस्कर्त्ता स्वयं ग्रन्थं पूरयति तदाद्यग्रन्थकर्त्तृं तथैव। लिड्विधिस्तु भूतानद्यतनमात्र एव छन्दोविहितो भाषायामपि वर्णनीयः, अन्यथा उवाचेति पदं जतूकर्णादौ न स्यात्, तत्र च हरिवंशे धौम्योपाख्याने "मामुवाच" इति, तथा "अहमुवाच" इति च न स्यात्। यथा "स मामुवाचाम्बुचरः कूर्म्मो मामुपदेहधृक्। किमाश्चर्यं मयि मुने कथ्यमानमिह कथं विभो"। तथा "स्वयम्भूवचनात् सोऽहं वेदान् वै समुपस्थितः। उवाच वैनतेयगुरुः" इति। यद्यपीति हस्माहेत्यत्र इतिशब्देन पूर्व्वसूत्रं परामृश्यते, तत्र, येन दीर्घञ्जीवितीयादि सूत्र-मात्रस्य तदर्थस्य वा गुरूक्तत्वप्रतिपादने सति नैवोत्तरत्राभिधेयाभिधानेन निखिलतन्त्रस्य गुरूक्तानु-वादरूपतया करणं श्रोतृश्रद्धाकरणं प्रतिपादितं भवति। भवति तु भावयितुं, यथा पुरा व्याख्यातं तस्मात् तथैव व्याख्यमिति। अग्निवेशस्य व्याख्यास्याम इति बहुवचनमेकस्मिन्नपि अस्मदः प्रयोगात्, बहुवचनप्रयोगस्य साधुत्वात्, साधु हि वदन्ति वक्तारो "वयं करिष्यामः" इति। भगवानात्रेय इत्यत्र तु एकवचननिर्देशकृतो भगवानित्यनेनैवास्य गुरोर्गौरवस्य दर्शितत्वात् ॥ १ ॥

चक्रपाणिः—ननु यथाग्निवेशस्यायुर्व्वेदस्य दुरधिगमत्वे न प्रत्यक्षतो वान्वयव्यतिरेकात् वा ज्ञानं.

दीर्घञ्जीवितमन्विच्छन् अमरेश्वरमिन्द्रं शरण्यं बुद्ध्वा दीर्घञ्जीवितोपायारोग्यरोगप्रशमनानाम् उत्पत्त्युपायवक्तृत्वेन स्वल्पजीवितरोगभयात् रक्षितारं मत्वा उपागमत् प्राप। संयोगस्य हि संयोगिदेशप्रतिनियतमानत्वेऽपि कालवैशिष्ट्य न विरुध्यते। मानन्तु द्विविधं—दैशिकं कालिकञ्च। तत्र प्रतियोग्यनुयोगिदेशयोः यन्मानं तत् सममानं, दैशिकं यथा—हस्तमितदण्डयोः सर्व्वदेशे संयोगो हस्तमितः। तथा संवत्सरो महाकालस्तस्य यदणुत्वानुपलादिमुहूर्त्तादिदिनमासाद्यावृत्तद्विवत्सरादिमानं तन्मानसमन्वितं कालवृत्तित्वेन यन्मानं तन्मान कालिकं, तदत्र शरीरेन्द्रियसत्त्वात्मसु संयोगस्य जीवितस्य दीर्घत्वं प्रतिनियतकालातिशयकालमानवैशिष्ट्यं न दैशिकमिति। ननु दीर्घत्वं परिमाणभेदः, स च गुणस्तस्य न शरीरेन्द्रियसत्त्वात्मसंयोगलक्षणे गुणविशेषरूपे न सम्भाव्यते, एवमात्रेयस्यापि कथमायुर्व्वेदज्ञानं स्यात्, यन्मूलमग्निवेशस्यायुर्व्वेदज्ञानं समीचीनमुच्यते, इत्यत आह आयुर्व्वेदस्याविप्लुतागमं दर्शयन्नाह दीर्घञ्जीवितमित्यादि।—जीवितं शरीरेन्द्रियसत्त्वात्मसंयोगः, तच्च दीर्घमिति दीर्घकालसम्बन्धि, कालशब्दोऽयत्र लुप्तनिर्दिष्टो द्रष्टव्यः, यतस्तन्त्रशैली चैषमाचार्य्यस्य, यत आदिमध्यान्तलोपान् करोति, ये लुप्ता अपि गम्यन्त एव, यथा "माम्बालूपौदकरसा" इत्यत्र मांसशब्दो लुप्तस्तथा विम्बविद इत्यत्र विषशब्दो लुप्त इत्यादि। अन्विच्छन्निति अनुरूपं दीर्घमिच्छन्निति। भरद्वाज इति गोत्रनाम, उग्रतपा इति विशेषणेन भरद्वाजस्य मानुषस्यापि इन्द्राभिगमनशक्तिः तथा शरण्यत्वप्रतीतिशक्तिश्चोपदर्श्यते; अचिन्त्यो हि तपसां प्रभावो येनागस्त्यो महोदधिमपि चुलुकनिपेयमकरोत्। न च वाच्यमुग्रतपस्त्वेनैव किमित्ययमायुर्व्वेदमपि न बुध्यते? यतस्तपःप्रभावोऽपि प्रतिनियतविषयत्वान्न सर्व्वत्र शक्तिमान्; शक्तिश्चास्य कार्य्योन्नेया, तेन गुरुनिरपेक्षायुर्व्वेदज्ञानलक्षणकार्य्यादर्शनात्, न तत् तपस्तत्र समर्थमित्यवधारयामः; किंवा गुरुपूर्व्वक्रमेणैवायुर्व्वेदज्ञानं फलतीतीन्द्रमुपागमत् भरद्वाजः।

अथ कथं ब्रह्मादिष्वायुर्व्वेदपूर्व्वगुरुषु विद्यमानेषु इन्द्रमेवायमुपागमत्? युक्तञ्च प्रधानगुरोरेव श्रवणं, यतः शिष्यपरम्परासञ्चारिणी विद्याऽसम्यग्ग्रहणादिदोषात् पात्रपरम्परासञ्चार्य्यमाणमधुवत् क्षीणापि संभाव्येत, अत आह—बुद्ध्वा शरण्यममरेश्वरमिति; यस्मादयमेवेन्द्रोऽस्यायुः, स एव भयत्रस्तानां यथा शरण्यो रक्षणहितो न तथा ब्रह्मादयः; तेन तमेवोपागमत्। अमरेश्वर इत्यनेन च इन्द्रस्य रक्षणोपयुक्ततां दर्शयति, राजा हि प्रजारक्षणे प्रयत्नातिशयवान् भवति।

ननु दीर्घञ्जीवितमन्विच्छन्नित्यत्र दीर्घत्वाव्यवस्थितत्वेन कियत्कालं दीर्घमभिप्रेतम्? तत्र युगानुरूपं वर्षशतं, यदुक्तं "वर्षशतं खल्वायुषः प्रमाणमस्मिन् काले"। एतच्च कलिकालाश्री परमायुः, कालस्य यथा यथा क्षयस्तथा तथायुषः क्षयः; यदाह "संवत्सरशते पूर्णे याति संवत्सरः क्षयम्। देहिनामायुषः काले यत्र यन्मानमिष्यते"॥ एतदनुसारेण पूर्व्वयुगेष्वायुःप्रकर्षः, यदाह भगवान् व्यासः "पुरुषाः सर्व्वसिद्धाश्च चतुर्व्वर्षशतायुषः। कृते त्रेतादिकेष्वेवं

जीविते वृत्तिर्नोपपद्यते, इति चेन्न, समवायेन परत्वापरत्वयुक्तिसङ्ख्यापृथक्त्व-परिमाणसंस्काराभ्यासानां गुणादिष्वप्यबाधात्। यथा दुग्धे यन्माधुर्य्यं ततोऽधिकमिक्षुषु माधुर्य्यं, तथा षड्रसा दश शब्दा इत्येवमादयः। अन्विच्छ-न्निति—अप्राप्तप्राप्त्यनुकूलगत्यादिव्यापारोऽन्वेषणम्। इन्द्रमिति—इदि पर-मैश्वर्य्ये, इत्यस्माद्धातोररप्रत्ययान्तत्वेन राजमात्रबोधकस्य इन्द्रशब्दस्य सहस्र-लोचनेऽत्र वृत्तिज्ञापनायोक्तममरेश्वरमिति। अमरेश्वरशब्देन हरिहरब्रह्मणा-मलाभनिरासार्थमिन्द्रमिति। अथवा इन्द्रपदेन भूतलस्थजन्तुरक्षितृत्वम्, अमरेश्वर-पदेन देवरक्षितृत्वं ज्ञापितम्॥

पादशो ह्रसति क्रमात्"। कर्म्मणानुरूपश्चायुर्नियतं वा अनियतं वा भवति, तत्र बलवत् कर्म्मारब्धं नियतं यथायमस्मिन् काले म्रियत एव, परम् अबलवत्कर्म्मारब्धं त्वनियतं, तद् यदा दृष्टं विषादि मारकं प्रत्ययमासादयति तदा सद्भावबलं मारयति, यदा न प्राप्नोति दृष्टं मारकं कारणं, तदा युगानुरूपायुःप्रान्ते युगप्रभावजर्ज्जरीकृतशरीरं मारयति। अत्र दृष्टान्तश्चाचार्य्येण दर्शितः यथा—"दृढ़ाक्षः स्वगुणोपपन्नो वाह्यमानो यथाकालं स्वप्रमाणक्षयादेवावसानं गच्छति, स एवाक्षोऽतिभाराधिष्ठितः" इत्यारभ्य "यावदन्तरान्यत्समापद्यते तथा अनियतायुषः अन्तरा प्राणा अपरान् निरुध्यन्ते" इत्यन्तेन। यदा त्वनियतायुषो रसायनमाचरन्ति तदा तत्प्रभावात् युगप्रभाव-नियतायुर्लङ्घनं भवति, यदाह "तानि यावन्ति भक्षयेत्, जीवेद्वर्षसहस्राणि तावन्त्यागतयौवनः" इत्यादि। न तु बलवत्कर्म्मनियतस्यायुषो लङ्घनमस्ति, यदाह "कर्म्म किञ्चित् क्वचित् काले विपाक-नियतं महत्। किञ्चित्तु कालनियतं प्रत्ययैः प्रतिबुध्यते"। हन्त यद्येवं तदा सर्व्वत्र कर्म्मैव कारणं मरणे जीविते वा तथा व्याधौ व्याध्यपगमे वा, तत् किमनेनायुर्व्वेदेन कर्म्मजनितफलानुविधायिना? तथाहि यत्तावदुच्यते नियतं कर्म्म, तत्र तावदायुर्व्वेदव्यापारो नास्ति, येन नियतेनैव कर्म्मणा मिलित-मपि दृष्टं तत्र विफलीक्रियते, यच्चाबलवत्कर्म्मारब्धत्वेनानियतमायुरुच्यते, तदपि न श्रद्धाधीनं, येनादृष्टशक्तिपराभवेन दृष्टस्य कार्य्यकारितां दृष्ट्वा विषाद्यभ्यासितेऽपि विषयेऽदृष्टमेव कारणम् अवधारयामः, दृष्टं त्वदृष्टाकृष्टमेव तत्र भवति, नैवम्, एवं सति सर्व्वानुष्ठानस्योपरमप्रसङ्गः, किञ्च केवलकर्म्मवादिनो दृष्टमपवदतोऽदृष्टोत्पत्तिरेव न प्राप्नोति, अदृष्टं हि दृष्टाग्निष्टोमादिजन्यं, दृष्टञ्च कारणं कर्म्मवादिनोऽभिमतम्। अथादृष्टकारणं दृष्टमिच्छन्ति, हन्त तर्हि तेनैव न्यायेन वह्न्यादीनामपि किमिति शीतापहत्वस्फोटादिजनकत्वं न स्वीक्रियते? किञ्च केवलकर्म्मवादिनो दृष्टे कारणे व्याप्तिग्रहणाभावादृष्टानुमानमेव न स्यात्, तस्माद् दृष्टमदृष्टञ्च कारणम्। तत्र क्वचिद्दृष्टं दृष्टेन बाध्यते क्वचिच्च दृष्टमदृष्टेनेति। तेन यत्र पुरुषे बलवन्नियतमरणकारणमदृष्टं तत्र जीवितमरणयोरकिञ्चित्करोऽयमायुर्व्वेदः, किन्तु तत्रापि नियतमरणकालादर्व्वाक् दुःखजनक-व्याधिप्रशमने व्याप्रियत एव यदि व्याधिरपि तस्य नियतकर्म्मजन्यो न स्यात्, यत्र तु कर्म्मा-नियतविपाकं भवति तत्र प्रति सर्व्वथा प्रयोजनवदायुर्व्वेदोपादानं, यत्तु युगनियतमायुः, तज्जातिबलवता कर्म्मणा नियमितं, येन रसायनप्रयोगात् तदबाधनं दृष्टस्यादृष्टमन्यते न तु

ब्रह्मणा हि यथाप्रोक्तमायुर्व्वेदं प्रजापतिः।
जग्राह निखिलेनादावश्विनौ तु पुनस्ततः॥
अश्विभ्यां भगवान् शक्रः प्रतिपेदे ह केवलम्।
ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत्॥ २

गङ्गाधरः—ननु भरद्वाजो मुनिः किं स्वस्य दीर्घायुरन्विच्छन् इन्द्रमुपागमत् उत प्रजानामित्याशङ्कायाम्; किं स्वयमुद्युक्तोऽन्येन वा नियुक्त इत्याशङ्का-निरासाय पारम्पर्य्योपदेशं प्रदर्शयन्नाह—ब्रह्मणेत्यादि शक्रमुपागमदित्यन्तम्। हि यस्माद् ब्रह्मणा हिरण्यगर्भेण यथाप्रोक्तं प्रोक्तमनतिक्रम्य आयुर्व्वेदं निखिलेन निरवशेषेणादौ प्रजापतिर्जग्राह तद्ब्रह्मत एव अध्ययनेनेत्युक्तम्। ब्रह्मण आयुर्व्वेदं प्रजापतिर्जग्राहेति नोक्त्वा ब्रह्मणा हीत्याद्यध्ययनक्रमोपदर्शन-रूपेण निर्देशात्; अध्ययनक्रमो हि उपाध्यायेनादौ स्वरवर्णादिवैशद्येन यथा-शास्त्रवाक्यमुच्चरितव्यं पश्चात् तथैव शिष्येणोच्चरितव्यमिति। प्रोक्तिग्रहण-क्रिययोः कर्त्तृत्वापादानत्वयोर्द्वयोर्ब्रह्मणि प्राप्तौ परकारकत्वादुभयार्थे कर्त्तृपदं साधु। प्रोक्तेत्युक्त्या आयुर्व्वेदप्रकाशकत्वं ब्रह्मणः ख्यापितं न त्वायुर्व्वेदस्रष्टृत्वं, तेनायुर्व्वेदस्य प्रसिद्धत्वं स्वत एवेत्युक्तं भवति। अश्विनौ तु, पुनः पश्चात् ततः प्रजापतितोऽध्ययनेन ब्रह्मणा यथाप्रोक्तमायुर्व्वेदं निखिलेन जगृहतुर्न तु प्रजापतिना प्रतिसंस्कृतमिति। अश्विभ्यां भगवान् शक्रो ब्रह्मणा यथाप्रोक्त-मायुर्व्वेदं केवलं कृत्स्नं प्रतिपेदे। हशब्द एवार्थे। तेन प्रतिपन्नवान् न तु कस्मै-चिद् दत्तवान्। ये तु एतेनाकृतशिष्यत्वेन शक्रस्य शिष्यार्थित्वेन ब्रह्माद्यपेक्षया सुस्थहितातुरहितचिकित्साभ्याम्। अयञ्च वादः शास्त्रकारेण स्वयमेव प्रपञ्चेन निर्वाचनीय इति नेह प्रतन्यते॥

चक्रपाणिः—कथमिन्द्र एव शरण्यो न ब्रह्मादय इत्याह ब्रह्मणा हीत्यादि।—हि यस्मादर्थे, प्रजापतिर्दक्षनामा, प्रोक्तमिति प्रकर्षेणोक्तं प्रकर्षश्चानवशेषेणाभिधानम्, यथेत्यनेन तथाशब्दस्य नित्य-सम्बन्धस्याकर्षणवत्त्वात् यादृशं प्रोक्तं तादृशमेव जग्राह, निखिलेनेत्यनवशेषेण। अश्विनौ तु ततः प्रजापतेर्जगृहतुः; अत्रापि यथाप्रोक्तं निखिलेन चेति पदं तथैव योजनीयम्, एवमश्विभ्यां भगवान् शक्रः प्रतिपेदे इत्यत्रापि यथाप्रोक्तमित्यादि योजनीयम्; ह-शब्दस्त्ववधारणे, तेन प्रतिपेद एव, परं शक्रो न तु कस्मैचिदायुर्व्वेदं दत्तवान् इत्यर्थः। अनेन च ग्रन्थेन न्यूनाधिकायुर्व्वेदज्ञानोपदर्शनेन यथा ब्रह्मण आयुर्व्वेदज्ञानं तथा इन्द्रस्यापीति दर्शितं; तेन ब्रह्मणो वा आयुर्व्वेदः श्रूयते इन्द्राद्वेति न कश्चिदर्थतो विशेषः। इन्द्रे त्विदमधिकं यदयमसंक्रामितविद्यात्वेन शिष्यार्थी, यदुक्तं "यो

विघ्नभूता यदा रोगाः प्रादुर्भूताः शरीरिणाम् ।
तपोपवासाध्ययन-ब्रह्मचर्य्यव्रतायुषाम्* ॥

विशेषगुणयोगात् शरण्यत्वं व्याचक्षिरे तन्न सङ्गच्छते ; "अथ ते शरणं शक्रं ददृशुर्ध्यानचक्षुषा" इत्यनन्तरवचनस्य आनर्थक्यात् । यदि तत्र शक्रस्य अकृतशिष्यत्वेन शिष्यार्थित्वगुणयोग एव ध्यानचक्षुषा शरण्यत्वेन दर्शने हेतुरित्युच्यते, तदा ब्रह्मादीनामपि कृतशिष्यत्वेन शिष्यार्थित्वाभावेऽपि कृतशिष्यत्वेन शिष्यकरणे सिद्धिभाजनत्वादिगुणयोगस्यापि हेतुत्वं कल्पितुं किं न रोचयते ? वस्तुतोऽत्र कृत्स्नार्थे केवलशब्दोऽवधारणे तु इशब्दः, तेन कृत्स्नमेवायुर्व्वेदं प्रतिपेदे न त्वेकदेशमित्यर्थः । ध्यानचक्षुषा शक्रस्य शरण्यत्वेन दर्शने च प्रजापालनकर्तृत्वेनेश्वरनियोजितत्वं हेतुरिति सूचनाय भगवानिति शक्रस्य विशेषणमुक्तम् । ब्रह्मादयो हि सृष्ट्यादिकर्त्तारो न तु साक्षात् पालकाः । पालनमपि हि प्रजानां परम्परया तेषां न तु कश्चित् सर्व्वाः प्रजाः साक्षात् प्रतिपालयति किन्तु काश्चित् साक्षात् काश्चित् परम्परयेति तत्त्वम् । भरद्वाजो मुनिर्यस्मात् शक्रं गन्तुमृषिप्रोक्तस्तस्माच्छक्रमुपागमदित्यर्थः ॥ २ ॥

गङ्गाधरः—ननु भरद्वाजो मुनिः किं निजस्य दीर्घजीवितायः ऋषिभिः प्रोक्तोऽथवा ऋषीणां किंवा प्रजानामथवा सर्व्वेषामित्याशंसायामाह । विघ्नभूता इत्यादि । तपोपवासादीनां मङ्गलजनकानां विघ्नविनाशकत्वेन तज्जुषां प्राणिनां विघ्नभूता रोगा न भवितुमर्हन्ति इत्याशङ्क्याह, तपोपवासेत्याद्यज्जुषामिति ।

हि गुरुभ्यः सम्यगादाय विद्यां न प्रयच्छत्यन्तेवासिभ्यः स खलु ऋणी गुरुजनस्य महदेनो विन्दति - इत्यतोऽकृतशिष्यत्वेन शिष्यार्थित्वविशेषयोगात् ब्रह्मादिभ्यो विशेषेणेन्द्र एव शरण्य इति । ब्रह्मणस्तु परमगुरोर्व्विदितसकलवेदस्य सर्व्वभावतिरोहितमतेरायुर्व्वेदज्ञानं स्वतः सिद्धमेवेति न गुर्व्वन्तरापेक्षा । एतच्च ब्रह्मादिगुरुपरम्परोपदर्शनमायुर्व्वेदस्याविप्लुतागमोपदर्शनार्थं तथा महाजनसेवितत्वेनोपादेयत्वोपदर्शनार्थञ्च ; वचनं हि तत्र "यन्मन्येत महद्यशस्विपुरुषसेवितम्" इत्यादि यावत् "उपाददीत शास्त्रम्" इति । ऋषिप्रोक्त इति वक्ष्यमाणवृत्तान्तेन ऋषिप्रोक्तः । तस्मादिति यस्मादिन्द्र एव विशेषेण शरण्यः ॥ २ ॥

चक्रपाणिः—अथ कथमयमृषिप्रोक्त इत्यायुर्व्वेदस्य मर्त्यलोकागमने हेतुमाह, विघ्नभूता इत्यादि । —विघ्नभूता इत्यन्तरायस्वरूपाः, रुजन्तीति रोगाः, प्रादुर्भूता इत्याविर्भूताः, अयञ्च रोगप्रादुर्भावः कृतयुगान्ते बोद्धव्यः, वक्ष्यति हि "भ्रश्यति तु कृतयुगे" इत्यादिना रोगप्रादुर्भावं जनपदोद्ध्वंसनीये, प्रादुर्भावश्च पूर्व्वंसिद्धस्यैवाविर्भावः, तेन रोगाः सन्ताननित्यतया प्रवाहेणानादयो भवन्तीत्यर्थोऽर्थे

* ब्रह्मचर्य्यव्रतानुषामिति चक्रपाणिधृतः पाठः ।

तदा भूतेष्वनुक्रोशं पुरस्कृत्य महर्षयः ।
समेताः पुण्यकर्म्माणः पार्श्वे हिमवतः शुभे ॥

विघ्नभूता इत्यत्राभूततद्भावे च्विर्न सम्भवति रोगाणामुत्पत्तित एव विघ्नस्वरूपत्वेन अविघ्नस्वरूपत्वाभावात् । शरीरिणामिति जीविनां न त्वात्मनां बहुप्राण्यभिप्रायेण बहुवचनोपपत्तावप्यात्मानो हि पुंसां निर्व्विकारत्वेन नित्यत्वेन च निर्व्विघ्ना इति । तपेति सर्व्वेऽसन्ता अप्यदन्तास्तेन तपशब्दस्तपोऽर्थकः छान्दसत्वाद्वा सलोपो, निषिद्धविधेरनित्यत्वाद्वा विसर्गलोपे सति न सन्धिनिषेधः । तदेति । भूतेष्विति पञ्चमहाभूतशरीरिसमवायलक्षणलोकेषु । अनुक्रोशः कारुण्यम् । पुरस्कृत्येत्यग्रे कृत्य । समेताः समागताः । पुण्यकर्म्माणः पुण्यं पुण्यजनकं कर्म्म क्रिया येषां ते तथा । महर्षीणां भूतेष्वनुक्रोशे पुण्यकर्म्मकत्वं हेतुः । महर्षयो भूतेषु सानुक्रोशाः पुण्यकर्म्मकत्वात् । पुण्यकर्म्मकत्वञ्च भूतेष्वनुक्रोशेनैतदारम्भात् । शरीरिणां विघ्नभूतरोगाः समानकालिकतया महर्षीणां भूतेष्वनुक्रोशपुरस्कार-पूर्व्वकहिमवत्पार्श्वसमागमे हेतव इति ॥

दशमहामूलीये वक्तव्यः । शीर्य्यत इति शरीरं तदस्यास्तीति शरीरी, तेन शरीरं स्वत एव शीर्य्यमाणं रोगसम्बन्धात्तु नितरां शीर्य्यत इति सूचयति । केषां विघ्नभूता इत्याह, तपोप-वासाध्ययनेत्यादि । रोगग्रस्ता हि शरीरिणस्तपःप्रभृतीनि कर्त्तुं न पारयन्ति विघ्नकरत्वात्, तथा आयुषश्च मारकत्वेन केचिद् गदा विरोधिका भवन्ति । अत्र तपश्चान्द्रायणादि, उपवासः क्रोधादि-परित्यागः सत्याद्युपादानञ्च, वचनञ्च "उपावृत्तस्य पापेभ्यः सहवासो गुणे हि यः । उपवासः स विज्ञेयो न शरीरस्य शोषणम्" ॥ अध्ययनं वेदाध्ययनं, ब्रह्मणे मोक्षाय चर्य्यं ब्रह्मचर्य्यम् उपस्थ-निग्रहादि, व्रतमीप्सितकामो नियमः, आयुरुक्तं, तपोपवास इति प्रयोगः पूर्व्वत्रासिद्धविधेरनित्य-त्वेन तपःसकारस्थानिभूतयलोपस्य सिद्धत्वात् ज्ञेयः, यथा गोपवाया इति ; भूतेषु प्राणिषु, अनुक्रोशमित्यनुकम्पां, कस्मात् ? अनेकार्थत्वाद्धातूनां, पुरस्कृत्येति आदृत्य । एतेन प्राणिरोग-हरणमेव प्रधानमायुर्व्वेदोपगमने महर्षीणां फलम्, आयुःप्रकर्षस्तु अनुषङ्गसिद्धस्तेषां महात्मनामिति भावः । नरेष्विति वक्तव्ये यदयं भूतेष्विति सामान्यशब्दं करोति, तेन न समानजीवप्रयुक्तैवानु-कम्पा, किन्तु प्राणित्वमात्रप्रयुक्तेति समदर्शितामृषीणां दर्शयति । महान्तश्च ते ऋषयश्चेति महर्षयः, अनेन चतुर्व्विधा अपि ऋषयः—ऋषिकाः, ऋषिपुत्राः, देवर्षयः, महर्षयश्च गृह्यन्ते, महर्ष्यनुगामित्वादृषिकादीनामपि ग्रहणम् । पुण्यं पावनं कर्म्म येषां ते पुण्यकर्माणः, पर्शुं काश्चि-त्स्पृशन्ति पार्श्वं तेन पार्श्वमिव ततं पार्श्वं, शुभ इति पदं कर्त्तव्यसमाध्यनुगुणत्वोपदर्शनार्थं, यतः शुभे हि देशे समाधयः प्रसीदन्ति ॥

अङ्गिरा जमदग्निश्च वसिष्ठः काश्यपो भृगुः।
आत्रेयो गौतमः साङ्ख्यः पुलस्त्यो नारदोऽसितः॥
अगस्त्यो वामदेवश्च मार्कण्डेयाश्वलायनौ।
पारिक्षिर्भिक्षुरात्रेयो भरद्वाजः कपिष्ठलः॥
विश्वामित्राश्वरथ्यौ च भार्गवश्च्यवनोऽभिजित्।
गार्ग्यः शाण्डिल्यकौण्डिल्यौ वार्क्षिर्देवलगालवौ॥
सांकृत्यो वैजवापिश्च कुशिको बादरायणः।
बड़िशः शबलोमा * च काप्यकात्यायनावुभौ॥
काङ्कायनः कैकशेयो धौम्यो मारीचिकाश्यपौ।
शर्कराक्षो हिरण्याक्षो लोकाक्षः पैङ्गिरेव च॥
शौनकः शाकुनेयश्च मैत्रेयो मैमतायनिः।
वैखानसा बालखिल्यास्तथा चान्ये महर्षयः॥

गङ्गाधरः—ते पुनर्महर्षयः के इत्यत आह। अङ्गिरा इत्यादि तथा चान्ये महर्षय इत्यन्तम्। काश्यपो भृगुरिति कश्यपगोत्रं भृगुर्नाम ऋषिर्न तु सप्तर्षिषु भृगुर्नाम यः। आत्रेयोऽत्र कृष्णात्रिपुत्रः पुनर्व्वसुः। गौतमः साङ्ख्य इति बौद्धविशेषगौतमव्यावृत्तये साङ्ख्य इति। पुलस्त्यो नारदोऽसित इति यस्यौरसः शूद्रायां देवर्षिर्नारदो जातः। अगस्त्यो सतीदेहोद्भवः वामदेवः। पारिक्षिर्नाम भिक्षुर्दण्डी स आत्रेय एव न त्वन्यस्य पुत्रः। भरद्वाजः कपिष्ठलो न तु कुमारशिरःप्रभृतिर्भरद्वाजः। शुनकपुत्रः शौनकः। शाकुनेयो नाम ब्राह्मणः। मैत्रेयो मैमतायनिः। बालखिल्या वैखानसा वानप्रस्थाः। तथा चान्ये महर्षय इति भद्रकाप्यादय इति॥

चक्रपाणिः—के ते महर्षय इत्याह अङ्गिरा इत्यादि।—बहूनामृषीणामत्र कीर्त्तनञ्च ग्रन्थादौ पापक्षयहेतुत्वेन, तथा आयुर्वेदस्यैवंविधमहापुरुषसेवितत्वेन सेव्यत्वोपदर्शनार्थञ्चेति, एषु च मध्ये केचित् यायावराः, केचिच्छालीनाः, केचिदयोनिजाः, एवम्प्रकाराश्च सर्व्वे भिक्षवो बोद्धव्याः, भिक्षुरित्यात्रेय-

* वारलोमेति चक्रपाणिधृतः पाठः।

ब्रह्मज्ञानस्य निधयो यमस्य * नियमस्य च।
तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः॥
सुखोपविष्टास्ते तत्र पुण्यां चक्रुः कथामिमाम्॥
धर्म्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्।
रोगास्तस्यापहन्तारः † श्रेयसो जीवितस्य च॥

गङ्गाधरः—तेषां महर्षीणां साधर्म्यमाह, ब्रह्मज्ञानस्येत्यादि। ब्रह्मणो ज्ञानं ब्रह्मज्ञानं तस्य। ब्रह्म पुनः यतोवाचेत्यादि निगमनिर्दिष्टम् तस्य ज्ञान स्वरूपज्ञानम्। यमस्य नियमस्य चेति। यमनियमौ द्वौ दशकौ। तथोक्त-मत्रिसंहितायां स्मृतिशास्त्रे ;—

"आनृशंस्यं क्षमा सत्यमहिंसा दानमार्ज्जवम्।
प्रीतिः प्रसादश्चाचौर्य्यं माद् वञ्च यमा दश॥
शौचमिज्या तपो ध्यानं स्वाध्यायोपस्थनिग्रहौ।
व्रतमौनोपवासाश्च स्नानञ्च नियमा दश॥
यमान् सेवेत सततं न नित्यं नियमान् बुधः।
यमान् पतत्यकुर्व्वाणो नियमान् केवलान् भजन्॥"

इति। निधयो निधानस्थानानि। तपसस्तेजसा तपोजनितब्रह्मतेजसे-त्यर्थः। ननु तेषां महर्षीणां हिमवत्पार्श्वे समागमनेन विघ्नभूतरोगेषु विषयेषु किमभूदित्यत आह, सुखोपविष्टा इत्यादि। तेऽङ्गिरःप्रभृतयो महर्षय-स्तत्र शुभे हिमवतः पार्श्वे पुण्यां पुण्यजनिकां भूतहितत्वात् कथां प्रबन्ध-कल्पनामित्यर्थः॥

गङ्गाधरः—इमामिति यदुक्तं तदाह ;—धर्म्मार्थेत्यादि। धर्म्मः पुण्यमर्थो धनं कामोऽभिलाषस्तद्विषयः स्वर्गादिश्च। मोक्षो विषयवासनात्यागजनितसुख-दुःखेषु चरमदुःखत्यागपूर्व्वकचरमसुखसाक्षात्कारः। इति कश्चित्। तत्र

विशेषणं, वक्ष्यति हि "तत्र ति भिक्षुरात्रेयः" इति, वैखानसा इति, कर्म्मविशेषप्रयुक्ता संज्ञा, वालखिल्यास्तु स्वल्पप्रमाणाः केचिदृषयः ; निधय इव निधयोऽक्षयत्वादिना, यमो दान्तत्वम्, इमामित्यग्रे वक्ष्यमाणाम्॥"

चक्रपाणिः—धारणाद्धर्म्मः, स चात्मसमवेतः कार्य्यदर्शनानुमेयः, अर्थः सुवर्णादिः, काम्यत इति कामो वनितापरिष्वङ्गादि, मोक्षः संसारविमोक्षः, आरोग्यं रोगाभावाद् धातुसाम्यं, मूलं कारणम्,

* दमस्येति चक्रः। † तस्यापहर्त्तार इति चक्रः।

प्रादुर्भूतो मनुष्याणामन्तरायो महानयम् ।
कः स्यात् तेषां शमोपाय इत्युक्त्वा ध्यानमास्थिताः ॥ ३

मोक्षे सुखाभावात् । मूलमादिकारणम् । तच्चादृष्टमपि तद्द्वारणायाह, उत्तममिति । सत्यपि जीविनामदृष्टे मानुषिकादिशरीरित्वाभावे पारलौकिकशरीरित्वे धर्म्मादयो यस्मान्नोत्पद्यन्ते तस्मादारोग्यं मानुषिकादिकर्म्मकारिशरीरिव्याधिविरहः । सत्यपि व्याधितमनुष्यादीनामदृष्टे धर्म्मादयो नोत्पद्यन्ते रुजाकुलेन्द्रियत्व-प्रतिबन्धत्वात् । धर्म्मादिषु आरोग्यमूलत्वं दर्शयितुमाह, रोगा इति । तस्य श्रेयसः श्रेयोन्तस्य; अन्तशब्दलोपादिह धर्म्मादिचतुष्कस्येत्यर्थः । यद्वा सामीप्येन गङ्गायां घोषवत् धर्म्मादिषु चतुर्षु लक्षणा । अथवा प्रशस्यशब्दात् ईयसुना श्रेयःशब्दस्य प्रशस्ततमानां बोधकत्वात् प्रशस्ततमा धर्म्मादयश्चत्वारो लभ्याः । तत्रापि मोक्षस्य प्रशस्ततमत्वेन श्रेयःशब्दाभिधेयत्वं योगरूढित्वेनाबोध्यम् । यद्वा तस्येत्यारोग्यस्येति योज्यम् । न केवलं रोगा धर्म्माद्यपहर्त्तारस्ततोऽधिकदोषशालिनोऽपीत्याह, जीवितस्य चेति । यद्वा रोगावसाने धर्मादयः स्युरित्याह । एतेनैतदुक्तम् । स्वयं रोगशमनं न स्याद्विना भेषजेन, यदि वा स्यात्, आयुः परिहीयते, यावता कालेन हि स्वयं वा चिकित्सया वा रोगशान्तिर्भविता, तावत्कालन्तु न धर्म्माद्यर्थः स्यात् । यदि वा तेन व्याधिना मृत्युः स्यात् तदा तज्जन्मनि न स्युरेव धर्म्मादयः । किञ्च व्याधीनां चिरसत्त्वे न दुर्बलेन्द्रियत्वादायुःक्षयादयश्च स्युरित्यतः शरीरिणामारोग्यं रोगानुत्पत्त्युत्पन्नव्याधिशान्त्यन्यतरत् धर्म्मादिषु निदानमिति । मनुष्याणां महानन्तरायो महान् विघ्नो रोगरूपः प्रादुर्भूतः । तेषां रोगार्त्तमनुष्याणां कः शमोपायो विघ्नोपशमकारणं स्यादित्युक्त्वा ते महर्षयोऽङ्गिरःप्रभृतयो ध्यानमास्थिताश्चक्रुर्ज्ञानबुद्धिमत्त्वात् । युक्तज्ञानं हि ध्यानधारणं नापेक्षते ॥ ३ ॥

उत्तममिति प्रधानं, तेनारोग्यं चतुर्वर्गे प्रधानं कारणं, रोगगृहीतस्य क्वचिदपि पुरुषार्थेऽसमर्थत्वादित्युक्तं, तस्यापहर्त्तार इति आरोग्यस्यापहर्त्तारः, इदमेव च रोगाणामारोग्यापहरणं यदुत्पत्त्यैव क्षामः, न पुनरुत्पन्नो रोगः पश्चादारोग्यमपहरति भावाभावयोः परस्पराभावात्मकत्वात्, श्रेयसः जीवितस्य चेति श्रेयोरूपजीवितं हितस्य न सुखस्य च चार्थे दीर्घञ्जीवितीये वक्ष्यमाणं, तस्य जीवितस्यापहर्त्तार इति योजनीयं, अश्रेयः जीवितमहितस्य च दुःखहेतुतया चायुर्वेदमिति कृत्वा तदपहरणमिह नोक्तं । अत्र सुखहितजीवितोपघातो धर्म्मोपघातेनैव लब्धः, तेन वयं पश्यामः—श्रेयःशब्देन

अथ ते शरणं शक्रं ददृशुर्ध्यानचक्षुषा ।
स वक्ष्यति शमोपायं यथावदमरप्रभुः ॥ ४
कः सहस्राक्षभवनं गच्छेत् प्रष्टुं शचीपतिम् ॥
अहमर्थे नियुज्येऽयमत्रेति प्रथमं वचः ।
भरद्वाजोऽब्रवीत् तस्मादृषिभिः स नियोजितः ॥ ५

गङ्गाधरः—ननु ध्यानधारणेन किमभूदित्याह ;—अथेत्यादि । अथ ध्यानावस्थानानन्तरं ते ध्यानस्था अङ्गिरःप्रभृतयो महर्षयः शक्रं मघवानं शरणं ध्यानचक्षुषा चिन्ताशालिमनसा निश्चयबुद्धिलक्षणचक्षुषा ददृशुः । ननु शक्रं शरीरिणां विघ्नसमुत्पत्तौ शरणत्वेन यद् ध्यानचक्षुषा ते महर्षयो ददृशुस्तत् किं शक्रः शरीरिणां चिकित्सया विघ्नभूतरोगोपशमं करिष्यति उतान्यथा वेत्यत आह, स वक्ष्यतीत्यादि । स शक्रश्चिकित्सया न शरीरिणां विघ्नभूतरोगोपशमं करिष्यति, किन्तु यथावत् यथाविधिना व्याधेः शमोपायं वक्ष्यति । इत्थमेव शक्रं शरणं ददृशुरिति भावः ॥ ४ ॥

गङ्गाधरः—अथ मुनयः किं चक्रुरिति महर्षीणां तत्र कृतेतिकर्त्तव्यतामाह—कः सहस्राक्षेत्यादि । शचीपतिरित्यनेन शचीसिक्तरेतसमपि शक्रं सर्व्वलोकपालकत्वादुपासितुमर्हतीति सूचितम् । सर्व्वेषु महर्षिषु परस्परं भाषमाणेषु प्रथमं भरद्वाजस्तान् महर्षीन् अत्रार्थेऽस्मिन् प्रयोजनेऽयमहं नियुज्ये भवद्भिरिति वचो यस्मादब्रवीत् तस्माद्भरद्वाज ऋषिभिरङ्गिरःप्रभृतिभिर्नियोजितः प्रेरित इति । ऋषिप्रोक्तो भरद्वाज इति यत् पूर्व्वमुक्तं तत्र ऋषिप्रोक्तिविवरणमेतद्बोध्यम् ॥ ५ ॥

सामान्येनाभ्युदयवाचिना धर्म्मादयोऽभिधीयन्ते, जीवितशब्देन च जीवितं, यतो जीवितं स्वरूपेणैव सर्व्वप्राणिनां निरुपाध्युपादेयं, वचनं हि "आत्मकिमेव च महान् इयमास्माकीरायुष्माणमूर्द्धासम्" इति यत्त्वत्यन्तदुःखगृहीतस्य जीवितं जिहासितं, तत्र दुःखस्यात्यन्तजिहासितत्वाच्छ्याहातुमशक्यत्वात् प्रियमपि जीवितं त्यक्तुमिच्छति न स्वरूपेण । अन्तराय इति धर्म्मादिविघातके बोद्धव्यः । प्रभवमिति रोगप्रादुर्भावरूपः, तेषामिति रोगाणां, शरणमिति रक्षितारं, शतक्रतुमिन्द्रं पश्यन्ते, ध्यानं समाधिविशेषस्तद्रूपकल्पितसाधनत्वात् चक्षुरिव ध्यानचक्षुः, तेन "स वक्ष्यति शमोपायं यथावदमरप्रभुः" इति च ध्यानचक्षुषा ददृशुरिति योजना ॥ ३।४ ॥

चक्रपाणिः—अथैतेषु मध्ये भरद्वाजः कथमिन्द्रमुपागत इत्याह क इत्यादि ।—शचीपतिमित्यनेन शचीसम्भोगाव्यासक्तमपि अहमुपासितुं क्षम इति भरद्वाजो दर्शयति, अर्थे प्रयोजने, नियुज्येऽधिकार्य्योऽयं, अत्र प्रकृते, अत्रेतिशब्दो यस्मादर्थे, यथा "सुभिक्षमित्यागतः"—यस्मात् सुभिक्षं

स शक्रभवनं गत्वा सुरर्षिगणमध्यगम् ।
ददर्श बलहन्तारं दीप्यमानमिवानलम् ॥
सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरम् ।
प्रोवाच भगवान् धीमान् ऋषीणां वाक्यमुत्तमम् ॥
व्याधयो हि समुत्पन्नाः सर्व्वप्राणिभयङ्कराः ।
तद् ब्रूहि मे शमोपायं यथावदमरप्रभो ॥ ६
तस्मै प्रोवाच भगवानायुर्व्वेदं शतक्रतुः ।
पदैरल्पैर्मतिं बुद्ध्वा विपुलां परमर्षये ॥

गङ्गाधरः—ननु भरद्वाजः शक्रोपगमनं कथं चकार तदाह ;—स शक्रेत्यादि । सुराणां देवानामृषिगणः सुरर्षिगणस्तस्य मध्यगं बलहन्तारं बलनामासुरारिं शक्रमिति यावत् । एतेन प्रजाविघ्नकरहन्तृत्वं शक्रस्य दर्शितम् । दीप्यमानमिति । कृततपस्त्वेन प्रसिद्धतेजोभिरिति शेष इति सूचयितुमनलस्य न किञ्चिद्विशेषणमुक्तम् । तस्य प्रसिद्धतेजस्त्वात् । एतेनानलवत् प्रसिद्धतेजस्वित्वेन शक्रस्य दर्शनात् । भरद्वाजस्य क्रियमाणतपसा जायमानतेजस्वित्वेन ब्राह्मणजातिमत्त्वेऽपि उपाध्यायशिष्यभावयोग्यतोक्ता । "तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः" इत्यनेन महर्षीणां तपस्योत्पद्यमानतेजस्त्ववचनात् । शक्रसदनं गत्वा इन्द्रं दृष्ट्वा किं चकार तदाह—सोऽभिगम्येत्यादि । आशीः शुभचिन्तासूचनवाक्यं जयेतिरूपम् वाक्यमाह, व्याधय इत्यादि । सर्व्वप्राणीति । स्थावरजङ्गमानां सर्व्वप्राणभृताम् । हि यस्मात् तस्मात् ॥ ६ ॥

गङ्गाधरः—इति भरद्वाजवचनं श्रुत्वा शक्रः किं चकार तदाह ;—तस्मा इत्यादि । शतक्रतुः शक्रः । पदैरल्पैरिति अल्पाक्षरमयवाक्यप्रयोगेण विपुलां भरद्वाजस्य मतिं बुद्ध्वा तस्मै भरद्वाजाय परमर्षये प्रोवाच अध्यापनव्यापारेण ददौ । कीदृशरूपमायुर्व्वेदं प्रोवाचेत्यत आह—हेत्वित्यादि । हेतुरिति—हेतुः कारणं

तस्मादागत इत्यर्थः । नियोजित इति धीरादिकोणिच्, न हेतौ, अनेन प्रकरणेन भरद्वाजस्यायुर्वेदागमे विशेषेणार्थित्वात् न प्रेरणमिति दर्शितं भवति ॥ ५।६ ॥

चक्रपाणिः—प्रोवाचेति सम्यगुवाच, न तु प्रपञ्चः प्रपञ्चार्थः पदैरल्पैरित्युक्तत्वात् ; कस्मात् पदैरल्पैरप्यपरेणाह मतिं बुद्ध्वा विपुलामिति, यस्माद्विपुलमतिं भरद्वाजं प्रतिपन्नवान् तस्मात् पदैरल्पै-

हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम्।
त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः॥ ७

बीजमित्यनर्थान्तरम्। स च द्विविधः—उपयोगिहेतुरुत्पादकश्च। तत्रोपयोगिहेतुः प्रयोजनीभूतयोर्धातुसाम्यरक्षणकरणयोर्विषये यस्योपयोगिता। स च द्विविधः। आधारभूतः सहकारी च हेतुः। तत्राधारः शरीरं मनश्च। सहकारी पुनः शरीरादिविशेषज्ञानमुत्पादकश्च हेतुरिति द्विधा। तत्रोत्पादको द्विधा समवायी निमित्तरूपश्च। तत्र समवायी च द्विविधः। चेष्टावान् निश्चेष्टश्च। चेष्टावान् द्रव्यरूपो वातादिः। निश्चेष्टो गुणरूपो दोषदूष्यस्थानसंयोगादिः। निमित्तरूपश्च दण्डादिः। लिङ्गं तद् येनोपलभ्यते। औषधं गुणचतुष्पादरूप, तेषां ज्ञानं तानि ज्ञायन्ते येन तत्। ननु सुखहेत्वादिज्ञानरूपायुर्व्वेदवत् दुःखहेत्वादिज्ञानमप्यायुर्व्वेदरूपं किं न वा तद्धेतुलिङ्गौषधज्ञानत्वादित्याह, स्वस्थातुरपरायणमिति। स्वस्थो धातुसाम्यवान्। आतुरो धातुवैषम्यवान्। तयोः परमुत्कृष्टमायनमागमनं येन तत् तथा। वस्तुतस्तु स्वस्थातुरपरायणमिति, स्वस्थे चातुरे च परं तत्परं तात्पर्य्यवद्विवक्षितमयनं गतिवर्त्म। स्वास्थ्यरक्षणातुर्य्यनिवृत्तिरूपप्रयोजनसाधनोपदेशरूपमित्यर्थः। स्वस्थस्य चातुरस्य चेति करणे तु स्वास्थ्यहेतुलिङ्गौषधज्ञानमातुर्य्यहेतुलिङ्गौषधज्ञानमुपदेशरूपमायुर्व्वेदं बुबुधे इति लभ्यते। तथात्वे हि शारीरारिष्टादिज्ञानार्थमुपदेशस्यावैयर्थ्यं स्यात् तस्मात् स्वस्थातुरपरायणमित्येवोक्तम्। एतेनायुर्वेदस्य स्वास्थ्यरक्षणातुर्य्यशान्तिसाधनहेतुज्ञानलिङ्गज्ञानौषधज्ञानकरणयावद्वस्तूपदेशवाक्यात्मकाथर्व्ववेदत्वमुक्तम्। मारणादिक्रूरकर्म्मादीनामुपदेशवाक्यात्मकाथर्व्ववेदत्वञ्च वारितम्। तथा चायुर्व्वेदे मारणोच्चाटनस्तम्भनमोहनवन्ध्याकरणगर्भपातनादीनां हेतुलिङ्गौषधानि

स्वार्थेति भावः, मतिश्च बहुविषयत्वेनोपचाराद्विपुलेत्युच्यते सा च मतिः शुश्रूषाश्रवणग्रहणधारणोहापोहतत्त्वाभिनिवेशवतीह विपुला बोद्धव्या, अत्र च इन्द्रेण दिव्यदृशा भरद्वाजाभिप्रायमप्रश्नत एव बुद्ध्वा आयुर्व्वेद उपदिष्टः, तेन भरद्वाजस्य इन्द्रप्रश्नादि इह न दर्शितं, किंवा भूतमपि इन्द्रप्रश्नादि ग्रन्थविस्तरभयादिह न दर्शितम्॥

भरद्वाजोऽसावल्पपदैरुपदिष्ट आयुर्व्वेदस्तमाह हेतुलिङ्गौषधज्ञानमिति।—हेत्वादीनि ज्ञायन्ते अनेनेति हेतुलिङ्गौषधज्ञानं, यावच्च आयुर्व्वेदवाच्यं तावदेतावानेव तमित्यर्थः; हेतुग्रहणेन सन्निकृष्टविप्रकृष्टव्याधिहेतुग्रहणं, लिङ्गग्रहणेन च व्याधेरारोग्यस्य च कृत्स्नं लिङ्गमुच्यते, तेन स्वभावारोग्ये अपि लिङ्गज्ञानमुच्यते, धातुसाम्यमपि हि लिङ्गेनैव ज्ञायते. "लिङ्गज्ञान-

सोऽनन्तपारं त्रिस्कन्ध * मायुर्वेदं महामतिः।
यथावदचिरात् सर्व्वं बुबुधे तन्मना मुनिः॥

प्राणिनां परिहायोपदेक्ष्यमाणानि सन्ति न तु मयोक्तव्यतयोपदेक्ष्यन्त इति, सन्त्यपि न सन्तीति बोध्यम्। ननु ब्रह्मणा प्रोक्त मरणादिमूचकायुर्व्वेदं विहाय किमल्पैः पदैरसम्पूर्णं शक्र एवेदमायुर्व्वेदं भरद्वाजाय प्रोवाचेत्याशंक्याह, त्रिसूत्रमित्यादि। पितामहो ब्रह्मा त्रिसूत्रं हेतुलिङ्गौपधानि त्रीणि सूत्र्यन्ते येन यत्र वेति त्रिसूत्रमायुर्व्वेदं स्वस्थातुरपरायणं हेतुलिङ्गौपधज्ञानम् अत एव त्रिसूत्रमायुर्व्वेदं तस्मै प्रोवाचेत्युभयत्र योजनीयम् हेत्वित्यादि पुण्यान्तम्। शाश्वत नित्यम्। नित्यत्वञ्चास्य स्वयमेवार्थे दशमहामूलीये प्रतिपादयिष्यते। शाश्वतमिति तु हेतुः। पुण्यं जन्यतयास्त्यस्येति पुण्यवन्तं पुण्यजनकमिति यावत्। शाश्वतमित्युक्त्या यं बुबुधे इत्युक्त्या चायुर्व्वेदस्य योगध्यानाभ्यासादिबोद्धादिप्रकाशकश्च ब्रह्मा न तु कर्त्तेति ख्यापितम्॥ ७॥

<u>गङ्गाधरः</u>—ननु शक्रस्तस्मै प्रोवाच स चाध्येतुं शक्नोति वा न वेत्यत आह;—सोऽनन्तेत्यादि। सोऽपि भरद्वाजो महामतिर्मुनिस्तन्मनास्तत्रायुर्व्वेदे ग्रहणार्थं मनोऽनन्यविषयकधीधारणेनैकाग्रचित्तं यस्य स तादृशः सन सर्व्वं निरवशिष्टं तं त्रिस्कन्दं त्रिसूत्रं त्रीणि हेतुलिङ्गौपधानि स्कन्धन्ते गम्यन्ते येन यत्र वेति त्रिस्कन्दं त्रिसूत्रमिति यावत्। अनन्तपारं न न्तोऽन्तः शेषः पारः परतटश्च एतौ यस्य तं तथा। अन्ताभावः पाराभावे हेतुः। अचिरादतिशीघ्रं यथावद-

मूकानां ज्वर एको हि लक्षणं। विषमारम्भमूलार्थं ज्वर एको निगद्यते॥" इत्यादि। औषधग्रहणेन च सर्व्वपथ्यावरोधः, शरीरञ्चात्र हेतौ लिङ्गे चान्तर्भवति, सुस्थातुरयोः परमुत्कृष्टमयनं मार्ग इति सुस्थातुरपरायणम्।

किमन्योऽयं हेतुलिङ्गौषधज्ञानकस्य आयुर्व्वेदो ब्रह्मयुक्तादायुर्व्वेदात् उतानन्यः? इत्यत आह त्रिसूत्रमित्यादि।—पितामहोऽपि यं त्रिसूत्रं बुबुधे, तमिन्द्रः प्रोवाच; त्रीणि हेत्वादीनि सूत्र्यन्ते यस्मिन् येन वा तत् त्रिसूत्रं, तत्र सूचनात् सीवनात् सूत्रणाच्चार्थसन्ततेः सूत्रं, एतेन तं यथा ब्रह्मा त्रिसूत्रं बुबुधे तथैव तं हेतुलिङ्गौषधज्ञानमिन्द्रः प्रोवाचेत्यविकृतमागमं दर्शयति; बुबुधे इति न कृतवान्, अतएवोक्तं शाश्वतं नित्यं इत्यर्थः, तच्च नित्यत्वं सूत्रस्थानान्ते प्रतिपादनीयम्॥ ७॥

<u>चक्रपाणिः</u>—अथोदिष्टमायुर्व्वेदं कथं गृहीतवान् भरद्वाज इत्याह। सोऽनन्तेत्यादि।—अविद्यमानावन्तपारौ यस्यासावनन्तपारः, अत्र पारशब्देन गोबलीवर्दन्यायेनाधिक्यमते, पारशब्दो ह्यभयो-

* त्रिस्कन्धमिति चक्रः।

तेनायुरमितं लेभे भरद्वाजः सुखान्वितम्।
ऋषिभ्योऽनधिकं तन्तु * शशासानवशेषयन्॥

यथाविधि उपदिष्टं बुबुधेऽधीतवान्। अनन्तपारमप्यायुर्व्वेदं त्रिस्कन्धरूपेणान्तपारशालितया ज्ञातुं शक्नोति। यथामति कालाधिक्याल्पत्वाभ्यामिति सूचितम्। भरद्वाजस्तु महामतितन्मनस्त्वाभ्यामचिरात् बुबुधे। तादृशोऽप्यपरोऽचिराज्ज्ञातु शक्नोति। अतादृशस्तु चिरेण शक्नोति वा न वेति भावः। ननु काव्याद्यनुशासनादिशास्त्रेण स्ववाच्यज्ञानं जन्यते यथा तथाऽनेनापि, कथमस्य पुण्यत्वं शाश्वतत्वञ्चोच्यते, इत्यतस्तत्फलञ्चाह—तेनायुरित्यादि। पुण्यं यस्मादायुस्तस्मात् पुण्यजनकत्वादायुर्जनकोऽयमायुर्व्वेदः। पुण्यजनकश्चायं शश्वता परमेश्वरेण प्रोक्तत्वात्। यथा त्रयी। तेनेति—यथा अमितमपरिमितमसङ्ख्यकमिति यावत्। सुखान्वितमिति। लाभक्रियायाः कर्म्म, आयुरित्यस्य विशेषणं, तेन सुखममितञ्चायुः सुखान्वितं यथा स्यात्तथा लेभे। सुखत्वञ्चायुषो भरद्वाजस्यामितायुर्लाभे यावज्जीवं स्वास्थ्यलाभेन च तपोनिर्व्विघ्नत्वजनकत्वादस्यायुर्व्वेदोपदेशेन पुनः शरीरिणां स्वास्थ्यसंस्थाप्यत्व-व्याधिप्रशाम्यत्वाभ्याञ्च बोध्यम्। सज्जनानां हि परोपकारे सुखातिशयः स्यादिति। ननु भरद्वाजस्यैवामितायुर्लाभोऽभूत्परोपकारित्वञ्च स्यादङ्गिरःप्रभृतीनां तन्नियोक्तॄणां किं तन्नियोगमात्रं न चान्यत् किञ्चित् फलं लब्धमभूदित्यत आह—ऋषिभ्य इत्यादि। तु पुनर्भरद्वाजो न केवलं सुखान्वितं यथा स्यात् तथाऽमितं सुखान्वितमायुर्लेभे। ऋषिभ्यश्चाङ्गिरःप्रभृतिभ्यश्च तथायुर्वेदमनधिकं त्रिसूत्रमेव नाधिकं कृत्वाऽनवशेषयन् सावशेषञ्च न कृत्वा यथाधीतमिति यावत्। शशासाध्यापनेन ददौ। अध्यापनेन दानं दर्शयति;—ऋषयश्चेत्यादि। ननु ऋषीणामेतद्ग्रहणोपदर्शनेन शशासेत्यनेन भरद्वाजस्य ऋषीन् प्रति आयुर्वेदवाचनामात्रार्थलाभः स्यात् न त्वध्यापनेन दानार्थलाभ इति चेन्न। ग्रहधातोः समर्पणपूर्व्वकग्रहणार्थे द्विकर्म्मकत्वादत्र तदभावादनुग्रहेण दत्तस्य स्वीकारार्थत्वात् भरद्वाजादित्यस्यापि ध्रुवत्वादपादानत्वमिति।

रपि नदीकुल्योर्व्विवक्षावशाद्वक्तते; किंवा अनन्तो मोक्षः पारमुत्कृष्टं फलं यस्यायुर्व्वेद[illegible]पारः, वक्ष्यति हि "चिकित्सा तु नैष्ठिकी या विनोपधाम्" इति अत्र नैष्ठिकी मोक्षसाधनहेतुः। त्रयो हेत्वादयः स्कन्धरूपा यस्य स त्रिस्कन्धः, स्कन्धश्च स्थूलावयवः प्रविभागो वा, तत्रैवायुर्व्वेदग्रहणे मनो यस्य स, तन्मनाः, मननात् शास्त्रार्थचिन्तनात् मुनिः। एतेन यथावत्त्वं महामतिः,

* तन्त्वेति पाठः।

ऋषयश्च भरद्वाजाज्जगृहुस्तं प्रजाहितम् ।
दीर्घमायुश्चिकीर्षन्तो वेदं वर्द्धनमायुषः ॥ ८
तमृषयस्ते * ददृशुर्यथावज्ज्ञानचक्षुषा ।
सामान्यञ्च विशेषञ्च गुणान् द्रव्याणि कर्म च ॥

नन्वङ्गिरःप्रभृतीनां भरद्वाजादायुर्व्वेदग्रहणं किं स्वस्वोपकाराय कि परोपकारायेत्यत आह—प्रजाहितमिति। ग्रहणक्रियायुर्व्वेदयोर्विशेषणतयैव योज्यमेतत् प्रजाहितपदम्। किं केवलं प्रजाहितमायुर्वेदं जगृहुरित्यत आह, दीर्घमायुरित्यादि। ननु दीर्घमायुश्चिकीर्षन्तो महर्षयः कथं प्रजाहितमायुर्व्वेदं जगृहुस्तेन तेषां कि स्यादित्यत आह, आयुषो वर्द्धनमिति। वेदमायुर्व्वेदं पदार्थाख्यतन्त्रयुक्तया तत्परतालाभाद् वेदपदस्य अथवायुष इति पदं वेदपदवर्द्धनपदाभ्यां योज्यम् ॥ ८ ॥

गङ्गाधरः अथायुर्व्वेदाध्ययनेन ज्ञानचक्षुषा। ज्ञानं निश्चयात्मकं युक्तं चक्षुर्ज्ञानचक्षुस्तेन ददृशुः। किमित्यत आह—सामान्यमित्यादि। सामान्यञ्च विशेषञ्चेति चकारद्वयं मिथो भेदार्थम्। गुणादिभिस्त्रिभिः सह प्रत्येकमन्वयार्थन्तु कर्म चेति चकारः। समवायस्य सामान्यविशेषाभ्यां सहान्वयार्थं समवायञ्चेति चकारः। सामान्यविशेषाभ्यां सह प्रत्येकमन्वितगुणद्रव्यकर्म्मभ्योऽपि भेदाख्यानाय च। तेन सामान्यं सामान्यस्वरूपान् गुणान् सामान्यरूपद्रव्याणि सामान्यभूतं कर्म्म च। विशेषं विशेषात्मकगुणान् विशेषात्मकानि

तन्मनाश्च, मुनिश्च, तेनानन्तपारमपि आयुर्व्वेदं हेत्वादिस्कन्धत्रयमालम्ब्य कृत्वा यथावदायुर्व्वेदमचिरादेव प्रतिपन्नवानित्यर्थः। अचिरादित्यचिरेण। अत्र च यथा ब्रह्मा त्रिसूत्रं बुबुधे, यथा चेन्द्रो हेतुलिङ्गौषधज्ञानं प्रोवाच, तथैव भरद्वाजोऽपि त्रिस्कन्धं बुबुधे, इत्यनेनायुर्व्वेदस्याविप्लुतागम उपदर्श्यते, तेन त्रिसूत्रत्रिस्कन्धयोर्न पुनरुक्तिः। तेनेति इन्द्राद् गृहीतेनायुर्व्वेदेन। अमितमिति अमितमिवामितमतिदीर्घत्वात्। आयुःशब्दश्चायुःकारणे रसायनज्ञाने बोद्धव्यः, येनोत्तरकालं हि रसायनोपयोगात् अयं भरद्वाजोऽमितमायुरवाप्स्यति, न ऋषिभ्य आयुर्व्वेदकथनात् पूर्व्वं, येनायुर्व्वेदमधीत्यानन्तरमेवायं तदृषिभ्यो दत्तवान् न पूर्व्वं रसायनमाचरति स्म ; किंवा सर्व्वप्राण्युपकारार्थाधीतायुर्व्वेदजनितधर्म्मवशात् तत्कालमेवामितमायुरालेभे भरद्वाज इति बोद्धव्यम्। तमिति श्रुतं, यदा तमिति पाठः, तदा तमायुर्व्वेदं ; अनवशेषपर्यवसिति कात् स्नेनेत्यर्थः। दीर्घमायुश्चिकीर्षन्त इति प्राणिनामात्मनश्च ॥ ८ ॥

चक्रपाणिः—ज्ञानार्थं ज्ञानरूपं वा चक्षुः ज्ञानचक्षुः तेन ज्ञानचक्षुषा ; आयुर्व्वेदेन किं ददृशुरि-

* महर्षयस्ते इति चक्रः ।

समवायञ्च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः ।
लेभिरे परमं शर्म जीवितञ्चाप्यनित्वरम् * ॥ ६

द्रव्याणि विशेषात्मकं कर्म्म चेति । समवायञ्च सामान्यं विशेषञ्च ददृशुरित्यर्थः । अथ सामान्यादिकं षट्कं ददृशुः । प्रत्येकं भेदात् । तथा च चकारचतुष्कान्यतममात्रत्र चकारषट्कं यं प्रत्येकमभेदमिथोभेदयोर्ज्ञापनार्थमिति, तन्न, द्रव्यगुणकर्म्मसमवायेभ्यः सामान्यविशेषयोरनतिरिक्तत्वात् तथा विपरीतन्यमुत्तरकालम् । द्रव्यस्य प्राधान्येऽपि यथास्वगुणसमुदायात्मकत्वख्यापनाय गुणानिति प्राग्द्रव्यादुपात्तमिति यत् तन्न, मूर्त्तप्रशानां द्रव्यत्वेन गुणातिरिक्तत्वात् । गुणकर्म्माश्रयत्वख्यापनाय तु मध्ये तयोर्द्रव्यनिर्देशात् । ननु शास्त्रान्तरे द्रव्यादीनां प्रस्वरूपतत्त्वज्ञानाद् व्यवहारिकसकलतत्त्वज्ञानोपायः स्यात् तेन च निःश्रेयसाधिगमस्तेन परमपुरुषोऽतिरिक्तः पदार्थः ख्यापितो वैशेषिकन्याये कणादे तद्यथा । "अथातो धर्म्मं व्याख्यास्यामः ॥ १ ॥ यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः ॥ २ ॥ धर्म्मविशेषप्रसूतात् द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्म्यवैधर्म्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ॥" ४ ॥ इति । द्रव्यादीनां षण्णां पदार्थानां वस्तूनां साधर्म्म्यवैधर्म्म्याभ्यां विशिष्टानां यत्तत्त्वज्ञानं याथार्थ्येन ज्ञानं तदभ्युदयसिद्धिकारणकर्म्मजनितपुण्यवशात् धर्म्मविशेषं मिथ्याज्ञानादिनाशं सूते । तद्धर्म्मविशेषसूताद् द्रव्यादीनां षण्णां साधर्म्म्यवैधर्म्म्याभ्यां विशिष्टानां तत्त्वज्ञानान्निःश्रेयसं भवति । बन्धो हि पुरुषस्य यदा स्थूलरूपेणारम्भो भवति द्रव्यादिभिस्त्रिभिः समवेतैः तेषां तत्त्वज्ञानात् तदारब्धपुरुषस्य मिथ्याज्ञानापायो भवति, मिथ्याज्ञानापायाद्दोषापायो, दोषापायात् प्रवृत्त्यपायः, प्रवृत्त्यपायाज्जन्मापायो, जन्मापायाद् दुःखापायो, दुःखापाये विद्योदयः ; स च ज्ञानप्रकाशः । तस्मादपवर्गो भवतीति पुरुष एवाधिकरणमस्य शास्त्रस्येति ज्ञापितम् । आन्वीक्षिकीन्याये गौतमेनाक्षपादेनाप्युक्तम्—"प्रमाणप्रमेयेत्यादीनां तत्त्वज्ञानान्निःश्रेयसाधिगमः । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापायादनन्तरापायेऽपवर्ग इति, तेनात्मादिषु प्रमाज्ञानादात्मादिरूपेण ज्ञानस्य मिथ्याज्ञानस्यापायान्निःश्रेयसे प्राप्ते तु परमपुरुष-

स्याह सामान्यञ्चेत्यादि ।—तेषाञ्चोत्तरत्र लक्षणं षण्णां पदार्थानां विषयरूपाणां भविष्यति, तेनैतत् तत्रैव व्याख्यानीयं, तद्विविधं सामान्यादि । तन्त्रोक्तं विधिमित्यपथ्यपरिहारपथ्योपादानरूपं, शर्म्म सुखं, परमिति दुःखानाक्रान्तं, अनित्वरमित्यगत्वरम् ॥ ६ ॥

---

*अनश्वरमिति पाठः ।

अथ मैत्रीपरः पुण्यमायुर्व्वेदं पुनर्व्वसुः ।
शिष्येभ्यो दत्तवान् षड्भ्यः सर्व्वभूतानुकम्पया ॥
अग्निवेशश्च भेलश्च जतूकर्णः पराशरः ।
हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्व्वचः ॥ १०

रूपेणाभिनिष्पत्तिरात्मनो भवति, स उत्तमः पुरुषो द्रव्यादिषड्भ्योऽतिरिक्तः इति न षट्पदार्थनियमस्तद्दोषान्मुक्तिश्च । षोड़शादिष्वप्येवमिति साङ्ख्ये कपिलेनोक्तमिति न तद् व्यवहारिकपदार्थ उत्तमपुरुषः स ह्यव्यपदेश्योऽव्यवहार्य्योऽलौकिकः पदार्थ इत्यभिप्रायेण । ननु ज्ञानचक्षुषा सामान्यादीन् दृष्ट्वा ते यच्चक्रुस्तदत आह —तज्ज्ञात्वेत्यादि । तत् सामान्यादिकं ज्ञात्वा तन्त्रोक्तमायुर्वेदोक्तं विधिं स्वस्थानुरक्षणार्त्तनिवृत्त्युपायज्ञानमास्थिता आश्रिता बभूवुः । आयुर्व्वेदतन्त्रोक्तविधेरास्थायां हेतुः सामान्यस्य विशेषादेश्च सप्रभेदस्य ज्ञानजनकदर्शनम् । तद्दर्शनशालिनामायुर्व्वेदोक्तविधाने षडेव पदार्था व्यवहार्य्या इत्युक्तं भवति, तेन सामान्यविशेषौ द्रव्यादिषु चतुर्ष्वन्तर्भूतावपि वृद्धिह्रासहेतुत्वादेकत्वपृथक्त्वकरत्वाच्च, प्रयोजनविशेषात् पृथगुक्तौ, वैशेषिके बुद्ध्यपेक्षत्वप्रयोजनविशेषात् पृथगुक्तावेव ज्ञेयौ । तेन महर्षयो न केवलं तन्त्रोक्तं विधिमास्थिताः परमं शर्म्म सुखमनित्वरमगमनशीलम् । अनश्वरमिति पाठे स्वनाशशीलं जीवितमायुश्च लेभिरे । एतेनायुर्व्वेदस्य शाश्वतत्वात् पुण्यजनकत्वम् । पुण्यजनकत्वादायुर्जनकत्वं प्रजाहितत्वं सुखजनकत्वञ्चेत्युक्तम् । नन्वेवमेतन्मात्रं महर्षयश्चक्रुः किं तेन ? तेन किं भूतानुकम्पया प्रजानामित्याकाङ्क्षायाम् । आयुर्व्वेदो यो वक्तव्यः स किमेवमेव पारम्पर्य्येणोपदिष्टस्त्रिसूत्ररूप आत्रेयोक्त उतान्यादृशो वेत्याकाङ्क्षायाञ्च ॥ ९ ॥

गङ्गाधरः—तदायुर्व्वेदस्यातिप्रयोजनभूतश्च किमग्निवेशोक्तो व्याख्यातव्यस्तस्यायुर्व्वेदान्तर्गतत्वज्ञापनाय ऋषीणां प्रजानुकम्पाशालित्वेऽपि प्रजोपकारायायुर्व्वेदस्य प्रकाशकत्वज्ञापनाय चाह—अथेत्यादि । अथ ब्रह्मण प्रजापतेः

चक्रपाणिः—अथेत्यादिना भरद्वाजशिष्यस्यात्रेयस्य पुनर्व्वसुपरनाम्नोऽग्निवेशादिगुरुतां दर्शयति, अत्र केचित् भरद्वाजात्रेययोरैक्यं मन्यन्ते, तन्न, भरद्वाजसंज्ञया आत्रेयस्य क्वचिदपि तन्त्रप्रदेशेऽकीर्त्तनात् । हारीते चात्रेयादिगुरुतया भरद्वाज उक्तः, "शक्रादहमधीतवान्" इत्यादिना "अतः पुनस्संख्येयाः त्रिसूत्रं त्रिप्रयोजनम् । अथात्रेयादिपर्य्यन्ता विदुः सप्त महर्षयः । आत्रेयात् हारीतऋषिः" इत्यन्तेन । वाग्भटेन तु यदुक्तं "ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिमजिग्रहत् ।

बुद्धे र्विशेषस्तत्रासीन्नोपदेशान्तरं मुनेः।
तन्त्रस्य कर्त्ता प्रथममग्निवेशो यतोऽभवत् ॥
अथ भेलादयश्चक्रुः स्वं स्वं तन्त्रं कृतानि च।
श्रावयामासुरात्रेयं सर्षिसङ्घं सुमेधसः ॥

प्रजापतितोऽश्विनीकुमारयोरश्विभ्यामिन्द्रस्य इन्द्राद्भरद्वाजस्य भरद्वाजादङ्गिरःप्रभृतीनामायुर्व्वेदग्रहणानन्तरमङ्गिरःप्रभृतिमहर्षिषु मध्ये आत्रेयः पुनर्व्वसुर्मैत्रीपरः प्रजानां मित्रतायां तत्परः सन भूतानुकम्पया आयुर्व्वेदं षड्भ्यः शिष्येभ्यो दत्तवान्। अध्यापनेनेति शेषः ॥ १० ॥

गङ्गाधरः—के च ते शिष्याः षडित्यत आह अग्निवेश इत्यादि। एतेऽग्निवेशादयस्तन्मुनेः पुनर्व्वसोर्व्वच आयुर्व्वेदाध्यापनरूपं तस्मादेव जगृहुः। क्रियाप्रधानत्वादाख्यातवाक्यस्येह सम्बन्धापादानयोरुभयोः प्राप्तौ क्रियापेक्षकत्वेन कारकस्य प्राधान्यादुभयार्थे ऽपादानत्वम्। तन्मुनेरिति। न त्वावृत्त्या षष्ठ्यन्ततया पुनरुपस्थितिः। तत्राग्निवेशादिषु अग्निवेशस्य बुद्धे र्विशेषस्तन्त्रकरणप्रवृत्तिबुद्धिरासीत् उपदेशान्तरं मुनेः पुनर्व्वसोरध्यापनरूपोपदेशादन्यस्तन्त्रकरणार्थमुपदेशो नासीत्। यथाधीतायुर्व्वेदं पुनर्व्वसुर्दत्तवान तस्य व्याख्यावाहुल्येनोपदेशं कृतवान न तु तन्त्रकरणार्थमुपदेशमित्यर्थः। यतो यस्मात् प्रथमं तन्त्रस्यायुर्व्वेदशास्त्रस्य कर्त्ताऽग्निवेशोऽभवत्। अथाग्निवेशस्यायुर्व्वेदस्याशेषविशेषव्याख्यानेन शास्त्रकरणदर्शनानन्तरं भेलादयः पञ्च क्षारपाणन्ता मुनयः स्वं स्वं तन्त्रं चक्रुरित्यग्निवेशानन्तर्य्येण भेलादीनामग्निवेशापेक्षयाऽल्पबुद्धित्वंख्यापितम्। तेन च पुनर्व्वसुतोऽप्युपदेशान्तराभावेन यथास्वमतिभिः स्वस्वतन्त्रकरणादग्निवेशतन्त्रापेक्षयाऽपकर्षश्च भेलादितन्त्राणामाख्यात इति भावः।

सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान् मुनीन्' इत्यनेनात्रेयस्य इन्द्रशिष्यत्वं, तत्रायुर्व्वेदसमुत्थानीयरसायनपादे आदिशब्देन वक्ष्यमाणेन्द्रशिष्यतायोगात् समर्थनीयम्, तत्र हीन्द्रेण पुनर्महर्षीणामायुर्व्वेद उपदिष्ट इति वक्तव्यम्। मैत्रीपरो मैत्रीप्रधानः, मैत्री च सर्व्वप्राणिष्वात्मनीव बुद्धिः ॥ १० ॥

चक्रपाणिः—बुद्धे र्विशेष उत्कर्षः, यत इति बुद्धेर्विशेषात्, स्वं स्वं तन्त्रमिति स्वस्वनामाङ्कितं भेलतन्त्रं, जतूकर्णतन्त्रमित्यादिकं, कृतानि चेत्यत्र तन्त्राणीति शेषः। पुण्यमायुर्व्वेदतन्त्रकरणलक्षणं कर्म्म येषामग्निवेशादीनां ते पुण्यकर्म्माणः तेषां पुण्यकर्म्मणाम्। सर्व्वभूतहितैषिण इति

श्रुत्वा सूत्रणमर्थानामृषयः पुण्यकर्म्मणाम्।
यथावत् सूत्रितमिति प्रहृष्टास्तेऽनुमेनिरे ॥ ११
सर्व्व एवास्तुवंस्तांस्तु सर्व्वभूतहितैषिणः।
साधु * भूतेष्वनुक्रोश इत्युच्चैरब्रुवन् समम् ॥
तं पुण्यं शुश्रुवुः शब्दं दिवि देवर्षयः स्थिताः।
सामराः परमर्षीणां श्रुत्वा मुमुदिरे परम् ॥
अहो साध्विति घोषश्च † लोकांस्त्रीनन्ववादयत्।
नभसि स्निग्धगम्भीरो हर्षाद्भूतैरुदीरितः ॥

परस्याग्निवेशादिषु मध्येऽग्निवेशो विशिष्टबुद्धिमान प्रथममायुर्व्वेदतन्त्रकर्तृत्वात्। अग्निवेशस्य बुद्धिर्भेलादिबुद्ध्यपेक्षया विशिष्टा. तथायुर्व्वेदतन्त्रकरणप्राथम्यात्। एवं पुनर्व्वसुगुरूपदेशान्तराभावकृतत्वादग्निवेशस्य तथा बुद्धिविशेषस्य स्वत उत्पन्नत्वात तन्त्रकर्तृत्वं बुद्धिविशेष हेतुः। एवं सत्युपदेशान्तराभावे बुद्धिविशेषो हेतुः। ननु तानि तन्त्राणि प्रमाणानि भवन्ति वा न वेत्यत आह. कृतानि चेत्यादि। आत्रेयं पुनर्व्वसुं सर्षिसङ्घं बहुभिर्महर्षिभिः सह वर्त्तमानम्। सुमेधसोऽग्निवेशादयः। ऋषयश्च श्रुत्वा किं चक्रुरित्यत आह श्रुत्वेत्यादि। पुण्यकर्म्मणां पुण्यजनकानाम्। अर्थानां सूत्रणं सूचनत्वाद्ग्रन्थनकरणशब्दावलिं श्रुत्वा ते पुनर्व्वसुसमीपस्था ऋषयः सपुनर्व्वसवः प्रहृष्टाः सन्तो यथावत् सूत्रितमिति ब्रुवन्तोऽनुमेनिरेऽनुमतवन्त ॥ ११ ॥

गङ्गाधरः न केवलमनुमेनिरे सर्व्व एव तु पुनस्ते सपुनर्व्वसव ऋषयस्तानग्निवेशादीन षण्मुनीन अस्तुवन प्रशंसां कृतवन्तः। ते यस्मात सर्व्वभूतहितैषिणः। सर्व्वभूतहितैषिणस्तानित्युभयत्र योज्यं विभक्तिविपरिणामेन। ते प्रहृष्टा न केवलमस्तुवन. भूतेषु साधु यथा स्यात् तथानुक्रोश इति वाक्यं समं

अग्निवेशादिविशेषणं किंवा ऋषिसङ्घविशेषणम्। साधुशब्दोऽजहल्लिङ्गतया नपुंसकलिङ्ग एव, यथा वेदाः प्रमाणमिति, केचित्तु साध्विति विशेषणस्य नपुंसकलिङ्गतानुरोधात् विशेष्यस्य अनुक्रोशमित्यपि नपुंसकलिङ्गं पठन्ति। अहो इति साध्विति प्रशंसायां, स्निग्ध इति अनुत्कटत्वेनाह्लादकत्वेन च।

* सर्व्वभूतेष्विति पाठान्तरम्। † घोषश्चेत्यत्र निर्घोष इति चक्रः।

शिवो वायुर्ववौ सर्व्वा भाभिरुन्मीलिता दिशः।
निपेतुः सजलाश्चैव दिव्याः कुसुमवृष्टयः॥ १२
अथाग्निवेशप्रमुखान् विविशुर्ज्ञानदेवताः।
बुद्धिः सिद्धिः स्मृतिर्मेधा धृतिः कीर्त्तिः क्षमा दया॥ १३

युगपदुच्चैस्तेऽब्रुवन्। यथोर्द्ध्वमब्रुवन् तद्दर्शयितुमाह— नमित्यादि। पुण्यमिति पुण्यजनकार्थसूत्रणीयत्वात् जनकत्वसम्बन्धेन पुण्यवन्तं शब्दं दिवि स्थिताः सामरा देवर्षयः। परमर्षीणां पुनर्ब्रह्मसमीपस्थानां तमुच्चैर्भूतं पुण्यं शब्दं शुश्रुवुरित्येकवाक्यम्। देवदेवर्षीणां तच्छ्रवणेन किमित्याह— श्रुत्वेत्यादि। तेषां मोदो हि तपोजपादिसिद्धिदः शुभकरश्च। मोदफलमाह— अहो इत्यादि। हर्षात् भूतैर्देवयोनिभिस्तावदाकाशनभसि उदीरितः स्निग्धगम्भीरोऽहो साध्विति घोषश्च सर्व्वत्र प्रचारशीलो महाध्वनिस्त्रीन् लोकान् अन्वनादयत् अग्निवेशादीनां पुण्यकर्म्मकार्थसूत्रणमिति शेषः। पुण्यफलमाह— शिव इत्यादि। शिवः शुभदः मृदुः पुष्पगन्धी सुगन्धिः शीतश्चेति। सर्व्वा भाभिरिति नानाविधवर्णसुगन्धिकुसुमविकाशवशेन भाभिः सर्व्वा दिश उन्मीलिताः प्रकाशिताः। दिव्याः स्वर्गीयाः सजलाः कुसुमवृष्टयश्च निपेतुः पतन्ति स्म॥ १२॥

गङ्गाधरः— नन्वग्निवेशादीनामेवंविधपुण्यकर्म्मकार्थं सूत्रणशक्तिः किमायुर्वेदाध्ययनवशादासीत्, सा च शक्तिः कीदृशीत्याह— अथेत्यादि। प्रमुखमाद्यं वर्त्तते, तेनाग्निवेशादीन् क्षारपाणिपर्य्यन्तान् षण्मुनीन् ज्ञानदेवता ज्ञानजनिका देवता विविशुः। ता आह— बुद्धिरित्यादि। अष्टौ बुद्ध्यादयः पुण्यशास्त्ररचनाधीहेतुभूता कृतिनां शक्तयः। दयया भूतहितशास्त्रप्रकाशने इच्छा, ततः प्रवृत्तिः, सत्यां प्रवृत्तौ सदर्थोद्बोधो बुद्धेरेव, सति च सदर्थोद्बोधे क्षमया नान्यमुनिष्वपि अवज्ञा, ततो धृत्या नियमात्मिकया काङ्क्षादिमद्वाक्यात्मकग्रन्थनक्षमया निर्म्मितिः, सत्यां निर्म्मितौ साकाङ्क्षतायोग्यतासत्तिमद्वाक्यग्रन्थनसिद्धिः, सिद्धौ च एवं शास्त्ररचनायां स्वयम्मूलकत्वेन रचनापत्तिस्तथात्वे हि रचितस्याग्राह्यत्वं साधुभिः स्यादिति प्रसिद्धमूलभूतशास्त्रस्याभ्यासो मेधया चिरमभ्यस्तत्वेनात्र-

शिवो वायुर्ववावित्यनेन शुभलक्षणेन प्रकृतमन्त्रकरणस्य दैवैरप्यथनोऽनुमतत्वमुपदर्श्यते। ज्ञानदेवता इति ज्ञानाभिमानिन्यो देवताः। तेन ग्रन्थकरणात् पूर्वमेवाग्निवेशादीनां बुद्ध्यादयो व्यवस्थिताः,

तानि चानुमतान्येषां तन्त्राणि परमर्षिभिः।
भावाय भूतसङ्घानां प्रतिष्ठां भुवि लेभिरे ॥ १४
हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्।
मानञ्च तच्च यत्रोक्तमायुर्वेदः स उच्यते ॥ १५

स्थितिधृत्यत्र तस्य मूलभूतशास्त्रस्यार्थविस्तारस्तदर्थसूत्र्यैवेति तदनन्तरं दयादिभिः सिद्धिपर्यन्ताभिग्रन्थनं तेन कीर्तयां साधुभिश्चाग्निवेशमिति ॥ १३ ॥

गङ्गाधरः—अग्निवेशादिकृततन्त्राणां पुनर्वसुसमीपस्थमहर्षिभिश्चानुवेऽपि प्रजानां हिताय वैद्यैर्गृहीतत्वं न वा इत्याह—तानीत्यादि। एषामग्निवेशादीनां तानि च तन्त्राणि परमर्षिभिः पुनर्वसुसमीपस्थितैरनुमतानि सन्ति भूतसङ्घानां लोकसमूहानां भावाय स्थितये भुवि भूर्लोके प्रतिष्ठां वैद्यैः पूज्यतां लेभिरे। तानिसङ्क्षेपविस्तरमित्यादिभिः स्वयं वक्ष्यति ॥ १४ ॥

गङ्गाधरः—नन्वेवं वेदाग्निवेशप्रणीततन्त्रमायुर्वेदमूलकं व्याख्यातव्यं तदा तस्मिन् तन्त्रे पारम्पर्योपदेशेनायुर्वेदग्रहणोपदेशानन्तरं प्रजाहितं किं पारम्पर्योपदेशेन शास्त्रमुक्तमित्याकाङ्क्षायाम्, अग्निवेशकृतस्यायुर्वेदमूलकतन्त्रस्याग्निवेशकृतत्वात् किं वेदत्वं नास्ति? वेदो हि शाश्वतः किमस्ति वा वेदमूलकत्वात् तत्तन्त्रमूलकत्वादस्य तन्त्रस्यापि वेदत्वमस्ति न वेति संशये च, अभिधेयसम्बन्धप्रयोजनज्ञानमन्तरेण न शिष्याः शास्त्रे प्रवर्त्तन्ते इत्यतस्तत्प्रयोजनादिकं ज्ञापयितुं प्रथमत आयुर्वेदे वक्तव्ये आयुर्वेदस्वरूपज्ञानमपेक्ष्यते इत्यत आयुर्वेदे त्वभिधेयमायुर्निर्देशपूर्वकमायुर्वेदञ्च लक्षयति—हिताहितमित्यादि। हितञ्चाहितञ्च द्वयोः समाहार इति हिताहितं, हितमहितं सुखं दुःखञ्चेति। चतुर्विधमायुरर्थे दशमहामूलीये स्वयं वक्ष्यते; तद्यथा—शारीरमानसाभ्यां रोगाभ्यामनभिद्रुतस्यानभिभूतस्य च, विशेषेण यौवनवतः समर्थानुगतबलवीर्य-

तन्त्रकरणोत्तरकालन्तु जनादरेण बुद्ध्यादिदेवतानुप्रवेश इति; सिद्धिः साध्यसाधनज्ञानं, कीर्त्तिः कीर्त्तनं वक्तुं ज्ञानमित्यर्थः, ननु कीर्त्तिर्यशोरूपा तस्या अज्ञानरूपत्वात्, ज्ञानदेवताश्च इहोच्यन्ते, भवाय स्थितये रोगानुपहतजीवितायेति यावत्, प्रतिष्ठा जनोपादेयतयावस्थानम् ॥ ११-१४ ॥

चक्रपाणिः—सम्प्रत्यायुर्वेदव्युत्पत्तिं कुर्वन् आयुर्वेदाभिधेयं दर्शयति, हिताहितमित्यादि—हिताञ्चाहितं, तथा सुखप्रयुक्तत्वात् सुखं, दुःखप्रयुक्तत्वात् दुःखं, एतच्च चतुःप्रकारमप्यायुरर्थे दश-

यशःपौरुषपराक्रमस्य ज्ञानविज्ञानेन्द्रियार्थबलसमुदायस्य परमर्द्धिरुचिरविविधोपभोगस्य समृद्धसर्व्वारम्भस्य यथेष्टविचारिणः सुखमायुरुच्यते ॥ १ ॥ असुखमतो विपर्य्ययेण ॥ २ ॥ हितैषिणः पुनर्भूतानां परस्वादुपरतस्य सत्यवादिनः शमपरस्य समीक्ष्यकारिणोऽप्रमत्तस्य त्रिवर्गं परस्परेणानुपहतमुपसेव्य पूजार्हपूजकस्य ज्ञानविज्ञानोपशमशीलस्य वृद्धोपसेविनः सुनियतरागेर्ष्यामदमानवेगस्य सततं विविधप्रदानपरस्य तपोज्ञानप्रशमनित्यस्याध्यात्मविदस्तत्परस्य लोकमिमञ्चामुञ्चावेक्षमाणस्य स्मृतिमतिमतो हितमायुरुच्यते ॥३॥ अहितमतो विपर्य्ययेणेति ॥ ४ ॥ इत्येवं चतुर्विधं यदायुस्तस्य हिताहितं रक्षणवर्द्धनमेदादिविषमेवाशैथिल्यजनकाहाराचाराभ्यञ्जनादिकं हितं ह्रासातिह्रासरूपशैथिल्यजनकरूपमहितं च मानमायुषः परिमाणं चकारादनुक्तमप्यायुषोऽप्रमाणं तच्च मानामानमप्यायुषः स्वयं वक्ष्यति तत्रैव । तद्यथा प्रमाणमायुषस्त्वर्थेन्द्रियमनोबुद्धिचेष्टादीनां स्वेनाभिभूतस्य विकृतिलक्षणैरुपलभ्यतेऽनिमित्तैः । इदमस्मात् क्षणमुहूर्त्तात् दिवसात् त्रिपञ्चसप्तदशद्वादशाहात् पक्षान्मासात् संवत्सराद्वा स्वभावमापत्स्यत इति. तत्र स्वभावः प्रवृत्तेरुपरमः मरणम् अनित्यता निरोध इत्येकोऽर्थः । इत्यायुषः प्रमाणमतो विपरीतमप्रमाणमरिष्टाधिकारे देहप्रकृतिलक्षणमधिकृत्य चोपदिष्टमायुषः प्रमाणाप्रमाणमायुर्वेदे इति । तच्चेति तत् स्वरूपलक्षणत आयुश्च इत्येतत्सर्व्वं यत्रोक्तं स आयुर्वेद उच्यते । ननु सुखं दुःखञ्चात्मनो गुणौ प्रत्येकं तदेव द्वयं वा किमायुस्तत् तद्द्वयजनकं वा ? आद्ये चेदनायुषोऽपि महासुखदर्शनान्महायुषोऽपि स्वल्पसुखमहादुःखत्वादल्पायुष्ट्वमहायुष्ट्वयोर्न विनिगमना । तदद्वयं चेत् समसुखदुःखोभयस्यैकत्रासम्भवादनायुरेव स्यात्. विषमसुखदुःखोभयस्यैकत्वापत्तिश्च स्यात् न सुखात्मकं दुःखात्मकं वा आयुः स्यादिति । सुखदुःखान्यतरजनकं चेत् तदा सुखमात्रजनकं न तपउपवासादिकं शक्यत्वात् दुःखमात्रजनकं नावश्यकर्म्मादि भोजनादि सुखकरत्वात् । तदुभयजनकं चेदेकत्वापत्तिः न तु सुखलक्षणं दुःखलक्षणञ्चेति द्विविधं स्यात्, इति चेन्न शारीरमानसाभ्यां रोगाभ्यामनभिद्रुताभिभूतादीनां पुरुषाणामायुः सुखदुःखगुणयोर्जनकत्वेन सुखदुःखसंज्ञकत्वात् तथा च येनायुषा विशिष्टस्यादृष्टप्रयोज्य-सुखदुःखनिवृत्ति-लक्षणमोक्षस्तपोजप-शमदमादिभिर्जनित-

महामूलीये तत्र शारीरमानसाभ्याम् इत्यादिना ग्रन्थेन अहितमतो विपर्य्ययेण इत्यन्तेन वक्ष्यति, तस्य हिताहितमित्यायुषः पथ्यापथ्यं, मानञ्चास्यायुष एव प्रमाणं, मासिकद्विमासिकत्वेन विकृतिलक्षणैरिन्द्रियस्थाने तथा प्रकृतिलक्षणैरिदमायुष्मतां कुमाराणां लक्षणं भवतीत्यादिना वक्तव्यम् । तच्चेत्यायुः स्वरूपेण "शरीरेन्द्रियसत्त्वात्मसंयोगः" इत्यादिना वक्ष्यमाणम् । तेन हिताहितमित्यादिना

दायात्मकं तेन हीन्द्रियलाभे पुनरुक्तत्वापत्तिः स्यादस्तु वा बाह्येन्द्रियादि-पञ्च-महाभूतविकारसमुदायात्मकं शरीरम्। इन्द्रियन्तु आभ्यन्तरं नित्यं श्रोत्रादिकं तेन नेन्द्रियस्य पौनरुक्त्यं वृक्षादेरपि बाह्येन्द्रियरहितस्यायुष्मत्त्वमाभ्यन्तरेन्द्रियवत्त्वात्। सत्त्वं तु मनः, आत्मा चेतनाधातुस्तेषां संयोगः शरीरेन्द्रियसत्त्वात्मसंयोग इति स्वरूपलक्षणमायुषः स्वरूपमुक्त्वा धर्म्मान्तरोपदेशेन लक्षणं वक्तुं पर्य्यायानाह — धारीत्यादि। सत्त्वात्मशरीरेन्द्रियाणि परस्परं धारयितुं शीलं यस्य तत् धारि, जीवनं जीवितं फलात्मकजीवधात्वर्थः नित्यं प्रतिक्षणं गन्तुं शीलं शिथिलीभावो यस्य स नित्यगः, अनुबन्धः अनुपूर्व्वोबन्धात्यागपूर्व्वकानुरूपेणोत्तरकालं बध्नातीत्यनुबन्धः। अत्र चकारादनुक्तमप्यत्रार्थे दशमहामूलीयेऽप्युक्तञ्चेतनानुवृत्तिशब्दोऽपि बोध्यः। अथ शरीरं स्थूलसूक्ष्मात्मकन्तत् तच्छरीरादिसंयोगश्चेदायुस्तदा मरणानन्तरं लिङ्गदेहित्वेऽप्यायुष्मत्त्वमस्तु। उच्यते, लिङ्गदेहित्वे तत्पारलौकिकसुखदुःखरूपस्वर्गनरकभोगे तच्छरीरादिसंयोगस्य हेतुत्वेन पारलौकिकायुष्या इष्टत्वेन वैद्यैर्व्याख्यायते नातिरिक्तं, शरीरपदेन स्थूलशरीरपरत्वेन व्याख्यातत्वात्। शरीरात्मसंयोगत्वेन तच्छरीरे नायुश्च पूर्व्वजन्मीयायुर्व्वदेतदहितं। एतस्यायुषि तस्यायुर्वारणाय तत्तद्रूपेण व्याख्यानमपास्तमिति नन्वेवं वृक्षादीनामिन्द्रियसत्त्वात्महीनानामायुर्नास्ति, नास्ति चेत् तर्हि सर्व्वदा घटादिवद्यत्तु किञ्चित्कालं नावतिष्ठताम्। अस्ति चेत्तत्तदपि अन्यत्रोच्यते केनचित्। चिकित्साधिकृतत्वाभावात् तेषामायुर्व्वचनेऽप्रयोजनमिति। अन्ये तु चिकित्साधिकृतत्वात् प्राधान्याच्च कर्म्मपुरुषाभिप्रायेणेदमायुर्लक्षणमित्याहुः। परे तु शरीरेन्द्रियेत्यायुर्लक्षणं तेन समवायिसंयोग आयुरिति ज्ञापनार्थं शरीरेन्द्रियादिपदग्रहणमिति भाषन्ते। ननु समवायिसंयोगो हि मृतपुरुषदेहे घटादीनामपि स्यादिति। अन्ये तु स्वारम्भकतत्त्वसंयोगोऽदृष्टप्रयुक्तः समवायिसमूहसंयोगो वा यावत्समवायिसंयोगो वा आयुरुच्यते, घटादीनां स्वारम्भकपञ्चभूतरूपपञ्चतत्त्वसंयोगश्चेद् आयुर्वृक्षादीनामपि चेतनपुरुषवत् तत्त्वचतुर्विंशतिरारम्भकैव तेजोऽवनीपवनवारिमनोधर्वीजस्य तदारम्भकस्य तदारम्भकाले जीवात्मनस्तत्र वायुना प्रेरितस्य

इत्यन्वितो योगः संयोगः, इन्द्रियाण्यपि यद्यपि शरीरग्रहणेनैव लभ्यन्ते तथापि प्राधान्यात्तानि पुनः पृथगुक्तानि, अयञ्च संयोगः संयोगिनः शरीरस्य क्षणिकत्वेन यद्यपि अनित्यस्तथापि सन्तानव्यवस्थितोऽयमेकतयोच्यते। तस्यायुषः पर्य्यायानाह धारीत्यादि। धारयतीति शरीरं पूतितां गन्तुं न ददातीति धारि, जीवयति प्राणान् धारयतीति जीवितं, नित्यं शरीरस्य क्षणिकत्वेन गच्छतीति

प्रवर्त्तेन तत् अनुभवात् । तेन मृत्युना च तेषामायुष्मत्त्वं लक्ष्यते । वृक्षादि-स्थावराणां तथा शरीरात्मसमवायिसंयोगो नादृष्टवत्त्वं कर्मजातगुण-विशेषो ह्यात्मनोऽदृष्टमिति वृक्षादीनां सजीवानामस्ति नादृष्टमस्ति चायुरिति बोध्यम् । यावत् समवायिसंयोगस्तु अजीवाचेतनानां घटादीनां सजीवा-चेतनानां वृक्षादीनां चेतनानाञ्चास्त्येव । वृक्षत्वघटत्वादिरूपेण यथास्वतत्त्व-परिणामे स्वं स्वं यावत् तत्त्वान्येव समवायीनि कारणानि, अदृष्टमिह समवायि-कारणं देहसमवायित्वेन निमित्तं वा । यावत् समवायिसंयोगस्तु वृत्तिनिया-मकसम्बन्धो भूतादिद्रव्याणां तत्तदारम्भकाणां संयोगः द्रव्यगुणयोः समवाय इत्युभयरूपः । तार्किकास्तु अवयवावयविलक्षणो द्रव्याणामपि सम्बन्धः स चायु-रेवेत्याहुः । इत्थं निरुक्तस्यायुषः साम्यं वृद्धिह्रासश्च यौक्तिकाधिकन्यूनकाल-विशिष्टत्वेनानुमेया आयुर्वेदाभिरूपदिश्यन्ते । तेन जीवितविशिष्टः काल आयुरिति यदुच्यते तन्न । आयुर्ह्रासवृद्धिकरणकर्मणा प्रसिद्धस्य कालस्य ह्रासवृद्ध्यापत्तेः जीवितस्य विशेषणतया वाच्यत्वापत्तेश्च । कालजीवितयोर्वैशिष्ट्यमायुरित्यपि चिन्त्यं, जीवितं यावत् समवायिसंयोगः स च समवायः समवायसंयोगोभयरूपो वा तस्य च कालवैशिष्ट्यं समवेतसंयोगित्वमिति । अथ यदि येनाप्राणिप्राणि यावद्वस्तु नियतकिञ्चित्कालमवतिष्ठते स यावत् समवायिसंयोग आयुरिष्यते, तदा नरो नश्यति तरुर्नश्यतीतिवत् घटो नश्यतीत्यादि साधु, तावत् नरो म्रियते जीवति भवतीतिवत् घटो म्रियते जीवतीत्यादिप्रयोगस्य साधुता भवतु । न स्यात् नाशो हि यावत् समवायिसंयोगध्वंसो, मरणं त्वात्मशरीरसंयोगध्वंस इति तस्माद्भावसामान्यं प्रति नायुषः प्रतिबन्धकत्वं कल्प्यते । कल्प्यते च मरणं प्रत्यायुषः शरीरादिसंयोगस्येति, तेनेदं फलति यावत् समवायिसंयोगाभावे नाशः स्याच्छरीरेन्द्रियादिसंयोगरूपायुरवसाने मरणं स्यात् तच्च विनाशविशेषश्च भवतीत्यतो जीवनमरणे मिथः सविपर्यये नाशजन्मनी च । ननु नाशजीवने न वा जन्ममरणे घटो म्रियते जीवतीत्यप्रयोगात् । अप्राणिनामायुर्हिताहित-मानान्यस्मिन् वेदे निरूपयितुमनावश्यकत्वात् प्राणिनामेवायुर्हिताहितमानानि

नित्यगः, अनुबन्धश्चायुरपरापरशरीरादिसंयोगरूपतया इत्यनुबन्धः, पर्य्यायैरायुरुच्यत इति एकार्थाभिधायिभिः शब्दैरुच्यते । यद्यपि च नित्यगानुबन्धशब्दाभ्यां न कश्चिदप्यायुरभिधीयते तथापि नित्यगत्वानुबन्धत्वधर्मसंख्यापनार्थमेवैतत् संज्ञाद्वयं बोद्धव्यम्, धारिसंज्ञा त्वर्थेदशमहा-मूलीये भविष्यति । ननु उत्तरत्र 'चैतन्यानुवृत्तिरायुः' इत्यायुर्लक्षणं करिष्यति, इह तु शरीरेन्द्रिय-

तस्यायुषः पुण्यतमो वेदो वेदविदां मतः।
वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितः॥ १७

वक्तुमावश्यकानीति मनुष्यविभजन्मिनां प्राणिनामेवायुर्लक्षणमिदमिति यत् तदपि न मनोरमं. घटादीनामप्राणिनां बाह्याभ्यन्तरेन्द्रियाभावेनायुष्मत्त्वाभावात्। परन्तु नाशसामान्यं प्रति नायुषः प्रतिबन्धकत्वं. प्रतिबन्धकत्वन्तु मरणमात्रं प्रतीति; तथा च स्वं स्वं यावत् समवायिकारणसंयोग उत्पत्तिस्तदुत्तरकाले स्वं स्वं यावत् समवायिकारणविभागो नाशः। प्राक्काले तु स एव प्रागभावः। सर्व्वेषामेव कार्य्याणां समवायिकारणमस्ति तद्धि विना कार्य्यासम्भवः, कार्य्याणां तन्मयत्वात्, तेन घटो नरश्च जायते नश्यति चेति साधु. शरीरेन्द्रियादिसंयोग आयुः जीवनं, तदुत्तरकाले शरीरेन्द्रियादिविभागो मरणमिति पुरुषो जीवति म्रियते च स्थूलशरीरेन्द्रियादिमत्त्वात्। एवं वृक्षोऽपि जीवति म्रियते स्थूलशरीरेन्द्रियादिमत्त्वात्। न तु मृतो जीवति जीवितो म्रियते मृतस्य सूक्ष्मदेहेन्द्रियादिमत्त्वेऽपि स्थूलशरीराभावात्। न वा घटो जीवति म्रियते वा स्थूलशरीरत्वेऽपि बाह्याभ्यन्तरद्विधेन्द्रियादिमत्त्वाभावात्। इह चेन्द्रियं द्विधा, बाह्यमाभ्यन्तरञ्च। तत्र बाह्यं स्थूलशरीराश्रितमनित्यं सूक्ष्मानित्यशरीराश्रितं पुनराभ्यन्तरं नित्यं; तत्तदाभ्यन्तरेन्द्रियाणि श्रोत्रादिस्वधिष्ठानेन तत्तत्कार्य्यश्रवणादिसम्पादनात् तु श्रोत्रादिस्थं श्रवणेन्द्रियादिकं बाह्येन्द्रियतया तूपदिश्यते. सूक्ष्मदेहस्थमपि स्थूलशरीरादिमत्स्थूलमुच्यते इत्यभिप्रायेण लोकोपदेशे त्विन्द्रियं नोक्तम्॥१६॥

गङ्गाधरः—अथ आयुःस्वरूपमुक्त्वा आयुर्व्वेदस्य सर्व्ववेदोत्कृष्टत्वमाह तस्येत्यादि।—वेद इति "विद विचारणे, विद लाभे, विद ज्ञाने" इत्येष्वर्थेषु वेदयति विन्दति वेत्ति वाऽनेनास्मिन् वेति वेद इति सुश्रुतानुसारिण आयुष इति उभयोर्लोकयोर्हितोऽयं वेदो वक्ष्यतेऽर्थेदशमहामूलीये। सुश्रुतेऽप्युक्तं; "सनातनत्वाद्

सत्त्वात्मसंयोग इति किमर्थमुक्तम्? अ. म.: शरीरेन्द्रियसत्त्वात्मसंयोगजन्या चैतन्यानुवृत्तिर्यथोक्तसंयोगाव्यभिचारित्वेन व्यक्तत्वेन चार्थेदशमहामूलीये लक्षणत्वेनोक्ता, शरीरादिसंयोगरूपमेव त्वायुः परमार्थतः, एवम्भूतसंयोगाभावे मरणमायुरुपरमरूपं भवति। मृतशरीरे तु चेतसोऽभावादायूरूपसंयोगाभावः॥ १६॥

चक्रपाणिः—तस्येत्यादि। वेदयतीति वेदः, वेदविदां मत इति वेदविद्भिः पूजितः; अथ कस्मादायुर्वेदलक्षणो वेदः पुण्यतमो वेदविद्भिश्च पूजित इत्याह, वक्ष्यत इत्यादि। यदिति यस्मादेवमुक्तं भवति, यदन्ये ऋगवेदादयः प्रायः परलोकहितमेवार्थं वदन्ति तेन पुण्याः, पुण्यतमश्चायम् आयुर्वेदो

सर्व्वदा सर्व्वभावाणां सामान्यं वृद्धिकारणम् ।
ह्रासहेतुर्विशेषश्च प्रवृत्तिरुभयस्य तु ॥

वेदानामशस्तत्वात् तथैव च । तथा दृष्टफलत्वाच्च हितत्वादपि देहिनाम् ॥ वाक्‌समूहार्थविस्तारात् पूजितत्वाच्च देहिभिः । चिकित्सितात् पुण्यतमं न किञ्चिदपि शुश्रुम" इति । एतेनायुर्व्वेदमूलकत्वेनाग्निवेशकृतस्य तथा चरकप्रतिसंस्कृतस्य च तन्त्रस्याप्यायुर्व्वेदत्वं शाश्वतत्वञ्चोक्तमिति बोध्यम् ॥ १७ ॥

गङ्गाधरः इत्यायुरायुर्व्वेदमायुर्व्वेदस्योत्कर्षञ्चोक्त्वा वक्ष्यमाणस्यायुर्व्वेदप्रयोजनस्य धातुसाम्यलक्षणस्य विषमधातूनां धातुसाम्यकरणस्य च कारणं सामान्यविशेषादिषट्कं यत् प्रागुद्दिष्टं क्रमेण तत्षट्कमुपदेष्टुं प्रथमतः सामान्यविशेषयोः कार्य्यमुपदिशति, सर्व्वदेत्यादि सर्व्वदा सर्व्वस्मिन्नावस्थिके नित्यगे च काले । सर्व्वेषां भावानां द्रव्यगुणकर्म्मणां सामान्यं वृद्धिकारणं हेतुः प्रयोजकमित्येकोऽर्थः । समानो हि भावः समानं वर्द्धयितुं प्रयुज्यते सामान्येनेति समानानां द्रव्यगुणकर्म्मणां वृद्धौ प्रयोजकं सामान्यम् । एवमेव सर्व्वभावाणां विशेषो ह्रासहेतुः प्रयोजक इति । सर्व्वेषां भावानां द्रव्यगुणकर्म्मणां विशेषो ह्रासे हेतुः । विशिष्टो हि भावो विशिष्टानि द्रव्यगुणकर्म्माणि ह्रासयितुं प्रयुङ्क्ते इति विशिष्टानां द्रव्यगुणकर्म्मणां ह्रासे प्रयोजको विशेषः । अनयोरुदाहरणमेकमेव दर्शयति । प्रवृत्तिरुभयस्य तु इति । यो भावो यस्य समानस्तयोरुभयोः प्रवृत्तिः सामान्यं वृद्धिकारणं संख्यात एव । यो भावो यस्माद्विशिष्टस्तयोरुभयोः प्रवृत्तिर्विशेषो ह्रासहेतुः सङ्ख्यात एवेति । तद्यथा । पञ्चसु ब्राह्मणेषु यद्यपरः कश्चिद् ब्राह्मण आगच्छति तदा तद्‌ब्राह्मणत्वं सामान्यं षड्‌ब्राह्मणा इति संख्यातस्तेषां वृद्धौ हेतुर्भवति । यदि तत्र कश्चित् क्षत्रिय आगच्छति तदा तत्क्षत्रियत्वं विशेषो न सङ्ख्यातो ब्राह्मणानां वृद्धौ हेतुर्भवति. पञ्चैव ब्राह्मणा एकः क्षत्रिय

यद् यस्मान्मनुष्याणामुभयोरपि लोकयोरभिलषितमायुरारोग्यसाधनं धर्म्मसाधनञ्च तदुपदिश्यते तेनातिशयेन पुण्यतमस्तथा वेदविद्भिश्च पूजित इति । कश्चिद् 'वक्ष्यते यः' इति पठन्ति, तत्रापि हेतुगर्भमिति व्याख्येयं ; जीवितप्रदातृत्वादायुर्व्वेदस्य पुण्यतमत्वं बोद्धव्यं, यतश्चतुर्व्वर्गसाधनीभूतजीवितप्रदमेव सर्व्वोत्तमं भवति, वक्ष्यते च "न हि जीवितदानाद्धि दानमन्यद्विशिष्यते" ॥ १७ ॥

चक्रपाणिः सम्प्रत्यायुर्व्वेदाभिधेयतया सूचिते सामान्यादौ सामान्यस्य प्रथमसूचितत्वात् तथा सामान्यज्ञानमूलत्वाच्चायुर्व्वेदप्रतिपाद्यस्य हेत्वादेः सामान्यमेवादौ निर्द्दिशति, सर्व्वदेत्यादि ।— सर्व्वदा सर्व्वस्मिन् काले नियतो चावस्थिके च, सर्व्वभावाणामित्यत्र सर्व्वशब्दः कृत्स्नवाची,

सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत्।
तुल्यार्थता हि सामान्यं विशेषस्तु विपर्य्ययः॥ १८

इति षट्सु च पुरुषेषु सत्सु ह्रासहेतुर्विशेषः क्षत्रियत्वं ब्राह्मणत्वञ्च। एकः क्षत्रियः पञ्च ब्राह्मणा इति। प्रवृत्तिर्भावोऽनुवर्त्तनमेव हेतुत्वात्। "असु भुवि" भूसत्तायामित्यस्तेर्भवतेर्वा रूपं भावो भवनं सत्ता। सदिति यतः सा सत्ता द्रव्यगुणकर्म्मसु। द्रव्यगुणकर्म्मणां यावत् सत्ता तावदनुवर्त्तनकालं वृत्तिः स्थितिः सत्ताया असद्भावविनाशः। तर्हि किं सत्ता द्रव्याणां गुणः कर्म्म वा यावद्धि गुणो द्रव्ये वर्त्तते तावद्द्रव्यं तद्गुणाश्चानुवर्त्तन्ते तथा क्रिया। गुणकर्म्मसु भावान्न गुणो न कर्म्म। सत्ता हि गुणेषु कर्म्मसु च वर्त्तते तस्मान्न गुणो न वा कर्म्म सत्ता भवति भावात्। गुणः कर्म्म च विभाव्यते गुणेनापि सङ्ख्यापरिमाणपृथक्त्वपरत्वापरत्वादिनेति। तथापि न गुणो न कर्म्म च सत्ता, सामान्यविशेषाभावेन च। सामान्यं न सामान्यवद्विशेषवद्वा। विशेषश्च न सामान्यवान् विशेषवान् वा। गुणकर्म्मणी तु सामान्यविशेषवती। एतेन द्रव्यं व्याख्यातम्। द्रव्यमपि न सत्ता सामान्यविशेषाभावेन च सत्तायाः, सामान्यवद्धि द्रव्यं विशेषवच्च। पारिशेष्यात् समवायः। शेषवदनुमानं परिशेषः। त्रिविधमनुमानमुक्तं पूर्व्ववच्छेषवत् सामान्यतो दृष्टञ्च। तत्र शेषः परिशेषः कारणप्रदर्शनेनानुपपत्तिवचनेन यत् प्रतिषेधादप्रतिषिद्धं यत्परिशिष्यते तत्पारिशेष्यादनुमीयते। तच्च शेषवदनुमानम्। द्रव्यगुणकर्म्मणां सत्तात्वप्रतिषेधात् परिशिष्यते समवायः सा सत्तेत्यनुमीयते। समवायाद्धि सदिति द्रव्यगुणकर्म्मसु प्रतीयते। यावद्धि समवायिकारणानां समवायो वर्त्तते, तावद्द्रव्यं सदिति प्रतीयते गुणः सन्निति कर्म्म च सदिति। सैव द्रव्यगुणकर्म्मणामनुवृत्तिहेतुः। समवायाभावाद् द्रव्यगुणकर्म्मणां नाशः। समवायिकारणानां समवायाभावः पृथक्त्वसंयोगो यदा स्यात् तदा नश्यतीति दृश्यते नास्तीत्युच्यते। समवायोऽस्ति नेति किं

भवन्ति सत्तामनुभवन्ति इति भावा गुणद्रव्यकर्म्माणीत्यर्थः, न तु भवन्त्युत्पद्यन्त इति भावाः, तथा सति पृथिव्यादिपरमाणूनां नित्यानां सामान्यस्य पार्थिवत्वाणुत्वादि वृद्धं कार्य्यमसंगृहीतं स्यात्, सामान्यञ्च 'सामान्यमेकत्वकरम्' इत्यादिना वक्ष्यमाणलक्षणं, वृद्धिराधिक्यं तत्कारणं वृद्धिकारणम्। एतच्च सामान्यं सामान्यवतो मांसद्रव्यादेर्वृद्धिकारणस्य लक्षणत्वेन वृद्धिकारणमित्युक्तं, यतो न सामान्यं मांसत्वादिजातिरूपं वृद्धौ कारणं भवति, तथा हि सति सामान्यं

सत्तावान्। न सत्तावान् समवायः स्वरूपेण सद्भावात् सत्तान्तरवत्त्वाभावात्। न हि समवायेन समवायो द्रव्यगुणकर्म्मसु वर्त्तते। तेषु वृत्तौ समवायस्य वस्त्वन्तराभावात् स्वरूपेणैव वृत्तिः। नित्यश्चानित्यश्च समवायः। द्रव्याणां गुणैः सह योगो नित्यः। न हि वर्त्तते निर्गुणं द्रव्यम्। सगुणमेव हि द्रव्यमुत्पद्यते। लोके त्रिविधं नित्यम्। लोके त्रिविधं नित्यं व्यवह्रियते। प्राकृतप्रलयादर्वाक् यन्न नश्यति तत् प्राकृतप्रलयपर्य्यन्तस्थायित्वाल्लोके नित्यं व्यवह्रियते यथा चतुर्व्विंशति तत्त्वानि। अव्यक्ताद्यात्मादीनां समवायिकारणसमवायः प्राकृतप्रलयपर्य्यन्तं तिष्ठति, नश्यति च प्राकृतप्रलये जायमाने, नश्यन्त्यव्यक्तात्मादीनि चतुर्व्विंशतितत्त्वानि। तस्माल्लोके सत्यानित्यान्यपि चाव्यक्तादीनि पृथिव्यन्तानि चतुर्व्विंशतितत्त्वमयानि देवनगरादीनि चराचराणि वस्तुतस्तु अनित्यान्यनृतानि भवन्ति स्वप्नविपर्याभिमतानीव प्रमाणप्रमेयतयाभिमतान्यपीति। द्विविधं मिथ्यात्वं। लोके सत्यत्वं वस्तुतस्त्वनृतत्वं यथा स्थाणुः स्थाणुरेवेति सत्यत्वम्। लोके मिथ्यात्वं च यथा स्थाणौ पुरुष इति। एवमेवोक्तं गौतमेन न्यायशास्त्रे तैत्तिरीयोपनिषत्सूक्तम् स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः। तत्त्वप्रधानभेदान्मिथ्याज्ञानस्य द्वैविध्योपपत्तेश्च इति। अव्यक्तं हि संहतं कालानुप्रविष्टं क्षेत्रज्ञाधिष्ठितं प्रधानं त्रिगुणलक्षणमिति त्रयात्मकं तेषां त्रयाणां पृथगवस्थाने लयः प्राकृतो नाम प्रकृतौ स्थितत्वात् प्रधानपुरुषयोरिति। प्राकृते तस्मिन् प्रलये जाते पृथक् व्यवस्थिताः प्रधानक्षेत्रज्ञकालचतुर्व्वेदपरमविद्याप्रणवात्मकसदाशिवाः सदनुप्रविष्टा वस्तुतः सत्याः परमव्योमरूपपरमात्मशिवगायत्र्यवशेषनिर्व्वाणाख्यप्रलयपर्य्यन्तस्थायित्वान्मध्यमनित्याः। तस्मिन् इह निर्व्वाणाख्ये प्रलये

सौम्यत्वकरं यथा वत्सके भौज्यरूपे मांसेऽस्ति तथा शरीरस्थानुरूपे वर्द्धनीयेऽप्यस्ति, ततश्च नित्यसामान्यसम्बन्धादमांसादानामपि मांसेन वर्द्धितव्यं, तस्माद् वृद्धिकारणलक्षणत्वेन सामान्यं वृद्धिकारणमित्युक्तम्. अत एव वैशेषिकेऽप्युक्तं "त्रयाणामकार्य्यत्वमकारणत्वञ्चेति" अत्र त्रयाणामिति सामान्यविशेषसमवायानाम्। ये तु समानमेव सामान्यमिति कृत्वा द्रव्यादेरेव सामान्यशब्देनाभिदधति तेषाञ्च मते "सामान्यञ्च विशेषञ्च" इत्यादिग्रन्थोक्तस्य सामान्यस्य न किञ्चिदनेनोक्तं स्यादित्यसम्बन्धार्थत्वं प्रकरणस्य स्यात्। एतच्च वृद्धिकारणत्वं सामान्यलक्षणं न भवति, किं तर्हि तुल्यैवोपयोगिना धर्म्मेण निर्देशः, लक्षणन्तु "सामान्यमेकत्वकरम्" इति करिष्यति; एवं द्रव्यादावपि चोद्देशानन्तरं निर्देशं करिष्यति "खादीन्यात्मा" इत्यादिना, ततो लक्षणं "यत्राश्रिताः कर्म्मगुणाः" इत्यादिना करिष्यति।

ते नश्यन्तीति परमव्योमरूपपरमात्मशिवादिकन्तु सत्। न तु सदनुप्रविष्टं सत्य तदेवास्यां सर्गावस्थायां ब्रह्म परमनित्यं शक्तिब्रह्मावशेषमहानिर्वाणपर्य्यन्त-स्थायित्वात्। शक्त्यवशेषे महानिर्व्वाणे जायमाने तु सर्गावस्था व्यपैति शिव गायत्रीरूपश्च शक्तिर्महानि क्रियागुणव्यपदेशरहिता सती स्वगुणनिरूढा भूत्वा स्थास्यतीति सा शक्तिर्ब्रह्म सर्गप्रलयोभयावस्थिकं नित्यमसद्भूतं वस्तु चोच्यते इति। समवायश्च तेषु तथाविधस्त्रिविधो नित्यो व्याख्यातो भवति। कार्य्येषु द्रव्यगुणकर्म्मस्वनित्यः समवायः। सेयं समवायात्मिका सत्ता समानप्रसवात्मिका जातिः सामान्यम्। असमानप्रसवात्मिका तु सत्ता जातिर्नाम जन्म सत्ताविशेषः। तदुक्तं "जातिः सामान्यजन्मनोरिति"। सामान्यविशेषो हि बुद्ध्यपेक्षात्रन्यत्रा-न्येभ्यो विशेषेभ्यः। अन्यादि विशेषात्सामान्योऽन्यो विशेषः सम्भवति यमपेक्ष्य सामान्यं स्यात। द्रव्यत्वं गुणत्वं कर्म्मत्वञ्च सामान्यं विशेषश्च। द्रव्यत्वं सामान्यं नवसु द्रव्येषु भावात् पृथिवीत्वाद्यपेक्षया सत्तापेक्षया तु विशेषः। गुणत्वञ्च सामान्यं रूपादिषु भावात् रूपत्वाद्यपेक्षया सत्तापेक्षया तु विशेषः। कर्म्मत्वञ्च सामान्यमुत्क्षेपणादिषु सद्भावादुत्क्षेपणत्वाद्यपेक्षया सत्तापेक्षया तु विशेषः। अनेकद्रव्यारब्धद्रव्यत्वं चानेकद्रव्यत्वसत्त्वात्। न च तदारम्भकाणि द्रव्याणि द्रव्यत्वसामान्यविशेषाभावेन च कार्य्यद्रव्यत्वस्यापि। एतेन गुणः कर्म्म च व्याख्याते। कार्य्यगुणश्चानेकसजातीयगुणारब्धः तदनेकगुणत्वसद्भावात् तत्कार्य्यगुणत्वमुक्तं श्यामत्वपीतत्वादि। न च तदारम्भका गुणास्तत्कार्य्यगुणत्वं सामान्यविशेषाभावेन च। कर्म्मारब्धे कर्म्मणि च तत्कर्म्मत्वसद्भावात् कर्म्मत्वमुक्तं न च तदारम्भकं कर्म्म तत्कार्य्यकर्म्मत्वम्। इति द्रव्यारब्धेषु द्रव्येषु तदारम्भ-काणि द्रव्याणि द्रव्यसामान्यं यथा पाञ्चभौतिकत्वं शरीरेन्द्रियविषयसंज्ञकानां द्रव्याणां पञ्चभूतानि सामान्यं प्राणिनां नव द्रव्याणि द्रव्यसामान्यं गुणाश्च तेषां गुणविशेषारम्भका गुणसामान्यं कर्म्म च तेषां कर्म्मारम्भकं कर्म्मसामान्यम्।

सामान्यस्य च वृद्धिकारणत्वं आत्मनि विरोधिकारणे बोद्धव्यं, तेनामलकादिगतास्ला-म्लत्वादीनां पित्तगताम्लत्वावर्द्धकत्वमामलकगतशिशिरत्वप्रभावविरोधित्वादुपपन्नम्, एव-मन्यत्रापि विरोधहरद्रव्ये बोद्धव्यम्। इह च सामान्यस्य वृद्धिकारणत्वमित्युच्यते, न तु सामान्यमेव वृद्धिकारणमित्युच्यते, तेनासमानादपि घृतात् मेधाया या च वह्नेश्च वृद्धिः प्रभावादेवोपपन्ना, यदुक्तं "घृतमग्निमेधे करोति, तथा चिन्तया बालवृद्धिस्तथा सङ्कल्पात् वृष्यपादयुगलेपाच्च शुक्रवृद्धिः" इत्यादि प्रभावादुपपन्नम्। सामान्यञ्चेह वृद्धिकारणमित्युच्यमाने समानस्येति गम्यते, न हि शोणितं प्रति मांसत्वं सामान्यं, किन्तु व्यावृत्तबुद्धिजनकत्वाद्विशेष एव।

विशेषाश्च तत्तद्द्रव्यगुणकर्म्मारम्भकास्तत्तद्द्रव्यगुणकर्म्मविशेषा इति सामान्यभूतं द्रव्यं सामान्यभूतो गुणः सामान्यभूतं कर्म्म सामान्यभूतश्च समवायः सत्ता जातिरिति ; तथा विशेषभूतं द्रव्यं विशेषभूतो गुणो विशेषभूतं कर्म्म विशेषभूतः समवायः सत्ता जन्मेति द्रव्यगुणकर्म्मसमवायाश्चत्वारो लोके पदार्था नास्त्यतोऽतिरिक्तः पदार्थः । आयुर्व्वेदे भावानां वृद्धिह्रासादिकारणत्वेन सामान्यविशेषयोरुपयोगेन द्रव्यादिषु चतुर्ष्वन्तर्भावेऽपि पृथग्वचनम् । यथा वैशेषिकेऽप्येवमेव सामान्यविशेषयोर्द्रव्यादिषु चतुर्ष्वन्तर्भावेऽपि पृथग्वचनमन्तरेण यथोपनिषत् तथा भवति । न वैशेषिकं नाम शास्त्रं स्यात् । विशेषस्योपदेशेन हि वैशेषिकं भवति । सामान्यापेक्षो हि विशेष इति सामान्यस्याप्युपदेशोऽपेक्ष्यते शास्त्रसंज्ञा तु प्रसिद्धा वैशेषिकमिति । न तु सामान्यकं तन्त्रकर्त्तुर्व्विवक्षितत्वात् । तन्त्रकर्त्तुर्व्विवक्षावशाद्धि संज्ञा तन्त्राणां भवतीति । एवमेवान्वीक्षिकीशासने प्रमेयेऽन्तर्भूतत्वेऽपि प्रमाणसंशयादीनां पञ्चदशानां पृथगुपादानमन्तरेण त्वोपनिषद्वद्भवति न त्वान्वीक्षिकीशास्त्रं भवति । वादमार्गज्ञानार्थं हि प्रमाणसंशयादीनां पृथग्वचनमिति । सर्व्वदेति नित्यगे काले. दुग्धपलं जलपलं वर्द्धयति द्रवत्वादिसामान्येन परिमाणतः । न तु पारदपलं जलपलं वैशेष्यात् । विशेषो ह्यत्र तीक्ष्णत्वमृदुत्वादिर्बलीयान् द्रवत्वादिसामान्यमवजयति । वक्ष्यते हि "विरुद्धगुणसमवाये हि भूयसाल्पमवजीयते" । जैमिनिना चोक्तम् "विरुद्धधर्म्मसमवाये भूयसां स्यात् सधर्म्मकत्व"मिति । एतेनात्र ह्रासहेतुर्विशेषो व्याख्यातः । आवस्थिके तु कालेऽप्येवं उष्णगुणसमं दुग्धं कणाशुण्ठ्याद्युष्णद्रव्यसंस्कृत-

अथ वैशेषिकोक्तानामन्त्यविशेषाणामिह शास्त्रे चिकित्सायामनुपयुक्तत्वात् तद्विशेषधर्म्मव्यावर्त्तकत्वायोगात् सामान्यविशेषानेव विशेषान् ह्रासकारणत्वेनाह, ह्रासहेतुरित्यादि । अत्रापि सर्व्वदा सर्व्वभावानामिति योजनीयम्, ह्रासोऽपचयः, विशिष्यते व्यावर्त्तते इति विशेषः सामान्यमेव गवेधुकत्वं मांसादीन् प्रति विशेषः, गवेधुको हि गवेधुकत्वेन गवेधुकत्वयुक्तान्तरापेक्षया समानः, मांसापेक्षया व्यावृत्तत्वाद्विशेषः, न हि मांसे गवेधुकत्वमस्ति, एवं मांसत्वं मांसान्तरापेक्षयाऽनुगतत्वात् सामान्यं, शोणितायपेक्षया तु मांसानां व्यावृत्तत्वाद्विशेष एव । अत्रापि ह्रासहेतुकत्वं ह्रासहेतुद्रव्यादिलक्षणत्वेन सामान्यवज्ज्ञेयं, तथा ह्रासहेतुत्वमप्यसति विरोधके सामान्योक्तन्यायेन ज्ञेयं तेन मन्दकर्त्तिकुवादीनां वातादिविरुद्धानामपि स्निग्धत्वादीनां वातादिशमकत्वं द्रव्यस्यापथ्यत्वप्रभावादेव ज्ञेयम् । विशेषश्चेह विरुद्धत्वविशेषोऽभिप्रेतः, तेनोत्तरत्र विरुद्धविशेषमेव ह्रासहेतुतया तत्र तत्रोपदेक्ष्यति, यथा—"वृद्धिः समानैः सर्व्वेषां भावानां विपरीतैर्विपर्य्ययः" इति । तथा "विपरीतगुणैर्देशमात्राकालोपपादितैः" इत्यादि । तथा

मवस्थान्तरमापन्नं कफं ह्रासयति न तु गुणसामान्येन वर्द्धयति अवजयात्। ननु कथमेवं वृद्धौ हेतुः सामान्यं ह्रासे विशेष इत्यत आह "सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत्" इति। यतः सर्व्वदा सर्व्वभावानां सामान्यमेकत्वकरं मेलनेनैकीभावं करोति ; तस्मात् तेषां वृद्धिकारणमिति। यथा दुग्धजलयो-र्द्रवत्वादिसामान्यं ते मेलयति मेलयित्वा च वर्द्धयतीति। तथा च दुग्धजलयो-रेकापरविशिष्टद्रवत्वापन्नत्वेनैकमेव वस्तु सत् द्विपलं भवतीति। न तु पारद-जलयोस्तथा मेलनेनैकीभावस्ततो न वृद्धिरिति। कस्मादित्यत आह, विशेषस्तु पृथक्त्वकृदिति। "सर्व्वदा सर्व्वभावानां विशेषस्तु पृथक्त्वकृत्। पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता" इति वक्ष्यते। अयोगेनानेकत्वं भावानां करोति न त्वेकत्वमिति ; पारदस्य जलस्य च द्रवत्वविशेषः पृथक्त्वमेव करोति। तयो-र्द्रवत्वे सामान्ये सत्यपि विशेष एवास्ति तत्स्थयोर्द्रवत्वगुणयोरिति। एवं जातिश्च पञ्चब्राह्मणानां परेणैकेन ब्राह्मणेन सहैकत्वं मेलनं करोति। क्षत्रियेणापरेण सह पृथक्त्वं तु ब्राह्मणत्वक्षत्रियत्वजातिविशेषः करोतीति। किं पुनः सामान्यं को वा विशेष इत्यत आह "तुल्यार्थता हि सामान्यं विशेषस्तु विपर्य्ययः" इति। समानानामनेकेषां भावः। न ह्येकः समानो भवति। सापेक्षधर्म्मकः समानः। तेनानेकेषां स्ववृत्तिवस्तुभाव उच्यते। अस्तीति भावः। यो यत्र वर्त्ततेऽर्थः स तस्य भावः। अत एव तुल्यार्थता सामान्यम्। अर्थः कारणभूतं कार्य्यभूतञ्च वस्तु तुल्यं येषां ते तुल्यार्थास्तेषां भावस्तुल्य एवार्थः। येन समानं यत् तस्य तेन

"विपरीतगुणैर्द्रव्यैर्मारुतः सम्प्रशाम्यति" इत्यादि। तथा तत्रैवोक्तम् "समानैः सर्व्वभावानां वृद्धिर्ह्रासो विपर्य्ययात्" इति। अविरुद्धविशेषस्तु यद्यपि ह्रासे वृद्धौ चाप्यकारणं, यथा पृथिव्या अनुष्णाशीतस्पर्शो वातस्य रौक्ष्यं न वर्द्धयति नापि ह्रासयति, तथाप्यनिर्णीयमानानां धातूनाम् असमानत्वेनाजनकत्वात् ह्रासकारणमिव भवति, यतोऽसमानद्रव्योपयोगे सति ह्रासो विनश्वराणां भावानाम् आपूरकहेत्वभावादुपलभ्यत एव, यथा वहतो जलस्य पूर्व्वदेशसेतुना उत्तरदेशजलस्य ह्रासः। एवम्भूतं चाविरुद्धविशेषोपयोगेऽपि ह्रासं पश्यताऽऽचार्य्येण सामान्येनैव इहोक्तं "ह्रासहेतुर्विशेषः" इति, चशब्दः सर्व्वभावानामिति समुच्चिनोति।

अथ किमसम्बन्धावपि सामान्यविशेषौ वृद्धिह्रासकारणं? नेत्याह, प्रवृत्तिरुभयस्य त्विति, कारणमिति शेषः, उभयस्य सामान्यस्य विशेषस्य च, प्रवृत्तिः प्रवर्त्तनं शरीरेण अभिसम्बन्ध इति यावत्, एवम्भूता प्रवृत्तिः धातुसामान्यविशेषयोर्वृद्धिह्रासे कारणमित्यर्थः, तुशब्दोऽवधारणे, तेन नासम्बद्धौ सामान्यविशेषौ स्वकार्य्यं कुरुत इति दर्शयति। किंवा प्रवृत्तिरभिहिता धातुप्रवृत्तिर्धातुसाम्यमिति यावत्, सा उभयस्य सामान्यस्य विशेषस्य च

सह तुल्यार्थत्वं सामान्यम्। यथा पुरुषाणां पुरुषघटकं वस्तु सत्त्वात्मशरीरं तुल्यं तत्त्रिकं द्रव्यभूतं सामान्यम्। तत्र च यत्कृष्णवर्णादिगुणः स च गुणभूतं सामान्यम्। यच्च कर्म्म गमनादि तत् कर्म्मभूतं सामान्यम्। या तु सत्ता सदिति यतः यः खलु समवायः समानसमवायात्मकः स समवायभूतं सामान्यमिति चतुर्व्विधं सामान्यम्। यथोक्तम्। सन्नित्यमद्रव्यवत् कार्य्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्म्मणामविशेष इति। स चाविशेषः सामान्यमेव पदार्थस्तच्चतुर्व्विध द्रव्यगुणकर्म्मसमवायेष्वन्तर्भूतं भवति नातिरिक्तम्। तत्र सदिति। अस्तीति वस्तूच्यते। यन्नास्ति तदवस्तु। तद्वस्तु तत्तत्कार्य्यवस्तुनिष्ठो धर्म्मः। स च तत्तद्वस्त्वारम्भकं द्रव्यञ्च गुणश्च कर्म्म च तथा समवायश्च जातिरूपो जन्यरूपश्च। नित्यत्वं निरुक्तं त्रिविधं निरुक्तत्रिविधकालपर्य्यन्तस्थायित्वं क्रियाविशेष एव। अद्रव्यवत्त्वं पुनरद्रव्यारब्धत्वं तदपि गुणानां प्रकृतिः सत्त्वादिगुण एव तत्सत्त्वादिगुणप्रकृतिकगुण एवाद्रव्यवत्त्वम्। भूतादेस्तामसस्याहङ्कारस्य प्रथम आरम्भः शब्दमात्रस्य; ततः शब्दमात्रेणारब्ध आकाश एवं स्पर्शमात्रस्य तत आरम्भः; स्पर्शमात्रेण वायुरारभ्यते। ततो रूपमात्रमारभ्यमाणं ज्योतिरारभते। ततो रसमात्रमारभ्यमाणमप आरभते। ततो गन्धमात्रमारभ्यमाणं पृथिवीमारभते। एवं

कार्य्येति शेषः, तेन केवलसमानोपयोगात् धातुवृद्ध्या धातुवैषम्यं, केवलविशिष्टोपयोगाच्च धातुक्षयाद्वा धातुवैषम्यं, युगपत् समानविशिष्टद्रव्योपयोगात् प्रवृत्तिर्धातुसाम्यरूपा भवतीत्युक्तं भवति। तुशब्दः पूर्व्वपक्षादेकद्रव्योपयोगलक्षणरूपात् व्यावर्त्तयति।

अथ किंलक्षणं तत् सामान्यं, किंलक्षणो वा स विशेष इत्याह, सामान्यमित्यादि।—एकत्वकरमेकत्वबुद्धिकरं, सामान्यं; यदनेकासु भिन्नदेशकालासु गवादिव्यक्तिषु "अयं गौरयं गौः" इत्यादिप्रकारा एकाकारा बुद्धिस्तत् सामान्यं, न हि भिन्नासु व्यक्तिषु अभिन्नं सामान्यमेकरूपं विनाऽभ्रान्ता एकाकारा बुद्धिर्भवतीति भावः। यद्यपि च "अयं पाचकोऽयं पाचकः" इति तथा "अयं शुक्लोऽयं शुक्लः" इतिप्रभृतिषु क्रियागुणादिसामान्यादेकरूपा बुद्धिस्तत्रापि सामान्यमेकक्रियागुणादिगतमेकरूपाध्यवसाये हेतुः, न ह्येकस्मिन् पाचके या क्रिया सा पाचकान्तरेऽपि, किं तर्हि तज्जातीया; अतः क्रियासामान्यं तत्राप्येकत्वाध्यवसाये कारणम्।

विशेषलक्षणं पृथक्त्वकृदिति व्यावृत्तबुद्धिकृत्, तेन यद् गोव्यक्त्यन्तरापेक्षया एकबुद्धिकर्त्तृतया गोत्वं सामान्यं, तदेव गोत्वम् अश्वाद्यपेक्षया व्यावृत्तबुद्धिकर्त्तृत्वात् अश्वादीन् प्रति विशेष इत्युक्तं भवति; तेन मांसत्वं मांसं प्रति मांसान्तरापेक्षया समानत्वात् वृद्धिकारणं भवति, तदेव तु मांसत्वं वातं प्रति विशेषरूपतया ह्रासहेतुर्भवति, शोणितादीन् प्रति त्वविरोधविशेषत्वेन न तथा ह्रासकारणं, गुणसामान्यात् तु वर्द्धकमपि मांसं शोणितादीनां भवति।

त्रिवृत्त्रिवृत्कृतैस्तेजोऽबन्नैरुपाहितं परमव्योमैव परमात्मा चक्रवद्भ्रमणशीलः कालो बभूवेति कालारम्भकं त्रिवृत्त्रिवृत्कृतं तेजोऽबन्नं परमव्योम चेति। स च कालो निर्लिङ्ग एवाप्रमेयस्तदारब्धस्त्वयं संवत्सरः कालः शीतोष्णवर्षलक्षणः षडङ्गऋतुभेदेन कार्य्ये कारणसंज्ञो द्रव्यमध्येऽयं कालो निर्दिष्टः प्रमेयत्वात्। एतत् कालस्य वस्तुनो वस्तुत्वं कालत्वं समवाय एव सत्ता। तत्कालस्य सत्त्वादिगुणयोगे समवायात् परिणामविशेष एष काल इति। एवं क्षेत्रज्ञानुप्रवेशे कालानुप्रवेशे प्रधानमभिव्यक्तसत्वादित्रिगुणलक्षणं भूत्वा समत्रिगुणलक्षणमव्यक्तं नामायं द्रव्यसंज्ञ आत्मा बभूव। तदात्मत्वञ्च समवायरूपा सत्ता कालक्षेत्रज्ञप्रधानानां हि समवायादव्यक्तस्वरूपनिर्वृत्तिरिति। एवं दिगपि वैकारिकात् सात्त्विकादहङ्कारादिन्द्रियादीनां देवतासर्गे आकाशस्य देवता दिग्जाता. तया दिशा सत्त्वादिगुणयोगादारब्धा एता दिशो दश द्रव्यमध्ये निर्दिष्टाः प्राच्यादय इति. दिक्त्वमपि वस्तुत्वं समवाय एव सत्ता। तस्या दिशो गुणैः सहयोगेऽपृथग्भावेन परिणामविशेषा एता दिश इति। मनश्चेदं शारीरं द्रव्यमध्ये यन्निर्दिष्टं तदप्याहङ्कारिकमनसः स्थूलशरीराभिनिर्वृत्तौ स्वत्वात्मना कृतैः सत्त्वरजस्तमोभिर्विकृतीभूतगुणैः

कथमनेकासु व्यक्तिषु सामान्यमेकबुद्धिमव्यभिचारिणीं करोतीत्याह, तुल्यार्थता हीत्यादि। तुल्यार्थता एकसामान्यरूपार्थानुयोगिता, एतेन यस्मात् भिन्नासु व्यक्तिषु सामान्यमेकरूपसम्बन्धमस्ति ततस्तदनेकार्थावलम्बा सत्यपि व्यक्तिभेदे एकबुद्धिर्युक्तेति भावः।

विशेषस्तु विपर्य्यय इति अतुल्यार्थता विशेषत्वं, तेन गोगजयोरतुल्यगोत्वगजत्वरूपार्थयोः पृथग्बुद्धिर्युक्तैवेति दर्शितं भवति।

अन्ये तु व्याख्यानयन्ति, यत्, त्रिविधं सामान्यं, विशेषश्च त्रिविधः यथा द्रव्यगोचरो गुणगोचरः कर्म्मगोचरश्च, तत्र सर्व्वदेत्यादिना द्रव्यसामान्यमुच्यते, सामान्यमेकत्वकरमित्यनेन गुणसामान्यं, यथा पयःशुक्रयोर्भिन्नजातीययोरपि मधुरत्वादि सामान्यं तयोरेकतां करोति, एवं विशेषेऽप्युदाहार्य्यं ; तुल्यार्थतेत्यादिना तु कर्म्मसामान्यं निगद्यते, आस्यारूपं कर्म्म न श्लेष्मणा समानमपि तु पानीयादिकफसमानद्रव्यार्थक्रियाकारित्वात् कफवर्द्धकरूपतया आस्यापि कफसमानेत्युच्यते, एवं स्वप्नादावपि कर्म्मणि बोद्धव्यं ; तदेतत् भट्टारहरिचन्द्रेणैव दूषितं, यतः सर्व्वदेत्यनेनैव लक्षणेन त्रिविधमपि सामान्यं लभ्यते ; तेनास्मिन् पक्षे "सामान्यमेकत्वकरम्" इत्याद्यवाच्यं स्यादिति कृत्वा, अन्ये तु पठन्ति ; यत् त्रिविधं सामान्यम् अत्यन्तसामान्यं मध्यसामान्यमेकदेशसामान्यञ्च, तत्र "सर्व्वदा" इत्यादिना अत्यन्तसामान्यमुच्यते, सामान्यमेकत्वकरमित्यनेन मध्यसामान्यं, तुल्यार्थता हीत्यादिना एकदेशसामान्यम्, एतदपि त्रैविध्यकथनं नातिप्रयोजनमसङ्गतलक्षणञ्चेति नातिश्रद्धाकरम्।

सह युक्तेनापृथग्भावेन परिणामविशेषस्तदिदं मनस्त्वमपि समवायस्तेषां सत्ताभूतमेव वस्तुत्वमिति। एवं रूपरसगन्धस्पर्शा आहङ्कारिकत्रिगुणसमवायादपृथग्भूतस्वरूपेण नित्यत्वात्तेषां समवायविशेषा एव रूपत्वादयः सत्ता एव। एवं पञ्चविधकर्म्मणां कर्म्मत्वमपि सत्तैव; अथैषामुपादानानि यानि तानि तु खलु न द्रव्यं न रूपरसादिगुणो नोत्क्षेपणादि कर्म्म च न च समवायः। परन्तु यथास्वमुपादानमन्य एव विशेषः, सर्व्वेषां तेषामप्यन्तःप्रविष्टमेकं सर्व्वोपादानं सदेव ब्रह्म सर्वव्यापकं सामान्यमिति षडेव पदार्था न तु चत्वारो द्रव्यगुणकर्म्मसमवायाः। सामान्यविशेषयोर्निखिलयोस्तेषु चतुर्ष्वन्तर्भावाभावादिति। तर्हि कथं न षट्पदार्थनियमो न च षोड़शपदार्थनियम इति कापिलवचनमुपपद्यत इति। यत उक्तं कार्य्यं कारणं सामान्यविशेषवदिति; कार्य्यं हि न प्रसिद्ध एक एव भावः कश्चिदस्ति। वक्ष्यते चास्मिंस्तन्त्रे "नैकः प्रवर्त्तते भावः" इति। अनेकोपादानकं हि कार्य्यं नवद्रव्यं सप्तदशगुणं पञ्चविधञ्च कर्म्मेति। सत्यमेतत्। यत्पुनर्वैशेषिकशासनमुक्तं कणादेन यच्चान्वीक्षिकीशासनं गौतमेन यच्चायुर्वेदशासनं तत्सर्व्वं लौकिकपदार्थोपदेशशास्त्रम्। लोके तु यत्सामान्यं यच्च विशेषश्चिकित्सायामुपयोगार्थं भवति तौ सामान्यविशेषावायुर्वेदे वृद्धिकृत्त्वह्रासपृथक्त्वहेतुतया-

केचित् सामान्यं द्विविधमिच्छन्ति, उभयवृत्ति तथैकवृत्ति च। तत्र मांसं मांसवर्द्धकम् उभयवृत्तिसामान्यात्, मांसत्वं हि पोष्ये पोषके च गतत्वात् उभयवृत्ति, एकवृत्ति तु यथा घृतमग्निकरं, तथा धावनादिकर्म्म वातकरं, तथाऽऽस्यादि कफकरम्, एतद्धि मध्ये न वर्द्धनीयेन समानं किन्तु प्रभावाद्वर्द्धकं, प्रभावश्च घृतत्वधावनत्वादिरेव, स चैकवृत्तिसामान्यरूपः, तेन तत्रापि सामान्यमेव वृद्धिकारणमिति ब्रुवते। अस्मिंस्तु पक्षे अनुभयवृत्तिसामान्यं विशेष एव भवति, तथा समानमसमानञ्च वृद्धिकारणं भवतीति न किञ्चित् सामान्यस्योक्तं स्यात्, अस्मन्मते तु सामान्यं वृद्धौ कारणमेव भवतीति सामान्यं वृद्धिकारणत्वेन नियम्यते, न वृद्धिः सामान्यकारणत्वेनैवेति नियम्यते, तेनासमानादपि वृद्धिर्भवति निर्दोषा।

यत्तूच्यते, कर्म्मसामान्यं नेह तन्त्रे वृद्धिकारणमस्ति, यतो न धावनेन वायुः समान इति, अत एवाचार्य्येण द्रव्यसामान्यमुक्तं, "मांसमाप्यायते मांसेन" इत्यादिना, तथा "सामान्यगुणानामाहारविकाराणामुपयोगः" इत्यादिना गुणसामान्यमुक्तम्, नैवं कर्म्मसामान्यमुक्तं, वचनं हि "कर्म्मापि यद् यस्य धातोर्वृद्धिकरं तत्तदा सेव्यम्" इति, न तत्र सामान्योपग्रहः कृतः। अत्र ब्रूमः— कर्म्मणां प्रायः प्रभावेणैव वृद्धिहेतुत्वात् सामान्यानुपग्रहः कृतः, न च कर्म्मसामान्याभावात्; यतः क्रियावतो वातस्य क्रियावता व्यायामादियुक्तेन शरीरेण वृद्धिः क्रियते निष्क्रियतया चास्य वातस्य ह्रासः। स्वप्नादयस्तु "संयोगे च विभागे च" इत्यनेन वक्ष्यमाण-

ऽभिहितौ। वैशेषिके च निःश्रेयसार्थं यौ सामान्यविशेषौ भवतस्तयोरेव साधर्म्म्य-वैधर्म्म्याभ्यां तत्त्वज्ञानं सम्भवति। सर्व्वान्तर्यामि ब्रह्म तु सामान्यं तत्तत्त्वमेव तस्य तु तत्त्वज्ञानं न सम्भवति। विकृतांशं विहाय प्रकृतांशज्ञानं हि भावानां तत्त्वज्ञानम्। तच्च ब्रह्मणो नास्तीत्यस्मादलौकिकौ नाभिहितौ। तौ प्रोक्तौ यौ लौकिकौ सामान्यविशेषौ. तौ द्रव्यगुणकर्म्मसमवायेष्वन्तर्भूतावेव। आयुर्वेदेऽनुपयोगित्वाद्वैशेषिके च निष्प्रयोजनत्वादलौकिकसामान्यविशेषौ नोक्तौ निष्प्रयोजनत्वाच्चैव नाहङ्कारिकाणीन्द्रियाण्यहङ्कारो महानव्यक्तस्थास्त्रयो गुणाः सत्त्वादयश्चोक्तास्तस्माल्लोके षडेव पदार्था इत्येवं नियमो न, तथा षोडशैव पदार्था इत्येवं नियमश्च न। धातुसाम्यवैषम्यप्रयोजनमायुर्व्वेदिकं निःश्रेयसाधिगम-प्रयोजनञ्च वैशेषिकं. षट्पदार्थज्ञानेनैव सिध्यति। तथा षोडशपदार्थज्ञानेनैव निःश्रेयसाधिगमः सिध्यतीति शेषाः पदार्था नोक्ता आयुर्वेदवैशेषिकान्वीक्षिकीषु न तु प्रतिषिद्धा इति न कापिलवचनं विरुध्यते। सामान्यविशेषवदिति वचनेनैकत्वं द्रव्यगुणकर्म्मणां प्रतिषिद्धं न द्रव्यमेकविधं न गुण एकविधो न च कर्म्मैकविधमिति ॥ १८ ॥

लक्षणेनानुक्ता अपि शास्त्रव्यवहारात् कर्म्मशब्देनोच्यन्ते; तत्र स्वप्नः स्वकारणादेव क्षीयमाणस्य कफस्य क्षयकारणशरीरपरिस्पन्दादिनिरोधकत्वेन वृद्धिकर उच्यते, न तु स्वप्नः साक्षात् श्लेष्म-वृद्धिं करोति। एवमास्यादावपि चिन्तनीयम्। यत्र त्वेवं कारणं चिन्तयितुं न पार्यते तत्र प्रभाव एव वर्णनीयः।

ननु मांसं मांसं वर्द्धयति सामान्याद् विशेषाच्च वातं क्षपयति. तत् कथं युगपद्विरुद्धोभय-कर्त्तृत्वं मांसस्य? न हि देवदत्तो यदैव कुम्भं करोति तदैव काण्डमपि. नैवं क्रियावतामयं धर्म्मः नाक्रियावतामिति; यथा हि शब्दो युगपदनेकानेव शब्दान् एककालमारभते तथा अग्निः प्रकाशदाहौ युगपत् करोति; अत एवोक्तमाचार्य्येण "तस्मात् पञ्च सम्यगवचार्य्यमाणं युगपद्वातादिरसानां धातूनां साम्यकरं भवति, अधिकमपकर्षति न्यूनमाप्याययति"।

यदुच्यते क्षीयमाणधातोर्वृद्धस्य तथा बहुदोषस्य समानगुणोऽप्याहारो न वृद्धिहेतुः, तथा ग्रीष्मे च मधुरादिना समानेनापि न कफादिवृद्धिरित्यादि; तत्र प्रतिबन्धकानां जराबहुदोषत्व-ग्रीष्मोष्णत्वादीनां विद्यमानत्वाच्च सामान्यं वर्द्धकम्, असति च विरोधके सामान्यं वृद्धिकारणमिति सिद्धान्तः, तेन न काचित् क्षतिः; किंवा वृद्धादीनां सामान्येनाहारेण क्रियते एव वृद्धिः, परन्तु बलवता क्षयहेतुना आक्षीयमाणत्वे पुनः सा वृद्धिर्नोपलभ्यते।

अत्र च द्रव्यसामान्यमेव धातूनां द्रव्यरूपाणां वर्द्धकं न गुणसामान्यं, गुणानां द्रव्या-नारम्भकत्वात्, गुणसामान्यात्तु तद्गुणाश्रयं द्रव्यमनुमीयते, तच्च द्रव्यं धातुवर्द्धकं भवति, यथा

सत्त्वमात्मा शरीरञ्च त्रयमेतत्त्रिदण्डवत् ।
लोकस्तिष्ठति संयोगात्तत्र सर्वं प्रतिष्ठितम् ॥

गङ्गाधरः—अथ द्रव्यसामान्योदाहरणमायुर्वेदक्रियाधिकरणापदेशेन दर्शयति ;—सत्त्वमात्मेत्यादि । सत्त्वं सत्त्वसंज्ञकं मनः । आत्मा सत्त्वादित्रिगुणलक्षणमव्यक्तं नाम चतुर्विंशं तत्त्वम् । शरीरं पञ्चमहाभूतविकारसमुदायात्मकं चेतनाधिष्ठानभूतं तच्च शुक्रशोणितादिसम्भूतं स्थूलं गृह्यते न त्वाहङ्कारिकेन्द्रियादिमत् सूक्ष्मं क्रियानधिकरणत्वात् । अत्र सत्त्वादिसङ्ख्यं यन्निर्द्देशे सङ्ख्यालाभेऽपि द्वयोः संयोगे लोकत्वनिरासायाह त्रयमिति । तेनैतत्त्रयं समस्तं संयोगान्मिलितं लोको लोकाभिधः संस्तिष्ठति स्थित्यादिक्रियासमर्थत्वेन वर्त्तते । लोकृ दीप्तौ कृद्योगे रूपसिद्धिः । लोकाभिधानात् जगत्साम्यं ख्यापितम् । त्रिदण्डवदिति । यथा त्रयो दण्डा मिलिताः समुदायात्मको विशिष्टस्त्रिदण्डाख्यो भावविशेषस्तिष्ठति वस्त्वन्तरधारणादिक्रियायां स्वयमवस्थानक्रियायाञ्च समर्थत्वेन वर्त्तते । एतेनैतदुक्तं भवति । यथा दण्डत्रयं परस्परं संयोगेन धारणावस्थानसमर्थं भवति, न च संयोगाभावान्न वा द्वयोः संयोगात् । तथा सत्त्वात्मशरीराणीति त्रयं परस्परं संयोगान्मिलितं लोकाख्यः सन् स्वयमवस्थानवस्त्वन्तरधारणादिसमर्थो भवति न संयोगाभावान्न च द्वयोः संयोगात् । एतस्य सूक्ष्मातिवाहिकशरीरं पारलौकिकं वैदिकक्रियाधिकरणत्वाभावान्नोक्तं शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितमायुरुक्तं तत्संयोगवान् सत्त्वात्मशरीरसमुदायो लोक इत्याधाराधेयभावाभ्यां लोकायुषोर्भेदः । यच्चायुर्लक्षणे शरीरात् पृथगिन्द्रियमुक्तं न चात्रेन्द्रियमुक्तं शरीरग्रहणेन गृहीतं तत्तु खल्वायुर्लक्षणे यदिन्द्रियग्रहणं

रूक्षादीन् गुणान् दृष्ट्वा चिरको वायुधिको योऽनुमितः, स च चिरक उपयुक्तो वातं वर्द्धयति, गुणास्तु गुणानेव जनयन्तोऽतिवर्द्धयन्ति । सामान्यञ्च वृद्धिकारणलक्षणं, न साक्षात् वृद्धिकारणमिति प्रागेवोक्तम् ; एवं विशेषेऽपि । अयञ्च सामान्यविशेषवादो ग्रन्थविस्तरभयादायुर्वेदोपयुक्तधर्म्ममात्रेणोक्तः, विस्तरस्त्वस्य वैशेषिके बोद्धव्यः ॥ १४ ॥

चक्रपाणिः—सम्प्रति सामान्यविशेषावभिधाय उद्देशक्रमानुरोधात् गुणेऽभिधातव्ये, गुणेषु प्रधानभूतमायुर्वेदोपकार्य्यं सत्त्वात्मशरीरसंयोगं वक्तुमाह—सत्त्वमित्यादि । किंवा सामान्य-विशेषाभ्यामेव हेतुलिङ्गौषधानि दर्शितानि, सामान्यविशेषयोरेव सर्व्वत्र कारणत्वात् लिङ्गत्वाच्च, एतावदेव विचार्य्यमाणं तन्त्रं भवति, अधिकरणञ्च लोकमतः सत्त्वादिमेलकं हेत्वाद्यधिकरणमाह,

स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतम्।
वेदस्यास्य तदर्थं हि वेदोऽयं सम्प्रकाशितः ॥ १६ ॥

तदन्तश्चेतनानां वृक्षादीनां जीववतां प्रत्यक्षाणां बहिरिन्द्रियाभावेऽप्यभ्यन्तरेन्द्रियवत्त्वख्यापनार्थं लोकत्वञ्च तेषां सत्त्वात्मशरीरवत्त्वात्। यद्यायुर्लक्षणे इन्द्रियग्रहणं नाकार्षीत् कथं वृक्षादीनां जीवनदर्शनेनाभ्यन्तरेन्द्रियवत्त्वानुमानमभविष्यत्। इन्द्रियग्रहणेन तु तेषां जीवनदर्शनेनाभ्यन्तरेन्द्रियमनुमीयते मनोग्रहणवत्। बाह्ये न्द्रियवत्त्वाभावात् तु वृक्षादयो न पश्यन्ति न जिघ्रन्तीति। मनोग्रहणेन मनसोऽप्यनुमानं वृक्षादीनामात्मग्रहणेनात्मानुमानं भवति जीवनलिङ्गात्। घटादीनान्तु जीवनलिङ्गाभावादात्मेन्द्रियमनसामनुमानं भवति। आत्मेन्द्रियमनोलिङ्गाभावात्। तस्माद् वृक्षादयः प्राणिनोऽपि बाह्यविषयग्राहकत्वाभावात् स्थूलशरीरस्थमनसा सुखदुःखानुभवेऽपि तत्प्रतिकारार्थं नायुर्वेदाधिकारिणो भवन्तीति ख्यापयितुमायुर्लक्षणे पृथगिन्द्रियमुक्तमिन्द्रियानुमेयायुर्हि वक्ष्यतेऽग्न्याधिकारे इति कश्चित्। वस्तुतस्तु मृतपुरुषस्य परलोकगतस्य सूक्ष्मदेहवतः सत्त्वेन्द्रियादिमत्त्वेऽप्यायुष्मत्त्ववारणार्थं सूक्ष्मदेहव्यवच्छेदार्थं तत्र शरीरपदेन स्थूलदेहपरिग्रहार्थमिन्द्रियं पृथगुक्तम्। अत्र तु मृतस्यापि लोकत्ववारणार्थं स्थूलदेहपरिग्रहार्थं शरीरमुक्तं न त्विन्द्रियं पृथगुक्तमिति। त्रिदण्डवदिति दृष्टान्तं कर्म्मसामर्थ्येन न तु फलभोगादिसामर्थ्येन चेतनत्वाभावात्। नन्वस्तु लोकः सत्त्वात्मशरीरसमुदायात्मकस्तत्र सामान्यञ्च भवतु प्रत्येकं सत्त्वमात्मा शरीरञ्च मिथः संयोगात्तु तेषां समुदायस्य कथं लोकाभिधानं लोके ह्याकाशादिकं दिश्यते गुणाश्च शब्दादयः कर्म्म च। पुरुषं तु सत्त्वात्म-

सत्त्वमित्यादि। सत्त्वं मनः, चशब्दः समुच्चये, संख्येयनिर्देशादेव संख्यायां लब्धायां त्रयमिति पदं मिलितानामेव ग्रहणार्थम्, एतद्विषयमन्तरोक्तनिर्देशः, त्रिदण्डः परस्परसंयोगविधृतः कुम्भादिधारकस्तद्वत्; एतेन यथा त्रिदण्डान्यतमापाये * नावस्थानं तथा सत्त्वादीनामन्यतमापायेऽपि न लोकस्थितिरित्युक्तं स्यात्; लोक्यत आलोक्यत इति लोकः, तेनेह जङ्गमो भूतग्राम उच्यते। संयोगात् तिष्ठतीति परस्परोपग्राहकत्वात् संयोगात् स्वार्थक्रियां कुर्व्वन् न विशकलितं † भवति। अत्र तु पृथगिन्द्रियग्रहणं न कृतं शरीरग्रहणेनैव गृहीतत्वात्, तत्र सर्व्वं प्रतिष्ठितमिति अस्मिन् लोके कर्म्मफलादि व्यवस्थितं, यद्वक्ष्यति "अत्र कर्म्मफलञ्चात्र ज्ञानञ्चात्र प्रतिष्ठितम्। अत्र

* त्रिदण्डानामन्यतमापायेऽपीति पाठान्तरम्। † विस्रस्यितमिति क्वचित्कः पाठः।

शरीरसमुदाये नाकाशादय उपदिश्यन्ते. दृश्यन्ते चाकाशादयस्ते कुतः सम्प्रवर्त्तन्ते किन्ते चाधिका नगवृक्षादयश्च चेतनाचेतना लोके उपदिष्टाः सन्तु मृतानां तेषामुपदेशे किं प्रयोजनमस्ति जीवितानां वा किमित्याशङ्क्याह. तत्र सर्व्वमित्यादि। तत्र लोके सर्व्वमाकाशादिकं द्रव्यगुणादिकं प्रतिष्ठितं सत्तु चात्मनि च शरीरे च समुदाये च प्रतिनियतं यतत् तत्सर्व्वं स्थितं यच्च सर्व्वं त्रिलोक्यां तस्मादयमपि मिथः संयोगात् सत्त्वात्मशरीरसमुदायो लोकाभिधो भवति। लोकजगतोः साम्यं स्वयमेव शारीरस्थाने व्याख्यास्यते। एतेनैतदुक्तमाचार्य्येण। सत्त्वात्मशरीरसमुदायात्मकस्त्वयं लोको यस्माद् द्रव्यगुणकर्म्मतित्रयात्मकस्तस्मात् तत्र सर्व्वं प्रतिष्ठितं द्रव्यादित्रयात्मकत्वमेवास्य न तु द्रव्यादिचतुरात्मकत्वं द्रव्यगुणकर्म्मणां मेलकसमवायेन मिलितसमुदायत्वे तद्द्रव्यादीनां त्रयाणां मेलकत्वेन समवायस्य प्रकृतिभूतकारणत्वाभावादेव तन्मयत्वाभावेन कार्य्यत्वाभावात्। द्रव्यादित्रिभावात्मकोऽपि सत्त्वात्मशरीरसमुदायत्वेनापूर्व्वापरविशिष्टगुणकर्म्मवान् बोध्यः एवं यदाचेतनोऽपि।

ननु कारणानुरूपं हि कार्य्यं तस्मात् सत्त्वात्मशरीरसमुदायत्वे लोके कथमिच्छाद्वेषसुखदुःखप्रयत्नचेतनाधृतिबुद्धिस्मृत्यहङ्कारकर्म्मकर्म्मफलमोहजीवितमरणादिकं वर्त्तते? सत्त्वं हि अणुत्वमेकत्वञ्चेति द्विगुणं क्रियावदचेतनञ्च आत्मा निर्गुणो निष्क्रियः सत्त्वरजस्तमःसाम्यलक्षण इति शरीरं च तदधिष्ठानभूतं पञ्चमहाभूतविकारसमुदायात्मकं तदारम्भकाकाशादीनां च भूतानां गुणा न भवन्तीच्छादयो गुरुत्वादयश्च। इति चेन्नात्रात्मशब्देनेच्छाद्वेषादीनामाश्रयत्वेन तेषां ग्रहणादिति कश्चित्तन्नात्मनो निर्गुणत्वेनेच्छाद्वेषादीनां सत्त्वगात्त्वेन जनकत्वादिच्छादिलिङ्गकत्वादिच्छाद्याश्रयत्वाभावादन्यथा सुखदुःखात्मकयोरारोग्यरोगयोरात्मवृत्तित्वापत्तेः। न हि तदिष्टं भवति शरीरं सत्त्वसंज्ञञ्च व्याधीनामाश्रयो मतः। तथा सुखानामिति वक्ष्यमाणवचनासङ्गत्यापत्तेः। रात्रुमात्मा शरीरञ्चेत्यादिरूपेण पुरुषोपदेशं न कृत्वा चतुर्व्विंशतिधा त्वात्मा लोक इत्युपदेशेन तदर्थलाभात्।

मोहः सुखं दुःखं जीवितं मरणं प्रभा"*। स पुमानिति तत् सत्त्वादित्रयं पुमानिति भण्यते, तत्र यद्यपि सत्त्वादित्रयं नपुंसकलिङ्गं, तथापि पुमानिति वक्ष्यमाणलिङ्गग्रहणात् स इति पुंलिङ्गनिर्द्देशः; यथा—"प्रेरणी यत् कर्म्म यो येन् स कर्त्ता" इत्यादौ; किञ्च तदिति यद्यपि वर्त्तमाननिर्द्देशः कृतस्तथापि तस्यैव स इत्यतीतनिर्द्देशोऽपि सर्व्वनाम्नां सर्व्वकालनिर्द्देशादेवाविरोधो

* शुभा इति क्वचित् पाठान्तरम्।

तस्मात् कारणभूतसत्त्वादित्रयसमुदायात्मकत्वेन पुरुषोपदेशात् कार्य्यभूतानामिच्छादीनां तत एव लाभः स्यादिति। तद्यथा—सत्त्वमचेतनं क्रियावच्च प्राक्प्रसिद्धम्। आत्मा खलु यः क्षेत्रज्ञः स शाश्वतो निर्गुणो निष्क्रियः सत्त्वभूतगुणेन्द्रियैश्चैतन्ये हेतुः, स च संसारस्यानादित्वेन चक्रवद्भ्रमणशीलत्वेन च यदृच्छया ता प्रभावाच्च त्रिगुणसाम्यात्मकप्रधानेन यदा युज्यते रागात्मकेन तदा प्रवृत्तिहेतुना रजसा प्रवृत्तिमान् भवति, सत्त्वेन प्रकाशकेन चेतनावान् भवति, तमसा मोहात्मकेन आवृतज्ञानवान् भवतीति; स आत्मा तदा खल्वव्यक्तं नाम ज्ञः स चोदासीनः। स यदा महता स्थूलाविद्याबुद्ध्या युज्यते तदा सुषुप्तिस्थानः प्राज्ञ उच्यते। स तया बुद्ध्या यदाहमिति मन्यते तदाऽहम्मत्या खल्वविद्यया युक्तः पञ्चमहाभूतोपाधिः सन् प्रत्यगात्मा भवति, सोऽन्तःप्रज्ञः स्वप्नस्थानो भूतात्मा सूक्ष्मशरीरी। तस्य स्थूलशरीरपरिग्रहे स्थूलपञ्चभूतोपाधिकः यदा च स मनसा युज्यते तदा मनसः क्रियया उपचर्य्यते, मनःक्रियोपचरितत्वेनासावात्मा क्रियावानुपदिश्यते, तया चोपचरितक्रियया खल्वात्मा मनसि चेतनां जनयति। तेन खलु मनश्चैतन्येन पुनरात्माऽप्युपचर्य्यते, ततश्चात्मा प्रव्यक्तचेतनावानुपदिश्यते। चेतनः स खल्वात्मा नियमात्मिकां धृतिं मनसि जनयति। तया च मनोधृत्या पुनरात्मोपचर्य्यते, तस्मादात्मा धृतिमानुपदिश्यते, समयोगयुक्तया खलु धृत्या पुनरात्मा मनसि समदर्शनरूपां बुद्धिं जनयति। तया च मनःस्थया बुद्ध्या खल्वात्मोपचर्य्यते, तस्मादात्मा बुद्धिमानुपदिश्यते, समयोगयुक्तया बुद्ध्या च तयात्मा मनसि चिन्तयते कार्य्याकार्य्यं स्मरतीति यावत्। मनसि जनितया च तया स्मृत्यात्मा तदोपचर्य्यते, तस्मात् स्मृतिमानात्माऽभिधीयते। इति चैतन्यादिकाः सर्व्वा बुद्धयो महत्तत्त्वं सत्त्वरजस्तम इति त्रिगुणवैषम्येणावृतपुरुषांशरूपं ज्ञानं विद्यात्। उक्तञ्च लिङ्गपुराणे मनो मतिरित्यादिपर्य्यायेण। स एष महदुपाधिः आत्मा प्राज्ञः सुषुप्तिस्थानश्चेतोमुख आनन्दमय एवानन्दभुग् भवतीति। तत्र स्वेनाभिश्चेतन्यादिभिर्बुद्धिभिरयोगयुक्ताभिरात्मा मनसि भ्रान्तिरूपं ज्ञानं जनयति, तेनोपचर्य्यमाणः स्वस्वरूपज्ञाने भ्रान्तो भवति, भ्रमबुद्ध्या तु ता धृत्यादयो बुद्धयो मिथ्यायोगयुक्ता भवन्ति, मिथ्यायोगयुक्ताभिश्च ताभिर्धृत्यादिभिर्बुद्धिभिर्मनसा संशेते, तेन च मनःस्थसंशयज्ञानेनोपचर्य्यमाणः संशय-

मन्तव्यः, वदन्ति हि लाक्षणिकाः "प्रत्यक्षे च परोक्षे च सामीप्ये दूर एव च। एतेष्वर्थेषु विद्वद्भिः सर्व्वनाम प्रयुज्यते"। चेतनमिति ज्ञानवत्, तस्याधिकरणं स्मृतं तत्त्वमेवेति; अत

वान् भवति कोऽहमिति । तेन संशयेन ता धृत्यादयो बुद्धयोऽनियोगयुक्ता भवन्ति । अतियोगयुक्ताभिश्च ताभिर्धृत्यादिभिर्बुद्धिभिरात्मा मनसि एष देवदत्तो यज्ञदत्त एषोऽहमयमित्यादिलक्षणभेदबुद्धिरूपमहम्मतिं मन्यते, सा चाहम्मतिस्त्रिधा । तत्रादौ यथा मनसि तमोगुणोद्रिक्तया मोहजनिकाहम्मतिं विस्मृतिं जनयन्नात्मा तयाऽहम्मत्योपचर्य्यमाणो मुग्धः सन्नहमिति मन्यते । ततस्तया चाहम्मत्या रागात्मकरजोगुणोद्रिक्ताभिस्ताभिर्बुद्धिभिर्मनसि राजसं तैजसाख्यमहङ्कारांशनिश्चयबुद्धिरूपं जनयन्नात्मा तेनाहङ्कारेणोपचर्य्यमाणो दुःखजनकराजसाहङ्कारवान् भवंस्तैजसो भवति, यो हि स्वप्नावस्थायामस्मिन् पुरुषे सप्ताङ्ग एकोनविंशतिमुखोऽन्तःप्रज्ञः प्रविविक्तभुग् भवति । ततस्तेनाभिरयोगयुक्ताभिः प्रकाशात्मकसत्त्वगुणोद्रिक्ताभिस्ताभिर्बुद्धिभिर्मनसि सुखजनकं विवेकबुद्धिरूपं वैकारिकाख्यं सात्त्विकाहङ्कारं जनयन्नात्मा तेनाहङ्कारेणोपचर्य्यमाणः सात्त्विकाहङ्कारवान् भवन् वैश्वानरो भवति, यो हि जागरितावस्थायामस्मिन् पुरुषे बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् भवति । इत्येवं भ्रमाद्यज्ञानवान् अज्ञानरूपाहङ्कारत्रयवांश्चात्मा भवति, सात्त्विकाहङ्कारवान् सन् तैजसाऽहङ्कारमाश्रित्य मनसि सुखाय वासनां दुःखाय द्वेषं जनयति । ततश्च तयेच्छया द्वेषेण चोपचर्य्यमाणः सुखकामी दुःखद्वेषी भवत्यात्मा । ततश्चेच्छया यथा सुखं भवति तथा मनसि भूतसर्गाय प्रवृत्तिं दुःखञ्च यथा न भवति तथैवान्यथाभावाय द्वेषेण निवृत्तिं जनयन्नात्मा प्रवृत्तिनिवृत्त्याख्यप्रयत्नं न तेनोपचर्य्यमाणः प्रयत्नवान् भवति । तेन च प्रयत्नेन खं वायुं ज्योतिरपो भूमिं क्रमेण सृजति । तैश्चेन्द्रियाणि पञ्च चार्थान् सृजन् कोषकारकीटवत् तदष्टादशतत्त्वमय-सूक्ष्मदेहरूपकोषेण स्वयमावृतः सगुणकर्म्मणा वायुनाऽभिप्रेर्य्यमाणः प्राक्तनदैवरूपेण देवनरादियोनिष्वदुष्टायां योनावदुष्टञ्च गर्भाशयमनुप्रविश्यादुष्टशुक्रशोणितसंयोगमेत्य तन्मध्यस्थानमास्थाय अणुना कालेन मनसा पूर्व्वंतरमाकाशं सृजत्येवं क्रमेण वाय्वादिकं निर्म्माय क्रमेण शौक्रशौणितिकाहारज-रसमयानि भूतानि मिलितानि सर्व्वाण्याप्याययन् वायुना तेजसा च पाचयन्ननुक्रमेण शारीरे वक्ष्यमाणेनात्मानं गर्भरूपेण सृजति, तस्मिंश्च शरीरे हृदि तिष्ठन् चतुर्थे मासि बाह्यबुद्धीन्द्रियाण्यभिव्यञ्जयन् बाह्यचैतन्यादिकं मनसि जनयति । तेन च प्राक्तनानुभूतभावाननुस्मरति, तयाऽनु-

हेतुमाह तदर्थं हीत्यादि ।—तदर्थमिति तदुपकारार्थम्, एतेन तदुद्दिश्य प्रवृत्तिरधिकरणार्था भावारार्था इति दर्शयति । अत्र सत्त्वमादौ कृतं, तदधीनत्वादात्मशारीरक्रियायाः । यदुक्तम् 'अचेतनं'

स्मृत्या चोपचर्य्यमाणः प्राक्तनानुस्मृतिमान्, तया चाभिलषितभावानां लाभालाभाभ्यां मनसि सुखदुःखं जनयन्नात्मा सुखदुःखाभ्यामुपचर्य्यमाणः सुखी वा दुःखी वा भवति। ततो लोके जातः सन् प्राक्तनदैवानुरूपं जागरितस्थानः स्थूलरूपेण सुखदुःखं सप्ताङ्ग एकोनविंशतिमुख एवोपभुङ्क्ते। स्वप्नस्थानोऽन्तःप्रज्ञस्तथाविध एव प्रविविक्तरूपेण सुखदुःखमुपभुङ्क्ते। सुषुप्तिस्थानस्तु प्राज्ञश्चेतोमुखः आनन्दमयो ह्यानन्दमात्रमुपभुङ्क्ते इति, शुभाशुभजनकञ्च प्राक्तनदैवानुसारेणाचरति, फलञ्च तदनुरूपमिह चामुष्मिंश्च लोके मनोबुद्धिभ्यामुपभुङ्क्ते इति, आभ्यन्तरबाह्यावस्थात्रयं माण्डुक्ये शिष्याणां प्रत्यक्षगोचरमुपदिष्टं, तदवस्थात्रयोपदेशेनात्मनोऽप्यवस्थात्रयपरत्वमुन्नेयम्। सुषुप्तौ तु चेतोमात्रमुखः सुखमात्रभुक् तदा ह्यस्फुटचैतन्यमात्रमतिरिक्तानां बुद्ध्यादीनां लयात्। तदुक्तं कैवल्योपनिषदि,—"सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति। पुनश्च जन्मान्तरकर्म्मयोगात् स एव जीवः स इति प्रबुद्धः" इति। सुश्रुतेऽपि गर्भावक्रान्तिशारीरे,—"स्त्रीपुंसयोः संयोगे तेजः शरीराद्वायुरुदीरयति। ततस्तेजोऽनिलसन्निपातात् शुक्रं च्युतं योनिमभिप्रतिपद्यते संसृज्यते चार्त्तवेन। ततोऽग्नीषोमसंयोगात् संसृज्यमानो गर्भो गर्भाशयमनुप्रतिपद्यते। क्षेत्रज्ञो वेदयितेत्यारभ्य धाता वक्ता। योऽसावित्यादिभिः पर्य्यायवाचकनामभिरभिधीयते, दैवयोगादक्षयोऽव्ययोऽचिन्त्यो भूतात्मना सहान्वक्षं सत्त्वरजस्तमोभिर्दैवासुरैरपरैश्च भावैर्वायुनाभिप्रेर्य्यमाणो गर्भाशयमनुप्रविश्यावतिष्ठते" इत्याद्युक्तम्। तत्र भूतात्मनेति तन्मात्र-पञ्चभूतादि-सूक्ष्मशरीरेण। एवमेव शरीरसर्गे पञ्चभूतसंयोगात् गुर्व्वादयो गुणा जायन्ते। राशिपुरुषभावे तु सदसत् कर्म्म चाचरेदित्यतः कर्त्ता कर्म्म फलं जीवितं मरणं जन्म च मोक्षश्चेति सर्व्वं तत्र सत्त्वात्मशरीरसमुदायात्मके लोके प्रतितिष्ठते इति तत्त्वम्। एतेन तत्सङ्गृहीतमिति यत् व्याख्याय सर्व्वं कर्म्मफलादिकमिति, वक्ष्यति हि कतिधापुरुषीये,—"अत्र कर्म्म फलञ्चात्र ज्ञानञ्चात्र प्रतिष्ठितम्। अत्र मोहः सुखं दुःखं जीवितं मरणं स्वता" इति तदसमग्रवचनान्न साधु। व्याख्यानमिदमस्माभिरुक्तं कतिधापुरुषीये—"अचेतनं क्रियावच्च चेतनश्चेतयिता परः। युक्तस्य मनसा तस्य निर्दिश्यन्ते

क्रियावच्च मनश्चेतयिता परः। युक्तस्य मनसा तस्य निर्दिश्यन्त्यात्मनः क्रियाम्॥" इति। पूर्व्वं "शरीरे" इत्यादिना आयुरुक्तं, "सत्त्वमात्मा" इत्यादिना तु तदधिकरणभूतपुरुष उच्यते

विभोः क्रिया ॥" इति वचनमनुसृत्यैव । इत्थन्तु लोकोपदेशः सत्त्वशरीरयोर्धातु-साम्यासाम्यसुखदुःखलक्षणारोग्यानारोग्याश्रयत्वादात्मनो रोगारोग्यानाश्रयत्वाच्च । न च वाह्येन्द्रियादिपञ्चमहाभूतादिविकारसमुदायः शरीरमिव बाह्याभ्यन्तरेन्द्रियादि पञ्चभूतविकारसमुदायः शरीरं वाच्यमिति शरीरात्मेति द्वयं संयोगाल्लोक इत्येवमुपदेश्यमिति वाच्यं, रजस्तमोदोषजव्याध्याश्रयो हि सत्त्वं वातादिदोषजव्याध्याश्रयः शरीरं तयोश्च विभिन्नं चिकित्सितं वक्ष्यते इति सत्त्वशरीरयोः पृथगुक्तिप्रयोजनमेकं, द्वितीयन्तु सत्त्वादित्रयस्य संयोगेन परस्परमाश्रयाश्रितभावो न त्वेकाश्रयावपरावपरद्रव्याश्रयौ वकः कर्म्मसामर्थ्यं त्रयाणामेव परस्परापेक्षत्वादित्येतत्त्रयाणां प्राधान्यज्ञापनम् । जात्याकृत्यादि-भावानां हि सत्त्वादिसमुदायान्यत्वमाश्रितत्वेनाप्राधान्यान्न नैरुपदिष्टो लोकः सयुतसत्त्वादिसमुदायत्वेनोपदिष्टलोकस्यैकत्वानेकत्वपरिग्रहार्थं पूर्व्वमेव सामान्य-विशेषावुपदिष्टौ, तौ हि भावानामेकत्वपृथक्त्वपरिग्रहे हेतू । तस्मात् सत्त्वादिसमुदायत्वलक्षणसामान्येन परिगृहीतानां सुरासुरनरवानरगजगो-ऽजसरभोरभ्रखराश्वाश्वतर-तरक्षु-शशर्क्ष-मृग-मृगेन्द्रशार्द्दूलादीनां सुरासुरत्वादि-विशेषेण परिग्रहः कार्य्य इत्यतः सामान्यविशेषौ न पुरुषषट्कत्वेनोप-दिष्टाविति ।

तदर्थं हीत्यादि । तस्य चेतनस्य पुरुषस्यार्थं, हि यस्मादयं हिताहितसुखदुःख-रूपायुषो हिताहितमारोग्यानारोग्यादिक्षणमुहूर्त्तादिप्रमाणाप्रमाणं स्वलक्षणञ्च यथोक्तं तादृशोऽयमायुर्व्वेदः प्रकाशितो ब्रह्मणेति शेषः, तस्मात् तदेवाधिकरणं रोगारोग्यं हि सत्त्वशरीराश्रितं, तस्मात् सत्त्वशरीराभ्यां पुरुषोपदेशः कृतः ; आत्मा च नाधिकरणं तस्मादात्मवान् लोक इत्युपदेशो न कृतः । शरीरेन्द्रिय-सत्त्वात्मसंयोगश्चायुस्तच्चास्मिन्नेव चेतनपुरुषे तत्प्रमाणाप्रमाणञ्चात्रैव तस्य हिताहितञ्च सत्त्वादिसमुदायस्यैवोपसेव्यमित्येवमुक्तं पम् । अत्रात्मनः प्राधान्येऽपि सत्त्वात्मोपादानं यत्पूर्व्वं कृतं तेनात्मनः शरीरपरिग्रहे सत्त्वक्रियाया हेतुत्वं ख्यापितं सत्त्वात्मनोः संयोगेनात्मनः क्रियावत्त्वेन देहित्वात् ॥ १९ ॥

इति न पुनरुक्तम् । अत्र चात्मग्रहणेनेह बुद्ध्यहङ्कारादीनां ग्रहणम्, शरीरग्रहणेनेन्द्रियाणामर्थानाञ्च शरीरसम्बन्धानां ग्रहणं व्याख्येयम् ॥ १९ ॥

खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः।
सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम् ॥ २० ॥

गङ्गाधरः—ननु तत्र सर्व्वं प्रतिष्ठितमिति यदुक्तं तत्सर्व्वं किन्तावदित्याकाङ्क्षायां सत्त्वात्मशरीरसमुदायस्य यद्यन्मयत्वं प्रकृतिभूततत्तत्कारणं तावद्वक्तु प्रधानं कारणेषु द्रव्यमादौ निर्दिशति न तु पूर्व्वोद्दिष्टसामान्यविशेषादिक्रमेण। खादीनीत्यादि।—सत्यप्यात्मनः सर्व्वेभ्यः प्राधान्ये श्रोत्रादीन्द्रिययोगेणैव चैतन्यहेतुत्वादिन्द्रियाणां भूतमयत्वेनादौ भूतानां निर्देशस्ततश्चात्मनस्ततश्च मनसोऽप्यात्मनः शरीरपरिग्रहे मनःक्रियाया हेतुत्वात्। कालदिशोः सर्व्वत्रैव परिणामि-समवायि-हेतुत्वेन पश्चान्निर्देशः कृतः। खादीनीति कतिधापुरुषीये वक्ष्यन्ते—"महाभूतानि खं वायुरग्निरापः क्षितिस्तथा। शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्गुणाः" इत्यनेन तत्रात्यनभिव्यक्तशब्दतन्मात्रमत्राकाशं विवक्षितं न त्वेतदप्रतिघातस्वभावमाकाशम्। क्रमेण स्थूलाव्यक्तस्पर्शतन्मात्रचलस्वभावो वायुः। मिलितरक्तश्वेतकृष्णसाधारणभूतम् अव्यक्तरूपतन्मात्रमयोष्णस्वभावं तेजोऽग्निः। ततः स्थूलाव्यक्तरसतन्मात्रद्रवत्वस्वभावा आपः। अव्यक्तगन्धतन्मात्रमयी खरत्वस्वभावा क्षितिः। इत्यत्यनभिव्यक्तशब्द इत्याकाशादिषु पञ्चस्वेव श्लक्ष्णखरत्वादयो गुणा अत्यनभिव्यक्ता एव सन्ति ये पाञ्चभौतिकेषु व्यक्ता भवन्ति। अत्यनभिव्यक्तत्वेऽपि शब्दस्याकाशगुणत्वेनोपदेशः सगुणमेव द्रव्यमुत्पद्यते न तु निर्गुणमिति ज्ञापनार्थम्। वैशेषिके तु नाकाशस्य शब्दगुणोऽत्यनभिव्यक्तत्वादुक्त इति। पूर्व्वपूर्व्वभूतानुप्रविष्टोत्तरोत्तरभूतेषु वाय्वादिषु स्थूलेष्वेषां प्रकृतिभूतहेतुत्वात् तानि पूर्व्वपूर्व्वानुप्रविष्टानि वाय्वादीनि चत्वारि भूतान्यत्र न वाय्वादिशब्दवाच्यानि। आत्मा चेतनाधातुः संसारसंसरणादिस्वभावो निष्क्रियो निर्गुणः सत्त्वादियोगेन चैतन्यहेतुः प्रकाशरूपोऽव्यक्ताख्यः। मनश्चाणु सर्व्वेन्द्रियचेष्टाहेतुभूतं स्वार्थात्मसम्पदायत्तचेष्टात्वस्वभावं सत्त्वप्रधानत्रिगुणविकारात्मकमूर्त्तिमत्। कालश्चक्रवद्भ्रमणेनाविरतगमनशीलत्वस्वभावः सर्व्वभावपरिणतिहेतुः। सुश्रुतेऽप्युक्तं—'कालो नाम भगवान् स्वयम्भूरनादि-

चक्रपाणिः—सम्प्रति गुणाभिधानं क्रमप्राप्तमुल्लङ्घ्य द्रव्याणि निर्दिशति गुणाधारतया द्रव्यस्य प्राधान्यमुच्यते,—सूत्रे च सामान्यञ्च विशेषञ्चेत्यादौ गुणत्वादौ निर्दिशति। गुणानामेव रसादीनां प्रायः शास्त्रे कार्म्मकत्वमुपदक्ष्यन्ते, अत एवात्रे मनःप्रकार्प्यार्थे मधुरादिरसद्वारा सर्व्वगुणाद् कर्म्माणि

मध्यनिधनोऽत्र रसव्यापत्सम्पत्ती जीवनमरणे च मनुष्यादीनामायत्ते। स सूक्ष्मामपि कलां न लीयते इति कालः, कलयति कालयति वा भूतानीति काल इति"। एष च कालो नाम हरिर्वासुदेवो विष्णुनामकालानुप्रविष्टादव्यक्तादव्यक्तरूपः परः पुरुषः परव्योमरूपः शिवः सत्त्वादिगुणत्रययोगाच्छीतोष्णवर्षलक्षणः संवत्सर एव कार्य्ये कारणसंज्ञः। कालचक्रस्थितं हि सर्व्वं जगत्। तद् यथा—ब्रह्म निष्क्रियं निर्गुणं पूर्व्वमासीत् तच्च प्रथमं लोहितमिव तेजो भूत्वा शुक्ला इवापोऽसृजत ताश्चापः कृष्णमिवान्नमसृजन्त। तास्तेजोऽबन्नाख्यास्तिस्रो देवता अनुप्रविश्य तद्ब्रह्म प्रथमं लोहितशुक्लकृष्णवदाभासमाना गायत्री वाग्देवता खल्वजा बभूव, सा चार्द्धेन परव्योमरूप आदिपुरुषः शिवो महाकाल ईश्वरः सर्व्वत्रैव गायत्रीरूपज्योतिष्मान् स्वाङ्गुलिमानेन चतुरशीत्यङ्गुलत्रिपात् पुरुषस्तस्य पञ्चाशदङ्गुलिमितः पादादिनाभिपर्य्यन्तोऽव्याकृतदेहः तद्देशस्थ एष सत्यो वासुदेवः कालः स एकांशेन चिद्भूत्वा चित्सम्प्रसादः क्षेत्रज्ञो नाम द्वितीयोऽजः पुरुषो बभूव, तच्चिदसम्प्रसादो गुणांशमिलितसमतमोरजःसत्त्वरूपप्रधानं ब्रह्मा नाम स्वयंभूर्बभूवेति, तेन च कालेन भ्राम्यमाणं प्रधानं क्षेत्रज्ञाधिष्ठितं त्रिगुणतो वृद्धिलक्षणं विषमदशमांशेनाव्यक्तसमत्रिगुणरूपं भूत्वा पुनरव्यक्तं नामानन्दमय आत्मा बभूव, स खलु संहतरूप आत्मा द्रव्येषु पठितः। स पुनः समत्रिगुणवैषम्यरूपो महानेव स चोच्यते, इत्येवमहङ्कारादयः सर्व्वे भावाः कालेन सततं भ्रमता भ्राम्यमाणाः क्रमेण परिणता आसन्निति तत्त्वम्। वैशेषिके कणादेनाप्युक्तम्। "अपरस्मिन् परं युगपच्चिरं क्षिप्रमिति काललिङ्गानि।" द्रव्यत्वानित्यत्वे वायुना व्याख्याते। तत्त्वं भावेन व्याख्यातं नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति। दिशश्चेति—दिशत्युपदिशति लोकानयमस्मात् पूर्व्वः पश्चादयमस्मादित्यादिरूपेण याभिस्ता दिश इति, तथाविधोपदेशव्यापारस्वभावा अप्रतिघातरूपाः। बहुवचनं नियमेनापेक्षत्वेन बहुत्वख्यापनार्थम्। एतेन चैका दिक् प्राच्याद्युपाधिमती न नानेतिपरवचनं नानात्मा सन्नप्येक आत्मेतिवत् नियमतो वस्त्वन्तरापेक्षत्वादिहोक्तं दिश इति। उक्तञ्च वैशेषिके शास्त्रे कणादेन। "इत इदमिति यतस्तद्दिश्यं लिङ्गम्। आदित्यसंयोगाद्भूतपूर्व्वाद्भविष्यतो भूताच्च

च द्रव्यस्य वक्ष्यति; किञ्च सर्व्वप्रधानं यज्जीवितं तदेव संयोगगुणरूपमित्यग्रे तत्र गुणग्रहणसूचनं; स च संयोगगुणः "सत्त्वमात्मा" इत्यादिना प्रथममुक्त एव; विशेषगुणेषु तु द्रव्यं प्रधानमिति द्रव्यमुच्यते। खादीनीत्यात्राशङ्का कस्मात् प्रधानभूतोऽपि प्रथमं नोक्तः? उच्यते—

प्राची। तथा दक्षिणा प्रतीच्युदीची च।" एतेन दिगन्तरालानि व्याख्याता- नीति। दिशश्चेति चकारः खाद्यपेक्षया समुच्चये एव इत्यर्थे वा, तेन एष द्रव्य- संग्रहः। द्रव्यन्तु स्वयमत ऊर्द्ध्वं वक्ष्यते यत्राश्रिता इत्यादिना। तेन एष लोकस्थानां कार्य्यभूतानां द्रव्याणामपरिसङ्ख्येयानां कर्म्मगुणाश्रयसमवायि- कारणलक्षणः।

ननु नवकोऽयं द्रव्यसङ्ग्रहो न भवति श्रोत्रादीनां दशेन्द्रियाणामतिरिक्त- त्वादिति चेन्न. पञ्चबुद्धीन्द्रियाणां श्रोत्रादीनामात्मकृतान्तरीक्षादि पञ्च- भूतात्मकत्वेनाकाशाद्यनतिरिक्तत्वाद्घटादीनामिव। आहङ्कारिकाणां दशाना- मिन्द्रियाणामिन्द्रियं क्रियागुणव्यपदेशाभावात् प्राक्स्थूलशरीरेन्द्रियोत्पत्तेरसद्भाव इष्यते सन्त्यपि तान्यसन्तीति न द्रव्यमध्ये पठितानि। प्राक् सर्गाद् ब्रह्म यथा ह्यसदुच्यते—असद्वा इदमग्र आसीदिति। न च मनस्तद्वदनतिरिक्त भूतेभ्यः। प्रकाशलक्षणसत्त्वगुणबहुलरागात्मकरजोमोहात्मकतमोगुणमयत्वात् पृथङ्मन उपादत्तम्। शरीरारम्भे गर्भाशयगतं शुक्रशोणितमनुप्रविश्यात्मा यथा पञ्चमहा- भूतानि सृजति तथा त्रीनपि गुणान् सत्त्वादीन् सृजति. तैर्मोहात्मकतमोगुणाप- कर्षैस्त्रिगुणैः समवायेन मिलितैर्विशिष्टापूर्व्वत्वाद्बाह्येन्द्रियचेष्टाहेतुभूत-स्वार्थात्मसम्प- दायत्तचेष्टस्वरूपत्वेन खाद्यष्टाभ्यो ह्यतिरिक्तं जातम्। तथा च सत्त्वप्राधान्यात् सत्त्वसंज्ञा च तस्येति। कश्चित्तु मनोऽपि पाञ्चभौतिकं परन्तु श्रोत्रादीना- माकाशादिप्राधान्यादाकाशीयत्वादिव्यपदेशवन्न व्यपदेष्टुमाकाशीयत्वादिकं शक्यते मनसः समपञ्चमहाभूतारब्धत्वादिति सर्व्वेन्द्रियव्यापकस्पर्शनेन्द्रिय समवायात् सर्व्वेन्द्रियव्यापकत्वस्वभावेन सर्व्वेन्द्रियाणां स्वस्वकर्म्मणि चेष्टाहेतुभूतत्वं न च बाह्येन्द्रियाणामुपघाते स्वयं मनस्तत्कर्म्मकरं भवत्या- भ्यन्तरत्वात् न हि हस्तमन्तरेण दात्रमात्रेण छेदनं सम्पद्यते प्रतिनियत- शक्तिकत्वाद्भावानामिति वदन्ति तन्नानुभवसिद्धं स्पर्शादिभौतिकगुणयोगापत्तेः। मनो ह्यशब्दमस्पर्शमरूपमरसमगन्धमगुरु बुद्ध्यात्मवत् परमसूक्ष्मं भौतिकपरमाणुभ्य इति। न च विशिष्टापरापूर्व्वमूर्त्तिमत् शब्दादिगुणवदप्यतीन्द्रियं यथा श्रोत्रादिक- मिन्द्रियं खादिगुणशब्दादियोगादपि सूक्ष्मत्वादतीन्द्रियं खादिभ्यो नातिरिक्तञ्च।

शरीरस्येह कर्ध्वाधारोग्याधिकरणतया प्रधानत्वात् तदारम्भकादीनि खादीन्येवोच्यन्ते, नात्मा, तस्य निर्व्विकारत्वात्, वचनं हि "निर्व्विकारः परस्त्वात्मा" इत्यादि; खादीनि च "महा- भूतानि खं वायुरग्निरापः क्षितिस्तथा" इत्यनेन क्रमेणोक्तानि भूतानि अनागतवेक्षणेनैवोच्यन्ते।

समपाञ्चभौतिकत्वे मनसो ह्यभौतिकवस्तुग्रहणासामर्थ्यात् ब्रह्मज्ञानादिसाधिनीं बुद्धिमुत्पादयितुं न सामर्थ्यं सम्भवति। भौतिकाभौतिकं निखिलं हि मनसो विषयः। यथा हि बुद्ध्या ब्रह्मज्ञानमुत्पद्यते सा च नोत्पद्यते भौतिकभावेन। भूतानि हि भूतमयानि च जगन्ति नियमतः सत्त्वरजस्तम इति गुणत्रयविवर्त्तित-ब्रह्ममयाणि केवलब्रह्मविरोधीनि भवन्ति, रागलक्षणेन हि रजसा प्रवर्त्तकेन सङ्ग उत्पाद्यते सङ्गस्तु खलु प्राप्ते सत्यर्थे प्रीतिसम्पन्नताविशेषेण तत्रार्थे चासक्तिरिति द्वन्द्वात्मकः। प्राप्तयभिलापलक्षणा तृष्णा च रजसा जन्यते। ताभ्यां खलु सङ्गतृष्णाभ्यामेवादृष्टदृष्टार्थकर्म्मस्वावध्यते पुरुष इति। तमश्चावरणशक्तिरूपा-ज्ञानलक्षण चिद्गुणांशस्याप्रसादांशजं सर्व्वलोकमोहं जनयित्वा तेन चालस्य-निद्राप्रमादैः पुरुषानावध्नाति। सत्त्वं पुनर्निरुपद्रवं प्रकाशकलक्षणम् स्फटिक-मणिवन्निर्म्मलञ्च ज्ञानमुत्पाद्य पुरुषाणां तेन च सङ्गमयति पुरुषान्। निरुपद्रवत्वे-नान्तःशान्तत्वात् तु सुखमुत्पाद्य च तेन पुरुषान् सङ्गमयतीत्यत्मात् रजस्तमोभ्यां विनिर्मुक्तत्वे जाते सति च शुद्धसत्त्वात्मके मनसि निर्म्मलत्वेनान्तःशान्तत्वप्रकाशक-त्वाभ्यां रजोजनितसङ्गतृष्णाजन्यकर्म्मबन्धनात् तमोजनितभ्रान्तिजन्यालस्य-निद्राप्रमादेभ्यश्च विनिर्म्मुक्तस्य ब्रह्मज्ञानमुत्पद्यते इति तद्रजस्तमोविनिर्म्मुक्तो हेतुः समाधिविशेषाभ्यासस्तेनोत्पद्यते परमार्थतस्तत्त्वज्ञानं खादिकमिदं सर्व्वं द्रव्यगुणकर्म्माख्यं यत् तद्विकारभूतं नामधेयं तस्य तस्य प्रकृतिरित्येव ज्ञानं सत्यं खादिसंज्ञकं सर्व्वं मिथ्येति। तत्त्वज्ञानात् खादितत्तद्विकारज्ञानं व्यवहार-तत्त्वज्ञानमेव मिथ्याज्ञानमपैति, ततो रागद्वेषमोहापायो भवति, तेषामपाये प्रवृत्त्य-पायो भवति प्रवृत्त्यपाये निःशेषा निवृत्तिर्मुक्तिर्भवति। श्रूयते ह्येवम्। य एष सम्प्रसाद आत्माऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपे-णाभिनिष्पद्यते स उत्तमः पुरुष इति, स न द्रव्यं न गुणो न कर्म्म न समवायो न च सामान्यं विशेषश्चेति।

नन्वेवमेष नवको वै द्रव्यसंग्रहो नोपपद्यतेऽसमग्रवचनात् सत्त्वात्म-शरीरसमुदायस्य चेतनाचेतनस्याप्राणिनश्च घटादेरतिरिक्तत्वादित्यतः प्रकृत्या-त्मकत्वं विकाराणामिति ख्यापनायाह—सेन्द्रियमित्यादि। इन्द्रियाणि

आत्मादीनाञ्च तथाऽव्यवहितस्य पूर्व्वनिर्देशः। द्रव्यसंग्रह इति करचरणहरीतकीत्रिवृतादयसंख्येय-भेदभिन्नस्य कार्य्यद्रव्यस्य कारणद्वारा संक्षेप इत्यर्थः।

सम्प्रकार्य्यद्रव्याणामपि व्यवस्थामाह, सेन्द्रियमित्यादि।—निरिन्द्रियमित्यत्र निःशब्दोऽभावे

श्रोत्रादीनि बाह्यानि बुद्धिकर्म्मणोः करणानि दश तैर्युक्त खादिनव-द्रव्यारब्धं यदिदं पुरुषसंज्ञं तदपि खादिद्रव्यारब्धत्वाद् द्रव्यं द्रव्यसंज्ञं चेतनं वृक्षादिकमचेतनञ्चान्तश्चैतन्येऽपि नरादिवद्बाह्याभ्यन्तरचैतन्याभावात् नराद्य-पेक्षयैवाचेतनं न तु घटादिवच्चैतन्याभावादचेतनं तथा तथाविधं निरिन्द्रियं यदिदमात्ममनोऽतिरिक्तं सप्तद्रव्यारब्धं घटादिकं तदपि द्रव्यं गुणकर्म्माश्रयत्वात् तु घटादीनां वृक्षादीनां नरादीनाञ्च द्रव्यत्वानपायात्। ननु वृक्षाद्यचेतनानां किमन्तश्चैतन्यमस्ति, कुतश्च तदुपलभ्यते इति, उच्यते, दृश्यते हि प्रत्यक्षं सूर्य्यभ्रमणमनुभ्रमति सूर्य्यभक्ता। शृगालादिवसामन्त्रेणातिशयफलञ्च फलति बीजपूरकम्। तथा जलदनादश्रवणाच्च फलति लवली। फलाढ्यता च चूतानां भवति मत्स्यवसाभिषेकेण। तच्च घ्राणेनानुमीयते। तथा भवति सुखमशोकस्य कामिनीचरणतलाभिहननेन तेन चास्य स्पर्शनमनुमीयते। तथा "अभिवादितस्तु यो विप्रो नाशिषं सम्प्रयच्छति। श्मशाने जायते वृक्षो गृध्रकङ्कोपसेवितः"॥ तथा "वृक्षगुल्मं बहुविधं तथैव तृणजातयः। तपसा धर्म्मरूपेण शब्दिता कर्म्महेतुना॥ अन्तःसंज्ञा भवन्त्येते सुखदुःखसमाश्रिताः। एतदन्ताश्च गतयो ब्रह्माद्यैः समुदाहृताः॥" इत्यादिवचनात् तस्मात् श्रवणस्पर्शन-नयनरसनघ्राणानीति पञ्चबुद्धीन्द्रियाणि द्विविधानि नित्यानि निरावरण-सावरणानि। तत्राभ्यन्तराणि सावरणानि तेषां शरीरारम्भे भौतिकभावे बाह्याधि-ष्ठानश्रोत्राद्यभावात्। बाह्याधिष्ठानसंश्रये बाह्यानि च निरावरणानि न च तेभ्यः पृथगिन्द्रियाणि भवन्ति तस्माच्चेतनमपि द्विविधमन्तश्चेतनं बाह्याभ्यन्तर-चेतनञ्च। यद्यपि तत्त्वादात्मैव चेतनो न तु सत्त्वं शरीरं वा इन्द्रियं वा, यदुक्तं "चेतनावान् यतश्चात्मा ततः कर्त्ता निरुच्यते" इति। तथापि, "आत्मा ज्ञः करणैर्योगाज्ज्ञानं तस्य प्रवर्त्तते। तदयोगादभावाद्वा करणानां निवर्त्तते॥" इति। एवं निर्विकारः परस्त्वात्मेत्यादिवचनाच्छरीरेन्द्रिययोश्चैतन्यमुक्तम्। तत्र सत्यपि वृक्षादीनामन्तश्चैतन्ये वहिश्चैतन्याभावेनाचेतनत्वव्यवहारः, वहिश्चैतन्यं हि सुकृतदुरितसाधनविधायैकर्म्मसाधनत्वेन प्रधानम्। तच्च वहिरिन्द्रिया-भ्यन्तरेण न सम्भवति। एवं निरिन्द्रियत्वमपि द्विविधमाभ्यन्तरेन्द्रियरहितत्वं

निम्नधिकमितिवत्। अत्र सेन्द्रियं चेतनमित्येतावतैवार्थापत्त्या निरिन्द्रियमचेतनमिति लब्धे पुनस्तद्वचनम् एवम्भूतार्थापत्तेरनैकान्तिकत्वात् बोद्धव्यं, यथा नवज्वरे दिवास्वप्नादि निषिद्धम्, अर्थात् जीर्णे ज्वरे तर्हि आपद्यते, न चैवं, तत्र तेषां दिवास्वप्नादीनां निषिद्धत्वात्; तस्मात्

बाह्येन्द्रियग्राह्यत्वञ्च, तद्‌द्रव्यादचेतनमपि द्विविधं, बाह्याचेतनमन्तश्चेतनं वृक्षादि। बाह्याभ्यन्तराचेतनं घटादि। इत्थञ्च जरायुजानां मनुष्यादीनामण्डजानां सर्पादीनां स्वेदजानां मशकादीनामुद्भिज्जानां मण्डूकदुन्दुभादीनां चतुर्द्धा प्राणिनामुभयचेतनत्वम्, उद्भिज्जानां वानस्पत्यादीनामन्तश्चेतनत्वं बाह्याचेतनत्वञ्च। घटादीनां बाह्याभ्यन्तराचेतनत्वमिति बोध्यम्। एतेन देवादीनां ब्रह्मादीनां प्राणिनामारम्भकाणि नव द्रव्याणि खादीनि, घटादीनामात्ममनोवर्जितानि सप्त खादीनि। तैः सचेतनत्वेन विशिष्टपूर्वमूर्तिमत्त्वात् खादिगुणकर्मातिरिक्तगुणकर्मवत्त्वाच्च खादिभ्यो विशेषश्चाविशेषश्च तदात्मकत्वात् तद्गुणकर्मवत्त्वाच्च। तद्यथा—विविधव्यक्तशब्दश्च विविधव्यक्तस्पर्शश्च विविधव्यक्तरूपश्च विविधव्यक्तरसश्च विविधव्यक्तगन्धश्च घटादिर्भवति, पुमांश्च तथाविधो भवति, अपि च गुर्वादिगुणसमुदायश्च बुद्धिमांश्चेच्छावांश्च सुखवांश्च दुःखवांश्च तथा बुद्धीच्छादिशब्दादिविशेषाणां विशेषेण बुद्ध्या चाबुद्ध्या च चेष्टासु प्रयत्नवांश्च प्रभवति। तत्र खादिषु पुनः खमेकविधाव्यक्तशब्दमृदुत्वलघुत्वसूक्ष्मत्वश्लक्ष्णत्वगुणं निसर्गात्। स्वयञ्च वक्ष्यन्ते हि मृदुलघुसूक्ष्मश्लक्ष्णशब्दगुणबहुलान्याकाशात्मकानि द्रव्याणि। वायुरपि एकविधाव्यक्तस्पर्शोऽनभिव्यक्तलघुत्वशैत्यरौक्ष्यखरत्ववैशद्यसौक्ष्म्यगुणः। स्पर्शस्तु साधारणरूपश्चलनस्वभावस्तु प्रतिघात इत्येते वायोर्गुणा निसर्गात्। पूर्वभूतानुप्रवेशात् कार्य्यरूपे द्व्यात्मके वायावव्यक्तशब्दलघुत्वरौक्ष्यखरत्ववैशद्यसौक्ष्म्यगुणाः पूर्वतः किञ्चित्स्फुटा अथवाव्यक्ताः, स्पर्शस्तु व्यक्त एव शैत्यमभवत्। वक्ष्यन्ते हि लघुशीतरूक्षखरविशदसूक्ष्मस्पर्शगुणबहुलानि वायव्यानि। ज्योतिश्चापि एकविधव्यक्तरूपाव्यक्तौष्ण्यसौक्ष्म्यरौक्ष्यलाघववैशद्यगुणं निसर्गात्। पूर्वपूर्वभूतानुप्रवेशात् त्र्यात्मके कार्य्ये तेजसि शब्दोष्णस्पर्शावीषद्व्यक्तौ चलनञ्चोर्द्ध्वज्वलनं रूपञ्च लोहितम्, वक्ष्यन्ते हि उष्णतीक्ष्णसूक्ष्मलघुरूक्षविशदरूपगुणबहुलान्याग्नेयानि। जलमपि चैकविधव्यक्तरसाव्यक्तगौरवद्रवत्वस्निग्धत्वशैत्यमान्द्यसरत्वसान्द्रत्वमृदुत्वपैच्छिल्यगुणं निसर्गात्। पूर्वभूतानुप्रवेशात् तु शब्दशीतस्पर्शशुक्लरूपरसाव्यक्तास्तत्र चलनमधोगमनं स्पर्शश्च

त्रिविधशिष्यबुद्धिहिततयाऽन्यूनमपि साक्षादेवोच्यते, वदन्ति हि न्यायविदो "व्याख्यानाद्दूरं करणम्" इति। यद्यपि चात्मैव चेतनो न शरीरं, नापि मनः, यत उक्तं "चेतनावान् यतश्चात्मा ततः कर्त्ता निरुच्यते" इति। तथापि सलिलौष्ण्यवत् संयुक्तसमवायेन शरीरादपि चेतनम्।

शीतं रूपञ्च शुक्लं संसर्गात्। गुरुत्वद्रवत्वस्निग्धत्वमन्दत्वसरत्वसान्द्रत्वमृदुत्वपैच्छिल्यगुणा अभिव्यक्ताः। वक्ष्यन्ते हि गुरुद्रवस्निग्धशीतमन्दसरसान्द्रमृदुपिच्छिलरसगुणबहुलान्याप्यानि। भूमिश्चैकाऽव्यक्तगन्धाभिव्यक्तगुरुत्वखरत्वकठिनत्वमान्द्यस्थैर्य्यवैशद्यसान्द्रत्वगुणा निसर्गात्। पूर्व्वभूतानुप्रवेशात्तु रसवती च रूपवती च स्पर्शवती च शब्दवती च. तत्र रसादयश्चैषव्यक्तास्तत्र स्पर्शः खरश्चलनञ्चाधस्तात् स्थिरं रूपञ्च कृष्णं संसर्गात्। वक्ष्यन्ते हि गुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूलगन्धगुणबहुलानि पार्थिवानि। आत्मा पुनश्चेतनाधातुर्निष्क्रियो निर्गुणः सच्चिदानन्दः आदिरनादिः स्वतन्त्रः सर्व्वगो वशी विभुः साक्षीति. स च सत्त्वकरणो गुणमुपाददानो जीवाख्यः सुखी च दुःखी च इच्छावांश्च द्वेषवांश्च स्मृतिमांश्च धृतिमांश्च बुद्धिमांश्च चेतनावांश्चाहङ्कारवांश्च प्रयत्नवांश्च भवति। मनस्तु रजस्तमोऽतिनिष्कृष्टसत्त्वगुणबहुलात्मकं परमसूक्ष्मं च। तच्च लोके त्रिविधं. शुद्धं राजसं तामसञ्च; तेषान्तु त्रयाणामपि सत्त्वानामेकैकस्य भेदाग्रमपरिसङ्ख्येयं तरतमयोगाच्छरीरयोनिविशेषेभ्यश्चान्योन्यानुविधानत्वाच्च शरीरं ह्यपि सत्त्वमनुविधीयते सत्त्वञ्च शरीरम्। तत्र कतिचित् सत्त्वभेदाः साहश्यान्निर्देशेन। सप्तविधं शुद्धं ब्राह्मादिभेदात्। षड्विधं राजसमासुरादिभेदात्। त्रिविधं तामसं पाशवादिभेदादिति। वक्ष्यते महति गर्भावक्रान्त्यां शारीरे। कालोऽपि निष्क्रियो निर्गुणः परममहत्परिमाणोऽपि कार्य्यगुणगन्धादिगुणाभावात् स च लोके संवत्सरः शीतोष्णवर्षलक्षणः। एवं दिगपि खादिभ्योऽतिरिक्ता प्रकृतिभूता वैकारिकादहङ्कारादाकाशस्याधिदेवता दिक् क्रियागुणव्यपदेशाभावादसती न च नास्ति न चास्तीत्युच्यते लोकसर्गे त्वभिव्यज्यते प्राच्यादिरूपेण। न चायमाकाशोऽस्पर्शत्वात्। स्पर्शवत्त्वाभावेऽपि इति इहेमिति यतः सा दिगिति लिङ्गात्। न च वायुरस्पर्शत्वात् वायुः पुनः स्पर्शवान् नीरूपः तत्स्वभावत्वात् नापि ज्योतिर्भवति अरूपत्वात् ज्योतिस्तु रूपवत्। नापि च जलं रसद्रवत्वाभावात्। जलञ्च रसवद्द्रव्यञ्च। नापि क्षितिरगन्धत्वात्; क्षितिस्तु गन्धवती। नाप्यात्मा चैतन्याहेतुत्वात् आत्मा हि चैतन्ये हेतुः। न च मनोऽर्थाग्रहणात् मनो ह्यर्थं

इदमेव चात्मनश्चेतनत्वं, यदिन्द्रियसंयोगे सति ज्ञानशालित्वं, न निकृष्टस्यात्मनः चेतनत्वं, यदुक्तम् "आत्मनः करणैर्योगात् ज्ञानं तस्य प्रवर्त्तते" इति। अत्र सेन्द्रियत्वेन वृक्षादीनामपि चेतनत्वं बोद्धव्यं, तथा हि सूर्य्यभक्ताया यथा यथा सूर्य्यो भ्रमति तथा तथा भ्रमणात् दृष्टानु-

गृह्णाति। नापि कालश्चक्रवद्भ्रमणस्वभावेन सर्व्वकलनाभावादिति। चेतना-
चेतनविशिष्टद्रव्याणां प्राणिनामप्राणिनां खादिभ्यश्च विशेषो गुणविशेषेण कर्म्म-
विशेषेण च विशेषात्। खादिभ्यो लोकानां च ततानामचं ततानाञ्च विशेषो
यथा—आकाशं निष्क्रियमपि भूतान्तरयोगेण तत्क्रियोपचारात् क्रियावत्।
आकाशात्मकानि च द्रव्याणि मार्द्दवशौषिर्य्यलाघवकराणि। वायुः क्रियावान्,
वायव्यानि च रौक्ष्यग्लानि-विचार-वैशद्यलाघवकराणि। ज्योतिश्च सक्रियं
तदात्मकानि पुनर्द्रव्याणि दाहपाकप्रभाप्रकाशकराणि। आपस्तु सक्रियाः
आप्यानि तु द्रव्याण्युपक्लेदस्नेहबन्धविष्यन्दमार्द्दवप्रह्लादकराणि। पृथिवी च
क्रियावती पार्थिवानि द्रव्याणि पुनरुपचयसन्धानघातबृंहणगौरवस्थैर्य्यकराणि
भवन्त्याकाशीयादिगुणप्रभावैः। एवन्तु पृथिव्यम्बुगुणबाहुल्यान्मधुर इति
सुश्रुतवचनात्, पृथिव्यापश्च सौम्या इत्यभिप्रेत्य स्वयमुक्ताश्च सोमगुणातिरेकात्
मधुरो रस इत्यस्मात् सौम्यमधुररसवद् द्रव्यं सर्व्वं सौम्यञ्च कफं वर्द्धयति
समयोनित्वात्। मधु पुनर्नाशयति स्वप्रभावेन। तथा पृथिव्यग्निभूयिष्ठत्वादम्लस्तद्
रसञ्च द्रव्यं सर्व्वं पित्तमाग्नेयं वर्द्धयति समयोनित्वात्; दाडिमामलके त्वम्ले
द्रव्ये नाशयतः स्वप्रभावात्। एवं तोयाग्निभूयिष्ठत्वाल्लवणो रसस्तद्रसवच्च द्रव्यन्तु
सर्व्वमाग्नेयं पित्तं वर्द्धयति समयोनित्वात्; सैन्धवन्तु नाशयति प्रभावात्।
वाय्वग्निभूयिष्ठत्वात् कटुको रसस्तद्रसश्च द्रव्यं सर्व्वमाग्नेयं पित्तं वर्द्धयति
समयोनित्वात्; पिप्पलीशुण्ठ्यौ नाशयतः स्वप्रभावात्। वाय्वाकाशातिरेकात्
तिक्तो रसस्तद्रसञ्च द्रव्यं सर्व्वं वातं वर्द्धयति समयोनित्वात्; न तु वेत्राग्रपटोलपत्रं
स्वप्रभावात्। पवनपृथिव्यतिरेकात् कषायस्तद्रसञ्च द्रव्यं सर्व्वं वायव्यत्वात्
वातं वर्द्धयति पार्थिवत्वात् तु स्तम्भयति; फलत्रयन्तु नाशयति त्रिदोषं विरेचयति
मलं स्वप्रभावात्। एवं त्रिवृत्तुल्या दन्ती स्वप्रभावात् विरेचयति।
विषं विषं हन्ति मणिविशेषश्च विविधञ्च कर्म्म करोति स्वप्रभावात्।
इति खादिभ्यो विशिष्टापरापूर्व्वमूर्त्तिगुणकर्म्मशालित्वेन खाद्यारब्धमभिन्नमपि
भिन्नमिति बोध्यम्। एवं मन्त्रोऽपि प्रतिनियततत्तद्वर्णानुपूर्व्विकत्वेन
प्रतिनियतशुभाशुभजनकप्रभाववान् स्वघटकवर्णेभ्यो विशिष्टापरापूर्व्वस्वरूपः

मीयते, तथा कदली मेघस्तनितश्रवणात् फलवती स्यात्, बीजपूरकमपि शृगालादिवसागन्ध-
मात्रेण फलवद् भवति, चूतानाञ्च मत्स्यवसासेकात् फलाढ्यतया रसनमनुमीयते, अशोकस्य च
कामिनीपादतलाहतिसुखिनः स्तवकितस्य स्पर्शनानुमानम्। स्मृतिश्चानुमानं द्रढयति यथा—

पृथगेवेति ज्ञेयम्। प्रभावो हि प्रकर्षेण स्वघटकानां समुदायत्वे भाव उत्पत्तिः स्वघटकानां भावनाभ्योऽतिशयेन भावो नाम। स्वारम्भकद्रव्यक्रिययारब्धो विजातीयक्रियाप्रभावः स्वारम्भकद्रव्यगुणकर्म्मभिर्निष्पादयितुमशक्यकर्म्मकृत् स चाचिन्त्यः स्वघटकीयभावातिशयितत्वात्। एष च प्रभावः सर्व्वस्मिन् विशिष्ट-वस्तुनि न परिणम्यते, तथाविधकारणविशेषायोगात्। वक्ष्यते हि स्वयमत्र त्रीणि कारणानि द्रव्याणां चेतनाचेतनानां द्रव्यगुणकर्म्माणीति। तानि च सन्त्यपि सर्व्वेषां चेतनाचेतनानां द्रव्याणामारम्भकत्वेन कालविशेषेण भूत-पञ्चकन्यूनातिरेकविशेषेण योगविशेषेण येषामारम्भकाणि भवन्ति, तेषामेवा-चिन्त्यप्रभावो भवतीति निष्कर्षः। ननु यावत्समवायिसंयोग उत्पत्तिः स च गुणो न कर्म्म कथं वर्त्तते गुणकर्म्मणोः ? द्रव्ये एव हि गुणो वर्त्तते न तु गुणे वा कर्म्मणि वा ? वक्ष्यते हि "यत्राश्रिताः कर्म्मगुणाः" इत्यादीति द्रव्ये हि कार्य्यगुणाः सार्था गुर्व्वादयः कर्म च। समवायेन परत्वादयश्चाकार्य्याः प्रकृतिभूता गुणा गुणे च कर्म्मणि च द्रव्ये च सर्व्वत्रैव समवायेनैव वर्त्तन्ते, न हि परत्वापरत्वसंख्यापृथक्त्वपरिमाणानि विना द्रव्यं वा गुणो वा कर्म वा केवलमुत्पद्यते इत्यविनाभावः स्फुटो दृश्यते; षड्रसा इव षड्रसाः पञ्च कर्म्माणीति तुल्यप्रयोगस्तुल्यबोधश्चातो नावस्तुभूतः पर्य्याप्तिसम्बन्धः कल्प्यते षड्रसादौ गुणे गुणवृत्तेः। समवाय एव हि सर्व्वत्रैव गुणकर्म्मसु सङ्ख्यादिवृत्तौ सम्बन्धः सिद्धः। सगुणमेव हि द्रव्यमुत्पद्यते यदा तदा गुणोत्पत्तौ समवायि-कारणमप्यस्ति द्रव्यस्येव गुणकर्म्मणोरतः समवायिकारणसमवाय एवोत्पत्ति-स्तद् गुणकर्म्मणामुत्पत्तौ परत्वापरत्वसङ्ख्यापरिमाण पृथक्त्वगुणान् विना नोत्पत्तिः सम्भवति। यथा पञ्चमहाभूतानामुत्तरोत्तरोत्पत्तौ शब्दस्पर्शादीना-मप्युत्तरोत्तरोत्पत्तौ परत्वादिगुणयोगो दृश्यते। तस्मात् प्रकृतिगुणानां परत्वादीनां गुणकर्म्मस्वपि समवायेन वृत्तिरस्ति न तु कार्य्यगुणानां गुरुत्वादीनां गुणे वृत्ति-रस्तीति। एतदभिप्रायेणैव वैशेषिकेऽप्युक्तं—गुणोऽपि विभाव्यते गुणेनापीति। द्रव्यं गुणकर्म्माश्रयत्वेन मुख्यत्वात् कार्य्यनिष्पत्तौ कर्त्तृ भवति, गुणः कर्म्म च द्वे करणे एव भवतो न तु कर्त्तृणी द्रव्याश्रितत्वेन गौणत्वात् स्वातन्त्र्याभावात्।

"अभिवादितस्तु यो विप्रो नाशिषं सम्प्रयच्छति। श्मशाने जायते वृक्षो गृध्रकङ्कोपसेवितः"। तथा "वृक्षगुल्मं बहुविधं तथैव तृणजातयः। तमसा धर्म्मरूपेण छादिताः कर्म्महेतुना॥ अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः। एतदन्ताश्च गतयो ब्रह्माद्याः समुदाहृताः॥" तथा

सार्था गुर्वादयो बुद्धिः प्रयत्नान्ताः परादयः।
गुणाः प्रोक्ताः प्रयत्नादि कर्म्म चेष्टितमुच्यते ॥ २१ ॥

स्वतन्त्रो हि कर्त्ता। तत्त्वं पुनः कारकान्तराप्रयुज्यत्वे सति कारकान्तरप्रयोजकत्वम्। गुणे क्रियोपचर्य्यते। तेनाथर्ववेदविदो ब्राह्मणा मन्त्रेणाशुभं शमयन्ति दुष्टान् मारयन्ति उच्चाटयन्ति वशीकुर्व्वन्त्यवश्यानित्यादि. एवमयं मणिविशेषो विषं हन्ति प्रभावेण दाहमयमयं प्रमते स्वर्ण भार्गमित्यादिश्च प्रयोगो भवति. न काष्ठं पचति वह्निः पचतीत्यादिवन्मणिगणो विषं हन्ति मन्त्रो मारयतीत्यादि भवति. चैतन्याभावेऽपि काष्ठादेः क्रियावत्त्वेन स्वातन्त्र्यं विवक्षितुं शक्यं. गुणकर्म्मणोस्तु नियमतो द्रव्याश्रितत्वेऽपि करणकारकत्वसिद्ध्यर्थं प्रभावाख्यव्यापारवत्तया शक्यते विवक्षितं स्वातन्त्र्यं निष्क्रियत्वेऽपि। अन्यथा कारकत्वं न सिध्यति सर्व्वं हि कारकं क्रियावत्। यत्र तु मन्त्रादिः कर्त्तृत्वेन प्रयुज्यते तत्र द्रव्याश्रितत्वेनामुख्ये मुख्यत्वारोपादेवेति। विशिष्टे द्रव्ये विशिष्टे गुणकर्म्मणी अपि कारणानुरूपः कार्य्यगुणो भवति. कर्म्म तु किञ्चित्कारणानुरूपं किञ्चिच्च कारणसमवायादननुरूपम्। कारणगुणप्रकृतिको हि कार्य्यगुणो व्यवस्थितः। यथा शुक्लतन्तुकृतः पटः शुक्ल एव. हरिद्राचूर्णसंयोगेन हरिद्रायाः चूर्णस्य तेजसेव विरोधिना मान्द्यगुणनाशात् कृष्णापायाद्रक्तोऽभिव्यज्यते रक्तशुक्लकृष्णवर्णा हरिद्रा। एतेन यदुच्यते मणिमन्त्रादीनां विषहरणादिकर्म्म यत् तत्र तु शक्तिनामापूर्व्वं वस्त्विति तन्निरस्तम्। इत्थञ्च सत्त्वात्मशरीरमिति त्रयं मिलितं लोकः सेन्द्रियश्चेतनो निरिन्द्रियोऽचेतनश्चेति द्विविधस्तच्च खादिद्रव्यात्मकत्वात् द्रव्यमेव न गुणः कर्म्म वा आश्रयत्वेन द्रव्यप्राधान्यात् चेतनाधातुविशिष्टत्वात् पुमांश्च वृक्षादेश्च अन्तश्चैतन्यात्तो चेतनत्वञ्चेति बोध्यमिति ॥ २० ॥

गङ्गाधरः—ननु तत्र सर्व्वं प्रतिष्ठितमिति यदुक्तं तत्र सर्व्वमिति किं खादिनवकमात्रमारम्भकत्वेन प्रतिष्ठितमुत किमन्यत्? इत्यत आह :

तन्त्रकारश्च वानस्पत्यान् मूकान् प्राणिनो वक्ष्यति, तेनागमसम्बलितया युक्त्या चेतना वृक्षाः ॥ २० ॥

चक्रपाणिः सम्प्रति गुणान् निर्देष्टुमाह, सार्था इत्यादि। अनेन त्रिविधा अपि वैशेषिकाः सामान्या आत्मगुणाश्चोद्दिष्टाः; तत्रार्थाः शब्दस्पर्शरूपरसगन्धाः, यदुक्तम् "अर्थाः शब्दादयो ज्ञेया

सार्था इत्यादि गुणाः प्रोक्ता इत्यन्तम्। गुणाः प्रोक्ता अर्थात् चेतनाचेतनसाधारणद्रव्याणाम्। तत्रार्थाः शब्दस्पर्शरूपरसगन्धा इति वक्ष्यति। तैः सह वर्त्तन्ते ये ते गुर्व्वादय इति सहशब्दोपादानेन शब्दादयो गुणा यथा पञ्चभूतानामाकाशादीनां वर्त्तन्ते सहजत्वात्, तथैवाकाशादीनामुत्तरोत्तरेषां क्रमेण स्थौल्यात् तद्गुणानां शब्दस्पर्शरूपरसगन्धानां क्रमेण स्थौल्यं, तत्राकाशगुणः शब्दोऽत्यनभिव्यक्तो यथा तथा शब्दस्पर्शादिसहचारिता श्लक्ष्णत्वादयो गुणा अत्यनभिव्यक्ता सन्तीति ख्यापितम्। ते चात्यनभिव्यक्तत्वात् महाभूतोपदेशे तूपदेष्टृभिर्नोपदिष्टाः। पूर्व्वभूतानुप्रविष्टवाय्वादिषु किञ्चित्स्थूलीभूयानभिव्यक्ताः पुनः पञ्चभूतात्मकद्रव्येषु गुर्व्वादयो गुणा अभिव्यज्यन्ते। यथाकाशेऽत्यनभिव्यक्तः शब्दः सगुणमेव द्रव्यमुत्पद्यते नागुणमिति ख्यापनार्थं वाय्वादिषु स्पर्शादिवदुपदिष्टः। पूर्व्वपूर्व्वभूतानुप्रविष्टवाय्वादिषु क्रमेण स्थूलीभूयानभिव्यक्ता पुनः पाञ्चभौतिकेऽभिव्यज्यन्ते इति। शब्दश्च गुर्व्वादयश्च काय्यगुणा इत्यभिप्रायेण वैशेषिके कणादेन प्रकृतिगुणमध्ये शब्दो गुर्व्वादयश्च गुणा न पठिता घटादिकार्य्यद्रव्यवत्। अन्यथा किं पाञ्चभौतिकद्रव्ये शब्दो गुर्व्वादयो निरुपादाना जायन्ते इति। गुर्व्वादय इति गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशद-पिच्छिल-खरश्लक्ष्णस्थूल-सूक्ष्मसान्द्रद्रवा इति विंशतिः शारीरगुणाः स्वयं वक्ष्यन्ते।

बुद्धिरिति। याऽभिधीयते महानिति, सप्रमा सा च सत्त्वमुपाददाना व्यक्ताविवर्त्तिता त्रिगुणा पुरुषस्वरूपा त्रिगुणवैषम्यात्मिका, तस्याः सम्यग्योगजनिताश्चेतना मिथ्यायोगजनिता चाहमिति मतिरहम्मतिरहङ्कारो बुद्धिः; स च त्रिविधोऽहङ्कारः, तथा तैरहङ्कारैरवस्थात्रये तस्याः सम्यग्योगजनिताः सांसारिकीधृतिधीस्मृतयश्चेतनाः सर्व्वा बुद्धिशब्देनोच्यन्ते। ता पुनः इन्द्रियार्थसन्निकर्षात् सम्यग्योगादिभिर्जायमानचाक्षुषादयो बुद्धयः क्षणिका निश्चयात्मिकाश्च भ्रमसंशयाख्याश्चेत्येवमुक्तं सर्व्वमिदं ज्ञानं कार्य्यभूता बुद्धिरुच्यते।

गोचरा विषया गुणाः" इति। एवं च वैशेषिकाः, यतः आकाशस्यैव शब्दः प्राधान्येन, वायोरेव स्पर्शः प्राधान्येन, एवमग्न्यादिषु रूपादयः, अन्यगुणानाञ्चान्यत्र दर्शनं भूतान्तरानुप्रवेशात्, वचनं हि "विष्टं ह्यपरं परेण" इति। गुर्व्वादयस्तु गुरुलघुशीतोष्णस्निग्धरूक्ष-

प्रयत्नान्ता इति।—इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेति पञ्च। परादय इति। वक्ष्यते हि "परापरत्वे युक्तिश्च सङ्ख्या संयोग एव च। विभागश्च पृथक्त्वञ्च परिमाणमथापि च। संस्कारोऽभ्यास इत्येते गुणा ज्ञेयाः परादयः॥" इति।

गुणाः प्रोक्ता इति। गुणा निर्द्दिष्टसमवायिहेतवः। प्रोक्ता इति शब्दादयः पञ्चार्थाः खादीनां प्रत्येकमेकैकवृद्ध्या वाय्वादिष्वपि पाञ्चभौतिकेषु च सर्व्वे गुणा गुर्व्वादयश्च पूर्व्वभूतानुप्रविष्टवाय्वाद्यारब्धानां चेतनशरीराणां पञ्चात्मकत्वे पाञ्चभौतिकानाञ्चाप्राणिनां घटादीनामित्यभिप्रायेण सार्थाः इति पृथक् पदं, गुर्व्वादयस्तु तेषां फलनिष्पत्तौ कर्त्तृत्वे वीर्य्याणीत्यभिप्रायेण च सार्था इति न तु सार्थगुर्व्वादय इति कृतम्। पदभेदकरणात् बुद्धिप्रयत्नान्तानां राशिपुरुष त्वात्मलिङ्गत्वं पुरुषस्य च फलनिष्पत्तौ कर्त्तृत्वे सार्थगुर्व्वादीनामविशेषाच्च वीर्य्यत्वमित्यभिप्रायेण बुद्धिः प्रयत्नान्ता इति पदभेदः। परादीनां द्रव्ये गुणे कर्म्मणि च सहजत्वेनान्तरकाले च वृत्तिः, फलनिष्पत्तौ चोपायत्वं न तु वीर्य्यत्वमित्यभिप्रायेण पदभेदेन प्रोक्ता गुणा इत्यर्थः। न त्वेतेभ्योऽधिको गुणः प्रकृतिभूतो वा कार्य्यभूतो वा, सुश्रुते हि व्यवायी विकाशीति द्वौ गुणावुक्तौ। तत्र "व्यवायी देहमखिलं व्याप्य पाकाय कल्पते। विकाशी विकशन् धातून् सन्धिबन्धान् विमोक्षयेत्। सरतीक्ष्णप्रकर्षौ तु कैश्चित्तौ परिकल्पितौ॥" इति व्याख्यानात् प्रकृष्टसरतीक्ष्णगुणत्वेनातिरिक्ताविति वाच्यम्। धर्म्माधर्म्मौ हि शुभाशुभशरीरवाक्क्रियाजन्यौ शरीरे संस्कारविशेषौ सुखदुःखफलप्राप्तौ करणरूपौ न त्वात्मगुणौ। छान्दोग्यबृहदारण्यकयोरुक्तं "मृतस्य दाहकरणाय बान्धवाः शवं नयन्ति यदा दहन्ति तदा तस्माच्छरीरात् स्वादृष्ट पुरुष उत्थाय धूमादिक्रमेण चन्द्रलोकं गत्वा सोमो राजा भवति परलोकं गतस्य तादृष्टफलभोगावसाने पुनः पर्ज्जन्यमागतं तादृष्टं वर्षेण शस्यं प्रविशति तत् शस्यभुजः शुक्रं भवति तेन शुक्रेण पुनः स पुरुषो जायते इति श्रूयते।

मन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरस्थूलसूक्ष्मसान्द्रद्रवा विंशतिः, एते च सामान्यगुणाः पृथिव्यादीनां साधारणत्वात्; एते च यज्जःपुरुषीये प्राय आयुर्वेदोपयुक्तत्वात् परादिभ्यः पृथक् पठिताः। बुद्धिर्ज्ञानम्, अनेन च स्मृतिचेतनाधृत्यहङ्कारादीनां बुद्धिविशेषाणां ग्रहणम्। प्रयत्नोऽन्तो येषां निर्द्देशे ते प्रयत्नान्ताः, एतेन च इच्छाद्वेषसुखदुःखप्रयत्नानां ग्रहणम्, वचनं हि "इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः। बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः॥"

अथार्थाः शब्दस्पर्शरूपरसगन्धा इति यत् तत्र शब्दो नाम नाकाशलिङ्गाख्यो-ऽप्रतिघातलक्षणस्य हि सूक्ष्मस्याकाशस्याव्यक्तः शब्दो न श्रूयते नापि परत्वा-दीन्याकाशलिङ्गानि सन्ति ; लिङ्गं ह्यनुमितिसाधनं, तच्चैकान्तिकत्वज्ञानमन्तरेण न भवति, ऐकान्तिकत्वज्ञानन्तु न प्रत्यक्षादीनां निश्चयग्रहणमन्तरेण भवति, परन्तु शब्दः शब्द इति धातुर्ध्वनिमात्रार्थकः स्वार्थकृद्योगे निष्पन्नशब्दपदवाच्यः श्रवणेन्द्रियार्थः । श्रवणेन्द्रियासमयोनित्वेन पाञ्चभौतिकद्रव्ये उदात्तादिदश-विधान्यतमत्वेनाभिव्यक्तत्वदशायां श्रवणयोग्यत्वात् इत्येवमुपदेशेनैकान्तिकत्व-ग्रहादुदात्तादयः शब्दाः श्रवणेन्द्रियग्राह्यास्तत्प्रकृतित्वादाकाशादिप्रत्येकस्था अव्यक्तशब्दाः श्रवणेन्द्रियार्थाः समानयोनित्वादिकार्य्यगुणा उदात्तादयः शब्दाः खादिषु प्रत्येकेषु प्रकृतिशब्दाः सामान्यभूता गुणा इति । "श्रवणार्थस्तु शब्दोऽस्य द्रव्यं भूतानि पञ्च वै । अभिव्यक्तौ विशेषे च समस्तान्येव हेतवः ॥" स्पर्शस्तु वायोराकाशस्थशब्दात् किञ्चित् स्थूलः स्वभावत एव तेन त्र्यात्मक-वाय्वादिषु विशेषेणैवाभिव्यज्यते शीतोष्णशीतखरत्वरूपेण ; तथा स्पर्शात् स्वभावतः स्थूलं रूपं तेजसि प्रकृतिभूतं सामान्यं त्र्यात्मकेषु तेजोऽम्भूमिषु लोहितशुक्लकृष्णरूपेण विशेषेणैवाभिव्यज्यते । रूपाच्च स्थूलो रसो रस-तन्मात्रास्वप्सु स्वभावत एव प्रकृतिरूपः सामान्यभूत चतुरात्मिकास्वप्सु पञ्चा-त्मिकायां भूमौ चाव्यक्तमधुराव्यक्तलवणरूपेण विशेषेणैवाभिव्यज्यते । गन्ध-तन्मात्रायां भूमौ गन्धो रसात् स्वभावतः स्थूलप्रकृतिरूपः सामान्यभूतः पञ्चा-त्मिकायामपि विशेषेण सौरभरूपेणैवाभिव्यज्यते । पाञ्चभौतिकेषु द्रव्येषु तत्तद्भूतांशांशविशेषेणैते शब्दादय उदात्तादिशीतादिलोहिताद्यव्यक्तमधुरादि-किञ्चित्सौरभासौरभगुणाः स्थूलरूपा नानाविधा अभिव्यज्यन्ते । तत्र शब्द-तन्मात्राकाशे यथाप्यनभिव्यक्तः शब्दो त्र्यात्मकेषु वाय्वादिषु क्रमेण स्थूल एवाभिव्यज्यते न तूदात्तादिविशेषेण पाञ्चभौतिकेषु द्रव्येषूदात्तादिरूपव्यक्ता अभि-व्यज्यन्ते । तथा गन्धतन्मात्रादिषु पृथिव्यादिषु पञ्चसु गुरुत्वादयोऽप्यनभिव्यक्ताः

इति । इह तु चेतनादीनां बुद्धिग्रहणेनैव ग्रहणं, शारीरे तु चेतनादीनामपि पृथगात्मगमकत्वेन पृथक् पाठः, एतच्च तत्रैव व्याकरणीयम् । परादयो यथा "परापरत्वे युक्तिश्च संख्या संयोग एव च । विभागश्च पृथक्त्वञ्च परिमाणमथापि च । संस्कारोऽभ्यास इत्येते गुणाः प्रोक्ताः परादयः ॥" एते च सामान्यगुणा अपि नात्युपयुक्तत्वात् तथा बुद्धिप्राधान्याच्चान्ते प्रोक्ताः । प्रोक्ता इति प्रकर्षेण विशेषगुणत्वादिनोक्ताः ।

पञ्चात्मकपृथिव्यादिषु क्रमेण स्थूला एवाभिव्यज्यन्ते न तु व्यक्तस्थूलाः पाञ्चभौतिकेषु तु व्यक्ता जायन्ते इति।

गुणान् निर्दिश्य कर्म्म निर्दिशति। प्रयत्नादीत्यादि।—प्रयत्नो नाम गुणविशेषः प्रकृतिगुणमध्ये पठितः। स चात्मन इच्छाजन्या प्रवृत्तिर्द्वेषजन्या निवृत्तिः स आदिः कारणं यस्य तत्कर्म्म मनःप्रवृत्तिः प्रकृतिभूतं कर्म्म। तज्जञ्च चेष्टितं वाग्देहप्रवृत्तिः। भौतिकी च चतुर्द्धा, वायोः सर्व्वतोगतिरूर्द्ध्वं ज्वलनं तेजसो निम्नगमनमपां स्थिरगतिः पृथिव्या इति। ननु पृथिव्यां स्थूलकठिनगुरुत्वाद्धीराधोगमनं कर्म्म कथमुपलभ्यत इत्यत उक्तं कणादेन वैशेषिके। "उत्क्षेपणमवक्षेपणं प्रसारणमाकुञ्चनं गमनञ्चेति कर्म्म" इति प्रकृतिभूतं कर्म्मोक्त्वा नोदनादभिघातात् संयुक्तसंयोगाच्च पृथिव्याः कर्म्म। पृथिव्यां कर्म्म क्रियोपलभ्यते। नोदनादभिघातात् संयुक्तसंयोगाच्च। तद्यथा। येन संयोगेन क्रियमाणेन ध्वनिर्न भवति तत्संयोगो नोदनाख्यः। यथा कर्दमचरणसंयोगजं तत्संयोगाच्चलतीति भ्रान्ता व्याचक्षते। संयोगो हि कर्म्मजः कथं क्रियां विना संयोगात् कर्म्मोत्पद्यतेति तस्मान्नोदनं प्रेरणम्। प्रेरणाद्धि वेगाख्यः संस्कारस्तस्मादुत्क्षेपणेन गच्छतो बाणस्य पार्थिवस्य वेगाख्यसंस्कारापगमे गुरुत्वादधःपतनं कर्म्मोपलभ्यते। इदमुक्तं कणादेन स्वयमाचार्य्येणातः पूर्व्वं सूत्रद्वयेन। तद्यथा। नोदनादाद्यमिषोः कर्म्म तत्कर्म्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरञ्च। संस्काराभावे गुरुत्वाच्च पतनमिति। इषोः पृथिवीबहुललोहमयपार्थिवस्य बाणस्य धनुषः क्षिप्तस्य प्रथमं कर्म्म नोदनात् धन्विपुरुषस्य धनुराकर्षणव्यापारेण प्रेरणात् जातवेगाख्यसंस्कारात् प्रथमं कर्म्म चलनं तत्कर्म्मणा धन्विना कारिताद्वेगाख्यसंस्कारात् ततः परञ्च चलनं कर्म्म ततश्च तदुत्तरं कर्म्म ततश्च तदुत्तरं कर्म्मेत्येवं यावद्वेगाख्यसंस्कारं ततो वेगाख्यसंस्कारापगमे गुरुत्वाच्च पतनमधोगमनमिति पृथिव्यां नोदनात् कर्म्मोत्पद्यते। अभिघाताच्च पृथिव्यां कर्म्म भवति। तद्यथा। प्रक्षिप्तस्य तस्यैवेषोर्जातवेगस्य चलतो वेगसद्भावेऽपि प्रतिक्षिप्तेन शरेणाभिघातादभिभूतवेगस्य वेगाभावे गुरुत्वाच्च पतनमिति चकारादुक्तम्। संयुक्तसंयोगाच्च पृथिव्यां कर्म्मोप-

क्रमागतं कर्म्म निर्दिशति प्रयत्नादीत्यादि।—प्रयतनं प्रयत्नः कर्म्मैवायमात्मनः, यथा—"तुल्या-,ऽऽस्यप्रयत्नं सवर्णम्" इत्यत्र व्याख्यातम्। आदिशब्दः प्रकारवाची, तेन संस्कारगुरुत्वादिजन्य-

लभ्यते। प्रतिक्षिप्तशरेणाभिभूतवेगस्य तस्यापरेणानुप्रतिक्षिप्तस्येषोः पततः पुनः प्रतिक्षिप्तेन शरेण वारितपतनस्यैवं पुनःपुनः शरप्रतिक्षेपेण पतनं यद्वारयति तत्प्रक्षिप्तशरे संयुक्तस्य प्रतिक्षिप्तशरस्य संयोगाज्जातस्थितिस्थापनाख्य-संस्कारेण गुरुत्वादपि स इषुर्न पतति यावत् तत्स्थितिस्थापनसंस्कारम्। ततस्तत्स्थितिस्थापनसंस्काराभावे गुरुत्वाच्च पतनं तस्येषोर्भवतीति पृथिव्या अधोगमनमुपलभ्यते। नन्वेतदसमग्रवचनं नोदनाभिघातसंयुक्तसंयोगेभ्यो-ऽन्यस्मादपि भूमिकम्पो भवतीत्यत आह। तद्विशेषणादृष्टकारितम्। तत् पृथिव्यां कर्म्म नोदनाभिघातसंयुक्तसंयोगेभ्य एव भवति किञ्चित् दृष्टकारितं किञ्चिद्विशेषणेनोदनाभिघातसंयुक्तसंयोगैरदृष्टः कारितं च भवति। तेन भूकम्पोऽदृष्टनोदनादिभिः कारितो बोध्य इति। क्रमिकत्वादपां कर्म्म परीक्ष्यते। नन्वपां किं कर्म्मेत्यत आह। अपां संयोगाभावे गुरुत्वात् पतनम्। अपां कर्म्म प्रतिबन्धकद्रव्यसंयोगाभावे गुरुत्वात् पतनमधोगमनम्। यथा मेघे वर्षति जलं पतति भूमौ तत्र गृहादौ प्रतिबन्धके संयोगान्न गृहमध्ये जलपतनम्। तद् गृहाद्यभावे तद्भूमौ तु जलं पतत्येव। ननु नवे घटे स्थितं जलं प्रतिबन्धके द्रव्यसंयोगेऽपि तद् घटपार्श्वादितः पततीति व्यभिचार इत्यत आह। द्रवत्वात् स्यन्दनम्। नवे घटादौ स्थितं जलं यत् स्रवति पार्श्वादितस्तन्न पतनं किन्तु द्रवत्वात् स्यन्दनं तदप्यपां कर्म्म। स्यन्दनन्तु द्विविधं स्रावात्मकं वेगात्मकञ्च, घटादिस्थस्य जलादेर्यत् पार्श्वादितः क्षरणं तत् स्यन्दनं स्रावात्मकम्, नद्यादौ जलस्य यदुच्चदेशाद् वेगेन चलनं तद्वेगाख्य-स्यन्दनं प्रतिस्यन्दनञ्च द्वयमेव गुरुत्वद्रवत्वोभयस्माद्भवति न त्वेकतः। उच्चदेशे स्रावस्रोतसोरवःस्थजलस्य प्रसङ्गादिति। ननु गुरुत्वादपां पतनं द्रवत्वगुरुत्वो-भयस्मात् स्यन्दनमस्तु परन्त्वपां कर्म्मणो न समग्रवचनमिदं नालिकास्थजलस्य तिर्य्यगूर्द्ध्वादिगमनादित्यत आह। नाड्यो वायुसंयोगादारोहणम्। नाडिका अन्तर्गतानामपां वायुसंयोगात् द्रवत्वादारोहणं तिर्य्यगूर्द्ध्वादिगमनं जनयन्ति। न वस्तुतस्तिर्य्यगादिगमनमपामस्तीति भावः। नाड्यो न केवलं वायुसंयोगादपामारोहणं जनयन्त्यन्यस्मादपीत्यत आह। नोदनापीडनात्

कृत्स्नक्रियावरोधः। यद्यपि चेष्टितं प्राणिव्यापार उच्यते, तथापीह सामान्येन क्रिया विवक्षिता, चेष्टितपदेनैव सर्व्वकर्म्मलाभे सिद्धे वमनादिकर्म्मनिषेधे च सिद्धे प्रयत्नादीति पदं सुसूक्ष्मप्रयत्न-

संयुक्तसंयोगाच्च । नाड्यो वस्त्यादिनेत्रादिगता नालरूपा दीर्घाकारवस्तु-वन्धात्मिकास्तद्वस्त्यादिस्थानामपां नोदनाय प्रेरणाय यदा पीड़नम् ततश्च निम्नगाद्यारोहणं जनयन्ति । संयुक्तसंयोगाच्च यथा वक्रनाड्यो नोदनापीड़न-व्यतिरेकेणापि वक्रदेशपर्य्यन्तं गत्वा तद्देशे संयुक्तानां पुनः संयोगात् निम्नगारोहणं भवति तथा स्थालीस्थानामपां वह्निसंयुक्तस्थालीसंयोगाद् ऊर्द्ध्वारोहणमिति । ननु मूले सिक्तानामपां वृक्षाणामभ्यन्तरतोऽधःस्थानादूर्द्ध-गमनं स्वत एव भवति न तु नोदनापीड़नं संयुक्तसंयोगो वायुसंयोगो वा तत्र वर्त्तत इत्यत आह । वृक्षाभिसर्पणमित्यदृष्टकारितम् । मूले सिक्तानामपां यद्वृक्षाणां सर्वाङ्गावयवेऽभितः सर्पणं तददृष्टस्य वायोः संयोगेन कारितं न तु स्वतः । वृक्षादीनां जीवनं वायुर्हि चेतनसम्बन्धेन सदा चलति तस्मान्मृतानां वृक्षादीनां मूले सेचनेन नापः सर्व्वतः सर्पन्ति तेन नापामूर्द्ध्वगमनम् । द्रवमुदकमुक्तं दृश्यते च करका कठिना हिमानी च पुनस्ताद्विलयनञ्चेति द्रवत्वव्यभिचार इत्यत आह । अपां सङ्घातो विलयनञ्च तेजःसंयोगात् । अपां सङ्घातो यत्करकादिहिमानीरूपो दृश्यते तत्र कारणं तेजःसंयोगः संवृतवाष्पस्थानतेजःसंयोगः सलिलसङ्घातकारणं तत्सङ्घातस्य विलयनमसंवृतस्थानतेजःसंयोग इत्यतोऽपां द्रवत्वमेव न तु काठिन्यमिति । ननु तेजःसंयोगे किं प्रमाणमित्यत आह । तत्र विस्फूर्ज्जथुर्लिङ्गम् । करकाणां संहतिभावे तेजःसंयोगे लिङ्गं विस्फूर्ज्जथुर्विद्युदादिरिति । अथानुमानप्रमाण-वदाप्तोपदेशोऽपि प्रमाणान्तरमस्ति तदाह । वैदिकञ्च । तत्र करकादिरूप-सङ्घातेऽपां तेजःसंयोगकारणे तत्र प्रमाणं वैदिकञ्चाप्तोपदेशश्चास्ति । वेदश्चायम् "आपस्ता अग्निं गर्भमादधीरन् । या अग्निं गर्भं दधिरे सुवर्णं" इत्यादि । ननु विस्फूर्ज्जथुः कथमुत्पद्यत इत्यत आह । अपां संयोगाद्विभागाच्चाद्भिस्तनयित्नोः । अद्भिः सुदामनाम्ना पवनः । तस्य मेघस्य च परस्परं संयोगाद्विभागाच्चापां विस्फूर्ज्जथुर्जायते । अन्तर्गर्भस्थं हि तेजोऽद्भिर्मेघसंयोगविभागाभ्यां निर्य्यातत इति निर्गच्छमानमपां तेजो विद्युत् । ननु नोदनापीड़नात् संयुक्तसंयोगाच्च वक्रनाड्यो यज्ञस्थानां निम्नगाद्यारोहणं

रूपकर्मसंख्यापित्वव्यवच्छेदनार्थम् । अन्ये तु प्रयत्नार्थमिति प्रयत्नकारणमिति ब्रुवते, प्रयत्नग्रहणञ्च कारणोप-लक्षणं वदन्ति ; तेन गुरुत्वादिकार्य्यस्यापि कर्म्मणो ग्रहणमिति । प्रयत्नशब्दश्चायुर्वेदेऽपि कर्म-

जनयन्ति, श्राद्धादौ तु पुत्रादिदत्तमन्नादिकं कथं पितृनुपतिष्ठते इत्यत आह। तद्दुष्टभोजने न विद्यते। तत् श्राद्धादौ पुत्रदत्तमन्नादिकं यत्पितृनुपतिष्ठते तददुष्टानां पात्रानधिकारिणां ब्राह्मणानां भोजने न विद्यते; तथा स्वभावात्। ननु के दुष्टा इत्यत आह। दुष्टं हिंसायाम्। हिंसायामित्युपलक्षणात्। अवैधहिंसादिनिषिद्धकर्म्मसु कृतेषु दुष्टं भवति। तस्य समभिव्याहारतो दोषः। तस्य निषिद्धकर्म्मकृतवतः समभिव्याहारत एकपङ्क्तिभोजनादिकृतवतो दोषः स्यात्। तददुष्टं न विद्यते। तददुष्टत्वं पापं नादुष्टे शास्त्रविहिते कर्म्मणि विद्यते। अदुष्टे किं स्यादित्यत आह। पुनर्व्विशिष्टप्रवृत्तिः। श्राद्धादौ यदादुष्टभोजनादि स्यात् तदा विशिष्ट-प्रवृत्तिर्यथाशास्त्रीयफलोदयः स्यादिति। कस्य श्राद्धादौ भोक्तव्यं तदाह। समे हीने वा प्रवृत्तिः। समे वर्णतो धर्म्मादितश्च समाने जने श्राद्धादौ भोजनादिकं कर्त्तव्यमापदि हीने वा। तथा विरुद्धानां त्यागः। विरुद्धानां शास्त्रविहिताचारविरुद्धानां श्राद्धभोजनादौ त्यागः कार्य्यः। हीने परत्यागः। हीनवर्णधर्म्मादिके आपद्यपि परस्य शत्रोः श्राद्धादिभोजनादौ त्यागः कार्य्यः। समे आत्मत्यागः परत्यागो वा। समे स्वसदृशे शत्रौ खल्वात्मीयेऽपि त्यागः श्राद्धभोजनादित्यागः कार्य्यः शत्रोरपि चान्नभोजनादि-त्यागः कार्य्यः। विशिष्टे आत्मत्यागः। विशिष्टे परे शत्रौ तु श्राद्धभोजनादिकर्म्मण्यात्मत्यागः स्यादिति। ननु दृष्टादृष्टप्रयोजनानां मध्ये किं प्रयोजनमभ्युदयार्थं भवतीत्यत आह। दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय। दृष्टादृष्टप्रयोजनानां मध्ये दृष्टप्रयोजनाभावेऽभ्युदयाया-दृष्टप्रयोजनं स्यात्। दृष्टप्रयोजनानि कृषिवाणिज्यराजसेवादीनि। अदृष्ट-प्रयोजनानि यागदानब्रह्मचर्य्यादीनि। अदृष्टप्रयोजनान्याह। अभिषेचनोपवास-ब्रह्मचर्य्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रकालनियमाश्चादृष्टाय। अभिषेचनं तीर्थस्नानम्। उपवासो व्रतम्। ब्रह्मचर्य्यं सामान्यत एव ब्रह्मचर्य्याश्रमविहिताचारः। गुरुकुले वासो ब्रह्मचर्य्याश्रमः। वानप्रस्थ आश्रमः। यज्ञोऽश्वमेधादिः। दानं गोहिरण्यादिदानम्। प्रोक्षण

वचनो दृश्यते "प्रवृत्तिस्तु चेष्टा कार्य्यार्था सैव क्रिया प्रयत्नः कार्य्यसमारम्भश्च" इति वचनात्॥ २१॥

बैधब्रीहिपश्वादिमोक्षणम्। दिक् कर्म्मविशेषे प्राच्यादि-दिक्। यदिक्
पूर्व्वमुखं कर्म्म करोतीत्यादि। नक्षत्रं मघादि श्राद्धादिकर्म्मविशेषे विहितम्।
कालो राहुदर्शनादिः। नियमो दशविधः। एतेऽदृष्टाय परलोकजनकफलाय
भवन्तीत्यर्थः। एषु कर्म्मसु सिद्धार्थं दोषादोषावाह। चातुराश्रम्यमुपधाश्च।
चातुराश्रम्यं वेदविहितं कर्म्मादृष्टाय भवति। तत्रोपधा अनुपधाश्चास्ति
फलाभिनिष्पत्तौ। तत्रोपधानुपधावाह। भावदोष उपधा अदोषोऽनुपधा।
भाव इच्छा रागः प्रमादः श्रद्धा। इच्छादयो भावास्तेभ्यो दोष उपधासंज्ञः
स्यात्। इच्छादिभावतोऽदोषस्त्वनुपधासंज्ञः स्यात्। कर्म्मप्रवचनप्रकरणात्
पारलौकिककर्म्माण्युक्त्वा भूतक्रमत्वात् तेजःप्रभृतीनां शेषाणां क्रियामाह।
अग्ने रूर्द्ध ज्वलनं वायोस्तिर्य्यक्पतनमणूनां मनसश्चाद्यं कर्म्मादृष्टकारितम्।
अग्न्यादेरूर्द्ध ज्वलनादिकर्म्म न दृष्टकारणकारितं किन्तु सर्गकाले तल्लक्षणतयैव
जातत्वादग्नेरूर्द्धज्वलनं कर्म्मादृष्टकारणस्वभावकारितं वायोस्तिर्य्यक् पतनं
सर्व्वतो गमनं कर्म्मादृष्टकारणस्वभावकारितम्। अणूनां तन्मात्रात्मकानां
वाग्वादीनां आद्यात्मकानाञ्चाद्यं कर्म्म मनसश्चाद्यं कर्म्म चादृष्टकारणस्वभाव-
कारितमिति बोध्यम्। एतेनाकाशात्मकालदिशां न कर्म्मास्तीति ज्ञापित-
मिति वैशेषिकः कणाद उवाच। अथ वक्ष्यन्ते आत्रेयभद्रकाप्यीये। इह खलु
सर्व्वं पाञ्चभौतिकं चेतनावदचेतनञ्चेत्यस्मिन्नर्थे इत्यादिना तूक्तानि द्रव्याणि
पार्थिवादीनि। तेषां कार्य्याणि यथा। पार्थिवान्युपचयसङ्घातगौरवस्थैर्य्य-
कराणि। आप्यान्युपक्लेदस्नेहबन्धविष्यन्दमार्द्दवप्रह्लादकराणि। पार्थिवानि
पृथिवीबहुलपञ्चभूतविकारात्मकानि शरीरादीनि द्रव्याणि। उपचयो वृद्धिः।
सङ्घातः समूहः। आप्यान्यब्बहुलपञ्चभूतात्मकानि उपक्लेदो द्रवीकरणं
स्नेहः स्निग्धत्वं बन्धः संश्लेषः विष्यन्दः स्रावः। आग्नेयानि दाहपाकप्रभा-
प्रकाशवर्णकराणि। वायव्यानि रौक्ष्यग्लानिविचारवैशद्यलाघवकराणि।
प्रभा शरीरस्य दीप्तिः, प्रकाशो जाज्वल्यम्। विचारः प्रचरणमितस्ततो
भ्रमणम्। आकाशात्मकानि मार्द्दवशौषिर्य्यलाघवकराणि। अनेनोपदेशेन
नानौषधीभूतं जगति किञ्चिद् द्रव्यमुपलभ्यते। शौषिर्य्यं शुषिरता
छिद्रमिति यावत्। अनेन पार्थिवादुपदेशेन कर्म्मोपदेशेन च जगति
किञ्चिदपि द्रव्यमनौषधीभूतं नोपलभ्यते। सर्व्वं द्रव्यमेवौषधीभूतमित्यर्थः।
इति पाञ्चभौतिकभेदेन कार्य्यमुक्तं यथा तथा रसभेदादपि द्रव्याणां

कार्य्याणामन्यान्यपि कार्य्याणि वक्ष्यन्ते। अत्रैके प्रयत्नः पूर्व्वमेवोक्तो गुणविशेष इच्छाजन्या प्रवृत्तिर्द्वेषजन्या निवृत्तिरिति द्विविधः स आदिः कारणं यस्य तत् तथा। चेष्टितं वाङ्मनःशरीरप्रवृत्तिः चेष्टितमिति भावे क्तः। तथा च राशिपुरुषस्यात्मनः स्वेच्छाजन्यप्रवृत्तिजनिता कायवाङ्मनःप्रवृत्तन्यतमा प्रवृत्तिः कर्म्म क्रियेति लोके व्यवहाराल्लौकिकी क्रियेत्यर्थः। द्वेषजन्यनिवृत्तिजनिता कायाद्यन्यतमा निवृत्तिरकर्म्माऽक्रियेति व्यवहारः कायादित्रयनिवृत्तिस्तु मोक्षः। तथा च कायिकं वाचिकं मानसिकञ्चेति त्रिविधं कर्म्माकर्म्म च द्विविधं कर्म्म पुरुषे चेतने निरिन्द्रियत्वात्त्वनश्चेतनाचेतने तु वृक्षघटादौ सचेतनप्रयत्नप्रयुज्यचेष्टितं शरीरमात्रप्रवृत्तिनिवृत्ती इति द्विविधे एव कर्म्माकर्म्मणी कर्म्मैव वाय्वादिषु चतुषु भूतेषु स्वभावात् प्रवृत्तिः कर्म्म। स्वात्मकालदिक्षु स्वभावात् निवृत्तिरकर्म्मात्मकं कर्म्मेति द्विविधं कर्म्म क्रिया चाक्रिया च। यथा द्विधा विद्या, विद्या चाविद्या च, ब्रह्मविद्या हि विद्या, ऋग्वेदादिविद्या त्वविद्या। निवृत्तिरक्रिया प्रवृत्तिः क्रियेति द्विविधं क्रियाक्रियात्मकं कर्म्म लोके वाङ्मनःशरीरीयत्वविकल्पेन त्रिविधं पुरुषे यत् तत् प्रत्येकं द्विविधं साहजिकं स्वहेतुजञ्च। तत्राद्यं स्वारम्भकहेतुद्रव्यगुणकर्म्मप्रतिनियतकार्य्यत्वेनानिर्व्वाच्यं विकृतिपूर्व्वकस्वारम्भकद्रव्यगुणकर्म्मभिः समवायेन विषमारब्धत्वे समुदायप्रभावजं, प्रभावस्तु खलु प्रकर्षेण समवायिकारणानां द्रव्यगुणकर्म्मणां समवाये तु पूर्व्वं विकृत्या वैषम्येण समवायादपूर्व्वस्वरूपेण समुदायस्य भावो भवनम्। तज्जनितमेव प्रकृत्यननुरूपं कर्म्म भवति। यथा पुरुषे शौर्य्यादि, दन्त्याद्यौषधिषु विरेचनादिकं, मणिविशेषादौ च विषदाहादिहरणादिकम्। न च शौर्य्यादिकं भूतकार्य्यं वाच्यं, सर्व्वपुरुषे तदापत्तेः। न हि भूतानामंशांशकल्पनेनापि तेषां गुणकार्य्यत्वेन शौर्य्यादिकं सम्भवति। कर्म्मणेति चेत्, तेषामपि कर्म्म साहजिकमेव न तु हेतुजं किञ्च भूतानां कर्म्म नाप्यंशांशकल्पनेन न शौर्य्यादिकं सम्भवति। महाकायपुरुषेऽपि शौर्य्यादेरल्पकायपुरुषेऽप्यशौर्य्यादेरदर्शनात्। नापि मनःसत्त्वादियोगे च शौर्य्यादिकं भवति अशूरेऽपि हि पुरुषे सात्त्विकत्वप्रतिसत्त्वादिदर्शनात्। नापि चात्मनः कार्य्यं शौर्य्यादिकं सर्व्वपुरुषे तदापत्तेः। आश्रयश्च शौर्य्यादे राशिपुरुष एव न त्वात्मशरीरं तस्मात् प्रागविकृतप्रकृतिविषम-

समवायोऽपृथग्भावो भूम्यादीनां गुणैर्मतः ।
स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः ॥ २२ ॥

समवायेनापूर्व्वसमुदायत्वेन जन्मप्रभावस्तज्जं साहजिकं कर्म्म । स्वहेतुजञ्च कर्म्म स्वारम्भहेतुभिर्नानियतकर्म्मजन्यत्वेन निर्वाच्यम् । यथा चेतने गमननिस्यगपनाधोगमनादि । अचेतने पार्थिवद्रव्यादौ विरेचनस्तम्भनवमनादि । इत्येवमचिन्त्यं चिन्त्यं द्विविधं कर्म्म । गुणोऽपि द्विधा अचिन्त्यश्चिन्त्यश्चेति । तद्यथा—पुरुषे चेतनाधातौ निर्गुणे सत्त्वयोगादुपार्जितानि राशिपुरुषे इच्छाप्रयत्नादिः । चिन्त्यः पुरुषे नीलपीतादिः । अचेतने मधुरादिरिति व्याचक्षते व्याख्यानमिदं कर्म्मलक्षणस्य सम्भवति न तु निर्दिष्टस्य कर्म्मणः । नेदं हि कर्म्मणो लक्षणमपि तु खादीन्यात्मेत्यादिवन्निर्द्देशः । तेनैकं प्रयत्नादिकर्म्मापरन्तु चेष्टितं कर्मेति नवद्रव्यवत् द्वे कर्म्मणी इति ज्ञेयम् । कर्म्मलक्षणन्तु संयोगे चेत्यादिना वक्ष्यते ॥ २१ ॥

गङ्गाधरः—अथ द्रव्यगुणकर्म्मणां मिथः संयुक्तसत्त्वात्मशरीरत्रिकात्मकलोकेऽचेतने च मेलनं पारिशेष्यञ्च समवायं निर्द्देष्टुं लक्षणेनैव निर्दिशति, समवाय इत्यादि । समवाय इति यदयुतानां पृथक् पृथक् स्थितानां सिद्धानां कारणानां किञ्चिदाधार्य्यं किञ्चिदाधाररूपं भविष्यदित्येवम्भूतानां कार्य्यत्वमापन्नानां तेषामिह कार्य्यं खल्विदमित्येवं प्रत्ययहेतुर्यः सम्बन्धः स कार्य्यकारणयोः सम्बन्धः समवाय इत्यर्थ इति वैशेषिका भाषन्ते । तस्य तेन स्वरूपज्ञानस्वरूपलक्षणतया निर्द्दिष्ट आचार्य्येण द्रव्यादिलक्षणवत्तु समवायलक्षणं पृथङ् न वक्ष्यते । अत्र न पृथगभावोऽपृथग्भावः, पृथग्भावो नाम संयोगवैलक्षण्यानेकत्वानां त्रयाणां विपर्य्ययश्चेत्. तर्हि संयोगः सहयोगो द्रव्याणां द्वन्द्वसर्व्वैककर्म्मजोऽनित्यस्तद्विपर्य्ययस्तु खलु वियोगो भागशो ग्रहश्चेति द्विधाविभागः पृथगेव गुणतया पठितः. एव वैलक्षण्यञ्च भेदः परस्परसमवायवतामस्तीति वैलक्ष्यण्यविपर्य्ययोऽभेदस्तन्मात्रं वर्त्तते । तथानेकताविपर्य्ययः एकत्वं तच्चैकमात्रपरमाण्वादिष्वस्ति न [illegible]कत्वमेकत्व-

चक्रपाणिः—समवायमाह, समवाय इत्यादि । समवायस्य चायं निर्देश एव लक्षणं, तेनोत्तरोत्तरद्रव्यादिलक्षणे पुनरस्य लक्षणं न कर्त्तव्यं ; समवाय इति लक्ष्यनिर्देशः, अपृथग्भाव इति लक्षणम्.

सङ्ख्यातिरिक्तं कल्पयितुं शक्यते यदि चानेकवस्तूनामेकवस्तुत्वबुद्धिविषयत्वमेकत्वं वाच्यं तदा तदपि नातिरिक्तं तद्वस्तुत्वात्। तद्वस्तुत्वं हि न तदारम्भकद्रव्यगुणकर्म्मभ्योऽतिरिक्तम्। यदि वापि तादृशबुद्धिहेतुभाव एकत्वमुच्यते तदा स भावः कस्तद्वस्तुघटकानां द्रव्यगुणकर्म्मणां मेलनं सहयोगश्चेत् तदात्वसंयोगविपर्य्ययः स्यादित्यापत्तौ त्वनेकताप्यपृथग्भावस्यानतिरिक्तत्वं स्यात्। यदि वा एकवस्तुघटकद्रव्याणां सहयोगः संयोगस्तद्विपर्य्ययः पृथग्भावोऽसंयोगस्तद्विपर्य्ययः स एव संयोगोऽनेकताविपर्य्ययस्तु वस्तुघटकानां द्रव्यगुणकर्म्मणां सहयोग इति नानतिरिक्तत्वमसंयोगानेकतयोरित्युच्यते तदाविभाग एवासंयोगः स्यात् कथं पृथक्त्वं नाधिकं स्यात्। किञ्च सामान्यविशेषयोर्लक्षणे यदेकत्वकरत्वपृथक्त्वकरत्वाभ्यामुपदेशे सामान्यकृतत्वादेकत्वस्यानित्यत्वं स्यात्। न च सामान्यस्य लक्षणे यदेकत्वमुक्तं तदनेकवस्तूनामेकीभूतत्वं सत्यनेकैकविधस्वरूपमिति वाच्यं सामान्यविशेषयोर्मिथो विपर्य्ययत्वं हि पृथक्त्वकरत्वं विशेषस्य पृथक्त्वविपर्य्ययैकत्वकरत्वं सामान्यस्येति। तस्मादत्रापृथग्भावो न द्रव्याणां द्वन्द्वसत्त्वकर्म्मजः सहयोगो न वा तादात्म्यं वैलक्षण्यविपर्य्ययः। नापि चानेकताविपर्य्ययैकत्वमपि तु विभागस्य गुणान्तरतया पाठात् विभागातिरिक्तोऽसंयोगविपर्य्ययो द्रव्याणां संयोगातिरिक्तो योगः स हि संश्लेषः स च द्रव्यस्यावयवद्रव्येण गुणेन कर्म्मणा च गुणविशेषस्य कर्म्मणश्च साधारणं गुणं परत्वादिभिः सहयोगो मिथो मेलको भावोऽपृथग्भावः स खल्वजातस्य समवायिकारणानामनेकवस्तूनां द्रव्यगुणकर्म्मणां समुदायत्वरूपेणापूर्व्वविशेषैकवस्तुत्वविधानहेतुः सुतरामेकत्वसङ्ख्याहेतुश्चानेकताविपर्य्ययः। अतः समवायोऽयं सामान्यं विशेषश्च। अस्मादेव द्रव्यगुणकर्म्मणां सदितिज्ञानं भवतीति सत्ता। सैव भाव एषां स्थितिहेतुत्वादित्यादिविस्तरेण प्रागव्याख्यातम्। एतच्च समवायात्मकं सामान्यं जातिर्यदा हि समवायिकारणानामनवशेषाणां योगः स्यात् तदैव जायतेऽयमित्युच्यते सोऽसमानप्रसवस्त्वेकवस्तुनि जातिजन्मेति यावत्। स तु विशेषः। यश्चानेकस्य कार्य्यभूतस्य समानस्वरूपप्रसवः समवायः

अपृथग्भावोऽयुतसिद्धिः सहैवावस्थानमिति यावत्, यथा—अवयवावयविनोः गुणगुणिनोः कर्म्मकर्म्मवतोः सामान्यसामान्यवतोः ; न ह्यवयवादीन् विरहय्यावयव्यादय उपलभ्यन्ते। अपृथग्भावमेव

सा जातिः सामान्यमनेकनिष्ठं समानजन्मेति जातिसामान्यं समानजन्म जातिरिति बोध्यम्। उक्तञ्च जातिः सामान्यजन्मनोरिति। अत्र जन्मासमानजन्म। एकनिष्ठत्वाज्जन्मैवोच्यते च, एवञ्चेज्जातेर्नित्यत्वमनुपपन्नं जन्मनस्तु क्षणिकत्वात्, तस्मात् तादृशकारणसमवायात् समुदायस्वरूपेणाद्य-क्षणसम्बन्धजनकाद्यप्रकाश एव जन्म, न तु तादृशसमवाय इति नैवं वाच्यं, कारणत्वं हि पूर्ववर्त्तित्वं समवायश्च तादृशाद्यप्रकाशात् पूर्वं नास्ति। अस्ति चेत् तर्हि यदैव निरवशेषाणां घटकारणानां समवाय-स्तदाऽयं जातोऽभ्युदितः प्रकाशितोऽभूदित्यादिकमुच्यते, तथावस्थानां जन्मनैव प्रकाश इति यावतां समवायिकारणानां द्रव्याणां संयोगस्तदा कर्म्मद्रव्यत्वेन निखिलानां द्रव्यगुणकर्म्मणां समवायश्च युगपत् सम्पद्यते नातस्तावत्समवायिसंयोगजः समवायः कारणमपि नायं कार्य्यात् पूर्व्व-मसत्त्वात्। संयोगो ह्यनित्यस्तद्रूपा चेज्जातिस्तदा चानित्या स्यादपरापरयोगात्त नित्यत्वे संयोगस्य द्वन्द्वसर्व्वैककर्म्मजोऽनित्य इति वचनानर्थक्यं स्यात् न हि तथाविधानित्यस्यानित्यत्ववचनमिदं तस्मादाद्यक्षणसम्बन्धोऽपि संयोगा-त्मकत्वान्न जन्मोच्यते, समवायानुकूल्यावत्समवायिव्यापारस्तदुभयमुत्पत्तिः। स च व्यापारः क्षणिकस्तत्र यस्तत्सिद्धाकृतिसम्पादकतया समवायः स नित्य उक्त एवेति द्रव्याणां यथा स्वघटकद्रव्यगुणकर्म्माणि तथैवैषां समवायश्चेति चतुर्द्धा सामान्यं, चतुर्द्धा विशेषश्च, तत्तद्द्रव्याणां समतया भूतानां गवादीनां घटकानां द्रव्यगुणकर्म्मणां तेषां समवायस्य च समानप्रसवात्मकत्वेन ग्राह्यत्वात्। एतद्गवादितस्तद्गवादेर्भिन्नप्रसूतात्मकत्वेन ग्राह्यत्वाच्च। इत्थञ्च घटे कार्य्ये नीलपीतादिगुणस्पन्दनादिकर्म्म मृदादि-द्रव्याणां कारणानां सजातीयविजातीयतन्मात्रवैलक्षण्यवतामनेकतावताञ्च समुदायात्मके मृज्जलवालुकादीनां यो रूपरसादिगुणो यच्च कर्म्म तत्सर्व्वं परस्परं मृज्जलादेः संयोगकाले मृज्जलादेर्गुणैर्गुणस्य कर्म्मणा कर्म्मणः कपालाद्य-वयवानां परस्परसंयोगात् समुदायस्य तैर्गुणकर्म्मभिः सह योगोऽपृथग्भावः समवायः तत्र नीलादीनि रूपाणि एकद्वित्र्यादीनि यानि जायन्ते रसाश्च येऽपरे परे वा यावन्तो नित्या वा तेषां रूपादीनां परापरत्वसङ्ख्यादिभिः सहयोगश्च

विशेषयन्नाह, भूम्यादीनां गुणैस्त इति। भूम्यादीनां भूमिप्रकाराणां, भूमिश्च भूयसामाधेयानामाधारः, तेनाधारत्वोदाहरणार्थमुक्ता; यतो भूमेरर्थाः सर्व्वे गुर्व्वादिपरायाश्च गुणास्तथा वायवादिसामान्य-

समवायः परत्वादौ संयोगविभागौ तु द्रव्यनियतत्वं न निर्द्दिष्टाव गुणकर्म्मवृत्ती स्यातामित्यपि बोध्यम्। एवं चेतनेऽपि बोध्यः समवायः। तस्य पूर्व्वं हि निर्गुणं निष्क्रियञ्च ब्रह्म गुणयोगे त्वाकाशादिवासितशब्दादिगुणयोग-स्तत्राभिव्यक्तिकाले वाय्वादिषु च सहजचलत्वादिगुणैर्जातोत्तरकालं जातानां कर्म्मणां युक्ताख्यो योगो न समवाय इति सुतरामयमकार्य्यः समवायिकारणानां द्रव्याणां परस्परसंयोगे क्रियमाणे समवायस्यापि तदैव सद्भावात्। तथा हि लक्षणोदाहरणार्थं दर्शयति—भूम्यादीनामित्यादि। अयन्तु लक्षणोदाहरणे सावशेषेण नित्याभिप्रायेण। केचित्तु समवायं न मन्यमाना ब्रुवन्ते द्रव्याणां द्रव्यैर्वा गुणैर्वा कर्म्मभिर्वा गुणानां साधारणानां परत्वादीनां गुणैर्वा कर्म्मभिर्वा सामान्येन परिगृहीतैर्वा विशेषत्वेन परिगृहीतैर्वा सहयोगो युक्तत्राख्यो योगः। स गुणैः सह नित्यद्रव्याणां नित्यः अन्यस्त्वनित्यः परत्वादयश्च नित्ये नित्या अनित्ये त्वनित्या इति परत्वादिसाधर्म्म्यञ्चानुगम्यते तेन। एवमसंयोगाख्यं पृथक्त्वञ्च न मन्यमाना विभाग एवान्तर्भावयन्ति। तत्र, द्रव्याणां द्वन्द्वसर्व्वैककर्म्मजोऽनित्यः सहयोगो यः स संयोगः स्वसमवायेन द्रव्ये वर्त्तते। द्रव्याणां गुणैर्वा कर्म्मणा वा यः सहयोगः समवायेन तेषु वर्त्तते घटादीनान्तु द्रव्याणां स्वघटक-द्रव्यगुणकर्म्मभिर्यः सहयोग उक्तस्तेन समवायेन वर्त्तितां न च समवायाख्यत्वेन पृथक्स्वीकारात्तस्य तयोः समवायेन वृत्तिरस्ति अनवस्थाप्रसङ्गात् अपि तु स्वरूपतोऽवस्थानमिति। कश्चित्तु खादीनां गुणैरिति नोक्त्वा भूम्यादीना-मित्युक्तायास्तस्याः प्रत्यक्षसिद्धाधाररूपत्वेन प्राधान्यात् भूमिप्रकाराधारभूतानां गुणैरप्रधानैर्गुणसंज्ञकर्म्मसंज्ञान्यतरैरपृथग्भावः आधाराधेयभावः सम्बन्धः समवाय इति निर्द्देशो निरवशेषेण लक्षणमप्येतत्। अत एवानेन न विरोधः समावायस्य वैशेषिकैरप्ययुतसिद्धानामित्यादिनोक्तस्येत्याह तन्न कार्य्यभूतद्रव्ये तद्घटकीभूतद्रव्यगुणादौ समवायस्यासंग्रहेण सर्व्वेषामेव समवायानां नित्यत्वाभावेन स नित्य इत्यादिवक्ष्यमाणवाक्यासङ्गतेर्नित्यत्वं चेत्तदा भूतले घट इत्यादौ घटादियोगयोः समवायस्य नित्यत्वं भवतु। स नित्य इत्यादिवचनस्य ह्ययमर्थः—स समवायस्तत्र नित्यो यत्र हि द्रव्यमर्थोऽनित्य-

कर्म्मोभयत्वाद्वेधानि ; नैतरद्रव्ये यथोक्तसर्व्वाधेयसम्पत्तिः ; एतेन भूम्यादीनामित्याधाराणां, गुणैरित्यप्रधानैराधेयैः, आधेयो ह्याधारापेक्षयाऽप्रधानम्, अप्रधानं च गुणशब्दो यथा—"गुणीभूतो-

मन्यत्रानित्यः। ननु यत्र द्रव्यं नित्यं तत्र समवायो नित्य इत्यत्र हेतुमाह— न तत्रेत्यादि। तत्र गुणो नानियतः प्रतिनियत एव गुणसहितमेव द्रव्यमभिव्यज्यतेऽवतिष्ठते च नागुणमिति नियमादित्यर्थ इति समवायस्य नित्यत्वानित्यत्ववादिनस्तत्रापि गुणशब्दोऽप्रधानपरो द्रव्यं खादि न वान्यतमं द्रव्यं यत्र तत्र गुणः कर्म्म चानियतं न स्त इति।

ननु यद्यपि कर्म्मणां द्रव्ये समवायः घटादिकार्य्यारम्भकसमवायिकारणानां भूम्यादीनां कार्य्यघटादिनाशेऽपि स्वस्वकर्म्मसत्त्वान्नित्य इति. तथापि घटादिकार्य्यस्य नाशे तस्य कार्य्यस्य घटादेः कर्म्मणोऽसत्त्वादनित्य एव एवं गुणो घटादौ चामे श्यामो वह्निना पक्के तु पीतादिः श्यामापगमादित्यनित्यः समवायोऽनित्यद्रव्ये नित्यस्तु नित्यद्रव्ये इति न वाच्यं नित्यद्रव्यगुणयोः समवायस्य नित्यत्वे सिद्धेऽन्यत्राप्येकरूपत्वेनैव नित्यत्वाङ्गीकार एतेन स्वस्वविशेषगुणसमवायनाशादेव द्रव्याणां नाश इति ज्ञापितमिति तन्न सङ्गच्छते. यतो नित्यद्रव्याणां गुणसमवायो नित्यः. अनित्यद्रव्याणां द्रव्यगुणकर्म्मसमवायोऽनित्य एव। अन्यथा द्रव्याणामनित्यानां नित्यत्वं स्यात्। नित्ये नित्यसमवायादनित्येऽपि नित्यवन्नित्यद्रव्यसद्भावादनित्यमपि तथैव नित्य प्रसज्यतेऽन्यत्र सद्भावात्। समवायिकारणकार्य्यसमवायो हि जन्म, तस्य ध्वंसो विनाशः स च न सम्भवत्यनित्यत्वात् किञ्च युक्तग्राह्यगुणश्च न मन्यामहे इति न किञ्चिदाश्रयविनाशे सामान्यस्य विनाशः स्यात् यथा कतिचिद् गोव्यक्तिविनाशे गोत्वस्य सामान्यस्य न विनाशो नित्यस्यैव समवायस्य कार्य्यारम्भकसमवायिकारणद्रव्यसमुदाये तत्र तत्र कार्य्येऽभिव्यञ्जका भवन्ति व्यक्तयो यथा सामान्यस्येति। यत्तु "योऽङ्गिनोऽङ्गेषु सामान्यविशेषगुणकर्म्मणाम्। द्रव्ये योगो विशेषस्य जातेश्च गुणकर्म्मणोः। समवाय इति ज्ञेयो नित्य एव मनीषिभिः॥" इति तन्मते परत्वादेर्गन्धादिषु गुणेषु कर्म्मसु च योगः पर्य्याप्तिरतिरिक्ता स्यात्, षड्रसा द्वौ गन्धावित्यादौ पञ्च पुरुषा इत्यादिष्विव संख्याप्रतीतिबलेन समवायस्याङ्गीकारो लाघवात् कर्त्तव्य इति। यश्च कार्य्यव्यवहितप्राक्क्षणावच्छेदे कार्य्यसमानाधिकरणात्यन्ताभावाप्रतियोगितानवच्छेदकधर्म्मवत्त्वं समवायत्वं यथा भविष्यता घटेन कार्य्येण

ज्यम्" द्रव्यमप्रधानमित्यर्थः, तेनाधाराणामाधेयैर्योऽपृथग्भावः स समवायः सम्बन्ध इहेति; तेन पृथिवीत्वगन्धवत्त्वयोरपृथक् सिद्धयोरप्याधाराधेयभावाभावात् न समवाय इत्युक्तं भवति; अत

व्यवहितं वर्त्तमानक्षणम्। यावत्कालावच्छेदेन घटो भविष्यति तत्कालोत्तरकालस्य प्राग्वर्त्तितदेतत्क्षणावच्छेदेन कार्य्यस्य तस्य भविष्यतो घटस्याधिकरणे तस्मिन् प्राक्क्षणे तद् घटारम्भं करिष्यन्मृद्वालुकाजलादीनां योगेनैकीभावप्रयोजकसंश्लेषणस्यात्यन्ताभावस्तस्य प्रतियोगि तत्संश्लेषणमप्रतियोगि पुनस्तम्भित्वं यावद् वस्तु। तदवच्छेदको धर्म्मस्तु तद्भिन्नतावद्वस्तुनिष्ठो धर्म्मः तदनवच्छेदकधर्म्मस्तु तत्संश्लेषणत्वं तदेव समवायत्वमिति स्यात्. तथा तदानीं भविष्यद् घटारम्भकतत्तन्मृदादिसंयोगस्याप्यत्यन्ताभावोऽस्तीति तत्संयोगेऽतिप्रसङ्गः स्यात्। यदि चात्यन्ताभावोऽत्र स्वप्रतियोगितावच्छेदकावच्छिन्नत्वेन गृह्यते तदापि तुल्यम्। इतरसंयोगस्य तदानीं सत्त्वात् संयोगत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावासम्भवात्। वर्त्तमानस्य घटारम्भकमृदादेः संयोगेन संश्लेषस्य सत्त्वात् संश्लेषत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्यासम्भवादित्यतस्तन्न सम्यक्; समवायत्वरूपधर्म्माभावाच्च। अन्ये तु भूम्यादीनां द्रव्याणां गुणैरपृथग्भावः समवायः। गुणेभ्यः पृथक् भूम्यादिगुणैरपृथग्भवतीति व्युत्पत्त्या गुणगुणिनोरेकीभाव इति व्याप्तिनिश्चयादनेकविलक्षणानामेकीभावो यो भावः स समवायः कर्म्मणां द्रव्यस्य न समवायः, परन्तु योगः तस्य पर्य्याप्त्याख्यकत्वाद्व्याप्तिः परम्परया समुदायेन समुदायिनां संयोगाच्च। पर्य्याप्तिर्हि युक्त्याख्यो गुण इति आहुः। वस्तुतस्तु गुणः सह भूम्यादीनां प्रकृतिभूतद्रव्याणां गुणैः सहितानामर्थाद् द्रव्यगुणकर्म्मणां यथायथमपृथग्भावः कार्य्यत्वेऽपि समुदायत्वेनैकीभावो भवनं जन्मसमवायः। जातोत्तरकाले हि तत्राहितगुणादीनां योगस्तु युक्तिरेव तच्चावस्थान्तरगमनमपि भाक्तमेव जन्योच्यते।

ननु कथं न तन्मुख्यमुच्यते इत्यत आह। स नित्य इति। स समवायो नित्यः समवायिकारणानां क्रमात् संयोगाज्जातोऽपि विलक्षणानेकस्य द्रव्यादेः प्रकृतिभूतकारणस्य कार्य्यत्वकत्वसङ्ख्यावत्तासम्पादकत्वस्वभावेन समवाये प्रकृतिभूततदनेककारणस्यैकवद्भावलक्षणस्य संसिद्धत्वात्। न ह्यन्यथा लक्षणमस्य कदापि स्यात् तस्य स्वभावस्य नित्यत्वाच्च। न च यतः समवायिहेतुसंयोगोऽपृथग्भावश्च भावानां युगपत् सम्भवति। पूर्व्वं हि

पूर्वोक्तं वैशेषिके यत्—"अयुतसिद्धानाम् आधार्य्याधारभूतानां यः सम्बन्ध इहेति प्रत्ययहेतुः स समवायः" इति। स नित्य इति समवायोऽविनाशी, सत्यपि समवायिनां द्रव्याणां नाशे समवायो

शुक्रार्त्तवसंयोगः पश्चादात्मादीनामित्यतः क्रमेण हेतुसंयोगादुत्तरं समवायः स्यात्तेन समवायिकारणानां संयोगनाशात् कार्य्यघटादेर्नाशेऽपि घटादावनित्यानित्योभयविधसमवायेनैव स्वस्वरूपप्रकाशात् तदात्मकस्वभावकार्य्य स्वलक्षणस्य तदपरापरसाधारणत्वान्नित्यः साधारणे तन्मात्रे त्वनित्यः । न हि जन्मवत्त्वाकार्य्यस्वरूपेण सम्पद्यते किञ्चित् । तस्माद्भावानां जन्मरूपः समवायोऽयं स्वभावो नित्यः ।

ननु जातोत्तरकालमप्याधानीयगुणादीनां योगोऽप्येवं भवति न हि तद्गुणाद्याधानं विना तदवस्थागमनं स्यादतः सोऽपि नित्यः सम्भवतु नात्यतिरिक्तो वास्तु, इत्यत आह, यत्रेत्यादि ।—हि यस्मात् यत्र द्रव्य वर्त्तते तत्र द्रव्ये गुणो गुणादिर्गोण्यात् नानियत एवेति, द्रव्याणां हि गुणा विना भूतत्वस्वभावं तेन च समवायोऽनपायीति एका नित्याऽऽश्रेया गुणास्त्वनियता धनबान्धवादिक्षयलाभादिना दुःखसुखादीनां वह्निजलादीनामिवोष्णयशीतादीनाञ्च मुहुर्म्मुहुर्योगायोगयोः पुरुष दर्शनात् मुहुर्म्मुहुर्भङ्गोत्पत्तिभ्यां तौ तु योगायोगौ न नित्याविति । यावत् समवायिहेतूनां द्रव्याणां संयोगात् कार्य्यं समवायस्योत्पत्तियुक्तिरूपैव तत्कार्य्य हि समवायस्य योजना वर्त्तत एवेति । इत्यस्य सिद्धभावस्य अनुकूलव्यापारो जन्मार्थधात्वर्थस्तत्रातीतत्वादेरन्वयः । भवद्भूतभविष्यदितिभावत्रयाधाराः काला वर्त्तमानकालादयस्तदाधेयत्वाद्भावा अपि वर्त्तमानादयः स्युरिति समवायस्य नित्यत्वेऽपि तन्मात्रत्वनित्यत्वादुत्पत्तिः क्षणिका किंवा तदनुकूलव्यापाररूपा क्षणिका न तु समवायरूपेति तुल्यं वादिभिरस्माकमिति । अथ समवायो यद्यपृथक्त्वं तर्हि कथं समवायाख्योऽपरः पदार्थः स्वीक्रियतेऽतिरिक्तः ? पृथक्त्वाभावो हि खल्वपृथक्त्वं तच्चाभावविशेष एवेति सामान्यविशेषद्रव्यगुणकर्म्माभावा इति षडेव पदार्था भावाभावरूपेण द्विधा भवन्ति, इत्येवं वादिवितण्डिताण्डवं परमात्मात्रेयादिमहर्षिगणेन ज्ञानचक्षुषा समुपदिष्टार्थतत्त्वं ।विद्वद्भिः सान्निपातिकोन्मत्ततांडवमिव मन्यमानैर्नैवालोक्यते, वैतालिकत्वादिव येनोच्यते यत्रास्ति तद्वस्तु इति । तद्यथा—स भावो यो भवति, भू सत्तायामित्यस्य कृद्योगे निष्पन्नो भावशब्दः,

न विनश्यति, अत्र हेतुमाह, यत्र हीत्यादि ।—यत्र द्रव्यं नियतं नित्यं, यथा—आकाशं, न तत्र नित्य आकाशेऽनियतो विनाशी गुणः कश्चिदिति शेषः । एवं मन्यते—नित्ये व्योम्नि परिमाणमपि.

सत्ता पुनर्वर्त्तमानता चोत्पत्तिश्चेति द्विधा; तयोर्द्वयोरपि सत्तयोरत्र ग्रहणात् यो वा वर्त्तते चिरं यावत्प्रलयं वा भवन्नस्ति यो. यो वा भवति वर्त्तते वा कालं कियन्तमिति भावः। यो न भावः सोऽभाव इति, तस्माद् यो नास्ति न च भवति सोऽभावः, स च वस्तु इत्युन्मत्तवचनं, यथा खपुष्पं कूर्म्मलोम शशविषाणमित्यादि। यदि च नञर्थो विरोधस्तेन भावविपर्य्ययधर्म्मवान् अभावस्तदा भावेभ्यो नातिरिक्तः, सविपर्य्यया हि भावा भगवता सृज्यन्ते। तद् यथा आकाशस्य अप्रतिघातलक्षणेन विरुद्धप्रतिघातवन्तो मारुतज्योतिरब्भूमय इति। समीरणस्य सततं सर्व्वतश्चलत्वधर्म्मेण विरुद्धोर्द्ध्वज्वलनाधस्तिर्य्यग्गतिमन्दचलनरूपास्थिरत्वधर्म्मवन्तो ज्योतिरब्भूमयः, एवमव्यक्तस्पर्शगुणेन विरुद्धोष्णतैक्ष्ण्याश्रयो ज्योतिः। द्रवशीतस्निग्धमन्दसरसान्द्रमृदुपिच्छिलगुणानां वायोः क्रमात् सूक्ष्माव्यक्तस्पर्शरूक्षचलखरलघुखरविशदगुणैर्विरुद्धानामाश्रयो जलं, तथा वायोर्लघुसूक्ष्मचलगुणविरुद्धगुरुस्थूलगुणाश्रयो भूरिति। तथा ज्योतिषस्तीक्ष्णोष्णसूक्ष्मलघुरूक्षविशदगुणैर्विरुद्धानां मृदुशीतसान्द्रगुरुस्निग्धपिच्छिलगुणानामाश्रयो जलम्। मन्दाव्यक्तस्पर्शस्थूलगुरुखरकठिनास्थिरसान्द्रगन्धगुणानां तेजसस्तीक्ष्णोष्णसूक्ष्मलघुमसृणविशदोर्द्ध्वज्वलनविरुद्धानामाश्रयो भूरिति। जलस्य द्रवेण विरुद्धस्य कठिनस्य स्निग्धेन रूक्षस्य शीतेनानुष्णाशीतस्य सरेण स्थिरस्य मृदुना मन्दस्य पिच्छिलेन विशदस्यान्यस्याश्रयो भूरिति। आत्मनश्चैतन्यविरुद्धगुणानां सर्व्वेषामाश्रयाः खादयः। मनस्तु पाञ्चभौतिकत्वाभावाद् भूतगुणासत्त्वेन सत्त्वादिगुणमयत्वेन तद्विरुद्धगुणानां खादीनामात्मान्तानां विरोधित्वम्। कालस्य सर्व्वव्यापकत्वरूपपरममहत्परिमाणं प्रसिद्धमिति चैतन्यगुणैर्व्विरुद्धानामुक्तानां गुणानामाश्रयाः खादयात्ममनांसि। एवं दिशामपीति। परस्परविरुद्धगुणवन्ति नव द्रव्याणि भवन्ति। गुणाश्च शब्दस्पर्शरूपरसगन्धादयः; तेषां शब्दो बाध्यते सान्द्रस्थूलाभ्यां स्पर्शाभ्यां, स्पर्शो बाध्यतेऽप्रतिघातसौक्ष्म्येण, रूपं बाध्यते सान्द्रस्थूलाभ्यां, रसश्च ताभ्यां, गन्धश्चापि आवरकत्वात्। गुरुत्वं लाघवेन, स्निग्धत्वं रौक्ष्येण, शीतेनौष्ण्यं, मान्द्यं तीक्ष्णेण, स्थैर्य्यं सरेण, मार्द्दवं काठिन्येन, वैशद्य

तान्नित्यं, यथा द्रव्यधर्म्मस्याकाशगतं नित्यं तथा नित्ययोराकाशलक्षणयोः समवायलक्षणः सम्बन्धोऽपि नित्य एव, एवं तत्र समवायस्य नित्यत्वे सिद्धे एकरूपत्वात् समवायस्यान्यत्रापि

न, श्लक्ष्णत्वं खरत्वेन, सौक्ष्म्यं स्थौल्येन सान्द्रेण च। द्रवत्वं काठिन्येन सान्द्रेण च, चैतन्यं तमसा गुणेन, प्रवृत्तिर्निवृत्त्या, सुखं दुःखेन, द्वेष इच्छया, परत्वमपरत्वेन, युक्तिरयोगेनासंयोगाख्यपृथक्त्वेन बाध्यते। सङ्ख्याऽभ्यासेन, संयोगो विभागेन, पृथक्त्वं समवायेन, परिमाणमभ्यासेन, संस्कारः स्वभावेन। क्रियानिवृत्त्या सामान्यं विशेषेणेति परस्परं विरुद्धधर्म्माणो गुणाः क्रियाश्च कथं सम्भवन्ति समयं वस्तु चाभावाख्यमिति।

यदि वा नञ् अप्राशस्त्ये, तदा सर्व्वो भावः कचिदर्थे प्रशस्तः क्वचिदर्थेऽप्रशस्त इति भावातिरिक्तः कथमभावः? यत्रापि चाल्पार्थे विवक्ष्यते नञ्, तदापि अल्पत्वं किं क्रियाकरणे न्यूनत्वं किं धर्म्मवत्त्वे? तदपि स्वस्वक्रियायां परस्मान्न्यूनातिरिक्तत्वमस्ति; यथा मधुरो रसः सर्व्वांशेन कफं वर्द्धयति न वाऽम्लो लवणो वा, एवमन्यः सर्व्वो भावः। सादृश्यार्थो यदि नञ् वाच्यस्तदापि सादृश्यं भेदघटितं स्वीयबहुधर्म्मवत्त्वं, तत्र भेदः परकीयधर्म्मवत्त्वमित्यतो भावातिरिक्तः कथमभावः? अन्यत्वं यदि नञर्थस्तर्हि चान्यत्वमपि भेदमात्रं, तच्च तादात्म्येन संसर्गेणानवस्थानम्, अवस्थानं पुनर्यदि आधाराधेययोर्द्रव्ययोः संयोगः द्रव्यगुणयोरेकत्वानेकत्वे समवायपृथक्त्वे योगो गुणो यश्च पर्य्याप्तिः सा युक्तिर्गुणकर्म्मणोश्च पर्य्याप्तिर्गुणसामान्ययोश्च गुणविशेषयोश्च सैव समवायः आधाराधेयभावेन वर्त्तनमुच्यते तदा तच्च वैशिष्ट्यं यदुच्यते सत्तेति तत्तु सामान्यं वा विशेषो वा स्यात् सत्तातिरिक्तयोः सामान्यविशेषयोर्द्रव्यगुणकर्म्मस्वन्तर्भावेण वर्त्तनरूपयोः सामान्यविशेषयोर्द्रव्यगुणकर्म्मसमवायातिरिक्तत्वात्। त्रिकालातीतत्वावस्थाने हि ब्रह्मणोऽस्तित्वं प्रयोगकर्त्तुरभावेन भूते च सर्गे त्रिकालज्ञनमपुरुषेणोच्यते सृष्टेः पूर्व्वं ब्रह्मासीदिति, तदापि कालस्तद्ब्रह्मणः सर्वकलनाप्रभावः परन्तु जन्मिनामभावेन भवद्भूतभविष्यत्त्वेन व्यपदेशस्तस्य स्यादिति, तादात्म्येनाधाराधेयभावेनापि वर्त्तनलक्षणावस्थानरूपाभेदोऽपि चाधिको भावः स्याद्दुरीकार्य्यः। एवं तादात्म्यसंसर्गेणानवस्थानं भेद इति पक्षेऽप्युक्तो दोष इत्यतः कथमभावोऽतिरिक्तः स्यात्? इत्थञ्च न गौर्नर इत्यादौ भेदश्चतुष्पाच्छृङ्गलाङ्गूलादिकमङ्गं द्विपदादिनरात्। अयं नरपादो न गोः पादः इत्यादौ विलक्षणाकृतिर्वा

नित्यत्वमेव, न चावयवद्रव्यनाशे समवायविनाशः, यथा गोव्यक्तिविनाशे गोत्वस्य सामान्यस्य न विनाशः, नित्यत्वे च समवायस्य ते ते पार्थिवद्रव्यावयवास्तत्र व्यञ्जका भवन्ति सामान्यस्येव

परिमाणविशेषो वा वैलक्षण्यं गुणो वा भेदः। आकृतिपरिमाणविशेषो न गोः पाद इत्यादौ गोपदस्य पाञ्चभौतिकत्वं भेदः; नायं स गौरित्यत्रापि एतद्गवैतद्गवस्यास्ति कश्चिद्भेदको गुणकर्म्माकृतिविशेषः, स एव किं भेदस्तस्यैकत्वे भेदभेदकयोर्भेदात् कस्य भवत्यापत्तिः; क उ कर्म्मणोरेकत्वे क उ प्रयोगेऽपि कर्म्मणोर्भेदेऽपि नात्र भेदः कर्म्म तत्र तद्गव इति भेदः क्रिया॰ तदनुकूलव्यापारशाली भेदक इत्यनुभवादिति चेत्; उच्यते—तद्गवे यः कश्चिदस्ति गुणकर्म्माकृतिविशेषैरेतद्गवस्य विशेषः स च भेदक एव विशेषाख्यो भावो "विशेषस्तु पृथक्त्वकृत्" इति विशेषस्य लक्षणेन लभ्यते हि पृथक्त्वं गुणो भेदः पृथक्त्वकृत् भेदको विशेषाख्यो भावः। तस्माद्भेदः पृथक्त्वाख्यो गुण एव नातिरिक्तः। तेन न भावोऽभाव इति चतुर्णां भावानां मध्ये यो भावो यस्माद्भावात् पृथक्त्ववान् सोऽभावः पृथक्त्वमात्रं वैलक्षण्यं भेद इति नञा बोध्यते न तु त्रिविधपृथक्त्वमेवाभावः। तदर्थं द्योतकनञः समासासम्भवात्। नञ्तत्पुरुषो हि तुल्याधिकरणार्थद्योतकत्व एव न तु भेदार्थे। तथा हि न ब्राह्मण इति विग्रह एवाब्राह्मण इति समासो नञा द्योत्यभेदाश्रयस्य तादात्म्याश्रयो ब्राह्मण इत्यनुभवात्। न हि भवति नञ्द्योत्यस्य भेदस्यान्वयः प्रथमान्तब्राह्मणपदार्थे तादात्म्येन। न हि भेदो ब्राह्मण इति। यदि च ब्राह्मणस्य भेद इति विग्रहे षष्ठ्यन्तब्राह्मणेन सह नञ समस्यते, तर्हि पृथङ् नञ्समासमूत्रप्रणयनमनर्थकं स्यात् तच्चेदिष्यते तदा उत्तरपदस्य सम्बन्धपर्य्यन्तार्थं वृत्त्या गौणत्वं नासौ ब्राह्मणः अगौरः अगौरी कालीत्यादौ सर्व्वनामसंज्ञासामानाधिकरण्यञ्च व्याहन्यते। एवं सति द्रव्यादिचतुर्भावान्यतमभावभिन्नोऽन्यतमो भावोऽभावः; स च यत्र वाक्ये तादात्म्येनान्वेतुमर्हति, अथ प्रसज्यपदार्थतया भासते, तत्र नञा यत् पृथक्त्ववत्तया प्रतिपाद्यते तत् पृथक्त्वमन्योन्याभावः भावप्रधाननिर्द्देशे। यथा न ब्राह्मणो राजा इत्यादौ समानविभक्तिमत्त्वेन तादात्म्येन नान्वेतुं प्रसज्यतया भासमानो ब्राह्मणपदार्थो राजपदार्थेन, तथा चात्र ब्राह्मणात् पृथक्त्वगुणशाली राजेति गम्यते। राज्ञि पृथक्त्वस्य प्रतियोगी ब्राह्मणः,

व्यक्तयः। अन्यैस्तु नित्यानित्यभेदेन द्विविधः समवायो व्याख्यातः, अयञ्च ग्रन्थो भूम्यादीनां गुणै-र्य्य यः सम्बन्धः तस्यैव यथाश्रुतस्य प्रतिपादक इत्यादि व्याख्यातम्, तत्तु न व्यापकं नापि वैशेषिकमतानुयायीति नेह प्रपञ्चितम्॥ २२॥

प्रतियोगितावच्छेदकश्च पृथक्त्वकृत् विशेषो मनुष्यत्वसामान्यापेक्षो ब्राह्मणत्वम्। सति हि सामान्येन ग्रहे विशेषणग्रह एव पृथक्त्वग्रहे हेतुः। स चान्योन्याभावस्त्रिविधः—सजातीयप्रतियोगिको विजातीयप्रतियोगिको धर्म्मधर्म्मिकश्च। तद् यथा—न ब्राह्मण इत्यादौ सजातीयत्वेन क्षत्रियादिमनुष्यो नञा प्रत्याख्यते न तु गवादिः। नगात् पृथक् पशुरित्यादौ विजातीयत्वेन पृथक्शब्दः पश्वादिप्रत्यायको द्रव्यत्वसामान्यापेक्षपशुत्वादिप्रतियोगिताकत्वात्। पुरुषो न हस्तो घटात् पृथक् तद्रूपमित्यादौ धर्म्मधर्म्मिणोः पृथक्त्वात् धर्म्मधर्म्मिणोः परस्परं हि भावत्वप्रमेयत्ववाच्यत्वादिसामान्येन सत्यपि सजातीयत्वे सजातीयत्वव्यवहारो विलक्षणसामान्यधर्म्मेणैव न तु सामान्यमात्रधर्म्मेण विजातीयत्वानुपपत्तेः। सर्व्वो हि सर्व्वजातीयस्तथात्वे स्यात्। धर्म्मधर्म्मिणोश्च विजातीयत्वेऽपि समवेतत्वेनैकत्वेन ग्राह्यत्व-विजातीयत्व-व्यवहारो न तु सजातीयत्वव्यवहारः। यत्र च वाक्ये आधाराधेयभावापन्नयोः पदार्थविषयाभासमानयोराधाराधेयताघटकसंसर्गविषया प्रसज्योऽप्रसज्यो वा, यस्तु भावस्तयोर्मध्ये प्रसज्यस्य संसर्गविषया भासमानस्य भावस्य विरोधिनि भावेऽप्रसज्यस्य च आधाराधेयताघटकसंसर्गतया प्रसज्ये भावे यत्पृथक्त्वं तत्संसर्गाभावः स च विरोधिप्रसज्यश्च भाव आधाराधेयताघटकसंसर्गस्तत्र संसर्गाभावतया ग्राह्यं तत् पृथक्त्वञ्च संसर्गाभाव इति। स च संसर्गाभावस्त्रिविधः प्रागभावध्वंसात्यन्ताभावभेदात्। तत्र प्रागुत्पत्तिकालेन सह भावस्य द्रव्यस्याधाराधेयत्वे संयोगो गुणकर्म्मणोः परम्परया समवायिसंयोगो वा संसर्गः प्रसज्यस्तस्य। तद्भावोत्पत्तेः पूर्व्वकालेन सह आधाराधेयतायां विरोधिविभागोऽयोगरूपपृथक्त्वं परम्परया समवायिविभागो वा पृथक्त्वं प्रागभावः। यथा घटो रूपञ्च श्वो भविष्यतीत्यादौ घटरूपयोरुत्पत्तिकालपरदिनात् पूर्व्वकाले वर्त्तमानेन दिनेन सह घटस्य संयोगासम्भवात् विभागः रूपस्य चासंयोगाख्यपृथक्त्वं प्रागभावो घटरूपयोरस्मिन् दिने। अनेन दिनेन सह घटरूपीयविभागपृथक्त्वयोर्यद्वैलक्षण्यं स प्रागभावः। ध्वंस पुनरुत्पत्त्युत्तरकालेन सह तत्तल्लक्षणाधाराधेयतायां विरोधो विभागपृथक्त्वान्यतररूपः संसर्गो वैलक्षण्यं ध्वंसः। यथा घटो नष्टः रूपं नश्यति इत्यादि। यद्वा उत्पत्तेः पूर्व्वकाले यः समवायिकारणानां समवाययुक्तत्वान्यतरलक्षणोत्पत्तिविपर्य्ययपृथक्त्वं प्रागभावस्तत्र च वैलक्षण्यं प्रागभावः। उत्पत्तेरुत्तरकाले च ध्वंसः। आमे हि घटे श्यामगुणस्य

पाकात् पृथक्त्वारम्भको दृश्यते। तत्र यस्य भावो यस्तस्य प्रतियोगी स एव तत्त्वञ्च प्रतियोगितावच्छेदकम्। संयोगादेश्चोत्पत्तिः संयोगिषु समवाय-युक्तान्यतरः समवायस्यानित्यत्वात्। व्याख्यातञ्च स नित्य इत्यादिना। वृत्त्यभावस्तु खलु वर्त्तमाने सति काले कालेतरपदाधारे यस्याधेयतया वृत्तौ प्रसज्यो यः संयोगसमवाययुक्तान्यतमः संसर्गस्तस्य विरोधी विभागानेकत्वासंयोगरूपपृथक्त्वान्यतरो भावोऽत्यन्ताभावो वैलक्षण्यं तु तत्त्वमत्यन्ताभावस्याहुरन्ये। यथा अत्र इह भूतले घटो नास्ती-त्यादौ भूतलनिष्ठाधिकरणतानिरूपितघटनिष्ठाधेयताघटकसंसर्गतया प्रसज्यस्य संयोगस्य विरोधी भूतलघटयोर्विभागोऽस्तीत्यर्थः। इह घटे नीलरूपं नास्तीत्यादौ घटरूपयोः समवायस्य विरोधि पृथक्त्वमस्तीत्यर्थः। गवि लाङ्गूलं नास्ति इत्यादौ समवायविरोधी गोलाङ्गूलयोः पृथक्त्वं विभागो वास्तीत्यर्थः। अस्मिन् पुरुषे सुखं नास्तीत्यादौ पुरुषसुखयोर्योगविरोधि असंयोगत्वमस्तीति। अप्रसज्यस्य तु संसर्गस्य वृत्तेरभावो यथा; इह भूतले समवायेन घटो नास्तीत्यादौ भूतलघटयोः समवायस्याप्रसज्यस्य संसर्गस्य विरोधिवृत्तिनियामकः संयोग इति संयोगोऽत्रात्यन्ताभावः। इह घटे संयोगेन रूपं नास्तीत्यादौ अप्रसज्यसंयोगस्य विरोधी प्रसक्तोऽस्ति समवाय इति समवायोऽत्रात्यन्ताभावः। रूपे संयोगेन रूपत्वं नास्तीत्यादौ प्रसज्यस्य संयोगस्य विरोधी प्रसक्तोऽस्ति समवाय इत्यपि समवायोऽत्रा-त्यन्ताभावः। पक्के घटे श्यामो नास्तीत्यादौ समवायेन प्रसक्तस्य श्यामस्य अपायात् प्रसज्यस्य समवायस्य विरोधी असंयोगाख्यपृथक्त्वम् अत्यन्ताभावः। एवमामघटे लौहित्यं नास्तीत्यादौ समवायेन प्रसज्यस्य लौहित्यस्य निषेधात् प्रसज्यस्य समवायस्य विरोधी असंयोगः पृथक्त्वम्। आकाशस्य पुष्पं नास्तीत्यादौ चैवमेव बोध्यम्। पर्युदासनञा अभावबोधने प्रसज्यत्व नापेक्ष्यते तत्समभिव्याहृतपदार्थेतरवस्त्ववस्तुद्योतकत्वात्।

अत एव नञ्निपातो द्विविधः प्रसज्यप्रतिषेधार्थकः पर्युदासार्थकश्च। प्रतियोगिनः प्रसक्तिं कृत्वा यत् प्रतिषिध्यते स प्रसज्यप्रतिषेधः। परितः सर्वतः प्रसिद्धाप्रसिद्धिभ्यामुदास्यते यत् प्रतिषिध्यते सः पर्युदासः। क्रियायोगे प्रसज्यप्रतिषेधार्थो नञ्; अन्यथा ग्रामं न गच्छतीत्यादौ ग्रामादेः कर्मत्वादिकारकत्वानुपपत्तिः। नामयोगे धातुयोगे पर्युदासो यथा; अब्राह्मणो न रूपमाकाशे आकाशं न पश्यत्यन्ध

इत्यादौ पर्य्युदासः। अभाव इत्यत्र च नञ् उभयार्थे। अथ पटोऽयं न पटो घटत्वेनेत्यादौ घटत्वविशिष्टपट-पटत्वावच्छिन्नपटयोस्तादात्म्येन अन्वयासिद्धिः प्रसज्यत्वाभावात्। सति हि सामान्येन तद्ग्रहे तत्पृथक्त्व ग्रहस्तादात्म्यग्रहेणैव। न ह्यप्रसज्यघटत्वविशिष्टपटपटत्वावच्छिन्नपटयोः। सामान्यं पटत्व घटत्वविशिष्टपटपटत्वविशिष्टपटयोः पृथक्त्वग्रहो भावश्चेति। परन्तु घटत्वविशिष्टनियामकप्रसिद्धसंसर्गस्य समवायस्य विरोधिघटत्वपटयोरयोगाख्यं पृथक्त्वं तच्चाद्रव्यत्वाद् घटत्वस्य विभागभिन्नमेव तदेव नञा द्योत्यं स्यात् व्यधिकरणधर्म्मावच्छिन्नाभावो यः परैरुच्यते स संसर्गाभाव एव पर्य्युदासनञा व्यधिकरणधर्म्मस्य प्रतिषेधात् स धर्म्ममात्रसंसर्गस्य विधानात् अत्यन्ताभाव इति। प्रतियोगितावच्छेदकस्तु समवायत्वरूपधर्म्माभावात् समवायिसमुदाय एव धर्म्मधर्म्मिसमवायस्य तस्य तस्य साधारणसमवायाद् व्यवच्छेदकः, एवं सति घटत्वनिष्ठवृत्तिनियामकतया प्रसज्यसमवायसंसर्गप्रतियोगिताकासंयोग-लक्षणपृथक्त्वशाली पट इति बोधः। न तु घटत्वप्रतियोगिकभेदवत् पटत्व शाली पट इति बोधः। भेदवत्तया बोधे तादात्म्ये नान्वयप्रसज्यताजनक-प्रयोगस्य हेतुत्वात्। न वा पटत्वावच्छिन्नप्रतियोगिताकपृथक्त्वाश्रयो घटत्व-विशिष्टो घट इति यावदिति बोधः। निर्घटे भूतले घटत्वेन पटो नास्तीत्यादौ पटत्वावच्छिन्नप्रतियोगिताकभेदवद्घटत्वविशिष्टो भूतलेऽस्तीति बोधानुदयात् निर्घटत्वात् अस्तीति कर्त्तृविहितनिङन्तपदस्य घटत्वेनेति विशिष्टार्थतृतीयान्तेन सहान्वयासम्भवाच्च। घटत्वनिष्ठाधेयतानियामकतया प्रसज्यसमवायस्य प्रतिषेधात्। समवायप्रतियोगिकभेदवदयोगाख्यपृथक्त्ववान् पटो निर्घटे भूतलेऽस्तीति बोधो निर्दोषः।

आन्वीक्षिकीन्याये चाप्युक्तं गौतमेन—"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि।" इति प्रमाणनिर्देशसूत्रस्यानुयोगसूत्रम्। "न चतुष्ट्वमैतिह्या-र्थापत्तिसम्भवाभावप्रामाण्यात्।" अस्य वात्स्यायनभाष्यम्,—"न चत्वार्य्येव प्रमाणानि। किं तर्हि? ऐतिह्यमर्थापत्तिः सम्भवोऽभाव इत्येतान्यपि प्रमाणानीति ह्येचुरिति। अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्य्यमैतिह्यम्। अर्थादापत्तिरर्थापत्तिः। आपत्तिः प्राप्तिः प्रसङ्गः। यत्राभिधीयमानेऽर्थे यो-ऽन्योऽर्थः प्रसज्यते सोऽर्थापत्तिः। यथा मेघेष्वसत्सु वृष्टिर्न भवतीति। किमत्र प्रसज्यते? सत्सु भवतीति। सम्भवो नाम अविनाभाविनोऽर्थस्य सत्ताग्रहणा-दन्यस्य सत्ताग्रहणम्। यथा द्रोणस्य सत्ताग्रहणादाढ़कस्य सत्ताग्रहणम्।

आढ़कस्य सत्ताग्रहणात् प्रस्थस्येति। अभावो विरोधी। अभूत भूतस्य। अविद्यमानं वर्षकर्म विद्यमानस्य वाय्वभ्रसंयोगस्य प्रतिपादकम्। विधारके हि वाय्वभ्रसंयोगे गुरुत्वादपां पतनकर्म्म न भवतीति। सत्यमेतान्यपि प्रमाणानि न तु प्रमाणान्तराणि। प्रमाणान्तराणि च मन्यमानेन प्रतिषेध उच्यते। सोऽयम्।—शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवा-भावानर्थान्तरभावाच्चाप्रतिषेधः। अनुपपन्नः प्रतिषेधः। कथम्? आप्तोप-देशः शब्द इति. न च शब्दलक्षणमैतिह्याद्व्यावर्त्तते। सोऽयं भेदः सामान्यात् संगृह्यते इति। प्रत्यक्षेणाप्रत्यक्षस्य सम्बन्धस्य प्रतिपत्तिरनुमानं तथा चार्थापत्तिसम्भवाभावाः। वाक्यार्थसम्प्रत्ययेनानभिहितस्यार्थस्य प्रत्य-नीकभावाद्ग्रहणमर्थापत्तिरनुमानमेव। अविनाभाववृत्त्या च सम्बद्धयोः समु-दाय-समुदायिनोः समुदायेनेतरस्य ग्रहणं सम्भवः। तदप्यनुमानमेव। अस्मिन् सतीदं नोपपद्यत इति विरोधित्वे प्रसिद्धे कार्य्यानुत्पत्त्या कारणस्य प्रतिबन्धक-मनुमीयत इति। सोऽयं यथार्थमेव प्रमाणोद्देश इति। सत्यमेतानि च प्रमाणानि न तु प्रमाणान्तराणीत्युक्तम्।" अथार्थापत्त्यादीनां प्रामाण्यपरीक्षानन्तर-मभावस्य प्रामाण्यं परीक्षितं तत्रैव। तद्यथा भाष्यम्—"अभावस्य तर्हि प्रमाण-भावाभ्यनुज्ञा नोपपद्यते। कथमिति?" "नाभावप्रामाण्यं प्रमेयासिद्धेः।" अस्य भाष्यम्—"अभावस्य भूयसि प्रमेये लोकसिद्धेवजात्यादुच्यते नाभावप्रामाण्यं प्रमेयासिद्धेरिति।" भाष्यस्यास्यानुव्याख्यानम्।—अभावस्य भावविरोधिनो भावस्य भूयसि प्रमेये सिद्धे सत्यपि भावानां भावत्ववैजात्यादवस्तुत्वादुच्यते नाभावप्रामाण्यं प्रमेयासिद्धेरिति। अथ भाष्यम्।—"अध्यायमथ बहुत्वादर्थैक-देश उदाह्रियते" "लक्षितेष्वलक्षणलक्षितत्वात् अलक्षितानां तत्प्रमेयासिद्धेः।" सूत्रस्यास्य भाष्यम्।—"तस्याभावस्य सिध्यति प्रमेयम्। कथम्? लक्षितेषु वासःस्वनुपादेयेषूपादेयानामलक्षितानामलक्षणलक्षितत्वाल्लक्षणाभावेन लक्षित-त्वादिति। उभयसन्निधावलक्षितानि वासांस्यानयेति प्रयुक्तो येषु वासःसु लक्षणानि न भवन्ति तानि लक्षणाभावेन प्रतिपद्यते प्रतिपद्य चानयति प्रतिपत्तिहेतुश्च प्रमाणमिति।" भाष्यस्यास्यानुव्याख्यानम्।—तस्याभावस्य प्रमेयं सिध्यति, कथमिति प्रश्नः। तत्रोत्तरं लक्षितेष्वित्यादि। वासःसु वस्त्रेषु खल्वग्राह्येषु ग्रहणयोग्यलक्षणरहितेषु तल्लक्षणेन लक्षितेषु उपादेयानां ग्राह्याणां वस्त्राणां तल्लक्षणेनाग्राह्यवस्त्रलक्षणेन अलक्षितानामलक्षणेनाग्राह्यवस्त्र-लक्षणभिन्नलक्षणेन खल्वग्राह्यवस्त्रलक्षणाभावेन लक्षितत्वात्। तस्याभावस्य

अग्राह्यवस्त्रलक्षणाभावरूपस्य ग्राह्यवस्त्रलक्षणस्य ग्राह्याणां वस्त्राणां प्रमेयाणां सिद्धिरिति। तत्रोभयस्य ग्राह्याग्राह्यस्य वस्त्रस्य सन्निधाने सति कश्चित्पुरुषं कश्चित् पुमान् प्रेरयति, अलक्षितानि वासांस्यानयेति। अलक्षितानि ग्रहणयोग्यत्वलक्षणाभाववन्ति वस्त्राण्यानयेति। इत्येवं प्रयुक्तः प्रेरितः पुरुषो येषु वासःसु ग्राह्यलक्षणानि न भवन्ति तानि लक्षणाभावेन ग्राह्यलक्षणेतर-लक्षणेन प्रतिपद्यते नेमानि ग्रहणयोग्यलक्षणानीति जानीते; ज्ञात्वा तान्या-नयति। ग्राह्यलक्षणभिन्नलक्षणमभाव एव तद् ग्राह्यवस्त्रप्रतिपत्तिहेतुः प्रमाणमेवेति। कस्यचिद् ग्राह्यं लोहितवस्त्रं यन्न लोहितं तदानयेति प्रेरितो लोहितरहितं नीलादिकमानयतीति भावः। अत एवादिवचनमुपन्यस्य समाधत्ते। "असत्यर्थे नाभाव इति चेन्नान्यत्र लक्षणोपपत्तेः।" अस्य भाष्यम्—"यत्र भूत्वा किञ्चिन्न भवति तत्र तस्याभाव उपपद्यते। अलक्षितेषु च वासःसु लक्षणानि भूत्वा (लक्षितेषु) न भवन्ति तस्मात् तेषु लक्षणाभावोऽनुपपन्न इति चेत् न अन्यलक्षणोप-पत्तेः। यथायमन्येषु वासःसु लक्षणानामुपपत्तिं पश्यति, नैवमलक्षितेषु। सोऽयं लक्षणाभावं पश्यन्नभावेनार्थं प्रतिपद्यते इति।" भाष्यस्यास्यानुव्याख्यानम्। न सत् असदिति अवस्तुभूतेऽर्थेऽभिधेयेऽभावशब्दो न वर्त्तते। कथं? तत् विवृणोति भाष्येण यत्रेत्यादि। यत्र स्थले किञ्चिद्वस्तु भूत्वा पुनः किञ्चिन्न भवति तत्र स्थले तस्य वस्तुनोऽसद्भावोऽभाव उपपद्यते। यथामे फले जाय-माने रूपं श्यामो भूत्वा पक्के न भवतीत्यभावः श्यामस्य। वासःसु पुनः अलक्षितेषु अग्राह्यलक्षणानि भूत्वा किञ्चिन्न भवतीत्येवं न दृश्यते, लक्षितेषु वस्त्रेषु लक्षणानि न भवन्ति, भवन्ति चालक्षणानीति। तस्मादेकस्मिन् भूत्वाऽन्यस्मिन्न भवतीत्यस्मात् तेषु लक्षितेषु ग्राह्येषु वस्त्रेषु लक्षणाभावोऽनुपपन्न इति। असति खल्ववस्तुनि अर्थेऽभिधेयेऽभावशब्दो न वर्त्तते इति चेत्? नान्यलक्षणोपपत्तेः। यत्रैकस्मिन् भूत्वा तत्रैव पुनस्तत् किञ्चिन्न भवतीति वस्तुनोऽसद्भावमात्रमभावो नास्ति खल्ववस्तुन्यर्थेऽभिधेयेऽभावशब्दो न वर्त्तते इति चेन्न। कस्मात्? अन्यलक्षणोपपत्तेः।

पर्य्युदासनञा भावादन्यः अभाव इति व्युत्पत्त्या समभिव्याहृत-पदार्थादन्यलक्षणो वस्तुभूतश्चावस्तुभूतश्चेत्युभयस्योपपत्तेः। यथा "अनचि च" इति सूत्रे पर्य्युदासनञा खल्वचोऽन्यस्मिन् वस्तुभूते हलि चावस्तुभूते-ऽवसाने च य र स्थाने रेफवर्ज्जं द्वे रूपे वा भवत इति। दद्ध्यत्र दध्यत्रेत्यादौ हलि, वाक्, वागित्यादाववसाने। तथैवायं

कश्चित् वस्त्रानेता पुमान् अलोहितं वस्त्रमानयेति नियुक्तोऽन्येषु वासःसु लक्षणानामुपपत्तिं लोहितान्यलक्षणानामनुपपत्तिमिदं वासो न लोहितमित्येवमुपपत्तिं पश्यति। नैवं लक्षितेषु। दृश्यमानेषु लोहितेषु वासःसु तथा खल्वलोहितलक्षणोपपत्तिं ग्रहणयोग्यतां न पश्यति। सोऽयं खलु स एषोऽलोहितवस्त्रानयने नियुक्तः पुमान् अलोहितलक्षणाभावं लोहितलक्षणं पश्यन्नभावेन खल्वलोहिताभावेन लोहितेनार्थं रक्तवस्त्रं नेतुमयोग्य प्रतिपद्यते उपलभते; इति तल्लक्षणाभावज्ञानेन एतल्लोहितं वस्त्रं ग्रहणयोग्यत्वाभाववदित्यनुमीयत इति एतद्वस्त्रमग्राह्यत्वेन प्रमेयमभावस्येति। अवस्तुभूतस्वभावोऽपदार्थत्वादप्रमेयत्वात् न प्रमाणमिति तदुदाहरणमिह दर्शितमिति। अत्र वादिप्रदर्शितदोषमाह। "तत्सिद्धेरलक्षितेष्वहेतुः।" सूत्रस्यास्य भाष्यम्। "तेषु वासःसु लक्षितेषु सिद्धिर्विद्यमानता येषां भवति न तेषामभावो लक्षणानाम्। यानि च लक्षितेषु विद्यन्ते लक्षणानि तेषामलक्षितेष्वभाव इत्यहेतुः। यानि खलु भवन्ति तेषामभावो व्याहत इति।" भाष्यस्य चास्यानुव्याख्यानमिदम्।— नन्वसति सति च वस्तुन्यभावशब्दो वर्ततेऽन्यलक्षणोपपत्तेरिति हेतुरहेतुः हेत्वाभासः। कस्मात्? अलक्षितेषु तत्सिद्धेः। कथमलक्षितेषु तत्सिद्धिरित्यत आह। तेष्वित्यादि। तेषु लक्षितेषु वासःसु खल्वलोहितेषु सिद्धिः अलोहितस्य विद्यमानता येषां लक्षणानामलोहितस्थूलसूत्रनिर्म्मितत्वादिरूपाणां भवति तेषु लक्षितेषु खल्वलोहितस्थूलसूत्रनिर्म्मितवासःसु अलक्षितलक्षणानां लोहितसूक्ष्मसूत्रनिर्म्मितवस्त्रलक्षणानां नाभावोऽस्ति। तर्हि केषामभावः कुत्रास्तीत्यत आह। यानि चेत्यादि। यानि च लक्षणानि लक्षितेषु अलोहितस्थूलसूत्रनिर्म्मितेषु वस्त्रेषु खल्वानेतव्यमुपादेयेषु अलोहितस्थूलसूत्रनिर्म्माणादीनि विद्यन्ते तेषां लक्षणानामलक्षितेषु लोहितसूक्ष्मसूत्रनिर्म्मितेषु अभावोऽस्तीति तस्मादहेतुरन्यलक्षणोपपत्तेरिति हेतुः। कस्मात् खल्वलोहित्यादीनामभावो लोहितेषु नाभाव उच्यते? इत्यत आह यानि खल्वित्यादि; यानि वस्तूनि खलु भवन्ति तानि भावाः, यानि भूत्वा न भवन्ति तेषां सोऽभावः, स चात्र व्याहत इत्यतोऽन्यलक्षणोपपत्तेरिति हेतुरहेतुः। अत्र सिद्धान्तमाह।—"न लक्षणावस्थितापेक्षसिद्धेः।" सूत्रस्यास्य भाष्यम्।—"न ब्रूमो यानि लक्षणानि भवन्ति तेषामभाव इति। किन्तु केषुचिल्लक्षणान्यवस्थितानि, अनवस्थितानि केषुचित् अपेक्षमाणो येषु लक्षणानां भावं न पश्यति तानि लक्षणाभावेन प्रतिपद्यते इति।" भाष्यस्यास्यानुव्याख्यानम्।—न खलु वयमेवं ब्रूमः।

यानि लक्षणानि भवन्ति भूत्वा न भवन्तीति तेषामभाव इत्येवं वयं न ब्रूमः । किन्तु ब्रवीषीति तदुच्यते । किन्त्वित्यादि । यः पुमान् केषुचित् लक्षणान्यवस्थितानि केषुचिदनवस्थितानि पश्यन् येषु वस्तुषु लक्षणानां भावं विद्यमानतां न पश्यति स तानि वस्तूनि लक्षणाभावेन तेन प्रतिपद्यते अनुमीयते तानि वस्तूनि तल्लक्षणाभावस्य प्रमेयाणि भवन्ति । इति लक्षणाव-स्थितवस्त्वपेक्षया खल्वभावस्य सिद्धेरन्यलक्षणोपपत्तेरिति हेतुर्नाहेतुरिति । "प्रागुत्पत्तेरभावोपपत्तेश्च ।" सूत्रस्यास्य भाष्यम् ।—"अभावद्वैतं खलु भवति । प्राक् चोत्पत्तेरविद्यमानता, उत्पन्नस्य चात्मनो हानादविद्यमानता । तत्र अलक्षितेषु वासःसु प्रागुत्पत्तेरविद्यमानतालक्षणो लक्षणानामभावो नेतर इति ।" भाष्यस्यास्यानुव्याख्यानम् ।—अन्यलक्षणोपपत्तेरिति वचनेन वैलक्षण्यं वस्तूना-मभावो दर्शितः । लक्षितेष्वलक्षणलक्षितत्वादलक्षितानामित्यादुक्तरूपेण । लक्षितेष्वलक्षितानां लक्षणाभाव एव वैलक्षण्यं तदेकेनोदाहरणेनान्योन्या-भावात्यन्ताभावौ द्वौ प्रदर्शितौ । अलक्षितानां वाससां लक्षणतो वैलक्षण्यं पृथक्त्वं नाम गुणो लक्षितेषु वासःसु । "पृथगन्यदित्यनर्थान्तरम्" इति कणाद-सूत्रम् । "पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता" इति चरकेणोक्तम् । तथा च । लक्षितेषु वासःस्वलक्षितानां वाससां लक्षणानि न सन्तीदत्यन्ताभावः । स चापीह पृथक्त्वम् । वाससां ह्यलक्षितानां तल्लक्षणैः सम्बन्धः समवायः स खल्वपृथग्भावः सम्प्रयोगाख्यपृथक्त्वविपर्य्ययो मेलको भावः । तेषा-मलक्षितवासोलक्षणानां लक्षितवासःसु तत्समवायसम्बन्धप्रतिषेध एव समवायविपर्य्ययस्त्वयोगाख्यः पृथक्त्वमेवेति । इत्येवं द्वावभावावुपपाद्य प्राग-भाव उपपाद्यते । प्रागुत्पत्तेरभावोपपत्तेश्चेति । नन्वेवमस्तु अन्योन्याभावा-त्यन्ताभावयोर्वस्तुभूतयोः प्रमेयसिद्धिराभ्यामन्यौ चाभावौ प्रागभावध्वंसौ प्रागुत्पत्तेर्भावानामुत्पन्नानामुत्तरकालञ्च दृश्येते तयोः प्रमेयं कथं सिध्यतीत्यत आह भाष्यम् । अभावद्वैतमित्यादि । द्वैतं द्वितया वर्त्तते यत्तद् द्वैतम् । तद्यथा प्राक् चेत्यादि । प्रागुत्पत्तेर्भावस्य या चाविद्यमानता अवर्त्तनं स प्रागभावः । उत्पन्नस्य भावस्यात्मनः स्वस्य सद्भावहेतोर्हानात् त्यागादविद्य-मानता अवर्त्तनं स ध्वंस इति, द्वैतमभावस्य । तदुदाहरति । अलोहितानि वासांस्यानयेति प्रेरणे तत्रालक्षितेषु वासःसु लोहितेषु प्रागुत्पत्तेर्जन्मनः पूर्व्वकाले यदवर्त्तनं कार्य्यरूपेण समवायिकारणानां वर्त्तनाभावः स खलु सम-वायिकारणानां स्वस्वरूपेण वर्त्तनं पृथक् पृथक् तत्तस्य कार्य्यस्य प्रागभावः ।

स खलु यद्‌यल्लक्षणानि वासांसि भविष्यन्ति तेषां समवायिकारण-समवायविपर्य्ययः खल्वयोगाख्यं पृथक्त्वं प्रागुत्पत्तेः काले वर्त्तत इति पृथग्भावो गुण एवाविद्यमानताल्लक्षणानामभावः प्राग्भावो नेतर इति। तेन समवायिकारणानां पृथगभावेनानुमीयते, अस्त्येषां कार्य्यं किमपीति तस्य तत्कार्य्यं प्रमेयमिति। उत्पन्नस्य चात्मनो हानादविद्यमानता खलु ध्वंस एतेन व्याख्यातः। तद्यथा। लक्षितेषु तन्तुसंयोगात् यावत्कालं समवायो वर्त्तते तावत्कालं स्वस्वलक्षणवत्तया तानि वासांसि अनुवर्त्तन्ते, यदा तेषां तन्तुसंयोगो विभागान्निवर्त्तते निवर्त्तते च समवायः, तदा तल्लक्षणस्यात्मनो हानात् तानि वासांसि नश्यन्तीत्यविद्यमानतैव भवति तत्समवायनिवृत्तिरयोग एव पृथक्त्वं नाम गुणो नेतर इति। एतेनानुमीयते तु आसीदेषां संयोगात् समवाय इति, स तस्य प्रमेय इति। अथ खलु कः पुनः कस्य भावस्याभावो नाम भाव इत्याकाङ्क्षायां तत्रैव गौतमोऽनेकान्तं दर्शयति। "सर्व्वमभावो भावेष्वितरेतराभावसिद्धेः।" सूत्रस्यास्य भाष्यम्।—यावद्‌भावजातं तत्सर्व्वमभावः। कस्मात्? भावेष्वितरेतरा-भावसिद्धेः। असन् गौरश्वात्मनाऽनश्वो गौः, असन्नश्वो गवात्मना अगौरश्व इति। असत्प्रत्ययस्य प्रतिषेधस्य च भावशब्देन सामानाधिकरण्यात् सर्व्वमभाव इति प्रतिज्ञावाक्ये पदयोः प्रतिज्ञाहेत्वोश्च व्याघातादयुक्तम्। अनेकस्याशेषता सर्व्वशब्दस्यार्थो भावप्रतिषेधश्चाभावशब्दस्यार्थः। पूर्व्वं सोपाख्यमुत्तरं निरुपाख्यम्। तत्र समुपाख्यायमानं कथं निरुपाख्यमभावः स्यादिति? न जात्वभावो निरुपाख्योऽनेकतयाऽशेषतया शक्यः प्रतिज्ञातुमिति। सर्व्वमेतदभाव इति चेत् यदिदं सर्व्वमिति मन्यसे तदभाव इति। एवञ्चेत् अनिवृत्तो व्याघातः। अनेकमशेषञ्चेति नाभावप्रत्ययेन शक्यं भवितुम्। अस्ति चायं प्रत्ययः सर्व्वमिति, तस्मान्नाभाव इति। प्रतिज्ञाहेत्वोश्च व्याघातः सर्व्वमभाव इति; भावप्रतिषेधः प्रतिज्ञा, भावेष्वितरेतराभावसिद्धेरिति हेतुः, भावेष्वितरेतराभावमनुज्ञायाश्रित्य चेतरेतराभावसिद्ध्या सर्व्वमभाव इत्युच्यते। यदि सर्व्वमभावो भावेष्वितरेतराभावसिद्धेरिति नोपपद्यते ... इति।" अस्य भाष्यस्यानुव्याख्यानम्।—सर्व्वमभाव इत्येकान्तः। यावद्भावजातं निखिल-भावसमूह तत्सर्व्वमभाव इति। भवतीति भावः कर्त्तरि णः, न तु भावे घञ् त्रिकालार्थत्वात्। यद्भूतं यद्भवद्‌ यद्भव्यं तत्सर्व्व भावोऽभावश्च। कस्मात्? भावेष्वितरेतराभावसिद्धेः। भावेषु मध्ये यः कश्चिद्भावः कस्यचिदपरस्य

भावस्य भिन्नस्तस्य च भिन्नः सोऽपरो भाव इत्यन्योन्याभावसिद्धेः सर्व्वौ भावोऽभावश्च। तद्यथा असन्नित्यादि। न सन् असन् गौः। सन्निहाश्वः। अश्वात्मना अश्वरूपो न गौरित्यनश्वो गौरित्यर्थोऽसन् गौरित्यस्य। एवं सन् गौर्न सन्नसन्नश्वो गवात्मना गोरूपो नाश्व इत्यगौरश्व इत्यर्थः। इत्येवमसत्प्रत्ययस्य सद्भिन्नप्रत्ययस्य प्रतिषेधस्य स्वस्वमतपदार्थस्य गवाश्वपदार्थेन भावेन सह सामानाधिकरण्यादभेदादसदभिन्नो गौरसदभिन्नोऽश्व इत्यभेदप्रतीत्या असन् गौरसन्नश्व इति। अथात्र विप्रतिपत्तिमिमां दर्शयति। सर्व्वमभाव इति प्रतिज्ञावाक्ये इत्यादि। सर्व्वमभाव इति प्रतिज्ञापदं भावेष्वितरेतराभावसिद्धेरिति हेतुपदमित्यनयोः प्रतिज्ञाहेत्वोः पदयोस्तु व्याघातादयुक्तं सर्व्वमभाव इति वाक्यम्। व्याघातन्तु दर्शयति. अनेकस्येत्यादि। सर्व्वमभाव इत्यत्र सर्व्वशब्दस्यार्थोऽनेकस्याशेषता। अभावशब्दस्यार्थस्तु भावप्रतिषेधः। तत्र पूर्व्वं सर्व्वमिति यदुक्तं तत्सोपाख्यमुपाख्यानसहितम्। उत्तरमभाव इति यदुक्तं तन्निरुपाख्यमुपाख्यानरहितम्। कृत्स्नं वस्तु भाव उच्यते. तदेव कृत्स्नं वस्तु कथमभाव उच्यते? सम्यगुपाख्यायमानं वस्तुरूपेणाख्यायमानं सर्व्वं कथं निरुपाख्यमुपाख्यानरहितमभावः स्यादिति व्याघातः। एवं न जातु कदाचिदपि निरुपाख्यः अभावोऽनेकतयाऽशेषतया च शक्यः प्रतिज्ञातुमिति। कुत्रचिदेकस्याभावोऽथ कुत्रचिदुभयस्य कुत्रचित् त्रयाणामित्येवमादिरूपादशक्योऽभावो निरवशेषतया प्रतिज्ञातुमिति न व्याघातः। भावो हि सर्व्वमेव. तस्य सर्व्वस्य प्रतिषेधे सर्व्वातिरिक्तं किमस्ति. किञ्चिदपि नास्तीति सर्व्वातिरिक्तं नास्ति यत्तद्वस्तु तस्मादनेकतयाऽनवशेषतया नाभावः शक्यो भवता प्रतिज्ञातुमिति। तत्राहोत्तरम्। सर्व्वमेतदभाव इति। यदिदं सर्व्वमिति मन्यते तत्सर्व्वमभाव इति चेदुच्यते। तदेवमेवप्रकारेणापि व्याघातोऽनिवृत्त एव। तं च व्याघातं दर्शयति. अनेकमित्यादि। सर्व्वमित्यनेकमशेषञ्चेति यदनेकं निःशेषं च तन्नाभावप्रत्ययेन भवितुं शक्यम्। कथमित्यत आह. अस्ति चायमित्यादि। सर्व्वमित्ययं प्रत्ययश्चास्ति तस्मात् प्रत्ययादभावः सर्व्वमिति न प्रत्ययः स्यात्। एकद्वित्र्यादीनामभावस्यानवशेषत्वाभावात्। इति प्रतिज्ञाहेत्वोश्च व्याघातः। अत्र पुनराहोत्तरम्. सर्व्वमभाव इत्यादि। सर्व्वमभाव इति सर्व्वं न भाव इति भावप्रतिषेधः प्रतिज्ञा। तत्र भावेष्वितरेतराभावसिद्धेरिति हेतुः। अत्र हेतुवचने भावेष्वितरेतराभावं परस्पराभावम्

अनुज्ञाय तमेव परस्पराभावमाश्रित्य च परस्पराभावसिद्धया। एको हि भावोऽपरस्तस्याभावस्तस्याभावश्च स इत्येवं परस्पराभावसिद्धया सर्व्वमभाव इत्युच्यते। यदि सर्व्वमभाव इत्युच्यते तदा भावेष्वितरेतराभावसिद्धेरिति हेतुर्नोपपद्यते। सर्व्वमभावः कस्येत्यनुपपत्तिरिति। तत्रोत्तरमाह, अथेत्यादि। भावानां स्वभावसिद्धेर्भावेष्वितरेतराभावसिद्धिरित्युपपत्तिः स्यादिति। अत्राप्यनुयोगसूत्रम्। न स्वभावसिद्धेर्भावानाम्। अस्य भाष्यम्। न सर्व्वमभावः। कस्मात्? स्वेन भावेन सद्भावात्। भावानां स्वेन धर्म्मेण भावा भवन्तीति प्रतिज्ञायते। कश्च स्वो धर्म्मो भावानाम्? द्रव्यगुणकर्म्मणां सदादिसामान्यं द्रव्यादीनां क्रियागुणवदित्येवमादिविशेषः। स्पर्शपर्य्यन्ताः पृथिव्यादेरिति च प्रत्येकं चानन्तो भेदः। सामान्यविशेषसमवायानाञ्च विशिष्टा धर्म्मा गृह्यन्ते। सोऽयमभावस्य निरुपाख्यत्वात् सम्प्रत्यायकोऽर्थभेदो न स्यात्। अस्ति त्वयं तस्मान्न सर्व्वमभाव इति। अथवा। न स्वभावसिद्धेर्भावानामिति। स्वरूपसिद्धेरिति। गौरिति प्रयुज्यमाने शब्दे जातिविशिष्टं द्रव्यं गृह्यते, नाभावमात्रम्। यदि च सर्व्वमभावः, गौरित्यभावः प्रतीयते। गोशब्देन चाभाव उच्यते। यदि च गोशब्दप्रयोगे द्रव्यविशेषः प्रतीयते नाभावस्तस्मादयुक्तमिति। अथवा न स्वभावसिद्धेरिति। असन् गौरश्वात्मनेति गवात्मना कस्मान्नोच्यते, अवचनात्। गवात्मना गौरस्तीति स्वभावसिद्धिः। अनश्वोऽश्व इति वा अगौः गौरिति वा कस्मान्नोच्यते, अवचनात्। स्वेन रूपेण विद्यमानता द्रव्यस्येति विज्ञायते अव्यतिरेकप्रतिषेधे च। भावानामसंयोगादिसम्बन्धो व्यतिरेकः। अत्राव्यतिरेकोऽभेदाख्यसम्बन्धः। प्रत्ययसामानाधिकरण्यं यथा—न सन्ति कुण्डे वदराणीति। असन् गौरश्वात्मनाऽनश्वो गौरिति च गवाश्वयोरव्यतिरेकः प्रतिषिध्यते। गवाश्वयोरेकत्वं नास्तीति। तस्मिन् प्रतिषिध्यमाने भावेन गवा सामानाधिकरण्यमसत्प्रत्ययस्य। असन् गौरश्वात्मनेति। यथा न सन्ति कुण्डे वदराणीति। कुण्डे वदरसंयोगे प्रतिषिध्यमाने सद्भिरसत्प्रत्ययस्य सामानाधिकरण्यमिति। भाष्यस्यास्येदमनुव्याख्यानम्।—न सर्व्वमभाव इति सूत्रस्मरणार्थवचनं, तेन सर्व्वमभावो भावेष्वितरेतराभावसिद्धेरिति न। तत्र कस्मादिति हेतुप्रश्नः। स्वेन भावेन सद्भावाद्भावानामिति वार्त्तिकेन स्वभावसिद्धेरित्यस्यार्थः प्रदर्शितः। तद्वार्त्तिकं भाष्येण व्याख्यायते, स्वेनेत्यादि।—स्वेन भावेन भावानां सद्भावः, स्वेन धर्म्मेण भावा भवन्तीति

सद्भाव इति प्रतिज्ञा। भावा हि स्वस्वधर्म्मवत्तया जायन्ते, भवन्तीति भावा एवोच्यन्ते न तु न भवन्तीत्यभावा उच्यन्ते। स च धर्म्म इतरेतराभावरूप-पृथक्त्वकृत तद्धर्म्मवत्तया भावा भवन्तीति भावा एव न त्वभावा इति प्रतिज्ञायते। तत्र प्रश्नः, कश्चेत्यादि। येन स्वेन धर्म्मेण भावा भवन्तीति। स स्वो धर्म्मः क इति पृष्ट आह, द्रव्येत्यादि।—वैशेषिके कणादेन यदुक्तं तदनुमत्य स्मृत्वेदमुक्तम्। तत्र तूक्तमिदं, धर्म्मविशेषप्रसूतात् द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां साधर्म्म्यवैधर्म्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्। पृथिव्यप्तेजोवाय्वाकाशं कालो दिगात्मा मन इति द्रव्याणि। रूपरसगन्धस्पर्शाः संख्या परिमाणं पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धय इच्छाद्वेषौ सुखदुःखप्रयत्नाश्च गुणाः। उत्क्षेपणमवक्षेपणं प्रसारणमाकुञ्चनं गमनञ्चेति कर्म्माणि। सदनित्यमद्रव्यवत् कार्य्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्म्मणामविशेष इति। द्रव्यगुणकर्म्मणां सदादि सामान्यमेको धर्म्मः। तथा विशेषश्च पृथक्त्वकृत। स्वो धर्म्मो द्रव्यादीनां क्रियागुणवदित्यादि। क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम्। द्रव्याश्रय्यगुणवान् संयोगविभागेषु अकारणमनपेक्ष इति गुण इति समवायिकारणम् इत्यनुवर्त्तते। तथा। संयोगविभागेष्वनपेक्षकारणं कर्म्मेति विशेषः। ततोऽपि पृथिव्यादेर्विशेषो धर्म्मः स्पर्शपर्य्यन्ता गुणाः प्राक् गौतमेनोक्ताः। गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः। गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्य्यन्ताः पृथिव्यप्तेजोवायूनामुत्तरोत्तरमेकैकमपोज्झ्य चान्योऽन्यस्य। इति च पृथक्त्वकृत स्वो धर्म्मः पृथिव्या गन्धो गुणो नैसर्गिकः, अपां रसः, तेजसो रूपं, वायोः स्पर्श इति। गन्धादीनां पञ्चानां स्पर्शपर्य्यन्ताः पृथिव्यप्तेजोवायूनाम्। तेषामेव गन्धरसरूपस्पर्शशब्दानामुत्तरोत्तरमेकैकमपोज्झ्य च पृथिव्यप्तेजोवायूनां सांसर्गिका गुणाः, तेन पृथिव्या गन्धो नैसर्गिको रसरूपस्पर्शशब्दाः सांसर्गिका इति पञ्चगुणा पृथिवी गुरुत्वादीनामनभिव्यक्तत्वादिह नोपदेशः क्रियते। एवमपां रसो नैसर्गिकस्तमपोज्झ्य च रूपस्पर्शशब्दाश्च सांसर्गिका इति चतुर्गुणा आपः। द्रवत्वादीनामनभिव्यक्तत्वादिह नोपदेशः। तेजसो रूपं नैसर्गिकं, तदपोज्झ्य च स्पर्शशब्दौ च सांसर्गिकाविति त्रिगुणं तेजः, उष्णत्वादीनामनभिव्यक्तत्वादिह नोपदेशः। वायोः स्पर्शो नैसर्गिकः, तमपोज्झ्य च शब्दश्च सांसर्गिक इति द्विगुणो वायुः रौक्ष्यादीनामनभिव्यक्तत्वादिह नोपदेशः। अन्त्यः शब्दोऽन्त्यस्याकाशस्य नैसर्गिक एव नास्ति

तु सांसर्गिकः। श्लक्ष्णत्वादीनामनभिव्यक्तत्वादिह नोपदेशः पाञ्चभौतिके तूपदेशः करिष्यते। कस्मादेवमेकैकगुणहास इत्यत उक्तं तत्रैव। अनुप्रविष्टमपरं परेणेति। परेण परेणाकाशादिना हि यतोऽपरम्भूतं पूर्व्वमनुप्रविष्टं तस्मादाकाशगुणो वायौ द्व्यात्मकश्च वायुः। तस्य द्व्यात्मकस्य वायोस्तेजस्यनुप्रवेशात् त्र्यात्मकं त्रिगुणं तेजस्तस्याप्स्वनुप्रवेशादापश्चतुरात्मिकाश्चतुर्गुणास्तासां पृथिव्यनुप्रवेशात् पृथिवी पञ्चात्मिका पञ्चगुणा चेति। प्रत्येकञ्च पृथिव्यादीनां कार्य्यभूतानां द्रव्यगुणकर्म्मणामनन्तो भेदः पृथक्त्वम्। पृथक्त्वगुणयुक्तधर्म्मवत्त्वेनोत्पत्त्या प्रसिद्धः। एवं सामान्यविशेषसमवायानां विशिष्टा धर्म्मा गृह्यन्ते। द्रव्यगुणकर्म्मसमवायान्यतमात्मकस्य सामान्यस्य विशिष्टधर्म्मो सर्व्वभावानां वृद्धिहेतुत्वैककत्वकरत्वे। तथैव विशेषस्य सर्व्वभावह्रासहेतुत्वपृथक्त्वकरत्वे। समवायस्य तु द्रव्यगुणकर्म्मणां मेलकत्वं विशिष्टो धर्म्म इति। इत्येवं स्वेन स्वेन धर्म्मेण जातानां द्रव्यादीनां भावानां सोपाख्यत्वादुपाख्यानसद्भावात्सम्प्रत्यायकोऽर्थभेदः तत्तद्रूपेण बोधको भवितुमर्हति। अभावस्य निरुपाख्यत्वादुपाख्यानाभावात् सम्प्रत्यायकोऽर्थभेदो न स्यात्। यदि सर्व्वो भाव एवाभावः स्यात् तदा सोपाख्यत्वादयं सम्प्रत्यायकोऽर्थभेदस्त्वस्ति। तस्मान्न सर्व्वमभाव इति। अत्रोत्तरमिदम्। एवं भेदको धर्म्मश्चेत् तदा विभिन्नधर्म्मवत्त्वेन जाताः सर्व्वे भावाः परस्परं भिन्ना इति भेदवत्त्वात् सर्व्वं वस्तु चाभाव उच्यते। उक्तरूपेण परस्पराभावस्य भेदस्य सिद्धेरिति। अश्वाभावो गौः गवाभावोऽश्व इति। इत्येवं वचनं निरसितुमाह। अथेत्यादि। सूत्रस्यास्यान्यप्रकारो वाऽर्थः। स्वभावसिद्धेरिति स्वरूपसिद्धेरित्यर्थः। स्वरूपञ्च स्वभावश्च निसर्गश्चेत्येकोऽर्थः। कथं स्वेन रूपेण सिद्धिरिति तद्दर्शयति, गौरित्यादि। गौरिति प्रयोगात् गोत्वजातिविशिष्टसास्नादिमद् द्रव्यं गोस्वरूपं गृह्यते, न त्वभावमात्रमश्वाभावमात्रम्। यदि तु सर्व्वमभावस्तदा गौरिति प्रयोगादश्वाभावो गौरिति प्रतीयते, गोशब्देन चाऽश्वाभाव उच्यते। यदि च गोशब्दप्रयोगे सास्नादिमद् द्रव्यविशेषो न प्रतीयते तदाऽश्वाद्यभाव एव प्रतीयते। यदि च गोशब्दप्रयोगे सास्नादिमद् द्रव्यविशेषः प्रतीयते, तदा नाभावोऽश्वाद्यभावो न प्रतीयते। तस्मात् सर्व्वमभाव इत्ययुक्तमिति। अत्राप्येतदुत्तरम्। भावेष्वितरेतराभावसिद्धेरित्युक्तम्, तेन गोशब्देनाभावमात्रं न प्रतीयते। भावान्तरेण सह परस्परं भेदवद् द्रव्यस्वरूपेण जातत्वादश्वादिस्वरूपादभाव एव गौर्द्रव्यं प्रतीयतेऽनश्वो गौरिति। तस्मात्

सर्व्वमभाव इति युक्तमित्यतः पुनराह, अथवेत्यादि। न स्वभावसिद्धिरित्यस्य अपरोऽयमर्थः। तदर्थं दर्शयति। असन् गौरश्वात्मनेति गवात्मना कस्मान्नोच्यते अवचनादिति वार्त्तिकं भाष्येण व्याचष्टे गवात्मना गौरस्तीत्यादि। यथोच्यते सन्नश्वो नाम भावः। सतोऽभावोऽनश्वोऽसन् गौरिति तथा गवात्मना गौरसन्निति कस्मान्नोच्यते? परस्परं भेदवद् द्रव्यसामान्यादिसत्त्वं न प्रतीतेर्गवात्मना गौरस्त्येवेति स्वभावसिद्धिः। अश्वात्मनाश्वोऽस्तीति। स चेदभावो भवति, तदाऽगौर्गौरनश्वोऽश्व इति वा कस्मान्नोच्यते। अपि तु नैवोच्यते। कस्मात्? अवचनात्। गोशब्देनागौरश्वशब्देनानश्वस्यावचनात्। कुतोऽप्यवचनं तदाह, स्वेनेत्यादि। यतः सत्पदेन स्वेन रूपेण द्रव्यस्य विद्यमानतेति विज्ञायते न त्वसत्पदेन। यदि नञाऽत्राव्यतिरेकप्रतिषेध उच्यते तत्रापि भावानामव्यतिरेक इत्यत्र व्यतिरेको भावानामसंयोगादिसम्बन्धो येन सम्बन्धेन विना दण्डकानां समुदाये वृत्तिः स्यात् स सम्बन्धोऽसंयोगादि-पृथक्त्वविभागादिः। संयोगादिसम्बन्धेन तु दण्डकानां समुदाये वृत्तिः स्यात् ततः समवायादेरभावेऽत्राव्यतिरेको भवत्यभेदाख्यः सम्बन्धः। तस्याव्यतिरेकस्य सम्बन्धस्य प्रतिषेधे एकोऽत्र न संयोगसमवायादिसम्बन्धप्रतिषेधे प्रत्ययसामानाधिकरण्यम्। यथा न सन्ति कुण्डे बदराणीति वार्त्तिकं व्याचष्टे असन्नित्यादि। प्रत्ययार्थस्य सामानाधिकरण्यम्, तदुदाहरति। यथेत्यादि। न सन्ति कुण्डे बदराणीति। सन्तीति कर्त्रर्थे झिप्रत्ययः। तदर्थकर्त्तृसामानाधिकरण्यं बदराणीति बहुवचनान्तबदरपदार्थे तस्य प्रतिषेधो न सन्तीति। एवम् असन् गौरश्वात्मनाऽनश्वो गौरित्यर्थे गवाश्वयोरव्यतिरेकस्तादात्म्यं प्रतिषिध्यतेऽनश्वो गौरिति। गवाश्वयोरेकत्वमभेदो नास्तीति। भेदस्तु पृथक्त्वमस्तीति नञा पृथग्भावो गुणः प्रत्याय्यते। अयमेकत्वाख्यस्तु भावः प्रतिषिध्यमानः सति तस्मिन्नेकत्वे प्रतिषिध्यमाने सम्भवः। स एवाश्वात्मनैवास्तीति नाश्वोऽनश्व इत्यस्यामसत्प्रत्ययस्य भावेन गवा सह सामानाधिकरण्यम् असन् गौरनश्वो गौरश्वात्मनेत्यसत्प्रत्ययश्च अभावप्रतीतिश्चेत्यर्थः। अयमन्योन्याभावः। दृष्टान्तं व्याचष्टे। यथा न सन्तीत्यादि। कुण्डे बदरसंयोगे कुण्डानुयोगिकबदरप्रतियोगिको यः संयोगः प्रसज्यते तस्मिन् प्रतिषिध्यमाने कुण्डे बदराणि न सन्तीत्युच्यते। तेन संयोगेनाव्यतिरेकेण सम्बन्धेन कुण्डे बदराणि सन्तीति, तस्मिन् कुण्डे बदरसंयोगस्य प्रतिषेधे सद्भिर्बदरैः सहासत्प्रत्ययस्याभावतया प्रतीतिविषयस्य कुण्डबदरविभागस्य

सामानाधिकरण्यं कुण्डानुयोगिकविभागवन्ति बदराणि सन्तीति। विभागाख्यो गुणोऽत्राभावः। इत्येवमव्यतिरेकप्रतिषेधपक्षेऽभेदसंयोगादिसम्बन्धप्रतिषेधस्वभावो भेदविभागादिर्भाव एवेति भावेष्वितरेतराभावसिद्धिरिति स्वपक्षऽन्तर्भावादप्रतिषिध्यानुमत्य स्वभावमात्रसिद्धिर्भावानां प्रतिषिध्यते। न स्वभावसिद्धेरापेक्षिकत्वात्। सर्व्वमभावो न स्वभावसिद्धेर्भावानामिति स्वभावमात्रसिद्धिर्भावानां नापेक्षिकत्वात्। भाष्यञ्चास्य। अपेक्षाकृतमापेक्षिकं ह्रस्वापेक्षाकृतं दीर्घं दीर्घापेक्षाकृतं ह्रस्वं न स्वं नात्मनावस्थितं किञ्चित्। अपेक्षासामर्थ्यात्। तस्मान्न स्वभावसिद्धिर्भावानामिति। व्याहतत्वादेतदयुक्तम्। यदि ह्रस्वापेक्षाकृतं दीर्घं किमिदानीमपेक्ष्य ह्रस्वमिति गृह्यते। अथ दीर्घापेक्षाकृतं ह्रस्वं दीर्घमन्यापेक्षिकमेवमितरेतराश्रययोरेकाभावेऽन्यतराभावादुभयाभाव इति अपेक्षाव्यवस्थाऽनुपपन्ना। स्वभावसिद्धावसत्यां समयोः परिमण्डलयोर्वा द्रव्ययोरापेक्षिकदीर्घत्वह्रस्वत्वे कस्मान्न भवतः। अपेक्षायामनपेक्षायाञ्च द्रव्ययोरभेदः। यावती द्रव्ये अपेक्षमाणे तावती द्रव्ये एवानपेक्षमाणे नान्यतरत्र भेदः। आपेक्षिकत्वे तु सति अन्यतरत्र विशेषोपजनः स्यादिति। किमपेक्षासामर्थ्यमिति चेत्। द्वयोर्ग्रहणेऽतिशयग्रहणोपपत्तिः। द्वे द्रव्ये पश्यन्नेकत्र विद्यमानमतिशयं गृह्णाति तद्दीर्घमिति व्यवस्यति। यच्च हीनं गृह्णाति तद् ह्रस्वमिति व्यवस्यतीति। एतच्चापेक्षासामर्थ्यमिति। भाष्यस्य चास्यानुव्याख्यानम्।—अपेक्षाकृतमापेक्षिकमिति येन स्वेन रूपेण भावो भवति तत्स्वं रूपं तद्भावोत्पत्तौ स्वत्वव्यापन्नोपादानकारणान्यपेक्षते। यथा भूतोपादानैरारभ्यते कार्य्यं तदनुगुणमेव स्वं रूपमापद्यमानं निष्पद्यते। एकदेशव्यापन्नैरारभ्यमाणमेकदेशविकृतं कार्य्यं स्याद्व्यापन्नैरविकृतं स्यात् यथा जात्यन्धकाणबधिरादिः सर्व्वसम्पूर्णाङ्गश्च दृश्यते। एतदेवापेक्षिकस्वभावं कश्चिदुदाहरति। ह्रस्वापेक्षाकृतमित्यादि। सर्व्वञ्चैतद्भाष्यं निरूपणीये स्वभावकारणवादव्याख्याने व्याख्यास्यते। इति।

वैशेषिके कणादेनाप्येवमेवोक्तम्। क्रियागुणव्यपदेशाभावात् प्रागसत् ॥१॥ सदसत् ॥ २ ॥ असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥ ३ ॥ सच्चासत् ॥ ४ ॥ यच्चान्यदसदतस्तदसत् ॥ ५ ॥ असदिति भूतप्रत्यक्षाभावाद्भूतस्मृतेर्विरोधिप्रत्यक्षवत् ॥ ६ ॥ तथाऽभावे भावप्रत्यक्षत्वाच्च ॥ ७॥ एतेनाघटोऽगौरधर्म्मश्च व्याख्यातः ॥ ८ ॥ कथमन्यश्चास्तम्भश्च ॥ ९ ॥ अभूतं नास्तीत्यनर्थान्तरम् ॥ १० ॥ नास्ति घटो गेह इति सतो घटस्य गेहसंसर्गप्रतिषेधः ॥ ११ ॥

इति । भाष्याणि चैषां क्रमेण । क्रियागुणव्यपदेशाभावात् प्रागसत् । यद्वस्तु यद्रूपेण भविष्यति तद्वस्तु स्वस्वरूपेण सदपि भाविस्वरूपस्य क्रियागुण-व्यपदेशाभावात् प्राग्भाविनोऽसदुच्यते । यथा । असद्वा इदमग्र आसीत् ततो वै सदजायत । तदात्मानं स्वयमकुरुत तस्मात् तत् सुकृतमुच्यते । इति तैत्तिरीयोक्तमन्त्रे । इदं सर्व्वमग्रे प्राक् सर्गादसदेवासीत् ततोऽसतः सर्गकाले सदजायतेति । क्रियागुणव्यपदिष्टं तेजोऽबन्नलक्षणा गायत्री अजायतेति । न चानुपादानकं वस्तूत्पद्यते । तस्मात् ॥ १ ॥ सदसत् ॥ २ ॥ प्राक् सर्गाद् यदासीत् तत् सदेवासत् ॥ २ ॥ कस्मात् ॥ ० ॥ असतः क्रियागुणव्यपदेशा-भावादर्थान्तरभावात् ॥ ३ ॥ सतः क्रियागुणव्यपदेशो यस्तु क्रियागुणव्यप-देशाभावः प्राक् तदुत्पत्तेरित्यर्थान्तरत्वात् । यथा मृदादिस्वरूपेण यद्वस्तु तत् घटादिरूपेणोत्पत्तेः पूर्व्वं घटादिक्रियागुणव्यपदेशाभावादसत् घटादिरूपेण सद्भिन्नमित्यतः ॥ ३ ॥ सच्चासत् ॥ ४ ॥ मृदादिरूपेण सदपि घटादि-स्वरूपेण प्रागसत् । तच्च घटादिकं सदप्यसन्मृदादिसतोऽभावः ॥ ५ ॥ कथम् ॥ ० ॥ यच्चान्यदसदतस्तदसत् ॥ ५ ॥ सतो घटादेरन्यन्मृदादिकमसत् । अतोऽसत एव सतो मृदादिकादन्यद् घटादिकमसदभावः इत्यर्थः । उपादाना-भाव उपादत्त उपादत्ताभाव उपादानम् । मृदाद्यभावो घटादिकं घटाद्यभावो मृदादिकम् । अनश्वो गौरश्वाभावो गौरगौरश्वो गवाभावोऽश्व इति स्वेन रूपेण स्वभावेन भावेष्वितरेतराभावसिद्धेः सर्व्वमेव वस्तु खलु भावोऽभाव इति ॥ ६ ॥ कथमसदिति प्रतीयत इत्यत आह । असदिति भूतप्रत्यक्षा-भावाद्भूतस्मृतेर्विरोधिप्रत्यक्षत्वात् ॥ ० ॥ अतऽवे गवि स्वाभावेऽसदिति अश्वाभाव इति प्रतीतिर्भूतप्रत्यक्षाभावात् । इदमग्रेऽसदेवासीदिति अती-तस्यासतः प्रत्यक्षाभावात् । भूतस्मृतेर्विरोधिवर्त्तमानस्य प्रत्यक्षत्वात् । अश्वप्रत्यक्षाभावेऽप्यश्वस्मृत्या अश्वाभावो गौरिति प्रत्यक्षत्वात् । विरोधि चोक्तं भूतमभूतस्य अभूतं भूतस्य भूतं भूतस्येति ॥ ६ ॥ कथं भविष्यतः प्रागभाव-प्रत्यक्षमित्यत आह । तथा भाविभावप्रत्यक्षत्वाच्च ॥ ७ ॥ तथा भाविभावस्य प्रत्यक्षाभावात् । भाविभावस्मृतेर्विरोधिनः प्रत्यक्षत्वाच्चासदिति प्रतीतिः । भविष्यतो घटस्य प्रत्यक्षाभावात् । तदुपादानसामग्रीणामायोजने भाविघट-स्मृतेस्तत्सद्भावाभावो विरोधी समवायिकारणकपालमालानां विभागोऽयोगो वा प्रत्यक्षमुपलभ्यते तदुपालम्भादसदिति घटप्रागभाव इति प्रतीतिः ॥ ७ ॥ एतदुदाहर्त्तु माह ॥ एतेनाघटो गौरधर्म्मश्च व्याख्यातः ॥ ८ ॥ एतेनेत्युक्त-

**यत्राश्रिताः कर्म्मगुणाः कारणं समवायि यत् ।**
**तद्द्रव्यं समवायी तु निश्चेष्टः कारणं गुणः ॥ २३ ॥**

प्रकारेणाभावप्रत्ययेन अवटो गोर्घटाभावो गोरश्वश्च गोधर्म्माभावो गोः परश्वानः । अतो गोः परो घटो गवाभावो घट । तथा धर्म्मश्च गोः पर इति गवाभावो धर्म्म इति प्रतीतिः । एवं सति निर्विशेषेण प्रयोगे भावमात्रतया प्रतीतिः । यथा गौरिति गोत्वजातिविशिष्टसास्नादिमन्नीलपीतादिनिखिलद्रव्य-विशेषो गौरिति भावनया प्रतीतो. नीलो गौरिति तद् गोसामान्यात् पृथक् क्रियते नीलो गौरिति तन्नीलातिरिक्तगवप्रतिषेधे नीलगवाभावः पीतादिगव . पीतादिगवाभावो नीलगव इत्येवं सर्व्वमभावो भावोऽपितरेतराभावसिद्धेरिति समम् ॥ ८ ॥ अत्र प्रश्नः । कथमन्यश्चास्तम्भश्च ॥ ९ ॥ न स्तम्भोऽस्तम्भ-स्तम्भाभावः कथमन्यश्च स्तम्भाभावादन्यश्च । स्तम्भाभावो घटादिर्घटाद्यन्यश्च स्तम्भ इति । भावोऽपितरेतराभावसिद्धः ॥ ९ ॥ एवमत्यन्तातिरेकप्रतिषेध अभेदाख्यसम्बन्धाभावं दर्शयित्वा प्रागभावमुदाहरति । अभूतं नास्तीत्य-नर्थान्तरम् ॥ १० ॥ यन्नाभूत् तन्नास्तीति प्रागभाव । यन्नास्ति तन्नाभूदिति तुल्योऽर्थः ॥ १० ॥ अत्यन्तातिरेकप्रतिषेधे प्रत्ययसामानाधिकरण्यसम्बन्धाभाव-मुदाहरति । नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेध इति । अस्तिपदसमानाधिकरणो घटः कर्त्तृपदं गेहे इत्यधिकरणपदं कारकत्वार्थं, गेहे घटोऽस्तीति प्रसज्य प्रतिषिध्यते नेति गृहे घटस्य सतो भावस्य संसर्गस्य प्रतिषेधो विभाग इति सर्व्वमभावो भावोऽपितरेतराभावसिद्धेरित्यनेन सममिति । पृथक्त्वाभावः समवायः समवायाभावः पृथक्त्वमित्यविरोधोऽतः कथमभावोऽतिरिक्तोऽस्तीति नाभावः सप्तमः पदार्थ इति । अनयैव रीत्या घटवति भूतले समवायेन घटो नास्तीत्यादावपि सर्व्वत्र समान्वयः । इति व्याख्यातः समवायः ॥ २२ ॥

गङ्गाधरः अर्थोद्दिष्टानां सामान्यादीनां षण्णां सामान्यविशेष-समवायानां सलक्षणं निर्द्देशं कृत्वा द्रव्यगुणकर्म्मणान्तु निर्द्देशमात्रं कृत्वा क्रमेण लक्षणान्याह. यत्राश्रिता इत्यादि । इह कारणमित्युक्त्वा कार्य्यमिति

चक्रपाणिः—द्रव्यलक्षणमाह यत्रेत्यादि । यत्राश्रिता यत्र समवेताः, कर्म्म च गुणाश्च कर्म्म-गुणाः । कारणं समवायि यदिति समवायि कारणं यत्, द्रव्यमेव हि द्रव्यगुणकर्म्मणां सम-

चोक्तं भवति। कार्य्यमारभमाणे यत्र कारणे कर्म्मगुणा आश्रिता भवन्ति कार्य्ये जायमाने जायमानतत्कर्म्मगुणाश्रयः सन् यत्कारणं समवायि तत्कार्य्ये समवायि भवति, तत्कारणं द्रव्यमुच्यते। समवैतुं सजातीय-विजातीयरूपेण परिणमदेकीभवितुं शीलमस्येति समवायि कार्य्यरूपेण परिणमदेकीभावि समवायि। कारणं—कारयति यत् तत्कारणम्। लक्षणस्यास्य लक्ष्यं प्राङ्निर्दिष्टं खादिनवकम्। द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्म्यम्। द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्। कर्म्मसाध्यं कर्म्म न विद्यते। खादिद्रव्याणि खादिसजातीयद्रव्यान्तरमारभन्ते न तु खादीनि वाय्वादिद्रव्यान्तरम्, शब्दादिगुणं कर्म्म वा। गुणाश्च शब्द-स्पर्शादयः शब्दादीन् गुणान्तरानारभन्ते न तु स्पर्शादीन् गुणान् न वा खादीनि द्रव्याणि कर्म्माणि वा। इत्येवं सजातीयारम्भकत्वं द्रव्यगुणयोः स्वभावसिद्ध-मस्ति। कर्म्म तु सजातीयमात्रं कर्म्म नारभते न च कर्म्मसाध्यं विद्यते। कार्य्यारम्भे चिन्त्याचिन्त्यक्रियाहेतुभूतं तु कर्म्मारभते। तथा च। सक्रियाणि वायुतेजोऽम्बुपृथिवीमनांसि स्वभावसिद्धानि खात्मकालदिशश्च निष्क्रियाः स्वभावसिद्धाः। खादीनि पञ्च भूतानि सगुणानि मनश्च सगुणम्। आत्मकाल-दिशो निर्गुणाः। नवैतानि यदा देवनरादीनि आरभन्ते तदा सक्रियाणां वाय्वादीनां कर्म्मभिः खात्मकालदिशां संयोगे जाते पुनर्विभागे पुनः संयोगे पुनर्विभागे चैवं नवानां पुनः पुनः संयोगविभागाभ्यां खात्मकालदिशां क्रिया जायन्ते, गुणाश्चानभिव्यक्ता ये शब्दबुद्धिशीतोष्णवत् लक्षणकृद् गुणा-पेक्षाकृद् गुणास्तेऽभिव्यज्यन्ते। इति तेऽनभिव्यक्ताः शब्दादयो गुणा व्यक्त-शब्दश्लक्ष्णादीनारभमाणाः खात्मकालदिग्भिरारभ्यमाणाः खात्मकालदिश आश्रयन्ति जायमानाः क्रियाश्चैवं जायमानकर्म्मगुणानाश्रयन्त्यः खात्मकाल-दिशः कार्य्ये समवयन्ति। एवं वाय्वादयः पञ्च वाय्वादीनि पञ्चारभन्ते तेषां गुणाश्चाव्यक्ताश्च खरत्वादयो व्यक्ताश्च स्पर्शादयो व्यक्तानेव खरत्वादीन् स्पर्श-विशेषादीन् गुणान् आरभन्ते। क्रियाश्च क्रियान्तराण्यारभन्ते। ते च गुणाः ताश्च क्रिया जायमाना जायमानान् वाय्वादीनाश्रयन्तीत्येवं जायमानक्रियागुणान् आश्रयन्तो वाय्वादयः कार्य्ये समवयन्ति। इत्येवं जायमानक्रियागुणवन्त

वायिकारणम्, समवायिकारणञ्च तत् यत् स्वसमवेतं कार्य्यं जनयति। गुणकर्म्मणी तु न स्वसमवेतं कार्य्यं कुरुतः, अतो न ते समवायिकारणे। एतत्कर्म्मत्वं हि द्रव्यस्य गुणादिपञ्चपदार्थ-

एव नव खादयो भावा द्रव्याणि भवन्ति। न च ते जायमानाः कर्म्मगुणाः स्वस्वोपादानकर्म्मगुणानाश्रयन्ति। नापि ते तत्तत्कर्म्मगुणानामुपादानभूताः कर्म्मगुणा जायमानकर्म्मगुणानाश्रयन्तः कार्य्यं समवयन्ति। सामान्य-विशेषौ तु सत्ताख्यौ समवायरूपौ द्रव्येषु गुणेषु कर्म्मसु यावन्तौ तावन्तौ तेषामेकत्वपृथक्त्वकरौ न जायमानकर्म्मगुणानाश्रयन्तौ कार्य्यं समवयतः (?) न चैवं समवायश्च एकत्वपृथक्त्वमेलकत्वकारणत्वेऽपि समवायिकारणत्वा-भावादेषां न द्रव्यत्वम्। अस्तु क्रियावत् समवायि कारणं द्रव्यमिति किमर्थं गुणेति ? वाय्वादीनां कर्म्माणि यदा चिन्त्याचिन्त्यक्रियाहेतुकर्म्माण्यारभन्ते तदा तान्यप्येकीभूय यत्कर्म्मरूपेण परिणमन्ते तत्कर्म्म तत्तदुपादान-कर्म्मवदेव भवति। तदुपादानक्रियावत् सत् कर्म्मसमुदायात्मके कार्य्ये नरादौ चिन्त्याचिन्त्यक्रियायां कारणं समवैति। यथा खाद्यारब्धखादीनि शब्दाद्या-रब्धशब्दादयश्च समुदाये कार्य्ये तन्नरादौ शरीरावयवादिकारणानि समवयन्ति। तदुपादानक्रियावत्कर्म्मव्यावृत्त्यर्थं गुणेति। गुणाश्रयत्व-वचनेन जायमाना गुणाः कारणपदेन ख्यापितास्तद्गुणसमभिव्याहारेण कर्म्मग्रहणात् कर्म्मापि जायमानं ख्यापितं न तूपादानभूतं कर्म्म प्राप्यते। गुणशब्दानुपादाने क्रियावत् समवायिकारणमितिमात्रोक्तौ तु न जायमान-क्रिया प्राप्यते। कार्य्ये यत् कारणं क्रियावदित्येवमात्रं प्राप्यते तच्च तदुपादानी-भूतक्रियावत् कर्म्मापि भवति। यत्कारणं कार्य्यमारभमाणं गुणमाश्रयत् समवैतीत्युक्तौ हि स्वस्वगुणवत्त्वसिद्धौ सत्यां तत्तद्गुणापायासम्भवात् पुनर्गुणवद्वचनं व्यर्थमिति कार्य्यारम्भे जायमानगुणा एव प्राप्यन्ते तत्समभि-व्याहारेण निर्द्देशात्, कर्म्मापि कार्य्यारम्भे जायमानं गृह्यते न तु प्राक्सिद्धं कर्म्म गृह्यते। प्राक्प्रसिद्धकर्म्मग्रहणे खात्मकालदिशां क्रियाभावान्न द्रव्यत्वं स्यादिति। अस्तु तर्हि गुणवत् समवायि कारणं द्रव्यमिति। नैवं भवति। यत् कारणं गुणवत् सत् कार्य्यं समवैति तद् द्रव्यमिति हि प्राप्यते। गुणाश्च कर्म्माणि च गुणान्तरं सजातीयमारभमाणा मिलितैकत्वमाश्रयन्तः कार्य्यं समवयन्ति। यथा खादिभिरारभ्यमाणे कार्य्ये तेजोऽम्बुभूमिषु सिद्धा लोहितशुक्लकृष्णवर्णाः सजातीयानि लोहितशुक्लकृष्णरूपाणि आरभमाणा

व्यावृत्तिमात्रलक्षणकथनं, न तु स्वजातीयव्यापकविजातीयव्यावर्त्तकलक्षणकथनम्; येन कर्म्म-समवायो नाकाशादीनां वर्त्तते, तेन लक्षणानुगतं विजातीयव्यावृत्तं द्रव्यस्य लक्षणं गुणवत्त्व

मिलित्वैकत्वमापन्नाः पीतरूपत्वेन निष्पद्य कार्य्यं नरादिदेह समवयन्ति । इत्यत उक्त गुणोऽपि विभाव्यते गुणेनापीति कणादेन । एवमेव गुणवत् समवायि कारणं गुणः स्यात् । कार्य्यगुणा न ह्यकगुणारब्धाः स्युः । एवं कर्म्मापि वाय्वादीनामनेकेषामनेककर्म्मभिरारभ्यमाणमेकत्वमापन्नं सत् कार्य्यं समवैति ; यथा मणिविशेषे विषवारणादि कर्म्म । न च ते गुणाः कर्म्माणि च द्रव्याणि संज्ञायन्ते क्रियावत्त्वाभावात् । द्रव्याणि गुणाश्च कर्म्माणि च यथा द्रव्यान्तरं सजातीयं गुणाश्च गुणान्तरं कर्म्माणि च सजातीयविजातीयकर्म्मान्तरमारभ्य कार्य्यद्रव्याण्यारभन्ते तद्विस्तरेणात्रेयभद्रकाप्यीये शारीरस्थाने च व्याख्यास्यन्ते ।

अर्थेन्द्रियाणि मनःश्रोत्रादीनि कार्य्यद्रव्याणि । न प्रकृतिभूतानि खादीनि द्रव्याणि । उक्तं ह्येतत् कणादेन । (ततपुनः) पृथिव्यादि कार्य्यद्रव्यं पुनः शरीरेन्द्रियविषयसंज्ञकमिति । ननु द्रव्यारब्धत्वात् कार्य्यद्रव्यं, "सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम्" इत्युक्तम् । मनःश्रोत्रादीनि किं खादिभिरनिन्द्रियैर्द्रव्यैर्विजातीयान्यारभ्यन्त इति चेन्न । मनःश्रोत्रादीनि ह्यात्मकार्य्याणि वक्ष्यन्ते । तत्रात्मा प्रत्यगात्मोच्यते यः सूक्ष्मशरीरादिसमुदायात्मको बीजधर्म्मा । स खलु जायापत्योः संयोगेऽदुष्टप्रच्युतशुक्रार्त्तवसंयोगमदुष्टगर्भाशयगतमवक्रम्यानुप्रविश्य पूर्व्वतरमाकाशं स्वस्थाकाशेन सृजति, ततः क्रमेण वाय्वादिना वाय्वादीन् सृजति सत्त्वादिना च सत्त्वादीन् कालेनाणुना । ततः स्वकृतान्यैकैकाधिकानि खादीनि पञ्चैव भूतानि तदात्मस्थाहङ्कारिकाणि श्रोत्रादीन्याश्रित्य शरीरे जायमाने त्वेकीभूय शारीरं श्रोत्रादिकं पञ्चेन्द्रियरूपेण निष्पद्यन्ते । तथा कर्म्मेन्द्रियाणि चाहङ्कारिकाणि तदात्मकृतभूतैरारभ्यन्ते । मनश्चाहङ्कारिकम् आत्मकृतैस्तैः सत्त्वादिगुणैरेकैकाधिकैस्त्रिभिरारभ्यते त्रिविधं सात्त्विकं राजसं तामसञ्चेति, तद्विस्तरेणात्र वक्ष्यते । इत्येव भौतिकत्वाद् दशेन्द्रियाणि प्रकृतिभूतद्रव्याणि देशे निर्दिष्टानि न कृतानि । मनस्तु कार्य्यद्रव्यमपि न भौतिकं न कालिकं न चात्ममयं न दिङ्मयमित्यतः पृथगुक्तम् । एतदविद्वांसो मनो भौतिकमाहुः । अन्नमशितं त्रेधा विधीयते ; तस्य

समवायिकारणत्वञ्च बोद्धव्यं ; यदुत्पन्नमात्रं द्रव्यं प्रथमक्षणे निर्गुणं तदपि द्वितीयक्षणावश्यम्भाविगुणवत्तया तद्योग्यत्वाद् गुणवदिति मन्तव्यम् । वैशेषिकेऽप्युच्यते "क्रियावत् गुणवत् समवायिकारणं द्रव्यं" तत्रापि च यथेह व्याख्यातं तथैव व्याख्यातम् ।

यः स्थविष्ठो भागस्तन्मलं, यो मध्यमस्तन्मांसं, योऽणिष्ठस्तन्मनः । अन्नमयं हि सौम्यमन इति वेददर्शनात् । तन्न, सा हि श्रुतिर्जातोत्तरकालम् आहारांशेन मनःपोषणवचना न त्वारम्भकवचना इति । अथ क्रियावद्वा गुणवद्वा समवायिकारणं वा द्रव्यमित्युक्ते घटादिसमुदायस्य क्रियागुणाश्रयत्वात् स्वस्मिन् द्रव्यत्ववारणाय समवायिकारणमिति वक्तव्यं, न क्रियावन्मात्रं द्रव्यं स्वात्मकालदिशाञ्च क्रियावत्त्वाभावात् । समवायिकारणमिति न द्रव्यं गुणानां वारणाय कर्म्मेति । संख्यापरिमाणपृथक्त्वपरत्वापरत्वगुणाः द्रव्येषु गुणेषु कर्म्मसु च वर्त्तन्ते, तेन गुणवद् द्रव्यमिति न भवति । कर्म्माश्रयसमवायिकारणं द्रव्यमित्युक्ते कर्म्मशब्देन जायमानकर्म्मणोऽप्राप्तिः स्वात्मकालदिक्षु क्रियावत्त्वाभावान्न तेषां द्रव्यत्वं स्यात् । गुणवत् समवायि कारणं द्रव्यमित्युक्ते संख्यादिगुणवत्त्वात् गुणकर्म्मणोर्द्रव्यत्वप्रसङ्गः । इत्थञ्च द्रव्यत्वं कर्म्मगुणाश्रयत्वसमवायिकारणत्वोभयरूपमेवेत्याहुरेके । परे तु कर्म्मणा सहिता गुणाः कर्म्मगुणाः, न तु कर्म्म वा गुणा वा ; तेन परत्वादिगुणानां कर्म्मणा सहितत्वासहितत्वस्वभावेन समवायिकारणत्वेऽपि तदाश्रयत्वेन न द्रव्यत्वं कर्म्मरहितत्वं कर्म्मसहितत्वमात्रस्वभावगुणरहितत्वं कर्म्मवत्तामेव कर्म्मसहितत्वस्वभावगुणवत्त्वं न त्वन्यस्येति स्थापितं भवति । तथा च शब्दादीनां गुर्व्वादीनां बुद्धेः प्रयत्नान्तानाञ्च गुणानां कर्म्मण्यवृत्तित्वात् कर्म्मरहितत्वमात्रस्वभावानां कर्म्मरहितानामाश्रयत्वं स्वात्मकालदिशाञ्चौपचारिककर्म्मवत्त्वेन शब्दाद्याश्रयत्वम् । कर्म्मसहितत्वासहितत्वस्वभावानां परत्वादीनान्तु द्रव्यगुणादिषु सर्व्वत्रैव वृत्तिर्न च सा नियम्यत इति । कारणं कार्य्यति, क्रियाहेतुः, कारणं येन विना यन्न भवति, तस्य तत्तद्भवति ; तच्च त्रिविधं—जनकमात्रं समवायि चेति, तद्द्विविधं निमित्तम् ;—समवायिकारणन्तु तत् यत् खादिकं शब्दादयः कर्म्म च । शब्दादिगतपरत्वादिकं कर्म्मगतञ्च परत्वादिकं तदेतत् सर्व्वं यथायथं मिलित्वैकत्वेन परिणमत्यतः कार्य्यरूपं विशिष्टापूर्व्वमेकं भवति तत्तत्सर्व्वं तस्य कार्य्यस्य समवायिकारणं यथातथं भवति ; सुतरां द्विविधं समवायिकारणं भवति । एकं समवायानुयोगिरूपं द्वितीयं समवायप्रतियोगिरूपं तयोर्मध्ये त्वेकस्मादपरं विशेषयति ।

गुणलक्षणमाह समवायीत्यादि । समवायीति समवायाधेयः ; तेन व्यापकद्रव्येभ्यो निष्क्रियेभ्य आकाशादिभ्यो गुणव्यावृत्तिः, न ह्याकाशादयः समवायाधेयाः ; नित्यसमवायाः

यत्रेत्यादि। कर्म्मगुणा यत्राश्रितास्तद् यद् यस्य कार्य्यस्यारम्भे कर्म्मगुणाश्रयीभूतं सत् समवायिकारणं तत्क्रियया विक्रियमाणं कार्य्यरूपेण परिणामि भवति, तत्तस्य कार्य्यस्य द्रव्यं नाम कारणं भवति। तद् यथा। सत्त्वात्मशरीरेन्द्रियात्मके पुरुषे खल्वारभ्यमाणे वायुतेजोजलभूमिमनसां क्रियाभिः सर्व्वेषां नवानां संयोगे तत्तत्क्रियाभिरुपचरितक्रियावन्त आकाशात्मदिक्काला भवन्तो वाय्वादिभिः सह मिलित्वा तत्तत्पुरुषरूपेण परिणमन्त एव नवैव तस्य पुरुषस्य समवायिकारणानि भवन्तीति। खादीन्यात्मा मनः कालो दिक् चेति नवैव पुरुषस्य द्रव्याणि, इति क्रियया यद् रूपान्तरेण यत्परिणामि तत् समवायिकारणं तस्य कार्य्यस्य तद् द्रव्यं नाम कारणमिति योगरूढ़मिद बोध्यम्। कर्म्मेत्युक्त्या कार्य्यारम्भकाणां कार्य्यत्वेन परिणमने स्वस्वकर्म्मैव हेतुरिति ख्यापितं न हि स्वस्वक्रियां विना परस्परं संयोगः स्यात् तत्संयोगाधीनश्च तद् द्रव्यगुणानां परस्परं समवायः कर्म्मणाञ्च परस्परं समवायश्च स्यात् तत्तद्रूपेण परिणामश्च लभ्यते। गुणानुक्तौ तत्तत्कार्य्यारम्भे खादीनां प्राधान्यं न ख्याप्यते गुणारम्भकत्वं च खादीनां सम्भाव्यते। कालदिशोः निर्गुणयोश्च कार्य्यारम्भे सक्रियवाय्वादिक्रियया शेषैः सह संयोगे तद्वाय्वादिक्रियययोपचरितक्रियावत्त्ववत् खादिगुणोपचरितगुणवत्त्वञ्च न प्राप्यते। तस्मात् तदुपचरितगुणवत्त्वेन कार्य्यत्वेन परिणामार्थं गुणा इति पदम्। आश्रिता इति पदेन कार्य्यारम्भे गुणकर्म्मणामप्राधान्यं ख्यापितम्। द्रव्यस्य द्रव्यात्मकमूर्त्तारम्भे समवायिकारणत्वं ख्यापितं न तु गुणकर्म्मारम्भकत्वमिति। समवायीत्युक्त्या कार्य्यानारम्भकाणां कर्म्मगुणवतां तत्कार्य्ये द्रव्यत्वं व्यवच्छिन्नम्। यथा घटादिकार्य्यस्य नात्मा मनश्च द्रव्यं कर्म्मगुणाश्रयोऽपि न घटारम्भे घटस्य समवायिकारणमात्मा मनश्चास्ति। इत्येवं तुल्यकार्य्यकरत्वं कार्य्यं गुणकर्म्माश्रयसमवायिकारणत्वं खादीनां नवानां सामान्यं तथाविधसमवायो वा। पुरुषाणाञ्चैतानि तुल्यनिमित्तकृतत्वसामान्यानि। कर्म्म च गुणाश्च यत्राश्रितास्तत् समवायिकारणं यद्भवति तद्द्रव्यं तस्य कार्य्यस्येत्यर्थः। परत्वाद्याश्रया अपि शब्दादयो गुणा न कर्म्माश्रयास्तेन शब्दादीनां द्रव्यत्ववारणाय कर्म्मेतिपदम्। एवं कर्म्मापि परत्वाद्याश्रय-

निश्चेष्टः, चेष्टानिर्गत्या चेह चेष्टाशून्यत्वं तथा चेष्टाव्यतिरिक्तत्वञ्चोच्यते, तेन चेष्टारूपात् कर्म्मणो व्यावृत्तिः, तथा क्रियाधारत्वयोग्येभ्यो मूर्त्तद्रव्येभ्यो व्यावृत्तिः सिद्धा ; गुणस्य "कारणम्" इत्यनेन

समवायिकारणं भवदपि न कर्म्माश्रय इति। कालखात्मदिशां कर्म्माश्रयत्वाभावेऽपि गुणाश्रयत्वाद् द्रव्यत्वमिति। आश्रयः समवायिकारणं द्रव्यमित्युक्तौ त्वाश्रयाश्रितत्वनियमाप्राप्तौ समवायिनां खादीनामाश्रयत्वं शब्दादीनां कर्म्मणश्चाश्रितत्वमित्युपदेशार्थं कर्म्मगुणा इति स्फुटमुक्तमित्येके यद् व्याचक्षते, तदपि प्रायेणानपवादं, परन्तु शब्दादिसमवाययोगित्वमाकाशादीनां प्रसिद्धमस्ति। कार्य्यन्तु यत् पुरुषघटादिकं तत्राकाशादीनां शब्दादीनाञ्च कर्म्मणश्च समवाया दृश्यन्ते न ह्याकाशादिषु शब्दादीनां यः समवायः स पुरुषघटादिकार्य्यं पूर्व्वमेव हि शब्दादिमत्तयाऽऽकाशादीनां प्रसिद्धिरस्ति। तस्मात् समवायिकारणं द्विविधं प्रधानमप्रधानञ्च, तयोर्ज्ञापनार्थमाह। यत्रेत्यादि, सर्व्वमन्यत्तुल्यमित्यपरे। अत्राप्याहुरन्ये उपदेशार्थलक्षणे त्वाधाराधेयत्वख्यापनायाधिकपदोपादाने गौरवं भवति तथा कर्म्मानाश्रयत्वेऽपि गुणाश्रयत्वेनात्मकालव्योमदिशां द्रव्यत्ववत्कर्म्मानाश्रयत्वेऽपि परत्वादिगुणाश्रयत्वात् शब्दादीनां कर्म्मणश्च द्रव्यत्वापत्तिः स्यादिति ; तस्मादेवं व्याचक्षते। कर्म्मलक्षणे वक्ष्यमाणस्य कर्त्तव्यस्येत्यस्यात्रान्वयात् कारणमित्युक्तत्वार्थादेव लब्धस्य कार्य्यस्येति बोध्यम्।

समवायीति—समवैतुं शीलमस्येति तत् समवायि, विलक्षणानेकं यथायथं खादिकं तच्छब्दादिकं तत्कर्म्म च तच्छब्दादेस्तत् कर्म्मणश्च परत्वादिकं यदेतत् सर्व्वं मिलित्वा परिणम्य कार्य्यत्वेनैकीभवितुं शीलं यस्य, खादि-शब्दादि-स्पन्दन-तत्तदीयं परत्वादि यावत्तत् समवायि। तच्च द्विविधं—कर्त्तृभूतत्वेन मुख्यम् अकर्त्तृभूतत्वेन गौणम् ; तत्र मुख्यस्य गौणाद् व्यावृत्त्यर्थमाह यत्रेत्यादि। यस्य कार्य्यस्य यद्यत् समवायि कारणं खाद्यादिकं तेषु मध्ये तस्य कार्य्यस्य समवायिकारणभूतं कर्म्म समवायिकारणभूताश्च गुणा यत्र समवायिकारणे आश्रिता एव न त्वनाश्रिता समवायेन वर्त्तितुं योग्यास्तत् समवायिकारणं तस्य कार्य्यस्य द्रव्यमित्यर्थः। यथा घटादौ पुरुषादौ च खादिनवकम्। कर्म्म च गुणाश्च परत्वादिगुणाश्रया अपि न कदाप्यनाश्रिता नियमतो यथायथं खादिवृत्तिकत्वात् ततः कर्म्मगुणाश्च न द्रव्याणि भवन्ति। खात्मकालदिशां गुणाश्रयत्वात् मनोवाय्वादि-

वाकारणेभ्यः सामान्यविशेषसमवायेभ्यो व्यावृत्तिः सिद्धा। कारणत्वन्तु विभुद्रव्यपरिमाणाव्यावर्य्यविरूपादिषु लक्षणीयेषु गुणेषु नास्ति, तेन भागासिद्धं लक्षणं स्यात्, अतः कारणत्वेमेह

सक्रियद्रव्यान्तरसंयोगेनोपचरितक्रियावत्त्वादपि वाय्वग्निजलभूमनसां गुण-कर्म्माश्रयत्वात् द्रव्यत्वं समन्वितं न चाधिकरणघटाद्याश्रितत्वादनुपपन्नं घटादीनां मृदाद्यधिकरणानां घटादिषु समवायिकारणत्वाभावात्। इति समवायिकारणं इति द्वे पदे, तेन च घटादिस्थकर्म्मगुणानां घटाद्याश्रितत्वनियमेऽपि तद्घटादौ तेषां स्वस्य समवायिकारणत्वाभावान्न स्वस्य स्वद्रव्यत्वम्। श्यामामकपालमाला-संयोगाज्जाते श्यामामघटे वह्निना पाकादन्यतमकपाले रक्तो वर्णोऽन्यत्र कपाले कृष्णो वर्ण आहितः सम्बाश्रित एव समवायिकारणञ्च पूर्वं सर्व्वं कपालं घटरूपत्वे तु कार्य्यमेव पृथक्त्वेन कपालत्वेन ज्ञातत्वे समवायिकारणत्वेन ज्ञानदशायां तत्रस्थ एवाहितरक्तकृष्णादिने तद्घटादेः समवायिकारणमिति; तेषु मध्ये तस्य कार्य्यस्य समवायिकारणभूतं कर्म्मगुणाऽश्चेति पदम्। कर्म्मगुणाधिकरणत्वेन खादीनां प्राधान्यं खाद्याश्रितत्वनियमेन कर्म्मगुणानां गौणत्वं ख्यापितं भवति। यत्राश्रिता एव गुणा इत्युक्तौ तु गुणानामप्राधान्यं खादीनां प्राधान्य ख्याप्यते न तु कर्म्मणोऽप्राधान्यं प्राधान्य वेति मनसि कृत्वा कर्म्मगुणा इत्युक्तं, तथा यत्राश्रितमेव कर्म्मेत्युक्तौ च वाच्यम्। कर्म्माश्रयत्ववचनेन न द्रव्याणां खादीनां कर्तृत्वेन च प्राधान्यं ख्यापितं न तु केवलाधारत्वेन। कर्म्मगुणानाञ्चाकर्तृत्वेन चाप्राधान्यं ख्यापितं न तु केवलाश्रितत्वेनेति। कर्त्ता हि कारके स्वतन्त्रः प्रयोजको हेतुश्चेति। तत्र स्वतन्त्र-प्रयोजकयोरधीनः कर्म्मरूपहेतुः कर्त्ता तयोराश्रितत्वादिति। तत्र स्वतन्त्रः कर्त्तापि त्रिधा—क्रियाजनकप्रयत्नवान् मुख्य, फलजनककारकान्तरव्यापारजन्य-तज्जनकव्यापारवान् परः, स्वेतरसंयोगादितरव्यापारेण जनितव्यापारवत्त्वस्योपचारादपर इति; द्वौ भाक्तौ, तेनात्मा चैतन्यात् क्रियाभावेऽपि मुख्यकर्त्ता, चेतनपुरुषश्च तद्द्रव्यवत्त्वात् मनोवाय्वग्निजलभूमयस्तु चैतन्याभावात् प्रयत्नाभावात् क्रियावत्त्वाच्च मध्यमा भाक्तकर्त्तारः। खकालदिशामचैतन्येन प्रयत्नाभावात् क्रियाभावाच्च मनोवाय्वादिसक्रियसंयोगादुपचरितक्रियावत्त्वादधमभाक्तकर्तृत्वमिति। कर्म्मगुणानान्तु चैतन्याभावे प्रयत्नाभावात् स्वाभाविकोपचरितोभयक्रियाभावाच्च न त्रिधान्यतमकर्तृत्वमिति।

अथान्ये व्याचक्षते—यत्र समुदायलक्षणे कार्य्ये घटपुरुषादौ

भावरूपकारणाव्यभिचारि सामान्यवत्त्वं लक्षणतया बोद्धव्यम्, तच्च सामान्यवत्त्वं सत्त्वगुण-व्यापकं सामान्यादिव्यावर्त्तकञ्च सामान्यादीनां सामान्यवत्त्वाभावात्; किंवा विभुद्रव्यपरि-

यत् समवायिकारणमाश्रिताः कर्म्मगुणास्तत्कर्म्मगुणाश्रयसमवायिकारणं तस्य कार्य्यस्य द्रव्यम्। यथा पुरुषे कार्य्ये शुक्रशोणितिकानि पञ्च भूतान्यात्मा सूक्ष्मशरीरी मनः कालो दिगात्मजानि पञ्चभूतानि रसजपञ्चभूतानीति क्रमिकजातकरचरणादिकं सर्व्वं समवायिकारणं, तदाश्रिता एव तत्तदीयाः कर्म्मगुणाः समवायिकारणानीति, तत्सर्व्वं तत्कर्म्मगुणाश्रयस्तत्पुरुषस्य द्रव्यम्। एवं घटादौ बोध्यम्। तत्र आत्मा केवलो निष्क्रियः पूर्व्वं ततो मनसा संयोगात् तत्क्रिययोपचारात् सक्रियः स्यान्मनश्चाचेतनं तस्य चैतन्येनोपचाराच्चेतनं स्यादिति। कालः क्षणादिः गर्भशरीरावयवोपचये समवायी सन् कारणं भवति—न हि कालप्रकर्षमन्तरेण तत्क्षणं गर्भशरीरादुपचयापचयौ सम्भवतः। दिशश्च खोपाधिविशेषमाक्य-वाचीप्रतीच्युदीच्यादिभिर्विशेषितदेशाधिकरणे गर्भशरीरावयववलवर्णप्रकृति-सत्त्वसात्म्यवार्व्वीर्य्यादिविशेषहेतुतया समवायिन्यः सत्यः कारणानि भवन्ति। एवमाकाशश्च वाय्वादिसक्रियसंयोगेन यथायुतं सूक्ष्मबृहन्मध्यमशुषिरलाघववैशद्य-हेतुक्रियावत् समवायिकारणं भवतीति। यदि हि खात्मकालदिशामुपचारेण कर्म्मवत्त्वं न मन्यसे तर्हि तेषां कार्य्योपदर्शनमनागमं स्यादिति। कार्य्यस्य घटादेस्तद्गुणानाञ्च तत्कर्म्मणाञ्च कार्य्यभूतापरद्रव्यसंयोगेन जाते त्वेकीभूते द्रव्ये समवायिकारणत्वात् तेषु तदाश्रिताश्च कर्म्मगुणास्तद् द्रव्यं तस्य कार्य्यस्येति घटादिकर्म्मेति बोध्यं, यथा शुण्ठीकणामरिचानां संयोगाज्जातं यदेकं विशिष्ट-पूर्व्वद्रव्यं तत्र समवायिकारणानि शुण्ठ्यादीनि। तत्र तत्र च कर्म्मगुणाः सन्ति तत् तच्छुण्ठ्यादीनि तदेकद्रव्ये द्रव्याणि तदीयकर्म्मगुणाश्च कर्म्मगुणा इति बोध्यम्। यत् तु कर्म्मगुणा यत्र कार्य्ये आश्रितास्तत्र यत् कर्म्मगुणेभ्यो ऽन्यत् समवायिकारणं तत् तस्य कार्य्यस्य द्रव्यमित्यर्थः। यथा पुरुषे गमनादि कर्म्म रूपादयश्च गुणा आश्रिताः, तत्पुरुषे तद्गमनादिकर्म्मणो रूपादिगुणेभ्यश्चान्यद् यद् यत् खादिकं शुक्रशोणितपाणिपादादिकं समवायिकारणं तत् तस्य पुरुषस्य द्रव्यम्। सामान्यविशेषौ तु समवायिनावपि द्रव्यगुणकर्म्मरूपावेव जातिजन्मरूपौ तु समवायौ समानासमानप्रसवात्मकौ न तदुत्पत्तौ कारणे अपि तु वृद्धिह्रासयोरेकत्वपृथक्त्वयोश्च कारणे भवतः।

भागाभ्यामवयविरूपाभ्यान्तराणां कारणत्वदर्शनात् विभुपरिमाणाभ्यामवयविरूपाभ्यामपि कारणत्व-योग्यत्वमस्त्येवेति न भागात्मिकता कारणत्वस्य ; किंवा योगिप्रत्यक्षज्ञानहेतुतया विभुपरिमाणा-

समवायस्त्वपरो नास्तीति व्याख्यातं यत् तन्न। खादीनां शब्दादिगुणा वाय्वादीनाञ्च स्पन्दनादिकर्म्म पुरुषीयगुणकर्म्मप्रकृतिभूतत्वेन कार्य्यभूतद्रव्य-गुणकर्म्मसमुदायात्मकपुरुषे समवायिकारणत्वेन द्रव्याणि स्युरिति।

अन्यत्र। कर्म्मगुणा यत्राश्रिताः समवायेन वर्त्तन्ते स्म तत्, समवायिकारणं यत्, तद् द्रव्यं; घटादिषु पुरुषादिषु च यानि मृज्जलादीनि श्यामपीतगुरुलाघवादयश्च स्पन्दनगमनादीनि च वर्त्तन्ते तेषां मध्ये यत्र मृज्जलादौ समवायेन कर्म्मगुणा आश्रिता, तन्मृज्जलादिकरूपं यत् समवायिकारणं तदेव घटादिकार्य्यस्य द्रव्यम्। तथा मृज्जलादि द्रव्यं खादिकमेवेति प्राहुः। परे तु समवायि-कारणन्तु तत्।—यत समवेतं कार्य्यं भवति गुणकर्म्मसमवेतन्तु न कार्य्यं भवति न हि गुणकर्म्मणो कार्य्यं कुरुत इति, न गुणकर्म्मणी समवायिकारणे भवतः, भवतश्च असमवायिकारणे, इति तयोर्न द्रव्यत्वं यत् समवायिकारणं तद् द्रव्यमित्येव लक्षणमेकं कार्य्यरूपे घटादौ द्रव्यत्वानुपपत्तिवारणाय लक्षणान्तरमाह, यत्रेत्यादि। यत्र समवायेन कर्म्मगुणा आश्रिता वृत्तास्तदपि द्रव्यं यथा घटादिकमित्याहुस्तन्न, दृश्यन्ते हि मृद्वालुकादिसमवायिकारणीयगुणकर्म्मघटितान्येव घटादिषु गुणकर्म्माणि घटादिषु गुणकर्म्मणां समवायिकारणान्येव ततसमवायिकारणीभूतद्रव्याणां गुणकर्म्माणि अन्यथाऽन्यथात्वेन गुणकर्म्मासम्भवापत्तेर्मृदादिगुणकर्म्मातिरिक्त-गुणा हि न तत्र दृश्यन्ते। कारणगुणपूर्व्वको हि कार्य्यगुणो दृष्ट इति कणादकपिलादिसर्व्वर्षिमतमिति। कश्चित् तु कर्म्माश्रयत्वोपदेशो द्रव्यस्य गुणादिपञ्चान्यवच्छेदार्थमात्रज्ञापको न तु सजातीयव्यावर्त्तनज्ञापकस्तेन खात्म-कालदिशां कर्म्माभावेऽपि द्रव्यत्वं गुणाश्रयत्वोपदेशश्च विजातीयगुणादिपञ्च-व्यावृत्तिज्ञापनार्थमिति, समवायिकारणत्वञ्च सजातीयविजातीयगुणकर्म्मणोः साधर्म्म्यज्ञापनार्थमिति। द्रव्यन्तूत्पन्नमात्रं क्षणमगुणं द्वितीयक्षणावश्यम्भावि-गुणवदिति यदुच्यते, तदप्युत्तरक्षणे यद् गुणयोगावश्यम्भावित्वं स गुणस्तद् द्रव्योत्पत्तिकाले कुत्र तिष्ठति किमुपादनकश्च कथं वा जातः, किं प्राग द्रव्योत्पत्तेः पूर्व्वं जातः किं तुल्यकालं द्वितीयक्षणजातो वाऽथ प्रसिद्ध एवाजात इति। अथ किन्नु खल्वाकाशे तिष्ठति। प्राक्प्रसिद्ध एवाजातः खपुष्पवत्

दीनामपि कारणत्वं बोद्धव्यम्। एवम्भूतञ्च कारणत्वं यद्यपि सामान्यादिष्वपि कश्चिदनुगम्यते, तथापि समवायी स्थितिपदेन समवायाधारता तथा समवायाधेयता च युगपद्विवक्षिता, तेन

अश्वाण्डवद्वा यत्र च तिष्ठति तत एवोल्लम्फनेन तत् तदुत्पन्नद्रव्यमाविशतीति।

अथ पुनरेतल्लक्षणं व्याचष्टे। "यत्राश्रिताः कर्म्मगुणाः कारणं समवायि यत्। तद् द्रव्यमिति।" कारणवचनेन कार्य्यं इति ख्यापितम्। यत्र कार्य्ये कर्म्मगुणा आश्रिता भवन्ति तस्य यत् कारणं समवायि भवति न तु निमित्तं तस्य कार्य्यस्य तद् द्रव्यम्। ये गुणाः सहजभावोत्पत्तौ नाभिव्यक्ततया जाताः सहकारिकारणान्तरयोगे तु कार्य्यमारभमाणात् सहजभावात् तत्कार्य्यारम्भककर्म्मणा कार्य्येऽभिव्यज्यन्ते ते कर्म्मगुणाः क्रियागुणा उच्यन्ते। तत्र तामसादेव खलु भूतादेरहङ्काराज्जायमाने खे शब्दश्लक्ष्णसूक्ष्मलघुमृदुगुणा अनभिव्यक्ततया जाता एव। वायौ च सूक्ष्मविशदखररूक्षशीतलघुगुणा अनभिव्यक्ता जाता एव, स्पर्शस्तु साधारणो व्यक्ततया। तेजसि च विशदरूक्षलाघवसूक्ष्मतीक्ष्णोष्णगुणा अनभिव्यक्तत्वेन जाता एव, रूपन्तु साधारणं व्यक्तं जातम्। अप्सु च जायमानासु पिच्छिलमृदुसान्द्रसरमन्दशीतस्निग्धद्रवगुणा अनभिव्यक्ता जाता एव, रसस्तु व्यक्तः साधारणो जातः। पृथिव्यामपि स्थूलसान्द्रविशदस्थिरमन्दकठिनखरगुरुत्वगुणा अनभिव्यक्ता जाता एव, गन्धस्तु साधारणः प्रव्यक्त एव जातः। एवमात्मन्यव्यक्ताख्ये चतुर्विंशे तत्त्वे कालानुप्रविष्टात् क्षेत्रज्ञाधिष्ठितादनभिव्यक्तगुणरूपात् प्रधानात् कालेन क्षेत्रज्ञक्षोभणपूर्व्वकसङ्कोचविकाशाभ्यां प्रव्यक्तसत्त्वरजस्तमोगुणरूपेण निष्पद्यमानाज्जायमाने समसत्त्वरजस्तमोलक्षणे कालक्षेत्रज्ञप्रव्यक्तत्रिगुणप्रधानसमुदायात्मके संहते बुद्धिरव्यक्ता साधारणरूपा जातैव। तस्मात् स आत्मेत्युच्यते चैतन्यं तु व्यक्तमेव जातमिति चेतनत्वोच्यते। मनसि च सात्त्विकादेव वैकारिकाख्यादहङ्काराज्जायमाने युगपज्ज्ञानोत्पत्त्यनुत्पत्तिहेतुगुणोऽव्यक्ततया जात एव। शब्द इवाकाशस्य न हि निर्गुणं मनो जातमिति। काले चाव्यक्तात् स्वान्तर्निविष्टकालांशेन सत्त्वादिगुणयुक्तेन जायमाने संवत्सरे चक्रवद्भ्रमणस्वभावे भावानां प्रत्यग्रभावसमभावापचयभावकृतपरिणामविशेषकृद्गुणस्त्वव्यक्त एव जातः, शब्द इवाकाशस्य न हि निर्गुणः कालो जातः। दिशश्च प्राच्यादय आहङ्कारिकादाकाशाधिदेवताया दिशो, जायमानासु तासु प्राच्यादिषु

समवायकेवलाधारस्य विशुद्रव्यस्य तथा समवायकेवलाधेयस्य सामान्यादेश्च व्युदासः सिद्धो भवति ॥ २२ ॥

देशनिष्ठास्तु तत्तद्देशाधिकरणे गर्भशरीराद्यवयवबलवर्णप्रकृतिसत्त्वसात्म्य-वाग्वीर्य्यादिविशेषहेतवो गुणा अनभिव्यक्ता जाता एव। शब्द इवाकाशस्य न हि निर्गुणा दिशो जाता इति।

एते खलु स्वस्वसहजातानां खादीनां नवानामनभिव्यक्ता ये शब्दादयो गुणा देवनरादिचेतनाचेतनकार्य्यमारभमाणेभ्यः खादिभ्यः परस्परं पुनःपुनः संयोगविभागाभ्यामेकीभावे स्थूलाः सन्तः खादिभ्य एव यथास्वं शब्दादयस्ते तत्कार्य्यारम्भककर्म्मणाभिव्यज्यन्ते। ते तेऽभिव्यक्ताः शब्दश्लक्ष्णादयो गुणा देवनरादिषु खादिभ्यो जायमानेषु खादिष्वाश्रिता भवन्ति। तेषां जायमानानां खादीनां समवायिकारणं प्रकृतिभूतानि खादीनि नव दिगन्तानि जातानां खादीनां द्रव्याणि। नैते कर्म्मगुणाः स्पर्शादिभ्यो जातेषु शीतोष्णादिस्पर्शादिषु आश्रिता भवन्ति। तस्माच्छीतादीनां समवायिकारणानि प्रकृतिभूतस्पर्शादयो गुणा न द्रव्याणि, न वा कर्म्मसामान्यविशेषसमवायाः। अत एव वक्ष्यते— "गुणा गुणाश्रया नोक्ता" इति। देवनरादेरुत्पादकाः पित्रादयस्तु यत्र कार्य्येषु खादिष्वाश्रिताः कर्म्मगुणास्तेषां निमित्तकारणानि न समवायिकारणानीति, न ते पुत्रादेर्द्रव्याणि। एवं कर्म्मणा निष्पन्ना गुणाः कर्म्मगुणा इति वा भवतु अथवा कारणवचनेन कार्य्यं इति ख्यापनात् यत्र कार्य्ये जायमाने जायमानाः कर्म्मगुणा कर्म्माणि गुणाश्चाश्रिता भवन्ति, तेषां जायमानकर्म्मगुणाश्रयाणां यद् यत् समवायिकारणं तत् तत्तस्य तस्य द्रव्यमिति।

पूर्व्ववदनभिव्यक्ता गुणा एवाभिव्यज्यमाना जायमाना उच्यन्ते। स्पर्शरूप-रसगन्धा इव प्रागेव व्यक्ता एव सङ्ख्या परिमाणं पृथक्त्वं परत्वापरत्वे संयोग-विभागौ सुखदुःखे इच्छाद्वेषौ प्रयत्नश्चेत्येते गुणा जाताः सहजा एवेति, स्पर्शरूप रसगन्धाः साधारणरूपाः पूर्व्वपूर्व्वभूतानुप्रवेशे ह्यात्मकादिषु वाय्वादिषु शीतोष्णखरस्पर्शरूपेण जायमानः स्पर्शः लोहितशुक्लकृष्णवर्णतया जायमानं रूपं स्वादस्वादुरूपेण जायमानो रसः सौरभरूपेण जायमानो गन्धश्च न जाय-माना उच्यन्ते। प्राक् साधारणत्वेन व्यक्ततयैव जातत्वादनभिव्यक्ततया जातास्तु येऽभिव्यज्यन्ते ते जायमानाः कार्य्ये जायमानेऽभिधीयन्ते। तदा स्पर्शाः शीतादयो रूपाणि लोहितादीन्येवमन्यान्यपि पृथक्त्वगुणवन्ति जायन्ते। न च तानि जायमानपृथक्त्ववन्ति, पृथक्त्वादयो हि प्रागेवाभि-व्यक्ता न त्वनभिव्यक्ता इति ते शीतादयो न द्रव्याणि। कर्म्माण्यपि

शब्दश्लक्ष्णादय इवाकाशस्यात्मनः कालस्य दिशां वायुतेजोऽम्बुभूनभसाञ्च जायमानानामनभिव्यक्तानि जातान्येव कार्य्यारम्भे तु सहकारिकारणान्तरयोगेऽभिव्यज्यन्ते । न हि निष्क्रियाणि तानि जातानि । तत्र वाय्वादिषु पूर्व्वपूर्व्वभूतानुप्रवेशाद् आत्मकादिषु वाय्वादिषु सर्व्वतोगमनोर्द्ध्वज्वलनाधोगमनमन्दाधोगमनान्यभिव्यज्यन्ते मनसोऽनवस्थितगतिः । पुनरासां खाद्यात्ममनःकालदिशां देवनरादिचेतनाचेतनकार्य्यारम्भे परस्परं भूयोभूयः संयोगविभागाभ्यां परिणामेन कार्य्यरूप आकाशे माईवशोषिर्य्यलाघवकराणि कर्म्माण्यभिव्यज्यन्ते तदारम्भकादाकाशादेव । एवं कालस्य परिणामेन प्रत्यग्रभावादिना परिणामकराणि कर्म्माण्यभिव्यज्यन्ते । दिशाश्च तदुपाहितदेशाधिकरणे गर्भशरीराद्यवयवबलवर्णप्रकृतिसत्त्वसात्म्यवाग्वीर्य्यादिविशेषकराणि कर्म्माण्यभिव्यज्यन्ते । आत्मनश्च मनःप्रेरणादिकानि कर्म्माणि अभिव्यज्यन्ते तानि कार्य्यरूपानाकाशकालदिगात्मन आश्रयन्तीति, तत्र आश्रितानि कर्म्माणि । तस्माद् यत्र कार्य्यं कर्म्माणि गुणाश्च जायमाना आश्रितास्तत्समवायि यत्कारणं तद् द्रव्यं खादिनवकमेव न त्वधिकम् । आत्मनस्तु कार्य्यः प्रत्यगात्मा सक्रियः । वक्ष्यते च शारीरे—"निष्क्रियस्य क्रिया तस्य भगवन् विद्यते कथम्" इति प्रश्ने । "अचेतनं क्रियावच्च चेतनश्चेतयिता परः । युक्तस्य मनसा तस्य निर्द्दिश्यन्ते विभोः क्रियाः ॥" इति ।

आत्मकालयोरारम्भकाणां कार्य्यं चात्मनि काले जायमाने कर्म्माणि गुणाश्च नाभिव्यज्यन्ते मनोदिगाकाशवायुतेजोऽम्बुभूमीनामारम्भकस्याहङ्कारस्य कार्य्येषु तेषु मनोदिगाकाशादिषु जायमानेषु च कर्म्माणि नाभिव्यज्यन्ते स्पर्शादयश्च गुणा वाय्वादिष्वभिव्यज्यन्ते इति । जायमानगुणाश्रयाणां वाय्वादीनां कार्य्याणां गुणाश्रयत्वेऽपि कर्म्माश्रयत्वाभावादेषां नवानां समवायिकारणानि न द्रव्याणि भवन्त्यहङ्कारादीनि । यत्र कारणे कर्म्मगुणा आश्रितास्तत् कारणं यत् समवैति तद् द्रव्यं प्रागेव व्याख्यातम् । ये तु खादीनि नवैव द्रव्याणि प्रागुत्पत्तावनभिव्यक्तक्रियाणि जातानीत्येवं न विदन्ति पूर्व्वपूर्व्वभूतानुप्रवेशाद् द्व्यात्मकादीनि वाय्वादीनि चत्वारि सक्रियाणि कार्य्यद्रव्याणि विषयसंज्ञकानि प्रकृतिभूतद्रव्याणि विदन्तो नैतद् द्रव्यलक्षणेन लक्षयितुं प्रभवन्ति व्याख्यान्ति च बहुप्रकारेणेति ।

अथैतदभिप्रायेणैव कणादेनाप्युक्तं वैशेषिके । प्रकृतिभूतानि पृथिव्यादीनि नव द्रव्याणि, प्रकृतिभूताः सप्तदशैव गुणाः, पञ्च कर्म्माणि । तद् यथा—पृथिव्याप-

स्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि। रूपरसगन्धस्पर्शाः संख्याः परिमाणं पृथक्त्वं परत्वापरत्वे संयोगविभागौ बुद्धय इच्छाद्वेषौ सुखदुःखे प्रयत्नाश्च गुणाः। उत्क्षेपणमवक्षेपणं प्रसारणमाकुञ्चनं गमनमिति कर्म्माणि। एषां लक्षणानि।—क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम्। द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्। (एकद्रव्यमगुणं) संयोगविभागेष्वनपेक्षकारणमिति कर्म्मलक्षणम् इति। स्पर्शश्च वायोः। दृष्टं लिङ्गमित्यनुवृत्तम्। पृथिव्या गन्धः। अपां रस। तेजसो रूपम्। रूपरसगन्धस्पर्शवती पृथिवी। रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः। तेजो रूपस्पर्शवत्। स्पर्शवान वायुः। त आकाशे विद्यन्ते। सर्व्वाधारतैव दिक्कालयोः। निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम्। अपरस्मिन परं युगपच्चिर क्षिप्रमिति काललिङ्गानि। नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति। इत इदमिति यतस्तद्दिश्यं लिङ्गम्। आदित्यसंयोगाद् भूतपूर्व्वाद् भविष्यतो भूताच्च प्राची। तथा दक्षिणा प्रतीच्युदीची च। एतेन दिगन्तरालानि व्याख्यातानि। प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरसञ्चारा बुद्धिः * सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि। प्रवृत्तिनिवृत्ती प्रत्यगात्मनि दृष्टं परत्र लिङ्गम्। आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गमिति।

व्याख्यायते च। शब्दगुणमाकाशस्य नोक्त्वा निष्क्रमण प्रवेशन लिङ्गमाकाशस्येत्युक्तया आकाशस्यानभिव्यक्तशब्दसहितोत्पन्नत्वमभिप्रेत्य प्रकृतिगुणमध्येऽनभिव्यक्तत्वात् शब्दगुणो नोक्तः कार्य्यगुणत्वेन परीक्षितश्च। तद्दर्शयिष्यामः शब्दपरीक्षायाम। स्पर्शश्च वायोर्दृष्टं लिङ्गं तेजसो रूपमपां रसः पृथिव्या गन्ध इत्युक्त्वा पुना रूपरसस्पर्शगन्धवती पृथिवी, रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धा इति वचनेन संसर्गजाः कार्य्यगुणा द्रवस्निग्धत्वादयः ख्यापिताः। तेजो रूपस्पर्शवत्, स्पर्शवान वायुरित्युक्तया च द्रवस्निग्धादिगुणोत्पत्तौ भूतान्तरसंसर्गं हेतुः पूर्व्वपूर्व्वभूतानुप्रवेशः ख्यापित। तस्मात् क्रियागुणवत्समवायिकारणमित्यस्य व्याख्यानं पूर्व्ववद् बोध्यम। कार्य्यद्रव्ये ह्यारभ्यमाणे प्राणिनि नवभिर्द्रव्यैरमाणिनि सप्तभिरात्मनो वर्ज्जं तेषां परस्परं संयोगविभागाभ्यां परिणामे जायमाने खाकाशादाकाशः शब्दश्लक्ष्णादि-

* मुद्रितपुस्तके तु सञ्चारा इत्यत्र विकारा इति पाठान्तरं दृश्यते तथा न दृश्यते बुद्धिरित्यधिकः पाठः।

गुणशौषिर्य्यादिकृत्कर्म्मवान् जायते। इति जायमानक्रियागुणवतः समवायि कारणमनभिव्यक्तशब्दगुणमाकाशम्। एवं कालाज्जातः कालो जायमान-क्रियागुणवान् जायते। तस्य समवायिकारणं कालः। एवमात्मनो जाय-माने प्रत्यगात्मनि प्रवृत्तिनिवृत्ती क्रिये इच्छाद्वेषादयो जायन्ते। तस्य प्रत्यगात्मनः समवायिकारणमात्मा निष्क्रियः। एवं दिशो जायमानासु दिक्षु तदुपाहितदेशेषु गर्भशरीरावयवत्वग्वर्णादिवाग्वीर्य्यविशेषहेतवो गुणा जायन्ते तासां समवायिकारणमेका दिक् लोके द्रव्यं प्राच्यादयः शारीर-द्रव्यम्। एवं पूर्व्वपूर्व्वभूतानुप्रवेशे द्व्यात्मकादिषु वाय्वादिषु स्पर्शविशेषादयो गुणा जायन्ते क्रियाः सर्व्वतोगमनादय इति. तस्य तस्य क्रियागुणवतः समवायि-कारणं द्वित्र्यादिभूतं द्रव्यम्। क्रियागुणवदिति प्रथमान्तं चेन्मन्यते तदापि समवायिकारणं कार्य्यत्वेन परिणमत् क्रियागुणवत् जायमानक्रियागुणवद् भवतीति लक्षणसमन्वयः। जनकहेतुव्यावृत्त्यर्थं समवायीति। द्रव्याणां खादीनां मनोदिशोश्च समवायिकारणमहङ्कारस्य खादिरूपेण जायमानत्वे जायमानगुणवत्त्वेन जायमानत्वेऽपि जायमानक्रियावत्त्वेन परिणामाभावान्न द्रव्यत्वम्। तथा कालात्मनोश्च समवायिकारणं व्याख्येयम्। गुणवत् समवायिकारणमिति वचने रूपादिभ्यः प्रकृतिगुणेभ्यो जायमानेषु लोहित-श्वेतकृष्णादिषु पृथक् गुणा जायन्ते। पुनः पाञ्चभौतिके तल्लोहितश्वेत-कृष्णेषु तत्समवायादेकत्वं पीतत्वादिकं कार्य्यं जायते। तत् गुणवत् समवायि-कारणं प्रकृतिरूपादिकमिति तेषु द्रव्यत्वप्रसङ्गः। कर्म्म तु न कर्म्मगुणाश्रय इति न द्रव्यं तथा सामान्यविशेषसमवाया इति समं चरककणादयोरिति।

क्रमिकत्वाद् गुणलक्षणमाह, "समवायी तु निश्चेष्टः कारणं गुणः"। कारण-पदेन कार्य्योपस्थितिः यस्य कार्य्यस्यारम्भे यो भावो निश्चेष्टः क्रियाहीन एव सन्नन्यक्रियया परिणमन् कार्य्यत्वमापद्यते स तस्य कार्य्यस्य गुणो नाम कारणमुच्यते क्रियाहीनत्वात् कर्त्तृत्वाभावादप्राधान्यात्। निश्चेष्ट इत्यनेन खादीनां नवानां व्यावृत्तिः। समवायीत्युक्तया कर्म्मणां द्रव्याश्रितानां द्रव्याश्रितगुणपरिणामहेतुत्वे न निश्चेष्टत्वेन च न गुणत्वम्। तस्मिन् कार्य्ये गुणे समवायित्वाभावात्। विजातीयगुणानाञ्च विजातीयकार्य्यगुणे समवायि-त्वाभावाच्च न विजातीये कार्य्ये गुणत्वमिति। प्रमादिनस्तु वैशेषिके कणा-दोक्तं गुणलक्षणं द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमन्यापेक्षो * गुण

* अनपेक्ष इति क्वचित् पाठः।

संयोगे च विभागे च कारणं द्रव्यमाश्रितम्।
कर्त्तव्यस्य क्रिया कर्म्म कर्म्म नान्यदपेक्षते ॥ २४ ॥

इति दृष्ट्वा गुणकर्म्मणी असमवायिकारणे भवत इत्याहु। तेषामयं हि प्रमादः। सूत्रकृत्कणादेन क्रियागुणवत् समवायिकारणमिति पूर्व्वस्मादनुवर्त्ता समवायिकारणपदं द्रव्याश्रयीत्यादि सूत्रं कृतम्। तेन द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमन्यापेक्षः समवायिकारणं गुण इति गुणलक्षणं पर्य्यवसितम्। यदि हि गुणो गुणान्तरस्य समवायिकारणं न भवति कथं तर्हि गुणाश्च गुणान्तरमारभन्ते इति वचनं तत्रैव कणादेनोक्तं सङ्गच्छते? गुणा हि द्रव्याश्रिता रूपरसादयः खल्वन्यापेक्षाः स्वस्वाश्रयद्रव्यनिष्ठक्रियापेक्षाः स्वाश्रयद्रव्यनिष्ठक्रियया परिणमन्तः कश्चित् साधारणभूताः पृथक्त्वगुणं समवायेनाऽऽपद्यमानाः पृथग्भूय तेजोऽम्बुभूमिषु लोहितशुक्लकृष्णरूपेण मधुरगन्धादिरूपेण गुणान्तरहीनाः सन्तो द्रव्याश्रयिणः सन्तश्च समवयन्ति कार्य्ये। इति समवायिन एव कारणानि गुणाः। न च ते स्वाश्रयद्रव्याणां संयोगविभागेषु कारणानीति लक्षणसमन्वयः। प्रकृतिगुणानां कार्य्यगुणेषु समवायित्वमन्तरेण निरुपादानककार्य्योपपत्तिः स्यात्। कर्म्माणि तु तथैव कार्य्ये समवयन्ति सन्ति द्रव्याश्रयीणि च सन्ति जायमानगुणानाश्रया एव स्वाश्रयद्रव्याणां संयोगविभागेषु कर्म्मान्तरानपेक्षकारणानि भूत्वापि कार्य्यभूतविशिष्टकर्म्मरूपेण परिणामे द्रव्यान्तरनिष्ठमन्यत् कर्म्मापेक्षमाणानि न तु संयोगविभागेष्वकारणानि तस्मान्न गुणाः। प्रकृतिभूतद्रव्याणि कार्य्यद्रव्याश्रयीणि संयोगविभागेषु स्वक्रियापेक्षकारणानीति संयोगविभागेषु न साक्षात् कारणानि। स्वक्रियया परिणम्य समवायीनीत्यन्यापेक्षसमवायीनि सन्त्यपि नागुणवन्तीति न गुणाः। रूपरसादिप्रकृतिभूतगुणारम्भकाण्यहङ्कारादीनि न द्रव्याश्रयीणीति न गुणाः। इति व्याख्यातं गुणलक्षणम् ॥ २३ ॥

गङ्गाधरः—क्रमिकत्वात् कर्म्मलक्षणमाह, संयोगे च विभागे चेत्यादि।—चकारद्वयेन कार्य्यमारभमाणानां द्रव्याणां संयोगे पुनर्विभागे चाथ पुनः संयोगे चाथ पुनर्विभागे चेत्येवं पुनःपुनः संयोगे च विभागे च यत् कारणमन्यत्

चक्रपाणिः—कर्म्मलक्षणमाह, संयोग इत्यादि।—संयोगे च विभागे च युगपत् कारणं, तेन संयोगो उत्तरदेशसंयोगकारकविभागकारणे तथा विभागे च विभागजविभागमात्रकारणे संयोग-

कर्म्म स्वभिन्नं कर्म्मान्तरं नापेक्षते तद्द्रव्यमाश्रितं कर्म्म कर्त्तव्यस्य तस्य कार्य्यस्य कर्म्मणः समवायिकारणं कर्म्मोच्यते। चेतनाधिष्ठितानि पृथिव्यादीनि निष्क्रियाण्यपि चेतनानि भूत्वा संयुज्यन्ते चेतनेनात्मना परस्परं पृथिव्यादीनां संयोगात् प्रवर्त्तकेन रजोगुणेन जायमानं स्पन्दनमुत्क्षेपणादिपञ्चविधमेव भूत्वा पृथिव्यादीनि नवैव पुनः पुनश्चालयत् संयोजयति विभाजयति चेत्येवं स्वाश्रयद्रव्याणां संयोगविभागेषु नान्यकर्म्मापेक्षते तत्तद्द्रव्यमेवाश्रित्य संयोगविभागौ पुनः पुनः कृत्वा तानि द्रव्याणि तत्स्थांश्च गुणान् परिणमयत् स्वयं स्वयञ्च परिणमदेकीभूय चिन्त्याचिन्त्यक्रियाहेतुविशिष्टकर्म्मरूपेण जायमानं समवैतीति कार्य्यस्य तत् कर्म्म। मण्यादीनां विषहरणादि मदनफलादीनां वमनकृत् कर्म्म त्रिवृतादीनां विरेचनकृत्, इत्येवमादिकर्म्म प्रतिद्रव्यमात्रेयभद्रकाप्यीयान्नपानादिकाद्यध्यायेषु वक्ष्यते। तत्राचिन्त्यक्रियाहेतुः प्रभाव उच्यते; या द्रव्याणां शक्तिरभिधीयते। नैवं द्रव्यगुणसामान्यविशेषसमवाया इति ते कर्म्माख्या न भवन्ति। द्रव्याणि संयोगविभागेष्वन्यत् स्वनिष्ठं कर्म्मापेक्षन्ते। न त्वन्यानपेक्षकारणं संयोगविभागेषु। गुणादयश्च न संयोगविभागेष्वनपेक्षकारणानीति। वैशेषिके कणादेन च यदुक्तं कर्म्मलक्षणम्। * "संयोगविभागेष्वनपेक्षकारणं कर्म्मेति" तत्रापि पूर्व्वस्मादनुवर्त्तते सर्व्वं संयोगविभागेष्वकारणमिति तु प्रतियोगिनिर्द्देशमिमं संयोगविभागेष्वनपेक्षकारणमिति दृष्ट्वा निवर्त्तते। तेन द्रव्याश्रयगुणवत् संयोगविभागेष्वनपेक्षकारणमन्यापेक्षं समवायिकारणं कर्म्मेति लक्षणं पर्य्यवसितम्। सर्व्वमिदं व्याख्यातम्। अथैतेषां खादीनां नवद्रव्याणां देवनरादिकार्य्यमारभमाणानां खं खमारभते वायुर्वायुं तेजस्तेज आपोऽपो भूर्भुवमात्मात्मानं मनो मनः कालः कालं दिशो दिशः; एषाञ्च रूपं लोहितादिरूपं रसो मधुरादिरसान् गन्धः सौरभादीन् गन्धान् स्पर्शः शीतादीन् स्पर्शानभिव्यक्तः शब्दस्त्वभिव्यक्तानुदात्तादीन् शब्दान् अनभिव्यक्तं गुरुत्वं व्यक्तं गुरुत्वं लघुत्वं लघुत्वं मृदुत्वं मृदुत्वं काठिन्यं काठिन्यं मान्द्यं मान्द्यं तैक्ष्ण्यं तैक्ष्ण्यं स्निग्धः स्निग्धं रौक्ष्यं रौक्ष्यं स्थैर्य्यं स्थैर्य्यं सरत्वं सरत्वं पैच्छिल्यं

कारणे व्यावृत्तिः सिद्धा; द्रव्यमाश्रितमिति स्वरूपकथनं व्याख्येयं, द्रव्यव्यावृत्तिस्तु "कर्म्म नान्यदपेक्षते" इत्यनेन सिद्धा, अस्यायमर्थो यत्—कर्म्मोत्पन्नं स्वाश्रयस्य द्रव्यस्य पूर्व्वदेशविभागे

---

* वैशेषिकस्य आद्याध्यायप्रथमाह्निके "एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्म्मलक्षणम्॥" इति पाठो दृश्यते।

पैच्छिल्यं वैशद्यं वैशद्यं खरः खरं मसृणो मसृणं स्थौल्यं स्थौल्यं सौक्ष्म्यं सौक्ष्म्यं सान्द्रः सान्द्रं द्रवत्वं द्रवत्वमित्येवमेषां कर्म्माणि सजातीयानि विजातीयानि चारभन्ते ।

तत्र कुत्र कस्यानुवृत्तिः स्वरूपेणान्यरूपेण वा भवतीति उच्यते । "न द्रव्यं कार्य्यं कारणञ्च वधति ।" गन्धमात्रादिपृथिव्यादिद्रव्यं कार्य्यारम्भे स्वस्वसजातीयं द्रव्यमारभमाणं यदन्येनारभ्यमाणं कार्य्यं स्वस्वविजातीयं मूर्त्यादिकं न वधति न हन्ति । न च स्वारम्भकं कारणं त्रिगुणविकारात्मकमहङ्कारं निर्गुणञ्च कालक्षेत्रज्ञप्रधानानि वधति । स्वस्वारम्भकानुवृत्त्यैव स्वस्वसजातीयं कार्य्यमारभत इति । "उभयथा गुणाः ।" तत्कार्य्यारम्भे पृथिव्यादिद्रव्यस्था गुणा गन्धादयः खलु स्वस्वसजातीयं गन्धविशेषादिकमारभमाणा यदारभ्यमाणं स्वस्वविजातीयं कार्य्यं स्वारम्भकं कारणञ्चाहङ्कारादिस्थं गुणांशमुभयथा कुत्रचिद्धत्वा कुत्रचिन्न हत्वा सजातीयं गुणविशेषमारभन्ते । यथा पारदगन्धकयोः संयोगे कज्जलीभूते द्रव्ये पारदस्थः शुक्लः शुक्लविशेषमारभमाणो गन्धकस्थः पीतः पीतमारभमाणः पारदस्थतीक्ष्णेन तैक्ष्ण्यमारभमाणेन विरोधिना वध्यते । सर्व्वत्रैव शौक्ल्यं सत्त्वगुणयोनिकं तमोगुणयोनिकेन तैक्ष्ण्येन विरोधिना वध्यते, गन्धकस्थपारदस्थौ च लोहित-*-शुक्लौ रजःसत्त्वयोनिकौ वध्येते । तयोः शुक्ललोहितवधे तैक्ष्ण्यसमानयोनिः कृष्णोऽभिव्यज्यते । इति पारदगन्धकोभयात्मके कार्य्ये श्वेतपीतमेलनेन सम्भाव्यं कार्य्यं यद्वर्णं तत्तीक्ष्णगुणेन वध्यते तत्कारणं शुक्ललोहितं हत्वेति । एवं हिङ्गुले पारदगन्धकाभ्यामारभ्यमाणे यन्त्रविशेषे वह्निना पच्यमाने रजोबहुलयोनिकेन तीक्ष्णेन सत्त्वतमोयोनिकौ शुक्लकृष्णौ वध्येते । पारदस्थशुक्लगन्धकस्थपीतमेलनेन सम्भाव्यं कार्य्यं वर्णञ्च वध्यते । रजोयोनिकलौहित्यञ्चाभिव्यज्यते इति । एवं हरिद्राचूर्णसंयोगेऽपि लौहित्यमभिव्यज्यते, चूर्णस्थतैक्ष्ण्येन हरिद्रास्थशुक्लकृष्णवधे । अथावधे यथा । हिङ्गुलवङ्गभस्मसंयोगे श्वेतलोहितवर्णमेवोभयात्मकं भवति पाटलवर्णम् । न चात्र हिङ्गुलस्थं लौहित्यं वङ्गभस्मस्थं शौक्ल्यञ्च केनापि वध्यते । एवं शुक्लसूत्रनिर्म्मितपटस्य शौक्ल्यमेवेति ।

कार्य्यविरोधि कर्म्म । कर्त्तव्यस्य क्रिया कर्म्म तु कार्य्यविरोधि । तत्

चोत्तरदेशसंयोगो च कर्त्तव्ये नान्यत् कारणं पश्चात्कालभावि अपेक्षते, द्रव्यन्तु यद्यपि संयोगविभागकारणं युगपद्भवति तथापि तदुत्पन्नं सत् यदा कर्म्मयुक्तं भवति तदैव संयोगविभाग-

* गन्धकस्य चतुर्व्विधवर्णत्वात् लोहितपदप्रयोगः ।

कार्य्यारम्भे पृथिव्याद्यारब्धे कार्य्ये पारदे यत् कर्म्म गन्धके च यत् कर्म्म तत् पारदगन्धकमेलनेन कज्जलीभूते हिङ्गुलीभूते च द्रव्ये पारदकर्म्मणा कर्त्तव्यं शरीरभेदकुष्ठादिकं कार्य्यं गन्धकस्थकर्म्मणा च कार्य्यं यत् तदुभयं विरोधयत् अपूर्व्वमेकं कर्म्म निर्व्वर्त्तते इति प्रकृतिद्रव्यस्थकर्म्मणा कर्त्तव्यकार्य्यस्य विरोधि कर्म्मारभ्यते। इति कर्म्मासाध्यं कर्म्म न विद्यते। एतेन प्रभावादिनिखिल-कर्म्म व्याख्यातं भवतीति ।

कथमेवं समवायो भवतीति। द्रव्यगुणकर्म्मणां द्रव्यं कारणं सामान्यम्। पृथिव्याद्यारब्धानां द्रव्यगुणकर्म्मणामारम्भकं द्रव्यं कारणसामान्यमेकत्वकरम्। द्रव्यारम्भकद्रव्यमपि हि तद्द्रव्याश्रितगुणकर्म्मणाञ्च कारणमाधारभावाच्च सारम्भकं कारणमिति कारणसामान्यं द्रव्यम् ।

उभयथा गुणः। द्रव्यारब्धानां द्रव्यगुणकर्म्मणामुभयथा कारणसामान्यं कार्य्यसामान्यञ्च गुण एकत्वकरः। द्रव्यारम्भे तदारम्भकद्रव्यस्थो गुणस्तेषां कार्य्यद्रव्यगुणकर्म्मणां कारणं गुणानां कार्य्याणां श्वेतपीतादीनामुपादान-कारणमिव तत्कार्य्यद्रव्यकर्म्मणोरपि कारणमविनाभावात्। न हि निर्गुणं द्रव्यमस्ति, न चाद्रव्यं कर्म्मास्ति। ततः सहकारिकारणं द्रव्यकर्म्मणोरपि गुणः। कार्य्यश्च गुणः, सामान्यं श्वेतपीतादिको गुणः, शङ्खानां श्वेतः सामान्यं पलाशकुसुमहरिद्राणां पीतः सामान्यमिति ।

संयोगविभागवेगानां कर्म्म। संयोगविभागवेगानामुभयथा कारणरूपेण कार्य्यरूपेण च द्रव्यगुणकर्म्मणां शरीरादीनां सामान्यं कारणसामान्यं कार्य्य-सामान्यञ्च कर्म्म एकत्वकरम्। संयोगादीन् हि जनयति कर्म्म। कर्म्म च संयोगादिभ्यो जायते। कर्म्म तु द्रव्याणां सामान्यं भवति। कथं संयोगा-दीनां कारणसामान्यं कार्य्यसामान्यमिति ।

न द्रव्याणां कर्म्म व्यतिरेकात्। कार्य्यद्रव्याणां कर्म्म न कारणसामान्यं न कार्य्यसामान्यम्। कस्मात्? व्यतिरेकात्। देवनरादीनां चेतनानां गमनादि बहुविधं कर्म्म नाचेतनानां घटादीनां वा। छागमांसञ्च यत्कर्म्म करोति न तत् कुक्कुटमांसमिति ।

कस्यचिद्द्रव्यस्य पुनरव्यतिरेकात्। मांसस्य मांसवर्द्धनं सामान्यं कर्म्म, शोणितस्य शोणितवर्द्धनमित्येवमादि। द्रव्याणां द्रव्यं कार्य्यम्। पृथिव्या-

कारणं स्यात्; कर्म्म तूत्पन्नं करोत्येव परं संयोगविभागौ न तु कारणान्तरं पश्चाज्जाप्यपेक्षते, संयोगविभागाश्रयं प्रत्यासत्तिम्तु अपेक्षते एव, सा च पूर्व्वसिद्धैव, न च चरमभाविकारणान्तरा-

दीनां कार्य्यं पृथिव्यादिद्रव्य कार्य्यं सामान्यम्। द्वित्वप्रभृतयः सङ्ख्याः पृथक्त्वसंयोगविभागाश्च। द्रव्याणां द्वित्वादिसङ्ख्याः पृथक्त्वसयोगविभागाश्च गुणाः कार्य्यं सामान्यम्। सर्व्वाणि द्रव्याणि द्वित्वादिसङ्ख्यावन्ति न त्वेकानि। पृथक् च संयुक्तानि च विभक्तानि चेति। संयोगादीनां द्रव्यम्। सयोगादीनां द्रव्यं कार्य्य सामान्यम। अनेकद्रव्यसयोगाद्धि सर्व्वाणि द्रव्याणि जायन्ते इति।

रूपाणां रूपम्। रूपाणां कार्य्यसामान्यं लोहितादिरूपम्। एतेन रसादयो व्याख्याताः। समवायित्वं यथाकारणमपि। यथाकारणं क्रियागुणवत् समवायिकारणमिति समवायित्वं द्रव्यस्य सामान्यम्। द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमन्यापेक्षः समवायिकारणं गुण इति गुणानां समवायिकारणत्वं सामान्यम्। द्रव्याश्रय्यगुणवत् संयोगविभागेष्वनपेक्षकारणमन्यापेक्षं समवायिकारण कर्म्मेति, समवायिकारणत्वमुत्क्षेपणादीनां कर्म्मणां सामान्यम्। गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम्। गुरुत्वादीनामुत्क्षेपणं कार्य्यसामान्यम्। गुरूणि हि द्रव्याणि शक्यन्ते उत्क्षेप्तुं हस्तादिप्रयत्न न संयोगान्न तु लघूनि। संयोगविभागवेगाश्च कर्म्मणाम। कर्म्मणामुत्क्षेपणादीनां कार्य्यसामान्यं संयोगो विभागश्च वेगश्चेति। कर्म्मणा विना संयोगो विभागो वेगो वा न जायते। सन्नित्यमद्रव्यवत् कार्य्यं कारणसामान्यविशेषवदिति द्रव्यगुणकर्म्मणामविशेषः। सदस्तु नित्यमुत्पद्य पुनर्न जायते इति। अद्रव्यवत् द्रव्यानारब्धकार्य्यमुपादाननिष्पन्नं कारणमुपादानसमवायिकारण सामान्य समानार्थता विशेषस्त्वसमानार्थता तत्सामान्यवत् तद्विशेषवच्च सर्व्वं नवद्रव्यसप्तदशगुणपञ्चकर्म्म। अव्यक्तं नामात्मा कालक्षेत्रज्ञप्रधानानीति त्रयोपादानकः कार्य्य एवाद्रव्यवांश्च न हि कारणभूतकालादीनि द्रव्याणि। कालश्च सन्नित्यश्चाद्रव्यवान् खल्वव्यक्तस्थकालांशोद्रेक त्रिगुणविशिष्टः संवत्सर इत एव कार्य्यः। दिशोऽपि चाद्रव्यवत्यः सात्त्विकाहङ्कारजाता आकाशाधिदेवतासत्त्वादिगुणयोगात् प्राच्यादिरभूदिति ततश्च कार्य्या। खादीनि मनश्चाहङ्कारिकाणि रूपादयश्च सप्तदश गुणा आव्यक्तिकाहङ्कारिकसत्त्वादिगुणोपादाना इत्यद्रव्यवन्तः कार्य्याश्च। रजोगुणोपादानानि कर्म्माणि पञ्चाद्रव्यवन्ति कार्य्याणि। त्रीण्येव सत्तादिद्रव्यत्वादिसामान्यवन्ति। पृथिवीत्वादिविशेषवन्ति चेति त्रयाणामविशेष इति।

पेक्षता कर्म्मणः। अथ कर्म्मत्वेन गमनादीनां तथाऽदृष्टस्य तथा क्रियायाश्चाभिधीसमानत्वात्। तस्य कर्म्मेण इदं लक्षणम् इत्यत आह कर्त्तव्यस्य क्रिया कर्म्मेति। एतेन क्रियारूपस्य कर्म्मण इदं लक्षणं नादृष्टस्येति ॥ २४ ॥

इत्युक्तं कारणं कार्य्यं धातुसाम्यमिहोच्यते।
धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम् ॥ २५ ॥

अद्रव्यवत्त्वान्नित्यत्वमुक्तम्। संयोगाद्धि खल्वनेकद्रव्यमेकीभूय कार्य्य-द्रव्यं स्यात् तस्माद्द्रव्यवद् यावत् कार्य्यं नित्यम्। अद्रव्याणां सुपादानानां समवायो नित्यो भूम्यादीनां गुणः समवाय इव। कारणाभावात् कार्य्याभावः ॥ कार्य्याणामनेकद्रव्यारब्धानामनेकगुणारब्धानामनेककर्म्मारब्धानाञ्च द्रव्यगुणकर्म्मणां समवायिकारणसमवायाभावादभावः। नैषामुपादानानां कार्य्ये समवायो नित्यः। संयोगाद् द्रव्याणां द्रव्यगुणकर्म्मसमवायः स्यादिति।

न कार्य्याभावात् कारणाभावः। कार्य्याणां द्रव्यगुणकर्म्मणामभावाच्च तदुपादानकारणाभावः स्यात्। कार्य्यं हि नष्टमुपादानरूपमापद्यते। कारण-लयो हि नाशः। सर्व्वं यथास्थानं विस्तरेण व्याख्यास्यते इति ॥ २४ ॥

गङ्गाधरः—अथैतदुपसंहरति, इत्युक्तं कारणं कार्य्यमिति। इति सर्व्वदा सर्व्वभावाणामित्यादिना कर्म्म नान्यदपेक्षते इत्यन्तेन सामान्यं नाम कारणम्। तस्य कार्य्यं सर्व्वभावाणां वृद्धिरेकत्वञ्च। विशेषो नाम कारणम्। तस्य कार्य्यं सर्व्वभावाणां ह्रासः पृथक्त्वञ्च द्वयम्। समवायः कारणम्। तस्य कार्य्यं सर्व्वभावाणां मेलनम्। द्रव्यं कारणम्। तस्य कार्य्यं गुणकर्म्माश्रय-सजातीयद्रव्यं मूर्त्यादि। गुणः कारणम्। तस्य कार्य्यं निश्चं सुसजातीयगुण-विशेषः। कर्म्म च कारणम्। तस्य कार्य्यं सजातीयविजातीयकर्म्म संयोगविभागौ चेति सर्व्वमुक्तम्।

अथैतदायुर्व्वेदस्याधिकरणं पुरुषञ्च कारणमुक्त्वा तत्र कार्य्यमाह—धातुसाम्यमिहोच्यते। धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनमिति। इह सत्त्वादित्रयात्मके पुरुषे धातुसाम्यं समधातुरक्षा तन्त्रस्यास्यायुर्व्वेदस्य प्रयोजनमुच्यते। न केवलं समधातुरक्षा प्रयोजनं धातुसाम्यक्रिया चास्य तन्त्रस्य प्रयोजनमुक्ता। विषमधातौ पुरुषे धातुसाम्यकरणं धातुसाम्यक्रिया।

चक्रपाणिः—प्रकरणमुपसंहरति, इत्येत्यादि। इति समाप्तौ, तेनैतावदेव सामान्यादिषट्कं सर्व्वस्य कार्य्यजातस्य कारणं, न त्वन्यत् कारणमस्ति। कारणं सामान्येनाभिधायायुर्व्वेदोपयुक्तं कार्य्यमाह, कार्य्यमित्यादि।—धातुसाम्यमारोग्यं, भवति हि "विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते। सुखसंज्ञकमारोग्यम्" इत्यादि। इहेत्यायुर्व्वेदे, तेनाप्यकार्य्यमपि भवति

**कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति च ।**
**द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः ॥ २६ ॥**

धातुसाम्यन्तु प्रकृतिरारोग्यमित्येकोऽर्थः। "विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते। सुखसंज्ञकमारोग्यं विकारो दुःखमेव तु ॥" इति वक्ष्यते। अत्रायमभिसन्धिः—सर्व्वत्रैव मुख्यप्रयोजनं सुखं दुःखनिवृत्तिश्च। तदुभयं न धातुसाम्यकार्य्यम्। धातुसाम्यकार्य्यं हि सुखम्। दुःखनिवृत्तिस्तु मोक्षे भवति। न तदा नित्यसुखाभिव्यक्तिर्भवति। पारमार्थिकतत्त्वज्ञानात् निःशेषेण दुःखनिवृत्तिर्भवति। यदि वा यावत् पारमार्थिकतत्त्वज्ञानमुदेति न तावन्मनः समधातु भवति तस्मात् धातुसाम्यक्रियैव दुःखनिवृत्तिरिति।

यत्तु व्याचष्टे।—इत्युक्तं सामान्यादिकं षड्विधं कारणमुक्तम्, इह शास्त्रे धातुसाम्यं कार्य्यमुच्यते। च यस्माद्धातुसाम्यक्रियाऽस्य तन्त्रस्य प्रयोजनमिति। तन्न साधु। विषमधातोरेव हि धातुसाम्यकरणमुपपद्यते। स्वस्थस्य धातुसाम्यरक्षणं प्रयोजनमस्य तन्त्रस्य नोक्तं भवति। तत्प्रयोजनाय च स्वस्थपरायणहेतुलिङ्गौषधज्ञानमिह शास्त्रे प्रोक्तमिति। सुश्रुते चोक्तम्। "आयुर्व्वेदप्रयोजनं व्याध्युपसृष्टानां व्याधिपरिमोक्षः स्वस्थस्य रक्षणञ्चेति" ॥ २५ ॥

गङ्गाधरः—धातुसाम्ये सति धातुसाम्यकरणमनुपपन्नं धातुसाम्यरक्षणमेवोपपद्यते। धातुवैषम्ये धातुसाम्यकरणमुपपद्यते। तच्च धातुवैषम्यं कुतो भवति कुतो वा साम्यमित्यतः संग्रहेण तयोः कारणमाह, काल—बुद्धीन्द्रियार्थानामित्यादि। अत्र बुद्धिपदेन धीधृतिस्मृतयस्तत्प्रयुक्तवाङ्मनःशरीरप्रवृत्तिश्चोच्यन्ते। तथैव प्रपञ्चयिष्यति तिस्रैषणीये कतिधापुरुषीये च। इन्द्रियपदेनेहार्थोपादानात् बाह्यानां श्रोत्रादीनां पञ्चानां ग्रहणम्। तेन मनोमनोऽर्थचिन्तनीयादीनां व्यावृत्तिः कृता। इन्द्रियोपक्रमेऽध्याये हि पञ्चेन्द्रियाणीति वक्ष्यते। यदापि पञ्चार्था इति च तत्रैव वक्ष्यते, अर्थाः शब्दस्पर्शरूपरसगन्धा इति च वक्ष्यते, तेनार्थपदमात्रग्रहणेन पञ्चानां

कार्यमुच्यते। इह तु किमिति तत्कार्यं नोच्यते? इत्याह, धातुसाम्यमित्यादि। चकारः हेतौ, धातुसाम्यक्रियैव यस्मात् आयुर्वेदप्रयोजनं, तस्मादायुर्वेदे धातुसाम्यमेवोच्यते कार्यत्वेन; अन्यत्तु अविवक्षितत्वात् तथा प्रधानत्वाच्च नेह कार्यत्वेनोच्यते ॥ २५ ॥

चक्रपाणिः—सम्प्रति सामान्येन कारणमुक्त्वा तदायुर्वेदोपयुक्तत्वेन वक्तव्यम्, तत्र व्याधिकारणमेव तावदग्रे निर्दिशति कालेत्यादिना सुखोपदेशानुरोधात्, सूत्रं हि "हेतुलिङ्गौषधज्ञानम्"

प्राप्तौ यत् पुनरिन्द्रियग्रहणं कृतं तेन मनोऽर्थः पुनश्चिन्त्यमिति च यद्वक्ष्यते तद्व्याप्तिः कृता; स्वशास्त्रे मनस इन्द्रियाभिधानाभावात् परतन्त्रसिद्धेन्द्रियत्वानुमतत्वेऽपि स्वतन्त्रे व्यवहारार्थं पञ्चेन्द्रियाणीत्युक्तम्। कालश्च बुद्धयश्चेन्द्रियार्थाश्चेति तेषां योगः सम्बन्धः पुरुषे मिथ्या च न चाति चेति त्रिविधविकल्पो द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः। अथवा। कालश्च बुद्धयश्चेन्द्रियाणि च तैः सहार्थानां योगो मिथ्या न चाति च। कालैरर्थस्य पुरुषशरीरस्य योगः। बुद्धिभिरर्थस्य बोद्धव्यचिन्त्यादेर्योगः। इन्द्रियैः श्रोत्रादिभिः स्वस्वार्थानां शब्दादीनां योग इति। मिथ्या यथार्थविपर्य्ययः। नञर्थोऽत्र क्वचिदल्पत्वं क्वचित् सर्व्वशः प्रतिषेध इति। अतीति अतिशयः। द्वयं शरीरं सत्त्वसंज्ञञ्चाश्रयोऽधिकरणं येषां तेषां तथा। व्याधीनामव्यवहितपूर्व्वोत्तरकालप्रवृत्तिशीलधातुवैषम्यदुःखानां हेतुरव्यभिचारी हेतुस्तेषां संग्रहः संक्षेपः। सूत्रमिदं स्वयं भाष्येण तिस्रैषणीये व्याख्यास्यते। तद् यथा—शीतोष्णवर्षलक्षणाः पुनर्हेमन्तग्रीष्मवर्षाः संवत्सरः, स कालः। तत्रातिमात्रस्वलक्षणः कालातियोगः। हीनस्वलक्षणः कालायोगः। यथास्वलक्षणविपरीतलक्षणस्तु कालमिथ्यायोगः। कालः पुनः परिणाम इति। अत्र परिणामत्ववचनेन कालस्य कारणान्तरजन्यमानभावानां परिणतिहेतुत्वस्वभावः ख्यापितस्तेन हीनातिमिथ्याभूतः कालो वातपित्तकफरजस्तमसां वैकृतिं माक्षादिस्तत्कोपसमगुणः प्रकृतानां वैषम्यलक्षणां दुष्टिं जनयति, तथा च यथास्वलक्षणस्तु भावानां तत्तद्रूपेण कारणान्तरजन्यमानानां परिणतिं जनयति न तु वैकृतवैषम्यमित्यभिप्रायेणात्र माक्षादिकालस्य सम्प्राप्तिर्न पृथगुक्ता। यद्वाऽत्र कालस्य हीनातिमिथ्याभूतयोगानामव्यभिचारिहेतुत्वेनोक्तिः। कतिधापुरुषीये तु कालसम्प्राप्तिं यद्धेतुत्वं वक्ष्यति तत् तु तत्रैव तदुदाहरणदर्शनात् तत्तद्रूपेण कारणान्तरोत्पाद्यमानभावानां तादृप्येण परिणतिजनकत्वं बोध्यम्। यदुक्तमुदाहरणम्।—"निर्दिष्टा कालसम्प्राप्तिर्व्याधीनां हेतुसंग्रहे। चयप्रकोपप्रशमाः पित्तादीनां यथा पुरा॥ मिथ्याऽतिहीनलिङ्गाश्च वर्षान्ता रोगहेतवः। जीर्णभुक्तप्रजीर्णान्नकालाकालस्थितिश्च या॥ पूर्व्वमध्यापराह्णाश्च रात्र्या यामा-

इति। कालः शीतोष्णवर्षलक्षणः, बुद्धिः प्रज्ञा, इन्द्रियार्थाः शब्दस्पर्शरूपरसगन्धाः, मनःसहचरितानि द्रव्यगुणकर्म्माणीन्द्रियग्राह्याणि [illegible]; तेषां कालादीनां योगाः सम्बन्धाः। तत्र विशेषलक्षणं विशेषणत्रयं—मिथ्या न चाति चेति। तेन कालादीनां मिथ्यायोगः, न च योगोऽयोग इत्यर्थः, अति च योगोऽतियोग इत्यर्थः। द्वयाश्रयाणामिति मनःशरीराश्रयाणाम्, [illegible]

क्षयश्च ये। येषु कालेषु नियता ये रोगास्ते च कालजाः॥ अन्येद्युष्को द्व्यहग्राही तृतीयकचतुर्थकौ। स्वे स्वे काले प्रवर्त्तन्ते काले ह्येषां बलागमः॥ एते चान्ये च ये केचित् कालजा विविधा गदाः। अनागते चिकित्स्यास्ते बलकालौ विजानता॥ कालस्य परिणामेन जरामृत्युनिमित्तजाः। रोगाः स्वाभाविका दृष्टाः स्वभावो निष्प्रतिक्रियः॥ निर्दिष्टं दैवशब्देन कर्म्म यत् पौर्व्वदैहिकम्। हेतुस्तदपि कालेन रोगाणामुपलभ्यते॥ न हि कर्म्म महत् किञ्चित् फलं यस्य न भुज्यते। क्रियाघ्नाः कर्म्मजा रोगाः प्रशमं यान्ति तत्क्षयात्॥" इति। इत्थञ्चापि मिथ्याहीनातिलिङ्गानि कालस्य प्रज्ञापराधादेव जायन्ते पापानि च। जनपदोद्ध्वंसनीये हि वायुरुदकं देशः काल इति चत्वारो भावा जनपदोद्ध्वंसने सामान्यहेतव उक्तास्तेषां यथाविगुणत्वेन हेतुत्वम्। तदुक्तं—काले तु खलु यथर्त्तु लिङ्गाद्विपरीतलिङ्गमतिलिङ्गं हीनलिङ्गं चाहितं व्यवस्येदिति वक्ष्यते। तदुत्तरमप्रविशेषप्रश्नः—"अथ खलु भगवन् कुतोमूलमेषां वाय्वादीनां वैगुण्यमुत्पद्यते येनोपपन्ना जनपदमुद्ध्वंसयन्तीति। तमुवाच भगवानात्रेयः—सर्व्वेषामप्यग्निवेश वाय्वादीनां यद्वैगुण्यमुत्पद्यते तस्य मूलमधर्म्मस्तन्मूलञ्चासत्कर्म्म पूर्व्वकृतं, तयोर्योनिः प्रज्ञापराध एवेति" वक्ष्यते। तथा कतिधापुरुषीये—"धीधृतिस्मृतिविभ्रंशः सम्प्राप्तिः कालकर्म्मणाम्। असात्म्यार्थागमश्चेति विज्ञेया दुःखहेतवः॥" इति। रोगहेतुसंग्रहे धीधृतिस्मृतिविभ्रंश एव बुद्धिमिथ्यादियोगः कालमिथ्यादियोगस्त्वसात्म्यार्थागमेऽन्तर्भूत एव न तु कर्म्मणामिति। कालशब्देन भावानां परिणतिमतीतिनयतः कालो मिथ्यादियोगवान् वा समो वा तस्य सम्प्राप्तं धातुवैषम्यजनकत्वे व्यभिचाराद्धीनमिथ्यातिलिङ्गस्य तु व्यभिचारादसात्म्यार्थागमेऽन्तर्भूय कारणान्तरेण जन्यमानभावानां परिणतौ हेतुत्वेन प्राकृतवैषम्यहेतुत्वेन च पृथगुपदिष्टः। तथा चार्थस्य व्यञ्जकोत्पादकसर्व्वहेतूपसंहाराभिप्रायात्। एवं कालस्य तद्देशपरिहारमन्तरेण हीनातिमिथ्यालक्षणस्यापरिहार्य्यत्वेन बुद्ध्यादेः पूर्व्वमभिधानमिति। प्रज्ञापराधजन्यत्वात् विषमवाक्मनःशरीरप्रवृत्तिलक्षणकर्म्मण उक्त विषमवाक्मनःशरीरप्रवृत्ति-

मनःशरीराधिष्ठानञ्च पृथक् च मिलितञ्च बोद्धव्यम्। त्रिविध इत्ययोगातियोगमिथ्यायोगरूपः, हेतुसंग्रहो हेतुसंक्षेपः। एते च कालादीनामतियोगायोगमिथ्यायोगातिशेषणीये "समानिप्रभावताम्" इत्यादिना ग्रन्थेन सूत्रकृत् वाच्याः, नेह विविच्यन्ते। कालग्रहणं निवहार्थं कृतं कालस्य दुष्परिहारत्वात्। तत्तु बुद्धिकल्पते, बुद्ध्यपराधस्यैव इन्द्रियार्थातियोगादिहेतुत्वात्, वक्ष्यति हि "प्रज्ञापराधाद्ध्यहितानर्थान् पञ्च निषेवते"। पृथक् च असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधे

जन्यपापस्यापि प्रज्ञापराधेऽन्तर्भाव इत्याह तद्बीजाङ्कुरन्यायेन सङ्गतम्। यच्च पापस्य कर्म्मजव्याधौ साक्षाद्धेतुत्वं नान्यत्र ततोऽत्र हेतुसंग्रहे संग्रहो न युज्यते। यत् तु कालपरिणामेन पापस्य रोगहेतुत्वात् कालेऽन्तर्भाव इति वदन्ति तदपि न युक्तं सर्व्वस्यैव हेतोः कालेनार्थकरत्वात् कालेऽन्तर्भावापत्ते रोगजनकत्वाच्च।

बुद्धिरिति। यद्यपि बुद्धिः पञ्चधा कतिधापुरुषीये दृश्यते—"चेतना धृतिः। बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः" इति वचनेन, तथाप्यत्र बुद्धिश्चेतनाहङ्कारवर्ज्जं त्रिविधा धृतिबुद्धिस्मृतिभेदेन सम्भाव्यते। चेतना हि सा यया वस्तूनि पश्यन्नपि ज्ञानमात्रवान् इव न विजानीते, शब्दं शृण्वन्नपि न बुध्यते किमिदमिति, स्पृश्यं स्पृशन्नपि न वेत्ति किमिदमिति, दुग्धादीन् पिबन्नपि न जानीते किमिदमिति, गन्धं जिघ्रन्नपि नावगच्छति किमिदमिति। तच्च चैतन्यमात्रं, येन बुद्धिकर्म्मेन्द्रियाणि स्वार्थेषु केवलं प्रयुङ्क्ते न तु तत्स्वार्थविज्ञानायेति। तथाविधायाश्चेतनाया भ्रंशासम्भवात्। अहङ्कारो हि त्रिविधो वैकारिकस्तैजसस्तामसश्चेति। तत्र वैकारिको जागरितावस्थायां प्रत्यक्षादिधीधृतिस्मृतिहेतुः। तैजसः स्वप्नावस्थायां प्रविविक्तोपभोगहेतुबुद्धिरन्तःप्रज्ञानमुच्यते। तामसः सुषुप्तावस्थायामानन्दमात्रोपभोगहेतुबुद्धिः प्रज्ञाऽभिधीयते। तथाविधस्याहङ्कारस्य विभ्रंशासम्भवाच्च तद्विभ्रंशे जागरितोऽसुप्तोऽसुषुप्तश्च स्यात् तथात्वं तु नास्ति च लोके। धृतिर्हि नियमात्मिका तस्या भ्रंशसम्भवाच्च बुद्धिर्हि समदर्शिनी तस्या अपि भ्रंशसम्भवाच्च स्मृतिर्हि स्मर्त्तव्याधिष्ठिता तस्याश्च भ्रंशसम्भवाच्चेति मेधा तु धारणावती बुद्धिरेवेति नाधिकत्वात् नास्या असंग्रहः। कतिधापुरुषीयेऽपि धीधृतिस्मृतिविभ्रंश इति दर्शनाच्च त्रिधैव बुद्धिर्गृह्यतेऽत्र। तासु मध्ये बुद्धिः समदर्शनलक्षणा, सा चाप्तोपदेशेन समयोगात् समां वाङ्मनःशरीरप्रवृत्तिं जनयति। तद् यथा—नित्यावश्यम्भावे वाच्य वाच वाचयति काले। काले चानित्ये वाच्यं वाचं वाचयत्यवश्यम्भावे

प्रविशति, तथापि प्रत्यात्मककारणत्वात् असात्म्येन्द्रियार्थसंयोग एवायं पृथक् तन्त्रे सूच्यते, प्रज्ञापराधस्त्वसात्म्येन्द्रियार्थसंयोगाद्व्यतिरिक्तकायवाङ्मनःक्रियापराधे वर्त्तते।

अत्र चाधर्म्मोऽपि व्याधिहेतुरस्ति, यदुक्तं "क्रियाघ्नाः कर्म्मजा रोगाः" इत्यादि, तस्य चाधर्म्मस्य कालग्रहणेनैव ग्रहणं केचिन्मन्यन्ते, तन्न, तिस्रैषणीये प्रज्ञापराधेनैवाधर्म्मग्रहणात्, तत्र हि, अनृतवचनाभिध्यादिवाङ्मनोमिथ्यायोगरूपः प्रज्ञापराधविशेष उक्तः; न ह्यनृतवचनादीनां स्वरूपेण व्याधिकर्तृत्वं किन्त्वधर्म्मोत्पादद्वारान्तरव्यापाराणामेव; तेन प्रज्ञापराध एवाधर्म्मोत्पादद्वारान्तरव्यापारः कर्म्मजरोगेषु कारणं, योग इव धर्म्मोत्पादद्वारान्तरव्यापारः स्वर्गे।

हिते चावश्यम्भावे हितं वाचयति वाचं काले काले चाहितमहिते वाच्यं वाचयत्यवश्यम्भावे। नित्यं चावश्यम्भावे मनो निवेशयति काले। काले च मनो निवेशयत्यनित्येऽवश्यम्भावे। हिते च हितं मनोऽवश्यम्भावे निवेशयति काले। काले च हितं मनो निवेशयत्यहितेऽवश्यम्भावे। काले च दापयत्यादापयति देयमादेयं हितं पाणी नाकाले न चाहितम्। गमयति काले चागमयति काले हितं गम्यमागम्यं पादौ नाकाले न चाहितम्। पुमांसं शाययति स्थापयत्यासयति हितं काले नाकाले न चाहितम्। काले सृजति मूत्रं काले च शकृत्। रमयति काले हितं विहितं नाकाले न चाहितमिति बुद्धिसमयोगः सुखहेतुः। सा च हीनस्वलक्षणा चेत् नहि काले चाकाले हिते चाहिते च सर्व्वशो वाच्यं न वाचयतीति बुद्धिहीनयोगाद्वाग्योगः। स्वलक्षणातिलक्षणा तु बुद्धिः काले चातिवाचं वाचयत्यकाले च हिते चाहिते चाथ इति बुद्ध्यतियोगाद्वागतियोगः। स्वलक्षणविपरीतलक्षणा तु बुद्धिरावश्यकेऽनावश्यके च हिते चाहिते च वाचं सूचकयत्यनृतयत्यकालकलहं प्रियां करोति प्रलापयत्यननुकूलयति परुषयतीत्येवमादिर्वाङ्मिथ्यायोगो बुद्धिमिथ्यायोगाद्भवति। धृतिश्च चित्तनियमात्मिका। सा हि पुनरामोपदेशेन चित्तं नियम्याहितादर्थाद्धिता एव वाङ्मनःशरीरप्रवृत्तीर्जनयति। तद्यथा— नियमयति वाचमर्थं हिते मनो नियम्य न चाहिते प्रवर्त्तयत्यर्थे। हिते मनो नियमयत्यर्थं न चाहिते। स्वस्वार्थे नियमयत्यर्थे हिते शरीराङ्गाणि मनो नियम्य न चाहिते। इति धृतिसमयोगः सुखहेतुः। सा च हीनस्वलक्षणा चेद्वाचं काले चाकाले च हिते चाहिते च वाचयति मनोऽल्पं नियम्येति धृतिहीनयोगाद्वाग्योगः। स्वलक्षणातिलक्षणा तु धृतिर्हिते चाहिते चातिशयेन मनो नियम्य न वाच्यं वाचयतीति धृत्यतियोगान्नियतवागतियोगः। स्वलक्षणविपरीतलक्षणा तु धृतिरहितादर्थान्मनो न नियन्तुमर्हति विषयप्रवणम्। तेन वाचमन्यथा वाचयति देवं गां गुरुं वृद्धान् सिद्धानृषीन् निन्दयति यद्वाचा न युज्यते यत्नं तथा वाचयति इति धृतिमिथ्यायोगाद्वाङ्मिथ्यायोगः।

यत्तु उच्यते कालपरिणामजायमानत्वात् कर्म्मजविकाराणां कालजत्वं, यदुक्तं "कालस्य परिणामेन जरामृत्युनिमित्तजाः। रोगाः स्वाभाविका दृष्टाः स्वभावो निष्प्रतिक्रियः॥" तन्न, तथा सति, असात्म्येन्द्रियार्थसंयोगजस्यापि किञ्चित्कालपरिणामजायमानस्य कालजत्वं स्यात्, न च कालातियोगाद्यभिधायिग्रन्थे निर्वर्णीये कर्म्मावरोधः कथमपि प्रतिभाति; कतिधापुरुषीये तु "धीधृतिस्मृतिविभ्रंशः सम्प्राप्तिः कालकर्म्मणाम्। असात्म्येन्द्रियसंयोगा विज्ञेया रोगहेतवः॥" इत्यभिधाय

स्मृतिस्तु स्मर्त्तव्याधिष्ठिता, सा ह्याप्तोपदिष्टान् स्मर्त्तव्यानर्थान् वैधान् मानसे नियमतो निधायाभ्रान्त्या तत्त्वतोऽनुभावयन्त्यनुवर्त्तयन्ती च विहिता हिता वाङ्मनःशरीरप्रवृत्तीर्जनयति नातोऽविहितानर्थान् अहितानाचरितुं शक्नोति कश्चित् स्मृतिमानिति। तद् यथा :—देवानृषीन् गुरून् गा नमस्यान् साधून् वाचं स्तावयति हितञ्च मधुरञ्च प्रियञ्च मृदु च नात्युच्चैर्नातिनीचैः सत्यं कालेऽनुकूलं वाचयति मनश्च तान् पूजयति भक्तिश्रद्धातिशयेन मानयति काले हिते चावश्यके चार्थे पाणी पादादीनि च स्वस्वकर्म्मणि यथार्हाणि प्रयोजयति कर्त्तुमिति स्मृतिसमयोगः सुखहेतुः। सा पुना रजस्तमोभ्यां परिभूता स्वलक्षण हीनलक्षणा देवादीन् कचिदर्चयति नार्चयति वा कचिन्मधुरां कचित् परुषां कचित् प्रियां कचिदप्रियां वा सत्यां वानृतां वाऽनुकूलां वाननुकूलां वा वाचं वाचयति विनष्टा च न देवादीन् वाच्यं स्तावयति नार्चयति न मधुरां न प्रियां न सत्यां वा वाचं वाचयति नानुकूलामित्येवमादिः स्मृत्वयोगाद् वागयोग इति बुद्ध्यादित्रयायोगाद्वागयोगत्रयं तस्मात् सिद्धवृद्धगुरुदेवब्राह्मणां प्रभृतीनामवमानेन कोपादभिशापाभिचारादिनो भस्मतामाप्तिरागन्तुज्वरादयो वा भवन्ति। कलहाभिनिर्वृत्तिर्वा जनानां कोपादिति। अथ हीनस्वलक्षणा च बुद्धिर्नावश्यम्भावे निवेशयति चित्तं हिते वा नावश्यके निवेशयत्यहिते वेति बुद्धिहीनयोगान्मनोहीनयोगः। सा पुनः स्वलक्षणाऽतिलक्षणा चेत् तर्हि नित्यावश्यके काले चाकाले च हिते चाहिते चानिमात्रं निवेशयति चित्तमिति मनोऽतियोगो बुद्ध्यतियोगात्। सा पुनः स्वलक्षणविपरीतलक्षणा चेत्तदा भयशोककोपलोभमोहमानेर्ष्यामिथ्यादर्शनादिषु मना निवेशयति नित्ये चानित्ये चार्थे हिते चाहिते चेति बुद्धिमिथ्यायोगान्मनोमिथ्यायोगः। एवं धृतिश्च स्वलक्षणहीनलक्षणा चेत् तर्हि चित्तमहितेऽर्थे चपलयति न च हिते नियमयतीति धृतिहीनयोगान्मनोहीनयोगः। सा चातिस्वलक्षणा तु चित्तमर्थेऽप्यहिते काले चातिमात्रं निवर्त्तयति न च हितेऽपि प्रवर्त्तयतीति धृत्यतियोगान्मनोऽतियोगः। स्वलक्षणविपरीतलक्षणा तु धृतिश्चित्तं न भीषयति भीषणादभीषणाद्वा

स्वाभाविकानां रोगाणां तथा कर्म्मजानाञ्च कालज एवावरोधः कृतः। उक्तं हि तत्र "कालस्य परिणामेन जरामृत्युनिमित्तजाः। रोगाः स्वाभाविका दृष्टाः स्वभावो निष्प्रतिक्रियः॥" तथा "निर्दिष्टं दैवसंज्ञन्तु कर्म्म यत् पौर्व्वदैहिकम्। हेतुस्तदपि कालेन रोगाणामुपलभ्यते॥" अत्रापि बुद्धिमिथ्यायोगरूपः प्रज्ञापराध एव रोगजनककर्म्मकारणम्। कालविशेषं प्राप्य तु येषां व्याधीनामागमो भवति, ते कालमिथ्यादियोगजन्या वा भवन्तु, असात्म्येन्द्रियार्थाद्वा काले

विभीषयति न शोचयति शोचकादशोचकाद्वा शोचयति न कोपयति कोपनात् अकोपनाद्वा कोपयति लोभयत्यलोभनीये लोभनीये च न वा लोभयति न मोहयति मोहनादमोहनाद्वा मोहयति नाभिमानयत्यभिमानिकेऽनभिमानिके-वाऽभिमानयति चित्तं न चेष्टयतीर्ष्यणीयायानीर्ष्यणीयाय वेर्ष्ययति द्रोहयत्यद्रोहणीयाय न द्रोहयति च द्रोहणीयायेवमादिधृतिमिथ्यायोगान्मनो-मिथ्यायोगः। तथा स्मृतिरपि हीनस्वलक्षणा चेत्तर्हि कचिच्चित्तमाप्तोप-दिष्टार्थं हितमहितञ्च स्मारयति न वा कचित् काले इति स्मृतिहीनयोगान्मनो-हीनयोगः। अतिलक्षणा तु स्मृतिरतिस्मारयति चित्तं हितमथमहितञ्च शोचनीयादिकमिति स्मृत्यतियोगान्मनोऽतियोगः। स्वलक्षणविपरीतलक्षणा पुनर्हितमहितं स्मारयति स्मारयति चाहितं हितमिति। तद्यथा। शोक-मशोकमशोकं शोकमित्येवमादि स्मृतिमिथ्यायोगान्मनोमिथ्यायोगः। इति बुद्ध्यादित्रयातियोगान्मनस्त्रियोगतः कामशोकादिहेतुका ज्वरातिसारादय आगन्तवो भवन्ति।

अथ हीनलक्षणा बुद्धिर्नावश्यम्भावे चेष्टयति श्रोत्रादीनीन्द्रियाणि हस्ता-दीनि च स्वार्थेषु शरमङ्गस्येति बुद्धिहीनयोगाच्छरीरहीनयोगः। अतिलक्षणा तु योजयत्यतिमात्रेण चेष्टयति चेति बुद्ध्यतियोगाच्छरीरातियोगः। विपरीत-लक्षणा पुनर्वेगविधारणविषमस्खलनपतनगमनप्रहरणप्राणरोधाङ्गविन्यास-वैषम्यादिकं जनयतीति बुद्धिमिथ्यायोगाच्छारीरो मिथ्यायोगः। एवं धृतिश्च हीनस्वलक्षणा हिते शारीरकर्म्मणि शरीरं चेष्टयति मुहुरिति धृतिहीनयोगा-द्देहहीनयोगः। अतिस्वलक्षणा तु हितेऽपि शारीरकर्म्मणि न चेष्टयत्य-कालेऽपीति धृत्यतियोगाद्देहातियोगः। विपरीतलक्षणा तु धृतिर्हिते शारीर-कर्म्मणि न चेष्टयति काले चेष्टयत्यकाले चाहिते चेति वेगविधारणादि स्यादिति धृतिमिथ्यायोगाच्छारीरमिथ्यायोगः। अथ स्मृतिर्यदि हीनस्व-लक्षणा तदाप्तोपदिष्टार्थानल्पं वा न वा स्मारयन्ती शारीरकर्म्मसु शरीरं हस्तादिकमल्पं वा न वा चेष्टयति इति स्मृतिहीनयोगाच्छारीरहीनयोगः।

प्रवर्त्तन्ते, प्रज्ञापराधजन्या वा सर्व्व एवाविशेषेण कालकृताः, अभिव्यक्तिमात्रपरिग्रहणात्, तत्र कालसम्प्राप्तिजन्या इत्युक्ता गदाः। तथाहि तत्र सन्ततादिज्वरा अपि कालजन्या एवोक्ताः, यथा हि "सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ। स्वे स्वे काले प्रवर्त्तन्ते काले ह्येषां बलागमः॥" इति। न च सन्ततादौ कालस्य मिथ्यायोगादयः कारणत्वेनोपलभ्यन्ते, किन्तु असात्म्येन्द्रियार्थसंयोगप्रज्ञापराधावेव, तथा स्वाभाविकेषु च रोगेषु न कालमिथ्यायोगादयः

अतिस्वलक्षणा स्वनिस्मारयन्ती अतिचेष्टयतीति स्मृत्यतियोगाच्छारीरातियोगः । विपरीतस्वलक्षणा तु स्मृतिरन्यथा स्मारयन्ती चान्यथा चेष्टयतीति स्मृतिमिथ्यायोगाच्छारीरमिथ्यायोगः । इति बुद्ध्यादित्रययोगत्रयाच्छारीरकर्म्मयोगत्रयादभिघाताद्यागन्तुजा ज्वरादयः स्युरित्येव युक्ता प्रज्ञापराधादेवेन्द्रियार्थायोगमिथ्यायोगातियोगा भवन्त्येवेति चेत् तथापि शारीरेष्वङ्गेषु बाह्येषु मध्ये बुद्धीन्द्रियाणां बुद्धिहेतुत्वेन प्राधान्यात्तेषां व्यापत्करधातुवैषम्यहेतुमसात्म्येन्द्रियार्थसंयोगं पृथगुपदिदेश । तत्र सततावधानविधानार्थमिति । एवं प्रज्ञापराधादेवाधर्म्मः स्यात् प्रज्ञापराधकृतत्वादधर्म्महेतुसंक्रमण इति न तस्य पृथगुपादानमिति । तथा च स्वयं तिस्रैषणीयेऽध्याये वक्ष्यति । शीतोष्णवर्षलक्षणाः पुनर्हेमन्तग्रीष्मवर्षाः संवत्सरः । स कालः । तत्रातिमात्रस्वलक्षणः कालातियोगः । हीनस्वलक्षणः कालायोगः । यथास्वलक्षणविपरीतलक्षणस्तु कालमिथ्यायोगः । कालः पुनः परिणाम उच्यते. इति । तेनात्र कालशब्देन यथास्वलक्षणहीनातिमिथ्यालक्षणर्त्तुरूपः । तथात्वेऽपि भावानां परिणतिहेतुत्वानपायात् । न तु समलक्षणः कालो गृह्यते वैषम्याजनकत्वेन व्यभिचारात् । अत्र तु धातुवैषम्येऽव्यभिचारिहेतुसंग्रहोऽभिप्रेतः । कतिधापुरुषीये सर्व्वहेतुसंग्रहोऽभिप्रेत इति बोध्यम् । एवं तत्रैवोक्तम् । कर्म्म वाङ्मनःशरीरप्रवृत्तिः । तत्र वाङ्मनःशरीराणामतिप्रवृत्तिरतियोगः । सर्व्वशोऽप्रवृत्तिरयोगः । सूचकानृताकालकलहाप्रियाबद्धानुपचारपरुषवचनादिर्वाङ्मिथ्यायोगः । भयशोककोधलोभमोहमानेर्ष्यामिथ्यादर्शनादिर्मानसो मिथ्यायोगः । वेगविधारणोदीरणविषमस्खलनगमनपतनादिप्रणिधानाङ्गप्रदूषणप्रहारावमर्द्दनप्राणोपरोधसंक्लेशनादिः शारीरो मिथ्यायोग इति । एवमयोगात् योगवर्ज्जं कर्म्म वाङ्मनःशरीरजमहितमनुपदिष्टं यत् तदपि मिथ्यायोगं विद्यादिति ।

यत् कर्म्म त्रिविधं वाङ्मनःशरीराणामुक्तं तद् बुद्धेरतियोगायोगमिथ्यायोगेभ्यः सम्यगयोगविपरीतेभ्य एव भवति । सति हि

कारणत्वेनोपकल्प्यन्ते ; तस्मान्न तत्र कालमिथ्यायोगादिजन्या आचार्यस्याभिप्रेताः, किन्तु कालाभिव्यञ्जनीयाः कालजाः, अत एव च तत्र "सम्प्राप्तिः कालकर्म्मणाम्" इति पठितं न तु "कालो मिथ्या न चाति च युक्तः" इति कृतम् । किञ्च तत्रापि कालमभिधायापि कर्म्मणामिति पदं पृथक् पठितम्, कालजातः कर्म्मजः पृथगेव सूचितः ; किञ्च उन्मादनिदाने साक्षात्तेनाचार्य्येण कर्म्मजस्य प्रज्ञापराधजत्वमुक्तम् ; वचनं हि "प्रज्ञापराधात् सम्भूते व्याधौ कर्म्मज आत्मनः ।

सम्यग्योगे तथाविधं त्रिविधं कर्म्म नोपपद्यते, इति त्रिविधविकल्पं तत्त्रिविधमेव कर्म्म प्रज्ञापराध इति व्यवस्येत् । कतिधापुरुषीयेऽपि "विषमाभिनिवेशो यो नित्यानित्ये हिताहिते । ज्ञेयः स बुद्धिविभ्रंशः समं बुद्धिर्हि पश्यति ॥ विषयप्रवणं चित्त धृतिभ्रंशान्न शक्यते । नियन्तुमहितादर्थाद् धृतिर्हि नियमात्मिका ॥ तत्त्वज्ञाने स्मृतिर्यस्य रजोमोहावृतात्मनः । भ्रश्यते स स्मृतिभ्रंशः स्मर्त्तव्यं हि स्मृतौ स्थितम् ॥ धीधृतिस्मृतिविभ्रष्टः कर्म्म यत् कुरुतेऽशुभम् । प्रज्ञापराधं तं विद्यात् सर्व्वदोषप्रकोपणम् ॥ उदीरणं गतिमतामुदीर्णानाञ्च निग्रहः । सेवनं साहसानाञ्च नारीणाञ्चातिसेवनम् ॥ कर्म्मकालातिपातश्च मिथ्यारम्भश्च कर्म्मणाम् । विनयाचारलोपश्च पूज्यानाञ्चाभिधर्षणम् ॥ ज्ञातानां स्वयमर्थानामहितानां निषेवणम् । परमौन्मादिकानाञ्च प्रत्ययानां निषेवणम् ॥ अकालादेशसञ्चारौ मैत्री संक्लिष्टकर्म्मभिः । इन्द्रियोपक्रमोक्तस्य सद्वृत्तस्य च वर्ज्जनम् ॥ ईर्ष्यामानभयक्रोधलोभमोहमदभ्रमाः । तज्जं वा कर्म्म यत् क्लिष्टं क्लिष्टं यद्देहकर्म्म च ॥ यच्चान्यदीदृशं कर्म्म रजोमोहसमुत्थितम् । प्रज्ञापराधं तं शिष्टा ब्रुवते व्याधिकारणम् ॥ बुद्ध्या विषमविज्ञानं विषमञ्च प्रवर्त्तनम् । प्रज्ञापराधं जानीयान्मनसो गोचरं हि तत् ॥" इति । सामान्यतो निर्दिष्टं विशेषयित्वा बोध्यम् । तथार्थानामतिमात्रपटहोत्क्रुष्टादिशब्दानामतिमात्रं श्रवणमतियोगः, सर्व्वशोऽश्रवणमयोगः, परुषेष्टविनाशोपघातप्रधर्षणभीषणादिशब्दश्रवणं मिथ्यायोगः । तथातिशीतोष्णानां स्पृश्यानां स्नानाभ्यङ्गोत्सादनादीनाञ्चात्युपसेवनमतियोगः, सर्व्वशोऽनुपसेवनमयोगः, विषमस्थानाभिघाताशुचिभूतसंस्पर्शादयश्चेति मिथ्यायोगः । तथातिप्रभावतां दृश्यानाञ्चातिमात्रं दर्शनमतियोगः, सर्व्वशोऽदर्शनमयोगः, अतिसूक्ष्मातिविप्रकृष्टरौद्रभैरवाद्भुतद्विष्टबीभत्सविकृतादिरूपदर्शनं मिथ्यायोगः । तथा रसानामत्यादानमतियोगः, सर्व्वशोऽनादानमयोगः, आहारद्रव्याणामतिप्रमाणानामादानमतियोगः । सर्व्वशोऽल्पप्रमाणानां वाऽनादानमयोगे अन्तर्भवति । मिथ्यायोगस्तु रसनार्थानां प्रकृतिकरणसंयोगदेशकालोपयोगसंस्थोपयोक्तृणामाहारविधिविशेषायतनानां सप्तानां विपर्य्ययेणोपयोगः । तत्र

माभिशंसेद्बुधो देवान् न पितॄन् न च राक्षसान् ॥" जनपदोद्ध्वंसनीयेऽप्युक्तं "तस्य मूलमधर्म्मः, तन्मूलञ्चासत् कर्म्म पूर्व्वकृतम्, तयोर्योनिः प्रज्ञापराध एव" । तदेवं कर्म्मापेक्षत्वयमुपदर्शितम्, बलाबलन्तु विद्वांसश्च स्वयमेव निर्लोचयिष्यन्ति । इदन्त्वत्र चिन्त्यतां, स्वाभाविकानां क्षुत्पिपासादीनां तथा कालसम्यग्योगेऽपि जायमानानां दोषचयप्रकोपाणां क प्रवेशो भवतु, न

प्रकृतिरुच्यते स्वभावो यः, स पुनराहारौषधद्रव्याणां स्वाभाविको गुर्वादिगुणयोगः। तद्यथा माषमुद्गयोः शूकरैणयोः। करणं पुनः स्वाभाविकानां द्रव्याणामभिसंस्कारः। संस्कारो हि गुणाधानमुच्यते। ते गुणाश्च तोयाग्निसन्निकर्षशौचमन्थनदेशकालवशेन भावनादिभिः कालप्रकर्षभाजनादिभिश्च आधीयन्ते। संयोगस्तु द्वयोर्बहूनां वा द्रव्याणां संहतीभावः, स विशेषमारभते यं नैकैकशो द्रव्याण्यारभन्ते। तद्यथा मधुसर्पिषोर्मधुमत्स्यपयसां संयोगः। देशः पुनः स्थानं, द्रव्याणामुत्पत्तिप्रचारौ देशसात्म्यञ्चाचष्टे। कालो हि नित्यगश्चावस्थिकश्च। तत्रावस्थिको विकारमपेक्षते नित्यगस्तु ऋतुसात्म्यापेक्षः। उपयोगसंस्था तूपयोगनियमः। स जीर्णलक्षणापेक्षः। उपयोक्ता पुनर्यस्तमाहारमुपयुङ्क्ते यदायत्तमोकसात्म्यमित्याहारविधिविशेषायतनानि सप्त। अष्टमस्तु राशिः। एतान्यष्ट रसविमाने स्वयं वक्ष्यमाणानि विस्तरेण व्याख्यास्यामः।

तथा तीक्ष्णोग्राभिष्यन्दिगन्धानामतिमात्रं घ्राणमतियोगः, सर्वशोऽघ्राणमयोगः, पूतिद्विष्टामेध्यक्लिन्नविषपवनकुणपगन्धादिघ्राणं घ्राणमिथ्यायोगः। तत्रैकं स्पर्शनेन्द्रियमिन्द्रियाणामिन्द्रियव्यापकं चेतःसमवायि स्पर्शनव्याप्तेर्व्यापकमपि च चेतस्तस्मात् सर्वेन्द्रियव्यापकस्पर्शकृतो यो भावविशेषः सोऽयमनुपशयात् पञ्चविधस्त्रिविधविकल्पो भवत्यसात्म्येन्द्रियार्थसंयोगः। सात्म्यार्थो ह्युपशयार्थः। कतिधापुरुषीये च। "अत्युग्रशब्दश्रवणात् श्रवणात् सर्वशो न च। शब्दानाञ्चातिहीनानां भवन्ति श्रवणाज्जडाः॥ परुषोद्भीषणाशस्ताप्रियव्यसनसूचकैः। शब्दैः श्रवणसंयोगो मिथ्यायोगः स उच्यते॥ असंस्पर्शोऽतिसंस्पर्शो हीनसंस्पर्श एव च। स्पृश्यानां संग्रहेणोक्तः स्पर्शनेन्द्रियबाधकः॥ यो भूतविषवातानामकालेनागतश्च यः। स्नेहशीतोष्णसंस्पर्शो मिथ्यायोगः स उच्यते॥ रूपाणां भास्वतां दृष्टिर्विनश्यति हि दर्शनात्। दर्शनाच्चातिसूक्ष्माणां सर्वशश्चाप्यदर्शनात्॥ द्विष्टभैरवबीभत्सदूरातिश्लिष्टदर्शनात्। तामसानाञ्च रूपाणां मिथ्यासंयोग उच्यते॥ अत्यादानमनादानमोकसात्म्यादिभिश्च यत्। रसानां विषमादानमल्पादानञ्च दूषणम्॥ अति-

तावत्कालजे, यतः कालो हि तत्र सम्यग्युक्त एव, कालसम्यग्योगश्च न व्याधिकारणमिति सिद्धान्तः। अथ कालप्रतिनियतः तत्रासात्म्येन्द्रियार्थसंयोग एव कारणमिष्यते, तथाप्येवं सति कालमिथ्यायोगादावप्यसात्म्येन्द्रियार्थसंयोग एव कारणमिति वक्तुं पार्यते; तस्मादस्मिन् मार्गे एवं बुद्धिर्वर्णयन्ति यत्—सहजानां विकाराणां निष्प्रतिक्रियत्वेनेहायोगादिजन्यत्वेनापरोधो न कृत

मृद्वतितीक्ष्णानां गन्धानामुपसेवनम् । असेवनं सर्व्वशश्च घ्राणेन्द्रियविनाशनम् ॥ पूतिभूतविषद्विष्टा गन्धा ये चाप्यनार्त्तवाः । तैर्गन्धैर्घ्राणसंयोगो मिथ्यायोगः स उच्यते ॥ इत्यसात्म्यार्थसंयोगस्त्रिविधो दोषकोपणः । असात्म्यमिति तद्विद्याद् यन्न याति सहात्मताम् ॥" इत्येव मिथ्यायोगायोगातियोगात्मकत्रिविध-विकल्पितः परिणामः प्रज्ञापराधोऽसात्म्येन्द्रियार्थसंयोगश्चेति त्रिविधो द्वया-श्रयाणां वक्ष्यमाणं शरीरं सत्त्वसंज्ञञ्चेति द्वयमाश्रयो येषां तेषां व्याधीनां पूर्व्वोत्तरनिर्वृत्तिस्वभावानां धातुवैषम्यदुःखानां परस्परं व्यतिहाय्य धातुसाम्य-सुखानां हेतुसंग्रहः कालप्रकर्षापकर्षाभ्यामुत्पत्तिहेतूनामसंख्येयत्वेऽपि त्रिविध-कल्पनया संक्षेपः । कालस्यासम्यग्लक्षणस्य तद्दोषपरिहारमन्तरेणापरिहार्य्यत्वा-दादावुपादानम् । बुद्धेस्तु कालायोगादिषु तथेन्द्रियार्थायोगादिषु हेतुत्वेन द्वयोर्मध्ये उपादानम् ; वक्ष्यते हि "प्रज्ञापराधाद्ध्यहितानर्थान् पञ्च निषेवते" इति जनपदोद्ध्वंसनीये च "तयोर्योनिः प्रज्ञापराधः एव इति ।" अत्र कश्चित् प्रत्यासन्नहेतुत्वादसात्म्येन्द्रियार्थसंयोगस्य पृथगुपादानमित्याह. तन्न मनोरमं ; शस्त्राभिघातादेरपि तथाविधप्रत्यासन्नहेतुत्वेन पृथगुपदेशापत्तेः । एषां खलु व्याध्युत्पत्तिहेतूनां चयादिकरत्वे सन्निकृष्टहेतुत्वं विशिष्टव्याधिजनने कालप्रकर्ष-सहायत्व एव हेतुत्वं बोध्यम् । तेनात्र कालकर्म्मसंप्राप्तिरूपोऽपरो योऽधिको हेतुः कतिधापुरुषीये वक्ष्यते तदनुक्तितोऽत्र न न्यूनत्वं स्वलक्षणसमविषमयोगेनापि कालप्रकर्षस्यैव सर्व्वेषामभिव्यक्तौ हेतुत्वात् एवं कर्म्मणामपि कालप्रकर्षतः समागमे हेतुत्वादिति ।

इत्थञ्च बीजाङ्कुरन्यायेन पूर्व्वजन्मनि कर्म्मवशात् धीधृतिस्मृतिविभ्रष्टः सन्नशुभं यत् कर्म्म कृतवांस्तदशुभकर्म्मजसंस्कारविशेषरूपः कर्म्माख्योऽधर्म्म-स्ततसम्प्राप्तो कालप्रकर्षात् तदधर्म्मागमे पुनरिह जन्मन्यपि धीधृतिस्मृतिभ्रंशो भवति. ततश्चासात्म्येन्द्रियसंयोगश्च भवति । जनपदप्रज्ञापराधात्तु कालश्च विषम-लक्षणः स्यादित्येवं सर्व्वं प्रज्ञापराधेऽन्तर्भूतम् । तेन प्रज्ञापराधः कालकर्म्म-सम्प्राप्तिश्चेति द्विविधो हेतुसंग्रहो युक्तोऽप्याचार्य्याणां शिष्यव्यवसायार्थं नानाधर्म्मख्यापनाय नानाप्रकारेणोपदेशो युज्यते । अत्र कालस्य दुष्परि-

एव, कालस्वभावजा अपि सहजा एव ; या त्वत्र प्रतिक्रिया कालस्वभावानामनागतानां भावि-धात्वनुगुणकृत्यसेवार्थरूपा तथा स्वाभाविकानाञ्च क्षुत्पिपासाजरादीनां कालभोजनरसायनादिरूपा, तस्या अकरणे सति कालस्वभावजस्य रोगस्य प्रादुर्भावः प्रज्ञापराधजन्य एव, उचिते हि काले कर्त्तव्याकरणं प्रज्ञापराध एव । उक्तं हि कतिधापुरुषीयेऽपि प्रज्ञापराधसंग्रहे "कर्म्मकालाति-

ह्यत्वादसात्म्येन्द्रियार्थसंयोगस्य शारीराङ्गेषु बुद्धीन्द्रियाणां तदिन्द्रियजव्याध्युपघातेऽप्यन्तरस्थव्याध्यपेक्षयाऽतिवैकल्यं पुंसां स्यादिति ख्यापनार्थं पृथगुपादानम्। कतिधापुरुषीये तु कालस्य विषमशीतोष्णवर्षाणान्यतमस्य स्पर्शनेन्द्रियग्राह्यत्वादसात्म्यार्थागमेऽन्तर्भावः कृतः। कालकर्म्मसम्प्राप्तेः सर्व्वस्यैव हेतुत्वादभिव्यञ्जकत्वेऽपि हेतुत्वेनोपादानं कृतम्। अत एव हेतुर्द्विविध उत्पादकोऽभिव्यञ्जकश्च। चतुर्विधश्च सन्निकृष्टविप्रकृष्टप्राधानिकव्यभिचारिभेदात्। सन्निकृष्टो यथा—"नक्तंदिनर्त्तुभुक्तांशा वातादिवैषम्यहेतवः; ते पुनर्न चयादिक्रममपेक्षन्ते।" इति समलक्षणकालस्यापि सम्प्राप्तेर्व्याध्युत्पत्तौ हेतुत्वेऽपि स्वाभाविकत्वेन तद्दोषवैषम्यस्य नातिबाधकत्वेनात्र व्याधिशब्देन स्वभावव्याध्यतिरिक्तव्याधिर्वाच्य इति। पूर्व्वाह्लादिवृद्धिस्वभावकफादिमयशरीरपरिग्रहे प्रज्ञापराधस्यैव हेतुत्वं वा। विप्रकृष्टो यथा—पौषमाघरूपे हेमन्ते सञ्चितः कफः फाल्गुनचैत्ररूपे वसन्ते तज्जान् व्याधीन् करोति। प्राधानिको यथा—विषादि सद्यः प्राणहारि। व्यभिचारी तु यो दुर्ब्बलत्वाद् व्याधिकरणासमर्थोऽहितस्तस्य व्याध्युत्पत्तौ व्यभिचारिहेतुत्वं यथा व्यायामजनितबलवदग्नौ बलवति पुरुषे संयोगविरुद्धाशनं न व्याधिकारणमिति। यस्तु दोषरोगोभयहेतुभेदेन त्रिविधो हेतुः, मधुररसादयस्त्रयस्त्रयो दोषहेतवः पाण्डुरोगादिहेतुर्मृद्भक्षणादिः, हस्त्यश्वादियानारोहणादिरुभयहेतुरिति वदन्ति; तत् तु न मनोरमं—विकारो धातुवैषम्यमिति हि वक्ष्यते ततो दोषवैषम्यस्यापि व्याधित्वात्। अथात्र मिथ्या न चातीति त्रयाणां कालबुद्धीन्द्रियार्थयोगे चान्वयात् विपरीतहीनातिशयशीतोष्णवर्षलक्षणस्य कालस्य योगात् सम्यक् शीतादिलक्षणस्यापि कालस्य निरन्तरप्रावरणाग्नितापादिनाऽन्यथायोगेऽपि कालमिथ्यायोगः। तथा तत्कालस्याल्पो योगः कालायोगः, तथा प्रावरणाद्यभावेन तत्कालस्य सततयोगः कालातियोगः। एवं बुद्धेरपि सम्यक् चिन्त्येऽन्यथासमप्रवृत्तिर्मनोमिथ्यायोगः। सर्व्वशोऽप्रवृत्तिर्मनसोऽयोगः। सततप्रवृत्तिर्मनोऽतियोगः। एवं सम्यग्वक्तव्येऽन्यथा वाक्प्रवृत्तिर्वाङ्मिथ्यायोगः। सर्व्वशोऽप्रवृत्तिर्वागयोगः। सततप्रवृत्तिर्वागतियोगः। एवं सम्यक् शक्यशरीरस्यान्यथाप्रवृत्तिः शरीरमिथ्यायोगः। सर्व्वशोऽप्रवृत्तिः शरीरायोगः।

पातश्च मिथ्यारम्भश्च कर्म्मणाम्" इति। अन्ये तु मिथ्यायोगादिशून्यकालविद्यमानत्वेन कालएवावरोधः पूर्वा विकाराणामिति कतिधापुरुषीये वक्ष्यमाणग्रन्थस्य यथाश्रुतार्थपरिग्रहाद्वर्णयन्ति। न चेति चकारात् हीनयोगं गृह्णाति, वक्ष्यति हि "मिथ्यातिहीनलिङ्गेभ्यो यो व्याधिरुपजायते"

शरीरं सत्त्वसंज्ञञ्च व्याधीनामाश्रयो मतः ।
तथा सुखानां योगस्तु सुखानां कारणं समः ॥ २७ ॥

सततप्रवृत्तिः शरीरातियोगः । एवमिन्द्रियाणां स्वस्वसम्यगर्थं स्वशक्त्यनुरूपं अन्यथायोगो मिथ्यायोगः । सर्व्वशोऽयोगोऽयोगः । सततयोगोऽतियोगः । इत्येवं प्रागुक्ताश्च स्वयमेव ये तेषां सम्यगसम्यग्भावानां त्रयो योगा द्विधा बोध्या इति ॥ २६ ॥

गङ्गाधरः—ननु द्व्याश्रयाणामित्युक्तौ द्वयं यद्व्याध्याश्रयो नामोक्तं तत् किमित्यत आह, शरीरमित्यादि ।—अत्र वेदस्याधिकरणं पुमानुक्तः । स च संयुक्तसत्त्वात्मशरीरेति-त्रयात्मकस्तस्य समधातोः सुखिनश्च पुरुषस्य धातुसाम्यसुखरूपस्वास्थ्यरक्षणं विषमधातोर्दुःखिनश्च तस्यातुररूपस्य धातुसाम्यसुखजननं तदेव धातुवैषम्यदुःखनिवृत्तिकरणं वेदस्यास्य च प्रयोजनमुक्तमित्यतस्तस्यैव पुरुषस्यात्माधिष्ठितं शरीरं सेन्द्रियं निरिन्द्रियं वा पञ्चमहाभूतविकारसमुदायात्मकम् । सत्त्वसंज्ञञ्च मनश्चेति द्वयं व्याधीनां धातुवैषम्यत्रिधादुःखयोः पूर्व्वोत्तरकालभूतयोराश्रयो धातुवैषम्याश्रयस्तज्जातदुःखाश्रयश्चेति यावत् । मतो वेदविद्भिः सम्मतः । न त्वायुर्लक्षणोक्तं शरीरमिह शरीरं प्रकरणाभावात् । शरीरस्य प्रथममुपादानं सत्त्वात्माधिष्ठानत्वेन कायचिकित्साप्रधानतयाऽस्य तन्त्रस्य प्रायेण शारीरव्याधिषु प्रवर्त्तकत्वादिति । सत्त्वसंज्ञमिति सत्त्वमित्युक्त्यैव मनोलाभे यत् सत्त्वसंज्ञमित्युक्तं तत् सत्त्वगुणस्याशङ्कानिरासार्थम् । सत्त्वगुणबहुलत्रिगुणात्मकत्वेन तस्य हि सत्त्वसंज्ञा । शरीरात्मसम्बन्धेनैव व्याध्याश्रयत्वं न तु केवलस्य वेदाधिकरणत्वाभावात् । कश्चित्तु आत्माधिष्ठितं शरीरं सत्त्वसंज्ञं पृथक् पृथक् व्याध्याश्रयश्चकारेण युगलमपि व्याध्याश्रयः स्यात् यथा ज्वरकुष्ठादयः शारीरा एव व्याधयो भवन्ति, कामशोकादयस्तु मानसा एव, अपस्मारोन्मादादयो द्व्याश्रया एवेति व्याचष्टे । न च ततो व्याधीनां द्व्याश्रयत्वं व्याहन्यते, किन्त्वत ऊर्द्ध्वं शारीरमानसदोषोपशमयोरुपदेशेन युगलस्याश्रयत्वालाभात् । उन्मादादयो हि शारीरदोषजा

इति । हीनयोगस्य तु साक्षादपठनमयोगप्रभेदत्वात् स्वल्पयोगोऽप्ययोगो भवति, यथैकतण्डुलाभ्यवहारेऽनशनमुच्यते ॥ २६ ॥

चक्रपाणिः—द्व्याश्रयाणामित्यनेनोक्तमाश्रयं दर्शयति, शरीरमित्यादि ।—अत्र शरीरमादौ कृतं शरीरव्याध्यधिकारेणैवास्य तन्त्रस्य प्रवर्त्तकत्वात्, सत्त्वसंज्ञशब्देन मन उच्यते, किंवा सत्त्वशब्देनैव

अपि मानसत्वेन यद् व्यपदिश्यन्ते तन्मनोभ्रंशमात्रान्येन। उद्रिक्तरजस्तमोगुणाभ्यां निकृष्टीकृतसत्त्वगुणवतो मनो हि वातादिभिर्दूष्यते तेन वातादिजत्वेन व्यपदिश्यन्त इति शारीरमानसोभयदोषजत्वादुभयाश्रिता भवन्त्युन्मादादय इति। चेतनपुरुषस्यैवैतद्द्वे दाधिकरणत्वाच्चेतनाचेतनमात्र्यप्राणिनामपि शारीरव्याधयो ये दृश्यन्ते तेऽप्युपलक्ष्याः। यथा वृक्षस्य कोटरो जलस्य नीलिका भूमेरूषर एवमादयः।

नन्वस्तु द्वयमेतद् व्याधीनामाश्रयो भवत्वेतद् द्वयाश्रयाणां व्याधीनां निरुक्त एव त्रिविधो हेतुसंग्रहः किन्त्वेषां व्याधीनां प्रतिक्रियया चारोग्यं किं सत्त्वात्मशरीरेति-त्रयात्मकपुरुषाश्रयमथ किमात्माश्रयमथवा सत्त्वाश्रयमथवा शरीराश्रयमित्याशङ्क्याह, तथा सुखानामिति। सुखानां धातुसाम्यपूर्व्वकोद्भवानां प्रेमास्पदरूपाणामारोग्याणामाश्रयोऽपि तथा शरीरं सत्त्वसंज्ञञ्च चेतनाधिष्ठितं शरीरं मनश्चेति द्वयम्। एतेनैतदुक्तं यत्रैव यो रोगस्तत्रैव तत्प्रशान्तौ तदारोग्यं न त्वन्यत्रेति शारीरमानसाश्रयत्वेऽपि रोगारोग्ययोरुपचारः पुरुषे बोध्यश्चेतनानुप्रवृत्तेः। कतिधापुरुषीये ह्युक्तम्।—"नाश्रयो न सुखं नार्त्तिर्न गतिर्नागतिर्न वाक्। न विज्ञानं न शास्त्राणि न जन्म मरणं न च॥ न बन्धो न च मोक्षः स्यात् पुरुषो न भवेद्यदि। कारणं पुरुषस्तस्मात् कारणज्ञैरुदाहृतः॥" इति।

नन्वस्त्वारोग्याणामप्याश्रयो व्याध्याश्रय एव देहो मनश्चेति द्वयम्। आरोग्याणां कारणमपि किं तद्व्याधिकारणमेवेत्यत आह, योगस्त्वित्यादि। तु शब्दो भिन्नक्रमे पूर्व्वेषां कालादीनामनुवृत्तौ च। सुखानामारोग्याणां धातुसाम्यपूर्व्वकजातानां सुखानां च कारणन्तु न व्याध्याश्रयवत् तुल्यमपि तु भिन्नं तत् किमित्याह। योगः सम इति। कालबुद्धीन्द्रियार्थानां समो योगः सुखानां कारणमित्यर्थः। तत्र कालानां शीतोष्णवर्षलक्षणानां षण्णामृतूनां यथास्वलक्षणयोगः कालसमयोगः, कालसमयोगादपि प्राकृतादीनां हेमन्तादीनाञ्च वातादीनां चयप्रकोपप्रशमादिहेतुत्वं यत् तत्प्राकृतं स्वाभाविकं क्षुत्पिपासाजराजन्ममरणादिवत्। समदर्शनशीला धीर्मनोनियमहेतुत्वशीला धृतिर्यथार्थस्मर्त्तव्याश्रयरूपा स्मृतिस्ताश्च बुद्धिसंज्ञास्तासमयोगः कर्त्तव्याकर्त्तव्यहिताहितमित्येतद्रूपेण ज्ञानं धीसमयोगः। विषयप्रवणचित्तस्य विषये नियमतो योगो

मनसि ज्ञाने संज्ञामप्येतामशरीरसम्बन्धं मन उच्यते, शारीरायसम्बन्धस्य मनसो व्याधिना-श्रयत्वात्। असमासेन च पृथगपि शरीरमनसोर्व्याध्याश्रयत्वं दर्शयति, यतः कुष्ठादयः

धृतिसमयोगः। स्मर्त्तव्यस्य तत्त्वतो ज्ञानाय स्मर्त्तव्ये योगः स्मृतिसमयोग इति बुद्धिसमयोगः। तस्माद्वाङ्मनःशरीराणां सम्यक् प्रवृत्तिभवति। यद्वक्तव्यत्वेनोचितं तद्वदति वागिति वाक्समयोगः। यच्चिन्त्यत्वेनोचितं तच्चिन्तते मन इति मनःसमयोगः। यच्चेष्टितव्यतयोचितं तच्छरीरं चेष्टते इति शरीरसमयोग इति। एवं श्रोत्रं शतयनुरूपमर्थं शब्दं यच्छृणोति स शब्दसमयोगः। स्पर्शनं तथाभूतं स्पर्शं यत् स्पृशति स स्पर्शसमयोगः। चक्षुश्च यत् तथारूपं पश्यति तद्रूपसमयोगः। रसनं यत् तादृशं रसमास्वदते स रससमयोगः। गन्धं च यत्तादृशं घ्राणं जिघ्रति स घ्राणसमयोगः। इति मनोवाक्कायसम्भूतं सुखं तेभ्यो योगेभ्यो जायते इति। कतिधापुरुषीयेऽपि वक्ष्यते। — "वेदनानामसात्म्यानामित्येते हेतवः स्मृताः। सुखहेतुर्मतस्त्वेकः समयोगः सुदुर्लभः॥ नेन्द्रियाणि न चैवार्थाः सुखदुःखस्य हेतवः। हेतुस्तु सुखदुःखानां योगो दृष्टश्चतुर्व्विधः॥ सन्तीन्द्रियाणि सन्त्यर्था योगो न च न चास्ति रुक्। न सुखं कारणं तस्माद्योग एव चतुर्व्विधः॥" इति।

अथायं भावः प्रतिसन्धेयः। यस्मान्मिथ्यायोगायोगातियोगयुक्तकालबुद्धीन्द्रियार्थकर्म्मणां मिथ्यायोगादियुक्तबुद्धिहेतुकत्वान्मिथ्यायोगादियुक्तबुद्धिहेतुकं दुःखं तस्माच्छरीरं सत्त्वसंज्ञञ्च दुःखाश्रयः, दुःखहेतुमिथ्यादियोगत्रययुक्तबुद्ध्याश्रयत्वात्। तथा समयोगयुक्तबुद्धिहेतुकं यस्मात् सुखं तस्माच्छरीरसत्त्वसंज्ञञ्च सुखाश्रयः, समयोगयुक्तबुद्ध्याश्रयत्वात्। यथा घटः कपालमालादीयगुणवान् तत्तद्गुणहेतुकपालमात्राद्याश्रयत्वात्। यथा वा घटो मृद्वालुकादीयगुणहेतुगुरुत्वादिगुणवान् गुरुत्वादिगुणहेतुगुरुत्वादिगुणाश्रयमृद्वालुकाद्याश्रयत्वादिति। नन्वेवं तदेवोपपद्यते यदि शरीरमनसोर्गुणो बुद्धिर्भवति। न च बुद्धिः शरीरगुणो नापि मनोगुणः। कतिधापुरुषीये ह्यात्मलिङ्गत्वेन वक्ष्यमाणत्वात्। तद्यथा प्राणापानावित्यारभ्य— "इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः। बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः॥" इति। तथा गौतमेनापि "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति।" उक्तम्। कणादेनापि चोक्तम्। "प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकारा बुद्धिः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि।" प्रवृत्तिनिवृत्ती प्रत्यगात्मनि दृष्टे परत्र लिङ्गमिति चेत् सत्यं मनसोऽपि लिङ्गत्वेन ज्ञानस्य भावाभावयोर्वक्ष्यमाणत्वेन

शारीरा एव, कामादयस्तु मानसाः, उन्मादादयश्च द्वयाश्रयाः। आरोग्यस्याश्रयं हेतुञ्चाह, तथा सुखानामित्यादि। सुखानामित्यारोग्याणाम्, वचनं हि "सुखसंज्ञकमारोग्यं विकारो दुःखमेव

कतिधापुरुषीये गुण एव भावानां लिङ्गं भवति न त्वन्यदिति न यौक्तिक प्राणापानादीनामपि तत्रैवात्मलिङ्गत्वेनोक्तत्वात्। अथात्मनो लिङ्ग बुद्धि-रिच्छाद्वेषसुखदुःखप्रयत्नाश्च न च शारीरगुणा न वा मनसो गुणास्ते भवन्ति। उक्तं हि गौतमेन। "नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात्।" इति। न बुद्धिरिन्द्रियाणां नवार्थानां गुणस्तयोर्विनाशेऽपि तच्छ्रवणादिज्ञानस्य स्मरणरूपत्वेनावस्थानात्। न ह्यनुभावकस्यासत्त्वे स्मरणमप्युपपद्यते। युग-पज्ज्ञेयानुपलब्धेश्च न मनस इति मनसो निखिलबुद्धिमत्त्वे युगपदेकदैवानेक-ज्ञेयानामनुपलब्धेर्न बुद्धिर्मनसो गुणः। नन्वेवं चेत्तदात्मगुणेऽपि तुल्यमात्मनो युगपत् सर्व्वेन्द्रियासंयोगात् युगपदनेकज्ञेयानुपलब्धिः। कथमिति चेन्न सन्निकर्षाभावात्तदनुत्पत्तिः। आत्मनो युगपदनेकेन्द्रियार्थसन्निकर्षाभावाद् युग-पज्ज्ञानानुत्पत्तेः। ज्ञानोत्पत्तौ कारणोपदेशाद बुद्धिरात्मगुण इति चेन्न आत्मन इव युगपन्मनसोऽपि सर्व्वेन्द्रियसन्निकर्षाभावाद् युगपज्ज्ञानानुत्पत्ते-रिति। किञ्च विनाशकारणानुपलब्धेश्चात्मावस्थाने तन्नित्यत्वप्रसङ्गः। आत्मा हि नित्यस्तत्र बुद्धेरवस्थाने तदाश्रयस्यात्मनो विनाशाभावेन बुद्धेर्विनाश-कारणान्तरानुपलब्धेश्च नित्यत्वप्रसङ्ग इति चेन्नात्मनो बुद्धिन एवात्ममनो-योगेनेन्द्रियार्थसन्निकर्षादुत्पन्नस्यैन्द्रियकस्य बुद्ध्यन्तरस्य नाशात्। यथा शब्दः पूर्व्वस्य शब्दस्यानन्तरोत्पन्नस्य शब्दान्तरस्य नाश इति। उत्तरकाल-बुद्ध्युत्पत्तिः पूर्व्वबुद्धिनाशे हेतुरुपलभ्यते। अथैवमस्त्वनित्यत्वं मनोगुणत्वेऽपि तथात्वमस्ति बुद्धेर्युगपदुत्पत्तिस्त्वात्मगुणत्वेऽपि न परिहृता भवत्येवञ्च तत्रा-हैकदेशी। ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिरिति ज्ञानं संस्कारकरणं यत् तत् तु समवेतं यदात्मप्रदेशे तत्र प्रदेशे मनसः सन्निकर्षात् स्मृतिरुत्पद्यते कथं बुद्धिस्मृत्योर्युगपदुत्पत्तिः सम्भवतीति न युगपदुत्पत्तिरेतावतापि बुद्धेरात्मगुणत्वे यौगपद्यमेकत्वादात्मनोऽनेकेषु युगपत्-प्रवृत्त्यभावान्न यथा सम्भवति तथा मनोगुणत्वेऽपीति तस्मादात्मगुणत्वस्थापनार्थं बुद्धेरपरयुक्तिमुवाच गौतमः। "ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः।" इति। ज्ञस्य ज्ञानवत एवात्मन इच्छाद्वेषहेतुकत्वादारम्भनिवृत्त्योः प्रवृत्तिनिवृत्त्योर्न मनसि बुद्धिः। इच्छाद्वेषौ चात्मगुणावन्यदीयज्ञानजनितौ किमात्मनि वर्त्तितु युज्येते इति आत्मन एव बुद्धिरात्मन एव स्वबुद्धिजन्याविच्छाद्वेषौ ताभ्याञ्च

तु"। तथेति शरीरं मनश्च, तत्र शारीररोगाभावरूपस्यारोग्यस्य शरीरमाश्रयः मानसरोगा-भावस्य तु मनः। योगस्तु समः कालबुद्धीन्द्रियार्थानां सम्यग्योगरूपस्तथा सुखानामारोग्याणां

जनितौ प्रवृत्तिनिवृत्तिलक्षणप्रयत्नौ चात्मन एवेति बोध्यम् । अत्राह चार्व्वाकः— "आरम्भनिवृत्तिलिङ्गकौ हीच्छाद्वेषौ पार्थिवादिदेहेष्वपि चेष्टा चेष्टारूपप्रवृत्ति-निवृत्तिमत्त्वादिच्छाद्वेषावपि वर्त्तेते तौ तस्यैव भवत इत्यतो भौतिकदेहादिरपि ज्ञो भवतीति ।" तन्न, परदिनादिष्वारम्भनिवृत्तिदर्शनाद्भौतिकदेहादिप्रवृत्ति-निवृत्त्योः प्रयत्नजन्यत्वादप्रयत्नत्वात् । नन्विच्छाद्वेषजन्ये प्रवृत्तिनिवृत्ती प्रयत्नः शारीरप्रवृत्तिनिवृत्ती तु क्रिया न प्रयत्न इत्यत्र को नियम इत्यत उवाच "नियमानियमौ तु तद्विशेषकौ इति ।" तयोरिच्छाद्वेषजप्रवृत्तिनिवृत्त्योः प्रयत्नत्व तज्जन्यशारीरप्रवृत्तिनिवृत्त्योः क्रियात्वमित्येतयोर्विशेषकौ भेदकौ चेतनाचेतनौ नियमौ । अत्र चेतनाचेतनावनियमौ चेतने हि प्रवृत्तिनिवृत्ती प्रयत्नाख्ये अचेतने हि क्रियाख्ये इति तत्प्रयत्नजनकौ पुनरिच्छाद्वेषौ च चेतनस्यैव न त्वचेतनस्येति शरीरस्य नेच्छाद्वेषौ तयोर्जनकबुद्धिरपि चेतनस्यैवेति न त्वचेतनयोः शरीरमनसोश्चेतनपारतन्त्र्यात् स्वकृतकर्म्मणां फलभोगाय पुनः पुनरभ्यागमाच्च न मनसो बुद्धिरिति । परिशेषादात्मन एव बुद्धिरिच्छादयश्चेति । अत्र ब्रुवते । बुद्धेरिच्छादिजनकत्ववत् सुखदुःखजनकत्वेनात्मगुणत्वं बुद्धि-जन्येच्छाद्वेषयोस्तज्जप्रयत्नस्य तज्जयोः सुखदुःखयोश्चात्मनिवृत्तिर्नोपपद्यते शरीरे व्याधिमद्भाववदर्शनात् । व्याधिर्हि दुःखं तज्जनकयोरिच्छाद्वेषजप्रवृत्ति-निवृत्त्योः प्रयत्नत्वं तज्जन्ययोर्वाङ्मनःशरीराणां प्रवृत्तिनिवृत्त्योश्च क्रियात्व-मित्येतयोर्विशेषकौ तु चेतनाधिष्ठितानधिष्ठितशरीररूपौ नियमानियमौ । चेतनाधिष्ठितशरीरे हि प्रवृत्तिनिवृत्ती प्रयत्न उच्येते. चेतनानधिष्ठितशरीरे तु क्रियोच्यते इति तज्जनकाविच्छाद्वेषौ च शरीरे तज्जनिका बुद्धिरपि शरीरे वर्त्तते । द्रव्ये स्वगुणपरगुणोपलब्धेरिति चेन्न । रूपादीनां यावद्द्रव्य-भावित्वं न शरीरस्य भूतविकारत्वात् । ननु घटादौ श्यामे पाकजगुणान्तरोत्पत्ते-र्भौतिकेऽपि शरीरेऽभूतगुणा बुद्ध्यादयो भवन्ति इति चेन्न पाकजानां गुणानां विरोधिगुणसिद्धेरिष्टापत्तेः । किञ्च शरीरविशेषगुणानां शरीर-व्यापित्वेन केशनखादिषु सुखदुःखाभावेन गुणाभावाच्च न बुद्धिः शरीरगुण इत्यत्राह । त्वक्पर्य्यन्तत्वं शरीरस्य न तु केशनखादिपर्य्यन्तत्वं न हि केशेऽस्ति त्वगित्याहुश्चैतन्यस्य तत्रानुपलब्धेः । शरीरगुणवैधर्म्याच्च न बुद्धिः

कारणं, सुखानामिति सुखपदाभिधेयानाञ्च संगृहीतं, तत् किमिदं रोगाभावानां बहुत्वञ्च निदिश्य रोगबहुत्वादेव बोद्धव्यम्, इहैव च भावानां बहुत्वं यन्निदिश्य भावबहुत्वम् ।

निर्विकारः परस्त्वात्मा सत्त्वभूतगुणेन्द्रियैः।
चैतन्ये कारणं नित्यो द्रष्टा पश्यति हि क्रियाः॥ २८॥

शरीरगुणः। बहिरिन्द्रियवेद्यो हि शरीरगुणो बुद्धिस्त्वभ्यन्तरेन्द्रियवेद्य इति स्फुटं तयोर्वैधर्म्यम्।

अथ रूपादीनां शरीरगुणानामपि नरवैधर्म्यं रूपं हि तैजसो गुरुत्वादयो जलादेरिति चेन्न बहिरिन्द्रियग्राह्यत्वसाधर्म्यात् शरीरगुणानामवैधर्म्यादिति। एतेन बुद्धिवुद्धिजन्याविच्छादयो तज्जन्ये प्रवृत्तिनिवृत्ती तज्जन्ये च सुखदुःखे चैते गुणा न शरीरे न च शारीरेन्द्रियेषु श्रोत्रादिषु न वा मनसि वर्त्तन्ते किन्त्वात्मन्येव तल्लिङ्गत्वाद्वर्त्तन्ते इति पर्य्यवसितम्। अत्रानुभवसिद्धं युक्तिसिद्धं च दृश्यते। यस्मिन् शरीरप्रदेशे भवति न वा भवति व्रणादिव्याधिस्तच्छरीरप्रदेश एव दुःखं सुखं वेति लोकेऽपि प्रभाषते स स एव गात्रप्रदेशो व्यथते न व्यथते इति॥ २७॥

गङ्गाधरः नन्वेवं तदैव स्याद् यदि सुखसंज्ञकमारोग्यं विकारो दुःखमेव चेति स्वीक्रियते न च सुखमारोग्यं दुःखं व्याधिरिति मन्यामहे। मन्यामहे तु "विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते" इति। तयोरारोग्यरोगयोः फलं सुखदुःखमिति धातुवैषम्यरूपव्याधीनां धातुसाम्यरूपारोग्याणाञ्चाश्रयो भवतु शरीरं सत्त्वसंज्ञञ्चेति। तयोः फले सुखदुःखे त्वात्मनि वर्त्तेते चानुभूयेते चात्मनैवेति तथा सुखानामित्यत्र सुखानां सुखहेतुधातुसाम्यानामिति व्याख्येयमिति यदुच्यते तत्राह

ननु च सुखदुःखतद्धेतुधातुसाम्यवैषम्यात्मकारोग्यरोगाश्रयत्वे सत्त्वशरीरयोः सत्त्वमात्मा शरीरञ्चेत्यत्र राशिपुरुषे आत्मग्रहणं निष्फलमित्याशङ्कानिरासार्थञ्चाह, निर्विकार इत्यादि। परस्तु सत्त्वशरीराभ्यां शेष आत्मा विकाराद्विगतः इति निर्विकारः। कथं दुःखमात्मगुणः स्यादिति मनःशरीरगुण एवेति, यदीह विकारो धातुवैषम्यं तस्मान्निर्गत आत्मेत्युच्यते नहि अस्तु विकारो धातुवैषम्यं तच्च स्वरूपतो वा गुणतो वा कर्म्मतो वा स्वरूपगुणकर्म्मतो वा वृद्धिह्रासश्चेति द्वयं तस्यात्मनो नास्ति तुशब्दस्य भिन्नक्रमत्वात्। हि यस्मात् परः शरीरसत्त्वाभ्यां भिन्नः। शरीरं हि पञ्चमहाभूतविकारात्मकं, सत्त्वं

न्यायुर्वेदागमो हेतुरित्यादौ अध्यायार्थसंग्रहे व्याख्याश्रयो न संगृहीतः, तत्र किमिदमनार्षं ? न, हेतवश्चेत्यनेन व्याख्याश्रयरूपस्यापि हेतोरत्र संग्रहणम्॥ २७॥

चक्रपाणिः—ननु स त्वमात्मा शरीरञ्चेति वचनेन त्रयमुपात्तम्। अत्र शरीरमनसी व्याध्याश्रयतयोक्ते, आत्मनस्तु का व्यवस्थेत्याह निर्व्विकारो निर्व्विकृतिः, तेन शरीरेणाविकृतमात्मनः,

तु सत्त्वगुणबहुलस्त्रिगुणात्मकमात्मा तु न तथाभूतः परन्तु समत्रिगुणलक्षणश्चित्तसम्प्रसादः स चाव्यक्तस्तस्मान्निर्विकार इत्याह कश्चित् तन्न, शरीरभिन्नत्वान्मनसो मनोभिन्नत्वाच्छरीरस्य निर्विकारत्वापत्तौ तदुभयस्मात् पर इत्युक्तितोऽपि सुषुप्तौ तथाविधत्वादात्मन आनन्दमात्रभोगित्वात् । अन्ये तु मनःशरीराभ्यां हि यस्मात् तु भिन्नरूपे परः श्रेष्ठ आत्मा तस्मान्निर्विकारः । निर्विकारस्तु यस्मात्तस्मान्मनःशरीराभ्यां श्रेष्ठ आत्मेति व्याचक्षते । तन्न साध्यसमत्वाद्धेतुत्वात् । वस्तुतस्तु निरुक्तं धातुवैषम्यं दुःखञ्चेति द्वयं विकारः आत्मेत्यस्य पर इति विशेषणान्न खल्वात्मा केवलश्चेतनाधातुरयं पुनरस्मिन् पुरुषे नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमव्यपदेश्यमव्यवहार्य्यमचिन्त्यमलक्षणमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते । स आत्मा स विज्ञेयः सोऽव्यक्तः सोऽव्ययः सोऽक्षरः सोऽनादिः स विश्वं सोऽव्ययः स परमात्मा द्रष्टारमुपद्रष्टा भोक्तारमनुभोक्ता न द्रष्टा न भोक्ता, तर्हि किं सः ? अव्यक्तमात्मा क्षेत्रज्ञ इत्यादिपर्य्यायेण शारीरे वक्ष्यमाणः सर्वगः सर्वगतस्ततोऽनुप्रविष्टस्त्रिगुणलक्षणः पुरुष एतस्मिन् सत्त्वात्मशरीरात्मकराशिपुरुषे भवत्यात्मा । स यत्राधिष्ठाने यस्यामवस्थायां च सम्प्रतिष्ठितो द्रष्टा क्रियाणां भोक्ता भोगैः सुखदुःखानां तदधिष्ठानस्तदवस्थ एवात्मा आत्मविद्भिरुच्यते । स एकोऽधिष्ठानायोगपद्यात् । त्रीणि खल्वस्याधिष्ठानानि हृदयं कण्ठो नेत्रञ्चेति । तत्र हृदयं नित्याधिष्ठानं, तत्र तिष्ठन् विभुत्वाच्छेषसर्वाधिष्ठानमधितिष्ठतीति । तिस्रश्चावस्थाः सुषुप्तिः स्वप्नो जागरितञ्चेति । सुषुप्तावस्थाने प्रलयपाते सर्वाणीन्द्रियाणि भूतानि च सर्वाणि सर्वे चार्था मनसि लीयन्ते मनश्चाहङ्कारेऽहङ्कारो महत्तत्त्वे प्रधाने तदा प्रधानं घनीभवति प्रज्ञोपाहितश्चायं प्रज्ञानघनः सुप्यतीति, परमात्मनि शिवे सम्प्रतितिष्ठते परमो ह्यात्मा रसोऽमृतोऽमृतरसाश्रयत्वात् । रसं ह्येवायमानन्दयन्तमेनं लब्ध्वा शुद्धसत्त्वमयेन प्रज्ञानेन महत्तत्त्वेन चेतसा सुखेनानन्दं रसं भुञ्जान आनन्दीभवतीति । चेतोमुख आनन्दभुगानन्दमयः प्राज्ञ एव सुषुप्तिस्थानः । एष सर्वेश्वर एषोऽन्तर्य्याम्यन्तर्यामिपरमात्माधिष्ठानात् । एष सर्वज्ञ एष योनिः सर्वस्य प्रभवश्चैष एषोऽप्यव्ययः ।

पर इति सूक्ष्मः श्रेष्ठो वा, तेन सत्त्वशरीरात्मसमेलकरूपो य आत्मशब्देनोच्यते तं व्यावर्त्तयति, यदुक्तं "संयोगिपुरुषस्येष्टो विशेषो वेदनाकृतः" इति । संयोगेऽपि च आत्मादीनां मनस्येव वेदना भवति, सा तु मनःसंयुक्ते आत्मन्यपि सम्बन्धेनोत्पद्यते, तेन "निवृत्ते चान्तरात्मनि"

पूर्व्वकृतकर्म्मफलयोगादेव प्रतिबुध्यमानः पुनर्महतोऽभिव्यज्यमानानि अहङ्कारादीनि गृहीत्वा स एव पुरुषः सन् प्रतिबुध्यते। प्रतिबुद्धश्चायं यदा मनसि क्लान्ते विषयेभ्यो निवर्त्तमानानीन्द्रियाणि लीयन्ते तदा स्वपिति, स्वपंश्चायमस्मिन् शरीरे सूक्ष्मशरीरेणोपाहितः स्वप्नान् पश्यन् प्रविविक्तभोगान् भुञ्जानः सुखदुःखमनुभवति। स्वप्नस्थानोऽयं पञ्चमहाभूतदशेन्द्रियमनोबुद्ध्यहङ्कार-प्रज्ञानमयशरीरस्तैरेव सूक्ष्मैः सुखदुःखहेतुभोगोपभोगेन सुखं दुःखं तस्मिञ्छरीरे धातुसाम्यवैषम्यजमनुभवतीति स सूक्ष्मशरीरी प्रत्यगात्मा तैजसो नामान्तःप्रज्ञः सुखदुःखगुणवान् अव्यक्तस्यात्मनो लिङ्गं सुखदुःखमिति, सूक्ष्मशरीरे मनः शरीरञ्च सुखदुःखाश्रय इति गौतमकणादादिभिः सह विरोधः।

एवं स यदा जागर्त्ति तदा बहिःप्रज्ञस्तैरेव स्थूलैर्मुखैरिमान् स्थूलान् भोगान् भुञ्जानः सुखदुःखगुणवान् वैश्वानर उच्यते। तत्राव्यक्तस्यात्मनो लिङ्गं सुखदुःखं प्रत्यगात्मन्यस्मिन् देहे मनसि वर्त्तते इति प्रत्यगात्मनो गुणः सुखदुःखमिति गौतमकणादादिभिः सहाविरोधः। स्थूलसूक्ष्मशरीरसत्त्वात्म-समुदायो हि प्रत्यगात्मा द्विविधो भूतात्मा वैश्वानरस्तैजसश्चेति। प्रज्ञोपाहित-स्त्वव्यक्ताख्यः क्षेत्रज्ञ आत्मा प्रज्ञया सत्त्वोद्रिक्तया सुखवांस्ततो निर्व्विकारो यदा रजस्तम उद्रेके सत्यहमिति मन्यते तदा तदहङ्कारेणाविद्यया आकाशादीन् सृष्ट्वा तैजसो भूतात्मा भवति स्थूलभूतयोगात् वैश्वानरः। दुःखाभावात् सुतरामव्यक्ते प्राज्ञे त्वात्मनि न व्याधिरत्यसुखत्वात् नित्यारोग्यं खलु वर्त्तते इति।

ननु गौतमोक्तं बुद्धीच्छाद्वेषसुखदुःखप्रयत्नज्ञानामात्मलिङ्गत्वमिव कतिधा-पुरुषीयेऽपि स्वयमपि "इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः। बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः॥" इति वक्ष्यते; ते चेत् क्षेत्रज्ञ आत्मनि न वर्त्तन्ते निरुपादानाः कथं प्रत्यगात्मनीच्छादयो गुणा निर्व्वर्त्तन्ते नित्य-बुद्ध्यादिमत्त्वाभिगुणत्वं वा कथमात्मन इति नाशङ्क्यम्। क्षेत्रज्ञस्य चेतनादयो-ऽनभिव्यक्तास्त्रिगुणसूक्ष्मभूततेजोऽव्ययात्मका न सत्त्वादिगुणात्मकास्तस्मात् लौकिकगुणाः समसत्त्वादियोगे त्वव्यक्तावस्थायां चेतनादयोऽव्यक्ता महता योगे विद्याबुद्धिः, अहङ्कारयोगे चाविद्याबुद्धिर्व्यज्यते। राशिपुरुषभावे महद-

इति वचनं निर्व्विषये मनसीति स्यात्, तथा शरीराद्यावच्चात्मसमवायी चयते, स्वप्नवच्छेद्वार्थं पर इति पदम्, उक्तम् अन्यत्र "मनोऽर्थबुद्ध्यिन्द्रियमनोवृत्तीनां कर्म्मणा कीर्त्तयेताः प्रियश्च। तथा शरीरस्य शरीरिणश्च स्यात्, शास्त्रमिहितं प्रत्यक्षम्॥" ननु यथात्मा निर्व्विकारस्तत् किं

हङ्काराभ्यां विद्याविद्याबुद्ध्यादयो जायन्ते इति न निरुपादाना बुद्ध्यादयः। राशिपुरुषभावेण जायमानेऽस्मिन् जायन्ते ये क्रियागुणास्ते केवलेऽस्मिन् न वर्त्तन्ते इति निष्क्रियो निर्गुण आत्मोच्यते। एवञ्चेन्महदहङ्काराभ्यां जायन्ते तर्हि चात्मा नास्तीत्येवं मन्यामह इत्यत उच्यते—

सत्त्वेत्यादि।—सत्त्वं मनः। भूतानि खादीनि पञ्च, गुणास्तेषां शब्दादयः पञ्च, इन्द्रियाणि पञ्च बुद्ध्याः श्रोत्रादीनि। तैः सह विशिष्टश्च तन्ये कारणं राशिपुरुषे चैतन्यं जनयति। चैतन्यन्तु चेतनस्य भावश्चेतनस्तु चेतनावान् चेतना तु स्वयं प्रकाशरूपा परप्रकाशिनी सत्त्वादियोगेन पुनरात्मना तल्लक्षणेन जनितगुणविशेषरूपा, लौकिकी चेतना बुद्धिविशेष आत्मलिङ्गत्वेनोक्ता। सा चात्र यथा बुद्ध्या चक्षुषा पश्यन्नपि भावान् जातमात्रबालक इव न विजानीते किमिदमिति, शब्दं शृण्वन्नपि न बुध्यते किमिदमिति, स्पृश्यं स्पृशन्नपि न वेत्ति किमिदमिति, दुग्धादीन् पिवन्नपि न वेद किमिदमिति, जिघ्रन्नपि पद्मादीनि नावगच्छति किमिदमिति। यथा च बुद्धिकर्म्मेन्द्रियाणि स्वार्थेषु केवलं प्रयुङ्क्ते न तु तत्तदर्थविज्ञानं निष्पादयितुमलं भवति स्पन्दते क्रीड़ते च यथा बालक इत्येवं सति पुरुषे भवति। चेतनाधातुः खलु परप्रकाशकः प्रकाशकलक्षणः प्रकाशवानेव। यत्र हि यत्कारणं यत्र वर्त्तते तत्र तत्कार्य्यमुत्पादयितुं स कथमलं भवति। यदि हि चेतनाधातुर्न चेतति कथमितराणि तर्हि चेतयेत यथा यदि प्रकाशो न स्वयं प्रकाशते कथमितराणि प्रकाशयेत् तद्वदिति चेतना स्वरूपतश्चेतनरूपैव न सत्त्वादियोगजा चेतनेत्यत उक्तं—चेतनावान् अतश्चात्मेति। तथा सः साक्षीत्युच्यते इति, न तु लौकिकगुणरूपचैतन्याख्यचेतनावान् न वा लौकिकगुणाख्यज्ञानवान् इत्यभिप्रायः। तथा हि चेतनाधातुः परप्रकाशकः स्वयंप्रकाशरूपः सत्त्वेन यदा युज्यते तदा सत्त्वक्रिययोपचर्य्यमाणः सक्रियः सन् मनसि चैतन्यं जनयति इति सत्त्वस्थचैतन्यगुणेनोपचर्य्यमाणश्चेतनागुणवानयं जागरितस्थान इत्युच्यते, इत्येवं यावत् सत्त्वमात्मा शरीरञ्चेति वचने प्रपञ्चेन व्याख्यातं तत्सर्व्वमत्रानुसन्धेयम्। तस्मात् प्राणापानादिकार्य्यवदिच्छाद्वेषादयो गुणा अध्यात्मलिङ्गत्वेनोक्ता न त्वात्माश्रितगुणत्वेन। एवमात्मा सत्त्वेन युक्तो यदा यद्गुणं शब्दादिकं जिघृक्षन् चक्षुश्रवणादिवहिरिन्द्रियेण युज्यते तदा तदर्थेषु तदिन्द्रियस्य चैतन्यं जनयति;

ज्ञानरूपो विकारोऽस्ति वा नास्तीत्याह सत्त्वमित्यादि।—सत्त्वं मनः, भूतगुणाः शब्दादयः, इन्द्रियाणि च चक्षुरादीनि, एतैः करणभूतैश्चैतन्ये कारणं भवत्यात्मा, चैतन्यमात्मनि जायते

इति तदिन्द्रियस्य चेतनागुणेनोपचर्य्यमाणस्तदिन्द्रियचेतनावानप्यात्मोच्यते, तदा हि स बहिश्चेतनो भवतीत्येवं सगुण आत्मोच्यते इत्येवं यावत् पूर्व्वोक्त-प्रकारेण धृत्यादय इच्छादयश्च गुणा इन्द्रियस्था बोध्या मनःस्थाः प्रत्यगात्म-स्थाश्च। इच्छादयः प्रयत्नान्ताश्चेतनादयोऽहङ्कारान्ताश्च गुणा आत्मना जनिता मनसि तथेन्द्रियेषु च प्रत्यगात्मनि चोपचाराद्रथादिषु क्रियावत् साक्षाद्वर्त्तन्ते। माण्डूक्येऽप्युक्तम्।—"तत्र जागरितस्थानो बहिःप्रज्ञः स्वप्नस्थानोऽन्तःप्रज्ञः सुषुप्तिस्थानः प्रज्ञानघनः प्राज्ञः, स च त्रिपादात्मा राशिपुरुषावस्थायामभूत् महत्तत्त्वरूपप्रज्ञाश्रयत्वात् प्राज्ञः पञ्चतन्मात्रादिसूक्ष्मभूतेन्द्रियाश्रयत्वात् तैजसः स्थूलभूतेन्द्रियाश्रयत्वाद् वैश्वानर इति त्रिपादसमुदायस्थत्वेन बुद्ध्यादीना-मव्यक्तात्मनः शरीराश्रितत्वं व्याख्यातं भवति।"

नन्वेवञ्चेत् तर्हि किं जागरिताद्यवस्थात्रयं मनस एव न त्वात्मन इति चेन्न सर्व्व-दैव आत्मा जागर्त्ति राशिपुरुषावस्थायां यदा सर्व्वाणि जाग्रति तदा जागरणा-वस्था, यदा बहिरिन्द्रियाणि मनसि लीयन्ते तदा स्वप्नावस्था मनः प्राणाश्च जाग्रति, यदा तानि सर्व्वाणि प्रज्ञाने महति लीयन्ते तामसराजसप्रज्ञानश्चात्मनि सात्त्विके महति तदा सुषुप्तावस्थेति ; आत्मन एवावस्थात्रयमिति। अत एव सुषुप्तावस्थायामपि चेतोमुख एवेति निर्दिष्टः क्वचिदप्यवस्थायामात्मनः सत्त्वसंयोगाभावो न भवति भवति च निर्व्वाणमितरस्य तुर्य्यावस्थायां तस्मात् नित्यानुबन्धमनोबन्धमोक्ष एव मोक्षः। सुषुप्तो च प्राज्ञोऽभिहितो न ज्ञान-सामान्याभावेन क्षित्यादिराजसमहदन्तसर्व्वतत्त्वानां सात्त्विके महति विलीनत्वे अव्यक्ताख्य आत्मा सात्त्विकमहत्तत्त्वरूपचित्तवान् परमात्मनि शिवे रसे सर्व्वातीतिष्ठते, रसं ह्येवायं लब्ध्वानन्दीभवतीत्यानन्दमयः स्यात्।

ननु यस्य ये समवायिकारणीभूतद्रव्याश्रितगुणारब्धगुणास्ते तस्य गुणा उच्यन्ते ते च शरीरे चेन्द्रियेषु च पञ्चभूतानां समवायिकारणत्वं तद्गुणकर्म्म-णाञ्च शरीरेन्द्रियगुणकर्म्मसु समवायिकारणत्वमिति भौतिकगुणाः शरीरेन्द्रियेषु वर्त्तन्ते न मनसि न चात्मनि। मनसस्तु सत्त्वप्रधानत्रिगुणाः शारीरमनोगुणस्य समवायिकारणानि शारीरस्थूलमनसि वर्त्तन्ते न तु देहे चात्मनि च तत् कथमात्मजा बुद्धीच्छादयो गुणा इन्द्रियेषु शरीरे च मनसि च वर्त्तन्ते इति चेदत्र ब्रूमहे।

[illegible] वा। अत एव [illegible] ज्ञानकरणानां [illegible] सम्बन्धेऽप्यात्मनि न [illegible] ज्ञानं स्यात्।

उक्तं तावदनपवादम् परन्तु गुणा द्विविधाः सहजाः संसर्गजाश्च, तत्र सहजाः समवायिकारणीभूतद्रव्यगुणारब्धा इन्द्रियेषु भूतगुणा शब्दादयः शरीरे च ते गुर्व्वादयश्च परत्वादयश्च साधारणाः, मनसि सत्त्वरजस्तमांसि प्रकृतिभूतानि तदारब्धानि सत्त्वादीनि श्राम्यापादिरूपाणि तथाणुत्वमेकत्वञ्च द्वौ साधारणौ गुणौ। संसर्गजास्तु खल्वात्मनि ये बुद्ध्यादयोऽनभिव्यक्तास्ते सूक्ष्मदेहस्थमनःस्थाभ्यां महदहङ्काराभ्यां विद्याऽविद्याभ्यां सहैकीभूय सूक्ष्मदेहस्थमनसि विद्याऽविद्याबुद्ध्यादिरूपेण परिणम्यमाना वर्त्तन्ते। ते च पुनः स्थूलशरीरस्थमनःस्थाभ्यां महदहङ्काराभ्यां विद्याऽविद्यारूपाभ्यां स्थूलाभ्यां सहैकीभूय विद्याऽविद्याबुद्ध्यादि —रूपेण परिणम्यमानाः स्थूलदेहस्थमनसि वर्त्तन्ते। ते चेन्द्रियार्थसन्निकर्षाज्जाताः श्रावण्यादिरूपेण व्यपदिष्टा अस्मिन् मनसि वर्त्तन्ते। इत्यत इन्द्रिये च शरीरे च वर्त्तन्ते इति प्रोक्त श्राम्यापादिकायसंसर्गाद्धि मनो श्राम्यापादि भवति। तथा चात्मनश्चेतनात् एषा चेतना मनसि। बुद्धितो विद्याऽविद्याधीधृतिस्मृत्यहङ्काररूपा बुद्धिः, इच्छात इच्छा, प्रयत्नतः प्रयत्नः, सत्त्वात् सुखं, रजस्तमोभ्यां द्वेषदुःखे भवतः। न च शब्दादय आकाशादिगुणा इवात्मनो बुद्धीच्छादयो गुणाः सहजाः। आकाशादीनि हि भूतानि सगुणान्येव जातानि, आत्मा तु नित्य एव निर्गुणो निष्क्रियः पूर्व्वम्। मनःसम्बन्धेन सक्रियः सन् चेतनादिकान् गुणान् मनसि जनयित्वा तच्चेतनादिभिरुपचरित एव सगुण उच्यते न तु वास्तवम्। स च समना आत्मा पञ्चभूतपञ्चबुद्धीन्द्रियाणि च सूक्ष्मदेहमारभमाणानि सूक्ष्मदेहिनः पुरुषस्य परलोकगामिद्रव्याणि भवन्ति, तेषु च मध्ये आत्माधिष्ठितसर्व्वाश्रिता बुद्धीच्छादयश्च निश्चेष्टाः समवायिन एव हेतवो गुणाख्या भवन्ति पञ्चभूताश्रिताश्च शब्दादयस्तथाविधा गुणा एव मनोमात्राश्रितावणुत्वैकत्वे गुणौ तथेन्द्रियाश्रितौ एवं पुनस्तथाविधसूक्ष्मशरीरिपुरुषः शुक्रशोणितमात्राहारजरसगतानि पञ्चभूतानि च चतुर्व्विंशतिकेऽस्मिन् राशिपुरुषे समवायिकारणीभूतद्रव्याणि तत्तदाश्रिताश्च बुद्ध्यादयः शब्दादयो गुर्व्वादयः परत्वादयश्च निश्चेष्टाः समवायिनो हेतव इति ते गुणाः।

अथात्र सूक्ष्मदेहस्थानि सर्व्वेन्द्रियाणि समवायिकारणान्यपि पुरुषेऽस्मिन न किञ्चित् कार्य्यमारभन्ते परन्त्वेषामस्य पुरुषस्योत्पत्तावुपपादकत्वमात्रं न तु

* ननु यदि चैतन्यवानात्मा, तदा कदाचित् ज्ञानवान् कदाचिदज्ञ इत्यनित्यः स्यादित्याह, नित्य इति।—नित्यस्याप्यात्मनो ज्ञानमनित्यम्, न च धर्म्मानित्यत्वे धर्म्मिणोऽप्यनित्यत्वम्; न आकाशगुणशब्दानित्यत्वेऽप्याकाशस्याप्यनित्यत्वम् इति भावः। नित्यत्वमात्मनः पूर्व्वापरा-

धातुत्वम्। वक्ष्यते हि शारीरे। अस्त्युपपादुकं सत्त्वसंज्ञकं नामेति। तयतदभिप्रायेण च वक्ष्यते। "खादयश्चेतनाधातुषष्ठास्तु पुरुषः स्मृतः" इति।

अत्र सूक्ष्मेन्द्रियाणां मनसो भौतिकत्वाभावेन खादिष्वन्तर्भावाभावाच्च तना-धातुश्चात्मा तत्राप्यन्तर्भावाभावाच्च। खादिषड्धातुकत्वं पुरुषस्येति कश्चित्, तन्न, शारीरे सत्त्वादीनां सूक्ष्मशरीरस्थानां काय्यंतया स्थूलशरीरे मनःप्रभृतेर्वक्ष्यमाणत्वात् "रूपाद्विरूपप्रभवः प्रसिद्धः कर्म्मात्मकानां मनसो मनस्तः" इति। ततस्तु "धातुभेदेन चतुर्विंशतिकः स्मृतः" इति वक्ष्यमाणेन सत्त्वेन्द्रियादीनां धातुत्व समवायिकारणत्वञ्च स्थूलदेहारम्भे वक्ष्यते; तर्हि खादयश्चेतनाधातुषष्ठास्तु पुरुषः स्मृत इति कथं षड्धातुत्वं सङ्गच्छते इति चेत्तदोच्यते। तत्र चेतनाधातुः पुरुषः सूक्ष्मदेहीति तदन्तर्गतानि सूक्ष्ममनइन्द्रियाणि। एतदभिप्रायेण सुश्रुतेऽप्युक्तं "पञ्चमहाभूतशरीरिसमवायः पुरुषः।" इति। निमित्तमात्रत आधानजास्तु गुणाः शास्त्राध्ययनादिधनवान्यवादिलाभालाभादिनिमित्ततो बुद्धीच्छादयो इक्षादिषु बृहच्छन्दादयो लाजादिषु लघुत्वादयः। एवं परत्वादयोऽपि बोध्या इति।

नन्वेवञ्चेदात्मजा ये बुद्ध्यादयो गुणाः सूक्ष्ममनःप्रभृतिषु वर्त्तन्त इति भवद्भिरुच्यते, ते खल्वस्माभिरात्मन्येवेष्यन्ते तेन पुनः का हानिरिति चेन्न। बुद्धीच्छादीनां वृद्धिह्रासाभ्यां गुणतो वृद्धिह्रासावात्मनो भवतस्तेनोक्तस्य विकारत्वदोषतादवस्थ्यात्। न चैष चेतनाधातुरनित्यः, तस्य सूक्ष्मशरीरिणो नित्यत्वेन स्वरूपतो गुणतः कर्म्मतो वा न वृद्धिह्रासौ सम्भवतः। स्थूलपुरुषोत्पादने तु तदारम्भकात्मजसत्त्वादिगुणपञ्चमहाभूतशुक्रार्त्तवीयपञ्चभूतान्यनुप्रविश्य विक्रियमाणैस्तैरुपाहितानि स्थूलमनइन्द्रियशरीराणि भवन्ति, सूक्ष्मदेहस्थानि मनइन्द्रियमहाभूतानि न च विक्रियन्ते। इति चेत् तर्हि अत्र सत्त्वस्य पृथगुपादानमनर्थकं स्यादत इह परस्त्वात्मा खलु क्षेत्रज्ञः समत्रिगुणलक्षणोऽव्यक्ताख्य इति ज्ञापनार्थमुक्तम्—नित्य इति।

तथा सति सूक्ष्मस्यात्मनोऽव्यक्तस्य समसत्त्वरजस्तमोभिरुपाहितपुरुषस्य चेतनाधातुव्ययत्वासम्भवेन नित्यत्वाव्याघातो व्ययत्वाभावादविनाशित्वाच्चेति। ततः किमात्मनो बुद्धीच्छादितो वृद्धिह्रासौ न स्त इति चेत्, तत्रोच्यते त्वस्माभिः—सूक्ष्मस्याव्यक्तस्यात्मनो नित्यबुद्ध्यादेर्न वृद्धिह्रासौ महदहङ्कारविकारस्योपाधेस्तु

तस्यानुभूतादप्रतिसन्धानात्। न ह्यनित्ये कालेऽपि पूर्व्वानुभूतमर्थं पुरुषो ज्ञाता प्रतिसन्धत्ते, न हि देवदत्तदृष्टमर्थं यज्ञदत्तोऽनुभवेन प्रतिसन्दधाति। ननु, दृश्यते ज्ञानवतः सुखोपलब्धी

वृद्धिह्रासौ तदुपाहितबुद्धेर्वृद्धिह्रासावुच्येते न तु फलतः। तद्वृद्धिह्रासवद् बुद्ध्यादित इन्द्रियार्थसन्निकर्षोत्पन्नादिर्बुद्ध्यादिगुणा जायन्ते तेन शरीरस्य तस्य नित्यबुद्ध्यादेर्वृद्धिह्रासाभावान्निर्व्विकारत्वमुक्तमिति।

अथैवं वास्तवविकाराभावादात्मनो निर्व्विकारत्वं, सत्त्वशरीरसंयोगात्तु या विशेषोपलब्धिः प्रतिमाणि स च चेद्विकार आत्मन इष्यते, इष्यताम, अवास्तवविकारत्वान्नास्माभिस्तद्विकार इष्यते। नन्वव्यक्तात् पुरुषः पर इति श्रुतेरव्यक्तस्यात्मनः प्रकृतेः पुरुषस्य च वैधर्म्यमुक्त, प्रकृतिः प्रसवधर्म्मिणी बहिःस्थधर्म्मिणी चाचेतना चैका चेति, पुरुषस्त्वप्रसवधर्मा मध्यस्थधर्मा बहुश्चेतनश्चेति ततोऽव्यक्तात् पुरुषः पर इत्युक्तमिति प्रसवधर्म्मत्वादव्यक्तस्यात्मनः सविकारत्वमस्त्येव यद्गुणवैषम्यात्मकस्तु महानासीदिति चन्न। सुश्रुते हि प्रकृतिपुरुषयोर्हि साधर्म्यवैधर्म्ये उक्ते, तद्यथा—"उभावप्यनादी उभावप्यनन्तावुभावप्यलिङ्गावुभावपि नित्यावुभावप्यपरावुभौ च सर्व्वगताविति" साधर्म्यम्। "एका तु प्रकृतिरचेतना त्रिगुणा वीजधर्म्मिणी प्रसवधर्म्मिण्यमध्यस्थधर्म्मिणी चेति।" बहवस्तु पुरुषाश्चेतनावन्तो निर्गुणा अवीजधर्मिणो मध्यस्थधर्म्मिणश्चेति" वैधर्म्यम्। "तत्र कारणानुरूपं कार्य्यमिति कृत्वा सर्व्व एवैते विशेषाः सत्त्वरजस्तमोमया भवन्ति तद्गुणत्वात्तन्मयत्वाच्च तद्गुणा एव पुरुषा भवन्तीत्येके भाषन्ते।"

इति सत्त्वरजस्तमोगुणत्रयमात्रात्मिकायाः प्रकृतेः प्रसवधर्म्मत्ववचनादव्यक्तनामात्मा तु समसत्त्वरजस्तमोमय्या प्रकृत्यैवोपाहितः क्षेत्रज्ञः पुरुष एवैकः चित्सम्प्रसादरूपपुरुषस्य न प्रसवधर्म्मत्वं, तदवस्थायाः समसत्त्वरजस्तमोगुणमात्रमय्याः प्रकृतेः प्रसवधर्म्मत्वादव्यक्तस्थतत्त्रिगुणवैषम्यान्महतोऽभिव्यक्तिवचनादादिसृष्टौ सिसृक्षोरव्यक्तस्य तस्याचिन्त्यमहिम्नः सिद्धेरिति। उक्तं हि सुश्रुते सर्व्वभूतचिन्ताशारीरे।—"सर्व्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम। तदेकं बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम्।" तस्मात् क्षेत्रज्ञाधिष्ठितात्तल्लक्षण एव महानुत्पद्यते इति। स्थूलशरीरारम्भे तु न खलु तथाविधवैषम्यमव्यक्तस्यात्मनोऽस्ति। महदादीनां सूक्ष्मसूक्ष्ममात्रासंयोगादेव सूक्ष्मदेहिपुरुषसर्गस्य मनुनोक्तत्वात्। निर्व्विकारत्वमव्यक्तस्यात्मनः परमस्य। अव्यक्त चेत्

अनुरागलक्षणो विकारस्तथा दुःखोपलब्धौ च दुःखलक्षणविकारः, तत् कथं सुखदुःखोपलब्धावपि आत्मा निर्व्विकार इत्याह—द्रष्टा पश्यति हि क्रियाः। द्रष्टा साक्षी, देह मनस्तत्र परकृतः

प्रधानपुरुषोभयात्मकं तर्हि "चाव्यक्तात् पुरुषः परः" इति कठोपनिषदि मन्त्रे कः पुनः पुरुष इति उच्यते स परमः पुरुषः परमात्मा न क्षेत्रज्ञः पुरुष इति ज्ञापनार्थं सा काष्ठा सा परागतिरित्युक्तम्।

ननु सत्त्वशरीरसंयोगाद्विशेषोपलब्धिरात्मनः, स विशेषो विकारोऽवास्तवो वास्तवो वाऽस्तु तेन वो नश्च का हानिरिति चेन्न शारीरमानसव्याध्युपशमननिदानाद्युपदेशमन्तरेणात्मस्थव्याध्युपशमननिदानाद्युपदेशो न कुत्राप्यायुर्व्वेदादिशास्त्रे हि दृश्यते। शारीरमानसधातुवैषम्यप्रशमनेनैव सत्त्वशरीरसंयोगजस्यात्मस्थविशेषस्य प्रशमनात्। वक्ष्यते चात्र "मानसो ज्ञानविज्ञानधैर्य्यस्मृतिसमाधिभि"रिति।

नन्वात्मा तदैव निर्विकारः स्याद् यदि सत्त्वशरीरसङ्घातात् परः स्यात् न च सत्त्वशरीरसङ्घाताद्व्यतिरिक्त आत्माऽस्ति सत्त्वशरीरसङ्घात एवात्मेत्याहुर्नास्तिकाः। नेत्याहाक्षपादगौतमो यथा न्यायसूत्रम्। "दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्।( ३।१।१ )। अस्यार्थः। दर्शनेन्द्रियस्पर्शनेन्द्रियाभ्यामेकार्थस्य रूपस्पर्शज्ञानेन ग्रहणाज्ज्ञानादात्मा सत्त्वशरीराभ्यां परः न तु दर्शनेन्द्रियस्य रूपज्ञानेन घटाद्यर्थज्ञानं स्पर्शनेन्द्रियस्य शीतलादिस्पर्शज्ञानेन घटाद्यर्थज्ञानं यथाऽहमिमं घटं पश्याम्यहमेव स्पृशामीति सत्त्वशरीरसङ्घातात् परस्यात्मनो घटाद्येकार्थज्ञानं भवतीति सत्त्वशरीराभ्यां पर आत्माऽस्ति।

तत्राहुर्नास्तिकाः। न विषयव्यवस्थानात्। अस्यार्थः। दर्शनस्पर्शनाभ्यामेकार्थग्रहणं न विषयव्यवस्थानात् दर्शनेन्द्रियस्य रूपं विषयः स्पर्शनेन्द्रियस्य स्पर्शो हिमादिर्विषय इति विषयभेदव्यवस्थानात्। दर्शनस्पर्शनेन्द्रिययोरेव रूपस्पर्शज्ञानं तस्मात्तयोश्चैतन्ये कारणत्वं न ह्यन्तरेण चैतन्यं बुद्धिरुत्पद्यते इति। सत्त्वशरीरसङ्घातात् पर आत्मा नास्ति, यः सत्त्वादियोगे चैतन्ये कारणमुच्यते। इति चैतन्ये कारणमिन्द्रियं सत्त्वशरीरसङ्घात आत्मा वेति समापन्ने।

तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः। अस्यार्थः। सत्त्वशरीराभ्यां परस्यात्मनोऽस्तित्वस्याप्रतिषेधः। कस्मात्? तद्व्यवस्थानादेवात्मसद्भावात्। तस्य दर्शनविषयस्य रूपस्य स्पर्शनविषयस्य स्पर्शस्य च घ्राणविषयो गन्धो रसनविषयो रसः श्रवणविषयः शब्द इत्येवं विषयस्य व्यवस्थात

साक्षी सन् जगतः क्रियाः सर्व्वाः पश्यन् न रागद्वेषादिना युज्यते, तथात्मापि सुखदुःखाद्युपलभमानोऽपि न रागादिना युज्यते। दृश्यमानरागादिविकारस्तु मनसि, प्राकृते बुद्धौ

एवात्मनः सद्भावोऽस्तित्वं सिद्ध्यति। यद्येकमिन्द्रियं सर्व्वविषयं स्यात्तदात्मानमन्तरेण ज्ञानोत्पत्तिः शक्येत वक्तुम्। तस्मादस्त्यात्मा सत्त्वभूतगुणेन्द्रियैश्चैतन्ये हेतुः सत्त्वशरीराभ्यां परः। सत्त्वशरीरसङ्घातव्यतिरिक्तात्मास्तित्वे कारणान्तरञ्च।

सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्। सत्त्वशरीरसङ्घातव्यतिरिक्त आत्मास्ति। कस्मात्? सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्। पूर्व्वापरयोर्विज्ञानयोरेकविषये प्रतिसन्धानं प्रत्यभिज्ञानम्। तमेवार्थमिदानीमहं जानामि यमर्थमज्ञासिषं स एवार्थोऽयमिति। तथाहि सव्येन चक्षुषा दृष्टस्यार्थस्य तदितरेण चक्षुषा दक्षिणेन प्रत्यभिदर्शनम्। यमेव सव्येन चक्षुषाद्राक्षं तमेवेदानीं दक्षिणेन चक्षुषा पश्यामीति स एवार्थोऽयमिति योऽद्राक्षीत् स इदानीं पश्यतीति सव्यदक्षिणचक्षुर्व्यतिरिक्त एकः कश्चिदस्ति द्रष्टेति स एवात्मा।

तत्राहुर्नास्तिकाः। इत्येवं प्रत्यभिज्ञानेऽपि तदिन्द्रियव्यतिरिक्त आत्मा चेतनः, कस्मात्? नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात्। एकमेवेदं चक्षुर्मध्ये नासास्थिव्यवहितं तस्यान्तौ द्वौ भागौ दृश्यमानौ द्वित्वाभिमानं लोके प्रयोजयतः। दीर्घस्य कस्यचिद्वस्तुनो मध्ये व्यवहितमिव। तत्राह—

एकविनाशे द्वितीयाविनाशान्नैकत्वम्। एकस्मिंश्चक्षुष्युपहते चोद्धृते वा द्वितीयं चक्षुरवतिष्ठते विषयग्रहणलिङ्गमितरेण दर्शनात्। तस्मादेकस्य व्यवधानानुपपत्तिरिति।

तत्राहुर्नास्तिका। अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः। चक्षुष एकत्वप्रतिषेधे एकविनाशे द्वितीयाविनाशादिति हेतुरहेतुः। कस्मात्? अवयवनाशेऽप्यवयव्युपलब्धेः। वृक्षस्य हि शाखासु कासुचिच्छिन्नासु स एव वृक्ष इत्युपलभ्यते इति। तत्राह—

दृष्टान्तविरोधादप्रतिषेधः। चक्षुष एकत्वप्रतिषेधस्य प्रतिषेधो न भवति। कस्मात्? दृष्टान्तविरोधात्। वृक्षस्य शाखानामवयवानां नाशेऽवयविवृक्षस्योपलब्धिर्दृष्टान्तस्तस्य विरोधोऽयम्। यदि चक्षुर्द्व्यवयवं स्यात् तदैकावयवनाशेऽवयविचक्षुष उपलब्धिः स्यात्। भवद्भिरुच्यते एकस्मिन् नासास्थिव्यवहिते द्वित्वाभिमानमिति तस्मादेकस्य चक्षुषो व्यवधानानुपपत्तिः। अनुमीयते चायं देहादिसङ्घातव्यतिरिक्त आत्मा चेतन इति।

वा सांख्यदर्शनपरिग्रहात् भवतीति भावः; सांख्यमते च मनःशब्देन बुद्धिरन्तःकरणञ्च गृह्यते॥ २८॥

कस्मात्? इन्द्रियान्तरविकारात्। अम्लरसद्रव्यालोडने तद् द्रव्यदर्शनादिना कस्यचिदम्लमशितवतस्तत्स्मरणेन मुखोदकस्रावः इत्येकेन्द्रियग्रहणेऽपरेन्द्रियविकाराद्नुमीयते चास्त्यात्मा देहादिसङ्घातव्यतिरिक्त इति न ह्यन्यदृष्टमन्यः स्मरति।

तत्राहुर्नास्तिकाः। न स्मृतेः स्मर्त्तव्यविषयत्वात्। अम्लदर्शने त्विन्द्रियान्तरविकारो यस्तत्रात्मा न स्मरति। कस्मात्? स्मृतेः स्मर्त्तव्यविषयत्वात्। स्मृतिर्हि निमित्तादुत्पद्यते, तस्याः स्मृतेर्विषयः स्मर्त्तव्यो भावः। तदम्लादिभावकृत इन्द्रियान्तरविकारो नात्मकृत इति।

तत्राह—तदात्मगुणसद्भावादप्रतिषेधः। तस्याः स्मृतेरात्मगुणत्वेन सद्भावादात्मा नास्तीति प्रतिषेधो न भवति। तथा चान्यदृष्टं नान्यः स्मरतीत्युपपद्यते। इन्द्रियचैतन्येऽपि नानाकर्त्तृकाणां रूपादिग्रहणानां यदिन्द्रियं यमर्थं गृह्णाति तदर्थस्मरणञ्च तस्यैव भवितुमर्हति न चान्यस्य, तस्मादम्लदर्शनघ्राणादितो रसनस्रावो नोपपद्यत इति देहादिसङ्घातव्यतिरिक्त आत्मास्तीति।

तत्राहुर्नास्तिकाः। अम्लरसप्रभावाद् दृष्ट्वाम्लं मुखस्रावो भवति न च तिक्तद्रव्यं दृष्ट्वा। तस्मादात्मा स्मर्त्ता नास्तीति।

तत्राह—अपरिसङ्ख्यानाच्च स्मृतिविषयस्य। न स्मृतेः स्मर्त्तव्यविषयत्वादिति यदुक्तं स च प्रतिषेधो न भवति। कस्मात्? स्मृतिविषयस्यापरिसङ्ख्यानात्। इमे हि खलु स्मृतिविषयाः। स्मृतिश्च मम, अगृह्यमाणेऽर्थेऽमुमर्थमहमज्ञासिषमिति। एतस्याः स्मृतेर्ज्ञातृज्ञानविशिष्टः पूर्व्वज्ञातोऽर्थो विषयः। न तत्त्वमात्रम्। अहममुमर्थं ज्ञातवान्, असावर्थो मया ज्ञातः। ज्ञातम्। अस्मिन्नर्थे मम ज्ञानमभूदिति चतुर्व्विधं वाक्यं स्मृतिविषयज्ञापकम् समानार्थं; सर्व्वत्रैव ज्ञाता ज्ञानं ज्ञेयञ्चेति वाक्यभेदमात्रम्। या च प्रत्यक्षे वस्तुनि स्मृतिस्तया स्मृत्या त्रीणि ज्ञानान्येकस्मिन्नर्थे प्रतिसन्धीयन्ते समानकर्त्तृकाणि, न नानाकर्त्तृकाणि, नाकर्त्तृकाणि। एककर्त्तृकाणि यथा अमुमर्थमहमद्राक्षं यमेवेदानीं पश्यामीति। अद्राक्षमिति दर्शनं दर्शनसमा च। न ह्यसंविदितेऽर्थेऽद्राक्षमिति दर्शनमात्रं स्यात्। ते एते द्वे ज्ञाने। यमेवेदानीं पश्यामि तत् तु तृतीयं ज्ञानमिति सेकोऽर्थस्त्रिभिर्ज्ञानैर्युज्यते न चाकर्त्तृको न नानाकर्त्तृकः स्यादिति। तथा चैककर्त्तृकः सोऽयं स्मृतिविषयोऽपरिसङ्ख्यायते। नास्त्यात्मा स्मृतेः स्मर्त्तव्यविषयत्वादिति, स्मर्त्तव्यार्थः प्रतिषिध्यते यत तन्न स्मृतिमात्रं स्मर्त्तव्यमात्र-

विषयं वा। एको हि ज्ञाता सर्व्वविषयः स्वानि ज्ञानानि प्रतिसन्धत्ते। अहममुमर्थं विज्ञास्याम्यमुमर्थं जानाम्यमुमर्थमज्ञासिषममुमर्थं जिज्ञासमानश्चिरमर्थं ज्ञात्वा व्यवस्यामि। अज्ञासिषमिति तथा स्मृतिमपि त्रिकालां मुस्मूर्षाविशिष्टां च प्रतिसन्धत्ते। संस्कारसन्तानमात्रे तु वस्तुनि संस्कारा उत्पद्य उत्पद्य तिरोभवन्ति। ततो नास्त्येवैकः संस्कारस्त्रिकालं ज्ञानं स्मृतिञ्च त्रिकालामनुभवेत्। न ह्यनुभवं विना ज्ञानस्य स्मृतेश्च प्रतिसन्धानमुत्पद्यते देहान्तरवत्। तस्मादनुमीयते अस्ति खल्वेकः सर्व्वविषयः कश्चिद् यः प्रतिदेहं संज्ञाप्रबन्धं स्मृतिप्रबन्धञ्च प्रतिसन्धत्ते इति। यस्य देहान्तरेषु देवदत्तादेरात्मनो यज्ञदत्तादिदेहेषु वृत्त्यभावान्न तत्प्रतिसन्धानं भवतीति सत्त्वशरीरसङ्घातव्यतिरिक्तोऽस्त्यात्मा न तु नास्त्यात्मेति। इत्येवं सङ्घातवादिनास्तिके निरस्ते पुनरिन्द्रियचैतन्यवादिनो नास्तिका आहुः। इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमुक्तं भवद्भिस्तत एव भवद्भिरेवोक्तं भवति इन्द्रियाणि चार्थाश्च चैतन्ये कारणं तस्मान्नास्त्यात्मा चेतन इन्द्रियार्थव्यतिरिक्त इति। तत्राह—

नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात्। इन्द्रियाणामर्थानां वा न चैतन्यादिबुद्धिः। कस्मात्? तद्विनाशेऽपि ज्ञानावस्थानात्। तयोरिन्द्रियार्थयोर्विनाशेऽपि ततो ज्ञातेऽर्थे ज्ञानस्य सद्भावात्। तथा चेन्द्रियार्थयोः श्रोत्रश्रुतयोः स्पर्शनस्पृष्टयोर्दृष्टिदृष्टयोरसनरसितयोर्घ्राणघ्रातयोरनन्तरविनाशे तदिन्द्रियजातायास्तदर्थबुद्धेरवस्थानात्। तत्तदर्थस्मरणात्। न ह्यनुभवितुरभावे स्मरणमुपपद्यते। इन्द्रियं नित्यमनित्यञ्च, तत्र सूक्ष्मदेहस्थं नित्यं स्थूलदेहस्थमनित्यमित्यतः स्थूलदेहस्थेन्द्रियनाशे सूक्ष्मदेहस्थेन्द्रियेण स्मर्य्यते इति न वाच्यं सूक्ष्मदेहस्थेन्द्रियादेः स्वप्नावस्थायां ज्ञानकरणत्वात्। स्वप्नावस्थो हि तैजसो नामात्मा स चान्तःप्रज्ञस्तस्याहङ्कारिकमिन्द्रियं स्वप्नगतभावग्रहणे करणं जागरितावस्थायां तस्य ज्ञानकरणत्वाभावात्। अस्त्वेवं देवदत्तोऽहमिदं जानामीति प्रतीतेः शरीरस्यैव चैतन्याच्छरीरस्य पञ्चभूतमयस्य गुणो बुद्धिरुत्पद्यते इत्यतो नास्त्यात्मेति चाहुर्नास्तिकास्तन्नेति गोतमाक्षपादः। कस्मादित्यत आह सूत्रम्—

शरीरदाहे पातकाभावात्। शरीरस्य शवरूपस्य दाहे पुरुषवधपापाभावदर्शनेन खल्वात्मविहीनजीवत्पुरुषस्य दाहेऽपि पातकाभावप्रसङ्गात् नास्त्यव्यतिरिक्तः सत्त्वशरीरसङ्घात आत्मा नित्य इति।

तथाहुर्नास्तिकाः । तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् । सात्मकस्य जीवतः पुरुषस्य प्रदाहेऽपि मनःशरीरमात्रप्रदाहादात्मनः प्रदाहाभावेन तस्य पुण्यवधपापस्याभावः । कस्मात् ? तन्नित्यत्वात् । भवतां मते तस्यात्मनो नित्यत्वादिति ।

तद्दोषं परिहरति । न कार्य्याश्रयकर्त्तृवधात् । सात्मकप्रदाहे तदभावो न । कस्मात् ? कार्य्याश्रयकर्त्तृवधात्, सात्मकप्रदाहे नित्यस्यात्मनः सद्भावेऽपि कार्य्यस्य वैधावैधकार्य्यस्याश्रयस्याधिकरणस्य राशिपुरुषस्य कर्त्तुर्वधात्, तत्कर्त्तृवधजन्यपातकस्य प्रसिद्धेः । सद्भावेऽपि चेत्तथा कार्य्याश्रयकर्त्तृवधात् पातकं स्यादित्युच्यते । तत्र श्रूयः । आत्मा नित्यः कर्त्ता तस्य भोगायतनं शरीरं मनोबुद्ध्यादिसहितं तद्भोगविनाशे पातकम् । नात्महीनस्य सङ्घातस्य पुनरेको भोक्तास्ति । अतएवात्मनः सत्त्वभूतगुणेन्द्रियैश्च तन्ये कारणत्वादात्मन एव बुद्धिरत्र आत्मास्तीति भावः ।

अथ बुद्ध्यादेः शारीरगुणत्वं संशयमाह—द्रव्यस्वगुणपरगुणोपलब्धेः संशयः । द्रव्ये पाञ्चभौतिके मृदादौ स्वगुणस्य स्वारम्भकपञ्चभूतगुणशब्दादेर्गुरुत्वादेः, परगुणस्य स्वारम्भकपञ्चभूतातिरिक्तस्योपलब्धेरिव शरीरे शरीरारम्भकपञ्चभूतगुणानां शब्दादीनां परगुणानां गुर्व्वादीनामुपलब्धेर्बुद्ध्यादयोऽपि परगुणाः शरीरे सन्ति न वेति संशयः । तत्र सिद्धान्तसूत्रम्—

यावच्छरीरभावित्वाद्रूपादीनाम् । प्रकृतिगुणातिरिक्तानां नीलपीतादिगुरुत्वादीनां यावच्छरीरभावित्वात् । पाञ्चभौतिकं हि शरीरं, न पञ्चभूतगुणविकाराश्चेतनादय इति चेतनादयो न शरीरगुणाः ।

अत्र व्रीहिपाकवादी त्वाह । न पाकजगुणान्तरोत्पत्तेः । चेतनादयो न शारीरगुणा इति । न पाकजगुणान्तराश्च द्रव्ये उत्पद्यन्ते । यथा हरिद्राचूर्णसंयोगाल्लौहित्यम्, अमदकरनानाद्रव्यसंयोगेन मद्ये मदकरत्वं गुण उत्पद्यते । एवमेव पञ्चभूतारब्धशरीरेऽपि भूतगुणातिरिक्ताश्चेतनादयः शरीरे उत्पद्यन्ते इति शरीरे चेतनादयो गुणाः । अत्रोत्तरमाह—

प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः । पाकजानां गुणानां नित्यकानामप्रतिषेधः । पाकजा गुणा अस्माभिर्न प्रतिषिद्ध्यन्ते । कस्मात् ? प्रतिद्वन्द्विसिद्धेः । प्रतिद्वन्द्विनां परस्परविरोधिगुणानां द्रव्ये सिद्धेः । अग्निगुरोः शीतस्पर्शत्वं काजानां सिद्ध्यति न तु प्रतिद्वन्द्विनामपरेषां गुणानां सिद्धिर्यथा मोहगुरोः संस्कारपाकप्रभवमिव कायानां चैतन्यादिः सिद्ध्यति तथा

शरीरगुणा न चैतन्यादयः । हरिद्राचूर्णसंयोगाल्लौहित्यवन्मदशक्तिवच्च सिद्ध्यन्ति चेत्, तत्र हेत्वन्तरमाह—

शरीरव्यापित्वात् । शारीरगुणानां शरीरव्यापित्वात्, शरीराव्यापका हि चैतन्यादयो न शरीरगुणाः ।

सर्वशरीरव्यापिनश्चेतनादय इति चेत, न, केशनखादिष्वनुपलब्धेः । चेतनादीनां शरीरव्यापित्वमिति चेत न, कस्मात् ? केशनखादिषु चैतन्यादेरनुपलब्धः ।

एतद्दोषमुद्धरन्ति । त्वक्पर्य्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः । शरीरव्यापित्वेऽपि केशनखादिषु चैतन्यादीनां न प्रसङ्गः । कस्मात् ? शरीरस्य त्वक्पर्य्यन्तत्वात्, त्वक्पर्य्यन्तं हि शरीरं न केशनखादिपर्य्यन्तम् । जीवलिङ्ग हि शरीरं यच्छेदादौ सुखदुःखे जीव उपलभते । केशनखादिच्छेदे सुखमुपलभते न दुःखं तस्मान्न केशादिकं शरीरमिति ।

तत्र चैतन्यादीनां शरीरगुणत्वनिरासाय हेत्वन्तरमाह—

शरीरगुणवैधर्म्म्यात् । चेतनादिन शरीरगुणः । कस्मात् ? शरीरगुणवैधर्म्म्यात् । शरीरगुणा हि द्विधा गुरुत्वादयोऽप्रत्यक्षा रूपादयः शारीरेन्द्रियवेद्या न चेतनादयः किन्त्वन्तरिन्द्रियमनोवेद्या इति वैधर्म्म्यात् ।

अत्र नास्तिकाः परिहरन्ति । न रूपादीनामितरेतरवैधर्म्म्यात् । शरीरगुणवैधर्म्म्याच्चैतन्यादयो न शरीरगुणा इति यत् तन्न । कस्मात् ? रूपादीनामितरेतरवैधर्म्म्यात । रूपादीनां चक्षुरादिवेद्यत्वं न स्पर्शनेन्द्रियादिवेद्यत्वं, स्पर्शादीनां स्पर्शनेन्द्रियादिवेद्यत्वं न चक्षुरादिवेद्यत्वमिति परस्परवैधर्म्म्याच्छरीरगुणा न भवन्तु रूपादय इति तस्माच्छरीरगुणवैधर्म्म्यादिति हेतुः सव्यभिचारः ।

अत्र समाधानमाह—ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः । रूपादीनां परस्परवैधर्म्म्येऽपि शारीरगुणत्वाप्रतिषेधः, कस्मात् ? ऐन्द्रियकत्वात् । रूपरसगन्धस्पर्शशब्दादीनां बहिरिन्द्रियग्राह्यत्वसाधर्म्म्येण परस्परवैधर्म्म्याभावात् । चैतन्यादेस्तु बहिरिन्द्रियाभ्यन्तरेन्द्रियाग्राह्यत्वग्राह्यत्वाभ्यां रूपादीनां शरीरगुणवैधर्म्म्यादिति भावः । एवं चैतन्यादेः शारीरगुणत्वे निरस्ते पुनः ।

अथात्र नास्तिका आहुः । नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात । मनसो नित्यत्वान्मन एव सत्त्वसंज्ञकं चैतन्ये कारणम् । चैतन्ये जाते मनसि बुद्धिरुत्पद्यते, बुद्ध्या त्वभीष्टमिच्छत्यनिष्टं द्वेष्टीति बुद्ध्या मनसीच्छाद्वेषौ भवतः । अभीष्टेच्छया चाभीष्टं साधयितुं प्रयतते अनिष्टद्वेषेणानिष्टं साधयितुं निवर्त्तते

इति प्रवृत्तिनिवृत्तिरूपः प्रयत्नो मनसि जायते। ततोऽभीष्टे साधितेऽनिष्टान्निवृत्तौ प्रज्ञापराधादनिष्टे साधितेऽभीष्टान्निवृत्तौ सुखमनिष्टे दुःख मनसि भवतीत्यात्मप्रत्ययहेतूनां चैतन्यबुद्धीच्छाद्वेषप्रयत्नसुखदुःखानां मनसि सम्भवादेवं योऽहं घटमद्राक्षं सोऽहमेव स्पृशामीत्येव दर्शनस्पर्शनाभ्यामेकस्यैव मनसोऽर्थग्रहणादिसम्भवान्नात्मन एते चैतन्यादयः प्रत्ययहेतवस्ततश्चात्मा नास्तीत्याहुर्नास्तिकाः।

तत्र समाधत्ते। ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम्। अस्यार्थः। युष्माकं मते मनसो ज्ञातुर्ज्ञानसाधनस्य ज्ञानकरणस्य चक्षुरादेरुपपत्तेः संज्ञाभेदमात्रम्। मनो जानातीति ज्ञातुर्मनसो ज्ञानसाधनञ्च चक्षुरादि। चक्षुषा पश्यति घ्राणेन जिघ्रतीत्येवं ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रं भवन्तो मन आहुर्वयमात्मानं ब्रूम इति नार्थे विवादः। यदि य एको मनसा मनुते चक्षुषा पश्यति स प्रत्याख्यायते तदात्मैवास्ति मनो नास्तीति प्रत्याख्यायेत।

ननु रूपादिप्रत्यक्षं चक्षुरादिकरणं ज्ञातुरस्ति सर्व्वविषयं मतिसाधनं मनो ज्ञातुर्नास्तीत्येवं नियमं मन एव जानाति चक्षुषा पश्यतीत्येवं सुखमनुभवति दुःखञ्चेति चेत्। तत्राह सिद्धान्तम्। नियमश्च निरनुमानः। ज्ञातुर्ज्ञानसाधनोपपत्तेः करणं चक्षुरादिकमस्ति बुद्ध्यादिकरणं मनो नास्तीति नियमो निरनुमानः। कर्त्ता हि करणं विना न किञ्चित् कर्त्तुं शक्नोति, वक्ष्यते हि शारीरेऽस्मिंस्तन्त्रे। "करणानि मनो बुद्धिर्बुद्धिकर्म्मेन्द्रियाणि च। कर्त्तुः संयोगजं कर्म्म वेदना बुद्धिरेव च॥ नैकः प्रवर्त्तते कर्त्तुं भूतात्मा नाश्नुते फलम्। संयोगाद्वर्त्तते सर्व्वं तमृते नास्ति किञ्चन॥" तथा तत्रैव च वक्ष्यते। "न च कारणमात्मा स्यात् खादयः स्युरहेतुकाः। न चैषु सम्भवेज्ज्ञानं न च तैः स्यात् प्रयोजनम्॥ मृद्दण्डचक्रैश्च कृतं कुम्भकारादृते घटम्॥" इति। युगपज्ज्ञेयानुपलब्धेश्च न मनसः। युगपज्ज्ञेयानामनुपलब्धेर्मनसो न बुद्धिगुणः। अणु चैकञ्च मन एकदा नानेकेषु प्रवर्त्तते तस्मान्नैककाला सर्व्वेन्द्रियप्रवृत्तिरिति वक्ष्यते। यद्यपि महाननेकश्च सूक्ष्म एकदा सर्व्वेषु न प्रवर्त्तने समर्थस्तथापि द्व्यादिषु यथाशक्ति प्रवर्त्तनक्षम इति बोध्यं, मनस्तु न द्व्यादिष्वपि प्रवर्त्ततेऽणुत्वादेकत्वाच्च।

अत्र नास्तिका आहुः। तदात्मगुणत्वेऽपि तुल्यम्। तस्या बुद्धेरात्मगुणत्वेऽपि तुल्यं युगपज्ज्ञेयानुपलब्धेर्न तस्यात्मनो गुणो बुद्धिः। मनो हि यथा सूक्ष्ममेकं नानेकेषु युगपत् प्रवर्त्तनक्षमं तथैवात्मा सूक्ष्म एकश्चानेकेष्विन्द्रियेषु नैककालं प्रवर्त्तितुं सम्भवतीति तुल्यम्।

तत्राह—इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः। सूक्ष्मस्यैकस्य मनसो युगपन्नानेकेन्द्रियेषु सन्निकर्षासामर्थ्यात् युगपज्ज्ञानाविषयोपलब्धेरनुत्पत्तिः। आत्मेन्द्रियसन्निकर्षेऽपि आत्मनस्तु चैतन्याद् बुद्धिरुत्पद्यते सूक्ष्मत्वादेकत्वाच्च न युगपत्। युगपज्ज्ञेयानुपलब्धेरिति भावः।

अत्राहुर्नास्तिकाः। नोत्पत्तिकारणानपदेशात्। आत्मनश्चैतन्यादात्मेन्द्रियसन्निकर्षाद् बुद्धिरुत्पद्यते न। कस्मात्? उत्पत्तिकारणस्यानपदेशात्। येन कारणेन येन प्रकारेण बुद्धिरुत्पद्यते तद्वचनाभावात्। इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमित्युक्तयेन्द्रियार्थसन्निकर्षस्य बुद्ध्युत्पत्तिहेतुत्वख्यापनात्। या यदिन्द्रियजा बुद्धिः सा तथैव व्यपदिश्यते। श्रावणी बुद्धिः श्रवणजा, स्पर्शनात्तु स्पर्शनबुद्धिश्चाक्षुषी बुद्धिश्चक्षुर्जा, रासनी बुद्धिस्तु रसनजा, घ्राणबुद्धिर्घ्राणजा, मानसी बुद्धिर्मनोभवेति व्यपदेशो दृश्यते। वक्ष्यते हि शारीरेऽस्मिंस्तन्त्रे। "या यदिन्द्रियमाश्रित्य जन्तोर्बुद्धिः प्रवर्त्तते। याति सा तेन निर्देशं मनसा च मनोभवा॥" इति।

अपरञ्च दोषमाहुः। विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः।

अस्यार्थः। भवतामात्मनित्यत्वादात्मगुणत्वे बुद्धेरात्मन्यवस्थाने बुद्धेर्नित्यत्वप्रसङ्गः स्यात्। कस्मात्? बुद्धेर्विनाशकारणानुपलब्धेर्नित्यस्यात्मनो गुणस्य नित्यत्वात्। गुणनाशकारणं द्वेधा आश्रयनाशो विरोधी गुणश्च, आत्मनस्त्वाश्रयस्य नित्यस्य नाशासम्भवः। विरोधी गुणश्च नोपलभ्यते इति।

तत्र सिद्धान्तसूत्रम्। अनित्यत्वग्रहाद् बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत्। एकस्यां बुद्धौ खल्वात्मनो बुद्ध्युपादानिकायां जातायां यदा परा बुद्धिरुत्पद्यते तदा पूर्व्वबुद्धेर्नाशः स्यादिति बुद्ध्यन्तरोत्पत्तिः पूर्व्वबुद्धिनाशे हेतुः। इति सर्व्वप्राणिनां प्रतिजनवेद्यमिदं गृह्यते बुद्धिसन्तानः। बुद्धेर्बुद्ध्यन्तरं विरोधी गुण इत्यनुमीयते। तत्र दृष्टान्तमाह शब्दवदिति। पूर्व्वशब्दस्य यथा शब्दान्तरोत्पत्तितो नाशः स्यादिति यथा शब्दसन्ताने शब्दः शब्दान्तरविरोधी गुण इति।

अत्राहुर्नास्तिकाः। भवता यत्किञ्चिद् दृष्टञ्च श्रुतञ्च स्पृष्टञ्च रसितञ्च घ्रातञ्चेत्येवमसङ्ख्येयेषु ज्ञानकारितेषु संस्कारेषु स्मृतिकारणेषु मध्ये समाने खल्वात्ममनसोः सन्निकर्षे स्मृतिहेतौ वर्त्तमाने कारणायौगपद्यं नास्तीति कारणयौगपद्याद् युगपत् स्मृतयः स्युरिति।

तत्राहुः केचित्। ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः। दर्शनस्पर्शनादिभिर्ज्ञातानां ज्ञानं यस्मिन्नात्मनः प्रदेश

भवति तत्र तज्ज्ञानजः संस्कारो वर्त्तते, तत्रात्मप्रदेशे मनसः सन्निकर्षात् क्रमेणाणुत्वैकत्वाभ्यां स्मृत्युत्पत्तं न युगपत् स्मृत्युत्पत्तिर्भवति। अणु चैक हि मनः सर्व्वसंस्कारेषु न युगपत्प्रत्ययै प्रभवति।

तत्राहुर्नास्तिकाः। नान्तःशरीरवृत्तित्वान्मनसः। ज्ञानसमवेतात्मप्रदेशे सन्निकर्षो मनसो न। कस्मात्? अन्तःशरीरवृत्तित्वात्। आत्मा ह्यन्तःशरीर-वृत्तिविना योगं मनसस्तत्सान्निध्यं न भवति। यदि सान्निध्यं स्यात्तदा मनसात्मप्रत्यक्षोऽथात्मप्रदेशप्रत्यक्षः संस्कारप्रत्यक्षश्च स्यात्। स्याच्चेत्तदात्म-प्रत्यक्षेण सम्वित्तिरात्मनः सर्व्वदैवोपपद्येत नानुपपन्ना स्यादिति। न च मन आत्मवदन्तःशरीरवृत्ति। स्पर्शनेन्द्रियसमवेतत्वात। स्पर्शनस्य सर्व्वेन्द्रिय-व्यापकत्वात् तत्समवेतत्वेन मनोऽपि चात्मना प्रेरितं सर्व्वेन्द्रियं क्रमेण व्याप्नोति। तथाच। सुस्मूर्षया मनःप्रतिदधानः पुमान् चिरादपि किञ्चिद्वस्तु स्मरति। न चाकस्मात्। भवतां मनसो बलाभावात। तद् यथा। व्यासक्त-मनसः पादव्यथनेन संयोगविशेषेण समानम्। अतः पुमान् कण्टकशर्करादि-वेधेन पादो व्यथत इति स पुनर्व्यासक्तमना गच्छन्नान्वेष्य कण्टकादीन् कण्टकादिना विद्धपादः पादव्यथनेन संयोगविशेषणेदं समानम्। यदृच्छया तु विशेषो नाकस्मिकी क्रिया नाकस्मिकः संयोग इति भोगार्थं क्रिया हेतुरदृष्टं कम्प्रति चेत तुल्यं स्मृतिहेतोरपि संयोगविशेष इति।

तत्राहुः। प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावाद् युगपदस्मरणम्। सति च कारणानां संस्काराणां यौगपद्ये खल्वात्ममनःसन्निकर्षसंस्कारादिस्मृतिहेतुवत प्रणिधानलिङ्गादिज्ञानानामपि स्मृतिहेतूनां यौगपद्यासम्भवाद् युगपन्न स्मरणं भवतीति।

तत्राहुर्नास्तिकाः। प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्त्ते यौगपद्यप्रसङ्गः। परोक्तवाक्यस्य श्रुतिमात्रार्थावगमशक्तिः प्रतिभा, तज्जातज्ञानवत् इदं स्मार्त्तं ज्ञानं प्रणिधानं विनैव यदि जायते तदा स्मृतेर्युगपदुत्पत्तिप्रसङ्ग इति। बह्वर्थविषये चिन्ताप्रबन्धे कश्चिदर्थः कस्यचित् स्मृतिहेतुस्तस्यानुचिन्तनात्तस्य स्मृतिर्भवतीति।

तत्र दोषमाह। साध्यत्वादहेतुः। ज्ञानसमवेतात्मप्रदेशसन्निकर्षो मनसो न। अन्तःशरीरवृत्तित्वादिति यो हेतुरुक्तः स साध्यत्वादहेतुः। ज्ञानसमवेतात्मप्रदेश-सन्निकर्ष आत्मप्रदेशसंयोगः स प्रत्यान्तःशरीरवृत्तिरिति साध्यत्वान्न तत्-प्रत्याख्याने हेतुरिति।

तत्राहुर्नास्तिकाः। स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः। स्मरतः शरीर-धारणमुपपद्यते धारकप्रयत्नेन। शरीराद्बहिर्निःसृते हि मनसि धारक-प्रयत्नस्याभावः स्यात् पतनञ्च शरीरस्य गुरुत्वाद्भवतीति अन्तःशरीरवृत्तित्वं मनसो वर्त्तेत एव स्मरतो जनस्य। आत्ममनःसंयोगजस्तु प्रयत्नः प्रेरको धारकश्च द्विधा। प्रेरकप्रयत्नेन मनः प्रेरितं सुस्मूर्षया स्मर्त्तव्ये पुंसा प्रणि-धीयते चिरादपि कश्चिदथ स्मरतीति अन्तःशरीरवृत्तित्वप्रतिषेधो न भवति।

तत्राह—न तदाशुगतित्वान्मनसः। शरीरधारणस्योपपत्तितो मनसः खल्वन्तःशरीरवृत्तित्वाप्रतिषेधो न। कस्मात्? तदाशुगतित्वान्मनसः। मनो ह्याशुगति। आत्मना प्रेरितं ज्ञानसमवेतात्मप्रदेशेन ज्ञानहेतुसंस्कारवता यावत् सन्निकृष्यते स्मर्त्तव्यं स्मृत्वा प्रत्यागतं बहिःशरीरं धारयतीति मनस-स्तदाशुगतित्वात्।

तत्राहुर्नास्तिकाः। न स्मरणकालानियमात्। मनस आशुगतित्वादात्म-प्रदेशसन्निकर्षो वा बाह्यशरीरागमनं न। स्मरणकालानियमात्। किञ्चित् चिरेण स्मर्य्यते किञ्चिद्द्रुततरमिति शरीरसंयोगानपेक्षस्त्वात्ममनःसंयोगो न स्मृतिहेतुः शरीरस्य भोगायतनत्वात्।

तत्राह—आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः। आत्मना प्रेरणेन मनसो बहिःशरीरात् संयोगविशेषो न स्यात्। आत्मनो यदृच्छया (या इच्छा यदृच्छा) अकस्माद्वा न बहिःशरीरात् संयोगविशेषः स्यात्। न वा ज्ञतया ज्ञता बुद्धिशक्तिस्तयापि न बहिःशरीरात् संयोगविशेषः। शरीर-संयोगात्तु आत्मन एव ज्ञतया कार्य्यकारण-करण-प्रयोजनान्यध्यवस्य यदृच्छया तथा स्यादन्यथा न स्यादित्येवमभिमतं प्रेरणप्रयत्नेन मनः साधयितुं प्रेरयतीति न मनसश्च तन्वादयो बुद्धयो न वर्त्तन्ते।

तत्राहुर्नास्तिकाः। तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवादिष्वप्रतिषेधः। पार्थिवादिषु शरीरेषु ज्ञानादयः सन्ति न तेषां प्रतिषेधः।

कस्मात्? इच्छाद्वेषयोस्तल्लिङ्गत्वात्। शरीरस्यारम्भकाणि पृथिव्यादीनि भूतानि तेषां प्रवृत्तिः शरीरारम्भस्तथा प्रवृत्तेर्लोष्ट्रादिष्वभावो निवृत्तिरिति प्रवृत्तिनिवृत्ती इच्छाद्वेषाभ्यां जन्येते इति पृथिव्यादिषु शरीरारम्भप्रवृत्तिदर्शना-ल्लोष्ट्रादौ तथा प्रवृत्त्यभावदर्शनाच्च। पृथिव्यादिष्विच्छाद्वेषयोगाच्च तन्वादि-ज्ञानवत्त्वः। अतो चैतन्यादिज्ञानादिच्छाद्वेषौ न भवत इति तस्मात सत्त्वशरीर-सङ्घात एव पुमानास्ति तद्व्यतिरिक्त आत्मेति।

तत्राह—कुम्भादिष्वनुपलब्धेरहेतुः। कुम्भाद्यारम्भकेषु मृदादिषु प्रवृत्ति-निवृत्त्योरदर्शनादिच्छाद्वेषाभावाच्च तन्यादिज्ञानाभावात् पार्थिवादिष्विच्छा-द्वेषयोस्तल्लिङ्गत्वादिति हेतुरहेतुरिति।

यदि शरीरारम्भकपृथिव्यादिभूतानां प्रवृत्तिनिवृत्तिलिङ्गाविच्छाद्वेषौ यतो-ऽन्वयव्यतिरेकाभ्यां प्रवृत्तिनिमित्त इत्यत इच्छाद्वेषौ भूतानामिव मृदादीनामपि प्रवृत्तिः कुम्भारम्भे ततश्च तन्यादिज्ञानमिति चेत्तदोच्यते—

नियमानियमौ तु तद्विशेषकौ। तयोरिच्छाद्वेषयोर्विशेषकौ भेदकौ नियमानियमौ। ज्ञस्यैवेच्छाद्वेषौ नाज्ञस्य। प्रवृत्तिनिवृत्ती चेच्छाद्वेषनिमित्ते न आश्रयस्येच्छाद्वेषौ। ताहि च प्रयोजकौ ज्ञस्तेन प्रयुज्यमानेषु करणादिष्वपि प्रवृत्तिनिवृत्ती स्त इति न सर्व्वेषु तेन चात्मना ज्ञेन प्रयुक्तैः पृथिव्यादिभिर्भूतैः शुक्रशोणितादिरूपैः शरीरमारभ्यते न ज्ञेनाप्रयुक्तैः केवलैर्भूतैरिति।

कस्मात्? ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः। जानाति खल्वयमनेन मे सुखं स्यादनेन दुःखमिति सुखदुःखसाधनं ज्ञात्वा सुखसाधनमिच्छति दुःख-साधनं द्वेष्टि। इच्छंश्च सुखसाधनं साधयति दुःखसाधनान्निवर्त्तते इति ज्ञानेच्छाद्वेषप्रवृत्तिनिवृत्तिसुखदुःखानामेकेन सहाश्रयतया सम्बन्धः। तस्मात् ज्ञस्येच्छाद्वेषप्रयत्नसुखदुःखानि धर्म्माणि न त्वज्ञस्य। प्रवृत्तिनिवृत्ती द्विविधे गुणाख्ये कर्म्माख्ये च। ये ज्ञस्येच्छाद्वेषनिमित्ते ते प्रयत्नाख्यगुणसंज्ञे। ये तत्प्रयत्ननिमित्ते वाङ्मनःशरीरारम्भप्रवृत्तिनिवृत्ती ते कर्म्मसंज्ञे इति। अप्रयत्ननिमित्तत्वात् घटादिषु प्रवृत्तिनिवृत्त्यदर्शनात् स्वतस्तदभावाद् भूतानां न चैतन्यादिज्ञानम्।

यथोक्तहेतुत्वात् पारतन्त्र्यादकृताभ्यागमाच्च नेन्द्रियार्थभूतमनसाम्। इन्द्रि-यार्थभूतमनसां यथोक्तहेतुभ्यो ज्ञानादयो न वर्त्तन्ते। तत्र चेदुच्यते प्रवृत्ति-निवृत्त्योः सुखदुःखसाधनत्वाद् दुःखानाश्रयत्वादात्मनो न प्रवृत्तिनिवृत्ती तदा ब्रूमः। पारतन्त्र्यात्। परतन्त्राणीन्द्रियार्थभूतमनांसि। ज्ञेन प्रयुज्यमानानि यथास्वकर्म्मसु प्रवर्त्तन्तेऽभीष्टे निवर्त्तन्तेऽनभीष्टेभ्य इति। इति प्रत्यगात्मनि आरम्भनिवृत्त्योः सुखदुःखभोगस्य च दृष्टत्वात् परत्रानुमानं लिङ्गत्वेन प्रवृत्तिनिवृत्ती। तद्धेतुश्च प्रयत्न आत्मनि प्रवृत्तिनिवृत्त्याख्यो गुण इति।

नन्वात्मा नास्ति मन एव स्वतन्त्रं प्रयुङ्क्ते चेन्द्रियाणीति चेत् तदोच्यते। अकृताभ्यागमाच्चेति। आत्मना क्रियते यत् कर्म्म तत् कर्म्मफलभोगादिन्द्रिय-

भूतमनसां स्वस्वकृतकर्म्मफलाभ्यागमाभावात् । स्वकृतकर्म्मफलोपभोक्ता ह्यात्मा स्वतन्त्रः । इति ।

तर्हि कस्य चैतन्यादिज्ञानमित्यत आह—परिशेषाद् यथोक्तहेतूपपत्तेश्चात्मनः । इन्द्रियार्थभूतमनोभ्यः परिशिष्टोऽस्मिन् राशिपुरुषे खल्वात्मा, तस्यैव चैतन्यादि-गुणः, स एवास्य सत्त्वभूतगुणेन्द्रियैः सहितः संश्चैतन्ये कारणं भवतीति सत्त्व-शरीराभ्यां पर आत्मास्तीति नात्मव्यतिरिक्तः, सत्त्वशरीरसंहतः पुरुष आत्मा नास्तीति होवाचाक्षपादगौतमः ।

साङ्ख्ये कपिलेनाप्युक्तम् । शरीरादिव्यतिरिक्तः पुमान् । संहतपरार्थत्वात् । शरीरञ्चोक्तम् । पाञ्चभौतिको देहः । सप्तदशकं लिङ्गम् । अध्यवसायो बुद्धिः । अभिमानोऽहङ्कारः । पञ्चमहाभूतानि दशेन्द्रियाण्येकादशं मन इत्येतेभ्यः शरीरादिभ्यो व्यतिरिक्तः पुमानात्मा ।

तत्राहुर्नास्तिकाः । आत्मव्यतिरिक्तः शरीरादिसंहतः पुमान् नास्त्यात्मा । तत्र सांसिद्धिकं चैतन्यमिति ।

तत्राह—न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः । विनात्मानं शरीरादि-सङ्घाते चैतन्यं न सांसिद्धिकम् । कस्मात् ? प्रत्येकादृष्टेः । महदादीनां त्रयोविंशतेः पुरुषारम्भकाणां प्रत्येके चैतन्यादर्शनात् । कारणगुणपूर्व्वको हि कार्य्यगुणो दृष्ट इति ।

प्रपञ्चमरणाद्यभावश्च । शरीरादिव्यतिरिक्तस्य प्रपञ्चमरणाद्यभावश्च, शरीरादि-संहतस्य तु प्रपञ्चमरणादिमत्त्वादनित्यत्वमिति ।

तत्राहुर्नास्तिकाः । शरीरादिसंहतीभावे जायमाने संयोगादेव चैतन्यं जायते मदशक्तिवदिति ।

तत्राह—मदशक्तिवच्चेत् प्रत्येकपरिदृष्टे सांहत्ये तदुद्भवः । मद्ये या मद-शक्तिर्न सा खल्वमदकरारम्भे निरुपादाना जायते । मद्यारम्भकाणां पिष्टगुड-मध्वादीनां प्रत्येकेऽनभिव्यक्तरूपेण परिदृष्टे मदकरे भावे सांहत्ये तदुद्भव उद्भूतत्वं जायत इति कारणगुणपूर्व्वक एव कार्य्यगुणः स्याद् गुरुत्वादिवत् । न त्वनुपादानः स्यादिति । तस्माच्छरीरादिव्यतिरिक्तः पुमानित्यतस्तु अस्त्यात्मा न तु नास्त्या-त्मेति । कणादेनाप्युक्तं वैशेषिके । द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् । द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् । कर्म्म कर्म्मसाध्यं न विद्यते इति ।

तत्राहुर्नास्तिकाः। मद्ये या मदशक्तिः सा किं पिष्टादिगुणकार्य्या ? तर्हि च केन गुणेन कृता ? कश्च गुणो मदशक्तिः ? न शब्दादिषु न गुरुत्वादिषु न परापरत्वादिषु न बुद्धीच्छादिषु कोऽपि दृश्यते मदो नाम गुणाख्या शक्तिरिति।

तत्राह—मद्ये मदशक्तिर्न गुणः। मदारम्भकाणां पिष्टगुडमध्वादीनां यद् यस्य कर्म्म तैः कर्म्मभिरारब्धं स्वस्वकर्म्मविरोधि कर्म्म यदुच्यते प्रभाव इति।

तत्राहुर्नास्तिकाः। विनात्मानं शरीरादिसङ्घातेऽपि पुरुषे महदादिभिरारब्धे महदादीनां कर्म्मवतां कर्म्मभिरारब्धं स्वस्वकर्म्मविरोधि कर्म्म चैतन्यादिकं ज्ञानमिति।

तत्राह—चैतन्यादिकं न कर्म्म पुरुषस्य गुणमध्ये सर्व्वमहर्षिभिः पठितत्वात्। संयोगविभागेष्वकारणत्वाच्च गुणः। शरीरशिथिलीकरणात् तु मदशक्तिः संयोगविभागेषु कारणं कर्म्मैवेति।

तत्राहुर्नास्तिकाः। नहि कारणगुणपूर्व्वकः कार्य्यगुणो दृष्ट इत्ययुक्तमुक्तमिति। नैवमाहुर्महर्षयः। गुणशब्देन कर्म्मगुणवचनात्। द्रव्यापेक्षया गुणीभावात्। द्रव्याश्रितत्वाच्च। द्रव्यप्राधान्यादिति।

अथाक्षपादगौतमश्चाह। बहुर्थोपपत्तेरात्मनश्चैतन्यादिज्ञानं न शरीरादिसंहतरूपस्य। जातिस्मरणाद्यनुपपत्तः। अनित्यत्वात् संहतरूपस्येति। स्मरणन्त्वात्मनो ज्ञस्वाभाव्यात्। स्मरणञ्चात्मनो गुणः। कस्मात् ? ज्ञस्वाभाव्यात्। ज्ञानवत्स्वभावत्वात्। सोऽहि भावान ज्ञात्वा कारणवशात् स्मरति नान्यो मनःप्रभृतिस्तज्ज्ञः।

ननु स्मरणं केभ्यो हेतुभ्यः स्यादित्यत उक्तप्रणिधानलिङ्गादिकं सर्व्वं विवृणोति।

प्रणिधान-निबन्धाभ्यास-लिङ्ग-लक्षणसादृश्य-परिग्रहाश्रयाश्रित-सम्बन्धानन्तर्य्यवियोगैककार्य्य विरोधातिशय-प्राप्तिव्यवधान-सुखदुःखेच्छाद्वेषभयार्थित्व-क्रियारागधर्म्माधर्म्मनिमित्तेभ्यः। प्रणिधानादिभ्यो निमित्तेभ्यः स्मरणमात्मनः उत्पद्यते। तत्र प्रणिधानं मनस एकाग्रत्वं, तच्च विषयान्तरसञ्चरणाभावः सुस्मूर्षया मनसि धारणम्। निबन्धः एकग्रन्थोपनिबन्धनं, यथा प्रमाणेन प्रमेयादिस्मरणम्। अभ्यासः शीलनं सततक्रियेत्यनर्थान्तरम्। लिङ्गमनुमानकारणं संयोगिसमवाय्येकार्थसमवायिविरोधि च। लक्षणं लक्ष्यसाधनम्। यथा कपिध्वजादिरर्ज्जुनादेः। सादृश्यं साम्यं चित्रादिगतप्रतिरूपं देवादेः। परिग्रहः सत्त्वतोग्रहः। आश्रयाश्रितौ राजादितत्परिजनौ परस्परस्मारकौ।

सम्बन्धो गुरुशिष्यभावादिः । आनन्तर्य्यं मोक्षणावघातादेरुत्तरकालः । वियोगो यथा दारादेः । एककार्य्या अन्तेवासिप्रभृतयः परस्परस्मारकाः । विरोधा-दहिनकुलादेः स्मरणमन्यतरेणान्यतरस्य । अतिशयः येनातिशय उत्पादितः । उपनयनादिसंस्कारादिः आचार्य्यादिस्मारकः । प्राप्तिर्धनादेर्दातारं स्मारयति । व्यवधानमावरणं, यथा खड्गादेः कोशादिः । सुखदुःखयोरन्यतरेणापरस्य, ताभ्यां तत्प्रयोजकस्य कारणस्य वा स्मरणम् । इच्छाद्वेषौ यद्विषयकतया ग्रहीतव्यस्य स्मारकौ । भयं मरणादेर्भयहेतोर्वा स्मारकम् । अर्थित्वं दातुः । क्रिया शाखादेर्भङ्गादिक्रिया वाय्वादेः स्मारिका । रागात् प्रीतेः, पुत्रादेः स्मरणम् । धर्म्माधर्म्माभ्यां जन्मान्तरानुभूतसुखदुःखसाधनयोः प्रागनुभूतसुखादेश्च स्मरणम् । इत्येवमक्षपादगोतमेन न्यायसूत्रेषु द्वीच्छाद्वेषप्रयत्नस्मरणानां यदात्मगुणत्वं स्थापितं, तदात्मनः शरीरत्वे सत्त्वशरीरसंयोगान्मुग्धावस्थायामुपाधिमत एवात्मनो गुणाभिप्रायेण न कैवल्ये । प्रवृत्तिसूत्रे हि प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इत्यत्र बुद्धिशब्देन बुद्ध्याश्रयत्वान्मन एवाभिप्रेत्योक्तिः । बुद्धेः कर्म्मवत्त्वाभावात् । एषा तु वाग्बुद्धिशरीरारम्भलक्षणा प्रवृत्तिः क्रिया । वक्ष्यते चास्मिंस्तन्त्रे "कर्म्म वाङ्मनःशरीरप्रवृत्तिरिति" एतेन सहैकवाक्यत्वाच्च । बुद्ध्यादीनामेषा-मुत्पन्नत्वापसारित्ववचनाच्च । तद्यथोक्तं न्यायसूत्रम् । कर्म्मानवस्थायित्व-ग्रहणात् । बुद्धिरुत्पन्नापवर्गिणी कर्म्मानवस्थायिग्रहणात् न काला-वस्थायिनी कुम्भवत् । यथा कर्म्मानवस्थायि निक्षिप्तशरादेर्वेग-निवृत्तौ कम्पणोऽसत्त्वात् । तथा बुद्धिरपि व्यवसायनिवृत्तौ सत्त्वा-भावाच्च चिरावस्थायिनी अतएवोत्पन्नत्वमपसारित्वञ्च बुद्धेः । वक्ष्यतेऽत्र तन्त्रे शारीरे । "इन्द्रियाभिग्रहः कर्म्म मनसस्स्वस्य निग्रहः । ऊहो विचारश्च ततः परं बुद्धिः प्रवर्त्तते ॥ इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते । कल्प्यते मनसाप्यूर्द्ध्वं गुणतो दोषतो यथा ॥ जायते विषये तत्र या बुद्धिर्निश्चयात्मिका । व्यवस्यते तया वक्तुं कर्त्तुं वा बुद्धिपूर्व्वकम ॥" इति ।

बुद्ध्यवस्थानात् प्रत्यक्षत्वे स्मृत्यभावः । कुम्भवदवस्थायिनी चेद्बुद्धिस्तदा प्रत्यक्षत्वेन बुद्धेरवस्थानात् स्मृतिर्न जायते ॥

तत्राह वादी । अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्सम्पाते रूपाव्यक्तग्रहण-वत् । यथा चिरानवस्थायिविद्युत्सम्पाते तद्विद्युज्ज्वातालोकात तु भावानां रूपस्याव्यक्तग्रहणं न तु सर्व्वतोभावेनाशेषविशेषधर्म्मविशिष्टरूपग्रहणम् । तथा बुद्धेरनवस्थायित्वाद्भावानामव्यक्तग्रहणमस्तु न तु भावानामशेषेण ग्रहणं भवतु ।

अत्र विद्युत्सम्पाते रूपाव्यक्तग्रहणवदिति दृष्टान्तहेतुस्वीकाराद्व्यक्तग्रहणप्रतिषेधमभ्यनुजानाति। हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा। उक्तदृष्टान्तरूपहेतुस्वीकाराद् बुद्धेरनवस्थायित्वाद्व्यक्तग्रहणं यत्प्रतिषेद्धव्यं तस्याभ्यनुज्ञास्वीकारोऽस्तु। किन्तु दृष्टान्तान्तरेण बुद्धेरनवस्थायित्वेऽपि व्यक्तग्रहणं स्यादिदमाह—

प्रदीपार्च्चिःसन्तत्यभिव्यक्तग्रहणवत् तद्ग्रहणम्। बुद्धेरनवस्थायित्वेऽपि विद्युत्सम्पाते रूपाव्यक्तग्रहणवद्भावानामव्यक्तग्रहणं न, किन्तु प्रदीपार्च्चिःसन्तत्यभिव्यक्तग्रहणवत्तद्भावाभिव्यक्तग्रहणवत् तद्ग्रहणमेव स्यात्। यथा प्रदीपार्च्चिषां सन्तत्या सन्तानेन रूपाणामभिव्यक्तग्रहणं स्यात्तथा बुद्धेरनवस्थायित्वेऽपि ज्ञानविशेषसन्तानेन भावानामभिव्यक्तग्रहणं भवतीति सिद्धान्तः।

नन्वेवञ्चेत् कथमात्मनि बुद्धयादय आधीयन्ते कुत्र वा प्रसिद्धाः सन्ति जाता इति, उच्यते। मनः सत्त्वसंज्ञकमेकं सूक्ष्मञ्चाचेतनं क्रियावत्। आत्मा पुनरेकः सूक्ष्मश्चेतनश्च निर्गुणो निष्क्रियश्च लौकिकगुणकर्म्माभावात्। समसत्त्वरजस्तमोगुणा ह्यलौकिका अलौकिकगुणवत्त्वान्न सगुणत्वं व्यवह्रियते। तस्मात् प्रकाशकसुखयोगकृत्समसत्त्वेनोपाहितत्वे नित्यचैतन्यधीधृतिस्मृतिनिवृत्तयाख्यप्रयत्नसुखवान्। रागात्मकप्रवर्त्तकसमरजःसत्त्वात् द्वेषदुःखशून्यो नित्येच्छाप्रवृत्त्याख्यप्रयत्नवान्। मोहावरणात्मकसमतमसोपाहितत्वे मोहनकृदज्ञानकृच्छक्तिमान्। एवंलक्षणोऽपि स्वरूपतो निर्लक्षणो निर्गुणो निष्क्रियो निर्व्विकार आत्मा आदिसर्गे तु यद्विषमो भूत्वा महानभूल्लोकावस्थायां न चेदानीं शारीरावस्थायां पुनरिदानीञ्च नैवंविधो भवतीति शारीरावस्थाज्ञापनाय निर्गुणो निर्व्विकारो निष्क्रिय आत्मा सत्त्वशरीरसंयोगाद्विशेषोपलब्धिरौपचारिकगुणविकारक्रियावानित्युपदिशति। तद्यथा स आत्मा शरीरसर्गे मनसा युज्यते गुणग्रहणाय। वक्ष्यते हि शारीरे। "तत्र पूर्वं चेतनाधातुः सत्त्वकरणो गुणग्रहणाय प्रवर्त्तते" इति। मनःसंयोगादात्मा चेतनत्वगुणेनाचेतनं मनश्च तयत्यात्मतो मनसि चेतनोत्पद्यते। तथा चात्मोपचर्य्यते मनःक्रियया अतः सा चेतनात्मलिङ्गम् मनश्चेतन्ये जाते मनसि स्थितो महान् प्रज्ञाविद्यादिसंज्ञो जीव आत्मा चेतनो भवति तेनोद्रिक्तमहता विद्याबुद्ध्यात्मोपचर्य्यते। तेन महता विबुद्धोऽहमस्मि यदा मन्यते तदा मनसि स्थितोऽनादिरविद्याहम्मतिरूपोऽहङ्कार उद्रिक्तो भवति। वक्ष्यते च शारीरे। "अव्यक्ताज्जायते बुद्धिर्बुद्ध्याहमिति मन्यते। परं खादीन्यहङ्कार उपादत्ते यथाक्रमम्॥" इति। तेनाहङ्कारोद्रेकेणात्मोपचर्य्यते ततोऽस्मिन् राशि-

पुरुष खल्वात्माऽविद्यावानुच्यते स्वसंयुक्तमनःक्रियोपचरित आत्मा क्रियावान् स्वप्रयत्नेन। तया त्वविद्यया यदा व्यवसायार्थं प्रवर्त्तते तदा स उद्रिक्तोऽहङ्कारः परिणमन्मनसि बुद्धिरूपेण जायते। सा बुद्धिस्त्रिधा धीधृतिस्मृतिभेदात्। त्रिविधा च त्रिधा सात्त्विकी राजसी तामसीति, तया बुद्ध्यात्मोपचर्य्यते। तेनात्मा बुद्धिमानुच्यते इत्यात्मलिङ्गं बुद्धिरहङ्कारोपादाना। तया गर्व्वं करोति गर्व्वोऽभिमानोऽहङ्कार इत्येकोऽर्थः। यदा सात्त्विक्या तया व्यवस्यति तदा सा व्यवसायात्मिका बुद्धिः समयोगेनोच्यते, तदा च स्वर्गादिपारलौकिकधनधान्यवादिजैहिकसुखजनकं वैधं कर्म्माचरति, यच्च यथाभूतं कर्त्तव्यं तच्च तथैवाचरति। यदा राजस्या व्यवस्यति तदा सा व्यवसायात्मिका बुद्धिर्विषमयोगेनोच्यते। विषमयोगस्त्रिधा मिथ्यायोगायोगातियोगाः। तैस्तु वैधकर्म्माण्याचरति अयथावत् पारत्रिकाण्यैहिकानि च। तामस्या च तया यदा व्यवस्यति तदा सा व्यवसायात्मिका बुद्धिर्विषमयोगेन। स च त्रिधा पूर्व्ववत्। तैश्च वैधानि कर्म्माण्याचरत्ययथावत् पारत्रिकाण्यैहिकानि च। एषा हि बुद्धिस्त्रिधा धीधृतिस्मृतिभेदात् चतुर्विधयोगेनानित्यसुखदुःखहेतुः। यदा सात्त्विक्याऽनया बुद्ध्या नानाविधपुण्यकर्म्माणि कृतानि परिणतानि भवन्ति फलितुं तदा येन कर्म्मणा मोक्षोपायेन फलन्ति तदा खलु विद्यारूपा परिणमन्ती क्रमेण तामसी राजसी सात्त्विकी शुद्धसात्त्विकी च भवति। तया मानसदोषरजस्तमोनाशात् शुद्धसत्त्वात्मकं मनो भवति ततो मुक्तिर्यथोक्तरूपेण। एवमनया बुद्ध्या भवत इच्छाद्वेषौ मनसि ताभ्यां चोपचर्य्यते आत्मा तत इच्छावान् द्वेषवानिति लक्ष्यते। इच्छाद्वेषाभ्यां मनसि प्रवर्त्तते निवर्त्तते वा कर्म्माणि कर्त्तुमिति प्रवृत्तिनिवृत्तिरूपः प्रयत्नो मनसि जात उपचरत्यात्मानमित्यानित्यप्रयत्नवानात्मेति लक्ष्यते। इत्येवमौपचारिकबुद्धीच्छाद्वेषप्रयत्नवानात्मा यदा दम्पतीभ्यां जायमानो गर्भः पत्या भार्य्यायां जन्यते। पत्युर्भार्य्यायां च जन्यत इत्येवं लोके व्यवहारात्तयोः पुत्रोऽपि पितरि जीवति प्रधानेन च पितुः पुत्रतया परिचीयते कदाचिन्मातुः पुत्रतयापीति। बुद्ध्यादयस्तद्वदात्मगुणाः कैश्चिदुच्यन्ते कैश्चिन्मनोगुणाः, किन्तु यथा गर्भो मातरि वर्त्तते तथा मनसि बुद्ध्यादयो वर्त्तन्ते। नैते बुद्ध्यादयो गुणा मनसो लिङ्गानि चैतन्याभावात् चैतन्यास्त्वात्मनो लिङ्गानि भवन्ति। वक्ष्यते चास्मिंस्तन्त्रे। "अचेतनं क्रियावच्च चेतयिता परः। युक्तस्य मनसा तस्य निर्दिश्यन्ते विभोः क्रियाः॥ चेतनावान् यतश्चात्मा

ततः कर्त्ता निरुच्यते । अचेतनत्वाच्च मनः क्रियावदपि नोच्यते ।। इच्छा द्वेषः सुख दुःख प्रयत्नश्चेतना धृतिः । बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः ।।" इति ।

नन्वेवञ्चेद् बुद्ध्यादयो मनसि त्वात्मतो नोत्पद्यन्ताम् । आत्मनस्तु खलु स्वस्मिन्नेव जायन्तामिति चेत्, किमुपादानात्तदात्मनि बुद्ध्यादयो भवन्ति न हि महदहङ्कारौ वात्मनि तिष्ठतः । किन्तु मनसि वर्त्तेते । उक्तं हि मनुना । "उद्बबर्हात्मनश्चैव मनः सदसदात्मकम् । मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम् । महान्तमपि चात्मानं सर्व्वाणि त्रिगुणानि च ।।" इति ।

अत्र नारायणो ब्रह्मेत्यनुवर्त्तते । तत्र चेदात्मनो ये नित्यचैतन्यबुद्ध्यादयस्तदुपादाना भवन्तीत्युच्यते तत आह नित्य इति ।

आत्मा समत्रिगुणसमुदायात्मको नित्यः । कथं तस्य नित्यबुद्ध्यादयः परिणता अनित्यबुद्ध्यादयः सन्तो मुहुर्मुहुर्जायन्ते निर्व्विकारत्वात् तस्मान्नात्मा नित्य इति चेत्तत्रोक्तमक्षपादगौतमेनात्मा नित्य इति । कस्मात् ?

प्रत्य पुनः । पूर्व्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः । आत्मा नित्यः, कस्मात् ? पूर्व्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः । जातस्य शिशोरेतज्जन्मनि हर्षादिहेतुज्ञानाभावेऽपि पूर्व्वजन्मन्यभ्यस्तानां हर्षादिहेतूनां स्मृत्यनुबन्धात् हर्षादिहेतूनामुपस्थितौ हर्षादीनां सम्प्रतिपत्त्यवधात् ।

अत्रायं तर्कः । आत्मा यदि पूर्व्वजन्मनि खल्वयं नाभविष्यत तर्हि नेदानीं हर्षादिहेतुज्ञानेऽपि हर्षादिहेतावुपस्थिते हर्षादिमानभविष्यत् । तस्मात् पूर्व्वजन्मनि यो मृतस्यात्मा तेन यत्तज्जन्मनि अनुभवेनाभ्यस्तं तस्य स्मृत्यनुबन्धादेतज्जन्मनि च स एव हर्षादिहेतुज्ञानेऽपि हर्षादिहेतावुपस्थिते हर्षादिमान् भवतीति आत्मा नित्यः, एतेनास्ति पुनर्भव इति च ख्यापितम् ।

अत्राहुर्नास्तिकाः । पद्मादिषु प्रबोधसम्मीलनविकारवत् तद्विकारः । जातस्य हर्षादयो ये मुखविकाशादिभिर्भवद्भिरनुमीयन्ते न च ते मुखविकाशादयो हर्षादिना हर्षादिहेतुज्ञानात् हर्षाद्यसम्भवात् । किन्तु जातस्य शिशोर्मुखादिविकाराः, यथा पद्मादीनां प्रबोधसम्मीलनादिविकार इति ।

तत्राहास्तिकः । नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् । पद्मादिषु प्रबोधादिविकारवत् तद्विकारो न । कस्मात् ? पञ्चात्मकविकाराणामुष्णशीतवर्षाकालनिमित्तत्वात् । पञ्चभूतात्मकपद्मविकाराणामुष्णादिकाल-

निमित्तत्वात् प्राणिनान्तु मुखादिविकारो हर्षादिनिमित्त एव न पद्माद्यप्राणिप्रबोधादिविकारवत् । तस्मात् पूर्व्वोक्तरूपेणात्मा नित्य इति ।

अथात्मनित्यत्वे हेत्वन्तरञ्चाह । प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् । प्रेत्य मरणानन्तरं जातस्य शिशोराहाराभ्यासकृतात् स्तन्याभिलाषात् । पूर्व्वजन्मनि यद् यदाहारः कृतस्तदाहाराभिलाषः प्रवृत्तिनिवृत्तिजनकः । स एवैतज्जन्मनि शिशोः स्वादुताजीवनयात्राक्षुत्पिपासानिवृत्तिहेतुतया स्मरणेन स्तन्यपानादावभिलाष इत्यत आत्मा नित्यः ।

अत्र नास्तिकाः । अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् । यथायस्कान्तसन्निहितस्यायसोऽयस्कान्ताभिमुखगमनं विनाभ्यासेन भवति तथा वत्सस्यापि स्तन्यपानादौ वाञ्छया स्तनोपसर्पणमिति न तु तत्रेष्टसाधनताबुद्ध्याभिसर्पणमिति ।

अत्रास्तिक आह । नान्यत्र प्रवृत्त्यभावात् । अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणं न । कस्मात् ? अन्यत्र प्रवृत्त्यभावात् । जीवनयात्राक्षुत्पिपासाशान्त्यादीष्टसाधनताबुद्ध्याऽन्यत्र मातृस्तनादौ प्रवृत्त्यभावात् । यदि लोष्ट्रादेरयस्कान्ताभिसरणं स्यात् तदा तद्वत् स्तन्याभिगमनं बालानां द्रव्यस्वभावात् स्यादिति । अतएवात्मा नित्यः ।

तत्राहुर्नास्तिकाः । ननु पूर्व्वजन्मनि यो विगतराग आसीत्तस्य पुनर्जन्मनि कथं स्तन्यादौ प्रवृत्तिः स्यादभिलाषाभावादिति ।

तत्राह—वीतरागजन्मादर्शनात् । विगतरागस्य पुनर्जन्म नास्तीति दृश्नाऽत्रायसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् । सरागस्यैव पुनर्जन्मनि भवतीति प्रेत्याहाराभ्यासकृतस्तन्याभिलाषः ।

अत्राहुर्नास्तिकाः । सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः । यथा सगुणस्य गुणसहितस्यैवाकाशादेर्घटादेश्च द्रव्यस्योत्पत्तिस्तथा नित्यचैतन्यबुद्धिमत एवात्मनो रागविगमेऽपि सह रागेणैव भवत्युत्पत्तिः ।

अत्रास्तिक आह । न सङ्कल्पनिमित्तत्वाद्रागादीनाम् । सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिर्न । कस्मात् ? सङ्कल्पनिमित्तत्वाद्रागादीनाम् । आत्मनो नित्यरागादीनां कारणभूतानां नाशमन्तरेण न वाञ्छादिरूपरागादिनाशः स्यादतो वीतरागस्य जन्माभावात् । वीतरागजनस्य स्तन्यादौ वाञ्छादयो न स्युः स्तन्यादावभिलाषजनकानां रागादीनां मनःसङ्कल्पनिमित्तत्वादिति ।

नास्तिकानामात्मनोऽनित्यत्ववादनिरासे सति सात्मनो नित्यत्वे सिद्धे चेयमाशङ्का भवति । निर्व्विकारः परस्त्वात्मेति यदुक्तं तद्द दुःखरूपविकाराभावे कथ-

मात्मनो लिङ्गानि ज्ञानेच्छाद्वेषसुखदुःखानि भवन्ति। बुद्ध्यादिसमयोगात् सुखं बुद्ध्यादिविषमयोगाद् दुःखमिति सत्त्वशरीराश्रये सुखदुःखे आरोग्यानारोग्ये पूर्व्वमभिहिते। यदि दुःखमपि बुद्ध्यादिविषमयोगैरात्मन एव जायते इत्यात्मगुण एव सुखञ्चात्मगुण एव बुद्ध्यादेरिवोच्यते, तदा निर्व्विकारत्वमात्मनो नोपपद्यत इत्यत आह—"द्रष्टा पश्यति हि क्रियाः" इति। सुखदुःखाश्रयौ भूतात्मा जीवात्माऽसौ ताभ्यां परः श्रेष्ठस्त्वव्यक्तमात्मा क्षेत्रज्ञः सत्त्वशरीराभ्याञ्च परो भिन्नो निर्व्विकारः स हि सत्त्वभूतगुणेन्द्रियैश्चैतन्ये कारणं नित्य. स हि द्रष्टा न क्रियाफलभोक्ता क्रिया हि पश्यति।

यथोक्तमाथर्व्वणिकमण्डूकोपनिषदि। "द्वा सुपर्णा सयुजा सखाया समानवृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति। समानवृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः।"

इति श्लोकद्वयं व्याख्यायते यथा। द्वा द्वौ सुपर्णा सुपर्णौ सयुजा सयुजौ सखाया सखायौ एवम्भूतौ सन्तौ समानमविशेषितमेकं वृक्षमिवोच्छेदसामान्याच्छरीरं वृक्षं परिषस्वजाते परिष्वक्तवन्तौ। अयं हि शरीरवृक्ष ऊर्द्ध्वमूलोऽधःशाख एषोऽश्वत्थः सनातन क्षेत्रसंज्ञः सर्व्वप्राणिकर्म्मफलाश्रयः। तं परिष्वक्तवन्तौ यौ तयोर्द्वयोर्मध्येऽन्य एकः प्रत्यगात्मा शरीरं वृक्षमाश्रितः पिप्पलं कर्म्मनिष्पन्नं सुखदुःखलक्षणं फलं स्वादु अनेकविचित्रवेदनास्वादनरूपं स्वादु अत्ति अश्नाति जागर्त्ति वैश्वानरः स्थूलं भुङ्क्ते स्वप्ने तैजसः प्रविविक्तं भुङ्क्ते सुषुप्तौ प्राज्ञो जीवात्मानन्दमात्रं भुङ्क्ते तेषां भोगमन्य एकः क्षेत्रज्ञः पश्यति। यो भूतात्मनोः प्रेरयिता क्रियासु ताभ्यां क्रियमाणक्रियां पश्यन् साक्षी स तु पिप्पलं नाश्नन्नभिचाकशीति पश्यत्येव। तत्रैवं सति समाने वृक्षे यथोक्ते शरीरे पुरुषो भोक्तृत्वावस्थः क्षेत्रज्ञ अविद्याकामकर्म्मफलभागाक्रान्तोऽलावुरिव सामुद्रे जले निमग्नोऽयमेवाहममुष्य पुत्रोऽस्य नप्ता कृशः स्थूलो गुणवान् निर्गुणः सुखी दुःखीत्येवं प्रत्ययः। क्वचित् समर्थोऽयं पुत्रो मम नष्टो मृता च भार्य्या किं मे जीवितेनेत्येवं दीनभावेन मुह्यमानोऽनीशतया शोचति सन्तप्यते। मुह्यमानोऽनेकैरनर्थप्रकारैरविवेकतया चिन्तामापन्नः। स एवम्भूतस्तिर्य्यङ्मनुष्यादियोनिषु अराजज्जरीभावमापन्नः कदाचिदनेकजन्मसु शुद्धधर्म्मसञ्चयनिमित्तं केनचित परमकारुणिकेन दर्शितयोगमार्गोऽहिंसासत्यव्रतब्रह्मचर्य्यसर्व्वत्यागशमदमादिसम्पन्नः समाहितात्मा

सन् जुष्टयनेकैर्योगमार्गैः कर्म्मभिश्च सेवितमन्यं स्वेतरं शिवं परमात्मानमीश्वरं पश्यति महिमानश्चास्येदं सर्व्वं यदा पश्यति तदा सर्व्वस्माच्छोकसागराद्वीतो भवति। रसो वै स इति। रसं ह्येवायं लब्ध्वानन्दी भवतीत्यर्थः।

एष भोक्ता भूतात्मा द्विविधः प्राज्ञश्च उक्तो माण्डूक्योपनिषदि वैश्वानर-तैजसभेदात्।

"अयमात्मा ब्रह्म, सोऽयमात्मा चतुष्पात्। तत्र जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुक् वैश्वानरः प्रथमः पादः। स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः। यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः। एष सर्व्वेश्वर एष सर्व्वज्ञ एषोऽन्तर्याम्येष योनिः सर्व्वस्य प्रभवाप्ययौ हि भूतानाम्। नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृष्ट-मव्यवहार्य्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते। स आत्मा स विज्ञेयः" इति।

नन्वयं वैश्वानरः किमात्मकः किं सप्ताङ्गश्चेति? उच्यते, यथोक्तं छान्दोग्योपनिषदि प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विरेते वैश्वानरमात्मानं श्रोतुं कैकेयमभ्याजग्मुः।

तानुवाच कैकेयः। औपमन्यव कं त्वमात्मानमुपास्स इति।

दिवमेव भगवो राजन्निति होवाच। एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यते। अत्स्यन्नं पश्यसि प्रियं भवत्यस्य ब्रह्मवर्च्चसं कुले, य एतमात्मानं वैश्वानरमुपास्ते। मूर्द्धा त्वेष आत्मन इति होवाच मूर्द्धा ते व्यपतिष्यद् यन्मां नागमिष्य इति।

अथ होवाच सत्ययज्ञं पौलुषिम्। प्राचीनयोग्य कं त्वमात्मानमुपास्स इति।

आदित्यमेव भगवो राजन्निति होवाच। एष वै विश्वरूप आत्मा वैश्वा-नरो यं त्वमात्मानमुपास्से तस्मात् तव बहु विश्वरूपं कुले दृश्यते। प्रवृत्तोऽश्वतरी रथो दासी निष्कोऽत्स्यन्नं पश्यसि प्रियं भवत्यस्य ब्रह्मवर्च्चसं कुले, य एतमेवात्मानं वैश्वानरमुपास्ते। चक्षुस्त्वेष आत्मन इति होवाच। अन्धो-ऽभविष्यद् यन्मां नागमिष्य इति।

अथ होवाचेन्द्रद्युम्नं भाल्लवेयम्। वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति।

वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथक् रथश्रेणयोऽनुयन्ति। अत्स्यन्नं पश्यसि प्रियं भवत्यस्य ब्रह्मवर्च्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच। प्राणस्तेऽउदक्रमिष्यद् यन्मां नागमिष्य इति।

अथ होवाच जनं शार्कराक्ष्यम्। शार्कराक्ष्य कं त्वमात्मानमुपास्स इति। आकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च। अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्च्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते. सन्देहस्त्वेष आत्मन इति होवाच सन्देहस्ते व्यशीर्य्यद् यन्मां नागमिष्य इति।

अथ होवाच बुडिलमाश्वतराश्विम्। वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति। अप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं रयिमान् पुष्टिमानसि। अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्च्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते वस्तिस्त्वेष आत्मन इति होवाच वस्तिस्ते व्यभेत्स्यद् यन्मां नागमिष्य इति।

अथ होवाचोद्दालकमारुणिम्। गौतम कं त्वमात्मानमुपास्स इति। पृथिवीमेव भगवो राजन्निति होवाच। एष वै प्रतिष्ठात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च। अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्च्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति।

तान् होवाच। एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ। यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्व्वेषु लोकेषु सर्व्वेषु भूतेषु सर्व्वेष्वात्मस्वन्नमत्ति। तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्य्यपचन आस्यमाहवनीयः" इति।

पञ्च भूतानि षडङ्गानि चक्षुर्मूर्द्धभेदेन तेजसो द्विधात्वात्। ऊनविंशतिमुखान्येकमङ्गानि समाहुः स्थूलदेहिनः सूक्ष्मदेहिनश्च। दशेन्द्रियं पञ्चप्राणमनोऽहङ्कारबुद्धिचित्तानि मुखानीति वैश्वानरो नाम भूतात्मा प्रथमः पादोऽस्याश्रयः शुक्रादिगतपञ्चभूतविकारात्मकं शरीरमिति।

एवं तैजस आत्मा। सूक्ष्मशरीरारम्भक आदिसर्गे सूक्ष्मपञ्चभूतात्मक-निरुक्तसप्ताङ्गनिरुक्तैकोनविंशतिमुखोऽतिविशुद्धत्वात्तैजसरूपो दिव्यनयनहृदयः स्वप्नस्थानस्तैजसो नाम भूतात्मा द्वितीयः पादः। सुप्ते खल्वस्मिन् वैश्वानरे आत्मनि तदेकोनविंशतिमुखः स्वप्ने कामान् कामयित्वा प्रविविक्तं विरक्ते तथाविधसुखदुःखं उपभुङ्क्ते पश्यति तु क्षेत्रज्ञस्तत्प्रविविक्तभागमिति। दशेन्द्रियाणीमानि खलु स्वस्वकार्य्याणि कृत्वा क्लान्तानि भूत्वा यदा विषयेभ्यो निवर्त्तन्ते मनसि लीयन्ते तदायं वैश्वानरः स्वपिति जागर्ति च मनोऽभ्यन्तरं प्राणाश्च पञ्चाग्निहोत्रविधाः। अस्मिंश्च तैजसे सुप्ते खल्वयं वैश्वानरः सुषुप्त उच्यते बाह्येन्द्रियाणि मनसि लीयन्ते सात्त्विकराजसतामसञ्च मनः प्राणादयोऽपि सर्व्वे प्रधाने आत्मनि लीयन्ते प्रधानं च महन्नाम त्रिधा तामसराजससात्त्विकभेदात्। तत्र तामसो राजसे लीयते राजसः सात्त्विके सात्त्विकस्तु महानव्यक्ताख्यस्यात्मनो मनश्चित्तमुच्यते तत्प्रधानविशिष्ट आत्माऽव्यक्ताख्यः परोऽसौ [illegible] परमात्मनि रसे तुरीये पादे सम्मीलिते शुद्धसत्त्वात्मकमहत्तत्त्वेन चेतसानन्दं भुङ्क्ते तत् क्षेत्रज्ञः पश्यतीत्यानन्दमयश्चेतोमुखः प्राज्ञस्तृतीयः पादः सुषुप्तिस्थानो रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति। सत्त्वं हि सुखयोगकृत्। अस्मिंश्च सर्व्वेषां लीनत्वाद् यन्न म्रियते पुमांस्तज्जन्मान्तरकर्म्मयोगेण प्रबुद्धस्य सर्व्वाणि तानि बाह्याभ्यन्तराणि पुनर्जायन्ते इत्यतोऽनेनायं वैश्वानरतैजसो भूतात्मानौ जीवन इति जीवात्मा महान् मनुनोक्तः। "यः करोति तु कर्म्माणि स भूतात्मोच्यते बुधैः। योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते॥ जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्व्वदेहिनाम्। येन वेदयते सर्व्वं सुखं दुःखं च जन्मसु॥ तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एव च। उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः॥ प्रशासितारं सर्व्वेषामणीयांसमणोरपि। रुक्माभं स्वप्नधीगम्यं विद्यात् तं पुरुषं परम्॥" अयमपि तृतीयपाद आत्मा भोक्तानन्दस्येति। भोक्ता त्रिविध उच्यते यच्चेदं सुखं स्वस्थस्य शारीरधातुसाम्याज्जायते तत् सुखसंज्ञमारोग्यमानन्त्यं यच्च समाधिसुषुप्त्या जायते शुद्धसत्त्वयोगेन सर्व्वेषामेवैकविध आनन्दः। आनन्दहेतुपरमात्मप्राप्तित-स्तान्नित्यं सुखमुच्यते।

अत एवोक्तं कठवल्ल्याम्। "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" इति। लोके

वायुः पित्तं कफश्चोक्तः शारीरो दोषसंग्रहः।
मानसः पुनरुद्दिष्टो रजश्च तम एव च॥

गुहां त्रिगुणसाम्यलक्षणां प्रकृतिं प्रविष्टौ द्वौ क्षेत्रज्ञजीवात्मानौ क्षेत्रज्ञमहान्तौ सुकृतस्य स्वस्वकृतस्य कर्म्मणः परमे परार्द्धे काले सर्व्वेषां प्राकृतप्रलयेऽस्मिन्नादित्ये नारायणे ब्रह्मणि लये नारायणस्याव्यक्ते लये सत्कर्म्मणः फलं सुखमात्रम् ऋतं सत्यं पिबन्तौ नित्यानन्दं पिबन्तौ छायातपाविव ब्रह्मविदो वदन्तीत्यर्थः। एतेनात्मनः प्रतिबिम्बो जीव आत्मेति यदाहुस्तन्महत्तत्त्वातिरिक्तो न दृश्यते कश्चिद्भाव इति।

नन्वेवम्भूतात्मन उपभोगं पश्यतीति द्रष्टा क्षेत्रज्ञः किमन्याश्च क्रिया या भूतात्मा करोति ता न पश्यति, न पश्यति चेत् साक्षी न भवतीत्यतो द्रष्टृत्वं विवृणोति। पश्यति हि क्रिया इति।

चेतनेन स्वेन चेतितस्तु भूतात्मा यां यां क्रियां करोति ताः सर्व्वाः क्रिया यस्मात् पश्यति तस्मादात्मा क्षेत्रज्ञो द्रष्टा। निद्रावस्थायामु हि जागर्त्ति तस्मात् सुषुप्तावपि यदानन्दमुपभुङ्क्ते महता चेतसाऽव्यक्तात्मा तदुपभोगक्रियामप्येष पश्यतीति सर्व्वदर्शी। इत्थञ्चाव्यक्तस्थमहत्त्रिगुणमहदहङ्काराश्रयो मनोऽत्र मनःशब्देन गृह्यते। सूक्ष्मस्थूलभूतास्यभूतात्माश्रयः सर्व्व एव सङ्घातरूपो देहः शरीरशब्देनोच्यते। तत्र मनसि शरीरे चारोग्यानारोग्यं सुखदुःखमिति तत्त्वम्॥ २८॥

गङ्गाधरः—अथ रोगारोग्ययोः संग्रहेण हेतुनाश्रयमनाश्रयञ्चोपदिश्य प्रकृतिभूतः शारीरो मानसश्च रोगो निर्दिश्यते। लक्षणतस्तूपदेक्ष्यते महाचतुष्पादेऽध्याये। वायुरित्यादि।—वायुः शरीरारम्भकेषु पञ्चसु भूतेषु यद् द्वितीयं भूतं, तत्परिणामविशेषः स एव। पित्तं तृतीयं भूतं, शरीरारम्भकतेजःप्रधानपञ्चभूतविकारात्मकं तेजःस्वरूपमग्निसंज्ञम्। कफश्चतुर्थ भूतमापः शरीरारम्भकसोमप्रधानपञ्चभूतविकारविशेषः। व्याधिप्रकरणाद्विपमत्वेनैवाग्रेषां ग्रहणम्।

चक्रपाणिः—सम्प्रति विकाराश्रयं तथा विकारस्य व्यवहितञ्च हेतुमभिधाय प्रत्यासन्नं दोषरूपहेतुमाह, वायुरित्यादि।—अत्र प्रधानत्वादग्रे वायुरुक्तः, प्राधान्यञ्चाशुभूरिदारुणरोगकर्तृत्वात्, वचनं हि "आशुकारी मुहुश्चारी," तथा "अशीतिं वातजान् विकारान्, चत्वारिंशत् पित्तविकारान्, विंशतिञ्च कफजान्"। वक्ष्यति हि महारोगाध्याये "वातमनु पित्तं प्रधानं

प्रशाम्यत्यौषधैः पूर्व्वो दैवयुक्तिव्यपाश्रयैः।
मानसो ज्ञानविज्ञान-धैर्य्यस्मृतिसमाधिभिः॥ २६॥

विकारो धातुवैषम्यमित्युक्तेः। तथा च विषमो वायुः पित्तञ्च विषमं विषमश्च कफ इति त्रिविधः शारीरो दोषसंग्रहः। शरीरदूषणशीलत्वाच्छारीरदोष एष संग्रहेण उद्दिष्टः। पञ्चात्मा हि वायुः पञ्चात्मकं पित्तं पञ्चात्मा कफ इति बहुत्वेऽपि वायुपित्तकफत्वसामान्यात् संग्रह इति। शरीरन्तु चेतनाधिष्ठानभूतं पञ्चमहाभूतविकारसमुदायात्मकम्। तच्च सेन्द्रियं निरिन्द्रियञ्च द्विविधमपि वेदाधिकरणत्वात् सेन्द्रियमत्र ग्राह्यम्। एतेन यतो विषमा वायुपित्तकफा वातपित्तकफत्वग्रसरक्तमांसमेदोऽस्थिमज्जशुक्र-वसालसीकौजोरजःस्तन्यमूत्रपुरीषादयो यावन्तो धातवः सन्ति शरीरे तावद्धातुदूषका भवन्ति न तु समास्तस्माच्छारीरदोषसंज्ञकाः।

मानसः पुनर्दोषसंग्रहो रजश्च तमश्च च, न तु सत्त्वं शरीरत्वग्रसादिवत् मनोदूषणशीलत्वान्मानसदोषः संग्रहणोद्दिष्ट इत्यर्थः। मनस्त्वाहङ्कारिक-विकृतसत्त्वगुणप्रधानत्रिगुणविकारसमुदायात्मकं चेतनाधिष्ठानभूतमहदहङ्काराश्रयः। एतेन सत्त्वरजस्तमांसीति त्रयो गुणाः समविषमरूपेणाव्यक्तमहद-हङ्कारमनसां प्रकृतिभूतधातवो मनसि वर्त्तन्ते तेषां दूषको यतो रजस्तमोगुणौ विषमत्वेव भवतः न तु समौ तस्मान्मानसदोषसंज्ञकौ, मनस आरम्भकौ ह्याहङ्कारिकौ रजस्तमोगुणौ मनसि वर्त्तेते; यथा शरीरस्य भूतान्यारम्भकाणि शरीरे वर्त्तन्ते। समत्वे तु विधानधारणपोषणैः शरीरमनसोः क्रमाद्धातु-र्वातादिश्च रजस्तमश्चेति।

तत्र वा गतिगन्धनयोरिति धातोरुण् कृद्योगे वायुः। तप सन्तापे इति कर्त्तरि क्तप्रत्ययः, संज्ञायां वर्णागमविपर्य्ययाभ्यां पृषोदरादित्वात् पित्तमिति

शरीरमूलभूताग्निहेतुत्वात् तथा कफाधिकविकारकारित्वात् तथा कफापेक्षया चाशुकारित्वात्। असमासकरणन्तु पृथगपि वाय्वादीनां रोगकर्तृत्वोपदर्शनार्थम्। शारीर इति मानसदोष-व्यवच्छेदार्थं, संग्रह इति "द्व्युल्वणैकोल्वणैः षट् स्युर्हीनमध्यादिकैश्च षट्" इत्यादि वक्ष्यमाण-प्रपञ्चस्य संक्षेपः। ननु शोणितस्यापि दोषत्वात्तत्र संग्रहः स्यात्, यतो रक्तस्यापि वातादिवद्विशिष्टहेतुलक्षणविकारचिकित्सितनिर्देशः कृतः; तत्र हेतुनिर्देशो यथा—"काले चानवसेचनात्" इत्यादि; लक्षणञ्च यथा—"तपनीयेन्द्रगोपाभं पद्मालक्तकसन्निभम्" इत्यादि; रक्तविकाराश्च रक्तार्शः-प्रदर-रक्तपित्तादय उक्ताः; उपक्रमश्च "स्रावणं शोणितस्य तु" इत्यादिनोक्तः;

रूपसिद्धिः । कफ इति कफ दानश्लाघाहिंसासु तौदादिको हिंसार्थे संज्ञायामच् कश्चादेरिति कफः । एषां शारीरमानसानां पञ्चानां वातादीनां दोषत्वं, दूषेः कर्त्तरि अचप्रत्ययात्, साक्षाद् दूषणं वृद्धिह्रासलक्षणं स्वभावसंसिद्धं रसादीनां सत्त्वादीनाञ्च तैर्दूष्यत्वं स्वभावसंसिद्धं न तु दूषकत्वम् । शारीरमानसपदाभ्यां वाग्हेत्वहिताहार देश-कालाभिचाराभिशापाभिध्यानाभिषङ्गादीनां साक्षाद्-दूषकाणां व्यवच्छेदः । साक्षात्पदेनायोगादियुक्तप्रज्ञायाः शारीरत्वेऽपि मानसत्वेऽपि च साक्षाद् दूषणकर्त्तृत्वाभावान्न दोषत्वम् । अयोगादियुक्ता प्रज्ञा हि वाङ्मनःशरीराणामयोगादियोगेषु कारणं, तानि चायोगादियुक्तया प्रवर्त्तयन्ति अहिताहारविहारावसात्म्येन्द्रियार्थसंयोगञ्च जनयन्ति । ते च वातादीन् रसादीन् सत्त्वं रजस्तमश्च दूषयन्तीति परम्परया दूषणकर्त्तृत्वादिति, ततो वाग्हेतवः प्रज्ञापराधाश्च दोषा अपि शारीरत्वमानसत्वविरहान्न दोषसंज्ञयाभिधीयन्ते । एवं रसादिसत्त्वादिधातूनां क्षयवृद्धिमतां वातादिसाक्षाद् दूषकत्वेऽपि न दोषत्वं रसादिसत्त्वादिक्षयवृद्धिर्वातादिनियतहेतुभिः पूर्वं वातादीनां दूषणं क्रियते तैश्च दूषितवातादिभिस्तद्धेतुर्वातादिनियतशक्त्या रसादयो वर्द्धयन्ते वा क्षाप्यन्ते, ततः शारीराणामेकत्रवृत्त्या परस्परसम्बन्धात् तु यद्यपि दोषदूषकत्वं क्षीणवृद्धरसादीनां तत्र साक्षाद् दूषणकर्त्तृत्वम् । कर्त्ता हि स्वतन्त्रः । स्वेतराप्रयोज्यत्वे सति स्वेतरप्रयोजकत्वं स्वातन्त्र्यं, तत्र वातादेर्वाग्हेतुतो वैषम्य रसादिदूषणे स्वेतराप्रयोज्यत्वमस्त्येवेति नातिप्रसङ्गः । "पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः । वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत् ॥" इति चेत् ? तत्रायमभिसन्धिः कार्य्यः—पित्तकफयोर्दूष्यदूषणे वातस्य न प्रयोजकत्वं, तयोरपि पाञ्चभौतिकत्वेन सक्रियत्वात् परन्तु पङ्गुत्वं वातापेक्षया । वातस्य वा विषमस्य समानां वा विषमाणां चालकत्वस्वभावात् । यथा झञ्झा वायुः

तथा दोषसंज्ञा च चरके कृता ; यदुक्तं "कफे वाते जितप्राये पित्तं शोणितमेव वा । यदि कुप्यति वातस्य क्रियमाणे चिकित्सिते । यथास्वमस्य दोषस्य तत्र कार्य्यं भिषग्जितम्" इति । तथा च तन्त्रान्तरेऽपि शल्ये शोणितं दोषत्वेनोक्तं, "तैस्तैः शोणितचतुर्थैः" इति वचनात् । नैवं, दोषे हि स्वतन्त्रदूषणात्मक उच्यते यतो न वातादयो वृद्धाः किञ्चिदपेक्ष्य दूषयन्ति किन्तु स्वत एव, शोणितन्तु दुष्टवातादिसंसर्गमपेक्ष्यैव दूषकं भवति, न हि शोणितं विकृतवातादिसम्बन्धमन्तरेण विकृतं स्यात् सर्व्वदा वातादिजनकैरेव शोणितदुष्टेः, तथा सर्व्वदा वातादिलक्षणयुक्तस्यैव शोणितस्य दुष्टत्वात् ;यश्च हेत्वादिविशेष उक्तः स वातादियुक्तस्यैव शोणितस्य स्यात् , एतेन वातादय एव तत्रापि दूषणात्मकाः । शोणितन्तु स्वप्रमाणातिरिक्तमपि दूष्यमेव, न च दूष्यस्य हेत्वादयो विशिष्टा

पुरुषानपि चालयति। एतेन स्वातन्त्र्येण दूषकत्वं दोषत्वमित्यत्र स्वातन्त्र्यं दोषान्तरानिरपेक्षत्वं चेत्? तदा वातस्य दोषत्वं पित्तकफयोर्वातापेक्षयाऽदोषत्वमिति यद्दूषणं हेत्वन्तरानिरपेक्षत्वञ्चेत् तदा वातस्यापि न दोषत्वं स्यात् बाह्यहेत्वपेक्षत्वादित्यपि यद्दूषणं तदपास्तं, किन्तु बाह्यहेतूनां प्रज्ञापराधस्य च स्वातन्त्र्येण दूषकत्वाद्दोषत्वापत्त्या तद्दूषणं भवतीति बोध्यम्।

एतद्दोषपरिहारायान्ये तु "प्रकृत्यारम्भकत्वे सति दूषकत्वं दोषत्वं।" रसादिसत्त्वगुणादिधातुवारणाय तथा बाह्यहेत्वहिताहारविहारादीनां वारणाय च प्रकृत्यारम्भकेति पदं, न हि वातादिप्रकृतिकपुरुषवद्रसरक्तादिप्रकृतिः पुरुषोऽस्तीति। दूषकत्वमिति पदन्तु पाञ्चभौतिकप्रकृतिवादिमते भूम्याकाशयोः स्वमते सत्त्वगुणस्य च वारणार्थं, दूषकत्वाभावादेषाम्। ये तु रक्तस्यापि वातपित्तकफानामिव स्थानाशयचय-प्रकोप-प्रसरस्थानसंश्रय-प्रकोपणनिर्हरण प्रशमनसाधर्म्यात् दोषत्वमिच्छन्ति तदनेन निरस्तम्। "यस्माद्रक्तं विना दोषैर्न कदाचित् प्रकुप्यति। तस्मात् तस्य यथादोषं कालं विद्यात् प्रकोपणे॥" इति सुश्रुतवचनेन दोषातिरिक्तत्वदर्शनादिति, "दोषाः कदाचिदेकशो द्विशः समस्ताः शोणितसहिता वानेकधा प्रसरन्ति" इति वचनाच्च। सुश्रुतेनाप्यस्य व्रणप्रश्नाध्याये "वातपित्तश्लेष्माण एव देहसम्भवहेतवस्तैरेवाव्यापन्नैरधोमध्योर्द्ध्वसन्निविष्टैः शरीरमिदं धार्यतेऽगारमिव स्थूणाभिस्तिसृभिरतश्च त्रिस्थूणमाहुरेके। त एव च व्यापन्नाः प्रलयहेतवस्तदेभिरेव शोणितचतुर्थैः सम्भवस्थितिप्रलयेष्वप्यविरहितं शरीरं भवति। भवति चात्र। नर्ते देहः कफादस्ति न पित्तान्न च मारुतात्। शोणितादपि वा नित्यं देह एतैस्तु धार्यते॥" इति।

तथा दोषधातुमलवृद्धिक्षयविज्ञानीयेऽपि "दोषधातुमलमूलं हि शरीरं, तस्मादेतेषां लक्षणमुच्यमानमुपधारय। तत्र प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति। रागपक्त्योजस्तेजोमेधोष्मकृत्

न भवन्ति, यतो मांसादीनामपि हेत्वादिविशेषोऽस्ति, मांसदुष्टौ "मांसवाहीनि दुष्यन्ति भुक्त्वा च स्वपतो दिवा" इत्यादि वक्ष्यति। मांसदुष्टिलक्षणं "शृणु मांसप्रदोषजान्" इत्यादिना विविधाशितपीतीये वक्ष्यति यान् विकारांस्ते ज्ञेयाः; यत एतानेव मांसदोषविकारान् स्रोतोविमाने मांसदुष्टिलक्षणत्वेनातिदेशादभिधास्यति। दुष्टमांसविकारश्चापि मांसान्युद्धृत्य उक्ताः; उपक्रमश्च "मांसजानान्तु संशुद्धिः शस्त्रक्षाराग्निकर्म्म च" इत्युक्तः,

पित्तं पञ्चधा प्रविभक्तमग्निकर्म्मणानुग्रहं करोति। सन्धिसंश्लेषणस्नेहनरोपण-बलस्थैर्य्यकृच्च श्लेष्मा पञ्चधा प्रविभक्त उदककर्म्मणाऽनुग्रहं करोति। रसः प्रीणयति तुष्टिं रक्तपुष्टिञ्च करोति। रक्तं वर्णप्रसादं मांसपुष्टिं जीवयति च। मांसं शरीरपुष्टिं मेदसश्च। मेदः स्नेहस्वेदौ दृढत्वं पुष्टिमस्थ्नाञ्च। अस्थि देहधारणं मज्ज्ञः पुष्टिञ्च। मज्जा प्रीतिं स्नेहं बलं शुक्रपुष्टिं पूरणमस्थ्नाञ्च करोति। शुक्रं धैर्य्यं च्यवनं प्रीतिं देहबलं हर्षं बीजार्थञ्च। पुरीषमुपष्टम्भं वाय्वग्नि-धारणञ्च। वस्तिपूरणविक्लेदकृन्मूत्रम्। स्वेदः क्लेदत्वक्सौकुमार्य्यकृत्। रक्तलक्षणमार्त्तवं गर्भकृच्च। गर्भो गर्भलक्षणम्। स्तन्यं स्तनयोरापीनत्वजननं जीवनञ्चेति। तेषां विधिवत् परिरक्षणं कुर्वीत" इति।

एषां वातादीनां रसादीनाञ्च क्षयवृद्धिभ्यां हृत्पीडादिहृल्लासोत्क्लेशादि यद् भवति तदपि वातादिदूषितरसादिभिः क्रियते न तु वातादिदूषणमन्तरेण। रसरक्तजत्वादिना व्यपदेशस्तु स्नेहदहनेन दग्धे स्नेहदग्धवदित्यस्य च दर्शनाद्वा ते हि वातादीनां शरीरादिदूषणेन प्रशंसायां शरीरादिधारणादिना च प्रशंसायां दोषसंज्ञा न त्वप्रशंसायां दोषसंज्ञा प्रशंसायां धातुसंज्ञाचार्य्याणामभिमतेति प्रभाषन्ते। अत्र वयं ब्रूमहे — अत्र वचने वातादीनां प्रकरणात् वैषम्यलक्षणे दोषे लब्धे तेन एव दोषसंज्ञानुभवसिद्धा स्यात् प्रकृत्यारम्भकत्वे तु नानुभवसिद्धा भवति।

अथ प्रकरणमत्र रोगारोग्ययोः, तेन विषमवातादीनां रोगत्वात् समवातादीनामारोग्यत्वात् प्रकरणसिद्धैव प्रकृत्यारम्भकत्वदूषकत्वयोर्दोषसंज्ञेति चेन्न, "प्रशाम्यत्यौषधैः पूर्व्वः" इत्यादिवक्ष्यमाणवचनेन रोगप्रशमनस्योक्त्या विषमवातादीनामेव दोषसंज्ञाख्यापनात्। तत्र हि पूर्व्व इति शब्देनात्रोक्तरोगारोग्यपर-शरीरदोषवातादिन सम्भाव्यते। यदि तत्र पूर्व्व इति शब्देन "शरीरं सत्त्वसंज्ञञ्च व्याधीनामाश्रयो मतः" इत्यत्रोक्तशरीराश्रितो रोग उच्यते, तदात्र शारीरमानसव्याधीनामेतदध्यायादिचतुरध्यायैः पृथक् पुनः प्रशमनहेतूपदेशस्यैव पृथक्प्रकरणेनोपदेशस्यावश्यकर्त्तव्यत्वापत्तिः स्यात्। तस्मादत्र दोषशब्दः शरीरमनोऽन्यतरदूषके यौगिकवृत्त्या सङ्केतितः कृत इत्येवमनुभूयतेऽन्यत्रापि

तस्माद् दूष्यविकारे दोषकृते कार्य्ये दूष्येण व्यपदेशः, रक्तजोऽयं मांसजोऽयमित्यादि, यथा— स्नेहाधारेण वह्निना दग्धे स्नेहदग्ध इति व्यपदेशः। दोषसंज्ञा तु पीडाकर्तृत्वसामान्याद् दूष्येऽपि स्यात्, यथा—"स्वयं प्रवृत्तं तं दोषमुपेक्षेत हिताशनैः" इत्यत्र पुरीषमेव दोषत्वेनोक्तम्। सुश्रुते तु शोणितस्य दोषत्वं, व्रणेषु प्रायः शोणितदुष्टिदर्शनादुपचरितमेवोक्तं ; यतः [illegible]

साम्यावस्थानां वातादीनां शरीरमनोऽन्यतरादूषकत्वदशायामपि वैषम्यावस्थानां शरीरमनोऽन्यतरदूषणशीलत्वेन दोषसंज्ञानपायानहत्वात् लाघवाच्च। प्रकृत्यारम्भकत्वनिवेशेन भवतां गौरवात्। अन्यथा प्रकृत्यारम्भकत्वेन समवातपित्तकफानामेव मिलितानां प्रत्येकशो व्यभिचारादिति। एष च दोषलक्षणव्याध्युपदेशः सर्व्वेषां विशिष्टानां शारीराणां ज्वरादीनां वातादिवैषम्यनिमित्तत्वात् मानसानां कामक्रोधमदमानेर्ष्यादीनां रजस्तमोवैषम्यनिमित्तकत्वाद् वातादीनां रजस्तमसोश्च वैषम्यप्रशमेनैव प्रशमनख्यापनार्थः सूत्ररूपत्वेनागन्तुजव्याधीनामप्युत्तरकालं यथास्वदोषसम्बन्धात् तद्दोषजनकनिदानपरिवर्ज्जनपूर्व्वकतद्दोषप्रशमनेनैव प्रशमनादिति।

स्वरूपतो रोगद्वयमुपदिश्य तयोः पृथक् प्रशमनहेतुनाह—प्रशाम्यतीत्यादि। अत्र प्रशमनं न "न शोधयति यद्दोषान् समान् नोदीरयत्यपि। समीकरोति च क्रुद्धान् तत् संशमनमुच्यते"॥ इतिलक्षणं संशमनम्। परन्तु संशोधनसंशमनादियावता येन साम्यावस्था स्यात् तत्साम्यावस्थाजनकं प्रशमनम्। औषधैरिति यथोक्तगुणवद्भिभिषग्द्रव्योपस्थातृरोगिरूपैयुक्तियुक्तैः। पूर्व्व इति शारीरमानसदोषत्वेनोक्तयोर्मध्ये यः पूर्व्वमुक्तः शारीरदोषो विषमवातपित्तकफरूपस्तन्निमित्तकज्वरादीनां तत्प्रशमनेनैव प्रशमनात् न तु शरीराश्रितः। दैवयुक्तिव्यपाश्रयैरिति दैवं भागधेयं तेन द्वारेण व्यपाश्रयाणि विशेषेण अप व्याधीनां वर्ज्जनमाश्रयन्ति यानि तैरौषधैर्मङ्गलदानस्वस्त्ययनादिरूपैरित्यर्थः। अस्य पूर्व्वाभिधानं दैवमेवाधर्म्माख्यमशुभकारणं; धर्म्माख्यं तद्विपर्य्ययात् शुभकारणमिति ख्यापनार्थम्। तस्य च व्याधिप्रशमकत्वात्। युक्तिर्योजना दोषदूष्यमाणदेशकालवयोऽग्निबलप्रकृत्याद्यनुरूपेण क्वथितादिकल्पनभक्षणमानादिभिः प्रयोगस्तेन द्वारेण विशेषेण अप व्याधीनां वर्ज्जनमाश्रयन्ति यानि तैरौषधैः संशोधनसंशमनदेशकालैरित्यर्थः। एतेन द्विविधमौषधं शारीररोगाणामुक्तं भवति—दैवव्यपाश्रयं युक्तिव्यपाश्रयञ्च। तत्राद्यं बलिमङ्गलदानस्वस्त्ययनदेवभूदेवगुरुसिद्धवृद्धाद्यर्च्चनादिरूपम्; यच्च कर्म्म दैवमुत्पादयद्दोषवैषम्यं नाशयद्दोषसाम्यं जनयति। अन्त्यं लङ्घनं कषायचूर्णगुडिकादिकञ्च अद्रव्यद्रव्यभूतम्, यच्च शरीरे योगमुपपद्य दोषवैषम्यं नाशयद्दोषसाम्यं

पणप्रश्च वातादयस्त्रय एव तथाप्युक्तः "वातपित्तश्लेष्माण एव देहसम्भवहेतवो भवन्ति" इत्यादिना; किञ्च यदि शोणितं दोषः स्यात्, तदा वातादिवत् प्रकृत्यारम्भकं स्यात्, न चारभते तस्मात् त्रय एव दोषा इति सिद्धम्। मानसदोषमाह—मानसः पुनरित्यादि। पुनःशब्दो-

जनयति। यदि च तत्र बलिमङ्गलादीनि दैवजनकानि कर्म्माण्यङ्गवैगुण्यादेवं न जनयितुं शक्नुवन्ति, न तदा व्याधिमपि शमयन्ति। एवं लङ्घनकषायादीनि यदि दोषाद्यनुरूपेण शरीरे युक्तानि न भवन्ति, तदा व्याधिमपि न शमयन्ति इति बोध्यम्। व्यपाश्रयपदेन कालबुद्धीन्द्रियार्थानामयोगादिकारणवर्ज्जनं ज्ञापितं, न हि कारणासेवने सति विशेषेण व्याधीनां वर्ज्जनं भवति।

मानस इति सत्त्वसंज्ञाश्रयो व्याधिर्मानसदोषलक्षणरजस्तमोगुणस्तन्नाशेन तज्जनितकामादीनामपि नाशात् ज्ञान-विज्ञान-धैर्य्य-स्मृति-समाधिभिरौषधैः प्रशाम्यति। ज्ञानं बुद्धिः सा च कर्त्तव्याकर्त्तव्यहिताहितेषु तत्त्वेन समदर्शिनी। प्रबुध्यन्ते हि लोके लोकैरध्यात्मतत्त्वपुराणेतिहासादिशास्त्रवाक्यादिश्रवणपठनादिज्ञानैः कर्त्तव्याकर्त्तव्यहिताहितानि। विज्ञानं सदेवैकं ब्रह्म व जगदिदमसत्यमिति तत्त्वावबोधो, न तु मोक्षे धीर्ज्ञानं, शिल्पशास्त्रयोर्ज्ञानं विज्ञानमिति। धैर्य्यं धृतिर्मनसो विषयप्रवणस्य नियमनहेतुर्बुद्धिः, स्मृतिस्तत्त्वेनानुभूतार्थस्मरणम्, अनुभूतविषयासम्प्रमोषः। समाधिर्योगश्चित्तवृत्तिनिरोधस्तदा द्रष्टुः स्वरूपेऽवस्थानं, तत्र ध्यानधारणयोरेकीभावः समाधिः।

ननु वातादिवैषम्यनाशेन कथं तज्जनितानां व्याधीनां नाशः सम्भवति? विषमवातादयो हि रोगाणां समवायिहेतवो भवन्ति, न हि समवायिहेतुनाशेन कार्य्यनाशः, यथा कपालमालानाशात् न घटनाशः स्यात्। यदि च निमित्तकारणानि भवन्ति तदा कथं वातादिजनितव्याधौ संशोधनेन दोषनिर्हरणमुपदिश्यते, न हि कुलालसूत्रदण्डचक्रादिनाशेन घटनाशः स्यादिति—अत्रोच्यते कैश्चित्। "आधारभूतनिमित्तकारणनाशात् नियमतः कार्य्यनाशः सम्पद्यते यथा जलपङ्कनाशात् पद्मकुमुदादिनाशो यथा च वर्त्तितैलक्षयाद्दीपक्षयः" इति। आधारभूतनिमित्तकारणमेव विषमदोषः, स्वयं हि वक्ष्यते "स्वधातुवैषम्यनिमित्तजा ये विकारसङ्घा बहवः शरीरे। न ते पृथक् पित्तकफानिलेभ्य आगन्तवस्ते तु ततो विशिष्टाः॥" इति। तन्न सङ्गच्छते। पित्तकफानिलेभ्यो न ते पृथगिति वचनेन विषमपित्ताद्यात्मकत्वं विशिष्टव्याधीनां ज्ञापितं, तेन समवायिहेतुत्वमेव विषमदोषाणां लभ्यते, न तु निमित्तकारणत्वं, यथा न हि मृत्कनकादिः स्वस्वपर्य्यविकारेषु

उपधारणे, तेन मानस उद्दिष्ट एव परं न शारीरदोषवत् प्रपञ्चितः, मानसदोषाणामस्मिंस्तन्त्रे कायचिकित्साकल्पे प्रस्तावितत्वादिति भावः। आद्यौ रज उक्तं प्राधान्यात्, वचनं हि "नात्जस्कं तम," इति, पुष्पत्वेन सत्त्वाख्यगुणस्यादोषत्वमवधारयति, सत्त्वं ह्यविकारि।

घटादिषु निमित्तकारणं भवति ; भवति च गुणकर्म्माश्रयसमवायी हेतुरेव, एवं तेषां नाशाच्च तत्तन्मयविकारघटादिनाशो यथा भवति, तथा तद्विध-समवायिहेतुविषमवातादिनाशाच्च तत्तन्मयविकारज्वरादिकामादीनां नाशः सम्पद्यत एव ; न घटादौ कपालमालादिवदवयवलक्षणा विषमवातादयः, किन्तु प्रकृतिलक्षणमृदादिवत् क्रियागुणाश्रयाः समवायिहेतव एव, न तु कुलालादिपङ्कादितैलादिभ्योऽपृथग्घटादिपत्रादिदीपादयस्तस्मान्न निमित्त-कारणं वातादयः । वैषम्यनिमित्तेति निमित्तपदं कारणपर्य्यायो न तु निमित्त-कारणार्थं, तेन वैषम्यसमवायिजा विकारसङ्घा इत्यर्थः । 'असमवायिहेतु-नाशान्नियमेन कार्य्यनाशः स्यात्, यथा कपालमालासंयोगस्य कार्य्याणां समवायिकारणेष्वासन्नजनकलक्षणस्यासमवायिकारणस्य नाशाद्घटनाशः' इति यदुच्यते तत् प्रमादवचनं ; न ह्यस्ति सामान्यविशेषरूपद्रव्यगुणकर्म्मणाम् असमवायित्वं समवायिकारणत्वेनाभिहितत्वात् । न हि क्वापि गुणकर्म्मणी असमवायिनी कार्य्ययुक्ते । द्रव्याणि हि सजातीयद्रव्यमारभमाणानि कार्य्ये समवयन्ति, गुणाश्च सजातीयगुणमारभमाणाः कार्य्ये समवयन्ति, कर्म्माणि च सजातीयविजातीयकर्म्मारभमाणानि कार्य्ये समवयन्तीति समवायि-कारणानि । सामान्यविशेषरूपस्यैव समवायस्य सर्व्ववस्तुमेलककारणत्वं स्वरूपेणोक्तं, स च नासमवायी न समवायी स्वरूपेण कार्य्ये वृत्तित्वात्, स्वरूपसमवायीत्येवमुपपद्यते इति महर्षिभिर्हि गुणानां निश्चेष्टसमवायि-कारणत्वं न त्वसमवायिकारणत्वमिति समवायिनिमित्ताभ्यां नापरं कारण-मस्तीति बोध्यम् ।

ननु आगन्तुजानादिभिर्मानसदोषोपशमश्चेत्तदापस्मारादिषु कथं दैवयुक्ति-व्यपाश्रयभेषजमुपदिश्यते इति चेत् ? न, अपस्मारादेर्मानसव्याधित्वाभावात्, परन्तु शारीरदोषदूषितमनःसंश्रयत्वेन मनःशरीरदोषयोर्मध्ये शारीरदोष-जन्यत्वेन शारीरव्याधित्वात्, मनोऽपि हि शरीरान्तर्गतं श्रोत्रादीन्द्रियवत् । यद्वा कालार्थानियोगादिभिरिव वातादिभिर्मनोदोषरजस्तमसोर्दूषणात् तद्धेतु-वातादिप्रशमनार्थं दैवयुक्तिव्यपाश्रयभेषजमुपदिश्यते, यथा कामादिजज्वरादि

सम्प्रति दोषप्रशमकारणमाह प्रशाम्यतीत्यादि । पूर्व्व इति शारीरदोषग्रहणेन तज्जन्या व्याधयोऽपि गृह्यन्ते विकृतदोषात्तजन्यत्वात् व्याधीनाम् । दैवमदृष्टं तदाश्रित्य यद्रोगप्रतीकारं करोति तद्दैवव्यपाश्रयं बलिमन्त्रमङ्गलादि, एतच्च प्रथममुक्तं सद्योऽदृष्टेन च व्याधिप्रशमकत्वात् । युक्तिर्योजना, शरीरभेषजयोर्हितो यो योगस्तदपेक्ष संशोधनसंशमनादि युक्तिव्यपाश्रयमुच्यते ।

जनयति। यदि च तत्र बलिमङ्गलादीनि दैवजनकानि कर्म्माण्यङ्गवैगुण्यादैवं न जनयितुं शक्नुवन्ति, न तदा व्याधिमपि शमयन्ति। एवं लङ्घनकषायादीनि यदि दोषाद्यनुरूपेण शरीरे युक्तानि न भवन्ति, तदा व्याधिमपि न शमयन्ति इति बोध्यम्। व्यपाश्रयपदेन कालबुद्धीन्द्रियार्थानामयोगादिकारणवर्ज्जनं ज्ञापितं, न हि कारणासेवने सति विशेषेण व्याधीनां वर्ज्जनं भवति।

मानस इति सत्त्वसंज्ञाश्रयो व्याधिर्मानसदोषलक्षणरजस्तमोगुणस्तन्नाशेन तज्जनितकामादीनामपि नाशात् ज्ञान-विज्ञान-धैर्य्य-स्मृति-समाधिभिरौषधैः प्रशाम्यति। ज्ञानं बुद्धिः सा च कर्त्तव्याकर्त्तव्यहिताहितेषु तत्त्वेन समदर्शिनी। प्रबुध्यन्ते हि लोके लोकैरध्यात्मतत्त्वपुराणेतिहासादिशास्त्रवाक्यादिश्रवणपठनादिज्ञानैः कर्त्तव्याकर्त्तव्यहिताहितानि। विज्ञानं सदैवैकं ब्रह्म व जगदिदमसत्यमिति तत्त्वावबोधो, न तु मोक्षे धीर्ज्ञानं, शिल्पशास्त्रयोर्ज्ञानं विज्ञानमिति। धैर्य्यं धृतिर्मनसो विषयप्रवणस्य नियमनहेतुर्बुद्धिः, स्मृतिस्तत्त्वेनानुभूतार्थस्मरणम्, अनुभूतविषयासम्प्रमोषः। समाधिर्योगश्चित्तवृत्तिनिरोधस्तदा द्रष्टुः स्वरूपेऽवस्थानं, तत्र ध्यानधारणयोरेकीभावः समाधिः।

ननु वातादिवैषम्यनाशेन कथं तज्जनितानां व्याधीनां नाशः सम्भवति? विषमवातादयो हि रोगाणां समवायिहेतवो भवन्ति, न हि समवायिहेतुनाशेन कार्य्यनाशः, यथा कपालमाल्यानाशात् न घटनाशः स्यात्। यदि च निमित्तकारणानि भवन्ति तदा कथं वातादिजनितव्याधौ संशोधनेन दोषनिर्हरणमुपदिश्यते, न हि कुलालसूत्रदण्डचक्रादिनाशेन घटनाशः स्यादिति— अत्रोच्यते कैश्चित्। "आधारभूतनिमित्तकारणनाशात् नियमतः कार्य्यनाशः सम्पद्यते यथा जलपङ्कनाशात् पद्मकुमुदादिनाशो यथा च वर्त्तितैलक्षयाद्दीपक्षयः" इति। आधारभूतनिमित्तकारणमेव विषमदोषः, स्वयं हि वक्ष्यते "स्वधातुवैषम्यनिमित्तजा ये विकारसङ्घा बहवः शरीरे। न ते पृथक् पित्तकफानिलेभ्य आगन्तवस्ते तु ततो विशिष्टाः॥" इति। तन्न सङ्गच्छते। पित्तकफानिलेभ्यो न ते पृथगिति वचनेन विषमपित्ताद्यात्मकत्वं विशिष्टव्याधीनां ज्ञापितं, तेन समवायिहेतुत्वमेव विषमदोषाणां लभ्यते, न तु निमित्तकारणत्वं, यथा न हि मृत्कनकादिः स्वस्वमयविकारेषु

उद्धारणे, तेन मानस उद्दिष्ट एव परं न शारीरदोषवत् प्रपञ्चितः, मानसदोषाणामस्मिंस्तत्रे कायचिकित्सारूपे प्रस्ताविलत्वादिति भावः। आदौ रज उक्तं प्राधान्यात्, यचनं हि "तारजस्कं तमः" इति, एवशब्देन सत्त्वाख्यगुणस्यादोषत्वमवधारयति, सत्त्वं ह्यविकारि।

घटादिषु निमित्तकारणं भवति ; भवति च गुणकर्म्माश्रयसमवायी हेतुरेव, एवं तेषां नाशाच्च तत्तन्मयविकारघटादिनाशो यथा भवति, तथा तद्विधसमवायिहेतुविषमवातादिनाशाच्च तत्तन्मयविकारज्वरादिकामादीनां नाशः सम्पन्न एव ; न घटादौ कपालमालादिवदवयवलक्षणा विषमवातादयः, किन्तु प्रकृतिलक्षणमृदादिवत् क्रियागुणाश्रयाः समवायिहेतव एव, न तु कुलालादिपङ्कादितैलादिभ्योऽपृथग्घटादिपत्रादिदीपादयस्तस्मान्न निमित्तकारणं वातादयः। वैषम्यनिमित्तेति निमित्तपदं कारणपर्य्यायो न तु निमित्तकारणार्थं, तेन वैषम्यसमवायिजा विकारसङ्घा इत्यर्थः। 'असमवायिहेतुनाशान्नियमेन कार्य्यनाशः स्यात्, यथा कपालमालासंयोगस्य कार्य्याणां समवायिकारणेष्वासन्नजनकलक्षणस्यासमवायिकारणस्य नाशाद् घटनाशः' इति यदुच्यते तत् प्रमादवचनं ; न ह्यस्ति सामान्यविशेषरूपद्रव्यगुणकर्म्मणाम् असमवायित्वं समवायिकारणत्वेनाभिहितत्वात्। न हि क्वापि गुणकर्म्मणी असमवायिनी कार्य्ये प्रोक्ते। द्रव्याणि हि सजातीयद्रव्यमारभमाणानि कार्य्ये समवयन्ति, गुणाश्च सजातीयगुणमारभमाणाः कार्य्ये समवयन्ति, कर्म्माणि च सजातीयविजातीयकर्म्मारभमाणानि कार्य्ये समवयन्तीति समवायिकारणानि। सामान्यविशेषरूपस्यैव समवायस्य सर्व्ववस्तुसम्बन्धकारणत्वं स्वरूपेणोक्तं, स च नासमवायी न समवायी स्वरूपेण कार्य्ये वृत्तित्वात्, स्वरूपसमवायीत्येवमुपपद्यते इति महर्षिभिर्हि गुणानां नित्यं समवायिकारणत्वं न त्वसमवायिकारणत्वमिति समवायिनिमित्ताभ्यां नापरं कारणमस्तीति बोध्यम्।

ननु ज्ञानविज्ञानादिभिर्मानसदोषोपशमश्चेत् तदापस्मारादिषु कथं दैवयुक्तिव्यपाश्रयभेषजमुपदिश्यते इति चेत्? न, अपस्मारादेर्मानसव्याधित्वाभावात् परन्तु शारीरदोषदूषितमनःसंश्रयत्वेन मनःशरीरदोषगणमध्ये शारीरदोषजन्यत्वेन शारीरव्याधित्वात्, मनोऽपि हि शरीरान्तर्गतं श्रोत्रादीन्द्रियवत्। यद्वा कालार्थातियोगादिभिरिव वातादिभिर्मनोदोषरजस्तमसोर्दूषणात् तद्धेतुवातादिप्रशमनार्थं दैवयुक्तिव्यपाश्रयभेषजमुपदिश्यते, यथा कामादिजज्वरादि-

सम्प्रति दोषप्रशमकारणमाह प्रशाम्यतीत्यादि। पूर्व्व इति शारीरदोषग्रहणेन तज्जन्या व्याधयोऽपि गृह्यन्ते विकृतदोषादनन्यत्वाद् व्याधीनाम्। दैवमदृष्टं तदाश्रित्य यद्व्याधिप्रतीकारं करोति तद्दैवव्यपाश्रयं बलिमन्त्रमङ्गलादि, एतच्च प्रथममुक्तं सद्योऽक्लेशेन च व्याधिप्रशमकत्वात्। युक्तिर्योजना, शारीरभेषजयोर्हितो यो योगस्तदपेक्ष संशोधनसंशमनादि युक्तिव्यपाश्रयमुच्यते।

रुक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः।
विपरीतगुणैर्द्रव्यैर्मारुतः सम्प्रशाम्यति ॥

व्याधिप्रशमार्थं कामादिहरणं क्रोधादिभेषजमुपदिश्यते इति हेतुप्रत्यनीकत्व भेषजानामिति ॥ २९ ॥

गङ्गाधरः—अथ दैवयुक्तिव्यपाश्रयभेषजानां मध्ये दैवव्यपाश्रयभेषजानामचिन्त्यत्वेन तदुपदेशं न कृत्वा युक्तिव्यपाश्रयभेषजानां युक्त्यर्थं कल्पनोपायान् प्रकृतिभूतकारणरूपरोगाणां वातादीनां धर्म्मविज्ञानान्युपदिशति—रुक्ष इत्यादि। भूरिदारुणविकारकरणाद् वातादीनां पूर्व्वपूर्व्वाभिधानम्। रुक्षादीनाञ्च प्रशस्ततमत्वेन प्रागभिधानं, तेन दारुणत्वादयोऽपि गुणा बोध्याः। रुक्षत्वं शीतत्वं लघुत्वं सूक्ष्मत्वं वैशद्यं खरत्वञ्चोपदिष्टं गुणव्याख्यानेन। चलत्वन्तु अस्थिरत्वं तनो दारुणत्ववेगयोर्नाभिधानम्। अत्र वायोः शीतत्वं पूर्व्वभूतानुप्रवेशेन न महतो वायोरभिप्रायेणोक्तं, महतो वायोरनुष्णाशीतस्पर्शः। तत् केवलस्पर्शतन्मात्रवाय्वभिप्रायेण बोध्यमिति। शीतेन वायोर्वृद्धिरुष्णेन शीतशान्तिर्हि दृश्यते, दृश्यते च केवलवातारब्धव्याधौ शीतम्। इति रुक्षादिसप्तगुणो मारुतो विपरीतगुणैर्द्रव्यैरिति गुणशब्दोऽत्राप्रधानवाची, तेन सहजगुणतो वा रसतो वा वीर्य्यतो वा विपाकतो वा प्रभावतो वा रुक्षादिसप्तगुणविपर्य्ययैः स्निग्धोष्णगुरुस्थूलमृदुपिच्छिलश्लक्ष्णैः सप्त गुणा एव न त्वन्ये च एत च येषां तैर्द्रव्यैः सम्प्रशाम्यति। सम्यक् शीघ्रं प्रशाम्यति यावद् गुणैः क्षीणस्तावद्गुणैस्तद्गुणविपर्य्ययद्रव्यैर्हि नोऽतिक्षीणो भवति समस्तु क्षीणो भवति वृद्धश्च समो भवतीति। सुश्रुतेनाप्युक्तम्। "अव्यक्तो व्यक्तकर्म्मा च रुक्षः शीतो

ज्ञानमध्यात्मज्ञानं, विज्ञानं शास्त्रज्ञानं, धैर्य्यमनुन्नतिश्चेतसः, स्मृतिरनुभूतार्थस्मरणं, समाधिर्विषयेभ्यो निवर्त्त्यात्मनि मनसो नियमनम् ॥ २९ ॥

चक्रपाणिः—सम्प्रति शरीररोगाधिकारप्रवृत्तत्वादस्य तन्त्रस्य शारीररोगजनकवातादिलक्षणं भेषजञ्चाह,—रुक्ष इत्यादि। प्रधानत्वादग्रे वायोरभिधानं, रुक्षादीनां ज्यायस्त्वादभिधानं, तेन दारुणत्वादयोऽपि गुणा बोद्धव्याः। शैत्यञ्च वायोरधिकं स्नेहसाध्यत्वाद् वायोर्योजकम् * अतो रुक्षत्वमग्रेऽभिहितम्। यद्यपि वैशेषिकेऽनुष्णाशीतो वायुस्तथापीह शीतेन वृद्धिदर्शनात् उष्णेन प्रशमदर्शनाच्च शीत एव वायुः, तथा केवलवातारब्धे रोगे शीतदर्शनाच्च। यच्च पित्तयुक्तस्योष्णत्वं तद्योगवाहित्वात्, यथा पाषाणस्य येन द्रव्येण शीतेनोष्णेन वा योगो भवति तद्गुणानुविधानं

* योजकमित्यपि पाठान्तरम्।

सस्नेहमुष्णं तीक्ष्णञ्च द्रवमम्लं सरं कटु।
विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति॥

लघुः खरः। तिर्य्यग्गो द्विगुणश्चैव रजोबहुल एव च॥" इति। अत्राव्यक्तः सूक्ष्मः, तिर्य्यग्ग इति तिर्य्यक्चलः। द्विगुण इति शब्दस्पर्शगुणो वायुरित्यर्थः। रजोबहुलः सत्त्वतमोन्यून इति विशदत्वं ख्यापितम्। एवंगुणस्य वातस्य प्रकोपणान्युक्तानि तत्रैव। तद्यथा "बलवद्विग्रहातिव्यायामव्यवायाध्ययन-प्रपतनप्रधावनप्रपीडनाभिघातलङ्घनप्लवनतरणरात्रिजागरणभारहरणगजतुरङ्गरथ-पदातिचर्य्याकटुकषायतिक्तरूक्षलघुशीतवीर्य्यशुष्कशाकवल्लूर-वरकोद्दालककोर-दूषश्यामाकनीवारमुद्गमसूराढकीहरेणुकलायनिष्पावानशन-विषमाशनाध्यशन-वातमूत्रपुरीषशुक्रच्छर्द्दिक्षवथूद्गारवाष्पवेगविघातादिभिर्विशेषैर्वायुः प्रकोप-मापद्यते। स शीताभ्रप्रवातेषु घर्म्मान्ते च विशेषतः। प्रत्यूषस्यपराह्णे तु जीर्णेऽन्ने च प्रकुप्यति॥" इति। अत्र प्रकुप्यतीति वर्द्धते न तु क्षयति। वर्द्धते च स्वयोनित्वाद् बलवद्विग्रहादीनाम्। एभिर्वृद्धस्य वातस्य स्निग्धादिगुणैर्द्रव्यैः क्षयो ह्रासो भवति, समस्य तु क्षयो भवति, क्षीणस्य चातिक्षयो भवतीत्यर्थः। रूक्ष-त्वादिगुणविपरीताविपरीतसमविमिश्रगुणैस्तु द्रव्यैर्न सम्प्रशाम्यति किन्तु विपरीत-गुणबहुलाविपरीताल्पगुणैर्द्रव्यैः कालविलम्बेनासम्यक् प्रशाम्यत्येव न तु न प्रशाम्यतीति बोध्यम्। उक्तं हि "विरुद्धगुणसन्निपाते भूयसाल्पमवजीयते" इति। अत्रापीदमवधातव्यं—यद् द्रव्यं रौक्ष्यादिगुणविपरीतकियद्गुणं रौक्ष्यादिगुणतुल्यगुणञ्च भवति तत्र विरुद्धधर्म्माणां मध्ये भूयसा गुणसमूह-बहुलाल्पगुणसमूहोऽवजीयते तेनाल्पगुणभूयिष्ठगुणविपरीतगुणस्य भूयिष्ठगुण-जयो न बाध्यते तुल्यगुणस्य वृद्धिरपि क्रियते इत्येवं व्याख्यानं पित्तकफयोरपि बोध्यम्।

पित्तस्वरूपगुणमाह—सस्नेहमित्यादि। सस्नेहमुष्णमिति वचनेन स्नेहस्याल्पत्वमुष्णत्वस्य चातिशयत्वं तद्योगादिति सूचितम्। तेन पैत्तिके

तथा वायोरपि। विपरीता वातगुणप्रतिपक्षा गुणा यस्य तद्विपरीतगुणं, गुणशब्देन चेह धर्म्मवाचिना रसवीर्य्यविपाकप्रभावाः सर्व्व एव गृह्यन्ते, तेन प्रभावादपि यद्वातविपरीतं तदपि गृह्यते। अन्ये त्वेकविपरीतशब्दलोपाद्विपरीतं विपरीतगुणञ्च ग्राहयन्ति, तेन, विपरीतग्रहणात् पृथक् प्रभावविपरीतं गृह्यते, गुणवैपरीत्यात् विपाकादयो गृह्यन्ते। नन्वविपरीतगुणभूयिष्ठैरपि वातादीनां प्रशमो भवति; यतो न हि सर्व्वं भेषजं वातादीनां सर्व्वात्मना विरुद्धं स्यात्;

व्याधौ घृतदुग्धादिकस्त्वे हशीतभेषजविधिन विरुध्यते। अतिस्निग्धत्वाल्पोष्ण-त्वयोश्च पित्तस्याल्पत्वे ह्यत्यन्तोष्णत्वविपर्य्ययात् प्रशान्तिः स्यात्। उष्ण-तीक्ष्णद्रवसरतिक्तत्वविपरीतैः शैत्यमान्द्यसान्द्रस्थिरकषायमाधुर्य्यगुणैः पक्वस्य पित्तस्य प्रशमनम्। आमस्याम्लस्य विपरीतेन तिक्तेन प्रशमः। कट्विति तिक्त, तेन तिक्तरसस्य पित्तस्य विदग्धावस्थायामम्लरसत्वे तद्विपरीतत्वेन तिक्तरसः पित्तप्रकोपनाशकत्वेनोपपद्यते। उक्त हि सुश्रुते। "पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च। उष्णं कटु सरञ्चैव विदग्धञ्चाम्लमेव च॥" इति। अत्र पूतित्वेन स्निग्धत्वं सूचितं, नीलं पीतमिति यदुक्त तदत्र प्रशमनाभावेन नोक्तम्। कट्विति तिक्तं, विदग्धञ्चाम्लमिति तत्स्वभावात्। एतेन तन्निरस्तं यदिह तन्त्रेऽम्लत्वमुक्त तदपि तेजःप्राधान्यात् पित्तस्य स्वरूपस्य। सुश्रुतेनापि विदग्धस्याम्लत्वमुक्त तद् द्रवरूपपित्ताभिप्रायेणेति। यद्व्याख्यातं द्रवमिति मुक्तकण्ठेन सुश्रुतेनोक्तत्वाच्च। प्रकोपणञ्चास्योक्तं तत्रैव। "क्रोधशोकभयायासोपवासविदग्धमैथुनोपगमनकट्वम्ललवणतीक्ष्णोष्ण-लघुविदाहि-तिलतैलपिण्याककुलत्थ-सर्षपातसीहरितकशाकगोधामत्स्याजाविक-मांसदधितक्रकूर्च्चिकामस्तु-सौवीरकसुराविकाराम्लफलकट्वरक प्रभृतिभिः पित्तं प्रकोपमापद्यते। तदुष्णैरुष्णकाले च मेघान्ते च विशेषतः। मध्याह्ने चार्द्धरात्रे च जीर्य्यत्यन्ने च कुप्यति॥" इति। एभिः प्रकोपणैः प्रज्ञापराधा-द्यन्तर्भूतैः सस्नेहादिगुणं पित्तं वृद्धं सस्नेहादिगुणविपरीतगुणैः स्निग्धशीत-मृदुसान्द्रकषायतिक्तस्थिरादिगुणद्रव्यैः प्रशाम्यति समं भवति, समन्तु क्षीणं भवति, क्षीणमतिक्षीणं भवतीत्यर्थः।

उक्तं हि "विरुद्धगुणसन्निपाते भूयसा स्वल्पमवजीयते"। ननु किमिति विरुद्धगुणभूयिष्ठस्य ग्रहणेन ? विरुद्धगुणभूयिष्ठस्यापि विरुद्धगुणशब्देनैव ग्रहणात् विपरीतगुणभूयिष्ठे हि येऽविप-रीता अल्पा अबला वा गुणास्ते स्वकार्य्याकर्त्तृत्वात् अव्यपदेश्या एव ; किंवा सर्व्वथाविपरीत-गुणैरधिका प्रशस्ता च शान्तिर्भवति, अत एव सम्प्रशब्दो शीघ्रसम्यक्प्रशमार्थाभिधायकौ कृतौ, अविपरीतगुणभूयिष्ठैर्न तथा शान्तिर्भवति, अत एव सम्प्रशब्दाभ्यां न तत् साक्षादुक्तम्। एवञ्च व्याख्यानं पित्तश्लेष्मणोरपि कर्त्तव्यम्।

सस्नेहमिति ईषत्स्नेहं, तेन पित्ते सर्पिषः स्निग्धस्य भेषजत्वमुपपन्नम्। अम्लरसता चेह पित्तस्य प्रोच्यते अप्तेजःसमवायारब्धत्वात् पित्तस्य। सुश्रुते तु कटुत्वमेव पित्तस्योक्तम्, अम्लता च विदग्धस्य पित्तस्योक्ता ; यदुक्तं "विदग्धञ्चाम्लमेव च"। एवं सस्नेहतामपि पित्तस्य सुश्रुतस्य स्वरसो नास्ति ; एतच्च स्निग्धत्वमम्लत्वञ्च अकालकारब्धत्वात्

गुरुशीतमृदुस्निग्ध-मधुरस्थिरपिच्छिलाः ।
श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः ॥ ३० ॥

श्लेष्मस्वरूपगुणमाह—गुर्वित्यादि । एते गुर्वादयः श्लेष्मणः स्वाभाविका गुणाः, वृद्धास्तु विपरीतगुणैर्लघूष्णतीक्ष्णरूक्षकट्वादिरसविशदादिभिर्द्रव्याश्रितैरेव प्रशमं समं यान्ति, साम्ये तु क्षयं यान्ति, क्षये चातिक्षयमिति । गुणानां विपरीतगुणैः प्रशमवचनेन गुणिनोऽपि प्रशमः ख्यापितः । मिलितयथास्वगुणसमुदायो हि द्रव्यमुच्यते नातिरिक्तमिति । सुश्रुतेऽप्युक्तं "श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीत एव च । मधुरस्त्वविदग्धः स्याद्विदग्धो लवणः स्मृतः ॥" इति यत् तेन न विरुद्धं कफस्याविदग्धत्वे तथैव स्वभावात् लवणत्वकथनेन लवणरसाश्रयत्वेनानुक्तत्वेऽपि न वा न्यूनत्वमाचार्यस्य, तेन वृद्धावस्थायां विदग्धे आगतेऽपि लवणरसो नोपशेते लवणविपरीतगुणैर्वृद्धत्वे पुनरुपशेते । एवं पित्तस्याम्लतायामपि व्याख्येयं, वस्तुतस्तु द्रव्यमेकरसं नास्तीति तेन बोध्यमिदं श्लेष्मणो यन्माधुर्यमुक्तं तन्मधुरप्रधानलवणत्वं तेन साम्यावस्थायां मधुरलवणयोः कफवर्द्धकत्वमिति । तथा पित्तस्याम्लाणुतिक्तत्वं बोध्यं, तेन साम्यावस्थायां तिक्तो रसः स्वसमानाधिकरणशैत्यलाघवाभ्यां वीर्यरूपाभ्यामपास्तत्वान्न पित्तं वर्द्धयति, अपि तु नाशयति तत्प्रतिनियतशैत्यवीर्यम् । अम्लस्तु स्वरूपेण उष्णवीर्यतश्च वर्द्धयतीति बोध्यम् । श्लेष्मवृद्धिहेतुरुक्तः सुश्रुतेन "दिवास्वप्नाव्यायामालस्यमधुराम्ललवणशीतस्निग्धगुरुपिच्छिलाभिष्यन्दिहायनकयवकनैषधेत्कटमाषमहामाषगोधूमतिलपिष्टविकृति-दधि-दुग्ध-कृशरापायसेक्षुविकारानूपौदकमांस-वसाबिसमृणालकशेरुकशृङ्गाटकमधुरवल्लीफलसमशनाध्यशनप्रभृतिभिः श्लेष्मा प्रकोपमापद्यते । स शीतैः शीतकाले च वसन्ते च विशेषतः । पूर्वाह्णे च प्रदोषे च भुक्तमात्रे प्रकुप्यति ॥" इति । प्रकुप्यतीति वर्द्धते । एभिः प्रज्ञापराधाद्यन्तर्भूतैर्वृद्धस्य श्लेष्मणो गुर्वादिगुणस्य विपरीतगुणद्रव्यैर्वृद्धा गुर्वादयो गुणाः शाम्यन्ति समा भवन्ति, समास्तु ह्रसन्ति, ह्रस्वास्त्वतिह्रसन्तीति बोध्यम् ॥ ३० ॥

पित्तस्योपपन्नमेव । सुश्रुते तु तेजोरूपपित्ताभिप्रायेणैव तन्निरस्तं भवति । श्लेष्मणो विपरीतगुणैर्गुणानां प्रशम उच्यते न पुनः श्लेष्मणः प्रशमोऽभिधीयते ; कस्मात् ? उच्यते, गुणप्रशमनेन च गुणिप्रशमो गुणवृद्ध्या च गुणिवृद्धिर्भवतीति सूचनार्थं ; यत उष्णेन शीतप्रशमे क्रियमाणे शीताधारस्य उदकभागस्याप्यवश्यमेव प्रशमः क्रियते ॥ ३० ॥

विपरीतगुणैर्देश-मात्राकालोपपादितैः।
भेषजैर्विनिवर्त्तन्ते विकाराः साध्यसम्मताः॥
साधनं न त्वसाध्यानां व्याधीनामुपदिश्यते॥ ३१ ॥

गङ्गाधरः—तथैवं चेत्तदा प्रतिज्ञाहानिदोषः स्यात्। रौक्ष्यादिगुणैर्वृद्धो हि वातः स्निग्धादिगुणद्रव्यैस्तद्विपरीतैरल्पमात्रैरतिमात्रैर्वा विपरीतगुणे देशे काले च साध्येषु व्याधिषु प्रयुज्यमानैरकाले पुनः सम्यङ्मात्रैश्च तथा काले सम्यङ्मात्रैश्च तुल्यगुणदेशे तथा चासाध्येषु व्याधिषु प्रयुज्यमानैर्द्रव्यैर्न प्रशाम्यति। एवं पित्तं कफश्चेत्याशंसायामव्यभिचारेण प्रतिज्ञातुमाह—विपरीतगुणैरित्यादि। रूक्षः शीत इत्यादिभिर्यथास्वोक्तवातपित्तकफगुणानां विपरीतगुणैर्भेषजैर्देशमात्राकालोपपादितैस्तेषामेव विपरीताविपरीतगुणदेशानुरूपमात्राया भेषजानां मृदुमध्यतीक्ष्णत्वस्ववीर्य्यानुरूपेणातुरबलशरीराहारसात्म्यसत्त्वप्रकृतिदोषव्याधिबलानुरूपेण चानपायिपरिमाणेन यद्-यद् भेषजस्योपयोगे उपदेष्टव्यो यो यः कालस्तैरुपपादितैस्तथाविधे देशे तया च मात्रया तस्मिन्नेव च काले वैद्यैः प्रयुक्तैः साध्यसम्मताः साध्यत्वेनोपदिष्टा विकारा विनिवर्त्तन्ते न त्वसाध्यत्वेनोपदिष्टरोगा इत्यर्थः। एतेनाज्ञानेन

चक्रपाणिः—ननु विपरीतगुणैरल्पमात्रैस्तु वाऽविपरीतदेशकालादिप्रतिबन्धैश्च न प्रशमो भवतीत्याह—विपरीतेत्यादि। देशो भूमिरातुरश्च, मात्रा अनपायि परिमाणम्, कालो नित्यगः ऋत्वादिः आवस्थिको बाल्यादिश्च; देशाद्यपेक्षया यथोचितत्वेन कल्पितो देशमात्राकालोपपादितैः; उपपादितैरिति धीरादिको नित्य, किंवा वैद्येनोपपादितैः। अत्र देशग्रहणात् बलशरीराहारसात्म्यसत्त्वप्रकृतीनां ग्रहणम्, कालग्रहणात् वयसोऽपि ग्रहणम्, दोषस्तु प्रशमनीयतयैव गृहीतः, भेषजन्तु साक्षादेवोक्तम्। एवं दोषभेषजदेशकालबलशरीराहारसात्म्यसत्त्वप्रकृतिवयसां परीक्षणीयानां दशविधानां सर्व्वेषामेव ग्रहणं भवति। साध्यत्वेन प्रामाणिकानां सम्मताः साध्यसम्मताः; एतेनाज्ञैर्नाज्ञानात् ये साध्यत्वेन गृहीतास्ते निराक्रियन्ते। यत्तु सम्यक् ग्रहणेन याप्ययापनमुच्यते तन्नातिसुन्दरं 'विनिवर्त्तन्ते' इति वचनात्, न च याप्ययापनं विनिवृत्तिः।

असाध्ये भेषजनिवृत्तिमाह—साधनमित्यादि। नन्वसाध्यानामपि साधनं दृष्टं, यतोऽरिष्टगतोऽवश्यं मृत्युगृहीतत्वेनासाध्यः, यदुक्तम् "अरिष्टञ्चापि तन्नास्ति यद्विना मरणं भवेत्। मरणञ्चापि तन्नास्ति यन्नारिष्टपुरःसरम्"। तन्नारिष्टसाधनञ्च सुश्रुते उक्तं 'ध्रुवन्त्वरिष्टे मरणं ब्राह्मणैस्तत् किलामलैः। रसायनतपोजप्यतत्परैर्वा निवार्य्यते" इति। तथा चागस्त्यो भगवानाह,

साध्यत्वबुद्ध्या प्रतिपादितभेषजैरसाध्यव्याधिप्रशमाभावेन न क्षतिः। तत्र हेतुमाह—"साधनं न त्वसाध्यानां व्याधीनामुपदिश्यते" इति।

कश्चित् तु सम्मत इत्यनेन याप्यानामपि ग्रहणमाह—तन्न भद्रं, याप्यानां यापनस्य विनिवृत्तित्वाभावात्, साधनं न त्वसाध्यानामिति वचनविरोधाच्च। असाध्यत्वं हि द्विविधं याप्यत्वमप्रत्याख्येयत्वभेदादिति।

नन्वसाध्यानामपि दृश्यते भेषजम्, उपदिष्टं हि भगवतागस्त्येन कालाकालमृत्युजयभेषजम्। "रसायनतपोजप्य-योगसिद्धैर्महात्मभिः। कालमृत्युरपि प्राज्ञैर्जीयतेऽनलसैर्नरैः॥" इति। तथा सुश्रुतेनापि "ध्रुवन्त्वरिष्टे मरणं ब्राह्मणैस्तत्किलामलैः। रसायनतपोजप्य-तत्परैर्वा निवार्य्यते॥" इति। तथान्यत्रापि "जातारिष्टोऽपि जीवतीति"। तस्मादत्र साधनमिति रसायनवर्ज्जं भेषजं भिषगादिपादचतुष्टयान्वितमं वा, तेनासाध्यव्याध्युपशमकत्वेन रसायनस्योक्तिर्न विरुध्यते। अत्राहुरन्ये "नियतमनियतञ्चेति द्विधारिष्टं, तत्र नियतमरिष्टमसाध्यमनियतन्तु रसायनादिभिः साध्यते" इति नियतारिष्टाभिप्रायेणोक्तम्। "न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते" इति, तथा "अरिष्टञ्चापि तन्नास्ति यद्विना मरणं भवेत्। मरणञ्चापि तन्नास्ति यन्नारिष्टपुरःसरम्॥" इति सुश्रुतागस्त्यवचनन्त्वनियतारिष्टविषयमिति। अन्ये तु सर्व्वमेवारिष्टं मारयत्यसति रसायनादौ, रसायनादेः प्रभावेण

"रसायनतपोजप्य-योगसिद्धैर्महात्मभिः। कालमृत्युरपि प्राज्ञैर्जीयते नालसैर्नरैः"। तथान्यत्राप्युक्तं "जातारिष्टोऽपि जीवति"। अत्राहुरेके द्विविधमरिष्टं नियतमनियतञ्च, तत्र नियतं यत्तदसाध्यमेव; अत एवोक्तं "न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते" अत्र जातस्येति वचनात् नियतस्येति दर्शयति। यत्त्वनियतमरिष्टं तत् प्रति सुश्रुतागस्त्यवचनयोरर्थवत्ता, चरकेऽप्यनियतमरिष्टमुक्तं यथा—"संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते" इति। अन्ये तु ब्रुवते संशयप्राप्तमिति उक्तिभेदमात्रमत्र, तेन सर्व्वारिष्टं मारकमेवासति रसायनादौ। रसायनतपःप्रभृतयस्तु प्रभावातिशययोगात् इतरक्रियया ऽसाध्यमानमपि साधयन्ति; तच्च रिष्टनिवारणं विरलेष्वेव पुरुषातिशयेषु नन्दिकेश्वरादिषु द्रष्टव्यं, न सर्व्वपुरुषैस्तत् शक्यमतो जातारिष्टानाम् असाध्यत्वेन तत्त्वं प्रोच्यते। यत्तु कैश्चिदुच्यते नियतायुषो मृत्युररिष्टपूर्व्वो भवति, अनियतायुषस्त्वरिष्टं विनैव मृत्युर्भवति; तन्न, "मरणञ्चापि तन्नास्ति यन्नारिष्टपुरःसरम्" इति वचनात्। यदुच्यतेऽनियतायुषः सत्यपि रिष्टप्रादुर्भावे सम्यक्क्रियोपपादनात् जीवितेन भवितव्यम्, यतोऽनियतायुषः पुरुषकारापराधादेव परं मृत्युर्भवति, सम्यक्क्रियायाञ्च पुरुषकारापराधो नास्ति। तत्र, न ह्यनियतायुषः सर्व्वदैव पुरुषकारसाध्याः, किन्तु यथोचितकालक्रियमाणस्वस्थातुरहितसेवाकरपुरुषकारसाध्याः, तेन यथोचितकाले हितासेवनात्साध्यत्वमुक्तं व्याधौ

**भूयश्चातो यथाद्रव्यं गुणकर्म्म * प्रवक्ष्यते ॥ ३२ ॥**

अरिष्टनाशकत्वात्। सर्व्वपुरुषाणामशक्यत्वेन रसायनादेर्जातारिष्टमसाध्यमेव इत्याहुः ॥ ३१ ॥

गङ्गाधरः—नन्वेतावतैव वातादीनां स्वस्वगुणविपरीतगुणद्रव्यैः प्रशमोपदेशेन त्रिविधशिष्याणां न व्यवसायो भवति अतिसूक्ष्मतमत्वाद् द्रव्यगुणानामित्याशङ्क्याह, भूयश्चेत्यादि।—अतो वातादीनां स्वस्वगुणविपरीतगुणद्रव्यैः प्रशमोपदेशादनन्तरमन्नपानादिके यथाद्रव्यं द्रव्यमनतिक्रम्य गुणकर्म्म गुणाश्च कर्म्माणि च तत् भूयो बहुतमं च प्रवक्ष्यते प्रतिद्रव्यं विस्तरेण गुणकर्म्म प्रवक्तव्यमित्यर्थः।

नन्वेतावतैव वातादीनां स्वस्वगुणविपरीतगुणद्रव्यैः प्रशमोपदेशेन युक्तिव्यपाश्रयभेषजं किं समाप्यते इति शङ्कायां यथाद्रव्यं गुणकर्म्मोपदिश्यते व्यवस्थिते द्रव्याणां गुणकर्म्माश्रयत्वेन कर्त्तृत्वेन च सत्यपि प्राधान्ये गुणकर्म्मापेक्षया गुणकर्म्मभ्यामेव शक्तिरूपाभ्यां फलसाधनयोग्यत्वादादौ गुणकर्म्मणोः गुणानां प्राधान्यादुपदेशे कर्त्तव्ये गुर्व्वादिगुणापेक्षया शीतादिगुणस्य वीर्य्यसंज्ञया प्राधान्येऽपि शीतादिर्व्वीर्य्यसंज्ञकस्य गुणस्य प्रायेण प्रतिनियतरसत्वात् रसोपदेशो व्यवस्थीयते।

"अत्र केचिदाचार्य्या ब्रुवते द्रव्यं प्रधानम्ः कस्मात्? व्यवस्थितत्वात्। इह खलु द्रव्यं व्यवस्थितं न रसादयो, यथामे फले ये रसादयस्ते पक्के न सन्ति"। ननु चेत् व्यवस्थितत्वं स्वरूपेणावस्थानं तच्च कषायादिकल्पितत्वद्दशायां नास्तीति व्यभिचार इति चेत् तदा "द्रव्यं प्रधानं नित्यत्वात्। नित्यं हि द्रव्यमनित्या गुणाः यथा कल्कादिप्रविभागः, स एव सम्पन्नरसगन्धो व्यापन्नरसगन्धो वा भवति"। ननु नित्यत्वमविनाशित्वं स्वरूपानुच्छेदो वा, तथात्वन्तु न कल्कादित्वद्दशायामिति व्यभिचरयते हेतुरिति चेन्न, द्रव्यं प्रधानं "स्वाजात्यावस्थानात्। यथा हि पार्थिवं द्रव्यमन्यभावं न गच्छत्येवं शेषाणीति।" अतः स्वारम्भकद्रव्यजातीयत्वेनानुवृत्तत्वं स्वारम्भकद्रव्यजातीयत्वानपायित्वं वा स्वभावसंसिद्धलक्षणं वा स्वाजात्यवस्थानमिति। ननु

रिष्टे जाते किं भेषजमतीतकालक्रियमाणम् अपक्रान्ते सलिल इव सेतुबन्धः करिष्यतीति; तस्मादसाध्यानां साधनं नोपदिश्यत इति साधु ॥ ३१ ॥

चक्रपाणिः—किमेतान्येव गुणकर्म्माणि वातादीनामुत्तरत्राप्यपरीत्याह, भूयश्चेत्यादि। गुणानां कर्म्माणि गुणकर्म्माणि। यथाद्रव्यमिति यस्मिन् यस्मिन् द्रव्ये यद्यद्गुणकर्म्म तत् तत्तस्मिंस्तस्मिन्

* गुणकर्म्माणि वक्ष्यते। इति चक्रपाणिः।

मधुराम्ललवणादीनामपि रसानां पाञ्चभौतिकत्वेन मधुरत्वादिना ग्रहात् पृथिव्यम्ब्वादिगुणबाहुल्यग्रहेण पञ्चेन्द्रियग्रहणमुपचर्य्यते इति चेन्न "द्रव्य हि प्रधानमाश्रयत्वात्। द्रव्यमाश्रिता हि रसादय इति"।

ननु रसादीनामाश्रयत्वेऽपि द्रव्यस्य रसादिद्वारेणैव फलसाधकत्वान्न रसादिभ्यो द्रव्यस्य प्राधान्यमिति चेन्न, यतो "द्रव्यं प्रधानमारम्भसामर्थ्यात्। द्रव्याश्रितो ह्यारम्भो यथा विदारिगन्धादिमाहृत्य संक्षुद्य विपचेदित्येवमादिषु न तु रसादिष्वारम्भः"।

नन्वारम्भो मधुरगणादौ कालपरिणामेनाम्लादिरसस्यास्ति न ह्यारम्भ आहरणक्षोदनादिव्यापारमात्रं किन्तु प्रयोजननिष्पत्तिहेतुसाधनमेव, तच्च रसादिष्वस्ति इति चेन्न "द्रव्यं हि प्रधानं शास्त्रप्रामाण्यात्। शास्त्रे हि द्रव्यं प्रधानमुपदेशे हि योगानां यथा मातुलुङ्गाग्निमन्थौ चेति न रसादय उपदिश्यन्ते" इति।

ननु रसादिद्वारेणैव द्रव्याणां कार्य्यविशेषमुपलभ्य योगानामुपदेशे द्रव्याण्युपदिशन्ति भिषज इति। रसा एव प्रधानमिति चेन्न "द्रव्यं प्रधानं रसादीनां क्रमापेक्षितत्वात्। रसादयो हि द्रव्यक्रममपेक्षन्ते यथा तरुणे तरुणाः सम्पूर्णे सम्पूर्णाः" इति।

नन्वेवं द्रव्यमपि क्रममपेक्षतेऽवस्थानां यथा तारुण्ये तरुणं परिणामे सम्पूर्णमिति चेन्न "द्रव्यं प्रधानमेकदेशसाध्यत्वात्। द्रव्याणामेकदेशेनापि चूर्णादयः साध्यन्ते यथा महावृक्षक्षीरेणेति" न रसानामिति।

अत्र कार्य्यसाधकैकदेशत्वादित्यर्थस्तेन साध्येन न वैयधिकरण्यम्। एवं क्रमापेक्षितत्वादित्यत्रापि स्वक्रमापेक्षितरसादित्वादिति व्याख्येयम्। "तस्माद्द्रव्यं प्रधानं, "द्रव्यलक्षणन्तु क्रियागुणवत् समवायिकारणमिति"।

"तन्नेत्याहुरन्ये। रसास्तु प्रधानम्। कस्मात्? आगमात्। आगमो हि शास्त्रमुच्यते। शास्त्रे हि रसा अधिकृता यथा रसायत्त आहार इति, तस्मिंश्च प्राणाः" इति।

ननु भूतायत्ता रसा रसायत्तश्चाहारस्तस्मिंश्चेत् प्राणाः सन्ति सन्तु स च द्रव्याधीन एवेति कथं रसस्य प्राधान्यमिति चेन्न "रसाः प्रधानमुपदेशात्। उपदिश्यन्ते हि रसाः। यथा मधुराम्ललवणा वातं शमयन्ति" इति।

द्रव्येऽनुपानादौ कृत्स्ने वा तन्त्रे वक्ष्यते आचार्य्य इति शेषः। वक्ष्यते इति भूतो भविष्यदादेशात् प्रयोगः। किंवा यथाद्रव्यमिति यथाहेतु, तद्यथा गुरुखरकठिनादिगुणबहुलं पार्थिवद्रव्यं तेषाञ्च पार्थिवानां गुणानां कर्म्मोपचयसङ्घातगौरवादीति ॥ ३२ ॥

ननु यथा रसानां वातादुरुपशमकत्वेनोपदेशोऽस्ति तथा द्रव्याणामपि. यथा "आमलक्यादिरित्येष गणः सर्व्वज्वरापहः। चक्षुष्यो दीपनो वृष्यः कफारोचकनाशनः" इत्यादि इति चेन्न. रसाः प्रधानमनुमानात्। "रसेन ह्यनुमीयते द्रव्यं यथा मधुरमिति"।

ननु रसेनानुमीयते द्रव्यं द्रव्येणापि रसनायोगेन रसमनुभवतीति द्रव्यमेव प्रधानं न तु रसा इति चेन्न "रसाः प्रधानमृषिवचनात्। ऋषिवचनं हि वेदो यथा किञ्चिदिज्यार्थं मधुरमाहरेदिति"। तस्माद्रसाः प्रधानम्। रसेषु गुणसंज्ञा गुरुत्वादयः समानाधिकरणत्वेन व्यवस्थिताः। रसगुणेषूपदेक्ष्यामः।

"तन्नेत्याहुरन्ये। वीर्य्यं प्रधानम्. कस्मात्? तद्वशेनौषधकर्म्मनिष्पत्तेः। इहौषधकर्म्माण्यूर्द्ध्वाधोभागोभयभागसंशोधन-संशमन-संग्राहकाग्निदीपन-प्रपीड़न-लेखनबृंहणरसायनवाजीकरणश्वयथुकरणविलयनदहनदारणमादन-प्राणघ्न-विषप्रशमनानि वीर्य्यप्राधान्याद्भवन्ति। तच्च वीर्य्यं द्विविधमुष्णं शीतञ्च. अग्नीषोमीयत्वाज्जगतः। केचिदष्टविधमाहुरुष्णं शीतं स्निग्धं रूक्षं विशदं पिच्छिलं मृदु तीक्ष्णञ्चेत्येतानि खलु वीर्य्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म्म कुर्व्वन्ति। यथा तावन्महत् पञ्चमूलं कषायं तिक्तानुरसं वातं शमयेदुष्णवीर्य्यत्वात्। तथा कुलत्थः कषायः, कटुकः पलाण्डुः स्नेहभावाच्च। मधुरश्चेक्षुरसो वातं वर्द्धयेत् शीतवीर्य्यत्वात्। कटुका पिप्पली पित्तं शमयति मृदुशीतवीर्य्यत्वात् अम्लमामलकं लवणं सैन्धवञ्च। तिक्ता काकमाची पित्तं वर्द्धयेदुष्णवीर्य्यत्वात् मधुरा मत्स्याश्च। कटुकं मूलकं श्लेष्माणं वर्द्धयति स्निग्धवीर्य्यत्वात्। अम्लं कपित्थं श्लेष्माणं शमयति रूक्षवीर्य्यत्वात्. मधुरं क्षौद्रञ्चेति। तदेतत् निदर्शनमात्रमुक्तम्। भवन्ति चात्र। "ये रसा वातशमना भवन्ति यदि तेषु वै। रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम्॥ ये रसाः पित्तशमना भवन्ति यदि तेषु वै। तैक्ष्ण्यौष्ण्यलघुताश्चैव न ते तत्कर्म्मकारिणः॥ ये रसाः श्लेष्मशमना भवन्ति यदि तेषु च। स्नेहगौरवशैत्यानि बलासं वर्द्धयन्ति ते॥" इति।

"तस्माद्वीर्य्यं प्रधानमिति। तन्नेत्याहुरन्ये। विपाकः प्रधानमिति। कस्मात्? सम्यङ्मिथ्याविपाकत्वात्। इह हि सर्व्वाणि द्रव्याण्यभ्यवहृतानि सम्यङ्मिथ्याविपकानि गुणं दोषं वा जनयन्ति। भवन्ति चात्र। पृथक्त्वदर्शिनामेष वादिनां वादसंग्रहः। चतुर्णामपि सामर्थ्यमिच्छन्त्यत्र विपश्चितः॥ तद्द्रव्यमात्मना किञ्चित् किञ्चिद्वीर्य्येण सेवितम्। किञ्चिद्रसविपाकाभ्यां

रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा ।
निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः ॥ ३३ ॥

दोषं हन्ति करोति वा ॥ पाको नास्ति विना वीर्य्यात् वीर्य्य नास्ति विना रसात् । रसो नास्ति विना द्रव्याद् द्रव्य श्रेष्ठमतः स्मृतम् ॥ जन्म तु द्रव्यरसयोरन्योन्यापेक्षिकं स्मृतम् । अन्योन्यापेक्षिक जन्म यथा स्याद्देह-देहिनोः ॥ वीर्य्यसंज्ञा गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः । रसेषु न वसन्त्येते निर्गुणास्तु गुणाः स्मृताः ॥ द्रव्ये द्रव्याणि यस्माद्धि विपच्यन्ते न षड्रसाः । श्रेष्ठं द्रव्यमतो ज्ञेयं शेषा भावास्तदाश्रयाः ॥ अमीमांस्यान्य-चिन्त्यानि प्रसिद्धानि स्वभावतः । आगमेनोपयोज्यानि भेषजानि विचक्षणैः ॥ प्रत्यक्षलक्षणफलाः प्रसिद्धाश्च स्वभावतः । नौषधीर्हेतुभिर्विद्वान परीक्षेत कथञ्चन ॥ सहस्रेणापि हेतूनां नाम्बष्ठादिर्विरेचयेत् ॥ तस्मात्तिष्ठेत्तु मतिमानागमे न तु हेतुषु ॥" इति सुश्रुतेनोक्तम् ॥ ३२ ॥

गङ्गाधरः - तेन द्रव्यप्राधान्येऽपि द्रव्यगुणकर्म्मणामतिबाहुल्यात् सङ्क्षेपेणोप-देशार्थं गुरुशीतादिगुणानां मधुरादिसामानाधिकरण्यात् प्रथमं रसोपदेश व्यव-स्थितं रसस्वरूपमुपदिशति. रसनार्थो रस इति । अर्थसंज्ञास्तु वक्ष्यन्ते "अर्थाः शब्दस्पर्शरूपरसगन्धा मनसस्तु चिन्त्यमर्थः" इति रसनस्य योऽर्थः स रसः । अर्थो हि समानयोनिकं वस्तु तत्र यद् यद्योनिकं तत् तस्य तद्योनिकं वस्तु । तथा हि रसनमाप्यमिन्द्रियं रसोऽप्याप्य इति रसनार्थो रस इति ज्ञापयितुमाह. तस्य द्रव्यमाप इति द्रव्यं गुणकर्म्माश्रयसमवायिकारणं प्रकृतिभूतकारणमित्यर्थः ।

ननु द्रव्यमिति किं रसस्याश्रयरूपं कारणं किं ग्रहणे कारणमित्यत आह-- निर्वृत्तौ चेति । निर्वृत्तिरुत्पत्तिः । रसस्योत्पत्तौ द्रव्यं गुणकर्म्माश्रयसमवायि

चक्रपाणिः - सम्प्रति दोषानभिधाय तत्प्रशमनप्रधानान् रसान् वक्तुमुपक्रमते रसलक्षणपूर्व्वकं रसोत्पत्तिक्रममाह, रसनार्थ इति । रस्यत आस्वाद्यत इति रसः, रसनार्थ इति जिह्वाग्राह्यः । एतच्च षण्णामपि रसानामनुगतं रूपादिषु चाव्यापकत्वात् साधु लक्षणम् । तस्येति रसस्य, द्रव्यमित्याधारकारणं, द्रव्यशब्दो ह्याधारकारणवाची, यथा--"पञ्चेन्द्रियद्रव्याणि" इति । क्षितिस्तथेति यथा आप आधारकारणं तथा क्षितिरपि, अप्क्षिती इत्यवक्तव्ये, क्षितिस्तथेति प्रतिवचनात् क्षितेराधारकारणत्वमप्रमुख्यमिति दर्शयति, येनापो हि निसर्गेण रसवत्यः । तथा चात्रेयभद्रकाप्यीये "सौम्याः खल्वापः" इत्यादिना जल एव रसस्य व्यक्तिरिति दर्शयति ।

कारणमापः, यस्मिन् द्रव्ये जायमाने रसश्चाभिव्यज्यते तस्य जायमानद्रव्यस्य क्रियागुणवत् समवायिकारणमापः। आप एव हि रसतन्मात्रात्मिकास्तत्र यद्रसमात्रं तदेवेह किं रसनार्थपदेनाभिहितं, न हि तद्रसमात्रं रसनेन्द्रियस्य ग्राह्योऽर्थोऽतीन्द्रियत्वात्। तज्ज्ञापनार्थमाह—क्षितिरिति। पूर्व्वपूर्व्वभूतानुप्रवेशेनैव जायमाने स्थूलजले चतुरात्मकेऽव्यक्तरसरूपेणाभिव्यज्यते, तासां चतुरात्मिकानामनुप्रवेशेन क्षितिस्तथैव रसाश्रयद्रव्यं पञ्चात्मिका, न तु गन्धतन्मात्रा क्षितिरिति ख्यापितम्। "कार्य्ये हि समवायिकारणद्रैर्व्यद्रव्याणि गुणाश्च गुणैरारभ्यन्ते इत्यात्रेयः।" भद्रकाप्यस्तु "रसतन्मात्रं जलं सूक्ष्मं निरवयवं तदेव तेजोऽनुप्रवेशेन यज्जलं जातं तत्र योऽव्यक्तरसो निष्पाद्यते स रसतन्मात्ररूपजलादनन्यः" इत्याह; पाञ्चभौतिकद्रव्यगतरसस्य स्थूलजलं द्रव्यमिति बोध्यम्। सुश्रुतेऽप्युक्तं रसविशेषविज्ञानीयेऽध्याये। "आकाशपवनदहनतोयभूमिषु यथासङ्ख्यमेकोत्तरपरिवृद्धाः शब्दस्पर्शरूपरसगन्धास्तस्मादाप्यो रसः" इति। सर्व्वभूतचिन्ताशारीरेऽप्युक्तम् "आकाशादीनां कर्म्मगुणास्तत्राप्यस्तु रसो रसनेन्द्रियं सर्व्वद्रवसमूहो गुरुता शैत्यं स्नेहो रेतश्चेति।" स्वयमप्येवं वक्ष्यति। इत्थञ्च तन्मात्ररसो रसत्वं रसाभावश्च न रसनार्थस्तेषां रसनसमानयोनिकत्वाभावादत्र मधुराद्यन्यतमस्य कट्वाद्यन्यतमैः सह भेदेऽपि सति पृथक्त्वाख्योऽभावत्वेन ग्रहदशायां रसनार्थत्वमस्ति रसत्वमप्यस्ति इत्यतो रसाभावे रसेतरत्वविशेषणं, यत् तूच्यते परेण "यथाश्रुतलक्षणस्यास्य रसत्वे रसाभावे चातिप्रसङ्गादतीन्द्रियरसे चाप्रसङ्गाद्रसनेन्द्रियग्राह्यत्रिगुणत्वावान्तरजातिमत्त्वं रसत्वमिति लक्षणं बोध्यमिति।" अत्र रसनेति पदं रूपादीनां ग्राहकचक्षुरादीनां व्यवच्छेदार्थम्। वातादिदूषितरसनस्याकृचिवशाद्रसस्य रसनाग्राह्यत्वेन तत्राव्याप्तिवारणाय इन्द्रियेतिपदम्। रसनेन्द्रियगृहीतरूपादि-

तत सुश्रुतेऽप्युक्तं "तस्मादाप्यो रसः" इति। क्षितिस्त्वपामेव रसेन नित्यानुषक्तेन रसवतीत्युच्यते, यतो नित्यः क्षितेर्जलसम्बन्धः; वचनं हि—"विष्टं ह्यपरं परेण" इति, अस्यार्थः—खवाय्वग्निजलक्षितीनामुत्तरोत्तरं भूते पूर्व्वपूर्व्वभूतस्य नित्यमनुप्रवेशः, तत्कृतश्च स्वादिषु गुणोत्कर्षः। रसस्य किं व्यक्तौ अप्क्षिती कारणं किंवा विशेष इत्याह,—निर्वृत्तावित्यादि। निर्वृत्तौ चाभिव्यक्तौ। एतेन रसोऽभिव्यज्यमानो जलक्षित्याधार एव व्यज्यत इति दर्शयति, चकाराद्विशेषेऽपि मधुरादिलक्षणे अप्क्षिती प्रत्ययौ, तेन "सोमगुणातिरेकान्मधुरः, पृथिव्यग्निगुणातिरेकादम्लः" इत्यादिना जलपृथिव्योरपि विशेषकारणत्वं वक्ष्यमाणमुपपन्नं। विशेषे च प्रत्ययाः खादय इति मधुरादिविशेषनिर्वृत्तौ निमित्तकारणं खवाय्वनलाः, न

वारणाय ग्राह्येति पदम्। रसनेन्द्रियग्राह्यजातेरसत्त्वादसम्भवात् तद्वारणाय वृत्तीतिपदम्। रसनेन्द्रियग्राह्यरसवृत्तिगुणत्वजातिमत्त्वाद् रूपादीनां रसत्ववारणाय गुणत्वावान्तरेति। मधुरादिषु प्रतिरसं तथातीन्द्रियरसे चाव्याप्तिवारणाय जातिमत्त्वमिति। प्रत्येकरसस्य जातिमत्त्वेऽपि मधुरत्ववत्तया ग्रहणदशायां जातिमत्त्वाग्रहेऽप्रसङ्गसम्भवात्। जातिमत्त्वन्तु वृत्तिनियामकसम्बन्धेनैव बोध्यम्। तेन रूपत्वादिना सम्बन्धेन नातिप्रसङ्ग इति बोध्यम्।

नेदं साधु व्याख्यानम्। तन्मात्ररसोऽतीन्द्रियः साधारणभूत एवाव्यक्तो गुणत्वावान्तरसामान्यभूतजातिमत्त्वाभावादनेन लक्षणेनालक्षितः। एकत्वात् तस्य गुणत्वावान्तरसामान्याभावात्। न हि मधुरादिगतसामान्यमस्यास्ति, मधुरादयो हि रसप्रभेदा रसत्वसामान्यवन्त एव तु न रसप्रभेदः साधारणत्वात्। तस्माद्रसनेन्द्रियग्राह्यो यो मधुरादिरसस्तद्वृत्तिगुणत्वावान्तरसामान्यभूतजातिनं तन्मात्ररसं तस्मात् तन्मात्ररसो नैतल्लक्षणलक्षित इति अतीन्द्रियरसेऽप्रसङ्गसद्भाव एव, न तु निवारितः स्यात्। अस्माकं मतेनेदं तन्मात्ररसलक्षणमिति तुल्यस्वादिष्टं क्षितिस्तथेत्युक्त्या तस्य व्यावृत्तत्वख्यापनादस्य रसनार्थो रस इति लक्षणस्यालक्ष्यस्तन्मात्ररस इति ज्ञापितम्। तस्माद्रसनार्थो रस इत्यस्य लक्षणस्य रसनेन्द्रियग्राह्यवृत्तिगुणत्वावान्तरजातिमत्त्वं रसत्वमिति व्याख्यानमसाधु। आकाशानुप्रवेशे वायुर्द्विगुणस्तस्य तेजस्यनुप्रवेशे तेजस्त्रिगुणं तस्य रसतन्मात्रास्वप्स्वनुप्रवेशे चतुरात्मिका आपस्तज्जलानुप्रवेशेन श्रूयते रसवती क्षितिरित्यतस्तन्मात्ररसव्यावृत्तिज्ञापनार्थमाह—क्षितिस्तथेति। 'अत्रेदं हृदयं कतिधापुरुषीये "महाभूतानि खं वायुरग्निरापः क्षितिस्तथा। शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्गुणाः। तेषामेकगुणः पूर्व्वो गुणवृद्धिः परे

प्रधानकारणभूताः। स्वादय इत्यनेनैव सिद्धे लब्धे पुनश्चेय इति वचनं तेषामेव व्यस्तसमस्तानामपि प्रत्ययत्वदर्शनार्थं, अत एव व्यस्तसमस्ताऽऽकाशादिसंसर्गात् भेदस्तु रसानां मधुरतरमधुरतमादिरेवन्तु रसभेदश्चोपपन्नः। विशेषे चेति चकारादभिव्यक्तावप्याकाशादीनां निमित्तकारणत्वं दर्शयति, वक्ष्यति हि तास्वन्तरीक्षात् भ्रष्टा भ्रश्यमानाः पञ्चमहाभूतगुणसमन्विता जङ्गमस्थावराणां भूतानां मूर्त्तीरभिप्रीणयन्ति यासु षड्भिमूर्च्छन्ति रसाः" इति। अन्ये तु विशेषे चेति चकारं स्वादयश्चेत्यत्र योजयन्ति, तेन चकारात् कालोऽपि विशेषेऽभिव्यक्तौ च कारणं लभ्यते, साक्षात् तु कालस्यावचनेन खादिभ्योऽप्यपकृष्टं कालस्य कारणत्वं दर्श्यते। किंवा रसस्यापो द्रव्यं क्षितिस्तथेति च पूर्व्ववदेव निर्वृत्तौ च, क्षितिरेव,

परे। पूर्व्वः पूर्व्वगुणश्चैव क्रमशो गुणिषु स्मृतः॥" इति। जलानुप्रविष्टायां क्षितावपि रसोपलम्भात् क्षितिश्च सह रसेन भौतिकद्रव्योत्पत्तौ गुणकर्म्माश्रय-समवायिकारणमिति रसस्य निर्वृत्तौ च द्रव्यमिति। अत एव सुश्रुतेनोक्तं "तस्मादाप्यो रसः" इति न तु पार्थिवोऽपि रस इति, स्वयञ्च घ्राणार्थो रस इति न कृतम्।

नन्वेवञ्चेन् कथं मधुरादिप्रविभागः स्यादित्यत आह, विशेषे चेत्यादि। विशेषे रसस्य प्रभेदे प्रति च खादयस्त्रय आकाशवाय्वग्नयस्त्रयः प्रत्यया हेतवः। निर्द्देशादेव त्रय इति प्राप्तौ पुनस्त्रय इत्यनेन व्यस्ताः समस्ताश्च हेतव इति दर्शितम्। तेन भूम्यम्बुगुणबाहुल्यान्मधुर इत्यादि वक्ष्यते। एतेनैतदुक्तं भवति नाप्सु न च क्षितौ मधुरादिरसविशेषो वर्त्तते, किन्तु रसनार्थो यः कश्चिदव्यक्तो भावो रसनेन प्रत्यक्षमुपलभ्यते पाञ्चभौतिकेषु द्रव्येषु स खलु तेषु पञ्चभिर्भूतैर्जन्यमानेषु द्रव्येष्वद्भ्यः क्षितेश्चाभि-व्यज्यमानः खादिभूतत्रय-जल-क्षिति-संयोगान्मधुरादि-विशेषेणाभिव्यज्यते। इति खादयस्त्रयो विशेषे प्रत्यया हेतवो न तु प्रकृतिभूतकारणानि।

ननु जलक्षित्योरिव किं पाञ्चभौतिके पूर्व्वमव्यक्तोऽथ व्यक्तो वा रसोऽभि-निर्वर्त्तते ततो विशेष इत्याशङ्कायां चकारद्वयं युगपद्रसस्य जलक्षितिभ्यां निर्वृत्तिः खादिभियोगे च मधुरादिविशेष इत्यर्थः। उक्तं च सुश्रुतेन रसविशेषविज्ञानीये "आकाशपवनदहनतोयभूमिषु यथासङ्ख्यमेकोत्तरपरिवृद्धाः शब्दस्पर्शरूपरस-गन्धास्तस्मादाप्यो रसः। परस्परसंसर्गात् परस्परानुग्रहाच्च परस्परानुप्रवेशाच्च सर्व्वेषु सर्व्वेषां सान्निध्यमस्ति, उत्कर्षापकर्षात्तु ग्रहणम्। स खल्वाप्यो रसः शेषभूतसंसर्गाद्विदग्धः षोढ़ाभिव्यज्यते। तद् यथा—मधुरोऽम्लो लवणः कटुकस्तिक्तः कषाय इति"॥ ३२॥

निर्वृत्तावभिव्यक्तौ प्रत्ययो नापः। यत आपो ह्यव्यक्तरसा एव, क्षितिसम्बन्धादेव च रसोऽभिव्यक्त उपलभ्यते, उक्तञ्च "अहमन्यात्वरणां भूतानां मूर्त्तीरभिर्मिण्यन्ति यासु षड्भिमूर्च्छन्ति रसाः" इति। तेन पार्थिवद्रव्यसम्बन्धादेवापां रसो व्यज्यते, नान्यथा। विशेषे चेति चकारात् अप्क्षिती विशेषे कारणे, यद्यपि चाप्क्षिती विशेषे कारणे, तथापि 'सोमगुणातिरेकात् मधुरः' इत्यादौ तु खादय एव तथा सन्निविशन्ति यथा सोमोऽतिरिक्तो भवति, तेन तत्रापि क्रमत्वेन सन्निविष्टाः खादय एव विशेषहेतव इति। यद्यपि चाभिव्यक्तिर्मधुरादिविशेषरहिता क्वचिद्भवति तथापि सामान्येन सर्व्वत्र यदभिव्यक्त्यनुगतं कारणमुपलभ्यते क्षितिरूपं जलक्षितिरूपं वा तदभिव्यक्तिकारणं, यदनुगमात् तु मधुरादिविशेषोपलब्धिस्तद्विशेषकारणमुच्यते॥ ३२॥

स्वादुरम्लोऽथ लवणः कटुकस्तिक्त एव च।
कषायश्चेति षट्कोऽयं रसानां संग्रहः स्मृतः॥
स्वाद्वम्ललवणा वायुं कषायस्वादुतिक्तकाः।
जयन्ति पित्तं श्लेष्माणं कषायकटुतिक्तकाः॥ २४॥ *

गङ्गाधरः ननु विशेषे च प्रत्ययाः स्वादयस्त्रय इति चोक्तं, ते च विशेषाः के इत्यत आह—स्वादुरम्लोऽथेत्यादि। स्वादुरिति मधुर इत्यर्थः। स्वाद्वादीनामुत्तरोत्तरापकर्षात् पूर्व्वपूर्व्वमभिधानम्। षट्कोऽयमिति षडेव, न तु सप्तकादिरित्यर्थः। पुनः सङ्ख्यावचनात् स्वाद्वादिविशेषस्तु स्वादिद्रव्यतत्संयोगादेव भवति तदुक्तं सुश्रुतेनापि "भूम्यम्बुगुणबाहुल्यान्मधुरः। तोयाग्निगुणबाहुल्यादम्लः। भूम्यग्निगुणबाहुल्याल्लवणः। वाय्वग्निगुणबाहुल्यात् कटुकः। वाय्वाकाशगुणबाहुल्यात्तिक्तकः। पृथिव्यनिलगुणबाहुल्यात् कषाय इति।"

स्वयमपि वक्ष्यत्यात्रेयभद्रकाप्यीये। "सौम्याः खल्वापोऽन्तरीक्षप्रभवाः प्रकृतिशीता लघ्व्यश्चाव्यक्तरसास्त्वन्तरीक्षादभ्रश्यमाना भ्रष्टाश्च पञ्चमहाभूतविकारगुणसमन्विता जङ्गमस्थावराणां भूतानां मूर्त्तीरभिप्रीणयन्ति। तासु च मूर्त्तिषु षड़भिमूर्च्छन्ति रसाः, तेषां षण्णां रसानां सोमगुणातिरेकान्मधुरो रसः। भूम्यग्निभूयिष्ठत्वादम्लः। तोयाग्निभूयिष्ठत्वाल्लवणः। वाय्वग्निभूयिष्ठत्वात् कटुकः। वाय्वाकाशातिरेकात्तिक्तकः। पवनपृथिव्यतिरेकात् कषायः। एवमेषां षण्णां रसानां षट्त्वमुपपन्नं न्यूनातिरेकविशेषाद्भूतानाम्" इत्यादिना रसानामूर्द्धादिभाजित्वं प्रत्येकेन स्वरूपत्वं गुणकर्म्मादिकञ्च विशेषेण वक्ष्यति।

चक्रपाणिः—रसविशेषानाह—स्वादुरित्यादि। अत्र सर्व्वप्राणिनामिष्टत्वादादौ मधुर उक्तः, तदनु च प्राग्वर्भाव्योक्तक्रमेणैवादिनिर्द्देशक्रमो बोद्धव्यः। षट्क इति पुनः संख्याकरणं परवादिमतसप्तसंख्यत्वादिनिषेधार्थम्। अयं संग्रह इत्यनेनावान्तरभेदबहुत्वं तथा वक्ष्यमाणरससंसर्गबहुत्वञ्च दर्शयति। रसानामुपयुक्ततरं कार्य्यमाह—स्वाद्वम्लेत्यादि। अत्र च वायोर्नीरसस्यापि

* अध्यायान्ते संग्रहश्लोकटीकायां "भूयश्चात इत्यादि लवणाः कफमित्यन्तैः सार्द्धचतुर्दशश्लोकैः गणप्रदव्यरसा उक्ताः" इति विवृतं गङ्गाधरेण; आदर्शपुस्तकेषु श्लोकस्यैकस्य अनुल्लेखात् न पूर्य्यते सा संख्या, अतः स श्लोको विनिवेशितोऽस्माभिरत्र पादटिप्पण्याम्। यथा—

"कट्वम्ललवणाः पित्तं कोपयन्ति समीरणम्।
कषायकटुतिक्ताश्च स्वाद्वम्ललवणाः कफम्॥" इति।

कर्म्माण्याह—स्वाद्वम्लेत्यादि। स्वाद्वम्ललवणा वायुं जयन्ति वृद्धं समं कुर्व्वन्ति समं ह्रासयन्ति क्षीणमतिह्रासयन्ति। नीरसत्वेऽपि वायोः स्वाद्वादिरससहचरितैः स्निग्धगुरुत्वादिभिर्मधुरः स्निग्धोष्णादिभिरम्लः स्निग्धोष्णगुरुत्वादिभिर्लवण इत्येते वातविजेतृत्वेन व्यपदिश्यन्ते। कषायस्वादुतिक्तकाः पित्तं जयन्ति शैत्यगौरवाभ्यां स्निग्धशीतगुरुत्वैः शैत्यरौक्ष्याभ्यां तिक्तस्तिक्तस्यापि पित्तस्य जयो वीर्य्याद्भिन्नत्वे सामत्वे च। श्लेष्माणं कषायकटुतिक्तका जयन्ति रौक्ष्येण लघूष्णरूक्षत्वैः रूक्षलघुत्वाभ्यामिति क्रमेणाऽन्नेयम्। एषां वातादिप्रशमकत्ववचनेन कट्वादीनामेभ्यो भिन्नानां वातादिकोपनत्वमुन्नेयं वा तदप्युक्तं तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्। कषायतिक्तमधुराः पित्तमन्ये तु कुर्व्वते इति। अन्ये च पठन्ति "कट्वम्ललवणाः पित्तं कोपयन्ति समीरणम्। कषायकटुतिक्ताश्च स्वाद्वम्ललवणाः कफम्" इति। अत्र कट्वम्ललवणाः पित्तं कोपयन्ति रूक्षोष्णलघुत्वैः कटुको रसः पित्तं वृद्धं करोति उष्णतीक्ष्णकटुत्वैः क्षीणं समं वा वृद्धं वा। अम्लो रसो लघूष्णत्वाभ्यां पित्तं सममुष्णतीक्ष्णत्वादिभिर्वृद्धं करोति क्षीणं समं वा वृद्धं वा। लवणो रसः उष्णत्वेन पित्तं समं वर्द्धयति उष्णत्वतीक्ष्णत्वाभ्यां क्षीणं समं वा वृद्धं वा करोति। स्वाद्वम्ललवणाः कफं कोपयन्ति मधुरो रसः स्निग्धशीतगुरुत्वैः कफं समं वृद्धं करोति। अम्लो रसः स्निग्धत्वेन लवणो रसः स्निग्धत्वगुरुत्वाभ्यां क्षीणन्तु समं वृद्धं वा। कटुतिक्तकषायाश्च कोपयन्ति समीरणमिति कटुको रसः समीरणं लघूष्णरूक्षत्वैस्तिक्तको रसः शीतरूक्षलघुत्वैः कषायो रसः शीतरूक्षत्वाभ्यां समं समीरणं वृद्धं करोति क्षीणं समं वा वृद्धं वा इति। केचिदत्र वातपित्तकफानां क्रमेण निर्णयस्यानुक्रमदोषपरिहारार्थञ्च "कषायकटुतिक्ताश्च कोपयन्ति समीरणम्। कट्वम्ललवणाः पित्तं स्वाद्वम्ललवणाः कफम्" इति पठन्ति। तदेतत्पाठोऽत्र न सङ्गच्छते, वातादीनां प्रशमनप्रकरणात् प्रकोपणोपदेशस्याप्रकृतेन सिद्धेः।

रससहचरितस्निग्धत्वादिगुणविपरीतैः प्रशमो ज्ञेयः, एवं मधुरस्यापि श्लेष्मणोऽम्ललवणाभ्यां स्निग्धत्वाभिष्यन्दित्वादिसहचरितगुणयोगादेव वृद्धिः। अत्र च ये प्रशमकत्वेन रसा वातादीनामोक्ताः, ते वर्द्धका बोद्धव्याः; यदाह वाग्भटः "तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्। कषायतिक्तमधुराः पित्तमन्ये तु कुर्व्वते" इति। रसकर्म्मनिर्देशेनैव गुणवीर्य्यविपाकानामपि कर्म्मनिर्देशः कृत एव, यतो मधुरादिरसेनैव सर्व्वगुणान् वीर्य्यविपाकांश्च निर्द्देक्ष्यत्यात्रेयभद्रकाप्यीये "तत्र स्वादुः" इत्यादिना, तथा "कटुतिक्तकषायाणां विपाकः प्रायशः कटुः"

किञ्चिद्दोषप्रशमनं किञ्चिद्धातुप्रदूषणम् ।
स्वस्थवृत्तौ मतं किञ्चित् त्रिविधं द्रव्यमुच्यते ॥ ३५ ॥

विषमवातादिजयोपदेशेन मधुरादिरससहचरितगुणवीर्य्यसंज्ञानां गुरुलाघवशीतोष्णादीनां वातादिजयित्वमुक्तमाचार्य्येण । आत्रेयभद्रकाप्यीये हि वक्ष्यति मधुरादिरसद्वारेणैव द्रव्याणां गुणवीर्य्यविपाकान्, तद् यथा—"तेषां षण्णां रसानामेकैकस्य यथाद्रव्यं गुणकर्म्माण्यनुव्याख्यास्यामस्तत्र मधुरो रसः शरीरसात्म्यात्" इत्यादिभिरुक्त्वा मधुरादिरसगुणान्, ततः परम् "शीतं वीर्य्येण यद् द्रव्यं मधुरं रसपाकयोः । तयोरम्लं यदुष्णं च यच्चोष्णं कटुकं तयोः । तेषां रसोपदेशेन निर्देश्यो गुणसंग्रहः । वीर्य्यतोऽविपरीतानां पाकतश्चोपदेक्ष्यते ॥" इत्यादि । तथा "कटुतिक्तकषायाणां विपाकः प्रायशः कटुः । अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा" इत्यादि ॥ ३४ ॥

गङ्गाधरः ।—अथ रसद्वारेण द्रव्याणां गुणवीर्य्यविपाकसंग्रहणे धातुवैषम्यप्रशमनत्वमुक्तत्वापि प्रभावजकर्म्मणोऽसंग्रहात् रसानां द्रव्याश्रितत्वाच्च शमनदूषणादिकर्म्मणापि सर्व्वेषांसंग्रहणाय द्रव्यभेदमुपदिशति किञ्चिद्दोषेत्यादि । द्रव्यमुच्यते इति द्रव्यशब्दस्य त्रिभिः किञ्चित्पदैरन्वयः । किञ्चिदिति द्रव्यस्य द्रव्यत्वावच्छिन्ने वृत्तिमतो विशेषणं द्रव्यत्वव्याप्यधर्म्मवद्वाचकं पुनः पठितत्वेन भेदमन्योन्यं गमयति, तेन यद् द्रव्यं द्रव्यत्वव्याप्यधर्म्मवद् दोषप्रशमनं तद्भिन्नं द्रव्यत्वाव्याप्यान्यधर्म्मवद् द्रव्यं स्वस्थवृत्तिविहितद्रव्यत्वव्याप्यधर्म्मवद्भिन्नं च यत् तद् द्रव्यं धातुप्रदूषणमिति त्रिःपठित-किञ्चित्पदेन परस्परं भेदो गम्यते नैकपठितेन परन्वभेद एव लभ्यते किञ्चित् द्रव्यं दोषप्रशमनं धातुदूषणं स्वस्थहितमित्यवगमात् । न चेष्टापत्तिरस्तु यद्धि द्रव्यं

तथा "अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा । शीतं वीर्य्येण यद् द्रव्यं मधुरं रसपाकयोः । तयोरम्लं यदुष्णञ्च यच्चोष्णं कटुकं तयोः" इत्यादिना ॥ ३४ ॥

चक्रपाणिः—अतोऽवशिष्टद्रव्यकार्य्यं प्रभावकृतं वक्तुं प्रभावभेदेन द्रव्यभेदमाह—किञ्चिदित्यादि । किञ्चिदिति न सर्व्वं, दोषस्य दोषयोर्दोषाणां वा प्रशमनं दोषप्रशमनम् । दोषप्रसङ्गेन दुष्टा रसादयोऽपि गृह्यन्ते, तेन, द्रव्यमहिम्ना सदोषाणां दुष्टानां रसादीनां धातूनां वा शमकम् आमलककुरालभादि तत् गृह्यते । आमलकं हि शिवत्वात् त्रिदोषहरं, दुरालभापि वातपित्तश्लेष्महरी । यद्यपि चामलकस्य "हन्ति वातं तदम्लत्वात्" इत्यादिना गुणद्वारा त्रिदोषहरत्वमुच्यते, तथापि तत् प्रभावकृतं हितत्वमेव बोद्धव्यं, यतस्तत्राम्लत्वादिना पित्तादिकोपोऽपि

यस्मिन् देशे वयसि काले च प्रकृतिदोषबलस्वबलदेहबलाद्यनुरूपमात्रयोपयुक्तं यद्धातुदुष्टिप्रशमकं भवति, तदेव द्रव्यं तथा प्रयुक्तं न तद्धातुदूषकं भवति न वा स्वस्थवृत्तिहितं भवति। एवं यद् द्रव्यं यद्धातुप्रदूषणं तद् द्रव्यं न तद्धातुप्रशमकं न वा स्वस्थहितम्। यच्च द्रव्यं स्वस्थहितं तथा प्रयुक्तं तन्न धातुदोषप्रशमनं न वा धातुदूषकमिति।

नन्वस्ति स्वस्थवृत्तिसम्मतरक्तशाल्यादीनां दोषप्रशमनत्वं ज्वरादौ प्रयुक्तत्वेन वक्ष्यमाणत्वात्। कफदोषप्रशमनानामपि कटुकरसादीनां वातप्रदूषणत्वमिति यच्च धातुप्रदूषणं तत् कफप्रशमनमिति, किञ्च येन द्रव्येण यो धातुः साम्यावस्थो ह्रसति तेन द्रव्येणैव वृद्धावस्थः स धातुः समो भवति समो येन ह्रसते क्षीणस्तेन समः स्यादिति कथं तथा व्यवस्थीयते इति चेन्न दोषप्रशमनानि हि द्रव्याणि विगुणप्रकृत्यादिप्रतिबन्धकाभावे दोषं प्रशमयन्त्येव प्रतिबन्धकसत्त्वे तु कुर्व्वन्ति न च तावता तेषां दोषप्रशमनत्वस्वभावो व्याहन्यते, यथा सति हि प्रतिबन्धके मणिमन्त्रे वह्निर्न दहति तावता तु वह्नेः दाहकत्वस्वभावो व्याहन्यते। एवं धातुप्रदूषकस्यापि यदा निमित्तान्तरयोगात् धातुप्रशमकत्वं स्यात् तदा धातुप्रदूषणत्वभावेऽपि निमित्तान्तरयोगं विना धातुप्रदूषकत्वस्वभावो न व्याहन्यते। यथाग्निसम्बन्धेन जलस्योष्णत्वेन शीतस्वभावो न व्याहन्यते। केवलं प्राधान्येन व्यपदेशो युक्तः। यच्च धातुप्रदूषकं क्षीणं वर्द्धयित्वा समकरं भवद्धातुदोषप्रशमनं भवति, तत् तु साम्यावस्थाकारकत्वेन न दोषावह एवेति दोषप्रशमकत्वेन न व्यपदिश्यते इत्याह कश्चित्। अन्ये त्वाहुर्यत् तु वातकरं कफहरं

युज्यते न त्वामलकप्रभावान्न स्यात्। धातुप्रदूषणमिति धात्वादीनां समत्वेन शरीरधारणात्मकानां तथा रसादीनाञ्च दूषणं किञ्चित्, यथा यवकमन्दकादिषु। मृत्युः अपलिष्टते नीरोगत्वं नेति स्वस्थस्तस्य वृत्तिः स्वस्थरूपतयानुवर्त्तनं तत्र स्वस्थवृत्तौ मतमभिमतं पूजितमिति यावत्। संख्येयनिर्देशादेव त्रित्वे लब्धे त्रिविधग्रहणं नियमार्थं, तेन संशोधनसंशमनादीनामनेकविधानामपि तत्रैवावरोधः। रसायनवाजीकरणे तु स्वस्थवृत्तिमात्र एव;—यदुक्तं "स्वस्थस्योर्जस्करं यत्तु तद् वृष्यं तद्रसायनम्" इति। प्रति प्रति तु पाठे किञ्चिद्ग्रहणं दोषहरत्वादिकर्म्मणां विभिन्नद्रव्याश्रयित्वोपदर्शनार्थम्। एककिञ्चिद् ग्रहणे तु एकमेव द्रव्यं दोषहरं धातुप्रदूषकं स्वस्थवृत्तिमतञ्च स्यात्, न च तदभिमतम्। ननु सुस्थवृत्तिमतानां रक्तशालिषष्टिकयवादीनां दोषप्रशमनत्वमपि दृश्यते, यतो वक्ष्यति तत्र तत्र रक्तशाल्यादीनां ज्वरादौ प्रयोगं, तथा प्रकृतिशरीरदेशकालमात्राभियुक्तं दोषप्रशमनमपि दोषकरं भवति, यथा—"आमलकमतिमात्रमश्निमान्द्याय" इत्यादि ज्ञेयं, तथा धातुप्रदूषणमपि दोषप्रशमनं दृश्यते, यथा "विषमुदरहरम्," तथा यवेन

पित्तकरं मरिचादि तद्दोषप्रशमनं धातुप्रदूषणञ्चेत्युभयं न च तावता द्रव्यस्य त्रैविध्यहानिर्यथा पञ्च गुल्मा इत्यादौ संसर्गजगुल्मत्रयसम्भवेऽपि न पञ्चविधत्व-व्याघात इति, किंवा यस्योभयकरत्वं तद्रसवीर्य्यादिद्वारेणैव न तु प्रभावकृतमिति द्रव्यप्रभावाधिकारे तन्नोदाहार्य्यं न हीदृशं किञ्चिद् द्रव्यमस्ति यत्प्रभावेणैकं दूषयत्येकं शमयतीति, स्वयमेवैतेनोपदिष्टमिति।

वस्तुतस्तु स्वस्थवृत्तिमतमिति स्वस्मिन् शरीरमानसधातुसाम्ये स्थितस्य तत्त्वेन वृत्तिवर्त्तनं तत्र मतं हितसेवनेनाहितवर्ज्जनेन जीवनरक्षणमिति यद् द्रव्य तन्न धातुदुष्टिप्रशमनं न वा धातुप्रदूषणं, किन्तु धातुदूषकत्वाभावेन धातुदुष्ट्यां ज्वरादौ हितमेव प्रयुज्यते न तु प्रशमकत्वेन हिततया प्रयुज्यते न वा भाविदोष-प्रशमत्वेन दोषप्रशमनमिति। यच्च द्रव्यं धातुप्रदूषकं यस्य धातोर्या हानिरूपां वा वृद्धिलक्षणां वा दुष्टिं जनयति यथैवोपयुक्तं तथैवोपयुक्तं तस्य धातोस्तां दुष्टिं तद् द्रव्यं न जनयत्येवेति वातकरं भवतु कफकरं पित्तहरं वृद्धिकरं वा हानिकरं भवतु किन्तेनेति। यच्चापि द्रव्य दोषप्रशमनं यस्य धातोर्यां दुष्टिं हानिं वा वृद्धिं वा यथैवोपयुक्तं प्रशमयति तथैवोपयुक्तं तस्य धातोस्तां दुष्टिं तद् द्रव्यं न जनयत्येवेति, वातकरं भवतु कफकरं पित्तहरं वृद्धिकरं वा हानिकरं भवतु किन्तेनेति। गुणतो रसतो वीर्य्यतो विपाकतः प्रभावतश्च धातुप्रदूषणं दोषप्रशमनं स्वस्थवृत्तौ मतमिति

मन्दकादिदोषकरं तदेव क्षीणदोषं प्रति वृद्ध्या साम्योपादानेन दोषप्रशमनं स्यात्; तदेवमित्यव-स्थितत्वात् किञ्चिद्दोषप्रशमनमित्यादि विरुद्धम्। अत्रोच्यते स्वस्थवृत्तिमतं रक्तशाल्यादि दोषप्रशमनमपि स्यात्, परं तत् प्रायः स्वस्थवृत्तिहितत्वात् स्वस्थवृत्तिमतत्वेन गृह्यते, वचनं हि "स्वस्थस्योर्जस्करं यत्तु तद् वृष्यं तद्रसायनम्। प्रायः प्रायेण रोगाणां द्वितीयं शमने हितम्। प्रायःशब्दो विशेषार्थः उभयं ह्युभयार्थकृत्॥" इति। दोषप्रशमनानि द्रव्याणि विगुणप्रकृत्यादि-प्रतिबन्धकाभावे दोषप्रशमनमाचरन्त्येव, प्रतिबन्धकसम्भवे तु न कुर्व्वन्ति; न चैतावता तेषां स्वस्वभावो न भवति; न ह्यग्निर्मणिविप्रतिबन्धनात् कदाचित् न दहतीति दाहकत्वेन नोपदिश्यते; एवं धातुप्रदूषकस्यापि कदाचिद्धातुप्रशमकत्वं निमित्तान्तरयोगाद्बोध्यम्। न धातुदूषकः स्वरूपतो हन्ति, यथा सलिलस्याग्निसम्बन्धादुष्णत्वं; तस्माद् यद् यद् यस्य प्रायिकमनन्योपाधिकृतञ्च रूपं, तेनैव व्यपदेशो युक्तः। यच्च मन्दकादीनां क्षीणदोषवर्द्धकत्वेन दोषप्रशमकत्वं तद्दृश्यमानमपि कादाचित्कत्वात् तथा साम्याय ह्युत्तरकाले दोषावहत्वाच्च न व्यपदिश्यते दोषप्रशमकत्वेन। ननु यद्यप्येवं तथापि यदेकदोषहरमपरदोषकरं यथा मरिचं श्लेष्महरं पित्तकरञ्चेत्यादिवत्तु द्रव्यजातं तत् कुत्र प्रविशतु? अत्र केचिद् वदन्ति–यदुभयात्मकं तद्दोषहरं दोषकरञ्च, न चैतावता द्रव्यत्रित्वक्षतिः; यतो वातादिसंसर्गजव्याधिसद्भावे वातादिजन्यत्वेन

भेदेन त्रिविधमेव न तु संशोधनादिभेदेन चयप्रकोपकादिभेदेन वाजीकरण-रसायनादिभेदेन चापरिसंख्येयं धातूनां शारीराणां वातादीनां रसादीनां मलमूत्रादीनाञ्च सञ्चितानां वाह्यानामाभ्यन्तराणां वा दोषस्य वृद्धात्मकस्य संशोधनेन निर्हरणात् ह्रान्यात्मकस्य वर्द्धनात् मानसानाञ्च रजस्तमोऽहङ्कारादीनां वैषम्यलक्षणस्य दोषस्य संशोधनादिना शमनं हि प्रशमनमिति सुतरां प्रशब्दोपादानं सङ्गच्छते।

एवं धातुप्रदूषणं हि चयप्रकोपप्रसरस्थानसंश्रयैर्धातूनामव्यापन्नानां वातादीनां रसादीनां मनःश्रोत्रादीनां शारीराणां रजस्तमःसत्त्वबुद्ध्यहङ्काराणां मानसानाञ्च युगपत् साम्यनाश सञ्चयवृद्धिस्थानापकर्षणलक्षणवैषम्यलक्षणां च दुष्टिं जनयतीति। तथा स्वस्थवृत्तौ मतमपि तद् यत् स्वास्थ्यं रक्षति स्थिरञ्च स्वास्थ्यमतिमैथुनादिभिर्व्याघातादृक्षति जीवितादिकञ्च न ह्रासयति इति।

दोषप्रशमनं दोषप्रदूषणमिति न कारणे वातपित्तकफानां शारीरदोषसंज्ञया रजस्तमसोश्च मानसदोषसंज्ञया दोषशब्देन लाभः स्यान्न त्वन्येषाम्। किञ्चिद्धातुप्रदूषणमिति च न कारणे रसादीनां धातुसंज्ञया लाभः स्यान्न त्वन्येषामिति. तन्निरासार्थं दोषशब्दधातुशब्दोपादानेन भावसाधनदोषशब्देन दूषकस्य कर्त्तृ-साधनधातुशब्देन धारकस्य व्याप्त्याः परिग्रहात् रसादीनामपि दूषणं वातादीनामपि प्रदूषणं वक्ष्यमाणं सङ्गच्छते इति कश्चित्. दोषत्वं वैषम्यतत्त्वं धातुत्वं प्रकृतिसमत्वम्। दोषप्रशमनं विषमाणां साम्यकरणं धातुप्रदूषणं समानां वैषम्य-

यत् त्रैविध्यं रोगाणामुच्यते तत् खण्डितं स्यात्, किंवा मरिचादीनां यदुभयकर्त्तृत्वादिकं न तत् द्रव्यप्रभावकृतं किन्तर्हि रसादिकृतम्, तेन न द्रव्यप्रभावप्रस्तावे उदाहरणीयम्। न च किञ्चिद् द्रव्यं तादृशमस्ति यत् प्रभावादेव किञ्चिद्दोषं करोति किञ्चिच्छमयतीति, न दोषप्रशमनत्वादिप्रभावं प्रति नियमः, अयमेव च पक्षः साधुः। ननु किञ्चिद्दोषप्रशमनं किञ्चिद्दोषप्रदूषणमिति वा क्रियतां, किञ्चिद्धातुप्रशमनं किञ्चिद्धातुप्रदूषणमिति वा; नैवं, तथा सति दोषशब्दस्य मुख्यवृत्त्या वातादिष्वेव वृत्तित्वात् तथा धातुशब्दस्य रसादिवृत्तित्वात् उभयग्रहणं न प्राप्यते। उभयपदोपादानेन हृयं निपुणकारी तन्त्रकारो दूषणत्वधारणत्वयोरपरिग्रहात् दोषप्रशमनेन दुष्टरसादिप्रशमनमपि भेषजं त्रिविधादित्वपरीत्यायाद्विवक्ष्यमाणं तथा धातुप्रदूषणेन वातादिप्रदूषकमपि निदानादिवक्ष्यमाणं ग्राहयति। प्रशब्दोऽत्र प्रकारे, तेन प्रकारेण मृदु-मध्यादिना प्रकोपणं तथा प्रकारेण संशोधनं संशमनादिना संशमनमुच्यते; किंवा धात्वर्थानुवृत्तावेव द्वमौ प्रशब्दौ, यथा स्तुतोऽसः परिधावतीत्यत्र धावतीत्यर्थः। आद्यौ दोषप्रशमग्रहणं तस्यैवेहाभिप्रेतत्वात्। ननु स्वस्थवृत्तिमतद्रव्यं व्याधिदोषहरत्वेन दोषप्रशमनमेव, नैवं, न हि स्वास्थ्यानुवृत्तिजनकत्वाद्दोषनिवृत्तिकरं दोषहरणमुच्यते किं तर्हि समधातूनामवर्द्धकत्वेनाश्रय

तत् पुनस्त्रिविधं ज्ञेयं जाङ्गमौद्भिदपार्थिवम् ।
मधूनि गोरसाः पित्तं वसामज्जासृगामिषम् ॥
विण्मूत्रं चर्म्म रेतोऽस्थि स्नायुशृङ्गनखाः खुराः ।
जङ्गमेभ्यः प्रयुज्यन्ते केशा लोमानि रोचनाः ॥ ३६ ॥
सुवर्णं समलाः पञ्च लोहाः ससिकताः सुधा ।
मनःशिलाले मणयो लवणं गैरिकाञ्जने ॥

करणमित्यर्थः । योगपारिभाषिकी संज्ञा हि योगवृत्त्या प्रतिपाद्यते तया तल्लाभात् ॥ ३५ ॥

गङ्गाधरः—यद्यपि द्रव्यमिति खादिनवकं पाञ्चभौतिकञ्च लभ्यते तथापि इह क्रियाविशेषेण विभज्य स्वरूपेण विभजति—तत्पुनरित्यादि । तन्मूर्त्ति-मत् पाञ्चभौतिकं द्रव्यं भेदान्तरेणापि त्रिविधमस्मिंस्तन्त्रे प्रयोक्तुमर्हत्वेन बोध्यं, तेन वाय्वादीनाममूर्त्तद्रव्यत्वेनानुपदेशेऽपि न न्यूनत्वम् । तत् तु त्रिविधं विभजते जाङ्गमित्यादि । जङ्गमानामिदमिति जाङ्गमम् । औद्भिदम् उद्भिद्य पृथिवीं प्राणी जायते इत्युद्भित्, तस्यावयवरूपमिदमौद्भिदं द्रव्यमित्यन्वयः । पृथिव्या अप्राणिप्राणिरूपाया विकाररूपं पार्थिवं पृथिवीप्रधानमस्य विकारस्य तद्वा पार्थिवमिति । तत्र जङ्गमश्चतुर्योनिजरायुजाण्डजस्वेदजोद्भिज्जभेदात् । तद्भेद-मत्राप्रयोजनान्नोपदिश्य तद् द्रव्यभेदेषु प्रयोक्तुमर्हाणि यानि यान्यस्मिंस्तन्त्रे तान्याह मधूनीत्यादि-रोचना-इत्यन्तमार्द्धश्लोकेन । मध्वादीन्यूनविंशति-द्रव्याणि जङ्गमेभ्यः प्रयुज्यन्ते । प्राधान्येन प्रायश उपयोगित्वादेतानि निर्दिष्टानि तेनान्यान्यपि वस्त्याण्डादीनि ग्राह्याणीति बोध्यम् । आमिषं मांसं रोचनाः काले परिणामेन विशिष्टरूपं पित्तादि इति जाङ्गमम् ॥ ३६ ॥

यद्यपि जाङ्गमानन्तरमौद्भिदमुद्दिष्टमिति जाङ्गमविवरणानन्तरमौद्भिदविवरण-मेव युज्यते, तथाप्यस्मिंस्तन्त्रे पार्थिवापेक्षया औद्भिदानां बहुप्रपञ्चत्वेन

करत्वेन च रसादिस्रोतसामानुगुण्येन धातुसाम्यानुवृत्तिकरमुच्यते, वचनं हि "पथ्यं पथोऽनपेतं यत्" इति ॥ ३५ ॥

चक्रपाणिः—सम्प्रत्यन्यथा द्रव्यभेदमाह—तत् पुनरित्यादि । तदिति द्रव्यं । गच्छतीति जङ्गमं । उद्भिद्य पृथिवीं जायत इति औद्भिदं वृक्षादि । उक्तप्रकारद्वयातिरिक्तपृथिवीविकारः पार्थिवम् । संस्वेदजस्येह क्रिम्यादेर्जङ्गमेऽवरोधः, कुम्भाण्डकादेश्च औद्भिदे । इह च द्रव्यशब्देन पार्थिवद्रव्य-

**भौममौषधमुद्दिष्टमौद्भिदन्तु चतुर्विधम् ।**
**वनस्पतिस्तथा वीरुद्वानस्पत्यस्तथौषधिः ॥**

प्रयोगात् स्वल्पप्रयोगाच्च पार्थिवानां जाङ्गमानन्तरं वक्तुमारम्भः—सुवर्णमित्यादि भौममौषधमुद्दिष्टमित्यन्तेन सपादेनैकश्लोकेन। विंशतिभौममौषधमुद्दिष्टम्। सुवर्ण स्वर्णं पञ्च लोहाश्चेति षट्, समलास्तेषां मलरूपाणि च षट्; शिलाजतूनि चत्वारि सौवर्ण राजतताम्रायसानि, शिराटिका लोहमलं मण्डूरञ्चेति। पञ्च लोहा रजतताम्रत्रपुसीसकाललोहाः ससिकताः सिकताशर्कराखर्परादिभिः सहिताः। सुधा दारुमृगगोदन्तादयः पार्थिवविषरूपाः। मनःशिला स्वनामख्याता। आलं हरितालं सपत्रं निष्पत्रञ्चेति द्विविधम्। मणयश्चन्द्रकान्तादिर्मणि-मुक्ता-प्रवाल-मुक्तास्फोट-हीरक-वैक्रान्तादयः। लवण सैन्धवादिकम्। गैरिकं स्वर्णगैरिकखटिकादिका गिरिमृत्तिका। अञ्जनं सौवीराञ्जनरसाञ्जनकाशीसादिकम्।

औद्भिदमौषधमाह—औद्भिदन्त्वित्यादिपादत्रयेण। वनस्पतिरिति वनानां पतिरिति समासेन पुष्प विना फलवति उद्भिदि वाच्ये सकारागमाद्रूपसिद्धिः पृषोदरादित्वात्। वीरुदिति विशेषेण लतामतानैर्विस्तृतीभूय वा रुणद्धि देशमिति वीरुत्। वानस्पत्य इति पुष्पफलाभ्यां प्रधानं वनस्पतिवृक्षो वानस्पत्यः। ओषधिरिति उपदाहे ओषणं भूताग्निना आफलपाकादाधीयते इति ओषधिः फलपाकान्ता। यद्यपि ओषधशब्देन जाङ्गमादित्रिविधमेव द्रव्यमुच्यते तथापि तदेकदेशेनोद्भिदेकदेशफलपाकान्तौद्भिदप्युच्यते यथा तृणशब्दस्तृणजातौ तृणविशेषे च वर्त्तते। सुश्रुतेनाप्युक्तं "प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च। स तु षट्सु रसेष्वायत्तो, रसाः पुनर्द्रव्याश्रयाः, द्रव्याणि पुनरोषधयस्ता द्विविधाः स्थावरा जङ्गमाश्च; तासां स्थावराश्चतुर्व्विधा वनस्पतयो वृक्षा वीरुध ओषधय इति। तेष्वपुष्पाः फलवन्तो वनस्पतयः। पुष्पफलवन्तो वृक्षाः। प्रतानवत्यस्तम्बिन्यश्च वीरुधः। फलपाकनिष्ठा ओषधय इति। जङ्गमाश्चापि चतुर्व्विधा जरायुजाण्डज-

मेवोच्यते, तेन जलानिलाग्न्यादीनामग्रहणादव्याप्तिर्न वाच्या। जङ्गमशब्देन जङ्गमप्रभवं गोरसमध्वादि ग्राह्यम्; एवमौद्भिदपार्थिवयोरपि ग्रहणं वाच्यं। रोचना गोरोचना। पुनश्च मध्वादि प्राय उपयोगित्वात् प्राधान्यादुक्तं, तेनाण्डमत्स्यादीनाञ्च ग्रहणं बोद्धव्यम्। यद्यपि जङ्गमानन्तरं बहुप्रपञ्चत्वेन प्रधानत्वादौद्भिदमुपदिष्टं तथाप्यबहुवक्तव्यत्वात् पार्थिवमेव जङ्गमानन्तरं विधियते, तदनु बहुवक्तव्यमौद्भिदं। सुवर्णमित्यादि।—पञ्च लोहा इति ताम्ररजतत्रपुसीसकृष्णलोहानां

फलैर्वनस्पतिः पुष्पैर्वानस्पत्यः फलैरपि ।
ओषध्यः फलपाकान्ताः प्रतानैर्वीरुधः स्मृताः ॥

स्वेदजोद्भिज्जाः । तत्र पशुमनुष्यव्यालादयो जरायुजाः । खगसर्पसरीसृपप्रभृतयोऽण्डजाः । क्रिमिकीटपिपीलिकाप्रभृतयः स्वेदजाः । इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जा इति ।” अत्रापि प्राणिनामाहारद्रव्यतया ओषधयो द्विविधा इत्युक्तं, न पुनः सर्व्वथा द्विविधा ओषधय इति, यतस्तत्रैव सुश्रुतेनोक्तं “पार्थिवाः सुवर्णरजतमणिमुक्तामनःशिलामृत्कपालादयः । कालकृतास्तु प्रवातनिवातातपच्छायाज्योत्स्नातमःशीतोष्णवर्षाहोरात्रपक्षमासर्त्त्वयनसंवत्सरविशेषाः । तत्र एते स्वभावत एव दोषाणां सञ्चयप्रकोपप्रशमहेतवः प्रयोजनवन्तश्चेति” । प्रवातादय ओषधयो याः सुश्रुतेनोक्तास्ता अस्मिन्नध्याये चरकेण नोक्ताः, अपाञ्चभौतिकत्वेनामूर्त्तत्वेन च भिषग्भिः प्रयोक्तुमयोग्यत्वात् । इत्यतो नाचार्य्यस्य न्यूनता बोध्या ।

अथ वनस्पत्यादिचतुष्कं लक्षयति—फलैरित्यादि । पुष्पं विना फलैर्विशिष्ट उद्भिद् वनस्पतिः वटोडुम्बराश्वत्थादिः । हारीतेनाप्युक्तम्—“तेषामपुष्पाः फलिनो वनस्पतय इति स्मृताः” इति । पुष्पैः फलैरपि वानस्पत्यः पुष्पानन्तरफलत्वात् । यस्तु दृश्यते पुष्पवान् फलहीनः स च दोषकृत एव वस्तुतस्तज्जातिः फलवानेव भवति । फलपाकादन्तो नाशो यासां ता ओषध्यः । सत्यपि पुष्पफलवत्त्वे फलपाकान्तत्वविशेषधर्म्मादोषधित्वमिति बोध्यम् । एवं सत्यपि पुष्पफलवत्त्वे प्रतानैर्लतास्तम्बगुल्मादिभिर्विशिष्टा वीरुधः स्मृता इति ।

उद्भिदां सभेदलक्षणमुक्त्वा तेभ्यो यद् यद् व्याधिषु प्रयोक्तव्यं तत्तदुपदेष्टुमाह,—मूलत्वगित्यादिना गण इत्यन्तेन सार्द्धश्लोकेनेति । अष्टादश द्रव्याणि मूलत्वगादीनि औद्भिदो गण उद्भिज्जः प्रयोक्तव्यो द्रव्यसमूह इति ।

ग्रहणम् । समला इति मलशब्देन शिलाजतूनि लोहमलरूपाणि गृह्यन्ते, तत्र सुश्रुतदर्शनात् सुवर्णरजतादिभवं षड्विधमेव गृह्यते, सुश्रुते हि षड्विधमेव शिलाजतूक्तम् इह तु रसायने चतुर्व्विधमुक्तं—“चतुर्भ्यो धातुभ्यस्तस्य सम्भवः । हेम्नोऽथ रजतात् ताम्राद्वरं कृष्णायसादपि” इति वचनात् । एतच्च वचनं रसायनाधिकारित्वं चतुर्व्विधस्य शिलाजतुनो दर्शयति, न तु षड्विधशिलाजतुप्रतिषेधपरमिति न सुश्रुतेन समं विरोधः ; किंवा सुवर्णं निर्म्मलं समलाश्च रजतताम्रत्रपुसीसा इति मिलित्वा पञ्च लोहाः । शिलाजतुपाषाणपङ्कप्रभृतीनान्तु ग्रहणम् वक्ष्य-

मूलत्वक्सारनिर्य्यास-नाड़स्वरसपल्लवाः।
क्षाराः क्षीरं फलं पुष्पं भस्म तैलानि कण्टकाः॥
पत्राणि शुङ्गाः कन्दाश्च प्ररोहश्चौद्भिदो गणः॥ ३७॥
मूलिन्यः षोड़शैकोना फलिन्यो विंशतिः स्मृताः।
महास्नेहाश्च चत्वारः पञ्चैव लवणानि च।

सुश्रुतेनाप्युक्तं "तत्र स्थावरेभ्यस्त्वक्पत्रपुष्पफलमूलकन्दनिर्य्यासस्वरसादयः प्रयोजनवन्तो जङ्गमेभ्यश्चर्म्मनखरोमरुधिरादयः" इति। मूलं शिफा, त्वक् वल्कलं, सारः काष्ठान्तर्भूतः परिणतः, निर्य्यासः स्रुतो विनिर्गतवेष्टकं लाक्षास्वर्ज्जरसमोचरसादि, नाड़ं नाड़ीवल्लता, स्वरसः स्वो रसः। पल्लवाः किसलयाः, क्षारो भस्म प्रस्रुतोदकृतः क्षारद्रव्यम्, क्षीरं क्षीरवन्निर्य्यासः, फलं पुष्पं स्पष्टं, भस्म दाहकृतभसितम्। तैलानि बीजप्रभवाः स्नेहाः, कण्टका इति स्पष्टं, पत्राणि पर्णानि किशलयभिन्नानि, शुङ्गा अग्रभागाः, कन्दाः फलहीनानामोषधीनां मूलरूपाः, प्ररोहा अवरोहा इति॥ ३६।३७॥

गङ्गाधर—अथैषां सप्रभेदानां जाङ्गमभौमौद्भिदानां द्रव्याणामनन्तत्वेन तेषां मध्ये संशोधनत्वेन प्राधान्यात् भगवत्पुनर्व्वसुनिदर्शितानि द्रव्याण्युपदेष्टुमाह,—मूलिन्य इत्यादिना निदर्शिता इत्यन्तेन श्लोकद्वयम्।—मूलिन्यः षोड़शोद्भिदः; मूलं प्रधानं प्रयोक्तव्यतया विद्यते यासां ता मूलिन्यः षोड़श, एतेनासां मूलं प्रयोज्यमिति ज्ञापनम्। एवमेकोनविंशतिः फलिन्य उद्भिदः स्मृताः।

शब्देन सूचितं, उद्देशो सङ्क्षेपकथनम्। सुधा गाङ्गेटिका, आलं हरितालम्, अञ्जनं सौवीराञ्जनं, फलैर्व्वनस्पतिरिति विना पुष्पैः फलैर्युक्ता वटोडुम्बरादयः; यदुक्तं हारीते—"तेषामपुष्पाः फलिनो वनस्पतयः इति स्मृताः।" पुष्पैर्व्वानस्पत्यः फलैर्य्यांति पुष्पान्तरं फलभाज इत्यर्थः। फलस्य पाकादन्तो विनाशो येषां तिलमुद्गादीनां ते फलपाकान्ताः। अत्र केचित् 'फलान्ताः पाकान्ताश्चौषधयः' इति वदन्ति, तेन विनापि फलं पाकेनैवान्तो येषां दूर्व्वादीनां तेऽपि गृह्यन्ते। प्रतानशब्देन लता गुल्माश्च गृह्यन्ते; यदुक्तं हारीतेन—"लता गुल्माश्च वीरुधः" इति। मूलत्वगित्यादौ निर्य्यासो लाक्षासर्ज्जरसादिः, औद्भिदो गण इत्यौद्भिदसम्बन्धि-गणः॥ ३६।३७॥

चक्रपाणिः—सम्प्रत्यत्रैव जाङ्गमौद्भिदपार्थिवद्रव्ये यत् प्रशस्तं तदाह—मूलिन्य इत्यादि। मूलं प्रधानतमं यासां ता मूलिन्यः, एवं फलिन्योऽपि, षोडशेति च्छेदः। महास्नेहा इति

अष्टौ मूत्राणि संख्यातान्यष्टावेव पयांसि च ॥
शोधनार्थाश्च षड् वृक्षाः पुनर्व्वसुनिदर्शिताः।
य एतान् वेत्ति संयोक्तुं विकारेषु स वेदवित् ॥ ३८ ॥
हस्तिदन्ती हैमवती श्यामा त्रिवृदधोगुड़ा।
सप्तला श्वेतनामा च प्रत्यक्श्रेणी गवाक्ष्यपि ॥

आसामपि फलप्रधानत्वात् फलं प्रयोज्यं मापितम्। महान्तः स्नेहाश्च चत्वार इति बहूनां मांसदुग्धादीनां स्नेहानां मध्येऽत्युत्कर्षस्नेहगुणत्वान्महत्त्वं बोध्यम्। एवं लवणादीनामपि प्राधान्यं बोध्यम्। एते च जङ्गमा औद्भिदाश्च बोध्याः। पञ्चैव लवणानि च एव व्याख्यातव्यानि। एतानि भौमानि ज्ञेयानि। अष्टौ मूत्राणीति जाङ्गमानि बोध्यानि। एव पयांसि चाष्टौ जाङ्गमानि। शोधनार्थाश्च षड् वृक्षाः स्नुह्यादय इति यावत्।

एषां समानामौत्कर्ष्यख्यापनार्थमाह,—य एतानित्यादि। एतान् सप्त पुनर्व्वसुनिदर्शितान् यो भिषक् विकारेषु संयोक्तुं वेत्ति स वेदवित् आयुर्व्वेदवेत्ता भवति। आयुर्व्वेदे हि संशोधनस्य कर्म्मपञ्चकस्य प्राधान्येनोक्तत्वात्। संशोधनविजिता हि व्याधयो न पुनर्भवन्ति संशमनप्रशान्तास्तु कचित् पुनर्भवन्ति ॥ ३८ ॥

गङ्गाधरः—अथ मूलिन्यः षोड़शेत्यादि यदुक्तं तत् क्रमेण विवृणोति हस्तिदन्तीत्यादिना श्लोकद्वयेन।—हस्तिदन्ती नागदन्तीति ख्याता हस्तिदन्तवन्मूला। हैमवती श्वेतवचा। श्यामा श्याममूला त्रिवृत्। त्रिवृत् अरुणमूला त्रिवृत्। अधोगुड़ा वृद्धदारकः। सप्तला चर्म्मकषा। श्वेतनामा श्वेतापराजिता। प्रत्यक्श्रेणी मूषिकपर्णी दन्तीभेद एव। गवाक्षी गोडुम्बा। ज्योतिष्मती लताफुटकी। विम्बी ओष्ठोपमफलम्। शणपुष्पी घण्टारवा।

क्षीरमांसादीनामपि स्नेहतया स्नेहाध्याये वक्ष्यमाणत्वेन तेषु सर्पिरादीनां भूरिस्नेहवत्त्वेन महत्त्वम्। पञ्चैव लवणानीति विमाने वक्ष्यमाणलक्षणे लवणबहुत्वे पञ्चानामेव प्रशस्तत्वेन दर्शनार्थं। एवं मूत्रादिष्वपि प्राधान्यमुक्तं स्वजातीयेषु। वेदविदिति आयुर्व्वेदवित् ॥ ३८ ॥

चक्रपाणिः—हस्तिदन्तीत्यादि। हस्तिदन्ती बृहत्फला गोडुम्बा, नागदन्ती भण्यते इत्येके, हैमवती वचा, श्यामा श्याममूला त्रिवृत्, अधोगुड़ा वृद्धदारकः, सप्तला चर्म्मकषा, श्वेतनामा श्वेताऽपराजिता, प्रत्यक्श्रेणी दन्ती, विम्बी ओष्ठोपमफला, शणपुष्पी घण्टारवः, विषाणिका

ज्योतिष्मती च विम्बी च शणपुष्पी विषाणिका।
अजगन्धा द्रवन्ती च क्षीरिणी चात्र षोड़शी।
शणपुष्पी च विम्बी च च्छर्दने हैमवत्यपि।
श्वेता ज्योतिष्मती चैव योज्या शीर्षविरेचने॥
एकादशावशिष्टा याः प्रयोज्यास्ता विरेचने।
इत्युक्ता नामकर्म्मभ्यां मूलिन्यः फलिनीः शृण॥ ३९॥
शङ्खिन्यथ विड़ङ्गानि त्रपुषं मदनानि च।
आनूपं स्थलजश्चैव क्लीतकं द्विविधं स्मृतम्॥

विषाणिका मेषशृङ्गी। अजगन्धा अजमोदा। द्रवन्ती दन्तीभेदः। क्षीरिणी स्वनामख्याता स्वर्णक्षीरी।

आसां षोड़शानां मूलिनीनां कर्म्माण्याह,—शणपुष्पीत्यादि।—हस्तिदन्त्यादीनां षोड़शानां मूलिनीनां मध्ये शणपुष्पीविम्बीहैमवतीनां तिसृणां मूलं छर्द्दनत्वाच्छर्द्दनार्थं प्रयोक्तव्यमिति। श्वेताज्योतिष्मत्योस्तु मूलं शिरोविरेचनमतः शीर्षविरेचने योक्तव्यम्। अवशिष्टा या एकादश हस्तिदन्ती श्यामा त्रिवृत् वृद्धदारः सप्तला सप्तकर्णी गवाक्षी विषाणी अजगन्धा द्रवन्ती क्षीरिणी चेति तासां मूलं विरेचनेऽधोभागहरणे प्रयोज्यमिति मूलप्रयोगात् ता एव प्रयोज्या भवन्ति। आसामूर्द्ध्वादिभागहरणत्वं स्वस्वप्रभावात्।

उपसंहरति, इत्युक्तेत्यादि।—नाम संज्ञा, कर्म्म स्वस्वप्रभावजम्। न त्वारम्भक-भूतानां क्रिया च ऊर्द्ध्वादिभागहरणत्वरूपविशेषाभावात्।

फलिनीरूनविंशतिं शृणु। नामकर्म्मभ्यामित्यन्वयः॥ ३९॥

गङ्गाधरः—तत्रादौ नामानि निर्दिशति, शङ्खिनीत्यादि।—शङ्खिनी चोरपुष्पी। त्रपुषं मायाम्बुफलम्। वन्या वनकर्कोटी। मदनानीति

आवसनी, अजगन्धा कौकान्दी काकाण्डी ख्याता, द्रवन्ती द्रवन्त्येव क्षीरिलपत्रा, क्षीरिणी दुग्धिका। मूलिनीनां वमनादिविनियोगमाह—शणपुष्पीत्यादि॥ ३९

चक्रपाणिः—शङ्खिनी श्वेतबुह्मा, क्लीतकं यष्टीमधु, अस्य तु यद्यपि मूलं सुश्रुते प्रशस्तं, मूलेनैव व्यवहारः, तथापि विरेचनं प्रति यष्टीमधुद्वयस्यापि फलमेव प्रशस्तं ज्ञेयम्। आमार्गवः

धामार्गवमथेक्ष्वाकु-जीमूतं कृतवेधनम् ।
प्रकीर्य्या चोदकीर्य्या च प्रत्यक्पुष्पी तथाभया ॥
अन्तःकोटरपुष्पी च हस्तिपर्ण्याश्च शारदम् ।
कम्पिल्लकारग्वधयोः फलं यत् कुटजस्य च ॥
धामार्गवमथेक्ष्वाकु-जीमूतं कृतवेधनम् ।
मदनं कुटजश्चैव त्रपुषं हस्तिपर्णिनी ॥
एतानि वमने चैव योज्यान्यास्थापनेषु च ।
नस्तःप्रच्छर्द्दने चैव प्रत्यक्पुष्पी विधीयते ॥
दश यान्यत्रशिष्टानि तान्युक्तानि विरेचने ।
नामकर्म्मभिरुक्तानि फलान्येकोनविंशतिः ॥ ४० ॥

मदनफलानि । क्लीतकं यष्टीमधु, तच्चानूपं स्थलजञ्च द्विविधं ज्ञेयं, यद्यपि सुश्रुतेऽस्य मूलं प्रशस्तमुक्तं तथैव च व्यवहारस्तथाप्यस्य फलं विरेचनेऽतिप्रशस्तमित्यतोऽस्मिंस्तन्त्रे फलिनीत्युक्तमिति । धामार्गवो घोषकः । इक्ष्वाकुस्तिक्तालाबुः । जीमूतं घोषकभेदः । कृतवेधनं ज्योत्स्निका लतापुटकीति लोके । प्रकीर्य्या चोदकीर्य्या च करञ्जद्वयम् । प्रत्यक्पुष्पी अपामार्गः । अभया हरीतकी । अन्तःकोटरपुष्पी नीलनाम क्षुद्रवृक्षः । हस्तिपर्ण्याश्च शारद फलम् न त्वन्यकालजम् । हस्तिपर्णी मोरटः । कम्पिल्लकं गुण्डारोचनी, कमलागुंडीति लोके, आरग्वधः शोणालु ; तयोरपि फलं, सुश्रुते त्वारग्वधस्य पत्रमुक्तं प्रशस्तं तदतिप्रशस्तन्तु फलमित्यस्मिंस्तन्त्रे फलिनीत्युक्तम । कुटजस्य च फलम्, इत्येकोनविंशतिः फलिन्यः ।

तासां फलस्य कर्म्माण्याह,—धामार्गव इत्यादि । हस्तिपर्णिन्यन्तानामष्टानां फलानि प्रभावात् वमने चास्थापने च योज्यानि, नस्तःप्रच्छर्द्दने शिरोविरेचने वमने च पुनः प्रत्यक्पुष्पी विधीयते । अवशिष्टानि दश यानि तानि विरेचने योज्यानि, शङ्खिनी त्रिवृत्स्थलजानूपजयष्टीमधुफलं प्रकीर्य्या चोदकीर्य्या

पीतघोषकः, इक्ष्वाकुः तिक्तालावुः, जीमूतो घोषकभेदः, कृतवेधनं ज्योत्स्निका, प्रकीर्य्योदकीर्य्ये करञ्जद्वयं, प्रत्यक्पुष्पी अपामार्गः, अन्तःकोटरपुष्पी नीलपुष्पा, हस्तिपर्णी मोरटः, अस्याश्च शरत्कालभवमेव फलं ग्राह्यं, अत उक्तं "हस्तिपर्ण्याश्च शारदम्" इति ; कम्पिल्लकं गुण्डारोचनी ।

सर्पिस्तैलं वसा मज्जा स्नेहो दृष्टश्चतुर्विधः।
पानाभ्यञ्जनबस्त्यर्थं नस्यार्थञ्चैव योगतः॥
स्नेहना जीवना वर्ण्या बलोपचयवर्द्धनाः।
स्नेहा ह्येते च विहिता वातपित्तकफापहाः॥ ४१॥

चाभया चान्तःकोटरपुष्पी हस्तिपर्णी कम्पिल्लकं कुटजश्चेति दशानां फलानि विरचनार्थं योज्यानि। उपसंहरति नामकर्म्मभिरित्यादि।—शङ्खिन्यादिकानि नामानि, वमनास्थापनशिरोविरेचनानि कर्म्माणि॥ ४०॥

गङ्गाधरः—उद्देशक्रमादाह चतुरो महास्नेहान् सर्पिरित्यादि।—पूर्व्वपूर्व्वस्य प्रशस्ततरत्वख्यापनार्थं पूर्व्वपूर्व्वमुपादानम्। सर्पिर्दुग्धसम्भवः स्नेहः। तैलं बीजसम्भवः स्नेहः। वसा हृदयस्थमेद एव स्नेहः। मज्जा जान्वस्थिमध्यगो धातुविशेषः स्नेहरूप एव। स्नेह इति महास्नेह उद्देशे तदुक्तेः। इति नामभिरुक्त्वा कर्म्मभिरुपदिशति पानेत्यादि।—पानं द्रवद्रव्यगलाधःकरणव्यापारः। अभ्यञ्जनं सर्व्वाङ्गं व्याप्य स्नेहलेपनानुकूलव्यापारः। वस्तिश्चर्म्मपुटकस्तत्कृतत्वादास्थापनानुवासने वस्तिशब्देनोच्येते। तान्यर्थः प्रयोजनं तं तथा। नस्यार्थञ्च नस्यं नासिकायां न्यस्याकृष्यते यत् तत्, तदर्थञ्च। योगत एव तत्तद्रोगहरद्रव्याणां कल्पनया संयोगत एव न त्वकल्पनया वाप्ययुक्तितश्च। यत् तु "सर्पिरादिकश्चतुर्व्विधः स्नेहः पानादिचतुर्व्विधप्रयोगत एव दृष्ट इत्यर्थः" तन्न, कैवल्येऽनिर्दोषापहत्वाभावात्, सर्पिर्हि कफं तैलं हि पित्तं वर्द्धयति।

तेषां कर्म्माण्याह, स्नेहना इत्यादि।—स्नेहयन्तीति स्नेहना रौक्ष्यापहरणानुकूलव्यापारः स्नेहनम्। जीवना इति जीवयन्ति आयुर्वर्द्धयन्तीति जीवनाः। शरीरेन्द्रियसत्त्वात्मसंयोगस्य कालवैशिष्ट्यानुवृत्त्यनुकूलव्यापारो जीवनं, तादृशकालवैशिष्ट्यं जीवधात्वर्थः। वर्ण्या वर्णाय हिता वर्णजनका इत्यर्थः। बलं सामर्थ्यम्, उपचयो देहपुष्टिस्तयोर्वर्द्धना बलवर्द्धकत्वेन वृष्यत्वमपि ख्यापितम्। स्नेहा एते सर्पिरादयश्चत्वारो हि यस्मात् योगतश्च

आरग्वधस्य यद्यपि सुश्रुते पत्रं प्रधानमुक्तं तथापीह फलं प्रधानतमं ज्ञेयम्। श्यामादीत्यादिना पञ्चकर्म्मविनियोग उच्यते। नस्तःप्रच्छर्दन इति शिरोविरेचने॥ ४०॥

चक्रपाणिः—महास्नेहेषु सर्पिरादौ पठितं प्राधान्यात्, वचनं हि "नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते। यथा सर्पिरतः सर्पिः सर्व्वस्नेहोत्तमं मतम्"॥ ४१॥

सौवर्च्चलं सैन्धवञ्च विड़मौद्भिदमेव च।
सामुद्रं ण सहैतानि पञ्च स्युर्लवणानि च॥
स्निग्धान्युष्णानि तीक्ष्णानि दीपनीयतमानि च।
आलेपनार्थे युज्यन्ते स्नेहस्वेदविधौ तथा।
अधोभागोर्द्ध्वभागेषु निरूहेष्वनुवासने॥
अभ्यञ्जने भोजनार्थे शिरसश्च विरेचने।
शस्त्रकर्म्मणि वर्त्त्यर्थमञ्जनोत्सादनेषु च।
अजीर्णानाहयोर्वाते गुल्मे शूले तथोदरे॥ ४२॥

विहिता वातपित्तकफापहा वातादीनां वंपम्यहारका न तु केवलास्तस्मात् स्नेहनादयः स्युः। कर्म्माण्येतान्येषां स्निग्धत्वोष्णत्वादिभिश्च यानि प्रभावाद्वा॥ ४१॥

गङ्गाधरः—उद्देशक्रमात् पञ्च लवणान्याह—सौवर्च्चलमित्यादि। यद्यपि "सैन्धवं लवणाना"मिति वचनात् सैन्धवं सर्व्वलवणश्रेष्ठं, तथापि सौवर्च्चलस्यातिरोचकत्वादग्रेऽभिधानम्। औद्भिदमुत्कारिकेति लोके शाम्भरीत्यन्ये। सामुद्रं करकचमिति लोके। अपराणि लवणानि ह्यस्मिंस्तन्त्रे प्रायो न प्रयोक्तव्यतयोपदेक्ष्यन्ते। इति नामभिरुक्तानि।

तानि कर्म्मभिरुपदिशति स्निग्धानीत्यादि। स्निग्धानि आप्यत्वात्, उष्णानि आग्नेयत्वात्, तथा तीक्ष्णानि दीपनीयतमानि च वह्निवर्द्धनेषु श्रेष्ठानि चेत्यर्थः।

वातादिहरणकर्म्मार्थं प्रयोगविधिमाह—आलेपनार्थ इत्यादि। स्नेहस्वेदविधौ स्नेहकर्म्मणि स्वेदकर्म्मणि च। अधोभागोर्द्ध्वभागेषु विरेचने वमने च, निरूहेष्वास्थापनेषु, अनुवासने स्नेहवस्तिकर्म्मणि, अभ्यञ्जने सर्व्वाङ्गव्याप्य स्नेहादिम्रक्षणक्रियायां, भोजनार्थे भोज्यद्रव्यसंस्कारार्थं, शिरसश्च विरेचने नस्यकर्म्मविशेषे, शस्त्रकर्म्मणि, वर्त्त्यर्थम् आनाहादौ फलवर्त्त्यर्थम्, अञ्जनेषु नेत्राञ्जनयोगेषु, उत्सादनेषु उद्वर्त्तनेषु च, अजीर्णे चतुर्व्विधे,

चक्रपाणिः—लवणेषु यद्यपि सैन्धवं प्रधानं यतो वक्ष्यति "सैन्धवं लवणानाम्" इत्यग्र्याधिकारे, तथापि सौवर्च्चलस्य रोचनत्वप्रकर्षात् तथा सैन्धवमनु प्राधान्याख्यापनार्थमित्यग्रे पाठः।

उक्तानि लवणान्यूर्द्धं मूत्राण्यष्टौ निबोध मे।
मुख्यानि यानि ह्यष्टानि सर्व्वाण्यात्रेयशासने॥
अविमूत्रमजामूत्रं गोमूत्रं माहिषञ्च यत्।
हस्तिमूत्रमथोष्ट्रस्य हयस्य च खरस्य च॥ ४३॥
उष्णं तीक्ष्णमथोऽरूक्षं कटुकं लवणान्वितम्।
मूत्रमुत्सादने युक्तं युक्तमालेपनेषु च॥
युक्तमास्थापने मूत्रं युक्तञ्चापि विरेचने।
स्वेदेष्वपि च तद्युक्तमानाहेष्वगदेषु च॥
उदरेष्वथ चार्शःसु गुल्मकुष्ठकिलासिषु।
तद्युक्तमुपनाहेषु परिषेके तथैव च॥

आनाहे विड्विबन्धव्याधौ, वाते वातव्याधौ, गुल्मे, शूले, तथोदरे, युज्यन्ते पञ्च लवणानि इत्यन्वयः। स्वस्वप्रभावात्॥ ४२॥

गङ्गाधरः—उपसंहरति, उक्तानीत्यादि।—क्रमिकत्वान्मूत्राण्यष्टावाह—ऊर्द्ध-मित्यादि। बहूनि मूत्राणि सन्ति तेषु मुख्यानि यान्यष्टौ मूत्राणि तान्युप-दिष्टान्यात्रेयेण तान्येव मत्तो निबोध। अवीत्यादि। अविर्मेषी तस्या मूत्रं, महिष्या इदं माहिषम्॥ ४३॥

गङ्गाधरः—एषां सामान्यतो गुणानाह, यद्द्वारेण कर्म्माणि कुर्व्वन्ति। उष्णमित्यादि। अरूक्षं स्निग्धं लवणान्वितं कटुकं लवणानुतिक्तं प्रभावात्। प्रयोगप्रकारमाह मूत्रमित्यादि। उत्सादने मूत्रमष्टविधमूत्रम् उद्वर्त्तने युक्तं प्रयुक्तम्, आलेपने प्रलेपे, आस्थापने निरूहवस्तौ, विरेचनेऽधोभागहरणे, स्वेदेष्विति कुम्भीस्वेदादौ, आनाहेषु मलविबन्धव्याधिषु, अगदेषु चेति योगत एवागदभैषज्यविधौ युक्तम्, उदरेषु वातादिजेषु, अर्शःसु षट्सु, गुल्मेषु पञ्चसु, कुष्ठेष्वष्टादशसु, किलासिषु किलासरोगिषु पुरुषेषु अर्थात् किलासरोगेषु।

औद्भिदं औत्कारिकालवणं, केचित् शाम्भरिलवणमाहुः, सामुद्रं दक्षिणसमुद्रभवं करकच इति ख्यातं, अञ्जन इति स्नेहाभ्यङ्गे, वसंत्रर्थमिति फलवर्त्तार्थम्॥ ४२॥

चक्रपाणिः—अवीमूत्रमित्यादौ स्त्रीमूत्रमेव प्रशस्तं लिङ्गपरिग्रहाद्दर्शयति, यतः स्त्रीणां लघुत्वात् मूत्रमपि लघु, वचनं हि "लाघवं जातिसामान्ये स्त्रीणां पुंसाञ्च गौरवम्" इति। यत्पुनरत्र

दीपनीयं विषघ्नञ्च क्रिमिघ्नञ्चोपदिश्यते ।
पाण्डुरोगोपसृष्टानामुत्तमं * सर्व्वथोच्यते ॥
श्लेष्माणं शमयेत् पीतं मारुतञ्चानुलोमयेत् ।
कर्षेत् पित्तमधोभागमित्यस्मिन् गुणसंग्रहः ॥
सामान्येन मयोक्तस्तु पृथक्त्वेन प्रवक्ष्यते ॥ ४४ ॥
अविमूत्रं सतिक्तं स्यात् स्निग्धं पित्ताविरोधि च ॥
आजं कषायमधुरं पथ्यं दोषान् निहन्ति च ।

एषु रोगेषु यथोपयुक्तं तदाह — तद्युक्तमित्यादि । उपनाहे उष्णत्वहल्लोपदेहे, परिषेके अवगाहस्वेदनादिरूपेण चकारात् पानादौ योगेषु च । प्रलेपसाध्ये व्याधिमात्रे विहितत्वख्यापनार्थमुपनाहेष्वित्युक्तं परिषेकसाध्यव्याधिसामान्ये विहितत्वख्यापनार्थं परिषेकेष्वित्युक्तम् । दीपनीयं वह्निदीपनं, विषघ्नमिति केवलमेव मूत्रं विना द्रव्यान्तरयोगेण विषहरं, तेनागदेषु योगिकत्वेऽपि न पौनरुक्त्यम् । क्रिमिघ्नमिति प्रभावात् कटुत्वाद्वा । पाण्डुरोगोपसृष्टानां सर्व्वथैव पानाहारभेषजादिकल्पनया उत्तमम् । श्लेष्माणं शमयेदुष्णतीक्ष्णकटुकत्वात् । पीतमिति प्राधान्यात् पानतो गुणकथनं, पीतं च मारुतमनुलोमयेत् उष्णरूक्षलवणत्वात् ऊर्द्ध्वं तिर्य्यक् च गामिनं वातम् अधो गमयेत् । पीतञ्च मूत्रं पित्तमधोभागं कर्षेत् । यत् तु "यत् पित्तमधोभागं तत् पित्तं कर्षेत् न तूर्द्ध्वगामीत्युच्यते" तन्न ; मूत्रसामान्यस्य वैरेचनिकत्वात् । अधोभागेन कर्षणत्वस्यानुभवसिद्धत्वात् । उपसंहरति इतीत्यादि । — अस्मिन् तन्त्रे इति गुणसंग्रहः सङ्क्षेपेण गुणोपदेशः मूत्राणामष्टानां सामान्येन मयोक्तः स च पुनः पृथक्त्वेन प्रवक्ष्यते प्रत्येकं विशेषरूपेण प्रवक्ष्यते ॥ ४४ ॥

गङ्गाधरः — तद्यथा तदाह अविमूत्रमित्यादि । सतिक्तमीषत्तिक्तान्वितलवणं सरूक्षञ्च स्निग्धं चात एव पित्ताविरोधि । सामान्येन उष्णतीक्ष्ण-

पुंसां मूत्रं शुक्रसम्बन्धात् गुरु, तन्न, शुक्रसम्बन्धस्य स्त्रीणामपि शुक्रवत्त्वेन तुल्यत्वात्, वचनं हि "यदा नारी च नार्य्यौ च मैथुनायोपपद्यते । मुञ्चतः शुक्रमन्योऽन्यमनस्थिस्तत्र जायते ॥"

* शर्म्म चोच्यते इति चक्रपाणिधृतः पाठः ।

गव्यं समधुरं किञ्चिद्दोषघ्नं क्रिमिकुष्ठनुत् ॥
कण्डूलं शमयेत् पीतं सम्यग्दोषोदरे हितम् ।
अर्शःशोफोदरघ्नन्तु सक्षारं माहिषं सरम् ॥
हास्तिकं लवणं मूत्रं हितन्तु क्रिमिकुष्ठिनाम् ।
प्रशस्तं बद्धविण्मूत्र-विषश्लेष्मामयार्शसाम् ॥
सतिक्तं श्वासकासघ्नमर्शोघ्नं चौष्ट्रमुच्यते ।
वाजीनां तिक्तकटुकं कुष्ठव्रणविषापहम् ।

लवणत्वेऽपि स्निग्धत्वात् पित्तेऽस्याविरोधो ह्रासवृद्धिजनकताभावोऽस्यास्तीति पित्ताविरोधि । न तु वृद्धं पित्तं न विरोद्धुं शीलं यस्येति पित्ताविरोधि, पित्तशमकत्वालाभात् । एतच्च प्रभावात् ।

आजमित्यादि । अजामूत्रं कषायमधुरं कषायानुमधुरं सामान्यतो लवणं समकषायमधुरं वा सामान्येन लवणान्वितकटुकञ्च, पथ्यं स्रोतोहितं, दोषांस्त्रीन् निहन्ति च प्रभावात् ।

गव्यमिति । गोमूत्रं प्रकरणात् समधुरं किञ्चित् लवणान्वितकटुकं किञ्चिन्मधुरयुक्तं त्रिदोषघ्नं क्रिमिकुष्ठनुत् । कण्डूलं शमयेत् पीतं सम्यक् शमयेदित्यन्वयः । दोषोदरे वातादिजोदरे हितं न तु दुष्टोदरे हितं प्रभावात् ।

माहिषमूत्रकर्म्मगुणावाह अर्श इत्यादि । शोफेन जातमुदरं शोफोदरं, शोफश्चोदरञ्च तत्तथा वा हन्ति इति शोफोदरघ्नं प्रभावात् । सक्षारं लवणान्वितितिक्तं क्षारान्वितम् ।

हास्तिकमिति । हस्तिन्या मूत्रं लवणं लवणप्रधानतिक्तं पुनर्लवणग्रहणात् । बद्धविण्मूत्रविषश्लेष्मामयार्शसां प्रशस्तं प्रभावात् ।

औष्ट्रमूत्रस्य गुणकर्म्मणी आह सतिक्तमित्यादि । सतिक्तमिति पुनरुक्त्या ईषत्तिक्तमीषल्लवणम् ।

वाजीनामश्वानां तिक्तकटुकम् अत्र कटुशब्दो न तिक्ते, तिक्तस्य पुनरुक्त्या ईषल्लवणातितिक्तमध्यकटुकम् । कुष्ठव्रणविषापहत्वं प्रभावात् ।

इत्यादि । मधुं सकमूत्रन्तु अमङ्गलत्वान्न गृह्यते । अगदेष्वित्यनेनागदप्रयोगयौगिकत्वं । विषघ्नमित्यनेन च केवलस्यैव विषहन्तृत्वमिति न पौनरुक्त्यं । शर्म्म चोच्यते इति आरोग्य-

खरमूत्रमपस्मारोन्मादग्रहविनाशनम् ॥
इतीहोक्तानि मूत्राणि यथासामर्थ्ययोगतः ॥ ४५ ॥
अथ क्षीराणि वक्ष्यन्ते कर्म्म चैषां गुणाश्च ये ॥
अवीक्षीरमजाक्षीरं गोक्षीरं माहिषञ्च यत् ।
उष्ट्रीणामथ नागीनां वडवायाः स्त्रियास्तथा ॥ ४६ ॥
प्रायशो मधुरं स्निग्धं शीतं स्तन्यं पयो मतम् ।
प्रीणनं बृंहणं वृष्यं मेध्यं बल्यं मनस्करम् ॥

खरमूत्रमिति गर्द्दभमूत्रम्, अपस्मारोन्मादग्रहाणां विनाशनम्। अत्र ग्रहा देवादयः स्कन्दादयश्च। उन्मादो दोषोन्मादो दोषभूतोभयरूपो वा। ग्रहाः स्कन्दादयोऽर्कादयश्च न ज्योतिषाः। अत्र रसानुक्तया सामान्यात् लवणान्वितकटुकं बोध्यम्। एषां यथास्वगुणकर्म्मसम्भारस्तु यथास्वाहार-विहारादिभिस्तथान्वेन कोष्ठाग्न्याशयमहिम्नाभिनिर्व्वर्त्तते।

उपसंहरति इतीहोक्तानीत्यादि। यथासामर्थ्ययोगतः यथाज्ञानबले-नेत्यर्थः। एतेनापदेष्टुरेषां गुणान्तराज्ञानं नोन्नेयम्। उक्तेनैव शिष्याणां प्रयोक्तुं सामर्थ्ययोगात् ॥ ४५ ॥

गङ्गाधरः—क्रमिकत्वात् क्षीराण्याह—अथ क्षीराणीत्यादि। क्षीराणीति नामतः। एषां कर्म्म च गुणाश्च ये ते वक्ष्यन्ते। कानीत्याह अवीक्षीर-मित्यादि। नागीनामिति हस्तिनीनां, वडवाया इति अश्व्याः, स्त्रिया इति मानुष्याः, प्रकरणात् क्षीरमिति शेषः। न तु अवीक्षीरमित्युत्तरपदेन सहा-न्वयो वृत्तिशब्दैकदेशेनान्वयाव्युत्पन्नत्वात् ॥ ४६ ॥

गङ्गाधरः—नामतः क्षीराण्युक्त्वा गुणकर्म्मणी आह—प्रायश इत्यादि। सामान्येन क्षीरगुणकर्म्मणी बोध्ये। यथाक्रमं क्षीरगुणमित्यनेन पृथक्

रूपसुखकर्तृत्वात्, अधोभागमिति अधोमार्गेण पित्तं कर्षेत्; किंवा यदेवाधोगतं पित्तं तदेव विरेचयति नोर्द्ध्वगम्। यथासामर्थ्ययोगत इति यादृशः शक्तियोगो मूत्राणां तथा ॥ ४३-४५ ॥

चक्रपाणिः—प्रायशो मधुरमिति प्राधान्येन मधुरं, तेन क्षीरमुष्ट्रीणामीषल्लवणं तथा छागं कषायमित्यादौ रसान्तरस्याप्राधान्येनानुबन्धोऽपि क्षीरे भवतीति दर्शयति प्रायश इति। बृंहणं स्निग्धमित्येताभ्यां तथा शीतमित्यनेन च सम्बध्यते तेनोष्ट्रस्य रूक्षोष्णत्वाभिधानं न विरोधि। स्तन्यमिति स्तन्यवृद्धिकरं, मनस्करमिति प्रभावादेव ओजस्करत्वाच्च ओजोवृद्धत्वा हि तदनु-

जीवनीयं श्रमहरं श्वासकासनिबर्हणम् ।
हन्ति शोणितपित्तञ्च सन्धानं विहतस्य च ॥
सर्व्वप्राणभृतां सात्म्यं शमनं शोधनं तथा ।
तृष्णाघ्नं दीपनीयञ्च श्रेष्ठं क्षीणक्षतेषु च ॥
पाण्डुरोगेऽम्लपित्ते च शोषे गुल्मे तथोदरे ।
अतिसारे ज्वरे दाहे श्वयथौ च विधीयते ॥
योनिशुक्रप्रदोषे च मूत्रेषु प्रदरेषु च ।
पुरीषे ग्रथिते पथ्यं वातपित्तविकारिणाम् ॥

पृथक् क्षीराणां गुणकर्म्मणी वक्ष्यमाणे इति वक्ष्यमाणत्वात् । प्रायश इत्यनेन न स्त्रीक्षीरादौ मधुरलवणत्वादिकञ्च बोध्यम् । शीतं वीर्य्यतस्तेन पित्तं नाशयति, स्निग्धमधुरत्वाभ्यां वातं हन्ति, त्रिभिः कफं वर्द्धयति । स्तन्यं स्तन्याय हितं स्तन्यजननमित्यर्थः । पय इत्यर्थविशेषेण पयो मधुरस्निग्धशीतगुणं स्तन्यजननादिक्रियं प्रभावात् । प्रीणनं प्रीतिकरं, बृंहणं देहपुष्टिकरं, वृष्यं शुक्रहितं, मेध्यं मेधाहितं, बल्यं बलहितं, मनस्करं सुमनस्कताकरं मनोऽनुकूलमित्यर्थः । जीवनीयं जीवनहितमायुर्वर्द्धनमित्यर्थः । हन्ति शोणितपित्तञ्च रक्तपित्तरोगमित्यर्थः । सन्धानं विहतस्य चेति भग्नस्य संयोगकरणम् । सर्व्वप्राणभृतां सात्म्यमिति यथासम्भवजातीनां शैशवप्रभृतिस्तन्यपानेनैव जीवनात्, न सर्व्वप्राणभृतां सात्म्यं पक्षिकीटादीनां तदभावात् । परन्तु सजातीयविजातीयगवादि दुग्धं सर्व्वेषां स्वस्थानां प्राणिनां सात्म्यं स्यात् पीतमात्मना सहैकीभावः स्यादित्यर्थः । शमनं संशमनं, शोधनं मलदोषहरणं, तृष्णाघ्नं, दीपनीयं वह्नेः, श्रेष्ठं क्षीणक्षतेषु च क्षीणवत्सु क्षतवत्सु चेत्यर्थः । प्रीणनत्वात् बृंहणत्वात् वृष्यत्वात् बल्यत्वादित्यादि । पाण्डुरोगे इत्यादिना विधीयते इत्यन्तेनान्वयः । योनिशुक्रप्रदोषे च योनिदोषे शुक्रदोषे च । मूत्रेषु चेति

विधायिनो मनसोऽपि स्वकर्मसामर्थ्यं स्यात्, एतदेव च नित्यमेव मनसः करणं सुमनसः प्रकर्षेणुत्तरकर्षादिगुणकरणम् । हन्ति शोणितपित्तमिति अवस्थाविशेषापन्नमेव शोणितपित्तं हन्ति, वचनं हि "कषायैर्वोर्विविधैर्यथोक्तैर्दीप्तेऽनले श्लेष्मणि निर्जिते च । यद्रक्तपित्तं प्रशमं न याति तत्रानिलः स्यादनु तत्र कार्य्यम् ॥ छागं पयः स्यात् परमं प्रयोगे गव्यं शृतं पञ्चगुणे

नस्यालेपावगाहेषु वमनास्थापनेषु च ।
विरेचने स्नेहने च पयः सर्व्वत्र युज्यते ॥
यथाक्रमं क्षीरगुणानेकैकस्य पृथक् पृथक् ।
अन्नपानादिकेऽध्याये भूयो वक्ष्याम्यशेषतः ॥ ४७ ॥
अथापरे त्रयो वृक्षाः पृथग्ये फलमूलिभिः ।
स्नुह्यर्काश्मन्तकास्तेषामिदं कर्म्म पृथक् पृथक् ॥

चकारात् दुर्नामस्वित्यर्थः । मदेषु चेति चकारः प्रत्येकमाधान्यार्थः । पुरीषे ग्रथिते ग्रन्थिलीभूते पथ्यं वातपित्तविकारिणां मधुरत्वात् स्निग्धत्वाच्च वातरोगिणां ताभ्यां शीतत्वाच्च पित्तरोगिणां पथ्यं सुतरां तेभ्यो न कफविकारिणां पथ्यम् । एतेन श्वासकासादिविशेषव्याधौ च व्याधिहरत्वेन बोध्यं न तु दोषहरत्वेन ।

प्रयोगार्थं कल्पनाविधिमाह — नस्येत्यादि । सर्व्वत्र युज्यते इति अनुक्तानुवासनादिसंग्रहार्थम् ।

सामान्यतो दुग्धगुणकर्म्मणी अभिधाय प्रत्येकं वक्तुमुचितत्वेनाह — यथाक्रममित्यादि । क्षीरगुणानिति गुणशब्देन समानाश्रयत्वात् द्रव्यापेक्षया गुणीभावाच्च गुणकर्म्मोभयमुपलक्ष्यते अन्नपानादिकेऽध्यायेऽत्रैव सूत्रस्थाने वक्ष्यमाणे ॥ ४७ ॥

गङ्गाधरः — उद्दिशक्रमप्राप्तानि अष्टावेव पयांसि चेत्यस्यानन्तरं शोधनार्थाश्च षड् वृक्षा इत्युक्तं, तान् वृक्षान् फलमूलित्वाभावेऽपि क्षीरत्वक्प्रयोगार्थं पृथगुक्तान् क्षीरित्वसामान्यात् त्रीनुपदिशति — अथेत्यादि । अथाविष्टपयोनिरूपणानन्तर-मुद्दिष्टेषु षट्सु वृक्षेषु मध्ये त्रयो येऽपरे फलमूलिभिर्वृक्षा । ननु ते किं

जले वा ।" एवञ्च यदुच्यतेऽजाभावो रक्तपित्ते सात्म्यत्वात् क्षीरमयौगिकम्, ऊर्द्ध्वगे च कफकर्त्तृतया ऽयौगिकमिति तन्निरस्तं । सर्व्वप्राणभृतां सात्म्यम् इत्यत्र सर्व्वशब्दस्याधिक्यकथनतया प्रकृतसर्व्वमनुष्ये-ष्वेव वर्त्तते, तेन क्षीरस्य संस्वेदजादिप्राणभृत्सात्म्यत्वं नोद्भावनीयं, किंवा सर्व्वशब्दोऽयं भूरिवचनः ॥ ४६।४७ ॥

चक्रपाणिः — फलमूलिभिरिति पृथक् क्षीरयोगात्पाठाने तृतीया । अश्मन्तको मालुयासदृश-पत्रो वृक्षः ॥ ४८ ॥

वमनेऽश्मन्तकं विद्यात् स्नुहीक्षीरं विरेचने।
क्षीरमर्कस्य विज्ञेयं वमने सविरेचने॥ ४८॥
इमांस्त्रीनपरान् वृक्षानाहुर्येषां हितास्त्वचः।
पूतीकः कृष्णगन्धा च तिल्वकश्च तथा तरुः॥
विरेचने प्रयोक्तव्यः पूतीकस्तिल्वकस्तथा।
कृष्णगन्धा परीसर्पे शोथेष्वर्शःसु चोच्यते॥
दद्रुविद्रधिगण्डेषु कुष्ठेष्वप्यलजीषु च।
षड् वृक्षान् शोधनानेतानपि विद्याद्विचक्षणः॥ ४९॥

षोड़शमूलिनीनामेकोनविंशतिफलिनीनां मध्ये फलिनो वा मूलिनो वा इत्याह—पृथग् ये फलमूलैर्भिरिति। फलिनीभ्यश्च मूलिनीभ्यश्च पृथक् भिन्ना ये षड् वृक्षाः शोधनार्था उक्तास्तेष्वपरेऽन्तर्गतनामत्रयाः वृक्षा ये स्नुह्यर्काश्मन्तकाः सुधावृक्षाकन्दाख्यवृक्षपाषाणभेदिनामकवृक्षास्तेषामिदं कर्म्म पृथक् प्रत्येकं शृणु। तद् यथाह—वमनेऽश्मन्तकमित्यादि। अश्मन्तकं पाषाणभेदिनः क्षीरं, स्नुहीक्षीरं विरेचने स्पष्टम्। क्षीरमर्कस्येत्यादि सविरेचने वमने इति उभयतोभागहरणे॥ ४८॥

गङ्गाधरः त्रीनुपसंहृत्यापरांस्त्रीनुपदेष्टुमाह—इमानित्यादि। इमानिति क्षीरिणो वृक्षांस्त्रीन्, अपरानिति क्षीरिभिन्नान्, शोधनार्थान् त्रीन् वृक्षान् आहुर्येषां त्वचो वल्का हिताः। तानाह—पूतीक इत्यादि। पूतीकः करञ्जः, कृष्णगन्धा शोभाञ्जनः, तिल्वको लोध्रस्तरुरिति विशेष्यः। एषां त्वचोऽर्थादेव बोध्यम्। इति नाम्नोक्तिः। कर्म्माण्याह विरेचने इत्यादि। पूतीकतिल्वकत्वचौ विरेचनार्थं प्रयोक्तव्ये। कृष्णगन्धा परीसर्पे शोथेष्वर्शःसु दद्रुविद्रधिगण्डेषु कुष्ठेष्वलजीषु दोषशोधनार्थं प्रलेपनादिविधिना प्रयोक्तव्या। उपसंहरति— षड् वृक्षानित्यादि। शोधनानेतानित्युक्तया कर्म्मभिरुक्तैर्बोध्या॥ ४९॥

चक्रपाणिः—पूतीकः कण्टकीकरञ्जः, तिल्वको लोध्रः, तथा तरुरिति विशेषणेन पट्टिकालोध्रं व्युदस्यति, शावरलोध्रस्य महाप्रमाणं तरुशब्दयोग्यं ग्राहयति, किंवा तरुविशेषणं बाल्यं लोध्रं व्युदस्यति। षड् वृक्षान् शोधनानित्यत्र यद्यपि कृष्णगन्धायाः प्रलेपमात्रमभिधानात् न शोधनत्वं

इत्युक्ताः फलमूलिन्यः स्नेहाश्च लवणानि च ।
मूत्रं क्षीराणि वृक्षाश्च षड् ये दृष्टाः पयस्त्वचः ॥ ५० ॥
ओषधीर्नामरूपाभ्यां जानते ह्यजपा वने ।
अविपाश्चैव गोपाश्च ये चान्ये वनवासिनः ॥ ५१ ॥
न नामज्ञानमात्रेण * रूपज्ञानेन वा पुनः ।
ओषधीनां परां प्राप्तिं कश्चिद्वेदितुमर्हति ॥

गङ्गाधरः—पुनर्वसुनिदर्शितफलिन्यादिद्रव्याण्युपसंहरति—इत्युक्ता इत्यादि। इतिशब्दः समाप्तौ। फलमूलिन्य इति फलिन्य एकोनविंशतिर्मूलिन्यः षोड़श। स्नेहा महास्नेहाश्चत्वारः। पञ्च लवणानि। मूत्रमष्टकम्। क्षीराणि चाष्ट। वृक्षाश्च शोधनार्थाः षट्, येषां दृष्टाः पयस्त्वचः। पयश्च त्वक् च प्रयोक्तव्यतया येषां ते पयस्त्वच इति। इति पुनर्वसुनिदर्शिता ये उद्दिष्टास्ते समाप्ता नामगुणकर्म्मभिरुक्ता भवन्तीत्यर्थः ॥ ५० ॥

गङ्गाधरः—ननु कथं नामगुणकर्म्मभिरुपदिष्टा नाम्नैव उपदिश्यन्तामित्यत आह—ओषधीरित्यादि। नामरूपाभ्यां नाम्ना आख्यया येन लोके परिचीयन्ते ओषधयः, रूपेण स्वरूपमूर्त्त्या, वने हि यस्मात्, अजपाश्छागपालकाश्छागचारका इति यावत्। अविपा मेषचारकाः, गोपा गोचारकाः, एवमन्ये ये सन्न्यास्यादयो वनवासिनस्ते नामरूपाभ्याम् ओषधीर्जानन्ति ॥ ५१ ॥

गङ्गाधरः—नाम्नानुपदेशेन किमुपकारो भिषजां को वा तेभ्योऽजपादिभ्यो भेदस्तेऽपि नाम्नामुपदिशन्तीति चेत्तदा भिषजो भवन्तु व्यर्थश्चोपदेशः स्यादित्यत आह—न नामज्ञानमात्रेणेत्यादि। रूपज्ञानेन वा स्वरूपमूर्त्त्या परिचयेनापि ओषधीनां परां प्राप्तिं परमं कर्म्मप्रभावं गुणाधिक्यञ्च। एतेनाजपालकाविपालकगोपालकवनवासिनां नामरूपज्ञानं तत्त्ववित्त्वं भिषक्त्वं वा बोध्यम्। तत् पुनः कस्येत्यत आह—योगविदित्यादि। योगं द्रव्यान्तरेण

तथापि बाह्यलेपनेन बहिःस्थितदोषसंशोधनं बोद्धव्यं, किंवा अपिशब्दात् कृष्णगन्धाया अपि शोधनत्वमपि सूच्यते ॥ ४९।५० ॥

चक्रपाणिः—उक्तानामोषधीनां योगज्ञानस्य प्राधान्यं दर्शयन्नाह—ओषधीरित्यादि; परां प्राप्तिमित्युत्कृष्टं व्याधिशरीराद्यपेक्षं सम्यग्योगं, योगो व्याधिशरीराद्यपेक्षया सम्यग्योजना भेषजस्य। सर्व्वथेति नामरूपयोगैः। योगमेव विशिष्टं दर्शयन्नाह—योगमित्यादि। देशकालोपपादितमिति

* रूपमात्रेणेति वा पाठः।

योगविन्नामरूपज्ञस्तासां तत्त्वविदुच्यते।
किं पुनर्यो विजानीयादोषधीः सर्व्वथा भिषक् ॥ ५२ ॥
योगमासान्तु यो विद्याद् देशकालोपपादितम्।
पुरुषं पुरुषं वीक्ष्य स विज्ञेयो भिषक्तमः ॥ ५३ ॥
यथा विषं यथा शस्त्रं यथाग्निरशनिर्यथा।
तथौषधमविज्ञातं विज्ञातममृतं यथा ॥ ५४ ॥

कर्म्मगुणाभ्यां निरूप्य मेलनं प्रयोगं वा यो वेत्ति स योगवित्। आसामोषधीनां नामरूपज्ञः सन्नेव यो योगवित् स चौषधीनां तत्त्वविदुच्यते याथार्थ्यवेत्ता निर्दिश्यते। तत्रापि विशेषमाह—किं पुनरित्यादि। किन्तु यो जनः सर्व्वथा प्रतिपुरुषावेक्षणपूर्व्वकदेशकालोपपादितयोगज्ञानं विना नामरूपगुणरसवीर्य्यविपाकप्रभावज्ञानपूर्व्वकं द्रव्यान्तरसंयोगं तथा रोगानुसारतः प्रयोगञ्च ओषधीनां जानीयात् स भिषगुच्यते। तत्रापि विशेषमाह—योगमित्यादि।—तु पुनर्यो जनः पुरुषं पुरुषं वीक्ष्य प्रतिपुरुषं देहबलप्रकृतिसत्त्वसात्म्यदोषबलव्याधिबलाग्निबलवयोऽनुसारपूर्व्वकमासामोषधीनां नामरूपे अभिजानन् देशविशेषकालविशेषस्तु विशेषाभिज्ञानपूर्व्वकं मात्रयोपकल्प्य द्रव्यान्तरेण संयोज्य वा कषायादिनोऽप्युपकल्प्य पानादिविधया योगं प्रयोगं विद्यात् स भिषक्तमो भिषक्सत्तमो ज्ञेय इत्यर्थः। एतेन नामरूपज्ञमात्राणामजपादीनां तत्त्वविस्त्वभिषक्त्वभिषक्तमत्वानि न भवन्ति। एवं वनेऽजपादीनां नामरूपज्ञत्ववचनेन नामरूपानभिज्ञानात् पुरुषाणां तैर्नामरूपपरिचयो विधेय इति ज्ञापितं भवति। उक्तञ्च सुश्रुते भूमिप्रविभागविज्ञानीयेऽध्याये सूत्रस्थाने—"गोपालास्तापसा व्याधा ये चान्ये वनचारिणः। मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते ॥" इति ॥ ५२-५३ ॥

गङ्गाधरः।—ननु द्रव्यं स्वप्रभावादेव व्याधिं शमयेत् कथमोषधीनां तत्त्वादिकं ज्ञातव्यं भवतीत्याकाङ्क्षायामोषधीनां तत्त्वाद्यनभिज्ञायां दोषमाह—

देशकालकृतं, पुरुषं पुरुषं वीक्ष्येति वीप्सायां, प्रतिपुरुषं प्रकृत्यादिभेदेन योगस्य प्रायो भेदो भवतीति दर्शयति। पुरुषशब्देन चेतनामात्रयोगिपुरुषोऽभिप्रेतः ॥ ५१-५३ ॥

चक्रपाणिः—योगस्य औषधज्ञानाधीनत्वात् औषधाज्ञानस्य महानर्थकारित्वं बहुभिर्दृष्टान्तैर्दर्शयति—यथा विषमित्यादि। विषादिवद्दुष्टत्वमेवाज्ञातं भेषजं किञ्चिद्विपद्यत संज्ञानाशं कृत्वा

औषधं ह्यनभिज्ञातं नामरूपगुणैस्त्रिभिः ।
विज्ञातमपि दुर्युक्तमनर्थायोपपद्यते ॥
योगादपि विषं तीक्ष्णमुत्तमं भेषजं भवेत् ।
भेषजं चापि दुर्युक्तं तीक्ष्णं सम्पद्यते विषम् ॥ ५५ ॥

यथा विषमित्यादि । विषशस्त्राग्निवज्राणां सद्यःप्राणहरणत्वेन दृष्टान्तत्व बोध्यं ; दृष्टान्तबाहुल्यं शिष्याणां सुखबोधार्थं स्तुत्यर्थञ्च । ओषधमोषधीमयं तत्कल्पितविकारं वा । औषधीपदं जाङ्गमाद्भिदपार्थिवद्रव्यवाचकं बोध्यम् । अविज्ञातं, विज्ञातमित्युभयत्र, नामरूपगुणकर्मभिरिति शेषः । अमृतमिति जरा-मरणादिहरत्वेन दृष्टान्तः ॥ ५४ ॥

गङ्गाधरः ।—तत्र हेतुमाह औषधं हीत्यादि । हि यस्मात् नामरूप-गुणैस्त्रिभिर्गुणकर्मभिः समस्तैर्वाऽनभिज्ञातेन प्रयुक्तमौषधमनर्थायाप्रयोजनाय व्याप-त्तये उपपद्यते उत्पन्नं भवति । अत्र गुणशब्दो गुणकर्मवाची समानाश्रय-त्वात् । एवमस्तु नामरूपगुणैस्त्रिभिर्विज्ञातव्यं, कथं योगेनेत्याह विज्ञात-मपीत्यादि । अपि नामरूपगुणकर्मभिर्विज्ञातमौषधं दुर्युक्तं मात्राकाल-देशवयोबलाग्निबलाद्यनुरूपेण सम्यग्योगं विना उपयुक्तं मिथ्यायोगायोगाति-योगैर्युक्तमनर्थाय मरणान्तव्यापत्तये उपपद्यते । तस्मान्नामादिभिर्विज्ञातममृत-वद्भवतीत्यर्थः ।

ननु सम्यगयोगयुक्तं सम्पन्नं भवतीति प्रतिज्ञाव्याघातः सम्यग्युक्तमपि विषादिकं सद्यो हि प्राणान् हन्तीति शङ्कायामाह—योगादपीत्यादि । योगात् दोषधातुवयोवह्निबलबलशरीरप्रकृतिसत्त्वसात्म्यव्याधिबलान्यनुसृत्य द्रव्यान्तरेण संयुज्य देशकालमात्राभिः प्रयोगात् तीक्ष्णमपि विषं प्राणहरमपि उत्तमं सात्म्यं स्वस्थातुरपरायणं च भेषजं भिषगजितं भवेदिति, न तु प्राणहरणरूपेणानुवर्त्तते इत्यर्थः । ननु नाशकद्रव्यविकल्पितं हि दोषव्याध्युभयहरं भेषजं भवति, तस्य न दुर्योगेण किमस्तु वा दुर्योग इत्यत आह—भेषजं चापीत्यादि । विषमिति प्राणहरत्वेन विषवत् ॥ ५५ ॥

मारयति, किञ्चिच्च शस्त्रवत् मर्मच्छेदं कृत्वा मारयति, किञ्चिच्चाग्निवत् स्फोटादिकं कृत्वा मारयति, किञ्चिद्वज्राशनिवत् सद्यो मारयति । नामरूपगुणैरित्यनेन त्रित्वे लब्धे पुनस्त्रिभिरिति वचनं एकैकज्ञाननिषेधार्थं, तेन त्रिभिरेव मिलितैर्ज्ञातं भेषजं प्रशस्तमिति दर्शयति ।

योगं स्तौति—योगादपीत्यादि । विषञ्च सम्यगयोगात् भेषजं भवतीति "विषस्य तु तिक्तं

तस्मान्न भिषजा युक्तं युक्तिबाह्येन भेषजम् ।
धीमता किञ्चिदादेयं जीवितारोग्यकाङ्क्षिणा ॥
कुर्य्यान्निपतितो मूर्ध्नि सशेषं वासवाशनिः ।
सशेषमातुरं कुर्य्यान्न त्वज्ञमतमौषधम् ॥ ५६ ॥
दुःखिताय शयानाय श्रद्दधानाय रोगिणे ।
यो भेषजमविज्ञाय प्राज्ञमानी प्रयच्छति ॥

गङ्गाधरः ।—इत्यञ्च नामादिभिरविज्ञातं द्रव्यं भेषजं यदि विषवत् व्यवस्थितं तदा नामादिभिरनभिज्ञानवैद्यात् द्रव्यं ग्राह्यं न भवति, युक्तिज्ञेन तु वैद्येन निर्म्मितं भेषजमयुक्तिज्ञवैद्यात् ग्रहीतुन्न दुष्टं भवत्वित्याशङ्क्याह तस्मादित्यादि । तस्मात् तु दुर्युक्तभेषजस्यापि विषोपमत्वात् युक्तिबाह्येन युक्त्यनभिज्ञेन भिषजा युक्तं भेषजं युज्यते पानार्थं दीयते यत् किञ्चित् भेषजं तदपि जीवितारोग्यकाङ्क्षिणा धीमता नादेयम्, अयुक्तिज्ञभिषक्प्रयुक्तभेषजस्य विषतुल्यत्वाभिधानेन जीवितारोग्यव्याहन्तृत्वात् । नन्वयुक्तिज्ञभिषक्प्रयुक्तं भेषजं नारोग्याय भवतु जीवितमपि किं हन्तीत्यत आह कुर्य्यादित्यादि । वासवाशनिरिन्द्रस्य वज्रः सद्यःप्राणहरो मूर्द्धनि पतितस्तं पुरुषं कदाचित् सशेषं कुर्य्यान्न प्राणतो हन्यात् । अज्ञयुक्तमौषधन्तु नातुरं सशेषं कुर्य्यात् अपि तु सर्व्वदैवातुरप्राणान् हन्यादिति । तस्माच्च जीवितारोग्यकाङ्क्षिणा धीमता युक्तिबाह्येन भिषजा युक्तं किञ्चिदौषधं नादेयमिति योज्यम् । न त्वविज्ञानमौषधमिति पाठे स एवार्थः ॥ ५६ ॥

गङ्गाधरः ।—अथ युक्त्यनभिज्ञवैद्यप्रयुक्तभेषजाग्राह्यत्वोपन्यासेन वैद्यस्य युक्त्यनभिज्ञानं दोषः ख्यापित इति वैद्यदोषः प्रस्तावितो भवति । तत्प्रस्तावप्रसङ्गादपरञ्च वैद्यदोषमाह दुःखितायेत्यादिभ्यां द्वाभ्यां श्लोकाभ्याम् । यो वैद्यः प्राज्ञमानी प्राज्ञमात्मानं मन्तुं शीलमस्य स भेषजमविज्ञाय भेषजस्य गुणकर्म्माणि न ज्ञात्वा, अवज्ञायेति पाठे दुःखितत्वादिनावज्ञां कुर्व्वन्, दुःखिताय श्रद्दधानाय रोगिणे शयानाय सुप्ताय श्रद्दधानाय वा रोगिणे प्रयच्छति, तस्य त्यक्तधर्म्मस्यात एव पापस्य मृत्युभूतस्य मृत्युस्वरूपस्य दुर्म्मतेर्वैद्यस्य सम्भाषणादपि स्पर्शादितस्तु तिष्ठतु नरो नरकपाती स्यात् । तदा दुःखितत्वेन निद्रालसत्वेन च तयो रोगिणोः श्रद्धया चात्मा समर्पितो वैद्याय भवतीति विश्वासघातित्वादि-

त्यक्तधर्म्मस्य पापस्य मृत्युभूतस्य दुर्म्मतेः ।
नरो नरकपाती स्यात् तस्य सम्भाषणादपि ॥ ५७ ॥
वरमाशीविषविषं क्वथितं ताम्रमेव वा ।
पीतमत्यग्निसन्तप्ता भक्षिता वाप्ययोगुड़ाः ॥
न तु श्रुतवतां वेशं विभ्रतः * शरणागतात् ।
गृहीतमन्नं पानं वा वित्तं वा रोगपीड़ितात् ॥ ५८ ॥
भिषग्बुभूषुर्मतिमानतः स्वगुणसम्पदि ।
परं प्रयत्नमातिष्ठेत् प्राणदः स्याद् यथा नृणाम् ॥ ५९ ॥

दोषात् । एतेन वैद्यस्य दुःखितादिरोगिणेऽपि भेषजदानेऽवहेलनं निषिध्यते इति ज्ञापितम् ॥ ५७ ॥

गङ्गाधरः ।—अथ वैद्यदोषोपन्यासप्रसङ्गेन वैद्येन निषेधनीयमुपदिश्यापरञ्च तत्प्रसङ्गात् वैद्यस्यानिषेध्यमाह वरमाशीविषविषमित्यादि । यो वैद्यो वित्तार्थी चिकित्सति तेन वैद्येनत्यर्थाल्लभ्यते न तु श्रुतवतां वेशमित्यादुक्तेः, तथा च । आशीविषविषं सद्यःप्राणहरं क्वथितं वा ताम्रमेव सद्यःप्राणहरं तेन वैद्येन वरं पीतं दैन्यापन्नेन क्षुधार्त्तो पूर्व्वकाले पीतम् । एवमत्यग्निसन्तप्ता वाप्ययोगुड़ा सद्यःप्राणहरा लौहगुड़िका तेन वैद्येन वरं भक्षिता यः स्वोदरभरणार्थं चिकित्सयार्थं नालभत तेन पुनः श्रुतवतां वेदेऽधीतिनां वेशं विभ्रतः शरणागतात् रोगपीड़ितादन्नं पानं वा वित्तं वा न तु गृहीतं नागृह्णत । इदानीमपि न ग्रहीतव्यमिति ख्यापितम् । अन्यस्माच्च यस्मात् गृहीतं भवति तद्वक्ष्यते । एतेनैतदुक्तं भवति, वैद्यानामुदरभरणार्थं श्रुतवद्वेशधारिभ्यः किञ्चिदपि न ग्राह्यं यदि क्षुधया पीड़ितो वैद्यो भवति प्राणा यान्ति तदा प्राणहरद्रव्याण्यपि भुक्त्वा प्राणान् जह्यादिति ॥ ५८ ॥

गङ्गाधरः । ननु तदा भिषक् किं कुर्य्यादित्यत आह भिषग्बुभूषुरित्यादि । अतो गुणयत्नभिन्नवैद्यतो भेषजाग्राह्यत्वात् तथाविधवैद्यप्रयुक्तौपधस्य

दुर्णाद इत्यादिप्रयोगो बोद्धव्यम् । न केवलमातुरेणैवाभिषजो भेषजं नादेयं किन्तु भिषजापि युक्तियाद्य न भेषजमातुराय न देयमित्याह— दुःखितायेत्यादि ॥ ५५—५७ ॥

* विभ्रता इति चक्रपाणिधृतः पाठः ।

तदेव युक्तं भैषज्यं यदारोग्याय कल्पते।
स चैव भिषजां श्रेष्ठो रोगेभ्यो यः प्रमोचयेत्॥
सम्यक्प्रयोगं सर्व्वेषां सिद्धिराख्याति कर्म्मणाम्।
सिद्धिराख्याति सर्व्वैश्च गुणैर्युक्तं भिषक्तमम्॥ ६०॥

आतुराणां निःशेषेण प्राणहरत्वात् दुःखिनादिव्याधितेभ्यः प्राज्ञमानितया भेषजस्याज्ञानेन प्रदानवैद्यसम्भाषणस्य नरकपातनहेतुत्वात् श्रुतवद्वाद्यभिभ्यो-ऽन्नादिग्रहणप्रतिषेधाच्च भिषग्बुभूषुर्जनो मतिमान् बुद्धिमान् स्वगुणसम्पत्तौ वक्ष्यमाणवैद्यगुणसम्पत्तौ परं श्रेष्ठं प्रयत्नं स्वगुणसम्पज्जननव्यापारमातिष्ठे-दाश्रयेदिति।

ननु प्रयत्नस्य परत्वं किं सततानुशीलनत्वं किमुक्तयुक्त्यनभिज्ञानादि-वर्ज्जनं? न तावत्तद्द्वयमित्याह प्राणद इत्यादि॥ ५९॥

गङ्गाधरः। उक्तयुक्त्यनभिज्ञानादिकं वर्ज्जयित्वा स्थितो वैद्यश्चेदातुरान् न चिकित्सति, तदा तस्य किं स्वगुणवत्तया? यदि नृणां प्राणदो वैद्यः स्यात्, तदा वैद्यगुणसम्पत्तिरुच्यते इति वैद्यगुणसम्पदुपन्यासप्रसङ्गेन भेषजगुण-सम्पदुपन्यस्यति दृष्टान्तच्छलेन—तदेवेत्यादि। यद् भेषजमारोग्याय कल्पते किम्? भवति, तदेव भेषजं युक्तं भवति; यदि तु नारोग्याय भवति, तदाऽमृतमपि युक्तं भैषज्यं न मन्यते। तथा स एव भिषजां श्रेष्ठो यो वैद्यो रोगेभ्यो वै प्रमोचयेदातुरमिति शेषः। यो वैद्यो रोगेभ्यो नातुरं मोचयेत् तस्य सर्व्वगुण-योगेनापि किमिति भावः।

ननु शास्त्रोदितविधिविनिर्म्मितमौषधं यदि नारोग्याय भवति, तदा तत् किं न भेषजं? सर्व्वगुणसम्पन्नश्च वैद्यो यद्यातुरान् न रोगेभ्यः प्रमोचयेत् तदा स किं न वैद्यः? इत्याशङ्क्याह—सम्यक् प्रयोगमित्यादि। कर्म्मणां प्रयोजनलक्षणानां सिद्धिर्निष्पत्तिः सर्व्वेषां वस्तूनां सम्यक् प्रयोगमाख्याति वक्ति प्रयोजनसिद्ध्यैव सम्यक्प्रयोगोऽनुमीयते फलाभावेन पुनरप्रयोग इति फलसाधकत्वाभावेन तद्वस्तु न वस्तु भवति, तत्फलसाधकं हि तद्वस्तु, तत्फलासाधकञ्च तदवस्तु इति; यथा सदपि मृदादिकं घटादिकर्म्मासाधकं घटादिरूपेणासत्। भेषजमनारोग्यकरं

चक्रपाणिः—अथ सम्यग्युक्तस्य भेषजस्य किं लक्षणं किंवा उपादेयस्य श्रेष्ठवैद्यस्य लक्षण-मित्याह—तदेवेत्यादि। रोगेभ्यो यः प्रमोचयेदित्यनेन च ज्ञानपूर्व्वं भेषजप्रयोगेण रोगहारकत्व-

तत्र श्लोकाः।

आयुर्व्वेदागमो हेतुरागमस्य प्रवर्त्तनम्।
सूत्रणस्याभ्यनुज्ञानमायुर्व्वेदस्य निर्णयः॥
सम्पूर्णं कारणं कार्य्यमायुर्व्वेदप्रयोजनम्।
हेतवश्चैव दोषाश्च भेषजं संग्रहेण च॥

यत् तद्भेषजमिति भावः। एवं कर्म्मणामारोग्यलक्षणप्रयोजनानां सिद्धि-निष्पत्तिः सर्व्वगुणैर्युक्तं च भिषक्तमश्चाख्याति भिषक्तमत्वेन लोके ख्यापयति। आरोग्यलक्षणफलनिष्पत्त्यैव वैद्यस्य सर्व्वगुणवत्ताऽनुमीयते पुनरपि भिषक्-तमत्वेनानुमानं भवति। अन्यथा तु गुणवत्ता वैद्यस्य नानुमीयते। न हि विद्यावत्तया चिकित्सकत्वेनानुमातुं युज्यते. विद्यावानपि हि चिकित्सया रोगात् प्रमोचयितुं न शक्नोति; इति रोगादमोचको वैद्यः सर्व्वगुणवानपि न वैद्य इति भावः॥ ६०॥

गङ्गाधरः अथाध्यायान्तेऽध्यायोक्तार्थं संग्रहेणाभिधातुमाह तत्र श्लोका इत्यादि।—तन्त्रकारस्येयं रीतिर्यत्र तूक्तार्थानधिकार्थसंग्रहाय वक्तुमभिप्रैति. तत्र तु "तत्र श्लोकाः" इति निर्दिश्यते। यत्र तूक्तार्थं प्रमाणीकर्त्तुमिच्छति न तूक्तार्थं संग्रहीतुं तत्र तु "भवन्ति चात्र" तन्निर्दिश्यते इति। आयुर्व्वेदागम इति स्वर्लोकाद् भूलोके आयुर्व्वेदस्यागमनं दीर्घञ्जीवितमन्विच्छन्नित्यादिना तस्माच्छक्रमुपागमदित्यन्तेन श्लोकत्रयेण।०। हेतुरागमस्यायुर्व्वेदस्य स्वर्लोकाद् भूलोके आगमनस्य हेतुः कारणं, विघ्नभूता यदेत्यादिनैकश्लोकेन।०। प्रवर्त्तन-मित्यागमस्येत्यनेनान्वयात् आयुर्व्वेदागमनस्य प्रवर्त्तनम्. तदा भूतेष्वनु-क्रोशमित्यादिर्जीवितश्चाप्यनश्वरमित्यन्तैस्त्रयोविंशतिश्लोकैः।०। ततस्तु सूत्रण-मायुर्व्वेदस्येत्यनेनान्वयात् आयुर्व्वेदस्य सूत्रणम्. अथ मैत्रीपर इत्यादि-सुमेधस-इत्यन्तैश्चतुर्भिः श्लोकैः।०। ततस्तु तत् सूत्रणस्याभ्यनुज्ञानमृषिदेवर्षि-

मुच्यते, तेन यादृच्छिकसिद्ध्या कुवैद्यव्यवहारो न वाच्यः. यादृच्छिकसिद्धो हि वैद्यो न रोगप्रमोक्षे कारणं किन्तु घुणाक्षरन्यायादेवागतो भेषजस्य सम्यग्योग इति॥ ६०॥

चक्रपाणिः अध्यायोक्तमर्थमध्यायान्ते संग्रहेणाभिधत्ते आयुर्व्वेदागम इत्यादिना। संग्रहकथ-नञ्च पूर्व्वोक्तार्थस्य सङ्क्षेपेण ग्रहणार्थं तथा दुर्ज्ञानप्रतिषेधार्थञ्च, यतो यत्किञ्चिदत्र दुर्ज्ञानं स्यात् तदिह प्रतिपादितार्थत्वेनाभिधासम्भावेनावधार्य्यते, वचनं हि "गद्योक्तो यः पुनः श्लोकैरर्थः

रसाः सप्रत्ययद्रव्यास्त्रिविधो द्रव्यसंग्रहः।
मूलिन्यश्च फलिन्यश्च स्नेहाश्च लवणानि च ॥
मूत्रं क्षीराणि वृक्षाश्च षड़् ये क्षीरत्वगाश्रयाः।
कर्म्माणि चैषां सर्व्वेषां योगायोगगुणागुणाः ॥

इत्यादिभिरभिमतत्वम्, अथवा मूत्रणमर्थानामित्यादि-प्रतिष्ठां भुवि लेभिरे इत्यन्तैः सप्तभिः श्लोकैः।०। ततश्चायुर्व्वेदस्य निर्णय इति सप्रभेदायुर्निर्णय-सहितायुर्व्वेदस्य स्वरूपनिर्णयः, हिताहितं सुखं दुःखमित्यादि लोकयो-रुभयोर्हितः-इत्यन्तैस्त्रिभिः श्लोकैः।०। ततोऽनन्तरं सर्व्वदा सर्व्वभावाणामित्यादि-इत्युक्त कारणं कार्य्यमित्यन्तैः सपादनवभिः श्लोकैः सम्पूर्णं कारणं कार्य्य मिश्ररूपेण।०। ततः परं धातुसाम्यमित्यादि-तन्त्रस्यास्य प्रयोजनमित्यन्तेन पादत्रयेणायुर्व्वेदप्रयोजनम्।०। ततः परं कालबुद्धीत्यादि-पश्यति हि क्रिया इत्यन्तैस्त्रिभिः श्लोकैर्हेतवश्च व्याधीनामारोग्यस्य च जनकरूपा आश्रयरूपाश्च हेतव एतेन शरीरसत्त्वसंज्ञयो रोगारोग्याश्रयत्ववचनमात्मनश्च निर्व्विकारत्व-वचनम्।०। ततः परं वायुः पित्तमित्यादिना तम एव चेत्यन्तेनैकेन श्लोकेन दोषाश्च व्याधीनां समवायिकारणरूपा दुष्टाश्रयाश्च हेतव इत्यन्वयः।०। ततः परं भेषजं संग्रहेण च सङ्क्षेपेण व्याधीनां भेषजं प्रशाम्यतीत्यादिना समाधिभिरित्यन्तेनैकेन श्लोकेन। रूक्षः शीत इत्यादिविपरीतगुणैर्गुणा इत्यन्तैस्त्रिभिः श्लोकैः शारीरदोषाणां भेषजम्। विपरीतगुणैरित्यादि-व्याधीनामुपदिश्यते इत्यन्तेन सार्द्धश्लोकेन साधारणत्वेन व्याधीनां भेषज-मिति संग्रहेण सार्द्धपञ्चभिः श्लोकैर्भेषजम्।०। ततः परं भूयश्चात इत्यादि-लवणाः कटुकामित्यन्तैः सार्द्धचतुःश्लोकैः सप्रत्ययद्रव्यरसाः, अभिव्यक्तिकारणाश्रय-भूतकारणैः सहिता रसाः।०। ततश्च किञ्चित् दोषप्रशमनमित्यादिभिरौद्भिदो गण इत्यन्तैः सार्द्धसप्तभिः श्लोकैस्त्रिविधो द्रव्यसंग्रहः; जाङ्गमभौमौद्भिद-भेदेन त्रिविधद्रव्यसंग्रहः।०। ततोऽनन्तरं मूलिन्य इत्यादि-स वेदवित्रिदित्यन्तेन

समनुगीयते। तद्वाक्यव्यवसायार्थं द्विरुक्तिः सा न गृह्यते ॥" अत्र च गद्योक्त इति विस्तरो-क्तोपलक्षणं, तेन श्लोकोक्तस्याप्यारम्भधीयावार्थस्य पुनः श्लोकेन संग्रहणमविरुद्धं। व्यक्तिः स्पष्टता। व्यवसायोऽवधारणम्। आगम इति दीर्घंजीवितमन्विच्छन्नित्यादिना। हेतुरित्यायुर्व्वेदागमहेतुः, स च विघ्नभूता यदा रोगा इत्यादिना रोगप्रादुर्भाव उक्तः, किंवा दीर्घंजीवितमन्विच्छन्नित्यादि

वैद्यापवादो यत्रस्थाः सर्व्वे च भिषजां गुणाः ।
सर्व्वमेतत् समाख्यातं पूर्व्वाध्याये महर्षिणा ॥ ६१ ॥

साद्धश्लोकद्वयेन मूलिन्यादीनामुद्देशपूर्व्वकम्, हस्तिदन्तीत्यादि-नामकर्म्मभ्यां मूलिन्य इत्यन्तैः किञ्चिदधिकपादत्रयसहितैस्त्रिभिः श्लोकैर्मूलिन्य ।०। ततश्च फलिनीः शृण्वित्यादि-फलान्येकोनविंशतिरित्यन्तैः किञ्चिन्न्यूनैकपादेन सह षड्भिः श्लोकैः फलिन्यश्च ।०। ततः सर्पिस्तैलमित्यादि-कफापहा इत्यन्ताभ्यां द्वाभ्यां श्लोकाभ्यां स्नेहाश्च । सौवर्च्चलमित्यादि-उक्तानि लवणानीत्यन्तैः किञ्चिन्न्यूनैकपादेन सह चतुर्भिः श्लोकैर्लवणानि च ।०। ऊर्द्ध्वं मूत्राण्यष्टावित्यारभ्य यथासामर्थ्ययोगत इत्यन्तैः किञ्चिदधिकपादत्रयेण सह त्रयोदशभिः श्लोकैर्मूत्रम् ।०। अथ क्षीराणि वक्ष्यन्ते इत्यारभ्य वक्ष्याम्यशेषत इत्यन्तैः सार्द्धाष्टभिः श्लोकैः क्षीराणि ।०। अथापरे त्रय इत्यारभ्य अपि विद्याद्विचक्षण-इत्यन्तैः पञ्चभिः श्लोकैर्वृक्षाश्च षड् ये क्षीरत्वगाश्रयाः स्नुह्यादयः । एषां मूलिन्यादीनां क्षीरत्वगाश्रयषड्वृक्षान्तानां पुनर्व्वसुनिर्दिष्टानां सर्व्वेषां कर्म्माणि वमनविरेचनादीनि । योगायोगगुणागुणा, यत्र यद्वक्तव्यं यत्र यन्न योज्यं यस्मिन् ये गुणास्तद्भिन्नाश्च तन्न्यागुणा प्रत्येकविनिर्णये ज्ञेयानि ।०। इत्युक्ता इत्यारभ्य पयस्त्वच-इत्यन्तेनैकेन श्लोकेन मूलिन्यादीनामुपसंहारः ।०। तत्-परमोषधीनामरूपाभ्यामित्यारभ्य कश्चिद्वेदितुमर्हतीत्यन्ताभ्यां द्वाभ्यां वैद्यापवादः ।०। ततः परं योगविदित्यारभ्य भिषक्तम इत्यन्ताभ्यां द्वाभ्यां श्लोकाभ्यां यत्रस्थाः सर्व्वे भिषजां गुणाः ।०। ततश्चकारात् यथा विषमित्यादिभिर्भिषक्तम-मित्यन्तैर्द्वादशभि श्लोकैर्भिषजामपवादा गुणाश्च मिश्रीकृताः ।०। सर्व्वमेतत् आयुर्व्वेदागमादिकं वैद्यापवादगुणान्तं त्रिंशकं सार्द्धाष्टविंशत्युत्तरशतश्लोकैः पूर्व्वाध्याये दीर्घञ्जीवितीयाख्येऽध्याये महर्षिणाऽग्निवेशेन समाख्यातम् उक्त-मिति । संग्रहश्लोकैश्च पञ्चभिः सह चाथातो दीर्घञ्जीवितीयमित्यादि-भगवानात्रेय इत्यन्तेनैकेन श्लोकेन सार्द्धचतुस्त्रिंशच्छ्लोकाधिकशतश्लोकीय-श्चायमध्यायः ॥ ६१ ॥

श्लोकाद्यविशेषेणायुर्व्वेदागमस्य तथायुर्व्वेदागमहेतोश्च पिण्डसूत्ररूपः, ब्रह्मणा हीत्यादिग्रन्थ-स्त्वायुर्व्वेदागमप्रतिपादकः, हेतुप्रतिपादकस्तु विघ्नभूता इत्यादि ग्रन्थो यथोक्त एव । आगमस्य

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
दीर्घञ्जीवितीयो नाम प्रथमोऽध्यायः।

गङ्गाधरः—अध्यायं समापयितुं मन्त्रपूर्व्वकं स्वनामपूर्व्वकञ्च निबध्नाति। अग्नीत्यादि। तन्त्रे आयुर्व्वेदतन्त्रे एकदेशरूपे न तु कृत्स्नायुर्व्वेदरूपे चरकप्रतिसंस्कृते। शब्दान्तरेण तदर्थकथनं प्रतिसंस्कारः। चरकेणाग्निवेशकृततन्त्रः प्रतिसंस्कृतः शब्दान्तरेण स एवार्थो विस्तरेणोक्तस्तस्मिंस्तन्त्रे श्लोकस्थाने दीर्घञ्जीवितीयो नाम प्रथमोऽध्यायः॥ १॥

इति वेदाकुलावतंसपरमपण्डित-श्रीलगङ्गाधररायकविरत्नकविराज-विनिर्म्मिते
आयुर्व्वेदीयचरकसंहिताजल्पकल्पतरौ सूत्रस्थानादाष्टस्थान-जल्पाष्टक-
स्कन्धे प्रतिस्थानीयप्रत्यध्यायजल्पप्रतिस्कन्धशाखे तत्प्रतिश्लोकजल्प-
प्रशाखे तत्तच्छ्लोकप्रतिपदजल्पपल्लवे परापरविद्याकुसुमे लोक-
द्वयशुभफले सूत्रस्थानाख्यप्रथमस्कन्धस्य दीर्घञ्जीविती-
याख्यप्रथमाध्यायजल्पो नाम प्रथमशाखा॥ १॥

प्रवर्त्तनमिति इन्द्रादीनां भरद्वाजेन मनुष्यलोके प्रवर्त्तनमायुर्व्वेदप्रकाशपर्य्यन्तम्। सूत्रणमित्यायुर्व्वेदतन्त्रकरणमग्निवेशादीनाम्। अभ्यनुज्ञानमिति तानि चानुमतानीत्यादि। शेषं सुगमम्॥ ६१॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-
व्याख्यायां दीर्घञ्जीवितीयो नाम प्रथमोऽध्यायः॥ १॥

---

# द्वितीयोऽध्यायः।

## अथातोऽपामार्गतण्डुलीयमध्यायं व्याख्यास्यामः

## इतिह स्माह भगवानात्रेयः ॥ १ ॥

अपामार्गस्य बीजानि पिप्पलीर्मरिचानि च।
विडङ्गान्यथ शिग्रूणि सर्षपांस्तुम्बुरूणि च ॥

गङ्गाधरः अथ वमनादिपाञ्चकर्म्मिकभेषजानां स्वस्थातुरोभयसाधारणत्वेनोपदेशप्रसङ्गसङ्गत्या वमनादीनामुक्तद्रव्याणां योगे पुनः पञ्चकर्म्मोपयोगितया चापराणि च संशोधनद्रव्याण्युपदेष्टुमपामार्गतण्डुलीयमध्यायमारभते। —अथात इत्यादि। अत्राप्यथात इति पूर्ववद्व्याख्येयम्। अपामार्गतण्डुलीयमिति अध्यायारम्भे प्रथममपामार्गस्य बीजानीति पदं, तेनापामार्गस्य बीजीयमध्यायमिति कर्त्तव्ये यत् तदर्थं गृहीत्वाऽपामार्गतण्डुलीयमिति कृतं तेनैतदागमितं तण्डुला बीजान्यपामार्गस्य यानि ग्राह्याणि तानि निस्तुषीकृत्य तण्डुलान् गृह्णीयादिति। अपामार्गे तण्डुल उपयोगितया वाच्यो यत्र तदधिकृत्य कृत इत्यपामार्गतण्डुलीयस्तं तथा। अध्यायमित्यादात्रेय-इत्यन्तं प्राग्वद्व्याख्येयम् ॥ १ ॥

गङ्गाधरः—अपामार्गस्य बीजानीति तण्डुलग्रहणयोग्यबीजानि, शिग्रूणि शोभाञ्जनबीजानि, सर्षपानिति अनुक्तो ह्येतान। तुम्बुरूणि स्वनाम-

चक्रपाणिः—दीर्घञ्जीवितीये मूलिन्यश्च फलिन्यश्च पञ्चकर्म्माङ्गभूता उक्ताः, अपराण्यपि च पिप्पलीमरिचप्रभृतीनि पञ्चकर्म्मसाधनानि भवन्ति, तथा पञ्चकर्म्मप्रभृतिविषयोऽपि तत्र नोक्तः, तेनानन्तरं शेषपञ्चकर्म्मोपयोगिद्रव्यपञ्चकर्म्मप्रवृत्तिविषयाभिधायकोऽपामार्गतण्डुलीयोऽभिधीयते। पूर्व्वोक्तान्यपि चापामार्गादीनि यतः पुनरिहाभिधीयन्ते, तदाचार्य्य एवाध्यायान्ते "पूर्व्वं मूलफल" इत्यादिना श्लोकद्वयेन समाधास्यति। अपामार्गबीजीय इति संज्ञायां प्राप्तायां अपामार्गतण्डुलीय इति संज्ञाकरणं अपामार्गादिबीजादीनां निस्तुषाणामेव ग्रहणार्थम्। अध्यायसंज्ञां तण्डुलेन कृत्वापामार्गस्य बीजानीति यद्वीजशब्दं करोति, तदङ्कुरजननसमर्थबीजभूतानामेव तण्डुलानां ग्रहणार्थम्। यद्यपि च इहोत्सर्गतः पञ्चकर्मप्रवृत्तिर्वमनपूर्व्विकैव स्यात्, यदुक्तं "साधारणेष्वृतुषु वमनादीनां प्रवृत्तिर्भवति" इत्यादि; तथा सुश्रुतेऽप्युक्तम् "अवान्तस्य हि सम्यग्विरिक्तस्याप्यधः स्रस्तः श्लेष्मा ग्रहणीमाच्छादयति" इत्यादि। तथापि क्वचित् प्रबलदोषापेक्षयाऽन्यथापि क्रमो भवति, यथा—शरत्प्राकृते पित्ते विरेचनादि, तथा प्रावृषि प्रबलवाते वस्त्यादिरित्यनियमार्थमिह शिरो-

अजाजीं चाजगन्धां च पीलून्येलां हरेणुकाम्।
पृथ्वीकां सुरसां श्वेतां कुठेरकफणिज्झकौ॥
शिरीषबीजं लशुनं हरिद्रे लवणद्वयम्।
ज्योतिष्मतीं नागरञ्च दद्याच्छीर्षविरेचने॥
गौरवे शिरसः शूले पीनसेऽर्द्धावभेदके।
क्रिमिव्याधावपस्मारे घ्राणनाशे प्रमोहके॥ २॥

ख्यातानि धन्याकानि वा। अजगन्धा अजमोदा काकाण्डोलेत्यन्ये। पीलूनि स्वनामख्यातानि काङ्कणदेशे भूमिजानि 'आखरोट' इति लोके, तस्य फलानि। एलां स्थूलाम्। हरेणुकां स्वनामख्यातां रेणुकामिति। पृथ्वीकां सूक्ष्मैलाम्। सुरसां पर्णासभेदम्। श्वेतां श्वेतापराजिताम्। श्वेतां सुरसामिति श्वेतसुरसा श्वेतशेफालिकेत्यन्ये। कुठेरकः पर्णासभेदः कृष्णतुलसीति ख्यातः। फणिज्झकः मरुवपुष्पः स च मधुरजम्बीरः 'मरुवा' इति लोके, पर्णासभेद इत्यन्ये। हरिद्रे द्वे। लवणद्वयं सौवर्च्चलं सैन्धवञ्च। ज्योतिष्मती लतापुटकी कारवेल्लसमपत्रा। एषां मध्ये श्वेताज्योतिष्मत्योः मल्लिनाथुक्तं, प्रत्यकपुष्पी फलिनीषु, तेनात्र श्वेताज्योतिष्मत्योरपि अपामार्गस्य फलं ग्राह्यम्. इह पुनः पाञ्चकर्म्मिकत्वोपसंहारे प्रोक्तमिति न पुनरुक्तम्। शीर्षविरेचनतया त्वेषां प्रयोगः सर्व्वस्मिन् व्याधावथ किं व्याधिविशेषे इत्यत आह गौरवे इत्यादि। प्रमोहको मूर्च्छा इन्द्रियापाटवं वा॥ २॥

विरेचनमात्रमभिहितम्। यदि वा, प्रधानाद्धि शिरःशोधनत्वात् शिरोविरेचनमादौ कृतम्; यदुक्तं "उत्तमाङ्गमङ्गानां शिरस्तदभिधीयते" इति, शालाक्येऽप्युक्तं "अनामये यथा मूले वृक्षः सम्यक् प्रवर्द्धते। अनामये शिरस्येवं देहः सम्यक् प्रवर्द्धते॥" अपामार्गाभिधानमादौ शिरोविरेचनप्राधान्यात्; यदुक्तं "प्रत्यक्पुष्पा शिरोविरेचनानाम्।" अजगन्धा अजमोदा, काकान्धीति केचित्, पीलु आखरोटप्रसिद्धं फलं, लवणद्वयं लवणवर्गादिपठितं सौवर्च्चलं सैन्धवञ्च। अयं वर्गो व्यस्तः समस्तश्च शिरोविरेचने प्रयोज्यो गणत्वात्, यदुक्तं "परिसंख्यातमपि हि यद् द्रव्यमयौगिकं मन्येत तदपहरेत्" इति। अन्यत्राप्युक्तं "समस्तं वर्गमर्द्धं वा यथालाभमथापि वा" इति। शिरस इति गौरव इत्यनेन शूल इत्यनेन च सम्बध्यते। क्रिमिव्याधिरिह शिरोगत एव बोद्धव्यः तत्रैव शिरोविरेचनस्य समर्थत्वात्। प्रमोहको मूर्च्छा, इन्द्रियापटुत्वं वा॥ १।२॥

मदनं मधुकं निम्बं जीमूतं कृतवेधनम् ।
पिप्पलीकुटजेक्ष्वाकूण्येलां धामार्गवाणि च ॥
उपस्थिते श्लेष्मपित्ते व्याधावामाशयाश्रये ।
वमनार्थं प्रयुञ्जीत भिषग् देहमदूषयन् ॥ ३ ॥
त्रिवृतां त्रिफलां दन्तीं नीलिनीं सप्तलां वचाम् ।
कम्पिल्लकं गवाक्षीञ्च क्षीरिणीमुदकीर्य्यकाम् ॥

गङ्गाधरः—वमनद्रव्याण्याह मदनमित्यादि । मधुकं यष्टीमधु तच्च स्थलजानूपजभेदेन द्विधा वमनादिप्रतिकर्म्मविशेषेण. जीमूतं घोषकभेदः. कृतवेधनं ज्योत्स्निका त्वनापुटकीति लोके । इक्ष्वाकुस्तिक्तालावुः । एलां स्थूलैलाम् । धामार्गवो घोषकभेदः । इत्येतानि उपस्थितश्लेष्मपित्तादौ देहमदूषयन् शरीरबलादाविरोधेन वमनार्थं प्रयुञ्जीतेत्यर्थः । एषां मदनमधुकद्वयजीमूतकृतवेधनकुटजेक्ष्वाकुधामार्गवाणां फलिनीषु पाठात् फलं ग्राह्यम् । पिप्पल्येलयोश्च फलं. निम्बस्य त्वक् ॥ ३ ॥

गङ्गाधरः—विरेकद्रव्याण्याह त्रिवृतामित्यादि । दन्ती नागदन्ती । नीलिनी नीली । सप्तला सातला चम्मकषा इति ख्याता । कम्पिल्लकं कमलागुड़ीति लोके । गवाक्षी गोडुम्बा । क्षीरिणी स्वनामख्याता । उदकीर्य्या नाटाकरञ्जः । पीलूनीति पीलुफलम् । द्रवन्ती हस्वदन्ती । निचुलानि हिज्जल-

चक्रपाणिः—वमनद्रव्ये आदौ मदनं प्राधान्यात्, उक्तं हि "वमनद्रव्ये मदनफलानि श्रेष्ठतमान्याख्यातेऽनपायित्वात् । उपस्थित इति आमाशयोर्द्ध्वभागे श्लेष्मणः स्थानं गत्वोत्क्लिष्टं गतम् इति व्याख्येयम् । श्लेष्मपित्त इति श्लेष्मपित्ते श्लेष्मणि पित्ते च । पित्तञ्च यद्यपि साक्षाद्वमनविषयं तथापि श्लेष्मस्थानगतत्वेन श्लेष्मसम्बन्धाद्वमनविषयं, यदुक्तं "दोषस्थानगतं दोषं स्थानिवत् समुपाचरेत् इति । देहमदूषयन्निति यद्यपि वमने प्रोक्तं तथापि विरेचनादिष्वपि बोद्धव्यम्, तत्राप्ययोगातियोगमिथ्यायोगैर्देहदुष्टिशङ्कायाः समानत्वात् । उच्यते च न्यायविद्भिर्यत् "समानेष्वर्थेषु पृथगभिहितो विधिरन्यत्राप्यनुषञ्जनीयः" इति ॥ ३ ॥

चक्रपाणिः—वमनमनु विरेचनाभिधानं शिरःपूर्व्वकदेहशोधनाभिधानानुक्रमेणामाशयोर्द्ध्वभागशोधनानन्तरमामाशयाधोभागस्थितपित्तहरत्वेन । एवं विरेचनानन्तरं वस्त्यभिधानेऽपि वाच्यम् । त्रिवृदादावुच्यते विरेचनद्रव्येषु श्रेष्ठत्वात्, उक्तं हि "त्रिवृत् सुखविरेचनानाम् इति । नीलिका

पीलून्यारग्वधं द्राक्षां द्रवन्तीं निचुलानि च।
पक्काशयगते दोषे विरेकार्थं प्रयोजयेत् ॥ ४ ॥
पाटलाञ्चाग्निमन्थञ्च विल्वं श्योणाकमेव च।
काश्मर्य्यं शालपर्णीञ्च पृश्निपर्णीं निदिग्धिकाम् ॥
बलां श्वदंष्ट्रां वृहतीमेरण्डं सपुनर्नवम्।
यवान् कुलत्थान् कोलानि गुडूचीं मदनानि च ॥
पलाशं कत्तृणञ्चैव स्नेहांश्च लवणानि च।
उदावर्त्ते विबन्धेषु युञ्ज्यादास्थापनेषु च ॥
अत एवौषधगणात् सङ्कल्प्यमनुवासनम्।
मारुतघ्नमिति प्रोक्तः संग्रहः पाञ्चकर्म्मिकः ॥ ५ ॥

फलानि। पक्काशयगतदोषे न त्वन्यत्र। त्रिवृन्नागदन्तीमहावृक्षगवाक्षीक्षीरिणी-द्रवन्तीनां मूलिनीषु पाठान्मूलं ग्राह्यम्, नीलिन्याश्च मूलं वचायाश्च। शेषाणां फलमिति ॥ ४ ॥

गङ्गाधरः—आस्थापनानुवासनार्थं द्रव्याण्याह पाटलेत्यादि। दशमूल-बलैरण्डपुनर्नवायवकुलत्थ-वृहद्बदर-गुडूचीमदनफल-पलाश-गन्धतृणानीति विंशतिर्द्रव्याणि, तथा चत्वारः स्नेहा घृतादयः, पञ्च च लवणानि, इत्येकोन-त्रिंशद् द्रव्याणि उदावर्त्तादिषु यथायोगं सङ्कल्प्यास्थापनेषु युञ्ज्यादिति।

नीलवुह्ना, क्षीरिणी दुग्धिका, द्रवन्ती दन्तीभेदः, निचुलं हिज्जलमिति प्रसिद्धम्। पक्कश्चासौ आशयगतश्चेति पक्काशयगतः, तेन पित्ताशय एवामाशयाधोभागलक्षणे दोषो विरेचनविषयो भवति न पक्काशयगतः। दोषशब्देन चेह विरेचननिर्हरणयोग्यत्वात् पित्तं कफपित्तं वा गृह्यते, यदुक्तं "पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत्। स्रंसनं त्रीन् मलान् बस्तिर्हरेत् पक्काशय-स्थितान्"। यदि वा पक्काशयसमीपगतत्वेनाधःप्रवृत्त्युन्मुखो दोषः पक्काशयगत इत्युच्यते यथा गङ्गायां घोष इति ॥ ४ ॥

चक्रपाणिः—पाटलामित्यादिनाऽनुवासनात् प्राक् निरूहाभिधानं, निरूहस्य दोषहरणप्रधान-त्वात्। कत्तृणं गन्धतृणम्। स्नेहाः सर्पिस्तैलवसामज्जानः, लवणानि सैन्धवादीनि, रोगभिषग्-जितीये वस्त्यर्थं मुख्यान्युक्तानि गणेन। अत एवेति निरूहोक्तपाटल्यादिगणात्। सङ्कल्प्यमनुवासन-

मात्राकालाश्रया युक्तिः सिद्धिर्युक्तौ प्रतिष्ठिता ।
तिष्ठत्युपरि युक्तिज्ञो द्रव्यज्ञानवतां सदा ॥ ७ ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि यवागूर्विविधौषधाः ।
विविधानां विकाराणां तत्साध्यानां निवृत्तये ॥ ८ ॥

विचारयन् तानि पञ्च कर्म्माणि शिरोविरेचनादीनि कुर्व्वीत भिषगिति शेषः ॥ ६ ॥

गङ्गाधरः नतु कथं मात्राकालविचारः कार्य्यः, द्रव्यं प्रयुक्तं स्वभावादेव स्वकार्य्यं कुर्य्यात् इत्यत आह मात्राकालेत्यादि । युक्तिर्द्रव्याणां योगे तर्कवितर्कादिर्मात्राकालाश्रया मात्राकालनिबन्धना । शरीरबलवर्णादिबलवयोव्याधिबलदोषबलाद्यनुरूपया मात्रया कालविशेषे च प्रयुक्तं द्रव्यं सम्यक् स्वकर्म्म कुर्व्वदारोग्याय भवति । सिद्धिर्युक्तौ प्रतिष्ठितेति सिद्धिः चिकित्सितक्रियासिद्धिः । सुगमं "तिष्ठत्युपरि युक्तिज्ञो द्रव्यज्ञानवतां सदा" इति वाक्यम् ॥ ७ ॥

गङ्गाधरः—अथ स्वस्थातुरसाधारणतया पञ्चकर्म्मकद्रव्याण्युपदिश्यात ऊर्द्ध्वं पञ्चकर्म्मद्रव्योपदेशात् परमातुराणां व्याधिविशेषनिवृत्त्यर्थमाहाररूपभेषजत्वेन यवागूराह अत ऊर्द्ध्वमित्यादि । अत ऊर्द्ध्वं पञ्चकर्म्मद्रव्योपदेशादूर्द्ध्वं विविधौषधाः विविधान्यौषधानि साधनतया यासु तास्तथा यवागूः

वाच्यम् । उत्तरबस्तिस्तु स्नेहरूपो निरूहः स्नेहबस्त्यावेवान्तर्भवति, यदि तेन वमनादिषु पञ्चकर्म्मसु पञ्चत्वसङ्ख्यायोगकर्त्तृत्वं संज्ञा, तेन न स्नेहस्वेदनिर्हरणादिषु वर्त्तते ॥ ६ ॥

चक्रपाणिः मात्राकालविचारफलमाह मात्राकालेत्यादि । युक्तिर्योजना, सेयञ्च देहदोषाद्यपेक्षया युक्तिं सेति सिद्धिरित्यादिना । सिद्धिरिह विकारोपशमस्य साध्यस्य निष्पत्तिः ॥ ७ ॥

चक्रपाणिः इदानीं वमनादीनामयोगात्स्त्र्योभूतस्य बह्नेः सन्धुक्षणार्थं तथा वमनादिषु अप्रयोगजनितस्य शूलादेः प्रशमनार्थं प्रतिज्ञापूर्व्वकं यवागूरभिधत्ते अत ऊर्द्ध्वमित्यादि । उक्तं हि "यथाणुरग्निस्तृणगोमयाद्यैः सन्धुक्ष्यमाणो भवति क्रमेण । महान् स्थिरः सर्व्वपचस्तथैव शुद्धस्य पेयादिभिरन्तरग्निः" इति । पिप्पल्यादियवागूनिर्देश उपलक्षणमिति वचनं भेषजपानीयतण्डुलादिप्रकृतिद्रव्याणामुचितपरिमाणग्रहणार्थं, साक्षात् भेषजादीनां प्रमाणमिह नोक्तं मात्राया अग्न्यादिभेदेनाव्यवस्थितत्वात् । यदुक्तं "मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः । व्याधिं द्रव्यञ्च कोष्ठञ्च वीक्ष्य मात्रां प्रयोजयेत्" इति । यद्यप्येवं तथापि परिभाषादर्शनात् वृद्धवैद्यव्यवहारदर्शनाच्च यथा कल्प्यं तदुच्यते—यवागूसाधनद्रव्यं

पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरैः ।
यवागूर्दीपनीया स्याच्छूलघ्नी चोपसाधिता ॥ ८ ॥

प्रवक्ष्यामीत्यस्य कर्म्मणि. विविधौषधा यवागूर्वक्ष्यतीति । किमर्थमित्यत आह विविधानामित्यादि । तत्साध्यानां विविधौषधयवागूसाध्यानाम् ॥ ८ ॥

गङ्गाधरः— तत्रादौ कोष्ठाग्निसंधुक्षणत्वादारोग्यस्य सर्व्वेभ्यः कोष्ठाग्नेः प्राधान्यात् वह्निसन्दीपनीयां यवागूमाह पिप्पलीत्यादि । पिप्पल्यादिभिः पञ्चभिः साधिता यवागूर्दीपनीया वह्निदीपनाय हिता शूलघ्नी च । यवागूस्तु भक्तोचिततण्डुला-चतुर्भागीकृतक्षुद्रतण्डुलान् पिप्पल्यादिभिः साधनद्रव्यैः कल्कीकृतैः कषपीगमितैस्तण्डुलान् षड्गुणादिसलिलैश्च शरावचतुष्टयैः पक्त्वा द्रवसिक्थसमन्विता यदा भवति तदा यवागूः परिभाष्यते । षड्गुणैस्तु जलैः शरावचतुष्टयैः पेयाख्या यवागूः । चतुर्द्दशगुणैस्तु मण्डाख्या यवागूश्चतुर्गुणतोय विलेपी नाम यवागूरिति त्रिधा यवागूः । इति कल्कसाध्या । तथा पिप्पल्यादीनि साधनद्रव्याणि कर्षमात्राणि क्षोदयित्वोदकस्य जलशरावचतुष्टये पक्त्वार्द्धशिष्टेन तेन क्वाथेन तत् षट्-चतुर्द्दशगुणेन क्रमाद्विलेपी-पेया-मण्डाख्या यवागूः स्यादिति । कषायसाध्येति द्विविधसाधनमिति । त्रिविधा यवागूर्दहादिबल्याद्यपेक्षया प्रयोक्तव्येति । यदुक्तं "सिक्थकै रहितो मण्डः पेया सिक्थसमन्विता । यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा" इति । अत्र यवागूरिति प्रकृतिपदं तेन यवागूः सिक्थकै रहितो मण्ड उच्यते । रहित इति विकृतलिङ्गत्वात् पुंलिङ्गः । सिक्थसमन्विता यवागूः पेया । बहुसिक्था विरलद्रवा यवागूर्विलेपी । तथा "अन्नं पञ्चगुणे साध्यं यवागूः षड्गुणेऽम्भसि ।

तावद् द्विविधं वीर्यप्रधानमौषधद्रव्यं तथा रसप्रधानमाहारद्रव्यञ्च । तत्रौषधद्रव्यं त्रिविधं वीर्य्यभेदात् । तीक्ष्णवीर्य्यं यथा शुण्ठ्यादि, मध्यवीर्य्यं बिल्वाग्निमन्थादि, मृदुवीर्य्यं धात्र्यामलकादि । इत्यत्र तीक्ष्णानां कर्षः, मध्यानामर्द्धपलं, मृदूनां पलमित्युत्सर्गः । यदुक्तमन्यत्रैव "कर्षार्द्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम् । विनीय पाचयेद्युक्त्या वारिप्रस्थेन चापराम्" इति । अत्र मध्यवीर्य्याणामर्द्धपलमात्रा नोक्ता, सा मध्यप्रमाणग्रहणाद् बोद्धव्या, तथा जीवन्त्यश्वगन्धादी पुष्कराह्वबिल्वादिकानां येषां नवभिर्द्रव्यैः कोलप्रमाणैर्मिलित्वा पलमतुलान्तरं स्यात्, तत्र मृदुवीर्य्याभिप्रायेणैव । "काथ्यद्रव्याञ्जलिं क्षुण्णं श्रपयित्वा जलाढके । अर्द्धश्रृते तु तेनाथ यवाग्वाद्यं प्रकल्पयेत्" इति । अत्र चतुःपलद्रव्याभिधानं रसप्रधानद्रव्याभिप्रायेणैव, तेन "सिद्धा धराह्लनिपूं हे यवागूर्हणी मता" इत्यादावपि परिभाषा बोद्धव्या । पञ्चद्रव्यसाधनपरिभाषायां

दधित्थबिल्वचाङ्गेरी-तक्रदाड़िमसाधिता ।
पाचनी ग्राहिणी पेया सवाते पाञ्चमूलिकी ॥ १० ॥

मण्डश्चतुर्दशगुणे विलेपी च चतुर्गुणे ॥" इति । अत्र यवागूरिति पारिशेष्यात् पेया यवागूः । "सिक्थकै रहितो मण्डः" इत्याद्युक्तं । "कर्षार्द्धं वा कणा-शुण्ठ्योः कल्कद्रव्यस्य वा पलम् । विनीय पाचयेद् युक्त्या वारिप्रस्थेन चापराम्" इति । तथा "यत्तु शूकधान्यानां पडङ्गादि प्रयुज्यते । कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि ॥ अर्द्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ" इति । तथा "यवागूं मुचिताद्रक्ताञ्चतुर्भागकृतां वदेत् ।" इत्येका यवागूः ॥ ९ ॥

गङ्गाधरः दधित्थेत्यादिना द्वितीया । अत्र तक्रं जलस्थाने, दाड़िमं दाड़िमफलबीजम् । सवाते इत्यादिना तृतीया । पाञ्चमूलिकीति वातहर-त्वात् वृहत्पञ्चमूलसाधिता । शालपर्ण्यादिपृश्निपर्णीपर्यन्तेन साधिता चतुर्थी । सा च दाड़िमाम्ला दाड़िमरसेनाम्लरसा । पयसीत्यादिना पञ्चमी । छागे पयसि अर्द्धोदके यावन्मितं छागं दुग्धं तावन्मात्रादद्धं जलं तत्रैकीकृते षड़गुणे शरावचतुष्टये बालकनीलोत्पलशुण्ठीः कर्षमानाः कल्कीकृत्य पेया पाच्या । षष्ठी तु पेया । तथा अर्द्धजले छागे पयसि पृश्निपर्ण्या कल्कीकृतया कर्ष-मात्रया साधिता रक्तातिसारघ्नीति । केचित्तु "पेयाशब्दोऽत्र प्रकरणात् पेय-त्वाच्च यवागू सामान्यवाची तेन त्रिविधयवागूकल्पना बोध्येति" प्राहुः । तन्न, यवागूः त्रिविधा न तु पेयेति । दद्यादित्यादिना सप्तमी । न चात्र पूर्व्वात् पयसीत्यनु-वर्त्तनं कर्म्मतया निर्देशात् । तेन कल्कतया वा कषायतया वार्जितविषा-

"यत्तु शूकधान्यानां पडङ्गादि प्रयुज्यते । कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि । अर्द्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ इति, पेयां प्रति कर्षद्रव्याभिधानं मध्यवोर्य्यस्यापि पडङ्गस्य मध्यानल्पगुणाभिप्रायेण बोद्धव्यम् । चाभिमानन्तु षडङ्गादिपरिभाषायां कर्षद्रव्ये वारिप्रस्थो-ऽभिहितः, तदनुसारेणान्यत्रापि जलोत्कर्षो बोद्धव्यः । कल्कसाध्या तु यवागूर्यत्र स्यात् तत्र सूद-शास्त्रोक्तपरिमाणाज्जलं ग्राह्य, यदुक्तं "अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे । मण्डश्चतुर्दश-गुणे यवागूः षड्गुणेऽम्भसि । एतच्च "पञ्चगुणे" इत्यादि तण्डुलतोयसमुदायात् बोद्धव्यम् । यवागू-प्रकृतिभूततण्डुलमानात् गृहीतवचनात् बोद्धव्यम् । यदुक्तं "विलेपीमुचितान्नक्ताच्चतुर्भागकृतां भिषग् इत्यादि, तथा "यवागूः षडतण्डुला इति ॥ ८।९ ॥

चक्रपाणिः—पञ्चकोलादिना यवागूरुच्यते, पञ्चकमग्निमान्द्याग्निवृद्धिहेतुत्वेन । दधित्थः कपित्थः । तक्रमिह जलार्थकारकं, ग्राहिणीति च्छेदः । सवाते इति सवातेऽतिसारे, यदुक्तं शारीरे

शालपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता ।
दाडिमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम् ॥ ११ ॥
पयस्यर्द्धोदके च्छागे ह्रीवेरोत्पलनागरैः ।
पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिता ।
दद्यात् सातिविषां पेयां सामे साम्लां सनागराम् ॥ १२ ॥
श्वदंष्ट्राकण्टकारीभ्यां मूत्रकृच्छ्रे सफाणिताम् ॥ १३ ॥
विडङ्गपिप्पलीमूल-शिग्रुभिर्मरिचेन च ।
तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी ससुवर्च्चिका ॥ १४ ॥
मृद्वीकासारिवालाजा-पिप्पलीमधुनागरैः ।
पिपासाघ्नी विषघ्नी च सोमराजी-विपाचिता ॥ १५ ॥

सहितां नागरसहितामथवा षड्गुणे जले कल्कसाधितां षड्गुणे कषाये च साधितां पेयां प्रकरणात् । सामे रक्तातिसारे यवागूं दाडिमादिरसद्वारा कृताम्लामिति साम्लां दद्यात् ॥ १०—१२ ॥

गङ्गाधरः—श्वदंष्ट्रेत्यादिनाऽष्टमी । श्वदंष्ट्राकण्टकारीभ्यां कल्करूपाभ्यां कषायीकृताभ्यां वा साधितां पेयां सफाणितामनुरूपेण फाणितमद्धसम्पद्य-मानं गुडं तत्र प्रक्षिप्य दद्यादिति पूर्वेणान्वयः । कुत्रेत्याह मूत्रकृच्छ्रे ॥ १३ ॥

गङ्गाधरः—विडङ्गादिना नवमी । शिग्रुः शोभाञ्जनं, विडङ्गादि-मरिचान्तै-श्चतुर्भिः कल्कीभूतैस्तक्रसिद्धा ससुवर्च्चिका सौवर्च्चलेनानुरूपेण युक्ता यवागूः पेया प्रकरणान्न तु त्रिधा यवागूः । क्रिमिघ्नी स्यात् । अत्र तक्रं जलस्थाने बोध्यम् ॥ १४ ॥

गङ्गाधरः—मृद्वीकेत्यादिना दशमी । अत्र तण्डुलस्थाने लाजाः । मृद्वीका-ऽनन्तमूलपिप्पलीनागरैः कल्कीभूतैः कषायीकृतैर्वा यथोक्तजलेन लाजान् पक्त्वा प्रकरणात् पेया स्यात् न तु पेयाविलेपीमण्डान्यतमा । पेयाख्यां यवागूं

जतूकर्णे "भुवाद्यं वीक्ष्यतीसारे" इति, भुवादिः बिदारिगन्धादिः, पृश्निपर्णी कलुषलपका सिंहपुच्छी । दाडिमाम्लेति वचनेन यावता दाडिमेनाम्लत्वं स्यात् तावन्मात्रं दाडिमं दर्शयति ॥ १०।११ ॥

चक्रपाणिः—पयस्यर्द्धोदक इत्यादि—नागरं शुण्ठं, यदुक्तं जतूकर्णे "रक्तातिसारेऽजाक्षीर-कौष्ठीबनजलोत्पलैः" इति । पृश्निपर्ण्या चेति रक्तातीसारघ्नयवागूवानेव । साम्लामिति दाडि-

सिद्धा वराहनिर्यूहे यवागूर्बृंहणी मता।
गवेधुकानां भृष्टानां कर्षणीया समाक्षिका॥ १६॥
सर्पिष्मती बहुतिला स्नेहनी लवणान्विता।
कुशामलकनिर्यूहे श्यामाकानां विरूक्षणी॥ १७॥
दशमूलीशृता कास-हिक्काश्वासकफापहा।
यमके मदिरासिद्धा पक्वाशयरुजापहा॥ १८॥

विधाय शीतीकृत्यानुरूपं मधु प्रक्षिप्य पीता स्यात् पिपासाघ्नी॥ विषघ्नीत्यादिना त्वेकादशी। सोमराजी अवल्गुजा तया विपाचिता पेयाख्या यवागूर्विषघ्नी भक्षितविषदोषं हन्ति॥ १५॥

गङ्गाधरः सिद्धेत्यादिना द्वादशी। वराहनिर्यूहे वराहमांसरसे॥ गवेधुकानामित्यादिना त्रयोदशी। गवेधुकानां गवेडूनां बीजानीति 'देधान' इति ख्यातानामिति केचित् भृष्टानां यवागूः समाक्षिका कर्षणीया स्थूलदेहकर्षणाय हिता, अत्र गवेधुकाबीजं तण्डुलस्थाने बोध्यम्॥ १६॥

गङ्गाधरः सर्पिष्मती बहुतिला लवणान्विता तण्डुलकृता पेया स्नेहनी स्नेहजननी। बहुतिलां यथोक्तविधिना यवागूं विधाय घृतसैन्धवञ्चानुरूपं तत्र प्रक्षिप्य पीता सा स्नेहनी स्यात्॥ कुशामलकनिर्यूहे इत्यादिना चतुर्दशी। कुशपलामलकफलयोः कर्षमात्रयोः शरावचतुष्टयजले शृतयोरर्द्धावशिष्टयोः कषाये यथोक्तविधिना श्यामाकतण्डुलान् पक्त्वा कृता पेयाख्या यवागूर्विरूक्षणी रूक्षणकरणी॥ १७॥

गङ्गाधरः दशमूलीत्यादिना पञ्चदशी। स्पष्टेति, केचिदत्र श्यामाकानामित्यनुवर्त्तयन्ति, तत्र न यौक्तिकम्॥ यमके इत्यादिना षोडशी। यमके युतमेवेति युगले घृततैले संभृष्टा द्रवस्थानीयायां मदिरायाञ्च सिद्धा यवागूरित्यर्थः। अर्द्धं यमकम् अर्द्ध मदिरा ताभ्यां सिद्धा इति यावत् इत्यन्ये। यमके इति मुद्गविदलं शालीनाञ्च तण्डुलान् भर्ज्जयित्वा मदिरया सिद्धेति परे॥ १८॥

मांसरसमिति बोध्यम्। अपामार्गः यावां अनुकर्णः "पुष्पिकाकण्टकगुह्येषु शार्ङ्गेषु..." सुवर्चिका सर्जिकाक्षारः, पिपासाघ्नीति क्लेदः। सोमराजी अवल्गुजः, गवेधुको "गुलुञ्च," गवेधुकश्च तण्डुलस्थानीये। श्यामाकस्तृणविशेषः, तस्य च बीजतण्डुला ग्राह्याः। यमके घृततैले, मदिरा

शाकैर्मांसैस्तिलैर्माषैः सिद्धा वर्चो निरस्यति ।
जम्ब्वाम्रास्थिदधित्थाम्ल-बिल्वैः सांग्राहिकी मता ॥ १९ ॥
क्षारचित्रकहिङ्ग्वम्ल-वेतसैर्भेदिनी मता ।
अभयापिप्पलीमूल-विश्वैर्वातानुलोमनी ॥ २० ॥
तक्रसिद्धा यवागूः स्याद् घृतव्यापत्तिनाशिनी ।
तैलव्यापदि शस्ता तु तक्रपिण्याकसाधिता ॥ २१ ॥
गव्यमांसरसैः साम्ला विषमज्वरनाशिनी ।
कण्ठ्या यवानां यमके पिप्पल्यामलकैः शृता ॥ २२ ॥

गङ्गाधरः शाकैरित्यादिना सप्तदशी। समस्तैः शाकादिभिः कल्करूपैः कषायरूपैश्च सिद्धा पेयाख्या यवागूर्वर्चो निरस्यति बहिः सारयति ॥ जम्ब्वाम्रेत्यादिनाष्टदशी। जम्ब्वाम्रयोः फलास्थि, दधित्थाम्लः कपित्थस्य फलशस्य, बिल्वं बिल्वशलाटुः ॥ १९ ॥

गङ्गाधरः क्षारचित्रकेत्यादिनैकोनविंशी। क्षारो यवक्षारः। चित्रकेति चित्रकमूलं, हिङ्गु हिङ्गुनिर्यासः। अम्लवेतसश्च अम्लतास इति केचित् तन्न यौक्तिकं, चुक्र इति तत्त्वम् ॥ अभयेत्यादिना विंशी। विश्वैरित्यत्र बिल्वैरिति पाठो न युक्तो ग्राहकत्वेन वातानुलोमकत्वात् ॥ २० ॥

गङ्गाधरः तक्रसिद्धेत्यादिनैकविंशी स्पष्टा ॥ तैलेत्यादिना द्वाविंशी। अत्र पिण्याकस्तिलकल्कस्तेन कल्केन तक्रद्रवेण साधिता यवागूरित्यर्थः ॥ २१ ॥

गङ्गाधरः—गव्येत्यादिना त्रयोविंशी। अत्र साम्ला दाडिमामलकादि ज्वरहरफलद्रवाम्ला ॥ कण्ठ्येत्यादिना चतुर्विंशी। यमके इति घृततैले सम्भृष्टायां, यवानां पिप्पल्यामलकैः पिप्पलीकल्कामलककल्कैः कषायैश्च शृता पक्वा यवागूरित्यर्थः। बहुवचनं प्रत्येकमनेकत्वाभिप्रायेण ॥ २२ ॥

प्रवस्थाने, शाकादिभिः समानैर्यवागूसंस्कार्या। दधित्थाम्लशब्देन कपित्थस्याम्लावस्थायामेव ग्रहणं दर्शयति। क्षार इति, क्षारो यवक्षारः ॥ १९—२० ॥

चक्रपाणिः— तक्रसिद्धेति तक्रकृतोदककार्या, पिण्याकस्तिलकल्कः। यमक इत्यनेन यमकेन परिभर्जनं दर्शयति। समाषविदलेत्यादौ तण्डुलेन माषविदलस्य तुल्यमानता, क्षीरञ्च जलस्थाने, पुनश्च परिभर्जने किंवा माषप्रकृतिकैवेयम्। मदशब्देन विषज-रौधिर-मद्यमदानां त्रयाणामपि

ताम्रचूड़रसे सिद्धा रेतोमार्गरुजापहा ।
समाषविदला वृष्या घृतक्षीरोपसाधिता ॥ २३ ॥
उपोदिकादधिभ्यान्तु सिद्धा मदविनाशिनी ।
क्षुधं हन्यादपामार्ग-क्षीरगोधारसे श्रुता ॥ २४ ॥

तत्र श्लोकाः ।

अष्टाविंशतिरित्येता यवाग्वः परिकीर्त्तिताः ।
पञ्च कर्म्माणि चाश्रित्य प्रोक्तो भेषज्यसंग्रहः ॥

गङ्गाधरः—ताम्रचूड़ेत्यादिना पञ्चविंशी । ताम्रचूड़ः कुक्कुटः ॥ समाषविदलेत्यादिना षड़्विंशी । अत्र माषविदलं तण्डुलसमं, क्षीरमत्र जलस्थाने, घृतन्तु यथायोग्यं भृष्टार्थम् ॥ २३ ॥

गङ्गाधरः उपोदिकेत्यादिना सप्तविंशी । उपोदिका पुइदिनेति लोके, सा च कल्करूपा । दधि तु जलस्थाने, मदविनाशिनी कोद्रवधुस्तूरादिमदनाशिनी ॥ क्षुधमित्यादिनाऽष्टाविंशी । अत्रापामार्गतण्डुलान् क्षीरगोधाभ्यां सरसाभ्यां पचवेत्यर्थः । न त्वत्र तण्डुलजले देये ॥ २४ ॥

गङ्गाधरः आसां यवागूनां निर्देशप्रसङ्गादादावुपसंहारपूर्व्वकापामार्गतण्डुलादीनुपसंहर्त्तुमाह—तत्र श्लोका इति । उपसंहरति । अष्टाविंशतिरित्यादि । अपामार्गतण्डुलादीनुपसंहरति । पञ्च कर्म्माणि चेत्यादि । ननु पूर्व्वाध्याये मूलिनी फलिनी च यावती निर्दिष्टा तदन्तर्गतान्यप्यपामार्गतण्डुलीये पुनरुक्तानीति पौनरुक्त्यमित्यत आह पूर्व्वमित्यादि ।

प्रकृतकर्मविशेषाभिधानात् । क्षुधं हन्यादित्यादौ अपामार्गतण्डुलास्तण्डुलस्थाने, क्षीरगोधामांसरसौ तु जलस्थाने ॥ २१—२४ ॥

चक्रपाणिः—प्रतिलोमतन्त्रयुक्त्याऽध्याय-संग्रहं करोति, अष्टाविंशतिरित्यादि ।—दीर्घञ्जीवितीये मूलिनीफलिनीगणपठितानामपामार्गाजीमूतादीनां पुनर्वचने उपपत्तिमाह पूर्व्वमित्यादि ।—मूलफलज्ञानहेतोरिति अस्य मूलेन व्यवहारः, अस्य फलेन व्यवहार इति ज्ञातुमित्यर्थः । पञ्चकर्म्मणामाश्रयः, आश्रयशब्दश्च भावप्रधानः, तेन पञ्चकर्म्माश्रयत्वे ज्ञानार्थमिति फलति । यद्यपि मूलिन्यश्च फलिन्यश्च दीर्घञ्जीवितीयेऽपि क्रमपूर्व्वी विम्बी चेत्यादिना ग्रन्थेन पञ्चकर्म्माश्रयत्वेनाप्युक्ताः, तथापीह मुख्यप्रपञ्चेनाभिधीयमानपञ्चकर्म्माश्रयद्रव्यगणेऽभिधानात् पञ्चकर्म्माश्रयत्वेन

पूर्व्वं मूलफलज्ञान-हेतोरुक्तं यदौषधम् ।
पञ्चकर्माश्रयज्ञान-हेतोस्तत् कीर्त्तितं पुनः ॥
स्मृतिमान् हेतुयुक्तिज्ञो जितात्मा प्रतिपत्तिमान् ।
भिषगौषधसंयोगैश्चिकित्सां कर्त्तुमर्हति ॥ २५ ॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते अपामार्गतण्डुलीयो नाम द्वितीयोऽध्यायः ॥ २ ॥

मूलफलग्रहणज्ञापनहेतोर्यदौषधं मूलिनी-फलिनी-संज्ञया पूर्व्वमुक्तं तदौषधं पञ्चकर्म्माश्रयत्वमात्रेण निर्दिष्टमपि तदौषधं पञ्चकर्म्मसाध्यव्याधिसाधनत्वज्ञानहेतोः पुनरत्राध्याये कीर्त्तितमिति पुनरुक्तमपि न पुनरुक्तम्। अत्र हेतुमाह स्मृतिमानित्यादि। हेतुयुक्तिज्ञो व्याधिसाधनभेषजकल्पनविज्ञः युक्तिज्ञो मात्रावत्तया द्रव्यबलव्याधिबलव्याधितबलादानुसारेण प्रयोगविज्ञश्चेत्यर्थः। जितात्मेति जित आत्मा मनो येन स भ्रमप्रमादरहित इत्यर्थः। प्रतिपत्तिमान् यशस्वी। एवम्भूतो भिषगौषधसंयोगैर्द्रव्याणि संयोज्य चिकित्सितुमर्हतीत्यर्थः ॥ २५ ॥

अध्यायसमाप्तिमाह अग्निवेशेत्यादि। प्राग्वद् व्याख्यानव्यम्। पञ्चत्रिंशत्श्लोकी चायमध्यायः ॥ २ ॥

इति श्रीमद् गङ्गाधरराय कविरत्नकविराजकृते प्राग्वचरकजल्पकल्पतरौ द्वितीयाध्यायजल्पो नाम द्वितीयशाखा ॥ २ ॥

प्राधान्यं चापामार्गादीनां ख्यापनम्, अत उक्तं "पञ्चकर्म्माश्रयज्ञान-हेतोस्तत् कीर्त्तितं पुनः" इति। एतदध्यायप्रतिपादितायाः पञ्चकर्म्मप्रवृत्तेर्ज्ञेयत्वेन यथाभूतेन वैद्येन चिकित्सा कर्त्तव्या, तादृशं वैद्यमाह—स्मृतिमानित्यादि। प्रतिपत्तिरुपस्थितायामापदि झटिति यथाकर्त्तव्यताज्ञानं तद्वान् प्रतिपत्तिमान् ॥ २५ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थानव्याख्यायाम् अपामार्गतण्डुलीयो नाम द्वितीयोऽध्यायः ॥ २ ॥

# तृतीयोऽध्यायः।

## अथात आरग्वधीयमध्यायं व्याख्यास्यामः,
## इतिह स्माह भगवानात्रेयः ॥ १ ॥

**आरग्वधः सैडगजः करञ्जो वासा गुडूची मदनं हरिद्रे ।**
**श्र्याह्वः सुराह्वः खदिरो धवश्च निम्बो विडङ्गं करवीरकत्वक् ॥**

गङ्गाधरः— अथातुरहितविविधौषधवाक्प्रसङ्गसङ्गत्या प्रदेहचूर्णात्मकान्यातुरहितान्यौषधानि वक्तुमारग्वधीयाध्यायमारभते अथात इत्यादि। अथात इति प्राग्वद्व्याख्येयम्। आरग्वधीयमिति वक्ष्यमाणम्, अध्यायारम्भः, आरग्वध इति पदमधिकृत्य कृत इत्यारग्वधीयस्तं तथा, अध्यायमित्यादि आत्रेयान्तं प्राग्वद्व्याख्येयम् ॥ १ ॥

गङ्गाधरः— आरग्वध इत्यादि-सञ्ज्ञां इत्यन्तैस्त्रिभिः श्लोकैरर्द्धरूपैः षट् चूर्णप्रदेहाः चूर्णाश्चैव प्रदेहाश्च भिषजा प्रयोज्याः, इति द्वयं कर्मप्रकारेणेह विहिता इत्यत आह— गोपित्तपीताः पुनरेव पिष्टा इति। आरग्वधस्य पत्रम्, एडगजा चाकुन्दा इति लोके तस्य बीजम्। करञ्जस्य च बीजम्। वासापत्रम्।

चक्रपाणिः—द्विविधं हि भेषजम्, अन्तःपरिमार्जनं बहिःपरिमार्जनञ्च। तत्रापामार्गतण्डुलीयेन पञ्चकर्माश्रयमन्तःपरिमार्जनमभिधायाधुनेह बहिःपरिमार्जनं प्रलेपाद्यारग्वधीयेनाह— अथात आरग्वधीयमित्यादि। यद्यपि कुष्ठचिकित्सितं पृथगेव चिकित्सास्थाने भविष्यति, तत्रैव चावसरप्राप्ता एते आरग्वधादयो वक्तुमुचिताः, तथापीह पृथक् कुष्ठरोगाणामभिधानेन कुष्ठस्यानुबन्धित्वेन च महारोगत्वं ख्यापयति। अभ्यर्हितो ह्यर्थः पुनःपुनरभिधीयते। इयञ्च कुष्ठचिकित्साऽनागतावेक्षणतन्त्रयुक्त्या निदानस्थाने हेतुलक्षणादिभिर्लक्षितं कुष्ठमुद्दिश्योक्ता, तेनालक्षितस्य चिकित्साऽभिधीयमानाऽज्ञातविषयत्वेन न युज्यत इति यच्चोद्यते तन्निरस्तं स्यात्। यद्यपि राजयक्ष्मप्रभृतयोऽपि महारोगाः सन्ति, तथापि न ते भूरिबहिःपरिमार्जनविषया यथा कुष्ठमिति कुष्ठविषया एव बहिःपरिमार्जनयोगा अभिधीयन्ते, कुष्ठघ्नबहिःपरिमार्जनोपधानेन च वातौषधानाः कोलकुलत्थादयोऽभिधास्यन्ते। किञ्च कुष्ठघ्नबहिःपरिमार्जनप्रयोगाणामिदं स्वरूपं यच्छोधनानन्तरं प्रयुज्यमानाः सिद्धिभाजो भवन्ति, यदुक्तं 'ये लेपाः कुष्ठानां प्रयुज्यन्ते निर्हृतास्रदोषाणाम्। संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम्॥' तेन पूर्वाध्याये संशोधनमभिधायेह कुष्ठप्रयोगाऽनवसरप्राप्ताऽनभिहिता आचार्येण साधुग्रन्थनिवेशः कृतः। यद्यपि 'खदिरः कुष्ठहराणाम्' इति वचनेन खदिरः कुष्ठहरेष्वग्र्यः प्रधानं, तथापि खदिरं परित्यज्यारग्वधमादावुपदिशति—कुष्ठहि-

ग्रन्थिश्च भौर्ज्जो लशुनः शिरीषः सलोमशो गुग्गुलुकृष्णगन्धे ।
फणिज्झको वत्सकसप्तपर्णौ पीलूनि कुष्ठं सुमनःप्रवालाः ॥
वचा हरेणुस्त्रिवृता निकुम्भो भल्लातकं गैरिकमञ्जनञ्च ।
मनःशिलाले गृहधूम एला काशीसलोध्रार्ज्जुनमुस्तसर्ज्जाः ॥
इत्यर्द्धरूपैर्विहिताः षडेते गोपित्तपीताः पुनरेव पिष्टाः ।
सिद्धाः परं सर्षपतैलयुक्ताश्चूर्णप्रदेहा भिषजा प्रयोज्याः ॥

गुडूचीनाड़म । मदनस्य फलम् । हरिद्राद्वयम् । गोपित्तेन सप्ताहं भावितानि । यथारग्वधादीन्येतानि पिष्टानि चूर्णीभूतानि सन्ति भवन्ति, तदा गोपित्तमेतैः पीतं स्यादिति, तानि गोपित्तपीताः पुनरेव पिष्टाश्चूर्णानां प्रदेहा इत्याख्या भवन्ति । एवं सर्वत्र । कथं चूर्णत्वात् प्रदेहरूपेण प्रयोज्या इत्याह परं सर्षपतैलयुक्ता इत्यनेन द्रवरूपत्वात् प्रदेहयोग्यत्वं सूचितम् । कस्मिन् कस्मिन् व्याधावित्याह कुष्ठानीत्यादि । कृच्छ्राणि कृच्छ्रसाध्यानि । एतान् व्याधीन् हन्तुः प्रयुक्ताश्च न स्युरेषु व्याधिषु । इत्यस्य चूर्णप्रदेहस्य व्याख्यानवदपरे पञ्च चूर्णप्रदेहा व्याख्येयाः । तत्र श्यामाह इत्यादिनार्द्धेन द्वितीयः । श्यामाह इति नवनीतखोटी । सुराह्वो देवदारुः तस्य सारं, खदिरधवयोश्च सारं, निम्बस्य पत्रं, विडङ्गस्य तण्डुलाः, करवीरस्य त्वक् इति सप्तभिर्द्वितीयः । ग्रन्थिश्च भौर्ज्ज इत्यादिना कृष्णगन्धे इत्यन्तेन षड्भिर्द्रव्यैस्तृतीयः । ग्रन्थिश्च भौर्ज्ज इति भूर्ज्जग्रन्थिः । शिरीषस्य त्वक्, लोमशा मिषिः, कृष्णगन्धा शोभाञ्जनः ।०। फणिज्झक इत्यादिना सुमनःप्रवाला इत्यन्तेन षड्भिश्चतुर्थः । फणिज्झकः पर्णासभेदः, वत्सक इन्द्रयवः, पीलूनि काञ्चनदेशीयपर्वतजाक्षोटफलानि, सुमनःप्रवाला जातीपल्लवाः कोमला एव ग्राह्याः ।०। वचेत्यादिना गैरिकमञ्जनञ्चेत्यन्तेन पञ्चमः । हरेणुका रेणुकः, निकुम्भो दन्ती, गैरिकं गिरिमृत् । अञ्जनं रसाञ्जनम् ।०। मनःशिलेत्यादिना सर्ज्जा इत्यन्तेन नवभिः षष्ठः । आलेति हरितालं,

परिमार्ज्जनभेषजेष्वारग्वधस्यैव प्रधानत्वख्यापनार्थम् । श्यामाह्वो नवनीतखोटिरिति प्रसिद्धः, ग्रन्थिश्च भौर्ज्जो इति भूर्ज्जपत्रग्रन्थिः, सलोमशः काशीसं तमालपत्रं वा, फणिज्झकः पर्णासभेदः, सुमनःप्रवाला जातीपल्लवाः, निकुम्भो दन्ती, आलं हरितालम्, अर्द्धरूपैरित्यर्द्धश्लोकैः, गोपित्तपीता इति पीतगोपित्ता मयूरव्यंसकादित्वात् पूर्वनिपातनियमात्; यदि वा गोपित्तभावनया

कुष्ठानि कृच्छ्राणि नवं किलासं सुरेन्द्रलुप्तं किटिमं सदद्रु ।
भगन्दरार्शांस्यपचीं सपामां हन्युः प्रयुक्तास्त्वचिरान्नराणाम् ॥२॥
कुष्ठं हरिद्रे सुरसं पटोलं निम्बाश्वगन्धे सुरदारु शिग्रुः ।
ससर्षपं तुम्बुरुधान्यवन्यं चण्डाञ्च चूर्णानि समानि कुर्य्यात् ॥

तैस्तक्रपिष्टैः प्रथमं शरीरं
तैलाक्तमुद्वर्त्तयितुं यतेत ।
तेनास्य कण्डूः पिड़काः सकोठाः
कुष्ठानि शोफाश्च शमं व्रजन्ति ॥ ३ ॥
कुष्ठामृतासङ्गकटङ्कटेरी-
कासीसकम्पिल्लकमुस्तलोध्राः ।
सौगन्धिकं सर्ज्जरसो विडङ्गं
मनःशिलाले करवीरकत्वक् ॥

गृहधूम आगारधूमः. एला स्थूलैला. कासीस पुष्पकासीस. सर्ज्जो धूनक इति। अचिरान्नराणामित्यन्तमेकं वाक्यं पर च योगाः ॥ २ ॥

गङ्गाधरः कुष्ठमित्यादि-व्रजन्तीत्यन्तमपरं वाक्यं. योगश्चैष सप्तमः पञ्चदशभिर्द्रव्यैः कुष्ठादितक्रान्तैः । अत्र तुम्बुरु स्वनामख्यातं. तदभावे धान्यकस्य द्विभागः पुनरुक्तत्वात्। वन्यं कैवर्त्तमुस्तकं. चण्डा शङ्खपुष्पी. सर्व्वञ्चान्यत् स्पष्टार्थम् ॥ ३ ॥

गङ्गाधरः कुष्ठेत्यादि शान्तिमित्यन्तमेकं वाक्यं. योगश्चैकः। एषोऽष्टमश्चतुर्दशभिः कुष्ठादि-करवीरकत्वगन्तैर्द्रव्यैः। अमृता गुडूची. सङ्गस्तुत्थकं,

पीतवर्णो गोपित्तर्पाना:। पदमन्यत्र्गं सिद्धाः, यद्यपि सर्व्वत्र प्रयोगा महर्षिप्रणीताः स्वविषये सिद्धास्तथापीह बहूनां दुश्चिकित्स्यानां रोगाणामाशुहरणात् परं सिद्धा इत्युच्यन्ते। चूर्णानि च प्रदेहाश्च चूर्णप्रदेहाः, यदि वा चूर्णीकृतानां प्रदेहाश्चूर्णप्रदेहाः, प्रदेहो लेपः, प्रदेहशब्दात्कल्पनीयानां योगानां कुष्ठहरगोमूत्रगोपित्तादिना योक्तव्यम्। सुरेन्द्रलुप्तमिन्द्रलुप्तं, कुष्ठग्रहणेन कुष्ठानामपि किटिमदद्रुपामादीनां पुनरभिधानं प्रयोगाणां विशेषेण तदुद्धरणशक्तिख्यापनार्थम् ॥ १।२ ॥

चक्रपाणिः—तुम्बुरु स्वनामप्रसिद्धं, वन्यं कैवर्त्तमुस्तकं, चण्डा चोरपुष्पी, प्रथममिति टीकाख-

तैलाक्तगात्रस्य कृतानि चूर्णा-
न्येतानि दद्यादवचूर्णनार्थम्।
दद्रुः सकण्डुः किटिभानि पामा
विचर्च्चिका चैव तथैति शान्तिम् ॥ ४ ॥
मनःशिलाले मरिचानि तैल-
मार्कं पयः कुष्ठहरः प्रदेहः।
तुत्थं विडङ्गं मरिचानि कुष्ठं
लोध्रञ्च तद्वत् समनःशिलं स्यात् ॥ ५ ॥

रसाञ्जनं सप्रपुन्नाड़बीजं युक्तं कपित्थस्य रसेन लेपः।
करञ्जबीजैडगजं सकुष्ठं गोमूत्रपिष्टञ्च परः प्रदेहः ॥ ६ ॥

कटङ्कटेरी दारुहरिद्रा. कासीसं पुष्पकासीसं. कम्पिल्लकं कमलागुड़ीति लोके। सौगन्धिकं कह्लारपुष्पं सुन्धीति लोके। सर्वं समुद्धार्थम्। अवचूर्णनं घर्षणं तदर्थमिति तथा ॥ ४ ॥

गङ्गाधरः मनःशिलाले इत्यादि प्रदेह इत्यन्तेनैको योगः। एष नवमो मनःशिलादि आर्कं पय इत्यन्तैः पञ्चद्रव्यैः। तैलमिति सार्षपं कुष्ठहरत्वात्। आर्कं पयः अर्कक्षीरम्। अर्कक्षीरेणैव पेषणाल्लेपने बोध्ये न तु जलेन। ०। तुत्थमित्यादिना समनःशिलं स्यादित्यन्तेनैकं वाक्यम्। अत्र तद्वदिति कुष्ठहरः प्रदेह इत्यर्थः। स्यादिति। नात्र अर्कक्षीरेण पेषणातिदेशः तस्य तत्र यौगिकत्वेनोक्तत्वात्। तेनात्र जलेन पेषणालेपने बोध्ये। एष योगो दशमः ॥ ५ ॥

गङ्गाधरः रसाञ्जनमित्यादिना लेप इत्यन्तेन एकं वाक्यं. योगश्चैक-स्त्रिभिर्द्रव्यैरेकादशः। प्रपुन्नाड़ः चाकुन्दा तद्बीजम्। कपित्थस्य रसेनेति कपित्थपत्रस्वरसेन युक्तो लेप इति योज्यं. तेनात्र न जलं पेषणालेपनार्थं.

मित्यनेन सम्बध्यते। तैलञ्च कुष्ठहरप्रकरणे सार्षपं बोद्धव्यम्, * अमृतासङ्गतुत्थकम्, कटङ्कटेरी दारुहरिद्रा, सौगन्धिकं गन्धतृणं गन्धकी वा, आर्कं पय. अर्कक्षीरं, तद्वदिति प्रदेहः कुष्ठहरः,

* अमृता गुडूची, सङ्गः तुत्थकमिति केचित्।

उभे हरिद्रे कुटजस्य बीजं करञ्जबीजं सुमनःप्रवालान्।
त्वचं समध्यां हयमारकस्य लेपं तिलक्षारयुतं विदध्यात् ॥ ७ ॥
मनःशिला त्वक् कुटजात् सकुष्ठः सलोमशः सैड़गजः करञ्जः।
ग्रन्थिश्च भौर्ज्जः करवीरमूलं चूर्णानि साध्यानि तुषोदकेन ॥
पलाशनिर्दाहरसेन चापि कर्षोद्धृतान्याढ़कसम्मितेन।
दर्व्वीप्रलेपं प्रवदन्ति लेपमेतत् परं कुष्ठनिसूदनाय ॥ ८ ॥

किन्तु स एव स्वरसः। अत्राधिकारात् कुष्ठहर इति लेप इत्यर्थे विशेषण बोध्यम्। ०। करञ्जबीजेत्यादिना प्रदेह इत्यन्तेनार्द्धेन द्वादशो योगश्चतुर्भिर्द्रव्यैः करञ्जबीजादिभिर्गोमूत्रान्तैः। अत्र गोमूत्रं पेषणालेपनार्थम्। अत्राधिकारात् कुष्ठहर इति प्रदेह इत्यस्य विशेषणम् ॥ ६ ॥

गङ्गाधरः—उभे इत्यादिना विदध्यादित्यन्तेनैकं वाक्यं, योगश्चायं त्रयोदशः। अत्र हरिद्रे इति द्विवचनेन हरिद्राद्वयलाभे उभे इति पदं स्पष्टार्थम्। सुमनःप्रवालानिति जात्याः कोमलाग्रिमपल्लवान्। त्वचं समध्यामिति हयमारकस्य इत्यनेनान्वयः। तेन करवीरस्य त्वक् तस्य चास्थि मज्जा च। तिलक्षारेति तिलनालभस्म तेन युतं लेपं हरिद्राद्वयादिकं विदध्यात् कुर्य्यादित्यर्थः। लेपशब्दस्याजहल्लिङ्गत्वेन तस्य विशेषणानां हरिद्राद्वयादीनां तल्लक्षणत्वेऽपि न स्वलिङ्गत्यागः ॥ ७ ॥

गङ्गाधरः—मनःशिलेत्यादि-कुष्ठनिसूदनायेत्यन्तमेकं वाक्यं योगश्चैकोऽयं चतुर्द्दशः नवभिर्द्रव्यैः। अत्र त्वक् कुटजादिति कुटजवल्कलं, लोमशा मोरी, ग्रन्थिश्च भौर्ज्जो भूर्ज्जग्रन्थिः। एतानि मनःशिलादीनि करवीरमूलान्तानि अष्टौ द्रव्याणि चूर्णानि चूर्णीकृतानि प्रत्येकेन कर्षोद्धृतानि तोलकद्वयमितानि तुषोदकेन सतुषकुट्टितयवकृतसन्धानविशेषेण जातकाञ्जिकेनाढ़कसम्मितेन इत्यन्तेनान्वयात् द्वे शूर्पे षोड़शशरावमितेन। पलाशनिर्दाहरसेन चापि आढ़कसम्मितेनेति योजनायां, पलाशवृक्षस्य प्रधानमूलं छित्वा तदधः कुम्भमेकं

प्रपुन्नाड़ एड़गजं, हयमारकः करवीरः तस्य त्वग् ग्राह्या, मध्यञ्च पृथग्भावेन ग्राह्यं। तुषोदकं सतुषैर्यवैः सन्धानविशेषात् कृतं काञ्जिकम्। पलाशनिर्दाहेन गृहीतो रसः पलाशनिर्दाहरसः, स च पलाशस्य प्रधानमूले छिन्नेऽधः कुम्भं दत्त्वोपरिष्टादग्निदाहात् यो गलति स्वरसः स गृह्यते ॥ ३—८ ॥

पर्णानि पिष्ट्वा चतुरङ्गुलस्य तक्रेण पर्णान्यथ काकमाच्याः ।
तैलाक्तगात्रस्य नरस्य कुष्ठान्युद्वर्त्तयेदश्वहनच्छदैश्च ॥ ९ ॥
कोलं कुलत्थाः सुरदारु रास्ना माषातसीतैलफलानि कुष्ठम् ।
वचा शताह्वा यवचूर्णमम्लमुष्णानि वातामयिनां प्रदेहः ॥१०॥
आनूपमत्स्यामिषवेशवारैरुष्णैः प्रदेहः पवनापहः स्यात् ।
स्नेहैश्चतुर्भिर्दशमूलमिश्रैर्गन्धौषधैर्वानिलजित् प्रदेहः ॥ ११ ॥

स्थापयित्वोपरि कृष्णदानं निर्गन्धिनेन रसेन षोडशशरावमितेन चापि द्रवेण साध्यानि पाच्यानि. दर्व्वीप्रलेपम् आलोडनदण्डलग्नं यथा स्यात्तथा पाच्यानि सिद्धानि बोध्यानि । एतत् परं कुष्ठानिसूदनाय लेपं प्रवदन्ति । यत्त्वत्र तुषोदकेन चतुर्गुणेन पलाशनिर्दाहरसेन येन वदन्ति तन्न, द्वात्रिंशद्योगाधिकत्वात् ॥ ८ ॥

गङ्गाधरः पर्णानीत्यादिनाऽश्वहनच्छदैश्चेत्यन्तेनैकः । चतुरङ्गुलस्य काकमाच्याश्च पर्णानीति अश्वहनच्छदैश्चेति त्रयं, तक्रेणेत्येको योग इति, न त्रयो योगास्तक्रं पेषणार्थम् । अत्र पिष्टानि चतुरङ्गुलपर्णादीनीति पञ्चदशः ॥९॥

गङ्गाधरः कोलमित्यादिना प्रदेह इत्यन्तेनापरः, कोलादिभिरम्लान्तैर्द्वादशभिर्द्रव्यैः । अत्रातसी मसीना, तैलफलानि तैलयोनिफलानीति तिलफलैरण्डादीनि, अम्लोपानि काञ्जिकादिकमम्लमेव द्रव्यं पेषणालेपनार्थम्, उष्णानि वह्निना कृतोष्णानि । प्रदेह एष षोडशः ॥ १० ॥

गङ्गाधरः आनूपेत्यादिना स्यादित्यन्तेनार्द्धेन पुनरेकवाक्यम् ; एष सप्तदशः । अनूपो जलप्रायदेशस्तत्र चरतीत्यानूपो वराहादिः । आनूपश्च मत्स्यश्च तयोरामिषं मांसं, तेन कृता वेशवाराः, तत्तु "निरस्थि स्विन्नं पुनःपिष्टं गुडघृतान्वितं पिप्पलीमरिचचूर्णाभ्यामनुरूपाभ्यां संयुक्तं वेशवाराख्यां भवति । तैरुष्णैः प्रदेहः बहल उपलेपः ।०। स्नेहैरित्यादिना प्रदेह

चक्रपाणिः—चतुरङ्गुलः स्वर्णालिः, अश्वहनः करवीरः, चतुरङ्गुलकाकमाच्यश्वहनच्छदैरेकः प्रयोगः । त्रित्वे ह्यस्य द्वात्रिंशत्संख्या वक्ष्यमाणा विरुध्यते । तैलयोनिफलान्येरण्डफलतिलादीनि । अम्लमिति काञ्जिकादिप्रयोगात् । आनूपानां वराहादीनां मत्स्यानाञ्चामिषं मांसम् आनूपमत्स्यामिषम् । वेशवारः—"निरस्थि पिशितं पिष्टं स्विन्नं गुडघृतान्वितम् । कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः" ॥ गन्धप्रधानान्यौषधानि गन्धौषधानि तानि चागुर्व्वादीनि ज्वराध्याये

तक्रेण युक्तं यवचूर्णमुष्णं सक्षारमर्त्तिं जठरे निहन्यात्।
कुष्ठं शताह्वां सवचां यवानां चूर्णं सतैलाम्लमुशन्ति वाते ॥१२॥
उभे शताह्वे मधुकं मधूकं बलां पियालञ्च कशेरुकञ्च।
घृतं विदारीञ्च सितोपलाञ्च कुर्य्यात् प्रदेहं पवने सरक्ते ॥१३॥
रास्नां गुडूचीं मधुकं बले द्वे सजीवकं सर्षभकं पयश्च।
घृतञ्च सिद्धं मधुशेषयुक्तं रक्तानिलार्त्तिं प्रणुदेत् प्रदेहः ॥१४॥

इत्यन्तेनार्द्धेनैकयोग एषोऽष्टादशयोगः। वा शब्दः पूर्व्वलेपापेक्षया, द्वात्रिंशत-मिति वक्ष्यमाणत्वान्न तु एकश्चतुर्भिः स्नेहैर्दशमूलमिश्रैरपरस्तु चतुर्भिः स्नेहैर्गन्धौषधमिश्रैरेलादिभिरुक्तः। अत्र जलं पेषणार्थमनुक्तत्वात् ॥ ११ ॥

गङ्गाधरः—तक्रेणेत्यादिना निहन्यादित्यन्तेनैकः, एष एकोनविंशः। क्षारं यवक्षारम्। सर्व्वमन्यत् स्पष्टम्। ०। कुष्ठमित्यादिना वाते इत्यन्तेनार्द्धेनैकः। एष विंशः। तैलमिह वातहरत्वात् यौगिकत्वाच्च तिलानामेव। अम्लं काञ्जि-काद्यम्लं द्रवद्रव्यं पेषणार्थम् ॥ १२ ॥

गङ्गाधरः—उभे इत्यादिना सरक्ते इत्यन्तेनैकयोगो दशभिर्द्रव्यैरेष एकविंशः। उभे शताह्वे मौरीशलुफ इत्याख्ये। घृतमनुक्तत्वाद् गव्यं, विदारी भूमिकुष्माण्डं, सितोपलां सितशर्कराम्। 'भागानुक्तौ समं मतम्' इति सर्व्वं तुल्यं, जलमत्र पेषणार्थम्। सरक्ते पवने इति वातरक्ते ॥ १३ ॥

गङ्गाधरः—रास्नेत्यादिना प्रदेह इत्यन्तेनैकेन श्लोकेनैको योगो दशभि-र्द्रव्यैरेष द्वाविंशः। द्वे बले श्वेतपीतपुष्पभेदात्, अन्ये बला गोरक्षतण्डुला चेति बलाद्वयमाहुः। पयो घृतञ्च गव्यम्। मधुशेषः मधूच्छिष्टं मोम इति लोके। अत्र घृतं साध्यं प्रस्थमितमनुक्तत्वात्। तच्च द्रवद्वैगुण्याच्छरावचतुष्टयम्। सर्षभ-कान्तं कल्करूपं सप्तद्रव्यं घृतपादिकं, 'कल्कस्तु स्नेहपादिकः' इत्युक्तेः। पयश्च घृताच्चतुर्गुणं, सुतरां द्रवद्वैगुण्यात् षोडशशरावमितम्; 'द्रवकार्य्येऽप्यनुक्ते तु सर्व्वत्राम्भश्चतुर्गुणम्' इत्युक्तेः, अत्राम्भ इति द्रवमात्रोपलक्षणमिति। आभ्यां

प्रतिपाद्यानि, गन्धौषधैश्च मिश्रैरिति योजनीयं, तेन दशमूलगन्धौषधाभ्यां स्नेहाः साधनीयाः; किंवा गन्धौषधैर्दशमूलैर्मिश्रैः स्नेहरूपं एवं प्रदेहः। उशन्ति कथयन्ति, विदारी विदारीकन्दः, सितोपला सितशर्करा, मधुशेषः सिक्थकं। सिद्धमिति घृतदुग्धमुक्तं यत्किञ्चिदेवान्नौ साधितम्। नतं तगरपादिका, तदभावे श्रीडलोऽश्लोपगुदको गृह्यते। प्रपौण्डरीकं पुण्डरीकं, लोहमगुरु, एरका

वाते सरक्ते सघृतः प्रदेहो गोधूमचूर्णं छगलीपयश्च।
नतोत्पलं चन्दनकुष्ठयुक्तं शिरोरुजायां सघृतः प्रदेहः ॥ १५ ॥
प्रपौण्डरीकं सुरदारु कुष्ठं यष्ट्याह्वमेला कमलोत्पले च।
शिरोरुजायां सघृतः प्रदेहो लोहैरकापद्मकचोरकैश्च ॥ १६ ॥
रास्ना हरिद्रे नलदं शताह्वे द्वे देवदारूणि सितोपलाश्च।
जीवन्तिमूलं सघृतं सतैलमालेपनं पार्श्वरुजासु कोष्णम् ॥१७॥

रास्नादिसप्तद्रव्यकल्कपयोद्रवाभ्यां पाकात् सिद्धम्। 'शब्दे व्युपरमप्राप्ते फेनस्योपरमे तथा। गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत्' इति लक्षणलक्षितं वस्त्रपूतमुष्णञ्च तत् मधुशेषयुक्तं प्रक्षेपतया 'प्रक्षेपः पादिकः कार्य्यात् स्नेहे कल्कसमो मतः' इत्युक्त्या घृतात् पादिकमानेन मधूच्छिष्टमिश्रं यथा स्यात्तथा विशोष्यं किञ्चिदग्नियोगेन। तच्च घृतं प्रदेहश्चेत् तदा रक्तानिलार्त्तिं प्रणुदेत् ॥ १४ ॥

गङ्गाधरः—वाते सरक्ते इत्यादिना पयश्चेत्यन्तेनार्द्धेनैक एष त्रयोविंशः। अत्र गोधूमोचितं छगलीदुग्धं घृतमनुरूपमिति बोध्यम्। ०। नतेत्यादिना प्रदेह इत्यन्तेनार्द्धेनैकः पञ्चभिर्द्रव्यैः। एष चतुर्व्विंशः। नतं तगरं तदभावे शीतलीछोपदः। उत्पलं नीलोत्पलं सर्व्वत्र ॥ १५ ॥

गङ्गाधरः—प्रपौण्डरीकमित्यादिना चोरकैश्चेत्यन्तेन श्लोकेनैकयोग एकादशभिर्द्रव्यैः पञ्चविंशः। प्रपौण्डरीकं पुण्डरीयकाष्ठं. कमलोत्पले पद्मकिञ्जल्क-नीलोत्पलकिञ्जल्कौ। लोहमगुरु। एरका तृणविशेषः. होगोल इति लोके। पद्मकं पद्मकाष्ठम्। चोरकश्चोरपुष्पी। सर्व्वत्रानुक्ते द्रवद्रव्ये पेषणार्थं जलम् ॥ १६ ॥

गङ्गाधरः—रास्नेत्यादिना कोष्णमित्यन्तेनैकश्लोकेनैकयोगः षड्विंश एकादशभिर्द्रव्यैः। हरिद्रे द्वे हरिद्रे। नलदं जटामांसी। शताह्वे मौरी-शलुफाख्ये। पेषणार्थं जलं. घृतं तैलञ्च तिलानां समं सर्वं प्रत्येकमिति ॥१७॥

होगलः। अयं प्रपौण्डरीकादिभिश्चोरकैश्चेत्यस्य एकः प्रयोगः, चोरकश्चोरपुष्पिका स्वनामप्रसिद्धः। नलदं मांसी, शताह्वे इति शतपुष्पा-मधुरिके। तुङ्गः पुन्नागः, अमृणालमुशीरं, कालेयकं कालियाकाष्ठम्। क्षता मञ्जिष्ठा, पुण्ड्री गोरक्षकर्कटी, नलिनं कमलं, यवासमूलं दुरालभामूलं,

शैवालपद्मोत्पलवेत्रतुङ्ग- प्रपौण्डरीकाण्यमृणाललोध्रम् ।
प्रियङ्गुकालेयकचन्दनानि निर्व्वापणः स्यात् सघृतः प्रदेहः ॥१८॥
सितालता वेतसपद्मकानि यष्ट्याह्वमैन्द्री नलिनानि दूर्व्वा ।
यवासमूलं कुशकाशयोश्च निर्व्वापणः स्याज्जलमेरका च ॥१९॥
शैलेयमेलागुरुणी सकुष्ठे चण्डा नतं त्वक् सुरदारु रास्ना ।
शीतं निहन्यादचिरात् प्रदेहो विषं शिरीषस्तु ससिन्धुवारः ॥२०॥
शिरीषलामज्जकहेमलोध्रै- स्त्वग्दोषसंस्वेदहरः प्रघर्षः ।
पत्राम्बुलोध्राभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः ॥ २१ ॥

गङ्गाधरः शैवालेत्यादिना प्रदेह इत्यन्तेनैकेन श्लोकेनायं योगः सप्तविंशः । जलेन पिष्ट्वा सर्व्वद्रव्यसमं घृतं मिश्रयित्वा लेपः । निर्व्वापणः वह्निदग्धज्वालाप्रशमनः ॥ १८ ॥

गङ्गाधरः सितालतेत्यादिना जलमेरका चेत्यन्तेनैकेनैकयोगो द्वादशभिर्द्रव्यैरेषोऽष्टाविंशः । अत्र सितालता श्वेतदूर्व्वा, दूर्व्वा तु प्रचरिता, वेतसपद्मकं वेतसम्, ऐन्द्री गोरक्षकर्कटी, नलिनानि पद्मकिञ्जल्काः, यवासमूलं दुरालभामूलं, कुशकाशयोश्च मूलं प्रसङ्गादेकदेशान्वयाद्वा । जलं बालकम्, एरका होगला इति नाम मञ्जिष्ठा वा तृणविशेषो वा । एतानि जलेन पिष्ट्वा लेपनं निर्व्वापणं स्यात् ॥ १९ ॥

गङ्गाधरः शैलेयमित्यादिना प्रदेह इत्यन्तेन पादत्रयेणैकयोगः, नवभिर्द्रव्यैरेष एकोनत्रिंशो योगः । शैलेयं शैलजं, चण्डा चोरपुष्पी, नतं तगरं, त्वक् गुडत्वक् । जलेन पिष्ट्वा लेपः । ० । विषमित्यादिनैकपादेनैकयोग एष त्रिंशः । योगस्तु द्वाभ्याम् । निहन्यादित्यनेनान्वयो विषमित्यस्य ॥ २० ॥

गङ्गाधरः शिरीषेत्यादिना प्रघर्ष इत्यन्तेनार्द्धेनैकयोगश्चतुर्भिर्द्रव्यैः । लामज्जकमुशीरं, हेम नागकेशरम् । अत्र जलं पेषणार्थम् । एष एकत्रिंशो योगः । ० । पत्रेत्यादिना प्रदेह इत्यन्तेनार्द्धेनैको द्वात्रिंशो योगः । पत्रं तेजपत्रम्, अम्बु

कुशकाशयोः मूलम् । अयं सितादिरेरका चेत्यन्त एकयोगः । जलं बालं, सिन्धुवारो निर्गुण्डी । विषमित्यादिरपरः प्रयोगः । लामज्जकमुशीरं, हेम नागकेशरम्, अभयमुशीरम् ॥ ९—२१ ॥

तत्र श्लोकः ।

इहात्रिजः सिद्धतमानुवाच द्वात्रिंशतं सिद्धमहर्षिपूज्यः ।
चूर्णप्रदेहान् विविधामयघ्नानारग्वधीये जगतो हितार्थम् ॥ २२ ॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
आरग्वधीयो नाम तृतीयोऽध्यायः ॥ ३ ॥

वाल्कं, त्वचं प्रसिद्धं लोके. अभयमुशीरं. चन्दनमिह सौगन्ध्यात् इवेतम् । जलमत्र पेषणार्थम् ॥ २१ ॥

गङ्गाधरः—उक्तांश्चूर्णप्रदेहानुपसंहर्तुमाह—तत्र श्लोक इति । इहात्रिज इत्यादिरेकः श्लोकः । इहारग्वधीयेऽत्रिजः कृष्णात्रिपुत्रः पुनर्वसुः । सिद्धमहर्षिभिश्च पूज्यः सिद्धत्वात् सिद्धः सन महर्षिभिः पूज्य इति वा द्वात्रिंशतं योगानुवाचेति संख्यावचनं न्यूनाधिकनिरासार्थम् ॥ २२ ॥

अध्यायं समाप्तुमाह—अग्नीत्यादिना । प्रागवत् सर्व्वं व्याख्येयम् । अयमध्यायः महाधान इत्यादिना केनोनत्रिंशत्श्लोकी सह संग्रहश्लोकेन ।

इति श्रीमद्गङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ सूत्रस्थानजल्पप्रथमस्कन्धे तृतीयाध्यायजल्पाख्या तृतीयशाखा ॥ ३ ॥

---

चक्रपाणिः—अध्यायार्थसंग्रहं इहात्रिज इत्यादि ।—चूर्णप्रदेहानिति पूर्व्ववद्व्याख्येयम् । द्वात्रिंशतमिति संख्याकरणं न्यूनाधिकसंख्यादुर्बोधनिराकरणार्थम् ॥ २२ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्वेददीपिकायां सूत्रस्थानव्याख्यायां आरग्वधीयो नाम तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ।

अथातः षड्विरेचनशताश्रितीयमध्यायं व्याख्यास्यामः,

इति ह स्माह भगवानात्रेयः ॥ १ ॥

इह खलु षड् विरेचनशतानि भवन्ति । षड् विरेचनाश्रयाः । पञ्च कषायशतानि । पञ्च कषाययोनयः । पञ्चविधं कषायकल्पनम् । पञ्चाशन्महाकषाया इति संग्रहः ॥ २ ॥

<u>गङ्गाधरः</u>—अथ स्वस्थातुरोभयपरायणभेषजतया संशोधनार्थपञ्चकर्म्मद्रव्याण्युक्त्वा तथातुरपरायणनानाव्याधिहरयवाग्वादीनुक्त्वा तेषामन्येषाञ्च सर्व्वेषां भेषजानां कल्पनार्थं षड् विरेचनशताश्रितीयमारभते—अथात इत्यादि। अध्यायारम्भे प्रथमं षाड्विरेचनशतानीति पदं, तत्र शतशब्दस्य शतत्वसंख्यावत्परत्वेन तदर्थकं षड्विरेचनशताश्रितमिति पदं भवति, तदधिकृत्य कृतोऽध्याय इति षड् विरेचनशताश्रितीयस्तं तथा। शतं शतत्वसंख्यामाश्रयतीति कर्त्तरि क्तः न तु भावे, नानाद्रव्यघटितौषधद्रव्यवाचकत्वात्। अध्यायमित्यादिकं सर्व्वं प्राग्वद् व्याख्येयम् ॥ १ ॥

<u>गङ्गाधरः</u>—इहेत्यादि। तन्त्रान्तरे बहूनि द्रव्याणि सन्ति विरेचनयोगोपयानि तद्वारणायाह—इहेति। इह तन्त्रे खलु षड् विरेचनशतानि, न चाधिकानि।

<u>चक्रपाणिः</u>—अपामार्गतण्डुलीयेऽन्तःपरिमार्जनमुक्तम्, आरग्वधीये च बहिःपरिमार्जनमुक्तम्। सम्प्रति पूर्व्वाध्यायद्वयप्रतिपादितं भेषजचतुष्कमवश्यं तत्कल्पनविशेषमुभयपरिमार्जनभेषजमभिधातुं षड्विरेचनशताश्रितीयोऽभिधीयते। आश्रीयते इत्याश्रितीयमाश्रय इत्यर्थः। षट्संख्यावच्छिन्नानि विरेचनशतान्याश्रितानि चाधिकृत्य कृतोऽध्यायः षड् विरेचनशताश्रितीयः। एतेन यदुक्तं—षड् विरेचनशतानि षड् विरेचनाश्रयाः, एतद् द्वयमधिकृत्य संज्ञेयं प्रणीतेति मन्तव्यम् ॥ १ ॥

<u>चक्रपाणिः</u>—यद्यपि चाध्यायादाविह लक्षितं पदं श्रूयते, तथापि गुणप्रधानत्वात् नाध्यायसंज्ञाप्रणयने निवेशितम्। इहेत्यग्निवेशतन्त्रेऽर्णितसंक्षेपविस्तरे। एतेन वक्ष्यमाणविरेचनषट्शतानां तथा पञ्चाशन्महाकषायाणां तथा पञ्चकषायशतानां विस्तरकल्पनायामधिकरणमपि भवतीति सूच्यते।

षड् विरेचनशतानीति यदुक्तं तदिह संग्रहेणोदाहृत्य विस्तरेण कल्पोपनिषदि व्याख्यास्यामः ॥ ३ ॥ तत्र—

कल्पस्थाने वक्ष्यते । "तत्र दोषहरणमूर्द्ध्वभागं वमनसंज्ञकमधोभागं विरेचनसंज्ञकम्, उभयं वा शरीरमलविरेचनाद्विरेचनशब्दं लभते" इति वक्ष्यमाणत्वादत्र विरिच्यन्ते शरीराभ्यन्तरान्मलदोषा बहिः क्रियन्ते ऊर्द्ध्वतोऽधस्ताच्च येनेति विरेचनम्, ऊर्द्ध्वाधःसंशोधनरूपेण वमनविरेचनोभयत्र योगरूढिवृत्त्या वर्त्तते, तेन वास्तिशिरोविरेचने तु न विरेचनशब्दं लभेते । विरेचनानां वमनविरेचनकारियोगाणां शतानि इति विरेचनशतानि, तानि त्रीणि चत्वारि पञ्च षट् किं वा स्युरित्याशङ्क्याह षडिति । विरेचनयोगानामिह तन्त्रे षट्शतसंख्यया विरेचनयोगा भवन्ति अन्यत्र प्रतिनियोगोक्तेभ्यः ।

द्रव्याणां कैर्द्रव्यैः प्रयुज्यमानानां विरेचनत्वमित्याकाङ्क्षायामाह षड् विरेचनाश्रया इति । विरेचनमत्र भावे ल्युट्, तेन वमनं विरेकश्चेति बोध्यं, तदाश्रया जनकतया बोध्याः । संशोधनत्वेनेह तन्त्रे तान्यनुक्ता(?) तेषामुपयोगीनि संशमनानि चाह पञ्च कषायशतानीति । कषायत्वपरिसंख्येयेषु कषायाणां शतानि पञ्च इह तन्त्रे वाच्यानि । ननु कषायः किं द्रव्यं रसविशेषो वेत्याह पञ्च कषाययोनय इति । कषायाणां योनयः उत्पत्तिस्थानानि पञ्च । ननु तथापि कषायः किं द्रव्यं तस्योत्पत्तिस्थानानि पञ्च कस्मात् इत्याकाङ्क्षायामाह पञ्चविधं कषायकल्पनमिति । ननु पञ्चविधकल्पितकषाया बहुद्रव्यघटितत्वेन बहवो भवन्तीति ते चात्र तत्र कथं पञ्च शतानि वा भवन्ति ? इति पञ्चाशन्महाकषाया इति, तानि पञ्च कषायशतानि पञ्चाशन्महाकषाया भवन्तीति, न त्वन्ये कषायाः सप्तपञ्चशतानि स्युरित्यर्थः । महत्त्वञ्चैषां जीवनीयादित्वादिति । इति संग्रहः सङ्क्षेपेण उद्देशः ॥ २ ॥

गङ्गाधरः क्रमेणोदाहृत्य विवृणोति षड् विरेचनेत्यादि । तदिहेति । इहाध्याये संग्रहेण सङ्क्षेपेण योगपरिसंख्यामात्रेण, विस्तरेणेति अत्रोदाहृतयोग-

तत एव वक्ष्यति कल्पे, "उद्देशमात्रमेतावत् द्रव्याणामिह षट्शतम् । स्वबुद्ध्यैवं सहस्राणि कोटीर्वा संप्रकल्पयेत् ॥" इति । तथात्रैव वक्ष्यति "न हि विस्तरस्य प्रमाणमस्ति" इति । ...प्रकाशने । विरेचनशब्देनेह वमनं विरेचनञ्च गृह्यते । यतो वक्ष्यति कल्पे "उभयं वा शरीरमल-

त्रयस्त्रिंशद्योगशतं प्रणीतं
फलेष्वेकोनचत्वारिंशज्जीमूतकेषु योगाः।
पञ्चचत्वारिंशदिक्ष्वाकुषु
धामार्गवः षष्टिधा भवति योगयुक्तः॥
कुटजस्त्वष्टादशधा योगमेति
कृतवेधनं षष्टिधा भवति योगयुक्तम्।
श्यामात्रिवृद्योगशतं प्रणीतं
दशापरे चात्र भवन्ति योगाः॥

गङ्गाधरः — तदिह संग्रहेणोदाहर्त्तव्यानि यदुक्तं तद्व्यक्तं संग्रहेण उदाहर्त्तुमाह त्रयस्त्रिंशदित्यादि। योगानां शतं योगशतं त्रयस्त्रिंशता सह योगशतं त्रयस्त्रिंशद्योगशतम्। फलेषु मदनफलकल्पेषु त्रयस्त्रिंशदधिकशतयोगाः। एकोनचत्वारिंशद् योगा जीमूतकेषु, घोषकभेदो जीमूतकस्तत्कल्पेषु। पञ्चचत्वारिंशद् योगा इक्ष्वाकुषु इक्ष्वाकुकल्पेषु। धामार्गवः पीतघोषको योगयुक्तः षष्टिधा भवति धामार्गवकल्पे षष्टियोगाः।

कुटजस्त्वष्टादशधा योगमेति कुटजफलकल्पेऽष्टादश योगाः। कृतवेधनं ज्योत्स्निकीति ख्यातं योगयुक्तं षष्टिधा भवति कृतवेधनकल्पे षष्टियोगाः। इति वमनयोगाः पञ्चपञ्चाशदधिकशतत्रयसङ्ख्यकाः कल्पस्थाने षडध्याये विस्तरेण व्याख्यास्यन्ते।

अथ विरेचनयोगाः। श्यामात्रिवृतोर्योगानां शतं श्यामात्रिवृद्योगशतं, किंवा श्यामा च त्रिवृच्च तयोः समाहारः श्यामात्रिवृत्, योगशतं योगानां शतं यस्य तत् योगशतं; श्यावमूला त्रिवृत् श्यामा, अरुणमूला त्रिवृत् त्रिवृत्, तयोः कल्पे शतयोगाः दश चापरे योगा इति दशोत्तरशतयोगाः श्यामात्रिवृतोरित्यर्थः।

चक्रपाणिः — त्रयस्त्रिंशदधिकं त्रयस्त्रिंशताधिकं, कृतवेधनयोगान्ता योगा वमनस्य, शेषं विरेचनस्य। अत्र श्यामात्रिवृतोरिति श्यामेति श्यावमूला त्रिवृत्, त्रिवृदित्यरुणमूला त्रिवृत्, पठिते चैव विरेचनाश्रया विरेचनाधिकरणानि। अत्र स्नुहीक्षीरमात्रं कृतं तीक्ष्णविरेचनत्वात्, यतो हि 'स्नुक्पयस्तीक्ष्णविरेचनानाम्' इति। त्वगित्यनेन लोध्रत्वक् गृह्यते। पत्रमित्यनेन इक्ष्वाकादिपत्रं, यदुक्तमिति कल्पे, 'अपुष्पस्य प्रवालानां मुष्टिं प्रादेशसम्मितम्। क्षीरमध्ये शृतं दद्यात् पित्तोत्क्लिष्टकफज्वरे॥' इति। यद्यपि कैरण्डतैलसातलाप्रभृतीनां क्षीराद्यधिकानामपि

चतुरङ्गुलो द्वादशधा योगमेति
लोध्रं विधौ षोड़शयोगयुक्तम् ।
महावृक्षो भवति विंशतियोगयुक्तः,
एकोनचत्वारिंशत् सप्तलाशङ्खिन्योर्योगाः ॥
अष्टाचत्वारिंशद्दन्तीद्रवन्त्योरिति षड् विरेचनशतानि ॥ ४ ॥

षड् विरेचनाश्रया इति । क्षीरमूलत्वक्पत्रपुष्पफलानीति ॥५॥

पञ्च कषाययोनय इति । मधुरकषायोऽम्लकषायः कटु-कषायस्तिक्तकषायः कषायकषायश्चेति तन्त्रे संज्ञा ॥ ६ ॥

चतुरङ्गुलो द्वादशधा योगमेति चतुरङ्गुलकल्पे द्वादश योगाः । लोध्रं विधौ विरेचनविधौ षोड़शयोगयुक्तम् । लोध्रकल्पे षोड़श योगाः । महावृक्षः सुधावृक्षः स्नुहीतिनामा विंशतियोगयुक्तो भवति । सुधाकल्पे विंशतिर्योगाः । एकोनचत्वारिंशत् सप्तलाशङ्खिन्योर्योगाः । अत्रेदमवगन्तव्यं, श्यामात्रिवृतोः प्रत्येकं दशोत्तरशतयोगाः तुल्यत्वेन गणयित्वा उक्तास्तेन विंशत्युत्तरद्विशतयोगा मिलित्वा । तथा सप्तलाशङ्खिन्योः प्रत्येकमेकोनचत्वारिंशद् योगा मिलित्वा अष्टसप्ततिर्योगाः । एवं दन्तीद्रवन्त्योः प्रत्येकमष्टचत्वारिंशद् योगा मिलित्वा षण्णवतिर्योगा इति विरेचनयोगानां द्वाचत्वारिंशदधिकचतुःशतमिति सप्तनवत्यधिकसप्तशतं वमनविरेचनयोगानामिति । सङ्क्षेपेण संख्यामात्रेण षड् विरेचनशतानि उदाहृतानि ॥ ४ ॥

गङ्गाधरः उद्देशक्रमप्राप्तं षड् विरेचनाश्रया इति विवृणोति षड् विरेचनाश्रया इतीति । क्षीरञ्च मूलञ्च त्वक् च पत्रञ्च पुष्पञ्च फलञ्च तानि तथा ॥ ५ ॥

गङ्गाधरः उद्देशं क्रमप्राप्तं पञ्च कषायशतानीति यत्तद्विवरणार्थं पञ्च कषाययोनय इति यत्तद्विवृणोति शिष्यसुखबोधनार्थम् पञ्च कषाययोनय

विरेचनाश्रयत्वं सम्भवति, तथापि तेषामिह तन्त्रे कल्पस्थाने विरेचनाश्रयत्वेनानभिधानात् दृष्यायामिप्रतिपादितैस्नेहशब्देन योगादिह षड़ाश्रया इत्यविरुद्धमेव ॥ ४—५ ॥

चक्रपाणिः— पञ्च कषायशतानि महाकषायं व्याख्याय व्याख्यातव्यानि, अतस्तदुपक्षेप पञ्च कषाययोनयोऽभिधीयन्ते । मधुरश्चासौ कषायश्चेति मधुरकषायः, एवं शेषेष्वपि । तन्त्रे संज्ञेत्यनेन लवणरसं वर्जयित्वा मधुरादयो रसाः कषायसंज्ञया व्यवह्रियन्ते, अर्थं स्वतन्त्रमपर

पञ्चविधं कषायकल्पनमिति। तद् यथा—स्वरसः कल्कः शृतः शीतः फाण्टश्च कषाय इति ॥ ७ ॥

इतीति। मधुरकषाय इति मधुररसद्रव्यकृतः कषाय इत्यर्थः। एवमपरेऽपि। कषायकषायश्चेति चकारः पूर्व्वापेक्षया समुच्चये एवार्थे वा लवणरसव्यवच्छेदार्थम्। नन्वत्र कषायशब्दः किं रसविशेषवाची किं नेत्याशङ्क्याह—इति तन्त्रे संज्ञा। कषायशब्दोऽयं न रसविशेषवाची, मधुरादीनां तथात्वाभावात्; किन्त्वस्मिन्नायुर्व्वेदतन्त्रे संज्ञा रूढ़िः ॥ ६ ॥

गङ्गाधरः—ननु मधुरादिरसवद् द्रव्यकृतत्वं यदि कषायशब्दो रूढ़स्तदा पञ्चविधत्वं व्याहन्यते लवणकषायस्याधिकत्वापत्तेरित्याशङ्कायामाह—पञ्चविधं कषायकल्पनमितीति। तद्विवृणोति तद् यथेति। तत् पञ्चविधकषायकल्पनं यथा येन प्रकारेण तदाहेत्यर्थाद् बोध्यम्। स्वरस इत्यादि। फाण्टश्चेति चकारात् स्वरस इत्यादिभिः पञ्चभिः सह कषाय इत्यस्यान्वयस्तेन स्वरसः कषायः, कल्कः कषायः, शृतः कषायः, शीतः कषायः, फाण्टश्च कषाय इत्यर्थः ॥ ७ ॥

इति सूचयति, नात्र परतन्त्रस्य व्यवहार इति। अथ किमर्थं पुनराचार्य्येण कषायसंज्ञा-प्रणयने लवणस्य मधुरादेरिव गुणाद्यभिनिर्द्दिष्टस्य तथा प्रयोगेषु चित्रकगुडिकादौ द्वौ क्षारौ लवणानि च इत्यादिनोद्दिष्टस्य रोगभिषग्जितीये च स्कन्धेनोपदिष्टस्य रसाधिकारेषु च तेषु तेषु मधुरादिवदुपदिष्टस्य परित्यागः क्रियते? उच्यते—कषायसंज्ञेयं भेषजत्वेन व्याप्रियमाणेषु रसेष्वाचार्य्येण निवेशिता। अत्र च केवलस्य लवणस्य च प्रयोगो नास्ति, मधुरादीनान्तु केवलानामपि प्रयोगोऽस्ति, लवणन्तु द्रव्यान्तरसंयुक्तमेवोपयुज्यते, तथा मधुरादिषु स्वरसकल्कादिलक्षणा कल्पना सम्भवति न लवणे; यतो न तावत् लवणस्य स्वरसोऽस्ति, कल्कोऽपि द्रव्यस्य द्रवेण पेषणात् क्रियते, तदत्र न सम्भवति लवणे, लवणं हि पानीययोगात् पानीयमेव भवति। यद्यपि कल्ककर्म्मैव भेदश्चूर्णं, चूर्णता च लवणस्य सम्भवति, तथापि लवणस्य चूर्णरूपता न तु पूर्व्वस्मात् चूर्णरूपात् किञ्चित् शक्तिविशेषमापादयति, शक्तिविशेषकल्पनार्थञ्च कल्पना क्रियते इत्युत्तरत्र प्रतिपादयिष्यामः, तस्माच्चूर्णत्वमपि लवणस्य कल्पनमकल्पनं वा। शृतशीतफाण्टकषायास्तु द्रव्यस्य कार्त्स्न्येनानुपयोगात् तत्तत्संस्कारवशात् द्रवेषु द्रव्यस्य स्तोकावयवानुप्रवेशार्थमुपदिश्यन्ते, लवणे चैतन्न सम्भवति, लवणं हि द्रवसम्बन्धे सर्व्वात्मनैव द्रवमनुगतं स्यात्, तस्माल्लवणं पृथक्प्रयोगाभावात् कल्पनाऽसम्भवाच्चाचार्य्येण कषाय-संज्ञा-प्रणयने निरस्तमिति न निष्प्रयोजनेयमाचार्य्यप्रवृत्तिः ॥ ६ ॥

चक्रपाणिः—कल्पनमुपयोगार्थं प्रकल्पनं संस्करणमिति यावत्, स्वरसादि-वर्गलक्षणं, यथा—"यो रसः स्वरसः प्रोक्तः कल्को द्रवादिपेषितः। क्वथितस्तु शृतः शीतः शर्व्वरीमुषितो मतः। क्षिप्त्वोष्णतोये मृदितः फाण्ट इत्यभिधीयते।" अत्र शीतकल्पनमस्तु "द्रव्यादापोथितात् तोये प्रतप्ते

(यन्त्रप्रपीड़नाद् द्रव्याद् रसः स्वरस उच्यते ।
यत् पिण्डं रसपिष्टानां तत् कल्कं परिकीर्त्तितम् ॥
वह्नौ तु क्वथितं द्रव्यं शृतमाहुश्चिकित्सकाः ॥
द्रव्यादापोथितात् तोये तत् पुनर्निशि संस्थितात् ।
कषायो योऽभिनिर्य्याति स शीतः समुदाहृतः ॥
क्षिप्त्वोष्णतोये मृदितं तत् फाण्टं परिकीर्त्तितम् ॥ ८ ॥)

गङ्गाधरः—अत्र स्वरसादीनां लक्षणानि केचित् पठन्ति, स्वरसादीन् विवरीतुम् यन्त्रेत्यादि । द्रव्यं कुट्टयित्वा यन्त्रेण प्रपीड़नात् तस्माद् द्रव्यान्निर्गतो रसः स्वरस उच्यते । एतेन लवणद्रव्यस्य न स्वरसत्वं, किट्टत्यागेन रसाभावात् ।०। यत् पिण्डमिति । इत्यादि पिष्टानां द्रव्याणां यत् पिण्डं तत् कल्कं, पिण्डपदेन लवणद्रव्यस्य न कल्कत्वं, पिण्डत्वं हि पेषणान्न लवणद्रव्यस्येति कथितम् ।०। वह्नौ तु क्वथितं उर्ध्वमिति द्रव्यं कुट्टयित्वा यथाविधिना द्रवं दत्त्वा निष्पक्वं किट्टं विसृज्य निर्गतसारं शृतमाहुरिति । एतेन लवणस्य न शृतत्वं सम्भवति निष्पचनत्वायोग्यत्वात् ।०। द्रव्यादापोथितात् कुट्टितात् द्रव्यात् तोये तु निशि संस्थितात् योऽभिनिर्य्याति किट्टं विहाय यो द्रवरूपेण सह सारभागो निर्गच्छति स शीतः कषायः । अत्र तत्पुनरित्यस्य स्थाने प्रतप्तं इति पाठः साधुस्तत्रान्तरदर्शनात् तदनुदर्शयिष्ये ।०। क्षिप्त्वेत्यादि । द्रव्यादापोथितादिति विभक्तिं विपरिणम्य योज्यम् । तेन द्रव्यमापोथितम् उष्णतोये क्षिप्त्वा मृदितं यत् सारभूतं निर्य्याति किट्टवर्ज्जं तत् फाण्टं कषाय इत्यर्थः । उक्तं चान्यत्र स्वो रसः स्वरसः प्रोक्तः कल्को दृषदि पेषितः । क्वथितस्तु शृतः शीतः शर्व्वरीमुषितो मतः । क्षिप्त्वोष्णतोये मृदितं फाण्टमित्यभिधीयते ॥

निशि संस्थितात् । कषायो योऽभिनिर्य्याति स शीतः समुदाहृतः ॥ फाण्टः कषाय इति कषाय-शब्दोऽयं स्वरसादिभिरपि सम्बध्यते, तेन स्वरसः कषायः, कल्कः कषाय इत्याद्यपि बोद्धव्यम् । तेषां स्वरसादीनां यथापूर्व्वं बलाधिक्यमिति फाण्टाच्छीतो गुरुः शीतात् शृतो गुरुरित्यादि । यतो यथा-पूर्व्वं गुरुः कषायकल्पना, अत एव व्याख्यातुर्बलापेक्षिणी व्याधेरातुरस्य च बलमपेक्ष्य इत्यर्थः । अत्रोपपत्तिमाह —न त्वेवमित्यादि । बलवति पुरुषे व्याधौ च द्रव्यसारभागमयत्वेनात्यर्थं गुरुर्बहु-कार्य्यकरः स्वरसो युज्यते, नाल्पसत्त्वे पुरुषे रोगे वा योजयन् स्यात्; बलस्य ह्योषधजातियोगे दोषकर्तृ स्यादिति भावः, एवमन्यत्रापि व्याख्येयम् । तथा न सर्व्वाणि स्वरसादीनि सर्व्वत्र पुरुषे

तेषां यथापूर्व्वं बलाधिक्यम्। अतः कषायकल्पना व्याध्या-

इति। एवमन्यत्रापि। "आहतात् तत्क्षणात् द्रव्यात् क्षुण्णात् कीटादिवर्जितात्। वस्त्रनिष्पीडितो यस्तु रसः स्वरसः उच्यते"॥ तथा "शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे। वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम्"॥ इति। एवं "कुडवं चूर्णितं द्रव्यं क्षिप्त्वा तद्द्विगुणे जले। अहोरात्रोषितात् तस्माद् रसः स्वरस उच्यते॥ द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलमिश्रितम्। तदेव कल्क आवापः प्रक्षेपः संज्ञयोच्यते॥ द्रव्यमापोथितं पक्त्वा यथा संविधिना जले। श्रायेण पादः शेषस्य एष क्वाथविधिः स्मृतः॥ क्षुण्णं द्रव्यपलं तूर्णैः षड्भिर्नीरपलैः प्लुतम्। निशोषितं हिमः स स्यात् तथा शीतकषायकः॥ षड्भिः पञ्चभिरथवा सलिलाच्छीतफाण्टयोः। आप्लुतं भेषजपलं स्याख्यायां पलद्वयम्॥ इति। एवं च "जले चतुःपलेऽशीते क्षुण्णं द्रव्यपलं क्षिपेत्। मृत्पात्रे मर्द्दयेत् फाण्टं तस्माच्च द्विपलं भवेत्"॥ इति। शृतकषाये द्रव्यजलमानं तिक्तकमिते वक्ष्यमाणे क्वाथानुसारेण बोध्यम्। तद् यथा "कर्षादौ तु पलं यावद् दद्यात् षोडशिकं जलम्। ततस्तु कुडवं यावत् तोयमष्टगुणं भवेत्। चतुर्गुणमतश्चोर्द्ध्वं प्रस्थादिश्रुतिमानतः"॥ इति। एतेन लवणद्रव्यस्य क्लेदाभावेन पञ्चविधकषायकल्पनायामयोग्यत्वेन कषाययोनित्वाभावान्न षट् कषाययोनयः, किन्तु पञ्चैवेति। अत एव कषायशब्दोऽयं तन्त्रेऽस्मिन् मधुरादिपञ्चरसयोनिकस्वरसादिपञ्चविधकल्पनाकल्पितेषु संज्ञासंज्ञिनो रूढ़ इत्यर्थः॥ ८॥

गङ्गाधरः — एषां पञ्चविधकषायाणां प्रयोगार्थं बलाबलमाह—तेषामित्यादि। तेषां स्वरसकल्कशृतशीतफाण्टानां कषायाणां यथापूर्व्वं पूर्व्वमनतिक्रम्य बलाधिक्यं पूर्व्वपूर्व्वं बलाधिकमुत्तरोत्तरं बलाल्पमिति। अतः अस्मात् कारणात् कषायकल्पना व्याध्यातुरबलापेक्षिणी स्वरसादिरूपेण कषायं कल्पयितुं व्याधिबलाबलमातुरबलाबलञ्च भिषजाऽवेक्षणीयं भवति।

योज्यानि स्युः, यतः केचित् स्वरसद्विषः, केचित् स्वरसप्रियाः, केचिदितरकल्पनाद्विषः, एवमादि। न चाप्यर्थं द्विष्टभेषजस्य प्रयोग इष्यते, तत्क्षणवमनादिदोषकर्तृ स्यात्; तथा कषायकल्पना व्याध्यातुरबलापेक्षिणी चेत्येतदुदाहरणार्थं, तेन द्रव्यापेक्षिणीत्येतदपि बोद्धव्यं, यतो द्रव्यनियमेन कल्पनानियमं वक्ष्यति रसायने, यथा "मण्डूकपर्ण्याः स्वरसः प्रयोज्यः, क्षीरेण यष्टीमधुकस्य चूर्णम्। रसो गुडूच्यास्तु समूलपुष्प्याः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः॥" इति।

तुरबलापेक्षाणि। न त्वेवं खलु सर्व्वाणि सर्व्वत्रोपयोगीनि भवन्ति॥ ६॥

पञ्चाशन्महाकषाया इति यदुक्तं तदनुव्याख्यास्यामः। तद् यथा— जीवनीयो बृंहणीयो लेखनीयो भेदनीयः सन्धानीयो दीपनीय इति षट्कः कषायवर्गः (१)। बल्यो वर्ण्यः

ननु यदि स्वरसादीनां पूर्व्वपूर्व्वं बलाधिक्यं तदा कस्मिन् व्याधौ कस्मिन् वा पुरुषे कः कषायो योज्य इत्यत आह— न त्वेवमित्यादि। एवं सति खलु न तु सर्व्वाणि कषायभेषजानि सर्व्वत्रोपयोगीनि भवन्ति। अत्रेदमवधातव्यं न हि बलवति व्याधौ वाऽऽतुरे वा मध्यबलमल्पबलं वा भेषजं कर्म्मसमर्थं भवति, न वा मध्यबलेऽधिकबलमल्पबलं वा नाप्यल्पबलेऽधिकबलं मध्यबलं वेति। अथैवं चेत् तदा द्रव्याणां लवणवर्ज्जितानामपरिसङ्ख्येयानां पञ्चविधकषायकल्पनाभिरपरिसंख्येयाः कषाया भवन्ति। कथं पञ्च कषायशतानि भवन्तीत्यत आह पञ्चाशन्महाकषाया इति यदुक्तमित्यादि। तदनु इत्यव्यवहितोत्तरम्॥ ९॥

गङ्गाधरः— तद् यथेत्यादि। जीवनीय इति जीवनाय हितः। बृंहणीयो देहबृंहणाय हितः। लेखनीयो देहधातूनामपद्दारणाय देहकर्षणाय लेखनाय हितः। भेदनीयो भेदनाय शरीरान्मलदोषनिर्हरणाय हितः। सन्धानीयो भग्नसंयोजनाय हितः। दीपनीयो वह्निसन्दीपनाय हितः। इति षट्कः, षड्भिर्निष्पन्नः कषायवर्ग इति। कषायवर्गस्य षट्कादित्वेन भेदनिर्द्देशः पुष्कलाभिधानार्थं छादिप्रत्ययादिवर्णान्तत्वेन बोध्यः (१)। बल्यो बलाय हितः।

चूर्णं कल्क एवान्तर्भावनीयम्। द्विविधो हि कल्कः सद्रवोऽद्रवश्चेति कृत्वा; तेन निर्दिग्धिना वा स्वरसीकृतो वा कल्कीकृतो वा चूर्णमयो भूतो वा इत्यादि पृथक् चूर्णपाठेनाधिककल्पनाप्रसङ्गो नोद्भावनीयः॥ ७—९॥

चक्रपाणिः— महाकषायानुदाहरति पञ्चाशदित्यादि। जीवनं हितो जीवनीयः एवमन्यत्रापि। षड्भिर्निर्व्वर्त्तितः षट्कः, एवं चतुष्कादिषु च बोद्धव्यम्। अत्र षट्कादिमहाकषायाणां परिच्छेदः कथञ्चिदर्थस्यानुगमेन बोद्धव्यः। यथा जीवनीयादौ षट्के दृश्यान्तत्वं, बल्यादौ चतुष्कान्तत्वं, तृप्तिघ्नादौ दशान्तत्वं, स्तन्यजननादौ स्तन्यशुक्रविषयत्वम् एवमादि ज्ञेयम्, एतच्च ह्रस्वसङ्ख्यान्तत्वादिना बहुभेदकथनवैचित्र्येण ग्रन्थस्य पुष्कलाभिधानताकरणार्थम्। एतच्च ज्ञात्वा द्रव्यं

कण्ठ्यो हृद्य इति चतुष्कः कषायवर्गः (२)। तृप्तिघ्नोऽर्शोघ्नः कुष्ठघ्नः कण्डूघ्नः क्रिमिघ्नो विषघ्न इति षट्कः कषायवर्गः (३)। स्तन्यजननः स्तन्यशोधनः शुक्रजननः शुक्रशोधन इति चतुष्कः कषायवर्गः (४)। स्नेहोपगः स्वेदोपगो वमनोपगो विरेचनोपग आस्थापनोपगोऽनुवासनोपगः शिरोविरेचनोपग इति सप्तकः कषायवर्गः (५)। छर्दिनिग्रहणस्तृष्णानिग्रहणो हिक्कानिग्रहण इति त्रिकः कषायवर्गः (६)। पुरीषसंग्रहणीयः पुरीषविरजनीयो मूत्रसंग्रहणीयो मूत्रविरजनीयो मूत्रविरेचनीय इति पञ्चकः

वर्ण्यो वर्णाय हितः। कण्ठ्यः कण्ठस्य स्वराय हितः। हृद्यो हृदयाय मनसे हितः। इति चतुष्कः कषायवर्ग एकः। यत्प्रत्ययान्तसामान्यात् पुष्कलाभिधानम् (२)। तृप्तिघ्नस्तृप्तिः श्लेष्मविकारभेदस्तन्नाशकः। इति षट्क एकः कषायवर्गो घ्नान्तसामान्यात् पुष्कलाभिधानम् (३)। स्तन्यजनन इत्यादि चतुष्क एकः कषायवर्गः। जननशोधनान्तत्वेन पुष्कलाभिधानम् (४)। स्नेहोपग इति स्नेहविधौ उपगन्तुं पानाभ्यञ्जनादिषु शीलं यस्य स तथा, एवं परत्रापि व्याख्यातव्यम् (५)। छर्दिनिग्रहण इति छर्दिं निगृह्णाति स्तम्भयतीति छर्दिनिग्रहणः, व्याधिग्रहणवचनेन तद्धेतुदोषग्रहोऽपि। एवं परत्रापि। एष त्रिक एकः कषायवर्गः पुष्कलाभिधानं निग्रहणान्तसामान्यात् (६)। पुरीषसंग्रहणीय इत्यादि पुरीषसंग्रहणं पुरीषस्य स्तम्भनं तस्मै हितः। पुरीषविरजनीय इति दोषसम्बन्धस्य पुरीषस्य दोषसम्बन्धात् विगमेन रञ्जनं रागस्तस्मै हितः पुरीषविरजनीयः। एवं मूत्रस्य च व्याख्येयम्। मूत्र-

कर्त्तव्यं, यदुक्तमिहैव आन्त्यप्रकरणे, यथा 'अनवगीतशब्दमकरणशब्दं पुष्कलाभिधानम्' इत्यादि। जीवनीयशब्देनेहायुष्यत्वमभिप्रेतम्। यत्र च मधुररसगुणे आयुष्योऽपि जीवनीय इति करिष्यति, तत्र मूर्च्छितस्य संज्ञाजनकत्वं जीवनीयत्वं व्याख्येयम्। तृप्तिः श्लेष्मविकारो, येन तृप्तमिवात्मानं मन्यते तद्घ्नं तृप्तिघ्नम्। स्नेहोपगानीति — स्नेहस्य सर्पिरादेः स्नेहनक्रियायां सहायत्वेनोपगन्तॄणि स्नेहोपगानि, मृद्वीकादिस्नेहोपयुक्तस्य सर्पिरादेः स्नेहने प्रकर्षवती शक्तिर्भवतीत्यर्थः। तथा वमनोपगानीत्यत्र मदनफलादीनां वमनद्रव्याणां मधुमधुकादीनि सहायानि भवन्तीति। एवं स्वेदोपगादौ व्याख्येयम्। शिरोविरेचनोपगे तु शिरोविरेचनप्रधानान्येव द्रव्याणि बोद्धव्यानि। पुरीषस्य विरजनं दोषसम्बन्धनिरासं करोतीति पुरीषविरजनीयः। एवं मूत्रविरजनीये वक्तव्यम्।

कषायवर्गः (७)। कासहरः श्वासहरः शोथहरः ज्वरहरः श्रमहरः इति पञ्चकः कषायवर्गः (८)। दाहप्रशमनः शीतप्रशमन उदर्द-प्रशमनोऽङ्गमर्दप्रशमनः शूलप्रशमन इति पञ्चकः कषायवर्गः (९)। शोणितस्थापनो वेदनास्थापनः संज्ञास्थापनः प्रजास्थापनो वयःस्थापन इति पञ्चकः कषायवर्गः (१०)। इति पञ्चाशन्महा-कषायाः, महताञ्च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति ॥ १० ॥

विरेचनीय इति मूत्रस्य वचनाय हित इत्यर्थः। एष पञ्चक एकः कषायवर्गः पुष्कलाभिधान नीयान्तसामान्यात् (७)। कासहर इत्यादि पञ्चक एकः कषायवर्गः हरान्तसामान्यात् पुष्कलाभिधानम् (८)। एवं दाहादिप्रशमनः पञ्चको व्याख्येयः (९)। शोणितस्थापन इत्यादिरेकः पञ्चकः स्थापनान्त-सामान्यात् (१०)। इति समाप्ताः पञ्चाशन्महाकषायाः, नामत एव व्याख्याताः। महताञ्च कषायाणां लक्षणोदाहरणार्थं लक्षणस्य पञ्चाशन्महाकषाया इति लक्षणस्य महतां कषायाणामुदाहरणार्थमित्यर्थः। न त्ववयवत इति। एषां पञ्चाशतो महत्त्वं स्वप्रभावतो जीवनीयादित्वं स्वस्थातुरोभयपरायणत्वात् दशदशावयवभावाच्च ॥ १० ॥

मूत्रस्य विरेचनं करोतीति मूत्रविरेचनीयः। उदर्दो वरटीदष्टाकारः दोषः, तत्प्रशमन उदर्दप्रशमनः, न पुनरिह महारोगाध्याये पठितो वातविकारो गृह्यते, निम्बकादीनामुदर्दप्रशमनानां वाते प्रत्य-ननुकूलत्वात्। शोणितस्य दुष्टस्य दुष्टिमपहृत्य प्रकृतौ शोणितं स्थापयति शोणितस्थापनम्। वेदनायां सम्भूतायां तां निहत्य शरीरं प्रकृतौ स्थापयतीति वेदनास्थापनम्। संज्ञां ज्ञानञ्च स्थापयतीति संज्ञास्थापनम् प्रजोपघातकं दोषं हत्वा प्रजां स्थापयतीति प्रजास्थापनम्। वयः-स्तरुणं स्थापयतीति वयःस्थापनम्।

उपसंहरति—इतीत्यादि। महतां कषायाणां पञ्चाशन्महाकषायाः भवन्तीत्यनेनोदि-ष्टानां लक्षणं स्वरूपं जीवनीयादीत्यस्योदाहरणं प्रपञ्चेन कथनं, तदर्थं व्याख्याता निर्देशेन कथिता इत्यर्थः। यदि वा महतां कषायाणां यल्लक्षणम् अनेकैः कषायैर्मिलित्वैकार्थं जीवनीयादिसम्पादनं तस्योदाहरणार्थं दृष्टान्तार्थम्। एतेनान्यान्यपि महाकषायाणि वातप्रशमन-पित्तप्रशमनादीन्येक-कार्यसम्पादकान्येकरूपमयाणि भवन्तीति सूचयतीति। महताञ्चेति चकार उदाहरणार्थं चेत्यत्र

तेषामेकैकस्मिन् महाकषाये दशदशावयविकान् कषायाननुव्याख्यास्यामः। तान्येव पञ्चकषायशतानि भवन्ति। तद् यथा—

जीवकर्षभकौ मेदा महामेदा काकोली क्षीरकाकोली मुद्गमाषपर्ण्यौ जीवन्ती मधुकमिति दशेमानि जीवनीयानि भवन्ति (१)।

गङ्गाधरः—ननु संख्या पञ्चाशन्महाकषाया एव भवन्तु किं तेषां स्वरूपमित्याह—तेषामित्यादि। तेषां जीवनीयादिसंज्ञकानां पञ्चाशन्महाकषायाणामेकैकस्मिन प्रत्येकं जीवनीयादिसंज्ञके महाकषायत्वे दशदशावयवस्य दशदशावयवो जीवनीयादिसंज्ञमहाकषायस्तस्यायमिति ठकः तान तथा। अथवा दशदशावयवानवयति दशदशावयविकानेकैकरूपान कषायान जीवकादिनामकान अनु अव्यवहितोत्तर व्याख्यास्याम इति. पुनरां मिलितजीवकादीनि द्रव्याणि पञ्चकषायशतानि भवन्ति इति वचनेन पञ्चकषायशतानीति यदुक्तं तद्व्याख्यानमारभते तद् यथेति। जीवनीयादीनां पञ्चाशन्महाकषायाणां तद् दशावयविकत्वेन पञ्चशतत्वं यत् तद् यथा येन प्रकारेण स्यात् तदाह इति तात्पर्य्यम्।

तत्र सर्व्वेषां जीवनहितस्यैवातिशयप्रयोजनत्वर्त्तनादौ निर्द्देशमारभते—जीवकर्षभकावित्यादि। तत्र माषमुद्गपर्ण्यौ इति पर्णीशब्दो माषमुद्गाभ्यां योज्यस्तेन माषपर्णी मुद्गपर्णी च। जीवन्ती स्वनामख्याता स्वर्णबला। मधुकमिति इति शब्दः समाप्तौ एवं सर्व्वत्र। इति प्रथमो दशकः

चक्रपाणिः, तेनाल्पबुद्धीनां व्यवहारार्थमत्रेति समुच्चिनोति, एतच्चोत्तरत्र स्फुटं भविष्यति। उत्तरत्र वक्ष्यति—"महतां च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति" इति, तत् "तद् यथेत्यादि ग्रन्थस्यार्थं व्याकर्तुं"; किंवाऽत्र व्याख्याता इति पदं संज्ञामात्रेण महाकषायकथने वर्त्तते तथा तत्र तु "व्याख्याता" इति पदं प्रतिजीवकादिद्रव्यकथने वर्त्तते, तेन न पौनरुक्त्यम्। अथवा एतावयविकान्यन्येव पञ्चाशन्महाकषायाणि दशावयवगुणितान्येकैकद्रव्यरूपाणि पञ्चकषायशतानि भवन्तीत्यर्थः॥ १०॥

चक्रपाणिः—जीवनीयमादावुच्यते सर्व्वेषां जीवनहितस्यैवात्यर्थमभिप्रेतत्वात्। मुद्गमाषपर्ण्यौ सुगमम्। जीवन्ती स्वनामख्याता सुवर्णवर्णाभा, मधुकं यष्टीमधुकं (१)। क्षीरिणी

क्षीरिणी राजक्षवको बला काकोली क्षीरकाकोली वाट्यायनी भद्रौदनी भारद्वाजी पयस्यर्ष्यगन्धा इति दशेमानि बृंहणीयानि भवन्ति (२)।

मुस्तकुष्ठहरिद्रादारुहरिद्रावचाऽतिविषाकटुरोहिणीचित्रकचिरबिल्वहैमवत्य इति दशेमानि लेखनीयानि भवन्ति (३)।

सुवहार्कोरुबूकाग्निमुखी-चित्रा-चित्रक-चिरबिल्व-शङ्खिनी-शकुलादनीस्वर्णक्षीरिण्य इति दशेमानि भेदनीयानि भवन्ति (४)।

मधुकमधुपर्णी-पृश्निपर्ण्यम्बष्ठकी-समङ्गा-मोचरसधातकी-

कषायवर्गः (१)। क्षीरिण्यादिः। क्षीरिणी स्वनामख्याता। राजक्षवको दुग्धिका हाचिरोति लोके। बला अतिबला गोरक्षतण्डुला ख्याता। काकोली स्वनामख्याता, तथा क्षीरकाकोली च। वाट्यायनी श्वेतबला। भद्रौदनी पीतबला। भारद्वाजी वनकार्पासी। पयस्या श्वेतविदारीकन्दः। ऋष्यगन्धा वृद्धदारकः। इति समाप्तौ। दशेमानि बृंहणीयानि। बृंहणं शरीरोपचयस्तस्मै हितानि भवन्ति। इति द्वितीयदशकः कषायवर्गः (२)। मुस्तेत्यादिस्तृतीयदशको महाकषायवर्गः। अत्र चिरबिल्वो नक्तमालः। हैमवती श्वेतवचा। लेखनीयानि लेखनम् उपचयापचिकरणं दर्पणेन तस्मै हितानि (३)। सुवहेत्यादिश्चतुर्थदशको महाकषायवर्गः। सुवहा त्रिवृत्। अर्को द्विविधः श्वेतोऽरुणश्च। उरुबूक एरण्डः। अग्निमुखी भल्लातकः। चित्रा दन्ती। चित्रक वह्निनाम, चिता इति लोके। चिरबिल्वः करञ्जः। शङ्खिनी चोरपुष्पी। शकुलादनी कटुकी। स्वर्णक्षीरिणी स्वर्णवर्णनिर्यासा क्षीरिणी स्वनामख्याता। इति भेदनीयानि रेचनीयानि (४)। मधुकेत्यादिः पञ्चमो दशको महाकषायवर्गः। मधुकं यष्टीमधु। मधुपर्णी गुडूची। पृश्नीपर्णी पृथक्पर्णी। अम्बष्ठकी पाठा।

क्षीरलता, राजक्षवकः दुग्धिका, वाट्यायनी श्वेतबला, भद्रौदनी पीतबला, भारद्वाजी वन-कार्पासी, पयस्या विदारिकन्दः, ऋष्यगन्धा ऋष्यजाङ्गलकः (२)। कटुका कटुरोहिणी, चिरबिल्वः करञ्जः, हैमवती श्वेतवचा (३)। सुवहा त्रिवृत्, अग्निमुखी लाङ्गलिया इति ख्याता, चित्रा दन्ती, शङ्खिनी श्वेतबुह्ना, शकुलादनी कटुरोहिणी, स्वर्णक्षीरिणी अङ्गुष्ठप्रमा (४)। अम्बष्ठकी अकर्णविद्धा,

लोध्रप्रियङ्गुकट्फलानीति दशेमानि सन्धानीयानि भवन्ति (५)।

पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेराम्लवेतसमरिचाजमोदाभल्लातकास्थिहिङ्गुनिर्यासा इति दशेमानि दीपनीयानि भवन्ति (६)।

इति षट्कः कषायवर्गः।

ऐन्द्र्यृषभ्यतिरसर्ष्यप्रोक्तापयस्याश्वगन्धा-स्थिरा-रोहिणी-बलातिबला इति दशेमानि बल्यानि भवन्ति (१)।

चन्दनतुङ्गपद्मकोशीर-मधुक-मञ्जिष्ठासारिवापयस्यासिता-लता इति दशेमानि वर्ण्यानि भवन्ति (२)।

समङ्गा वराहक्रान्ता। मोचरसः शाल्मलीवेष्टः। कट्फलं स्वनामख्यातवृक्षः। सन्धानीयानीति भग्नसंयोजनानि (५)। पिप्पल्यादिः षष्ठो दशको महाकषायवर्गः। अत्र शृङ्गवेरं शुण्ठी, अम्लवेतसः थैकल इति लोके। दीपनीयानि जाठराग्नेर्दीपनाय हितानि (६)। इति षट्कः कषायवर्ग इति षट्कत्वेन निर्दिष्टो यः प्रथमो वर्गः स्वस्थातुरोभयहितत्वसामान्यात् दशदशावयविकत्वेन प्रत्येकं व्याख्यातं समाप्तम्।

उद्देशक्रमप्राप्तं बल्यादिचतुष्ककषायवर्गं व्याख्यातुमाह ऐन्द्रीत्यादि। चतुष्कस्य प्रथमो दशको महाकषायवर्गः। ऐन्द्री गोरक्षकर्कटी। ऋषभी शूकशिम्बी। अतिरसा शतावरी। ऋष्यप्रोक्ता माषपर्णी। पयस्या विदारी। अश्वगन्धा स्वनामख्याता। स्थिरा शालपर्णी। रोहिणी कटुकरोहिणी। बला पीतबला। अतिबला श्वेतबला। बल्यानि बलाय हितानि (१)। चन्दनेत्यादिश्चतुष्कस्य द्वितीयदशकः महाकषायवर्गः। चन्दनोऽत्र चन्दने रक्तचन्दनमित्युक्तया प्रायेण सर्वत्र रक्तचन्दनम्। तुङ्गः पुन्नागः, पाठान्तरं पतङ्गः कुचन्दनमिह बकम इति ख्यातं। पद्मकं पद्मकाष्ठम्। पयस्या विदारीकन्दः।

समङ्गा वराहक्रान्ता, कट्फलं स्वनामप्रसिद्धं, सन्धानीयः संग्रहणः, सामान्येन पुरीषस्य संग्रहणात्तु भिन्नमल्लमात्रसंग्रहणः (५)। शृङ्गवेरः शुण्ठी, हिङ्गुनिर्यासो हिङ्गु (६)।

ऐन्द्री गोरक्षकर्कटी, ऋषभी शूकशिम्बा, अतिरसा शतावरी, ऋष्यप्रोक्ता माष-पर्णी, अतिबला पीतबला, पयस्येह विदारिकन्दो क्षीरकाकोली वा (१)। तुङ्गः पुन्नागः, पयस्येह

सारिवेक्षुमूलमधुकपिप्पलीद्राक्षाविदारीकैटर्य्यहंसपादी-बृहतीकण्टकारिका इति दशेमानि कण्ठ्यानि भवन्ति (३)।

आम्राम्रातकनिकुच-करमर्दवृक्षाम्लाम्लवेतसकुवलबदर-दाड़िममातुलुङ्गानीति दशेमानि हृद्यानि भवन्ति (४)।

इति चतुष्कः कषायवर्गः।

नागरचित्रकचव्यविड़ङ्गमूर्व्वागुडूचीवचामुस्तपिप्पलीपटोलानी(पाटलानी)ति दशेमानि तृप्तिघ्नानि भवन्ति (१)।

कुटजविल्वचित्रकनागरातिविषाभयाधन्वयासकदारुहरिद्रा-वचाचव्यानीति दशेमानि अर्शोघ्नानि भवन्ति (२)।

सिता शर्करा, लता मञ्जिष्ठा। वर्ण्यानि वर्णाय हितानि (२)। सारिवेत्यादिश्चतुष्कस्य तृतीयदशकः महाकषायवर्गः। सारिवा अनन्तमूलं, कैटर्य्यं कट्फलं, हंसपादी गुल्कुड़ी। कण्ठ्यानि कण्ठाय हितानि (३)। आम्रेत्यादिश्चतुष्कस्य चतुर्थदशकः महाकषायवर्गः। निकुचो डहु, करमर्दः करञ्जः, वृक्षाम्लं महार्द्रकं, कुवलं बृहद्बदरं, बदरं स्वल्पबदरं, दाड़िममातुलुङ्गौ स्वनामख्यातौ। हृद्यानि हृदयाय हितान्यम्लत्वात् (४)। इति चतुष्कः यकारान्तत्वेन तुल्यश्रवणेन सुखाध्येयत्वात् चतुर्णां वर्ण्यादिकषायवर्गाणामेकपाठेन पुष्कलाभिधानात् चतुर्भिर्निष्पादित एकः कषायवर्ग इत्यर्थः।

उद्देशक्रमप्राप्तं तृप्तिघ्नादिः षट्क उच्यते। नागरेत्यादिना एकादशदशकः। तत्र नागरं शुण्ठी, चित्रकं वह्निनामकं, चव्यं चवी, सर्व्वं स्पष्टम्। तृप्तिघ्नानि कफजनितां तृप्तिं घ्नन्तीति (१)। कुटजेत्यादिना द्वादशदशकोऽर्शोघ्नः कषायवर्गः। तत्र धन्वयासो दुरालभा, सर्व्वाण्यपराणि स्पष्टानि।

क्षीरकाकोली विदारीकन्दो वा, सिता श्वेतदुर्व्वा, लता श्यामदुर्व्वा (२)। सारिवा अनन्तमूलम्, इक्षुमूलं मोरटो वा, विदारी विदारीकन्दः, कैटर्य्यं कट्फलं, हंसपादी स्वनामप्रसिद्धा (३)। आम्रातकः आम्राड़कः, वृक्षाम्लं वृक्षाम्लम् (४)।

तृप्तिघ्नो श्लेष्मः (१)। धन्वयासो दुरालभा (२)। अरुष्करो भल्लातकः (३)।

खदिराभयामलकहरिद्रारुष्करसप्तपर्णारग्वधकरवीरविडङ्ग-जातिप्रवाला इति दशेमानि कुष्ठघ्नानि भवन्ति (३)।

चन्दननलदकृतमालनक्तमालनिम्बकुटज-सर्षपमधुकदारु-हरिद्रामुस्तानीति दशेमानि कण्डूघ्नानि भवन्ति (४)।

अक्षीव-मरिचगण्डीरकेबुकविडङ्गनिर्गुण्डीकिणिहीश्वदंष्ट्रा-वृषपर्णिकाखुपर्णिका इति दशेमानि क्रिमिघ्नानि भवन्ति (५)।

हरिद्रामञ्जिष्ठासुवहासूक्ष्मैलापालिन्दीचन्दनकतकशिरीष-सिन्धुवारश्लेष्मातका इति दशेमानि विषघ्नानि भवन्ति (६)।

इति षट्कः कषायवर्गः।

अर्शोघ्नानि प्रभावात् (२)। खदिरेत्यादिना त्रयोदशदशकः कुष्ठघ्नः कषाय-वर्गः। अत्रारुष्करो भल्लातकः। जातीप्रवाला जात्या नवपल्लवम्। कुष्ठघ्नानि प्रभावात् (३)। चन्दनेत्यादिना चतुर्दशदशकः कण्डूघ्नः कषायवर्गः। अत्र चन्दनं रक्तचन्दनमनुक्तत्वात् सर्वत्र बोध्यम्। नलदं जटामांसी कृतमालः सोनालुरिति ख्यातः। नक्तमालः करञ्जः। कण्डूघ्नानि प्रभावात् (४)। अक्षीवेत्यादिना पञ्चदशदशकः क्रिमिघ्नः कषायवर्गः। अत्राक्षीवः शोभाञ्जनकः, गण्डीरः समठशाकं शालञ्चेति लोके। केबुकः केउ इति लोके। किणिही कटभी, निगुण्डी सिन्धुवारः, आखुपर्णी मूषिकपर्णी दन्ती। वृषपर्णी आखुपर्णीभेदः, फाञ्जिपत्रिकेति ख्याता। क्रिमिघ्नानि प्रभावात् (५)। हरिद्रेत्यादिना षोडशदशको विषघ्नः कषायवर्गः। तत्र सुवहा रास्ना आफरमाली वा, पालिन्दी श्यामालता, कतकः निर्म्मलीति लोके, जलशोधनकरफलम्। श्लेष्मातको बहुवारः। विषघ्नानि प्रभावात् (६)। इति षट्कः भ्रान्त-त्वेन तुल्यश्रवणात् सुश्राव्यतया कुष्ठघ्नादीनां षण्णां कषायवर्गाणामेकपिण्डेन पुष्कलाभिधानात् षड्भिर्निष्पादित एकः कषायवर्ग इत्यर्थः।

नलदं मांसी, कृतमालः सुवर्णहलिः, नक्तमालः करञ्जः (४)। अक्षीवोऽक्षकः शोभाञ्जनो वा, गण्डीरः समठशाकं, निर्गुण्डी सिन्धुवारः, किणिही कटभी, आखुपर्णी मूषिकपर्णी, वृषपर्णी च तद्भेदः फाञ्जिपत्रिकेति ख्याता (५)। सुवहा रास्ना हाफरमाली वा, पालिन्दी श्यामालता, श्लेष्मातको बहुवारः (६)।

वीरणशालिषष्टिकेक्षुवालिकादर्भकुशकाशगुन्द्रेत्कटकत्तृणमूलानीति दशेमानि स्तन्यजननानि भवन्ति (१)।

पाठामहौषधसुरदारुमुस्तमूर्व्वागुडूचीवत्सकफलकिराततिक्तकटुरोहिणीसारिवा इति दशेमानि स्तन्यशोधनानि भवन्ति (२)।

जीवकर्षभक-काकोलीक्षीरकाकोलीमुद्गपर्णीमाषपर्णीमेदावृद्धरुहाजटिलाकुलिङ्गा इति दशेमानि शुक्रजननानि भवन्ति(३)।

कुष्ठैलवालुककट्फलसमुद्रफेनकदम्बनिर्य्यासेक्षुकाण्डेक्षुक्षुरकवसुकोशीराणीति दशेमानि शुक्रशोधनानि भवन्ति (४)।

इति चतुष्कः कषायवर्गः।

अथोद्दिष्टक्रमप्राप्तस्तन्यजननादिचतुष्ककषायवर्गमाह — वीरणेत्यादि। तत्र वीरणेत्यादिना सप्तदशदशकः स्तन्यजननकषायवर्गः। अत्र वीरणमुशीरम्, शालिर्हैमन्तिकधान्यम्, षष्टिकं षष्टिदिनभवधान्यम्, इक्षुवालिका खागड़िका, दर्भ उलुया तृणम्। कुशकाशौ स्पष्टौ, गुन्द्रा गुड़्री, उत्कट उकड़ इति लोके। एषां मूलं, गुन्द्र्यास्तु नाड़ेव सम्भवात्। "अङ्गेऽप्यनुक्ते विज्ञेयन्तु मूलम्" इति वचनाद्वीरणादीनां मूले लब्धे मूलपदम् उत्कटादीनामङ्गान्तरनिरासार्थम्। स्तन्यजननानि प्रभावात् (१)। पाठेत्यादिना स्तन्यशोधनोऽष्टादशो दशकः कषायवर्गः स्पष्टः। स्तन्यशोधनानि प्रभावात्। (२) जीवकेत्यादिना शुक्रजननानि प्रभावात्, एकोनविंशः कषायवर्गः (३)। कुष्ठेत्यादिना विंशो दशकः शुक्रशोधनकषायवर्गः। तत्र एलवालुकमैलेयं, तेजवल इति लोके। समुद्रफेनः स्वनामख्यातः। कदम्बो नीपस्तस्य निर्यासो वेष्टकः। इक्षुः स्पष्टः। काण्डेक्षुरिति लटा इति लोके। इक्षुरकः कोकिलाक्षः। वसुको वसुहट्टः वकपुष्पमिति लोके। शुक्रशोधनानि प्रभावात् (४)। इति चतुष्कः स्तन्य-शुक्रयोर्जनन-शोधनार्थत्वेन तुल्यश्रवणेन सुश्राव्यतया चतुर्णां स्तन्यजननादीनां कषायवर्गाणामेकपिण्डेन पृथक्त्वाभिधानात् चतुर्भिस्तैः कषायवर्गैर्निष्पादित एकः कषायवर्ग इत्यर्थः।

इक्षुवालिका खागड़िका, दर्भं उलुयातृणं, गुन्द्रा गुड़ुच्च (१)। स्तन्यशोधनो दशकः (२)। वृद्धरुहा शतावरी, वृक्षरुहापाठपक्षे वन्दाकः, जटिला ममरः, कुलिङ्गो चटकभेदः (३)। कदम्बो बहुफलः, इक्षुरकः कोकिलाक्षः, वसुको वसुहट्टकः। अत्र जतूकर्णपठित एलवालुकः कट्फलस्थाने (४)।

रास्नासुरदारु-बिल्वमदनशतपुष्पावृश्चीरपुनर्नवाश्वदंष्ट्राग्निमन्थश्योणाका इति दशेमान्यनुवासनोपगानि भवन्ति (६)।

ज्योतिष्मतीक्षवकमरिचपिप्पलीविडङ्गशिग्रु-सर्षपापामार्गतण्डुलश्वेतामहाश्वेता इति दशेमानि शिरोविरेचनोपगानि भवन्ति (७)।

इति सप्तकः कषायवर्गः।

जम्ब्वाम्रपल्लव-मातुलुङ्गाम्लबदर-दाडिम-यव-यष्टिकोशीर-मृल्लाजा इति दशेमानि छर्दिनिग्रहणानि भवन्ति (१)।

नागर-धन्व-यवासक-मुस्त-पर्पटक-चन्दन-किराततिक्तक-गुडूचीह्रीवेर-धान्यक-पटोलानीति दशेमानि तृष्णानिग्रहणानि भवन्ति (२)।

फलमिन्द्रयवम्। आस्थापनोपगानि प्रभावात (५)। रास्नेत्यादिना षड्विंशो दशकोऽनुवासनोपगः कषायवर्गः। तत्र वृश्चीरः श्वेतपुनर्नवा। अनुवासनोपगानि प्रभावात (६)। ज्योतिष्मतीत्यादिना सप्तविंशो दशकः शिरोविरेचनोपगः कषायवर्गः। तत्र ज्योतिष्मती लताफटकीति लोके। क्षवकश्छिक्काकारकः हाचिर्येति लोके। अपामार्गस्य तण्डुलः। श्वेता श्वेतापराजिता, महाश्वेता तद्भेदः। शिरोविरेचनोपगानि प्रभावात् (७)। यद्यप्येषां शिरोविरेचनद्रव्यगणे पाठः पूर्वाध्याये कृतस्तथाप्येषां शिरोविरेचनेऽप्राधान्यसूचनार्थं शिरोविरेचनोपगत्वेनोक्तिरेषा बोध्या। इति सप्तकः। उपगशब्दान्तत्वेन तुल्यश्रवणात् सुश्राव्यतया सप्तानामेषां स्नेहोपगादीनां कषायवर्गाणामेकपिण्डेन पुष्कलाभिधानात् सप्तभिः स्नेहोपगादिभिर्निष्पादित एकः कषायवर्ग इत्यर्थः।

अथोद्देशानुक्रमप्राप्तं छर्दिनिग्रहणादित्रिकं कषायवर्गमाह—जम्ब्वित्यादि। तत्र जम्ब्वाम्रेत्यादिनाऽष्टाविंशो दशकश्छर्दिनिग्रहणः कषायवर्गः। अत्र जम्ब्वाम्रयोः पल्लवम्। अम्लबदरं न तु मधुरबदरम्। मृदिति सौराष्ट्री मृत्। छर्दिनिग्रहणानि प्रभावात् (१)। नागरेत्यादिना एकोनत्रिंशो दशकस्तृष्णा-

व्यवकम् (१)। दधवकम् (२)। व्यवकम् (३)। अनम्लोऽनम्लमूलं, कटुकः श्योनाकः,

शटीपुष्करमूलबदरबीजकण्टकारिकाबृहतीवृक्षरुहाभयापिप्पलीदुरालभाकुलीरशृङ्ग्य इति दशेमानि हिक्कानिग्रहणानि भवन्ति (३)।

इति त्रिकः कषायवर्गः।

प्रियङ्ग्वनन्ताम्रास्थिकट्वङ्गलोध्रमोचरससमङ्गाधातकीपुष्पपद्मापद्मकेशराणीति दशेमानि पुरीषसंग्रहणानि भवन्ति (१)।

जम्ब्वशल्लकीत्वक्कच्छुरामधुकशाल्मलीश्रीवेष्टकभृष्टमृत्पयस्योत्पलतिलकणा इति दशेमानि पुरीषविरजनीयानि भवन्ति (२)।

जम्ब्वाम्र-प्लक्ष-वट-कपीतनोदुम्बराश्वत्थ-भल्लातकाश्मन्तक-सोमवल्का इति दशेमानि मूत्रसंग्रहणानि भवन्ति (३)।

निग्रहणः कषायवर्गः। तृष्णानिग्रहणानि प्रभावात् (२)। शटीत्यादिना त्रिंशो दशको हिक्कानिग्रहणः कषायवर्गः। अत्र बदरबीजमित्येकं, वृक्षरुहा वन्दाकः, कुलीरशृङ्गी कर्कटशृङ्गी। हिक्कानिग्रहणानि प्रभावात् (३)। इति त्रिकः निग्रहणान्तत्वेन तुल्यश्रवणात् सुखाख्यतया एकत्राभिधानात् त्रिभिर्दशकैः निग्रहणादिभिर्निष्पादित एकः कषायवर्ग इत्यर्थः।

अथोद्देशानुक्रमप्राप्तं पुरीषसंग्रहणादिपञ्चकं कषायवर्गमाह प्रियङ्ग्वित्यादि। तत्र प्रियङ्ग्वित्यादिना पुरीषसंग्रहण एकत्रिंशो दशकः कषायवर्गः। तत्रानन्ता अनन्तमूलं, कट्वङ्गः श्योणाकः, मोचरसः शाल्मलीवेष्टः, पद्मा ब्राह्मणयष्टी, पद्मकेशरं पद्मकिञ्जल्कः। पुरीषसंग्रहणानि भिन्नमलमात्रसंग्रहणानि प्रभावात् (१)। जम्ब्वित्यादिना पुरीषविरजनीयो द्वात्रिंशो दशकः कषायवर्गः। तत्र शल्लकी शिह्लकवृक्षस्तस्यास्त्वक्। कच्छुरा शूकशिम्बी, दुरालभा वा। शाल्मली शाल्मलीवेष्टः। श्रीवेष्टो नवनीतखोटी। भृष्टमृदग्निना भर्ज्जनेन दग्धमृत्तिका। पयस्या विदारीकन्दः। तिलकणाः तिलतण्डुलाः। पुरीषविरजनीयानि प्रभावात् (२)। जम्ब्वाम्रेत्यादिना त्रयस्त्रिंशो दशको मूत्रसंग्रहणः कषायवर्गः। तत्र कपीतनो गन्धभाण्डः, आम्रातकः। अश्मन्तकोऽम्ललोटकः, सोमवल्कः खदिरः मूत्रसंग्रहणानि प्रभावात् (३)।

मोचरस शाल्मलीवेष्टः, पद्मा ब्राह्मणयष्टिका (१)। शल्लकी स्वनामप्रसिद्धा, कच्छुरा शूकशिम्बा, शाल्मली शिमलीआठा, श्रीवेष्टको नवनीतखोटी (२)। कपीतनो गन्धमुण्डः, अश्मन्तकोऽम्ललोटः,

नगरागुरु--धान्यक--शृङ्गवेर-भूतीक-वचा-कण्टकारिकाग्निमन्थश्योणाकपिप्पल्य इति दशेमानि शीतप्रशमनानि भवन्ति (२)।

तिन्दुकपियालबदरखदिरकदरसप्तपर्णाश्वकर्णार्ज्जुनासनाऽरिमेदा इति दशेमान्युदर्द्दप्रशमनानि भवन्ति (३)।

विदारीगन्धापृश्निपर्णीबृहतीकण्टकारिकैरण्डकाकोलीचन्दनोशीरैलामधुकानीति दशेमान्यङ्गमर्द्द-प्रशमनानि भवन्ति (४)।

पिप्पली-पिप्पलीमूल-चव्य-चित्रकशृङ्गवेर-मरिचाजमोदाऽजगन्धाजाजीगण्डीराणीति दशेमानि शूलप्रशमनानि भवन्ति (५)।

इति पञ्चकः कषायवर्गः।

एवेति वाच्यम्। सर्व्वाणि दाहप्रशमनानि प्रभावात् (१)। नगरेत्यादिना द्विचत्वारिंशो दशकः शीतप्रशमनः कषायवर्गः। तत्र भूतीको यमानी। शीतप्रशमनानि प्रभावात् (२)। तिन्दुकेत्यादिना त्रिचत्वारिंशो दशकः उदर्द्दप्रशमनः कषायवर्गः। तत्र तिन्दुकः केन्दुरीति नाम्ना प्रसिद्धः, कदरः खदिरः, सप्तपर्णः सप्तच्छदः, अश्वकर्णः शालः, असनः पीतशालः, अरिमेदो विट्खदिरो 'गुयेबाबला' इतिनामख्यातः। उदर्द्दप्रशमनानि प्रभावात् (३)। विदारीगन्धेत्यादिना चतुश्चत्वारिंशो दशकोऽङ्गमर्द्दप्रशमनः कषायवर्गः। तत्र विदारीगन्धा शालपर्णी। अङ्गमर्द्द-प्रशमनानि प्रभावात् (४)। पिप्पलीत्यादिना पञ्चचत्वारिंशो दशकः शूलप्रशमनः कषायवर्गः। तत्राजमोदा यमानी, अजगन्धा फोकान्दि वनयमानीति नाम्नी, गण्डीरः शमठशाकं शालश्चीति लोके। शूलप्रशमनानि प्रभावात् (५)। इति पञ्चकः प्रशमनशब्दान्तत्वेन तुल्यश्रवणात् पृथगाख्यतया पुष्कलाभिधानात् एतैर्दाहप्रशमनादिभिः पञ्चभिर्महाकषायैर्निष्पादित एक एव कषायवर्गः।

वोद्धव्यम् (१)। भूतीको यमानिका (२)। तिन्दुकः केन्दुरिति प्रसिद्धः, कदरो विट्खदिरः, अरिमेदः खदिरभेदः (३)। व्यक्तः (४)। अजगन्धा फोकाम्बी (५)।

मधुमधुकरुधिरमोचरसमृत्कपाललोध्रगैरिकप्रियङ्गुशर्करा-लाजा इति दशेमानि शोणितस्थापनानि भवन्ति (१) ।

शालकट्फल-कदम्ब-पद्मक-तुम्ब-मोचरसशिरीषवञ्जुलैल-वालुकाशोका इति दशेमानि वेदनास्थापनानि भवन्ति (२)।

हिङ्गुकैटर्य्यारिमेद-वचाचोरक-वयःस्थागोलोमी-जटिला-पलङ्कषाशोकरोहिण्य इति दशेमानि संज्ञास्थापनानि भवन्ति (३)।

ऐन्द्रीब्राह्मीशतवीर्य्या-सहस्रवीर्य्याऽमोघाऽव्यथाशिवाऽरिष्टा-

अथोद्द शकप्रसङ्ग शोणितस्थापनादिपञ्चकषायवर्गमाह —मध्वित्यादि । तत्र मध्वित्यादिना शोणितस्थापनः षट्चत्वारिंशो दशकः कषायवर्गः । तत्र मधु माक्षिकं, रुधिरं कुङ्कुमं, मोचरसः शाल्मलीवेष्टः, मृत्कपालं भृष्टखर्परम् । शोणितस्थापनानि दुष्टशोणितं सम्यक् दुष्टिमुपहत्य प्रकृतौ स्थापयन्ति न वहिर्गमयन्ति वहिर्गच्छत् शोणितं संगृह्णन्तीति प्रभावात् (१) । शालेत्यादिना सप्तचत्वारिंशो दशको वेदनास्थापनः कषायवर्गः । तत्र वञ्जुलो वेतसः नाशोकस्तस्य पुनः पाठात्, पलङ्कषेति पाठे पलङ्कं रक्तचन्दनम् । वेदनास्थापनानि वेदनानां यत्र निवृत्तौ स्थापनं स्यात्तत्र वेदनां स्थापयन्ति प्रभावात् (२) । हिङ्ग्वित्यादिनाष्टाचत्वारिंशो दशकः संज्ञास्थापनः कषायवर्गः । तत्र कैटर्य्यः कट्फलम्, अरिमेदः विट्खदिरः, चोरकश्चोरपुष्पी, वयःस्था ब्राह्मीशाकं, गोलोमी भूतकेशी, जटिला जटामांसी, पलङ्कषा गुग्गुलुर्गोक्षुरको वा, अशोकरोहिणी कटुका । संज्ञास्थापनानि संज्ञां ज्ञानं दोषेणान्यथाभूतं यदा भवितुमाशङ्कते तदा ता सम्यक् संज्ञादूषकदोषमुपहत्य प्रकृतौ स्थापयन्ति प्रभावात् (३) । ऐन्द्रीत्यादिना एकोनपञ्चाशो दशकः प्रजास्थापनः कषायवर्गः । तत्र ऐन्द्री गोरक्षकर्कटी, ब्राह्मी नाम शाकविशेषः, शतवीर्य्या दूर्वा, सहस्रवीर्य्या दूर्वाविशेषः श्वेतदूर्वा, अमोघा पाटला, अव्यथा आमलकी

रुधिरं कुङ्कुमम् (१)। वञ्जुलो वेतसः (२)। कैटर्य्यं पर्वतनिम्बः, वयःस्था ब्राह्मी, गोलोमी भूतकेशः, पलङ्कषा गुग्गुलुः जटामांसी वा (३)। शतवीर्य्या-सहस्रवीर्य्ये दूर्वे, अमोघा पाटलाऽऽमलकी वा लक्ष्मणा वा, अव्यथा कदली गुडूची वा हरीतकी वा, अरिष्टा

**न हि विस्तरस्य प्रमाणमस्ति न चाप्यतिसंक्षेपोऽल्पबुद्धीनां सामर्थ्यायोपकल्पते कर्म्मसु । तस्मादनतिसंक्षेपेणानति-**

नीयो बृंहणीय इत्याद्युद्दिष्टानां महतां कषायाणां चकारात् पञ्चकषायशतानाञ्च लक्षणार्थमुपदेशार्थमुदाहरणार्थञ्च इत्युभयार्थमेव जीवकर्षभकावित्यादिकानि कषायार्थकानि पञ्चशतानि द्रव्याणि अपि दशशो जीवनीयादिसंज्ञकतया समस्य संक्षिप्य पञ्चाशन्महाकषाया इति उक्तरूपेण व्याख्याता भवन्तीति प्राधान्यात् महाकषाया इत्यस्य लिङ्गग्राहिव्याख्याता इति पदं प्रयुक्तं, न तु कषायशतानीति पदस्येति। अत्रायं भावः—पञ्चाशद्दशकैः पञ्चशतानि भवन्तीति पञ्चाशन्महाकषायघटकानि पञ्चशतानि द्रव्याणि प्रत्येकं कषायार्थानि बोध्यानि, न तु जीवनीयादिसंज्ञकपञ्चाशन्महाकषायकृतसंख्यान्तरतया पञ्च कषायशतानि सन्ति इति। ननु कथं पञ्च कषायशतानीत्युद्देशः कृतः, पञ्चाशन्महाकषायैरेव पञ्चशतानां कषायद्रव्याणां लाभात् इति ? उच्यते, महाकषायत्वस्य कषायाणां दशकरूपेणैवास्मिंस्तन्त्रे उपदिश्यते न तु न्यूनाधिकसंख्यत्वेनेति द्रष्टव्यमस्मिंस्तन्त्रे, इति ज्ञापनार्थं पञ्च कषायशतानीत्युद्देश उपसंहरणतया आचार्य्येण कृत इति।

ननु पञ्चकषायशतानां दशशो द्रव्यैः पञ्चाशन्महाकषायैन साकल्येन चिकित्सोपपद्यते तस्मात् कात्स्न्येन कषायाणां वचनमुचितमित्याकाङ्क्षायामाह—न हीत्यादि। प्रमाणं प्रकर्षेणेयत्तया मानं सङ्ख्या, विस्तरस्य कषायद्रव्याणां हि नास्ति, तर्हि चातोऽल्पान्युच्यन्तामित्यत आह—न चेत्यादि। यस्माच्चातिसंक्षेपोऽपि कषायद्रव्याणामल्पबुद्धीनां सामर्थ्याय चिकित्सितुं शक्तये नोप-

जीवकादिनिर्देशनिर्देश्यते ज्ञापके जीवनीयादिमहाकषाय। महतां चेति चकारः पञ्चकषायशतानाञ्च लक्षणस्योदाहरणार्थमिति समुच्चिनोति, तत्र जीवकादयः प्रत्येकं पञ्चकषायशतानामेकैकद्रव्यरूपाणां लक्षणस्वरूपा भवन्तीति। यदि वा लक्षणार्थमुदाहरणार्थञ्चेति, तत्र मन्दबुद्धीनां लक्षणार्थं पञ्चकषायशत-पञ्चाशन्महाकषायज्ञानार्थमित्यर्थः, बुद्धिमतान्तु उदाहरणार्थं दृष्टान्तार्थमतिसङ्क्षेपार्थमित्यर्थः।

ननु कषायद्रव्याणि यावन्ति सन्ति तावन्ति वाऽभिधीयन्तां, दृष्टान्तार्थं द्वित्राणि वा; तत् किमध्यमं "नातिविस्तरो नातिसङ्क्षेपः" इत्यत आह—न हीत्यादि। न हि विस्तरस्य प्रमाणमस्ति इयत्तापरिच्छेदोऽस्ति, न तेन विस्तरोऽभिधायत इत्यर्थः। अतिसंक्षेपोऽपि द्विविलक्षणाभिधानरूपो नाल्पबुद्धीनामनुमानाकुशलानां सामर्थ्याय चिकित्साव्यवहारायोपकल्पते,

विस्तरेण चोद्दिष्टाः । एतावन्तो ह्यलमल्पबुद्धीनां व्यवहाराय, बुद्धिमताञ्च स्वालक्षण्यानुमानयुक्तिकुशलानामनुक्तार्थज्ञानायेति ॥ ११ ॥

कल्पते। तस्मादनतिसङ्क्षेपेणानतिविस्तरेण पञ्च कषायशतान्यभिसमस्य पञ्चाशन्महाकषाया उद्दिष्टा न त्वतिविस्तरेण न वातिसङ्क्षेपेण। अत्र चशब्दः समुच्चयपूर्व्वकावधारणे। ननु वक्तव्येन् कथमल्पबुद्धिभिश्चिकित्सितव्यं कथं वा महाधीभिरखिलेन वानुमिन्वद्भिः कषायद्रव्याणि गुरुतः श्रूयन्ते? इत्यतस्तत्र हेतुमाह—एतावन्तो हीत्यादि। हि यस्मात् एतावन्तो निरुक्ता एते ये पञ्च कषायशतान्यभिसमस्य पञ्चाशन्महाकषायास्त एवाल्पबुद्धीनां मन्दबुद्धिभिषज्यव्यवहाराय चिकित्सायां व्यवहर्त्तुं हेतवो भवन्ति। न ह्यल्पबुद्धयोऽखिलं व्याधिं चिकित्सितुं शक्नुवन्ति, यावद्रोगं चिकित्सन्ति तच्च एतावद्भिरेवोपपद्यते इति भावः। कथं महाधीभिरपि गुरुभिः श्रावयितुं शक्यते तदाह—बुद्धिमताञ्चेति। न पुनर्बुद्धिमतां महासूक्ष्मधियां स्वालक्षण्यानुमानयुक्तिकुशलानामिति। जीवकादीनां दशशो द्रव्याणां पञ्चशतानां कषायद्रव्याणां स्वालक्षण्येन स्निग्धशीतगुरुमधुरत्वादिना च स्वेन स्वेन लक्षणेन गुणकर्म्मरूपेण त्वांकानां जीवनादिहेतुत्वमित्यनुमाने युक्तिकुशलानां भूयो दर्शनेन तत्तद्गुणकर्म्मवतां द्राक्षादीनामपि जीवनीयत्वादि इति युक्तौ च कुशलानां दक्षाणां भिषजाम् अनुक्तार्थज्ञानाय अनुक्तानां द्रव्याणां जीवनीयत्वादयानतिरिक्तार्थानां कर्म्मणां ज्ञानाय हेतवो भवन्ति, एतावन्तो महाकषायाः पञ्चाशद् यऽत्रोक्ता इति। एतेन तदुक्तं भवति, जीवनबृंहणादिपञ्चाशत्प्रयोजनातिरिक्तं यदेतच्छास्त्रेऽस्ति तदनेन भविष्यतीति नातो न्यूनता, यस्य तु कषायद्रव्यस्यातिरिक्तमेव गुणकर्म्मास्ति तद्विशेषेणात्रापदेक्ष्यामिति ॥ ११ ॥

एतावन्तो यथोक्ताः, अलं समर्थाः, व्यवहारायेति चिकित्साव्यवहाराय। स्वलक्षणस्य भावः स्वालक्षण्यं, तेनानुमानं तत्र कुशला अभिज्ञा इत्यर्थः। बुद्धिमन्तो हि, जीवकादयो हि स्निग्धशीतमधुरत्वादिगुणयुक्ताः सन्तो जीवनं कुर्व्वन्तीति भूयोदर्शनादुपधार्य्य तद्गुणयुक्तं द्रव्यान्तरमपि द्राक्षाखर्ज्जूरविदार्य्यादि तज्जातीयत्वेन जीवनान्यनुमिमते तथा जीवकादीनामेकजीवनकार्य्यकर्तृत्वेन महाकषायत्वं, तद्वत् पाठादिमसूरादिप्रभृतीनामन्यसीमाग्रहणानामतीसारहरमहाकषायत्वम्, अनुमानेन कृत्स्नमेव कषायं प्रतिपद्यन्त इति भावः ॥ ११ ॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच । नैतानि भगवन् पञ्च कषायशतानि पूर्य्यन्ते । तानि तानि ह्यङ्गानि संप्लवन्ते तेषु तेषु महाकषायेष्विति ॥ १२ ॥

तमुवाच भगवानात्रेयः । नैतदेवं बुद्धिमता द्रष्टव्यमग्निवेश, एकोऽपि ह्यनेकां संज्ञां लभते कार्य्यान्तराणि कुर्व्वन् । तद्यथा पुरुषो बहूनां कर्म्मणां करणे समर्थो भवति । स यद्

गङ्गाधरः—अत्र पूर्व्वपक्षमुत्थापयति—एवमित्यादि । पञ्च कषायशतानि न पूर्य्यन्ते इत्यत्र हेतुमाह—तानि तानि हीत्यादि । हि यस्मात् जीवनीयादिषु तेषु तेषु महाकषायेषु पञ्चाशदन्यतमेषु तानि तानि जीवकादीन्यङ्गानि दशान्यतमैकानेकान्यतमानि संप्लवन्ते एकस्य महाकषायस्याङ्गमेकमनेकं वान्यस्मिन महाकषायेऽवगाहते पुनः पठ्यते इति, तस्मात् पञ्च कषायशतानि न पूर्य्यन्ते न्यूनाश्च भवन्ति, इति पूर्व्वपक्ष सिद्धान्तं दर्शयति—तमुवाचेत्यादि । तमित्यग्निवेशम् । आत्रेय इति पुनर्व्वसुः । किं सिद्धान्तमुवाचात्रेय इत्यतस्तदुक्तसिद्धान्तवचनमाह—नैतदित्यादि । एतदिति यदुक्तम् "अग्निवेश भवता तदेतद् एवम्प्रकारेण बुद्धिमता सुधिया न द्रष्टव्यम्" इति प्रतिज्ञा । कस्मादित्यतस्तत्र हेतुमाह—एकोऽपि हीत्यादि । हि यस्मात् एकोऽपि एकः स्वरूपोऽपि अपिशब्दादनेकस्तु पुनरां कार्य्यान्तराणि कुर्व्वन्ननेकां संज्ञां लभते इति हेतुः । तस्माज्जीवनीयान्तर्गतजीवकादिक्षीरकाकोल्यादिरेकोऽपि जीवनहितः सन्नपि बृंहणं कुर्व्वन् बृंहणीयोऽपि भवतीति, तस्मात् जीवनीयः काकोल्यादिर्बृंहणीय एवेति प्रकारं बुद्धिमता द्रष्टव्यमित्यर्थः । ननु कथमेकः कार्य्यान्तरं कुर्व्वन्ननेकां संज्ञां लभते इत्याकाङ्क्षायां दृष्टान्तमाह—यथेत्यादि । पुरुष इत्येकः पुरुषो देवदत्तादिः कर्म्मणां क्रियाणां फलरूपाणां बहूनां कुम्भादुत्पत्तिस्तण्डुलविक्लित्तिरुत्तरदेशसंयोग इत्यादीनां करणे जनकव्यापारे

चक्रपाणिः—पूर्व्वपक्षमुत्थापयति—एवमित्यादि । तानि तानीति जीवकक्षीरकाकोलीप्रभृतीनि, तेषु तेषु जीवनीयबृंहणीयशुक्रजननादिषु, उपप्लवन्ते पुनःपुनस्तान्येव पठ्यन्ते, एकं द्रव्यमनेकेषु पठ्यमानमेकमेव ; ततश्च न संख्या पूर्य्यते ; इति पूर्व्वपक्षं सिद्धान्तयति—नैतदेवमित्यादि । एकस्यानेकत्वेनाभिधाने दृष्टान्तमाह—यथेत्यादि । एकः पुरुष कर्म्मणां व्यापाराणाम् ओदनपचनकुम्भकरणवणिज्यकरणभूमिकर्षणादीनां करणे समर्थो भवति, य इत्यध्याहार्य्यं, स इत्युक्तगुणं पुरुषं प्रत्यव-

यत् कर्म्म करोति तस्य तस्य कर्म्मणः कर्त्तृकरणकार्य्यसंप्रयुक्तं तत्तद्गौणं नामविशेषं प्राप्नोति। तद्वदौषधद्रव्यमपि द्रष्टव्यम्। यदि चैकमेव किञ्चिद् द्रव्यमासादयामस्तथागुणयुक्तं यत् सर्व्वकर्म्मणां करणे समर्थं स्यात्, कस्ततोऽन्यदिच्छेदुपधारयितुमुपदेष्टुं वा शिष्येभ्य इति॥ १३॥

समर्थो योग्यतावान् भवति, स इति पुरुषः यद् यत् कर्म्म फलरूपां क्रियां कुम्भादुत्पत्त्यादिकां करोति, तस्य तस्य कुम्भादुत्पत्तिनाडुर्व्वीविक्रयुत्तरदेशसंयोगादेः फलरूपस्य कर्म्मणः क्रियायाः कर्त्तृकरणकार्य्यसम्प्रयुक्तं कर्त्तृकरणकार्य्यादिभिः सम्यग् युक्तं निष्पादितं तत्तद् गौणं नामविशेषं कुम्भकारादिकं कर्त्तृप्रयुक्तं यानादिगौणं नामविशेषं करणप्रयुक्तं भृत्यादिनामविशेषं कार्य्यप्रयुक्तमेक एव पुरुषो लभते; एवमप्येकं द्रव्यं जीवनीयबृंहणीयादिकं गौणं नामविशेषं प्राप्नोति इत्यर्थः। अत्र निगमनं सूत्रं लभ्यते। प्रतिज्ञावाक्यस्य पुनरुक्तस्य निगमनवाक्यत्वात्। तेन तस्मात् नैतदेवं बुद्धिमता द्रष्टव्यमभिवेश, इति निगमनवाक्यं बोध्यम्।

नन्वेवं चेत् तदा कथं पञ्च कषायशतान्युपदिश्यन्ते, यत एक एव क्षीरकाकोल्यादिर्जीवनहितत्वात् जीवनीयो बृंहणहितत्वाद् बृंहणीय इत्येवं स्यात् इत्यत आह—यदि चेत्यादि। यदि चैकमेव द्रव्यमासादयामस्तथागुणयुक्तं यत् सर्व्वकर्म्मणां करणे समर्थं स्यात्, यदेकं द्रव्यं यैर्गुणैः सर्व्वेषां जीवनबृंहणादीनां कर्म्मणां करणे जनने समर्थं शक्तं स्यात्, तथागुणयुक्तं तदेकमेव

सूचनि, यद् यत् कर्म्मेति ओदनपाकादिग्रहः, यद् यत् कर्म्म करोति तस्य तस्य कर्म्मणः कर्त्तृसम्प्रयुक्तं पाचक इति, करणसम्प्रयुक्तं खानित्रिक इति, कार्य्यसम्प्रयुक्तं कुम्भकार इति नामविशेषं, गुणयोगप्रवृत्तं गौणं; गुणयोगश्च—पाचक इत्यत्र पचिक्रियायां कर्त्तृत्वं, खानित्रिक इत्यत्र खनित्रकरणयुक्तं खननं प्रति कर्त्तृत्वं, कुम्भकार इत्यत्र कार्य्यकुम्भोपहितं कर्त्तृत्वमित्येभिस्त्रिभिर्गुणैरभिन्नो भिन्नोऽप्यभिधीयते व्यवह्रियते चेति भावः; तद्वत् तत्र पुरुषवदौषधद्रव्यमपि, एकमपि क्षीरकाकोलीद्रव्यं जीवनबृंहणशुक्रजननलक्षणनानागुणयोगान्नानाजीवनीयादिशब्देनाभिधीयते व्यवह्रियते चेत्यर्थः।

अथ किमर्थं पुनरेकमेव द्रव्यं बहुजीवनीयादिगुणयोगात् तत्र तत्र पठ्यते? सन्ति तावद्बहूनि द्रव्याण्येकजीवनीयादिगुणानि स्वरूपतो भिन्नानि, तान्येव पृथक् कस्मान्न पठ्यन्त इत्याह—यदि चैकमेव द्रव्यमासादयामस्तथागुणयुक्तं यत् सर्व्वकर्म्मणां करणे समर्थं स्यात्, कस्ततो-

तत्र श्लोकाः ।

यतो यावन्ति यैर्द्रव्यैर्विरेचनशतानि षट् ।
उक्तानि संग्रहेणेह तथैवैषां षडाश्रयाः ॥

द्रव्यमासादयामः प्राप्नुमस्तदा कस्ततोऽन्यदिच्छेदुपधारयितुमुपदेष्टुं वा शिष्येभ्यः ? को जनस्ततस्तथागुणयुक्तात् सर्व्वकर्म्मकरणसमर्थादेकस्माद् द्रव्यादन्यत् भिन्नमनेककर्म्मकरणसमर्थमनेकद्रव्यं शिष्येभ्यो बहु कर्म्म कर्त्तुमिच्छत्युपधारयितुम् अभ्यासयितुम् उपदेष्टुं वा इच्छति । एतेन सर्व्वकर्म्मकरणसमर्थमेकं द्रव्यं नास्ति, परन्तु बहूनि द्रव्याणि जीवनादेरेकैककर्म्मकरणसमर्थानि जीवनबृंहणाद्यनेककर्म्मकरणसमर्थानि चान्यानि बहूनि द्रव्याणि बहुकर्म्मकरणसमर्थञ्चैकमपि द्रव्यं भवतीति सूचितम् । तेनैवैतदप्युक्तं भवति, य एते पञ्चाशन्महाकषाया उपदिष्टास्तेषां दशदशावयविकल्पं षट्कानां जीवकादीनां कषायत्वं जीवनीयादित्वञ्च समुदायस्य महाकषायत्वं जीवनीयादित्वञ्च । न त्वेकशः पृथक्त्वदशायां गुडशर्करादीनां कषायत्वं लवणस्य कषाययोनित्वाभावेन यथा कषायत्वाभावः इत्यभिप्रेत्य पञ्चाशन्महाकषायाः पञ्च कषायशतानीत्युक्तमिति बोध्यम् ॥ १२।१३ ॥

अध्यायार्थमुपसंहर्त्तुमाह—तत्र श्लोका इत्यादि । षड्विरेचनशतानीत्यादुद्देशानां षण्णामुपसंहारस्य तेषां निर्देशेनैव ज्ञापनाल्लभ्यते न ह्युद्देशं विना निर्देशोपदेशसम्भवोऽस्तीति, न पृथगुद्देशोपसंहारवचनमाचार्य्येण निबद्धमिति । अथात इत्यादिनैकेन श्लोकेनाध्यायारम्भः । ततो द्वाभ्यां षडुद्देशाः । ततः एकेनाद्योद्देशविवरणप्रतिज्ञा । तदनन्तरं यतो यस्माद् यस्माद्विरेचनद्रव्यमदनफलादिकात्

ऽन्यदिच्छेदुपदेष्टुमुपधारयितुं वा शिष्येभ्य इति । यत्र बहुद्रव्याण्येकैकजीवनीयादिकार्य्यकरणसमर्थानि भवन्ति तथैकमेव द्रव्यमनेकजीवनीयादिकार्य्यकरणसमर्थमस्ति, तत्रैकमेव द्रव्यं बहुकार्य्यकर्त्तृ शिष्येभ्य उपदेष्टुम् उपधारयितुञ्च युज्यते,ऽल्पप्रयत्नबोध्यत्वादल्पप्रयत्नधार्य्यत्वाच्च, न बहून्येककार्य्यनियतानि बहुप्रयासोपपाद्यत्वात् बहुप्रयासबोध्यत्वात् बहुप्रयासधार्य्यत्वाच्च, कार्य्यञ्च जीवनबृंहणाद्युभयोरपि पक्षयोरविशिष्टमिति वाक्यार्थः । तथागुणयुक्तमनेकजीवनीयादिकार्य्यसमर्थम् । तथागुणयुक्तत्वमेव विवृणोति—यत् सर्व्वकर्म्मणां जीवनीयादीनां करणे समर्थं स्यात्, ततो बहुकार्य्यकारकादेकस्मादन्यत् बहु प्रतिनियतकर्म्मकारकं क इच्छेत् ? न कोऽपीच्छेदित्यर्थः । उपधारयितुमावर्त्तनेन स्मृत्यारूढं कर्त्तुम् । कस्तत इत्यस्यार्थो तत इत्यध्याहार्य्यम् ॥ १२।१३ ॥

चक्रपाणिः—अध्यायार्थसंग्रहमाह—यत इति । यतो मदनफलादेः । यावन्ति त्रयस्त्रिंशद्योगशतमित्यादीनि । यैर्द्रव्यैर्विरेचनशतानि षडिति—तैरेव मदनफलादिभिर्मिलितैः षडुक्तमिति

रसा लवणवर्ज्ज्याश्च कषाया इति संज्ञिताः।
तस्मात् पञ्चविधा योनिः कषायाणामुदाहृता ॥
तथा कल्पनमप्येषामुक्तं पञ्चविधं पुनः।
महताञ्च कषायाणां पञ्चाशत् परिकीर्त्तिताः ॥
पञ्च चापि कषायाणां शतान्युक्तानि भागशः।
लक्षणार्थं प्रमाणं हि विस्तरस्य न विद्यते ॥
न चालमतिसंक्षेपः सामर्थ्यायोपकल्पते।
अल्पबुद्धेरयं तस्मान्नातिसंक्षेपविस्तरः ॥
मन्दानां व्यवहाराय बुधानां बुद्धिवृद्धये।
पञ्चाशत्को ह्ययं वर्गः कषायाणामुदाहृतः ॥

यावन्ति विरेचनानि त्रयस्त्रिंशद्योगशतमित्यादिना। यैर्द्रव्यैर्मिलितैर्मदनफल-त्रिवृतादिभिः षड़्विरेचनशतानि चतुर्भिः श्लोकैरुक्तानि इत्यर्थः। तथैवैषां षड़ाश्रया इति षड़्विरेचनाश्रयाः क्षीरादिफलानीत्यन्तेन।

रसा इति। पञ्चानां मधुरादीनां रसानां कषायसंज्ञा। मधुरकषाय इत्यारभ्य तन्त्रे संज्ञेत्यन्तेन तस्माल्लवणवर्ज्जरसात् पञ्चधा कषायाणां योनिः सूतरा मुदाहृता। तथा कल्पनमेषामपि पञ्चविधं कषायकल्पनमित्यारभ्य सर्व्वत्रोपयोगीनि भवन्तीत्यन्तेन निर्द्देशोपदेशाभ्याम्। पञ्चाशन्महाकषाया इत्यारभ्य लक्षणोदाहरणार्थं व्याख्याता भवन्तीत्यन्तेन महताञ्च कषायाणां पञ्चाशत् परिकीर्त्तिता निर्द्देशेन प्रोक्ताः। तेषामित्यारभ्य व्याख्याता भवन्तीत्यन्तेन महतां कषायाणां पञ्चाशतो विभागशो दशदशावयविकतया विभागेन पञ्च कषायाणां शतानि चापि उक्तानीति। न हीत्यारभ्यास्तीत्यन्तेन लक्षणार्थं विस्तरस्य प्रमाणं न विद्यते इत्युक्तं, न चेत्यारभ्य चोद्दिष्टा इत्यन्तेनातिसंक्षेपः सामर्थ्याय नालं न समर्थः कल्पते इत्युक्तम्। एतावन्त इत्यारभ्य शिष्येभ्य इत्यन्तेन नातिसंक्षेपविस्तरः पञ्चाशत्कोऽयं कषायाणां महाकषायाणां वर्गः

विरेचनशतानि षड़िति। लक्षणार्थमित्यादिग्रन्थोऽनतिसंक्षेपविस्तरेणोक्तपञ्चाशन्महाकषायोपपत्ति-संग्राहकः। अल्पमतिसमयः, अल्पबुद्धेरयमिति पदमतिसंक्षेप इत्यनेन सम्बध्यते। यद्यपि येषामतिसंक्षेपो नास्ति तथापि बुद्धिस्थिरीकृतः ग्रन्थश्रमुच्यते। पञ्चाशत्को ह्ययमित्यनयमिति पदं

तेषां कर्म्मसु बाह्येषु योगमाभ्यन्तरेषु च।
संयोगञ्च प्रयोगञ्च यो वेद स भिषग्वरः॥ १४॥

इति भेषजचतुष्कः।

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने षड़्विरेचन-शताश्रितीयो नाम चतुर्थोऽध्यायः॥ ४॥

मन्दानामल्पबुद्धीनां व्यवहाराय बुधानां बुद्धिमतां बुद्धिस्तद्वयेऽनुक्तार्थज्ञानायायं पञ्चाशन्महाकषायावधारणहेतुवादसहित उदाहृतः। हि शब्द एवार्थे।

पञ्चाशन्महाकषायोपदेशप्रयोजनमाह—तेषामित्यादि। तेषां पञ्चाशतो महाकषायाणां यथायोग्यं स्वस्थपुरुषे वातुरपुरुषे वा बाह्येषु कर्म्मसु प्रलेपावगाहादिषु, आभ्यन्तरेषु वमनादिषु कर्म्मसु च विषयेषु कर्त्तव्येषु संयोगं परस्परमुचितानां मेलकप्रयोगिकानां पृथक्करणं प्रयोगञ्च कालदेशप्रकृत्याद्यपेक्षया योजनाञ्च यो वेद वेत्ति स भिषग्वर इति॥ १४॥

अध्यायं समापयति—अग्निवेशेत्यादि। प्राग्वत् सर्व्वं व्याख्येयम्। इति भेषजचतुष्क इति स्वस्थातुरपरायणभेषजोपदेशश्चतुर्भिरध्यायैर्निष्पन्न एकः परिच्छेदः समाप्तः।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ सूत्रस्थानजल्पे प्रथमस्कन्धे चतुर्थाध्यायजल्पाख्या चतुर्थी शाखा॥ ४॥

चक्रपाणिः। बाह्येषु प्रलेपादिषु, आभ्यन्तरेषु वमनादिषु, संयोगं द्रव्याणामुचितं मेलकं, प्रयोगं कालप्रकृत्यपेक्षया योजनाम्॥ १४॥

इति भेषजचतुष्कः।

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थानव्याख्यायां षड़्विरेचनशताश्रितीयो नाम चतुर्थोऽध्यायः॥ ४॥

# पञ्चमोऽध्यायः ।

## अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ।

## इतिह स्माह भगवानात्रेयः ॥ १ ॥

मात्राशी स्यात् । आहारमात्रा पुनरग्निबलापेक्षिणी ।

गङ्गाधरः—अथेदानीं स्वस्थातुरसाधारणतया भेषजचतुष्कमभिधाय स्वस्थातुरयोः प्रत्येकप्रतिनियतहेतुलिङ्गौषधज्ञानसूत्राणां वक्तव्यत्वे स्वस्थपरायणहेतुलिङ्गौषधज्ञानसूत्राणामातुरपरायणहेतुलिङ्गौषधज्ञानसूत्रापेक्षयाल्पत्वेन सूचीकटाहन्यायेन स्वस्थविकारातुरयोऽप्रतिपद्धत्वेनातुरपरायणहेतुलिङ्गौषधज्ञानसूत्रोक्तेः पूर्वं स्वस्थपरायणहेतुलिङ्गौषधज्ञानसूत्राणि वक्तुमारभते । तथाप्यग्निसाम्यस्य स्वास्थ्यं प्रति साक्षात् प्रधानकारणत्वादग्निरक्षणकारणं मात्रावदशनमुपदेष्टुं मात्राशितीयोऽध्यायोऽभिधीयते—अथात इत्यादि । अथात इति प्रागवद् व्याख्येयम् । मात्राशितीयमिति—अत्राध्यायादौ मात्राशीति पदं यद्यपि श्रूयते तेनाध्यायस्य संज्ञाप्रणयने कष्टोच्चारणश्रवणभयादत्र तदर्थपरमात्राशितपदमधिकृत्य कृतोऽध्यायोऽयमिति । सर्व्वमन्यत् प्रागवद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—मात्राशी स्यादिति । मात्रां मात्रावदशनमशितुमशनद्रव्याणि शीलं यस्य स मात्राशी । स्यादिति कर्त्तव्यतोपदेशो विधिः । अत्रायमाशयः

चक्रपाणिः—द्वितीयमिह शास्त्रप्रयोजनं यदातुरव्याधिहरणं स्वस्थस्वास्थ्यरक्षणञ्च, यदाह—"स्वस्थातुरपरायणम्" इति, तेनातुरव्याधिप्रतीकारद्वारातुररक्षणं भेषजचतुष्कमभिधाय स्वस्थचतुष्कोऽभिधातव्यः, तत्रापि स्वास्थ्यपरिपालनहेतुषु मात्रावदशनं प्रधानं, यदाह "प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च" तच्चेह "मात्रावदश्नं विधीयते" इत्यादौ मात्राशितीय एवाभिधीयते, मात्राशितमधिकृत्य कृतोऽध्यायो मात्राशितीयः । यद्यपि "मात्राशी" इति पदमनुश्रूयते तथापि "मात्राशितीयः" इति संप्रणयने कष्टोच्चारणभयादर्थपरपर्यायशब्देनेयं संज्ञा कृता, यथा—"न वेगान् धारणीयाः" इत्यादिका संज्ञा ॥ १ ॥

चक्रपाणिः—मात्रां मात्रावदशनमशितुं भोक्तुं शीलं यस्यासौ मात्राशी, यदि वा मात्रया अशितुं शीलं यस्य स तथोक्तः, तत्रेह मात्राऽल्पापि परिमाणम् । अशितश्चेहाविशेषेण खाद्यपानलेह्यचोष्याणामभ्यवहारे वर्त्तते, तेन "मात्राशी स्यात्" इत्युक्तम् । खाद्यलेह्यपेयानां मात्राभ्यवहरणं लौकिकमिति यच्चोच्यते, तन्निरस्तं स्यात् । दृष्टश्चायमशिः खाद्याद्यभ्यवहारे यथा—वृक्षमूल-

पदार्थोऽप्यतन्त्रयुक्त्या अशन-खादन-लेह-पानभेदेन चतुर्विधाहारे वर्त्तते । मात्राविवरणे चात ऊर्द्ध्वमाहारमात्रा पुनरिति वक्ष्यते । अशनवाचिनां द्रव्याणां गलाधोगमनजनकव्यापारोऽशनं, खादनं पुनः कठिनद्रव्याणां, लेहस्तु नातिकठिननातिद्रवद्रव्याणां जिह्वाकर्षणपूर्व्वकः, पानन्त्वतिद्रवद्रव्याणामिति । यत्तु 'खाद्यलेह्यपेयद्रव्याणां मात्रयाऽभ्यवहारो नोक्तः' इति व्याख्यायते, तदनेनापास्तम् । यद्वा कठिननातिद्रवातिद्रवान्यतमैकद्रव्यस्य सततमभ्यवहारे तु न समाग्निरक्षणं स्यादिति ज्ञापनार्थमोदनादिप्रधानाशनीयद्रव्यस्याशनप्रयोगात् खाद्यलेह्यपेयानामुपकरणतया प्राधान्याभावेनाशनप्रयोगाभावात् मात्राशी स्यादित्युक्तमाचार्य्येण । यथा व्यञ्जनेनान्नमश्नाति, घनावर्त्तितपयसाऽन्नमश्नाति, पयसान्नमश्नातीत्यादौ व्यञ्जनघनावर्त्तितपयःपयसां खाद्यलेह्यपेयानामन्नाशनेनाभ्यवहारे सिद्धेऽप्यन्नस्यैवाशनप्रयोगो न तेषां खादनलेहपानप्रयोग इति ।

मात्राशनशीलेन भवितव्यं पुरुषस्वास्थ्यसाधनमित्यतो मात्रयैवाश्नीयादिति कर्त्तव्यतयाचार्य्येणोपदेशः कृतः । तत्र मात्राशनशीलेन भवितव्यस्य पुरुषस्वास्थ्यसाधनत्वसिद्धौ तदर्थं युक्तिमुपदर्शयितुं प्रथमं का मात्रा इति शिष्यप्रश्नमाशङ्क्याह—आहारमात्रा पुनरित्यादि । अत्र मात्रा पुनरिति नोक्त्वा यदाहारमात्रेत्युक्तं तद्भेषजादीनां व्याध्यानुबलापेक्षिण्या व्यायामादीनाञ्च मात्राया निरासार्थम्, अभिप्रायार्थविवरणार्थञ्च न पुनःशब्दः शिष्य-

हारीतवचनम् 'एकान्ततः प्राश्य ततश्च लेहान् भुक्तिर्विशान्ते भवतु' इत्युक्तम्, तथा 'औरसी तं प्रयोजयेत्' इति, इत्यादावन्नत्वम्, आहारत्वं सर्व्वाभ्यवहारे वर्त्तते, येनैतद्विवरणं सामान्येनैव कृतमाहारमात्रा पुनरिति न पुनरशितमात्रा पुनरिति ।

मात्रां व्याकरोति आहारेत्यादि । अग्निबलमनुसृत्य सम्यगल्पं वाऽपेक्ष्योत्कृष्टा मध्याऽल्पा वा मात्रा स्यादित्यग्निबलापेक्षिणी । पुनःशब्दो भेषजादिमात्रां व्यायाममात्राञ्च व्यावर्त्तयितुं, तेन न सर्व्वमात्राऽग्निबलापेक्षिणी, यतो भेषजमात्रा व्याध्यानुबलापेक्षिणी वक्तव्या, व्यायामस्य तु दोषक्षयाग्निवृद्ध्याद्युपादश्रमाद्यनुपादापेक्षिणी व्यवस्थापयितव्या । यदि वा पुनःशब्दः पौनःपुन्ये, तेनाहारमात्रा पुनःपुनरग्निबलमपेक्षते एतदुक्तं स्यात्; यत एकस्मिन् पुरुषे एकदा याऽग्निबलेन व्यवस्थापिता मात्रा सा न सर्व्वकालं स्यात्, यत ऋतुभेदेन वयोभेदेन च सर्व्वेषामग्निः कदाचिद्विवृद्धो भवति यथा हेमन्ते यौवने च, कदाचिन्मन्दो भवति यथा वर्षासु वार्द्धक्ये च, तेनाग्निबलभेदात् मात्राप्येकरूपा न स्यात्, किन्तु तत्कालभवमग्निबलमपेक्ष्य पुनःपुनर्मात्रापि भिद्यत इति ।

**यावद्धि अस्याशनमशितमनुपहत्य प्रकृतिं यथाकालं जरां गच्छति, तावदस्य मात्राप्रमाणं वेदितव्यं भवति ॥ २ ॥**

प्रश्नाशङ्काभिप्रायेण तुशब्दार्थकत्वात्। नवत्वं स्वभावजयौवनादवस्थास्वभावजाग्निभेदार्थं पुनःशब्दः पौनःपुन्ये यदा यावदग्निबलं तदा तावदग्निबलापेक्षिणीलाभात्। आह्रियन्ते गलाधो नीयन्ते प्राणोदानाभ्यां यानि द्रव्याणि नातिकठिनकठिननातिद्रवद्रवाणि तान्याहाराणीति तेषां मात्रा मीयन्तेऽनया सङ्ख्यया मानमिति यावदित्याहारमात्रा, करणे त्रन् न तु भावे, परिमितेर्लाभादलाभाच्च परिमितिसंख्याया इति।

अग्निबलापेक्षिणीति आहारमात्रेत्यस्य पक्षनिर्देशस्य साध्यनिर्देशस्तेन पक्ष आहारमात्रा अग्निबलापेक्षितावत्त्वेन साध्या यावदित्यादुक्तार्थो हेतुः। अग्निः कोष्ठाग्निराहारप्रकरणात् तस्य बलं वरावरमध्यान्यतममपेक्षितुं स्वप्रयोजनसाधनाविनाभावयितुं शीलं यस्याः साऽग्निबलापेक्षिणी। जठराग्नेस्त्रिधा पुरुषापेक्षितत्वेनोत्तममध्यमावरभेदेन मात्रापि प्रवराग्निबलापेक्षिणी उत्तमा, मध्यमाग्निबलापेक्षिणी मध्यमा, अल्पाग्निबलापेक्षिणी अल्पा। आहारमात्राया अग्निबलापेक्षित्वे हेतुमाह—यावदित्यादि। हि यस्मादस्य भोक्तुः पुरुषस्य यावत् यत्परिमाणेन विशिष्टमशनं यदन्नादिकं सत्त्वग्रहणाग्रहाभ्यां परिज्ञातं प्रकृत्यादष्टाहारविधिविशेषैश्च परिगृहीतं माध्यस्वादन्नेह्यपेयात्मकं माध्यमशनखाद्यान्यतमसहितं वा अशितमभ्यवहृतं सत् अनुपहत्य प्रकृतिं वातादीनां रसादीनां मलादीनां तथान्येषाञ्च शरीरगुणानामविकृतानां स्थानासनशयन-

अग्निबलापेक्षित्वमेव विवृणोति यावद्वीत्यादि। यावदिति यावत्परिमाणम्। हिशब्दो हेतौ। अस्येति भोक्तुः। अशनं चतुर्विधमपि भोज्यम्। अशितं भुक्तम्। प्रकृतिं वातादीनां रसादीनाञ्च साम्यावस्थाम्। अनुपहत्य विकारमकृत्वेत्यर्थः। यथाकालमिति नियतकाले। तावत् इति पूर्वप्रमाणावच्छिन्नमशनं प्रत्यवमृशति। द्वितीयम् 'अस्य' इति ग्रहणमन्यस्य प्रतिषेधार्थं; तेन यस्यैव यावता मात्रा निर्विकारा, तस्यैव सा मन्तव्या, नान्येषां; प्रतिपुरुषमग्निबलस्य भिन्नत्वात्। यद्यपि चैकस्मिन्नपि पुरुषे कालादिभेदेनाग्निबलभेदो भवति, तथाप्येकपुरुषस्यैकमात्रामवधार्य कियन्तमपि कालं तयैव मात्रया अग्निबलभेदहेत्वभावे सति व्यवहारो भवत्येव। मात्राप्रमाणं मात्रैव यत्, मात्राप्रमाणशब्देन चेह मात्राप्रमाणवदिति बोद्धव्यम्, अन्यथा तावच्छब्देनावच्छिन्नाशनवाचिना मात्राप्रमाणशब्दस्य गुणवाचिनः सामानाधिकरण्यं न स्यात्। ननु प्रकृतिमनुपहत्येति न कर्मणो विशेषणं, न ह्याहारो यो यथाकालं जरां

गमनोच्छ्वाससंकथासु सुखानुवृत्त्यादिस्वस्वक्रियावत्ता प्रकृतिस्तामनुपहत्य क्षीणां वा वृद्धां न करोतीति यथाकालं निशान्ते जरां जीर्णतां गच्छतीति जीर्णं भवति तस्य पुरुषस्य तावत् तत्परिमितिमदशनमन्नादिकमस्याशनस्यान्नादेर्मात्रा-प्रमाणं परिमितिकरणसंख्यायाः प्रमाणं प्रतीतिकरणं वेदितव्यं भवति बुद्धिमतेति शेषः । अनुपहत्य प्रकृतिमित्यनेन तीक्ष्णाग्निविषमाग्नीनां मात्रातिमात्राशनस्य यथाकालं प्रकृतिमुपहत्य जरण्यातिमात्रायामतिव्याप्तिर्वारिता सर्व्वग्रहपरिग्रहाभ्यां प्रकृत्याद्यष्टभिश्चाहारविधिविशेषायतनैरपरिग्रहेणाशितमपि यदशनं यथाकालं जरां गच्छति तदशनमपि मात्रावदेव न समात्रं तावदशनमुपयुञ्जानो हि प्रकृत्यादिविपर्य्ययेणोपयोगजमशुभं प्राप्नुवन्नपि नामात्रावदाहारजं किञ्चिदशुभं प्राप्नोति । न च मात्रया केवलमन्नस्याभ्यवहारादेव कृत्स्नमाहारफलसौष्ठव हि लभते । तस्मादत्र मात्राहारप्रशंसाप्रकरणात् प्रकृत्यादिविपर्य्ययेणोपयोगा-दशुभं न मात्राजदोषाय भवति । एतेन तन्निरस्तं यैरुच्यते प्रकरणादेव लब्धमस्येति पदमशनमिति पदञ्चाशितमिति पदञ्चापि यत् पुनरुक्तं तद्विशेष-ज्ञापनार्थम् ।

अस्येति पदेन परीक्षको भोक्ता अशनमित्यनेन प्रकृत्याद्यष्टकाविरुद्धमशन-मशितमित्यनेन यथाविधि भोजनं बोध्यमिति मात्राशनाधिकारे तथाविधस्य अनावश्यकत्वात् । मात्राप्रमाणं शब्देनेह तावच्छब्दवाच्याशनद्रव्यस्य सामानाधि-करण्यानुरोधेन मात्राप्रमितिकरणमुक्तं, तेनाहारमात्राऽप्रवल्यापेक्षिणी प्रकृत्य-नुपहननपूर्व्वकयथाकालजराप्राप्ताशनत्वं यत्वादित्यर्थः ।

तत्र प्रकृत्यनुपहननमाहारेण कुक्षेरप्रपीडनेन हृदयस्यानवरोधेन पार्श्वयोरवि-पाटनेन उदरस्यानतिगौरवेण इन्द्रियाणामन्यभावेन क्षुत्पिपासाप्रशमनेन स्थाना-

याति स मात्रावत्त्वाधिकारं करोति, करोति तु द्रव्यस्वभावसंस्कारादिदोषात्, यथा—मन्दक-लकुचादयो यथाकालं जरां गच्छन्तोऽपि दोषजनका भवन्त्येव ; न तावतापि तत्र मात्रा दुष्यति, यथा वक्ष्यति त्रिविधकुक्षीये 'न च केवलं मात्रावत्त्वादेवाहारफलसौष्ठवमवाप्तुं शक्यं, प्रकृत्या-दीनामष्टानामाहारविधिविशेषायतनानां प्रविभक्तफलत्वात्' इति, नैवं, द्विविधा हि मात्रा रसविमाने वक्ष्यमाणा—सर्व्वग्रहरूपा परिग्रहरूपा च, तत्र समुदितस्याहारस्य परिमाणं सर्व्वग्रहः, मधुराम्ला-दीनामाहारावयवानां प्रत्येकं मात्रया ग्रहणं परिग्रहः । तेन यत्राहारसमुदायपरिमाणमुचितमेव गृह्यते, आहारावयवानान्तु मधुरादीनां स्वभावहितानामप्ययथोक्तमानं स्यात्, तत्राहारावयव-मात्रावैषम्यात् धातुवैषम्यं भवत्येव, अयथाकालं जरागमनञ्च स्यात्, तदुक्तं प्रकृतिमनुपहत्येति विशेषणम् । अन्ये तु व्याख्यानयन्ति 'अस्य' इति, 'अशनम्' इति, 'अशितम्' इति च पदत्रयं

**तत्र शालिषष्टिक-मुद्गलाव-कपिञ्जलैणशश-शरभशम्बरा-दीन्याहारद्रव्याणि प्रकृतिलघून्यपि मात्रापेक्षीणि भवन्ति।**

सनशयनगमनोच्छ्वाससंकथासु सुखानुवृत्त्या च बोध्यम्। यथाकाले जरणन्तु सायं प्रातश्च सुखेन परिणामेन जीर्णाहारलक्षणैर्बोध्यमिति।

यद्यप्येकस्मिन्नेव पुरुषे हेमन्तादि-यौवनादिकालभेदेनाग्निबलभेदो भवति, तथापि कियन्तमपि कालमेकमात्रयाभ्यस्यैनयैव मात्रयाऽग्निभेदहेत्वभावे सति व्यवहारो भवतीति कश्चित्। वस्तुतो यदा यथाग्निबलं तदा तथैव प्रकृत्यनुपहननयथाकालजरणयोग्यया मात्रयाऽश्नीयादिति बोध्यम्॥ २॥

गङ्गाधरः—ननु शालिषष्टिकादिकं प्रकृतिलघु द्रव्यं यत्परिमाणेनाभ्यवहृतं यावत्कालेन यस्यानुपहत्य प्रकृतिं जरां याति न तावत् कालेन तन्मितं पिष्टेक्षुक्षीरविकारादिकं प्रकृतिगुरु द्रव्यमशितमित्यतो गुरुलाघवापेक्षिण्यपि मात्रा भवति न केवलमग्निबलापेक्षिणी स्यादिति प्रतिपक्षस्य प्रतिष्ठापनामाशङ्क्याह तत्रेत्यादि। तत्राभ्यवहार्येष्वभ्यवहार्येषु सर्वेषु मध्ये शालिर्हैमन्तिकशूकधान्यं, षष्टिकं षष्टिदिनभवं वार्षिकं शूकधान्यं, लावः पक्षिविशेषः, कपिञ्जलो गौरतित्तिरिः, एणः कृष्णसारः, शशः शशकः, शरभो महाशृङ्गो हरिणः, शम्बरस्तद्विशेषः। इत्यादीनि प्रकृतिलघून्यप्याहारद्रव्याणि। अपिना संस्कारलघूनि लाजादीनि च मात्रापेक्षीणि भवन्तीति। पेयादिविकारीभूतानां लघूनामाहारद्रव्याणां कुक्षिप्रपीडनादिजनकपरिमाणेनाभ्यवहारेण यथाकालं जराप्राप्त्यभावात्। आदिशब्देनैवंप्रकाराण्यन्यान्यपीति बोध्यम्।

प्रकरणादेव लभ्यते, तत् पुनः क्रियते विशेषप्रतिपादनार्थं ; तेन "अस्य" इत्यनेन परीक्षको भोक्ताऽधिक्रियते, "अशनम्" इत्यनेन च प्रशस्तप्रधानं प्रकृतिकरणसंयोगदेशकालादिविरुद्धमुच्यते, "अशितम्" इत्यनेन च यत्किञ्चिद् भोजनमुच्यते ; तदेवं सर्वगुणसम्पन्न आहारो मात्रावानुच्यते॥ २॥

चक्रपाणिः—मात्रालक्षणमुपदिश्य व्यवहारोपयोगिनं द्रव्यभेदेन मात्राभेदं दर्शयति—तत्र शाल्यित्यादि। अत्र लघुवर्ग एव प्रथमं पठ्यते पथ्यतमत्वात् ; तत्राप्यादौ रक्तशालिराहारद्रव्यप्राधान्यात्। कपिञ्जलो गौरतित्तिरिः, एणः कृष्णसारः, शरभो महाशृङ्गो हरिणः, शम्बरस्तद्विशेषः। अन्नपानविधौ शीतः स्निग्धोऽगुरुः स्वादुः इति षष्टिकगुणकथने "अगुरुः" इत्यकारप्रश्लेषो द्रष्टव्यः, तेनेह षष्टिकस्य लघुत्वप्रतिपादनं न विरुध्यते। अपि समुच्चये, तेन प्रकृतिलघूनि करणलघूनि च लाजादीनि मात्रापेक्षीणि भवन्तीति लक्ष्यते। एवं प्रकृतिगुरूणि, अत्रापि संस्कार-

**तथा पिष्टेक्षुक्षीरविकृतिमाषानूपौदकपिशितादीन्याहारद्रव्याणि प्रकृतिगुरूण्यपि मात्रामेवापेक्षन्ते ॥ ३ ॥**

**न चैवमुक्ते द्रव्ये गुरुलाघवमकारणं मन्येत । लघूनि हि द्रव्याणि वाय्वग्निगुणबहुलानि भवन्ति, पृथिवीसोमगुणबहुला-**

तथा पिष्टेत्यादीनि प्रकृतिगुरूणि अपिना संस्कारगुरूणि च मात्रामेवापेक्षन्ते न त्वग्निबलापेक्षिणी मात्रा गुरुलाघवं द्रव्याणामपेक्षते। पिष्टकादिविकाराणामेषामाहारद्रव्याणां कुक्षिप्रपीडनादिजनकरूपेण परिमाणेनाभ्यवहृतानां यथाकालं जीर्णत्वाभावात्। पिष्टं पिष्टविकृतिः भक्ष्यं, इक्षुविकृतिर्गुडादिः, क्षीरविकृतिर्दध्यादिः। विकृतिशब्दस्य त्रिभिः पिष्टादिरन्वयात्। आनूपौदकयोः पिशितम्। आदिशब्दोऽत्र प्रकारवाची, तेनैवंप्रकाराण्यपराणि शाल्यादिगणातिरिक्तानि ॥ ३ ॥

ननु शालिषष्टिकादीनि प्रकृतिलघूनि अमात्रयाऽभ्यवहृतान्यहितानि स्युः प्रकृतिगुरूणि च पिष्टेक्षुक्षीरविकारादीनि मात्रया हितानि स्युस्तानि यदि मात्रामपेक्षन्ते तदा गुरुलाघवप्रतिसंधानं द्रव्याणामकारणं स्यादित्यत आह—न चैवमित्यादि। एवमुक्ते प्रकृतिलघुगुरुद्रव्याणां मात्रापेक्षत्वे उक्ते गुरुलाघवं द्रव्याणां गुरुत्वं लघुत्वञ्च न चाकारणं कारणमेव। गुरुश्च लघुश्च गुरुलघू तयोर्भाव इति। सुपश्चात्यादित्वादुत्तरपदादवचो वृद्धौ गुरुलाघवमिति।

द्रव्याणां गुरुलाघवस्याभ्यवहारविधावकारणत्वाभावे हेतुमाह—लघूनि हीत्यादि। वाय्वग्निगुणबहुलानि लघूनि द्रव्याणि भवन्ति। आकाशगुणबहुलानि च द्रव्याणि लघूनि भवन्त्यपि वह्निसन्धुक्षणाय न भवन्ति गगनस्याग्निसाधर्म्याभावादत उक्तं वाय्वग्निगुणबहुलानीति। इतराणि

गुरुशब्द पिष्टादिग्रहणं वाच्यम्। आदिशब्दोऽत्र प्रकारवाची शालिषष्टिकादिगणाभावात्। विकृतिशब्दः पिष्टेक्षुक्षीरैः सम्बध्यते। क्षीरविकृतिः क्षीरकृता भक्ष्याः, पिशितमानूपौदकाभ्यां सम्बध्यते ॥ ३ ॥

<u>चक्रपाणिः</u> ननु यदि लघु हितमपि स्वगुणकरणमेव, मात्रामपेक्षते, गुरु चाहितमपि मात्रापरिगृहीतं हितमेव स्यात्, तत् किं गौरवलाघवोपदेशेनेत्याशङ्क्याह—न चैवमित्यादि। लघूनि यद्यप्याकाशवाय्वग्निगुणबहुलानि स्युः, तथाप्याकाशस्याग्निदीपनं प्रति तथाविधसामर्थ्याभावात् वाय्वनलयोरेवाग्निदीपकत्वात् वाय्वग्निगुणबहुलानीत्युक्तं, तस्मात् कारणात् लघूनि मात्रया तावत् अग्निं दीपयन्ति, स्वगुणादपि वाय्वग्निगुणबाहुल्यादग्निसन्धुक्षणस्वभावानि स्युः।

नीतराणि । तस्मात् स्वगुणादपि लघून्यग्निसन्धुक्षणस्वभावान्यल्पदोषाणि चोच्यन्ते अपि सौहित्योपयुक्तानि । गुरूणि पुनर्नाग्निसन्धुक्षणस्वभावान्यसामान्यादतश्चातिमात्रं दोषवन्ति सौहित्योपयुक्तानि अन्यत्र व्यायामाग्निबलात् । सैषा भवत्यग्नि-

गुरूणि पृथिवीसोमगुणबहुलानि भवन्ति इति सर्व्वमतसिद्धः सिद्धान्तः। तस्मात् लघूनां द्रव्याणां वाय्वग्निगुणबहुलत्वात् गुरूणां द्रव्याणां पृथ्वीसोमगुणबहुलत्वात् । स्वगुणात् रौक्ष्यलाघवसौक्ष्म्यचलत्ववैशद्यखरत्वात् अपिशब्दान्मात्रयाऽभ्यवहृतानि लघूनि द्रव्याणि अग्निसन्धुक्षणस्वभावानि अग्नेः रूक्षस्य च खरस्य च सूक्ष्मस्य च लघोश्च चलस्य च विशदस्य च सामान्यात् । सन्धुक्ष्यतेऽनेनेति सन्धुक्षणः उद्दीपनकरणः स्वभावो रौक्ष्यादिगुणो धर्म्मो येषां तानि तथा । वह्निसन्धुक्षणस्वभावत्वात् तु सुतरामपि सौहित्योपयुक्तानि आ तृप्तित उपयोगे मात्राव्यतिक्रमेऽप्यल्पदोषाणि चोच्यन्ते न त्वनिदोषवन्ति । एतदर्थे चकारः । अग्निसन्धुक्षणं हि तत्रापि भवत्येवेति भावः ।

गुरूणि पुनरिति ।—पुनःशब्दो भिन्नक्रमः, तेन तस्मात् पृथ्वीसोमगुणबहुलत्वात् । स्वगुणादपि स्निग्धत्वाच्च गुरुत्वाच्च स्थूलत्वाच्च स्थिरत्वाच्च विशदपिच्छिलत्वाच्च मात्राशनाच्चापि वह्नेः रौक्ष्यादिगुणस्यासामान्यात् न सन्धुक्षणः स्वभावो येषां तानि तथा । असामान्यादिति विरोधार्थं नञ् । अतः सामान्यविरहेणापि सन्धुक्षणस्वभावत्वाभावाच्च मात्राशनानि दोषवन्ति सौहित्योपयुक्तानि चा तृप्तितो भोजनेन मात्राव्यतिक्रमादग्निसन्धुक्षणस्वभावाभावाच्चातिमात्रं दोषवन्ति भवन्ति । ननु मल्लादिपुरुषाणां सौहित्योपयुक्तगुरुद्रव्याभ्यवहारेऽपि न दोषा दृश्यन्ते कथम् ? उच्यते, अतिमात्रं दोषवन्तीत्यत आह—अन्यत्रेत्यादि । व्यायामादग्निबलमिति व्यायामाग्निबलम् । व्यायामजनिताग्निबलस्याप्रतिघात्यत्वेन

मात्राव्यतिक्रमे समानेऽपि लघुगुरुद्रव्ययोर्लघुगुरुद्रव्यस्य विशेषं दर्शयति अल्पदोषाणि चोच्यन्तेऽपि सौहित्योपयुक्तानि, सौहित्यं मात्राव्यतिक्रमेण तृप्तिः । गुरूणीत्यादौ पुनःशब्दो व्यावृत्त्यर्थः । असामान्यादिति विरोधार्थे नञ्, तेनासामान्यादित्यग्निविरुद्धपृथ्वीतोयगुणबाहुल्यादित्यर्थः । अन्यसामान्यादिति पाठपक्षेऽप्यन्यशब्दो विरुद्धवचन एव, तेन तथापि स एवार्थः । अनेन त्वादिना मात्राव्यतिक्रमे गुरौ गरीयांसं दोषं दर्शयति । ननु दृश्यन्ते केचन भारिकादयः पुरुषाः सौहित्योपयुक्तगुरुद्रव्याहारेऽपि निर्दोषाः, तत् किमुच्यतेऽतिमात्रं दोषवन्तीत्याशङ्क्याह—अन्यत्रेत्यादि । व्यायामकृतमग्निबलं व्यायामाग्निबलम्; यद्यपि कालादिकृतबलोऽप्यग्निर्मात्राऽधिकगुरु-

**बलापेक्षिणी मात्रा। न च नापेक्षते द्रव्यम्। द्रव्याणामपेक्षया* च त्रिभागसौहित्यमर्द्धसौहित्यं वा गुरूणामुपदिश्यते। लघूनामपि च नातिसौहित्यमग्नेर्युक्त्यर्थम्।**

हेमन्तादिकालाहिताग्निबलस्य मात्राद्रव्यगुरुक्षमत्वेऽपि न प्राधान्यं कालान्तरे समागते प्रतिघात्यत्वात्। व्यायामं निषेवमाणस्य पुरुषस्य चिरमेवाग्निबलसत्त्वाच्च। व्यायामादग्निबलाच्चान्यत्रेति यद् व्याख्यानयन्ति तन्न द्विवचनापत्तेर्व्यायामापेक्षित्वापत्तेश्च मात्राया इति तेन प्रतिज्ञाहानिश्च स्यादिति ॥ ३ ॥

गङ्गाधरः—अथ प्रतिपक्षस्य प्रतिष्ठापनां निरस्य निगमनार्थमाह—सैषेत्यादि। साऽग्निबलापेक्षिणीति प्रतिज्ञाता मात्रा, एषा प्रतिपक्षप्रतिष्ठापनया न निराकृता हेतुयुक्तिभ्याञ्चास्माभिः स्थापिता भवत्यग्निबलापेक्षिण्येव मात्रा न तु गुरुलाघवापेक्षिणीत्यर्थः।

ननु भवत्वग्निबलापेक्षिणी मात्रा द्रव्यापेक्षिणी भवति। अग्नियुक्त्यर्थं हि गुरुद्रव्याणामर्द्धसौहित्यं लघूनामपि नातिसौहित्यमुपदिश्यते इति प्रतिपक्षान्यतरप्रतिष्ठापनानिरासायाह न चेत्यादि। न चेति चकारेण मात्रा उपस्थाप्यते प्रकरणात्। मात्रा न द्रव्यमपेक्षते इति न चाद्रव्यमेव ह्यपेक्षते। कस्मान्मात्रा न द्रव्यमपेक्षते इत्यत आह—द्रव्याणामित्यादि। चकारोऽवधारणे। मात्रापेक्षयैव द्रव्याणां गुरूणामप्रकृष्टगौरवाणां द्रव्याणां त्रिभागसौहित्यं गुरूणां द्रव्याणां यावत्परिमाणेनाभ्यवहारे कुक्षेरप्रपीडनादिकं स्यात् तावत्परिमाणेनाभ्यवहारः सौहित्यं, तदपि त्रिभागेण। न खलु परिमाणेन उपदिश्यते प्रकृष्टगौरवाणामर्द्धेन न खलु परिमाणेन उपदिश्यते अग्नेर्युक्त्यर्थं समानस्थित्यर्थम्। लघूनामपि च चकारः पुनरर्थेऽपि

द्रव्यक्षमो भवति, यदुक्तं—"पक्ता भवति हेमन्ते मात्राद्रव्यगुरुक्षमः" इति, तथापि व्यायामाहितबलो वह्निर्नितरां बलवान् भवतीत्ययमेव प्रधानपरिग्रहादुक्तः। ये तु व्यायामादग्निबलादिति हेतुद्वयं वर्णयन्ति, तेषामेवं सति व्यायामापेक्षिण्यपि मात्रा स्यादिति प्रकरणविरोधोऽर्थः स्यात्। प्रतिज्ञातमर्थं न्यायसम्पादितमुपसंहरति—सैषेत्यादि। सेत्यग्निबलापेक्षिणी प्रतिज्ञाता मात्रा, एषेति न्यायेनानन्तरपक्षस्थेन निर्व्वाहिता।

ननु यद्यग्निबलापेक्षिणी मात्रा, तत् कस्मादेकरूप एवाग्नौ लघूनां द्रव्याणां भूयसी मात्रा स्यात्, तत्त्रिभागोचिता अर्द्धा वेत्याह—न चेत्यादि। द्रव्यमपेक्षत इत्यर्थः। त्रिभागसौहित्यं मनाग् गुरुभिः। एवं गुरु गौरवप्रकर्षापकर्षाभ्यामपि कल्पनीयम्। लघूनामपि

* द्रव्यापेक्षयेति वा पाठः।

मात्रावद्ध्यशनमशितमनुपहत्य प्रकृतिं बलवर्णसुखायुषा योजयत्युपयोक्तारमवश्यमिति ॥ ४ ॥

चार्थं च पुनर्लघूनाञ्च द्रव्याणां मात्रापेक्षयैव नातिसौहित्यमुपदिश्यते इत्यनेनान्वयः। यावत्परिमाणेनाभ्यवहारे कुक्षेरप्रपीडनादिकं स्यात् तावत्परिमाणातिशयेन सौहित्यं नोपदिश्यते अग्नेयुक्त्यर्थं, लघूनामग्निसन्धुक्षणस्वभावत्वेऽपि मात्रातिशयेनाभ्यवहाराद्भारोगस्यभारादग्नेः सन्धुक्षणाभावेन सामान्यस्याप्यभावापत्तेः, यथा प्रज्वलितोऽप्यग्निस्तृणराशिप्लावितो नश्यति, यथा चक्षुस्तैजसं तेजोऽतियोगादितो विपद्यते, यथापि च प्रस्तरशिलायोगात् शस्त्रं तीक्ष्णं भवति तदतियोगाद् व्यापद्यते इति। तस्मान्मात्रामेवापेक्षन्ते द्रव्याणि न तु द्रव्याण्यपेक्षते मात्रा।

नन्वु समाग्निरक्षणार्थं मात्राशनं किं प्रयोजनमित्याह मात्रावदित्यादि। हि यस्मात् मात्रावदशनमशितं सत् प्रकृतिं स्वास्थ्यमनुपहत्य बलादिभिर्योजयत्युपयोक्तारमवश्यमिति बलवर्णादीनां प्रकृत्यादिकारणसमूहत्वेऽप्येकमेवैतत् मात्रावदशनं कारणं भवति प्रधानमित्यवश्यंपदेन ज्ञापितम्। तैः कारणान्तरैः सहकारेणायं नियम इति। तस्मान्मात्राशी स्यादिति निगमनं बोध्यम् ॥४॥

नातिसौहित्यमित्यत्र सौहित्यशब्दस्तृप्तिमात्रे वर्तते, तेन लघूनि तृप्त्यतिक्रमेण न भोक्तव्यानि, एवं हि तेषां मात्रातिक्रमो न स्यात्। अग्नेर्युक्तिः समानावस्थितिः, तदर्थम्। ननु गुरूणां तावदतिमात्रोपयोगोऽग्निपरिपालनार्थं निषिध्यताम्, येन गुरूण्यग्नेरसमानानि; लघूनि पुनरग्निना समानानि तत् तेषां कथमतिमात्रोपयोगो वह्निमान्द्यमावहतीति? ब्रूमः— लघूनां द्रव्याणां सामान्यमभिभूयातिमात्रत्वमेवाग्निमान्द्यं करोति। यथा— चक्षुस्तैजसं तेजःसाकूतञ्च पश्यति, तदेव तेजोऽतियोगादुपहन्यते, तथा शस्त्रमश्मसम्भवम्, अश्मसंयोगाच्च तीक्ष्णं सम्पद्यते, अश्मनैव च मिथ्यायोगात् प्रतिहतं स्यात्, तदुक्तं शालाक्ये "यत् तेजो ज्योतिषां दीप्तं शारीरं प्राणिनाञ्च यत्। संयुक्तं तेजसा नेत्रं तद्रूपाणि पश्यति ॥ तदेव चक्षुस्तान्येव ज्योतींष्यपि तु पश्यतः। विकारं भजतेऽत्यर्थमथवापि विनश्यति ॥ शस्त्रस्याश्मा यथा योगैर्निशितस्य तनुत्वति। तीक्ष्णं भवत्यतियोगात् तत्रैव प्रतिहन्यते ॥" एवं तावद् व्युत्पादिताऽग्निबलद्रव्यापेक्षिणी मात्रा, मात्राऽग्निबलञ्च भोज्यं भोक्तव्यमित्युक्तम्।

मात्राशितस्य को गुण इत्याह मात्रावद्धीत्यादि।—अवश्यमिति नियमो विरोधिकारणान्तराभावे सति बोद्धव्यः; यतः—यद्यपि पूर्व्वमात्राशनाशितोपयोक्तृपदैः प्रशस्तभोजनादिवाचिभिः प्रकृतिकरणादिगुणसम्पन्नमन्नं लभ्यते, तथापि कालविपर्य्ययप्रज्ञापराधासात्म्यशब्दरूपरसस्पर्शगन्धाः सन्त्येवाहारजन्यबलादिविरोधकाः। यदाह "सन्ति ह्याहारजन्या

भवन्ति चात्र।

गुरु पिष्टमयं तस्मात् तण्डुलान् पृथुकानपि।
न जातु भुक्तवान् खादेन्मात्रां खादेद्बुभुक्षितः॥
वल्लूरं शुष्कशाकानि शालूकानि बिसानि च।
नाभ्यसेद्गौरवान्मांसं कृशं नैवोपयोजयेत्॥

गङ्गाधरः—आचार्य्याणामयमाशयः—पूर्व्वव्याख्यातार्थोपसंहरणार्थं "तत्र श्लोकः" इति करोति, प्रमाणार्थमधिकार्थञ्च "भवन्ति चात्र" इति करोति, इति व्याख्यातार्थातिरिक्तं वक्तुमाह भवन्ति चात्रेति। अत्राधिकार्थाः श्लोका भवन्ति सन्ति। के ते इत्याह—गुरु पिष्टेत्यादि। पिष्टमयं पिष्टविकारः, गुरु गौरवशालि, जातु कदाचित्, न खादेत् भुक्तवान् मात्रां खादेत् बुभुक्षितोऽतिमात्रया न खादेदित्यर्थः। तस्मात् गुरुत्वात् तण्डुलान् जातु कदाचिदपि न खादेत्; भुक्तवान् मात्रामपि न खादेत् बुभुक्षितोऽतिमात्रां न खादेदित्यर्थः। पृथुकानपि चिपिट इति लोके प्रसिद्धान्, तस्मादपि गुरुत्वात् न जातु खादेत् कदापि न खादेत्; भुक्तवान् मात्रया न खादेत्, बुभुक्षितोऽतिमात्रया न खादेदित्यर्थः। नन्वेवञ्चेत् तदा कदापि कोऽपि किं पिष्टमयादिकं न खादेदित्याशङ्क्याह—बुभुक्षित इति। बुभुक्षितः पुरुषः मात्रामनपायिपरिमाणसंख्यां कुक्षेरप्रपीडनादिलक्ष्यां खादेत् पिष्टमयादीनां गुरुद्रव्याणां बोध्यम्।

न केवलं पिष्टमयादिकं न जातु खादेत्, वल्लूरादिकं नाभ्यसेत्, तदाह—वल्लूरमित्यादि। वल्लूरं शुष्कमांसं नाभ्यसेत् निरन्तरं नोपयुञ्ज्यात्; कस्मादित्याह—गौरवादिति। शुष्कशाकान्यपि गुरुत्वात्, शालूकानि

अपि रोगप्रकृतयः" इति। तेन मात्रापरिगृहीताः शुभा अपि प्रकृत्यादयः प्रायोबलादिहेतवो भवन्तीति मात्रावदाहारस्तुत्यर्थम् अवश्यम् इति कृतम्। सुखयुक्तमायुः सुखायुः, यदि वा सुखमायुश्चेति मन्तव्यं, स्वरूपेणापि चायुर्द्वयमिति प्राक् प्रतिपादितमेव ॥ ३।४ ॥

भवन्ति चात्रेति। तन्त्रकारस्य समयोऽयं, यत्—पूर्व्वव्याख्यातार्थसंग्रहार्थं यदा श्लोकेन वक्तुमारभते तदा 'भवन्ति चात्र' इति करोति। पिष्टमयं पिष्टविकारः, तस्मादिति गुरुत्वात्, पृथुकाश्चिपिटा इति लोकप्रसिद्धाः। न जातु कदाचित्, मात्रां खादेदित्यनपायिपरिमाणवन्तं खादेत्। वल्लूरं शुष्कमांसं, नाभ्यसेत् न निरन्तरमुपयुञ्ज्यात्। अनभ्यासहेतुमाह—गौरवादिति।

कूर्च्चिकांश्च किलाटांश्च शौकरं गव्यमामिषम् * ।
मत्स्यान् दधि च माषांश्च यवकांश्च न शीलयेत् ॥ ५ ॥
षष्टिकान् शालिमुद्गांश्च सैन्धवामलके यवान् ।
आन्तरीक्षं पयः सर्पिर्जाङ्गलं मधु चाभ्यसेत् ॥

कुमुदादीनां कन्दा बिसानि मृत्तिकाधःस्थितक्षुद्रावरोहवन्मृणालानि गुरुत्वात् नाभ्यसेत्। मांसं कृशं व्याध्यादिभिरपुष्टानां मृगादीनां कृशानां मांसं कृशं मांसं कृशसम्बन्धित्वमेवानुपयोगे मांसस्य हेतुरुन्नेयः। कूर्च्चिकादींश्च न शीलयेत् न सततमुपयुञ्जीत। गौरवादेवेत्यर्थः। कूर्च्चिकान् इति तक्रसहितं पक्वं क्षीरं कूर्च्चिकः ; तस्य पिण्डाकारः। किलाट आतृप्तक्षीरस्य घनो भागः क्षीरस इत्याख्यः। शौकरमामिषं शूकरमांसं तत्साहचर्य्यात् गव्यमपि आमिषमित्यन्वयः। आमिषशब्दो मांसे वर्त्तते। यवकः शूकधान्यविशेषोऽतिशयमपथ्यतमत्वेन स्वयं वाच्यः न तु यवः ॥ ५ ॥

गङ्गाधरः— सततनाभ्यास्यानाह षष्टिकानित्यादि। इहादौ षष्टिकः पठ्यते रक्तशालिमपेक्ष्याप्राधान्येनान्यापेक्षया प्राधान्यख्यापनार्थम्। सैन्धवस्य सततमभ्यासवचनमेतत् भोज्यव्यञ्जनादिसंस्कारकतया बोध्यमन्यथा त्रीणि द्रव्याणि नोपयुञ्जीत "पिप्पल्यो लवणं क्षारः" वक्ष्यमाणविशेषविरोधः स्यात्। यवानिति यवः प्रसिद्धः न तु यवकः। आन्तरीक्षं जलमिति शेषः। पयः क्षीरं, सर्पिर्घृतं, जाङ्गलं जङ्गलदेशभवा मृगादयो जाङ्गलास्तेषां मांसं जाङ्गलम्। मधु माक्षिकम्। अभ्यसेत्। अभ्यस दीप्तिग्रहणगतिष्विति धातो रूपम्।

मांसं कृशमपुष्टं रोगादुपरतमृगादिसम्भवमित्यर्थः, एतच्चाप्यपुष्टत्वादेव निषिद्धं, न गौरवादिति बुध्यते। कूर्च्चिकः क्षीरेण समं दधि तक्रं वा पक्वकिलाटः, कूर्च्चिकापिण्डो नष्टक्षीरस्य घनो भाग इत्यन्ये। शौकरमिति शूकरमांसं, शूकरसाहचर्य्यात् गव्यमहिषे अपि मांसे एव बोद्धव्ये, यवकः शूकधान्यविशेषः, वक्ष्यति हि "यवकः शूकधान्यानाम् अपथ्यतमत्वेनाप्रकृष्टतमो भवति" इति ॥ ५ ॥

चक्रपाणिः—अभ्यस्यान् दर्शयति षष्टिकानित्यादि। इह षष्टिरादौ पठ्यते रक्तशालिकमनु प्रधानत्वख्यापनार्थम्। आन्तरीक्षमिति आन्तरीक्षं पानीयं, पयः क्षीरं। जाङ्गलमिति जाङ्गलदेशभवं मृगादिमांसम्। इह सैन्धवाभ्यासोऽन्नसंस्कारत्वेन मात्रयाऽभिप्रेतः, तेन "त्रीणि

---

* गव्यमाहिषे इति क्वचित् पाठः।

तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्त्तते ।
अजातानां विकाराणामनुत्पत्तिकरञ्च यत् ॥ ६ ॥

मात्राशनस्य स्वास्थ्यहेतुत्वेन वह्निसाम्यरक्षणादिकरत्वेन स्वास्थ्यपालनोपायोपदेश आरब्धः, स चातिबाहुल्यो वाच्यश्चेत् तदातिगौरवं ग्रन्थोऽयमावहतीति अनुक्तं स्वास्थ्यरक्षणार्थमुपायं सूत्रयितुमाह—तच्चेत्यादि । स्वास्थ्यमिति स्वः स्वीयोऽविकृतो धर्म्मस्तस्मिंस्तिष्ठतीति स्वस्थस्तस्य भावः स्वास्थ्यं स्वाभाविकत्वादिकं धातुसाम्यमिति यावत् । येनाहारेण विशुद्धेन क्षीयमाणशरीरपोषणकरेण च स्वास्थ्यमनुवर्त्तते तच्च सर्व्वमुपयुञ्जात् । यथा प्रदीपस्नेहवर्त्तिक्षयोन्मुखे प्रदीपक्षयभिया स्नेहवर्त्तिदानात् प्रदीपोऽनुवर्त्तते, एवं वातादिप्रत्यवायहेतुपरिहारेण स्वास्थ्यमनुवर्त्तते । तथा अजातानां विकाराणामुत्पत्तिकराः प्रज्ञापराधपरिणामासात्म्येन्द्रियार्थसंयोगास्तेभ्योऽन्यद् यच्च तत्र सर्व्वं प्रयुञ्जीत, प्रज्ञापराधादिभिरव्यवहारपरिहारं कुर्य्यात् तेन स्वास्थ्यमनुवर्त्तते इति । अत एव कालस्वभावजदोषसञ्चयादिनिर्हरणादिकं वक्ष्यति, तेनेन संगृहीतमिति ॥ ६ ॥

द्रव्याणि नात्युपयुञ्जीत पिप्पल्यो लवणं क्षारः' इति यद्वक्ष्यति, तेन समं विरोधो न भवति तत्र लवणातियोगस्य प्रतिषिद्धत्वात् ।

मात्राशीत्यादिना स्वास्थ्यपरिपालनोपाय उच्यते । अतिबहु च स्वस्थपरिपालनं तत्र वक्तव्यं, सर्व्वेहाभिधीयमानं ग्रन्थगौरवमावहति, अनभिधीयमानञ्च ग्रन्थस्य न्यूनतामापादयति । अतस्तत् सूत्रमात्रेणोपदेष्टुमाह—तच्चेत्यादि । सुष्ठु निर्व्विकारत्वेनावतिष्ठत इति स्वस्थः तस्य भावः स्वास्थ्यमुद्रेकधातुवैषम्यविरहितधातुसाम्यमित्यर्थः, तच्च स्वास्थ्यमुभयथा परिपाल्यते विशुद्धाहाराचाराभ्यां सदा क्षीयमाणशरीरपोषणेन प्रत्यवायहेतुपरिहारेण च, यथा दीपपरिपालनं स्नेहवर्त्तिदानात् पोषणेन क्रियते तथा शलभवातादिनिर्व्वापकहेतुपरिहारेण च । शरीरप्रत्यवायहेतुश्च द्विविधः बुद्धिदोषादिप्रभवशरीरन्यासादिर्ग्लानादिकारकः, दुष्परिहरश्च कालविशेषः स्वभावादिह हेमन्तादिः कफचयादिकारकः ; तत् श्लोकपूर्व्वार्द्धेन स्वास्थ्यपोषकहेतुमाह, उत्तरार्द्धेन तु अजातानामित्यादिना स्वास्थ्यविघातकहेतुपरिहारमाह । यद्यपि चाजातानां विकाराणामनुत्पत्तिः स्वभावसिद्धा विद्यत एव, विद्यमानायाञ्च करोत्यर्थो मुख्यो नास्ति, तथापीदमेवाजातविकाराणामनुत्पत्तिकरणं यत् तद्विकारहेतुपरिहरणं तथा दुष्परिहरकालविशेषजनितदोषहरणम् । यथा वक्ष्यति, "माधवप्रथमे मासि नभस्यप्रथमे पुनः । सहस्यप्रथमे चैव वाहयेद् दोषसञ्चयम् ॥" तथा हेत्वन्तरनिरपेक्षात् पच्यमानचक्षुःश्लेष्महरणार्थमञ्जनम् । एवमादि ॥ ६ ॥

अत ऊर्द्ध्वं शरीरस्य कार्य्यमभ्यञ्जनादिकम्।
स्वस्थवृत्तमभिप्रेत्य गुणतः संप्रवक्ष्यते॥
सौवीरमञ्जनं नित्यं हितमक्ष्णोः प्रयोजयेत्।
पञ्चरात्रेऽष्टरात्रे वा स्रावणार्थे रसाञ्जनम्॥ ७॥

गङ्गाधरः—अथ स्वास्थ्यपालनार्थमाहारविधिमुपदिश्य शारीरकार्य्यमुपदिशति—अत ऊर्द्ध्वमित्यादि। अतो मात्राशनविध्युपदेशात् ऊर्द्ध्वमनन्तरं शरीरस्य चक्षुरादेः सम्बन्धे यदवश्यं कार्य्यमञ्जनादिकमपि तत् स्वास्थ्यवृत्तं नातिस्फुटधातुवैषम्येऽपि नातिबाधाभाववृत्तं न तु व्याधितवृत्तमभिप्रेत्य गुणतः कर्म्मणा प्रवक्ष्यते तेनास्मिन् यदञ्जनादिकं व्याधिविशेषहरत्वेनापि प्रशंसितव्यं तन्न विरुध्यते व्याधितवृत्ततयाऽभिप्रेतत्वाभावादिति, गुणतः कर्म्मतः संप्रवक्ष्यमाणत्वेन प्रतिज्ञानत्वाच्च। अत्र चक्षुषोऽङ्गेषु सर्व्वेषु प्राधान्यात् तत्कार्य्यमञ्जनं प्रथममुपदिश्यत इति सौवीरमित्यादि। सुवीरा नदी तस्यां जातमञ्जनं नित्यं प्रत्यहमक्ष्णोरक्षिगोलकयोः प्रयोजयेत्। कस्मादित्याह—हितमर्थादेवाक्ष्णोः, हितमिति वचनेन चक्षुस्तेजोरक्षणं न तु चक्षुर्गतदोषनिर्हरणमिति बोध्यम्। चक्षुर्दोषनिर्हरणार्थमाह—पञ्चेत्यादि। अक्ष्णोः स्रावणार्थं पञ्चरात्रेऽष्टरात्रे वा रसाञ्जनं प्रयोजयेत्। पञ्चाष्टविकल्पस्तु चक्षुर्दोषबल्पाबल्यापेक्षया स्रावणार्थं रसाञ्जनाञ्जनप्रयोगे पञ्चाष्टान्यतररात्रादूर्द्ध्वं मध्यश्च कालनियमदर्शनार्थम्। पञ्चदिनेऽष्टदिने वेति न कृत्वा रात्रान्तत्वेन निर्देशात् स्रावणार्थाञ्जनस्य रात्रावेव प्रयोग इति ज्ञापितम्॥ ७॥

चक्रपाणिः—अत ऊर्द्ध्वमित्यादि। अतः स्वास्थ्यानुवृत्तिकारणकथनादूर्द्ध्वं, कार्य्यमवश्यं कार्य्यं स्वस्थवृत्तिमभिप्रेत्य, स्वस्थवृत्तानुष्ठानेऽस्याञ्जनाद्यवश्यं कार्य्यमित्यर्थः; अञ्जनशब्दोऽभ्यञ्जनेऽपि वर्त्तते, तदर्थमभ्यञ्जनादित्युक्तम्। अञ्जनमेवादावुपदिष्टं प्रधानावयवचक्षुःपरिपालकत्वात्, उक्तञ्च "चक्षुः प्रधानं सर्व्वेषामिन्द्रियाणां विदुर्बुधाः। धमनीहारयुक्तानां ज्योतिषामिव भास्करः॥" यदि वा स्वस्थवृत्तमधिकृत्य यदञ्जनादि तदुच्यते, रोगेषु तु यदञ्जनादि, तत् तच्चिकित्सासु वक्तव्यं; यद्यपि चैतदञ्जनादि रोगहरमपि वक्तव्यं, तथापि प्रायः स्वस्थवृत्तमवेतदिति स्वस्थवृत्तमभिप्रेत्येत्युक्तम्। सौवीरेत्यादि। सुवीरानदीभवं सौवीरं, नित्यं प्रत्यहम्, अक्ष्णोरिति द्विवचनमक्षिगोलकद्वयेऽप्यञ्जनविधानार्थम्। पञ्चरात्राष्टरात्रग्रहणं वृत्तान्तरकाले नियमदर्शनार्थं, तेन दोषकालमपेक्ष्याष्टाह मध्ये त्र्यहं वा कर्त्तव्यं स्रावणमञ्जनमिति भवति॥ ७॥

चक्षुस्तेजोमयं तस्य विशेषात् श्लेष्मतो भयम् ।
दिवा तन्न प्रयोक्तव्यं नेत्रयोस्तीक्ष्णमञ्जनम् ॥
विरेकदुर्ब्बला दृष्टिरादित्यं प्राप्य सीदति ।
तस्मात् स्राव्यं निशायान्तु ध्रुवमञ्जनमिष्यते ॥
ततः श्लेष्महरं कर्म्म हितं दृष्टेः प्रसादनम् ॥ ८ ॥

गङ्गाधरः—तत्र दिनप्रयोगे दोषं दर्शयति चक्षुरित्यादि । चक्षुरिन्द्रियं तेजोमयं तेजोविकारभूतं तस्य चक्षुरिन्द्रियस्य तेजोमयस्य शारीरस्य शारीरदोषवातपित्तकफेभ्यो भयं भवति, तत्रापि विशेषेण वातपित्तापेक्षया चक्षुषस्तैजसस्य विरोधिगुणादाप्यत्वेन श्लेष्मतो भयमपि विशेषेणाधिकत्वेन भवति । तस्य च श्लेष्मणो जयार्थं संशोधनं प्रधानं, तदिह स्रावणार्थं रसाञ्जनं तीक्ष्णमञ्जनं दिवा दिनकरकिरणाधिकरणे काले नेत्रयोर्न प्रयोक्तव्यम् ।

ननु दिनं तैजसं चक्षुश्च तैजसं तयोः सामान्याद्रसाञ्जनस्य च तीक्ष्णत्वेन तयोः सामान्यात् श्लेष्मतो विपर्य्ययत्वेन विशेषात् श्लेष्मजये दिन एव रसाञ्जनस्य तीक्ष्णस्याञ्जनप्रयोगः प्रशस्यते ; कथं निषिध्यते इत्यत आह—विरेकदुर्ब्बलेत्यादि । दिनरसाञ्जननेत्राणां सामान्येऽपि श्लेष्मतो विशेषेण विरोधित्वेऽपि दिने नेत्रयोस्तीक्ष्णाञ्जनप्रयोगेण दोषविरेचनात् दुर्ब्बला भवति दृष्टिरिन्द्रियं तदाऽपरतीक्ष्णमादित्यं न सहते यदि च प्राप्नोति सूर्य्यकिरणसंयोगेन युक्ता स्यात् तदा तदिन्द्रियार्थतीक्ष्णातियोगात् सीदति । तस्मात् विरेकदुर्ब्बलदृष्ट्यादित्यकरप्रासप्रसाददोषात् स्राव्यं विरेचनयोग्यं श्लेष्मतो भयमाशङ्क्य तैजसं चक्षुर्निशायां ध्रुवमवश्यं स्राव्यं स्रावयेत् । तु पुनरञ्जनं स्रावणाञ्जनं निशायामिष्यते इति कश्चित् । वस्तुतस्तस्मादुक्तदोषात् स्राव्यं स्रावाय

चक्रपाणिः—स्रावणाञ्जनप्रकरणोपपत्तिमाह—चक्षुरित्यादि । चक्षुरिन्द्रियस्य तैजसस्य श्लेष्मत आप्यात् तैजसविरुद्धत्वेन हेतुना, विशेषादिति वातपित्तभयादधिकत्वेन भयं भवति, श्लेष्मजये च स्रावणं प्रधानं तस्मात् स्राव्यमित्यर्थः । स्रावणाञ्जनकालं नियमयति—निशायामित्यादि । ध्रुवमवश्यं निशायामेव, अञ्जनं प्रत्यासन्नत्वात् स्रावणाञ्जनम् । जतूकर्णेनापि स्रावणरसाञ्जनं निशायामेव विहितं, यदुक्तं "सप्ताहाद्रसाञ्जनं नक्तम्" इति ; शालाक्येऽप्युक्तं "विरेकदुर्ब्बला दृष्टिरादित्यं प्राप्य सीदति । रात्रौ सुप्तगुणाच्चाक्षि पुष्यत्यञ्जनकर्षितम् ॥" सौवीराञ्जनन्तु विरेचनं न भवति, चक्षुःप्रसादमात्रं करोति ; तेनैतद्दिवा क्रियमाणं न विरोधि ।

यथा हि कनकादीनां मलिनां * विविधात्मनाम्।
धौतानां निर्म्मला शुद्धिस्तैलचेलकचादिभिः॥
एवं नेत्रेषु मर्त्यानामञ्जनाश्च्योतनादिभिः।
दृष्टिर्निराकुला भाति निर्म्मले नभसीन्दुवत्॥ ९॥

यदञ्जनं तत् स्राव्यमञ्जनं निशायान्तु रात्रावेव सौम्यत्वेन ध्रुवमिष्यते निरपायमिष्यते स्रावणानन्तरदुर्बलत्वेऽपि दृष्टेस्तेजोमय्यास्तीक्ष्णाञ्जनयोगेन जातोपतापविरोधिगुणत्वान्निशायाः सौम्याया इत्यर्थः। अन्ये तु ध्रुवमञ्जनं नित्यप्रयोक्तव्यमञ्जनं सौवीरमञ्जनम् इत्यते। यस्मात्तेजोमयं चक्षुस्तस्मात् दिवा नेत्रयोश्चक्षुर्गोलकयोस्तीक्ष्णमञ्जनं न प्रयोक्तव्यं, यस्मात् चक्षुस्तेजोमयं तस्य विशेषात् यत् श्लेष्मणो भयं भवति तत विरेकदुर्ब्बला दृष्टिर्विरेकेण श्लेष्मणो निर्हरणेन दुर्ब्बलो दोषः श्लेष्मा यत्र सा, आदित्य तेजोमयमादित्यकिरणं श्लेष्मविरोधिनं प्राप्य सीदति शेषमवजयति। तस्मादादित्ये दिनकरकिरणे चक्षुःस्राव्यं वमनवत् पूर्व्वाह्णे निशायान्तु ध्रुवमञ्जनमिष्यते। श्लेष्मनिर्हरणानन्तर श्लेष्महर दृष्टिप्रसादनं प्रसन्नताकरं कर्म्म हितमिष्यते इत्यर्थः॥ ८॥

गङ्गाधरः ननु कस्मान्नित्याञ्जनस्रावणार्थाञ्जने उपदिशतीत्याशङ्कायां दृष्टान्तपूर्व्वकमुक्तनित्यहिताञ्जनस्रावणार्थाञ्जनयोः कर्म्माह यथा हीत्यादि। हि यस्मात् मलिनानामागन्तुभूत्यादिमलवतां विविधात्मनां कनकादीनां तैजोमयानां तैलचेलकचादिभिर्धौतानां निर्म्मला शुद्धिस्तादृशमलाभावात् शुद्धिः स्वाभाविकी तैजसता यथा भाति एवम्, तथा नेत्रेषु अञ्जनाश्च्योतनादिभिः। अञ्जनं नित्यहिताञ्जनं, स्रावणार्थाञ्जनं शलाकाञ्जनादि, आश्च्योतनं नेत्रविरेकार्थं द्रवौषधप्रयोगः। आदिना पुटपाकादिः। तैर्निराकुला निर्म्मला वातादि-

अन्ये तु व्याख्यानयन्ति ध्रुवं नित्यकर्त्तव्यं सौवीराञ्जनं यत् तन्निशि कर्त्तव्यं, स्रावणाञ्जनन्तु श्लेष्मोद्रेकविषये वमनवत् पूर्व्वाह्ण एव कर्त्तव्यम्॥ ८॥

चक्रपाणिः अञ्जनगुणमाह यथा हीत्यादि। शुद्धिः स्वाभाविकी साऽऽगन्तुभूत्याद्यपनयने निर्म्मला सती भाति। आश्च्योतनं नेत्रविरेकार्थं द्रवौषधदानं, तच्चेहाभिहितमपि कल्पस्थानेऽभिहितम्। आदिशब्देन पुटपाकादीनां ग्रहणम्॥ ९॥

* मणानामिति क्वचित् पाठः।

हरेणुकां प्रियङ्गुञ्च पृथ्वीकां केशरं नखम्।
ह्रीवेरं चन्दनं पत्रं त्वगेलोशीरपद्मकम्॥
ध्यामकं मधुकं मांसीं गुग्गुल्वगुरुशर्करम्।
न्यग्रोधोडुम्बराश्वत्थ-प्लक्षलोध्रत्वचः शुभाः॥
वन्यं सर्ज्जरसं मुस्तं शैलेयं कमलोत्पले।
श्रीवेष्टकं शल्लकीञ्च शुकबर्हमथापि च॥
पिष्ट्वा लिम्पेच्छरेषीकां तां वर्त्तिं यवसन्निभाम्।
अङ्गुष्ठसंमितां कुर्य्यादष्टाङ्गुलसमां भिषक्॥

दोषदुष्ट्यभावात् दृष्टिर्भाति। दृष्टान्तान्तरमाह—नभसीत्यादि। अनेन दृष्टान्तेन दृष्टेस्तेजोमयत्वेऽपि मण्डलस्य सौम्यत्वमपि ख्यापितं चन्द्रमण्डलवत्॥ ९॥

गङ्गाधरः—अथाञ्जनप्रयोगानन्तरं दृष्टेः प्रसादनं श्लेष्महरं कर्म्म हितमिति यदुक्तं तत्तु शालाक्येऽप्युक्तम्—"तीक्ष्णाञ्जनेनाञ्जितलोचनस्य यः सम्प्रदुष्टो न निरेति नेत्रात्। श्लेष्मा शिरःस्थः स तु पीतमात्रं धूमे प्रशान्तिं लभते क्षणेन॥" इति; स्वयमपि वक्ष्यति "नावनाञ्जननिद्रान्ते चात्मवान् धूमपो भवेत्" इति। तेनाञ्जनानन्तरं धूममाह—हरेणुकामित्यादि। हरेणुका रेणुकेति ख्याता, प्रियङ्गुः स्वनामख्याता, पृथ्वीका कृष्णजीरकं, केशरं नागकेशरं, नखं नखी, ह्रीवेरं वालकं, चन्दनमत्र श्वेतं, पत्रं तेजपत्रं, त्वक् गुडत्वक्, एला स्थूला, उशीरं वीरणमूलं, पद्मकं पद्मकाष्ठं, ध्यामकं गन्धतृणं, मधुकं यष्टीमधु, मांसी जटामांसी, गुग्गुलुः पुरः, अगुरुः कृष्णागुरुः, शर्करा सिता, समाहारद्वन्द्वत्वात् क्लीवमेकवचनञ्च। न्यग्रोधादीनां लोध्रान्तानां पञ्चानां शुभा भद्रास्त्वचः वल्कलानि। वन्यं कैवर्त्तमुस्तकं, सर्ज्जरसं धूनकः, मुस्तं भद्रमुस्तकं, शैलेयं शैलजं, कमलोत्पले पद्मकुमुदे तयोः किञ्जल्कः, श्रीवेष्टकं नवनीतखोटी। शल्लकी शिलारस इति लोके, शुकबर्हं ग्रन्थिपर्णम्। एतानि सर्व्वाणि जलेनानुक्तत्वात् पिष्ट्वा

चक्रपाणिः—इदानीमञ्जनान्ते धूमपानं विधास्यति "नावनाञ्जननिद्रान्ते" इत्यादिना; अतोऽञ्जनानन्तरं धूमोऽभिधीयते, उक्तञ्च शालाक्ये—"तीक्ष्णाञ्जनेनाञ्जितलोचनस्य यः सम्प्रदुष्टो न निरेति नेत्रात्। श्लेष्मा शिरःस्थः स तु पीतमात्रे धूमे प्रशान्तिं लभते क्षणेन॥" हरेणुकामित्यादि।—हरेणुका रेणुका, पृथ्वीका कृष्णजीरकं, केशरं नागकेशरं, पद्मकं पद्मकाष्ठं, ध्यामकं गन्धतृणं, न्यग्रोधादीनां लोध्रान्तानां त्वचस्तासां विशेषणं शुभा इति, वन्यं कैवर्त्तमुस्तकं, शुकबर्हं

शुष्कां विगर्भां तां वर्त्तिं धूमनेत्रार्पितां नरः।
स्नेहाक्तामग्निसंप्लुष्टां पिबेत् प्रायोगिकीं सुखाम् ॥ १० ॥
वसाघृतमधूच्छिष्टैर्युक्तियुक्तैर्वरौषधैः।
वर्त्तिं मधुरकैः कृत्वा स्नैहिकीं धूममाचरेत् ॥ ११ ॥

शरेषिकां शरपुष्पस्य नाम्नी शरिकेति प्रसिद्धा तां लिम्पेत् वक्ष्यमाणां वर्त्तिं यवसन्निभामित्याद्यनुवादात् जलपिष्टैर्हरेणुकादिभिर्भेषजैर्यवाकारा मध्यस्थूला प्रान्तद्वयसूक्ष्मा तथाङ्गुष्ठाङ्गुलिवत् स्थूला अष्टाङ्गुलदीर्घा वर्त्तिर्यथा भवति तथा लिम्पेत्। तां वर्त्तिं यवाकारादिरूपां शुष्कां शुष्कीकृत्य शरेषिकामाकृष्य विगर्भां कृत्वा स्नेहेनाक्तामभ्यज्य वक्ष्यमाणधूमनेत्रे धूमपाननलिकायां षट्त्रिंशदङ्गुलिमितायां त्रिकोषाकलितायाम् अर्पितां तच्छिद्रे प्रविष्टमेकमग्रं यस्यास्ताम् अग्निसंप्लुष्टामन्यस्मिन्नग्रेऽग्निना दह्यमानां सुखां सुखजनिकां प्रायोगिकीं पिबेत्। एतेन प्रायोगिकोऽयं धूमः प्रयोगः प्रतिदिनमभ्यासस्तस्यैव पेयत्वमस्य संज्ञा प्रायोगिक इति तद्धूमाय वर्त्तिः प्रायोगिकीति संज्ञा ॥ १० ॥

गङ्गाधरः—धूमप्रसङ्गात् रूक्षस्य स्वस्थस्य स्नैहिकधूमवर्त्तिमाह वसेत्यादि। वसा जन्तुस्नेहः, घृतं सर्पिः, मधूच्छिष्टं सिक्थकं, तैर्युक्तिना युक्तैर्भिषजा युक्त्या यथायोग्यं वर्त्तिकरणोचितैः प्रयोजितैरिह वरौषधैरुत्तमौषधैर्मधुरकैर्जीवनीयगणद्रव्यैः पिष्टैः कृतां वर्त्तिं स्नैहिकीं रूक्षस्य स्नेहनकारिणीम्। धूममाचरेत्। पानवत् स्वनलिकार्पितामग्निसंप्लुष्टामित्यनुवर्त्तते। एष धूमः स्नैहिको रूक्षस्य स्वस्थस्य स्नेहनविधानार्थं न तु सतताभ्यासार्थम् ॥ ११ ॥

ग्रन्थिपर्णकं, शरेषीका शरपुष्पस्य नाला शरिकेति प्रसिद्धा। अत्र विधानं—पिष्टैर्भेषजैः शरिका तथा वेष्टयितव्या यथाऽष्टाङ्गुलायताऽङ्गुष्ठपरिणाहा च वर्त्तिः स्यात्, तां च शुष्कां सतीं वर्त्तिं शरेषीकामाकृष्य स्नेहेनाभ्यज्याग्निनैकस्मिन्नग्रेऽवदह्यमानां वक्ष्यमाणधूमपाननलिकायां मूलरन्ध्रे निवेश्यातो धूमः पेयः। प्रायोगिकी च नित्यपेयवर्त्तिसंज्ञा। सुखामित्यनेनास्य दुःखकर-मनन्ययत्वञ्च दर्शयति ॥ १० ॥

चक्रपाणिः—स्नैहिकधूमवर्त्तिमाह—वसेत्यादि। मधूच्छिष्टं सिक्थकं, वरौषधैरिति मधुरक-विशेषणं, मधुरकाणि जीवनीयानि जीवकर्षभकादीनि। युक्तियुक्तैरित्यनेन तथा वसादिग्रहणं कर्त्तव्यं यथा वर्त्तिः कर्त्तुं पार्य्यते इति दर्शयति। वर्त्तिकरणञ्च पूर्व्ववत्। स्नैहिकी स्नेहनकारिका ॥ ११ ॥

श्वेता ज्योतिष्मती चैव हरितालं मनःशिला ।
गन्धाश्चागुरुपत्राद्या धूमो मूर्द्धविरेचनम् ॥ १२ ॥
गौरवं शिरसः शूलं पीनसार्द्धावभेदकौ ।
कर्णाक्षिशूलं कासश्च हिक्काश्वासौ गलग्रहः ॥

गङ्गाधरः—मूर्द्धि बद्धकफस्य स्वस्थस्य शिरोविरेचनार्थं वैरेचनिकधूमपानवर्त्तिं दर्शयति श्वेतेत्यादि। श्वेता श्वेतापराजिता, ज्योतिष्मती लताफुटकी, हरितालं द्विधा तत्र सपत्रमुत्तमम्, मनःशिला कुनटी, गन्धाश्चागुरुपत्राद्या ज्वरचिकित्सिते अगुर्व्वादितैलद्रव्याणि अगुरुकुष्ठतगरपत्रेत्यादिनोक्तानि यानि तानि अगुरुसहितपत्रादीनि कुष्ठतगरवर्ज्जितानि जलेन पिष्ट्वा उक्तरूपा वर्त्तिः कृता मूर्द्धविरेचनधूमो भवतीति वैरेचनिकी वर्त्तिरियं शिरोविरेचनधूमार्था इति तां वर्त्तिं यवसन्निभामित्यादि अङ्गुष्ठसम्मितामित्यन्तमत्राप्यनुवर्त्तते। अत्र कुष्ठतगरवर्ज्जनं मस्तुलुङ्गस्रावभयात्। वक्ष्यति च "धूमवर्त्तिं पिबेद्गन्धैरकुष्ठतगरैस्तथा" इति। शालाक्येऽपि "नतकुष्ठे स्रावयतो धूमवर्त्तिप्रयोजिते। मस्तुलुङ्गं विशेषेण ते तस्मान्नैव योजयेत्।" सुश्रुतेऽप्युक्तम् "एलादिना तगरकुष्ठवर्ज्जम्" इति ॥ १२ ॥

गङ्गाधरः—धूमवर्त्तित्रयपाने धूमगुणानाह गौरवमित्यादि। गौरवं नातिस्फुटत्वानादिवैषम्ये धातुसाम्यवद्व्यवहारात् नातिबाधाभावाच्च यच्छिरसो गौरवशूलादयस्ते सर्व्वे धूमपानात् प्रशाम्यन्ति। एतेन धातुवैषम्ये व्याधित्वदशायामपि सुतरां शिरोगौरवादयः प्रशाम्यन्तीति लभ्यते। एवं सर्व्वत्र

चक्रपाणिः—वैरेचनिकधूमपानवर्त्तिं दर्शयति—श्वेतेत्यादि। श्वेताऽपराजिता, गन्धाः सुगन्धद्रव्याणि, तेषां विशेषणमगुरुपत्राद्याः, अगुरु च पत्राद्याश्च अगुरुपत्राद्याः; अगुरुपत्राद्याश्च ज्वरे वक्ष्यमाणाः 'अगुरुकुष्ठतगरपत्र' इत्यादिना मन्तव्याः। अगुर्व्वाद्या इति न कृतं कुष्ठतगरयोरतितीक्ष्णत्वेन मस्तुलुङ्गस्रावभयात् परिहारार्थं, वक्ष्यति च त्रिमर्म्मीये "धूमवर्त्तिं पिबेद् गन्धैरकुष्ठतगरैस्तथा"। शालाक्येऽप्युक्तं "नतकुष्ठे स्रावयतो धूमवर्त्तिप्रयोजिते। मस्तुलुङ्गं विशेषेण तस्मात् ते नैव योजयेत्।" सुश्रुतेऽप्युक्तम् "एलादिना तगरकुष्ठवर्ज्जेन" इति ॥१२॥

चक्रपाणिः—धूमपाने गुणान् दर्शयति—गौरवमित्यादि। शिरोरुहाः केशाः; कपालाश्च शिरस

दन्तदौर्बल्यमास्रावः स्रोतोघ्राणाक्षिदोषजः * ।
पूतिघ्राणास्यगन्धश्च दन्तशूलमरोचकः ॥
हनुमन्याग्रहः कण्डूः क्रिमयः पाण्डुता मुखे ।
श्लेष्मप्रसेको वैस्वर्य्यं गलशुण्ड्युपजिह्विका ॥
खालित्यं पिञ्जरत्वञ्च केशानां पतनं तथा ।
क्षवथुश्चातितन्द्रा च बुद्धेर्मोहोऽतिनिद्रता ॥
धूमपानात् प्रशाम्यन्ति बलं भवति चाधिकम् ।
शिरोरुहकपालानामिन्द्रियाणां स्वरस्य च ॥
न च वातकफात्मानो बलिनोऽप्यूर्द्ध्वजत्रुजाः ।
धूमवक्त्रकपानस्य † व्याधयः स्युः शिरोगताः ॥१३॥

स्वास्थ्यानुवृत्त्यव्याधिहरणकर्म्मप्रशंसायां वाच्यम्। आस्रावः स्रोतोघ्राणाक्षिदोषज इति योज्यम्। स्रोतो मुखस्रोतो नव महानरन्ध्राणि वा तत्रापि घ्राणाक्षीति विशेषेण नासानयनदोषजस्रावप्रशमनबोधनार्थम्। घ्राणास्ययोर्गन्धः, स च पूतिः। केशानां पिञ्जरत्वं रक्तवर्णत्वेनातिकुञ्चितत्वं तथा पतनम्। बुद्धेर्मोहो मनोमोहः बुद्धिस्थानत्वेन मनसो बुद्धिशब्दवाच्यत्वात्। शिरोरुहाः केशाः, शिरसश्च कपालानि, तेषाम् इन्द्रियाणां बुद्धीन्द्रियाणां स्वरस्य चाधिकं बलं भवतीति योज्यम्। बलिनोऽपीति बलवत्कारणजाता अपि वातकफात्मानो व्याधय ऊर्द्ध्वजत्रुजा जत्रूर्द्ध्वदेशकण्ठास्यकर्णनासाक्षिशिरोभवास्तत्रापि विशेषेण शिरोगता न च स्युः तदन्याङ्गजा न स्युरिति। धूमवक्त्रकपानस्य धूमस्य वक्त्रकपानं वक्त्रेण पानं यस्य तस्य तथा। मुखेन धूमं पीतवतो नासया वमनादिति भावः ॥ १३ ॥

एव, बलिनोऽपीति बलवत्कारणा इत्यर्थः। अत्र अग्रग्रहणेनैव शिरोगता अपि लब्धास्ते पुनरभिधीयन्ते विशेषाभिधानार्थम् ॥ १३ ॥

---

* स्रोतोघ्राणाक्षिदोषजः इति वा पाठः।

† धूमवक्त्रकपानस्येति क्वचित् पाठान्तरम्

प्रयोगपाने तस्याष्टौ कालाः सम्परिकीर्त्तिताः।
वातश्लेष्मसमुत्क्लेशः कालेष्वेषु हि लक्ष्यते॥
स्नात्वा भुक्त्वा समुल्लिख्य क्षुत्वा दन्तान् विघृष्य च।
नावनाञ्जननिद्रान्ते चात्मवान् धूमपो भवेत्॥

गङ्गाधरः नन्वेषां त्रीन् धूमान् स्वाभीप्सुः किं पिबेत् किं कालविशेषेण इत्याह प्रयोगपाने इत्यादि। प्रयोगपाने प्रायोगिकधूमपाने तस्य धूमवर्त्तपानस्याष्टौ कालाः प्रकीर्त्तिताः ऋष्यादिभिरिति शेषः। कस्मादष्टौ काला इत्याह वातेत्यादि। हि यस्मादेष्वष्टसु वक्ष्यमाणस्नानानन्तरादिषु कालेष्वेव वातश्लेष्मसमुत्क्लेशो लक्ष्यते न त्वन्यस्मिन् काले, तस्मात् स्नात्वा भुक्त्वा समुल्लिख्य वमित्वा क्षुत्वा क्षवथुं कृत्वा दन्तान् विघृष्य च, नावनाञ्जननिद्रान्ते नावनान्तेऽञ्जनान्ते निद्रान्ते च आत्मवान् साधुः मनस्वी धूमपो यथा भवेत्। इति प्रायोगिकधूमपाने काला आचार्य्येण मुक्तकण्ठेनोक्ताः। स्नैहिकवैरेचनिकधूमपानकालस्तु कः इत्यत आह तथेत्यादि। तथा तेन प्रकारेणान्यस्य धूमस्येति ऊर्द्ध्वजत्रुजा वातकफात्मानो वातात्मानः कफात्मानश्च रोगा न भवन्ति। तस्येत्यनेन पूर्व्वेण पेयाः स्युरित्यादिना परेण चान्वयो बोध्यः। एतेन नैतदुक्तं भवति, शैत्येन गुणेन वायुः कुप्यति चेत् तदा वातात्मानो रोगा भवन्तीति, तदैव स्नैहिकधूमो विधेयो यदा पुरुषो रूक्षः स्यात् रौक्ष्यं भवति सति तदैव रौक्ष्यहरस्नैहिकधूमपो भवेत् तस्मात् "अस्नात्वा चाप्यभुक्त्वा च नोल्लिख्य न क्षवोद्भवे। निशि जागरणान्ते च स्नान्ते स्नैहिकं पिबेत्॥" इति बोध्यम्। तेन रौक्ष्यगुणकुपितवातात्मानो रोगा न भवन्तीति, द्वयोः कोपे त्वष्टौ कालाः। कफात्मानश्च रोगास्तदा भवन्ति यदा पुरुषोऽरूक्षः स्यात् तदैव कफवृद्धिकाले कफहरमूर्द्ध्ववैरेचनिकधूमपो भवेत्। तस्मात् स्नात्वा भुक्त्वेत्याद्यष्ट काला बोध्याः। एतेन तदपास्तं यत् परैः "प्रायोगिकधूम एव प्रायः स्वस्थवृत्ताधिकारिको न तु स्नैहिकवैरेचनिकावित्यत आचार्य्येण

चक्रपाणिः धूमपानकालं दर्शयति प्रयोगेत्यादि। प्रयोगपाने प्रायोगिकधूमपाने एतेऽष्टौ कालाः; स्नैहिकपाने तु वातवृद्ध्युपलक्षितः कालो, वैरेचनिकपाने तु श्लेष्मवृद्ध्युपलक्षितो मन्तव्यः। प्रायोगिक एव प्रायः स्वस्थवृत्ताधिकारे, तेन तत्काल एव कण्ठरवेणाभिधीयते; यदि वा प्रयोगपाने सततपाने स्वस्थाधिकार इति यावत्, तेन धूमत्रयस्याप्येते काला भवन्ति।

तथा वातकफात्मानो न भवन्त्यूर्द्ध जत्रुजाः ।
रोगास्तस्य तु पेयाः स्युरापानास्त्रिस्त्रयस्त्रयः ॥

मुक्तकाळेन प्रायोगिकधूमपानकालोऽभिहितो न त्वितरधूमपानयोः” इति व्याख्यायते । यदपि च “प्रयोगपाने सततपाने स्वस्थाधिकारीयधूमपाने इति यावत् तेन धूमत्रयस्याप्यष्टौ काला भवन्त्युक्ता अत एव तथा वातकफा इत्यादि ग्रन्थो न पुनरुक्तः स्यात् । वातात्मानः कफात्मानो वातकफात्मानश्चोर्द्ध जत्रुजा रोगाः क्रमात् स्नैहिकधूमपस्य मूर्द्धवैरेचनिकधूमपस्य प्रायोगिकधूमपस्य न भवन्ति इति व्याख्यानेन स्फुटतश्च स्यादिति” व्याख्यायते तदपि न मनोरमं स्यात् अत्र हि स्नानाद्यनन्तरं न कैवलवातकालः तत्र च स्नैहिकधूमपानं न विधीयते तस्माद्वातकफात्मानो वातश्लैष्मिका एव न तु वातात्मानः कफात्मानश्चेति उक्ताष्टकाले हि वातकफोत्क्लेशवचनात् कफस्य धूमनिषेधाच्च ।

ननस्य त्रिविधधूमं पिबतो यथाकालं धूमस्य पानमोक्षौ भवतो न वेत्यत आह—तस्य तु पेया इत्यादि । तस्य स्नात्वा भुक्त्वा इत्याद्यष्टानां कालानामेकस्मिन्नेकस्मिन् काले त्रिविधान्यतमधूमपस्य पुरुषस्य त्रिस्त्रिवारीभूतास्त्रयः कालाः पेयास्त्रिवारीभूतास्त्रयः कालाः आपानाश्च पानसीमाश्च स्युः स्नानाद्यनन्तरैककालस्य धूमाकर्षणवेलाकालत्वेन नवसंख्यायाः पानव्याप्त्याधिकरणत्वेन कर्म्मसंज्ञायां तद्राच्ये क्षणे कृताः पेया इति पदम् । धूमः पीयतेऽस्मिन् काले इति पानः पानकालः पानादा सीमा इत्यापानाः पानकालसीमाः । त्रयस्त्रय इति वीप्सायां द्विर्भावस्तेनैवाष्टसु कालेष्वेकैकस्मिन् काले इत्यर्थो लभ्यते । तथा च स्नानाद्यनन्तरमेकैकस्मिन् काले त्रिविधान्यतम एको धूमस्त्रिवारीभूतास्त्रयो नव वाराः सन्तः पेया आपानाश्च स्युरिति यथः । उभयथैव स्नानाद्यनन्तराष्टकालानामेकैकस्मिन् काले नव वारान् धूमस्य पानं मोक्षश्च इत्यष्टादश पानमोक्षा मोक्षव्यवहितपानानि नव पानव्यवधायकमोक्षाश्च नवेति फलितार्थः ।

वातकफात्मकशब्देन वातात्मानः कफात्मानो वातकफात्मानश्च गृह्यन्ते । पेयाः स्युरित्यादावापाना धूमाभ्यवहारमोक्षाः, एकैकस्मिन् स्नानादिधूमपानकाले, त्रिरिति आवृत्तित्रयं कर्त्तव्या; ते चावृत्तित्रयेऽपि त्रिधा त्रिधा कर्त्तव्याः; एकैकस्मिन् धूमपानकाले नव धूमाभ्यवहारमोक्षाः कर्त्तव्याः; त्रींस्त्रीनभ्यवहारान् कृत्वा विश्रामोऽन्तरा कर्त्तव्य इत्यर्थः ।

परं द्विकालपायी स्यादह्नः कालेषु बुद्धिमान् ।
प्रयोगे स्नैहिके त्वेकं वैरेच्यं त्रिश्चतुः पिबेत् ॥ १४ ॥

ननु स्नानाद्यनन्तराष्टकालेष्वेवैव पिबेन्न वेत्यत आह—परमित्यादि। त्रिविधान्यतमकस्य धूमस्य नवधा पानं नवधा मोक्षश्च नाह्नः कालेष्वष्टसु, परन्तु बुद्धिमान् स्वशरीरदोषोद्रेकं बुद्ध्वा प्रयोगे प्रायोगिकधूमे पेये अह्नः कालेषु स्नानाद्यनन्तरादिनिद्रान्तान्तेष्वष्टसु दिवाकालेषु मध्ये द्विकालपायी स्यात्, तथा च स्वशरीरवातकफोत्क्लेशातिशयं बुद्ध्वा स्नात्वा भुक्त्वा च वा, स्नात्वा समुल्लेख्य च वा, स्नात्वा क्षुत्वा च वा, स्नात्वा दन्तान् विघृष्य च वा, स्नात्वा नावनान्ते च वा, स्नात्वाञ्जनान्ते च वा, स्नात्वा निद्रान्ते च वा। भुक्त्वा समुल्लेख्य च वा, भुक्त्वा क्षुत्वा च वा, भुक्त्वा दन्तान् विघृष्य च वा, भुक्त्वा नावनान्ते च वा, भुक्त्वा अञ्जनान्ते च वा, भुक्त्वा निद्रान्ते च वा। समुल्लेख्य क्षुत्वा च वा, समुल्लेख्य दन्तान् विघृष्य च वा, समुल्लेख्य नावनान्ते च वा, समुल्लेख्याञ्जनान्ते च वा, समुल्लेख्य निद्रान्ते च वा। क्षुत्वा दन्तान् विघृष्य च वा, क्षुत्वा नावनान्ते च वा, क्षुत्वाऽञ्जनान्ते च वा, क्षुत्वा निद्रान्ते च वा। दन्तान् विघृष्य नावनान्ते च वा, दन्तान् विघृष्याञ्जनान्ते च वा, दन्तान् विघृष्य निद्रान्ते च वा। नावनान्तेऽञ्जनान्ते च वा, नावनान्ते निद्रान्ते च वा। अञ्जनान्ते निद्रान्ते च वेति प्रायोगिकधूमं पिबेत्; दिवसे एव न तु रात्रौ, रात्रेस्तत्तत्काले दोषोद्रेकाभावात्। रात्रेः कालतत्स्वभावेन तु दोषविशेषकोपः स्यादेव स च स्वाभाविक एव न धूमेन प्रशाम्यति इत्यर्थः। स्नैहिके त्वेकमिति—स्नैहिकधूमम् एकमेवार्थात् तत्कालं व्याप्य पिबेत्। स्नैहिकधूमपानकाला हि स्नानादिकास्तेषामेककालमित्यर्थः। वैरेच्यं त्रिश्चतुरिति—त्रयश्च चत्वारो वा वारा इति त्रिश्चतुरिति, न त्रींश्चतुरो वारान्। विरेच्यदोषबलापेक्षया वैरेच्यं वैरेचनिकधूमं पिबेत्। वैरेचनीयधूमस्याप्यष्टौ स्नानाद्यन्तरकालास्तेषां मध्ये त्वेककालमित्यर्थः ॥ १४ ॥

अहस्सु कालेष्वेकस्मिन्नेकस्मिन् दिवसे यस्मिन् धूमे यावान् यावान् पानकालनियमस्तं दर्शयति—परमित्यादि। कालेषु स्नानादिकालेषु। प्रयोगे प्रायोगिकधूमे। स्नैहिके त्वेकमिति—स्नैहिकधूमं एकमेव कालं व्याप्य धूमं पिबेदिति योज्यम्। त्रिश्चतुरिति—वैरेच्ये धूम-

हृत्कण्ठेन्द्रियसंशुद्धिर्लघुत्वं शिरसः शमः ।
यथेरितानां दोषाणां सम्यक् पीतस्य लक्षणम् ॥ १५ ॥
बाधिर्य्यमान्ध्यं मूकत्वं रक्तपित्तं शिरोभ्रमम् ।
अकाले चातिपीतश्च धूमः कुर्य्यादुपद्रवान् ॥
तत्रेष्टं सर्पिषः पानं नावनाञ्जनतर्पणम् ।
स्नैहिकं धूमजे दोषे वायुः पित्तानुगो यदि ।
शीतन्तु रक्तपित्ते स्यात् श्लेष्मपित्ते विरूक्षणम् ॥ १६ ॥
परन्त्वतः प्रवक्ष्यामि धूमो येषां विगर्हितः ।
न विरिक्तः पिबेद्धूमं न कृते वस्तिकर्म्मणि ॥

गङ्गाधरः अथैतद्धूमत्रयस्य सम्यगतियोगलक्षणमाह हृत्कण्ठेत्यादि । संशुद्धिः श्लेष्मरहितत्वं, शिरसो लाघवं, यथेरितानां दोषाणां यथा प्रवर्त्तमानानां वातादीनां शमः शान्तिः । सम्यक्पीतस्य लक्षणमेतत् विपरीतमसम्यक्पीतस्य धूमस्य लक्षणमिति बोध्यमर्थात् । अतिपीनाकालपीतयोर्लक्षणमाह बाधिर्य्यमित्यादि । शिरोभ्रमः शिरोघूर्णत्वम् । अकाले पीतो धूमोऽतिपीतो वा धूमः कुर्य्यात् उपद्रवान् उक्तबाधिर्य्यादिरूपान् परान् वा । तयोः प्रतिकारमाह तत्रेत्यादि । तत्र धूमजे दोषे प्रकरणादकालपीतातिपीतान्यतरधूमकृतप्रकोपे दोषे सति यदि पित्तानुगो वायुः पित्तानुबन्धवान् भवति तदा सर्पिषः पानं स्नैहिकं नावनाञ्जनतर्पणं स्नेहद्रव्यघटितं कार्य्यम् । शीतन्तु शीतस्पर्शवीर्य्यवद्द्रव्यघटितं नावनाञ्जनतर्पणं, रक्तपित्ते रक्ते पित्ते रक्तयुक्तपित्ते च स्यात् । श्लेष्मपित्ते श्लेष्मप्रधानपित्ते विरूक्षणं रौक्ष्यगुणवद्द्रव्यघटितं नावनाञ्जनतर्पणं स्यात् ॥ १५।१६ ॥

गङ्गाधरः—ननु सर्व्व एव पुरुषः किं धूमपानाधिकारी न वेत्यत आह—परन्त्वित्यादि । वस्तिकर्म्मणीति त्रिविधे, रक्ती रक्तदोषवान्, नास्य न

बलापेक्षो विकल्पः । तत्रेत्यादि—धूमज इत्यधिकप्रयुक्तधूमकृते यदि वायुः पित्तानुगो भवति तदा नावनाञ्जनतर्पणं स्नैहिकं स्नेहकृतं कर्त्तव्यं, शीतं शीतकृतं कर्त्तव्यं नावनादि च, विरूक्षणमपि नावनादेव ॥ १५—१६ ॥

न रक्ती न विरेणार्त्तो न शोची न च गर्भिणी।
न श्रमे न मदे नामे न पित्ते न प्रजागरे॥
न मूर्च्छाभ्रमतृष्णासु न क्षीणे नापि च क्षते।
न मद्यदुग्धे पीत्वा च न स्नेहं न च माक्षिकम्॥
धूमं न भुक्त्वा दध्ना च न रूक्षः क्रुद्ध एव च।
न तालुशोषे तिमिरे शिरस्यभिहते न च।
न शङ्खके न रोहिण्यां न मेहे न मदात्यये॥
एषु धूममकालेषु मोहात् पिबति यो नरः।
रोगास्तस्य प्रवर्द्धन्ते दारुणा धूमविभ्रमात्॥ १७॥

वामार्जीण न जागरे इति प्रायोगिकवैरेचनिकधूमविषये प्रतिषेधः स्नैहिके तु विधिः, क्षीणे धातुक्षये क्षीणे सति, क्षते उरःक्षते। न मद्यदुग्धे पीत्वा न स्नेहं पीत्वा न माक्षिकञ्च पीत्वा धूमं पिबेदिति पूर्व्वेणान्वयः। पीत्वेति वचनात् केवलमद्यादिपानानन्तरं धूमप्रतिषेधः तेनान्नं भुक्त्वा तु न प्रतिषेध्यः पातुं धूमः। न भुक्त्वा दध्ना चेति दध्ना भुक्तवतोऽन्नं धूमपानं प्रतिषेध्यं न तु दधि पीत्वा प्रतिषेधः। नकारस्त्वत्र न चेत्यन्वितः। अत्र पुनर्धूमग्रहणं दध्ना भुक्तवतोऽधिकत्वेन धूमप्रतिषेधार्थम्। न रूक्ष इति स्नैहिकातिरिक्तधूमविषये निषेधः। एवं क्रुद्धोऽपि। एवशब्दोऽत्रावधारणे, चकारः पुनस्तस्य समुच्चये। रोहिणीअग्निरोहिणी। एषु धूमपानदोषमाह एष्वित्यादि। एषु विरिक्तादिषु मध्ये यो नरो मोहाद्धूमं पिबति। अकालेष्विति धूमपानानर्हवयस्त्वत्र अकालः, स चार्व्वाग् द्वादशवत्सरात्; तन्त्रान्तरे हि "न चोनद्वादशे धूमः" इत्युक्तम्। न तु स्नात्वा भुक्त्वेत्यादुक्तकालातिरिक्तकालेषु तेषु पूर्व्वमेव "अकाले चातिपीतश्च धूमः कुर्य्यादुपद्रवान्" इति वचनेन प्रतिषेधात्। तथा चाकालेषु अर्व्वाक् द्वादशवर्षवयसो यो नरो मोहाद्धूमं पिबति तस्य धूमविभ्रमात् धूमपानकुपितवातात् रोगाः प्रवर्द्धन्ते। यस्मिन् यस्मिन् रोगेऽरोगे वा धूमेन विरेकादिः क्रियते, तस्मिंस्तस्मिन् रोगे तेन धूमेन स च रोगो वर्द्धतेऽन्ये च रोगा जायन्ते इति तात्पर्य्यम्॥ १७॥

चक्रपाणिः—न विरिक्त इत्यादौ प्रतिनिषिद्धे नकारकरणं निषेधगौरवदर्शनार्थम्। धूमं न भुक्त्वेति पुनर्धूमग्रहणं दध्ना भुक्तवतो विशेषप्रतिषेधार्थम्॥ १७॥

धूमयोग्यः पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये।
घ्राणेनास्येन कण्ठस्थे मुखेन घ्राणपो वमेत्॥
आस्येन धूमकवलान् पिबन् घ्राणेन नोद्वमेत्।
प्रतिलोमं गतो ह्याशु धूमो हिंस्याद्धि चक्षुषी॥
ऋज्वङ्गचक्षुस्तच्चेताः सूपविष्टस्त्रिपर्य्ययम्।
पिबेच्छिद्रं पिधायैकं नासया धूममात्मवान्॥ १८॥

गङ्गाधरः—ननु धूमं केन प्रकारेण कः पिबेदित्यत आह—धूमयोग्य इत्यादि। घ्राणेनेत्यन्तेन च्छेदः। धूमयोग्य इति विरिक्तादिभिन्नो द्वादशवर्षादिवयाः पुरुषः स्नानाद्यनन्तरकाले शिरोघ्राणाक्षिसंश्रये दोषे घ्राणेन पिबेत् प्रकरणात् धूममित्यर्थः। आस्येन कण्ठस्थे दोषे इत्यनेनान्वयादत्र कण्ठशब्देन सामीप्यादुरसोऽपि लक्ष्यते, "उरःकण्ठगते दोषे वक्त्रेण धूममापिबेत्" इत्युक्तः।

ननु घ्राणेन पीत्वा मुखेन वापि पीत्वा घ्राणेन मुखेन वा किं धूमं मुञ्चेत् इत्यत आह—मुखेन घ्राणपो वमेत्। आस्येन पिबन् घ्राणेन न वमेत् अपि त्वास्येनैव; नञोऽत्र पर्य्युदासत्वात्। आस्यपस्य घ्राणवमननिषेधे हेतुमाह प्रतिलोममित्यादि। हि यस्मात् आस्येन पीतो धूमो घ्राणेन वमितुं प्रतिलोमं विमार्गं गतः स्यात्। ननु भवतु प्रतिलोमं गतः का तत्र हानिरित्यत आह हिंस्याद्धि चक्षुषी इति। हि यस्मादाशु चक्षुषी हिंस्यात् प्रतिलोमं गतो धूम इत्यर्थः। ननु धूमं केन प्रकारेण पिबेदित्यत आह—ऋज्वित्यादि। ऋजूनि अकुटिलानि अङ्गचक्षूंषि यस्य स तथा, अङ्गपदेन प्रायो हस्तपादादि लभ्यते, तद्वारणाय विशेषेण चक्षुरुपादत्तम्। तच्चेताः धूमपाने चेतो मनो यस्य स तथा, एतेनान्यमनस्कत्वं तदानीं निषिध्यते। सूपविष्टः सुखोपवेशनशाली त्रिपर्य्ययं त्रिसङ्ख्यस्य त्रिरावृत्तिपर्य्यन्तं नव वारान् नववार-

चक्रपाणिः—धूमयोग्य इत्यादौ घ्राणेनेति च्छेदः। प्रतिलोमं गत आस्यपीतो घ्राणं गत इत्यर्थः। हिंस्याच्चक्षुषी हेतौ; तेनायमर्थः—यस्मात् प्रतिलोमं विमार्गं गतो धूमस्तस्माच्चक्षुषी हिंस्यात्, यस्मात् हिंस्यात् तस्मात् घ्राणेन नोद्वमेदिति।

सम्यगुपविष्टः सूपविष्टः, त्रिपर्य्ययमिति तु यद्यपि पूर्व्वमेवोक्तम् आपानाश्च इत्यनेन, तथापि त्रिपर्य्ययमिति धूमपानपर्य्यन्तम् ऋज्वङ्गचक्षुरादि कर्त्तव्यं नोपक्रममात्र एवेति

चतुर्व्विंशतिकं नेत्रं स्वाङ्गुलैः स्याद् विरेचने।
द्वात्रिंशदङ्गुलं स्नेहे प्रयोगेऽध्यर्द्धमिष्यते॥
ऋजु त्रिकोषाफलितं कोलास्थ्यग्रप्रमाणितम्।
वस्तिनेत्रसमद्रव्यं धूमनेत्रं प्रशस्यते॥

मोऽव्यवहितान् तथाभूत एव नासया तदेकं छिद्रं पिधायान्यतरेण धूमं पिबेत्। न तु धूमपानोपक्रमे ऋज्वङ्गचक्षुरादिभूत्वा पानकालेऽन्यथाङ्गादिः स्यादिति ज्ञापनार्थं त्रिपर्य्ययामिति पुनरुक्तमन्यथा पूर्व्वमेव त्रिस्त्रयस्त्रय इत्युक्ते किमर्थमत्र पुनरुच्यते। आस्यपाने तु सुतरां छिद्रं पिधायैकं नासयेति विशेषोक्तिं विना क्रमो बोध्यः॥ १८॥

गङ्गाधरः अथैवंप्रकारेण धूमवर्त्तिमेवोक्तरूपेणाग्निप्लुष्टां कृत्वा नेत्रार्पितां च कृत्वा पिबेत्। तन्नेत्रं किम्भूतं भवति कादृशं वा निर्म्मितं स्यादित्यत आह— चतुर्व्विंशतिकमित्यादि। नेत्रं नीयते धूमोऽनेनेति नेत्रं नालिका। विरेचने मूर्द्ध-विरेचनीयधूमपाने स्वैः पातुकामपुरुषस्य स्वाङ्गुलैश्चतुर्व्विंशतिकं चतुर्व्विंश-त्यङ्गुलं पूर्णहस्तमितं नेत्रमित्यर्थः। स्नेहे स्नैहिकधूमपाने द्वात्रिंशदङ्गुलं नेत्रम्। प्रयोगेऽध्यर्द्धं चतुर्व्विंशतिकं प्रथमनिर्द्देशेन तदाधिकारादनुवर्त्तनात्। अधि-शब्दोऽधिकार्थोऽधिकमर्द्धं यत्र चतुर्व्विंशतिके तदध्यर्द्धचतुर्व्विंशतिकं षट्त्रिंश-दङ्गुलं नेत्रं प्रायोगिके धूमपाने बोध्यमिति। उक्तञ्च जतूकर्णे "सार्द्धस्त्रिंश-युतः पूर्णो हस्तः प्रायोगिकादिषु। नेत्रं कासहरे त्रिंशद्धीनः शेषे दशाङ्गुलम्॥" इति। तत्र प्रायोगिकः स्नैहिकश्च वैरेचनिक एव च। कासहरो वामनश्च धूमः पञ्चविधो मतः॥" इति। अत्र तु स्वस्थवृत्तत्वेन प्रायोगिकादि-धूमत्रयमुक्तम्। कासहर-वामनधूमयोरातुरवृत्तत्वेनात्र पुनर्नोपदेशः। कासादि-व्याधिषु पुनस्तौ वक्तव्यौ इति न न्यूनता। नन्वेवमस्तु नेत्रमेतावन्मितं किमृजु किं वानृजु केन च द्रव्येण कार्य्यमित्यत आह— ऋजु त्रिकोषेत्यादि।

पुनरभिधानेन दर्शयति, नासिकयापि स्रोतएकच्छिद्रं पिधाय पिबेत्, न पुनर्नासिकयैव पिबेदिति नियमः॥ १८॥

चक्रपाणिः— नेत्रं नलिका चतुर्व्विंशतिकं चतुर्व्विंशत्यङ्गुलम्, अध्यर्द्धं सार्द्धमित्यर्थः। इह वैरेचनिकनेत्रमेव चतुर्व्विंशत्यङ्गुलं सार्द्धं सत् षट्त्रिंशदङ्गुलप्रमाणं, प्रायोगिकधूमपाने सत तु जतूकर्णप्रत्ययाद्बोद्धव्यं, यदाह "सार्द्धस्त्रिंशद्युतः पूर्णो हस्तः प्रायोगिकादिषु" इति। त्रिकोषा-फलितमिति पर्व्वभिस्त्रिभिः समन्वितम्।

दूराद्विनिर्गतः पर्व्वच्छिन्नो नाडीतनूकृतः।
नेन्द्रियं बाधते धूमो मात्राकालनिषेवितः॥ १९॥
यदा चोरश्च कण्ठश्च शिरश्च लघुतां व्रजेत्।
कफश्च तनुतां प्राप्तः सुपीतं धूममादिशेत्॥ २०॥
अविशुद्धः स्वरो यस्य कण्ठश्च सकफो भवेत्।
स्तिमितो मस्तकश्चैवमपीतं धूममादिशेत्॥ २१॥
तालु मूर्द्धा च कण्ठश्च शुष्यते परितप्यते।
तृष्यते मुह्यते जन्तू रक्तञ्च स्रवतेऽधिकम्॥
शिरश्च भ्रमतेऽत्यर्थं मूर्च्छा चास्योपजायते।
इन्द्रियाण्युपतप्यन्ते धूमेऽत्यर्थं निषेविते॥ २२॥

कोषः पर्व्व ऋजुभिस्त्रिभिः कोषैराकलितम् आ सम्यक् सन्धिस्थानेऽनृजुरूपेणोत्तरमुखेण सन्धानेन निष्पादितं त्रिभङ्गमित्यर्थः। त्रिकोषस्य ऋजुत्वेन समुदायस्य त्रिवक्रत्वमायातम्। कोलास्थ्यग्रप्रमाणितं कोलास्थिप्रवेशार्हच्छिद्रयुक्तस्थूलम्। वस्तिनेत्रसमद्रव्यं वस्तिनेत्रस्य यद्द्रव्यं तदेव द्रव्यं घटककारणीभूतसमवायिकारणं यस्य। तच्च द्रव्यं वक्ष्यते सिद्धिस्थाने "सुवर्णरूप्यत्रपुताम्ररीति-कांस्यास्थिलौहद्रुमवेणुदन्तैः। नलैर्विषाणैर्मणिभिश्च तैस्तैः कार्य्याणि नेत्राणि सुकर्णिकानि॥" इति। यथोक्तनेत्रेण धूमपानगुणं दर्शयति दूरादित्यादि। दूराद्विनिर्गत इत्यनेन चतुर्व्विंशत्यङ्गुलादिदीर्घत्वप्रयोजनम्। पर्व्वच्छिन्न इत्यनेनात्र त्रिकोषाकलनप्रयोजनम् नाडीतनूकृत इत्यनेन कोलास्थ्यग्रप्रमाणितमित्यस्य प्रयोजनं दर्शितम्। एतत्प्रयोजनत्रयं विना इन्द्रियबाधकत्वं बोध्यम्। अत्र केचित् यदेत्यादिनैकश्लोकेन धूमस्य सम्यग् योगलक्षणमाहुः। अविशुद्ध इत्यादिनैकेन श्लोकेनायोगलक्षणं, तालित्यादिभ्यां श्लोकाभ्यामतियोगलक्षणमाहुस्तन्न। पूर्व्वमेव हृत्कण्ठेत्यादिना सम्यग्योगातियोगलक्षणानामुक्तत्वेनात्र पौनरुक्त्यापत्तेः॥ १९—२२॥

यथाभिहितनलिकया पाने गुणं दर्शयति दूरादित्यादि। केचित् धूमसम्यक्पानादिलक्षणं ग्रन्थं पठन्ति, तत्र चोरश्चेत्यादि सम्यग्धूमपानलक्षणम्, अविशुद्ध इत्यायोगलक्षणं, तालित्याद्यतियोगलक्षणम्। धूममिति पञ्चम्यर्थे द्वितीया; यदि वा धूमस्येति पाठः॥ १९—२२॥

वर्षे वर्षेऽणुतैलञ्च कालेषु त्रिषु नाचरेत् ।
प्रावृट्‌शरद्वसन्तेषु गतमेघे नभस्तले ॥
नस्यकर्म्म यथाकालं यो यथोक्तं निषेवते ।
न तस्य चक्षुर्न घ्राणं न श्रोत्रमुपहन्यते ॥
न स्युः श्वेता न कपिलाः केशाः श्मश्रूणि वा पुनः ।
न च केशाः प्रलुच्यन्ते वर्द्धन्ते च विशेषतः ॥
मन्यास्तम्भः शिरःशूलमर्द्दितं हनुसंग्रहः ।
पीनसार्द्धावभेदौ च शिरःकम्पश्च शाम्यति ॥
शिराः शिरःकपालानां सन्धयः स्नायुकण्डराः ।
नावनप्रीणिताश्चास्य लभन्तेऽभ्यधिकं बलम् ॥

गङ्गाधरः अथ धूमनस्ययोर्नासाच्छिद्रप्रयोगसामान्यात् नेत्रहितत्वेन नयनकार्य्यमञ्जनमनु सर्व्वदेहहितत्वेनास्यनासाकार्य्य धूममुक्त्वा नासामात्रकार्य्यं नस्यमाह वर्षे वर्षे इत्यादि । वर्षे वर्षे वत्सरेण चक्षुषा वत्सरेण ऊर्द्ध्वजत्रु वर्षेभियो वर्षे स्यादेऽणुतैलम् अणूनां स्रोतसां हितं तैलमित्यणुतैलं वक्ष्यमाणं कालेषु त्रिषु प्रावृट्‌शरद्वसन्तेषु नभस्तले गतमेघेऽतीतमेघे नभस उपरि भूस्थलोकान् ना पुरुष आचरेत् नस्यार्थमिति शेषः । नस्यकर्म्म गुणत आह नस्यकर्म्मेत्यादि । वक्ष्यति हि सिद्धिस्थाने "नावनञ्चावपीड़श्च ध्मापनं धूम एव च । प्रतिमर्षश्च विज्ञेयो नस्तः कर्म्म च पञ्चधा ॥" इत्यादिना । तत्र यथास्वं स्नेहनावनं तत्कर्म्म वक्ष्यमाणं यो निषेवते तस्य न चक्षुरुपहन्यते न घ्राणं न श्रोत्रञ्चेति । अत्र कालजरया कालदोषेण चेति कर्त्तृपदमूह्यम् । कपिलो वर्णभेदः । श्मश्रूणि वेति वाशब्दः समुच्चये । तेनार्थाल्लिङ्गविपरिणामेन श्वेतानि कपिलानि इत्येवं पदित्वान्वेतव्यम् । पुनःशब्दः पुनरर्थान्तरारम्भे । न प्रलुच्यन्ते न पतन्ति । मन्यास्तम्भ इत्यादिकञ्च शाम्यति । शिराः धमन्यः । शिरःकपालानि त्रीणि । सन्धयोऽर्थात् शिरस एव । स्नायवः सूक्ष्मशिराः । कण्डराः अस्थिवत्स्थूलशिराः । एते नावनप्रीणिताश्चकाराद् यस्य नावनं

चक्रपाणिः—धूमनस्ययोर्नासाद्वारसामान्यात् धूममनु नस्यं ब्रूते वर्षे इत्यादि । अणूनां स्रोतसां हितं तैलमित्यणुतैलं, तच्चाग्रे वक्ष्यमाणम् । शिरःकपालानामेव शिराः सन्धयः स्नायुकण्ड-

मुखं प्रसन्नोपचितं स्वरः स्निग्धः स्थिरो महान्।
सर्व्वेन्द्रियाणां वैमल्यं बलं भवति चाधिकम्॥
न चास्य रोगाः सहसा प्रभवन्त्यूर्द्ध्वजत्रुजाः।
जीर्य्यतश्चोत्तमाङ्गे च जरा न लभते बलम्॥ २३॥
चन्दनागुरुणी पत्रं दार्व्वीत्वक् मधुकं बलाम्।
प्रपौण्डरीकं सूक्ष्मैलां विडङ्गं बिल्वमुत्पलम्॥
ह्रीवेरमभयं वन्यं त्वङ्मुस्तं सारिवां स्थिराम्।
सुराह्वं पृश्निपर्णीञ्च जीवन्तीञ्च शतावरीम्॥
हरेणुं बृहतीं व्याघ्रीं सुरभीं पद्मकेशरम्।
विपाचयेच्छतगुणे माहेन्द्रे विमलेऽम्भसि॥
तैलाद्दशगुणं शेषं कषायमवतारयेत्।
तेन तैलं कषायेण दशकृत्वो विपाचयेत्॥

सेवमानस्याप्यधिकं बलं लभते अस्य च मुखं प्रसन्नोपचितं प्रसन्नञ्चोपचितं चेति। सर्व्वेन्द्रियाणां वैमल्यं भवति, बलञ्चाधिकं भवति। जीर्य्यतश्चास्य नस्यं सेवमानस्य उत्तमाङ्गे मूर्द्धि जरा बलिपलितरूपा बलं न लभते ॥२३॥

गङ्गाधरः इति गुणतो नस्यकर्म्मोक्त्वा नस्यार्थञ्च विहितमणुतैलविधानं वक्तुमुपक्रमते चन्दनेत्यादि। दार्व्व्यास्त्वक् दार्व्वीत्वक्, प्रपौण्डरीकं पुण्डरीयकाष्ठं, बिल्वं बिल्वमूलम्, अभयं वीरणमूलं, वन्यं कैवर्त्त-मुस्तकं, त्वक् गुड़त्वक्, मुस्तं भद्रमुस्तं, सारिवा अनन्तमूलं, सुराह्वं देवदारु, सुरभिः शूकशिम्बा, पद्मस्य केशरं किञ्जल्कः। माहेन्द्रे विमले-ऽम्भसीत्यान्तरीक्षजले तैलाच्छतगुणे विपाचयेत्, ततस्तैलादेव दशगुणं शेषं कषायमित्यन्वयः। तेन प्रतिवारं तैलाद्दशगुणे कषाये तैलं दशकृत्वो यथा

राश्च। उत्तमाङ्गेष्विति बहुवचनं शिरसोऽप्यङ्गित्वात्। यदि वा जरा बलिपलितादिलक्षणा या सा उत्तमा प्रकर्षप्राप्ताऽङ्गेषु मस्तकादिषु निषिध्यते ॥ २३॥

चक्रपाणिः चन्दनेत्यादौ दार्व्व्यास्त्वक् दार्व्वीत्वक्, जीवन्ती सुवर्णनाला स्वनामप्रसिद्धा, सुरभी शूकशिम्बा, पद्मस्य केशरं पद्मकेशरं, माहेन्द्र आन्तरीक्षे, शतगुणे तैलादिति योज्यं;

अथास्य दशमे पाके समांशं छागलं पयः ।
दद्यादेषोऽणुतैलस्य नावनीयस्य संविधिः ॥
तस्य मात्रां प्रयुञ्जीत तैलस्यार्द्धपलोन्मिताम् ।
स्निग्धस्विन्नोत्तमाङ्गस्य पिचुना नावनैस्त्रिभिः ॥
त्र्यहात् त्र्यहाच्च सप्ताहमेतत् कर्म्म समाचरेत् ।
निवातोष्णसमाचारी हिताशी नियतेन्द्रियः ॥

स्यात् तथा पाचयेत् । अथ दश वारान् पक्वैतिल्लाभे दशमे पाके इति विशेष-वचनात् नव वारान् पक्त्वा दशमवारपाके क्वाथेन सह तैलसमांशं छागलं पयो दुग्धं दद्यात् ; "क्षीरं स्नेहसमं मतम्" इति वचनात् । अत्रेयं व्यवस्था । "क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् । स्नेहात्, स्नेहसमं क्षीरं, कल्कस्तु स्नेहपादिकः ॥ चतुर्गुणत्वष्टगुणं द्रवद्वैगुण्यतो भवेत् । अनुक्ते स्नेहमाने तु प्रस्थ एको विधीयते ॥ अकल्कोऽपि भवेत् स्नेहो यः साध्यः केवले द्रवे ॥" इत्येताभिः परिभाषाभिश्चन्दनादीनि द्रव्याणि तावन्मितानि क्वाथ्यत्वेन ग्राह्याणि भवन्ति, तिलतैलप्रस्थे द्वात्रिंशत्पले पाच्ये चतुःशतशरावमितं जलमष्टगुणं यावद्भ्यो द्रव्येभ्यो भवति, तेन चन्दनादीनां द्रव्याणां पञ्चाश-च्छरावम् । उदूखले कुट्टयित्वा चतुःशतशरावे जले पक्त्वा चत्वारिंशच्छरावमित-क्वाथमवतार्य्याकल्कमिदं तिलतैलस्य चतुःशरावं पचेदित्येकः पाकः । एवं दशधा पाचयेत् । तत्र शेषे दशमे पाके छागदुग्धं शरावचतुष्टयं दत्त्वा पचेत्, निर्द्रवे सति अवतारयेत् ; एषोऽणुतैलस्य संविधिः । तैलमिदं किमभ्यङ्गादिषु योज्यं न वेत्याह — नावनीयस्येति । तस्यैतस्योक्तस्याणुतैलस्यार्द्धपलोन्मितां मात्राम् अशीतिरक्तिकापिततोलकचतुष्टयीं नावनैस्त्रिभिरिति वारत्रयेणार्द्धपलं तैलं पिचुना तूलकवर्त्तिकया नासापुटे प्रयुञ्जीत नावनविधिना सिद्धिस्थाने वक्ष्यमाणेन । त्र्यहात् त्र्यहाच्च सप्ताहमिति । प्रथमस्नेहनावनदानदिनं त्र्यहात्

दशगुणमित्येतदपि तैलादिति योजनीयम् । अत्र तु क्वाथ्यभेषजं तावन्मात्रं ग्राह्यं यावत् क्वाथार्थोपयुक्तं पानीयं भेषजचतुर्गुणं भवति । "क्वाथ्याच्चतुर्गुणं वारि" इत्यस्य अबाधितत्वात् । न तु भेषजात् शतगुणोऽम्भसीत्येवं व्याख्येयं, यदाह जतूकर्णः — पलमात्रमणुशतप्रस्थे दशभाग-स्थितेन तु । तैलप्रस्थं पचेत् तेन छागक्षीरेण संयुतम् ॥ इति । यद्वा तैलप्रमाणानुमानेनैव "स्नेहाच्चतुर्गुणं क्वाथ्यम्" इति परिभाषया क्वाथ्यद्रव्यपरिमाणं व्यवस्थापनीयम् । पिचुनेति

तैलमेतत् त्रिदोषघ्नमिन्द्रियाणां बलप्रदम्।
प्रयुञ्जानो यथाकालं यथोक्तानश्नुते गुणान् ॥ २४ ॥
आपोथिताग्रं द्वौ कालौ कषायं कटुतिक्तकम्।
भक्षयेद् दन्तपवनं दन्तमांसान्यबाधयन् ॥
निहन्ति गन्धवैरस्यं जिह्वादन्तास्यजं मलम्।
निष्कृष्य रुचिमाधत्ते सद्यो दन्तविशोधनम् ॥ २५ ॥

त्रीणि दिनानि हित्वा परदिनं त्रिभिर्नावनैरर्द्धपलं तैलं पिचुना स्निग्धास्यस्रोत-माकृष्य प्रयुञ्जीत, तद्दिनमारभ्य पञ्चमदिनं पुनर्दानदिनं भवति। यतः पुनस्त्र्यहाच्च त्रीणि दिनानि हित्वा परं दिनं तथैव प्रयुञ्जीत। एवं सप्ताहमेव अर्थान्मासि मासि नावनकर्म समाचरेत। एतेन दिनत्रयं न दत्त्वा नावनमपरदिने दद्यादित्यर्थः। अस्य प्रणिहिततैलस्योपचारमाह निवातेत्यादि। यथोक्तान् यथा प्रोक्तान्, न त्वव्ययीभावः।

अथ प्रत्यासत्त्योद्ध जत्रूर्ध्वकार्य्यत्वेन च दन्तकाष्ठं गुणत आचार्य्येणोक्तं, किन्त्वसंगत्या प्रातःकृत्यं नोक्तं तदत्र बोध्यम्। तद्यथा "ब्राह्मे मुहूर्त्ते उत्तिष्ठेत स्वस्थो रक्षार्थमायुषः। शरीरचिन्तां निर्व्वर्त्य कृतशौचविधिस्ततः ॥" इति। "उदयात् पूर्व्वमुहूर्त्तौ ब्राह्मरात्र्यां क्रमादिदु" इति ॥ २४ ॥

<u>गङ्गाधरः</u> आपोथिताग्रमित्यादि। पुथ हिंसे इत्यस्मात् पूर्व्वकृतेनापोथितं कुट्टितमित्यर्थः। द्वौ कालाविति प्रातः सायञ्च। अत्र केचित "प्रातर्भुक्त्वा च मृद्वग्रम्" इति पठन्ति, तन्न, भुक्त्वेत्यनेन सायमित्यर्थलाभात्। भक्षयेदिति चौरादिकभक्षिः। भक्षणं चर्व्वणमात्रमिह विवक्षितं गलाधःकरणजनक-चर्व्वणादिव्यापारस्य भक्षार्थत्वेऽप्यत्र तु गलाधःकरणे विवक्षाभावात्। दन्त-पवनं पूयन्ते दन्ता अनेनेति दन्तकाष्ठम्। दन्तमांसानीति दन्तवेष्टनमांसानि। अबाधयन्नव्यथयन्। गुणमस्याह निहन्तीत्यादि। दन्तविशोधनं कर्त्तृ मलं निष्कृष्येति सम्बन्धः। सद्यो रुचिमाधत्ते इत्यर्थः ॥ २५ ॥

तूलकपिच्छिकया, नावनैस्त्रिभिर्वारत्रयेणेत्यर्थः। त्र्यहं तु त्र्यहादिति पूर्व्वं विगमसन्तरीकृत्य, सप्ताह-मित्यन्तरितदिनानि वर्ज्जयित्वा तैर्नैकस्मिन् ऋतौ यथोक्तकाले नस्यप्रयोगः समाप्यते ॥ २४ ॥

<u>चक्रपाणिः</u> स्थानप्रत्यासत्त्या दन्तकाष्ठगुणान् दर्शयति आपोथितेत्यादि। द्विकालं सायं प्रातरिति। दन्तान् पुनातीति दन्तपवनं दन्तकाष्ठं ; निष्कृष्य मलमिति सम्बन्धः। ककुभो-

करञ्जकरवीरार्क-मालतीककुभासनाः ।
शस्यन्ते दन्तपवने ये चाप्येवंविधा द्रुमाः ॥ २६ ॥
धार्य्याण्यास्येन वैशद्य-रुचिसौगन्ध्यमिच्छता ।
जातीकटुकपूगानां लवङ्गस्य फलानि च ॥

गङ्गाधरः—दन्तपवनार्थं द्रुमानाह करञ्जेत्यादि । ककुभोऽर्ज्जुनः, असनः पीतशालः । एवंविधा एवंरसा इत्यर्थः । अत्र दन्तकाष्ठानर्हा उक्ता अन्यत्र तद्यथा—

"नाद्यादजीर्णवमथु-श्वासकासज्वरार्द्दितः ।
तृष्णास्यपाकहृन्नेत्र-शिरःकर्णामयी च तत् ॥" इति ।

अत्र तदिति दन्तपवनमिति । अथात्र मुखकार्य्यत्वसामान्याज्जिह्वानिर्लेखनं गुणतो वक्तुमुचितमपि ग्रन्थबाहुल्यभयान्नोक्तं, तदपि बोध्यमन्यत्रोक्तं, तद्यथा—

"सुवर्णरूप्यताम्राणि त्रपुरीतिमयानि च ।
जिह्वानिर्लेखनानि स्युरतीक्ष्णान्यनृजूनि च ॥
जिह्वामूलगतं यच्च मलमुच्छ्वासरोधि च ।
सौगन्ध्यं भजते तेन तस्माज्जिह्वां विनिर्लिखेत ॥"
"जिह्वानिर्लेखनं शस्तं मृदु श्लक्ष्णं दशाङ्गुलम् ॥" इति ।

सुवर्णेत्यादि । त्रपु सीसकं. रीतिः पित्तलम्. अतीक्ष्णानि धाररहितानि, अनृजूनि वक्राणि । अन्यत्रोक्तकर्म्मोपदर्शनपूर्व्वकतद्विधिमाह—जिह्वेत्यादि । यत्-यस्मात् मलं जिह्वामूलगतमुच्छ्वासरोधि च भवति तस्माज्जिह्वां विनिर्लिखेत । तेन सौगन्ध्यं भजते मुखमिति शेषः । यद्वा तेनेति वक्ष्यमाणजिह्वाविनिर्लेखने-नेत्यभिप्रायेण यच्चेति मलमित्यनेन योगः । चः पुनरर्थे ॥ २६ ॥

गङ्गाधरः—मुखकार्य्यत्वसामान्यात् ताम्बूलभक्षणरूपेण मुखे धार्य्याण्याह—धार्य्याणीत्यादि । जातीत्यादीनां फलानीत्यनेनान्वयः । जात्याः फलं जातिफलाख्यं, कटुकस्य लताकस्तूर्य्याः फलानि, पूगस्य गुवाकस्य फलानि, लवङ्गस्य यद्यपि पुष्पवृन्तं लवङ्गमाहुस्तथापि तत्पुष्पवृन्तरूपेण यत् दृश्यते तदेव

ऽर्ज्जुनः, एवंविधा एवंरसा इत्यर्थः । कटुकं लताकस्तूरी. यद्यपि लवङ्गस्य वृन्तमभिप्रेतं तथापि बहूनां फलस्य प्राधान्यात् छत्रिणो गच्छन्तीति न्यायेन सामान्येन फलमित्युक्तम् ॥ २५—२७ ॥

कङ्कोलकफलं पत्रं ताम्बूलस्य शुभं तथा।
तथा कर्पूरनिर्य्यासः सूक्ष्मैलायाः फलानि च॥ २७॥
हन्वोर्बलं स्वरबलं वदनोपचयः परः।
स्यात् परञ्च रसज्ञानमन्ने च रुचिरुत्तमा॥
न चास्य कण्ठशोषः स्यान्नौष्ठयोः स्फुटनाद्भयम्।
न च दन्ताः क्षयं यान्ति दृढमूला भवन्ति च॥
न शूल्यन्ते न चाम्लेन हृष्यन्ते भक्षयन्ति च।
परानपि खरान् भक्ष्यान् तैलगण्डूषधारणात्॥ २८॥
नित्यं स्नेहार्द्रशिरसः शिरःशूलं न जायते।
न खालित्यं न पालित्यं न केशाः प्रपतन्ति च॥

लवङ्गस्य फलं नान्यत फलमस्तीति बोध्यम्. पत्रं ताम्बूलस्य पर्णाख्यस्य तस्य विशेषणं शुभमिति। कर्पूरनिर्य्यासः कर्पूरात्मको निर्य्यासः इति। अत्रान्यत्रोक्तमतिषेधो बोध्यस्तद्यथा "ताम्बूलं क्षतपित्तास्रुकक्षोत्कुपितचक्षुषाम्। विषमूर्च्छामदार्त्तानामपथ्यं शोषिणामपि। अन्नं सुप्तोत्थिते भुक्ते त्याज्यं दन्तास्यरोगिणा॥" इति॥ २७॥

गङ्गाधरः मुखकार्य्यत्वसामान्यात् स्नेहगण्डूषं गुणत आह हन्वोरित्यादि। स्नेहगण्डूषधारणात् हन्वोर्बलमित्यादि स्यात्। न चास्य कण्ठशोष इत्यादि स्यात्। न च दन्ताः क्षयं यान्ति चापि तु दृढमूला भवन्ति च पुनर्न शूल्यन्ते शूल रुजायामिति भौवादिकोऽकर्म्मको यः शूल्धातुस्तस्य लुप्ता यौगत्ते रुजामात्रोऽर्थः, दोषेणेति शेषः, कर्म्मणि लिङ्। न चाम्लेन हृष्यन्ते इत्यत्रापि कर्म्मणि लिङ्। परानुत्कृष्टानपि खरान कठिनान भक्ष्यान भक्षयन्ति चर्व्वयन्ति। दोषापेक्षया तैलाद्यन्यतमो बोध्यः॥ २८॥

गङ्गाधरः तैलप्रसङ्गात् शिरोऽभ्यङ्गार्थं स्नेहं गुणत आह नित्यमित्यादि-तैलनिषेवणादित्यन्तेन। नित्यं सततं, स्नेहार्द्रं शिरो यस्य तस्य तथाविधात्।

चक्रपाणिः—हन्वोरित्यादि स्नेहगण्डूषगुणः। नित्यमित्यादि निषेवणादित्यन्तं शिरस्तैलगुणः। मूर्द्ध्नि तैलनिषेवणादित्युक्तेऽपि स्नेहार्द्रशिरस इति यत् करोति, तेन, यावता तैलेनार्द्रं शिरः स्यात्

बलं शिरःकपालानां विशेषेणाभिवर्द्धते।
दृढमूलाश्च दीर्घाश्च कृष्णाः केशा भवन्ति च॥
इन्द्रियाणि प्रसीदन्ति सुत्वग्भवति चामलम्।
निद्रालाभः सुखञ्च स्यान्मूर्द्ध्नि तैलनिषेवणात्॥ २९॥
न कर्णरोगा वातोत्था न मन्याहनुसंग्रहः।
नोच्चैःश्रुतिर्न बाधिर्य्यं स्यान्नित्यं कर्णतर्पणात्॥ ३०॥
स्नेहाभ्यङ्गाद् यथा कुम्भश्चर्म्म स्नेहविमर्द्दनात्।
भवत्युपाङ्गादक्षश्च दृढः क्लेशसहो यथा॥

मूर्द्धनि तैलनिषेवणात् शिरःशूलं न जायते इत्यादि। बलं शिरःकपालानां. शिरसस्त्रीणि कपालानि तेषां विशेषेण बलं स्यात् दृढत्वात्। सुत्वक्, अमलं मलस्याभावः स्यादिति भवतीत्यस्याः क्रियायाः अपादानं तैलनिषेवणादिति. अस्य विशेषणं स्नेहार्द्रशिरस इति. पुनश्च मूर्द्धनीतिपदं गात्रेऽभ्यङ्गतैलसेवनमात्रस्य वारणार्थं न तत्र गात्रमात्राऽभ्यङ्गो विधीयते। केचित्तु स्नेहार्द्रशिरसः पुरुषस्येति पाठमन्ये व्याख्याय मूर्द्धनि तैलनिषेवणादित्युक्तेऽपि पुनर्यत् स्नेहार्द्रशिरस इत्युक्तं तेनैवं ज्ञापितं यावता तैलेन शिरसः आर्द्रत्वं भवति तावन्मितं तैलस्य मूर्द्धनि निषेव्यत्वमिति। तन्न, तैलार्द्रशिरस इति करणेनैव तदर्थलाभे मूर्द्धनि तैलनिषेवणादित्यस्यातिरिक्तत्वापत्तेः॥ २९॥

गङ्गाधरः शिरस्तैलासक्त्या तैलप्रसङ्गाच्च कर्णस्य तैलतर्पणं गुणत आह—न कर्णरोगा इत्यादि। नित्यं सततं कर्णतर्पणात् प्रकरणात् तैलेन कर्णस्य पूरणेन तर्पणात् तृप्तित इत्यर्थः॥ ३०॥

गङ्गाधरः पुरा शरीराभ्यङ्गस्य प्रसङ्गात् गुणतो विधिमाह तत्र दृष्टान्तपूर्व्वकं कर्म्मोपदर्शयति स्नेहाभ्यङ्गादित्यादि। कुम्भो घटः चर्म्म च यथा उपाङ्गात् स्नेहदानात् अक्षो रथादेश्चक्रयोजनकाष्ठश्च यथा दृढः क्लेशसहश्च,

तावन्मूर्द्धि तैलं सेव्यमिति दर्शयति। स्नेहाभ्यङ्गादित्यादि उपाङ्गः स्नेहदानम्, अक्षो रथस्य चक्रनिबन्धनकाष्ठम्। बहुदृष्टान्तकरणन्तु कस्यचित् किञ्चित् प्रसिद्धं भविष्यति; न हि सर्व्वं सर्व्वस्य प्रसिद्धमित्यभिप्रायेण। यदि वा स्नेहस्य नानाकार्य्यकरत्वोपदर्शनार्थम्। स्पर्शनेन्द्रिये

तथा शरीरमभ्यङ्गाद् दृढ़ं सुत्वक् प्रजायते।
प्रशान्तमारुताबाधं क्लेशव्यायामसंसहम् ॥
स्पर्शने चाधिको वायुः स्पर्शनञ्च त्वगाश्रितम्।
त्वच्यश्च परमोऽभ्यङ्गस्तस्मात् तं शीलयेन्नरः ॥
न चाभिघाताभिहतं गात्रमभ्यङ्गसेविनः।
विकारं भजतेऽत्यर्थं बलकर्म्मणि वा क्वचित् ॥
सुस्पर्शोपचिताङ्गश्च बलवान् प्रियदर्शनः।
भवत्यभ्यङ्गनित्यत्वान्नरोऽल्पजर एव च ॥ ३१ ॥

लिङ्गविपरिणामेन चर्म्मण्यपि योजनीयम्। तथा शरीरमभ्यङ्गात् दृढ़ं सुत्वक् सुष्ठुचर्म्म स्यात्। बहुदृष्टान्तोपदर्शनं शरीराभ्यङ्गस्यावश्यकत्वज्ञापनार्थं तथा इहस्य बहुकर्म्मसाधनत्वज्ञापनार्थञ्च। येन बहूनां कर्म्मणां साधनं दृश्यते तदवश्यं लोको निषेवते इति।

प्रशान्तो मारुतस्य आ सम्यक् बाधो यत्र तत्। क्लेशव्यायामौ सं सम्यक् सहते यत् तत्। स्पर्शने इत्यादिना हेतूपदर्शनेन तैलाभ्यङ्गाभ्यासं नियतमाह — स्पर्शने स्पर्शनेन्द्रिये च पुनर्वायुरधिक इन्द्रियाणां श्रोत्रादीनां पाञ्चभौतिकत्वेऽपि स्वार्थाधिकत्वात् स्पर्शनेन्द्रियस्य वाताधिकत्वेन वातस्थानत्वात्। स्पर्शनञ्च स्पर्शनेन्द्रियं पुनस्त्वगाश्रितं चर्म्माश्रितं त्वच्यश्च त्वचो हितः परमः पुनरभ्यङ्गो यस्मात् तस्मात् तमभ्यङ्गं शीलयेत्। शील अभ्यासे चौरादिकः। एतेनाधारस्य त्वचो हितत्वेनाभ्यङ्गस्य त्वगाश्रितस्पर्शनेन्द्रियाय हितत्वं स्पर्शनेन्द्रियाश्रितवाताय अपि हितत्वमुक्तं भवति। पुनरप्यभ्यङ्गस्य कर्म्मान्तरमाह — न चेत्यादि। अभ्यङ्गसेविनः पुरुषस्य गात्रमभिघाताभिहतमपि न चात्यर्थं विकारं भजते शान्तवातत्वात्। बलकर्म्मणि वा बलेन निष्पादनीयकर्म्मणि च नात्यर्थं विकारं भजते अभ्यङ्गनित्यत्वात् सततात्यस्ताभ्यङ्गत्वात्। अङ्गमभि कृत उपचार इत्यभ्यङ्गः। अपि सर्व्वतोऽज्यते म्रक्ष्यते इत्यङ्गधातोर्वा रूपं भावकृता यथा ॥३१॥

वायुरधिक, वैशेषिकदर्शने पाञ्चभौतिकत्वादिन्द्रियस्येत्यर्थः। त्वच्यश्च परमोऽभ्यङ्ग इति चकारात् वातहितश्च त्वच्यश्च, एतेनाश्रितवाताधिकस्पर्शनेन्द्रियस्य आश्रयस्य च त्वचो हित इत्युक्तं भवति। बलेन सम्पाद्यं कर्म्म बलकर्म्म गुरुभारहरणादि ॥ २८—३१ ॥

खरत्वं शुष्कता* रौक्ष्यं श्रमः सुप्तिश्च पादयोः ।
सद्य एवोपशाम्यन्ति पादाभ्यङ्गनिषेवणात् ॥
जायते सौकुमार्य्यञ्च बलं स्थैर्य्यञ्च पादयोः ।
दृष्टिः प्रसादं लभते मारुतश्चोपशाम्यति ॥
न च स्याद् † गृध्रसीवातः पादयोः स्फुटनं न च ।
न शिरास्नायुसङ्कोचः पादाभ्यङ्गेन पादयोः ॥ ३२ ॥
दौर्गन्ध्यं गौरवं तन्द्रां कण्डूं मलमरोचकम् ।
स्वेदबीभत्सतां हन्ति शरीरपरिमार्ज्जनम् ॥ ३३ ॥

गङ्गाधरः—अभ्यङ्गप्रसङ्गात् परिशिष्टाभ्यङ्गत्वाच्च पादाभ्यङ्गे गुणान् आह—खरत्वमित्यादि । खरत्वादिकाः पादयोः सद्यः प्रशाम्यन्तीति बोधार्थं पादद्वयादन्याङ्गव्यवच्छेदार्थञ्च प्रथमं पादयोरिति पदम् । एवं द्वितीयं पादयोरिति पदं कालान्तरेण पादयोः सौकुमार्य्यादिज्ञापनार्थं पादातिरिक्तशरीरसौकुमार्य्यादिव्यवच्छेदार्थम् । दृष्टिः प्रसादं लभते इत्यत्र तन्त्रान्तरे हेतुरुच्यते—"चक्षुषि प्रतिबद्धे द्वे शिरे पादगते नृणाम् । अतश्चक्षुःप्रसादार्थी पादाभ्यङ्गं समाचरेत् ॥" इति । वातश्चोपशाम्यति पादयोश्च स्फुटनञ्च न स्यादिति । तृतीयं पादयोरिति पदमङ्गान्तरव्यवच्छेदार्थम् । चतुर्थन्तु पादयोरिति पदमङ्गान्तरशिरास्नायुसङ्कोचप्रतिषेधव्यवच्छेदार्थम् । पुनः पादाभ्यङ्गेनेतिपदं सततपादाभ्यङ्गबोधार्थं विगमव्यवच्छेदार्थञ्च ॥ ३२ ॥

गङ्गाधरः—अभ्यङ्गानन्तरं गात्रोद्वर्त्तनविधानार्थमुद्वर्त्तनमभ्यङ्गादनुपदर्शयति—दौर्गन्ध्यमित्यादि । दौर्गन्ध्यं गात्रस्य तथा गौरवञ्च गात्रस्य कण्डूमलेऽपि स्वेदबीभत्सताञ्च स्वेदेन बीभत्सतां कुत्सिततां शरीरपरिमार्ज्जनमुद्वर्त्तनम् ॥ ३३ ॥

चक्रपाणिः—खरत्वमित्यादि पादाभ्यङ्गगुणः । प्रथमं पादयोरिति पदं खरत्वादिविशेषणार्थं ; द्वितीयन्तु बलादेः कालान्तरोत्पादसूचनार्थं ; तृतीयन्तु स्फुटनविशेषणार्थं ; चतुर्थन्तु शिरास्नायुविशेषणार्थं ; द्विरुक्तन्तु पादाभ्यङ्गेनेति पदं दूरान्तरितस्य पादाभ्यङ्गस्य स्मरणार्थम् ॥ ३२ ॥

चक्रपाणिः—अभ्यङ्गपूर्व्वकत्वादुद्वर्त्तनस्य तमनु परिमार्ज्जनमुद्वर्त्तनं ब्रूते—दौर्गन्ध्यमित्यादि । स्वेदेन बीभत्सता स्वेदबीभत्सता । शरीरस्य बलेन सन्धानं योजनं करोतीत्यर्थः ॥ ३३।३४ ॥

* रूक्षतेति वा पाठः ।
† "न तस्य" इति क्वचित् पठ्यते ।

पवित्रं वृष्यमायुष्यं श्रमस्वेदमलापहम् ।
शरीरबलसन्धानं स्नानमोजस्करं परम् ॥ ३४ ॥*
काम्यं यशस्यमायुष्यमलक्ष्मीघ्नं प्रहर्षणम् ।
श्रीमत् पारिषदं शस्तं निर्म्मलाम्बरधारणम् ॥ ३५ ॥
वृष्यं सौगन्ध्यमायुष्यं काम्यं पुष्टिबलप्रदम् ।
सौमनस्यमलक्ष्मीघ्नं गन्धमाल्यनिषेवणम् ॥ ३६ ॥
धन्यं माङ्गल्यमायुष्यं श्रीमद्व्यसनसूदनम् ।
हर्षणं काम्यमोजस्यं रत्नाभरणधारणम् ॥ ३७ ॥

गङ्गाधरः उद्वर्त्तनानन्तरं स्नानव्यवस्थामिति शरीरपरिमार्ज्जनादनु स्नानं गुणत आह—पवित्रमित्यादि । पूयतेऽनेनेति पवित्रं वृष्यमित्यादिकं प्रभावात् । शरीरबलसन्धानं शरीरं बलेन सन्दधातीत्यर्थः । ओजस्करं परमिति ओजोधातुकरं श्रेष्ठम् । अत्र "स्नानमर्दितनेत्रास्य-कर्णरोगातिसारिषु । आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम्" इति बोध्यम् ॥ ३४ ॥

गङ्गाधरः स्नात्वा वासोऽपिदध्यादिति,स्नानानन्तरं वस्त्रधारणं गुणत आह — काम्यमित्यादि । काम्यं कमनीयतया कामाय हितं. यशस्यादिकं प्रभावात्, श्रीमत् शोभाजननं. पारिषदं परिषदि हितं पारिषदं शस्तम् । अथवा श्रीमतां राज्ञां राजमात्राणाञ्च पारिषदो येन तत्. निर्म्मलपदं समलस्य व्यवच्छेदार्थमेतद्विपर्य्ययगुणज्ञापनार्थञ्च ॥ ३५ ॥

गङ्गाधरः वस्त्रं विधाय गन्धमाल्यं धार्य्यं. अतस्तयोः कर्म्माह वृष्यमित्यादि । सौगन्ध्यं सुगन्धिजननं. सौमनस्यं सुष्ठु मनः क्रियतेऽनेन तत्, सुमनसे हितं वा । अलक्ष्मीः दुःखजनकादृष्टकारिणी ॥ ३६ ॥

गङ्गाधरः गन्धमाल्यधारणानन्तरं रत्नं बिभृयादिति ततोऽनन्तरं रत्नाभरणधारणं कर्म्मत आह—धन्यमित्यादि । धन्यं धनित्वसूचकं. माङ्गल्यं

चक्रपाणिः श्रीमदिति शोभायुक्तं, परिषदि शस्तं पारिषदं, शस्तं माङ्गल्यम् । व्यसनं सर्पपिशाचाद्यभिघात , रत्नयुक्तान्याभरणानि, रत्नन्तु विशुद्धमाणिक्यहीरकमुक्ताफलसुवर्णादि । शोभा-

* पवित्रं वृष्यमायुष्यं काम्यं पुष्टिबलप्रदम् ।
सौमनस्यमलक्ष्मीघ्नं स्नानमोजस्करं परम् ॥ इति पाठान्तरम् ।

मेध्यं पवित्रमायुष्यमलक्ष्मीकलिनाशनम् *।
पादयोर्मलमार्गाणां शौचाधानमभीक्ष्णशः ॥ ३८ ॥
पौष्टिकं वृष्यमायुष्यं शुचि रूपविराजनम्।
केशश्मश्रुनखादीनां कल्पनं संप्रसाधनम् ॥ ३९ ॥
चक्षुष्यं स्पर्शनहितं पादयोर्व्यसनापहम्।
बल्यं पराक्रमसुखं वृष्यं पादत्रधारणम् ॥ ४० ॥

मङ्गल्याय हितम्। श्रीमत् शोभाकरं जनकत्वेनास्त्यस्येति मतुप्। व्यसनं सर्पपिशाचाद्यभिहननं मृद आश्रवण-हननयोश्चागादिकः; हर्षयतीति हर्षणम्, काम्यं प्रागुक्तम्, ओजोहितमोजस्यं, रत्नधारणमाभरणं, रत्नानि मणि-माणिक्यम् ॥ ३७ ॥

गङ्गाधरः— अथायुष्यादिसाधर्म्यात् शौचाधानं क्रमत आह मेध्यमित्यादि। मेध्यं मेधायाः हितं पवित्रमित्यर्थस्तस्य मेधास्थानत्वात्। मलमार्गाणि द्वे अधः सप्त शिरसीत्यादिना व्याख्यातानि। शौचं शुचित्वं तस्य मृज्जलाभ्यां जलेन चाधानमभीक्ष्णशः पुनःपुनर्विधानम् ॥ ३८ ॥

गङ्गाधरः— आयुष्यादिसामान्यात् केशादीनां छेदनप्रसाधने गुणत आह पौष्टिकमित्यादि। शुचि शुचिजनकं, रूपविराजनमिति रूपविराजनं, कल्पनं छेदनं, संप्रसाधनं यथायोग्यं केशस्य नैर्मल्यादिसाधनं श्मश्रुणश्च विरलत्वादि-साधनमिति। आदिना नासारोमच्छेदनादि, स्त्रीणाञ्च पादयोरलक्तकादिदान-मित्यादिकम् ॥ ३९ ॥

गङ्गाधरः— वृष्यत्वादिसाधर्म्यात् पादत्रधारणं गुणत आह चक्षुष्य-मित्यादि। पादयोर्व्यसनं पादगताभिघातादिकं तत्. पराक्रमाय सुखं. पादत्र-मुपानत् ॥ ४० ॥

धानं पानीयेन मृदा च, अभीक्ष्णशः पुनःपुनः, शौचमिति शुचिताकारकं, कल्पनं छेदनं, सम्प्रसाधनं मण्डनम्, एतच्च यथायोग्यतया योजनीयम्। केशानां प्रसाधनं सम्यग्बन्धनादि, श्मश्रूणां कल्पनमेव, नखस्य तु कल्पनमलक्तकादिदानेन प्रसाधनञ्च; आदिग्रहणेन नासारोम-कल्पनादि गृह्यते। पादयोरिति स्पर्शनहितमित्यनेन च सम्बध्यते, पादत्रं पादत्रीं पादुकामिति यावत्; अत्र च वृष्यत्वमचक्षुष्यत्वे प्रभावात्, यद्वा पादसम्बद्धनेत्रपोषिकानाडीप्रत्यवायहरणा-

* "अलक्ष्मीकविनाशनम्" इति पाठस्तु न साधीयान् समासान्त-क-विधानस्य असम्भवात्।

ईतेर्विधमनं* बल्यं गुप्त्यावरणशंकरम्।
घर्म्मानिलरजोऽम्बुघ्नं छत्रधारणमुच्यते ॥ ४१ ॥
स्खलतः संप्रतिष्ठानं शत्रूणाञ्च निसूदनम्।
अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणम् ॥ ४२ ॥
नगरी नगरस्येव रथस्येव रथी यथा।
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ॥ ४३ ॥

गङ्गाधरः—धार्य्यत्वसामान्याच्छत्रधारणं गुणत आह ईतेरित्यादि। ईतिर्भाविदुःखं तस्या विधमनं नाशनं, गुप्तिः पिशाचादिभ्यो रक्षणं, ताञ्चावरणञ्च शञ्च करोतीति तत्, घर्म्म आतपः, रजो धूलिः ॥ ४१ ॥

गङ्गाधरः—धार्य्यत्वसामान्याद्दण्डधारणमाह स्खलत इत्यादि। स्खलतः शक्तिविरहेण निमित्ततो वा पततः पुरुषस्य संप्रतिष्ठानं सम्यक् प्रति स्खलनविपर्य्ययेण स्थानं येन तत् तथा। शत्रूणाञ्च स्वानिष्टमापादनत आचरताम्। अवष्टम्भनं बलाधानकरं, भयघ्नं श्वसर्पादिभ्यः ॥ ४२ ॥

गङ्गाधरः—अथानुक्तस्वस्थवृत्तोपदेशार्थमुक्तविधिषु प्रमादनिषेधार्थञ्चाह नगरीत्यादि। नगरमधिकृततयाऽस्यास्तीति नगराधिकारी राजा यथा नगरस्य स्वान्तर्निवसतः नगरोच्छेदहेतुदुष्टजनस्य सम्बाधां वारयितुं सदा राजन्यकृत्येष्ववहितः स्यात् तथा मेधावी सत्कृत्यस्मरणशाली पुरुषः स्वशरीरस्य स्वान्तर्निवसतः स्वशरीरोच्छेदहेतोर्दुष्टवातादेः सम्बाधां वारयितुं कृत्येष्वनुक्तेषूक्तेषु चावहितोऽप्रमादशाली भवेत्। रथी च यथा रथस्य भङ्गं वारयितुं विषमस्थानगमनपतनादिकं वारयितुं सदा तदुपाङ्गकृत्येष्ववहितो भवेत् तथा च मेधावी स्वशरीरस्य बाह्यानामुच्छेदकराणामभिघातादीनां सम्बाधां वारयितुं कृत्येष्वनुक्तेषूक्ते चावहितो भवेदित्यर्थः ॥ ४३ ॥

चक्षुष्यम्। ईती रोगादिदुर्दैवं, गुप्तिः पिशाचादिभ्यो रक्षा, शंकरं कल्याणकरम्, अवष्टम्भनं बलप्रदम्। भयघ्नं सर्पादिभ्यः ॥ ३५–४२ ॥

चक्रपाणिः—सम्प्रत्यनुक्तस्वस्थवृत्तसंग्रहार्थं तथोक्तस्वस्थवृत्तावधानेन करणार्थमाह नगरीत्यादि। कृत्येषु करणीयेषु उक्तेष्वनुक्तेषु च नगरदृष्टान्तेनान्तरप्रत्यवायहेतुविघातकारिणि कृत्येऽवधानं दर्शयति; रथदृष्टान्तेन च बाह्यसर्पादिपरिहारके कृत्येऽवधानं दर्शयति। नगरोच्छेदे ह्यान्तरो दुष्टजनसम्बन्ध एव हेतुः प्रायो भवति, रथभङ्गे तु बाह्यश्वभ्रविषमपतनादिश्च ॥ ४३ ॥

* नियमनमिति चक्रपाणिधृतः पाठः।

भवति चात्र ।

वृत्त्युपायान् निषेवेत ये स्युर्धर्म्माविरोधिनः ।

शममध्ययनञ्चैव सुखमेवं समश्नुते ॥ ४४ ॥

तत्र श्लोकाः ।

मात्रा द्रव्याणि मात्राश्च संश्रित्य गुरुलाघवम् ।

द्रव्याणां गर्हितोऽभ्यासो येषां येषाञ्च शस्यते ॥

अञ्जनं धूमवर्त्तिश्च त्रिविधा वर्त्तिकल्पना ।

धूमपानगुणाः कालाः पाने मानञ्च यस्य यत् ॥

गङ्गाधरः—अथ प्रायेण प्रधानभूततया शरीरमन्यवेक्षणमुक्त्वा स्वस्थेन यत् कर्त्तव्यं तदाह वृत्त्युपायानित्यादि । वृत्तिर्वर्त्तनं जीवनकालावस्थानं तस्योपायान् प्राणैषणानन्तरं धनैषणोपायान् कृषिपाशुपाल्यादीन् निर्द्दिष्टपणीये वाच्यान् धर्म्माविरोधिनस्तानेव निषेवेत । शमं शान्तिमध्ययनञ्चैव । चकारादन्यान्यपि धर्म्मकर्म्माणि मोक्षोपायान् निषेवेत । एवं सद्वृत्तसेवनेन स्वास्थ्ये सति स्वस्थपुरुषेण वृत्त्युपायाः सेवितुं शक्यन्ते । अतः सुतरामर्थलाभोऽर्थे सति अनिवृत्त्यभावात् शमं वेदाध्ययनं चकाराद्धर्म्मक्रिया मोक्षोपायाश्च सेवितुं शक्यन्ते निश्चिन्तत्वात् । सुतरामतो धर्म्मः स्यात् । एवं सति सुखं समश्नुते स्वर्गापवर्गान्यतरं प्राप्नोतीत्यर्थः । इति चतुर्वर्गानुष्ठानं दर्शितम् ॥ ४४ ॥

गङ्गाधरः अध्यायार्थमुपसंहर्त्तुमाह तत्र श्लोका इत्यादि । मात्रेत्यादि । मात्राशी स्यादित्यारभ्य वोढव्यं भवतीत्यन्तेन मात्रा, तत्र शालीनित्यारभ्य मात्रामेवापेक्षन्ते इत्यन्तेन मात्रां संश्रित्य द्रव्याणि च, न चैतानित्यारभ्यावश्यमित्यन्तेन मात्राश्च संश्रित्य गुरुलाघवम्, भवन्ति चात्रेत्यारभ्य न शीलयेदित्यन्तेन द्रव्याणां विगर्हितोऽभ्यासः, षष्टिकेत्यारभ्य अनुत्पत्तिकरञ्च यदित्यनेन येषाञ्च द्रव्याणामभ्यासः शस्यते । अत ऊर्द्धमित्यारभ्येन्दुवदित्यन्तेनाञ्जनं,

चक्रपाणिः—प्रधानभूतां शरीरप्रत्यवेक्षां कृत्वा स्वस्थेन सता यदन्यच्च कर्त्तव्यं तदाह—वृत्त्युपायानित्यादि । वृत्तिर्वर्त्तनं तस्योपायाः कृष्यादयो धनैषणायां निर्द्दिष्टपणीये वाच्याः । शमः शान्तिः, अध्ययनं वेदाध्ययनं निषेवेतेति सम्बन्धः । एवं सति सुखं समश्नुते प्राप्नोति । एतेन कृष्यादिभ्योऽर्थः, शान्त्यध्ययनाभ्यां धर्म्मः, अर्थधर्म्माभ्याञ्च सुखलक्षणः काम इति त्रिवर्गानुष्ठानं दर्शितं भवति ॥ ४४ ॥

चक्रपाणिः मात्रेत्यादि । अध्यायार्थसंग्रहः, मात्रोक्ता "मात्राशी स्यात्" इत्यादिना ; तथा द्रव्याणि "तत्र शालि" इत्यादिना ; मात्राश्चाश्रित्य गुरुलाघवमिति प्रकृतिलघून्यपि मात्रा-

व्यापत्तिचिह्नं भैषज्यं धूमो येषां विगर्हितः।
पेयो यथा यन्मयञ्च नेत्रं यस्य च यद्विधम्॥
नस्तःकर्म्मगुणा नस्तःकार्य्यं यच्च यथा यदा।
भक्षयेत् दन्तपवनं यथा यद् यद्गुणञ्च यत्॥
यदर्थं यानि चास्येन धार्य्याणि कवड़ग्रहे।
तैलस्य ये गुणा दृष्टाः शिरस्तैलगुणाश्च ये॥

हरेणुकेत्यारभ्य मूर्द्धविरेचनम् इत्यन्तेन त्रिविधा वर्त्तिकल्पना, यत्र सा धूमस्य वर्त्तिः स्वस्वकल्पनासहिता त्रिविधा धूमवर्त्तिरित्यर्थः, गौरवमित्यारभ्य शिरोगताः इत्यन्तेन धूमपानगुणाः, प्रयोगपाने तस्येत्यारभ्य रोगा इत्यन्तेन काला धूमपानकाल्याः, नस्य तु पेया इत्यारभ्य त्रिश्चतुः पिबेदित्यन्तेन यस्य प्रायोगिकादेर्धूमस्य यत्पानमानं चकारात् मोक्षमानञ्च, हृत्कण्ठेत्यारभ्य कुर्य्यादुपद्रवानित्यन्तेन व्यापत्तिचिह्नं सम्यग्योगचिह्नपूर्व्वकं भावाभावयोरेकतरग्रहणेनोभयस्य ग्रहणात्, तत्रेष्टमित्यारभ्य विरूक्षणमित्यन्तेन धूमव्यापत्तेर्भैषज्यं, परन्तन इत्यारभ्य धूमविभ्रमादित्यन्तेन धूमो येषां विगर्हितः, धूमयोग्य इत्यारभ्य आत्मवान् इत्यन्तेन धूमः पेयो यथा। (ऋज्वङ्गेत्यादिना) चतुर्व्विंशतिकामित्यारभ्य प्रशस्यते इत्यन्तेन यस्य धूमस्य यद्विधं नेत्रं यन्मयञ्च यद्द्रव्यघटितं तत्तद् द्रव्यं चकारात् नेत्रप्रकारप्रयोजनं, दूरादित्यादिनैकश्लोकेन, वर्षे वर्षे इत्यारभ्य नभस्तः इत्यन्तेन नस्यकर्म्म, नस्यकर्म्मेत्यारभ्य न लभते व्यथामित्यन्तेन गुणा अर्थात् नस्यकर्म्मणः, चन्दनेत्यारभ्य संविधिरित्यन्तेन नस्तःकार्य्यञ्च यत् अणुतैलमित्यर्थः, तस्य मात्रामित्यारभ्य नावनैस्त्रिभिरित्यन्तेन यथा नस्तःकार्य्यं, त्र्यहादित्यारभ्य समाचरेदित्यन्तेन यदा नस्तःकार्य्यं स कालः चकारात्, निवातेत्यादिना गुणानित्यन्तेनाणुतैलसेवनगुणः। आपोथितेत्यारभ्यविविधाः द्रुमाः इत्यन्तेन यथा यद्दन्तपवनं भक्षयेत् तत्तत्प्रकारः तत्कषायादिरसद्रव्यम्। निहन्तीत्यादिना विशोधनमित्यन्तेन यद्गुणं ते गुणाः, यद्द्रव्यं दन्तपवनं तद्द्रव्यन्तु करञ्जेत्यादिनैकश्लोकेन, धार्य्याणीत्यारभ्य सूक्ष्मैलायाः फलानि चेत्यन्तेन यदर्थं यानि चास्ये धार्य्याणि तदर्थं तानि च द्रव्याणि, हन्वोरित्यारभ्य गण्डूषधारणादित्यन्तेन

सेवायेक्षस्ते इत्येवंप्रकारेणोक्तम्; पानस्य मानं पानमानम् 'आपानाञ्चित्रयश्चयः' इत्यादि,

कर्णतैले तथाभ्यङ्गे पादाभ्यङ्गे च मार्ज्जने।
स्नाने वाससि शुद्धे च सौगन्ध्ये रत्नधारणे॥
शौचे संहरणे लोम्नां पादत्रच्छत्रधारणे।
गुणा मात्राशितीयेऽस्मिन् यथोक्ता दण्डधारणे॥ ४५॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
मात्राशितीयो नाम पञ्चमोऽध्यायः॥ ५॥

तैलस्य कवलग्रहे ये गुणास्ते. नित्यमित्यारभ्य मूर्द्धि, तैलनिषेवणादित्यन्तेन शिरस्तैलगुणाः. न कर्णेत्यारभ्य कर्णतर्पणादित्यन्तेन कर्णतैले ये गुणाः, स्नेहाभ्यङ्गादित्यारभ्याल्पजर एव चेत्यन्तेनाभ्यङ्गे ये गुणास्तथा खरत्वमित्यारभ्य पादाभ्यङ्गेन पादयोरित्यन्तेन पादाभ्यङ्गे ये गुणाः, दौर्गन्ध्यमित्यारभ्य मार्ज्जनमित्यन्तेन गात्रमार्ज्जने ये गुणाः, पवित्रमित्यादिनैकश्लोकेन स्नाने ये गुणाः, काम्यमित्यारभ्यैकेन वाससि वस्त्रे शुद्धे निर्म्मले ये गुणाः, वृष्य-मित्यादिनैकेन सौगन्ध्यान्विते गन्धमाल्ये ये गुणाः धन्यमित्यारभ्यैकेन रत्न-धारणे ये गुणाः, मेध्यमित्यादिनैकेन शौचे ये गुणाः, पौष्टिकमित्यारभ्यैकेन संहरणे लोम्नां केशादीनां छेदने संप्रसाधने च ये गुणाः. चक्षुष्यमित्यादिनैकेन पादत्रधारणे ये गुणाः, ईतेरित्यादिनैकेन छत्त्रधारणे ये गुणाः, स्खलत इत्यादि-नैकेन दण्डधारणे ये गुणाः, यथा प्राणैषणानन्तरं वर्त्तितव्यं तच्च नगरीत्यादिभ्यां मात्राशितीयेऽस्मिन्नुक्ता आत्रेयेणेति शेषः॥ ४५॥

गङ्गाधरः—अध्यायं समापयति, अग्नीत्यादि। प्राग्वत् व्याख्येयम्।

इति श्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ सूत्रस्थाने
प्रथमस्कन्धे स्वस्थचतुष्कीयप्रथमा पञ्चममात्राशितीयाध्याय-
जल्पाख्या पञ्चमी शाखा॥ ५॥

---

चक्रः कार्य्यं यदिति "अणुतैलं"। यथेति "पिप्पली" इत्यादि, यथेति "प्रावृट्शरत्" इत्यादि। शेषं सुगमम्॥ ४५॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्वेददीपिकायां सूत्रस्थान-
व्याख्यायां मात्राशितीयो नाम पञ्चमोऽध्यायः॥ ५॥

## षष्ठोऽध्यायः

**अथातस्तस्याशितीयमध्यायं व्याख्यास्यामः,**

**इति ह स्माह भगवानात्रेयः ॥ १ ॥**

**तस्याशिताद्यादाहाराद् बलं वर्णश्च वर्द्धते ।**

**तस्यर्त्तुसात्म्यं विदितं चेष्टाहारव्यपाश्रयम् ॥ २ ॥**

ननु मात्रावद्धि अशनमशितमनुपहत्य प्रकृतिं बलवर्णसुखायुषा योजयत्युपयोक्तारमवश्यमिति यत् प्रतिज्ञातं तद् व्याहन्यते हेमन्तशिशिरादिष्वभिमताहाराद् व्याधयुत्पत्तिदर्शनादिति । तत्प्रतिज्ञास्थापनार्थं तस्याशितीयमध्यायमारभते । अथात इत्यादि । प्राग्वद्व्याख्यानवचम् ॥ १ ॥

गङ्गाधरः—तस्याशिताद्यादित्यादि । तस्य मात्राशिनः पुरुषस्याशिताद्यादशितात् खादितात् पीतात् लीढ़ाच्चाहाराद् बलं, वर्णः, चकारात् सुखायुश्च अवश्यं वर्द्धते । तस्य मात्राशिपुरुषस्याशिताद्याहारस्य तु सात्म्यं विदितं विख्यातं लोके । कुतो सात्म्यम् ऋतुगुणविपरीतगुणवत्तया । सात्म्यमुपशयः सुखजननः उपयोगः । तच्च यस्मात् चेष्टाहारव्यपाश्रयम् । चेष्टा व्यायामव्यवायाभ्यङ्गादयः, आहारा अशितादयः, ताभ्यां चेष्टाहाराभ्यां विशेषेण अप विपर्य्ययेण हेमन्ताद्यृतुगुणविपरीतगुणवत्तया आश्रयते यत् सात्म्यं सुखजनक उपयोगः, तत् चेष्टाहारव्यपाश्रयं ; चेष्टाव्यपाश्रयमाहारव्यपाश्रयमिति द्विधा । एतेनैतदुक्तं भवति—मात्राशिनो यदशितं खादितं पीतं लीढ़ं वा आहारजातं तत् यद्धेमन्ताद्यृतुगुणविपर्य्ययेण चेदभ्यवहार्य्यते तदा तदृतुसात्म्यं तस्याहारस्येत्येकमाहारजनितमृतुसात्म्यं वा ; चेष्टा व्यायामादिः, सा चेद्धेमन्तादिगुणविपरीतगुणा स्यात् तदा तदृतुसात्म्यं तस्याश्चेष्टाया इत्यपरमेकं चेष्टाजनितमृतुसात्म्यम् । इत्थमेव तु

चक्रपाणिः—मात्राशितीये मात्रावदाहारस्य बलादिहेतुत्वं प्रतिपादितं, तच्च ऋतुसात्म्यापेक्षकृतस्याहारस्य भवति ; तेन ऋतुप्रविभागपूर्व्वकमृतुसात्म्याभिधायकं तस्याशितीयं ब्रूते । अशिताद्यादिति अशितपीतलीढखादितात् । वर्णश्चेति चकारेण पूर्व्वाध्यायोक्तसुखायुषी अपि गृह्येते ; यद्वा बलवर्णाभ्यामेव नान्तरीयं कृत्स्नं धातुसाम्यकार्य्यं सुखादि गृह्यते । विदितमित्यनेन सम्यग्ज्ञानपूर्व्वकमृतुसात्म्यानुष्ठानं दर्शयति, चेष्टाग्रहणेन व्यवायव्यायामाभ्यङ्गादीनां ग्रहणं ; चेष्टाहारव्यपाश्रयं चेष्टाहारगोचरम् ॥ १।२ ॥

इह खलु संवत्सरं षडङ्गमृतुविभागेन विद्यात्। तत्र आदित्यस्योदगयनमादानञ्च त्रीनृतून् शिशिरादीन् ग्रीष्मान्तान् व्यवस्येत्; वर्षादीन् पुनर्हेमन्तान्तान् दक्षिणायनं विसर्गञ्च ॥ ३ ॥

सात्म्येन मात्राशी चेत् स्यात् तदा तस्याशिताद्यादाहाराद् बलं वर्णः सुखमायुश्च वर्द्धते इति। आहारद्रव्येण तदृतुविपरीतगुणेन तस्मिन्नेवर्त्तौ पुरुषे सुखजनक उपयोग आश्रीयते; एवं चेष्टयापि न प्रतिज्ञाहानिदोष इति ॥ २ ॥

गङ्गाधरः— नन्वेवमस्तु। ऋतुः पुनः कः, कीदृशो वा? इत्याह— इहेत्यादि। इह खलु संसारे संवत्सरं महाकालं षडङ्गं विद्यात्। केन केनाङ्गेनेत्याह— ऋतुविभागेन ऋतुभेदेन। नन्वेवमस्तु। ऋतुसात्म्यज्ञाने हेतुमृतुं वक्तुं कथं संवत्सर उच्यते इति चेत्? न। संवत्सरातिरिक्तकालस्याभावेन संवत्सरस्यैवाङ्गानि ऋतव एव सन्ति न त्वधिकाः इति ज्ञापनार्थं संवत्सरस्योक्तिः। न हि षडृतुधर्म्मशीतोष्णवर्षातिरिक्तः कश्चित् काललिङ्गं धर्म्मोऽस्ति। वक्ष्यति हि "शीतोष्णवर्षलक्षण कालः" इति ॥

तस्यावृत्त्यैव हि युगादयो व्यवह्रियन्ते। कृतादीनान्तु यद्यत् स्वलक्षणं सत्यधर्म्मादिकं तत्तच्च कालस्य लिङ्गमिति। सुश्रुते चोक्तं "कालो हि नाम भगवान् स्वयम्भुरनादिमध्यनिधनः। अत्र रससम्पद्व्यापत्ती जीवितमरणे च मनुष्याणा-

चक्रपाणिः— ऋतुज्ञानमन्तरेण सात्म्यज्ञानं न सम्भवतीति ऋतूनामुपयुक्तस्वरूपज्ञानार्थमाह— इहेत्यादि। ऋतुप्रतिपादनप्रस्तावे संवत्सरं विद्यादिति संवत्सरप्रतिपादनमृतूनामेव मिलितानां संवत्सरप्रतिपादनार्थं, मेलकश्च बुद्ध्या व्यवह्रियते न तु परमार्थेन ऋतूनां मेलकोऽस्ति, ऋतूनां संवत्सरात्मकत्वं पुनःपुनश्च एवर्त्तवः परावर्त्तन्त इति ज्ञानार्थमवश्यं प्रतिपादनीयम्। इहेतीह प्रकरणे, षडङ्गं विद्यादित्यत्र तु रोगभिषग्जितीयादौ तत्तत्कार्य्यवशादन्यथापि; उक्तञ्च— "शीतोष्णवर्षलक्षणः कालः" इति। षडङ्गमिति समाहारे द्विगुः, ऋतुव्यतिरेकेण संवत्सरस्याविद्यमानत्वात्; यदि वा समुदायिभ्योऽन्यः समुदाय इत्याश्रित्य बहुव्रीहिः कार्य्यः। तत्रेति ऋतुविभागकथने। उदक् उत्तरां दिशं प्रति अयनं गमनम्। आददाति क्षपयति पृथिव्याः सौम्यांशं प्राणिनाञ्च बलमित्यादानम्। त्रीन् शिशिरादीनित्यनेनैव लब्धेऽपि ग्रीष्मान्तत्वे ग्रीष्मान्तानिति शिशिरस्यादिरिति विग्रहस्य तथादिशब्दस्य प्रकारवाचितायाः प्रतिषेधार्थम्। एवं हेमन्तान्तानिति व्याख्येयम्। दक्षिणां दिशं प्रति अयनं दक्षिणायनं, विसृजति जनयत्याप्यमंशं प्राणिनाञ्च बलमिति विसर्गः। संज्ञाप्रणयनञ्च व्यवहारार्थं, निरुक्तिप्रतीयमानार्थप्रतिपादनार्थञ्च ॥ ३ ॥

मायते। स सूक्ष्मामपि कलां न लीयते इति कालः, संकलयति कालयति वा भूतानीति कालः। तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेणाक्षि-निमेषकाष्ठाकलामुहूर्त्ताहोरात्रपक्षमासर्त्त्वयनसंवत्सरयुगप्रविभागं करोति।" तन्त्रान्तरेऽपि "महदादिगुणान् यः परिणामयति स कालो महदादिगुणपरिणाम-स्वभावः स्वतो निर्विशेष आद्यन्तशून्योऽयमुपादायात्मानं पुरुषो विश्वरूपेण ससज्ज। येन चाव्यक्तमूर्त्तिना अमूर्त्तन्मात्रं विश्वमिदं पृथक् प्रकाशयाम्बभूव। स पुनरग्रे यथाऽऽसीत् तथैवाऽधुना वर्त्तते वर्त्तिष्यति चोत्तरमीदृगेव। तेन च यावताऽयं भगवानादित्यः पर्य्यटन्नतिक्रामति परमाणुमात्रं देशं तावानुच्यते परमाणुः कालः, परमाणू द्व्यणुः, षट् परमाणवस्त्रसरेणुः स त्रयोऽणवः। त्रयस्त्रसरेणवस्त्रुटिः, शतत्रुटयो वेधः, त्रयो वेधा लवः, त्रयो लवा निमेषः, त्रयो निमेषाः क्षणः, पञ्च क्षणाः काष्ठा, पञ्चदश काष्ठा लघु, पञ्चदश लघूनि नाडिका, द्वे नाडिके मुहूर्त्तः, त्रिंशन्मुहूर्त्ता अहोरात्रः, पञ्चादशाहोरात्राः पक्षः शुक्लः कृष्णश्चेति, द्वौ पक्षौ मासः, मासौ द्वावृतुः, त्रय ऋतवोऽयनं तच्च दक्षिणमुत्तरं, ते च संवत्सरः। इत्येवं परमाण्वादिना संवत्सरान्तेन कालेन भगवानादित्यो ग्रहनक्षत्रादिसमवेतं कालचक्रमधिष्ठितः पर्य्यटति ; एवमेतज्जगत्। पुनरथ परिसंवत्सरान्ते तथैव पर्य्यति इत्यादि।

तत्र खलु परमाणुदेशस्त्वणुदेशस्यार्द्धम्। अणुस्तु त्रसरेणोस्तृतीयांशो देशः। त्रसरेणु पुनर्गगनोपरि वायुना विनापि यद्रजो निसर्गादुर्द्ध्वगमनपतनशीलं भूस्थानादवलोक्यते लोकैः स उच्यते। उक्तं हि "अणुर्द्वौ परमाणू स्यात् त्रसरेणुस्त्रयः स्मृतः। जालार्करश्म्यवगतः खमेवानुपतन्नगात्॥" इति। काला-त्मानं पुनः पञ्चगुञ्जकमाषेण तुलितषट्-पलताम्रनिर्म्मितं पात्रं प्रस्थमितजलभाजनं चतुर्माषकताम्रनिर्म्मितचतुरङ्गुलशलाकया कृतच्छिद्रं कालेन यावता जले निम-ज्जति तावान् कालो नाडिकेति बोध्यम्। "पाञ्चगोञ्जिकमाषेण षट्पलं ताम्र-भाजनम्। जलप्रस्थावकाशाढ्यं चतुर्भिस्ताम्रमाषकैः। चतुरङ्गुलया च्छिद्रीकृतं तच्च शलाकया। मज्जत्यम्भसि कालेन यावता सैव नाडिका"॥ इति।

ननु परमाण्वादिभेदेनानन्ताङ्गं विद्यात् इति नोच्यते कथमिति नाशङ्क्यम्, ऋतुभेदेनोक्ता ऋतूनां प्रत्येकमाहाराचारविशेषोऽत्र वक्तव्य इति प्रयोजनं प्राधान्येन लभ्यते, दिनादीनान्तु प्रतिदिनमाहाराचारनिबन्धनसात्म्यविभिन्नता नियमाभावेन प्रयोजनाभावात् प्रातःकृत्यादिविभिन्नता हि प्रयोजनवती सर्व्व-दिनमेकरूपा विना नैमित्तिकीं क्रियां तच्च चेष्टाहारव्यपाश्रयदिनसात्म्यमेव।

तद्यथा — निमित्तानुरूपेण कश्चित् प्रहरादूर्द्ध्वं भुङ्क्ते ; कश्चित् प्रहरद्वयादित्यादि। नित्यन्तु सार्द्धप्रहरद्वयाभ्यन्तरे दिने। रात्रौ प्रहरादर्व्वागिति। तदपि स्वस्थवृत्तं भवदपि नात्र दिनादिभेदेन वत्सरस्याङ्गमुक्तम्, ऋतुसात्म्यज्ञाने हेतुभूतत्त्वज्ञानार्थमृतुभिर्वत्सरस्याङ्गभेद उपदिष्ट इति।

ननु संवत्सरकालो यथैवर्त्तुभेदेन भिद्यते, दिवसश्च तथा। महाकालः शीतोष्णवर्षलक्षणैरनुमीयते ; तदावृत्त्यैव पक्षमासर्त्त्वयनवत्सरयुगादय उच्यन्ते। यथा संवत्सरावृत्त्या युगादिर्द्विपरार्द्धान्तः काल उच्यते भवद्भिः। उक्तं हि सुश्रुते — "तत्र पूर्व्वाह्णे वसन्तस्य लिङ्गं, मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषः, प्रदोषे वार्षिकं, शारदमर्द्धरात्रे, प्रत्यूषसि हेमन्तमुपलक्षयेत्। एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमनैर्जानीयात्" इति। अत्रोच्यते संवत्सर इव शीतोष्णवर्षलक्षणोऽपि दिवसो न महाकालतयोपलभ्यते। ग्रीष्मर्त्तुकदिवसस्य यथा शीतोष्णवर्षलक्षणत्वं, न तथा हेमन्तर्त्तुकदिवसस्य। तत्र हि शीतमधिकमुष्णत्वमल्पमनल्पश्च वर्षं नीहारस्येति। ग्रैष्मिकदिवसातिरिक्तत्वं हैमन्तिकदिवसस्येति। संवत्सरो महाकालो न दिवसः। न चैवं हेमन्तादीनां स्वलक्षणादतिशयशीतोष्णादिलक्षणत्वे तस्य संवत्सरस्यातिरिक्तत्ववारणार्थं कालातियोगो भवद्भिर्वक्तव्य इवास्माभिर्हैमन्तिकदिवसस्य दिवसस्वलक्षणातिशयलक्षणत्वेन दिवसातियोगो वाच्यः, स एव कालातियोग इति वाच्यमस्माकम्। कालातियोगे हि ऋतुव्यापत्तिजा भावव्यापत्तयो भवन्ति यथा, तथा युष्माकमपि स्वलक्षणयोगे भवन्तु ऋतुव्यापत्तिजा भावव्यापत्तय इत्यापत्तिः स्यात्। ननु ग्रैष्मिकदिवसस्य प्राह्णादीनां यथा कफादिजनकत्वं न तथा हैमन्तिकदिवसस्येति। युष्माकमिवास्माकं त एव कालातियोगलक्षणर्त्तुव्यापत्तिजा व्याधयो भवन्त्येवेति चेत् न, उक्तं हि "स्वलक्षणयोगे ऋतुस्वभावजे भावानां सम्पद्व्यापत्ती।" "तद्यथा — "भाद्रपदाश्वयुजौ वर्षाः, कार्त्तिकमार्गशीर्षौ शरत्, पौषमाघौ हेमन्तः, फाल्गुनचैत्रौ वसन्तः, वैशाखज्यैष्ठौ ग्रीष्मः, आषाढ़श्रावणौ प्रावृडिति। तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्य्याः, आपश्चाप्रसन्नाः क्षितिमलप्रायाः। ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टब्धाग्नीनां विदह्यन्ते, विदाहाच्च पित्तसञ्चयमापादयन्ति, स सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलायितः पैत्तिकान् व्याधीन् जनयति। ता एवौषधयः कालपरिणामात् परिणतवीर्य्या बलवत्यो हेमन्ते भवन्ति, आपश्च प्रसन्नाः स्निग्धा अत्यर्थं

गुण्यः, ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपष्टम्भितदेहानां देहिनामविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मणः सञ्चयमापादयन्ति। स सञ्चयो वसन्तेऽर्करश्मिप्रविलायित ईषत्स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति। ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्ति आपश्च, ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायोः सञ्चयमापादयन्ति, स सञ्चयः प्रावृषि चात्यर्थजलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति। एवमेष दोषाणां सञ्चयप्रकोपे हेतुरुक्त इति।"

भवतान्तु कालस्य दिनस्य वितिगमनाभावेन मिथ्याहीनातिलक्षणजे भवतो भावानामेते व्यापत्सम्पत्ती स्वभावजे तु न स्त इति।

यदि च समरात्रिन्दिवेऽहोरात्र एव समशीतोष्णस्वभावे भवतो ये भावानां सम्पद्व्यापत्ती ते कालस्वभावजे इत्युच्यते तदाऽस्माकमिवातियताः कालयोगातियोगमिथ्यायोगा न भवन्ति, भवन्ति च नियताः, भवन्त्विति चेत् तर्हि दिनरात्र्योर्वृद्धिह्रासाभ्यां ग्रीष्मादौ कालातियोगायोगावन्यथाभावेन मिथ्यायोगश्च युगपदेव स्युः। ननूक्तञ्च पित्तादिवृद्ध्यादिकं सममेवावयोरिति चेत्, तथापि दिनरात्र्योर्मानवृद्धिह्रासलक्षणातियोगायोगावधिकौ स्वलक्षणातिशयन्यूनताभ्यां स्वीक्रियेते भवद्भिरिति, क्रियतां च नियतानियतकालातियोगादीनां फलव्याध्यादृग्यपदेशः। किञ्च यदि समरात्रिन्दिवकालो महाकालः, तस्य रात्रिदिनयोर्ह्रासवृद्धिः कारणमर्कः अथवा चन्द्र उच्यते, तदा चन्द्रार्कयोर्गतिभेदे कोऽपरो हेतुः? तौ च चन्द्रार्कौ महाकालचक्रास्थितौ महाकालस्य चक्रवद्भ्रमणस्वभावेन मार्गं परिगृहीतौ दक्षिणोत्तरमयते। समरात्रिन्दिव एवाहोरात्रात्मकस्तु महाकालो न स्यात्तर्गतदिनरात्रिवृद्धिह्रासकरकालविशेषस्वभावमार्गप्रतिपन्नौ चन्द्रार्कौ करोति। करोति चेत्, सर्वदैव दिनरात्र्योर्वृद्धिह्रासौ स्यातां। न ग्रीष्मादौ ग्रीष्मादिलक्षणककालभावेन ग्रीष्मादावपि समरात्रिन्दिवाहोरात्रात्मककालस्वभावमार्गानुवृत्त्या वृद्धिह्रासासम्भवात्, सम्भवाच्च साम्यस्येति। तस्मात् समरात्रिन्दिवोऽहोरात्रो न न महाकाल इति। इत्थञ्च संवत्सररूपस्य महाकालस्य चक्रवद्भ्रमणस्वभावात् चन्द्रार्कवातवारिदानां बलाबलगमनागमनाविर्भावतिरोभावादयो भवन्ति। तत्र विरोधिधर्म्माणामेकस्य बलेऽपरस्याबलत्वमिति शीतोष्णकरयोर्मिथो हीनाधिकसमबलैर्हीनाधिकसमलक्षणानि स्युरिति। एतेनार्कगमनादेव पर-

माण्वादिरौपाधिकः काल इत्युच्यते यत् तन्निरस्तम्। गमनस्य परमाण्वादिमानाभावाच्च। न हि गमनं परमाण्वादिदेशसंयोगमात्रं; तादृशपरमाण्वादिसंयोगध्वंसस्तु कियता कालेनेति? यावता कालेन स्यात्तावत् कालनिबन्धनमानसम्भवात्। मुख्यगमनस्य परमाण्वादिः काल एव च कथ्यते। तस्मान्नार्कगमनं कालः। अयं स्वस्वभावजचन्द्रार्कमेघवातवन्द्यावल्यादिप्रयोज्यशीतोष्णवर्षान्यतमभावात्। अयं संवत्सरो महाकालः; तथाविधशीतोष्णवर्षान्यतमलक्षणावयवात्। संवत्सरातिरिक्तो न महाकालः; तथाविधशीतोष्णवर्षान्यतमलक्षणावयवातिरिक्तावयवाभावात्। स्वस्वभावजेत्यनेन जगतां न कालत्वम्। अयञ्च कालो नित्यः; प्रत्यभिज्ञासिद्धनाशप्रत्ययाभावात्। सोऽयं वैशाखीयः परमाण्वादिरिति; स एवायं संवत्सर इत्यादिप्रत्यभिज्ञानस्य त्वयं संवत्सरो न स यस्मिन् भवान् काशीमगच्छदित्यादिभेदप्रतीत्या बाधितत्वाभावात् क्रियोपाधिभिन्नव्यवच्छेदेऽपि तस्य नातिरिक्तत्वात्। यथायं युवा न स यस्य बालकस्य भवान् प्रिय आसीदित्यादिभेदप्रत्ययेन देवदत्तादेर्बालकस्य युवत्वेन प्रत्यभिज्ञानं न बाध्यते। स एव बालोऽयं युवेत्यभेदप्रत्ययात्। तथा स एव भवदीयकाशीगमनसंवत्सरोऽयं संवत्सरः; भवान् यस्मिन् संवत्सरे काशीं यस्मिन् मासेऽगच्छत् सोऽयं मासः पुनरागत इत्यादिप्रत्ययादिति। इत्थं व्यवस्थितं संवत्सरमृतुभेदेन षडङ्गं विधान। ते ऋतवः के, कथं वा स्युः? इत्याह तदिति। यः संवत्सरस्तस्येदमवयवरूपमिति। तदादित्यस्योदगयनमुत्तरायणमादानञ्चेत्यनर्थान्तरम्, शिशिरादीन् ग्रीष्मान्तान् त्रीन्। दक्षिणायनं विसर्गश्च इत्यनर्थान्तरम्। वर्षादीन् हेमन्तान्तान् त्रीनृतूनिति द्वयं विधान्। तदित्युदगयनलिङ्गभागित्वान्नपुंसकम्, उदगयनमादानञ्चेति चकारो विकल्पे समुच्चये वा।

ननूदगयनं कति दिनानि, दक्षिणायनञ्च कति दिनानीति? अत आह—त्रीनित्यादि। बहुवचनान्तत्वेन प्रत्येकमन्वयादुदगयने चादाने चोद्देश्यविधेयभावेन मिलितमिति शिशिरवसन्तग्रीष्मा उदगयनमादानञ्च भवन्ति न त्वेको वा द्वौ वोदगयनं, द्वौ त्वेको वा ऋतुरादानमित्यर्थः। इत्थञ्च यस्मिन् दिने यस्मिन्नेव परमाणुकाले भगवानादित्य उत्तरां दिशमयते तत्कालावधि यावदुत्तरादिगयनमुदगयनम्। अन्यद्दक्षिणायनम्। एवं वर्षादीनित्यत्र त्रीनिति पदमनुवर्तते। बहुवचनेन पूर्ववद् व्याख्येयम्। एतेनादित्यस्य मकरादिराशिसंक्रमणेन माघादिद्विद्विमासात्मका ऋतवः शिशिरादयः स्युरिति यैरुच्यते तन्निरस्तम्। उत्तरदक्षिणायनाभ्यामेव शीतोष्णादिकर्त्तृधर्म्म ह्रासप्रत्ययादुत्पत्तेश्च। किन्तूत्तरायन-

विसर्गे पुनर्वायवो नातिरुक्षाः प्रवान्ति, इतरे पुनरादाने।

दिनावधि एकषष्टिदिनैः शिशिरः, तत एकषष्टिदिनैर्वसन्तः, ततः एकषष्टिदिनै-ग्रीष्मः. ततः किञ्चिन्न्यूनैकषष्टिदिनैर्वर्षाः, ततः किञ्चिन्न्यूनैकषष्टिदिनैः शरत्, ततः किञ्चिन्न्यूनैकषष्टिदिनैर्हेमन्तः, इति पञ्चषष्ट्यधिकत्रिशतीदिनैः संवत्सरः। इति। शिशिरादींस्त्रीनित्युक्तो ग्रीष्मान्तानिति लाभे पुनर्वचनं प्रकारार्थकादि-शब्दसन्देहनिरासार्थम्। एवं परत्रापि बोध्यम्। वस्तुतस्तु शिशिरादींस्त्री-नित्युक्तेऽतद्गुणसंविज्ञानबहुव्रीहिणा वसन्तग्रीष्मवर्षा इति लाभवारणार्थं पुन-र्ग्रीष्मान्तानित्युक्तं; वर्षादीन् पुनर्हेमन्तान्तांस्त्रीनित्यत्र वर्षादीन् पुनस्त्रीनित्युक्ते-ऽप्यतद्गुणसंविज्ञानबहुव्रीहिणा शरद्धेमन्तशिशिरा उत्तरायणमिति लाभात्। एवं त्रीन् ग्रीष्मान्तानित्युक्ते तथाल्लाभे पुनः शिशिरादीनिति पदं तद्गुण-संविज्ञानबहुव्रीहिज्ञापनार्थम्। तेन हिमशिशिरवसन्तान्तांस्त्रीनादानमित्यर्थ-व्यवच्छेदः। वर्षादीन् पुनर्हेमन्तान्तांस्त्रीनित्यत्रापि हेमन्तान्तान् पुनस्त्रीनित्युक्ते तत्तद्गुणसंविज्ञानबहुव्रीहिणा ग्रीष्मवर्षाशरदो विसर्ग इति लाभात्। यदि च शिशिरादींस्त्रीनादानं वर्षादीन् हेमन्तान्तांस्त्रीन् विसर्ग विद्यादित्युच्यते, तथा शिशिरस्यादिर्हेमन्तः, तान् शिशिरादीन् हिमशिशिरवसन्तानादानं विद्यात्। (विसर्गं) वर्षाणामादिर्ग्रीष्मस्तान् हेमन्तोऽन्ते येषां तान् ग्रीष्मवर्षाशरदो विसर्गं विद्यादिति लाभः स्यात्। तथा चादानं शिशिरादींस्त्रीन् ग्रीष्मान्तान् वर्षादीं-स्त्रीन् विसर्गं विद्यादित्युक्तावपि तथैव स्यात्। एवमादानं ग्रीष्मान्तांस्त्रीन् वर्षादीन् हेमन्तान्तांस्त्रीन विसर्गमित्युक्तावपि। एवमादानं शिशिरादीन् ग्रीष्मान्तांस्त्रीन विसर्ग हेमन्तान्तांस्त्रीनित्युक्तावपि स्यात् तथेति॥ ३॥

गङ्गाधरः—अथर्त्तुषट्कज्ञानार्थं सामान्यधर्म्ममादानत्वं शिशिरादीनां त्रयाणां विसर्गत्वं वर्षादीनां त्रयाणामुक्त्वा तदादानत्वं किंतावत्, विसर्गत्वञ्च ? इत्या-काङ्क्षायां पूर्व्वमुदगयनत्वेन धर्म्मक्रियादौ प्रशस्तत्वेन प्राधान्यादग्रे आदानस्याभि-धाने कर्त्तव्येऽपि अत्र तु प्राधान्याद्विसर्गस्य प्राणबलजनकत्वेनादावेव विसर्गत्व-धर्म्मं दर्शयति—विसर्गे पुनरित्यादि। वायवो नातिरूक्षाः किञ्चिद् रूक्षस्निग्धा

चक्रपाणिः—विसर्गधर्म्मं निर्दिशति—विसर्गे पुनरित्यादि। यद्यपि आदानमादौ पठितं तथापि प्रतिलोमतन्त्रयुक्त्यादौ विसर्गगुणकथनं, यदि वा प्रथममादानस्योत्तरायणरूपस्य प्रशस्तत्वादग्रेऽभि-धानम्, इह तु विसर्गस्य बलजनकत्वेनाभिप्रेतत्वादग्रेऽभिधानम्। नातिरूक्षा इति सौम्यविसर्ग-कालसम्बन्धे मन्दीकृतरौक्ष्याः प्रवान्तीति। इतरे पुनरादाने इति—अप्रवाप्ताविकक्षाआग्नेया-

मार्गपरिगृहीताः कालर्त्तु-रसदोष-देहबलनिर्वृत्तिप्रत्ययभूताः समुपदिश्यन्ते ॥ ५ ॥

स्निग्धत्वादीनां हेतुः सोमश्च। एते त्रयः कालस्वभावमार्गपरिगृहीताः प्राणिनां नानारूपैरदृष्टैर्गृहीतेन देवरूपेण कालेन परिगृहीताः कालर्त्वादीनां निर्वृत्तिप्रत्ययभूता भवन्तीति स्वभावेन सूर्य्यः सौम्यांशक्षयादिकरत्वेन, वायुर्विरूक्षणादिना स्वभावेन, सोमः शैत्यस्नेहादिकरत्वस्वभावेन, परिगृहीतः कालर्त्वादिनिर्वृत्तिप्रत्ययभूता भवन्ति। मार्गेण यथा। सूर्य्यो दक्षिणेनोत्तरेण च कर्कटादिना धनुरन्तेन दक्षिणेन, मकरादिना उत्तरेण पथा परिगृहीतः कालर्त्वादीनां निर्वृत्तिप्रत्ययभूतो भवति। वायुस्तु न मार्गपरिगृहीतोऽस्ति मार्गाभावात्। सोमश्च मेषादिमार्गेण परिगृहीतः कालर्त्वादीनां निर्वृत्तिप्रत्ययभूतो भवति। कालः संवत्सरः, अयने च द्वे। ऋतवः शिशिरादय इत्येके व्याचक्षते, तदसम्यक्; कालस्य प्राणिनामदृष्टगृहीतत्वे प्रमाणाभावात्, पुनः कालत्वे ग्रहणे पौनरुक्त्यदोषात्, वायोश्च मार्गपरिग्रहाभावेन तत्र लक्षणव्यभिचाराच्च; दक्षिणोत्तरमार्गौ त्वर्कस्य कर्कटमकरादीनां मध्ये, कर्कटमकरसंक्रमणात् पूर्व्वमर्कस्य दक्षिणोत्तरगमनाच्च। अन्ये तु कालर्त्तु इत्यत्र कालश्चासौ ऋतुश्चेति, ऋतुविशेषणं कालपदं "स्त्रीणामार्त्तवं व्यवच्छिनत्ति" इति वदन्ति। तेषामत्र सन्देहे रसशब्दस्य शृङ्गारादिवाचकत्वव्यवच्छेदार्थं विशेषणस्यावश्यकत्वात् तद्देयम्। वस्तुतस्तु तावेताविति पूर्ववद् व्याख्येयम्। तावेतावर्कवायू स एव सोमश्चैते त्रयः कालस्य महाकालस्य संवत्सरस्य चक्रवद् भ्रमणस्वभावेन येन भावानां विशेषलक्षणान्तरसम्पद्व्यापज्जीवनमरणफलं स्यात्। तेन चक्रवद् भ्रमणस्वभावेन भ्राम्यमाणाः कालेनैव मार्गेण दक्षिणादिगमनपथेन परिगृहीता नीताः गृहीतस्वस्वमार्गाः सन्तः कालर्त्तुरसदोषदेहबलनिर्वृत्तिप्रत्ययभूताः स्युः। कालस्य महाकालस्य अलक्षणस्य शीतोष्णवर्षलक्षणवत्तया निर्वृत्तौ तथर्त्तूनां रसानां दोषाणां देहानां बलानाञ्च निर्वृत्तौ निष्पत्तौ प्रत्ययभूता यथाक्रमकारणभूताः पूर्व्वप्रसिद्धाः

दक्षिण उत्तरश्च। तत्र दक्षिणः कर्कटाद्यो धनुरन्ताः, मकरादिरुत्तरः। एते च कालस्वभावमार्गपरिग्रहा यथासम्भवं बोद्धव्याः; न हि सोमे मार्गपरिग्रहः कञ्चिद्विशेषमावहति; वायोश्च मार्गपरिग्रह एव नास्ति। परिगृहीताः सम्बद्धाः, कालर्त्वादीनां निर्वृत्तिप्रत्ययभूता निष्पत्तिकारणभूताः, उपदिश्यन्ते आचार्य्यैरिति शेषः। कालः संवत्सरोऽयनद्वयञ्च, ऋतवः शिशिरादयः, देहस्य बलं देहबलम्। अन्ये तु ब्रुवते—संवत्सरस्यायनद्वयस्य च ऋतुमेलकरूपत्वादृतुग्रहणेनैव ग्रहणं

तत्र रविर्भाभिराददानो जगतः स्नेहं वायवस्तीव्र-
रूक्षाश्चोपशोषयन्तः शिशिरवसन्तग्रीष्मेषु यथाक्रमं रौक्ष्य-

सम्यगुपदिश्यन्ते सम्यगव्यभिचारेणोपदिश्यन्ते। अभूततद्भावार्थच्विप्रत्ययाभावात् प्रसिद्धा इति ख्यापितम्। अत्रार्कस्य प्रागुपादानात् सर्वत्र कारणत्वम्। तथार्कवायू इति पृथक्पाठादादानेऽर्कवाय्वोः कारणत्वं, तत्रार्कस्य प्राधान्यं, वायोर्मध्यमत्वं, सोमस्याप्राधान्यम्। विसर्गे पुनः सोमस्य प्राधान्यं, चकारात् सूर्य-वाय्वोर्मध्यमत्वादप्राधान्यात् कारणत्वं ख्यापितमिति। केचित्तु सोमस्यैवेत्याहुः, तन्न, वायवो नातिरूक्षाः प्रवान्तीत्युक्तेः ॥ ५ ॥

गङ्गाधरः—एतल्लक्षणमुदाहरति तत्रेत्यादि। तत्र कालस्वभावेन मार्गं परिगृह्णन् रविरर्थात् तेनैवोत्तराभिमुखीभूय क्रमेण प्रखरतामापद्यमानः क्रमेण प्रखरत्वमापद्यमानाभिर्भाभिर्जगत्स्नेहं क्रमेणाददानस्तत्र कालस्वभावेन मार्गं सप्तविधं परिगृह्णन्तो वायवः प्रवहादयः सप्त क्रमेण पाश्चात्यादिगतिमापद्यमानाः स्वतो रूक्षाः शीताश्च सन्तोऽपि रवेस्तेजोमयस्य रूक्षस्य भास्वरस्य नातिशयरूक्षाः पुनः सन्तो जगतः स्नेहं यथाक्रममुपशोषयन्तः, चकारादत्र शशिनि चापहततेजसि क्रमेण मन्दीकृतशैत्यादौ चन्द्रे सति, शिशिरवसन्तग्रीष्मेषु यथाक्रमं क्रमेण शिशिरत्ववसन्तत्वग्रीष्मत्वस्वरूपेण परिणमयमानेषु कालेषु यथाक्रममेव रौक्ष्य-मुत्पादयन्तोऽर्थाद्भावानां क्रमेणैव रूक्षान् कालेषु शिशिरादिषु तिक्तकषाय-कटुकान् रसांश्च क्रमेणाभिवर्द्धयन्तो नृणां क्रमेणैव वृद्धतिक्तकषायकटुकरस-वर्द्धितानां क्रमेणैव तिक्तकषायकटुकरसद्रव्योपसेविनां क्रमेण रूक्षदोषाणां नाता-

रूक्षाः। कालग्रहणमृतुविशेषणं, तेन कालरूप ऋतुरिति। स्त्रीणामेवात्रैवदर्शनं बहुत्वाद्रूपा-वलम्बने। प्रत्ययभूता इत्यत्र भूतशब्द उपमाने। केचिद्व्याख्यानयन्ति अर्कवायू इत्येकतया पठित्वा सोमश्चेति यत् पृथक् पठति, तेनार्कवाय्वोर्मिलितयोरादानं प्रति कारणत्वं, विसर्गं प्रति पृथगेव सोमस्य कारणत्वमिति दर्शयति। एवं बलहरणबलकरणादिष्वपि बोद्धव्यम् ॥ ४।५ ॥

चक्रपाणिः—तत्रेत्यादि। आददान इत्युपशोषयन्, जगतः स्थावरजङ्गमस्य, स्नेहं सारं सौम्यभागमित्यर्थः। न केवलं रविः, वायवश्च शोषयन्तः स्नेहमिति सम्बन्धः। तीव्राश्च रूक्षाश्च तीव्ररूक्षाः, यदि वा तीव्रं रौक्ष्यं येषां ते तीव्ररौक्ष्याः, एतच्चादाने तीव्रेण रविणा सम्बन्धात् वायोर्भवति योगवाहित्वाद्वायोः। उक्तं हि—"योगवाहः परं वायुः संयोगादुभयार्थकृत्" इत्यादि। यथाक्रममिति शिशिरे रौक्ष्यम् अल्पं, तिक्तं रसमल्पञ्च दौर्बल्यं; तथा वसन्ते मध्यं रौक्ष्यं, कषायं रसं, मध्यं दौर्बल्यं; तथा ग्रीष्मे प्रकृष्टं रौक्ष्यं, कटुकं रसं, महच्च दौर्बल्यं दर्शयति।

मुत्पादयन्तो रूक्षान् रसांस्तिक्तकषायकटुकांश्चाभिवर्द्धयन्तो नृणां दौर्ब्बल्यमावहन्ति ॥ ६ ॥

वर्षाशरद्धेमन्तेषु तु दक्षिणाभिमुखेऽर्के कालमार्गमेघवातवर्षाभिहतप्रतापे शशिनि चाव्याहतबले माहेन्द्रसलिलप्रशान्त-

दीनां दुष्टिवृद्धिमतामरूक्षकफादिह्रासवतां क्रमेणैव दौर्ब्बल्यमावहन्ति। यथाक्रममिति क्रमः क्रम इति यथाक्रमं तेन, तथा क्रमस्तु उत्तरोत्तरक्रमार्थ इति। तेनार्कवायुभ्यां सोमाच्च उत्तरोत्तरशीतोष्णवर्षलक्षणतयोत्तरायणस्य कालविशेषस्य शिशिरादीनां त्रयाणामृतूनां तदयनान्तर्गतानां क्रमेण शीतोष्णवर्षलक्षणानां निर्वृत्तिः, तिक्तादिरसानां निर्वृत्तिः, भावानां रूक्षत्वदोषस्य वायोश्चातिरूक्षत्वदोषस्य निर्वृत्तिः, नृणाञ्च देहे वातादिप्रकोपस्य निर्वृत्तिर्देहस्याल्पबलरूपबलनिर्वृत्तिस्तदाहृता भवति। तस्मादादानमुच्यते ॥ ६ ॥

गङ्गाधरः — सोमार्कवायूनाञ्च कालस्वाभाव्यादुदाहरणान्तरमाह — वर्षेत्यादि। तत्रेति पूर्व्वमुक्तमनुवर्त्तते। तत्र कालस्वभावमार्गपरिगृहीता वर्षाशरद्धेमन्तेषु तु वर्षोष्णशीतलक्षणरूपेण लक्ष्यमाणे काले पुनस्तत्र हेतुभूते दक्षिणाभिमुखेऽर्के कालमार्गमेघवातवर्षाभिहतप्रतापे. कालेन महाकालेन संवत्सरेण तस्य स्वभावाच्चक्रवद् भ्रमणात् प्रापितमार्गेण दक्षिणादिपथेन तत्कालेन च जनितमेघेन तत्कालेन च जनितवातेन तत्कालेन च जनितवर्षेण निहतप्रतापे.

यद्यपि च कषायो रसो रूक्षतमः, कटुकश्च रूक्षतरः, यदुक्तं "रूक्षयति कषायो रूक्षाणां प्रवरो मध्यमः कटुः" इत्यादि; तैक्ष्ण्यप्रकर्षश्च ग्रीष्मे, मध्यमप्रकर्षश्च रौक्ष्यं वसन्ते; तथापि वाय्वग्निगुणबाहुल्यात् कटुकस्य वाय्वग्निगुणबहुले ग्रीष्मकाले एवोत्पत्तिः, पवनपृथिव्युत्कर्षेऽपि तु वसन्ते च पवनपृथिव्युत्कर्षजन्यस्य कषायस्योत्पत्तिः; यदुक्तं "वाय्वग्निगुणभूयिष्ठत्वात् कटुकः, पवनपृथिव्यतिरेकात् कषायः" इति। पृथिव्याद्युत्कर्षश्च कालविशेषस्वभावकृतः कार्य्यदर्शनादुन्नेयः। अभिवर्द्धयन्त इति वचनात् ग्रीष्मकाले तिक्तादीनाम् अभिवृद्धिः सूच्यते, तेन, न तदेकरसत्वम्। अत्र च क्रमवर्द्धिष्णुत्वान्निमित्तादुत्पत्तौ अपि दौर्ब्बल्योत्पत्तौ कारणं, यतः, रौक्ष्यमुत्पादयन्त इति तिक्तकषायकटुकानभिवर्द्धयन्त इति च हेतुगर्भविशेषणद्वयं कृत्वा दौर्ब्बल्यमावहन्तीत्युक्तम् ॥ ६ ॥

चक्रपाणिः — वर्षेत्यादि। तुशब्दः पूर्व्वपक्षव्यावृत्तौ, दक्षिणाभिमुखे दक्षिणाशां गन्तुमुद्यते एवार्के, तेन विषुवत्समयोपलक्षितमध्यप्रदेशादुत्तरेण वर्त्तमानोऽपि रविर्यदैव दक्षिणाशां गन्तुमुद्यतो भवति तदैव क्षीयमाणबलो भवति, उत्तराशागमनप्रकर्षोत्थितबलप्रकर्षतया तु स्तोकस्तोकक्रमापचीयमानबलोऽपि तथा दुर्ब्बलो न लक्ष्यते। एवमुत्तरायणेऽपि व्याख्येयम्। कालः पूर्व्वं व्याख्यातः, मार्ग इह दक्षिणाभिमुख्यम्, मेघस्य वातो मेघवातः, वर्षणं वर्षः, एतैरभिहतप्रतापेऽर्के

**सन्तापे जगत्यरूक्षा रसाः प्रवर्द्धन्तेऽम्ललवणमधुरा यथाक्रमम् । तत्र बलमुपचीयते नृणामिति ॥ ७ ॥**

क्रमादल्पाल्पप्रखरकरहानेः सुतरां शशिनि चाव्याहतबले क्रमेणोपचितबले सुतरां माहेन्द्रसलिलप्रशान्तसन्तापे जगति स्निग्धे सति अरूक्षाम्ललवणमधुरा रसा यथाक्रमं वर्षास्वम्लरसः शरदि लवणरसो हेमन्ते मधुररस एते प्रवर्द्धन्ते । रूक्षाश्च रसास्तिक्तकषायकटुका ह्रसन्ति । तत्र तथाभूते सति क्रमेण बलमुपचीयते नृणाम् अम्ललवणमधुररसवद्देहानां क्रमेण वृद्धाम्ललवणमधुररसवद्द्रव्योपसेविनां क्रमेणारूक्षदोषाणां कफादीनां वृद्धिमतां रूक्षदोषवातादीनां दुष्टिह्रासवतामिति । न चाम्लो रसोऽपि सतोयभूम्यग्निगुणबाहुल्याल्लवणः क्षित्यग्निगुणबाहुल्याद्भवन्नप्याग्नेयः सूर्यबलस्य किञ्चिन्मान्द्यं सोमस्य किञ्चित्प्राबल्ये वर्षास्वग्निजलगुणबहुलोऽम्लो रूक्षो जायते शरदि च तयोर्मध्यबले समे भूम्यग्निगुणबहुलो लवणो भवति । भूमिर्हि जलानुप्रवेशात् किञ्चित्स्निग्धेति लवणोऽप्यरूक्ष इति ।

अत्र कालेनार्कवायुसोमा गुणयोगवाहित्व-शीतरूपेण स्वस्वस्वभावेन च दक्षिणादिमार्गेण च परिगृहीताः कालस्वादिप्रत्ययभूताः स्युरिति व्याख्याने कालश्चेति कालपदस्य नैरर्थक्यापत्तेः ; कालस्यैवार्कवायुसोमानां कालस्वादिनिर्वृत्तौ समानरूपेण कारणत्वापत्तेश्च । मुख्यामुख्यकारणत्वाभावे हि कालस्य शैत्यौष्ण्यवर्षान्यतमाल्पकस्यार्कादीनामपि शीतादिलिङ्गकत्वं स्यात् । तथात्वे हि अयं महाकालावयवः शिशिराख्यकालः क्रमेणाल्पाल्पस्वस्वभावजनितार्कप्रखरकरवातातिरौक्ष्य-तीव्रगतिसोम-स्निग्ध-शैत्यहानि-जनितात्य-शीतोष्ण वर्षवत्त्वादिरेवं यथा तथाऽयं सूर्योऽयं वायुरयं सोमो वा शिशिराख्यः कालस्तथात्वादिति स्यात् । अर्कस्वभावेनैव स्वकरप्रखरत्व-वातातिरूक्षत्व-तीव्रगति-सोमस्निग्धत्वशैत्यादीनां जनितत्वात् । वायुस्वभावेन च स्वातिरौक्ष्यतीव्रगतिसूर्यप्रखरकरसोमस्निग्धत्वशैत्यादिहानीनामुत्पत्तेः । सोमस्वभावेनैव च स्वशैत्यस्निग्धत्वादिहानिसूर्यकरप्रखरतावायुरौक्ष्यतीव्रगतीनामुत्पत्तेश्च । सूर्यो हि तैजसस्वभाववान्, वायुर्हि वायव्यस्वभाववान्, सोमोऽप्याप्यस्वभाववान् ।

इति सम्बन्धः, कालस्त्विह मेघसम्बन्धाद्धितशैत्योऽर्कतापपरिपन्थी भवति, शशिनोऽव्याहतबलत्वं सूर्यस्य परिपन्थिनोऽभिहतप्रतापत्वादनुगुणमेघवातवर्षणयोगाच्च । जगति स्थावरजङ्गमे । अत्र च पृथिव्यग्निभूयिष्ठत्वादम्लः, सलिलाग्निभूयिष्ठत्वात् लवण इत्युक्तं, तत् कथं सौम्ये विसर्गे

तत्तत्स्वभावसामान्याद् वृद्धिः। तत्तत्स्वभावविशेषाद् ह्रासः। तत्तत्स्वभावाविर्भावतिरोभावे तु कालस्वभावो हेतुरिति चेत्? उच्यते; तदागम्यतां भवद्भिरस्मद्व्याख्यानवर्त्मनि। नहि गतो सूर्य्यादीनां कालस्त्र्यादिनिर्वृत्तौ कालेनैव स्वस्वभावमार्गाभ्यां स्वस्वधर्म्मपरिग्रहः कल्प्यः। केवलेनैव महाकालस्वभावेन मार्गपरिग्रहात् तु सूर्य्यादीनां स्वस्वस्वभावोष्णत्वादिप्रजननसिद्धिः। कालेन स्वभावाच्चक्रवद्भ्रमणात् स्वस्वमार्गेण नीताः सूर्य्यवायुसोमा इति वचनेनैव सूर्य्यादीनां स्वस्वमार्गग्रहणोक्तिसिद्धौ यत् कालस्वभावमार्गपरिगृहीता इत्युक्तं तेनैवं ख्यापितम्। कालस्य निर्गुणस्य निष्क्रियस्य स्वजन्यत्वेन शीतोष्णवर्षाणामाश्रयत्वे चक्रवद्भ्रमणमेव स्वस्वभावः। तच्चक्रवद्भ्रमणस्वभावात् तत्कालचक्रस्थानां सूर्य्यादीनां स्वस्वमार्गप्रतिपन्नानां हेतुत्वमिति। कल गतिसङ्ख्यानयोश्चौरादिको धातुः। कलयति भूतानि भ्रामयतीति कालः। चक्ररूपे स्वस्मिन् स्थितराशिचक्रस्थग्रहनक्षत्रादीनां स्वस्वमार्गपरिग्रहादिनिर्व्वर्त्तकभ्रमणशीलः। मार्गश्चार्कस्य दक्षिणोत्तरगमनस्य पन्थाः। सोमस्यार्कसन्निकर्षगमने दक्षिणोत्तरयोः पन्थाः। वायोश्च मार्गाः सप्त प्रवहनादयः। तदुक्तं महाभारते मेघगर्ज्जने शुकवैशम्पायनादिषु वेदव्यासेनाध्ययनान्निवारितेषु शुक उवाच। तद् यथा

"शुको वारितमात्रस्तु कौतूहलसमन्वितः।
अपृच्छत् पितरं ब्रह्मन् कुतो वायुरभूदयम्।
व्याख्यातुमर्हति भवान् वायोः सर्व्वविचेष्टितम्॥

व्यास उवाच—पृथिव्यामन्तरीक्षे च यत्र संवान्ति वायवः।
सप्तैते वायुमार्गा वै तान् निबोधानुपूर्व्वशः॥
तत्र देवगणाः साध्या महाभूता महाबलाः।
तेषामप्यभवत् पुत्रः समानो नाम दुर्जयः॥
उदानस्तस्य पुत्रोऽभूद्व्यानस्तस्याभवत् सुतः।
अपानश्च ततो ज्ञेयः प्राणश्चापि ततोऽपरः॥
अनपत्योऽभवत् प्राणो दुर्द्धर्षः शत्रुतापनः।
पृथक् कर्म्माणि तेषान्तु प्रवक्ष्यामि यथातथम्॥
प्राणिनां सर्व्वतो वायुश्चेष्टां वर्त्तयते पृथक्।
प्राणनाच्चैव भूतानां प्राण इत्यभिधीयते॥

तयोश्चाग्नेययोः उत्पाद इति न वाच्यम्; यतो बलप्रकर्षबलोत्कर्षस्य क्षीयमाणबलस्यापि विषुवपर्य्यन्तं बलवत्त्वमस्त्येवेति व्युत्पादितमेव॥ ७॥

प्रवर्त्तयत्यभ्रसंघातान् धूमजांश्चोष्मजांश्च यः ।
प्रथमः प्रथमे मार्गे प्रवहो नाम सोऽनिलः ।
अन्तरे स्नेहमभ्येत्य तडिद्भ्यश्चोत्तमद्युतिः ॥ १ ॥
आवहो नाम संवाति द्वितीयः श्वसनो नदन् ।
उदयं ज्योतिषां शश्वत् सोमादीनां करोति यः ।
अन्तर्देहेषु चोदानं संवदन्ति मनीषिणः ॥ २ ॥
यश्चतुर्भ्यः समुद्रेभ्यो वायुर्धारयते जलम् ।
उद्धृत्य ददते चापो जीमूतेभ्योऽम्बरेऽनिलः ॥
योऽद्भिः संयोज्य जीमूतान् पर्जन्याय प्रयच्छति ।
उद्वहो नाम वंहिष्ठस्तृतीयः स सदागतिः ॥ ३ ॥
समुह्यमाना बहुधा येन नीलाः पृथग्घनाः ।
वर्षमोक्षकृतारम्भास्ते भवन्ति घना घनाः ॥
संहता येन चाविद्धा भवन्ति नदतां नदाः ।
रक्षणार्थाय सम्भूता मेघत्वमुपयान्ति च ॥
योऽसौ भवति भूतानां विमानानि विहायसा ।
चतुर्थः संवहो नाम वायुः स गिरिमर्द्दनः ॥ ४ ॥
येन वेगवता रुग्णा रूक्षेण रुजता नगाः ।
वायुना सहिता मेघास्ते भवन्ति बलाहकाः ॥
दारुणोत्पातसञ्चारो नभसः स्तनयित्नुमान् ।
पञ्चमः स महावेगो विवहो नाम मारुतः ॥ ५ ॥
यस्मिन् पारिप्लवा दिव्या वहन्त्यापो विहायसा ।
पुण्याश्चाकाशगङ्गायास्तोयं विष्टभ्य तिष्ठति ॥
दूरात् प्रतिहतो यस्मिन् नैकरश्मिर्दिवाकरः ।
योनिरंशुसहस्रस्य येन भाति वसुन्धरा ॥
यस्मादाप्यायते सोमः क्षीणः सम्पूर्णमण्डलः ।
षष्ठः परिवहो नाम स वायुर्जयतां वरः ॥ ६ ॥
सर्व्वप्राणभृतां प्राणान् योऽन्तकाले निरस्यति ।
यस्य वर्त्मानुवर्त्तेते मृत्युवैवस्वतावुभौ ॥
परावहो नाम परो वायुः स दुरतिक्रमः ॥ ७ ॥

भवति चात्र ।

आदावन्ते च दौर्ब्बल्यं विसर्गादानयोर्नृणाम् ।
मध्ये मध्यबलन्त्वन्ते श्रैष्ठमग्रे च निर्द्दिशेत् ॥ ८ ॥

विष्णोर्निश्वासतो वातो यदा वेगसमीरितः ॥
सहसोदीर्य्यते तात जगत् प्रव्यथते तदा ॥"

इति सप्त मार्गाः सप्त वहिश्चरा वायवः । समानादयः पञ्च शरीरचराः । इह तु वहिश्चराः सप्त वायवो ग्राह्याः । कालस्वाभाविकनिवृत्तिहेतुत्वात् ॥ ७ ॥

गङ्गाधरः—अथायमर्थो येन श्लोकेनाभ्यनूक्तस्तं वक्तुमाह भवति चात्रेति । श्लोकमाह—आदावित्यादि । यथाक्रमं विसर्गादानयोर्दक्षिणायनोत्तरायणयोरादावन्ते च नृणां दौर्ब्बल्यं भवति कालकृतम् । विसर्गस्यादौ वर्षाकाले तथा आदानस्यान्ते ग्रीष्मे नृणां दौर्ब्बल्यमिति तुल्यत्वेऽपि यद्विसर्गे बलमुपचीयते नृणामित्युक्तं तद्वर्षासु ग्रीष्मापचितबलस्योपचयारम्भः । ततः शरद्धेमन्तापेक्षया दौर्ब्बल्यं ग्रीष्मापेक्षयोपचितबलत्वमित्यवधेयम् । एवं विसर्गादानयोर्मध्ये मध्यबलं विसर्गस्य दक्षिणायनस्य मध्यस्थतो शरदि मध्यबलं बलस्योपचयारम्भात् क्रमेण बलस्योपचयो मध्यमः, ततो मध्यबलमेव भवति । एवमादानस्य उत्तरायणस्य मध्यस्थतो वसन्ते मध्यबलं शिशिरे बलापचयारम्भात् क्रमेण वसन्ते बलस्य मध्यमापचय इति मध्यबलं भवति । एवं विसर्गादानयोर्यथाक्रमन्तेऽग्रे च श्रेष्ठं बलं निर्द्दिशेत् । विसर्गस्य दक्षिणायनस्यान्ते हेमन्ते क्रमेण बलोपचयसम्पूरणप्रायात् श्रेष्ठं बलं निर्द्दिशेत् । आदानस्योत्तरायणस्याग्रे शिशिरे हेमन्तोपचितसम्पूर्णबलस्याऽऽदानेऽपचयारम्भेऽपि क्रमेण नृणां श्रेष्ठमेव बलं वर्त्तते । वृद्धिह्रासौ हि क्रमेण भवतः, नैकदा सर्व्वथा वृद्धिह्रासौ भवत इति । इत्येवमृतुनिबन्धने बलस्याल्पत्वमध्यत्वश्रेष्ठत्वभेदेऽपि वर्षादिषु त्रिषु प्रतिदिनं बलोपचयः, शिशिरादिषु त्रिषु प्रतिदिनं बलापचय इति । तत उक्तं नृणामादाने दौर्ब्बल्यं विसर्गे बलोपचय इति । तथा चादिदिने ग्रीष्मावसाने चरमपरमाणुक्षणे च निःशेषेणापचयाद्दौर्ब्बल्यस्य सीमा भवति ।

चक्रपाणिः—सम्प्रति शिशिरादौ बलह्रासः प्रतिपादितो वर्षादौ च बलोत्कर्षः, तत्र शिशिरे दुर्ब्बलाः, वर्षासु बलवन्तः प्राणिनो भवन्तीत्यादिदूषणं निषेद्धुमाह—आदावन्ते इत्यादि । विसर्गस्यादौ वर्षासु, आदानस्यान्ते ग्रीष्मे दौर्ब्बल्यं प्रकर्षं प्राप्तं विनिर्द्दिशेदिति सम्बन्धः ; तथा मध्ये विसर्गस्य शरदि, आदानस्य मध्ये वसन्ते मध्यं नातिक्षीणं नातिवृद्धं बलं विनिर्द्दिशेदिति योज्यम् ,

स यदा नेन्धनं युक्तं लभते देहजं तदा।
रसं हिनस्त्यतो वायुः शीतः शीते प्रकुप्यति॥

लक्षणनिर्देशः, हेमन्त इति लक्ष्यनिर्देशः। तत्र बाह्यो वायुः स्वतः शीतोऽपि कालस्वभावात् प्रायेणोत्तरमार्गप्रपन्नः शीतदेशसम्बन्धात् तथा शीतत्वशैत्य-सम्बन्धादतिशीतो भवतीति शीतानिल इत्युक्तम्। तस्य स्पर्शः शीतानिलस्पर्शः। किंवा तादृशोऽनिलस्तु हेमन्ते शीत इत्युक्त्यैव हैमन्तिकत्वाद् योगवाहित्वाच्च लभ्यते। तेन शीतमतिशीतहेमन्तस्वभावजं, शीतं शैत्यं, हैमन्तिकातिशीता-निलश्च, तयोः स्पर्शेन जाठरोऽग्निर्मन्दः स्यादित्यत आह—संरुद्ध इति। अतिशीतहेमन्तातिशैत्यातिशीतानिलयोः स्पर्शेन देहसम्बन्धेन बहिर्निर्गच्छ-च्छारीरोष्मणः संरोधात् कुम्भकारपयनाहितपङ्कलेपेन यथान्तर्गतवह्निवृद्धि-र्भवति तथा पक्ताऽन्तर्जठराग्निर्बली भवति बलिनां हेमन्ते। कालस्वभावात् स्वस्वमार्गप्रतिपन्नार्कादिभिर्हेमन्तस्वभावात् निरुद्धशारीरोष्मसम्बन्धत्वादि-योगेन निरुद्धत्वचानां नृणामिति। तस्मात् स बली पक्ता जाठराग्निर्हेमन्ते मात्राद्रव्यगुरुक्षमः : मात्रया द्रव्यतश्च द्रव्यस्वभावतश्च यद्गुरुत्वेनान्नं नवधान्यादिकं तयोर्मात्रागुरुद्रव्यगुर्वोः पाके क्षमः शक्त इत्यर्थः। इति ऋतुस्वभावजशारीर-दोषाग्निवृद्धिनिवृत्तिमुपदिश्य तत्परिहारोऽप्युपदिष्टो मात्राद्रव्यगुरुक्षम इत्यनेन।

जाठराग्निवृद्धिरूपदोषपरिहाराकरणे सत्यातुर्यहेतुदोषमाह स इत्यादि। स हैमन्तिकोऽतिबली पक्ता जाठराग्निरिन्धनमन्नरूपं युक्तमग्निबलानुरूपं यदा न लभते तदा देहजं रसं शारीरं सौम्यांशं हिनस्ति क्षयं नयति।

सम्बन्धाद्विशेषेण शीतोऽनिलः शीतानिलः, विशेषेण शीतत्वं वायोर्योगवाहित्वात् शीतकाल-सम्बन्धादेव लब्धं पुनरभिधीयतेऽग्निसंरोधे हेतुत्वात्. वायुर्हि हिमसम्बन्धादेव बहिर्निर्गच्छ-च्छरीरोष्मणो रोधं कृत्वा कुम्भकारपथनाहितपङ्कलेप इवान्तरस्य वह्नेर्वृद्धिमावहति, एतेन यदुच्यते सत्कालात् शीतवातात् कथमग्निवृद्धिरित्येतदपास्तम्. न ह्यत्र शीतो वातोऽग्निरूपेण परिणमति, किं तर्हि निर्गच्छदूष्मप्रतापाकुलः, शीतानिलस्य स्पर्शः शरीरसम्बन्ध इत्यर्थः। बलिनां प्राणिनां हेमन्तस्वभावाद्बली भवति, अनेन प्राणिबलत्वमग्निबलत्वे हेतुरिति दर्शयति, उक्तञ्च अस्मिन्नेवार्थे बाल्यराजानां नीरोगत्वप्रतिपादने, यथा "अग्निमत्वादभिप्रायात् प्रीतिः प्रीतेर्बलं बलात्। अग्निरग्नेश्च धातूनां बलं * नाशस्ततो रुजाम्" इति। मात्रया यद् गुर्वतिमात्रमित्यर्थः, द्रव्यतश्च द्रव्यस्वभावतश्च यद् गुरु नवधान्यादि, तत्क्षमः, एवम्भूतो बली वह्निर्यदा युक्तं गुरुमतिमात्रमन्नं न लभते, तदा देहजं रसं हिनस्ति क्षयं नयति,

* बलमित्यत्र साम्यमिति क्वचित् पठ्यते।

उपयुज्यमानाः प्राणायुर्बलवीर्य्यौजस्कर्य्यो भवन्ति। तेषां पुनर्व्यापदोऽदृष्टकारिताः। शीतोष्णवातवर्षाणि खलु विपरीतान्योषधीर्व्यापादयन्त्यपश्च, तासामुपयोगाद्विविधरोगप्रादुर्भावो मरको वा भवेत्" इति। तेन वर्षास्वुत्पन्नानामोषधीनां हेमन्ते कालपरिणामात् परिणतवीर्य्याणां बलवतीनाञ्च तथा प्रसन्नानामतिस्निग्धानामत्यर्थं गुर्व्वीणाञ्च अपामुपयोगमकुर्व्वतां श्लेष्मणः सञ्चयाभावे त्वेष विधिः। सञ्चये वोपयोगं कुर्व्वतां श्लेष्मणो निर्हरणे नैष च विधिर्बोध्य इति।

एवं हि सुश्रुतेऽप्युक्तमुत्तरस्थाने स्वस्थवृत्ताध्याये "यस्मिन् यस्मिन् ऋतौ ये ये दोषाः कुप्यन्ति देहिनाम्। तेषु तेषु प्रदातव्या रसास्ते ते विजानता ॥" इति चोक्त्वा पुनस्तत्रैवोक्तम्—"हेमन्तः शीतलो रूक्षो मन्दसूर्य्योऽनिलाकुलः। ततस्तु शीतमासाद्य वायुस्तत्र प्रकुप्यति ॥ कोष्ठस्थः शीतसंरोधादन्तःपिण्डीकृतोऽनलः। रसमुच्छोषयत्याशु तस्मात् स्निग्धं तदा हितम् ॥ हेमन्ते लवण-क्षार-तिक्ताम्लकटुकोत्कटम्। समधिस्नैग्ध्यमहिममशनं हितमुच्यते ॥ तीक्ष्णान्यपि च पानानि पिबेदगुरुभूषितः। तैलाभ्यक्तः सुखोष्णे च वारिकोष्ठेऽवगाहयेत् ॥ प्राकारयाने * महति कोपियाल्लरणावृते। शयीत शयने संवृतो गर्भगृहोदरे ॥ स्त्रीः उष्णाङ्गाऽगुरुधूपाढ्याः पीनोरुजघनस्तनीः। प्रकामञ्च निषेवेत मैथुनं तर्पितो नृपः ॥ मधुरं तिक्तकटुकमम्लं लवणमेव च। अन्नपानं तिलान् माषान् शाकानि च दधीनि च ॥ तथेक्षुविकृतीः शालीन् सुगन्धांश्च नवानपि। प्रसहानूपमांसानि क्रव्यादबिलशायिनाम्। औदकानां प्लवानाञ्च पादिनाञ्चोपयोजयेत् ॥ मद्यानि च प्रसन्नानि यच्च किञ्चिद्बलप्रदम्। कामतस्तान्निषेवेत पुष्टिमिच्छन् हिमागमे ॥" इत्युक्तम्। चरकाचार्य्येण तु यत् कटुकतिक्तादयो नोक्तास्तद्वायुनिवारणाभिप्रायेण, सुश्रुतेन तु वायुकफाभयनिवृत्त्यभिप्रायेण सर्व्वाण्युक्तानि, न प्रतिषिद्धानि बोध्यानि। अत्र स्निग्धशब्देन मधुरस्य, लवणशब्देन क्षारस्य, मेध्यानामिति पदेन क्रव्यादपादिनामवबोधः कार्य्यः। नवौदनपदेन वर्षासूद्गतानामोषधीनां कालपरिणामेन बलवतीनां परिणतवीर्य्याणां श्लेष्मसञ्चयकारीणामुपयोगो निषिध्यते। तोयमुष्णञ्चेति पदेनात्यर्थगुरुस्निग्धजलस्योष्णीकरणेन गुरुत्वस्निग्धत्वे प्रतिपाद्येते। इति कफोपचयवात-

* अवलम्बनाधारवति गर्भगृहोदरे इत्यर्थः।

अभ्यङ्गोत्सादनं मूर्ध्नि तैलं जेन्ताकमातपम्।
भजेद् भूमिगृहञ्चोष्णमुष्णं गर्भगृहं तथा॥
शीते सुसंवृतं सेव्यं यानं शयनमासनम्।
प्रावाराजिनकौषेय-प्रवेणीकुथकास्तृतम्॥
गुरूष्णवासा दिग्धाङ्गो गुरुणाऽगुरुणा सदा।
शयने प्रमदां पीनां विशालोपचितस्तनीम्॥

निवृत्त्यर्थं सर्वैः स्निग्धाम्लादिविधिर्निरुद्धो भवतीति बोध्यम्। उष्णञ्चेति चकारेण यवगोधूमादयोऽपि बोध्याः।

हेमन्तिकाहारविधिमुक्त्वाऽऽचारविधिमाह अभ्यङ्गेत्यादि। उत्सादनं हरिद्रादिकल्कम्रक्षणम्। जेन्ताकः स्वेदविशेषो वक्ष्यमाणः स्वेदाध्याये। आतपं रौद्रम्। भूमिगृहं पिष्टकामृत्तिकानिर्म्मितगृहम्। गर्भगृहं तदिष्टकाप्रमृत्तिकान्यतर-निर्म्मितगृहान्तर्वर्त्तिकोष्ठकगृहम्। शीते इति तु—हेमन्तप्रकरणाद्धेमन्ते-ऽपि पुनर्यदुक्तं तत् प्रावृषि मेघवातवर्षजे शीतेऽपि प्रतिविधानार्थम्। इदं स्मृत्वा तत्रापि शीते निषेव्यमिति बोध्यम्। अत एव सामान्यतः कालजशैत्यनिवारणविधिरेष इति ज्ञापितमित्यर्थः। सुसंवृतं सम्यगावृतमिति गृहविशेषणं स्थानमिति वा शेषः। यानं हस्त्यादिकम्। शयनं शय्या। आसनमुपवेशनस्थानं तद्विशेषणं प्रावारेत्यादि। प्रावारो गुरु प्रावरणं कम्बलादि। अजिनं व्याघ्रादिचर्म्म। कौषेयं कोषकार-कीटकृततन्तुनिर्म्मितं वस्त्रादि। प्रवेणी वेणीति प्रसिद्धा। कुथस्त्वश्वकम्बलम्। एषामिह्न्द्वेनास्तृतमास्तरणीकृतम्। अत्राजिनपदेन लोम्नां कौषेयपदेन तूलकानामवबोधः।

गुरूष्णवासाः पुरुषः। वाससो गुरुत्वोष्णत्वे बहुलकार्पासत्वेन बोध्ये। गुरुणा घनीकृतलेपेनाऽगुरुणा धूपेन दिग्धाङ्गो भूत्वा सदा नित्यं प्रायेण वा। शयने इति उक्त प्रावाराद्यास्तृते। पीनां निविडाङ्कुशाङ्गीं प्रमदां मदन-मदोत्पत्तिप्रारम्भवर्त्तीं यौवनाढ्यामित्यर्थः। सा च विशाला आयामेन उप-

शीतेष्विति पदं वर्षाकालादावपि शीतप्राप्तौ संवृतयानादिसेवोपदर्शनार्थम्। प्रावारो गुरु प्रावरणं कम्बलादि, अजिनं व्याघ्रादिचर्म्म, कौषेयं कोषकारकीटतन्तुमयं, प्रवेणी गोणीति प्रसिद्धा, कुथश्चित्रकम्बलं, गुरुणाऽगुरुणेत्यगुरुघनप्रलेपेनेत्यर्थः। विशालायामेन, उपचितौ परिणाहेन,

तस्माद्धैमन्तिकः सर्व्वः शिशिरे विधिरिष्यते ।
निवातमुष्णन्त्वधिकं शिशिरे गृहमाश्रयेत् ॥ ११ ॥ *
हेमन्ते † निचितः श्लेष्मा दिनकृद्भाभिरीरितः ।
कायाग्निं बाधते रोगांस्ततः प्रकुरुते बहून् ॥

शीतमित्यादि शिशिरे मेघमारुतवर्षाण्यधिकानि भवन्ति तेभ्यो जातमागन्तुकं शीतं शैत्यं स्वाभाविकञ्च शैत्यमस्तीत्यधिकं शीतं न हेमन्ते इति भेदः। एतच्छिशिरः शिशिरः। तस्मादिति हैमन्तिकधर्म्मवत्त्वात् तदधिकशीतरौक्ष्यवत्त्वाच्च तद्धैमन्तिकः सर्व्वो विधिः शिशिरे इष्यते न प्रतिषिध्यते। ननु हेमन्ताद् विशेषोपदेशे शिशिरस्य किं प्रयोजनमिति? अतो विशेषविधिमुपदिशति— निवातमित्यादि। निवातमिति निशब्दो निषेधे। अव्यक्तचलवातरहितं गृहम्। अधिकमुष्णत्वे तु हेमन्तोक्तोष्णादधिकमुष्णम्। एतेनातिशीतस्य मेघादिजस्य वारणमुक्तम्। आदानजरौक्ष्यवारणार्थन्तु नान्यत् किञ्चिदुक्तम्, हैमन्तिकस्नेहोपयोगादुपयोगातिशयेनैव तद्वारणस्याभात्। सुश्रुतेऽप्युक्तम् "एष एव विधिः कार्य्यः शिशिरे समुदाहृतः" इति। अत्र केचिच्छिशिरासेव्यार्थकमेकं वचनं पठन्ति। तन्नार्षमिति। शिशिरस्यास्य ऋतुः किञ्चिद्रूक्षकषाय-वायु-किञ्चिदुत्पद्यमानस्वरकरवदर्क-किञ्चिदपचीयमानसौम्यसोमानियताल्पमेघ-वर्षावत्त्वात् ॥ ११ ॥

गङ्गाधरः—अथान्यवर्हितोत्तरत्वेन वसन्तस्य शिशिरविध्युपदेशानन्तरं विधिमुपदिशति—हेमन्ते इत्यादि। हेमन्ते वर्षासूत्पन्नानामोषधीनामुपयोगात् हैमन्तिकानिगुणस्निग्धशीतजलोपयोगात् हैमन्तिकातिशैत्य-

तस्मादिति हेमन्ततुल्यत्वाद् शिशिरस्य रौक्ष्यमात्रोत्तरतुल्यत्वाद्धैमन्तिको विधिः। निवातमुष्णन्त्विति तुशब्दः पक्षान्तरपरिहारार्थः। हेमन्तोक्तनिवातोष्णगृहाच्छिशिरे तस्यातिशीतत्वादधिकमुष्णं गृहमाश्रये-दित्यभिप्रायः। केचिद्रूक्षासेव्यप्रतिपादकं ग्रन्थं पठन्ति स त्वनार्षः ॥ ११ ॥

चक्रपाणिः—वसन्ते इत्यादिना वसन्तविधिमाह। निचित सञ्चितो वसन्तपूर्व्वकाले, ईरितो

* इतः परं केषुचित् आदर्शपुस्तकेषु 'कटुतिक्तकषायाणि वातलानि लघूनि च। वर्ज्जयेदन्नपानानि शिशिरे शीतलानि च॥' अयं श्लोको दृश्यते। स तु अनार्षतया चक्रपाणिना टीका-कृता व्याख्यानावसरे विवर्ज्जितः, अतोऽस्माभिरपि विनिवेशितः पादटीकायाम्।

† 'हेमन्ते' इत्यत्र 'वसन्ते' इति चक्रपाणिधृतः पाठः।

तस्माद्वसन्ते कर्म्माणि वमनादीनि कारयेत् ।
गुर्व्वम्लस्निग्धमधुरं दिवास्वप्नञ्च वर्ज्जयेत् ॥
व्यायामोद्वर्त्तनं धूमं कवडग्रहमञ्जनम् ।
सुखाम्बुना शौचविधिं शीलयेत् कुसुमागमे ॥

स्पर्शात् हेमन्तकालविधिम् असेवमानस्य शीतगातिशैत्याच्च सञ्चित-क्रमेणाधिकत्वमितो घृतवद्धनीभूतः श्लेष्मा तदाप्यनिर्हृतश्चेत् तथा शिशिरेऽपि शीतविधिमसेवमानस्य शीतगातिशैत्याच्च सञ्चितः श्लेष्मा तदाप्यनिर्हृतश्चेत् तर्हि स श्लेष्मा वसन्ते शिशिरात्यये दिनकृद्भाभिः सूर्यस्य प्रवर्त्तमानाल्पमध्यमप्रखरकरैरीरितो घृतवत् प्रविलायितः सन् द्रवीभावेण कायाग्निं कोष्ठाग्निमेव न तु धात्वग्निं बाधते । ततः कायाग्निं बाधित्वा स दिनकृद्भाभिरीरितः सञ्चितः श्लेष्मा बहून् श्लेष्मिकान् व्याधीन् प्रकुरुते । अत्र हेमन्तशब्देन दक्षिणायनस्यान्तिमैकमास उत्तरायणस्यादिमैकमास इति मासद्वयं ज्ञापितम् । कस्मात् शिशिरमुक्त्वा वसन्ते[illegible]रोगित्व-वचनात् । सुश्रुते हि स एव कालः कालत्रयस्योक्तः । तद् यथा "इह खलु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षडृतवो भवन्ति दोषोपचय-प्रकोपप्रशमनिमित्तम् । ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः । तद् यथा भाद्रपदाश्विनौ वर्षाः । कार्त्तिकमार्गशीर्षौ शरत् । पौषमाघौ हेमन्तः । फाल्गुनचैत्रौ वसन्तः । वैशाखज्यैष्ठौ ग्रीष्मः । आषाढश्रावणौ प्रावृट्" इत्यारभ्य "यावत् एतेन दोषाणां सञ्चयप्रकोपहेतुरुक्तः" इत्यन्तमुक्त्वा ततः परं "तत्र वर्षाहेमन्तग्रीष्मेषु सञ्चितानां दोषाणां शरद्वसन्तप्रावृट्सु च प्रकुपितानां निर्हरणं कर्त्तव्यम्" इत्युक्तम् इति ।

तस्मादिति । निरुक्तहेमन्ते सञ्चितस्य श्लेष्मणः सूर्यरश्मिभिरीरितद्रवदशायां कायाग्निबाधकत्वेन तत्तद्बहुव्याधिकरणशीलत्वात् वसन्ते हेमन्तान्तशिशिरा-न्तरकालागमनावधि एव प्राक्सञ्चितत्वात्कालान्तरस्वभावजश्लेष्मनिर्हरणार्थ

विलायितो वसन्ते, कायाग्निमिति कायनिर्वर्त्तकमग्निं आह, न तु धात्वग्निविशेषमात्रम् । तत इत्यत्र चकारो लुप्तनिर्दिष्टो बोद्धव्यः, तेन, ततोऽग्निवधाच्चेत्यर्थः । यदि वा ततोऽग्निवधानन्तरं वमनादीनि वमनप्रधानानि, तेन, आदानमध्यत्वेन यदि वातपित्तप्रकोपस्याविशेषो भवति तदा विरेचनास्थापनानुवासनानामपि प्रवृत्तिर्भवति ; शिरोविरेचनन्तु कफक्षयार्थं कर्त्तव्यमेव । वसन्त-

चन्दनागुरुदिग्धाङ्गो यवगोधूमभोजनः।
शारभं शाशमैणेयं मांसं लावकपिञ्जलम्॥

वमनादीनि वमनं शिरोविरेचनञ्च कारयेत्। आदिना आदानमध्यस्थनाकस्य मध्यमतया प्रवर्त्तमानमखरकरैरुपचिते पित्ते विरेचनं तत्र चाल्पसञ्चित-वायौ चानुवासनास्थापने कारयेदित्यर्थः। तत्र श्लेष्मकरं गुर्व्वम्लादिकञ्च वर्ज्जयेत्। अत्रापि वमनादीनां विधानात् वसन्त इति पदं तद्योग्य-कालत्वेन वक्ष्यमाणन्तु क्रमेणोत्तरायणावधिमासमेकं व्यवधाय मासद्वय फाल्गुनचैत्रावभिदधाति। तत्रापि माधवप्रथमे मासीत्यस्य वक्ष्यमाणत्वेन वमनाद्यर्हतया चैत्रमेवाभिदधाति। तथा गुर्व्वादिवर्ज्जनं तथा व्यायामादिविधौ प्रकरणप्रस्तुतत्त्वबोधनार्थमुत्तरश्लोके वक्ष्यति कुसुमागम इति। इतिपदार्थास्य-तत्त्वयुक्त्या व्याख्यायते केनचित्। वस्तुतोऽत्रोक्त ऋतुः प्रस्तुतो यो हेमन्तः स एव शिशिरोपलक्षितः सन्ततज्वरवत्। तत्र यावत् सम्भवात् दोषसञ्चयः स्यादेवं वसन्तपदमपि प्रस्तुतन्तु चैत्रवैशाखात्मनि वर्त्तते। तत्र स्वकाले वमनादीनि कारयेदिति प्रकृते का हानिरिति।

सुखाम्बुना ईषदुष्णेन सुखजननेनाम्बुना। शौचं मलमार्गादिशौच-स्नानादिविधानं, न तु पानविधिम्। पुनः कुसुमागम इति उक्तपरमत-व्याख्यानिरासार्थं पुनरुक्तं फाल्गुने कुसुमागमाभावात्। शारभमष्टपदमृग-विशेषमांसं, लावकपिञ्जलयोर्मांसमिति तद्भिन्नान्तं मांसविशेषणम्। निगद मिति छन्दः, निगदमगदम्। वसन्ते इति पुनरुक्तं श्लोकद्वयेनान्वयार्थम्। यौवनमिति स्त्रीणां काननानाञ्च। तदनुभवस्तु आलापविहरणाभ्यां कार्य्यः। कफक्षयार्थमल्पञ्च मैथुनं युक्तमिति बोध्यम्। सुश्रुतेऽप्युक्तं "हेमन्ते निचितः श्लेष्मा शैत्याच्छीतशरीरिणाम्। औष्ण्याद्वसन्ते कुपितः कुरुते च गदान् बहून्॥ ततोऽम्लमधुरस्निग्ध-लवणानि गुरूणि च। वर्ज्जयेद् वमनादीनि कर्म्माण्यपि च कारयेत्॥ षष्टिकांश्च यवान् शीतान् मुद्गान नीवारकोद्रवान्। लावादिविष्किररसैर्दद्यात् यूषैश्च युक्तितः॥ पटोलनिम्ब-

साम्येन वसन्तं प्रति चैत्रो बोद्धव्यः, येन, दोषक्षयार्थं पञ्चकर्मप्रवृत्त्यर्थञ्चाभिधानस्य प्राधान्यानु-क्रमेण फाल्गुनचैत्रौ वसन्तो भवति, न वैशाखः, अनेनैवाऽभिप्रायेण पूर्व्वश्लोकेऽपि सामान्येन निचित इति कृतं, न तु हेमन्ते निचित इति ; हेमन्त इत्युक्ते हि रसोत्पत्तिक्रमाभिहितमार्गशीर्ष-पौषात्मके हेमन्ते प्राकृतत्वात् दोषचयो बुध्यते, स च नाभिप्रेतः ; यत्स्तु दोषचयाभिप्रायेण-

भक्षयेन्निगदं शीधुं पिबेन्माध्वीकमेव वा ।
वसन्तेऽनुभवेत् स्त्रीणां काननानाञ्च यौवनम् ॥ १२ ॥

मयूखैर्जगतः सारं* ग्रीष्मे पेपीयते रविः ।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम् ॥
शीतं सशर्करं मन्थं जाङ्गलान् मृगपक्षिणः ।
घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति ॥

वार्त्ताकु-तिक्तकैश्च हिमात्यये । सेवेन्मध्वासवारिष्टान् शीधु माध्वीकमाधवान् ॥ व्यायाममञ्जनं धूमं तीक्ष्णञ्च कवडग्रहम् । सुखाम्बुना च सर्व्वार्थान् सेवेत कुसुमागमे ॥ तीक्ष्णरूक्षकटुक्षार-कषायं कोष्णमद्रवम् । यवमुद्गमधुप्रायं वसन्ते भोजनं हितम् ॥ व्यायामोऽत्र नियुद्धाध्व-शिलानिर्घातजो हितः । उत्सादनं तथा स्नानं वनिताः काननानि च ॥ सेवेत निर्हरेच्चापि हेमन्तोपचितं कफम् । शिरोविरेकवमन-निरूहकवडादिभिः ॥ वर्जयेन्मधुरस्निग्ध-दिवास्वप्नगुरुद्रवान् ॥ इति । इत्थञ्चायं कालो वसन्तः सूर्य्याचन्द्रमसससमकरवत्त्वेऽपि रौक्ष्यादानवल्लद्वानाच्चेति दिनकृद्भाभिरितिपदेन ज्ञापितम् । हेमन्तशिशिरयोर्भानुकरालपत्वेन श्लेष्मप्राबल्यनासामर्थ्यादिति ॥ १२ ॥

गङ्गाधरः अथ वसन्ताग्र्यर्त्तुहितानन्तरत्वेन वसन्तानन्तरं ग्रीष्मविधिमाह—मयूखैरित्यादि । जगतः सारं स्नेहमित्यर्थः । पेपीयतेऽतिशयेन पिबति शोषयति इत्यतिशयमयूखप्रखरत्वात् कालोऽयं ग्रीष्म इत्यनुमीयते । तदा तस्मिन्नत्यर्थप्रखरकरकरणकातिपीतजगत्स्नेहाकर्षति ग्रीष्मे स्नेहजनकत्वात् शैत्यकरत्वाच्च स्वाद्वादिकमन्नपानं हितम् । मन्थ इति "शक्तवः सर्पिषा युक्ता शीतवारिपरिप्लुता । नात्यच्छा नातिसान्द्रश्च मन्थ इत्यभिधीयते ॥"

पौषमाघात्मके हेमन्ते श्लेष्मचयः । सुखाम्बुना सुखोष्णाम्बुना, लावकपिञ्जलं मांसमिति सम्बन्धः, भक्षयेदिति शेषः । अनुभवेदिति भाषया श्लेष्मक्षयार्थं स्त्रीकमैथुनमनुजानाति ॥ १२ ॥

चक्रपाणिः—मयूखैरित्यादिना ग्रैष्मविधिमाह—मयूखैस्तेजोभिः, स्नेहः सार इत्यर्थः, पेपीयतेऽत्यर्थं पिबति, मन्थः—"शक्तवः सर्पिषा युक्ताः शीतवारिपरिप्लुताः । नात्यच्छा नाति-

* "सारम्" इत्यत्र "स्नेहम्" इति क्वाचित्कः पाठः ।

मद्यमल्पं न वा पेयमथवा सुबहूदकम्।
लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्ज्जयेत्॥
दिवा शीतगृहे निद्रां निशि चन्द्रांशुशीतले।
भजेच्चन्दनदिग्धाङ्गः प्रवाते हर्म्म्यमस्तके॥
व्यजनैः पाणिसंस्पर्शैश्चन्दनोदकशीतलैः।
सेव्यमानो भजेदास्यां मुक्तामणिविभूषितः॥

इति। तस्य विशेषणं शीतं सशर्करम्। मद्यमल्पमित्येकान्तमद्यसात्म्येनेति बोध्यं, नात्यर्थमद्यसात्म्येन तु पुंसा न वा पेयम्। स्वभावतः पाकतश्चाम्लस्य तीक्ष्णस्य च मद्यस्य ग्रीष्मतुल्यगुणत्वात् सात्म्यमद्यत्यागादुद्वेगे तु अथवा सुबहूदकं मद्यं पेयं, सुबहूदकसम्बन्धेन मद्यस्याम्लोष्णतीक्ष्णत्वाल्पीभावात्। एवं लवणादीनामपि आग्नेयत्वेन तुल्यत्वाद् ग्रीष्मस्य वर्ज्जयेत्; व्यायामन्तु दुर्ब्बलभावात्।

दिवेति। दिवाऽनिद्रेष्वपि विरुध्यते निद्रा, शैत्याच्च युज्यत एव। चन्द्रांशुशीतले इति गृहविशेषणं, चन्द्रांशुपदमत्र शिशिरोपलक्षणं, तेनाद्र-मनावृतगृहे इत्यर्थः। प्रवाते प्रकर्षेण वातो यत्र तस्मिंस्तथा, एतच्च गृहहर्म्म्यमस्तकाभ्यामन्वेतव्यम्।

पाणिसंस्पर्शैरिति दासदास्यादीनां चन्दनोदकशीतलैरिति व्यजनपाणिस्पर्शाभ्यामन्वेतव्यम्। आस्यामुपवेशनासनम्। एतद्वचनन्तु मध्याह्नातिप्रचण्डकरादेय विषयाभिप्रायेण बोध्यम्। सर्व्वोत्तर मैथुननिवृत्तिविधानाद्दिवाविषयभावान्निशि च मैथुननिवृत्तिर्बोध्या। सुश्रुते चोक्तम् "व्यायाममुष्णमायासं मैथुनञ्चानिशापि च। रसांश्चाग्निगुणोद्रिक्तान् निदाघे परिवर्ज्जयेत्॥ सरांसि सरितो वापीर्वनानि रुचिराणि च। चन्दनानि पराद्ध्र्याणि स्रजः सकमलोत्पलाः॥ तालवृन्तानिलान् हारांस्तथा शीतगृहाणि च। घर्म्मकाले निषेवेत वासांसि सुलघूनि च॥ शर्कराखण्डदिग्धानि सुगन्धीनि

सान्द्राश्च मन्थ इत्यभिधीयते। मद्यमल्पमित्येकान्तमद्यसात्म्येन, न वेति मद्यस्य स्वभावपाकाभ्याममम्लस्य ग्रीष्मविरुद्धत्वेन, सुबहूदकमिति मद्यसात्म्यस्यैव, मद्यस्योष्णाम्लत्वापनयनार्थं बहुतरपानीयं प्रक्षिप्य पातव्यमिति दर्शयति; तेनैतत् फलति, यत्— मद्यं ग्रीष्मे न पातव्यमेव तावत्, मद्यसात्म्यानां मद्यत्यागे सात्म्यत्यागजा रोगा भवन्ति; तेन तदल्पं वा सुबहूदकं वा

काननानि च शीतानि जलानि कुसुमानि च ।
ग्रीष्मकाले निषेवेत मैथुनाद्विरतो नरः ॥ १३ ॥
आदानदुर्ब्बले देहे पक्ता भवति दुर्ब्बलः ।
स वर्षास्वनिलादीनां दूषणैर्बाध्यते पुनः ॥
भूवाष्पान्मेघनिष्यन्दात् पाकादम्लाज्जलस्य च ।
वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः ॥

हिमानि च । पानकानि च सेवेत मन्थांश्चापि सशर्करान् ॥ भोजनञ्च हितं शीतं सघृतं मधुरद्रवम् । शृतेन पयसा रात्रौ शर्करामधुरेण च ॥ प्रत्यग्र-कुसुमाकीर्णे शयने हर्म्म्यसंस्थिते । शयीत चन्दनार्द्राङ्गः स्पृश्यमानानिलैः सुखैः ॥ तापात्यये हितास्तस्य रसा ये गुरवस्त्रयः ॥ पयो मांसरसाः क्षौण्णाम्लैल्लानि च घृतानि च ॥ बृंहणञ्चापि यत् किञ्चिदभिष्यन्दि तथैव च" ॥ इति ॥ १३ ॥

गङ्गाधरः अव्यवहितोत्तरत्वेन ग्रीष्मानन्तरं वर्षाविधिमाह आदानेत्यादि । आदानदुर्ब्बलदेहत्वादादाने देहवह्निः पक्ता दुर्ब्बलः पुनः स दुर्ब्बलो जाठराग्नि वर्षास्वनिलादीनां वातपित्तकफानां त्रयाणां दूषणदुष्टैर्बाध्यते द्रुतं । 

कुतोऽनिलादीनां दोषः स्यादित्याह भूवाष्पादित्यादि । भूवाष्पात् ग्रीष्मे प्रचण्डकराकतापितभूमेर्वर्षासु मेघवर्षणजलस्पर्शनोत्थापितवाष्पात् सोष्मभावात् तत्प्रभावात् त्रयो वातादयः कुप्यन्ति । मेघनिष्यन्दाद्वातकफौ कुप्यतः तथा वर्षास्वभावाज्जायमानाज्जलस्याम्लपाकात् पित्तम् । इत्यनिलादयस्त्रयः । तथा अग्निबले उक्तरूपेण हीने त्वादानदुर्ब्बलदेहोयत्वेनाग्निबलहानिः स्वभावात् त्रिमलकोपं जनयति । त्रयो मलाश्चाग्निं दूषयन्तीति परस्परं दूष्यदूषकत्व-मित्यतो वर्षास्वनिलादयः कुप्यन्ति ।

सेव्यमित्यर्थः । सुर्ध्य च मणिमु कामणिः, ग्रीष्मकाले चण्डानां मध्याह्न इत्यर्थः । मैथुनोपरतिस्तु द्विवानिशं बोद्धव्या ॥ १३ ॥

चक्रपाणिः वर्षाविधिमाह आदानेत्यादि । देहस्य दुर्ब्बलत्वे पक्तापि दुर्ब्बलो भवति, देहबलानुविधायित्वाद्वह्नेः, एतच्च बलिनो बली भवतीति व्युत्पादितं । स इति दुर्ब्बलो वह्निः, अनि-लादीनामित्यनिलप्रधानानाम् । वर्षासु वातादयो कुतः कुप्यन्तीत्याह भूवाष्पादित्यादि । भूवाष्पः प्रभावादेव त्रिदोषकोपनः, मेघनिस्यन्दो वातश्लेष्मकारकः, अम्लपाकता जलस्य वर्षास्वभावकृता

तस्मात् साधारणः सर्व्वो विधिर्वर्षासु शस्यते।
उदमन्थं दिवा स्वप्नमवश्यायं नदीजलम्॥
व्यायाममातपञ्चैव व्यवायञ्चात्र वर्ज्जयेत्।
पानभोजनसंस्कारान् प्रायः क्षौद्रान्वितान् भजेत्॥
व्यक्ताम्ललवणस्नेहं वातवर्षाकुलेऽहनि।
विशेषशीते भोक्तव्यं वर्षास्वनिलशान्तये॥

वर्षादोषमुपदिश्य तत्प्रतिषेधमुपदिशति तस्मादित्यादि। तस्माद्वातपित्तकफदूषणात्। तेन पुनश्चाग्निदूषणादादानदुर्व्वलदेहपुरुषीयत्वेनाग्निबलहानेश्च। तेषां विपरीतत्वात् साधारणो विधिर्वर्षासु कार्य्यः। साधारणस्तु विधिः सर्व्वरसद्रव्योपयोगस्त्रिदोषघ्नोऽग्निदीपनश्चाहाराचाररूपश्चेति बोध्यः। वर्ज्ज्यमाह उदमन्थमित्यादि। उदकप्रधानो मन्थ उदमन्थः। व्यवायं मैथुनम्। अत्र वर्षासु। तत्र वातवर्षातिव्याप्तदिनविधिमाह पानेत्यादि। पानमुदकादि. भोजनमन्नादि। संस्कारस्तयोः करणम्। प्रायः क्षौद्रेणान्वितानल्पक्षौद्रमतिनियतयोगेन वार्षिकक्लेदप्रशमनार्थं कल्पितान।

तत्र वातवर्षातिव्याप्तत्वेनातिशीतेऽहनि वातशान्त्यर्थं वर्षाजक्लेदशमनार्थञ्चाह व्यक्ताम्लेत्यादि। तत्र यद्दिनं अभ्रावातवर्षातिशयेनातिशीतं भवति तद्दिने महात्ययकारी वायुरतिवातेनातिवर्षेण सामान्याच्छीतगुणेन कुप्यति। महात्ययकरस्य तस्याशुतः प्रशमनमवश्यकर्त्तव्यमिति. अतस्तत्कालोपचितपित्तानुगुणत्वेऽपि वातातिहरत्वेनाम्ललवणादत्र व्यक्तत्वेन योज्याविति बोध्यम्। व्यक्ता अम्ललवणस्नेहा यत्रान्ने तत्। संस्कृतञ्च तपत्रादिभिः संस्कारात् तथाविधयूषो वातादिघ्नो भवति। क्षौद्रान्वितत्वं माध्वीकस्य पित्तहरत्वं स्यात्. तथाऽरिष्टस्यापि ; एवशब्देन मद्यान्तरव्यवच्छेदः। वाशब्देन यथातिसात्म्यस्य

पित्तश्लेष्मकर्त्ता। अग्निबले क्षीण इत्यनेनाऽऽदानाहितमग्निमान्द्यमपि दोषप्रकोपकमिति दर्शयति, अग्निमान्द्यञ्चापाकविपाकाभ्यां कफपित्तकारि धातुपोषकरसानुत्पादाच्च धातुक्षयेण वातकारि। एतेन वर्षासु वह्निमान्द्येन वातादिकोपः, वातादिकोपेन च वह्निमान्द्यमिति दर्शितं ; यदुक्तं वाभटे— "भूबाष्पेणाम्लपाकेन मलिनेन च वारिणा। वह्निनैव च मन्देन तेष्वित्यन्योन्यदूषिषु"। साधारणो विधिः कार्य्यस्त्रिदोषघ्नोऽग्निसन्दीपनश्च। उदकप्रधानो मन्थ उदमन्थः। पानमुदकादि, भोजनं शकशाकादि, तयोः संस्काराः संस्कारकद्रव्यप्रक्षेपा इत्यर्थः। क्षौद्रञ्च यद्यपि वातप्रकोपि

अग्निसंरक्षणवता यवगोधूमशालयः ।
पुराणा जाङ्गलैर्मांसैर्भोज्या यूषैश्च संस्कृतैः ॥
पिबेत् क्षौद्रान्वितञ्चाल्पं माध्वीकारिष्टमम्बु वा ।
माहेन्द्रं तप्तशीतं वा कौपं सारसमेव वा ॥
प्रघर्षोद्वर्त्तनस्नान-गन्धमाल्यपरो भवेत् ।
लघुशुद्धाम्बरः स्थानं भजेदक्लेदि वार्षिकम् ॥ १४ ॥

एवाल्पमाध्वीकारिष्टपानं नात्यर्थमिति ज्ञापितम् । स्नानं स्नानकरणजलम् । अक्लेदि वार्षिकं स्थानं भजेदिति । सुश्रुतेऽप्युक्तं "व्यायामञ्च दिवास्वप्नं व्यवायञ्चात्र वर्जयेत् ॥ यवषष्टिकगोधूमान् शालींश्चाप्यनवांस्तथा । हर्म्यमध्ये निवाते च भजेच्छय्यां मृदूत्तमाम् ॥ मांसपर्णाणविण्मूत्र-श्लेष्मनिष्ठीवनादिभिः । समाप्लुतं तदा तोयमान्तरीक्षं विषोपमम् ॥ वायुना विषदुष्टेन प्रावृषेण्येन दूषितम् । तद्धि सर्व्वोपयोगेषु तस्मिन् काले विवर्ज्जयेत् ॥ निरूहैर्वस्तिभिश्चान्यैस्तथान्यैर्मार्गतर्पणैः । कुपितं शमयेद्वायुं वार्षिकं वा चरेद्विधिम् ॥" इति प्रावृड्विधिः । तत्र वार्षिकविधिस्तु तथोक्तः । "सार्क्रमत्वाच्छरीराणां वर्षासु खलु देहिनाम् । मन्देऽग्नौ कोपमायान्ति संदूषान्मारुतादयः ॥ तस्मात् क्लेदविशुद्ध्यर्थं दोषसंहरणाय च । कषायतिक्तकटुकैः रसैर्युक्तमथाद्द्रवम् ॥ नातिस्निग्धं नातिरूक्षमुष्णं दीपनमेव च । देयमन्नं नृपतये यच्चलघ्वोक्तमादितः ॥ तप्तावरतमम्भो वा पिबेन्मधुसमायुतम् । अह्नि मेघानिलाविष्टेऽत्यर्थशीताम्बुसङ्कुले ॥ तरुणत्वाद्विदाहञ्च गच्छन्त्योषधयस्तदा । मांसभांस्त्यजेत्तस्मिन्तश्च नैव व्यायाममाचरेत् ॥ अन्यम्बुपानावश्याय-ग्राम्यधर्म्मातपांस्तथा । भूबाष्पपरिहारार्थं शयीत च विहायसि ॥ शीते साग्नौ निवाते च गुरुप्रावरणे गृहे । यायात्रागवधूपिभिश्च प्रशस्तागुरुधूपितः ॥ दिवास्वप्नमजीर्णञ्च वर्ज्जयेत् तत्र यत्नतः ॥" इति भाद्राश्विनयोर्विधिः ॥ १४ ॥

तथापि वार्षिकक्लेदशमनार्थं स्वल्पमात्रया क्षौद्रान्वितपदेन विहितम् । विशेषात् शीत इति हेतुगर्भविशेषणम् ; तेनायमर्थः शीते दिवसे यस्मान्महाप्रचयस्य वातस्य कोपो भवति, ततस्तज्जयार्थं वर्षाकालप्रभावक्रियमाणपित्तचयानुगुणयोरप्यम्लक्षणयोरुपयोगः कर्त्तव्य इति दर्शितं भवति ॥ १४ ॥

वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।
तप्तानामाचितं पित्तं प्रायः शरदि कुप्यति ॥
तत्रान्नपानं मधुरं लघु शीतं सतिक्तकम् ।
पित्तप्रशमनं सेव्यं मात्रया सुप्रकाङ्क्षितैः ॥

गङ्गाधरः वर्षाव्यवहितोत्तरत्वेन वर्षाविध्युपदेशानन्तरं शरद्विधिमुपदिशति वर्षाशीतेत्यादि । उच समवाये तस्य क्तान्तपदमुचितेति । वर्षासु कालस्वभावजशीतेनागत्याभ्यासेन समवेतान्यङ्गानि येषां तेषां शरदि सहसा मेघात्ययेन प्रखरकरतयाऽऽदित्यस्योदये तस्य रश्मिभिः सहसैव तप्तानां तापानुचितानां तेषां नृणामाचितं वर्षासु सञ्चितं पित्तं प्रायः कुप्यति । न तु वर्षासु पित्तसञ्चयहरविधिमाचरितवतामनाचितं पित्तमिति । प्रायःशब्देन वातकफयोरप्यनुबन्धरूपेण कोपो भवति । सूर्य्यरश्मिसंसर्गनिरोधेण वातस्य सामान्यात् वर्षाशीतसञ्चितकफस्य शरदि सहसाऽर्करश्मिभिः प्रविलयनाच्चेति दर्शितमित्यसम्यक् शरदि वातप्रशमनात् परन्तूक्तरीत्या कफस्यानुबन्धरूपेण कोपः स्यात् । वातस्य तु वर्षाशीतोचिताङ्गानां शैत्येन कुपितस्य शरदि मेघात्ययात् सहसा प्रखरार्ककरैः शैत्यापगमेन प्रशमनमिति बोध्यम् । पित्तन्तु शरदि तस्य चानुबलः कफ इति चोक्तम् ।

तयोः प्रशमनार्थं विधिमाह तत्रेत्यादि । तत्र शरदि कुपितपित्तं तदनुबन्धरूपेण कुपितकफञ्च पित्तजयार्थं मधुरं शीतञ्चान्नपानं कफजयार्थं लघुतिक्तकमित्येवमुन्नेयम् । अत्र पित्तप्रकोपे द्रवांशेन पित्ताप्लवनादग्निमान्द्यमुन्नेयम् । तदुद्दीपनार्थञ्च लघु तिक्तकं बोध्यम् । पित्तप्रशमनमिति प्रायः प्रधानप्रशमादप्रधानस्य प्रशम इत्यभिप्रायेणोक्तम् । मात्रयेति प्रस्तुतत्वेन लब्धेऽपि यत् पुनरुक्तं तदत्राग्निमान्द्यज्ञापनार्थं मात्राव्यतिक्रमप्रतिषेधार्थञ्च । सुप्रकाङ्क्षितैरिति बुभुक्षायामाहारविध्युपदेशः । वातप्रशमने पित्तकफयोर्द्रवधातुत्वेनाग्निमान्द्यकरत्वात् । उरभ्रो मेषः । शरभोऽष्टपदः । शालीन हैमन्तिकधान्यानि ।

चक्रपाणिः—शरद्विधिमाह वर्षेत्यादि । उचितम् अभ्यस्तम्, उच समवाये इत्यस्माद्धातोः, शीतमुचितान्यङ्गानि शीतोचितानि । सहसैवेति पदेनाक्रमेण शरदि तीव्रातपसम्बन्धादनभ्यस्तात् पित्तप्रकोपः स्यादत्र इति दर्शयति । आचितमिति वर्षासु । प्राय इत्यनेनैव वर्षासु तु पित्तचयप्रतिकूलं विधिं प्रयत्नेनाचरतो न भवति पित्तचयः शरदि तु प्रकोपो न भवतीति दर्शयति । एतच्च

लावान् कपिञ्जलानेणानुरभ्रान् शरभान् शशान्।
शालीन् सयवगोधूमान् सेव्यानाहुर्घनात्यये॥
तिक्तस्य सर्पिषः पानं विरेको रक्तमोक्षणम्।
धाराधरात्यये कार्य्यमातपस्य च वर्ज्जनम्॥
वसां तैलमवश्यायमौदकानूपमामिषम्।
क्षारं दधि दिवास्वप्नं प्राग्वातञ्चात्र वर्ज्जयेत्॥

घनात्यये इति शरदि। मेघापगमेन शीताभावप्रदर्शनार्थं प्रायेण प्रतिश्लोकवाक्यसमाप्त्यर्थञ्च शरदारम्भे चैतत् सर्व्वस्य कर्त्तव्यताज्ञापनार्थम्।

मध्यमशरद्विधिमाह तिक्तस्येत्यादि। धाराधरात्यये मेघानामेकान्ततोऽदर्शने मध्यशरदि प्रथमं तिक्तस्य सर्पिषः पञ्चतिक्तादिघृतस्य वक्ष्यमाणस्य पानम्। तेनाप्रशमे पित्तस्य विरेको विरेचनेन निर्हरणम्। तेन चाप्रशान्ते पित्ते रक्ते च दुष्टे रक्तमोक्षणमित्यभिप्रायेणेदं वचनं बोध्यम्। आतपस्य वर्ज्जनं सर्व्वदैव। रक्तस्य दुष्टिरत्र कालस्वभावादेव स्यात्। यदाह—"शरत्कालस्वभावाच्च शोणितं सम्प्रदुष्यति" इति। वसादिकञ्च वर्ज्जयेत् पित्तकफप्रकोपित्वात्। दिवास्वप्नन्तु कफवृद्धिवह्निमान्द्यकरत्वात्। क्षारञ्च पित्तकरत्वात्।

सामान्यन्यायेन श्लेष्मणो वातस्य च चयप्रकोपयोर्बोद्धव्यम्; यदि वा प्रायः पित्तं प्रकुप्यति श्लेष्मा चानुबन्धत्वेनेत्यर्थः; यदुक्तं "तस्य चानुबलः कफः" इति। लघ्वित्यग्निसन्धुक्षणार्थम्, अत्र वर्षाः समानेनापि पित्तेन द्रवांशसम्भवेनाग्निमान्द्यं क्रियते च, यदुक्तं ग्रहण्यध्याये—"आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम्।" उत्सर्गसिद्ध एव भोजनस्य मात्रावत्त्वे मात्रयेति वचनं मात्रातिक्रमेणेह विशेषतो भूरिदोषत्वदर्शनार्थम्। सुप्रकाङ्क्षितैः सुबुभुक्षितैः। उक्तोऽर्थः। घनात्यय इति पुनर्वचनं शरत्प्रवेश एव एतदुक्तविधिकरणं ग्रन्थाधिक्यात् सूचयतीति व्याख्यानयन्ति; पश्यामः—पर्य्यायशब्दानां पुनःपुनः करणे यत् तु तात्पर्य्यं शास्त्रे प्रतीयते तत्र तथैव वाच्यं, यत्र तात्पर्य्यान्तरं न प्रतीयते तत्र वाक्यभेदेनैव पुनरभिधानमिति। धाराधराणां मेघानामत्ययोऽदर्शनम्; तेन, प्रव्यक्तायां शरदि तिक्तसर्पिःपानं विरेकादि च कार्य्यं; क्रमश्चात्राचार्य्याभिप्रेतः, तेन प्रथमं सर्पिःपानं, तेन पित्ताप्रशान्तौ विरेकः, तेनाप्यशान्तौ शोणितदुष्टौ च सत्यां रक्तमोक्षणं, रक्तञ्चात्र कालस्वभावात् दुष्यत्येव प्रायः; यदाह—"शरत्कालस्वभावाच्च शोणितं

दिवा सूर्य्यांशुसन्तप्तं निशि चन्द्रांशुशीतलम्।
कालेन पक्वं निर्दोषमगस्त्येनाविषीकृतम्॥
हंसोदकमिति ख्यातं शारदं विमलं शुचि।

शरदि जलप्रयोगविधानार्थं प्रशंसनमाह — दिवेत्यादि। दिवापदेन सूर्य्यांशुतापे लब्धे पुनः सूर्य्यांशुपदं मेघाच्छन्नत्वाभावप्रदर्शनार्थम्। मेघाच्छन्ने तु दिने तथासंस्काराभावात्। सूर्य्यांशुपदेन दिवालाभे पुनर्दिवापदं सकलदिनं व्याप्य सूर्य्यांशुतप्तत्वज्ञापनार्थम्। सूर्य्यसन्तप्तमित्युक्त्या तथात्वसिद्धौ यदंशुपदं तदन्यन्नाव्याहतांशुज्ञापनार्थम्। निशि चन्द्रांशुशीतलमित्यप्येवं व्याख्येयम्। वस्तुतस्तु शारदजलस्य निर्दोषत्वज्ञापनार्थं दिवानिशयोः संस्कारोपनिदर्शनार्थमुक्तम्। सर्व्वत्रैवर्त्तौ दिवार्कांशुतप्तत्वं निशि च चन्द्रांशुशीतलत्वं वैषम्येण वर्त्तते एव। अत्र तु तुल्यत्वेन सूर्य्याचन्द्रमसोस्तुल्यबलत्वात्। वसन्ते तु तुल्यबलत्वेऽपि सूर्य्यस्य रौक्ष्याधिक्यादिति जलस्य शोषणेनाल्पत्वेनाल्पवीर्य्याच्च। कालेन पक्वमिति वर्षासु नवजलत्वेनाभिनवत्वं तत् पुनश्चिरेण शरदि कालस्वभावात् पच्यते। अत एव निर्दोषं सततवर्षजातक्रिमिभूमिसम्बन्धेन जातपैच्छिल्यगुरुत्वाम्लपाकत्वादिदोषरहितम्।

ननु वर्षासु मेघसहितत्वच्यूयमानकीटलूतादिविषजुष्टत्वदोषो वर्त्तत एवेति चेत् कुत इति आह — अगस्त्येनाविषीकृतमिति। अगस्त्योदयात् प्रभावेण मेघसहितभुजगलूतादिसविषप्राणिसंसर्गजत्वेन सविषत्वापायात्। हंसोदकमिति — चन्द्रार्कावभिधीयेते हंसपदेन निरुक्तत्वात्। ताभ्यां शोधितमुदकं हंसोदकमिति संज्ञा। एवंविधजलस्य हंसोदकत्वं प्रतिपादयति। विमलं शुचीति। विमलं—मलं गुरुत्वपैच्छिल्यकर्द्दमादि, तद्रहितम्। सुतरां शुचि विशदम्। यद्वा हंसपेयत्वाद् हंसोदकम्। हंसा हि विशुद्धतोयं भजन्त इति।

सम्प्रदुष्यति। दिवेत्यादि। सूर्य्यांशुतापादेव दिवेति लब्धे दिवेति सकलदिनव्याप्त्यर्थम्। सूर्य्यांशुतप्तमिति वक्तव्येऽंशुग्रहणं मेघावरणरहितांशुसूर्य्यग्रहणार्थं, सन्तप्तमित्यत्र संशब्दः परितस्तापोपदर्शनार्थः। एवं निशीत्यादि च व्याख्येयं; चन्द्रांशुग्रहणेन च निशि सौम्यांशुसम्बन्धं लक्षयति। कालेनेति प्रभावेण, पक्वमिति वर्षास्वभिनवभूमिसम्बन्धजनितपैच्छिल्याम्लत्वादिदोषरहितं यतः पक्वं ततो निर्दोषं दोषाजनकमित्यर्थः। अगस्त्येनाविषीकृतमित्यगस्त्योदयेन प्रभावात् वर्षासु मेघसम्बन्धोरगलूतादिसम्बन्धात् सविषमविषं भवतीति वाच्यम्। हंसोदकमित्येवंभूतोदकस्य संज्ञा, हंसशब्देन सूर्य्याचन्द्रमसावभिधीयेते, ताभ्यां शोधितमुदकं हंसोदकं; यदि

स्नानपानावगाहेषु शस्यते तद् यथाऽमृतम् ॥
शारदानि च माल्यानि वासांसि विमलानि च ।
शरत्काले प्रशस्यन्ते प्रदोषे चेन्दुरश्मयः ॥ १५ ॥

तद्विधिमाह स्नानेत्यादि। अमृतमिति आरोग्यजनकत्वादाह्लादजनकत्वाच्च। आहार्य्याण्युक्त्वाऽऽचर्य्याण्याह शारदानीत्यादि। शारदानीति शरत्कालोद्भवपुष्परचितानि न त्वनार्त्तवपुष्पकृतानि। पुनः शरत्काल इति पदं श्लोकस्य वाक्याकाङ्क्षाव्यवच्छेदार्थम्। प्रदोषे चेति रात्रिप्रवर्त्तनमात्रे, न तु यामार्द्धे शिशिरानिलयोगभयात्। अत्र षट्सु ऋतुषु पूर्व्वर्त्तुसात्म्यपरित्यागे क्रमोऽयमुपदिश्यते। ऋत्ववसानेऽन्तिमे सप्ताहे क्रमेण तदृतुविधिपरिहारोऽनागतर्त्तुविधिसेवा चेति तन्त्रान्तरदर्शनात्। यदुक्तं तत्र "ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः। तत्र पूर्व्वो विधिस्त्याज्यः सेवनीयः परः क्रमात् ॥" इति। सुश्रुतेऽप्युक्तं "सेव्याः शरदि यत्नेन कषायमधुरतिक्तकाः। क्षीरेक्षुविकारक्षौद्र-शालिमुद्गादिजाङ्गलाः ॥ सलिलञ्च प्रसन्नत्वात् सर्व्वमेव तदा हितम्। सरःस्वाप्लवनञ्चैव कमलोत्पलशालिषु ॥ प्रदोषे शशिनः पादाश्चन्दनञ्चानुवासनम्। तिक्तस्य सर्पिषः पानं रक्तस्रावश्च युक्तितः ॥ वर्षास्वुपचितं पित्तं हरेच्चापि विरेचनैः। नोपेयात् तीक्ष्णमम्लोष्णं क्षारं स्वप्नं दिवातपम् ॥ रात्रिजागरणञ्चैव मैथुनञ्चापि वर्जयेत्। स्वादु शीतजलं मद्यं शुचि स्फटिकनिर्म्मलम् ॥ शरच्चन्द्रांशुनिर्धौतमगस्त्योदयनिर्विषम्। प्रसन्नत्वाच्च सलिलं सर्व्वमेव तदा हितम् ॥ सचन्दनं वा कर्पूरं वासश्चापमलिनं लघु। भजेच्च शारदं माल्यं सर्पिषः पानञ्च युक्तितः। पित्तप्रशमनं यच्च तच्च सर्व्वं समाचरेत्" इति ॥ यद्यपि वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृडिति क्रमेण षडृतुविधिः सुश्रुतेनोक्तः, चरकाचार्य्येण तु हेमन्तशिशिरवसन्तग्रीष्मवर्षाशरदिति क्रमेणोक्तस्तथापि युक्तिकुशलेन संशोधनसंशमनादिभेदेन विविच्य वक्ष्यमाण-संशोधनादिकालानुसारेणोपयोजयेदित्यवधातव्यमिति ॥ १५ ॥

वा हंससेव्यत्वादारोग्यमुदकं, हंसाः किल विशुद्धमेवोदकं भजन्ते। अवगाहश्चिरं जलावस्थानम्। शारदानीति माल्यविशेषणमनार्त्तवकुसुमनिषेधार्थम्। प्रदोष इति निशाप्रवेश एव परं चन्द्ररश्मिसेवा, नोपरि, शिशिरभयात्। अत्र पूर्व्वर्त्तुसात्म्यपरित्यागो भविष्यदृतुसात्म्याभ्यासश्च पूर्व्वर्त्त्वन्त-सप्ताहागाम्यृत्वादिसप्ताहयोः कर्त्तव्यः, यदुक्तं वाग्भटे "ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः। तत्र पूर्व्वो विधिस्त्याज्यः, सेवनीयः परः क्रमात्" इति ॥ १५ ॥

इत्युक्तमृतुसात्म्यं यच्चेष्टाहारव्यपाश्रयम्।
उपशेते यदौचित्यादोकसात्म्यं तदुच्यते॥
देशानामामयानाञ्च विपरीतगुणं गुणैः।
सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टितञ्चाद्यमेव च॥ १६॥

गङ्गाधरः—तस्यर्त्तुसात्म्यं विदितं चेष्टाहारव्यपाश्रयमित्यस्योपसंहारार्थमाह—इतीत्यादि। नन्वेनावर्त्तवत्तु विधिना मात्राशिनः किं बलं वर्णः सुखमायुश्च वर्द्धते? न तावद्वर्द्धते। यः पुरुषः स्वभावतः क्षीणदेहः क्षीणबलो वा क्षीणकफो वा तस्य चापरस्यान्यथात्मकस्य विभिन्नप्रकारस्यैकविधोपयोगे सात्म्यत्वाभावादित्यत आह उपशेत इत्यादि। इत्येवंप्रकारेण यच्चेष्टाहारव्यपाश्रयरूपमृतुं प्रति सुखजनकतयोपयोगविधानमुक्तं तत्र यदाहाराचारविधानं यस्य पुरुषस्यौचित्यात् स्वप्रकृत्यनुसारेण विपरीततया सहात्मना शरीरेण समवेतत्वादुपशेते सुखयति तदोकादौचित्यात् सात्म्यमित्योकसात्म्यमुच्यते।

नन्वेवमस्तु कथमानूपदेशभवानां वानूपदेशवासिनां वा जाङ्गलदेशभवानां जाङ्गलदेशवासिनाञ्च एकमेवत्तु सात्म्यं भवति? भवति चेदभ्यासाद्भवतु। सात्म्यन्तु कीदृशमित्यत आह देशानामित्यादि। देशानामानूपजाङ्गलसाधारणानां रौक्ष्यलाघवादिभिर्गौरवस्निग्धत्वादिभिः स्निग्धरूक्षगुरुलाघवादुभयमिश्रैर्विपरीताः स्निग्धगौरवादयो रौक्ष्यलाघवादयो रूक्षस्निग्धलघुगौरवादुभयमिश्रा गुणा यत्र गुणवीर्य्यविपाकप्रभावा यत्र तत् खाद्य चतुर्व्विधं यच्चेष्टितं चैव यत् स्वप्नतैलाभ्यङ्गादिकं तत् सात्म्यं देशसात्म्यमिच्छन्त्यायुर्व्वेदविदः

चक्रपाणिः—उपसंहरति इत्युक्तमित्यादि। ऋतुसात्म्यप्रसङ्गेनौकसात्म्यं दर्शयति—उपशेते इत्यादि। उपशेते सुखयति, अपथ्यमपि मद्विकारं न जनयति। कुतः इत्याह—औचित्यादभ्यासादित्यर्थः। अपथ्यमपि हि निरन्तराभ्यासाद्विषमिवार्णाविषस्य नोपघातकं भवतीति भावः। देशसात्म्यं रोगसात्म्यञ्च दर्शयति देशानामित्यादि। देशानामानूपादीनां गुणैः स्नेहगौरवादिभिः सह विपरीतगुणं स्नेहगौरवविपरीतगुणरौक्ष्यलाघवयुक्तं धन्वजाङ्गलमांसमध्वादि; अशनीयम् आद्यं, चेष्टितञ्च व्यायामादि, देशसात्म्यमिच्छन्त्यायुर्व्वेदविद इत्यर्थः। एवमामयानाञ्च विपरीतगुणमित्यादि व्याख्येयम्। गुणशब्दश्चेह धर्म्ममात्रवचनः, यथोच्यते—द्रव्यगुणः द्रव्यधर्म्म इत्यर्थः; तेन विपरीतप्रभावादीनामपि ग्रहणं भवति। आमयशब्देन

तत्र श्लोकः ।

ऋतावृतौ नृभिः सेव्यमसेव्यं यच्च किञ्चन ।
तस्याशितीये निर्दिष्टं हेतुमत् सात्म्यमेव च ॥ १७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने तस्याशितीयो नाम षष्ठोऽध्यायः ॥ ६ ॥

सात्म्यज्ञा इत्यर्थः । एवमामयानाञ्च । आमया अत्र धातुवैषम्यात्मका विकारा विषमज्वरादयः, तदारब्धा ज्वरादयश्च । तेषां गुणैर्गुणवीर्य्यप्रभावैर्विपरीतगुणं यत् खाद्यं चोपभुक्तञ्चैव नान्यत् तत् सात्म्यमामयसात्म्यमिच्छन्ति सात्म्यज्ञा इति । तथा सति सुखयति । न त्वन्यथा ॥ १६ ॥

गङ्गाधरः — अथाध्यायार्थमुपसंहर्त्तुमाह तत्र श्लोक इति । ऋतावृताविति ऋत्वृतु । ननु ऋत्वृतु सेव्यमसेव्यं नोक्तं कथमिति नाशङ्क्यं विधिना प्रतिषेधो हि लभ्यते । हेतुमदित्युपपत्तिसहितम् औचित्यादिरूपेणेति ॥ १७ ॥

अध्यायं समापयति अग्निवेशेत्यादि । प्राग्वद्व्याख्येयम् ।

इति श्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ श्लोकस्थाने तस्याशितीयाध्यायजल्पो नाम षष्ठशाखा ॥ ६ ॥

आमयहेतुरपि ग्रहीतव्यः । ततः आमयविपरीतानाम् आमयहेतुविपरीतानाञ्च तथा प्रभाववैपरीत्यात् तद्विपरीतार्थकारिणाञ्च ग्रहणं भवति, तदुदाहरणमिह यथावसरं निदाने करिष्यामः । आहारग्रहणेनौषधाहारयोर्ग्रहणं, चेष्टितशब्देन स्वप्नाभ्यङ्गादीनां ग्रहणं व्याख्येयम् ॥ १६ ॥

चक्रपाणिः उक्तमध्यायार्थमुपसंहरति ऋतावित्यादि । अत्र हेमन्ते सेव्यं कण्ठरवेण यद्यपि न प्रतिपादितं तथापि स यदा तेनोक्तं सुखं लभत इत्यभिधानादल्पभोजनपरिहार उक्त एव भवति । तेन, ऋतावृताविति वीप्सया ऋतावृतौ भवति, यदि वा ऋत्विजो गच्छन्तीति न्यायात् वीप्सोक्ता । हेमन्तपरिहारविधिश्च शिशिरपरिहारविधिर्व्याख्येयः । हेतुमदित्युपपत्तिमदौचित्यादिहेतुनिर्देशोपपन्नमित्यर्थः ॥ १७ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्वेददीपिकायां सूत्रस्थान-व्याख्यायां तस्याशितीयो नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः।

अथातो न-वेगान्धारणीयमध्यायं व्याख्यास्यामः।

इति ह स्माह भगवानात्रेयः॥ १ ॥

न वेगान् धारयेद्धीमान् जातान् मूत्रपुरीषयोः।
न रेतसो न वातस्य न वम्याः क्षवथोर्न च॥
नोद्गारस्य न जृम्भाया न वेगान् क्षुत्पिपासयोः।
न बाष्पस्य न निद्राया निश्वासस्य श्रमेण च॥

गङ्गाधरः ननु मात्राशिनाशनस्येत् साम्यत्वेन स्वस्थहितत्वेन तत्परिणामे मलमूत्रविसर्गस्यापि हितत्वमिति मलमूत्रवेगधारणप्रतिषेधे वक्तव्ये वेगविधारणप्रतिषेधप्रसङ्गात् स्वस्थहितवेगविधारणप्रतिषेधमुपदेष्टुं न-वेगान-धारणीयमारभते —अथात इत्यादि। अध्यायारम्भे तु न वेगान धारयेदिति वाक्यस्यार्थे न-वेगान-धारणमिति पदमधिकृत्य कृतसंज्ञोऽध्यायोऽयमिति सर्वं प्राग्वद् व्याख्येयम्॥ १ ॥

गङ्गाधरः न वेगान् धारयेदित्यादि। वेगोऽत्र प्रवृत्त्युन्मुखता। जातानित्युत्पन्नमात्रान्। अत्रादौ मूत्रपदनिर्देशः पुरीषादपेक्षया मुहुरुपस्थितत्वात्। मूत्रपुरीषयोः क्षुत्पिपासयोरिति समासकरणात् प्रायेणानयोः समानप्रवृत्त्युन्मुखत्वं बोध्यम्। न वातस्येत्यपानवातस्य गुदेन प्रवृत्त्युन्मुखस्य प्रतिषेधस्यात्यावश्यकत्वेन प्राधान्योपदर्शनार्थम्। न बाष्पस्येति बाष्पो हर्षशोकोत्पन्नोष्मसहिताश्रु। निश्वासस्य श्रमेण चेति श्रमजनितश्वासवेगविधारणप्रतिषेधो न त्वन्यस्य। प्राणायामादिना हि योगेनायुर्वर्द्धते।

चक्रपाणिः पूर्वाध्यायाभ्यां स्वस्थहित आहारः प्राधान्येनोक्तः, तस्याहारस्य स्वस्थहितत्वम् आहारपाकजमूत्रपुरीषाणामविधारितवेगानां बहिर्गमने सति भवतीति मूत्रादिवेगाविधारणोपदेशकं नवेगान्धारणीयमाह। इहापि नवेगधारणशब्दस्याभावात् मात्राशितीयवत् पर्यायशब्देन संज्ञा बोद्धव्या। जातानिति जातमात्रान्, वेग. प्रवृत्त्युन्मुखत्वं मूत्रपुरीषादीनाम्। मूत्रग्रहणमादौ मूत्रस्य पुरीषापेक्षया बहुवेगत्वात्। मूत्रपुरीषयोरिति क्षुत्पिपासयोरिति च समासकरणं

एतान् धारयतो जातान् वेगान् रोगा भवन्ति ये।
पृथक् पृथक् चिकित्सार्थं तन्मे निगदतः शृणु ॥ २ ॥
वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा।
विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥
स्वेदावगाहनाभ्यङ्गान् सर्पिषश्चावपीड़कम्।
मूत्रे प्रतिहते कुर्य्यात् त्रिविधं वस्तिकर्म्म च ॥ ३ ॥

प्रतिषेधविधिमेतं सेवमानस्य प्रत्यवायान् सोपायानाह एतानित्यादि। तत्रादौ मूत्रवेगविधारणदोषं सचिकित्सितमाह वस्तीत्यादि। विनामो मूत्रवेगेणाकृष्यमाणत्वेन नतगात्रत्वम्। वङ्क्षणानाहः वङ्क्षणस्य बन्धः। सुश्रुतेऽप्युक्तम् "अधश्चोर्द्धञ्च भावानां प्रवृत्तानां स्वभावतः। न वेगान् धारयेत् प्राज्ञो वातादीनां जिजीविषुः॥ वातविण्मूत्रजृम्भाश्रु-क्षवोद्गार-वमीन्द्रिय क्षुत्तृष्णोच्छ्वासनिद्राणामुदावर्त्तो विधारणात्। व्याहन्यमानै-रुदितैरुदावर्त्तो निरुच्यते॥ तस्याभिधास्ये व्यासेन लक्षणञ्च चिकित्सितम्॥ त्रयोदशविधश्चासौ भिन्न एतैस्तु कारणैः। अपथ्यभोजनाच्चापि वक्ष्यते च यथापरः॥" इत्युक्त्वा उक्तक्रमेण लक्षणमुक्तम्। तदत्रोक्तवानेन क्रमेण लिख्यते "मूत्रस्य वेगेऽभिहते नरस्तु कृच्छ्रेण मूत्रं कुरुतेऽल्पमल्पम्। मेढ्रे गुदे वङ्क्षणमुष्कयोश्च नाभिप्रदेशेष्वथवापि मूर्द्धि॥ आनद्धवस्तेश्च भवन्ति तीव्राः शूलाश्च शूलैरिव भिन्नमूर्त्तेः॥" इति।

अत्रचास्य मूत्रवेगविधारणजस्य रोगस्य चिकित्सितं भिन्नाधिकारत्वात् तत्सूत्ररूपेणोपदिशति—स्वेदेत्यादि। त्रिविधं वस्तिकर्म्मेति अनुवासननिरूहो-त्तरवस्तिरूपम्। सुश्रुते तस्य प्रविशेषो यथा "सर्व्वेष्वेतेषु विधिवदुदावर्त्तेषु कृत्स्नशः। वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये॥ सामान्यतः पृथक्त्वेन क्रियां भूयो निबोध मे। सौवर्च्चलाढ्यां मदिरां मूत्रे त्वभिहते

प्रायशोऽनयोः सहोत्पादप्रदर्शनार्थं, प्रतिनियमिद्धं नकारकरणं निषिद्धगौरवोपदर्शनार्थम्। निश्वासस्य श्रमेण चेति श्रमोत्थस्य निश्वासस्याविधार्य्यत्वं दर्शयति, यतोऽनन्तरं वक्ष्यति श्रमनिश्वास-धारणात् इति। सुश्रुतेऽप्युक्तं "श्रान्तस्य निश्वासविनिग्रहेण हृद्रोगमूर्च्छाऽप्यथवापि गुल्मः" इति ॥ ११ ॥

चक्रपाणिः—मूत्रवेगविधारणे ये रोगास्तेषां यच्चिकित्सितं तदल्पवक्तव्यत्वात् प्रकरणागत-त्वाच्च ब्रूते वस्तिमेहनेत्यादि। मेहनं शिश्नः, विनमनं विनामः शरीरस्य, अवपीड़को बहुमात्रा-

पक्काशयशिरःशूलं वातवर्च्चोनिरोधनम्।
पिण्डिकोद्वेष्टनाध्मानं पुरीषे स्याद् विधारिते॥
स्वेदाभ्यङ्गावगाहाश्च वर्त्तयो वस्तिकर्म्म च।
हितं प्रतिहते वर्च्चस्यन्नपानं प्रमाथि च॥ ४॥

पिवेत्॥ एलामप्यथ मद्येन क्षीरं वापि पिवन्नरः। धात्रीफलानां स्वरसं सजलं वा पिवेत् त्र्यहम्॥ रसमश्वपुरीषस्य गर्द्दभस्याथवा पिवेत्। मांसोपदंशं मद्यं वा पिवेद्वा सीधगाड़िकम्॥ भद्रदारु घनं मूर्व्वां हरिद्रां मधुकं तथा। कालप्रमाणानि पिवेद्रात्नगाक्षेण वारिणा॥ दुःस्पर्शास्वरसं वापि कषायं कुक्कुभस्य च। एर्व्वारुबीजं तोयेन पिवेद्वाऽप्यवणाकृतम्॥ पञ्चमूली-शृतं क्षीरं द्राक्षारसमथापि वा। योगांश्च विनयेत् तत्र पूर्व्वोक्तानश्मरीभिदः॥ मूत्रकृच्छ्रक्रमं वापि कुर्य्यान्निरवशेषतः। भूयो वक्ष्यामि योगांश्च मूत्राघातोपशान्तये॥" इति॥ २।३॥

गङ्गाधरः—क्रमिकपुरीषवेगविधारणजरोगं सचिकित्सितमाह—पक्काशय इत्यादि। पिण्डिकोद्वेष्टनं जानुजङ्घामध्यस्थमांसवर्त्तयः पिण्डिकाः। तदुद्वेष्टनं दण्डादिनेव ताड़नम्। सुश्रुते तु "आटोपशूलौ परिकर्त्तनञ्च सङ्गः पुरीषस्य तथोर्द्ध्ववातः। पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य॥" इति।

चिकित्सितमस्याह स्वेदेत्यादि। वर्त्तयोऽत्र भिन्नाधिकारत्वान्नोक्तास्तन्त्रान्तरेणानाहोक्ताश्चानुसर्त्तव्याः। वस्तिकर्म्म त्रिविधम्। अन्नपानं प्रमाथि च वातानुलोमनं भेषजञ्च प्रमाथि तेन वैरेचनिकद्रव्यैः सर्पिस्तैलसाधनं चूर्णक्काथकल्कादिकल्पनया कल्पितं भेषजं बोध्यम्। सुश्रुते चोक्तम्—"पुरीषजे तु कर्त्तव्यो विधिरानाहिको भवेत्॥" इति। एवं तन्त्रान्तरोक्तानि च—"त्रिवृत्कृष्णाहरीतक्यो द्विचतुःपञ्चभागिकाः। गुड़िका गुड़तुल्यास्ता विड्विबन्धगदापहाः॥ हरीतकीयवक्षारपील्नि निवृता तथा। घृतैश्चूर्णमिदं पेयमुदावर्त्तरुजापहम्॥ हिङ्गुकुष्ठवचास्वर्जिका विड्ङ्गचैव द्विरुत्तरम्। पीतं मद्येन तच्चूर्णमुदावर्त्तहरं परम्॥ खण्डपलं त्रिवृतासममुपकुल्याकर्षचूर्णितं श्लक्ष्णम्। प्राग्भोजने च मधुना विड़ालपदकं लिहेत् प्राज्ञः॥ एतद्गाढपुरीषे

प्रयोगः, मात्राधिकत्वेन हि भेषजं दोषान् पीड़यतीति कृत्वा, अन्यत्राप्युक्तम् "अवपीड़कसर्पिर्भिः कोष्णैश्च सतैलकैस्तथाभ्यङ्गैः" इति। त्रिविधमिति निरूहानुवासनोत्तरवस्त्यात्मकम्। पिण्डिका जानुजङ्घामध्यमांसपिण्डिका, वर्त्तयो वक्ष्यन्ते॥ ३।४॥

मेढ्रे वृषणयोः शूलमङ्गमर्दो हृदि व्यथा ।
भवेत् प्रतिहते शुक्रे विबद्धं मूत्रमेव च ॥
तत्राभ्यङ्गावगाहाश्च मदिराश्चरणायुधाः ।
शालिः पयो निरूहाश्च शस्तं मैथुनमेव च ॥ ५ ॥
वातमूत्रपुरीषाणां सङ्गो ध्मानं क्लमो रुजा ।
जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ॥
स्नेहस्वेदविधिस्तत्र वर्त्तयो भोजनानि च ।
पानानि वस्तयश्चैव शस्तं वातानुलोमनम् ॥ ६ ॥

पित्ते च कफे च विनियोज्यम् । स्वादुर्न पयोग्योऽयं चूर्णो नाराचको नाम्ना ॥" ( नाराचचूर्णम् । ) हिङ्गुमाक्षिकसिद्धार्थैः पक्त्वा वर्त्तिं सुवर्त्तिनाम् । घृताभ्यक्तां गुदे दद्यादुदावर्त्तविनाशिनीम् ॥ मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः । गुडक्षारसमायुक्ता फलवर्त्तिः प्रशस्यते ॥ अगारधूमसिन्धूत्थ-तैलयुक्ताम्ल-मूलकम् । क्षुण्णं निर्गुण्डीपत्रं वा स्विन्नं पायौ क्षिपेद् बुधः ॥ इति ॥४॥

गङ्गाधरः क्रमप्राप्तं रेतोवेगविधारणजरोगमाह—मेढ्र इत्यादि । स्पष्टम् । सुश्रुते तु—"मूत्राशये वा गुदमुष्कयोश्च शोफो रुजा मूत्रविनिग्रहश्च । शुक्राश्मरी तत्स्रवणं भवेद्वा ते ते विकारा विहते तु शुक्रे ॥" इति ।

अस्य चिकित्सितमाह—तत्रेत्यादि । चरणायुधाः कुक्कुटाः । सुश्रुते तु—"वस्तिशुद्धिकराव्यापं चतुर्गुणजलं पयः । आ वारिनाशात् क्वथितं पीतवन्तं प्रकामतः । रमयेयुः प्रिया नार्य्यः शुक्रोदावर्त्तिनं नरम् ॥" इति ॥ ५ ॥

गङ्गाधरः क्रमप्राप्तं वातनिरोधजरोगमाह—वातेत्यादि । जठरे रोगाः स्युर्वातजाः । अन्ये उक्तातिरिक्ता इत्यर्थः । वातनिग्रहादिति गुदतः प्रवर्त्त-मानवायुनिग्रहात् । सुश्रुते तु—"आध्मानशूलौ हृदयोपरोधं शिरोरुजं श्वासमतीव हिक्काम् । कासप्रतिश्यायगलग्रहांश्च बलासपित्तप्रसरञ्च घोरम् । कुर्य्या-दपानोऽभिहतः स्वमार्गं हन्यात् पुरीषं मुखतः क्षिपेद्वा ॥" इति ।

अस्य चिकित्सितमाह—स्नेहेत्यादि । वर्त्तयः फलवर्त्तय उक्ताः । भोजनानि पानानि वस्तयश्चैवैतत् प्रयं वातानुलोमनं शस्तमित्यर्थः । सुश्रुते तु—

चक्रपाणिः—ध्मानमनुलोमनं, चरणायुधः कुक्कुटः, रुजा जठर इति सम्बन्धः । 'भोज-

कण्डूकोठारुचिव्यङ्ग-शोथपाण्ड्वामयज्वराः।
कुष्ठहृल्लासवीसर्पाश्छर्दिनिग्रहजा गदाः॥
भुक्त्वा प्रच्छर्दनं धूमो लङ्घनं रक्तमोक्षणम्।
रूक्षान्नपानं व्यायामो विरेकश्चात्र शस्यते॥ ७॥
मन्यास्तम्भः शिरःशूलमर्दितार्द्धावभेदकौ।
इन्द्रियाणाञ्च दौर्ब्बल्यं क्षवथोः स्याद् विधारणात्॥
तत्रोर्द्धजत्रुकेऽभ्यङ्गः स्वेदो धूमः सनावनः।
हितं वातघ्नमाद्यञ्च घृतञ्चौत्तरभक्तिकम्॥ ८॥

"आस्थापनं मारुतजे स्निग्धस्विन्नस्य शस्यते।" इत्युक्तेस्तयोऽत्रास्थापनानि क्षारवैतरणादीनि त्रिविधं वा आस्थापनानुवासनोत्तरवस्तिमग्रात्॥ ६॥

गङ्गाधरः—क्रमप्राप्तं वमिवेगविधारणजरोगमाह कण्ड्वित्यादि। कोठो वरटीदष्टसंस्थानाकारः। व्यङ्गो मुखे श्यावर्णमण्डलः। हृल्लास उत्क्लेशः। सुश्रुते तु—"छर्दिर्विघातेन भवेच्च कुष्ठं येनैव दोषेण विदग्धमन्नम्।" इति।

अस्य चिकित्सितमाह भुक्त्वेत्यादि। व्यायामोऽत्र प्रवाहणादिरूपः। "छर्द्याघातं यथादोषं नस्यस्नेहादिभिर्जयेत्॥ इति॥ ७॥

गङ्गाधरः—क्रमप्राप्तं क्षवथुवेगविधारणजरोगमाह—मन्यास्तम्भ इत्यादि। स्पष्टम्। सुश्रुते तु "भवन्ति गाढ़ं क्षवथोर्विघातात्छिरोऽक्षिनासाश्रवणेषु रोगाः॥" इति।

अस्य चिकित्सितमाह—तत्रेत्यादि। वातघ्नमाद्यं वातहरं भोज्यम्। चकारात् स्वेदादयश्च वातहराः। सुश्रुते तु "तीक्ष्णाञ्जननावनाभ्यां तीक्ष्ण-गन्धोपसिङ्घनैः। वर्त्तिप्रयोगैरथवा क्षवजे तं प्रवर्त्तयेत्। तीक्ष्णोपधमधमनै-रथवादित्यरश्मिभिः॥" इति॥ ८॥

नानि', 'पायानि' 'बलाय' इति ग्रन्थं वातानुलोमनं द्रव्यमिति योज्यं; कोठो वरटीदष्टाकारः शोथः, व्यङ्गश्च श्यामवर्णो मण्डलः, हृल्लास उत्क्लेशः। अर्द्धावभेदोऽर्द्धमस्तकवेदना। आद्यं भोजनमित्यर्थः, चकारात् स्वेदादयोऽपि वातघ्ना इति सूचयति। यद्यपि सुश्रुते मूत्रादीनां

हिक्का कासो*ऽरुचिः कम्पो विबन्धो हृदयोरसोः।
उद्गारनिग्रहात् तत्र हिक्कायास्तुल्यमौषधम् ॥ ९ ॥
विनामाक्षेपसङ्कोचाः सुप्तिः कम्पः प्रवेपनम्।
जृम्भाया निग्रहात् तत्र सर्व्वं वातघ्नमौषधम् ॥ १० ॥
कार्श्यदौर्ब्बल्यवैवर्ण्यमङ्गमर्द्दोऽरुचिर्भ्रमः।
क्षुद्वेगनिग्रहात् तत्र स्निग्धोष्णं लघु भोजनम् ॥ ११ ॥

गङ्गाधरः—क्रमप्राप्तमुद्गारविघातजरोगमाह हिक्केत्यादि। सुश्रुते तु—"कण्ठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरथवाऽप्रवृत्तिः। उद्गारवेगेऽभिहते भवन्ति जन्तोर्विकाराः पवनप्रसूताः ॥" इति।

अस्य चिकित्सितमाह—तत्र हिक्काया इत्यादि। सुश्रुते तु—"उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत्। सुरां सौवर्च्चलवतीं वीजपूररसान्विताम् ॥" इति ॥ ९ ॥

गङ्गाधरः—क्रमप्राप्तं जृम्भावेगविधारणजरोगमाह विनामेत्यादि। आक्षेपो मुहुर्म्मुहुरङ्गानां क्षेपः। सङ्कोचः पर्व्वणामाकुञ्चनम्। सुप्तिः स्पर्शानभिज्ञानम्। सुश्रुते तु "मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात् पवनात्मकाः स्युः। तथाक्षिनासावदनामयाश्च भवन्ति तीव्राः सह कर्णरोगैः ॥" इति।

अस्य चिकित्सितमाह सर्व्वं वातघ्नमौषधम्। सुश्रुते तु "स्नेहस्वेदैरुदावर्त्तं जृम्भाजं समुपाचरेत्" इति ॥ १० ॥

गङ्गाधरः—क्रमप्राप्तं क्षुद्वेगविघातजरोगमाह कार्श्येत्यादि। भ्रमश्चक्रस्थवद्भ्रमणमिति। सुश्रुते तु—"तन्द्राङ्गमर्दावरुचिभ्रमश्च क्षुधो विघातात् कृशता च दृष्टेः ॥" इति।

अस्य चिकित्सितमाह तत्र स्निग्धोष्णेत्यादि। सुश्रुतेऽपि—"क्षुद्विघाते हितं स्निग्धमुष्णञ्च लघु भोजनम् ॥" इति ॥ ११ ॥

त्रयोदशानां विधारणात् त्रयोदशोदावर्त्ता अभिधीयन्ते तथापीह एवोदरीये मूत्रपुरीषवातशुक्रवमिक्षवथुविघातजा एव परं षडुदावर्त्ता अभिधातव्याः, उद्गारादिनिरोधजानां वातनिरोधज एवोदावर्त्ते अन्तर्भावाभिप्रायात्; यदि वा, मूत्रादिविघातज एव विकारे चरकाचार्य्यस्य उदावर्त्तसंज्ञाभिप्रेता नान्यत्रेति न विरोधः। मुहुर्म्मुहुरङ्गानामाक्षेपणमाक्षेपः, पर्व्वणामाकुञ्चनं

* "कासः" इत्यत्र "श्वासः" इति चक्रपाणिः।

कण्ठास्यशोषो बाधिर्य्यं श्रमः सादो * हृदि व्यथा।
पिपासानिग्रहात् तत्र शीतं तर्पणमिष्यते ॥ १२ ॥
प्रतिश्यायोऽक्षिरोगश्च हृद्रोगश्चारुचिर्भ्रमः।
वाष्पनिग्रहणात् तत्र स्वप्नो मद्यं प्रियाः कथाः ॥ १३ ॥
जृम्भाऽङ्गमर्द्दस्तन्द्रा च शिरोरोगाक्षिगौरवम्।
निद्राविधारणात् तत्र स्वप्नः संवाहनानि च ॥ १४ ॥
गुल्महृद्रोगसम्मोहाः श्रमनिश्वासधारणात्।
जायन्ते तत्र विश्रामो वातघ्न्यश्च क्रिया हिताः ॥ १५ ॥

गङ्गाधरः—क्रमप्राप्तं तृष्णाविघातजरोगमाह—कण्ठास्यशोष इत्यादि। सादोऽङ्गावसादः। सुश्रुते तु—"कण्ठास्यशोषः श्रवणावरोधस्तृष्णाविघाताद् हृदये व्यथा च ॥" इति।

तस्य चिकित्सितमाह—तत्र शीतमित्यादि। तर्पणं तर्पयतीति। सुश्रुतेऽपि—"तृष्णाघाते पिबेन्मन्थं यवागूं वापि शीतलाम् ॥" इति ॥ १२ ॥

गङ्गाधरः—क्रमप्राप्तं वाष्पनिग्रहजरोगमाह—प्रतिश्याय इत्यादि। सुश्रुते तु—"आनन्दजं वाष्पमथ शोकजं वा नेत्रोदकं प्राप्तममुञ्चतो हि। शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन ॥" इति।

अस्य चिकित्सितमाह—तत्र स्वप्न इत्यादि। सुश्रुतेऽप्येवम् ॥ १३ ॥

गङ्गाधरः—क्रमप्राप्तं निद्रावेगनिग्रहजरोगमाह—जृम्भेत्यादि। सुश्रुते तु "जृम्भाङ्गमर्दोऽङ्गशिरोऽक्षिजाड्यं निद्राविघातादथ वापि तन्द्रा ॥" इति।

अस्य चिकित्सितमाह—तत्र स्वप्न इत्यादि। संवाहनं पादादिप्रदेशे सुखयितुं मुहुः पाणिना वाहनं मर्द्दनमभिहननञ्च। सुश्रुते तु "निद्राघाते पिबेत् क्षीरं स्वप्याच्चेष्टकथारतः ॥" इति ॥ १४ ॥

गङ्गाधरः—क्रमप्राप्तं श्रमजनितश्वासविधारणजरोगमाह—गुल्मेत्यादि। स्पष्टम्। सुश्रुते तु—"श्रान्तस्य निश्वासविनिग्रहेण हृद्रोगमोहावथ वापि गुल्मः ॥" इति।

चक्रः—सङ्कोचः, सुप्तिः स्पर्शाज्ञानं, भ्रमणं भ्रमो येन चक्रस्थितमिवात्मानं मन्यते। सादोऽङ्गावसादः, तर्पयतीति तर्पणं, संवाहनं पाणिना पादादिप्रदेशे सुखमभिहननमुन्मर्दनञ्च ॥ ५—१५ ॥

* श्वास इति क्वचित् पठ्यते।

वेगनिग्रहजा रोगा य एते परिकीर्त्तिताः ।
इच्छंस्तेषामनुत्पत्तिं वेगानेतान् न धारयेत् ॥ १६ ॥

चिकित्सितमस्याह—तत्र विश्राम इत्यादि । वातघ्नश्च क्रियाः स्नेहादिकाः । सुश्रुते तु—"भोज्यो रसेन विश्रान्तः श्रमश्वासातुरो नरः ॥" इति ॥ १५ ॥

गङ्गाधरः—ननु सुश्रुते सेते त्रयोदश वेगविघातजास्तथा चापथ्यभोजनादेक इति चतुर्द्दशोदावर्त्ता उक्ताः । तद् यथा "त्रयोदशविधश्चासौ भिन्न एतैस्तु कारणैः । अपथ्यभोजनाच्चापि वक्ष्यते च यथाऽपरः ॥" इति । लक्षणमप्युक्तम्—"वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः । भोजनैः कुपितः सद्य उदावर्त्तं करोति हि ॥ वातमूत्रपुरीषासृक्-कफमेदोवहानि वै । स्रोतांस्युदावर्त्तयति पुरीषञ्चातिवर्त्तयेत् ॥ ततो हृद्वस्तिशूलार्त्तो गौरवारुचिपीड़ितः । वातमूत्रपुरीषाणि कृच्छ्रेण लभते नरः ॥ श्वासकासप्रतिश्याय-दाहमोहवमिज्वरान् । तृष्णाहिक्काशिरोरोग-मनःश्रवणविभ्रमान् । लभते च बहूनन्यान् विकारान् वातकोपजान् ॥" इति । चिकित्सितमप्युक्तम्—"तं तैललवणाभ्यक्तं स्निग्धं स्विन्नं निरूहयेत् । दीपनो भिन्नवर्च्चस्कं भुक्तञ्चाप्यनुवासयेत् । न चेच्छान्तिं प्रयात्येवमुदावर्त्तः सुदारुणः । अथैनं बहुशः स्विन्नं युतया स्नेहविरेचनैः । पाययेत् त्रिवृता-पीलु-यमानीरम्लपानकैः । देवदार्व्वग्निकं कुष्ठं वचां पथ्यां पलङ्कषाम् । पौष्कराणि च मूलानि तोयस्याढ़्काढ़केः पचेत् । पादावशिष्टं तत् पीतमुदावर्त्तं व्यपोहति । मूलकं शुष्कमार्द्रञ्च वर्षाभूः पञ्चमूलकम् । आरेवतफलञ्चाप्सु पक्त्वा तेन घृतं पचेत् । तत् पीयमानं शमयेदुदावर्त्तमशेषतः ॥ वचामतिविषां कुष्ठं यवक्षारं हरीतकीम् । कृष्णां निदहनीञ्चापि पिबेदुष्णेन वारिणा । इक्ष्वाकुमूलं मदनं विशल्यातिविषे वचाम् । कुष्ठं किण्वाग्निकौ चापि पिबेत् तुल्यानि पूर्व्ववत् । मूत्रेण देवदार्व्वग्नि त्रिफलाबृहतीः पिबेत् । यवप्रस्थं फलैः सार्द्धं कण्टकार्य्या जलाढ़के । पक्त्वाद्धप्रस्थशेषन्तु पिबेद्धि द्रसमन्वितम् ॥ मदनालाबुबीजानि पिप्पलीं सनिदिग्धिकाम् । संचूर्ण्य मधमेणाड्या विशल्येतद् यथा गुदम् ॥ चूर्णं निकुम्भकम्पिल्ल-श्यामेक्ष्वाकमिकोद्भवम् । कृतवेधनमागधयोर्लवणानाञ्च साधयेत् । गवां मूत्रेण ता वर्त्तीः कारयेत् तु गुदानुगाः । सद्यः शर्म्मकरावेतौ योगावमृतसम्भवौ ॥" इति । विरुध्यते चरकाचार्य्येणाष्टोदरीये वक्ष्यमाणैः षड्भिर्मूत्रपुरीषवातरेतोवमिक्षवजैः । अपरं च

इमांस्तु धारयेद् वेगान् हितैषी प्रेत्य चेह च।
साहसानामशस्तानां मनोवाक्कायकर्म्मणाम् ॥
लोभशोकभयक्रोध-द्वेषमानजुगुप्सित—
नैर्लज्ज्येर्ष्यातिरागाणामभिध्यायाश्च बुद्धिमान् ॥

सम्प्रोद्गारादिजा इहोक्ताः किं नोदावर्त्ता भवन्तीति ? उच्यते—उद्गारादिसम्भजाश्चरकाचार्य्येण नोदावर्त्तत्वेनाभिप्रेताः। किन्तु घृतादिव्यापत्तिवद्वेगधारणव्यापद एवेति बोध्यम्। तथाऽपथ्यभोजनजस्त्वनुक्त एव दोषलिङ्गैरुन्नेय इति परमतमप्रतिषिद्धं ह्यनुमतं भवति न हि सर्व्वः सर्व्वं वक्तीति॥ निगमनमाह इच्छन्नित्यादि॥ १६॥

गङ्गाधरः—ननु मूत्रादीनामिव साहसलोभादीनामप्यविधार्य्यत्वेनोक्तत्वेन संशयः किं धार्य्या न वा साहसलोभादिवेगाः ? इत्यत आह इमांस्त्वित्यादि। को धारयेत् ? हितेत्यादि। प्रेत्य मृत्वा परलोके इह च जन्मनि हितैषी। कान् वेगानित्यत आह—साहसानामिति। साहसानि कर्म्मण्युत्साहाः। तानि सत्त्वसात्म्यशक्तिमविविच्य यानि क्रियन्ते तान्यशस्तानि तेषां वेगान् प्रवृत्त्युन्मुखभावान् धारयेत्। सत्त्वसात्म्यशक्तिमालोच्य कर्म्मण्युत्साहं कुर्य्यादित्यर्थः। केषामित्यत आह—मनोवाक्कायकर्म्मणामिति। अशस्तानि मनसः कर्म्माणि दर्शयति—लोभेत्यादि। लोभोऽनुचितविषये मनःप्रवृत्तिः, शोको धनबान्धवाद्यभावजन्यदुःखे मनःप्रवृत्तिः, भयमपकारकार्थानुसन्धाने मनःप्रवृत्तिः, क्रोधो येनात्मानं प्रदीप्तमिव मन्यते तत्, द्वेषो वैरं परापकारे मनःप्रवृत्तिः मनःप्रवृत्त्यनुकूलभावप्रयुक्तमनोनिवृत्तिर्वा, मानः सदसद्गुणाध्यारोपेणात्मन्युत्कर्षप्रत्ययः, जुगुप्सितं परनिन्दा, लज्जा मनःसङ्कोचस्तदभावो नैर्लज्ज्यम्। ईर्ष्या

चक्रपाणिः—वेगानामविधार्य्यत्वेनोक्तत्वाल्लोभादीनामपि वेगा अविधार्य्याः स्युरित्याह—इमांस्त्वित्यादि। प्रेत्य जन्मान्तरे, इहेतीह जन्मनि। सहसा आत्मशक्तिमनालोच्य क्रियत इति साहसं, तच्च गजाभिमुखधावनादि। अप्रशस्तानां निष्फलानामिति यावत्। मनोवाक्कायकर्म्मणामित्यत्र कर्म्मशब्दो व्यापारवचनः। अशस्तं मनसः कर्म्म दर्शयति—लोभेत्यादि। लोभो विषयेऽनुचितप्रार्थना, शोकः पुत्रादिविनाशजं दैन्यं, भयमपकारकानुसन्धानजं दैन्यम्, क्रोधः प्रद्वेषो येन प्रज्वलितमिवात्मानं मन्यते, मानः सदसद्गुणाध्यारोपेणात्मन्युत्कर्षप्रत्ययः, जुगुप्सितं गोपनेच्छा, लज्जा, तदभावो नैर्लज्ज्यं; समाने द्रव्ये परसम्बन्धप्रतिषेधेच्छा ईर्ष्या, अतिरागः उचित एव विषये पुनःपुनः प्रवर्त्तनेच्छा। अभिध्यामतिमात्रेणारम्भणं, यदि वा परद्रव्यविषये स्पृहा।

परुषस्यातिमात्रस्य सूचकस्यानृतस्य च।
वाक्यस्याकालयुक्तस्य धारयेद् वेगमुत्थितम्॥
देहप्रवृत्तिर्या काचिद् वर्त्तते परपीड़या।
स्त्रीभोगस्तेयहिंसाद्या तस्या वेगान् विधारयेत्॥ १७॥
पुण्यशब्दो विपापत्वान्मनोवाक्कायकर्म्मणाम्।
धर्म्मार्थकामान् पुरुषः सुखी भुङ्क्ते चिनोति च॥ १८॥

गुणवति भावे दोषारोपणेच्छा, अभिरागं उचित एव विषये पुनःपुनर्मनःप्रवृत्तिः। एतेषां मनःकर्म्मणामप्रशस्तानां वेगान् धारयेत्। अभिध्यायाश्च परस्वविषयकस्पृहायाश्च वेगानित्यन्वयः॥

अप्रशस्तानि वाक्कर्म्माणि दर्शयति—परुषस्येत्यादि। परुषस्य परोद्वेजकस्य कर्कशात्मकस्य वाक्यस्य। अतिमात्रस्य सूचकस्यातिशयेन परेषामनिष्टजनकाभिप्रायकस्य वाक्यस्य। अनृतस्य मिथ्यात्मकस्य च वाक्यस्य। अकालयुक्तस्य अप्रास्ताविककथनायुक्तस्य वाक्यस्य। उत्थितं वेगं धारयेत्। एवंविधं वाक्यमुपस्थितमागतं न वदेत्। कायकर्म्माणि दर्शयति—देहेत्यादि। परपीड़या परपीड़ाहेतवे। स्त्रीभोगस्तेयहिंसा चादिर्येषां ते स्त्रीभोगस्तेयहिंसादयः। आदिना प्रधर्षणादिः। गुर्व्वाद्यभिमुखपादप्रसारणादिः परपीड़या यद्यपि न भवति तथापि प्रज्ञापराधात् तद्वर्ज्जनं बोध्यम्। ते जायन्ते यया चेष्टया तस्याः॥ १७॥

गङ्गाधरः—इत्येवमप्रशस्तानां मनोवाक्कायकर्म्मणां वेगविधारणात् किं फलमुत्पद्यते इत्यत आह—पुण्यशब्द इत्यादि। पुण्यः पावनः शब्दो वाचकत्वेन यस्यासौ पुण्यशब्दः। पुण्य इति लोके प्रख्यायमानः पुरुषः मनोवाक्काय

अप्रशस्तं वचनकर्म्माह—परुषस्येत्यादि। परुषं परोद्वेजकं वचनम्, अतिमात्रं बहु, सूचकं परस्याभिप्रायकम्, अनृतमपार्थकम्, अकालयुक्तमप्रस्तावागतम्।

अप्रशस्तं देहकर्म्माह—देहेत्यादि। परपीड़या परपीड़ानिमित्तमित्यर्थः। स्त्रीभोगः परस्त्रीभोगः, स्तेयं परद्रव्यग्रहणं, हिंसा विधिरहिता प्राणिपीड़ा, आदिग्रहणात् गुर्व्वाद्यभिमुखपादप्रसारणादि गृह्यते॥ १७॥

चक्रपाणिः—एवं कृते भवति तद्दर्शयति—पुण्येत्यादि। पुण्यः पावनः शब्दो यस्यासौ

**शरीरचेष्टा या चेष्टा स्थैर्य्यार्था बलवर्द्धनी।**
**देहव्यायामसंख्याता मात्रया तां समाचरेत्॥**

कर्म्मणां विपापत्वात् पापजनकत्वाभावात् सुखी सन् धर्म्मार्थकामान् भुङ्क्ते उत्पन्नान्। अत्रात्मनेपदमपालने भोजनवदुपभोगार्थं बोध्यम्। चिनोति च लोकाविरोधेन फलोपयोगेन जायते च ; चकारात् कालान्तरेण प्रतिनियत-कारणान्तरे सति मोक्षञ्च चिनोति इत्यर्थः॥ १८॥

गङ्गाधरः—अथ कायकर्म्मविशेषत्वेन व्यायामस्य स्वशरीरहिंसापोषणकरत्व-मस्तीति तद्विधिमाह—शरीरचेष्टेत्यादि। या च शरीरचेष्टा इष्टा मनोऽभीष्टा स्थैर्य्यात्मा स्थिरताधर्म्मरूपा न तु न्यूनातिरिक्तरूपा ततोऽनन्तरमेव बलवर्द्धनी-त्युक्तं सा देहव्यायामसङ्ख्याता देहव्यायामसंज्ञा। देहपदेन मनोवाग्व्यवच्छेदः। मात्रया तां समाचरेत्। यया मात्रया लाघवादयः स्युर्न च श्रमादयः स्युस्तया मात्रयेत्यर्थः। ननु तर्हि कथं स्थैर्य्यात्मा बलवर्द्धनीत्युच्यते ? प्रतिदिनमनेक-रूपेण परिमाणेनानपायेन बलवर्द्धनत्वाभावख्यापनार्थं तथा कृतम्। एकरूपयैव मात्रयाऽनपायया समाचरणे बलवर्द्धनी क्रमेण बलानुरूपेण वर्द्धते मात्रया या सा बलं वर्द्धयतीति बलवर्द्धनीति। "यत् तु चंक्रमणं नाति-देहपीडाकरं भवेत्। तदायुर्बलमेधाग्नि-प्रदमिन्द्रियबोधनम्॥" इति सुश्रुतेनाप्युक्तम्। मात्रा खल्वार्द्ध-शक्तिकी तन्त्रान्तरेणोक्तात्र युक्त्या लभ्यमानानुसर्त्तव्या। "सर्व्वेष्वृतुषु सर्व्वैर्हि मर्त्त्यैरात्महितार्थिभिः। शक्त्यर्द्धेनैव कर्त्तव्यो व्यायामो हन्त्यतोऽन्यथा। कुक्षौ ललाटे ग्रीवायां यदा घर्म्मः प्रजायते। शक्त्यर्द्धं तं विजानीयादायतोच्छ्रास एव

पुण्यशब्दः, भुङ्क्ते चिनोति चेति उत्पन्नानविरोधतः फलोपयोगेन भुङ्क्ते, चिनोति चोत्पादयति चापरानित्यर्थः॥ १८॥

चक्रपाणिः—अविधार्य्यप्रवृत्तीन् मूत्रादीन् विधार्य्यप्रवृत्तीन् साहसादीन् दर्शयित्वा विधार्य्यो-विधार्य्यप्रवृत्तिं व्यायाममाह—शरीरेत्यादि। देहस्य व्यायामो देहव्यायामः, देहग्रहणात् मनोव्यायामं चिन्तनादि निराकरोति, संख्याता संज्ञिता, या चेष्टाऽभिप्रेतात्र, तेन, भारहरणाद्या-ऽनिष्टापि कार्य्यवशात् क्रियमाणा चेष्टा निरस्यते, चंक्रमणरूपा तु क्रिया प्राप्यते, स्थैर्य्यं स्थिरता शरीरस्य तदर्था, मात्रयाऽनपायिपरिमाणेन ; एतावती चेयं शरीरचेष्टा मात्रावति, यावत्या लाघवादयो वक्ष्यमाणा भवन्ति ; चेष्टातियोगा वक्ष्यमाणाश्च श्रमक्लमादयो न भवन्ति। सुश्रुतेऽप्युक्तं—"यत् तु चंक्रमणं नाति देहपीडाकरं भवेत्। तदायुर्बलमेधाग्नि-प्रद-

लाघवं कर्म्मसामर्थ्यं स्थैर्य्यं क्लेश-*-सहिष्णुता।
दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥ १९ ॥
श्रमः क्लमः क्षयस्तृष्णा रक्तपित्तं प्रतामकः।
अतिव्यायामतः कासो ज्वरश्छर्द्दिश्च जायते ॥ २० ॥
व्यायामहास्यभाष्याध्व-ग्राम्यधर्म्मप्रजागरान्।
नोचितानपि सेवेत बुद्धिमानतिमात्रया ॥

च। व्यायामो हि सदा पथ्यो बलिनां स्निग्धभोजिनाम्। स च शीते वसन्ते च तेषां पथ्यतमः स्मृतः ॥" इति।

यथोक्तव्यायामफलमाह—लाघवमित्यादि। लाघवं शरीरस्य, कर्म्मसु सामर्थ्यं शक्तिमत्त्वम्, स्थैर्य्यं शरीरस्य यौवनानुरूपावस्थानं, सहिष्णुता क्लेशे समुपस्थिते तत्सहनशक्तिः, दोषक्षयो वातादीनां वृद्धिहानिक्षयः। ननु व्यायामात् श्लेष्मक्षयो वातपित्तयोस्तु वृद्धिः कथं दोषक्षय उपजायते? इत्यत आह—अग्निवृद्धिरिति। च यस्मात्। "व्यायामं कुर्व्वतो नित्य विरुद्धमपि भोजनम्। विदग्धमविदग्धं वा निर्दोषं परिपच्यते।" इति। एवं वह्निबलमुपजायते। "चयप्रकोपौ दोषाणां सर्व्वेषामग्निसंश्रितौ।" इति ॥ १९ ॥

गङ्गाधरः अतिमात्रया कृतव्यायामदोषमाह—श्रम इत्यादि। श्रमः शरीरग्लानिः, क्लमो मनइन्द्रियग्लानिः, क्षयो धातुक्षयः, रक्तपित्तं व्याधिविशेषः, प्रतामकः प्रतमकश्वासः, अतिव्यायामतः कायवाङ्मानसव्यायामातियोगात्। शेषं स्पष्टम्। यस्मात् श्रमादिरतिव्यायामतो जायते तस्मात् व्यायामहास्यादिकानुचितान् अपिकारादनुचितानपि, अभ्यस्ताननभ्यस्तांश्च अतिमात्रया न सेवेतेति। व्यायाम उक्तदेहव्यायामो, हास्यं न वाक्चेष्टा मुखचेष्टाविशेषत्वादिति। भाष्यं वाक्चेष्टाविशेषः, अध्वाऽध्वगमनम्, ग्राम्य-

मिन्द्रियबोधनम्"। यथोक्तव्यायामगुणानाह—लाघवमित्यादि। दोषक्षयोऽत्र श्लेष्मक्षयोऽभिमतः, यदि वाग्निकर्तृत्वेन त्रिदोषक्षयोऽपि; उक्तं हि—"चयप्रकोपौ दोषाणां सर्व्वेषामग्निसंश्रितौ"। व्यायामातिमवृत्तिदोषमाह—श्रम इत्यादि। क्लम इह मनइन्द्रियग्लानिः, क्षयो धातुक्षयः, प्रतमक एव प्रतामकः श्वासविशेषः ॥ १९।२० ॥

चक्रपाणिः—इदानीं व्यायामतुल्यत्वेनान्यानप्यतिमात्रत्वेन निषेद्धुमाह—व्यायामेत्यादि।

---

* वृ.ण इत्यपि पाठः।

एतानेवंविधांश्चान्यान् योऽतिमात्रं निषेवते ।
गजः सिंह*मिवाकर्षन् सहसा स विनश्यति ॥ २१ ॥
उचितादहिताद्धीमान् क्रमशो विरमेन्नरः ।
हितं क्रमेण सेवेत क्रमश्चात्रोपदिश्यते ॥

धर्म्मो मैथुनम् इत्येते देहव्यायामाः। प्रजागरो मनोव्यायामः, मनोमेध्या-संयोगो हि निद्रा, तत्प्रतिकूलव्यापारो जागर इति।

व्यायामानन्तरमेषाञ्च दोषान्तरमुपदेष्टुमाह—एतानित्यादि। एवंविधान् साहसान् कायवाङ्मानसव्यायामानन्यान् भारहरणदर्पशिलोत्क्षेपणगानवाक्-कलहशास्त्राशास्त्रचिन्तादीन् योऽतिमात्रं निषेवते स गज इवातिमात्रं सिंह-माकर्षन् सहसा विनश्यति॥ २०।२१ ॥

गङ्गाधरः—परिशिष्टानामहितानां वर्ज्जनं हितानाञ्च सेवनविधिमुप-दिशति; तत्र उचितमहितं परिहर्त्तुं दुःशक्यते इति किं तत्र परिहार्य्यं स्यादित्यतस्तत्परिहारमुपदिशति—उचितादित्यादि। उचितात् विधिनिषेधौ अजानता स्वेनाभ्यस्तादहितात् क्रमशो बुद्धिमान् नरो विरमेत् निवर्त्तेत न तु हठात्। क्रमेण हितमनभ्यस्तं सेवेताभ्यस्येत्।

यद्यप्यतिव्यायामो निषिद्धस्तथापीह पुनरभिधीयते अतिभाष्यादिष्वपि तद्दोषप्रसक्तिप्रा-प्त्यर्थम्। यदि वा पूर्व्वमनभ्यस्तव्यायामातिसेवा निषिद्धा, इह तु अभ्यस्तस्यापि निषेधः, यदाह नोचितानपि, उचितानप्यभ्यस्तानपीत्यर्थः, अपिशब्दादनभ्यस्तानां निषेधो लभ्यते; भाषणं भाष्यम्, अध्वशब्देनाध्वगमनं, ग्राम्यधर्म्मो मैथुनम्, एवंशब्देन गुरुभारहरणदर्पशिलाबाहनादि गृह्यते। सिंहः किल स्वल्पप्रमाणः स्वबलोद्रेकात् गजं कर्षन् पाटयन् स्वदेहानुचित-व्यायामात् पश्चात् वातक्षोभेण विपद्यते तेनायं दृष्टान्तः सङ्गतार्थः, यदि वा सिंहोऽष्टा-पदोऽभिप्रेतः, स च किल गजं व्यापाद्य पृष्ठे क्षिपति, ततस्तत् कोथाद्विपद्यते, तेन दृष्टान्तो व्याख्येयः ॥ २१ ॥

चक्रपाणिः—हितस्य सेवनमहितस्य परित्यागः कर्त्तव्य इति पूर्व्वमुक्तं तच्च हितसेवनमहित-परिवर्ज्जनञ्च क्रियमाणमक्रममक्रमात्यतिव्यायामादिवत् प्रत्यवायकरं परं भवति; अतस्तत्-क्रममाह—उचितादित्यादि। उचितादभ्यस्तात्, क्रमशो वक्ष्यमाणेन क्रमेण, हितमनभ्यस्त-

* गजं सिंह इवाकर्षन् इति चक्रपाणिधृतः पाठः।

प्रक्षेपापचये ताभ्यां क्रमः पादांशिको भवेत् ।
एकान्तरं ततश्चोर्द्ध्वं द्व्यन्तरं त्र्यन्तरं तथा ॥

ननु कोऽसौ क्रम इत्याह—क्रमश्चात्रेत्यादि। प्रक्षेपापचये ताभ्याम् अभ्यवहार्य्ये खल्वहितेऽभ्यस्ते द्रव्ये क्वचिद् व्यञ्जनादौ हितस्य प्रक्षेपोऽहितस्य अभ्यस्तस्यापचयः कर्त्तव्यस्तस्मिन् ताभ्यामनभ्यस्ताभ्यस्ताभ्यां हिताहिताभ्याम् अनभ्यस्ताद्धितादभ्यस्तादहिताच्च पादांशिकः क्रमो भवेत्। पादश्चतुर्थोऽंश एवांशस्तेन कृतः क्रमः पादांशिकः, किंवा पादस्य चतुर्थांशस्यांशश्चतुर्थो भागः षोड़शांश इति यावत्। तेन कृतः क्रम इत्यर्थः। प्रथमपादाभ्यासे एकान्तरम् एकाहमन्तरीकृत्य भवेत्। ततश्चोर्द्ध्वं प्रथमं हितस्योपादानतया प्रक्षेपोऽहितस्य त्यागोऽपचयस्तयोरभ्यासादूर्द्ध्वं द्वितीये हितपादद्वयप्रक्षेपाहितपादद्वयप्रक्षेपाहितपादद्वयापचये द्व्यन्तरं द्व्यहमन्तरीकृत्य भवेत्। ततश्चोर्द्ध्वं हितद्विपादप्रक्षेपाहितद्विपादापचयाभ्यासादूर्द्ध्वं तृतीये हितपादत्रयप्रक्षेपाहितपाद-

हितम्। कोऽसौ क्रम इत्याह—क्रमश्चेत्यादि। प्रक्षेपो हितस्यापचयोऽहितस्य, ताभ्यां हिताहिताभ्याम्, पादश्चतुर्थो भागः, तद्रूपोऽंशः पादांशस्तेन कृतः क्रमः पादांशिकः। अन्ये तु पादस्यांशः पादांश इति षोड़शं भागं वर्णयन्ति, स च हिताहितयोर्युगपत् प्रक्षेपापचये पादांशिकः क्रमः, प्रथममेकान्तरमेकाहमन्तरा कुर्य्यादित्यर्थः, ततः प्रथमहितपादप्रक्षेपाहितपादापचयाभ्यासादूर्द्ध्वं द्वितीयपादप्रक्षेपापचये द्व्यन्तरं द्व्यहमन्तरीकृत्य क्रमो भवेत्; तथा द्वितीयपादाभ्यासादूर्द्ध्वं तृतीयपादप्रक्षेपापचये त्र्यहमन्तरीकृत्य क्रमो भवेत्; चतुर्थपादप्रक्षेपापचये चतुरहमन्तरीकृत्य बोद्धव्यमत ऊर्द्ध्वं प्रक्षेपापचयाभावात् चतुष्पादसम्पूर्णस्य पथ्यस्यानवधिसेव्यत्वादयं पिण्डार्थः। अपथ्या यवकादयोऽभ्यस्तास्ते त्याज्याः रक्तशाल्यादयः पथ्या अनभ्यस्तास्ते सेव्याः, तत्र प्रथमदिने यवकपादत्रयं रक्तशालीनामेकपादयोगाद् भोजनं, द्वितीये दिवसे द्वौ पथ्यस्य पादौ द्वावपथ्यस्य, एवं तृतीये; एवं द्वितीयपादाभ्यासो द्व्यन्तरो भवति; चतुर्थे त्रयः पादाः पथ्यस्य एकोऽपथ्यस्य, एवं पञ्चमे षष्ठे च; एवं तृतीयपादाभ्यासस्त्र्यन्तरो भवति; सप्तदिनप्रभृति चतुष्पादपथ्याभ्यासः; यदि वाऽन्तरशब्दो व्यवधिवचनः, तथाशब्दात् चतुरन्तरमिति च लभ्यते; तेनायमर्थः—प्रथमे दिवसेऽपथ्यपादत्रयं पथ्यस्यैकः पादः, द्वितीये सर्व्वमपथ्यं, तृतीये द्वौ पथ्यस्य द्वावपथ्यस्य, एवं चतुर्थे, पञ्चमे तु दिने पथ्यस्य भाग एकस्त्रयो-ऽपथ्यस्य, एवं द्व्यन्तरीकृतौ भवतः, षष्ठे पथ्यभागत्रयमपथ्यभाग एकः, एवं सप्तमेऽष्टमे च; ततो नवमे भागद्वयं पथ्यस्य चापथ्यस्य च, एवं त्रीण्यहान्यन्तरीकृतानि भवन्ति; ततो दशमे सर्व्वं पथ्यम्; एवमेकादशे द्वादशे त्रयोदशे च; चतुर्दशे तु पथ्यभागत्रयम् एकोऽपथ्य-भागः; एवं चतुरन्तरता तथाशब्दसूचिता भवति, पञ्चदशाहात् प्रभृति सम्पूर्णपथ्य-

क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः।
सन्तो यान्त्यपुनर्भावमप्रकम्प्या भवन्ति च॥ २२॥

अथापचये क्रमस्तदनन्तरं त्र्यहमन्तरीकृत्य भवेत्। ततश्चोर्द्ध्वं हितपादत्रयप्रक्षेपाहित-पादत्रयापचयाभ्यासादूर्द्ध्वं चतुर्थं हितपादचतुष्टयप्रक्षेपाहितपादचतुष्टयापचये तथा चतुरहमन्तरीकृत्य भवेदित्यर्थः। तथा सति अभ्यस्तानां यवकादीना-महितानां मत्स्यादीनां यावतां पादभागं त्यक्त्वा त्रिपादभागं गृहीत्वा हितानाञ्च अनभ्यस्तानां रक्तशाल्यादीनां तद्रूपेण पादभागं दत्त्वा पक्त्वा भोक्तव्यम्। एवं तद्दिनस्य परदिनमपीति तदभ्यासो भवति। ततस्तृतीयदिनेऽहितानामर्द्धमानं हितानाञ्चार्द्धमानं पक्त्वा भोक्तव्यमेवं तद्दिनस्य परमपि दिनद्वयमिति तदभ्यासो भवति, ततः षष्ठे दिनेऽहितानां पादत्रयं त्यक्त्वाऽर्थादेकपादं गृहीत्वा हितानाञ्च पादत्रयं दत्त्वा पक्त्वा भोक्तव्यमेवं तद्दिनस्य परं दिनत्रयमपीति तदभ्यासो भवति। ततः परं दशमे चतुष्पादं त्यजेदहितानां हितानाञ्च चतुष्पादं गृह्णीयादिति सुतरां लभ्यते। षोडशिकक्रमवादे तु प्रत्यंशापचयप्रक्षेपादिनैकैकवृद्धयान्तरता बोध्या। तत् तु नाचार्य्याभिप्रेतम्। षोडशपादापचयप्रक्षेपे पक्षदिनान्तरत्वेन तदंशाभ्यासस्त्वादयौक्तिकत्वाच्च। यत् सान्तरशब्दस्य व्यवधानार्थत्वेन प्रथमदिने पथ्यपादापथ्यत्रिपादमानेन भोजनं ततः परमेकदिनं न तथा भोक्तव्यं; किन्त्वपथ्यमभ्यस्तं यत् तदेव भोक्तव्यम्, यत् तदेकदिनं व्यवधाय तृतीयदिने पथ्यपादद्वयापथ्यपादद्वयं भोक्तव्यम्। तदुत्तरं दिनद्वयं न तथा भुक्त्वा किन्त्वभ्यस्तमपथ्यमेव भोक्तव्यम्। तद्दिनद्वयं व्यवधाय षष्ठे दिने पथ्यपाद-त्रयापथ्यैकपादमानेन भोज्यं, तदुत्तरं दिनत्रयं न तथा भोक्तव्यम्। किन्त्वपथ्य-मात्रमेवेति। तद्दिनत्रयं व्यवधाय दशमे दिने पथ्यचतुष्पादभोजनमपथ्यपाद-चतुष्टयत्यागः सुतरामिति व्याख्यायते। षोडशांशिकक्रमवादेऽप्येवञ्च बोध्य-मिति, तदसम्यक् अहितस्याभ्यासानुवृत्तेः।

नन्वेवमहितत्यागहिताभ्यासेन किं भवतीत्याह—क्रमेणेत्यादि। दोषा दुष्टिकरा अभ्यस्ताहितास्ते क्रमेणापचिताः क्षयिताः सन्तस्तथा क्रमेण गुणा अनभ्यस्ता हिता गुणाः सन्तश्चापुनर्भावं यान्ति। सहसा सात्म्य-

तैव। एवं कृते किं स्यादित्याह—क्रमेणेत्यादि। क्रमेणेति क्रमेणैव, दोषा इति दोषजनकान्यभ्यस्तान्यपथ्यानि, गुणा इति गुणजनकानि पथ्यानि, अपुनर्भावं यान्ति दोषा इति सम्बन्धः। अक्रमेण तु सहसाऽपथ्यत्यागे दोषा भवन्त्येव; यदुक्तम्—'असात्म्यजा हि

समपित्तानिलकफाः केचिद्गर्भादि मानवाः ।
दृश्यन्ते वातलाः केचित् पित्तलाः श्लेष्मलास्तथा ॥

त्यागजदोषाय न भवन्ति । असात्म्यजा हि न रोगाः स्युः सहसा त्यागादित्युक्तेः, न च भवन्ति तथा गुणाः । अनभ्यस्ता अपि हिताः क्रमेणोपचिता वर्द्धिताः सन्तोऽपुनर्भावं यान्ति असात्म्यसेवनजदोषाय न भवन्ति अप्रकम्प्या अप्रचाल्याश्च भवन्ति चिरस्थिता इत्यर्थः । हितमपि हि सहसोपयुज्यमान-मग्निवधारुच्यादीन् करोति तस्माद्धितस्यापि क्रमेणोपचयेन अभ्यासः कर्त्तव्य इति दर्शितम् ॥ २२ ॥

गङ्गाधरः अथैतत् सर्व्वमभ्यस्यमानत्वे प्रकृतिज्ञानमपेक्षते. न हि सर्व्वं सर्व्वपुरुषस्य हितमहितं वा. कस्यचिद्धि किञ्चिद्धितमहितञ्च कस्यचित् यत्तत् कस्यचिदहितं हितञ्चेति प्रकृतिभेदेन पुरुषभेदमाह—समपित्तेत्यादि । अनिलश्च पित्तञ्च कफश्चेति द्वन्द्वे पित्तस्य पूर्व्वनिपातः ; बहुपद-द्वन्द्वे पूर्व्वनिपातनियमाभावात् । समा अवैकारिकमानावस्थिताः पित्ता-निलकफा येषां ते तथा । ते समपित्तानिलकफा मानवाः केचित् गर्भादि यावद्गर्भं गर्भमारभ्य दृश्यन्ते । केचिद् गर्भादि गर्भाधानात् प्रभृति वातलाः वाताधिकाः, केचित् पित्तलाः पित्ताधिकाः. केचित् श्लेष्मलाः श्लेष्माधिकाः ; तथा दृश्यन्ते केचित् वातपित्तलाः. केचित् वातश्लेष्मलाः, केचित् पित्तश्लेष्मला इति कश्चिद् व्याख्यातवान् । वस्तुतस्त्वत्र समत्वं पित्तानिल-

रोगाः स्युः सहसा त्यागशीलनात् । अप्रकम्प्या अप्रचाल्या भवन्ति गुणा इति सम्बन्धः, पथ्यमपि ह्यनभ्यस्तं सहसोपयुज्यमानमरुच्यग्निवधादीन् जनयति ॥ २२ ॥

चक्रपाणिः इह स्वस्थहितं सामान्येनैव रसज्ञानाद्यादि प्रतिपादितं, स्वस्थश्च प्रकृतिभेदेन नानाप्रकारः, अतस्तेषां हितानामपि नानाप्रकारत्वमुच्यते ; तेन तत्प्रतिपादनार्थं प्रकृतिभेदमेव तावदाह—समपित्तानिलेत्यादि । समा अवैकारिकमानव्यवस्थिताः पित्तानिलकफा यस्य स तथा ; गर्भादि गर्भाधानादि शुक्रशोणितजीवसंमूर्च्छनादिति यावत् । वातला वातप्रधानाः, एवं पित्तलाः श्लेष्मलाश्च ; सर्व्वत्र गर्भादीति योज्यम् । अत्र पित्तग्रहणमादौ छन्दोऽनुरोधात् ; यद्वा पित्तसमानस्य बहुगौरवप्रदर्शनार्थम् , यदि वा प्रकृत्यारम्भे वातस्याप्राधान्यख्यापनार्थं , वातप्रकृतिर्हि सर्व्वत्र प्रत्यवरो भवति । इह च प्रत्येकदोषप्रकृतिग्रहणेनैव द्वन्द्वप्रकृतिरपि ग्राह्याः संयोगस्य संयोगिनामान्तरीयकत्वात्, निदान इव वातादिज्वराभिधानेन द्वन्द्वजज्वराभिधानं, तेन रोगभिषग्जितीयोक्ता द्वन्द्वजा अपि तिस्रः प्रकृतयो गृहीता भवन्ति । अन्ये तु द्वितीय-

तेषामनातुराः पूर्व्वे वातलाद्याः सदातुराः ।
दोषानुशयिता ह्येषां देहप्रकृतिरुच्यते ॥

कफानां किं परस्परमवैकारिकमानवत्त्वं किं शारीरभावाणामवैकारिकमानत्वम् ? उच्यते—आद्ये तु समत्रिदोपजव्याधौ परस्परमवैकारिकमानवत्त्वेन तस्य समवातपित्तश्लेष्मप्रकृतित्वं स्यादन्त्ये तु मानं किं तुला ? तत् किमणुह्रस्वादि ? तुला तु गुरुत्वगुणनिबन्धना सा च वायोर्नास्ति। अण्वादि चेत्, तदा विकारो धातुवैषम्यं धातुवैषम्यस्याभावः साम्यमित्यन्योन्याश्रयः स्यादिति चेत् न। विकारो दुःखं तज्जनकमानं धातुवैषम्यं सुखजनकमानञ्च साम्यमिति। वस्तुतस्तु साम्यं तुल्यत्वं, तच्च न गुणतो वातस्य रूक्षस्य पित्तस्येषत्स्नेहस्य साम्याभावात् कफस्य च शीतादिगुणस्य पित्तेनोष्णेन साम्याभावाच्च, वातेन च साम्यासाम्याच्च ; अत एव न कर्म्मतः किन्तु शारीरसुखमात्रहेतुमानतः। पवनो येन मानेन येन च मानेन पित्तं येनापि मानेन कफः शारीरसुखमेव जनयति न तु मानससुखासुखं न वा शरीरदुःखम्। तन्मानेन पुनर्वातपित्त-श्लेष्माणः परस्परं समास्तच्च मानं तेषां साम्यं, तथाभूताश्च ते नोपघातकरा न च धातूपघातकाः समाग्निकरास्तु भवन्ति।

ननु ते किं समत्रिदोषवातादयः सर्व्वे स्वस्था इत्यत आह—तेषामित्यादि। तेषां समपित्तानिलकफादीनां मध्ये पूर्व्वे प्रथमोक्ताः समपित्तानिलकफा अनातुरा शारीरव्याधिहीनाः स्वस्था न तु व्याधिमात्र-हीना मानसव्याधिमत्त्वात् ; अत एव सुश्रुतेऽप्युक्तं "समदोषः समाग्निश्च समधातुमलक्रियः। प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते।" इति। नन्वत्र कथं समाग्निनाचिह्नं नोक्तमिति सुश्रुतेन विरोधोऽस्तु इति चेत् न। सुश्रुतेन समदोषत्वलिङ्गत्वं समाग्निरुक्तः, एवं समाग्नित्वलिङ्गत्वेन समधात्वादिरुक्तः, समधात्वादिलिङ्गत्वेन प्रसन्नात्मादिरुक्तः इति ; समदोष इत्येवं तत्र स्वस्थ-लक्षणमित्यविरोधः। एतेनात्रोक्तवातलाद्याः सदातुरा इत्युक्तमप्यविरुद्धं भवति समदोषातिरिक्तानामस्वस्थत्वात्। ननु समवातादयः पुरुषाश्च रजोगुणतमो-गुणबाहुल्यात् कामक्रोधादिमन्तो भवन्ति, तर्हि कथमनातुरा व्यपदिश्यन्ते

'केचित्'ग्रहणात् ग्रन्थाधिक्येन तद्ग्रहणं वर्णयन्ति । तेषामिति । समवातपित्तश्लेष्मप्रकृत्यादीनाञ्च मध्ये 'पूर्व्वं' इति समप्रकृतयः। सदातुरा इति स्वस्थस्यवहारभाजोऽपि स्फुटिताङ्गत्व-विषमाग्नित्वादिदुःखा सम्मादित्यर्थः ; स्वस्था अप्येते कस्मात्रोगिण इत्याह—दोषानुशयितेत्यादि।

विपरीतगुणस्तेषां स्वस्थवृत्तेर्विधिर्हितः ।
समसर्व्वरसं सात्म्यं समधातोः प्रशस्यते ॥ २३ ॥

पुर्वैरिति चेत् ? सत्यं, सत्त्वरजस्तमोगुणानां मनःप्रकृतित्वेन मानसदोषज-व्याधीनां विना मोक्षं विनाशाभावेनात्र समपित्तानिलकफा अनातुराः शारीरस्वास्थ्यमापन्ना न तु व्याधिमात्रहीनाः । व्याधिसामान्याभावेन अनातुरत्वस्यानभिप्रायात् शारीरव्याध्यभावेन तु स्वास्थ्याभिप्रायात् । न हि समवातादित्वेन समसत्त्वादिप्रकृतिकत्वमपि पुरुषाणामनुमेयं स्यात् । समवातादिकपुरुषस्यापि कामक्रोधादिदर्शनादिति । वातलाद्या इति मतुवर्थे लच । गर्भादिवातला गर्भादिपित्तला गर्भधारणात् प्रभृति श्लेष्मलाः सदातुरा अविच्छेदेनातुराः । गर्भाधाने शुक्रशोणितजीवसंयोगकाले यादृशरूपेण वातादयोऽनुबध्नन्ति तादृशस्वरूपेणैव तेषां समत्वे समवातादिप्रकृतिर्वातादेरेकैकादि-बहुलत्वे तु वातलादित्वमिति । नन्वेते वातलादयस्तु चेन्न स्वस्थास्तर्हि किमेषां वातादितः प्रकृतिर्नास्तीत्यत आह—दोषानुशयितेत्यादि । हि यस्मा देषां वातलादीनां दोषानुशयितादिवैषम्यलक्षणदुष्टिर्जनिष्यमाणशरीरदूषिका च दुष्टिस्तदाश्रयत्वेनानुशयिता गर्भाधानावधि यावन्मरणमनुवर्त्तनशीलता देहप्रकृतिरारोग्यं न तु साम्यलक्षणप्रकृतिरा गर्भाधानात् । तस्मात् ते सदा आ जन्मतो यावज्जातोत्तरजीवनकालमातुरा अविच्छेदेनैव कदापि प्रकृतेः क्षयादिर्न भवति । "प्रकोपो वान्यथाभावः क्षयो वा नोपजायते । प्रकृतीनां स्वभावेन जायते तु गतायुषि ।" इति सुश्रुते फलदर्शनात् । ननु तत् किं सा दोषानुशयिता ज्वरादिव्याध्यारम्भकाले विकृतिवत् विकृतिरेव न वा ? इत्यत आह—देहप्रकृतिरुच्यते । तेषां वातलादीनां वातादिदोषानुशयितैव देहप्रकृतिः । अस्वस्थतारूपा स्वस्थता उच्यते, गर्भादिवाताद्यधिकत्वात् । देहपदं मनोव्यव-च्छेदार्थम् । प्रकरणात् वातादीनां दोषस्य दुष्टेरनुशयो गर्भात् प्रभृति अनुवृत्ति-र्विद्यते यस्य स दोषानुशयी, तस्य भावो दोषानुशयितेत्यर्थः । एतेनैषां

दोषानुशायितोल्वणवातादिभाविताऽव्यभिचारिणीति यावत् ; देहप्रकृतिर्देहस्वास्थ्यमिति यावत् ; एतेनैतेषां वातलादीनां मुख्यं स्वास्थ्यं नास्ति, किं तर्हि ? उपचारस्वस्था एत इति दर्शयति । ननु गर्भोत्पत्त्यनेन शुक्रशोणितजीवानां संसर्गे यथाभूता वातादयः समा विकृता वा तथाभूतैव प्रकृतिर्यावज्जीवमनुवर्त्तते रिष्टं विना, यदुच्यते सुश्रुते—"प्रकोपो वान्यभावो वा क्षयो वा नोपजायते । प्रकृतीनां स्वभावेन जायते तु गतायुषि" ॥

मुख्यस्वस्थता नास्ति गर्भात् प्रभृति वातादिदोषानुशयित्वादेवौपचारिकी स्वस्थतास्तेष्वेवेति ख्यापितम्। स्वास्थ्यवृत्त्यनुष्ठानार्थमिति। ननु समपित्तानिलकफस्य यदा स्वकारणात् वातादेरन्यतमस्य वृद्धिर्वा हानिर्वा भवति तदैव वातिकादिव्याधिर्भवति। वृद्धिलक्षणो हीनलक्षणश्चेत्येवं वातलादीनामपि. ननु कथं प्रकृतेः प्रकोपक्षयान्यथाभावा न स्युरिति चेन्न। वातादिजव्याध्युत्पत्तौ हि पुंसां समाग्नित्वादिजागरूकत्वादिस्वभावजनको यः स्वभावो वातादीनां स च न क्षयवृद्ध्यन्यथाभावानामन्यतममापद्यते। तस्मात् समाग्नित्वादिजागरूकत्वादिस्वभावोऽपि पुंसां क्षयवृद्ध्यन्यथाभावान्नापद्यते। किन्तु वातादीनां तत्तज्ज्वरादिव्याधिजनकस्वभावो यः स एव मिथ्याहारादिभिः क्षयवृद्ध्यन्यथाभावान्न आपद्यते इत्येके। कश्चित् तु न हि प्रकृतिभूतवातादेः वृद्ध्यादयो भवन्ति, किन्तु कारणान्तरजनितकोपस्य वातादेस्तत्तद्विकारकर्त्तृत्वम्। प्रकृतिभूतदोषस्तु तत्रोपदर्शकः स्यात्। उक्तं हि "कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि सन्ततम्। निष्प्रत्यनीकं कुरुते तस्माज्ज्ञेयः सुदुःसहः॥" इति। वातादिप्रकृतीनां पित्तादिरोगोत्पत्तौ पित्तादिलिङ्गैः स्फुटितकरचरणादिकं प्रकृतिभूतवातादीनां लिङ्गं न बाध्यते किन्त्वनुवर्त्तत एवेति। न हि क्षीणावस्थो वातादिः प्रकृतिक्रियाहीनलक्षणः शुक्रशोणितजीवसम्बन्धकाले बीजभूतस्य प्रकृतिभूतवातादेः क्षयमापादयति; तस्मात् प्रकृतिभूतवातादेः क्षयादयो न भवन्त्येव। सुतरां वातप्रकृतिन पित्तप्रकृतिभवन्त्येवं शेषं बोध्यमिति वदति।

तत्र यदा समप्रकृतेर्वातप्रकृतेर्वा आक्षेपकादिर्वातविकारो भवति, तदा वातस्य प्रकृतिभूतस्याधिक्यं भवत्येव, यदा च वातप्रकृतेः पित्तविकारो भवति, तदा वातप्रकृतेरन्यथाभावः पित्तप्रकृतित्वं भवति, यदा तु समप्रकृतेरन्यतरदोषक्षयो भवति प्राकृतस्वकर्म्महानिलक्षणस्तदासौ प्रकृतिक्षयो भवति, यदुक्तं दोषक्षयलक्षणे "कर्म्मणः प्रकृतेर्हानिर्वृद्धिर्वापि विरोधिनाम्" इति। अत्रोच्यते—प्रकृतिसमानरोगोत्पत्तौ न प्रकृतिभूतस्य वृद्धिः, किं तर्हि? हेत्वन्तरजनितस्य वातादेस्तत्र विकारित्वं, प्रकृतिभूतस्तु दोषस्तत्रोपदर्शको भवति, यदुक्तं—"कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि सन्ततम्। निष्प्रत्यनीकः कुरुते तस्माज्ज्ञेयः सुदुःसहः"। वातप्रकृतेस्तु पित्तविकारोत्पत्तौ वातः प्रकृतिभूतस्तथैव करचरणस्फुटनादिकं कुर्व्वन्नास्ते, न तस्यागन्तुना पित्तविकारेण किञ्चित् क्रियते, वातादीनान्तु स्वमानात् क्षयः प्राकृतकर्म्महानिलक्षणो न शुक्रशोणितसंसर्गकालजस्य प्रकृतिभूतस्य दोषस्य बीजभूतस्य क्षयमावहतीति न प्रकृतिभूतदोषक्षयः, यद्वा, प्रकृतेः प्रकोपान्यथाभावक्षया न भवन्तीति प्रकृतिरेवेति न्यायः, तेन समप्रकृतिर्वातप्रकृतिर्न भवति, वातप्रकृतिः पित्तप्रकृतिर्न भवति समप्रकृतिर्वा; विकारावस्था तु

अत्र विमतिपदग्रामहे। प्रकृतिभूतवातपित्तश्लेष्मातिरिक्ताः किं व्याध्यारम्भका वातादयः सन्ति, न च प्राणादिपञ्चात्मकत्वेन सन्तीति वक्तुञ्च शक्यते। ते हि पञ्च पञ्च वातादयः प्रकृतयस्तेषामंशःप्रभृतिषु पञ्चात्मकपञ्चात्मकवातादीनां वृद्ध्यादीनां दर्शनात्। गर्भारम्भकशुक्रादिस्था वातादयो वै प्रकृतयस्तदारब्धाः प्राणादयः पञ्च व्याधिकरा इति चेन्न। तदा पित्तकफसंज्ञदोषाभावात्। किञ्च धातुवैषम्यं विकारः साम्यं प्रकृतिरिति यद्वक्ष्यति, तत्र धातुः किं प्रकृतिभूतशुक्रादिस्थवातादिः? किं तद्वातादिभूतजनितवातादिः? तत्र शुक्रादिस्थवातादिभिर्भूतैरारब्धाः प्राणादयो धातुसंज्ञा धारणाच्छरीरस्येति चेत्तदा शुक्रादिस्था वातादयो न प्रकृतयः स्युः। प्राणादिभ्योऽतिरिक्ता न वातादयः सन्ति। ते च चेत् प्रकृतयस्तदा तेषां वैषम्यं विकारः साम्यमारोग्यमिति।

अथ शुक्रादिस्था वायुतेजोजलधातव एव प्रकृतयो वातपित्तकफा इति चेदुच्यते? तर्हि, तेषां वृद्ध्यापत्तिः। शुक्रशोणितसंयोगे गर्भाशयगतमवक्रान्ते खल्वात्मनि गर्भवत्या आहारजरसैः क्रमेण गर्भवृद्धेः। तत्र चेदुच्यते—पितृजानि पञ्च महाभूतानि शुक्रस्थानि मातृजान्यार्त्तवस्थानि आत्मजानि तथा मातुराहारजरसजानि गर्भारम्भकाणि तत्र वाततेजोजलानि प्रकृतिभूतानि भवन्त्येव वातपित्तकफाख्यानि आ गर्भसम्पूर्णभावात्। तत्र मातुराहारजरसस्थानि पुनर्वाय्वग्निजलानि शारीराणि वातपित्तकफत्वेन क्षीणानि वा वृद्धानि वा भूत्वा व्याधिकराणि भवन्तीति। तत्र ब्रूमः— आत्मजशुक्रशोणितवातादिवत् रसजवातादिरपि तात्कालिकप्रकृतिरेवान्यथा पोषणाभावेन गर्भतादवस्थ्यप्रसङ्गः स्यात्। तत्र रसवातानलजलपरिणामजरसादिधातुवद्वातपित्तकफा अपि मातुराहारजरसगतवातानलजलान्यनुप्रविश्यात्मजशुक्रजशोणितगतान्यनिलानलजलानि परिणम्यमानानि क्रमेण भवन्ति। यावद् गर्भे सर्व्वाङ्गसम्पूर्णभावं तावत् प्रकृतिसंज्ञास्ते वातपित्तकफा गर्भारम्भकत्वात् तेषां प्रकोपादयो न स्युः। प्रसूते गर्भे सति बालः स्वयं यदभ्यवहरति तत्परिणामजास्तु वातादयः स्वाहाररसगवाय्वनलजलविकारा न प्रकृतयो गर्भानारम्भकत्वादपि तु दोषसंज्ञास्ते व्याधिकरा भवन्ति, हेत्वन्तरतो वृद्धाः क्षीणा वेति, अन्यथा समतेजोऽनिलजला इति न कृत्वा समपित्तानिलकफा इति वचनं कथं कृतमिति समपञ्चभूतप्रकृतिरेव वा भवति। भवति च

हीनाधिकवातत्वाद्विलक्षणा भवतीत्यर्थः। न च वाच्यं—प्रकृतिभूतानां वातादीनां दूषणात्मकानां कथं न शारीरबाधकत्वं, सहजातत्वेन तथाविधविनाशकविकारकर्त्तृत्वात्; यदुक्तं सुश्रुते—

वातलादिवच्चापार्थिवप्रकृतिद्वयमधिकमिति। उक्तं हि सुश्रुते—"प्रकृतिमिह नराणां भौतिकीं केचिदाहुः, पवनदहनतोयैः कीर्त्तितास्ताश्च तिस्रः। स्थिर-विपुलशरीरः पार्थिवश्च क्षमावान्, शुचिरथ चिरजीवी नाभसः खैर्महद्भिः॥" इति। तत्कथं समत्रिदोषप्रकृतिर्वातलादयश्च भवन्तीति। तस्मादत्र ब्रुवन्ति। सुश्रुतेन ह्युक्तम्—"सप्त प्रकृतयो भवन्ति दोषैः पृथक् द्विशः समस्तैश्च। शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः। प्रकृतिर्जायते तेन तस्यात्मलक्षणं शृणु॥" इति। पुरुषाणां जागरूकादिस्वभावरूपसप्तप्रकृतिवादिनोक्ता प्रकृतिः पुरुषाणां शीलादिस्वभावः शुक्रशोणितसंयोगकाले जायमानेन उत्कट-दोषेणोत्पद्यते न तु गर्भारम्भकभूतैरिति। तत्र वातोत्कटप्रकृतिकादिलक्षण-द्वयमेलनेन वातपित्तादिद्विदोषप्रकृतिको लक्षणत्रयेण त्रिदोषप्रकृतिकश्चोक्त। स च त्रिदोषसमत्वेन स्वस्थः। उत्कटत्वे तु तत्र वातादीनां सोऽप्यस्वस्थः। तस्यापि दोषानुशयिता देहे प्रकृतयः सप्तैवापरेऽस्वस्थाश्चौपचारिकतया स्वस्था उपदिश्यन्ते। सुश्रुते वस्तुतः समदोषः समाग्निश्चेत्यनेनोक्तस्तत्रैव स्वस्थः। स च समपित्तानिलकफत्वेन गर्भात् प्रभृति दृश्यते तदा स्वस्थ इत्युच्यते न त्वन्यथा। तेन ज्वरादौ समत्रिदोषजे यत् समपित्तानिलकफत्वं दृश्यते तद्व्यवच्छिद्यते गर्भादीत्यनेन। इत्थञ्च गर्भादिसमपित्तानिलकफा अनातुरा-स्तेषामदुष्टवाताद्यनुशयिता हि प्रकृतिरारोग्यमुच्यते। अनुशयिता त्वनुवर्त्तिता वातादीनां गर्भाधानावधि यावन्मरणं सोऽनुशयस्तद्वत्ता मानवानां देहे प्रकृतिरारोग्यम्। सा च गर्भाधानकाले जीवशुक्रशोणितसंयोगे मातुस्तात्कालिकाहारजरससम्बन्धेन चेतनाधिष्ठितं तं गर्भसंज्ञं महदादि-प्रकृतिविकृतित्रयोविंशत्या च सम्मूर्च्छितं शुक्रशोणितं तत्तदात्मशुक्र-शोणिताहारजरसगतानां चतुर्व्विधवाय्वादिचतुर्भूताकाशान् वायुर्विभजते, तेज एतान् पचति, क्लेदयन्त्यापः, पृथिवी संहन्त्याकाशो विवर्द्धयतीत्येवं मारुताध्मापनाहारजरसाभ्यां विवर्द्धमाने गर्भे यथाभूतैरेव भूतैश्चतुर्व्विधचतुर्भूत-वाय्वाद्याकाशेभ्यो भूतेभ्यः पञ्चभूतात्मकत्वेन वायुप्रधानो वायुस्तेजःप्रधानतया पित्तं जलप्रधानत्वेन कफश्चेति त्रयः परस्परं समत्वेनासमत्वेन च संजायमाना यावन्मरणमनुशेरते, इति व्युत्पत्त्या वातपित्तकफानां समत्वेन जायमानानामनु-वृत्तिकरणीभूतानि तादृशानि चतुर्व्विधभूतवाय्वादिगगनञ्चेति पञ्च भूतानि

*विषजातो यथा कीटो विषेण न विपद्यते। तद्वत् प्रकृतिभिर्देहस्तज्जातत्वात् न बाध्यते"। नातिबाध्यत इति बोद्धव्यं, वातादिप्रकृतेर्नित्यवातादिविकारगृहीतत्वात्। तदुक्तमिह "वातलाद्याः

धातवनुशयितानि देहोत्पत्त्यनुपादानाख्या प्रकृतिरपि न समाग्नित्वादिलक्षणा देहप्रकृतिः। प्रकृतिशब्दोऽत्र स्वभावार्थो न तूपादानार्थः। देहे प्रकृतिविकृतिभूतानां मातापित्रोरदुष्टदुष्टशोणितशुक्रगतभूतानामारोग्यसहजव्याधिजनकतया वातादिदुष्टादुष्टानुवृत्तेरिति। तेभ्यः प्रकृतिभूतपञ्चभूतरूपेभ्यो देहे जायमाने जातानां समासमानां पित्तानिलकफानां प्रकोपान्यथाभावक्षया न भवन्ति। प्रसूतानाञ्चाहारजवातादीनाञ्च भवन्तीति निष्कर्षः। इत्थञ्च समपित्तानिलकफपुरुषाणां वातपित्तकफानां समत्वदशायां न दोषत्वं दुष्टाभावात्। किन्तु धातुत्वं शरीरधारणपोषणाभ्यां जातवालस्याहारजवातादीनां दोषत्वं दुष्टिमत्त्वात्। धातुत्वञ्च धारणपोषणाभ्यामिति। यदा त्वेते दुष्टिमापद्यन्ते तदा दुष्टाश्रयत्वात् दोषत्वं शरीरदूषकत्वाच्चेति बोध्यम्। किञ्च प्रसन्नात्मेन्द्रियमनस्त्वादयं समधातुमलक्रियः. समधातुमलक्रियत्वादयं समाग्निः, समाग्नित्वादयं समवातपित्तकफः, समवातपित्तकफत्वादयं प्रकृतिमान, स्वस्थ इत्यर्थः। इति कार्य्येणानुमीयते कारणमिति। एवमयं वातलत्वाद्वातप्रकृतिमानित्यादि बोध्यम्। वातलादीनान्तु दोषानुशयितायाः प्रकृतित्वोपदेशस्तु न दोषप्रकृतिर्भवेदित्यादौ कृच्छ्रसाध्यत्वविज्ञानोपदेशार्थमौपचारिकत्वेनैव प्रकृतिपदस्य तत्र व्यवहारात्। समवातादिकस्य तत्र प्रकृतित्वेनाभिमतत्वाभावात् सर्व्वरोगस्य कृच्छ्रसाध्यत्वापत्तेः। वस्तुतः समपित्तानिलकफस्यैव पुंसः प्रकृतिमत्ता न त्वन्येषां विमानस्थाने वक्ष्यमाणत्वादिति। अपि च शुक्रशोणितसंयोगकाले रससम्बन्धेन। गर्भाभिवृद्धौ यदि शुक्रादिगतभूतानां व्यापत्तिर्वर्त्तते तदा व्यापन्नत्वेन जायमाना वातादयः प्रबलदुष्टिमापद्य जायन्ते तदा गर्भं घ्नन्ति हीनदुष्टिन्तु प्राप्य गर्भस्य विकृतिं जनयन्तीति विषमवातादीनां यथाबलं शरीरबाधकत्वं गर्भारम्भकाले बोध्यं न तु जातोत्तरकालं सततमत्यन्तबाधकत्वं, सहजत्वात् विषजकीटवत्। सुश्रुतेऽप्युक्तम् "विषजातो यथा कीटो न विषेण विपद्यते। तद्वत् प्रकृतिभिर्देहस्तज्जातत्वान्न बाध्यते॥" इति। न बाध्यते इति नातिबाध्यते इत्यर्थः।

अत्र शारीराधिकारात् मानसप्रकृतिर्नोक्ता। ननु एषां दोषानुशयिता यदि देहप्रकृतिः स्यात् तदा किमेषां स्वस्थवृत्तता नास्त्येवेत्यत आह—

सदाऽऽतुराः इति। उक्तञ्चाश्ववैद्यके "सर्व्वान् प्राणभृतो हन्ति नूनन्तु कायगं विषम्। अस्मिंश्चापि समुत्पन्ना दृश्यन्ते क्रिमयो यथा। तथा हि विषमो दोषः प्रकृतीनीति बाधते। न च वातादयो वृद्धास्तथा शुक्रशोणितसंसर्गे दुष्टत्वात् वातविकारवन्तं गर्भं कुर्व्वन्ति, तथा गर्भजनकत्वमेव शुक्रशोणितयोः कस्मान्न भिद्यन्ति इति वाच्यं; वातादिप्रकोपाणामेव हीनमध्योत्तमानां

द्वे अधः सप्त शिरसि खानि स्वेदमुखानि च।
मलायमानि बाध्यन्ते दुष्टैर्मात्राधिकैर्मलैः॥

विपरीतगुण इत्यादि। तेषां वातलादीनां स्फुटितकरचरणादिमतां करचरणस्फोटनादीनां तद्धेतुनाञ्च विकारभूतप्रकृतीनां वातादीनां रौक्ष्यशैत्यादिगुणविपरीतो गुणो यत्र स विधेयः। स्वस्थस्य दोषानुशयितावतो वृत्तिर्वर्त्तनस्य हितविधिर्विधेय इत्यर्थः। ननु समपित्तानिलकफानां पुनः को विधिरित्यत आह—समसर्व्वेत्यादि। समाः सर्व्वे रसा मधुरादयः षट् रसा यत्र तत् तथा तच्च सात्म्यं प्रशस्यतेऽभ्यस्यत्वेन विधीयते। समत्वमिह रसानां कर्म्मणा बोध्यं न तु मानतः। न हि यावल्लवणः कटुको वा स्वस्थानां भोजने युज्यते तावन्नाम्लो मधुरस्तिक्तो वेति, एष समसर्व्वरसाभ्यासविधिस्तु ऋतुविशेषविध्यविरोधेन बोध्यस्तेन हेमन्ते स्निग्धाम्ललवणानित्यादिवचनं तत्तद्रसप्राधान्ये सर्व्वरसाभ्यासविधायकमिति बोध्यम्। उक्तं हि—"नित्यं सर्व्वरसाभ्यासः स्वस्थाधिक्यमृतावृतौ" इति॥ २३॥

गङ्गाधरः—अथ स्वास्थ्यकारणरक्षणं उक्त्वा स्वास्थ्यप्रतिबन्धकदोषसञ्चयनिर्हरणमुपदेष्टुं दोषसञ्चयलक्षणानि वक्तुमाह। किंवा वातादीनां साम्यवैषम्यविज्ञानलिङ्गमाह—द्वे अध इत्यादि। द्वे अधः खे छिद्रे गुदोपस्थे, सप्त शिरसि खानि छिद्राणि—द्वे नयने, द्वे नासिके, द्वे श्रोत्रे, मुखमेकम्; इत नव

नानारसाभ्यासात् प्रबला वातादयो विनाशयन्ति, हीनास्तु विकृतिमात्रं जनयन्ति। तेषामिति सप्रातुराणां वातलादीनां, विपरीतगुणो वातादिगतरौक्ष्यादिविपरीतस्नेहादिकर्म्मप्रयुक्त इत्यर्थः। समाः सर्व्वे रसा यत्र तत् तथा; समशब्दोऽत्रानुरूपत्वमभिप्रेतं न तु तुल्यमानत्वं, न हि स्वस्थभोजने यावान् मधुर उपयुज्यते, तावन्मानाः कट्वादयोऽपीति। यदि वा समशब्दोऽविरुद्धवचनः, तेनोपोदिकाम्लत्वादिप्रतिपादनीयविरुद्धरसवर्जितं सर्व्वरसमित्यर्थः। अयञ्च प्रकृत्यपेक्षः समधातुं प्रति सर्व्वरसोपयोग ऋतुविहितेन "तस्मात् तुषारसमये स्निग्धाम्ललवणान् रसान्" इत्यादिना विशेषविधानेन युक्तः सन् सर्व्वमेवाम्ललवणरसातिरिक्तं भोजनं हेमन्ते करोति; वातप्रकृतेस्तु कटुतिक्तकषायवर्जितं प्रभूतमधुराम्ललवणभोजनं हेमन्ते, एवमन्यत्रापि देहप्रकृतिमनुस्वभावपर्य्यालोचनयाऽनुगुणं तर्कणीयं। यदुक्तं वाग्भटेन "नित्यं सर्व्वरसाभ्यासः स्वस्थाधिक्यमृतावृतौ" ॥ २३॥

चक्रपाणिः—स्वास्थ्योत्पत्तिकारणमभिधाय स्वास्थ्यप्रतिबन्धकदोषसञ्चयनिर्हरणम् अभिधातुं दोषसञ्चयस्य लक्षणान्येव तावद्वक्तुमाह—द्वे अध इत्यादि। द्वे गुदलिङ्गे; खानि छिद्राणि,

मलवृद्धिं गुरुत्वेन लाघवान्मलसंक्षयम् ।
मलायनानां बुध्येत सङ्गोत्सर्गादतीव च ॥
तान् दोषलिङ्गैरादिश्य व्याधीन् साध्यानुपाचरेत् ।
व्याधिहेतुप्रतिद्वन्द्वैर्मात्राकालौ विचारयन् ॥ २४ ॥

खानि । स्वेदमुखानि स्वेदपथा लोमकूपानि इत्येतानि मलायनानि मलस्य वर्त्मानि, दुष्टैर्विषमैर्मलैर्बाध्यन्ते । ननु हीनैः किमधिकैरित्यत आह—मात्राधिकैरिति । गोबलीवर्दन्यायेनेति कश्चित् ।

ननु मलायनबाधनेन मलाधिक्यं बुध्यतां मलक्षयस्तु केन ज्ञायते इत्यत आह—मलवृद्धिमित्यादि । मलाधिक्यं मलायनबाधनेन मलायनानां गुरुत्वेन च बुध्येत । मलायनानां लाघवादतिलघुत्वात् मलक्षयं, मलानां वातादीनां प्रकृतिमानाद्धीनतां बुध्येतेति । न केवलमेतेनान्येन च तत् किमित्याह—सङ्गोत्सर्गादिति । मलानामतीव सङ्गादप्रवर्त्तनात् मलक्षयमतीवोत्सर्गात् प्रवर्त्तनात् वृद्धिं बुध्येतेति । अत एव मलाधिक्यक्षयाभावात् मलसाम्यं बुध्येतेति चकारेण ज्ञापितम् । मलशब्देनेह वातादयो मूत्रादयश्च बोध्याः ।

मलानां वृद्धौ क्षये वा सति किमाचरणीयमित्याह—तानित्यादि । तान् मलानां वृद्धिक्षयान्यतरदुष्टिमत्तया वातादीन् दोषलिङ्गैर्दुष्टिमद्वातादिलिङ्गैरादिश्य बुद्ध्या विविच्य तज्जान् साध्यान् व्याधीन् व्याधिहेतुप्रतिद्वन्द्वैर्गुणतो वीर्य्यतो विपाकतः प्रभावतो वा व्याधिविपरीतैर्हेतुविपरीतैस्तदुभयविपरीतैर्वा भेषजाहाराचारैरुपाचरेत् चिकित्सेत् । व्याधिहेतुप्रतिद्वन्द्वत्वविज्ञानहेतुमाह—मात्राकालाविति । दोषभेषजाहाराचाराणां मात्रां दोषव्याधिप्रकोपर्त्तु दिनांशरात्र्यंशभुक्तांशकालं विचारयन् वैद्य इति शेषः ॥ २४ ॥

सप्त शिरसानि—द्वे श्रोत्रे, द्वौ नासापुटौ, द्वे अक्षिणी, मुखञ्च । स्वेदमुखानीति लोमकूपानीति मलस्यायनानि । दुष्टैरिति गोबलीवर्दन्यायेन क्षीणैः; मात्राधिकैरिति वृद्धैः । येनोत्तरत्र क्षयवृद्ध्योरपि लक्षणं वेदयति । मलवृद्धिं गुरुतया मलायनगुरुतयेत्यर्थः, लाघवान्मलायनानां सङ्क्षयं मलस्य स्वमानादपि क्षयमित्यर्थः । यद्वा दुष्टैरिति मात्राधिकैरित्यस्य विशेषणम्, एवं सति लाघवान्मलसङ्क्षयमिति प्रकृतिस्थाहाराद्यपाग् मलक्षयमित्यधिकस्य मलस्य क्षयं प्रकृतिस्थत्वमित्यर्थो व्याख्येयः । सङ्गोत्सर्गादतीव चेति अतीवसङ्गादप्रवृत्तेर्मलसङ्क्षयम् अतीवोत्सर्गान्मलवृद्धिं जानीयादित्यर्थः । तानिति ।—मलवृद्धिक्षयात्मकान् मलवृद्धिक्षयजनितानिति यावत् । दोषाणां वाता-

विषमस्वस्थवृत्तानामेते रोगास्तथाऽपरे।
जायन्तेऽनातुरस्तस्मात् स्वस्थवृत्तपरो भवेत् ॥ २५ ॥
माधवप्रथमे मासि नभस्यप्रथमे पुनः।
सहस्यप्रथमे चैव हारयेद् दोषसञ्चयम् ॥

गङ्गाधरः—तेनेदन्तु यदातुर्य्यवृत्तमुक्तं मात्राशितीयादिना यच्च स्वस्थवृत्तमुक्तं यच्च वक्ष्यमाणं तद्वृत्तिसेवने फलमाह—विषमेत्यादि। विषमस्य विषमधातोरातुरस्येति यावत्, स्वस्थस्य समधातोश्च, वृत्तानि हितानि सन्ति येषां ते विषमस्वस्थवृत्तास्तेषाम्, एते शारीरधातुवैषम्यनिमित्ता रोगा न जायन्ते। तथाऽपरे मानसागन्तुजाश्च न जायन्ते। तस्मादातुरः प्रागातुर्य्यात् सति चातुर्य्ये स्वस्थवृत्तपरो भवेत्। तन्न तत्त्वम्। तत्त्वं हि—विषमं वैषम्येणाचरितं स्वस्थवृत्तं येषां तेषां विषमस्वस्थवृत्तानां पुरुषाणामेते मलवृद्धिक्षयजास्तथाऽपरे आगन्तुजाश्च रोगा जायन्ते। तस्मादनातुरः पुरुषः स्वस्थवृत्ते परस्तत्परभाववान् भवेदित्यर्थः ॥ २५ ॥

गङ्गाधरः—स्वस्थवृत्तपरतायां किमिमे रोगा न भवेयुः ? कथं न स्युरित्याह—माधवेत्यादि। माधवो वैशाखस्तस्य प्रथमश्चैत्रः। नभस्यो भाद्रपदस्तस्य

दीनां लिङ्गैः क्षयवृद्धिसम्बन्धैरादिश्य बुद्ध्या ते मात्यास्तानुपाचरेत। व्याधिप्रतिद्वन्द्वैः व्याधिप्रत्यनीकैः, हेतुप्रतिद्वन्द्वैः हेतुप्रत्यनीकैः, प्रतिद्वन्द्वशब्देन च विपरीतार्थकारिणामपि ग्रहणम्। मात्राकालग्रहणञ्च प्राधान्यात्; तेन दोषभेषजादीनामपि ग्रहणं बोद्धव्यम्, यदि वा कालग्रहण एव दोषादीनामवरोधो व्याख्येयः। अनातुरशब्देनातुर्य्यात् प्रागेवानागताबाधेन स्वस्थपरेण भवितव्यमिति शिक्षयति ॥ २४। २५ ॥

चक्रपाणिः—माधवो वैशाखस्तस्य प्रथमश्चैत्रः, एवं नभस्यस्य भाद्रस्य प्रथमः श्रावणः, तथा सहस्यस्य पौषस्य प्रथमो मार्गशीर्षः। एते च मासाश्चैत्रश्रावणमार्गशीर्षा रोगभिषग्जितीये विमाने शोधनार्थं वक्ष्यमाणप्रावृडादिऋतुक्रमेण वसन्तप्रावृट्शरदन्तर्गता भवन्ति। दृढबलसंस्कारेऽपि पठ्यते—"प्रावृट् शुक्रनभौ ज्ञेयौ शरदूर्ज्जसहौ पुनः। तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति।" सुश्रुतेऽपि ऋतुचर्य्याध्याये दोषोपचयप्रकोपोपशमननिमित्तमीदृश एव ऋतुक्रमः पठितः। तेन, शोधनमभिधीयमानं शोधनार्थर्त्तुक्रमेणैव व्याख्येयम्। वसन्तादीनामन्त्यमासेषु तु वमनाद्यभिधानं सम्पूर्णप्रकोपे भूते निर्हरणोपदेशार्थम्। प्रथमेषु हि मासेषु फाल्गुनाषाढकार्त्तिकेषु प्रकोपः प्रकर्षप्राप्तो न भवति, किन्तस्य असम्यक् प्रकुपितस्याविलीनस्य सम्यङ्निर्हरणं न भवतीति, अत एव कपिलबलेऽपि पठ्यते—"मधौ सहे नभसि च मासि दोषान् प्रवाहयेत्। वमनैश्च

स्निग्धस्विन्नशरीराणामूर्द्ध्वञ्चाधश्च नित्यशः।
वस्तिकर्म्म ततः कुर्य्यान्नस्तःकर्म्म च बुद्धिमान्॥

प्रथमः श्रावणः। सहस्यः पौषस्तस्य प्रथमोऽग्रहायणः। तस्मिंस्तस्मिन् मासे दोषसञ्चयं हारयेत् निर्हारयेत्। हेमन्ते श्लेष्मसञ्चयं चैत्रे. ग्रीष्मे वायुसञ्चयं श्रावणे, वर्षासु पित्तसञ्चयं मार्गशीर्षे हारयेदित्यर्थः। आषाढ़श्रावणयोः प्रावृट्त्वेन वायोः प्रकोपकालतया वक्ष्यमाणत्वात्, आषाढ़े वायोः सम्पूर्ण-प्रकोपाभावात्। तत्र निर्हरणे पुनः श्रावणे कालस्वभावेन वायोः सञ्चये प्रकोपसम्भवात्। एवं कार्त्तिकाग्रहायणयोः पित्तप्रकोपकालतया वक्ष्यमाणत्वेन कार्त्तिके पित्तनिर्हरणे पुनरग्रहायणे प्रकोपाशङ्का स्यात्। तथा फाल्गुनचैत्रयोः कफकोपकालत्वात् फाल्गुने कफनिर्हरणे चैत्रे पुनः कफकोपसम्भवात्। एतेन तद्व्याख्यानं प्रत्याख्यातं येन यदिदं व्याख्यायते। सहस्येति सहशब्दो मार्ग-शीर्षवाचकोऽकारान्तः। तस्य प्रथमः कार्त्तिक इति। एतदनुसारेणान्येनापीदं यदुक्तं "श्रावणे कार्त्तिके चैत्रे मासि साधारणे क्रमात्। ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत्॥" इति तच्चानुभवादेवासङ्गतं बोध्यम्। यत्तु "कार्त्तिके श्रावणे चैत्रे मासि साधारणे क्रमात्। वर्षादिसञ्चितान् दोषान् त्रिमासान्तरि-तान् हरेत्॥" इति केनाप्युक्तमयुक्तम्। श्रावणात् परं द्विमासान्तरितत्वं कार्त्तिकस्य, कार्त्तिकात् परं मासचतुष्टयमन्तरितत्वं स्याच्चैत्रस्येति त्रिमासान्तरितानित्यस्यासङ्गतेः। सहसि श्रावणे चैत्र इति पाठे तु युज्यते।

केषामित्याह स्निग्धेत्यादि। आदौ स्निग्धं ततः स्विन्नं शरीरं येषां तेषा-मूर्द्ध्वं वमनेनाधो विरेकेण निर्हारयेत्, ततोऽनन्तरं विरेकानन्तरं वस्तिकर्म्म परस्परापेक्ष्यत्वेनास्थापनानुवासनेति द्वयम्। ततश्चानन्तरं नस्तःकर्म्म शिरो-विरेचनं, यथाक्रमं यथायोगतो यस्य यदुच्यते तथायोगेन यथाक्रमं हारयेत् कुर्य्यादित्युभयत्र। तेन चैत्रे ऊर्द्ध्वं, श्रावणेऽधो निर्हरणम्, अग्रहायणे वस्तिकर्म्म

विरेकैश्च निरूहैः सानुवासनैः।" इति। हरिचन्द्रेण तु, सहशब्दोऽयमकारान्तो मार्गशीर्षवचनस्तस्य सहस्य प्रथमे कार्त्तिके इति व्याख्यातम्; तन्मतानुसारिणा वाग्भटेन चोक्तं "श्रावणे कार्त्तिके चैत्रे मासि साधारणे क्रमात्। ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत्॥" इति। "कार्त्तिके श्रावणे चैत्रे मासि साधारणे क्रमात्। वर्षादिसञ्चितान् दोषान् त्रिमासान्तरितान् हरेत्॥" इत्यस्य तु श्लोकस्य केनापि पठितस्याविरुद्धान्वेषणे बुद्धिमतां न व्यापारः। ऊर्द्ध्वञ्चेति वमनेन, अध इति विरेकेण, वस्तिकर्म्मशब्देनास्थापनानुवासने, एतच्च सर्व्वं वमनादि यथायोग्यतया, न

यथाक्रमं यथायोगमत ऊर्द्ध्वं प्रयोजयेत्।
रसायनानि सिद्धानि वृष्ययोगांश्च कालवित्॥
रोगास्तथा न जायन्ते प्रकृतिस्थेषु धातुषु।
धातवश्चाभिवर्द्धन्ते जरा चान्तमुपैति च॥
विधिरेष विकाराणामनुत्पत्तौ निदर्शितः।
निजानामितरेषान्तु पृथगेवोपदिश्यते॥ २६॥

कुर्य्यादिति नार्थः, किन्तु योग्यतया वमनस्य कफहरेषु श्रेष्ठतमत्वाच्चैत्रे वमनम्। अनुवासनस्य वातहरेषु श्रेष्ठतमत्वेन श्रावणेऽनुवासनं तत्सापेक्ष्यत्वादास्थापनञ्च. विरेचनस्य पित्तहरेषु श्रेष्ठतमत्वेन मार्गशीर्षे विरेक इत्यर्थः। वस्तुतोऽत्रोर्द्ध्वं चाधश्चेति चकारद्वयेन वमनानन्तरं विरेकश्चैत्रे। मार्गशीर्षे तु प्राक् च विरेकात् वमनमिति परस्परापेक्ष्यत्वं ज्ञापितम्। तत इति पदे वमनविरेकानन्तरं चैत्रे मार्गशीर्षे च वस्तिकर्म्म कुर्य्यादिति ख्यापितं, नस्तःकर्म्म चेति चकारेण वस्त्यनन्तरं शीर्षविरेचनं कुर्य्याच्चैत्रे मार्गे च। श्रावणे तु यदि चैत्रे वमनादिकं कृतमिति बुध्यते तदानुवासनास्थापने कुर्य्यात्। न यदि कृतवमनविरेचनमिति जानीते तदा वमनविरेचने अपि कृत्वा वस्तिकर्म्म कुर्य्यात्। ततोऽनन्तरं नस्तःकर्म्म च कुर्य्यादिति। स्नेहनानन्तरं स्वेदः, स्वेदात् परं स्निग्धस्विन्नशरीराणां वमनं, परं स्निग्धस्विन्नशरीराणां विरेकः, विरेकात् परं वस्तिद्वय, वस्तिद्वयात् परं स्निग्धस्विन्नशरीराणां नस्तःकर्म्मेति यथाक्रमं यथायोगं यस्य यद्वमनादीनां योगो युक्तः स्यात् तस्य तद्योगमनतिक्रम्य कुर्य्यात्। न तु चैत्रे वमनं, मार्गशीर्षे विरेकः, श्रावणे वस्तिकर्म्मेति यथायोग्यार्थं यथाक्रमपदमिति। सर्व्वथा सर्व्वशरीरगदोषहरणाभावात्। अत ऊर्द्ध्वं पञ्चकर्म्मभिः संशोधनानन्तरं सिद्धानि रसायनानि प्रयोजयेत्। रसायनानन्तरं वृष्ययोगांश्च कालवित् भिषक् प्रयोजयेत्। अस्य फलमाह—रोगा इत्यादि। तथेति वृष्यान्तक्रियायां रसायनान्तक्रियायां वा कृतायां सत्यां धातुषु प्रकृतिस्थेषु सत्सु विकाराः शारीर-

यथासंख्येन ; तेन वमनं मधौ प्रधानं, सहस्यप्रथमे विरेकः, नभस्यप्रथमे वस्तिरिति भवति। यथाक्रमं यथानुपूर्व्वं, यथायोग्यं यद् यस्य युज्यते ; एतच्च पूर्व्वेण वमनादिना, उत्तरेण वा रसायनादि प्रयोक्तव्यमित्यनेन योज्यम्। सिद्धानीति दृष्टफलानि, रोगास्तथा न जायन्त इति वमनादीनामाचरतः। धातवश्चाभिवर्द्धन्त इति रसायनवृष्ययोगानुपयुञ्जत इति योजनीयम्।

ये भूतविषवाय्वग्नि-संप्रहारादिसम्भवाः ।
नृणामागन्तवो रोगाः प्रज्ञा तेष्वपराध्यति ॥
ईर्ष्याशोकभयक्रोध-मानद्वेषादयश्च ये ।
मनोविकारास्तेऽप्युक्ताः सर्वे प्रज्ञापराधजाः ॥
त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ।

दोषजाः। जरा चान्तं नाशम्। निजानामित्यन्तेन च्छेदः। निजानां शारीरदोषजानां परिणामासात्म्येन्द्रियार्थसंयोगजानाम्, इतरेषामिति प्रज्ञापराधजानान्तु पृथगुक्तादन्यो विधिरुपदिश्यते ॥ २६ ॥

गङ्गाधरः—तत्रादौ आगन्तूनां हेतुमुपदिशति ये इत्यादि। भूता देवग्रहादयः, विषं स्थावरजङ्गमं, वायुर्लौकिको झञ्झादुष्टवातः, आदिना अभिचारादि। तेषु भूतविषादिजेष्वागन्तुषु प्रज्ञा बुद्धिरपराध्यति। मिथ्यात्वेनान्यथात्वेन या बुद्धिर्बोधयति पुरुषं, तस्या बुद्धेः सोऽपराधः।

न केवलमागन्तुष्वेषु रोगेषु प्रज्ञाऽपराध्यति, ईर्ष्यादिष्वपि मानसरोगेष्वित्याह—ईर्ष्येत्यादि। ईर्ष्यादयो मानसकार्य्या न तु वातादिजाः। आदिना लोभमोहादयः। कर्म्मजास्तु व्याधयः प्रज्ञापराधेन जनिता दुष्कर्म्मभ्यो जायमाना धर्म्मस्य कालपरिणामेनापचारात् कुपिता वातादिभ्य आगन्तुकहेतुभ्यो रजस्तमोभ्यश्च जायन्ते। इति शारीरागन्तुषु मानसेषु च यथायोग्यमन्तर्भवन्ति शारीरागन्तुज्वरादिभ्य ईर्ष्यादिभ्यश्चापृथक्त्वात्।

तेषु किं करणीयमित्याह—त्याग इत्यादि। आगन्तुमानसानां प्रज्ञापराधजत्वेन प्रज्ञापराधत्यागादीनां तेषां हेतुः प्रज्ञापराधविपरीतत्वेनागन्तुषु मानसेषु रोगेषु विधिर्निदर्शितः। प्रज्ञापराधानां प्रज्ञया यद्वस्तु यथा सदसद्वा तथात्वेन न जानाति तदज्ञानं, यद्वस्तु यथा सदसद्वा तत्तथा न ज्ञात्वा सदसत् स यया

निजानामिति च्छेदः। इतरेषामित्यागन्तूनाम्। आगन्तवश्चेह भूतविषवातादिजन्यास्तथा मानसा अभिप्रेताः, येनैतद् द्वितयमप्यभिधायाऽऽगन्तूनामनुत्पत्तावित्याद्युपसंहारमागन्तुकत्वेनैव करिष्यति ॥ २६ ॥

चक्रपाणिः—ये भूतेति। भूताः पिशाचादयः, आदिग्रहणाद्ब्रह्मबन्धनादीनां ग्रहणं, प्रज्ञा बुद्धिस्तदपराधोऽज्ञानदुर्ज्ञाने; एतन्मूलाश्चैते भूताभिषङ्गादयः ईर्ष्यादयश्च। यद्यपि निजा अपि प्रज्ञापराधमूला एव, यदुक्तं "प्रज्ञापराधाद्ध्यहितानर्थान् पञ्च निषेवते" इति, तथापि प्राधान्यात् प्रज्ञापराधजनितत्वाद्वातादिकुक्षिभोजनादिजन्यत्वेन तथाऽन्तरा वातादिजन्यत्वेन प्रपञ्चो नोच्यते।

आगन्तुमूलकारणपरिहारे हेतुमाह—त्याग इत्यादि। इन्द्रियोपशम इन्द्रियाणां

देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्त्तनम् ।
आगन्तूनामनुत्पत्तावेष मार्गो निदर्शितः ॥ २७ ॥
प्राज्ञः प्रागेव तत् कुर्य्याद्धितं विद्याद् यदात्मनः ।
आप्तोपदेशः प्रज्ञानां * प्रतिपत्तिश्च कारणम् ।
विकाराणामनुत्पत्तावुत्पन्नानाञ्च शान्तये ॥ २८ ॥

जानाति अतिशयेन वा यद्वस्तु जानाति तस्याः प्रज्ञायाः स सोऽपराधस्तेषां त्यागः । इन्द्रियोपशमः विषयेभ्यो निग्रहः । स्मृतिस्तद्वस्तूनामनुभूताना-मसम्प्रमोषः । एतच्च त्रयं मानसरोगानुत्पत्तौ वर्त्म इति । प्रतिलोमतन्त्रयुक्त्या आगन्तुव्याध्यनुत्पत्तिमार्गं दर्शयति । देशेत्यादि इति कश्चित् । तन्न । आगन्तूनामेवैष मार्गः । प्राज्ञ इत्यादिना मानसव्याध्यनुत्पत्तिमार्गस्य दर्शयि-तव्यत्वात् । देशश्च सन्नसन् वा किमित्यादिकरूपेण देशविज्ञानं, कालो-ऽयमसन् सन् न वा किमित्यादिरूपेण कालविज्ञानं, अहमीदृग्बल ईदृग्विध ईदृक्सत्त्व ईदृक्शक्तिरेवंविधिनात्मविज्ञानं तथाविधदेशविज्ञानात् दुर्ज्जन-व्याघ्रदस्युदैवाद्युपहतदेशवर्ज्जनेन तज्जन्यागन्तवो न स्युः । निशाग्रस्थादिरूपोऽयं काल इत्यादिना दैवग्रहादिकालवर्ज्जनात् तज्जुष्टत्वेन तज्जागन्तवो न स्युः । आत्मशक्त्यादिविज्ञानादभिघातादिजागन्तवो न स्युः । सद्वृत्तमिन्द्रियोपक्रम-णीये वक्ष्यमाणं, तस्यानुवर्त्तनमाचरणं, तस्मात्भिचाराभिशापादीनां वर्ज्ज-नात् तज्जागन्तवो न स्युरिति ॥ २७ ॥

गङ्गाधरः—मानसव्याधीनामनुत्पत्तिमार्गं उत्पन्नानाञ्च प्रशान्तिमार्गं उच्यते—प्राज्ञ इत्यादि । प्रागेवेति व्याध्युत्पत्तेः पूर्व्वम् । उत्पन्नस्य च व्याधेः पूर्व्वमेवात्मनो हितं यद्विद्यात् प्रज्ञया विशेषेण जानीयात् तत् कुर्य्यात् । प्राज्ञ इत्यनेनापातमनोज्ञसेवनं निरस्यति । हितं विवृणोति ।—आप्तोपदेशः आप्ता

स्वविषयेऽकम्पत्वं, स्मृतिः पुत्रादीनां विनश्वरस्वभावाद्यनुस्मरणं, यदुक्तं—"स्मृत्वा स्वभावं भावानां स्मरन् दुःखात् विमुच्यते । एतच्च त्रयं मानसरोगप्रतिघातकम् ; देशज्ञानात् शून्यगृहा-दयुपसर्गगृहीतदेशवर्ज्जनादि भवति, कालज्ञानात् पौर्णमास्यादिवक्ष्यमाणभूताद्यभिघातकालादि-वर्ज्जनम् , आत्मज्ञानात् स्वशक्तिपर्य्यालोचनया प्रवर्त्तो बलवदभिघातादिपरिवर्ज्जनं व्याख्येयं, सद्वृत्तमिन्द्रियोपक्रमणीये वक्ष्यमाणं, प्रागेवेत्यनुत्पन्नेष्वेव रोगेषु ।

अथ किं हितमित्याह—आप्तोपदेश इत्यादि । आप्ता ज्ञानवन्तो रागद्वेषादि-

---

* आप्तोपदेशप्रज्ञानमिति वा पाठः ।

पापवृत्तवचःसत्त्वाः सूचकाः कलहप्रियाः ।
मर्म्मोपहासिनो लुब्धाः परवृद्धिद्विषः शठाः ॥
परापवादरतयश्चपला रिपुसेविनः ।
निर्घृणास्त्यक्तधर्म्माणः परिवर्ज्ज्या नराधमाः ॥ २ ॥
बुद्धिविद्यावयःशील-धैर्य्यस्मृतिसमाधिभिः ।
वृद्धोपसेविनो वृद्धाः स्वभावज्ञा गतव्यथाः ॥

रजस्तमोभ्यां निर्म्मुक्ता इत्यादिना वक्ष्यमाणास्तेषामुपदेश एवमिति वचनम् । प्रकानां प्रमाणसिद्धानां बुद्धीनां कर्त्रीणां प्रतिपत्तिः प्रतीतिः प्रमया बुद्ध्या यत् प्रतिपद्यते सा । इति द्वयं कारणं विकाराणां पारिशेष्यात् मानसरोगाणामनुत्पत्तौ कारणवर्ज्जनात् नोत्पत्तिर्हि स्यात्, उत्पन्नानाञ्च शान्तिश्च स्यात् ॥ २८ ॥

गङ्गाधरः—आप्तोपदेशग्रहणार्थमाप्तानाप्तप्रदर्शनायानाप्तान दर्शयति—पापेत्यादि । पापानि पापजनकत्वेन पापवन्ति वृत्तमाचरितं वचो वचनञ्च सत्त्वं मनः तानि येषां ते तथा । सूचकाः खलाः । मर्म्मोपहासिनः मर्म्म हृदयं मनःस्थानं तदुपहसितुम् उपहासेन पीड़यितुं शीलं येषां ते । परवृद्धिं स्वेतरस्य सुखवृद्धिं द्विषन्ति । शठा धूर्त्ताः । चपलाश्चञ्चलधियः । रिपुसेविनः शत्रूणां दासाः । निर्घृणा निर्दयाः । त्यक्तधर्म्माणा धर्म्महीनाः ।२९॥

गङ्गाधरः—आप्तान् दर्शयति—बुद्धीत्यादि । ये बुद्ध्याद्यन्यतमेन वृद्धास्ते नाप्ता मूर्खवयोवृद्धानामाप्तत्वप्रसङ्गात् । किन्तु बुद्ध्यादिभिः समस्तैर्ये वृद्धास्ते आप्ताः । समाधिमतोऽपि पुरुषस्य कचिद् भ्रान्तिर्भवति ; कथं तादृशानां वृद्धानां सेव्यत्वमित्याह—वृद्धोपसेविनः आप्तोपसेवनेन सत्यशीलाः । स्वभा-

रहिताः पुरुषाः । यद्वक्ष्यति—"रजस्तमोभ्यां निर्म्मुक्ताः" इत्यादि । प्रतिपत्तिरुपदिष्टार्थस्य सम्यगवबोधः * । एतद् द्वयं कारणं विकाराणामनुत्पत्तौ हेतुवर्ज्जनेनोत्पन्नानाञ्च शान्तये कारणं तच्चिकित्सानुष्ठानेनेत्यर्थः ॥ २७।२८ ॥

चक्रपाणिः—आप्तोपदेशग्रहणार्थम् अनाप्तान् वर्ज्ज्यान् पापवृत्तेत्यादिना, सेव्यांश्चाप्तान् बुद्धीत्यादिना दर्शयति ; वृत्तं चेष्टितं शारीरव्यापारः, सत्त्वं मनः ; एषां पापत्वं पापहेतुत्वात् ;

* सम्यगवबोध इति पाठान्तरम् ।

सुमुखाः सर्व्वभूतानां प्रशान्ताः शंसितव्रताः ।
सेव्याः सन्मार्गवक्तारः पुण्यश्रवणदर्शनाः ॥ ३० ॥
आहाराचारचेष्टासु सुखार्थी प्रेत्य चेह च ।
परं प्रयत्नमातिष्ठेद् बुद्धिमान् हितसेवने ॥ ३१ ॥
न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् ।
नामुद्गसूपं नाक्षौद्रं नोष्णं नामलकैर्विना ॥

वत्ताः सर्व्ववस्तूनाम । गतव्यथा अतानशाकादयः । सुमुखाः प्रसन्नवदनाः । प्रशान्ता इन्द्रियविषयेभ्यो निवृत्तचित्ताः । शंसितव्रता ब्रह्मचारिणः । सन्मार्गवक्तारः सत्पथोपदेष्टारः । पुण्यश्रवणदर्शनाः पुण्यश्रुतिं दर्शयितुं शीलवन्तः । एवंभूताः पुरुषा आप्ताः सेव्या गुरुत्वेन शिक्षितुमुपगम्या इत्यर्थः । एतेनैवं ख्यापितम्—एवंविधपुरुषस्य गुरुत्वेन प्राप्त्या तदुपदेशेन मानसव्याधीनां ज्ञानविज्ञानधैर्य्यस्मृतिसमाधिशिक्षया विनाशान्मुक्तः सन् निर्व्याधिर्भवतीति ॥ ३० ॥

गङ्गाधरः—अस्य निगमनवाक्यं दर्शयति—आहाराचारेत्यादि । यदेवं हितसेवनेन भवति तस्मात् प्रेत्य च मृत्वा च इह च एतज्जन्मनि च सुखार्थी सुखयाचक आहाराचारचेष्टासु मध्ये यद्धिता आहाराचारचेष्टास्तासां सेवने परमुत्कृष्टं प्रयत्नं प्रवर्त्तनमातिष्ठेदाश्रयेदिति निगमनम् । अत्राहारश्चतुर्व्विधाभ्यवहारः, आचारो वृत्तानुष्ठानं, चेष्टा वाङ्मनःशरीरप्रवृत्तिरालापचिन्तागमनादिः । चेष्टान्तर्गतत्वेऽपि आचारस्य यथायथाद्यनुष्ठानस्य धर्म्माधर्म्मजनकत्वेन प्राधान्यात् पृथगुपादानम् ॥ ३१ ॥

गङ्गाधरः—ननु तर्हि किञ्चिदपि नाहार्य्यं नाप्याचर्य्यं नापि च चेष्टनीयं भवति; न हि किञ्चिद्द्रव्यमैकान्त्येन हितमहितं वा, अपि तु हिताहित-

शठाः क्रूराः, निर्घृणा निष्कृपाः । वृद्धगादिभिर्वृद्धाः प्रभूतप्रशस्तवृद्धा वृद्धा इत्यर्थः । गतव्यथा गतशोकादय इत्यर्थः । सुमुखाः प्रसन्नमुखाः । संशितव्रता अवलम्बितनियमाः ॥२९।३०॥

चक्रपाणिः—आहाराचारचेष्टास्विति निर्द्धारणे सप्तमी; तेनाहाराचारचेष्टानां मध्ये यद्धितं तस्य सेवने प्रयत्नमातिष्ठेदिति फलति । आचारः शास्त्रविहितानुष्ठानम् ॥ ३१ ॥

चक्रपाणिः—दध्नोऽनेकप्रकारनिषिद्धत्वात् दिङ्मात्रोदाहरणार्थं दधिभोजनविधिमाह—न नक्तमित्यादि । अत्र च न नक्तमित्यत्र नोष्णमित्यत्र च नकारः क्रियया सम्बध्यते, तेन निषि

* अलक्ष्मीदोषयुक्तत्वान्नक्तन्तु दधि वर्ज्जितम् ।
श्लेष्मलं स्यात्ससर्पिष्कं दधि मारुतसूदनम् ॥
न च संधुक्षयेत् पित्तमाहारञ्च विपाचयेत् ।
शर्करासंयुतं दद्यात् तृष्णादाहनिवारणम् ॥
मुद्गसूपेन संयुक्तं दद्याद् रक्तानिलापहम् ।
सुरसञ्चाल्पदोषञ्च क्षौद्रयुक्तं भवेद् दधि ॥
उष्णां पित्तास्रकृद्दोषान् धात्रीयुक्तन्तु निर्हरेत् ।

मेवास्तीत्याशङ्कायामाह—यस्मिन् यद्धितं यस्मिंश्चाहितं तत्तदाप्तोपदेशेन विज्ञाय यस्मिन् यदहितं भवति तस्मिन् यथा हितं भवति तथैवाप्तोपदेशेन विज्ञाय तत् सेव्यमिति ज्ञापयितुं दिङ्मात्रमुदाहरन्ननेकविधया अहितस्य दध्नः सेवनं हितं यथा स्यात् तत्तदुपदिशति न नक्तमित्यादि। अत्र नञां प्रसज्य-प्रतिषेधार्थत्वेन यदि दधि भुञ्जीत तदा रात्रौ नरकाले घृतेन भुञ्जीत शर्करया सह भुञ्जीत मुद्गयूषेण भुञ्जीत क्षौद्रेण भुञ्जीत शीतलं भुञ्जीत आमलकैश्च भुञ्जीतेति रागप्राप्ते प्रसज्यप्रतिषिद्धं, न तु पर्य्युदासार्थेन नञा दिवादि-विधीयते इति बोध्यम्। नक्तमादिनिषेधबीजमाह अलक्ष्मीत्यादि। नक्तम् अलक्ष्मीरेव दोषस्तेन युक्तत्वात् योगात् नक्तं दधि वर्ज्जनीयं, तुश्चार्थे। दधि स्वभावतो हि श्लेष्मलं मारुतसूदनं पित्तसन्धुक्षणम्। तच्च ससर्पिष्कं चेत् तदा श्लेष्मलं मारुतसूदनञ्च स्यादेव पित्तं न च सन्धुक्षयेत् आहारञ्च वह्निबलमादधत् विपाचयेत्। अल्पदोषमल्पकफकरम्। उष्णं दधि पित्तास्र-कृद्भवति। तदितरत् तु न पित्तास्रकृत्। दोषान् सञ्चितान्। एतेन रात्रौ नरकाले दिवेति यावत्। घृताद्यन्यतमसहितं दधि भुञ्जानो यथोक्तगुणं लभते। इत्येवंविधयाप्तोपदेशेनाहितमपि कल्पनया हिततया सेवितव्यमिति ख्यापितम्।

उष्णदधि सर्व्वथैव न सेव्यम्; अघृतशर्करमित्यादौ च निषेधो नञा सम्बध्यते, तेनोभय-प्रतिषेधात् सशर्करं भुञ्जीतेत्यादि वाक्यार्थो भवति; तेन घृतादीनां मध्येऽन्यतमसम्बन्धेनापि दध्युपयोज्यं भवति। न नक्तमित्यादिवदिहापि नकारस्य क्रियासम्बन्धे मुद्गसूपसहितस्यापि अशर्करत्वमस्यैव दध्न इत्यनुपादेयत्वं स्यात्। अनुकर्षेणापि घृतादीनां मिलितानामेवोप-

* अलक्ष्मीत्यादि-निर्हरेदित्यन्तः पाठः न सर्व्वसम्मतः।

ज्वरासृक्पित्तवीसर्प-कुष्ठपाण्ड्वामयभ्रमान् ।
प्राप्नुयात् कामलाञ्चोग्रां विधिं हित्वा दधिप्रियः ॥ ३२ ॥

तत्र श्लोकाः ।

वेगा वेगसमुत्थाश्च रोगास्तेषाञ्च भेषजम् ।
येषां वेगा विधार्य्याश्च यदर्थं यद्धिताहितम् ॥
उचिते चाहिते वर्ज्ये सेव्ये चानुचिते क्रमः ।
यथाप्रकृति चाहारो मलायनगदौषधम् ॥
भविष्यतामनुत्पत्तौ रोगाणामौषधञ्च यत् ।
वर्ज्याः सेव्याश्च पुरुषा धीमतात्मसुखार्थिना ॥

नन्वविधिना दधिभोजने किं दोषभाक् स्यादित्याह—ज्वरेत्यादि । प्रिय इति प्रीतमानित्यर्थः । प्रीतिक्रियापेक्षया पूर्व्वकालभाजित्वाद् हित्वेति क्त्वाप्रत्ययः ॥ ३२ ॥

गङ्गाधरः—अथाध्यायार्थमुपसंहरति—तत्र श्लोका इति । 'न वेगान' इत्यारभ्य 'श्रमेण च' इत्यन्तेन वेगाः । 'एतान' इत्यारभ्य 'न धारयेत्' इत्यन्तेन वेगसमुत्थाश्च रोगाः । तेषां रोगाणां भेषजञ्च । 'इमांस्तु' इत्यारभ्य 'चिनोति' इत्यन्तेन येषां वेगा विधार्य्याश्च ते । 'शरीरचेष्टा' इत्यारभ्य 'विनश्यति' इत्यन्तेन यदर्थं यद्धिताहितं तत् । 'उचितान्' इत्यारभ्य 'भवन्ति च' इत्यन्तेन उचिते चाहिते वर्ज्ये सेव्ये चानुचिते क्रमः । 'समपित्तानिलकफा' इत्यारभ्य 'प्रशस्यते' इत्यन्तेन यथाप्रकृति चाहाराः प्रकृतिश्च तदाहारश्च । 'द्वे अध' इत्यारभ्य 'मलैः' इत्यन्तेन मलायनानि । 'मलवृद्धिम्' इत्यारभ्य 'अतीव च' इत्यन्तेन गदा मलवृद्धिहानिरूपाः । 'तान' इत्यारभ्य 'विचारयन्' इत्यन्तेन औषधानि तेषामित्यर्थात् । 'विषम' इत्यारभ्य 'शान्तये' इत्यन्तैः भविष्यतामनुत्पत्तौ रोगाणामौषधञ्च यत् तत् । 'पापवृत्तम्' इत्यारभ्य 'नराधमा' योगात् वर्ज्यसेव्यमुक्तं, यदुक्तं—"नाश्नीयाद् दधि नक्तमुष्णं वा न घृतमधुशर्करामुद्गामलकै-र्विना वा" इति ॥ ३२ ॥

चक्रपाणिः—अध्यायार्थसंग्रहे हिताहितमिति सेव्यासेव्यं व्यायामहास्यादि; भविष्यता-मनुत्पत्तौ भेषजमिति माधवप्रथमे मासीत्यादिनोक्तमाख्यातम् शान्तये इत्यन्तेन ॥ ३३ ॥

विधिना दधि सेव्यञ्च येन यस्मात् तदत्रिजः।
न-वेगान्-धारणेऽध्याये सर्व्वमेवावदन्मुनिः ॥ ३३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने न-वेगान्-धारणीयो नाम सप्तमोऽध्यायः ॥ ७ ॥

इत्यन्तेन वर्ज्याः पुरुषाः। 'बुद्धिम्' इत्यारभ्य 'दर्शना' इत्यन्तेन सेव्याः पुरुषाः। 'आहाराचार' इत्यारभ्य 'सेवने' इत्यन्तेन धीमतात्मसुखार्थिना च सेव्या ये ते। 'न नक्तम्' इत्यारभ्य 'विना' इत्यन्तेन विधिना दधि सेव्यम्। "अलक्ष्मी" इत्यारभ्य यस्य हेतोर्विधिना दधि सेव्यं तत्। तत् सर्व्वमत्रिज आत्रेयो भगवान् पुनर्व्वसुरिति। अध्यायं समापयति। अग्नीत्यादि पूर्व्ववद्व्याख्येयम् ॥ ३३ ॥

इति श्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ सूत्रस्थानप्रथम-स्कन्धस्य स्वास्थ्यचतुष्कीयतृतीयाध्याये न-वेगान्-धारणीय-जल्पाख्या सप्तमी शाखा ॥ ७ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-व्याख्यायां न-वेगान्-धारणीयो नाम सप्तमोऽध्यायः ॥ ७ ॥

# अष्टमोऽध्यायः ।

अथात इन्द्रियोपक्रमणीयमध्यायं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

इह खलु पञ्चेन्द्रियाणि पञ्चेन्द्रियद्रव्याणि पञ्चेन्द्रियाधिष्ठानानि पञ्चेन्द्रियार्थाः पञ्चेन्द्रियबुद्धयो भवन्तीत्युक्तमिन्द्रियाधिकारे ।

गङ्गाधरः—आहाराचारचेष्टासु यद्धितं तस्य सेवनमुक्तम् । तत्राहारः कीदृश आहार्य्य आचारश्च क आचर्य्यश्चेष्टा च कथं चेष्टनीयाः चेष्टाहारौ च कैः कार्य्याविर्त्याशङ्कायां चेष्टाहारयोरिन्द्रियाधीनत्वेनेन्द्रियोपक्रमणीयाध्यायमारभते—अथात इत्यादि । इन्द्रियैरुपक्रमणं व्यवहर्त्तुमारम्भ इन्द्रियोपक्रमणमिन्द्रियारम्भस्तमधिकृत्य कृतोऽध्यायस्तं तथा. सर्व्वं प्राग्वद्व्याख्येयम् ॥१॥

गङ्गाधरः—अथाहाराचारचेष्टासु हितं यत् तस्य सेवने आहारो दधिभोजनवदाप्तोपदेशेन हिततया द्रष्टव्या भवतीत्याचारचेष्टयोरिन्द्रियाधीनत्वात् तानीन्द्रियाणि कतिधा कतीन्द्रियद्रव्याणि कति चेन्द्रियाधिष्ठानानि कति चेन्द्रियार्थाः

चक्रपाणिः—स्वस्थाधिकारे आहाराचारचेष्टासु परं प्रयत्नमातिष्ठेदित्युक्तं, तत्राहारश्चेष्टाः काश्चित् पूर्व्वाध्यायद्वयेन प्रतिपादिताः, तेनावशिष्टस्याचारस्याभिधानार्थं तथेन्द्रियमनसामतियोग-मिथ्यायोग-परिहाररूपचेष्टोपदर्शनार्थञ्च इन्द्रियोपक्रमणीयमाह ; तत्रापि वक्ष्यमाणचेष्टाचारयोः प्रायेणेन्द्रियादिविषयत्वेनेन्द्रियादीन्येवादावाह । इन्द्रियस्योपक्रमणं व्याकर्त्तुमारम्भः, तमिन्द्रियोपक्रममिन्द्रिय-व्याकरणमधिकृत्य कृतोऽध्याय इन्द्रियोपक्रमणीयः । इहेतीह प्रकरणे, पञ्चेन्द्रियाणि, तेन प्रकरणान्तरेण दर्शनान्तरपरिग्रहेण वक्ष्यमाणैकादशेन्द्रियाभिधानेन समं न विरोधः ; यतः सर्व्वपारिषदमिदं शास्त्रं, तेनापुर्व्वशास्त्रविरुद्धवैशेषिकसांख्यादिदर्शनभेदेन विरुद्धार्थोऽभिधीयमानो न पूर्व्वापरविरोधमावहतीत्यर्थः । मनस्तु यद्यपि वैशेषिकमतेऽपीन्द्रियं शास्त्रकारेणापि मधुररसप्रभावे "षडिन्द्रियप्रसादनः" इत्यभिधानादनुमतमेव, तथापीह प्रकरणे चक्षुरादिभ्यो वक्ष्यमाणाधिकधर्म्मयोगितया नेन्द्रियमितीन्द्रियत्वेन न पठितम् । इन्द्रियाणीति स्वयमेव व्याकरिष्यति तत्र चक्षुः" इत्यादिना । इत्येतावदेवोक्तमिन्द्रियाधिकारे पूर्व्वाचार्य्यैरिति शेषः । एतेनान्यशास्त्रेऽपीन्द्रियाधिकार एतावदेवोक्तमिति कथयति ॥ १ ॥

अतीन्द्रियं पुनर्मनः सत्त्वसंज्ञकं चेत इत्याहुरेके।
तदर्थात्मसम्पदायत्तचेष्टं चेष्टाप्रत्ययभूतमिन्द्रियाणाम्॥ २॥

कति चेन्द्रियबुद्धयो भवन्तीति शिष्यप्रश्नमाशङ्क्य इन्द्रियादीनि व्याकरोति इहेत्यादि। इह संसारे खलु निश्चितं पञ्चेन्द्रियाणि प्रकरणात् बुद्धीन्द्रियाणि पञ्च बाह्यत्वात्, पञ्चैव बुद्धीन्द्रियाणि बुद्धेः प्राधान्यात्, कर्म्मेन्द्रियाणामत्रानभिप्रेतत्वात्। तेन तन्त्रान्तरे प्रकारान्तरेण षडिन्द्रियाणीत्यादिकं यदुक्तं तन्न प्रतिषिद्धमतो न विरुध्यते। एवं पञ्चेन्द्रियद्रव्याणि द्रव्यं प्रकृतिभूतकारणं तत् तु गुणकर्म्माश्रयसमवायिकारणम्। पञ्चेन्द्रियाधिष्ठानानि अधिष्ठानमधिकरणमाधारभूतकारणमिति नार्थः। पञ्चेन्द्रियस्थानानीत्यकरणात् परः कश्चित् यत्र स्थितेनान्यत्र यत्राधिकृत्य स्थीयते तदधिकारस्थानं सूक्ष्मदेहे स्थितैः इन्द्रियैर्जातैः स्थूलदेहे चक्षुर्गोलकादिष्वधिकृत्य स्थीयते। पञ्चेन्द्रियार्था अर्थाः स्वसमानयोनित्वस्मृति। पञ्चेन्द्रियबुद्धय इति बाह्यबुद्ध्यभिप्रायेण प्रमाणीभूतप्रत्यक्षाभिप्रायेण चोक्तं, न तु बुद्धिसाकल्याभिप्रायेण। बुद्धिरत्वेकैव आत्मगुणः प्रत्यगात्मस्था सा तु षडिन्द्रियाण्याश्रित्य षड्भिव्यज्यते। प्रत्यगात्मिकी हैका मानसी चापरा द्वे आभ्यन्तरबुद्धी। बाह्याः पञ्चेति सप्त। "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" इति गौतमसूत्रम्। इत्युक्तमिन्द्रियाधिकारे इति। इन्द्रियाणामिन्द्रियद्रव्याणामिन्द्रियाधिष्ठानानामिन्द्रियार्थानामिन्द्रियबुद्धीनां पञ्चत्वपञ्चत्वमिन्द्रियाधिकारे तन्त्रान्तरे ब्रह्मादिभिरुक्तमप्रवेशनत्वं च तदुक्तं तदिहापि तन्त्र प्रतिषिद्धं सदनुमतमिति बोध्यम्।

ननु चक्षुरादिभिरिव मनसापि ज्ञायते इति मनोऽपीन्द्रियतया तन्त्रान्तरोक्तं कथमिन्द्रियं मनो नोच्यते, इत्याशङ्क्य यस्मिन् यस्मिन् तन्त्रे पञ्चेन्द्रियाणीत्यादिकं पञ्चपञ्चकमुक्तं मनसश्च नेन्द्रियतयोक्तियद्धर्म्मेण चेन्द्रियत्वमुक्तं तन्त्रान्तरे, तद्धर्म्मं दर्शयति अतीन्द्रियं पुनरित्यादि। पुनर्भिन्नक्रमे। अतिक्रान्तमिन्द्रियाणि इत्यतीन्द्रियम्। चक्षुरादीनामिन्द्रियाणां ज्ञानकारणत्वमतिक्रान्तं, चक्षुरादिग्राह्यत्वेन योग्यत्वाभावादिति, सूक्ष्मत्वात् इति कश्चित् तन्न, चक्षुरादीनामप्यतीन्द्रियत्वात्। वस्तुतोऽतिशयेनेन्द्रियं चक्षुरादिभ्यो

चक्षुरादिभ्यो विशिष्टेन धर्म्मेण मनो दर्शयति—अतीन्द्रियमित्यादि। अतिक्रान्तमिन्द्रियमतीन्द्रियं; चक्षुरादीनां यदिन्द्रियत्वं बाह्यज्ञानकारणत्वं तदतिक्रान्तमित्यर्थः। यद्यपि मनोऽपि सुखादिज्ञानं प्रति कारणत्वेनेन्द्रियं, तथापीन्द्रियचक्षुरादेरधिष्ठायकत्वविशेषादतीन्द्रिय-

यत् तदतीन्द्रियम्। चक्षुरादिभ्योऽतिशयेन्द्रियत्वम्। चक्षुरादीनां दशानां बुद्धिकर्म्मेन्द्रियाणां स्वस्वार्थे चेष्टाहेतुत्वमधिकार्थत्वञ्च, तदर्थेत्यादिनात्रैव वक्ष्यति। मन्यतेऽनेनेति मनः. सत्त्वमित्येषा संज्ञा सत्त्वप्राधान्यात् यस्य तत् सत्त्वसंज्ञकम्। चेत इति चेतयत्यनेनेति चेतः। स्वरूपलक्षणार्थं सत्त्वसंज्ञक-मित्याहङ्कारिकसत्त्वविकारसत्त्वप्रधानत्रिगुणकत्वात् कर्म्मतो लक्षणार्थन्तु मनश्चेतश्चेति द्वयं ज्ञानचैतन्यसाधकतमत्वात् इति। केचित् तु दश बहि-रिन्द्रियाणि चत्वार्य्यन्तःकरणानि चित्तमनोबुद्ध्यहङ्कारा इति। तत्र चैतन्य-साधनावस्थं शुद्धसत्त्वात्मको महांश्चेतश्चित्तमुच्यते; बुद्धिसाधनावस्थं मनो मन एव बुद्धिः सूक्ष्मदेहस्थाहङ्कारात् स्थूलदेहे जाता मनसि तिष्ठति या खल्वात्मेन्द्रियमनोऽर्थसन्निकर्षादभिव्यज्यते षड्विधा। तन्मतमिह स्थूल-शरीरनिर्णये हित्वा बुद्धयाश्रयमनोवादिमतमनुमन्याह—इत्याहुरेके इति। अनुमते चेन्द्रियत्वे मनसो यत् षडिन्द्रियाणीति नोक्त्वा पञ्चेन्द्रियाणीत्युक्तं तेनैवं ज्ञापितं तन्त्रेऽस्मिन् यत्रेन्द्रियपदं प्रयोक्तव्यं तत्र पञ्चानामेवेन्द्रियाणां ग्राह्यत्वं न मनस इति पर्य्यायकथनं शास्त्रे व्यवहारार्थं स्वरूपतो लक्षणार्थञ्च। इत्याहुरेके इति कणादादयः।

परमतोपदर्शनमित्येतच्चाप्रतिषेधादनुमतं चेन्मनस इन्द्रियत्वं तर्हि कुतो हेतोर्नेन्द्रियत्वेन मनसो ग्रहणमित्यतो मनसोऽतिशयत्वमिन्द्रियेभ्यश्चक्षुरादिभ्यो दर्शयति—तदर्थेत्यादि। तन्मनः खलु तस्य मनसो अर्था भावाश्चिन्तनीयाः, विचार्य्याश्च। आत्मा चेतनाधातुः तयोः सम्पत् तदर्थात्मसम्पत्तदायत्ता चेष्टा व्यापारो यस्य तत् तथा। तत्र तदर्थसम्पत् सुखादीनां सन्निकर्षश्चिन्त्यादीना-माभिमुख्यञ्चेति कश्चित्। वस्तुतश्चिन्त्यादीनामर्थानामात्मस्पृहणीयत्वा-भावाहेव्यापद्रहितत्वं मनोऽर्थसम्पत्। सुखादयो हि न मनोऽर्था आत्मप्रत्यक्ष-त्वात्। वक्ष्यते हि "तत्रात्मप्रत्यक्षाः सुखदुःखेच्छाद्वेषादयः" इति। आत्म-सम्पन्मनोऽर्थग्रहणे चैतन्यबुद्धीच्छादिमत्त्वं शारीरत्वादात्मनः सगुणस्य शारीर-मानसरोगाद्यनभिभूतत्वञ्च। चेष्टा तु मनसः प्रवृत्तिः। सुखादिज्ञाने चित्तस्य

मित्युक्तं; यदि वाऽतीन्द्रियमिति चक्षुरादिभ्योऽप्यतीन्द्रियेभ्यः सूक्ष्मतरं दुरवबोधात्. सत्त्व-मित्येषा संज्ञा यस्य तत् तथा। चेत इत्याहुरेके इत्यादि परमतस्याप्रतिषेधात् स्वयमप्यनुमतं, पर्य्यायकथनं शास्त्रव्यवहारार्थम्। तदिति मनः, तस्याऽर्थो मनोऽर्थः, स च सुखादिश्चिन्त्य-विचार्य्यादिश्च, आत्मा चेतनाप्रतिसन्धाता, अनयोः सम्पत् तदर्थात्मसम्पत्, एतदायत्ता चेष्टा व्यापारो यस्य तत् तथा। तत्रार्थसम्पत् सुखादीनां सन्निकर्षश्चिन्त्यादीनामाभिमुख्यञ्च, आत्म-

चिन्तनादिकतर्कवितर्कादि तथा चक्षुरादीन्द्रियप्रेरणञ्च। चेष्टाप्रत्ययभूतमिन्द्रियाणां चक्षुरादीनां या चेष्टा स्वविषयरूपादिग्रहणे प्रवृत्तिस्तत्प्रत्ययभूतं कारणमित्यर्थः। एतेनतदुक्तं भवति—यदा सुखादयश्चिन्त्यादयश्च विषया भवन्ति, आत्मा च तत्र बुद्ध्यादिपूर्व्वकप्रयत्नवान् भवति, तदा मनः स्वविषये ग्रहणार्थं प्रवर्त्तते। यदात्मा चेन्द्रियार्थे बुद्ध्यादिपूर्व्वकप्रयत्नवान् स्यात् तदा तेन नियुक्तं मनोऽधितिष्ठति चेन्द्रियाणि। इन्द्रियाणि च तदधिष्ठितानि सन्ति स्वस्वविषये प्रवर्त्तन्ते इति कश्चिदाह। वस्तुतस्तु यथा मनस्त्वर्थात्मसम्पदायत्तचेष्टं भवति, तथा चक्षुरादिकमपि स्वस्वार्थात्मसम्पदायत्तचेष्टं भवति। इतीन्द्रियसामान्यलक्षणत्वादिन्द्रियत्वं मनसो दर्शितमिन्द्रियेभ्यो दशभ्योऽतिशयस्तन्तु चेष्टाप्रत्ययभूतमिन्द्रियाणामित्यनेन दर्शितमिति। न चात्मन्यप्रयतमाने स्वार्थे रूपादौ चक्षुरादिकं चेष्टते। न चासत्यां रूपादिसम्पदि प्रयतमानोऽप्यात्मा प्रभवति रूपादीन् ग्रहीतुमित्यर्थात्मसम्पदिति। अर्थात्मसम्पदि सत्यामात्मा प्रयतमानोऽर्थं ग्रहीतुं प्रभवतीति। अतिप्रसङ्गवारणायाह—चेष्टेत्यादि। चक्षुरादेः श्रोत्रादीन्द्रियचेष्टासु प्रयोजकत्वाभावान्न मनःसंज्ञत्वमिति। अत्रेन्द्रियपदं बुद्धीन्द्रियकर्म्मेन्द्रियोभयपरम्। आत्मनोऽर्थाः सुखादयः, स्वसम्पदायत्तचेष्टाभावात् तु नातिप्रसङ्गः। समानयोनिकत्वं बोधलम्। प्रत्यगात्मना योनिरस्ति, दीप्ताग्नितः स्फुलिङ्गव्युच्चारवन्महतो यथा तथात्मानो व्युच्चरन्ति महत एवात्मतः। सुखासुखादीनाञ्चात्मयोनिकत्वमिति, जगतां सत्त्वरजस्तमोयोनित्वेन सत्त्वादियोनिकस्य मनसोऽर्थौ जगदिति। सत्त्वादिपरिणामेन ब्रह्मविवर्त्तत्वात् न ब्रह्ममात्रयोनिकत्वं जगतः परन्तु ब्रह्मविवर्त्तकसत्त्वादिगुणयोनिकत्वम्। भावानामाकाशविवर्त्तकवाय्वादिचतुर्भूतयोनिकत्ववत्। तथात्वे पाञ्चभौतिकत्वव्यपदेशवद्ब्रह्माधिष्ठितगुणमयत्वव्यपदेशो गुणविशिष्टब्रह्ममयं जगदिति। न च सत्त्वरजस्तमसां ब्रह्मयोनिकत्वेन ब्रह्मयोनिकस्यात्मनो जगदर्थः। आत्मा हि ब्रह्मणोऽंशोऽविशेष-

सम्पदर्थग्रहणे प्रयत्नशालित्वं, मनश्चेष्टा च सुखादिज्ञानं तथा चिन्त्यचिन्तनादि तथा चक्षुरादीन्द्रियप्रेरणञ्च; इन्द्रियाणां चक्षुरादीनां या चेष्टा स्वविषयरूपादिज्ञानलक्षणा, तत्र प्रत्ययभूतं कारणभूतं मन इति योज्यम्। एतेनैतदुक्तं भवति—यदा सुखादयश्चिन्त्यादयोऽपि विषया भवन्त्यात्मा च प्रयत्नवान् भवति, तदा मनः स्वविषये प्रवर्त्तते, इन्द्रियाणि चाधितिष्ठति, इन्द्रियाणि च मनोऽधिष्ठितान्येव स्वविषयज्ञाने प्रवर्त्तन्ते ॥ २ ॥

स्वार्थेन्द्रियार्थसङ्कल्पव्यभिचरणाच्चानेकमेकस्मिन् पुरुषे सत्त्वं रजस्तमः सत्त्वगुणयोगाच्च। न चानेकत्वं नाप्यकं * ब्रह्मेव वह्निस्फुलिङ्गवत्। योनिस्तु रूपान्तरोत्पत्तिस्थानं न हि महतो ब्रह्मणो रूपान्तरत्वमात्मनः परमसूक्ष्मत्वेऽप्यात्मनः समानप्रभावत्वादिति ॥ २ ॥

गङ्गाधरः—ननु मनः किमेकस्मिन् पुरुषे नाना चैकं वेत्यत आह—स्वार्थेत्यादि। एवमुक्तलक्षणं सत्त्वं स्वार्थेन्द्रियार्थसङ्कल्पव्यभिचरणाच्च रजस्तमःसत्त्वगुणयोगाच्चानेकमेकस्मिन पुरुषे। स्वार्थस्य चिन्त्यविचार्य्यादेर्व्यभिचरणादनैकान्तिकत्वात् तदनेकावस्थत्वादनेकं सत्त्वमेकस्मिन् पुरुषे भवति। कचिच्चिन्त्यते कचिन्न चिन्त्यते कचिदन्यच्चिन्त्यते इत्येवं स्वार्थव्यभिचारादनेकं मनः। यदा चिन्तयति तदा चिन्त्यानुभावकं यदा विचारयति तदा विचार्य्यानुभावकमित्युपाधिभेदात्। तथेन्द्रियार्थव्यभिचरणाच्चानेकं मनः। कचिद् रूपं नीलं चक्षुर्दर्शयति तदा नीलदर्शकं कचिद्रक्तं दर्शयति तदा रक्तदर्शकमित्येवं श्रोत्राद्यर्थेऽपि व्याख्येयम्। तथा सङ्कल्पानां कर्त्तीकरणानां प्रतिपन्नानां भावानां सम्यगिदं ममावद्यमिदमनवद्यमित्यादि कल्पनानां व्यभिचरणाच्चानेकं मनः। कचिद्गुणवत्तया कल्पते कचिद्दोषवत्तयेति गुणसङ्कल्पकः कचिद् दोषसङ्कल्पकः कचिदिति। तथा रजोगुणबहुलत्वं यदा तदा कामादिर्भवति यदा तमोबहुलं तदा मोहभयादिकं स्यात्। यदा शुद्धसत्त्वबहुलं स्यात् तदा धर्म्मज्ञानशौचादि स्यादिति रजस्तमःसत्त्वगुणयोगाच्चानेकं सत्त्वमिति।

चक्रपाणिः—इदानीं तन्मन एकस्मिन् पुरुषे उपाधिभेदादनेकं परमार्थतस्त्वेकमिति दर्शयति स्वार्थेत्यादि। सत्त्वं मनः, अनेकमनेकमिव, यतः स्वार्थेन्द्रियसङ्कल्पव्यभिचरणाच्च तथा रजस्तमःसत्त्वगुणयोगाच्च, चकारः परस्परसमुच्चये, स्वार्थस्य मनोऽर्थस्य चिन्त्यस्य व्यभिचरणाच्च एवं चिन्त्यमर्थं परित्यज्यान्यार्थस्य ग्रहणादित्यर्थः। एतेनैतदुक्तं भवति यत एकमेव मनो यदा धर्म्मं चिन्तयेत् तदा धर्म्मचिन्तकं, यदा धर्म्मं परित्यज्य कामं चिन्तयति तदा कामचिन्तकमित्येवमादिना धर्म्मभेदेन भिन्नमप्यभिधीयते। एवमिन्द्रियार्थव्यभिचरणेऽपि; यदा रूपं गृह्णाति तदा रूपग्राहकं, यदा गन्धं गृह्णाति तदा गन्धग्राहकमित्यादि वाच्यम्। एवं सङ्कल्पव्यभिचरणेऽपि व्याख्येयं; तत्र सङ्कल्पप्रतिपन्नानां भावानाम् उपकारकं ममेदमपकारकं ममेदमिति वा गुणतो दोषतो वा कल्पनम्; एतद्व्यभिचरणे च कदाचिद् गुणकल्पनं कदाचिद्दोषकल्पनमिति मनोभेदो व्याख्येयः। तथा एकपुरुष एकमेव मनो यदा बहुरजोयुक्तं भवति तदा क्रोधादिमद्भवति यदा बहुतमोयुक्तं भवति तदाऽज्ञानभयादिमद्भवति, यदा सत्त्वयुक्तं भवति तदा सत्यशौचादियुक्तं

---

* नाप्येकमित्यत्र न ह्येकमिति चक्रपाणिः।

ह्येककालमनेकेषु प्रवर्त्तते। तस्मान्नैककाला सर्व्वेन्द्रिय-

नन्वेवं तर्ह्येकस्मिन् पुरुषे नाना चेत् सत्त्वं तदा चाक्षुषश्रौत्रादिका सर्व्वा बुद्धिर्युगपद्भवत्वित्याशङ्क्याह न चानेकत्वमित्यादि। एवमुक्तं सत्त्वमेकस्मिन् पुरुषेऽनेकमपि न तस्यानेकत्वम्। आवस्थिकानेकस्य तस्य वस्तुतो नानेकत्वम् अपि त्वेकत्वमेव। यथैको देवदत्तः पुरा बालकस्ततो युवा ततश्च वृद्ध इत्यनेकावस्थोऽप्येक एव। कस्मादित्याह नाप्येकं हीत्यादि। हि यस्मादण्वेकं यदणु चैकञ्च भवति, तदेककालं नानेकेषु प्रवर्त्तते। इदमनेकं चेदभविष्यत् तदा युगपदनेकेषु प्रावर्त्तिष्यत। यथा पञ्च बाणा रथिना क्षिप्ता युगपल्लक्ष्ये प्रवर्त्तन्ते। यथा वा युगपत् पतन्तो जलवृष्टिधाराबिन्दवोऽनेकेषु युगपत् प्रवर्त्तन्ते इति। मनसोऽनेकत्वाभावादणुत्वैकत्वाच्च युगपदनेकेषु प्रवर्त्तनाभावाच्च नैककाला सर्व्वेन्द्रियप्रवृत्तिः। यथा देवदत्तो वाराणसीं गच्छन् न पुरुषोत्तमं याति। नन्वेकत्वेऽप्येकोऽर्कः खल्वनेकान् प्रकाशयतीति चेन्न, स हि महानर्कस्त्वनेकेषु प्रवर्त्तते, मनस्त्वेकमणु च तस्मादनेकेषु युगपत् प्रवृत्त्यभावात् मनसा स्वार्थेन्द्रियार्थसन्निकर्षेऽपि सति नियतमनःप्रवृत्तिप्रयुक्तप्रवृत्तिकानामिन्द्रियाणां सर्व्वेषां चक्षुरादीनां नैककाला प्रवृत्तिः। अनेकत्वे तु युगपत् सर्व्वेन्द्रियप्रवृत्त्या पश्यन् शृणोतीत्यादि स्यात्। गौतमेनाप्युक्तं "ज्ञानायौगपद्यादेकं मनो न युगपदनेकक्रियोपलब्धिरलातचक्रदर्शनवत् तदुप-

भवति। ततश्चानेकमिव मनो भवति। तदेतत् प्रतिपादितमनेकत्वं परमार्थतो न भवतीत्याह न चेति। न चानेकत्वं मनस इत्यर्थः, चकारादमहत्त्वञ्च मनस इति समुच्चिनोति। यदुक्तम् "अणुत्वमथ चैकत्वं द्वौ गुणौ मनसः स्मृतौ।" कुतो नानेकत्वमित्याह अनेकमेककालं प्रवर्त्तते, अनेकं यन्मनः देवदत्तयज्ञदत्तविष्णुमित्रेषु दृष्टं, तदेककालं युगपत् अनेकेषु रूपज्ञानशब्दज्ञानगन्धज्ञानेषु वर्त्तते, एवं दृष्टं — तद् यदि एकपुरुषेऽपि बहूनि मनांसि स्युस्तदा तान्यपि युगपत् एकपुरुष एव रूपादिज्ञानेषु प्रवर्त्तेरन्, न तु प्रवर्त्तन्ते, तस्मादेकमेवैकपुरुषे मन इत्यर्थः। दीर्घां शष्कुलीं भक्षयतो युगपत् पञ्च ज्ञानान्युत्पद्यन्त इति तु ज्ञानं युगपदुत्पलपत्रशतव्यतिभेदज्ञानवद् भ्रान्तं, परमार्थतो युगपज्ज्ञानोत्पत्तौ हि सति विषयसन्निकर्षे सर्व्वदैव हि युगपज्ज्ञानानि स्युः। अत एव हि कारणात् महत्त्वमपि मनसो नास्ति, महत्त्वे हि सति युगपत् पञ्चेन्द्रियाधिष्ठानात् ज्ञानोत्पत्तिः स्यात्, न च भवति। तस्मादेकमणु च मन इति। यस्माच्चैकपुरुषे एकं मनोऽणुपरिमाणञ्च, तस्मात् कारणात् नैककाला सर्व्वेन्द्रियप्रवृत्तिर्न युगपदिन्द्रियाणि स्वविषयोपलब्धौ प्रवर्त्तन्त इत्यर्थः, इन्द्रियाणि मनोऽधिष्ठितानि प्रवर्त्तन्ते, तेन यदा मनश्चक्षुरधितिष्ठति तदा न घ्राणादीनि; एवं यदा घ्राणमधितिष्ठति तदा न चक्षुरादीनि।

**प्रवृत्तिः। यद्गुणञ्चाभीक्ष्णं पुरुषमनुवर्त्तते सत्त्वं तत्सत्त्वमेवोपदिशन्ति ऋषयो बाहुल्यानुशयात् * ॥ ३ ॥**

लब्धिरलाघुसञ्चारादिति।" तेन चाक्षुषादीनां ज्ञानानामयौगपद्यं प्रत्यक्षमुपलभ्यते। नास्ति हि प्रत्यक्षोपलब्धौ विप्रतिपत्तिः।

नन्वेवञ्चेत् सत्त्वमेकमेव भवति तस्मात् युगपदनेकेषु प्रवृत्तिरस्तु? स्वार्थेन्द्रियार्थसङ्कल्पव्यभिचरणाच्च। रजस्तमःसत्त्वगुणयोगाच्चानेकन्तु कथं भवति? केषाञ्चिद्धि मनो राजसम् आसुरादिभेदात्, केषाञ्चित् तामसं पाशवादिभेदात्, केषाञ्चिद् ब्राह्मादिभेदेन सात्त्विकमित्यत आह—यद्गुणमित्यादि। सत्त्वं मनः यो गुणो यस्य तत्। येन रजःप्रभृतिगुणेन युक्तं सदभीक्ष्णं पुनःपुनः पुरुषमनुवर्त्ततेऽनुबध्नाति तत् तद्गुणमेव सत्त्वं मन ऋषय उपदिशन्ति बाहुल्यानुशयात्। मनसस्त्रिगुणात्मकस्य सत्त्वबहुलात् सत्वसञ्ज्ञकस्यैकस्यैव त्रयाणां रजःप्रभृतीनामन्यतमस्य बाहुल्यानुवर्त्तनात्। एतेन रजस्तमःसत्त्वगुणयोगेनापि न सत्त्वस्यैकस्यानेकत्वं, यदस्य राजसं सत्त्वं कोपादिमत्त्वात्, तत् सत्त्वमधुना तामसं मोहादिमत्त्वात्, तदेव सत्त्वं सात्त्विकं शौचधर्म्मादिमत्त्वादित्येकस्वरूपत्वानपायादिति सूचितम्। यद्गुणञ्चेति चकारेण सत्त्वं यत् स्वार्थेन्द्रियार्थसङ्कल्पं सत् पुनःपुनः पुरुषमनुवर्त्तते तत्सत्त्वमेवोपदिशन्त्यृषयः। तद्यथा यदा यच्चिन्त्यते तच्चिन्तकं सत्त्वम्। यदा तत्सत्त्वं तच्चिन्त्यं स्वार्थं विहाय विचार्य्यमाणम्वर्त्तते तदा विचारकं सत्त्वं भवति। एवं मुखादिबोधकं व्याख्येयम्। एवं यदिन्द्रियार्थग्रहणे यदिन्द्रियं मे रयति तदा तत्सत्त्वमेव तदिन्द्रियार्थग्राहकं भवति। इत्येवं यदा सत्त्वं प्रतिपन्ने शत्रौ अयं मे शत्रुः जानामीत्येवं सङ्कल्पते तदा तत्सत्त्वं शत्रुसङ्कल्पकम्। यदयं मे बन्धुभवतीत्येवं सङ्कल्पते तदा बन्धुसङ्कल्पकं भवतीत्येवमेकमेव मनो भवति। न त्वनेकमिति निष्कर्षः ॥ ३ ॥

ननु यदैकस्मिन्नेव पुरुषे कदाचिद्रजोयुक्तं कदाचित् तमोयुक्तं कदाचित् सत्त्वयुक्तं मनो भवति, तत् कथमयं सात्त्विकोऽयं राजस इत्यादिव्यपदेशो भवतीत्याह—यद्गुणमित्यादि। येन गुणेन सत्त्वादिना युक्तं यद्गुणम्, अभीक्ष्णं पुनःपुनः, सत्त्वं मनोऽनुवर्त्ततेऽनुबध्नाति, तत् सत्त्वं सात्त्विकं राजसं तामसं वा उपदिशन्ति बाहुल्यानुशयात् भूरिसम्बन्धादित्यर्थः। एतदुक्तं भवति—सत्यपि गुणान्तरान्वये सत्त्वबाहुल्यात् सत्त्वकार्य्याणि सत्यशौचादीनि यस्य भवन्ति स सात्त्विक इति व्यपदिश्यते, एवमपरमपि व्याख्येयम् ॥ ३ ॥

---

* मुनयो गुणबाहुल्यानुशयात् इति चक्रपाणिधृतः पाठः।

**मनःपुरःसराणीन्द्रियाण्यर्थग्रहणसमर्थानि भवन्ति।**

गङ्गाधरः—नन्वेवमस्त्वनेकावस्थमेकमेव सत्त्वम्। कथं नैककाला सर्व्वेन्द्रियप्रवृत्तिरिति चेत्? न। चेष्टाप्रत्ययभूतत्वादिन्द्रियाणां सत्त्वयोनि, चेष्टाप्रत्ययभूतत्वं शरीराधिष्ठानेनात्मन इव मनसस्तेनासर्व्वेन्द्रियप्रवृत्तिरेककाला भवितुमर्हतीत्याशङ्कायामाह—मनःपुरःसराणीत्यादि। मनः पुरोऽग्रे सरति येषां तानि। अर्थग्रहणे समर्थानि अर्थग्रहणसमर्थानि भवन्तीति। एतेनैतदुक्तं भवति—यदात्मा बुद्ध्या गुणतो दोषतो वार्थमध्यवस्यन् वाञ्छयेप्सन् ग्रहीतुं प्रयत्नवान् भवन् मनसा संयुज्यते तदा तस्मिन्नर्थे सत्त्वं प्रवर्त्तितुमिच्छति। तदनन्तरं मनस्तदर्थस्येन्द्रियेण संयुज्यते तदा मनःसंयुक्तं तदर्थस्य तदिन्द्रियं ग्रहणे समर्थं शक्तं भवति। इतीन्द्रियाणां चेष्टायां तदिन्द्रियाधिष्ठानेन प्रयोजकव्यापारयुक्तं भवति। मनःप्रेरणमन्तरेण नेन्द्रियमर्थग्रहणाय प्रभवतीति। इत्यश्च मनसो लिङ्गं युगपज्ज्ञानाज्ञानं बोध्यम्। वक्ष्यति च कतिधापुरुषीये—“लक्षणं मनसो ज्ञानस्याभावो भाव एव च। सति ह्यात्मेन्द्रियार्थानां सन्निकर्षे न वर्त्तते॥” इति। गोतमेनाप्युक्तम्—“युगपज्ज्ञानानुपपत्तिर्मनसो लिङ्गम्”। इति। यदा चक्षुषा पश्यति न तदान्यैरिन्द्रियैरुपलभ्यन्ते शब्दादीनीति ज्ञानस्य चाक्षुषस्य भावः श्रोत्रादिकस्य ज्ञानस्याभावो युगपदेव भवति। इत्येतत् सर्व्वं दशेन्द्रियचेष्टाप्रयोजकव्यापारवत्त्वं, तेन च दशेन्द्रियाणां स्वस्वकर्म्मसु प्रवर्त्तने स्वपुरःसरणेन साधर्म्म्यविधायकत्वञ्चाधिकाधवस्त्वञ्चावस्थिकानेकत्वम्। अतोऽतिशयत्वञ्च मनसो बुद्धीन्द्रियेभ्योऽपि च कर्म्मेन्द्रियेभ्यः पञ्चभ्योऽतिशयेनेन्द्रियत्वं वैधर्म्म्यं दर्शितम्। इन्द्रियत्वन्तु खल्विन्द्रियस्यात्मनो ज्ञानक्रियान्यतरसाधकतमत्वम्। ज्ञानक्रिययोर्ज्ञानक्रियान्तरसाधकतमत्वेऽपि साध्यत्वेन लाभात् तुल्यत्वमर्थगम्यमेवेति नेन्द्रियत्वम्। साधकतमत्वं हि प्रयकार्य्यान्यतरसन्निकर्षेण ज्ञानक्रियायोजनकत्वमिति कश्चित्। स्वयं हि तदर्थात्मसम्पदायत्तचेष्टमिति लक्षणमिन्द्रियत्वाभिप्रायेण मनस उक्तम्। तेन ज्ञानकरणयोर्महदहङ्कारयोश्चेष्टावस्त्वाभावान्नेन्द्रियत्वम्। बोद्धव्यस्तु तयोरर्थः पञ्चभूतानान्तु अहङ्कारयोनिकत्वम्। “परं खादीन्यहङ्कार उपादत्ते यथाक्रमम्” इति वचने यथाक्रमपदेनाहङ्कारः साक्षादाकाशमुपादत्ते। आकाशः परिणतः सन्

चक्रपाणिः—उक्तं मनश्चेष्टाप्रत्ययभूतमिन्द्रियाणां तद् व्याकरोति। मनःपुरस्सराणि मनोधिष्ठितानि। पञ्चेन्द्रियाणि इत्युक्तं तद्विवृणोति—तत्र चक्षुरित्यादि। वक्ष्ये रूपं रूपवन्तञ्च

तत्र चक्षुः श्रोत्रं घ्राणं रसनं स्पर्शनमिति पञ्चेन्द्रियाणि। पञ्चेन्द्रियद्रव्याणि खं वायुर्ज्योतिरापो भूरिति॥

पञ्चेन्द्रियाधिष्ठानानि अक्षिणी कर्णौ नासिके जिह्वा त्वक् चेति। पञ्चेन्द्रियार्थाः शब्दस्पर्शरूपरसगन्धाः॥

वायुमुत्तरभूतमुपादत्ते। अत एवमहङ्कारादाकाशमाकाशान्मरुन्मरुतोऽग्निरग्नेर्जलं जलात् क्षितिरिति विरुध्यते इति भूतानामर्थो नास्ति यथा चात्मन इतीन्द्रियत्वम्। न चेत्यादिना चैकत्वमणुत्वञ्च साधर्म्यं दर्शितम्। नन्वेवंविधस्य मनसो नित्यत्वे नात्मप्रतिपत्तिहेतूनां सुखादीनां मनस्यपि सम्भवान्मन एवास्तु नात्मातिरिक्तो मनस इति चेत्? न; ज्ञाता ह्यात्मा, तस्य ज्ञानसाधनं मन इति प्रतीत्या ज्ञाता ज्ञानसाधनमिति संज्ञाभेदाच्चैतन्यमतिरिक्तं ज्ञाता चात्मा। मनस्तु तदुपपादकमिति तदर्थात्मसम्पदायत्तचेष्टमित्यनेनात्माधीनत्ववचनेन ख्यापितम्।

इत्येवं वैधर्म्येण पञ्चेन्द्रियाणि तथा साधर्म्येण षडिन्द्रियाणि व्यवस्थाप्य इत्येवं मनद्वयमनुमत्य बाह्येन्द्रियाभिप्रायेण पञ्चेन्द्रियाणीति यदुक्तं तद् व्याकरोति तत्रेत्यादि। तत्र पञ्चपञ्चकं सत्त्वञ्च यदुक्तं तेषु मध्ये, चक्षुरिति चष्टे रूपं, प्रकाशयति बुध्यतेऽनेनेति वा चक्षुः, शृणोत्यनेनेति श्रोत्रम्, जिघ्रत्यनेनेति घ्राणम्, रस्यतेऽनेनेति रसनम्, स्पृशत्यनेनेति स्पर्शनञ्चेति। अत्र सर्वेन्द्रियेषु बहुविषयकत्वात् प्राधान्याच्च चक्षुषः प्रागुपादानम्। स्पर्शनस्य सर्वेन्द्रियव्यापकत्वादन्तेऽभिधानम्। पञ्चेन्द्रियद्रव्याणीति आत्मकृतानि भूतानि पञ्च समस्तानि प्रत्येकमिन्द्रियाणामेकैकप्रधानानि द्रव्याणि। वक्ष्यति चात्र "पञ्चमहाभूतविकारसमुदायात्मकानां सतामिन्द्रियाणाम्" इति। शालाक्येऽप्युक्तम् "इन्द्रियाणि पञ्चैव। यथा श्रोत्रत्वग्घ्राणरसनैर्नेत्रेणापि समन्वितः"॥ इति।

पञ्चेन्द्रियाधिष्ठानानि इति। यदि चाक्षिणी द्वे चक्षुषः, कर्णौ द्वौ श्रोत्रस्य, नासिके द्वे घ्राणस्याधिष्ठानं तथाप्यक्षिगोलकत्वादिसामान्येनैकत्वेनैवोक्तम्। पञ्चेन्द्रियार्था इति। यद्यपि शब्दादयो बहवो भवन्ति, तथापि

प्रकाशयतीति चक्षुः, तच्चोभयनयनगोलकाधिष्ठानमेकमेव। शृणोत्यनेनेति श्रोत्रं, जिघ्रत्यनेनेति घ्राणं, रसयत्यनेनेति रसनं, स्पृशत्यनेनेति स्पर्शनम्।

इन्द्रियाणां प्राधान्येनारम्भकं द्रव्यमिन्द्रियद्रव्यम्। इन्द्रियेषु चक्षुरादौ निर्दिष्टं प्राधान्यात्, यदुक्तं शालाक्ये—श्रोत्रत्वग्घ्राणरसनैः श्रेष्ठैरपि समन्वितः। चक्षुर्वर्णोद्भवेऽोऽपि

शब्दत्वादिसामान्यादेकत्वेनोक्ता इति बोध्यम्। अत्राव्यक्तशब्दादयो नार्थाः। इन्द्रियाणां शब्दतन्मात्राद्याकाशादियोनिकानीन्द्रियाणि। नानतुल्ययोनिकत्वान्न गृह्णन्ति ह्याहङ्कारिकत्वात्. तस्माद्व्यक्ताः कार्य्यभूता भौतिकाः शब्दादयः श्रोत्राद्यर्थाः प्रत्यक्षीभवन्ति। नाकाशो न चाव्यक्तः शब्दः, आहङ्कारिकत्वात् परमाणुत्वाच्च। श्रोत्रादीन्द्रियं हि खल्वाहङ्कारिकेन्द्रियानुप्रविष्टपाञ्चभौतिकत्वेन। ततो महत्। न हि महत् स्वस्मादणुन् ग्रहीतुं शक्नोति। एवं परत्रापि व्याख्येयम्। स्पर्शोऽपि व्यक्त एवार्थसंज्ञः, नाव्यक्तः स्पर्शः। स चाहङ्कारिक एव परमाणुरूपो न प्रत्यक्षीभवति. व्यक्तश्च प्रत्यक्षीभवतीति प्रागवत्। वायुस्तु महाभूतस्पर्शमात्रसहित एवाहङ्कारादुत्पन्नः शब्दमात्रसहिताकाशवत्। स च परमाणुरूपो नोपलभ्यते. व्यक्तश्चोपलभ्यते। रूपमपि व्यक्तमेवार्थो नाम न त्वव्यक्तमाहङ्कारिकत्वात् सूक्ष्मं नोपलभ्यते व्यक्तञ्च प्रत्यक्षं भवति। तेजो महाभूतरूपमात्रसहितमेवाहङ्कारादुत्पन्नं न प्रत्यक्षीभवति। चक्षुरर्थश्च तस्मान्न भवति। रसस्तु खलु व्यक्तः परमाणुरूपोऽव्यक्तो न रसनार्थः; तत्र व्यक्तो रसः प्रत्यक्षीभवति, न त्वव्यक्तः। आपो हि रसमात्रसहिता अहङ्काराज्जाता न प्रत्यक्षीभवन्ति परमाणुरूपत्वात्। गन्धोऽपि व्यक्तो घ्राणार्थः सूक्ष्मो नोपलभ्यते. व्यक्तस्तु प्रत्यक्षीभवति। पृथिवी नाम महाभूतञ्च गन्धमात्रसहितैवाहङ्काराज्जाता सूक्ष्मा तत्स्थाना पञ्चभूतयोनिका. घ्राणमिन्द्रियमिति नाव्यक्तो गन्धोऽर्थः।

अत्रायमभिसन्धिः पञ्च तन्मात्राण्यतिसूक्ष्माणि पूर्व्वतरमभवन्। ततः शब्दतन्मात्रं कालदिग्व्यापकीभूय स्थूलीभूतमप्रतिघातलक्षणमाकाशमभवत्। तेन व्याप्तत्वात् तदन्तर्व्वर्त्ती स्पर्शतन्मात्रवायुरेकादशैकांशाकाशानुप्रविष्टः स्पर्शशब्दसहित एव वायुरभवत्। तस्मादेष द्व्यात्मके स्पर्शः शीतो वायुयोनिक एव। अतो व्यक्तः स्पर्शो भवति। स्पर्शनेन्द्रियञ्च वायुयोनिकं न स्पर्शं गृह्णाति. नाव्यक्तं स्पर्शं भिन्नयोनित्वात्। एवमाकाशव्याप्तवायुव्याप्तत्वात् तदन्तरवस्थितं रूपतन्मात्रं महाभूतं तद्वायोरेकादशैकांशानुप्रविष्टं शब्दस्पर्शाभ्यां सहितमेवाभवत्। ज्योतिस्तत्र लोहितमेव व्यक्तं रूपं स्पर्शस्तेनोष्णमभवत्। एवमाकाश-

नरदक् कुम्भसन्निभः॥" इति। इन्द्रियद्रव्यनिर्द्देशे तु त्वागिन्द्रियत्वेन निर्द्देशः कृतो वक्ष्यमाणेन "महाभूतानि खं वायुरग्निरापः क्षितिस्तथा" इति ग्रन्थक्रमानुरोधेन। इन्द्रियाधिष्ठानमिन्द्रियाश्रयः; यद्यपि चाक्षिणी कर्णौ नासापुटे द्वे तथाप्येकेन्द्रियाधिष्ठानत्वेनैकत्वमेवेति कृत्वा "पञ्च" इत्युक्तम्।

व्याप्तवायुव्याप्ततेजोव्याप्तत्वादभ्यन्तरस्थितं रसतन्मात्रं महाभूतं तज्जलोतिष एकादशैकांशानुप्रविष्टं शब्दस्पर्शरूपैः सहितमेवाभवज्जलम्, ततो मिलित-मधुरादिरसतया साधारणरसत्वेनाव्यक्त एव व्यक्तो रसः, न त्वन्योऽस्तीति। अत्र स्पर्शश्च शीतः रूपञ्च शुक्लमभिव्यज्यते द्रवत्वञ्च । एवं खव्याप्तवायुव्याप्त-तेजोव्याप्तजलव्याप्तत्वेन तदन्तर्गतं गन्धतन्मात्रं महाभूतं तज्जलैकादशैकांशानु-प्रविष्टं शब्दस्पर्शरूपरसैः सहितमेवाभवत् पृथ्वी । तत्र साधारणो व्यक्त एवाव्यक्तो गन्ध इति । अत्र स्पर्शश्च खरः रूपं कृष्णः रसश्चाव्यक्तः साधा-रणः दिगाकाशयोगात् स्थूलशब्दगुणविशिष्टस्वरूपमाकाशमिदं स्थूलं शब्दगुण-शीतस्पर्शगुणविशिष्टस्वरूपः पवनः । तथा शब्दोष्णस्पर्शरक्तरूपगुणैर्विशिष्ट-स्वरूपं तेजः । तथा शब्दशीतस्पर्शशुक्लरूपसाधारणरसगुणविशिष्टस्वरूपा आपः । तथा शब्दखरस्पर्शकृष्णरूपसाधारणरसगन्धगुणैर्विशिष्टलक्षणा पृथिवी । इति यथा लोके तथा पुरुषेऽपि, तस्मादित्येषां शब्दादीनां तुल्ययोनिकानि श्रोत्रा-दीनीन्द्रियाणि ग्रहीतॄणि भवन्ति न शब्दमात्रादीनामिति ।

इत्येवं तत्त्वमविद्वांस एवानुमत्य इदं यद्वदन्ति तन्न । तद् यथा पञ्चानां महाभूतानां खादीनां द्विधा विभक्तीभूतानां प्रत्येकमर्द्धांशमेकं चतुश्चतुरंशीभूतं प्रत्येकमपरार्द्धांशे प्रवेशात् [illegible]त्मकत्वे त्विदमाकाशमयं वायुरयं वह्निरिदं जलं यत् पीयते एषा च पृथ्वी स्थूलरूपा बभूव । एतदर्थं श्लोकः कृतः—"द्विधा विधाय चैकैकं चतुर्द्धा विभजेत् पुनः । स्वस्वेतरद्वितीयार्द्धे योजना पञ्चपञ्चता ॥" इति । अथ पृथिव्यादिष्वेषु पञ्चसु गुरुत्वादयो गुणा अव्यक्ता एव वर्त्तन्ते । ततो नानाप्यरूपाः इष्यन्ते । कार्य्ये त्वारभ्यमाणेऽन्योन्यानुप्रवेशादन्योन्यानु-ग्रहादावर्त्तमानेभ्य एव पृथिव्यादिभ्यस्त एव गुरुत्वादयोऽभिव्यक्ता भवन्तीति । सर्व्वं विशिष्टं यत्किञ्चिद् घटपटादिकं स्थावरं देवनरराक्षसादिकञ्च जङ्गमं तेषु सर्व्वगुणा वर्त्तन्ते । पाञ्चभौतिकानां शब्दादयः पञ्चपञ्चेन्द्रियार्था इव न गुरुत्वादयो घ्राणाद्यर्थाः । पृथिव्यादिष्वव्यक्तत्वेन वर्त्तनेऽपि तद्योनिक-त्वाभावादभिव्यक्तौ गन्धरसादीनां व्यक्तत्वेन गन्धतन्मात्रपृथिव्यादिषु सद्भावान्मधुरादिविशेषाभिव्यक्तौ खादियोगेऽपि चान्ययोनिकत्वाभावाद्रसनादि-ग्राह्यत्वमिति । एतेन द्रव्यप्रत्यक्षे सन्निकर्षविशेषं कल्पयतां वैशेषिकाणां वचनं विस्तरेण पञ्चेन्द्रियबुद्धिव्याख्याने दर्शयितव्यम् ।

इन्द्रियार्था इन्द्रियविषयाः । स्पर्शग्रहणेन स्पर्शस्य स्पर्शाश्रयस्य च द्रव्यस्य स्पर्शैकार्थ-समवेतस्य च परिमाणादेः स्पर्शग्राह्यस्य ग्रहणम् ; एवं रूपादिषु च ग्राह्यम् ।

पञ्चेन्द्रियबुद्धयश्चक्षुर्बुद्ध्यादिकाः । ताः पुनरिन्द्रियेन्द्रियार्थसत्त्वात्मसन्निकर्षजाः, क्षणिका निश्चयात्मिकाश्च । इत्येतत् पञ्चपञ्चकम् ॥ ४ ॥

पञ्चेन्द्रियबुद्धय इति । चक्षुर्बुद्ध्यादिकाः—चक्षुषा सर्वानिग्राह्यग्रहणाभ्यां जाता बुद्धिश्चक्षुर्बुद्धिः । आदिना श्रोत्रबुद्धिः घ्राणबुद्धी रसनबुद्धिः स्पर्शनबुद्धिश्चेति पञ्चेन्द्रियबुद्धय इति । नन्विन्द्रियेभ्यो बुद्धयः कथमुत्पद्यन्त इत्यत आह—ताः पुनरित्यादि । इन्द्रियाणि पञ्च चक्षुरादीनि । इन्द्रियार्थाः पञ्च निरुक्ताः शब्दादयः । सत्त्वं मनः । आत्मा पुनश्चेतनाधातुः । तेषां सन्निकर्षः सान्निध्यमतिसन्निकर्षादिरहित्यं, तस्माज्जायन्ते इति तथा । परमते सत्त्वस्येन्द्रियत्वानुमतत्वे स्वमते चेन्द्रियत्वाभावेन इन्द्रियेन्द्रियार्थाभ्यामुत्तर सत्त्वस्य ग्रहणात् मनःपुरःसराणीत्यादिवचनाच्च चक्षुरादिमत्यर्थकेन्द्रियस्य तदर्थसन्निकर्षे सत्त्वात्मनोः सन्निकर्षाधीनत्वं ज्ञापितम् । मानसमात्रबुद्धिरत्र नष्टा सत्त्वार्थसन्निकर्षावचनात् । स्वमते चेन्द्रियत्वाभावान्नेन्द्रियोपक्रमे निर्दिष्टा मानसी बुद्धिः पृथक् च वक्ष्यते । ततो न प्रतिषिद्धा । तथा च चक्षुश्चक्षुरर्थसत्त्वात्मसन्निकर्षजा चक्षुर्बुद्धिः । श्रोत्रश्रोत्रार्थसत्त्वात्मसन्निकर्षजा श्रोत्रबुद्धिः । घ्राणघ्राणार्थसत्त्वात्मसन्निकर्षजा घ्राणबुद्धिः । रसनरसनार्थसत्त्वात्मसन्निकर्षजा रसनबुद्धिः । स्पर्शनस्पर्शनार्थसत्त्वात्मसन्निकर्षजा स्पर्शनबुद्धिरिति । तत्र सन्निकर्षस्तु खलु सन्निधानम् । तच्च तत्तदिन्द्रियतत्तदिन्द्रियार्थयोः प्रभावपरिमाणाभ्यां यावन्तं देशं व्याप्य प्रसराभिव्यक्ती स्यातां तावद्देशाव्यवधानम् । तथा सन्निकर्षे सम्भवति चात्मनस्तदर्थग्रहणे प्रवृत्तिजातमनःसन्निधानं सन्निकर्षः । तेन प्रवर्त्तितसत्त्वस्य तदिन्द्रियाभिधारणं सन्निकर्षः । तेनेन्द्रियं तत्रार्थं ग्रहीतुं चेष्टत इत्येवमात्मप्रवृत्तिनियुज्यमानमनःप्रसारप्रजुष्टयादिन्द्रियार्थसन्निकर्षेण यज्ज्ञानं जायते सा तदिन्द्रियबुद्धिः ।

नन्वेवमुक्त इन्द्रियेन्द्रियार्थसन्निकर्षः कः पदार्थ इति चेत् ? तत्र केनचिदुच्यते इन्द्रियाणि द्रव्याणि पाञ्चभौतिकत्वात् । अर्थास्तु गुणाः । तैः

असाधारणेन कारणेनेन्द्रियेण व्यपदिष्टा बुद्धय इतीन्द्रियबुद्धयः ; चक्षुषाऽसाधारणेन कारणेन जनिता बुद्धिश्चक्षुर्बुद्धिः ; एवं श्रोत्रादिबुद्धिषु वाच्यम् । इह चक्षुर्बुद्धिरादावुपदिश्यते चक्षुर्बुद्धेरेव बहुविषयत्वात् । इन्द्रियबुद्ध्युत्पादसामग्रीमाह—ताः पुनरित्यादि ।

सह तेषामसंयोगाख्यपृथग्भावभिन्नापृथग्भावो योनिरुक्तः समवायः। स एवेन्द्रियेन्द्रियार्थसन्निकर्षः. न तु संयोगः। वक्ष्यते ह्यात्रेयभद्रकाप्यीये—
"योगः सहसंयोग उच्यते। द्रव्याणां द्वन्द्वसर्व्वैककर्म्मजोऽनित्य एव च॥"
इति। तेन द्रव्याणां सहयोगः संयोगः। न ह्यत्रार्थसंज्ञकानि द्रव्याणि शब्दादीनामर्थसंज्ञत्वेन निर्द्देशः। पाञ्चभौतिकस्येन्द्रियप्रतिनियतद्रव्यस्याभावादेकेन्द्रियग्राह्यत्वाभावाच्च। तद्यथा घटादिकं द्रव्यं पाञ्चभौतिकं शब्दादि गगनगुणवत् स्पर्शादिवायुगुणरूपादितेजोगुणरसादिजलगुणगन्धादिपार्थिवगुणसमुदयात्मकं कथं पश्यति कथं वा जिघ्रति कथं रसयति कथं स्पृशतीति। तस्मात् यदा घटं पश्यतीति प्रयुज्यते तदा घटरूपं पश्यतीत्यर्थः। घटं स्पृशति घटस्पर्शं स्पृशति। रसयति घटरसम्। जिघ्रति घटगन्धम्। शृणोति घटशब्दमित्येवार्थः स्यात्। अतः शब्दादय एवार्था न तु द्रव्याणि। भूतान्यपीमानि पाञ्चभौतिकानीति न तेषां संयोगः सन्निकर्ष इति। न च त्वग्रसनयोः स्पृश्याद्ययोः संयोगे सम्भवति च नयनघ्राणश्रवणानां दृश्यघ्रेयश्राव्यसंयोगः सम्भवति। अपरञ्च सर्व्वेन्द्रियव्यापकस्पर्शनस्याधिष्ठानत्वचः संसर्गमन्तरेण शब्दस्यापि प्रत्यक्षं न भवति। शब्दप्रत्यक्षे समवाय एव सन्निकर्षः भवतां मतेऽपि सिध्यति यथा तथा रूपादिप्रत्यक्षेऽपि समवायः सन्निकर्षः स्यात् कात्यनुपपत्तिर्नास्ति। सर्व्वत्र रूपादौ चक्षुरादेः स्वसंयुक्तस्पर्शनेन्द्रियसंयुक्तत्वक्समवायः सन्निकर्षः स्पर्शप्रत्यक्षे तु स्पर्शनेन्द्रियस्य स्वसंयुक्तत्वक्समवायः स्पर्शं स्प्येषां स्पर्शकृतो भावविशेषः सन्निकर्षः। त्वक्समवायः शब्दादीनां त्वचः पवनाधिकपाञ्चभौतिकत्वेन स्पर्शग्राहिता। न तु सर्व्वेषां समयोनित्वाभावादाधिक्येन पुनः स्पर्शग्रहणमस्पृश्यस्याप्रतिघातस्याकाशस्य च स्पर्शविपर्य्ययस्य ग्रहणम्। सर्व्वेषामर्थानां विपर्य्यया हि भावास्तदर्थग्राहकेन्द्रियविशेषया अनुमानेन. कश्चिदाह प्रत्यक्षेण। कट्वादिरसस्यापि रसनावच्छेदे त्वचो ग्रहणमिति नाशङ्काम्। तेषामौष्ण्यादिस्पर्शानां कट्वादिरससहावस्थितानां त्वचा ग्रहणात् एतेनैव सन्निकर्षेण तद्भावस्य तदिन्द्रियेण ग्रहणात् तद्भावविपर्य्ययस्याप्यभावस्वरूपभावस्य तथासत्तया ग्रहणं भवत्येव। इत्थञ्च संयोगादीनामपि चक्षुःप्रत्यक्षग्रहणमाश्रयप्रत्यक्षग्रहणपरम्परया साक्षादेव वा तेनैव सन्निकर्षेण स्पर्शनकृतेन तद्ग्रहणं भवति तथास्वभावादिति।

सन्निकर्षः सम्बन्धः, स च क्वचित् संयोगः क्वचित्समवायः; तेन चक्षुर्घटयोरात्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन; श्रोत्रशब्दौ तु श्रोत्रशब्दयोः समवाय इति विशेषः।

द्रव्यस्थानां शब्दस्पर्शरूपरसगन्धानां श्रोत्रादिसंयुक्तस्पर्शनाश्रयत्वक्समवायेन प्रत्यक्षम् । तथा समवेतसमवायेन चाक्षुषप्रत्यक्षम् । "द्रव्याणां तद्द्रव्यगता गुणकर्म्मजातयस्तु तथा समवेताश्रयसमवायेन प्रत्यक्षेणोपलभ्यन्ते ।" इति । गौतमेनाप्येवमुक्तम् । "गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः" इति । अत्र तदर्था इति घ्राणादीन्द्रियार्था इत्यर्थः । अत एवाधुनिकाः प्रमादिनस्तु "सन्निकर्षाः सहकारिणः । ते च द्विविधा लौकिकालौकिकभेदात् । तत्र लौकिकसन्निकर्षाः संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायो विशेषणता चेति षट् । तत्र द्रव्यं संयोगेन शब्देतरगुणः कर्म्म च द्रव्यगता जातिश्च संयुक्तसमवायेन भवति हि घटादिकं चक्षुरादिसंयुक्तं तत्र समवेता रूपादिकस्पन्दद्रव्यत्वजातय इति । शब्दान्यगुणकर्म्मगता जातिः संयुक्तसमवेतसमवायेन भवति हि चक्षुरादिसंयुक्तं घटादिकं तत्र समवेतं रूपादिकर्म्म च । तत्र समवेता रूपत्वादिकर्म्मत्वादिजातयः । शब्दः समवायेन कर्णशष्कुल्यवच्छिन्नेनाकाशे शब्दस्य समवायात् । शब्दगता जातिः समवेतसमवायेन । श्रोत्रसमवेतशब्दे शब्दत्वस्य समवायात् । समवायोऽभावस्य विशेषणतया तत्र संयोगसमवाययोरसम्भवात् । सा च द्विधा—इन्द्रियविशेषणता इन्द्रियसन्निकृष्टविशेषणता च । तत्राद्यया शब्दाभावो गृह्यते श्रवणेन्द्रिये तस्य विशेषणत्वात् । अन्त्यया च भूतलादौ घटाद्यभावः । इन्द्रियसन्निकृष्टभूतले तस्य विशेषणत्वात् । तत्रान्त्या तु बहुधा लौकिकसन्निकर्षस्य बहुविधत्वात् । अत्र लौकिकसन्निकर्षमहत्त्वोद्भूतरूपा आलोकात्मपनइन्द्रियार्थास्तु लौकिकप्रत्यक्षहेतवः । न तु प्रत्यक्षमात्रे ज्ञानलक्षणादिना वस्तुमात्रस्यैव प्रत्यक्षोत्पत्तेः । प्रत्यक्षस्य लौकिकत्वं तु नेन्द्रियसंयोगादिजन्यत्वमात्राश्रयात् । नापि विषयजन्यत्वं ज्ञानलक्षणाद्यजन्यत्वं वा तज्जन्यतावच्छेदकापरिचयात् । किन्तु विषयता विशेषः । जातेरांशिकत्वोपगमे चाक्षुषत्वादिजातिविशेषो वेति । ननु संयोगो न सन्निकर्षः संयुक्तसमवायेन घटादिग्रहसम्भवात् । इन्द्रियसंयुक्ते हि कपालाद्यवयवे घटादीनां समवायादिति चेत् ? न । आत्मनि तदसम्भवात् । आत्मनो हि न समवेतत्वमिति ।

क्षणिका क्षयाशुतरविनाशिन्यः, न तु बौद्धाभिमतक्षणिकत्वे कक्षणावस्थायिन्यः; निश्चयात्मिका वस्तुस्वरूपपरिच्छेदात्मिका, क्षणिकत्वेऽपि वस्तुपरिच्छेदकत्वं प्रदीपार्च्चिर्ज्वलनवद् बुद्धीनामविरुद्धमित्यर्थः ॥ ४ ॥

अथैतद्द्रव्यस्य मानसज्ञानं प्रति संयोगस्य हेतुत्वेऽपि द्रव्यचाक्षुषादौ चक्षुःसंयोगादेर्हेतुत्वं न स्यात्। चक्षुरादिसंयुक्तसमवायादेव द्रव्यचाक्षुषादुपपत्तेरिति चेत्? न। चक्षुःसंयुक्तसमवायो हि चक्षुःसंयुक्तमहदुद्भूतरूपवद्द्रव्यसमवायः। इतरथा चक्षुःसंयुक्तपरमाणुसमवायेन द्रव्यत्वादिग्रहापत्तेः। घटादौ महत्त्वसमानाधिकरणस्यापि तत्र सत्त्वात्। तेन च त्रसरेणुप्रत्यक्षे व्यभिचारात्। द्रव्येतरद्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायस्य हेतुत्वमिति। द्रव्यचाक्षुषे चक्षुःसंयोगोऽवश्यं सन्निकर्षः। एतेन संयुक्तसमवायो न सन्निकर्षः। संयुक्तसमवेतसमवायादेव घटरूपादीनां ग्रहणसम्भवादिति च निरस्तं. चक्षुःसंयुक्तपरमाणुसमवेतसमवायेन परिमाणत्वादिप्रत्यक्षापत्त्या चक्षुःसंयुक्तमहदुद्भूतरूपवद्द्रव्यसमवेतसमवायोऽपि सन्निकर्षो वाच्य इति स च न द्रव्यसमवेतचाक्षुषमात्रे हेतुः, त्रसरेणु-तद्रूपादिग्रहे व्यभिचारात्; किन्तु द्रव्येतरसमवेतचाक्षुष एवेति। अथान्धकारस्थघटादिकं कथं चक्षुषा नोपलभ्यते चक्षुःसंयोगरूपसन्निकर्षसत्त्वात्? उच्यते। चक्षुषा द्रव्यग्रहे महदुद्भूतरूपवदालोकसंयोगः सहकारी हेतुर्न च सोऽस्त्यन्धकारस्थघटे इति। महदुद्भूतरूपयोर्हेतुत्वन्तु परमाणुतेजसि चक्षुःसंयोगव्यवच्छेदार्थमवश्यं स्वीकर्त्तव्यमिति। ननु चक्षुषा तेजःप्रत्ययो न स्यात् तत्र तेजःसंयोगाभावात्; प्रदीपे हि तत्प्रभासंयोगोऽस्तीति चेत्? न. मणिप्रभादौ तदभावात्। दृश्यते च महान्धकारे चन्द्रकान्तादिमणिविशेषप्रभा। अथालोकेतरद्रव्यचाक्षुषं प्रति आलोकः सहकारीति चेत्? न। महान्धकारे सुवर्णरूपतेजःसाक्षात्कारापत्तेः। अत्रोच्यते द्रव्यचाक्षुषमात्रे आलोकसंयोगो हेतुः। न चालोकचाक्षुषे व्यभिचारः आलोकाकाशसंयोगस्यालोके सत्त्वात् तस्य तन्निष्ठत्वात्। न चैवमन्धकारे स्वर्णसाक्षात्कारापत्तिः, अनभिभूतरूपवदालोकसंयोगस्यैव हेतुत्वात्, सुवर्णरूपं ह्यभिभूतम् अन्यथा सौवर्णरूपस्यालोकसंयोगतो द्रव्यान्तरप्रत्यक्षापत्तेरिति। अथ यदि समवायाभावौ न स्तस्तदा विशेषणता न सन्निकर्षः स्यात्। वस्तुतो हि वर्त्ततेऽभावोऽप्यतिरिक्तः समवायश्च सर्व्वमतसिद्ध एवेति। षडेव लौकिकसन्निकर्षा भवन्ति। अलौकिकस्तु सन्निकर्षस्त्रिविधः सामान्यलक्षण-ज्ञानलक्षण-योगजभेदात्। तत्र सामान्यं यावद्घटादीनां सन्निकर्षः एकघटादिप्रत्यक्षेण निखिलघटादीनां प्रत्यक्षजनकं हि तद्घटादिस्थघटत्वादिकमिति। ज्ञानं पूर्व्वं यद्दण्डवतस्तस्यैव पुरुषस्य तद्दण्डरहितस्य प्रत्यक्षज्ञानं तद्दण्डज्ञानजनकमिति विशिष्टज्ञानं वैशिष्ट्यज्ञाने

सन्निकर्ष इति। योगजस्तु सन्निकर्षो द्विविधः युक्तो युञ्जानश्च। तत्र स युक्तः सन्निकर्षो येन सर्व्वदैव सर्व्वेषां भावानां याथार्थ्येनाववोधः स्यात्। येन पुनः सन्निकर्षेण ध्यानधारणादिसहकारेण सर्व्वेषां भावानां याथार्थ्येनाववोधः स्यात् स वै युञ्जानः सन्निकर्षः। इति भाषन्ते. तन्न सङ्गतं, प्रागुक्तरीत्या पर्य्यालोचनात्। इन्द्रियस्य स्वार्थे सान्निध्ये सति तदर्थग्रहणे तदर्थप्राप्तिर्हि समवायादिना भवति। तस्मात समवायादिस्तदर्थग्रहणे करणव्यापारो न तु सन्निकर्षः। अर्थप्राप्तिपूर्व्वकं ह्यर्थग्रहणमिन्द्रियाणामिति तद्विस्तरेण तिस्रैषणीये व्याख्यास्यते। गौतमाद्याप्तोक्ततन्त्रविरोधदर्शनाच्च। तत्र हि पञ्चेन्द्रियार्थाः पञ्चेन्द्रियाणि. तेषु तत्तदिन्द्रियार्थयोः सन्निकर्षोत्पन्नज्ञानं. तच्चेदव्यपदेश्यमव्यभिचारि व्यवसायात्मकं स्यात् तदा तज्ज्ञानं प्रत्यक्षमिति इष्यते। नापि तदानुभविकम्। अनुभूयते हि नेन्द्रियद्रव्ययोः संयोग इति। चक्षुषाऽग्निं पश्यतीत्यादौ वह्नि-चक्षुषोः संयोगे सम्भवति चक्षुर्दग्धत्वप्रसङ्गः स्यात। यदि च वह्न्यादिदृगतेन शीतालपतानुभवे यादृशशक्तिमत्तया वह्न्यादेरोष्ण्यं यावद्देशं व्याप्नोति तावद्देशे तादृशशक्तिमत्तया तादृशघनाघनवह्न्यादिसंयोगः स्यात् तत्र यादृशसन्निकर्षः स्यात् तादृशदाहोपलम्भः स्यादिति। नहि तथास्तु। द्रव्यसंयोगस्तु न सम्भवति इन्द्रियाणां त्वचा व्यवहितत्वात्। यदि वात्र व्यक्तव्यः संयोगोऽयं तु संयोगजः, संयोगः यथा तरुकुम्भकपालसंयोगेन तरुकुम्भयोः संयोग इति। नहि पतज्जलं पश्यति चक्षुषा चक्षुष इत्यादौ चक्षुरवधिकविभागशान्तिजलचक्षुषोः संयोगः किं सम्भवतीति ? अतः संयोगो न सन्निकर्षः। तत्सन्निकर्षेणापि द्रव्याणां न प्रत्यक्षम्। द्रव्याणामिन्द्रियार्थत्वेन गौतमादिभिः सर्व्वमहर्षिभिरनुक्तत्वादतुल्ययोनिकत्वेनाप्रतिनियतविषयत्वप्रसक्तिदोषात् इन्द्रियार्थसन्निकर्षोत्पन्नं हि ज्ञानं तच्चदव्यपदेश्यमव्यभिचारि व्यवसायात्मकं तत् प्रत्यक्षमित्युक्तमिति। ततः सुतरां न संयुक्तसमवायोऽपि सन्निकर्षो जातेरिन्द्रियार्थत्वेन गौतमाद्यनुक्तत्वात्। न च जातेः प्रत्यक्षम्। आकृतिजातिलिङ्गाख्येति गौतमोक्त्या। द्रव्यनिष्ठा हि जातिराकृत्याऽनुमीयते। अतः सुतरां संयुक्तसमवेतसमवायोऽपि न सन्निकर्षः। कर्म्मत्वगुणत्वजात्योरतुल्ययोनिकत्वात् इन्द्रियार्थत्वाभावात्। तेन सन्निकर्षेणापि न च तयोः प्रत्यक्षम्। परन्तु अर्थापत्त्यादिना गुणत्वकर्म्मत्वयोः ज्ञानादिति। व्यक्तिर्गुणविशेषाश्रया, मूर्त्तिस्तु द्रव्यम्। तन्निष्ठैवाकृतिर्न च मूर्त्तिः। परन्तु मूर्त्तिसंस्थारूपा द्रव्यनिबन्धना द्रव्यमयव्यक्तेः प्रकाररूपः

स्वरूपविशेषस्तद्द्रव्यगतरूपदर्शनेनैव प्रत्यक्षेणोपचर्य्यते। व्यक्तिश्च तत्रूपादि-दर्शनेन प्रत्यक्षतयोपचर्य्यते।

अथ समवायोऽपि न सन्निकर्षः। शब्दादीनां मृदङ्गादितः पुनरभिव्यक्त्यव्यक्तिभ्यां श्रोत्रादिषु शब्दादिसमवायस्यापि पुनःपुनरुत्पत्तिविनाशापत्तेः, तथात्वे चानित्यत्वापत्तेः। नित्यत्वानित्यत्ववादेऽपि हि महान्धकारनिशि स्वदेहदर्शनानर्हायामत्युद्धं नक्षत्रं पश्यति नात्मदेहमिति प्रतीत्या नक्षत्ररूपचक्षुषोर्न समवायः सम्भवति। न हि प्रबलान्धकारेणाभिभूतं स्वदेहरूपं तन्नक्षत्रालोकेनापि तदन्धकाराभिभूतत्वान्न द्रष्टुं शक्यते। न च कियद्दूरमूर्द्धं चक्षुस्तः प्रसरज्ज्योतिषा कियथः प्रसरन्नक्षत्ररूपस्य समवायः सम्भवति। यतश्च तज्ज्योतिषा समवायेनैकीभूतं नक्षत्ररूपं सत्त्वम्। कथमन्यः पुमांस्तन्नक्षत्रं पश्यति? कुतो वाल्पचक्षुर्ज्योतिरन्यः पुमांस्तन्नक्षत्रं न पश्यति? इति वस्तुतत्त्वं पर्य्यालोच्यते। चक्षुर्ज्योतिः किं चक्षुरेव? किं वा चक्षुषो रूपं? न च चक्षुः। द्रष्ट्चक्षुषोरभ्यन्तरं गच्छता कठिनद्रव्येण चक्षुःप्रतिघातापत्तेः। नापि चक्षुषो रूपमेकजातीयगुणसमवायस्य तद्गुणाश्रयद्रव्यद्रव्यमन्तरेणासम्भवात्। सम्भवो हि कार्य्यारम्भकाणामनेकद्रव्याणां संयोगेन विभिन्नगुणानां सजातीयगुणसमवायेनैव विशिष्टतत्तद्गुणं द्रव्यं तद्बहुगुणमिति। ततः प्रसरणमिन्द्रियगुणानां. किन्तु स्वस्थानस्थमेवेन्द्रियं स्वस्वार्थ-ग्रहणशक्त्यधिकत्वानधिकत्वाभ्यां कश्चित् पुंसि दूरस्थमर्थ गृह्णाति, कश्चित्तु पुंसि न गृह्णातीति निष्कर्षः। अथालोकमहत्त्वोद्भूतत्वानां हेतुत्वकल्पने गौरवमभिभवादिराहित्यं हि सन्निकर्ष इत्येवं व्याख्यानावश्यकत्वात्। न हि अभिभवातिसन्निकर्षातिविप्रकर्षातिसौक्ष्म्यकरणदौर्बल्यमनोऽनवस्थानावरण-समानाभिहारात् प्रत्यक्षमिति। तमसाऽभिभवाद्रूपस्यालोकाभावे प्रत्यक्षं न स्यात्। सौक्ष्म्यान्महत्त्वाभावे च प्रत्यक्षं न स्यात्। ततोऽनुद्भूतानां न प्रत्यक्षमिति। आलोकादित्रयवचनं शेषाणामलाभान्न्यूनत्वमिति। सुतरां समवेतसमवायोऽपि न सन्निकर्षः। विशेषणता तु तदा सन्निकर्षः समवायस्य प्रत्यक्षं स्यात्। प्रकृते हि तस्य तन्नास्तीति। अतो गौतमादिभिः सन्निकर्ष इत्युक्तम्। इन्द्रियार्थत्वाभावेन तत्रेन्द्रियसन्निकर्षेणापि विशेषणत्वेन प्रत्यक्षाभावात्। तस्मादतिसूक्ष्मत्वातिसन्निकर्षातिविप्रकर्षाविशदद्रव्यावरणकरण-दौर्बल्यमनोऽनवस्थानसमानाभिहरणाभिभवानां प्रतिबन्धकानां विरहे सति सन्निधानं सन्निकर्षः, तस्मिन् सति चेतःसमवायिसर्व्वेन्द्रियव्यापकस्पर्शने-

न्द्रियार्थस्पर्शकृतेन मात्रविशेषणार्थं इन्द्रियेण गृह्यते। ततस्तदर्थज्ञानमुत्पद्यते। इत्येवमिन्द्रियार्थसन्निकर्षोत्पन्नमुच्यते ज्ञानम्।

अथालौकिकः सन्निकर्षो नास्ति गौतमाद्यनभिमतत्वात्। न हि सामान्यं घटत्वादिकं निखिलघटादिप्रत्यक्षे सन्निकर्षः। परोक्षविनष्टघटादिकमजानतां परोक्षविनष्टघटादीनामपि प्रत्यक्षापत्तेः। तथा गाङ्गपुष्करादिजलावगाहनफलस्य कूपादिजलस्पर्शनेनापत्तेः, स्वदारोपगमने सर्व्वनार्य्युपगमनापत्तेश्च। नापि विशेषणविशिष्टयोर्विशिष्टवैशिष्ट्यावगाहि ज्ञानं सम्बन्धविशेषेण प्रत्यक्षे सन्निकर्षः। यतः प्राग्दृष्टः खड्गधरो यस्त्यक्तखड्गस्य तस्य दर्शनेन तत्खड्गस्य स्मरणं न तु प्रत्यक्षम्। न वा तत्पुरुषात् त्यक्तखड्गात् पूर्व्वतद्भयादि फलमिति।

न चापि योगजः सन्निकर्षः। सर्व्वभावाणां याथार्थ्येन प्रत्यक्षे तपोबलज्ञानयुक्तयुञ्जानज्ञानं ह्याप्तानामुपदेशप्रामाण्ये हेतुः। तज्ज्ञानवत्त्वादाप्तानां प्रामाण्यात् तस्मादाप्तोपदेशस्य प्रामाण्यमिति आप्तोपदेशग्रहणेनास्य संग्रहात्। न हि तेन सन्निकर्षेण चाक्षुषादिप्रत्यक्षं भवति किन्तु दृष्टवन्मानसज्ञानमेव। अतो न तत् प्रमाणान्तरम्। तज्ज्ञानं योगिनां न तु सर्व्वेषां। सर्व्वजनस्य तु मानसज्ञानविशेषाणामनुमानादिसंज्ञकानां प्रमाणान्तरत्वेनोक्तत्वात्। तदतिरिक्तमानसज्ञानन्तु सुखदुःखादिविषयकत्वेऽसार्व्वत्रिकत्वेन व्यभिचारात् प्रमाणत्वेनास्वीकारात् पञ्चेन्द्रियबुद्धेः प्रामाण्येन प्रत्यक्षत्वं स्वीकृतम्, मानसप्रत्यक्षस्य न प्रामाण्यं स्वीकृतम्; किन्तु प्रत्यक्षत्वमस्तीति तत्त्वम्। अव्यभिचारिण्य एवोक्ता एताः पञ्चेन्द्रियबुद्धयः प्रमाणमिति बोध्यम्। वक्ष्यति च तिस्रैषणीये—"आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात् प्रवर्त्तते। व्यक्ता तदात्वे या बुद्धिः प्रत्यक्षं सा निरुच्यते॥" इति। अस्य तु लक्षणस्यानेन लक्षणेन तुल्यार्थो न बोध्यः। तल्लक्षणं परीक्षाख्यप्रत्यक्षस्य यत्र प्रत्यक्षं प्रमाणमुच्यते। इदं तु प्रमाणाप्रमाणभूतपञ्चेन्द्रियबुद्धिलक्षणमिति। तस्मिन् लक्षणे व्यक्ता इति पदेनाव्यभिचारिणी बुद्धिर्लक्ष्यते। न तु भ्रमसंशयावप्रमाणत्वात्। अत्र तु इन्द्रियबुद्धिमात्रस्यैव लक्ष्यत्वेन व्यक्ता इति नोक्तम्। एवं तदात्व इति दानप्रत्यक्षज्ञानानन्तरोत्पन्नानुमानस्मरणानुव्यवसायानां निरासः। अत्र तु प्रत्यक्षानुव्यवसायस्य लक्ष्यत्वे तदात्व इति नोक्तम्। अनुमानस्मरणतदनुव्यवसायानां मानसज्ञानानां निरासस्तु चक्षुर्बुद्ध्यादिका इति निर्देशाल्लक्षणातिव्याप्तिवारणाय कृत इति। अस्याः पञ्चविधबुद्धेः प्रामाण्याप्रामाण्य-

**मनो मनोऽर्थो बुद्धिरात्मा चेत्यध्यात्मद्रव्यगुणसंग्रहः शुभाशुभप्रवृत्तिनिवृत्तिहेतुश्च। तत्र द्रव्याश्रितं कर्म्म—यदुच्यते क्रियेति ॥ ५ ॥**

ज्ञापनायाह—क्षणिका निश्चयात्मिकाश्चेति। ताः पञ्च चक्षुर्बुद्ध्यादिका इन्द्रियबुद्धयः क्षणिका आशुतरविनाशिन्य। श्रुत्वा हि मृदङ्गवाद्यः वीणावादं शृणोति वा पुत्रं पश्यतीति। एतेन तन्निरस्तं—यदुच्यते केनचिदिदं, तद्यथा—ता भ्रमात्मिकाः संशयात्मिकाश्चेति द्विविधाः। भ्रमस्तु तस्मिन् प्रसिद्धे भावेऽतत्त्वेनावगमः। यथा ब्रह्मणि जगद्बुद्धिः, शुक्तौ रजतत्वेनावगमः, रज्ज्वां सर्पज्ञानमिति; मयूरशब्दे बिडालध्वनित्वेनावगमः, कामिनीस्तनयुगलस्पर्शे चन्द्रकान्तमणिस्पर्शज्ञानम्, मालतीपुष्पगन्धे कुन्दपुष्पगन्धज्ञानम्। सहकारमधुराम्लरसे मधुज्ञानम्। इत्येवमादयः। संशयश्च रोगभिषग्जितीये वक्ष्यते। निश्चयात्मिकाश्चेति प्रत्यक्षप्रमाणसंज्ञका इति। भ्रमसंशयाख्ये द्वे बुद्धी खल्वासां बुद्धीनां भ्रंशादयोगातियोगमिथ्यायोगान्यतमाज्जायेते। ते च बुद्धी अप्यबुद्धी प्रज्ञापराधाख्ये भवतः। तयोः खलु भ्रमसंशययोर्निश्चयबुद्धिसमुत्पत्तौ तदैवापायात्। इत्थञ्च पञ्चेन्द्रियबुद्धय इन्द्रियेन्द्रियार्थसत्त्वात्मसन्निकर्षजा निश्चयात्मिकाः प्रत्यक्षप्रमाणानीति बोध्यमिति। मनसश्चातीन्द्रियत्वेनाभ्यन्तरत्वेन च तेषां पृथगेव ग्रहणात्। तच्च युक्तत्वादप्रतिषिध्यानुमत्य एकेषान्तरतीन्द्रियत्वेनापि इन्द्रियत्वसामान्यात् मनसो ग्रहणात् षडिन्द्रिबुद्धय इति मतमनुमतमाह—इत्येतदित्यादि। एतद् इति प्रागुक्तम्। प्रत्येकेन पञ्चसंख्यकैः पञ्चभिर्निष्पादितमिति पञ्चपञ्चकम्। पञ्चेन्द्रियाणीत्यादि पञ्चकम् ॥ ४ ॥

<u>गङ्गाधरः</u>—मन इत्यादि। मनः सत्त्वम्। मनोऽर्थश्चिन्त्यम्। बुद्धिर्मानसी। आप्तोपदेशरूपाऽनुमानरूपोपमानरूपा स्मरणरूपानुव्यवसायरूपा च, युक्ता युञ्जाना चेति। आत्मा चेतनाधातुश्चैतन्यप्रतिसन्धाता। चकारः पूर्व्वोक्तानां समुच्चये। इत्यध्यात्मद्रव्यगुणसंग्रह इति। इत्येषोऽध्यात्ममात्मानमधिकृत्य

<u>चक्रपाणिः</u>—मनोऽर्थो वक्ष्यमाणो "मनसस्तु चिन्त्यमर्थः" इत्यनेन। बुद्धिरिह मनोबुद्धिर्विवक्षिता, इन्द्रियबुद्धीनां पञ्चपञ्चकेनैव ग्रहणात्। आत्मानमधिकृत्याध्यात्मम्, आत्मानमधिकृत्य यानि द्रव्याणि ये च गुणा, तेषां संग्रहोऽध्यात्मद्रव्यगुणसंग्रहः। तत्र गुणा रूपादिबुद्ध्याः, शेषं द्रव्यम्। एतदुक्तं भवति—आत्मनोऽपकारकोपकारकाणां द्रव्यगुणानामयं संग्रहः

तत्रानुमानगम्यानां पञ्चमहाभूतविकारसमुदायात्मकानां सतामिन्द्रियाणां तेजश्चक्षुषि खं श्रोत्रे घ्राणे क्षितिरापो रसने स्पर्शनेऽनिलो विशेषेणोपदिश्यते ॥

द्रव्याणां गुणानां संग्रहः संक्षेपः। तत्रादिमन्तु त्रिपञ्चकं मनो मनोऽर्थश्चिन्त्य-द्रव्यमात्मा चेति द्रव्याणि। अन्त्यं द्विपञ्चकं मनोऽर्थाः सुखदुःखेच्छाद्वेषप्रयत्ना बुद्धिश्च। इत्येते गुणाः। तेषां संग्रहः संक्षेपः। शुभाशुभप्रवृत्तिनिवृत्तिहेतुश्च। पुनर्द्रव्याश्रितं कर्म्म यदुच्यते क्रियेति। शुभस्य लोकद्वये मङ्गलस्य लोकद्वये चाशुभस्य प्रवृत्तेः संसारे पुनःपुनरुत्पत्तिमरणाभ्यां गमनागमनस्य हेतुः। निवृत्तेः संसारान्मोक्षस्य च हेतुः। किंवा शुभं दुःखहानिश्चतुर्व्वर्गः। अशुभं सुख-हानिः। तयोः क्रमेण प्रवृत्तिर्धर्म्मार्थकाममोक्षाणां प्रवृत्तिरधर्म्मानर्थाकामा-मोक्षाणां निवृत्तिः। तयोर्हेतुर्भवतीत्यर्थः। अथवा शुभाशुभयोः प्रवृत्तिश्च निवृत्तिश्च तयोर्हेतुः। च पुनर्द्रव्याश्रितं कर्म्म शुभाशुभप्रवृत्तिनिवृत्तिहेतुर्भवति। ननु कर्म्म किं वमनादिपञ्चकं गमनाशनस्वप्नादिकं चेति? अत आह— यदुच्यते क्रियेति। शुभाशुभप्रवृत्तिनिवृत्तिहेतुः कर्म्म क्रिया धर्म्माधर्म्मसंस्कार-जनकं कर्म्म। जन्मान्तरकृतमस्मिन् जन्मनि च कृतं यत् तत्॥ ५॥

<u>गङ्गाधरः</u> ननु द्रव्याश्रितं कर्म्मैव शुभाशुभप्रवृत्तिनिवृत्तिहेतुरिति चेत्, तर्हि किमर्थमिन्द्रियादिपञ्चपञ्चकादिरध्यात्मद्रव्यगुणसंग्रह उपदिष्ट इति? अतो येन प्रकारेण शुभाशुभप्रवृत्तिनिवृत्तिहेतुः कर्म्म भवति तमुपदेष्टुं मनसा पञ्चेन्द्रिया-

इति; योऽयं संग्रहः शुभस्य धर्म्मस्य सुखस्य च प्रवृत्तौ हेतुर्भवति; अशुभस्याधर्म्मस्यासुखस्य च निवृत्तौ च हेतुर्भवति; तत्रोक्तसंग्रहस्य सम्यग्योगः शुभस्य प्रवृत्तावशुभस्य निवृत्तौ हेतु-र्भवति, अयोगातियोगमिथ्यायोगास्तु अशुभस्य प्रवृत्तौ च हेतवः; यदि वा शुभस्य पूर्व्व-व्याकृतस्य चाशुभस्य पूर्व्वव्याकृतस्य प्रवृत्तेः संसारस्य निवृत्तेः मोक्षस्य यथोक्तसंग्रहो हेतुरिति व्याख्येयं; तत्र संग्रहस्य शुभाशुभहेतुत्वं पूर्व्ववदेव व्याख्येयं; दुर्ज्ञातस्तु संग्रहः संसारस्य हेतुर्भवति तत्त्वतो ज्ञातस्तु मोक्षाय हेतुरिति व्याख्येयम्। अध्यात्मद्रव्यगुणादधिकमनुक्तं हेतुमाह द्रव्याश्रितञ्चेत्यादि। कर्म्म इत्युच्यमाने वमनादिष्वपि तथाऽऽस्यास्वप्नादिष्वपि कर्म्मशब्दवाच्येषु प्रसक्तिः स्यात्, अतस्तद्व्यावृत्त्यर्थं द्रव्याश्रितपदं, तथापि धर्म्माधर्म्मयोः कर्म्म-शब्दवाच्ययोः प्रसक्तिः स्यात् इत्युक्तं यदुच्यते क्रियेति; कर्म्मणः पृथक् कृत्वाभिधानं पञ्च-कर्म्मादिषु कर्म्मणोऽप्रविष्टत्वात्॥ ५॥

<u>चक्रपाणिः</u> सम्प्रति वैद्यकसिद्धान्तेन पाञ्चभौतिकानामपि चक्षुरादीनां यथा तैजसत्वादि-व्यपदेशो भवतीति तदाह,—तत्रेत्यादि। अनुमानेन प्रतीयन्त इत्यनुमानगम्यानि, अनुमानञ्च—

तत्र यद्यदात्मकमिन्द्रियं विशेषात् तत्तदात्मकमेवार्थमनुधावति ; तत्स्वभावाद्विभुत्वाच्च ॥ ९ ॥

णीति यदुक्तं तत्र किमिन्द्रियं केनेन्द्रियेणान्येन वा गृह्यते ? तेषामिन्द्रियाणां द्रव्याणि पञ्चेति पञ्चेन्द्रियद्रव्याणीत्यनेनोक्तम्। तेषु कस्येन्द्रियस्य किं द्रव्यम् ? पञ्चेन्द्रियाधिष्ठानानीत्यनेन तेषामिन्द्रियाणां पञ्चाधिष्ठानान्यक्षिणी कर्णौ नासिके जिह्वा त्वक् चेत्युक्तम् ; तेषु कस्येन्द्रियस्य किमधिष्ठानम् ? पञ्चेन्द्रियार्थाः शब्दस्पर्शरूपरसगन्धा इति च यदुक्तं तत्र कस्येन्द्रियस्य कोऽर्थः ? इति शिष्यप्रश्नमभिसन्धायाह तत्रत्यादि। तत्र तेष्वध्यात्मद्रव्यगुणेषु मध्ये इन्द्रियाणां पञ्चानामनुमानगम्यानां दर्शनादिकर्म्मणा लिङ्गानुमानबुद्ध्यैव विषयतया ग्रहणयोग्यानां न तु प्रत्यक्षबुद्ध्योपमानबुद्ध्या वा अणुत्वादावरणत्वादुपमानाभावाच्च। यतः पञ्चमहाभूतविकारसमुदायात्मकानां खादीनां पञ्चानां महाभूतानां विकाराः परिणामविशेषरूपाः, तेषां समुदायः तच्च मेलकसमवायेन मिलितो विशिष्टापूर्व्वः स्वरूप आत्मा येषां तेषां तथा। समुदायपदेन खाद्येकैकभूतविकारात्मकत्वमिन्द्रियाणां निराकृतम्। तथात्वे हि खादिभ्यो विशिष्टापूर्व्वमक्रियस्वरूपत्वं नोपपद्यते। न ह्येकं कालपरिणतमपि भूतान्तरयोगं विना पूर्व्वविशिष्टस्वरूपत्वमापद्यते, स्वरूपञ्च न जहाति ; यथा व्रह्म। तथा हि वीजधर्म्मिणि सूक्ष्मशरीरे यान्याहङ्कारिकाणि पञ्च बुद्धीन्द्रियाणि चक्षुरादिसंज्ञकानि निष्क्रियाणि नित्यानि सन्ति, तेषां चक्षुराद्येकैकमिन्द्रियं स्थूलशरीरारम्भे तु शुक्रशोणिते गर्भाशयगते संयुक्ते अव्यापन्ने परलोकादवक्रान्तसूक्ष्मशरीरिणा सूक्ष्मदेहस्थैः पञ्चभिर्महाभूतैर्विकार्य्यमाणैः सूक्ष्माणां पञ्चाकाशादीनां महाभूतानामेकैकभूताधिकानि पञ्चैव भूतान्यनुप्रविश्य तत्तदेकैकाधिकपञ्चमहाभूतविकारसमुदायात्मकत्वेन जातानां सतां वस्तुरूपाणामिन्द्रियाणां चक्षुषि पाञ्चभौतिके तेजोऽर्थादधिकं वर्त्तते, श्रोत्रे तथैव पाञ्चभौतिके खमाकाशो-

चक्षुर्बुद्ध्यादय:, करणकार्य्याः क्रियात्वात् छिदिक्रियावत् ; महाभूतानि खादीनि तेषां विकारः परिणामविशेषः, समुदायो मेलकः, स आत्मा समवायिकारणं येषां तानि। विशेषेणाधिकत्वेन। एतदुक्तं भवति—पाञ्चभौतिकत्वेऽपि तेजोऽधिकत्वात् चक्षुस्तैजसं व्यपदिश्यते ; एवं घ्राणादिष्वपि पृथिव्याद्यधिकत्वेन पार्थिवत्वादिव्यपदेशः।

अथ कथं चक्षुस्तेजोऽधिकं, घ्राणं पृथिव्यधिकमित्यादिनावधार्य्यत इत्याह,—तत्रेत्यादि। यदिन्द्रियं विशेषात् यदात्मकं, यद्भूतारब्धं तदिन्द्रियं तदात्मकमेव तद्भूतात्मक-

ऽधिकत्वेन वर्त्तते, घ्राणे त्विन्द्रिये तथैव पाञ्चभौतिके क्षितिरधिका वर्त्तते, रसने चेन्द्रिये तथैव पाञ्चभौतिके आपोऽधिकाः, स्पर्शने त्विन्द्रिये तथैव पाञ्चभौतिकेऽनिलोऽधिको वर्त्तते। इत्यभिप्रेत्याह —विशेषेणेति। पञ्चमहाभूतविकारसमुदायात्मकत्वोपदेशेन चक्षुरादीनां तेजोमात्राद्येकैकभूताधिकपाञ्चभौतिकत्वं विशिष्टस्वरूपत्वेनुभावोक्तस्तेजोमात्राद्येकैकात्मकत्वे तत्तदर्थग्रहणायोग्यत्वं वारितमेकैकभूतेभ्यश्च न विशिष्टस्वरूपत्वमिति ख्यापितमिति। सतामितिपदेन स्थूलशरीरविनाशेऽपीन्द्रियाणां नाशाभावस्तदधिष्ठानचक्षुर्गोलकादिनाशश्च ख्यापितः। प्रत्येकमधिष्ठानोपदेशेन एकेन्द्रियवादो निराकृतः, पञ्चसु स्थानेषु एकैकस्य युगपदधिष्ठानानर्हत्वात्। पञ्चधाभूयेति चेत्? न। पञ्चधाभावेऽपि उपादानान्तरापेक्षत्वात्। पञ्चधा स्वरूपेणैव प्रसिद्धेति चेत्? तर्हि पञ्चैव भवन्ति इन्द्रियाणीति। मनोवदेकमेवेन्द्रियं यदधिष्ठानं यदाधितिष्ठति तदा तदर्थं गृह्णातीति चेत्? तदा तदधिष्ठानादपराधिष्ठानगमनेन स्वस्वाधिष्ठाने सततावस्थानाभावः स्यात् तदिष्टत्वे मनोवदाभ्यन्तरेन्द्रियत्वापत्तिर्यदि तत्र बाह्याधिष्ठानाद्बाह्यत्वमुच्यते तदा स्पर्शनस्य दर्शनादियोगपद्यापत्तिः सर्व्वत्रैव स्पर्शनेन्द्रियसत्त्वात्। विशेषेणोपदेशेन पञ्चेन्द्रियाणां समपञ्चमहाभूतात्मकत्वं निराकृतम्। तथात्वे हि पञ्चेन्द्रियाणां तुल्यः स्वभावः स्यात्।

ननु पञ्चानामिन्द्रियाणामेकं स्पर्शनेन्द्रियमिन्द्रियव्यापकं चेतःसमवायीति तिस्रैषणीये वक्ष्यति, तत् कथं पञ्चेन्द्रियाणि स्वीक्रियन्ते? तेनैव ह्येकेन स्पर्शनेन्द्रियेण सर्व्वार्थानां ग्रहणं भवतीति चेत्? न, युगपदेव पञ्चानामर्थानां ग्रहणापत्तेः। मनस एकत्वेन यत्रैव स्पर्शनेन्द्रिये योगस्तद्देशावच्छेद एव स्पर्शनेन्द्रियेणार्था गृह्यन्ते। अणुत्वाद्धि मनसो नैकदा सर्व्वस्पृश्यस्पर्शनं स्यादिति चेत्? तदापि तद्देशावच्छेद एव युगपत् सर्व्वार्थग्रहणं स्यात्, स्पर्शनग्राह्या हि सर्व्वार्था इति। करचरणतलादित्वग्विशेषस्य भूतांशविशेषारब्धत्वेन वैशिष्ट्यादितराङ्गावयवत्वचो रोमकूपादिमृदुत्वकाठिन्यादिभिः स्वल्पानल्पस्पर्शास्पर्शग्रहणवद् भूतविशेषारब्धत्वेन चक्षुर्गोलकोगादित्वचां वैशद्यादिगुणविशेषेण विशिष्टस्वरूपाणां स्पर्शनेन्द्रियाधिष्ठानानां रूपाद्यर्थयोगाद् रूपादिग्रहणं स्यादिति न वाच्यम्। इन्द्रियार्थानां पञ्चत्वेन चक्षुरादीनामेकैकेन्द्रियस्यैकैकार्थग्राहकत्वात्। न हि रूपं

मेव अर्थं विषयमनुगृह्णात्यनुधावति, यत् तेजःप्रधानं तत् तेजःप्रधानमेव विषयं गृह्णातीत्यर्थः; एवं पार्थिवादिष्वपि वाच्यम्। तत्र हेतुमाह,—तत्स्वभावात् विभुत्वाच्च, तत्स्वभावादिति ग्राह्याणां रूपादीनां यः स्वभावः तैजसत्वादिः, चक्षुरादीनामपि तत्स्वभावात्वेत्यर्थः; विभुत्वादिति

स्पृशति स्पर्शनमित्येवमादि। यदि च रूपादीनां नीलपीतादिभेदेन चक्षुरादेरनेकेन्द्रियार्थानां नानात्ववदेकस्यैव स्पर्शनेन्द्रियस्य रूपाद्यर्थानां नानात्वमिति तथापि रूपत्वादिसामान्येन नीलपीतादीनामैक्यवद्रूपस्पर्शादीनामैक्यमर्थत्वादिति यत् तन्न युक्तं भवति मनोविषयस्याप्यर्थत्वादिति। विषयत्वसामान्यात् स्पर्शरूपादीनामैक्यं भवति। रूपत्वादिसामान्येन नीलपीतादीनामिवेति चेत्? न। बुद्धिलक्षणानामर्थानां पञ्चत्वादिन्द्रियाधिष्ठानानां पञ्चत्वाच्च। तत्र पञ्चेन्द्रियाणि सूक्ष्मदेहे हृदये तिष्ठन्ति। तत्र तिष्ठतामेव प्रसारणादिगमनावस्थानादिना चक्षुरादीनामर्थग्रहणाच्च। चक्षुर्हि हृदि तिष्ठत् स्वाधिष्ठानगोलकमधिष्ठाय वर्त्तमानं ज्योतिषः प्रसारणेनार्थं गृह्णाति, स्पर्शनं त्वचमधिष्ठाय वर्त्तमानमेवार्थं गृह्णाति, श्रोत्रं कर्णावधिष्ठाय, घ्राणं नासिकामधिष्ठाय, रसनं जिह्वामधिष्ठाय वर्त्तमानमिति, गोलकाद्याकृतिविशेषेण पञ्चत्वाच्च। तैजसत्वादिजातिपञ्चत्वाच्चेति ख्यापितं पञ्चमहाभूतविकारसमुदायात्मकानामिति वचनेनेति। अत्रापरे चक्षुर्गोलकाद्यधिष्ठानेषु सत्सु रूपाद्युपलब्धिरनुपलब्धिश्चासतस्स्यादिति। अतो भूतैकैकप्रधानपाञ्चभौतिकाक्षिगोलककर्णत्वग्जिह्वानासिकमेवाधिष्ठानतयोक्तम्। यत एवेन्द्रियाणि भवन्ति न त्वपराणि सन्ति कानिचिदिति यद्वदन्ति तदपि निरस्तं सतामित्युपदेशेन। न हि तिमिरादिव्याधिश्चक्षुर्गोलकादौ निर्व्विकल्पे केनापि द्रष्टुं शक्यते स्प्रष्टुं वेत्यादि।

न च दोषदूषितत्वेनार्थग्रहणमिति चेत्? नहि चक्षुरादीनां द्वित्वाद्यापत्तिः स्यात्. द्वित्वं हि सव्येनाक्ष्णा निमीलिते च दक्षिणेऽक्षिण यत् तथात्वेन पश्यता परिचीयते तथेतरेणापि। तत् सव्ये निमीलितेऽप्यक्षिगोलके दक्षिणेनाक्ष्णा पश्यता परिचीयते तदेवेति। अत्र केचिदेकस्मिन् नयनविनाशे तेन दृष्टस्यार्थस्य परेणाक्ष्णा प्रत्यभिज्ञानं मनसा प्राक् परिचितत्वादित्यतो नयनादेर्द्वित्वमेव न त्वेकं नासिकया व्यवहिते द्वित्वेन दृष्टत्वादिति यदाहुः तन्न। नासिकया व्यवधानेन चक्षुषोर्द्वित्वाभिमानादेव न वस्तुतः। न चैकाक्षिनाशे द्वितीयाक्षिनाशाभावात् कथं नेत्रस्य द्वित्वमिति वाच्यम् एकावयवविनाशेऽप्यवयविनः प्रत्यभिज्ञानात्? सर्व्वावयवानामवयविनो वा नियमेन न नाशः स्यादिति। अतस्त्वेकगोलकविनाशे सति नान्धत्वं स्यादिति। दृष्टान्तविरोध-

प्रकाशकत्वात्, समानजातीयतैजसादिग्रहण एव चक्षुरादीनां प्रकाशकत्वादित्यर्थः। तदनेन ग्रन्थेन एतदनुमानमुपदिश्यते— एतच्चक्षुस्तैजसं, रूपादीनां मध्ये रूपस्यैव प्रकाशकत्वात् बाह्यालोकवत्;

श्चेत्, उच्यते—गोलकान्तरावस्थितावयवत्वेन चक्षुषो गोलकनाशे नाशाभावान्नित्यत्वाच्चेति पञ्चेन्द्रियाणीति वचनेनोपदर्शितम्। अत्र पञ्चेति संख्या त्विन्द्रियाधिष्ठानान्येवेन्द्रियाणीति न युज्यते गोलकादीनि पुनर्भौतिकानि दृश्यन्ते। इन्द्रियाणि तु सात्त्विकात् खलु वैकारिकादहङ्कारात् तैजसाहङ्कारसहायादुत्पन्नान्युपदिश्यन्ते, न च भौतिकानि। चक्षुरादिभिर्हि सूक्ष्मत्वेऽपि सूक्ष्मं वा महद्वा वस्तु गृह्यते। सत्त्वगुणस्य प्रकाशलक्षणत्वेन सात्त्विकाहङ्कारजत्वे सात्त्विकत्वेन प्रकाशात्मकत्वात् तच्च प्रकाशात्मकत्वं भौतिकत्वे पुनर्न सम्भवति अणुना महतो व्यापनासम्भवात्। न ह्यव्याप्यार्थग्रहणं सम्भवतीति। तत्रोवाचाक्षपादगौतमः—"रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम्" इत्यर्थानामिन्द्रियेणाणुना तैजसरूपेण भूतैकैकप्रधानपाञ्चभौतिकेन रश्मिना सन्निकर्षविशेषादणूनां महताञ्च ग्रहणमुपपद्यते। यथा भौतिकेन प्रदीपादिनाऽणुना महदणु च वस्तु प्रकाश्यते। अत्र "तदनुपलब्धेरहेतुः" रश्मिस्वरूपेन्द्रियेन्द्रियार्थसन्निकर्षो न हेतुर्गोलकायातिरिक्तस्य रश्मेरनुपलब्धेरिति न वाच्यम्। "नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः" इति। अस्यार्थः—अणुरूपादिज्ञानेनानुमीयमानस्य रश्मिस्वरूपचक्षुरादेरनाग्नेयस्यापि प्रत्यक्षतोऽनुपलब्धिर्नासद्भावहेतुः। कथं तर्हि नोपलभ्यते? उच्यते—"द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः" द्रव्यस्य गुणस्य द्रव्यगुणयोरुद्भूतत्वानुद्भूतत्वधर्मभेदात् तदधीनत्वात् प्रत्यक्षस्य परमाण्वादिसाधारणद्रव्यगुणस्योपलब्धौ नियमः। उद्भूतस्य प्रत्यक्षमनुद्भूतस्याप्रत्यक्षमिति। ननु चक्षुरादेरुद्भूतरूपमेव न कथं प्रत्यक्षमिति चेत्? उच्यते—"कर्म्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः" इति। अस्यार्थः—पुरुषार्थोऽदृष्टविशेषः, तत्तन्त्रस्तदधीनेन्द्रियाणां व्यूहो निर्म्माणविशेषः। कर्म्मकारित इन्द्रियारम्भकाणां कर्म्मविशेषेण प्रत्यक्षाप्रत्यक्षयोग्यतासाधनतया कारित इति चक्षुरादीनां न प्रत्यक्षयोग्यपरिमाणमस्तीति। "मध्यन्दिनोल्काप्रकाशानुपलब्धिवत् तदनुपलब्धिः" इति। यद्वा वाह्यप्रकाशानुग्रहाद्विषयोपलब्धिरभिभवादनभिव्यक्तितोऽनुपलब्धिरिति। वाह्यालोकैरनुग्रहाच्चक्षुरादिनार्थो गृह्यते। तस्मादनभिव्यक्ता न चक्षुरादीनामुपलब्धिरिति। अथ सूर्य्यप्रकाशादिसहकारेणार्थानां ग्रहणाच्चक्षुरादीनामुद्भूतरूपत्वेन वाह्यप्रकाशापेक्षा न स्यात्।

रसनमाप्यं, रूपादीनां मध्ये रसस्यैव प्रकाशकत्वात् दन्तोदकवत्; तथा गन्धः स्वजातीयगुणोत्कर्षवद्विनिद्रियग्राह्यो भूतविशेषगुणत्वात् रूपवदित्यादि ॥ ६ ॥

तिमिराद्यभिभूतत्वे तु सूर्य्यादिप्रकाशसहकारेणापि प्रत्यक्षजननं न स्यात्। अभिभूतस्य स्वकर्म्मण्यशक्तत्वादिति सर्व्वदाभिभावकद्रव्यान्तरकल्पनया रात्रिचराणां विडालादीनां चक्षुषि रश्मिदर्शनेनान्येषामपि पुरुषाणां दिवार्कतेजसा अभिभूतरश्मौ चक्षुषि रश्म्यनुमानं भवतीति। तथा सति काचाद्यन्तरितप्रदीपेनेव रश्मिसत्त्वाच्चक्षुरादिनाऽर्थः प्रकाश्यते। तेनेन्द्रियाणां भौतिकत्वे सिद्धे कुड्यान्तरितार्थानां पुनरनुपलब्धिर्न व्याहन्यते। इन्द्रियेन्द्रियार्थसन्निकर्षस्याप्रतिघातेनोत्पत्तेः। अप्रतिघातकत्वे हेतुः वैशद्यं भावानां यथादित्यरश्मिना स्फटिकान्तरितेऽपि दाह्ये दाहः स्यादप्रतिघातत्वात्। ननु काचादिकमपि कुड्यादिवत् सन्निकर्षोत्पत्तौ प्रतिबन्धकं परस्परं प्रतिघातकत्वधर्म्मादिति चेत्? न। आदर्शादिकयोः प्रसादस्वाभाव्यात् प्रतिबिम्बरूपोपलब्धिवद्धि चक्षुरादीनामर्थे सन्निकर्षोत्पत्तौ काचस्याप्रतिघातकत्वं कुड्यादेः प्रतिघातकत्वमिति। अत्र तु प्रमाणं "दृष्टानुमितानां हि नियोगप्रतिषेधौ नोपपद्येते" इत्यक्षपादगौतमवचनमपि तुल्यम्। सुश्रुतेऽपि—"इन्द्रियेणेन्द्रियार्थन्तु स्वं स्वं गृह्णाति मानवः। नियमात् तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः" इति वचनेन श्रोत्रादीनां शब्दादिग्रहणनियम एकैकाधिकपाञ्चभौतिकत्वेन तुल्ययोनित्वाच्छब्दादीनामितरार्थग्रहणप्रसङ्गस्तु सात्त्विकाहङ्कारिकत्वमात्रे भवतीति। चरकाचार्य्योऽपि तज्ज्ञापयितुमाह—तत्र यद्यदात्मकमिन्द्रियमित्यादि। तत्र तेषु पञ्चसु इन्द्रियेषु मध्ये यदिन्द्रियं तेषु पञ्चसु महाभूतेषु मध्ये यदात्मकं यद्भूतप्रधान आत्मा स्वरूपं यस्य तत् यदात्मकं, तत्तदात्मकं तद्भूतप्रधानमेव तदिन्द्रियं तदात्मकं तद्भूतगुणमथ तदेकैकभूताधिकत्वेन विशेषात् प्रायेणानु लक्ष्यीकृत्य धावति ग्रहीतुमिति शेषः।

ननु तैजससहायसात्त्विकाहङ्कारिकत्वेऽप्येवमिन्द्रियाणि स्वार्थमनुधावितुं नार्हन्तु कथं भौतिकत्वे एव चक्षुरिन्द्रियं रूपमिव रूपिणो मूर्त्तान् भावान् गृह्णाति नतराणीन्द्रियाणि शब्दाद्यर्थवतो गगनादीन् ग्रहीतुमर्हन्तीति? अत आह—तत् स्वाभाव्यादित्यादि। तेषां बाह्यानां रूपादीनां यः स्वभावस्तैजसत्वादिः स एव स्वभावो यस्य तस्य भावः तस्मात्। तथा समानयोनित्वे स्वभावविशेषादित्यर्थः। व्याख्यानमिदं तु समग्रवचनं, तेन तत्स्वभावादिति यद्यदात्मकमिन्द्रियं तस्य विशेषात् तदात्मकार्थग्रहणाहेतोसद्भावेऽपि स्वभावादेव; विशेषश्चायं चक्षुरिन्द्रियं तैजसमपि तैजसं रूपं विशेषादनुधावति। रूपवद्द्रव्यं तत्तद्द्रव्यमयीमाकृतिञ्च कुत्सिताकुत्सितां पृथिव्याः कृष्णरूप-

प्रभामन्धकारमातपालोकवदनुधावति । आकाशश्च अप्रतिघातमरूपं तद्रूपत्वेनोपचर्य्यते । स्निग्धरूक्षविशदपिच्छिलादिकञ्च गृह्णाति न तु शब्दरूपस्पर्शरसगन्धान् । स्पर्शनञ्च वायव्यं स्पर्शं शीतोष्णश्लक्ष्णखरादीनपि गृह्णाति । विशेषेण स्पर्शविपर्य्ययमप्रतिघातमाकाशं चानुधावति न च शब्दरूपरसगन्धान् । श्रोत्रं खान्तरीक्षं शब्दं गृह्णाति, न स्पर्शादिकं । न वाऽऽकाशम् । रसनमाप्यं रसं गृह्णाति न शब्दादीन् । घ्राणं पार्थिवं गन्धमनुधावति न रसरूपस्पर्शशब्दादीन् इति । ननु रूपादयोऽर्थाः कथं चक्षुरादीनीन्द्रियाणि न गृह्णन्ति तुल्ययोनित्वादितनुस्वभावादिति ? अत आह—विभुत्वाच्च । स्वाधिष्ठातृदेवतात्वेनात्मकृतशुद्धभूतमयत्वेन च विभुत्वात् धावनादिक्रियात्वादिसामर्थ्यात्, तथा च चक्षुस्तैजसं तैजसं रूपमनुधावति, श्रोत्रमान्तरीक्षमान्तरीक्षं शब्दमनुधावति, अनुधावति तु स्पर्शनं वायव्यं वायव्यं स्पर्शम् । रसनमाप्यमाप्यं रसमनुधावति, तथानुधावति घ्राणं पार्थिवं पार्थिवं गन्धमिति । न गन्धादयो घ्राणादीनि गृह्णन्ति । विशेषतो ग्रहणं बोध्यम् । गौतमेनाप्युक्तं—"पूर्व्वपूर्व्वगुणोत्कर्षात् तत्प्रधानम्" इति । पृथिव्यादीनामुत्तरोत्तरभूतेषु गन्धादिपूर्व्वपूर्व्वगुणह्रासेऽपीन्द्रियादीनां पार्थिवादीनां रसादिग्रहणापत्तिर्न भवति, पूर्व्वपूर्व्वगन्धादेरेकैकगुणोत्कर्षात् । घ्राणादीन्द्रियं तद्गन्धादिप्रधानम् । तथा च पञ्चभूतगुणत्वेऽपि गन्धप्रधानं घ्राणमिन्द्रियम्, रसप्रधानं रसनं, रूपप्रधानं चक्षुः, स्पर्शप्रधानं स्पर्शनं, शब्दप्रधानं श्रोत्रमिति । ततो घ्राणेन लवणादयो न गृह्यन्ते, रसनेन रूपादय इत्येवमादि । गन्धादेरेकैकगुणोत्कर्षव्यवस्थानं घ्राणादीनां तत्तदारम्भकपृथिव्यादीनां भूयस्त्वात् । सगुणानां हि पृथिव्यादीनां घ्राणादीन्द्रियरूपेण परिणामादिति । न चाकाशं चक्षुरनुधावति । "परन्तु मूर्त्तिमद्द्रव्यविपर्य्ययस्याकाशस्य चक्षुरर्थाभावस्य चक्षुर्ज्ञानाभावेनाभावाख्यप्रमाणेन स्थिरगुरुखरकठिनसान्द्रादि रूपेण ज्ञातस्य धारणासामर्थ्येन निश्चयात् कूपपतनं गच्छतो न सम्भवतीति । तत्र तत्र तस्य तस्यार्थस्य प्राधान्येन प्रकाशकत्वादभिव्यक्तत्वाच्च" इति कश्चित्; एतेन कापिलोक्तसांख्यसूत्रम् आहङ्कारिकत्वश्रुतेर्न भौतिकानीति, न विरुद्धम्, अहङ्कारकार्य्यप्रकरणोक्तानि यानि दशेन्द्रियाणि सूक्ष्मदेहस्थानि तानि न भौतिकानि आहङ्कारिकत्वश्रुतेः, सूक्ष्मदेहस्थानि तु आहङ्कारिकतत्तदिन्द्रियाधिष्ठितात्मकृतभूतैकैकाधिकपाञ्चभौतिकानीन्द्रियाणि । न केवलं तेजोऽप्रतर्पणात् तैजसं चक्षुरुक्तिरितो दृश्यवस्तुतो रूपरूपवदादितश्च भौतिकत्व-

**तदर्थातियोगायोगमिथ्यायोगात् समनस्कमिन्द्रियं विकृतिमापद्यमानं यथास्वं बुद्ध्युपघाताय सम्पद्यते। समयोगात् पुनः प्रकृतिमापद्यमानं यथास्वं बुद्धिमाप्याययति।**

सिद्धेः। प्राप्त्यर्थप्रकाशलिङ्गाच्च वृत्तिसिद्धिः। आत्मकृतभूतानामेकैकाधिकभूतस्य न्यूनाधिकाभ्यां भागगुणाभ्यामिन्द्रियाणां निष्पत्त्या तत्तान्तरत्वेनाह शारीरकेन्द्रियतो विशिष्टत्वेन रूपादिवृत्तिः सिद्धा। तत्ता हि तदात्मकृतैकैकभूताधिकपाञ्चभौतिकता। तेन तद्भौतिकमर्थं सम्बद्धं सर्पन्ति चक्षुरादीनीति। न तु वृत्तिग्रहणे द्रव्यनियमः। एकैकभूताधिकमिन्द्रियमेकैकभूताधिकमेव द्रव्यं गृह्णातीति नियमो लभ्यते, पृथिव्यम्बुगुणबहुलद्रव्ये मधुरो रसो रसनेनाम्बुगुणजलबहुलेन न गृह्यतामिति। अतो रसादिमात्रगुणनियम एव तद्गुणयोगात्। इत्येवमादि कपिलवचनं न विरुद्धं [illegible] यम्॥ ६॥

गङ्गाधरः—इत्थमिन्द्रियेन्द्रियाधिष्ठानेन्द्रिय-द्रव्येन्द्रियार्थेन्द्रिय-बुद्धिमनांसि यथायोग्यं निर्दिश्योपदिश्य च तेषूपक्रमणं दर्शयति—तदर्थेत्यादि। यद्यदात्मकमिन्द्रियं तदिन्द्रियस्यार्थेन महातियोगात् रूपातिदर्शनादितः, अयोगात् सर्व्वशो रूपाद्यदर्शनादितः, मिथ्यायोगात् द्विष्टभैरवादिमूर्त्तिदर्शनादितः। समनस्कं तदिन्द्रियमात्रस्य चेष्टाहेतुत्वापन्नेन मनसा सहैव तदिन्द्रियं चक्षुःश्रोत्रादिकं विकृतिं मनस्तदिन्द्रियचेष्टाप्रयोजकताक्रियायां चक्षुरादिकन्तु स्वार्थग्रहणे चेष्टाया वृद्धिन्यूनान्यथाभावान्यतममापद्यमानम्। यथास्वेति—तदिन्द्रियजबुद्ध्युपघाताय सम्पद्यते इति पञ्चेन्द्रियबुद्ध्युपघातेन भवन्तीन्द्रियकाः शारीररोगाः। रसनेन्द्रियार्थमिथ्यायोगात् समनस्करसनबुद्ध्युपघातेन भवन्ति सर्व्वाङ्गावयवगज्वरादयः शारीररोगा इति। इति तु व्याधिहेतुत्वं स्वस्थाधिकारे दर्शितं तत्परिवर्ज्जनार्थम्। सुतरां त्रिविधमिन्द्रियेन्द्रियार्थयोगं विहाय समयोगा-

चक्रपाणिः—शुभाशुभप्रवृत्तिहेतुरिति यदुक्तं तदुपपादयति, तदर्थेत्यादि।—तदिन्द्रियमर्थस्य रूपादेरतियोगो रूपाद्यतिदर्शनम्, अयोगो हीनमात्ररूपादिदर्शनं सर्व्वशो रूपाद्यदर्शनञ्च, मिथ्यायोगो विकृतबीभत्सरूपादिदर्शनं, समनस्कं मनसा सहितं, विकृतिं विकारमापद्यमानम्। समनस्कमिति विशेषणं कुर्व्वन् चक्षुराद्युपघातात् मनसोऽप्युद्विग्नत्वदुर्मनस्त्वादिलक्षणो विकारो भवतीति दर्शयति। यथास्वं या यस्यात्मीया बुद्धिः; सामर्थ्ययोगात् समयोगात्, पुनःशब्दः पूर्व्वपक्षाद् व्यावर्त्तयति, प्रकृतिं स्वभावमनुपघातमानमिन्द्रियमिति शेषः, यथास्वं बुद्धिमाप्याययतीत्यात्मीयां बुद्धिं सातत्येन जनयतीत्यर्थः।

**मनसस्तु चिन्त्यमर्थः । तत्र मनसो बुद्धेश्च त एव समानातिहीनमिथ्यायोगाः प्रकृतिविकृतिहेतवो भवन्ति ॥ ७ ॥**

दिन्द्रियार्थयोः समयोगात् पुनस्तु समनस्कमिन्द्रियं प्रकृतिं स्वभावमापद्यमानं यथास्वं तदिन्द्रियजां बुद्धिमाप्याययति सातत्येनानुवर्त्तयद् वर्द्धयति ।

अथ बाह्यपञ्चेन्द्रियोपक्रमणमुपदिश्य आभ्यन्तरेन्द्रियोपक्रमणमुपदिशति, अत्र मनोऽर्थं प्रागनुक्तमुपदिशति—मनसस्त्वित्यादि । चिन्त्यमिति उक्तपञ्चेन्द्रियबुद्धिभिन्ना बुद्धिश्चिन्तात्रोच्यते, तद्विषयं चिन्त्यं, सुखदुःखेच्छाद्वेषप्रयत्नबुद्ध्यहङ्कारस्मृतिस्मरणीयादिकं (चिन्त्यत्वेन मनोऽर्थः । न तु ग्राह्यत्वेनात्मग्राह्यत्वात् ।) तत्र तस्मिंश्चिन्त्येऽर्थे मनसः समानातिहीनमिथ्यायोगा बुद्धेश्च धीधृतिस्मृतिरूपायास्ततः समनस्कादिन्द्रियाच्च जाताया बुद्धेश्च त एव समयोगादयो योगाः प्रकृतिविकृतिहेतवो भवन्तीति । तत्र चिन्त्ये मनसः समानयोगाद्बुद्धेश्च प्रकृतेः स्वभावस्य हेतुर्भवति । तत्र चिन्त्ये मनसोऽतियोगहीनयोगमिथ्यायोगा बुद्धेश्च । बुद्धेर्मनसश्च विकृतेर्वृद्धिहान्यन्यतररूपान्यथाभावरूपाया हेतवो भवन्ति । मनसश्चिन्त्यानामतिचिन्तनादचिन्तनान्मिथ्याचिन्तनाच्च मनोबुद्धेर्विकृतिमापन्नता प्रज्ञापराध उच्यते । तेन मनःकायवाचां कर्म्मणामतियोगायोगमिथ्यायोगेभ्यो भवन्त्यागन्तवः शारीररोगाश्च, भवन्ति च लोभमोहादयो मानसरोगा इति प्रज्ञापराधजाः ।

नन्विन्द्रियेन्द्रियार्थयोर्मनोमनोऽर्थयोश्चातियोगात् कद्वाद्यतियोगाद्धानादेर्वृद्धिरिव भवितुमर्हति । पञ्चेन्द्रियाणां मनसश्च कुतोऽर्थग्रहणेऽन्यथाभावः स्यादिति चेत् ? सत्यं ; स्वस्वार्थानामतियोगोऽयोगश्च द्विविधः । इन्द्रियाणां मनसश्च स्वस्वप्रभावात् अनल्पानतिशयितानामर्थानां सातत्येनोपयोगः । अतिशयितानाञ्च यदृच्छयोपयोगश्चातियोगः । सातत्येनानुपयोगस्त्वनल्पानतिशयितानां यदृच्छया चाल्पानामुपयोगश्चायोगः । अनल्पानतिशयितानां मनोऽननुकूलानां सातत्येनोपयोगः अतिशयमनोऽननुकूलानां यदृच्छयोपयोगश्च

पूर्व्वं मन उक्तं तस्य ग्राह्यं विषयमाह—मनसस्तु चिन्त्यमर्थ इति । इन्द्रियनिरपेक्षं मनो यद् गृह्णाति तच्चिन्त्यं, यदि वा इन्द्रियगृहीतमेवार्थं यत् पुनरिन्द्रियनिरपेक्षं मनो गृह्णाति तच्चिन्त्यम्, एतच्च प्राधान्यादुक्तं तेन मनोऽर्थानां सुखादीनामनुपादानं दोषत्वेन नैवोद्भावनीयम् । त एवेति—मनोविषयस्य चिन्त्यस्य समयोगास्तथातिहीनमिथ्यायोगाश्च, प्रकृतिरविकारः स्वभाव इति यावत्, विकृतिर्विकारः ; तत्र चिन्त्यस्य सम्यग्योगो मनसो मनोबुद्धेश्च प्रकृतिहेतुर्भवति, अतियोगादयस्तु चिन्त्यस्य मनसो मनोबुद्धेश्च चिन्तनध्यानादिलक्षणाया

तत्रेन्द्रियाणां समनस्कानामनुपतप्तानामनुपतापाय प्रकृतिभावे प्रयतितव्यमेभिर्हेतुभिः। तद् यथा—सात्म्येन्द्रियार्थ-

मिथ्यायोगः। तेभ्यो भवन्तीन्द्रियाणां मनसश्च वृद्धिह्रासान्यथाभावाः। सति च तथात्वे वृद्ध्यापि पुनरिन्द्रियाणां मनसश्च नानुवर्त्तते सम्यगर्थग्रहणशक्तिरर्थेनाभिभूतत्वात्। तथाभूतेनायथास्वावस्थानात्। यथास्वावस्थो हि भावः सम्यग् यथास्वकर्म्म साधयितुमलं भवति वृद्धिश्चक्षुष्यादिना चक्षुरादीनान्तु सम्यगाहारादितः समवायेन भवति, भवति च सम्यगर्थग्रहणशक्त्यावरकदोषापहरणम्। तथा चक्षुषो भास्करादतितेजस्विनामुग्ररूपयोगात् तैजसांशवृद्धौ तर्पकश्लेष्मणः क्षयात् स्वार्थस्य सम्यग्ग्रहणशक्तिः फलं हीयते। एवं श्लेष्मणा अनुतर्पितं हि चक्षुस्तेजोमयं सम्यगर्थं ग्रहीतुमलं भवतीति॥ ७॥

<u>गङ्गाधरः</u> एवं श्रोत्रानुकूलत्वानादीनामतिशब्दादिभिरभिभवाद् वृद्धावपि श्रोत्रादीनां सम्यक् स्वार्थग्रहणशक्तिर्नानुवर्त्तत इति। तत्र किं कर्त्तव्यमित्यत आह—तत्रेत्यादि। तत्र समनस्कानामिन्द्रियाणां स्वस्वार्थातियोगादिभिः स्वस्वबुद्ध्युपघातः स्यात्। मनोऽर्थातियोगादितश्च मनसो बुद्धेश्चोपघातः स्यात्। तस्मिन्नुपघाते सति इन्द्रियाणां श्रोत्रादीनां पञ्चानां समनस्कानां मनःसहितानामर्थात् श्रोत्रस्पर्शननयनरसनघ्राणमनसामुपतापः स्यात्। तस्मादनुपतप्तानां षण्णां श्रोत्रादीनां स्वस्वार्थातियोगादियोगवर्ज्जनेनानुपतापायानुपतापार्थं भाव्युपघातानुत्पत्त्यै प्रकृतिभावे स्वभावसत्तायां प्रकृत्यनुवृत्तौ एभिरव्यवहितोत्तर वक्ष्यमाणहेतुभिरुपायैः प्रयतितव्यं प्रयत्नवता भवितव्यं पुरुषेणेति शेषः। स्वस्वार्थातियोगादियुक्तैरुपतप्तानान्तु आतुर्य्याधिकारे वक्ष्यमाणैर्हेतुभिः प्रकृतिभावे प्रयतितव्यमित्यर्थादेव लभ्यते।

तान् हेतूनाह तद् यथेत्यादि। सात्म्येन्द्रियार्थसंयोगेनेति, सात्म्यानामिन्द्रियार्थानां सं सम्यग्योगेन हेतुना श्रवणादिपञ्चेन्द्रियाणां स्वस्वार्थाति-

विकृतैर्विकृतयो भवन्तीति वाक्यम्, अनिन्द्यानानिष्टिभयानकचिन्तनैर्मनोऽपि विकृतं मनोबुद्धिमपि विकृतां करोतीति भावः॥ ७॥

<u>चक्रपाणिः</u> तत्रेदृशे कर्त्तव्यमाह—तत्रेत्यादि। अनुपतापायानुपघाताय, उपघातकहेतुवर्ज्जनेनेत्यभिप्रायः; प्रकृतिभावे निर्व्विकारत्वकरणे भेषजोपयोगेनेत्यभिप्रायः। सात्म्येन्द्रियार्थसंयोगेन इति सात्म्येन्द्रियार्थसम्यग्योगेन, बुद्ध्या सम्यगिदं मम हितम् इदं ममाहितमित्यवेक्ष्यावेक्ष्य, कर्म्मणां प्रवृत्तीनां सम्यक् प्रतिपादनेनेत्यहितकर्म्मपरित्यागेन हितकर्म्माचरणेन च, एतेन प्रज्ञापराध-

**संयोगेन बुद्ध्या सम्यगवेक्ष्यावेक्ष्य कर्म्मणां सम्यक् प्रतिपादनेन देशकालात्मगुणविपरीतोपसेवनेन च ॥**

**तस्मादात्महितं चिकीर्षता सर्व्वेण सर्व्वं सर्व्वदा स्मृतिमास्थाय सद्वृत्तमनुष्ठेयम् । तद्ध्यनुष्ठानं* युगपत् सम्पादयत्यर्थद्वयमारोग्यमिन्द्रियविजयञ्च ॥ ८ ॥**

योगाद्यनुपतप्तानामनुपतापाय बुद्ध्या युक्त्या सम्यगवेक्ष्यावेक्ष्य विविच्य प्रकृतिभावे प्रयतितव्यम् । मनसस्तु स्वार्थातियोगाद्यनुपतप्तस्यानुपतापाय प्रकृतिभावे बुद्ध्या युक्तिबुद्ध्या इदं हितमहितमिदमिति निरूपेण सम्यगवेक्ष्यावेक्ष्य विविच्य कर्म्मणां सम्यक् प्रतिपादनेन वाङ्मनःशरीरप्रवृत्तीनामहितानां वर्ज्जनेन प्रयतितव्यम् । देशकालात्मगुणविपरीतानां हितानामुपसेवनेन च हेतुना षण्णामेवेन्द्रियाणामनुपतप्तानामुपतापाय प्रकृतिभावे प्रयतितव्यम् । आत्मगुणविपरीतेति प्रकृतिगुणविपरीतेत्यर्थः । एतेनासात्म्येन्द्रियार्थसंयोगपरिहारेण पञ्चेन्द्रियाणां प्रज्ञापराधपरिहारेण मनसोऽनागतबाधायाः प्रतिषेधः कर्त्तव्य इत्युक्तम् । कालगुणविपरीतोपसेवनेनेति वचनेन परिणामपरिहारेण षण्णामेवानागतव्याधिप्रतिषेधः कर्त्तव्य इत्युक्तम् । देशोऽत्र विशेषेण ज्ञापनार्थं पृथगुक्त इति ।

तस्मादिति । पुंसा सात्म्येन्द्रियार्थसंयोगेन बुद्ध्या सम्यगवेक्ष्यावेक्ष्य कर्म्मणां सम्यक्प्रतिपादनेन देशकालात्मगुणविपरीतोपसेवनेन च पञ्चेन्द्रियाणामनुपतप्तानामनुपतप्तस्य मनसश्चानुपतापाय प्रकृतिभावे प्रयत्नस्य विधातव्यत्वाद्धेतोरात्महितं चिकीर्षता सर्व्वेण पुरुषेण सर्व्वदा स्मृतिमास्थाय सद्वृत्तं सद्भिरिन्द्रियपञ्चकेन मनसा वाचा कायेन वृत्यतेऽस्मिन् कर्म्मणीति तत्, सतामारोग्यवतां वा वृत्तं, साधु वा वृत्तं सद्वृत्तमनुष्ठेयम् । इन्द्रियवाङ्मनःशरीरप्रवृत्तिरूपमनुष्ठेयमाचरणीयम् । सन्तः खलु इह चामुष्मिंश्च लोके शान्तिशौचाचारादियोगजनितधर्म्मप्रभावात् त्रिवर्गमव्यतिरिच्य जना वर्त्तन्त इति ।

मूलाहितार्थप्रवृत्तिनिषेधेन हितार्थप्रवृत्त्युपदेशः कृतो भवति । एतेनासात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिहाराभ्यामनागताबाधप्रतिषेधरूपश्चेष्टोक्ता भवति । उपपन्नविकारप्रतिषेधोपायस्तु देशकालेत्यादिना कथ्यते । गुणशब्दः प्रत्येकमभिसम्बध्यते, आत्मशब्देन प्रकृतिविकारयोर्ग्रहणं, तस्मात् कर्म्मणां क्रियारूपाणां शास्त्रविहितत्वेन प्रतिपादितानां सम्यगनुष्ठानमारोग्यहेतुः, तच्च कर्म्म हितं

* तद्ध्यनुष्ठितम् इति चक्रपाणिधृतः पाठः ।

तत् सद्वृत्तमखिलेनोपदेक्ष्यामोऽग्निवेश !

तद्यथा—देव-गो-ब्राह्मण-गुरुवृद्ध-सिद्धाचार्य्यानर्च्चयेत्।

ननु सद्‌वृत्तं कस्मादनुष्ठेयं न त्वसद्‌वृत्तमित्याशङ्क्याह—तद्धीत्यादि। किञ्च तत् सद्‌वृत्तं किंगुणमित्यत आह तद्धीत्यादि। हि यस्मात् तत् सद्‌वृत्तस्यानुष्ठानं युगपदर्थद्वयं सम्पादयति यदैवारोग्यं तदैवेन्द्रियजयम्, न तु कदाचिदारोग्यं कदाचिदिन्द्रियजयमिति। अथेद्वयं विवृणोति आरोग्यमिन्द्रियजयञ्चेति॥ ८॥

गङ्गाधरः—तत् सद्‌वृत्तमखिलेन प्रायेण कार्त्स्न्येन वा। यद्वा हि यस्मात् तदनुष्ठानं युगपदारोग्येन्द्रियजयसम्पादकं तत् तस्मात् तत् सद्‌वृत्तमखिलेनोपदेक्ष्याम इत्यर्थः।

इत्थञ्चाखिलेन सद्‌वृत्ते सत्युपदेष्टव्ये मात्राशनादिकमातुराशनाचाराश्च वेगधारणवर्ज्जनादयश्च ये सद्‌वृत्तरूपा उक्तास्तेभ्योऽवशिष्टं सार्व्विकं सद्‌वृत्तमुपदिशति—तद्यथेत्यादि। तत्रादौ पूज्यत्वादाह देवेत्यादि। गुरुशब्देनात्र वर्णतोऽसवर्णानां शूद्रान्तानां पूर्व्वपूर्व्ववर्णो गुरुः। सवर्णतः पुनर्ज्ञानतो ब्राह्मणानां, शौर्य्यतः क्षत्रियाणां, धनतो वैश्यानां, वयसा शूद्राणामधिका ये ते गुरवः। सर्व्वेषाञ्च मातापितरौ पितृव्यादयश्च सम्पर्काः। असम्पर्कास्तु सवर्णा उत्तमवर्णाश्चेति विशेषेण वर्णतो गुरुः, कनिष्ठापेक्षया गरिष्ठत्वज्ञापनार्थम्। सर्व्वेषां मर्त्यानां देवा गुरवः। गावश्च मर्त्यानां ब्राह्मणादीनां नृणां गुरवः। ब्राह्मणाश्च वर्णानां गुरवः। गुरवश्च वृद्धादीनां गुरवः। वृद्धाश्च सिद्धादीनां गुरवः। सिद्धास्तापसाः। ते पुनराचार्य्याणां गुरवः। इत्युत्तरोत्तराणां पूर्व्वपूर्व्वार्च्चकत्वख्यापनार्थं तथैवानुपूर्व्या निर्देशः कृतः। आचार्य्यो ब्रह्मादौ गुरुः। एतच्चानुष्ठानं धर्म्मद्वारेणारोग्येन्द्रियजयसम्पादकम्।

सद्‌वृत्तानुष्ठानरूपं, तस्मात् कारणात् आत्महितं कर्त्तुमिच्छता स्मृतिमास्थायावधानेन सद्‌वृत्तोपदेशं स्मर्त्तव्येत्यर्थः। सतां वृत्तमनुष्ठानं देहवाङ्मनःप्रवृत्तिरूपं सद्‌वृत्तमनुष्ठेयम्। इह जन्मनि जन्मान्तरे च शान्तिशौचाचारादियोगजनितधर्म्मप्रभावात् त्रिवर्गमव्याकुलमुपयुञ्जानास्तिष्ठन्तीति सन्त इत्युच्यन्ते, अधार्म्मिकास्तु विद्यमाना अप्यप्रशस्तत्वप्रधानत्वेनासन्त इत्युच्यन्ते। सद्‌वृत्तानुष्ठानं दर्शयति तद्धीत्यादि। सद्‌वृत्तानुष्ठाने नान्यथिष्यमभिलषेदित्याद्यनुष्ठानेनेन्द्रियं यम्यते, यन्त्रणाभ्यासात् तदिन्द्रियं जीयते इत्युक्तमिन्द्रियविजयञ्चेति॥ ८॥

चक्रपाणिः—यस्मादेवंगुणं सद्‌वृत्तानुष्ठानं तत् तस्मात् सद्‌वृत्तमुपदेक्ष्यामः, अखिलेन

**अग्निमनुचरेत्। ओषधीः प्रशस्ता धारयेत्। द्वौ कालावुपस्पृशेत्। मलायनेष्वभीक्ष्णं पादयोश्च वैमल्यमादध्यात्। त्रिः पक्षस्य केशश्मश्रुलोमनखान् संहारयेत्। नित्यमनुपहतवासाः सुमनः-सुगन्धिः स्यात्। साधुवेशः, प्रसाधितकेशो, मूर्द्धश्रोत्राऽभ्यक्त-***

अग्निमनुचरेदिति—अग्निं सायं प्रातरग्निहोत्रमनु प्रातरनु सायं सायमनु पुनः प्रातश्च तदाचरेदित्यर्थः। ओषधीरिति—वनजाः प्रशस्ताः। यस्मिन् यस्मिन् त्रिगुणप्रह्लादो याः शास्त्रान्तरे चायुर्वेदे चोक्तास्ता इत्यर्थः। एतच्चापि युगपदुभयार्थसम्पादकं प्रभावात्। द्वौ कालाविति—सायं प्रातरुपस्पृशेत् स्नायात्। सन्ध्यां वोपासीत। मध्याह्नसन्ध्योपासनायां तथा कालनियमाभावात् कालात्यये प्रायश्चित्ताभावाच्च। मलायनेष्वित्यादि—"मेध्यं पवित्रम्" इत्यादिना मात्राशितीये स्वयमुक्तम्। तथागुणत्वादत्र विधीयते सद्वृत्तत्वेन। त्रिः पक्षस्येति—मासि पञ्च दिनानि तु षट् षट् दिनानि मध्ये विहायाष्टमे दिने श्मश्र्वादिसंहारे भवन्तीति व्यवस्थायाः पक्षस्य त्रिः संहारयेदित्युपदिष्टम्। द्वितीयपक्षे तु प्रथमदिनसहितमेव गणनीयम्, चातुर्थकादिज्वरदिनवत्। एतच्च मात्राशितीये "पौष्टिकं वृष्यम्" इत्यादिगुणत्वेनोक्तत्वादत्र विधीयते सद्वृत्तत्वेन गुणद्वयसम्पादनख्यापनार्थम्। नित्यमनुपहतवासाः मलवच्छिन्नं वासो न परिदध्यात्। "काम्यं यशस्यम्" इत्यादिगुणत्वान्निर्मलश्लक्ष्णवासो बिभृयात्। नित्यञ्च सुमनःसुगन्धिः स्यात्। मात्राशितीयोक्त-"वृष्यं सौगन्ध्यम्"-इत्यादिगुणत्वात्। अत्र सुमनसा सुगन्धिपुष्पेण माल्यरूपेण, सुष्ठु गन्धो यस्य स तथा स्यादिति विधीयते। साधुवेशः मात्राशितीयोक्त-"दौर्गन्ध्यं गौरवम्"-इत्यादिगुणत्वात् शरीर-परिमार्जनवान् स्यादित्यत्र विधीयते। प्रसाधितकेशः मात्राशितीयोक्त-"पौष्टिकम्"-इत्यादिगुणत्वात् केशश्मश्रुप्रसाधनवान् स्यादित्यत्र विधीयते।

कार्त्स्न्येन, द्वौ कालौ सायं प्रातः, उपस्पृशेत् स्नायात्, यदि वा उपस्पृशेत् सन्ध्यामुपासीत ; त्रिः पक्षस्येति पञ्चभिः पञ्चभिर्दिनैः, यदि वा क्षारपाणेर्वचनप्रामाण्यात् पक्षशब्दोऽयं मासे वर्त्तते, "पतति पक्षद्वाभ्यां मासः" इति, पञ्चदशाहः पक्षोऽभिधीयते ; एवं "पतति ऋतुर्मासाभ्यां पक्ष-रूपाभ्याम्" इति मासोऽपि पक्षाभिधेयः ; उक्तञ्च क्षारपाणौ "त्रिर्मासस्य रोमनखान् संहारयेत्" इति। अनुपहतवासा अम्लानवासाः, प्रसिद्धकेशः प्रसाधितकेशः, इह केशप्रसाधनाभिधानात् पूर्वं

* मूर्द्धश्रोत्रघ्राण इति चक्रपाणिः।

पादतैलनित्यो, धूमपः, पूर्व्वाभिभाषी, सुमुखः, दुर्गेष्वभ्युपपत्ता, होता, यष्टा, दाता, चतुष्पथानां नमस्कर्त्ता, बलीनामुपहर्त्ता, अतिथीनां पूजकः, पितॄणां पिण्डदः, काले हितमितमधुरार्थवादी, वश्यात्मा, धर्म्मात्मा, हेतावीर्ष्युः, फले नेर्ष्युः, निश्चिन्तो,

मूर्द्धश्रोतोऽभ्यक्तपादतैलनित्यः मात्राशितीये प्रोक्त-"नित्यं स्नेहार्द्रशिरसः"-इत्यादिनोपदिष्टगुणत्वात् मूर्द्धतैलनित्यः स्यात्। तथा तत्रोक्त-"न कर्णरोगाः"-इत्यादिगुणत्वात् कर्णतैलनित्यः स्यात्, तथाणुतैलनस्यनित्यः स्यात्। कर्णादिच्छिद्रमिह स्रोतः। अभ्यक्ततैलनित्यः स्यात् मात्राशितीयोक्त-"स्नेहाभ्यङ्गात्"-इत्यादिगुणत्वात् तथा तत्रोक्त-"खरत्वम्"-इत्यादिगुणत्वात् पादतैलनित्यः स्यात्; इत्येतेऽत्र विधीयन्ते। धूमप इति मात्राशितीयोक्तगुणत्वात् तत्रोक्तत्रिविधधूमपः स्यादित्यत्र विधीयते। पूर्व्वाभिभाषीति अभ्यागतं वा मान्यपूज्यशीलादिकं सुहृदं वा प्रथमतो दृष्ट्वा पूर्व्वमेवाभिभाषितुं कुशलप्रश्नादिवाचा आलपितुं शीलवान् स्यात्। सुमुखः पराङ्मुखतारहितः स्यात् पराङ्मुखे हि स्वभ्यागताद्यभिशापात्।

दुर्गेष्वभ्युपपत्ता दुर्गातिपतितानामभिमुखीभूयोपपत्ता स्यात्। दुर्गोद्धर्त्ता हि दुर्गोद्धारकमार्गाभिरभिनन्द्यति। होता वन्हिवैश्वादिभिर्होमकारकः स्यात्। यष्टा देवयजनकारकः स्यात्। तयोर्हि ब्रह्मा देवाश्च प्रसीदन्ति। ते च ब्रह्मणाऽभ्यस्ताः, तेषां प्रसादेन ब्रह्मप्रसादो लक्ष्यते। दाता दीनेभ्योऽदीनेभ्यश्च ब्राह्मणादिभ्यः सज्जनेभ्यः। चतुष्पथानां नमस्कर्त्ता स्यात्, तादृशपथेऽपि नानापुण्यपुरुषगमनागमनलभ्यबहुपुण्यत्वात्। बलीनामुपहर्त्ता पूजोपहाराणामुपहरणेन देवताप्रसादात्; अथवा बलिजीविका तदुपहर्त्ता स्यात्। अतिथीनां पूजकः स्यात् बहुधर्म्महेतुत्वात्। पितॄणां पिण्डदः स्यात् पितृलोकतृप्त्या विष्णुप्रीतेः। काले यथाकालानतीते हितं मितञ्च मधुरं मनोज्ञमर्थवन्तं प्रयोजनवन्तं वदितुं शीलवान् स्यात्; तथात्वे हि लोकानुरक्तो भवति। वश्यात्मा वश्येन्द्रियमनाः स्यात्। आत्मशब्देनात्र मन उच्यते, तद्वशेन

केशसंहरणे वचनं तीर्थादियात्रानिमित्तेन कृतमुण्डनस्नानकार्य्यविषयम्। पूर्व्वाभिभाषी प्रथमसम्भाषणशीलः। दुर्गेष्वभ्युपपत्ता दुर्गतिपतितानां रक्षिता, यष्टा यज्ञकारकः, वश्यात्मा वश्येन्द्रियः; आत्मशब्दोऽयमिन्द्रियवचनः, हेतावीर्ष्युरित्यनेन येन हेतुनायं धनवान् विद्यावान् वा जातः स हेतुर्मे कथं भवेदिति प्रयत्नवता भवितव्यमिति दर्शयति फले नेर्ष्युरित्यनेन, परस्य न धनादि-

**निर्भीको, धीमान्, ह्रीमान्, महोत्साहः, दक्षः, क्षमावान्, धार्म्मिकः, आस्तिकः, विनयबुद्धिविद्याभिजनवयोवृद्धसिद्धाचार्य्याणामुपासिता, छत्री, दण्डी, मौनी, सोपानत्को, युगमात्रदृक् विचरेत् । मङ्गलाचारशीलः, कुचेलास्थि-कण्टकामेध्य-**

चक्षुरादीनामपि वश्यत्वं स्यात् ; तथात्वे हि लोभादयो न स्युरिति । एवं धर्म्मात्मा धर्म्मे मनो यस्य स तथा । हेतावीर्ष्युरिति विद्याधनधर्म्मादिसदुपार्ज्जनहेतौ ईर्ष्याशीलवान् स्यात् । न तु तत्पुरुषाय न वा तद्धेतवे, येनायं विद्वानभूत् तेनाहं विद्वान् स्यामित्यादिरूपेर्ष्यावान् स्यात् ; न तु अयं विद्वानभूत् कदा मारयिष्यतीत्येवम् । अयं येन विद्वानभूत् नाहं तेन विद्वान् स्याम् अन्येन पुनः स्यामित्येवञ्च ईर्ष्यावान् न स्यात् । फले नेर्ष्युः फले विद्याधनधर्म्मादौ परेषां फले ईर्ष्युर्न स्यात् ।

निश्चिन्तो दुश्चिन्तात्यागी स्यात् । निर्भीक इति समुपस्थिते दुष्परिहार्य्यभयहेतौ भयं मा कुर्य्यात्, परिहाराय शक्ये तु भये भयं परिहरेत् । धीमान् मनोविवेचनाव्यापारेण बुद्धिं कुर्य्यात् । ह्रीमान् व्यवहाराहाराभ्यामन्यत्र लज्जाशीलः स्यात् । महोत्साहः कर्म्मसु कर्त्तव्येषु मनसो महोत्सुक्यवान् स्यात् । दक्षः कर्म्मसु कुशलः स्यात् । क्षमावान् भूतेषु । धार्म्मिक इति धर्म्मात्मेति पदेन लब्धं धर्म्मचित्तत्वमत्र तु तच्चित्तः सन् धर्म्ममाचरितवानुच्यते । आस्तिकस्तिस्त्रपणाय वक्तव्यनास्तिकतारहितः ।

विनयेत्यादि । विनयेन वा बुद्ध्या वा विद्यया वाभिजनेन विशुद्धकुलोत्पत्त्या वा वयसा वा वृद्धा ये तेषाम्, सिद्धानां तपोभिः आचार्य्याणां सावित्र्यादायकानां गुरूणामुपासिता परिचर्य्यया उपासनां कुर्य्यात् । छत्रीति मात्राशनायात्कतावेधनामानगुणत्वात् छत्री सन्नहः । तत्रोक्तस्खलतः संमानष्ठानामोन गुणत्वाद्रात्रौ दण्डी स्यात् । मौनी अवचनः सन्, सोपानत्कस्तत्र वाक्चक्षुष्य स्पर्शनोहितामित्यादिगुणत्वात् पादत्रधारणवान् सन्, युगमात्रदृक् युगो हस्तचतुष्टय तन्मात्रावनिस्तता दर्शनशीलः सन् विचरेत् गच्छेत् । मङ्गलाचारशीलः स्यात्, मङ्गलमनकक्रियाशीलः स्यात् । कुचेलं कुत्सितवसनम् ; अनुपहतवासा इत्यनेनापहतवाससः प्रतिषेधः, इह मालिनादि-

कलहसम्बन्धानिवारणेच्छा कर्त्तव्येति दर्शयति । निर्भीक इति उपस्थितेऽपरिहार्य्ये भयहेतौ भीरुत्वम्, शक्यपरिहारेषु दुष्टादृष्टप्रत्यवायहेतुषु तु भेतव्यमेव ; अभिजनो विशुद्धकुलम् ;

केशतुषोत्कर-भस्मकपाल-स्नानबलिभूमीनां परिहर्त्ता, प्राक् श्रमाद् व्यायामवर्ज्जी स्यात्। सर्व्वप्राणिषु बन्धुभूतः स्यात्। क्रुद्धानामनुनेता, भीतानामाश्वासयिता, दीनानामभ्युपपत्ता, सत्यसन्धः, सामप्रधानः*, परपरुषवचनसहिष्णुः, अमर्षघ्नः, प्रशमगुणदर्शी, रागद्वेषहेतूनां हन्ता ॥

नानृतं ब्रूयात्। नान्यस्वमाददीत। नान्यस्त्रियमभिलषेत्

कुत्सितवसनप्रतिषेधः। अस्थि प्राणिनाम्, कण्टकं वृक्षस्य, अमेध्यमनीप्सनीयम्। केशः प्राणिमात्रस्य, लोमान्यत्राजिनादि मेध्यानि, तुषं धान्यादेः, उत्करः शर्करा कङ्कर इति लोके, भस्म भसितं काष्ठादेः, कपालं घटादीनां खर्परं नरशिरः कपालञ्च, स्नानबल्योर्भूमिः, स्नानस्थानमन्यत्र जलाशयात्, बलीभूमिः पूजोपहारत्यागस्थानम्, एतेषां परिहर्त्ता परित्यक्ता स्यात्। प्राक् श्रमादर्द्धशक्तितः अर्द्धशक्तिमत्यन्तं व्यायामं कुर्य्यात् ततः श्रमे जायमाने व्यायामं त्यजेत्। सर्व्वप्राणिषु बन्धुभूतः स्यात्। क्रुद्धानामापाततोऽनुनेता विनयी स्यात्। भीतानामाश्वासयिता आश्वासवचनेन निर्भयत्वं कुर्य्यात्। दीनानामभ्युपपत्ता उपकारार्थं स्वीकर्त्ता। सत्यसन्धः सत्यसन्धीकृत् सत्यप्रतिज्ञः। सामप्रधानः। परपरुषवचनसहिष्णुः परेषां शत्रूणामितरेषां वा परुषस्य निष्ठुरस्य वचनस्य सहिष्णुः स्यात्। अमर्षमक्षमां हन्तीति अमर्षघ्नः क्रुद्धानां क्रोधशान्तिकृत्। प्रशमगुणदर्शी प्रशमः शान्तिस्तद्गुणेन द्रष्टुं शीलं यस्य स तथा स्यात्। रागद्वेषहेतूनां धनादिविभागाधिकारार्थकलहादीनां हन्ता स्यात्।

नानृतं ब्रूयात् असत्यं न ब्रूयादिति तु धर्म्माविरोधिमिथ्यावाक्यादन्यत्र ; तेन राजयक्ष्मिणां काकादिमांसानि तैत्तिरिकादिमांसान्यभि-

सर्व्वप्राणिषु बन्धुभूत इति तु यद्यपि राजद्विट्पतितादीनामधर्म्मभयात् चिकित्सां न करोतीति तथापि तेष्वपि करुणार्द्रहृदयत्वेन मन्तव्यम्। अभ्युपपत्ता उपकारार्थं स्वीकर्त्ता, सत्यसन्धः प्रतिज्ञातार्थनिर्व्वाहकः, अमर्षोऽक्षमा तां हन्तीति अमर्षघ्नः, प्रशमं शान्तिं गुणत्वेन द्रष्टुं शीलं यस्य स प्रशमगुणदर्शी।

नानृतं ब्रूयादित्यस्य राजयक्ष्मणि "काकांस्तित्तिरिशब्देन" इत्याद्ययथार्थभाषणोपदेशेन विरोधो न वाच्यः ; यतः—परापकारफलकमसत्यभाषणमनुतम्याहारदोषेण स्तूयते

* सामप्रधान इति चक्रपाणिधृतः पाठः।

नान्यश्रियम् । न वैरं रोचयेत् । न कुर्य्यात् पापम् । न पापेऽपि पापी स्यात् । नान्यदोषान् ब्रूयात् । नान्यरहस्यमागमयेत् ॥

नाधार्म्मिकैर्न नरेन्द्रद्विष्टैः सहासीत; नोन्मत्तैः, न पतितैः, न भ्रूणहन्तृभिः, न क्षुद्रैः, न दुष्टैः । न दुष्टयानान्यारोहेत्, न जानुसमं कठिनमासनमध्यासीत, नाऽनास्तीर्णमनुपहितमविशालमसमं वा शयनं प्रपद्येत, न गिरिविषममस्तकेष्वनु-

धायाशनार्थं मिथ्यावचनं न विरुध्यते; परापकारार्थमनृतभाषणप्रतिषेधात् । उक्तश्चान्यत्र "स्त्रीनर्म्मसुद्वाहविधौ तथैव सर्व्वेषु चैव व्यसनेषु नृणाम् । प्राणात्यये सर्व्वधनापहारे पश्चानृतान्याहुरपातकानि ।।" इति वचनम् । नान्यस्वमाददीतेति स्पष्टम् । नान्यस्त्रियमभिलषेत् रन्तुमिति शेषः; एतेनेन्द्रियजयसम्पत्तिः स्यात् । नान्यश्रियमित्यत्राभिलषेदित्यनेनान्वयः । स्वश्रीनयान्यश्रियं नाभिलषेदित्यर्थः । न वैरं रोचयेत्, न कुर्य्यात् पापमिति द्वयं सुगमम् । न पापेऽपि पापी स्यात् । पापेऽपि समुपस्थिते न च वारयितुं पापातः शक्येऽपि न पापी स्यात्; तत् पापं न कुर्य्यात् । नान्यदोषान् ब्रूयादिति सुगमम् । नान्यरहस्यमागमयेत अन्येषां गुह्यतमं नोपदेशयेदन्यत्र ।

नाधार्म्मिकैः सहासीतेति परेणान्वयः, संसर्गादिपापं भवति तत्परिहारार्थम् । न नरेन्द्रद्विष्टैः सहासीत नरेन्द्रकोपसम्भवात्; एवं नोन्मत्तैः सहासीत, न पतितैः सहासीत, न भ्रूणहन्तृभिर्गर्भघातकैः सहासीत, न क्षुद्रैर्नीचैः, न दुष्टैः खलचौरादिभिः सहासीत; सर्व्वत्रान्वीयते सहासीतेति पदम् । न दुष्टयानं दुरश्वस्ताश्वादिम् । न जानुसमं कठिनमासनमध्यासीत पतनभयात् । नानास्तीर्णमित्यादिकं शयनविशेषणम् । अनुपहितं शिरसोऽधो न्यस्तमुपधानं विना, अविशालमबहलम्, असममुच्चनीचम् । न गिरिविषममस्तकेष्वारोहेदिति गिरिषु विषममस्तकेषु

न तु परस्य जीवनार्थमन्यथाभाषणम्; उक्तञ्च "प्राणात्यये सर्व्वधनापहारे पश्चानृतान्याहुरपातकानि" । आगमयेत् बुध्येत । अधार्म्मिकसङ्गनिषेधेनैव पतितादिसङ्गनिषेधे लब्धे पुनस्तदभिधानं विशेषप्रतिषेधार्थम् । भ्रूणहा गर्भघातकः । अनुपहितमनुपधानं गण्डुकादिरहितम् ।

चरेत्, न द्रुममारोहेत्, न जलोग्रवेगमवगाहेत, न कुलच्छाया-मुपासीत, नाग्न्युत्पातमभितश्चरेत्, नोच्चैर्हसेत्, न शब्दवन्तं मारुतं मुञ्चेत्, नासंवृतमुखो जृम्भां क्षवथुं हास्यं वा प्रवर्त्तयेत्, न नासिकां कुष्णीयात्, न दन्तान् विघट्टयेत्, न नखान् वादयेत्, नास्थीन्यभिहन्यात्, न भूमिं विलिखेत्, न छिन्द्यात् तृणम्, न लोष्टं मृद्नीयात्, न विगुणमङ्गैश्चेष्टेत, ज्योतींष्यग्निं*चामेध्यमशस्तञ्च नाभिवीक्षेत, न हुं कुर्य्याच्छवम्, न चैत्यध्वजगुरुपूज्याशस्तच्छायामाक्रामेत्, न क्षपास्वमर-

चोच्चावचमदेशेषु। न द्रुममारोहेदिति सद्वृत्ताधिकारादसत्फलार्थमिति लभ्यते। तेन करप्रचितिकरसायनपादे आमलकीवृक्षारोहणं न निरुध्यते। न जलोग्रेति स्पष्टम्। कुलच्छायां सत्कुलोत्पन्नानां स्ववंशोत्पन्नानां वा छायां नोपासीत पङ्क्त्यामिति शेषः। नाग्न्युत्पातमुल्कापातमभितश्चतुःपार्श्वे कृत्वा न चरेत्।

नोच्चैर्हसेदिति स्पष्टम्। शब्दवन्तं मारुतमधोवायुं शब्देन न मुञ्चेत्। नासंवृतेत्यादि संवृतमुखेन जृम्भां क्षवथुं हास्यम् प्रवर्त्तयेत्। तेन हठान्मुखकुटिलत्वं भवति। न नासिकां कुष्णीयाद्विघट्टयेत्। न दन्तानित्यादौ न किञ्चिद् दृष्टफलं दृश्यते किन्त्वदृष्टफलजनकत्वादिह सद्वृत्तोपदेशो बोध्यः। नास्थीन्यभिहन्यात्। न भूमिं लिखेत् व्यर्थं भूमिलिखनं न कुर्य्यात्। न छिन्द्यात् तृणं व्यर्थं नखेन। न लोष्टं मृद्नीयाद्व्यर्थं पदेन। न विगुणमङ्गैर्विगुणं यथा स्यात् तथा नाङ्गैश्चेष्टेत। ज्योतींषि तेजस्वतां सूर्य्यादीनाम्। तथाग्निं चामेध्यमशस्तं चिताङ्गारादिकम्। न हुं कुर्य्याच्छवमिति "यः शवं हुं करोति तेन सोमो वहिर्निरस्तो भवतीत्यागमः" इति। न चैत्यध्वजादिच्छाया-माक्रामेदुल्लङ्घयेत्। चैत्यो ग्रामदेवकुलसदृशगृहम् ध्वजस्य विशेषणम्। न

न द्रुममारोहेदिति सामान्यो विधिरस्य च विशेषेण रसायनवक्ष्यमाणामलकीवृक्षारोहणोपदेशेन महाफलेन च बाधा भवत्येव; कुष्णीयाद् विघट्टयेत्; इह सद्वृत्तोपदेशो यत्र न नखान् वादयेदित्यादौ साक्षात् दृष्टमदृष्टं वा फलं न दृश्यते तत्राप्यदृष्टफलं वचनप्रामाण्यादेव बोद्धव्यम्। न शवं हुं कुर्य्यादित्यत्रागमः,—"यः शवं हुं कुर्य्यात् तेन सोमो बहिर्निरस्तो भवति" इति। चैत्यो

* अनिष्ट इति पाठः।

सदनचैत्यचत्वरचतुष्पथोपवनश्मशानायतना*न्यासेवेत। नैकः शून्यगृहं न चाटवीमनुप्रविशेत्, न पापवृत्तान् स्त्रीमित्रभृत्यान् भजेत्, नोत्तमैर्विरुध्येत, नावरानुपासीत, न जिह्मं रोचयेत्, नाऽनार्य्यमाश्रयेत्, न भयमुत्पादयेत्, न साहसातिस्वप्नप्रजागरस्नानपानाशनान्यासेवेत, नोर्द्ध्वजानुश्चिरं तिष्ठेत्, न व्यालानुपसर्पेत् न दंष्ट्रिणो न विषाणिनः, पुरोवातातपावश्यायातिप्रवातान् जह्यात्, कलिं नारभेत, नानिभृतोऽग्निमुपासीत, नोच्छिष्टो नाधः कृत्वा प्रतापयेत्, नाविगत-

क्लमस्तिष्ठेत रात्रिषु, अमरसदनं, चैत्यं ग्रामस्यान्त्युच्चस्थानं, चत्वरमङ्गनम्, आयतनं वधस्थानम्। नैक इत्यादि स्पष्टम्। न पापवृत्तान् स्त्रीप्रभृतीन् भजेत्। नोत्तमैर्विरुध्येत्। नावरानिति नीचान् नोपासीत। न जिह्मं न कुटिलं रोचयेत्। नानार्य्यमाश्रयेदिति शूद्रं नाश्रयेत्; आगत दूरात् पापेभ्यो गच्छतीत्यार्य्यः, तद्भिन्नोऽनार्य्यः, ब्राह्मणक्षत्रियवैश्ययोनिद्विजभिन्नः शूद्रः।

न भयमुत्पादयेत् कस्यापीति शेषः। न साहसेत्यादि। अत्रातिशब्दस्य स्वप्नादिभिः प्रत्येकमन्वयात् साहसं नासेवेत न चातिस्वप्नं न चातिप्रजागरं न चातिस्नानं न चातिपानं न चात्यशनम् आसेवेतेत्यन्वयः। साहसस्य न वेगान्धारणीये वर्ज्जनविधिः, अत्र सद्वृत्तनयोपदेशार्थमुक्तेन पुनरुक्तिः। नोर्द्ध्वजानुर्दण्डायमानः सन। न व्याडानुपसर्पेत। न दंष्ट्रिणः सर्पशूकरगजादिदृढदन्तान नोपसर्पेत् समीपं न गच्छेत्। विषाणिनः शृङ्गिणः। पुरोवातः पूर्व्वदिश आगतवातः। अतिप्रवातः अतिशयप्रकृष्टवातः। कलिं

ग्रामप्रधानतरुः; आघातनं वधस्थानम्; अवरा नीचा; जिह्मं कुटिलम्; आरात् दूरात् पापेभ्यो यात आर्य्यः, तद्विपरीतोऽनार्य्यः; अतिशब्दः स्वप्नादिभिः सह प्रत्येकं सम्बध्यते। इह च प्रकरणे साहस-नक्तंदधिभोजनादीनां येषां प्रकरणान्तर एव निषेधः कृतः, तानि पुनर्निषिध्यन्ते प्रकरणवशादेव, प्रकरणप्राप्तो ह्यर्थः प्रागुक्तोऽपि पुनरभिधीयमानः प्रकृतग्रन्थस्य न्यूनतामुद्दस्यति, पुनरभिधीयमानार्थं गौरवञ्च दर्शयति न पुनरुक्तदोषमावहति; यदुक्तम् "अधिकरणवशाद् दार्ढ्याद् गुणदोषप्राप्तितोऽर्थसम्बन्धात्। स्तुत्यर्थं संशयतः शिष्यधियाश्चाभिपूजार्थम्। तन्त्रेऽस्मिन् पुनरुक्तं पुनरुक्तं नेष्यते तद्धि।" इति। ऊर्द्ध्वजानुर्दण्डायमानः, व्यालाः सर्पाः, असुनिभृतोऽसमा-

* आघातनेति पाठः।

क्रमो नानाप्लुतवदनो न नग्न उपस्पृशेत्, न स्नानशाट्या स्पृशे-दुत्तमाङ्गम्, न केशाग्राण्यभिहन्यात्, नोपस्पृश्य ते एव वाससी बिभृयात्, नास्पृष्ट्वा रत्नाज्यपूज्यमङ्गलसुमनसोऽभिनिष्क्रामेत्, न पूज्यमङ्गलान्यपसव्यं गच्छेत्, नेतराण्यनुदक्षिणम्।

नारत्नपाणिर्नास्नातो नोपहतवासा नाजपित्वा नाहुत्वा देवताभ्यो नानिरूप्य पितृभ्यो नादत्त्वा गुरुभ्यो नातिथिभ्यो

पापसूचककर्म्म। नानिभृतोऽसमाहितः अगोपने इति वा। अग्निं वैतानिकं वैवाहिकञ्च। नोच्छिष्टो भोजनावशिष्टयुक्तः सन्नग्निं लौकिकाग्निं "सामान्य-शब्दस्य व्याख्यानतोऽर्थविशेषप्रतिपत्तिः न हि सन्देहादलक्षणम्" इति महा-भाष्यात्। न प्रतापयेत नाधः कृत्वा पादाः कृत्वाग्निमित्यन्वयः। नाविगतक्लमः श्रान्तः। न अनाप्लुतवदनः मुखं जलेनाप्लुतं यस्य स आप्लुतवदनः तद्भिन्नोऽनाप्लुतवदनः। न नग्नः दिगम्बरः सन उपस्पृशेत् स्नायात्। न स्नान-शाट्या स्नानः परिहितवसनेनोत्तमाङ्गं शिरः स्पृशेत्। केशाग्राणि नाभिहन्यात् नोपस्पृश्येति उपस्पृश्य स्नात्वा ते एव स्नानवाससी यद्वसनद्वयं परिधाय स्नायात् तद्वसनद्वयं केशशरीरादिमार्जनानन्तरं निष्पीड्य वारिणार्द्रं वा न बिभृयात् परिदध्यात्। नास्पृष्ट्वेत्यादि। अस्पृष्ट्वा रत्नानि मणिमुक्तादीनि, आज्यानि घृतानि, पूज्यानि शालग्रामादीनि, मङ्गल्यानि यान्यन्यानि, सुमनसः पुष्पाणि अस्पृष्ट्वा न निष्क्रामेत् स्वभवनात् कुत्रचिन्न गच्छेत्। गृहात् कुत्रचिद्गमन एतानि स्पृष्ट्वा गच्छेदिति भावः। न पूज्येत्यादि। पूज्यानि मङ्गल्यानि च शवशिवा-पूर्णकुम्भजल्पाहरणार्थगच्छद्गृहीतापूर्णकुम्भव्यतिरिक्तानि अपसव्ययानं न गच्छेत् वामे कृत्वा न गच्छेदित्यर्थः। शवादीनि वामे कृत्वा गच्छेत्। एतानि विना इतराणि पूज्यमङ्गल्येभ्योऽन्यानि अनुदक्षिणं न गच्छेत् दक्षिणे कृत्वा न

नारत्नपाणिरित्यादि नाददीतेत्यन्तमेकवाक्यम्। द्विजः पुरुषो नारत्नपाणिः रत्नयुक्तहस्तं विना नान्नमाददीत न भुञ्जीत। न चास्नातः, न चोपहतवासः परिहितवान्, न चाप्यहुत्वा देवताभ्यो नित्यहोममकृत्वा,

द्विजः, नाधः कृत्वा अग्निमिति सम्बन्धः। ते एव वाससी स्नानवाससी कृत्यर्थः यदि वा स्नान-कालात् पूर्वं धृते अपसव्यं वामम्।

**नोपाश्रितेभ्यो नापुण्यगन्धो नामाली नाप्रक्षालितपाणिपाद-वदनो नाशुद्धमुखो नोदङ्मुखो न विमना नाभक्ताशिष्टाशुचि-क्षुधितपरिचरो न पात्रीष्वमेध्यासु नादेशे नाकाले नाकीर्णे नादत्त्वाग्रमग्नये नाप्रोक्षितं प्रोक्षणोदकैर्न मन्त्रैरनभिमन्त्रितं न**

नाजपित्वा गायत्र्यादिकमजपित्वा न भुञ्जीत । नानिरूप्येति पितृभ्यः श्राद्ध-निर्व्वपणं न कृत्वा न भुञ्जीत । श्राद्धान्नदानपर्य्यन्तकर्म्मनर्पणान्यतमनिर्व्वपणं कृत्वा भुञ्जीत । नादत्त्वा गुरुभ्यो यथाशक्ति किञ्चिद्भोज्यम् । न चातिथिभ्यो-ऽदत्त्वा नाप्युपाश्रितेभ्यो निकटस्थाश्रितेभ्योऽदत्त्वा भुञ्जीत । नापुण्यगन्धो-ऽमाङ्गल्यगन्धवान् न तु भुञ्जीत. नामाली पुष्पमाल्याभाववान् न भुञ्जीत. न चाप्रक्षालितपाणिपादवदनः "आर्द्रपादस्तु भुञ्जानः शतं वर्षाणि जीवति" इति चोक्तम्. नाशुद्धमुखः अनाचम्य. नोदङ्मुखः उत्तराभि-मुखो न भुञ्जीत. स्वाकदुर्याहितत्वाभावात् । "आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः । धन्यं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः ॥" इति महाभारतवचनं । ऋतं यद्द्रव्यमाहरति तद्द्रव्यगुणमात्रलाभे सत्य-मित्यर्थः । प्राङ्मुखादिभोजने त्वायुष्यत्वाद्यधिकगुणत्वात् मद्ग्रन्थकवचने-ऽभिधानमिति । मनुवचनेनाप्युदङ्मुखभोजनस्यान्नगुणातिशयगुणाभावात् उदङ्मुखान्यमुखभोजनस्य आयुष्यत्वादिगुणानुरूप्यादिविशेषगुणस्यापि त्वभा-वादुदङ्मुखभोजनं निषिध्यते । धन्यमित्यत्र श्रियमिति पाठ इत्यन्नेति शेषः । इति कश्चित् । सत्यमायुष्यमित्यादिकं क्रियाविशेषणम् । न विमना अन्यमना न भुञ्जीत । नाभक्तेत्यादि । अभक्तपरिचरः भक्तिहीनपरिचरः. अशिष्टपरि-चरः अशुचिपरिचरः क्षुधितपरिचरः स्यात् न भुञ्जीत । न पात्रीष्वमेध्यासु अमनोज्ञाशुचिपात्रीषु न भुञ्जीत । नादेशे अप्रशस्तदेशे न भुञ्जीत । नाकाले कालो ह्यात्महितोऽभ्यासीकृतः सार्द्धप्रहरद्वयादूर्द्ध्वं दिवा रात्रौ प्रहरादूर्द्ध्वं न भुञ्जीत । नाकीर्णे अकीर्णे संकीर्णदेशे न भुञ्जीत. न आकीर्णे बहुजन-व्याप्ते इति वा । नादत्त्वाग्रमग्नये अग्नये भोज्यस्याग्रं न दत्त्वा न भुञ्जीत । नाप्रोक्षितं प्रोक्षणोदकैर्वेदोक्तविधिना प्रोक्षितभिन्नमन्नं न भुञ्जीत । न मन्त्रैर्वेदोक्तमन्त्रैरभिमन्त्रितं न कृत्वा न भुञ्जीत । वेदे तु प्रोक्षणाभिहननाभिमन्त्रा

अनिरूप्येतिनिषेध, आकीर्णे बहुजनाकीर्णे । अन्नस्य प्रोक्षणाभिमन्त्रणानि वेदे बोद्धव्यानि ।

कुत्सन् न कुत्सितं न प्रतिकूलोपहितमन्नमाददीत न पर्य्युषित-मन्यत्र मांसहरितकशुष्कशाकफलभक्ष्येभ्यः ॥

नाशेषभुक् स्यादन्यत्र दधिमधुलवणसक्तुसर्पिर्भ्यः । न नक्तं दधि भुञ्जीत । न सक्तूनेकानश्नीयात् । न निशि न भुक्त्वा न बहून् न द्विर्नोदकान्तरितान् न छित्त्वा द्विजैर्भक्षयेत् । नानृजुः

ज्ञातव्याः । न कुत्सन साधु वाप्यसाधु वा भवतु वान्नं किन्तु न निन्दयित्वान्नं भुञ्जीत । तत्र यदि कुत्सितं भवति तदापि किं न निन्दितव्यमित्याह— न कुत्सितम् कुत्सितमन्नं नाददीत, न प्रतिकूलैः प्राणिभिरुपहितं समीपगतम् । अन्नमिति भोक्तव्यं तावत् । तत्र निषेध्यमाह—न पर्य्युषितमिति । तत्रापि निषेध्यान्याह अन्यत्रेत्यादि । हरितमार्द्रकादिकं शुष्कशाकं शुष्कपत्रादि । शुष्काशुष्कफलं भक्ष्यं घृतपूर्णपिष्टमोदकादयः एभ्योऽन्यत्र पर्य्युषितं नान्न-माददीत । अन्यत्रेति भिन्नमित्यर्थः ।

कथमन्नादानमित्याह—नाशेषभुक् स्यादिति । पात्रेऽवशेषं रक्षयित्वा भुञ्जीतेत्यर्थः । निःशेषेण न भुञ्जीतेति यावत् । अन्यत्र दध्यादिभ्यः । दध्यादिभिन्नमन्नं न निःशेषेण भुञ्जीत । दध्यादिकन्तु निःशेषेणैवेत्यर्थः । न नक्तं दधीत्यादि । "अलक्ष्मीदोषयुक्तत्वान्नक्तन्तु दधि वर्ज्जितम्" इत्युक्त-दोषत्वेनात्र दधिभोजनं रात्रौ निषिध्यते । आगमान्तरमपि—"दिवा कपित्थे वसति रात्रौ दध्नि च सक्तुषु । अलक्ष्मीः कलहाधारा कोविदारे कृतालया" ॥ इति । अत एवाह न सक्तूनिति । एकान् केवलान् शर्कराघृतरहितान् सक्तून् दिवा नाश्नीयात्, न चाश्नीयान्निशि सक्तून्, नापि भुक्त्वाश्नीयात् सक्तून्, न वा बहून् सक्तून्, न च द्विः द्विः वारं सक्तून् नाश्नीयात् । नोदकान्तरितानिति उदकान्तर्गतान् सक्तून् नाश्नीयात् । न छित्त्वेति । द्विजैर्दन्तैश्छित्त्वा न भक्षयेत् । चर्व्वयित्वा भक्षेत् । नानृजुः न कुटिलः सन् भुञ्जीयात्, नानृजुरश्नीयात्, नानृजुः

कुत्सितं स्वरूपत एव कार्य्यत्वेन निन्दितम्; हरितकमार्द्रकादि; शुष्कशाकं शुष्क-पत्रादि; भक्ष्या मोदकादयः; नाशेषभुक् स्यात् निःशेषभोजी न स्यादित्यर्थः; नक्तं दधिभोजननिषेधे आगमः—"दिवा कपित्थे वसति रात्रौ दध्नि च सक्तुषु । अलक्ष्मीः कलहाधारा कोविदारे कृतालया ॥" एकानिति घृतशर्करारहितान्, नोदकान्तरितान् मोदकं पृथक् पीत्वेत्यर्थः ।

त्तुयान्नाघ्राय शयीत। न वेगितोऽन्यकार्य्यः स्यात्। न वाय्वग्निसलिलसोमार्कद्विजगुरुप्रतिमुखं निष्ठीविकावातवर्च्चोमूत्राण्युत्सृजेत्। न पन्थानमवमूत्रयेत् न जनवति नान्नकाले न जपहोमाध्ययनबलिमङ्गलक्रियासु श्लेष्मशिङ्घाणकं मुञ्चेत्।

न स्त्रियमवजानीत, नातिविश्रम्भयेत्, न गुह्यमनुश्रावयेत्, नाधिं कुर्य्यात्। न रजस्वलां नातुरां नामेध्यां नाशस्तां नानिष्टरूपाचारोपचारां नादक्षां नादक्षिणां नाकामां नान्यकामां नान्यस्त्रियं नान्ययोनिं नायोनौ न चैत्यचत्वरचतुष्पथोपवन-

शयीतेति बोध्यम्। न वेगितः इति स्पष्टम्। न वाय्वादिप्रतिमुखं सम्मुखं निष्ठीविका मुखेन स्वल्पकासादिकफोद्गिरणम्। न पन्थानमवमूत्रयेत पथि न मूत्रयेत, न जनवति। नान्नकाले, न जप्यादिक्रियासु च श्लेष्मसिङ्घाणकं कफं नासिकातो मुञ्चेत्।

न स्त्रियमवजानीतेति स्पष्टम्। तथा स्त्रियं नातिविश्रम्भयेत अतिविश्रम्भणं न कुर्य्यात्। एवं न गुह्यमनुश्रावयेत्, स्त्रियमित्यन्वयः। तथा नाधिं कुर्य्यात् अधिकारिणीं स्त्रियं न कुर्य्यात्। न रजस्वलामित्यादिभिर्व्यवायं गच्छेदित्यनेनान्वयः। स्त्रियमित्यनुवर्त्तते सर्व्वत्र। नामेध्यामस्पृश्यां न व्यवायं गच्छेत्। नाशस्तां कुष्ठादिरोगेण स्वभावतो वाऽप्रशस्ताम्। नानिष्टरूपोपचारामभिमतरूपरहितामभिमतोपचाररहिताञ्च न गच्छेत्। नादक्षिणामननुकूलां वामामित्यर्थः। नाकामां स्वं न या कामयते तां न गच्छेत्। नान्यकामामन्यपुरुषे कामवतीं न गच्छेत्। नान्यस्त्रियमन्यपुरुषेण विवाहितां स्वेनाविवाहितामेव। नान्ययोनिमसजातीयां न गच्छेत्। योनिग्रहणेन देवनरराक्षसादिसमानप्रकाराणां परिग्रहात् मनुष्यादीनां राक्षसादियोनिर्व्यवच्छेदः। नायोनाविति योनिं विहाय अन्यत्र पायौ स्त्रियं न गच्छेत। न चैत्यादिषु स्थानेषु स्त्रियं व्यवायं गच्छेत; चैत्यं ग्रामस्य साधारणदेवस्थानं प्रधानवृक्षो वा,

[illegible], न शयीतानुद्धुरिति योज्यम्; नातिविश्रम्भयेत् नातिप्रश्रयवतीं कुर्य्यात्; नाधिकुर्य्यात् न सर्व्वत्राधिकृतां कुर्य्यात्; अशस्तां कुष्ठादिसम्बन्धेन; नान्ययोनि-

श्मशानायतनसलिलौषधिद्विजगुरुसुरालयेषु न सन्ध्ययोः नाति न निषिद्धतिथिषु नाशुचिः नाजग्धभेषजः नाप्रणीतसङ्कल्पः नानुपस्थितप्रहर्षो नाभुक्तवान् नात्यशितो न विषमस्थो न मूत्रोच्चारपीड़ितो न श्रमव्यायामोपवासक्लमाभिहतो नाऽरहसि व्यवायं गच्छेत्।

न सतो न गुरून् परिवदेत्। नाशुचिरभिचारकर्म्मचैत्यपूज्यपूजाध्ययनमभिनिर्व्वर्त्तयेत्। न विद्युत्स्वनार्त्तवीषु नाभ्युदितासु दिक्षु नाग्निसंप्लवे न भूमिकम्पे न महोत्सवे

चत्वरमङ्गनम्, श्मशानं स्पष्टम्, आयतनं प्राणिवधस्थानम्। सलिले ओषध्यालयेषु न स्त्रियं गच्छेत्। न सन्ध्ययोः प्रातःसायंसन्ध्ययोः। नाति स्त्रियमतिव्यवायं न गच्छेत्। निषिद्धतिथिषु व्यवायं न गच्छेत्; पूर्णिमाष्टमीचतुर्द्दशीकुहूषु संक्रान्तिषु च नित्यश्राद्धदिनवर्ज्जं श्राद्धदिनादिषु। नाशुचिरशुचिः सन्। अजग्धभेषजोऽनुपयुक्तवाजीकरणौषधः। नाप्रणीतसङ्कल्पः येन प्रकर्षेण न नीतः प्रापितो मनसि सङ्कल्पो मैथुनेच्छाकर्म्म सोऽप्रणीतसङ्कल्पः। अनुपस्थितप्रहर्षः अजातमेहनोच्छ्रायः। न अभुक्तवान् भुक्तवानेव। नात्यशितः अतिभुक्तवान्। न विषमस्थः विषमस्थानस्थितः। न मूत्रोच्चारपीड़ित इति स्पष्टम्। नाऽरहसि अनिर्ज्जने स्थाने व्यवायं न गच्छेत्। व्यवायं मैथुनम्। स्त्रियं गच्छेदिति गमयेत् इति कश्चित्। व्याप्त्यर्थं गम्ये भावप्रत्ययान्तस्य व्यवायस्य कर्म्मेति भ्रमः। वस्तुतो नायोनावित्यन्तेषु स्त्रियं न गच्छेदित्यन्वयः। न चैत्येत्यादिषु व्यवायं न गच्छेदित्यन्वयः।

न सतो न गुरून् परिवदेत्। न मिथ्यावादं वदेत्। नाशुचिः सन्नभिचारकर्म्म चैत्यस्य ग्राम्यसाधारणदेवस्य पूज्यस्य च पूजामध्ययनं वेदादीनामभिनिर्व्वर्त्तयेत्। न विद्युत्स्वित्यादिनाध्ययनमभ्यस्येदित्यनेनान्वयः। अनार्त्तवीषु भिन्नर्त्तुकाले विद्युत्सु जातासु तद्दिने। अभ्युदितासु दिग्दाहवतीषु दिक्षु। अग्निसंप्लवे ग्रामनगरादौ वह्निना दग्धे। भूमिकम्पे इति स्पष्टम्। महोत्सवे

मित्रस्यान्ते अभिगच्छेदिति शेषः; अभ्ययोनिरसवर्णा; ओषध्यादिभिराक्रान्ताः सम्बाध्यते; नातिथिष्विति न निषिद्धासु मैथुनं प्रतिपत्पूर्णिमामावस्यातिषु; अजग्धभेषजोऽनुपयुक्तभेषजः; अनुपस्थितप्रहर्षोऽजातध्वजोच्छ्रायः; अरहसि अविजने; अभ्युदितासु दिक्षु दाहवतीषु दिक्षु;

नोल्कापाते न महाग्रहोपगमने न नष्टचन्द्रायां तिथौ न सन्ध्ययोर्नामुखाद् गुरोः नावपतितं नातिमात्रं न तान्तं न विस्वरं नानवस्थितपदं नातिद्रुतं न विलम्बितं नातिक्लीवं नात्युच्चैर्नातिनीचैः स्वरैरध्ययनमभ्यस्येत्।

नातिसमयं जह्यात्। न नियमं भिन्द्यात्। न नक्तं नादेशे चरेत्। न सन्ध्यास्वभ्यवहाराध्ययनस्त्रीस्वप्नसेवी स्यात्। न बालवृद्धलुब्धमूर्खक्लिष्टक्लीवैः सह सख्यं कुर्य्यात्। न मद्यद्यूत-

स्वसम्पर्के दुर्गोत्सवविवाहादौ। नोल्कापाते इति स्पष्टम्। महाग्रहोपगमनं चन्द्रसूर्य्यग्रहणं शनिगुरुराहुकेतुसञ्चारे च। न नष्टचन्द्रायामिति कृष्णपक्षे चतुर्द्दश्याममावस्यायां शुक्लायां प्रतिपदि च। न सन्ध्ययोरिति च स्पष्टम्। नामुखाद् गुरोर्गुरोर्मुखादेव गृहीतमध्ययनं न तु स्वयं व्याख्यातमध्ययनं वैधं सद्वृत्ताचरणफलदम्। न अवपतितं वर्णहीनं, नातिमात्रमतिशयेन न, न तान्तं रूक्षं, न विस्वरमुदात्तादिस्वररहितम्, अनवस्थितपदं पदावस्थानरहितं, न अतिद्रुतं, न अतिविलम्बितं, न अतिक्लीवम् अतिमात्रेण बलहीनस्येवातिविलम्बोच्चारणं, नात्युच्चैरुदात्तादिस्वरैरेवात्युच्चैर्न, नातिनीचैरनुदात्तादिस्वरैरेव नातिनीचैरिति। अध्ययनमधीतग्रन्थमभ्यस्येत् पुनःपुनरावर्त्तयेत्। एषोऽध्ययनप्रकारस्तु गृहाश्रमे ज्ञेयो न तु ब्रह्मचर्य्याश्रमे। तत्र ब्रह्मचर्य्यविधानमेव सद्वृत्तमिति।

नातिसमयम्। अतिनिमित्ते सति बहुभिः कृतविधारणं नियमः। न नक्तं चरेत् नादेशे च चरेदित्युभयत्रान्वयः। न सन्ध्यास्वित्यादि। यद्यपि सन्ध्ययोरभ्यवहाराध्ययनस्त्रीसेवनं पूर्व्वं निषिद्धं तथापि तत् स्त्रीसेवनाध्ययनादिनिषेधवचनं सन्ध्याकालस्य क्रियायां निषिद्धं तदुपसंहृत्येह शेषसंग्रहार्थं तदुक्तमिति न पुनरुक्तम्। न बालेत्यादि स्पष्टम्। अत्र क्लिष्टो

महाग्रहोपगमनं चन्द्रसूर्य्यग्रहणम्, अवपतितं हीनवर्णं ; तान्तं रूक्षस्वरम् ; अतिक्लीवमतिविलम्बितोच्चारणम्।

अतिसमयो मिलित्वा बहुभिः कृतो नियमः। न सन्ध्यास्वित्यादौ पुनः स्त्रीनिषेधः सन्ध्यासु यावदुक्तर्त्तव्यस्य न्यूनतापरिहारार्थमुक्तः, पूर्व्वन्तु स्त्री यथा न सेव्या तद्विशेषेणोपदिशता न सन्ध्ययोरित्युक्तमिति प्रकरणभेदार्थं न पौनरुक्त्यम्। क्लीवो हीनसत्त्वः, क्लिष्टो निन्दितो रोगादिना, गणात् मिलितान्। कृच्छ्रवृत्तीय आपदि सहायः, बहिः कुर्य्यादवमानीयात्।

वेश्याप्रसङ्गरुचिः स्यात्। न गुह्यं विवृणुयात्। न कञ्चिदव-जानीयात्। नाहंमानी स्यात्। नादक्षो नादक्षिणो नासूयको न दक्षिणान् * परिवदेत्। न गवां दण्डमुद्यच्छेत्। न वृद्धान् न गुरून् न गणान् न नृपान् वाधिक्षिपेत्। न चातिब्रूयात्। न बान्धवानुरक्तकृच्छ्रद्वितीयगुह्यज्ञान् वहिः कुर्य्यात्।

नाधीरो नात्युच्छ्रितसत्त्वः स्यात्। नाभृतभृत्यो नाविश्रब्ध-स्वजनो नैकः सुखी न दुःखशीलाचारोपचारः न सर्व्वविश्रम्भी न सर्व्वाभिशङ्की न सर्व्वकालविचारी च।

रोगादिना, क्लीवः क्लीववदल्पसत्त्वः कर्म्मस्वनुत्साही। न मद्येत्यादि। मद्यादीनां प्रसङ्गे रुचिर्यस्य स तथा। विवृणुयात् व्यक्तीकुर्य्यात्। न कञ्चित् जनमवजानीयात्। अहम्मानी गर्व्ववान्। अदक्षः कर्म्मण्यपटुः। अदक्षिणः अननुकूलः। नासूयको गुणेषु दोषारोपणकारी न स्यादित्यन्वयः। न दक्षिणान् अनुकूलान् परिवदेत्। न गवामित्यादि स्पष्टम्। न वृद्धादीन् अधिक्षिपेत् निन्दया स्तुतिवादं कुर्य्यात्। न अतिब्रूयात् न अतिशयेन जल्पेत्। न बान्धवेत्यादि। बान्धवान् न वहिः कुर्य्यात् स्वानुगतभावात्। न चानुरक्तान्, न कृच्छ्रद्वितीयान् आपदि सहायपुरुषान्, न चापि गुह्यज्ञान्।

नाधीरो न वात्युच्छ्रितसत्त्वः, अबुधो न स्यात् अत्युद्धतमनाश्च न स्यात्। नाभृतभृत्यः भृताः पोषिता भृत्याः पोष्या येन स भृतभृत्य एव स्यात्। नाविश्रब्धस्वजनः स्यात् स्वजनेष्वविश्वासं न कुर्य्यात्। नैकः सुखी स्यात् मधुरादिद्रव्याभ्यवहारव्यवहारोपभोगादिनैक एव सुखी न स्यात्। विभज्यापरेभ्यो दत्त्वाऽभ्यवहरेत्। एवमन्यत्र। न दुःखेत्यादि। शीलं स्वाभाविकवर्त्तनम्, आचारः शास्त्रोपदेशानुरूपव्यवहारः, उपचारः परिच्छदः। एषु दुःखिजनवन्न स्यात्। न सर्व्वविश्रम्भी न सर्व्वान् जनान् विश्वस्यात्।

नैकः सुखी स्यात् सुखहेतून्याम्रफलादीन्येक एवाविभज्योपयुञ्जीतेत्यर्थः। शीलं स्वाभाविकं वृत्तम्, आचारः शास्त्रोपदेशानुरूपो व्यवहारः, उपचारः परिच्छदः, एतेषाञ्च दुःखत्वं दुःखहेतुत्वात्; सर्व्वविश्रम्भी सर्व्वेषु विश्वासी।

* ब्राह्मणानिति वा पाठः।

न कार्य्यकालमतिपातयेत्, नापरीक्षितमभिनिविशेत्, नेन्द्रियवशगः स्यात्, न चञ्चलं मनो भ्रामयेत् । न बुद्धीन्द्रियाणामतिभारमादध्यात्, न चातिदीर्घसूत्री स्यात्, न क्रोधहर्षावनुविदध्यात्, न शोकमनुवशेत्, न सिद्धावौत्सुक्यं गच्छेन्नासिद्धौ दैन्यम् । प्रकृतिमभीक्ष्णं स्मरेत् । हेतुप्रभावनिश्चितः स्यात् हेत्वारम्भनित्यश्च । न कृतमित्याश्वसेत्, न वीर्य्यं जह्यात्, नापवादमनुस्मरेत् ।

न सर्व्वाभिशङ्की स्यात् । न सर्व्वेषामेव मन्देहकारी स्यात् । न सर्व्वकालविचारी स्यात् । स्पष्टम् ।

न कार्य्यकालमतिपातयेत् अतीतं कुर्य्यात् । नापरीक्षितमज्ञातं स्थानादिकं नाभिनिवेशं गच्छेत् । नेन्द्रियवशगः स्यात् इन्द्रियाणां वशगो न स्यात् । न चञ्चलमिति मनोविशेषणम् । हेत्वन्तरेण चञ्चलं मनो न भ्रामयेन्न पुनश्चञ्चलं कुर्य्यात् । न बुद्धीन्यादि । बुद्धीरिन्द्रियाणामतिभावमनिवृत्तिम् । दीर्घसूत्री चिरक्रियः । न क्रोधहर्षावनुविदध्यात् । यादृक्क्रोधस्तादृशमुग्रकर्म्म न कुर्य्यात्, एवं यादृशहर्षस्तादृशकार्य्यं न कुर्य्यात् । न शोकमनुवशेत् शोकवशगो न स्यात् । औत्सुक्यमतिहर्षं सिद्धौ जयादिक्रियासिद्धौ अभिमतकर्म्मणश्चासिद्धौ न दैन्यमत्यहर्षं गच्छेत् । प्रकृतिं स्वस्यापरस्य स्वभावं जन्मकारणादिगुणकर्म्मद्रव्याणि स्मरेत् ; तां हि स्मरन्न रागादिभिरभिभूतः स्यात् । हेतुप्रभावनिश्चितः स्यात् ; शुभाशुभहेतूनां शुभाशुभफलजनकताप्रभावादेवंदृशफलं स्यात् इत्येवं निश्चितबुद्धिः स्यात् । हेत्वारम्भनित्यश्च स्यात शुभहेतुयोगेनारम्भतत्परः स्यादित्यर्थः । न कृतमित्याश्वसेदिति कृतमिति बुद्ध्या आश्वासवान् न स्यात् । छान्दसत्वात् विकरणलोपव्यत्यये लुक् शप् । न वीर्य्यं जह्यात् पराक्रमं न जह्यात् । नापवादमनुस्मरेत् स्पष्टम् ।

चञ्चलमिति क्रियाविशेषणं, यदि वा मनोविशेषणम् । बुद्धेरिन्द्रियाणां बुद्धीन्द्रियाणाम् ; अतिदीर्घसूत्री प्रतीकनिपातशङ्की, किं वा दीर्घसूत्री चिरक्रियः । न शोकमनुवशेदिति न चिरं शोकवशगः स्यात्, उत्सेकमतिगर्व्वम् * प्रकृतिमुत्पत्तिकारणं स्मरेत्, प्रकृतिं पञ्चभूतलक्षणामनित्यां स्मरन् न

* "उत्सेकम्" इत्यत्र "औत्सुक्यम्" इति क्वचित्; तदर्थस्तु अतिहर्षम् ।

नाशुचिरुत्तमाज्याक्षततिलकुशसर्षपैरग्निं जुहुयात्। आत्मानमाशीर्भिराशसानः, अग्निर्मे मापगच्छेच्छरीरात्, वायुर्मे प्राणानादधातु, विष्णुर्मे बलमादधातु, इन्द्रो मे वीर्य्यं शिवा मां प्रविशन्त्वापः, आपो हि ष्ठेत्यपः स्पृशेत्। द्विः परिमृज्यौष्ठौ पादौ चाभ्युक्ष्य मूर्द्धनि खानि चोपस्पृशेत्, अद्भिरात्मानं हृदयं शिरश्च।

नाशुचिरित्यादि। उत्तमाज्यं गोघृतं, शुचिरेवैतैर्जुहुयादित्यर्थः। आत्मानमाशासान इत्यादि अपः स्पृशेदित्यन्तो विच्छेदः। अग्निर्मे मापेत्यादिना आपो हि ष्ठेत्यन्तैर्मन्त्रैरपः स्पृशेत् स्नायात। आपो हिष्ठारभीष्टये पुरुषार्थसाधिनीर्धीमहीत्यादि। अपः स्पृशेत् स्नायादिति कश्चित, तन्न, द्वौ कालावपस्पृशेदित्यनेन स्नानस्य पूर्व्वमुक्तत्वात; तस्यैव स्नानस्यायं मन्त्र इत्यन्यस्तच्च न; द्विः परिमृज्येत्यादि दर्शनात्। उक्तं मनुना "उपस्पृश्य द्विजो नित्यमन्नमद्यात् समाहितः। भुक्त्वा चोपस्पृशेत् सम्यगद्भिः खानि च संस्पृशेत्॥" अस्यार्थस्तु द्विजो ब्राह्मणक्षत्रियादिर्नित्यं ब्रह्मचर्य्यकाले तदनन्तरमपि उपस्पृश्य त्रिरपः पीत्वा समाहितोऽनन्यमना अन्नमद्यात्। भुक्त्वा च सम्यगद्भिरुपस्पृशेत, आचम्य त्रिरपः पिबेत् ततश्चौष्ठौ प्रमृज्य यत् कर्त्तव्यं तदाह खानि चेति। संस्पृशेदद्भिः शीर्षण्यानि षडिन्द्रियाधिष्ठानानि इत्यर्थः। "ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत। कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन॥ अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते। कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः॥ त्रिराचामेदपः पूर्व्वं त्रिः प्रमृज्यात् ततो मुखम्। खानि चैव स्पृशेदद्भिरात्मानं शिर एव च॥ अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्म्मवित। शौचेप्सुः सर्व्वदाचामेदेकान्ते प्रागुदङ्मुखः। हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः। वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः॥" इति मनुवचनात्। अग्निर्मेत्यादिनापो हि ष्ठेत्याद्यन्तेन मन्त्रेण ब्राह्मणो हृद्गम्ययोग्यमात्रा अपः

रागद्वेषादिभिरभिभूयेत। हेतुप्रभावनिश्चित इति अस्ति शुभाशुभहेतुना शुभाशुभफलसम्बन्ध इति निश्चयमुपेयात् नात्र कथन्तावान् स्यादित्यर्थः; हेत्वारम्भनित्यः शुभहेतुयोगाद्यारम्भपरः।

अत्र उत्तमाज्यं गोसर्पिः; आशीर्भिराशसान इति च्छेदः। 'अग्निर्मे' इत्यादिना "आपो हि ष्ठा"

क्षत्रियः कण्ठगम्यमात्रा वैश्यः पानयोग्यमात्राः स्वाङ्गुष्ठमूलस्याधोभागेन ब्राह्मतीर्थेन कनिष्ठाङ्गुलिमूलेन प्राजापत्यतीर्थेन वा चतुरङ्गुल्यग्रभागेण दैवतीर्थेन वा न तु तयोः कायदैवतीर्थयोरधोभागेन द्विविधेन पितृतीर्थेनापः पिबेत। क्षत्रियवन्मूर्द्धाभिषिक्तः, वैश्यवदम्बष्ठो माहिष्यश्च ; षण्णामेषां ब्राह्मण-मूर्द्धाभिषिक्त-क्षत्रियाम्बष्ठ-माहिष्य-वैश्यानां द्विजधर्म्मित्वात्। उक्तं हि याज्ञवल्क्येन—"विप्रान्मूर्द्धाभिषिक्तो हि क्षत्रियायां विशः स्त्रियाम्। जातोऽम्बष्ठोऽथ शूद्रायां निषादः पारशवोऽपि वा॥" इति। मनुनाप्युक्तं दशमाध्याये—"ब्राह्मणाद् वैश्यकन्यायामम्बष्ठो नाम जायते। निषादः शूद्रकन्यायां यः पारशव उच्यते। स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्। सदृशानेव तानाहुर्मातृदोषविगर्हितान्। सजातिजानन्तरजाः षट् सुता द्विजधर्म्मिणः। शूद्राणान्तु सधर्म्माणः सर्व्वेऽपध्वंसजाः स्मृताः। पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम्।ताननन्तरनाम्नस्तु मातृदोषात् प्रचक्षते॥" इति। मनोरयमभिप्रायः—ब्राह्मणस्य चतस्रो विवाहिता भार्य्याः ; एका ब्राह्मणकन्या, द्वितीया क्षत्रियकन्या, तृतीया वैश्यकन्या, चतुर्थी शूद्रकन्या। तत्र आद्यायां जातः पुत्रो मातापित्रोरेकवर्णत्वात् ब्राह्मण एव उच्यते ; द्वितीयायां जातो यः पुत्रः स मातुः पितृतो हीनवर्णत्वात् पितृतो न्यूनो मातृतोऽधिक एव ब्राह्मणसदृशो मूर्द्धाभिषिक्तोऽभिधीयते, स च मातृवर्णनामा क्षत्रियवदुच्यते ; तृतीयायां वैश्यकन्यायां जातो यः पुत्रः सोऽपि पितृतो हीनवर्णत्वदोषान्मातुः वैश्यवर्णमातुरुत्तमपितृतो ब्राह्मणवर्णात् न्यूनरूपेण ब्राह्मणसदृशोऽम्बष्ठः वैश्यवर्णनाम्नोच्यते, इत्यनन्तरनाम्नाभिधानं मनुनोक्तम् ; विष्णुनाप्युक्तं—"समानवर्णासु जाताः पुत्राः समानवर्णा भवन्ति, अनुलोमासु मातृवर्णाः पितृलोमासु आर्य्यविगर्हिताः इति मातृवर्णनामानोऽप्येते पितृसदृशत्वात् पितृवत् संस्कारादिक्रियाः कुर्य्युः।" व्यासेनोक्तं—"विप्रवद्

तुल्यमतः समानमन्यः, मैत्री सर्व्वभूतेष्वात्मनोवाप्रतिकूला प्रवृत्तिः। ननु मैत्रीपरः स्यादिति विरुद्धमेतत्, येन, शास्त्रकार एवायं "दिग्धविद्धस्वयंमृतादिमांसपरित्यागेन वयःस्थत्वादिगुणयुक्तानां मृगादीनां सद्यस्कं मांसं सेव्यत्वेनोपदिशन् साक्षात् मैत्रीविरुद्धां हिंसामेवाह ; नैवं, रागत एव प्राणिनां हिंसापूर्व्वकमांसभक्षणे प्राप्ते अयम् आयुर्व्वेदोपदेष्टा मांसस्य कस्मिंश्चिद्रोगे कस्यचित् हितत्वं कस्यचिदहितत्वम् उपदिशति, न तु मांसभक्षणं हिंसात्मकं वा विदधाति ; न ह्ययं मदिराया अपि मद्यकृतेरोगिषु वाहितत्वमुपदिशन् मदिरापानं प्रत्युपदेष्टा भवति ; एवञ्च रोगाधिकारे राज-

ब्रह्मचर्य्य-ज्ञानदान-मैत्रीकारुण्यहर्षोपेक्षाप्रशमपरश्च स्यात् इति ॥ ६ ॥

विप्रविन्नासु क्षत्रविन्नासु क्षत्रवत्। जातः कर्म्माणि कुर्व्वीत वैश्यविन्नासु वैश्यवत्। वैश्यक्षत्रियविप्रेभ्यो जातः शूद्रासु शूद्रवत्।" इति। न चैते वर्णसङ्कराः आनुलोम्यजातत्वात्; उक्तं हि नारदेन—"आनुलोम्येन वर्णानां यज्जन्म स विधिः स्मृतः। प्रातिलोम्येन यज्जन्म स ज्ञेयो वर्णसङ्करः॥" एतेन तदयुक्तं यत् क्षत्रियतुल्यो वैश्यकन्याजत्वात् वैश्यवत् संस्कार्य्योऽम्बष्ठश्चिकित्सितकर्म्मा द्विज उच्यते। चतुर्थ्यान्तु जातः पुत्रः शूद्र एव न द्विजधर्म्मा। एवं क्षत्रियस्य तिस्रो विवाहिता भार्य्याः; क्षत्रियकन्या एका, द्वितीया वैश्यकन्या, तृतीया शूद्रकन्या। तत्राद्यायां जातः क्षत्रिय एव मातापित्रोस्तुल्यवर्णत्वात्, द्वितीयायान्तु जातो माहिष्यो वैश्यवत् संस्कार्य्यो द्विज उच्यते, क्षत्रियान्नजननरूपेण क्षत्रियसदृशः; शूद्रायान्तु जातः पुत्रः शूद्रवत् संस्कार्य्यत्वेन न द्विज उच्यते। वैश्यस्य द्वे भार्य्ये, तत्राद्या वैश्यकन्या, द्वितीया शूद्रकन्या, वैश्यायान्तु जातः पुत्रो वैश्य एव तुल्यत्वान्मातापित्रोः, शूद्रायायान्तु जातः शूद्रवत्संस्कार्य्यत्वान्न द्विज इति निष्कर्षः। केचित् तु ब्राह्मणो ब्राह्मतीर्थेन क्षत्रियः कायतीर्थेन वैश्यो दैवतीर्थेनापश्च पिवेदिति व्याख्यानयन्ति, तन्न, मनुना विशेषणानुक्तत्वात्। इत्थं त्रिर्जलं पीत्वा मुखं द्विः परिमृज्याद्भिः पादौ चाभ्युक्ष्य मूर्द्धनि खानि च षट् नासारन्ध्रे, द्वे, द्वे नेत्रे द्वे च श्रोत्रे चाद्भिरुपस्पृशेत्। स्पृष्ट्वात्मानं हृदयं शिरश्चाद्भिरेव क्रमेणोपस्पृशेदित्यर्थः। केचिन्नाभिमंसौ च स्पृशेदित्याहुस्तन्नात्र मनौ चादृष्टत्वान्नावश्यकम्। केचित् तु खादिस्पर्शनमङ्गुलिविशेषेणोपदिशन्ति। तन्न नावश्यकत्वेन बोध्यमत्र च मनौ चादर्शनात्।

गृहाश्रमिणां सद्वृत्तमुक्त्वान्येषामाश्रमिणामप्याह—ब्रह्मेत्यादि। ब्रह्मचर्य्यं कायवाङ्मानसैर्मैथुनवर्ज्जनं प्रथमाश्रम-चरमाश्रमयोः। गृहाश्रमे स्वदारेष्वृतु-

ब्रह्मचारी च मांसोपदेशः तथा शरदृतुचर्य्यायां "लावान् कपिञ्जलानेणान्" इत्यादिग्रन्थो लावादिमांसविहितत्वोपदेशार्थः न हिंसाविधायकः; तेन रोगिणः स्वस्थाश्च हिंसाफलभाजो भवन्त्येव, यथा—"श्येनेनाभिचरन् यजेत" इत्यत्राभिचारस्य कामत एव प्राप्तत्वात् श्येनस्याभिचारसाधनत्वमात्रमेव विधिः ब्रूते, तेन श्येनेनाभिचारकरणेऽधर्म्मो भवत्येव। अयमत्र विशेषः—यदि हिंसोपार्जित-

तत्र श्लोकाः ।

पञ्चपञ्चकमुद्दिष्टं मनो हेतुचतुष्टयम् ।
इन्द्रियोपक्रमेऽध्याये सद्वृत्तमखिलेन च ॥ १० ॥
स्वस्थवृत्तं यथोद्दिष्टं यः सम्यगनुतिष्ठति ।
स समाः शतमव्याधिरायुषा न वियुज्यते ॥

कालवर्ज्ज वानप्रस्थे यदृच्छया ऋतुकालं वर्ज्जयित्वा विधवानां सर्व्वदैव इति । ज्ञानं शास्त्रार्थतत्त्वावबोधः । मैत्री सर्व्वभूतेष्वात्मीयतानुकूला प्रवृत्तिः । कारुण्यं सर्व्वभूतेषु दया । हर्षोऽनाह्लादरहितत्वम् । उपेक्षा अप्रतिग्रहः स्वयमुपस्थितधनादौ विवादादौ च । प्रशमः शान्तेन्द्रियत्वाचित्तत्वेषु परस्तत्परः स्यात् । तच्च सद्वृत्तं सर्व्वानिकपत्वेनोपदिष्टं बोध्यम् . एषु च ब्रह्मचर्य्यं इतिकर्त्तव्यं यदि व्यवायं विहातुमशक्तः स्यात तदा गृहस्थाश्रममाश्रित्य विवाह्य न रजस्वलामित्यादुक्तविधिना व्यवायं गच्छेत् । यदि मांसानि विहातुमशक्तः खादितुमिच्छति तदा पितॄन् देवान समभ्यर्च्य खादेत मांसमदोषभागिति मन्वादुक्तया विधिना पशून हत्वा खादेत् । उक्तञ्च मनुना—"न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥" इति महाफलाभिप्रायेण ब्रह्मचर्य्यादिपरत्वोपदेशो बोध्य इति ॥ ९ ॥

गङ्गाधरः—उक्तग्रन्थमुपसंहरति—तत्र श्लोका इत्यादि । पञ्चपञ्चकमिति पञ्चेन्द्रियाणीत्यादि पञ्चपञ्चकम्. अतीन्द्रियमित्यादिना मनस्तदर्थश्च । तदर्थाति-योगेत्यादिना हेतुचतुष्टयं प्रकृतिहेतुरेकः समयोगः । विकृतिहेतवोऽयोगाति-योगमिथ्यायोगाश्च त्रय इति । सद्वृत्तमिति । तस्मादित्यारभ्याध्यायशेष-पर्य्यन्तवचनेन । स्वस्थवृत्तानां चतुरध्यायोक्तानां फलरूपम् ॥ १० ॥

गङ्गाधरः—प्रशंसामाह स्वस्थवृत्तमित्यादि । समाः शतमिति वर्षशतमेता-स्मिन् काले पूर्णमायुः "अरोगाः सर्व्वसिद्धार्थाश्चतुर्व्वर्षशतायुषः । कृते त्रेतादिषु

मांसोपयोगो विना पुरुषो न जीवति, अतो हिंसां करोति, तदा सर्व्वत्रात्मानं गोपायीत इति वेदवचनविहितत्वात् तथाविधहिंसा न प्रत्यवायहेतुः, जीवनोपायान्तरसम्भवे तु पुष्ट्यादिप्रयोजन-हिंसा प्रत्यवायहेतुरेव । किञ्च भवतु वा आयुर्व्वेदविहिता हिंसा तथापि हिंसा दोषायैवेत्युच्यते , न हि आयुर्व्वेदविधयो धर्म्मसाधनमेवोपदिशन्ति, किं तर्हि, आरोग्यसाधनं "धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम् इत्युक्तेः ॥ ९ ॥

चक्रपाणिः—संग्रहे हेतुचतुष्टयं समातिहीनमिथ्यायोगाः । समाः शतं वर्षशतं ; यद्यपि सद्वृत्तानुष्ठानेऽपि दैवविपर्य्ययेणान्तरा मरणं व्याधयो वा भवन्ति, तथापि प्राधान्यात् दैवकृत-

नृलोकमापूरयते यशसा साधुसम्मतः।
धर्म्मार्थावेति भूतानां बन्धुतामुपगच्छति॥
परान् सुकृतिनो लोकान् पुण्यकर्म्मा प्रपद्यते।
तस्माद् वृत्तमनुष्ठेयमिदं सर्व्वेण सर्व्वदा॥ ११॥

ह्रसामायुर्ह्रसति पादशः॥" इति मनुवचनात् कलियुगाभिमतमिदं वचनम्। परे तु शतशब्दो बहुलपर इति वदन्ति। तत् तु न मनोरमं "शतायुर्वै पुरुषः" इति श्रुतेः। ईशोपनिषदि च शतवर्षमायुरुक्तम्। कठवल्याञ्च—"शतायुषः पुत्रपौत्रान् वृणीष्व" इत्युक्तम्। तस्मान्मनुवचने—"अरोगाः सर्व्वसिद्धार्थाश्चतुर्व्वर्षशतायुषः" इति युगानुरूपेण सम्पूर्णसर्व्वधर्म्माणां धर्म्मपादक्षयेण चतुःशतस्य पादशः क्षयस्तच्च युगानियतं पूर्णमायुः कथ्यते। यदि हि पुरुषस्तत्र बहुधर्म्मतपोजप्यरसायनतत्परः स्यात् तदाधिकपुण्यकर्म्मकत्वात् अधिकायुश्च स्यात्। ततो "दश वर्षसहस्राणि दश वर्षशतानि च रामो राज्यमकारयत्" इति चाधिकायुः सङ्गच्छते। वस्तुतः सत्यत्रेताद्वापरकलियुगेषु स्वभावत एव चतुष्पादत्रिपादद्विपादैकपादधर्म्मत्वं संपद्यते लोकानामिति। एवं युगह्रासानुरूपेण विभिन्नधर्म्मप्रतिनियमस्वभावात् कृतादीनां "शतायुर्वै पुरुषः" इति उत्सर्गतो वेदोक्तमायुश्चतुर्षु युगेषूक्तं स्वस्थवृत्तानुष्ठानेन सम्पद्यते। तत्र कृतयुगे लोकानां तपस्तत्परत्वेन कस्यचिद्धर्म्मस्य येन केनाप्याचर्य्यमाणस्यैकस्य चतुष्पात्त्वेन सिद्धेश्च चतुर्गुणमायुः स्यादधिकधर्म्माचरणेन पुनरधिकायुश्चाचरितधर्म्मानुरूपेण स्यात् तद्गणनमनियतम्। एवं त्रेतायां ज्ञानपरत्वाल्लोकानां धर्म्मस्य त्रिपात्त्वेन सिद्धेश्च त्रिगुणमायुश्च स्यादधिकधर्म्माचरणेन पुनरधिकायुस्तथा स्यात्। एवञ्च द्वापरे यज्ञपरत्वाल्लोकानां धर्म्मस्य द्विपात्त्वेन निर्व्वृत्तेश्च सद्-वृत्तानुष्ठानजायुर्द्विगुणं शतद्वयं वर्षं स्यादधिकधर्म्माचरणेनाधिकमपि तथैव स्यात्। एवं कलियुगेऽपि दानपरत्वाल्लोकानां धर्म्मस्यैकपादत्वेनाभिनिर्व्वृत्तेश्च स्वस्थवृत्तानुष्ठानकृतशतवर्षायुर्न ह्रसति। परन्तु सममेवानुवर्त्तते। धर्म्माधिकाल्पाचरणेन पुनरधिकाल्पायुः स्यादित्यभिप्रायेण मनुनोक्तं प्रथमाध्याये—"चतुष्पाद् सकलो धर्म्मः सत्यञ्चैव कृते युगे। नाधर्म्मेणागमः कश्चिन्मनुष्यान् प्रतिवर्त्तते॥

त्वार्थैः पुरुषापराधाविषयत्वादुक्तं समाः शतमित्यादि, यदुक्तम्—"परिहार्य्याणि यत्नेन सदा परिहरन् नरः। भवत्यनृणतां प्राप्तः साधूनामिह पण्डितः" इत्यादि॥ १०।११॥

यच्चान्यदपि किञ्चित् स्यादनुक्तमिह पूजितम् ।
वृत्तं तदपि चात्रेयः सदैवाभ्यनुमन्यते ॥ १२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
इन्द्रियोपक्रमणीयो नामाष्टमोऽध्यायः ॥ ८ ॥

स्वस्थवृत्तचतुष्कः ।

इतरेष्वागमाद्धर्म्मः पादशस्त्ववरोपितः । चौरिकानृतमायाभिर्धर्म्मश्चापैति पादशः ॥ अरोगाः सर्व्वसिद्धार्थाश्चतुर्व्वर्षशतायुषः । कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः ॥ वेदोक्तमायुर्मर्त्त्यानामाशिषश्चैव कर्म्मणाम् । फलन्त्यनुयुगं लोके प्रभावश्च शरीरिणाम् । अन्ये कृतयुगे धर्म्मास्त्रेतायां द्वापरे परे । अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥ तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥ इति धर्म्मार्थावेति प्राप्नोति ॥ ११ ॥

गङ्गाधरः—अनुक्तसद्वृत्तमनुमन्तुमाह यच्चान्यदित्यादि । इहायुर्व्वेदोपकरणतया पूजितमनुमतम् । तद्यथा "ब्राह्मे च मुहूर्त्ते उत्तिष्ठेत् स्वस्थो रक्षार्थमायुषः ।" इत्यादिकं "अहरहः सन्ध्यामुपासीत" इत्यादिकं यावदिति । इति स्वस्थवृत्तचतुष्कः । चतुर्भिरध्यायैर्निष्पादित एकः परिच्छेदः । अध्यायं समापयति अग्निवेशेत्यादि प्राग्वत् व्याख्येयम् ॥ १२ ॥

इति श्रीगङ्गाधरकविरत्नकृते चरकजल्पकल्पतरौ सूत्रस्थाने स्वस्थचतुष्कीयचतुर्थाध्यायेन्द्रियोपक्रमणीयाध्यायजल्पाख्याऽष्टमी शाखा ॥८॥

चक्रपाणिः—अनुक्तसद्वृत्तोपग्रहार्थमाह— यच्चान्यदपीत्यादि । वृत्तमाचारः, इहायुर्वेदेऽनुक्तमप्याचारोपदेशकेषु धर्म्मशास्त्रेषु पूजितं यथा—"नाकस्माद् विकचो भवेत् न परशस्येषु गां चरन्तीं धावन्तीं वा परस्य ब्रूयात्" इत्यादि सर्व्वमात्रेयानुमतं साक्षादायुर्वेदाविषयत्वेनैतद् ग्रन्थविस्तारभयाच्च न प्रत्युक्तमित्यभिप्रायः ॥ १२ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-व्याख्यायाम् इन्द्रियोपक्रमणीय-नामकाष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः।

अथातः खुड्डाकचतुष्पादमध्यायं व्याख्यास्यामः,
इति ह स्माह भगवानात्रेयः ॥ १ ॥

भिषग् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम्।
गुणवत् कारणं ज्ञेयं विकारव्युपशान्तये ॥ २ ॥

गङ्गाधरः—ननु भेषजचतुष्के स्वस्थातुरोभयविषयास्तावन्न उपदिष्टाः। स्वस्थचतुष्के स्वस्थविषयास्तावन्न उक्ताः। एषां प्रयोगे सिद्धौ के भावा हेतवो भवन्तीत्यतः स्वस्थचतुष्कानन्तरं निर्देशचतुष्क आरभ्यते। विस्तारवचनं हि निर्देशः। निर्दिश्यते विस्तरेणोच्यते प्रयोगसिद्ध्यादिहेतुरस्मिन्नध्याये इति निर्देशः। प्रयोगसिद्धिहेतुविस्तरवचनाधिकरणं तैश्चतुर्भिरध्यायैः कृत एकः परिच्छेद इति निर्देशचतुष्क इत्यर्थः। तत्रापि प्रधानहेतूनां निर्देशं कर्त्तुं खुड्डाकचतुष्पादमध्यायमारभते अथात इत्यादि। प्राग्वद्व्याख्येयम्। खुड्डाकशब्दोऽल्पार्थः। चतुष्पादशब्दोऽत्रायुर्वेदशास्त्रव्याख्यानाधिकारात् चिकित्साथं पादचतुष्टयं बोध्यम्। खुड्डाकं वक्ष्यमाणनिर्देशापेक्षया स्वल्पनिर्देशेन निर्दिष्टं चतुष्पादं यत्राध्याये तं तथाध्यायम् ॥ १ ॥

गङ्गाधरः—तत्र चतुरः पादानुद्देष्टुं प्राधान्यात् भिषगादिक्रमेण उद्दिशति—भिषगित्यादि। त्रिभ्यो भिषजः प्राधान्यं स्वयं वक्ष्यति। वैद्यस्य व्याधिप्रशमकत्वेन प्राधान्यम्। करणीभूतानां द्रव्यादीनां त्रयाणां मध्ये द्रव्यस्य प्राधान्याद् द्रव्यमनु परिचारकस्याप्यातुरात् प्राधान्यं बोध्यम्। उपस्थाता परि-

चक्रपाणिः—स्वस्थचतुष्कानन्तरं स्वस्थातुरयोरुभयोरपि हितत्वेन निर्देशचतुष्कोऽभिधीयते; स्वस्थातुरहितं वैद्यभेषजादि निर्दिशतीति निर्देशचतुष्कः, तत्रापि स्वस्थातुरहिते तु प्रधानभूतचिकित्साङ्गवैद्यादिपादचतुष्टयाभिधायकत्वेन खुड्डाकचतुष्पादोऽभिधीयते। खुड्डाकशब्दोऽल्पवचनः; यथा—क्षुद्रिका गर्भावक्रान्तिरल्पेत्यर्थः; वैद्यौषधपरिचारकरोगिणश्चिकित्सायाश्चत्वारः पादाः, चतुष्पादं खुड्डाकमभिधेयतयाधिकृत्य कृतोऽध्यायः खुड्डाकचतुष्पादः। अत्रोत्पन्नस्य तु प्रत्ययस्य "अध्यायानुवाकयोर्लुक् च" इति लुक्, खुड्डाकत्वञ्चास्य वक्ष्यमाणमहाचतुष्पादमपेक्ष्य ॥ १ ॥

चक्रपाणिः—अत्र भिषगादावुक्तः प्रधानत्वात्; वक्ष्यति हि "प्रधानं भिषगत्र तु" इति। तदनु भेषजं, चिकित्सायां प्रधानकारणभूतत्वात्। तदनु परिचारकः, भेषजप्रयोगस्य कल्पनादिसाध्यस्य तदधीनत्वात्। यद्यप्यातुराधिकरणमारोग्यं पादैः सम्पाद्यते, स एव च

चारकः। रोगीति त्रिकालार्थे घञ्, तेन त्रैकालिकरोगवान्; भाविरोगी व्यतीतरोगी च स्वस्थ उत्पन्नरोगवान् आतुर इति। तेन स्वास्थ्यरक्षणेऽप्येते भिषगादयः पादाश्चत्वारो भवन्ति। पादश्चतुर्थोऽंश एषां पादसंज्ञत्वेनोपदेशेन पादभङ्गे यथाङ्गभङ्गे सति न कस्यापि पूर्णता स्यात् तथा वैद्याद्यन्यतमभङ्गे भेषजपूर्णता न स्यादिति ज्ञापनम्। विकारव्युपशान्तये विकाराणामनुत्पन्नानां वि विगमाय अनुत्पत्तये, उत्पन्नानामुपशान्तये, किंवा समविषमधातुः पुरुषो रोगी तत्र समधात्वादिधातुकस्यापि स्वभावप्रवृत्तक्षुत्पिपासाजरामरणादि-लोभमोहादिरोगवत्त्वेन तत्तद्रोगलक्षणधातुवैषम्यदुःखोभयस्य व्युपशान्तये विशेषेण प्रशमनाय भिषगादिचतुष्टयं कारणम्; न त्वन्यत् किञ्चिदस्ति कारणम्। ननु भिषगादिचतुष्पादमात्रस्यैव किं कारणत्वमित्याह— गुणवदिति। गुणाभावे तु न कारणत्वात्कारणमेषाम्। भिषगादिपादचतुष्टये व्याधिव्युपशान्तिकारणं गुणवत्त्वात्। यत्र पादे गुणोऽस्ति तत्र व्याधि-व्युपशान्तिकारणत्वमस्तीत्यैकान्तिको भावो बोध्यः। ननु किं समस्तानां भिषगादीनां कारणत्वमुत व्यस्तानाम्? उच्यते, व्यस्तानां सम-स्तानाञ्च स्वस्वगुणवतां भिषगादीनामेव विकारव्युपशान्तये कारणत्वमेव, न त्वन्येषां नाप्यकारणत्वमिति। महाचतुष्पादे तु यद्वक्ष्यति "ये ह्यातुराः केवलाद्भेषजादृते समुत्तिष्ठन्ते" इत्यादि। तत्रापि किञ्चिदाहारविहाराभ्यां गुणवद्भ्यामेव विकारोपशमो बोध्यः॥ २॥

वैद्यादीनामुपकार्य्यः, उपकार्य्यश्च प्रधानं भवति, तथापीह व्याधिप्रशमे साध्ये यथा वैद्यादि-पादत्रयस्य व्यापारो न तथा आतुरस्येत्यप्राधान्यविवक्षया पश्चादुक्तः। पादश्चतुर्थो भागः, श्लोकादि-पादवद् वैद्यादिषु पादसंज्ञाकरणेनान्यतरवैकल्येनापि चिकित्सा न भवतीति दर्शयति। गुण-वदिति वक्ष्यमाण-"श्रुते पर्य्यवदातत्वम्" इति गुणवत्। इह च वैद्यादयो व्याप्रियमाणा एव विकारप्रशमने कारणं भवन्ति; यतः, कारणत्वं कार्य्ये व्यापारवतामेव भवति; तथा हि— देवदत्तः पाचक इत्युक्ते तण्डुलप्रक्षेपादिक्रिययैव पाकं करोतीति गम्यते, एतेन, यदुच्यते— "चतुर्णां भिषगादीनाम्" इत्यादिना श्लोकेन वैद्यादीनां प्रवृत्तिश्चिकित्सा व्याधिप्रशमहेतुरभि-धातव्या, इह तु वैद्यादय एवेति पूर्व्वापरविरोधस्तन्न भवति, इह वैद्यादिप्रवृत्तेर्वैद्यादिग्रहणेनैव ग्रहणात्। "चतुर्णाम्" इत्यादौ श्लोके वैद्यादीनां धर्म्मिणां धर्म्मरूपायाश्च प्रवृत्तेर्भेदं पुरस्कृत्य चिकित्सायाः क्रियारूपायाः कथनम्। एते वैद्यादयो विकारशमने कारणमेवेति नियमः, न पुनरेत एव विकारप्रशमनमिति नियमः। यतः वैद्यादीन् प्रत्याख्यायापि रोगशान्तिर्भवति; वक्ष्यति हि महाचतुष्पादे— "ये ह्यातुराः केवलाद्भेषजादृते समुत्तिष्ठन्ते" इत्यादिना॥ २॥

**विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते ।**
**सुखसंज्ञकमारोग्यं विकारो दुःखमेव च ॥ २ ॥**

गङ्गाधरः—ननु को विकारः का वा प्रकृतिः किं विना क्रियां गुणवत्पादचतुष्टयञ्च कारणमुक्तं, तत्र भिषगादीनां के वा गुणा इत्याशङ्कायामाह—विकार इत्यादि। विक्रियते स्वरूपान्यथात्वमुत्पद्यते येन इति विकृतिर्विकारः। स च द्विविधः स्वरूपानुच्छेदे गुणकर्म्माधानं स्वरूपोच्छेदे गुणरूपाद्याधानञ्च। यथा सुवर्णं कुण्डलं भवति, दुग्धं दधि, काष्ठं भस्म भवतीत्यादि। तदाह धातुवैषम्यमिति। धातुरिति चराचराणां जगतां धातुर्विधानधारणपोषणहेतुरव्यक्तमलक्षणं समत्रिगुणलक्षणं क्षेत्रज्ञाधिष्ठितम् परममहच्च चैतन्यहेतुः ब्रह्म यथोच्यते तथा प्राणिनामादिधातुरात्मा तद्रूपा च वास्तवप्रकृतिस्तस्य नित्यत्वादवैषम्यात्। तद्यथा। शक्तिरेव स्वप्रभावगुणनिगूढा प्राक्सर्गादेकैवाद्वितीयासीत् महानिर्व्वाणे। तत् परं ब्रह्म मूलप्रकृतिः। सर्गकाले सा स्वप्रभावविशेषेण परिणामकारिणाशेषान् प्रभावान् परिणमय्य प्रथमं लोहितमिव तेजोऽसृजत्। तत् तेजोऽपोऽसृजत् शुक्ला इव। ताः कृष्णामिवान्नमसृजन्तेति तिस्रो देवतास्तेजोऽबन्नाख्या लौकिकतेजोऽप्पृथिवीनामाकरभूता अनुप्रविशन्ती सा शक्तिः प्रथमं लोहितशुक्लकृष्णवर्णाभासा गायत्रीनामदेवता परमसूक्ष्मध्वनिलक्षणा वाग्देवतारूपेण विवर्त्तिता बभूव। सा सर्गकाले परमब्रह्म। सा पुनः स्वयं शान्तिर्विद्या प्रतिष्ठा निवृत्तिरिति चतस्रः शक्तयो भूत्वा परमव्योमरूपः परमात्मा शिवो बभूव। तच्चतुर्व्यूह एव सर्व्वशक्तिमानादिपुरुष आदिभूतत्वादादित्यस्तस्य ज्ञानशक्तिरिच्छाशक्तिः क्रियाशक्तिश्चेति तिस्रः प्रधानशक्तयः। तस्य ज्योतिर्गायत्री स पुनर्गायत्रीस्थानि तेजोऽबन्नानि ज्ञानशक्त्याध्यवसाय यदृच्छाशक्त्या तथैव नियम्य क्रियाशक्त्या परिणमय्य प्रथमं प्रणवं ततोऽकारादिवर्णात्मिका मातृकाः सृष्ट्वा तद्रूपां विद्यां ससर्ज्ज। तदाश्रयं सदाशिवं ब्रह्मपुरुषं ससर्ज्ज। ततोऽपरां विद्यां सृष्ट्वा तदाश्रयानृग्वेदादींश्चतुरो वेदान् ब्रह्मपुरुषान् ससर्ज्ज। ततस्तान् पञ्च कियदंशेनैकीकृत्य सदिति-नामानं महाविष्णुं कालं ससर्ज्ज। तत् सत् कियदंशेन चिद्बभूव। तच्चितः प्रसादांशः क्षेत्रज्ञः पुरुष आत्मा विष्णुर्बभूवेति। स आनन्दयतीत्यानन्द

चक्रपाणिः—विकारव्युपशान्तये इत्युक्तं, तेन विकारस्वरूपज्ञानार्थमाह—विकारो धातुवैषम्यमित्यादि। धातवो धात्वादयो रसादयश्च तथा रजःप्रभृतयश्च, तेषां वैषम्यं व्यवह्रियमाण-

इति। आदौ सत् ततश्चित् ततः आनन्द इति स सच्चिदानन्दः। तच्चितोऽप्रसादो गुणांशः प्रधानं नाम ब्रह्मा बभूव।

य एष महाविष्णुः कालः स खलु चक्रवद्भ्रमणस्वभावेन सर्व्वभावपरिणामकृतस्वभावः प्रधानं चिद्गुणांशः स क्षेत्रज्ञं नाधिष्ठितमनप्रविश्य क्षेत्रज्ञं सञ्चाल्य तद्गुणं सङ्कोच्य विकाश्य च प्रसादभागेन सत्त्वं नाम गुणमप्रसादभागेन तमोगुणं मध्यमभागेन रजोगुणं पृथगरूपेणाभिव्यञ्जयामास। तदेव कालानुप्रविष्टं क्षेत्रज्ञाधिष्ठितं समत्रिगुणमिति संहतरूपमव्यक्तं नामात्मा प्रकृतिर्बभूव। ततः कालेन तदव्यक्तं प्रधानं त्रिगुणाधिक्यरूपं वैषम्यमितं महान् बभूव। स द्वितीयो धातुः। स चाप्येकैकगुणाधिक्येन विषमस्त्रिविधोऽहङ्कारो बभूव। स तृतीयो धातुः। स चाहङ्कारः पञ्च तन्मात्राणि विषम एव बभूव। तानि च मात्राणि शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति पञ्च महाभूतानि। शब्दगुणमात्रमप्रतीघातलक्षणमाकाशम्। स्पर्शगुणमात्रश्चलस्वरूपो वायुः। रूपगुणमात्रमुष्णलक्षणं तेजः। रसगुणमात्रा द्रवरूपा आपः। गन्धमात्रगुणा खररूपा भूरिति। पञ्चेति। सप्त विकाररूपाः प्रकृतयो धातवस्तथा प्राणिनां बुद्ध्यहङ्कारौ पञ्च भूतानि चेति सप्त धातवस्तत्रोत्तरोत्तरं सप्त पूर्व्वपूर्व्वधातुवैषम्याद्विकारा उत्तरोत्तरापेक्षया साम्यात्मकाः पूर्व्वपूर्व्वसप्तधातवः प्रकृतयः। पञ्चार्थानां दशेन्द्रियाणाञ्च सूक्ष्माणां प्रकृतिरहङ्कारः, तत् तदपेक्षया साम्यात्मकत्वात्। अहङ्कारवैषम्यात्मकत्वात् तु पञ्चार्था दशेन्द्रियाणि च विकाराः। इत्येवं महदादिकं सर्व्वं प्रधानत्रिगुणवैषम्यलक्षणं विकार एवेति। यथा लोके ब्रह्मा तथा मनः। यथा चेन्द्रस्तथाहङ्कारः। यथा विराट् तथा महान्। यथाकाशादीनि पञ्च भूतानि तथा चैतानि चतुर्व्विधानि शुक्रशोणितरसात्मसम्भवानि। तेषां विपरिणामेन विकाररूपाश्च धातवः। वातादयो रसादयः पुरीषादयश्च साम्यमिताः शरीरसहजाताः प्रकृतयः। यथा च लोके यथास्वलक्षणा वाय्वर्कसोमा धातवो विधानधारणपोषणैस्तथा शरीरे स्वरूपेण यथास्वलक्षणो वायुस्तैजसं पित्तं सौम्यः श्लेष्मा चैते धातवः। एवं लोके भूमिर्यथा तथा स्थूलशरीरं भौमम्। तत्र मृज्जलवृक्षादिवत् रसरक्तमांसास्थ्यादयो यथास्वलक्षणा धातवः। एवं हिरण्यगर्भवन्मनसो धातवो यथास्वलक्षणाः सत्त्वादयो गुणा इति। प्रकृतिभूता विकारा वास्तवप्रकृतिब्रह्मापेक्षयैवात्मापेक्षया वैषम्यात्मकत्वा-

धात्वसाम्यहेतोः स्वमानात् न्यूनत्वमधिकत्वं वा। साम्यं धातुसाम्यं, प्रकृतिरारोग्यम्। "उच्यते" मह-

दिति। शरीरग्रहणमेव विकारो निर्व्वाणमारोग्यम्। तत्रापि यथास्वलक्षण-शरीरमनोयुक्तत्वेऽपि वातादिधातुसाम्यसम्भवादारोग्यं, शरीरमानसधातु-वैषम्यन्तु विकार इत्यभिप्रायेणोक्तं—"विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते" इति। साम्यमिति प्रकरणात् धातुसाम्यमित्यर्थः।

ननु प्रतिदिनभोजनादिषु प्रातरादिषु च कफादिप्रकोपाद्वातादिप्रशमाच्च नित्यमेव धातुवैषम्यं वर्त्तत एवेति, कथं साम्यं स्यादिति चेत्? न, तस्य प्रकृतिरूपविकारत्वेनेष्टत्वात्। क्षुत्पिपासानिद्राजन्मजरामरणादीनामिव लोभादीनां मानसव्याधीनामिव च स्वाभाविकव्याधित्वादिति। ननु धातूनां वैषम्यं गुणतोऽल्पाधिक्यं साम्यमन्यूनानतिरिक्तत्वम्। तच्च परिमाणाख्यो गुणविशेषः स्यात् तत् कथं वक्ष्यमाणं "स्वधातुवैषम्यनिमित्तजा ये विकारसङ्घा बहवः शरीरे। न ते पृथक् पित्तकफानिलेभ्य आगन्तवस्ते तु ततो विशिष्टाः॥" इति वचनं सङ्गच्छते इति चेत्? न। समवायिकारणद्रव्य-गुणकर्म्मविकारः कार्य्यं तदात्मकमेवेति विषमवातपित्तकफात्मका एव तेषां कार्य्यभूता ज्वरादयो न ते पित्तकफानिलेभ्यः पृथक्। तथा तेजऔष्ण्य-रूपदहनादिसमुदायोऽग्निस्तत्कार्य्यालोकदाहादयो न वह्नितः पृथगिति। एतेन च वातादयोऽपि स्वस्वसमवायिकारणद्रव्यगुणकर्म्मविकारास्तदात्मककार्य्यभूत-द्रव्यगुणकर्म्मसमुदायरूपास्तेषाञ्च वैषम्यं द्रव्यतो गुणतः कर्म्मतो वा हीना वा वृद्धा वा वातादय एव लभ्यन्ते, एतदभिप्रायेण क्वचिद्भावप्रधान-त्वेन द्रव्यप्रधानत्वेनाचार्य्यैर्निर्दिश्यते इति। नन्वस्तु धातोर्वैषम्यं विकारः साम्यन्तु प्रकृतिस्तेन प्राणिनां स्वस्थानां क्षुत्पिपासाजन्ममरणेच्छा-द्वेषादिस्वभावव्याधिमत्त्वे धातुवैषम्यसाम्याभावात् किं स्वास्थ्यमातुर्य्यं वा स्यादित्यत आह—सुखसंज्ञकमित्यादि। सुखसंज्ञकमात्मलिङ्गत्वेन यद्वक्ष्यते तत्। तथा दुःखमात्मलिङ्गत्वेन यद्वक्ष्यते तत्। एवकारेणाभेदो ज्ञापितः। त्रिविध-दुःखजनकतायोगात् दुःखमेव धातुवैषम्यं विकारः, सुखसंज्ञकमेव त्रिविधसुख-जनकत्वयोगात् सुखसंज्ञमेव। धातुसाम्यं प्रकृतिर्न त्वन्यरूपो विकारोऽस्ति प्रकृतिर्वास्ति। एतदभिप्रायेणैव सुश्रुतेनाप्युक्तम्—"तत्र पुरुषः प्रधानं तस्योप-

णाद्, वैद्यकसिद्धान्ते हीयं प्रकृतिविकारव्यवस्था, अन्यदर्शनसिद्धान्तपरिग्रहे तु विकारः षोडशकः, प्रकृतिर्गुणानां साम्यावस्था भविष्यतीति दर्शयतीति। ननु रात्रिदिनभोजनानां तासु तास्ववस्थासु श्लेष्मप्रकोपादिना नित्यं धातुवैषम्यमस्ति, तत् कुतो धातुसाम्यमित्याह—सुखसंज्ञकमित्यादि। सुखहेतुः सुखम्, एवं दुःखहेतुर्दुःखं; अतः, न दुःखं व्याधिः, तथा हि सति न ज्वरादीनां व्याधित्वं

करणमन्यत् । तस्मात् पुरुषोऽधिष्ठानम् । "तद्दुःखसंयोगो व्याधिः" इति । तत्र पुरुषे दुःखसंयोगा व्याधय इत्यर्थः । तथा तेनैवोक्तम्—"प्रागभिहितं तद्दुःखसंयोगो व्याधिरिति । तच्च दुःखं त्रिविधमाध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति ।" तस्य दुःखस्य संयोगः सम्बन्ध इति । प्राणिषु सम्बद्धं त्रिविधं दुःखं व्याधिरथवा दुःखस्य संयोगो यत्र स व्याधिर्धातुवैषम्यमित्यर्थः. तत्राध्यात्मिकं दुःखं तद्यत् सत्त्वात्मसन्निकर्षेण बुद्ध्या सत्त्वेनोपलभ्यमात्मानमधिकृत्य सत्त्वे वा शरीरे वानुनिपततीति । सुश्रुतेन चोक्तं "तच्च त्रिविधं दुःखं सप्तविधे व्याधावुपनिपतति । ते पुनः सप्तविधा व्याधयो यथा—आदिबलप्रवृत्ता जन्मबलप्रवृत्ता दोषबलप्रवृत्ताः सङ्घातबलप्रवृत्ताः कालबलप्रवृत्ता दैवबलप्रवृत्ताः स्वभावबलप्रवृत्ताः इति । तत्रादिबलप्रवृत्ता ये शुक्रशोणितदोषान्वयाः कुष्ठार्शःप्रभृतयः । तेऽपि द्विविधा मातृजाः पितृजाश्च । जन्मबलप्रवृत्ता ये मातुरपचारात् पङ्गुजात्यन्धबधिरमूकमिन्मिनवामनप्रभृतयो जायन्ते । तेऽपि द्विविधा रसकृता दौर्हृदापचारकृताश्च । दोषबलप्रवृत्ता ये आतङ्कसमुत्पन्ना मिथ्याहाराचारभवाश्च । तेऽपि द्विविधा आमाशयसमुत्था पक्वाशयसमुत्थाश्च । पुनश्च द्विविधाः शारीरा मानसाश्च । त एते आध्यात्मिकाः । सङ्घातबलप्रवृत्ता य आगन्तवो दुर्बलस्य बलवद्विग्रहात् तेऽपि द्विविधा शस्त्रकृता व्यालादिकृताश्च । एत आधिभौतिकाः । कालबलप्रवृत्ता ये शीतोष्णवातवर्षाप्रभृतिनिमित्तास्तेऽपि द्विविधा व्यापन्नर्तुकृता अव्यापन्नर्तुकृताश्च । दैवबलप्रवृत्ता ये देवद्रोहादभिशप्तका अथर्वकृता उपसर्गकृताश्च । तेऽपि द्विविधा विद्युदशनिकृताः पिशाचादिकृताश्च । पुनश्च द्विविधा संसर्गजा आकस्मिकाश्च । स्वभावबलप्रवृत्ताः क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयस्तेऽपि द्विविधाः । कालकृता अकालकृताश्च । तत्र परिरक्षणकृताः कालकृता अपरिरक्षणकृता अकालकृताः । एत आधिदैविकास्तत्र सर्वव्याध्यवरोध

स्यात्, अत एव सुश्रुतेऽप्युक्तं "तच्च दुःखं सप्तविधेऽपि व्याधावुपनिपतति" इति । "संज्ञक"-ग्रहणात्, परमार्थतोऽसुखमपि लोके सुखमिति यद् व्यवह्रियते, तदिह गृह्यते ; इति दर्शयति तेन, दिवास्वप्नभोजनाव्यादिजनितधातुवैषम्यं स्वल्पमुद्वेजकं विकाराकर्तृत्वेन सुखमिति व्यवह्रियते, तेन यो ह्यल्पः स नास्त्येवेति कृत्वाऽल्पेऽपि धातुवैषम्ये धातुसाम्यो व्यवहारसिद्धो भवति ; तथा "संज्ञक"ग्रहणेन लौकिकसुखं न परमार्थतः सुखमिति दर्शयति ; ततो वक्ष्यति "सर्वं कारणवद् दुःखम्" इत्यादि । "एव च" ग्रहणेन दुःखं परमार्थतोऽपि दुःखमेवेति दर्शयति, न सुखमिव व्यवहारमात्रेण । अत्र च धातुवैषम्येण कारणोपचारात् तत्कार्यज्वरादयोऽभिधीयन्ते ; यतः, धातुवैषम्यजो हि विकारो न धातुवैषम्यमात्रं, यद् वक्ष्यति—"स्व

इति।" एवं तेनैव तद्दुःखसंयोगा व्याधय इत्युच्यन्ते। "ते चतुर्व्विधाः। आगन्तवः शारीरा मानसाः स्वाभाविकाश्चेति। तेषामागन्तवोऽभिघातनिमित्ताः। शारीरास्त्वन्नपानमूला वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः। मानसास्तु क्रोधशोकभयहर्षविषादेर्ष्याऽभ्यसूयादैन्यमात्सर्य्यकामलोभप्रभृतय इच्छाद्वेषभेदैर्भवन्ति। स्वाभाविकाः क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयः। तत्र ते मनःशरीराधिष्ठानाः" इति। एवमेव सुश्रुतोक्तदिशा दुःखवत् सुखमप्युन्नेयम्। तद्यथा यद्धातुवैषम्यानुपाति यद्दुःखमाध्यात्मिकं तद्धातुसाम्यानुपाति तत् सुखमाध्यात्मिकं भवति। एवं यद्धातुवैषम्यानुपाति यद्दुःखमाधिभौतिकं तद्धातुसाम्यानुपाति तत् सुखमाधिभौतिकम्। तथा यद्धातुवैषम्यानुपाति यद्दुःखमाधिदैविकं तद्धातुसाम्यानुपाति तत् सुखमाधिदैविकमिति।

कैवल्यमपि दैवज्ञप्रयुक्तं त्रिविधदुःखात्यन्तनिवृत्तिलक्षणं सुखरहितमपि क्षेत्रज्ञात्मनि यद्धातुवैषम्यनिवृत्तिरूपं परमव्योमरूपपरमात्मस्वरूपत्वेन धातुसाम्यानुपातिसुखवत् सुखं न तु सुखमिति। सुखसंज्ञकमारोग्यं प्रकृतिरुच्यते। इति संज्ञकेत्युक्तम्। स्वस्थानां क्षुधादिव्याधिस्तु तेषां सुखदुःखयोरुपाधिभेदभिन्नयोरयौगपद्येऽपि प्राधान्यात् तत्सुखदुःखरूपेणवारोग्यरोगयोरयौगपद्यं बोध्यम्। इत्थञ्च धातुवैषम्यसाम्ययोर्दुःखसुखयोश्च नित्यव्याप्तिहार्य्यत्वेन धातुवैषम्यदुःखयोर्धातुसाम्यसुखयोश्चायुगपज्ज्ञातः ख्यापितः। विना हि धातुवैषम्यं न दुःखमुत्पद्यते। न च सुखं विना धातुसाम्यमिति। जन्यजनकभावेऽपि आपाततोऽदृश्यमाने यदैव धातुवैषम्यं जायते तदैव दुःखमुत्पद्यते, यदैव धातुसाम्यं स्यात् तदैव सुखं स्यादित्यनुभूयते। युक्तिसिद्धात् तु अयौगपद्याज्जन्यजनकभावः स्वीक्रियते। नृणां निःशेषेण दुःखाभावे ज्वरादिनिवृत्तौ सुखमारोग्यं तदपि सुखसंज्ञकम्। स्वर्गेऽपि दुःखासम्भिन्ने किमपि दुःखं मानसं देवानामस्तीति तदपि सुखसंज्ञकमिति।

ननु सुखदुःखयोर्मनःशरीराश्रितत्वेनात्यन्तिकदुःखनिवृत्तिरूपमोक्षे यत् सुखमुत्पद्यते तत् कमाश्रयति? न हि तदा शरीरं मनो वा वर्त्तते। यद्यात्मानमाश्रयति तदात्माश्रितमधिकं रोगारोग्यं वक्तव्यमिति चेत्? न, युगपत्-

धातुवैषम्यनिमित्तजा ये विकारसंघा बहवः शरीरे इत्यादि, तथा "विकृतिमापन्ना नानाविधैर्विकारैः शरीरमुपतपन्ति" इत्यादि, तथा सुश्रुतेऽप्युक्तम् "धातुशोणितसन्निपातवैषम्यनिमित्ताः" इति। अत्र पक्षे धातुवैषम्यनिमित्ता इति; तत्पक्षे धातुवैषम्यजन्यत्वेन विकारकत्वा तु अनित्यविकारं धातुवैषम्यं न प्रतिपत्तु;—किं विकारे, उत आरोग्ये? न तावदारोग्ये; यतः "इत्युक्त" कारणं

सुखदुःखविनाशे ब्रह्मरूपप्राप्तौ सुखाश्रयत्वाभावात् ब्रह्मणो यद्रूपत्वं तद्रूपत्व परमव्योमस्वरूपं प्राप्नोतीति। तैत्तिरीये तु यदानन्दो ब्रह्मेत्युक्तं तन्नानन्दथुरानन्दो न वानन्दवानानन्दः परन्त्वानन्दहेतुरेवानन्दः। तत्रैव तैत्तिरीयोपनिषदि "असद्वा इदमग्र आसीत् ततो वै सदजायत। तदात्मानं स्वयमकुरुत तस्मात् तत् सुकृतमुच्यते। यद्वैतत् सुकृतं रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति। को ह्येवान्यात् कः प्राण्यादानन्दो न स्यादेष आकाशः। एष ह्येवानन्दयतीति।" "तद्धेतुव्यपदेशात्" इति तत्र शारीरकसूत्रात्। गौतमन्यायसूत्रस्य भाष्ये वात्स्यायनेन चोक्तम् "नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यते तेनाभिव्यक्तेनात्यन्तं विमुक्तः सुखी भवतीति केचिन्मन्यन्ते. तेषां प्रमाणाभावादनुपपत्तिः न प्रत्यक्षं नानुमानं नागमो वा विद्यते।" इत्यादि। सांख्ये च "नानन्दाभिव्यक्तिर्मुक्तिः" इति कपिलः।

अत्र केचित्; ननु प्रतिदिनभोजनेन प्रातरादिकालेन च श्लेष्मप्रकोपे नित्यं धातुवैषम्यं वर्त्तत एव कथं साम्यं स्यादित्यत आह सुखसंज्ञकमिति। सुखयतीति सुखं सुखजनकमिति। एवं दुःखहेतुर्दुःखं लौकिकसुखगुणहेतुज्वरादिव्याधिनिवृत्तिः प्रातरादौ श्लेष्मादिप्रकोपे च सुखसंज्ञग्रहणात् परमार्थतोऽसुखमिति ज्ञापितम्। एवं दुःखमिव दुःखमेव विकारो न तु दुःखं सत् दुःखमित्यर्थः। तथा च सुखानुपातिधातुसाम्यं प्रकृतिः, दुःखानुपातिधातुवैषम्यं विकार उच्यते। सुश्रुतेऽप्युक्तं "तद्दुःखसंयोगो व्याधिस्तत्र च त्रिविधं दुःखमनुपतति। तच्चाधिदैविकमाधिभौतिकमाध्यात्मिकम्" इति विस्तरेण पूर्व्वव्याख्यानेनोपदर्शितम्। इत्थञ्च प्रातरादिकालस्वभावजधातुवैषम्यं दिवारात्रिभोजनमात्रादिजञ्च धातुवैषम्यमवैकारिकम्। तत्राल्पमुद्रं जकदुःखानुपातात् उत्कटव्याधिजनकत्वाभावात् प्रातिदैनिकत्वाच्चासुखमपि सुखतया व्यवह्रियते। यो ह्यल्पः स नास्तीति कृत्वा अल्पेऽपि धातुसाम्यव्यवहारात्। अत्र धातुवैषम्यशब्देन कारणे कार्य्योपचारात् धातुवैषम्यजज्वरादिरपि विकार उच्यते। वक्ष्यते हि—

कार्य्यं धातुसाम्यमिहोच्यते। धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्॥" इत्यनेन ग्रन्थेनारोग्यं धातुसाम्यम् इत्युक्तं; न च रोगे प्रविशति रोगहेतुत्वेनैव कथितत्वात्। अथ धातुवैषम्यं भवति, विकारो न भवतीत्येषा दशा नास्त्येव; यतः अवश्यं प्रमाणाधिको दोषः स्वलिङ्गाधिको भवति, क्षीणो वा क्षीणस्वलक्षण इति; इह तर्हि धातुवैषम्यमेव विकारोऽस्तु. एवमयं ग्रन्थो सुख्यो

"स्वधातुवैषम्यनिमित्तजा ये विकारसङ्घा बहवः शरीरे। न ते पृथक् पित्तकफानिलेभ्य आगन्तवस्ते तु ततो विशिष्टाः॥" इति। न हि तत्र धातुवैषम्यमात्रमस्ति इत्याहुः। अपरे त्वत्र विप्रतिपद्यन्ते। स्वधातुवैषम्यजश्चेद्विकारस्तदा खल्वजनितज्वरादिविकारं धातुवैषम्यं किं रोगो किमारोग्यं? न तावदारोग्यम्; "धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्" इति धातुसाम्यस्यैवारोग्यत्वख्यापनात्; नापि रोगो रोगस्य निमित्तत्वेनोक्तत्वात् तस्य धातुवैषम्यस्येति। अत्र समाधत्ते कश्चित्। धातुवैषम्यं तावद्वर्त्तते न च विकारः कश्चिद्भवतीत्येतादृशरूपा दशा न भवत्येव स्वमानाधिको हि दोषोऽवश्यं स्वलिङ्गाधिक्यं दर्शयति, क्षीणोऽपि क्षीणस्वलिङ्गानीति। धातुवैषम्यं विकारः। धातुवैषम्यजा ज्वरादयो हि विकारजन्यत्वात् विशिष्टविकारास्तत्रापि धातुवैषम्यस्यानपायात्। अन्ये तु धातुवैषम्यजो विकारो न तु धातुवैषम्यमिति व्याख्याय अजनिताव्यपदेश्यविकारं धातुवैषम्यं रात्रिन्दिवांशभोजनांशादिकृतधातुवैषम्यं चाल्पत्वेनाव्यपदेश्यतया धातुसाम्य एवान्तर्भावयन्ति। तिलकालकमशकादीनां धातुवैषम्यजत्वेनेह रोगत्वमुक्तम्। दुःखत्वञ्च मनोदुःखकृत्त्वादिति कश्चित्। एके तु धातुवैषम्यं विकारो धातुसाम्यं प्रकृतिः। तयोः फलं सुखं दुःखञ्च। यथा गमनं पादाद्यङ्गपरिस्पन्दनं तस्य फलमुत्तरदेशसंयोगस्तस्योत्तरदेशसंयोगजनकस्पन्दनादिव्यापारस्य गमनत्वमिव सुखजनकधातुसाम्यस्य प्रकृतित्वं दुःखजनकधातुवैषम्यस्य विकारत्वम्। यथा चोत्तरदेशसंयोगमन्तरेण गमनं न प्रतिपद्यते तथा च सुखदुःखव्यतिरेकेण प्रकृतिविकारो न प्रतिपद्येते इति। संयोगो गमनं तज्जनकस्पन्दनादिश्च गमनमितिवत् सुखमारोग्यं सुखजनकधातुसाम्यञ्चारोग्यं प्रकृतिरित्यनर्थान्तरम्। दुःखं विकारस्तज्जनकधातुवैषम्यञ्च विकार इति। ज्वरादयश्च धातुवैषम्यजा विकारा विषमवातादिदोषदूषितरसादिसमुदायजत्वेन विशिष्टापूर्व्वलक्षणत्वेऽपि वातादिवैषम्यविशेषात्मका उच्यन्ते न ततो भिन्नाः। यथा पाञ्चभौतिकत्वेन विशिष्टापूर्व्वलक्षण-

भवति; धातुवैषम्यजविकारप्रतिपादकन्तु ग्रन्थ आविष्कृततमज्वरादिप्रतिपादकत्वेन व्याख्यातव्यः, तेन धातुवैषम्यञ्च धातुवैषम्यजाश्च ज्वरादयो विकारा भवन्ति, धातुवैषम्यजादिष्वपि हि ज्वरादिषु धातुवैषम्यरूपताऽस्त्येव, किञ्च समानक्षीणा दोषाः किञ्चिद्विकारं न जनयन्ति, क्षीणकारणं वैषम्यमेव परं यान्ति, वचनं हि "क्षीणा जहति लिङ्गं स्वं समाः स्वं कर्म्म कुर्व्वते" इति, नात्र धातुवैषम्यमात्रं विकार इति मूलवाक्यस्य पन्थाः, ये तु धातुवैषम्यजो विकार इति

कनकादीनां तेजोमयत्वादिकं न तेजस्तः पृथक्त्वं व्यवह्रियते। आगन्तवस्तु ज्वरादयो वातादिधातुभ्यो भिन्ना एव। वातादिदुष्टेः पूर्व्वमेव तेषामुत्पत्तेन चागन्तुभूतादिहेत्वात्मका भवन्ति तल्लक्षणत्वादिति वाच्यम्। भूताद्यागन्तुहेतूनां निमित्तकारणत्वेन समवायिकारणत्वाभावे च प्रकृतिविकारभावासम्भवात्। नन्वेवं भूतादयस्त्वागन्तुहेतवो ज्वरादिरूपेण परिणमन्तः शरीरमाविशन्तीति मृद्घटादिवत् प्रकृतिविकारभावसम्भवेन समवायिकारणत्वं ज्वरादिषु भूतादीनां कारणानामिति चेत्? न। धातुवैषम्यवत् दुःखजनकभूतादिरपि विकार इत्युक्तापत्तेरिष्टापत्तौ चाचार्य्यस्य न्यूनत्वदोषः स्यात् तत्रापीष्टापत्तौ व्याधेरनन्तकल्पनायां महागौरवं स्यात् तत्रापि यावन्तः सन्ति भावास्तावतां कल्पनं किं गौरवमिति कृत्वा चेदिष्टापत्तिश्चेत् तदा उच्यते बाह्यहेतुभूताद्यागन्तुवत् शारीरदोषहेतुकट्वादिद्रव्याण्यपि भवन्तु समवायिकारणानीत्यतश्च प्रकृतिविकारभावासम्भवादिति। ननु कट्वादिभिर्हेतुभिर्वातादिवैषम्ये जाते ततो ज्वराद्युत्पत्तिरिव भूतादीनां ज्वराद्युत्पत्तेः पूर्व्वं वातादिजनकत्वाभावात् भूतादिवत् कट्वादीनां समवायिकारणत्वं प्रकृतिविकृतिभावश्च नास्त्येवेति चेत् सत्यमागन्तुहेतूनां भूतादीनामपि शरीरसम्बन्धात् पूर्व्वं न ज्वरत्वादिरूपेण परिणामोऽस्ति परन्तु भूतादीनां देहसम्बन्धमात्रेण तेभ्यो धातुसंक्षोभस्तत्तस्तत्तद्भूतादिजदुःखञ्च युगपदुत्पद्यते शारीरं मानसं वा न तदा वातादिभिरनुबध्यते। तस्मान्न वाताद्यात्मकाः पश्चात् तु वातादिभिरनुबध्यत्वेन तत्तद्भूताद्यनुरूपवातादिजहास्यरोदनादिविशिष्टलक्षणाः स्युरिति बलवद्धेतुप्रभावात्। फलोत्पत्तौ व्यापारान्तरस्य जनकत्वाभावेन यथा त्रिक्रियादिमात्रलक्षणः पाकस्तथागन्तुजो विकारो दुःखमात्रलक्षणो दुःखहेतुदेहमनोधातुवैषम्यलक्षणो वा। मात्सर्यादिदिनरात्र्यंशभोजनांशजधातुवैषम्यन्तु विकार एव न त्वारोग्यं. क्षुत्पिपासानिद्रादीनां स्वाभाविकव्याधित्वेनोक्तत्वात् सुश्रुतादिभिरिति वदन्ति।

सर्व्वथैव धातुवैषम्यं त्रिविधान्यतमदुःखञ्चायुगपदुत्पद्यते न तु धातुवैषम्य विना दुःखं दुःखञ्च विना धातुवैषम्य वर्त्तते एवं धातुसाम्यं सुखविशेषश्चायुगपदुत्पद्यते। न तु सुखं विना धातुसाम्यं धातुसाम्यं विना न वर्त्तते सुखमिति। धातुवैषम्यं दुःखञ्च विकारपर्य्यायः धातुवैषम्यं वा विकारः दुःखं वा विकारः। धातुसाम्यं वा प्रकृतिः सुखं वा प्रकृतिरारोग्यञ्च तदिति। आगन्तुषु च रसादि-

व्यवस्थिताः, ते स्वजनितव्यपदेश्यविकारं धातुवैषम्यं रात्रिदिनाद्यकालादिकृतधातुवैषम्यव्यपदेशत्वेन

चतुर्णां भिषगादीनां शस्तानां धातुवैकृते।
प्रवृत्तिर्धातुसाम्यार्था चिकित्सेत्यभिधीयते ॥ ४ ॥

धातुवैषम्यं पूर्व्वं भूतादितो जायते, पश्चाद्भूतादिसधर्म्मकतया वातादिभिरनबध्यते। समधर्म्मत्वेन भूतादीनां वातादिधातुवैषम्यकरत्वं ज्वरादिविशिष्टव्याधिजनकत्वञ्चेत्युभयस्य यौगपद्यात्। दोषव्याध्युभयहेतूनान्तु वातादिवैषम्यकरत्वव्याधिजनकत्वयोर्यौगपद्याभावात् पूर्व्वपरभावाच्च भूतजादित्वेन बलवत्कारणजत्वेन व्याधिर्व्यपदिश्यते न वा तत्तत्कारणधर्म्मानुलक्षणं धातुवैषम्यं भवतीति। रात्रिन्दिवादंशजन्तु धातुवैषम्यं विकार एव स्वाभाविकः दिनापाक्यजीर्णवत्। एवं तद्वैषम्यजवैषम्यविशेष एव ज्वरादिर्न त्वन्यः। यथा लिङ्गलिङ्गज्ञानजन्यज्ञानमेवानुमितिर्नाम ज्ञानमित्यपरे ॥ ३ ॥

गङ्गाधरः—ननु गुणवत् पादचतुष्टयं विकारव्युपशान्तये कारणं निःसम्बन्धादेव भवति किं सम्बन्धादिति? अत आह—चतुर्णामित्यादि। भिषगादीनां भिषग्द्रव्योपस्थातृरोगिणां चतुर्णां मिलितानां नियमेन व्यस्तानां यथार्हं न तु नियमतः शस्तानां गुणवत्तया प्रशस्तानां धातुवैकृते समविषमवातादिधातूनां पुरुषाणां स्वाभाविकादिबलप्रवृत्तिजे धातुवैषम्ये दुःखे वा सति साम्यार्थां समत्वार्था सुखार्था च या प्रवृत्तिः प्रवर्त्तनं क्रिया चेष्टेति यावत् सा चिकित्साभिधीयते न तु निवृत्तिः। भिषगादीनां हि पादत्वं चिकित्सायामेव न त्वचिकित्सायाम्। भिषजः प्रवृत्तिस्तु तवायं व्याधिरेतदात्मकोऽयं व्याधिरस्मिन् व्याधौ तवेदं भक्ष्यमिदं पेयमिदमाचर्य्यमिदं भेषजमस्मिन् काले सेव्यमिदं पथ्यमिदमपथ्यमित्याद्युपदेशादिच्छेदनभेदनादिरूपा। द्रव्यस्य तु प्रवृत्तिरुपयुक्तस्य स्वकार्य्यकरणम्। परिचारकस्य प्रवृत्तिरौषधाद्यादिसंस्कारातुरपरिचर्य्यादिरूपा। रोगिणः प्रवृत्तिर्भिषगुक्तमतिनियतानुष्ठानस्वगतज्ञापकत्वादिरूपा ॥ ४ ॥

अव्यपदेश्यतया धातुसाम्य एव प्रक्षिपन्तीति तिलकालकमशकप्रभृतीनां धातुवैषम्यजत्वेनेह चरक रोगत्वं व्यवच्छिनत्ति, दुःखहेतुत्वञ्च तेषां ज्ञातानां मनोदुःखकर्त्तृत्वेन ॥ ३ ॥

चक्रपाणिः—विकारलक्षणानन्तरं विकारप्रशमहेतोश्चिकित्साया लक्षणमाह—चतुर्णामित्यादि। चतुर्णामिति पदं वैद्यादीनां मिलितानामेव ग्राहकम्। शस्तानामिति वक्ष्यमाण "श्रुते पर्य्यवदातत्वम्" इत्यादिगुणयोगेन प्रशस्तानाम्। धातुवैकृते रोगे चिकित्साविषयभूते। धातुसाम्यार्थाऽऽरोग्यकरणार्था इत्यर्थः। धातुवैकृत इति पदं स्पष्टार्थं, येन धातुसाम्यार्था प्रवृत्तिर्धातुसाम्य एव वैद्यादीनां भवति। प्रवृत्तिर्वैद्यस्य—इदं कर्त्तव्यमिदं न कर्त्तव्यमित्यादिकोपदेशरूपा।

श्रुते पर्य्यवदातत्वं बहुशो दृष्टकर्म्मता ।
दाक्ष्यं शौचमिति ज्ञेयं वैद्ये गुणचतुष्टयम् ॥ ५ ॥
बहुता तत्र योग्यत्वमनेकविधकल्पना ।
सम्पच्चेति चतुष्कोऽयं द्रव्याणां गुण उच्यते ॥ ६ ॥

गङ्गाधरः—ननु पादचतुष्टयं गुणवत् कारणमुक्तं, भिषगादीनां पुनः के गुणा इत्याह—श्रुत इत्यादि । क्रमेण गुणानामपकर्षात् पूर्व्वपूर्व्वगुणोत्कर्षख्यापनार्थं निर्देशः । श्रुतमधीतशास्त्रं तत्र पर्य्यवदातत्वं सद्गुरूपदेशेन परि सर्व्वतोभावेनावदातत्वं बुद्धेर्वैशद्यभ्रमसंशयान्यथाव्याख्यानादिरहितत्वम् । तथात्वे हि व्याध्युपशान्तये प्रवृत्तिः कुशला भवति । बहुशो दृष्टकर्म्मता चिकित्सकसमूहानां रोगिसमूहानाञ्च चिकित्साकर्म्मदर्शनम् । तथात्वे हि क्रियापटुत्वं भवति । दाक्ष्यं चिकित्साक्रियानेकक्रान्तिमत्तया कुशलत्वं कर्म्मसामर्थ्यञ्च । तथात्वे हि चिकित्सायाः प्रवर्त्तने स्फूर्त्तिर्भवति । शौचमिति शुचिभावः । अशुचिर्हि वैद्यो न मनोज्ञायते मनसा श्रद्धाभावात् । सर्व्वत्रैव हि श्रद्धा सिद्धिमूलमिति । अपरे च वैद्यादीनां जितहस्तत्वादयो गुणा अत्रानावश्यकत्वेन नोपदर्शिता एतावद्भिरेव गुणैश्चिकित्साक्रियासम्पादकत्वात् ॥ ५ ॥

गङ्गाधरः—द्रव्यगुणानाह—बहुतेत्यादि । बहुत्वमाधिक्यं द्रव्यस्य गुणः चिकित्सायामुपपादकः । स्वल्पं हि द्रव्यं भेषजाकृहानये भवति । तत्र योग्यत्वमिति । तत्र प्रतिकार्य्ये व्याधौ योग्यत्वं यद्व्याधिषु यद्द्रव्यमुपयोज्यं तद्द्रव्य नूतनत्वादिगुणयुक्तं कीटजग्धत्वादिदोषरहितञ्च । अनेकविधकल्पनेति । स्वरसकल्कचूर्णकषायादिनानाकल्पनां कर्त्तुं योग्य यद्द्रव्यमार्द्रमतिशुष्कञ्चेत्यादिरूप

द्रव्यस्य तूपयोगे सति सकारयोरम्भकरूपा ; परिचारकप्रवृत्तिर्भैषजसंस्करणातुरपरिचर्य्यादिरूपा, आतुरप्रवृत्तिर्वैद्यादेशानुष्ठानव्याधिस्वरूपकथनादिका ॥ ४ ॥

चक्रपाणिः—पूर्व्वसूचितवैद्यगुणान् दर्शयति—श्रुत इत्यादि । श्रुतमादौ श्रेष्ठवैद्यगुणत्वात् । एवमन्यत्रापि व्याख्येयम् । पर्य्यवदातत्वं विशुद्धज्ञानवत्त्वं गुरुशास्त्रसेवनादिना, शौचमद्रष्टस्योपकारकं, जितहस्तत्वादयोऽपरेऽपि वैद्यगुणा अत्रैव गुणचतुष्टयेऽन्तर्भावनीयाः ॥ ५ ॥

चक्रपाणिः—बहुता भेषजगुणः अल्पं हि भेषजं गुणवदप्यविद्यमानमिवासाधकत्वात् । तत्र प्रतिकर्त्तव्ये व्याधौ योग्यत्वं तत्र योग्यत्वं । अनेकविधकल्पना नानाप्रकारस्वरसाद्युपयुक्तकल्पनायोग्यत्वमित्यर्थः ; यतः, प्राणिनः केचित् स्वरसद्विषः, केचित् कल्कद्विषः एवमादि ; एवं क्वाथ-

उपचारज्ञता दाक्ष्यमनुरागश्च भर्त्तरि।
शौचञ्चेति चतुष्कोऽयं गुणः परिचरे जने ॥ ७ ॥
स्मृतिर्निर्द्देशकारित्वमभीरुत्वमथापि च।
ज्ञापकत्वञ्च रोगाणामातुरस्य गुणाः स्मृताः ॥ ८ ॥

सञ्च वर्त्तते तत्। सम्पच्चेति यथर्त्तु सम्भूतत्वेन सम्पूर्णगुणरसवीर्य्यप्रभावादिमत्ता सम्पत्तिः ॥ ६ ॥

गङ्गाधरः—उपस्थातुर्गुणानाह—उपचारज्ञतेत्यादि। रसकल्पौदनयूषपेयादिकरणशीलता संवाहनस्थापनशायनादिषु विज्ञता। दाक्ष्यं दक्षता तत्तदातुरोपचारक्रियासु कुशलत्वम्। अनुरागश्च भर्त्तरीति आतुरे स्वामिनि अनुरागः। कदा केन कथं वारोग्यमस्य भवतीत्यादिरूपेण मनसानुरागः श्रद्धा। शौचमिति पूर्ब्बवत् ॥ ७ ॥

गङ्गाधरः—रोगिणो गुणानाह स्मृतिरित्यादि। स्मृतिः पूर्ब्बमाचरितमभ्यवहृतं यावत्तावतां स्मरणं तदाख्यानेन वैद्यस्तावत् कारणं विज्ञाय क्रियामारब्धुं व्याधिं निरूपयितुञ्च शक्नोति। निर्द्देशकारित्वं वैद्येन शासितस्य कर्म्मणः कर्त्तृत्वम्। अभीरुत्वं व्याधितो वैद्यप्रयोक्तव्यकर्म्मतश्चाभीतिशीलत्वम्। व्याधितो भीरुत्वे व्याधीनां वृद्धिः, उक्तं हि "विषादो रोगवर्द्धनानाम्" इति कर्म्मभीरुत्वे चिकित्सितकर्म्मासिद्धिः। अथापि चेति शब्देनेह क्वचिद्भीरुत्वमपि गुणस्तथा चास्मृतिरपि गुणः स्यात्। उन्मादचिकित्सिते "सर्पेणोद्धृतदंष्ट्रेण" इत्यादिना त्रासनमुक्तं, तदा यस्य भयं न स्यात् तर्हि तत् विफलं स्यात्। एवं "ज्वरवेगञ्च कालञ्च चिन्तयन् ज्वर्य्यते तु यः। तस्येष्टैश्च विचित्रैश्च प्रयोगैः

स्वभावादपि काचित् कल्पना हिता भवति, यथा "ज्वरं कषाय" इत्यादि; तेनानेककल्पनायोगः स्यात्, यत् यत्र युज्यते तत् तत्र क्रियते। सम्पदिति क्रिमिसलिलाद्यनुपहतत्वेन रसादिसम्पत्। उपचारज्ञता यूषरसकादिकरणसंवाहनस्थापनाद्यज्ञता ॥ ६।७ ॥

चक्रपाणिः—निर्द्देशकारित्वं वैद्योपदिष्टार्थकर्त्तृत्वम्, अभीरुत्वं गुणः, भीरुत्वस्य रोगकर्तृत्वात्; यदुक्तं "विषादो रोगवर्द्धनानाम्" इति। "अथापि च" इतिशब्देन क्वचिद्भीरुत्वमप्यस्मृतिरपि गुणो भवतीति दर्शयति; यथोन्मादे "सर्पेणोद्धृतदंष्ट्रेण" इत्यादिना त्रासनमुक्तं चिकित्सायां, तत्र यद्यभीरुः स्यात्तदा रोगी तदा चिकित्सा न फलति; अस्मृतिस्तु ज्वरवेगागमनकालस्मरणं प्रति ज्ञेया; यदुक्तं—"ज्वरवेगञ्च कालञ्च चिन्तयन् ज्वर्य्यते तु यः। तस्येष्टैश्च विचित्रैश्च प्रयोगैर्नाशयेत् स्मृतिम्" ॥ ८ ॥

कारणं षोड़शगुणं सिद्धौ पादचतुष्टयम् ।
विज्ञाता शासिता योक्ता प्रधानं भिषगत्र तु ॥
पक्तौ हि कारणं पक्तुर्यथा पात्रेन्धनानलाः ।
विजेतुर्विजये भूमिश्चमूः प्रहरणानि च ॥

लौंघयेत् स्मृतिम् ॥" इत्युक्त्या ज्वरवेगकालविस्मरणमुक्तमिति कश्चिदाह, तन्न । पूर्व्वमाचरिताभ्यवहारादीनां स्मरणस्य गुणत्वेनोक्तत्वात् उत्पन्ने तु रोगे चिकित्सार्थं वेगादिविस्मरणस्य गुणत्वाभावात् विहारावभेषजत्वात् तथा उन्मादे त्रासनस्यापि तथात्वाच्च । ज्ञापकत्वमिति पूर्व्वं यदाचरितमभ्यवहृतं तत् तस्य तथातुरस्य यदा यथात्वं तस्य च ज्ञापकत्वं गुण इति ॥ ८ ॥

गङ्गाधरः—एवं गुणान् पादचतुष्टयस्य प्रोच्य चतुष्पादे प्राधान्य वैद्यस्य दर्शयितुमाह—कारणमित्यादि । षोड़शगुणं मिलित्वा पादचतुष्टयं, सिद्धौ चिकित्सितक्रियासिद्धौ कारणं भवति । अत्र तु चतुष्पादेषु मध्ये भिषक् प्रधानमिति प्रतिज्ञा । कस्मादित्याह—विज्ञातेत्यादि । अत्र पक्तौ हीति हि-शब्दो हेतौ बोध्यः । तेन हि यस्मात् भिषक् विज्ञाता औषधस्य शासिता पथ्यादिनियमे वचनाय रोगिणः । परिचारकस्य चेदमेवं कुरु नेदं नैवं कुरु इत्यादिरूपेण शासनकर्त्ता नियोगकर्त्ता । योक्ता रोगिण औषधादिप्रयोक्ता । एवं भिषक्परतन्त्राणां द्रव्यादीनां त्रयाणां पादानां प्रवृत्तिरिति, भिषक् पुनः स्वतन्त्र इति बोध्यम् ।

इदमेव दृष्टान्तद्वयेन दर्शयति—पक्तावित्यादि । पक्तौ पाके । यथा पक्तुः पाचकस्य पाके पात्रेन्धनानलाः कारणं पात्रमधिकरणं तथातुरः इन्धनानलौ यथा करणे तथा द्रव्यपरिचारकौ । यथा च विजेतुर्जयक्रियायां भूमिरधिकरणं तथातुरः, चमूः सेना प्रहरणानि चास्त्रशस्त्राणि यथा करणद्वयं तथा द्रव्यपरि-

चक्रपाणिः—एवं वैद्यादीनां चतुर्णामपि कारणत्वे सिद्धे वैद्यस्य प्राधान्यं दर्शयति—विज्ञातेत्यादि । विज्ञाता औषधस्य ; शासिता परिचारकस्य, एवं कुर्व्वेवं मा कुर्व्विति ; योक्ता ऽऽतुरस्य । एतेन वैद्यपराधीना भेषजादीनां प्रवृत्तिः, वैद्यस्तु स्वतन्त्रः, ततश्च वैद्यः प्रधानमिति वाक्यार्थः ।

एतदेवाभ्यर्हितत्वात् दृष्टान्तद्वयेन दर्शयति—पक्तावित्यादि । पक्तौ पाके कर्त्तव्ये ; पात्रस्थानीय आतुरः, परिचारक इन्धनरूपः, अनलो भेषजरूपः ; कारणमित्युपकरणम्, भूमिमुखेनातुरग्रहणम् । अत्रापि पूर्व्ववद्वैद्यपारतन्त्र्यमातुरादीनाम् भूम्यादीनाम् ।

आतुराद्यास्तथा सिद्धौ पादाः कारणसंज्ञिताः ।
वैद्यस्यातश्चिकित्सायां प्रधानं कारणं भिषक् ॥
मृद्दण्डचक्रसूत्राद्याः कुम्भकारादृते यथा ।
नावहन्ति गुणं वैद्यादृते पादत्रयं तथा ॥ ९ ॥
गन्धर्व्वपुरवन्नाशं यद्विकाराः सुदारुणाः ।
यान्ति यच्चेतरे वृद्धिमाशूपायप्रतीक्षिणः ॥

चारको करणद्वयमिति, एवंरूपेणातुराद्याः प्रतिलोमतन्त्रयुक्त्या आतुर-परिचारक-द्रव्याणीति त्रयः पादा वैद्यस्य चिकित्सायाः सिद्धौ कारणम् । पक्तुः पाके पात्रवत् विजेतुर्विजये भूमिवदातुरोऽधिकरणकारणमिति । तथा वैद्यस्य चिकित्सासिद्धौ इन्धनवत्कसूत्रवच्च परिचारकः करणकारणसंज्ञितः । अनलवत् प्रहरणवच्च करणकारणसंज्ञितं द्रव्यमिति बोध्यम् । निगमयति—अत इत्यादि । अतः प्रधानं कर्त्तृ कारणं भिषक् इति पञ्चावयववाक्यम् ।

अन्वयेन पादचतुष्टये वैद्यस्य प्राधान्यं हेत्वादिभिः स्थापयित्वा व्यतिरेकेण स्थापयति—मृद् इत्यादि । यथा कुम्भकारादृते कुलालं विना मृद्दण्डचक्रसूत्राद्याः कुम्भनिर्म्माणे गुणं कुम्भनिर्म्मितिसिद्धिकरं नावहन्ति न कर्त्तुमलं भवन्ति तथा वैद्यादृते वैद्यं विना पादास्त्रयः द्रव्योपचारकरोगिणः गुणं चिकित्सासिद्धिं नावहन्ति, तस्मात् भिषक् प्रधानं पादचतुष्टये ॥ ९ ॥

गङ्गाधरः—अथान्वयव्यतिरेकाभ्यां दृष्टान्ताभ्यां भिषजः प्राधान्यं स्थापयित्वा एकेनैव दृष्टान्तेनान्वयेन गुणं व्यतिरेकेण दोषं दर्शयितुं गुणवद्विद्यस्य व्याप्तिमाह—गन्धर्व्वेत्यादि । सति पादत्रयेऽपि द्रव्योपस्थातृरोगिषु सत्स्वपि गुणवत्सु उपायप्रतीक्षिणः क्रियासाध्या न त्वसाध्या विज्ञवैद्येनोपक्रान्ताः सुदारुणा अपि विकाराः केचित् यद्यस्मात् आशु नाशं यान्ति गन्धर्व्वपुरवत् । यथा नीहाराद्यूर्णनाभकीटजालमाशु नाशं यान्ति तत्र कारणं को भिषक् । उपाय-

सम्प्रति व्यतिरेकदृष्टान्तेन वैद्यप्राधान्यं दर्शयति—मृद्दण्डेत्यादिना । न वहन्ति न निष्पादयन्ति ; गुणं साध्यमित्यर्थः ॥ ९ ॥

चक्रपाणिः—अन्वयेन व्यतिरेकेण च पृथक् दृष्टान्तं दर्शयित्वा कौशलेनैकत्रैव दृष्टान्ते गन्धर्व्वपुरदृष्टान्तेऽन्वये गुणं व्यतिरेके च दोषं दर्शयति, एकत्र पक्षे नाशमाशु दर्शयतीति सम्बन्धः, इतरेऽपरेऽनभिज्ञवैद्योपक्रान्ता गन्धर्व्वपुरवदाशु वृद्धिं यान्तीति सम्बन्धः । उपायप्रतीक्षिण

सति पादत्रये ज्ञाज्ञौ भिषजावत्र कारणम्।
वरमात्माऽऽहुतोऽज्ञेन न चिकित्सा प्रवर्त्तिता॥
पाणिचाराद् यथाऽचक्षुरज्ञानाद्भीतभीतवत्।
नौर्मारुतवशेवाज्ञो भिषक् चरति कर्म्मसु॥ १०॥
यदृच्छया समापन्नमुत्तार्य्य नियतायुषम्।
भिषङ्मानी निहन्त्याशु शतान्यनियतायुषाम्॥ ११॥

प्रतीक्षिणश्चैव स्वल्पोपायसाध्या एव दारुणेभ्य इतरे सुखसाध्या विकारा यद् वृद्धिं यान्ति, तत्र कारणमज्ञो भिषग् इति। विकारव्युपशान्तौ गुणवति पादत्रये स्मृतिगुणवान् ज्ञो भिषक् कारणं न त्वज्ञो भिषक्। तथा विकाराणामाशु वृद्धौ कारणमज्ञो भिषङ् न तु ज्ञो भिषग् इति। विकारनाशवृद्ध्योः क्रमेण ज्ञाज्ञौ भिषजौ कारणमिति। चिकित्सायामज्ञस्य प्रतिषेधमाह—वरमित्यादि। आत्मा आहुत आहुत आत्मा वरम् आत्माहुतिमरणं वरं, न त्वज्ञेन भिषजा चिकित्सा प्रवर्त्तिता। एवं यथा पाणिचारात् हस्तपरामर्शात् अचक्षुरज्ञानात् भीतभीतवद्व्रजति तथैवाज्ञेन वैद्येन प्रवर्त्तितचिकित्सायामातुरो भीतभीतवद्व्रजति। अज्ञानात् कदा किं क्रियतेति कथं भीतभीतवदित्याह नौर्मारुतेत्यादि। अज्ञो भिषक् मारुतवशा नौरिव कर्म्मसु चिकित्सासु चरति। कर्णधारहीना नौका यथा जले वायुवशेन चरति तथा गुणचतुष्टयहीनोऽसौ वैद्यो यदृच्छावशगः कर्म्मसु चरतीति॥ १०॥

गङ्गाधरः—तथाचारे का हानिरित्याह—यदृच्छयेत्यादि। अज्ञो भिषक् यदृच्छया गुणचतुष्टयं कारणं विना समापन्नं प्राप्तमातुरं स्वगुणान् विना उपक्रान्तं नियतायुषमातुरं तस्य प्राक्तनशुभकर्म्मवशात् उत्तार्य्य व्याधितो मोचयित्वा भिषङ्मानी। अभिषजमात्मानं भिषजं मन्तुं शीलं यस्य सः

वृद्धौ शान्तौ च आशु विकारशान्तौ ज्ञो भिषक् कारणम्, आशुवृद्धावज्ञः। अज्ञवैद्यस्य चिकित्साप्रवृत्तिं निषेधयति, वरमित्यादि। न वरमनुचितैव, प्रवर्त्तितेतिभाषयाऽसर्व्वांशवैद्येन अज्ञात् कृतेति दर्शयति, पाणिचारात् हस्तपरामर्शात्. कर्म्मसु चिकित्सासु।

यदृच्छयेति। वैद्यसम्यग्ज्ञान-पूर्व्वकप्रवृत्तिं विना कर्म्मवशादित्यर्थः; समापन्नं सम्यगुपक्रान्तं, नियतायुषमित्यनेनातुरं केवलं व्याधितमुत्तीर्य्यमाणमित्यर्थः, आत्मानमभिषजं

तस्माच्छास्त्रेऽर्थविज्ञाने प्रवृत्तौ कर्म्मदर्शने।
भिषक् चतुष्टये युक्तः प्राणाभिसर उच्यते॥ १२॥
हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे।
ज्ञाने चतुर्व्विधं यस्य स राजार्हो भिषक्तमः॥ १३॥
शस्त्रं शास्त्राणि सलिलं गुणदोषप्रवृत्तये।
पात्रापेक्षीण्यतः प्रज्ञां चिकित्सार्थं विशोधयेत्॥ १४॥

तथाभूतः सन्ननियतायुषां पुंसामातुराणां शतानि चिकित्सया उपक्रम्याशु निहन्ति॥ ११॥

गङ्गाधरः—अतोऽज्ञो भिषक् न कारणमिति निगमयति—तस्मादित्यादि। तस्मात् उक्तदोषाच्छास्त्रादिचतुष्टये युक्तो निष्पादितगुणप्रकर्षो भिषक् प्राणाभिसर उच्यते। निर्द्देशतो लब्धोऽपि चतुष्टये पुनश्चतुष्टय इति यदुक्तं तन्मिलितार्थं शास्त्रे शास्त्रपाठे युक्तश्चेत् भिषक् तच्छास्त्रार्थविज्ञाता न स्यात् तदा चिकित्सासु मुह्यति। एवं शास्त्रेऽधीते शास्त्रस्य तत्त्वार्थविज्ञाता च सन्नपि यदि प्रवृत्तौ चिकित्साक्रियायां कृती न भवति तदा मुह्यति। तादृशोऽपि भिषक् यदि दृष्टकर्म्मा न स्यात् तदापि न सर्व्वथा कर्म्मकुशलः स्यादिति भावः॥ १२॥

गङ्गाधरः—शास्त्रेऽर्थविज्ञाने प्रवृत्तौ कर्म्मदर्शने युक्तस्य वैद्यस्य यद्भवति तदाह—हेतावित्यादि। हेतौ रोगाणामुत्पत्तिहेतौ रोगाणां लिङ्गे रोगाणां प्रशमने रोगाणामपुनर्भवे ज्ञानमिति चतुर्व्विधं ज्ञानं यस्य स राजार्हो भिषक्तमः। शास्त्रार्थविज्ञानादिचतुष्टययुक्तस्य रोगहेत्वादिचतुष्टयज्ञानवत्त्वेन भिषक्तमत्वं बोध्यं राजार्हत्वञ्च॥ १३॥

गङ्गाधरः—ननु सर्व्व एव भिषजः प्राणाभिसरा भिषक्तमाश्च भवन्ति। शास्त्राध्ययनेनैव तथात्वसम्भवात् किमर्थमर्थविज्ञानादि पुनरुक्तमिति चेत्? न इत्याह—शस्त्रमित्यादि। शस्त्रं शास्त्रं सलिलमिति त्रीणि गुणदोषप्रवृत्तये पात्रा-

भिषक्त्वेन मन्यत इति भिषग्मानी। अनियतायुषामिति, यत्रायुःकारणं बलवत् कर्म्म नास्ति, तत्र पुरुषकारापराधेन वैद्यदोषान्मरणं भवतीति दर्शयति। शास्त्रे शास्त्रावधारणे, अर्थविज्ञाने शास्त्रार्थावबोधे, प्रवृत्तौ स्वयं कर्म्मकरणे, युक्तः उद्युक्तः यथोक्तनिष्पादितगुणप्रकर्ष इति यावत्।

विद्या वितर्को विज्ञानं स्मृतिस्तत्परता क्रिया ।
यस्यैते षड् गुणास्तस्य न साध्यमतिवर्त्तते ॥ १५ ॥
विद्या मतिः कर्म्मदृष्टिरभ्यासः सिद्धिराश्रयः ।
वैद्यशब्दाभिनिष्पत्तावलमेकैकमप्यदः ॥

पेक्षीणि भवन्ति । यथा शस्त्रविद्याविशारदपुरुषे शस्त्रं सद्गुणं भवति न तु शस्त्रविद्यायामकुशले, तथा व्याख्यानादिभिः स्वधीतशास्त्र पुरु शास्त्रं वैशद्यादिगुणं भवति, न त्वधीतमात्रं सदुपदेशहीनं शास्त्रं, सलिलञ्च स्वर्णादिसुपात्रे सद्गुणं भवति, न गुप्तमृत्तिकादौ । तथा शस्त्रविद्यास्वविशारदपुरुषे शस्त्रं सद्गुणमपि सदोषं भवति । शास्त्रञ्च कुव्याख्यानेनाधीतपुरुषे विपरीतार्थं भवति । सलिलञ्च सलवणादिपात्रे सलवणादि भवतीति । अतः शास्त्रं सुधियाधीतं सदुपदेशेन चेतसा गुणवत्तरं भवतीति निष्कर्ष-स्तस्माच्चिकित्सार्थ प्रज्ञां वैद्यो विशोधयेत् सद्गुरूपासनेन शास्त्रमधीत्य प्रज्ञाविशोधनं कुर्य्यात् ॥ १४ ॥

गङ्गाधरः—प्रज्ञाविशोधनज्ञानार्थं लिङ्गान्याह—विद्येत्यादि । प्रज्ञाविशोधनेन विद्यादयो भवन्ति । इत्यतो विद्याभिरनुमीयते प्रज्ञाविशुद्धिरिति । विद्या तच्छास्त्रे तत्त्वेनाधीते तच्छास्त्रविद्या अत्रायुर्वेदविद्या । वितर्कः शास्त्रार्थमूलक ऊहापोहः । विज्ञानं बहुशास्त्रज्ञानेन विमलत्वं । स्मृतिर्यदा यथा यत् कर्त्तव्यं यत्र यदुक्तं तत्सर्व्वस्य स्मरणम् । तत्परता तत्तत्क्रियायां प्रयत्नातिशयः । क्रिया पुनःपुनश्चिकित्साकरणम् । यस्यैते षड्गुणा इति मिलितार्थज्ञापनार्थं न साध्यमतिवर्त्तते साध्यं व्याधिं नातिवर्त्तते असाध्यो न भवति ॥ १५ ॥

गङ्गाधरः—न त्वेवम्भूतो यो न स्यात् स किं न वैद्यः स्यादिति ? इत्यत आह—विद्येत्यादि । विद्यायुर्व्वेदविद्या । मतिः स्वाभाविकविशुद्धबुद्धिः । कर्म्मदृष्टिः दृष्टचिकित्सितकर्म्मत्वम् । अभ्यासश्चिकित्साक्रियायां शस्त्रावचारणादि—क्रियाभ्यासः । सिद्धिः प्रायेणानेकरोगिणो कृतारोग्यत्वम् । आश्रयः सद्गुरो-

प्राणाम् तच्छतो व्यावर्त्तयतीति प्राणाभिसरः । पात्रापेक्षीणीति गुणवति पात्रे सगुणानि दोषवति पात्रे दोषवन्तीत्यर्थः, विशोधयेत् सद्गुरुसच्छास्त्रसेवादिभिरित्यर्थः ॥ १०—१४ ॥

चक्रपाणिः—विद्या वैद्यकशास्त्रज्ञानं, वितर्कः शास्त्रमूलमूहापोहः, विज्ञानं शास्त्रान्तरज्ञानं किंवा सहजं विशुद्धं ज्ञानम्, तत्परतेह व्याधिचिकित्सायां प्रयत्नातिशयत्वं, क्रिया पुनःपुनश्चिकित्साकरणम् । मतिः सहजविशुद्धमतिः, अभ्यासः कर्म्माभ्यासः, सिद्धिः प्रायशो व्याधि-

यस्य त्वेते गुणाः सर्व्वे सन्ति विद्यादयः शुभाः।
स वैद्यशब्दं सद्भूतमर्हन् प्राणिसुखप्रदः॥ १६॥
शास्त्रं ज्योतिः प्रकाशार्थं दर्शनं बुद्धिरात्मनः।
ताभ्यां भिषक् सुयुक्ताभ्यां चिकित्सन् नापराध्यति॥१७॥

राश्रय इत्यद एकैकं वैद्यशब्दाभिनिष्पत्तौ प्रकृतवैद्यपदवाच्यत्वेन निष्पत्तौ अक्षमत्वम्। यस्य तु एते सर्व्वे गुणाः शुभा विद्यामत्यादयः सन्ति न तु विद्या वितर्क इत्यादयः षड़्गुणा इत्यत आह—विद्यादय इति। एते पूर्व्व-श्लोकोक्ताः। न तु पूर्व्वश्लोकात् पूर्व्वश्लोकोक्ताः सान्निध्यात्। स सद्भूत-मसद्भूतं वैद्यशब्दं सद्वैद्यशब्दमर्हन् योग्यतां प्राप्नुवन् प्राणिसुखप्रदः स्यात्। एतच्च पृथक् पृथक् वैद्यगुणकथनं भिषग्बुभूषोः शास्त्रेऽर्थविज्ञाने इत्यादिषु गुणेषूपार्ज्जनं प्रयत्नातिशयकर्त्तव्यताज्ञापनार्थम्, चतुर्षु वैद्यादिषु पादेषु वैद्यस्यैवातिप्राधान्यख्यापनार्थञ्च। तथाविधो हि वैद्य एकः पादत्रयवैगुण्येऽपि कल्पनाशिक्षया प्रयोगेन सम्पाद्य चिकित्सितुं शक्नोति। न तु गुणवद्वैद्यं विना गुणवन्तोऽपि त्रयः पादाः॥ १६॥

गङ्गाधरः—वैद्यस्य शास्त्राध्ययनावश्यकत्वं दर्शयति—शास्त्रमिति। इह शास्त्रशब्देनायुर्व्वेदः। तत्रानुपतितन्त्रपरञ्च ज्योतिषादिकम्। लोके दर्शन-क्रियायां यथा वस्तूनां प्रकाशार्थं ज्योतिरालोकः दर्शनं चक्षुः, तथा चिकित्सायां शास्त्रं रोगादिप्रकाशार्थम्। दर्शनं बुद्धिरात्मन इति आत्मन एव बुद्धि-दर्शनं चक्षुः नान्यस्येति। बुद्धिरित्युक्तावात्मनो बुद्धिरिति लाभे पुनर्बुद्धि-

प्रधानकत्वम्, आश्रयः सद्गुणोऽत्र * इत्यर्थः, वैद्यशब्दाभिनिष्पत्तावित्यनेन पारमार्थिक-वैद्यत्वनिष्पत्ताविति दर्शयति। एत इत्यनेनैव लब्धेऽपि विद्यादय इति वचनं पूर्व्वोक्तगुण-व्युदासार्थं, तद्व्युदासश्च विद्यादिष्वेवान्तर्भावोऽस्ति, एतच्च प्रबन्धेन पृथक्पृथग्गुणकथनं वैद्यस्य गुणोत्पादने यत्नातिशयं कर्त्तुं, तथा वैद्यादिभ्यः पादेभ्यो वैद्यस्यैव प्रधानत्वोपदर्शनार्थं, वैद्यो हि पादत्रयं विगुणमपि कल्पनया शिक्षया प्रयोगेन च † सम्पाद्य चिकित्सितुं पारयति, न तु गुणवद्वैद्यं विना त्रयोऽपरे पादा गुणवन्तोऽपि क्षमाः॥ १५।१६॥

चक्रपाणिः—शास्त्रशब्देन शास्त्राभ्यासकृता मतिः, सा हि बाह्यालोक इव प्रकाशार्थं वस्तूनां प्रकाशयितुं कर्त्तुमित्यर्थः, दर्शनमिव दर्शनं चक्षुरित्यर्थः। यद्यपि बुद्धिरात्मन एव भवति तथाप्यात्मन इत्यनेन सहजां बुद्धिं दर्शयति, यतः सहजां बुद्धिं विना शास्त्रजा बुद्धिर्वा

* सर्व्वगुणाश्रयः इति पाठान्तरम्। † यत्नयोगेन चेति क्वचित् पठ्यते।

चिकित्सिते त्रयः पादा यस्माद् वैद्यव्यपाश्रयाः।
तस्मात् प्रयत्नमातिष्ठेद् भिषक् स्वगुणसम्पदि ॥ १८ ॥
मैत्री कारुण्यमार्त्तेषु शक्ये प्रीतिरुपेक्षणम्।
प्रकृतिस्थेषु भूतेषु वैद्यवृत्तिश्चतुर्विधा ॥ १९ ॥

त्मन इति पदोपादानात् आत्मनः सहजा बुद्धिर्दर्शनं दर्शनमिव चक्षुरिवेति यावत्। सहजां बुद्धिं विना शास्त्राध्ययनादिजा या बुद्धिः सा वैनायिकी न सम्यक् चिकित्सासमर्थेति कश्चित्। वस्तुतस्त्वात्मनो निजस्य बुद्धिर्न तु परकीया बुद्धिर्वस्तूनां दर्शनक्रियायां दर्शनं चक्षुरिवेत्यर्थः। ताभ्यां शास्त्राध्ययनज्योतिर्बुद्धिभ्यां सुयुक्ताभ्यां सुयुक्तिमद्भ्याम्। द्रव्यपरिचारकरोगिणो वैद्यव्यपाश्रयाः वैद्यं विशेषेणापाश्रित्य विकारव्युपशान्तये कारणं यस्मात् तस्मात् भिषक् स्वगुणसम्पदि श्रुते पर्यवदातत्वमित्याद्युक्तगुणसम्पदुपार्जने प्रकृष्टयत्नं प्रयत्नमातिष्ठेदाश्रयेत्। वैद्यस्य गुणव्यापदि हि त्रयाणां पादानां विकारस्य प्रशान्त्यामसामर्थ्यं वैद्यव्यपाश्रयत्वादिति ॥ १७।१८ ॥

गङ्गाधरः—अथ वैद्येन यथाभूतया बुद्ध्या व्यवहर्त्तव्यं चिकित्सायां तद्दर्शयति—मैत्रीत्यादि। आर्त्तेषु चिकित्सनीयव्याधितेषु मैत्री मित्रतया वर्त्तनम्। तेषु च कारुण्यं दुःखापशमेच्छा। शक्ये साध्ये व्याधौ प्रीतिश्चिकित्सितुं ग्रहणम्। उपेक्षणं प्रकृतिस्थेषु। प्रकृतिः स्वभावः। स च स्थूलदेहाधिष्ठानाभावेन सूक्ष्मदेहमात्राधिष्ठानेन यादृशरूपा तादृशरूपा बोध्या। तेन प्रकृतिशब्देनेह मरणमुच्यते। प्रकृतौ मरणेऽपि तिष्ठन्तीति प्रकृतिस्था आसन्नमृत्यवः। सामीप्यसम्बन्धात्तत्रपुरुषात्तद्रूपासिद्धेः। तेष्वासन्नमृत्युषु भूतेषु उपेक्षणमुपेक्षा चिकित्साग्रहणमिति। चतुर्विधा वैद्यवृत्तिर्वैद्यानां वर्त्तनमिति। एषा चतुर्विधा बुद्धिर्ब्राह्मी बुद्धिर्बोध्या। वक्ष्यते चात्राध्यायार्थसंग्रहे—"ज्ञानानि बुद्धिर्ब्राह्मी च भिषजां या चतुर्विधा" इति ॥ १९ ॥

वैनायकीत्यभिधीयते, सा न सम्यक् चिकित्सासमर्था भवतीति। ताभ्यामिति सहजाधिशुद्धबुद्धिशाखाभ्यां सहजवैनायकबुद्धिभ्याम् ॥ १७।१८ ॥

चक्रपाणिः—वैद्येन च यादृश्या बुद्ध्या व्यवहर्त्तव्यं, तां दर्शयति, मैत्रीत्यादि।—मैत्री पूर्व्वमेव व्याकृता, आर्त्तेषु आर्त्तियुक्तेषु, कारुण्यं परदुःखप्रहाणेच्छा, शक्ये साधयितुं शक्ये साध्यव्याधिगृहीत इति यावत्; प्रकृतिरिह मरणम्। यदुक्तं—प्रकृतिरुच्यते स्वभावः

तत्र श्लोकौ।

भिषग्जितं चतुष्पादं पादः पादश्चतुर्गुणः।
भिषक् प्रधानं पादेभ्यो यस्माद् वैद्यस्तु यद्गुणः॥
ज्ञानानि बुद्धिर्ब्राह्मी च भिषजां या चतुर्विधा।
सर्व्वमेतच्चतुष्पादे खुड्डाके सम्प्रकाशितम्॥ २०॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने खुड्डाक-
चतुष्पादो नाम नवमोऽध्यायः॥ ९॥

गङ्गाधरः—अध्यायमुपसंहरति—तत्र श्लोका इति। चतुष्पादं प्रथमश्लोकेन भिषग्जितम्। द्वितीयतृतीयाभ्यां पादः पादश्चतुर्गुणः प्रत्येकपादचतुर्गुणश्चतुर्थादिभिश्चतुर्भिः। कारणं षोड़शगुणमित्यारभ्य शतान्यनियतायुषामित्यन्तैर्भिषक् प्रधानं तत्पादेभ्यः। तस्मादित्यारभ्य स्वगुणसम्पदीत्यन्तैर्वैद्यो यस्माद्धेतोर्यद्गुणो भवति तानि ज्ञानानीति मैत्रीत्यादिश्लोकेन बुद्धिर्ब्राह्मी च भिषजां या चतुर्विधा, एतत्सर्व्वं खुड्डाके चतुष्पादेऽध्यायेऽस्मिन् सम्प्रकाशितमात्रेयेणेति शेषः॥ २०॥

अध्यायं समापयति—अग्नीत्यादि। पूर्व्ववद्व्याख्येयम्॥

इति श्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ सूत्रस्थानीयनिर्देश-
चतुष्कीयखुड्डाकचतुष्पादाख्यप्रथमाध्यायजल्पाभिधाना
नवमी शाखा॥ ९॥

तथेदमस्मान्मुहूर्त्तात् स्वभावमाप्स्यते मरणमित्यर्थः, मरणसमीपगतत्वादुच्यते "प्रकृतिस्थे" इति; तस्मिन्नुपेक्षा कर्त्तव्या, न तत्र भेषजदानादि कर्त्तव्यं यशोहान्यादिभयात्। संग्राहे ब्राह्मी बुद्धिश्चतुर्व्विधा मैत्र्याकारुण्यादिका॥ १९।२०॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-
व्याख्यायां खुड्डाकचतुष्पादो नाम नवमोऽध्यायः॥ ९॥

---

# दशमोऽध्यायः।

अथातो महाचतुष्पादमध्यायं व्याख्यास्यामः॥
इति ह स्माह भगवानात्रेयः ॥ १ ॥

चतुष्पादं षोड़शकलं भेषजमिति भिषजो भाषन्ते, यदुक्तं पूर्व्वाध्याये षोड़शगुणमिति। तद्भेषजं युक्तियुक्तमलमारोग्यायेति भगवान् पुनर्व्वसुरात्रेयः।

गङ्गाधरः—अथ पादचतुष्टयं गुणवद्विकारव्युपशान्तये कारणमिति यदुक्तं प्रतिज्ञातं तत्सम्मतिपक्षनिरासपूर्व्वकस्थापनार्थं महाचतुष्पादोऽध्याय आरभ्यते—अथात इत्यादि। पूर्व्ववद्व्याख्यातव्यं सर्व्वम्। महान्तं चतुष्पादमध्यायं चतुष्पादस्याध्यायस्य महत्त्वं बहुग्रन्थवत्त्वं पूर्व्वपक्षोत्तरप्रत्युत्तरवचनैः सिद्धान्तवचनवत्त्वञ्च बोध्यम् ॥ १ ॥

गङ्गाधरः—चतुष्पादं भिषगादिपादचतुष्टयम्। षोड़शकलं पादस्यैकैकगुणस्य कलात्वाभिप्रायेणोक्तम्। षोड़शगुणत्वेन षोड़शकलमिति। भेषजमिति भिषग्जितं भिषजो भाषन्ते वदन्ति इत्यनेन तन्त्रान्तरसम्मतमिति दर्शितम्। मुनेः। यदुक्तं पूर्व्वाध्याये खुड्डाकचतुष्पादे षोड़शगुणमिति कारणं षोड़शगुणं सिद्धौ पादचतुष्टयमिति वाक्ये षोड़शगुणमिति यत् तद्भेषजम्। तदेव षोड़शगुणं चतुष्पादं भेषजम्। किन्तु युक्तियुक्तमलमारोग्यायेति। युनक्ति इति युक्तिः प्रवृत्तिर्वैद्यादीनां पूर्व्वाध्याये प्रोक्ता। तया युक्तं प्रवर्त्तमानं षोड़शगुणं पादचतुष्टयमारोग्यायालं समर्थं भवतीति भगवानात्रेयो भाषते। इति पुनर्व्वसोः प्रतिज्ञा इत्यर्थः।

चक्रपाणिः—पूर्व्वाध्याये वैद्यादयो व्याधिप्रशमकारणमित्युक्तं, तदिहाक्षिप्य व्यवस्थाप्यत इत्यनन्तरं महाचतुष्पादोऽभिधीयते, महत्त्वञ्चास्य पूर्व्वाध्यायापेक्षया बहुग्रन्थेन पूर्व्वपक्षसिद्धान्तरूपबहुप्रमेयाभिधायकत्वेन च। षोड़शकलं षोड़शगुणं, कलाशब्दो गुणवचनः; भिषजो भाषन्त इति ब्रुवते। प्रकृतेऽर्थे शास्त्रान्तरसम्मतिं दर्शयति—युक्तियुक्तमिति। युनक्तीति युक्तिः प्रवृत्तिरुच्यते, युक्तियुक्तं प्रवृत्तिसमन्वितमित्यर्थः, प्रवृत्तिश्च वैद्यादीनां चिकित्सारूपा पूर्व्वाध्याये व्याकृता; अलं समर्थम्। इति भगवानात्रेयो ब्रूते इति शेषः।

नेति मैत्रेयः। किं कारणं? दृश्यन्ते ह्यातुराः केचिदुपकरणवन्तश्च परिचारकसम्पन्नाश्चात्मवन्तश्च कुशलैश्च भिषग्भिरनुष्ठिताः समुत्तिष्ठमानाः, तथायुक्ताश्चापरे म्रियमाणाः; तस्माद् भेषजमकिञ्चित्करं भवति। तद्यथा—श्वभ्रे सरसि च प्रसिक्त-

नेति मैत्रेय इति सत्प्रतिपक्षता। प्रतिविपरीतपक्षाश्रयो मैत्रेयः सत्प्रतिपक्षो विपरीतार्थस्थापकत्वात्। तत्र जिज्ञासा षोड़शगुणं चतुष्पादं भेषजं प्रवर्त्तमानमारोग्याय समर्थं न भवतीत्यत्र किं कारणमिति? तत्र हेतुमाह मैत्रेयः—दृश्यन्ते हीत्यादि। हि यस्मात् केचिदातुरा उपकरणवन्तश्च भेषजवन्तश्च परिचारकसम्पन्नाश्च आत्मवन्तश्च स्मृतिनिर्देशकारित्वादिगुणवन्तश्च कुशलैश्च श्रुते पर्य्यवदातत्वादिगुणवद्भिर्भिषग्भिरनुष्ठिताः चिकित्सितमुपक्रान्ताः सन्तः समुत्तिष्ठमाना रोगात् आरोग्यमापन्ना दृश्यन्ते। तथायुक्ताश्चापरे तेन प्रकारेण चतुश्चतुर्गुणवत्पादचतुष्टयेन चिकित्सितमुपक्रान्ताश्चापरे केचिदातुरा म्रियमाणा दृश्यन्ते। तस्माद् भेषजं षोड़शगुणं चतुष्पादं भवतु। किन्तु किञ्चित्करं न भवति किञ्चिदपि कर्त्तुं शीलवन्न भवति। आरोग्यायालमेव भवतीति न वाच्यमित्यर्थः। अत्रेदं हृदयं—विनापि भेषजमातुराणामारोग्यात् केषाञ्चित् केषाञ्चिन्मरणाच्च। षोड़शगुणं चतुष्पादं भेषजं नालमारोग्याय। दैवसंज्ञकन्तु कर्म्म भेषजं विनैवारोग्यायालमेवेति मैत्रेयस्य तात्पर्य्यम्।

तत्र दृष्टान्तद्वयमुदाहरति—तद्यथेत्यादि। यथा श्वभ्रे जलपात्रहीने गर्त्ते प्रसिक्तमल्पमुदकं न किञ्चित्करं भवति, तथा दैवसंज्ञकशुभकर्म्महीने आतुरे भेषजं न किञ्चित्करं भवति। भेषजं कुरु वा न कुरु शुभकर्म्महीनत्वात् म्रियेतैव। यथा च सरसि जलपूर्णे ह्रदे प्रसिक्तमल्पमुदकं न किञ्चित्करं भवति, तथा शुभ-

उक्तमाक्षिपति नेतीत्यादि। उपकरणं भेषजम्, अनुष्ठिताश्चिकित्सितमुपक्रान्ताः; तथायुक्ताः पूर्ववच्चिकित्सितमुपक्रान्ता इत्यर्थः; अकिञ्चित्करमिति भेषजे सत्यपि यदा आरोग्यं न भवति; तेन, यत्रापि सति भेषजे आरोग्यं भवति, तत्रापि भेषजव्यतिरिक्तं कर्म्मैव दैवसंज्ञकं कारणं, भेषजन्तु तदैवागतसन्निधानमकारणमेवेत्यर्थः। अमुमेवार्थं दृष्टान्तद्वयं दर्शयति तद्यथेत्यादि। श्वभ्रे गर्त्ते यथाल्पं जलमकिञ्चित्करमेव म्रियमाणेऽपि भेषजम्। यथा च सरसि अन्यत एव पूर्णे स्वल्पमुदकमकिञ्चित्करं भवत्येवमन्यत एवारोग्यहेतोः कर्म्मणो

मल्पमुदकं नद्यां स्यन्दमानायां पांशुधाने वा पांशुमुष्टिः प्रकीर्ण इति । तथा परे दृश्यन्तेऽनुपकरणाश्चापरिचारकाश्चानात्मवन्तश्च अकुशलैश्च भिषग्भिरनुष्ठिताः समुत्तिष्ठमानाः ; तथायुक्ता म्रियमाणाश्चापरे । अतश्च प्रतिकुर्व्वन् सिध्यति प्रतिकुर्व्वन्

दृष्टसंज्ञकर्म्मातिशयवत्त्वादातुरे भेषजं न किञ्चित्करं भवति । चिकित्सा क्रियतां वा न क्रियतां दैवातिशयवत्त्वेनारोग्यमाप्नुयादित्यर्थः । दृष्टान्तान्तरमुदाहरति शिष्यहितार्थं नद्यामित्यादि । यथा वा नद्यां स्यन्दमानायां बहुजलतया स्रोतस्वत्यां प्रकीर्णः प्रक्षिप्तः पांशुमुष्टिर्न किञ्चित्करो भवति, तथैवातुरे दुरदृष्टसमूहे षोड़शगुणं चतुष्पादं भेषजं प्रवर्त्तमानं नाल्पमारोग्यायेति । भेषजं कुरु वा न कुरु म्रियतेव स चातुरः दुरदृष्टातिशयात् । यथा वा पांशुधाने पांशुराशियुक्तस्थले प्रकीर्णः प्रक्षिप्तः पांशुमुष्टिर्न किञ्चित्करो भवति ; यथा वा अशुभादृष्टातिशयवत्त्वादातुरे भेषजं प्रवर्त्तमानं नाल्पमारोग्याय । भेषजं कुरु वा न कुरु दैवातिशयवत्त्वेनातुरो निर्व्याधिरेव भवति । केचिदिमं दृष्टान्तं संशोधनभेषजाभिप्रायेण व्याख्यान्ति. केचिदपतर्पणभेषजाभिप्रायेणेति ; तद्द्वयं न मनोरमम् ; सर्व्वभेषजस्याकिञ्चित्करत्वे दृष्टान्ताभावात् । भेषजस्यान्वयेनाकिञ्चित्करत्वं स्थापयित्वा व्यतिरेकेणापि स्थापयति—तथेत्यादि । तथाशब्दोऽत्र न दृष्टान्तवचनः किन्तु समुच्चयार्थत्वेन तथा परे अपरे चातुराः केचित् अनुपकरणा भेषजद्रव्यहीनाश्चापरिचारकाश्चानात्मवन्तश्च स्मृत्यादिगुणहीनाश्च भिषग्भिश्चाकुशलैरगुणवद्भिरनुष्ठिता उपक्रान्ताः समुत्तिष्ठमाना रोगादारोग्यमापन्ना दृश्यन्ते । तथायुक्ताश्च षोड़शगुणपादचतुष्टयहीनाश्चापरे केचित् म्रियमाणा दृश्यन्ते । अत्रापि दृष्टान्तद्वयं बोध्यम् ।

इत्थञ्चान्वयव्यतिरेकाभ्यां निगमनं व्यनक्ति—अतश्चेत्यादि । अस्मात् दर्शितकारणात् प्रतिकुर्व्वन् चतुष्पादेन गुणवता भेषजेन प्रतिकुर्व्वन्नातुरः

रोगप्रशमने जायमाने भेषजमकिञ्चित्करं भवतीति सरोदृष्टान्तेन दर्शयति, एवं नद्यां स्यन्दमानायां वहमानायां पांशुमुष्टिरिति निदर्शनं भवत्, पांशुधाने पांशुराशौ पांशुमुष्टिरिति सरोदृष्टान्तवद् व्याख्येयम् । अत्र च तोयदृष्टान्तः संशोधनभेषजाभिप्रायेण, पांशुदृष्टान्तस्तु संशमनभेषजाभिप्रायेण ; यदि वा, जलं सन्तर्पणभेषजाभिप्रायेण, पांशुमुष्टिरपतर्पणाभिप्रायेण बोद्धव्या । भेषजान्वयव्यभिचारं दर्शयित्वा तद्व्यतिरेकव्यभिचारं दर्शयति—तथाऽपर इति ।

म्रियते, अप्रतिकुर्व्वन् सिध्यति अप्रतिकुर्व्वन् म्रियते, ततश्चिन्त्यते भेषजमभेषजेनाविशिष्टमिति।

मैत्रेय ! मिथ्या चिन्त्यत इत्यात्रेयः। किं कारणं ? ये ह्यातुराः षोड़शगुणसमुदितेनानेन भेषजेनोपपद्यमाना म्रियन्त इत्युक्तं तत् अनुपपन्नम्। न हि भेषजसाध्यानां व्याधीनां भेषजमकारणं भवति। ये पुनरातुराः केवलाद् भेषजादृते समुत्-

सिध्यति नीरोगो भवति, भेषजेन प्रतिकुर्व्वन्नातुरो म्रियते च। इति भेषजस्यान्वयेन व्यभिचारस्य निगमनम्। व्यतिरेकेण व्यभिचारस्यानिगमनमाह— अप्रतिकुर्व्वन्नित्यादि। अत्रापि अतश्चेत्यस्यानुवृत्तिः। अतश्चाप्रतिकुर्व्वन आतुरो भेषजैरनुपक्रान्तः स्वयं सिध्यति भेषजैरप्रतिकुर्व्वन्नातुरो म्रियते च। अत्रातुरस्य प्रतिक्रियायां कर्त्तृत्वप्रयोगो न वैद्यस्याप्राधान्येन रोगोपशमकतया, किन्तु स्वस्यारोग्याय प्रतिकारे वैद्यादीनां वृतिकरणे प्राधान्यात्। अथ मैत्रेयमतमुपसंहरति—तत इत्यादि। तस्मात् प्रतिकारेण सिद्धिमरणान्यतरस्मात् अप्रतिकारेण सिद्धिमरणान्यतरस्मात् भेषजमभेषजेनाविशिष्टं विशेषरहितं तुल्यमिति यावत् चिन्त्यते मयेति शेषः। इति मैत्रेय आहेति शेषः।

मैत्रेयप्रतिष्ठापितमिदं दूषयितुमाह—मिथ्या चिन्त्यते। अथान्मैत्रेयेण इत्यात्रेय आह। अथात्र प्रश्नः। मैत्रेयेण उक्तरूपं यन्मिथ्या चिन्त्यते तत्र किं कारणमिति जिज्ञासा। मैत्रेयस्य निरुक्तचिन्ताया मिथ्यात्वे हेतुमाह ये ह्यातुरा इत्यादि। हि यस्मात् ये आतुरा षोड़शगुणसमुदितेनानेन भेषजेनोपपद्यमाना म्रियन्ते इत्युक्तं तन्नोपपद्यते। कस्मात्? इत्यत आह—न हीत्यादि। हि यस्मात् भेषजसाध्यानां व्याधीनां भेषजमकारणं न भवति; ये तु म्रियन्ते भेषजेनोपपन्ना अपि ते खल्वसाध्यव्याधिमत्त्वान्नोत्तिष्ठन्ते इत्यर्थः।

द्वितीयस्योत्तरमाह—ये पुनरातुराः केवलात् सम्पूर्णात् भेषजादृते समुत्तिष्ठन्ते नीरोगा भवन्ति, न तेषामातुराणां सम्पूर्णभेषजोपपादनार्थं तत्तद्व्याधेः

प्रतिकुर्व्वन्नित्यन्तर्भावितण्यर्थत्वात् प्रतिकारयन्नित्यर्थः ; यदि वा आतुर एव वैद्यादीनुपादायात्मानं प्रतिकुर्व्वन्निति मन्तव्यम्।

एतेन दैवकर्म्मवशादेव जीवति म्रियते वा रोगी भवत्यरोगो वा, न दृष्टभेषजमत्र किञ्चित्करमिति पूर्व्वपक्षार्थं सिद्धान्तयति—मिथ्येति।—केवलात् सम्पूर्णात्, न

तिष्ठन्ते, न तेषां सम्पूर्णभेषजोपपादनाय समुत्थानविशेषोऽस्ति। यथा हि पतितं पुरुषं समर्थमुत्थानायोत्थापयन् पुरुषो बलमस्योपादध्यात्, स क्षिप्रतरमपरिक्लिष्ट एवोत्तिष्ठेत् तद्वत् सम्पूर्णभेषजोपलम्भादातुराः। ये चातुराः केवलाद् भेषजादपि म्रियन्ते न च सर्व्व एव ते भेषजोपपन्नाः समुत्तिष्ठेरन्।

न हि सर्व्वे व्याधयो भवन्त्युपायसाध्याः। न चोपाय-

समुत्थानविशेषो निदानविशेषोऽस्ति। अस्त्येव किञ्चित् भेषजोपपत्तिप्रकर्षापकर्षणोपशमार्हनिदानविशेष एव। यथा हि यस्मात् पतितं पुरुषमुत्थानाय समर्थमुत्थापयन् पुरुषोऽन्योऽस्य पतितस्य पुरुषस्य बलमादध्यात्, तत पुरुषान्तरेणोपाहितबलः पतितः समुत्थानायाधिकसमर्थः सन् पुरुषः क्षिप्रतरं अपरिक्लिष्ट एवाक्लेशादेवोत्तिष्ठेत तद्वत् आतुराः सम्पूर्णभेषजादृते समुत्थानाय समर्था एव। तेऽपि सम्पूर्णभेषजोपलम्भात् क्षिप्रतरमक्लेशादुत्तिष्ठेरन्। अत्रायं भावः यद्यपि सर्व्वत्र दृष्टमेवेष्टसाधने कारणं भवति तथापि तत्र यदि दृष्टं किञ्चिदपरं बलमादध्यात् तदा दृष्टादृष्टाभयबलात् क्षिप्रतरमिष्टसिद्धिर्भवतीति। तथापरे दृश्यन्तेऽनुपकरणाद्दन्त्यादिना व्यतिरेकेण व्यभिचारप्रदर्शनस्योत्तरम्।

दृश्यन्ते ह्यातुरा इत्यादिना सम्पूर्णभेषजमयुक्ता म्रियमाणा इति दूषणस्योत्तरमाह ये चातुरा इत्यादि। केवलात् भेषजादपि षोडशगुणसमुदितेनानेन भेषजेनोपपद्यमाना अपि ये चातुरा म्रियन्ते न च सर्व्वे एव ते आतुरा षोडशगुणसमुदितेन भेषजेनोपपन्नाः समुत्तिष्ठेरन्।

ननु सम्पूर्णभेषजोपपन्नाः सन्तः सर्व्वे कस्मान्न समुत्तिष्ठन्ते इत्याह न हीत्यादि। सर्व्वे व्याधयो न भवन्त्युपायसाध्याः, असाध्याश्च व्याधयः सन्ति, येषां साधने तूपाया न सन्ति यस्मात् तस्मात् सर्व्वे सम्पूर्णभेषजोपपन्ना अपि नोत्तिष्ठन्ते। न त्वेवं तत् कथमुपायः क्रियते साध्यानामित्यत आह न

नास्ति, उभयतकारकरणादस्ति समुत्थानविशेष इत्यर्थः। तद्वदिति क्षिप्रतरमक्लिष्टा एवोत्तिष्ठन्त इत्यर्थः। एवं मन्यते—यद्यप्यदृष्टमेवोत्थाने कारणमिति, तथापि, यदि दृष्टमपि तत्रानुबलं भवति, तदा दृष्टादृष्टोभयबलात् शीघ्रमेवारोग्यं भवति। सर्व्व एव साध्यव्याधयोऽसाध्य-

साध्यानां व्याधीनामनुपायेन सिद्धिरस्ति। न चासाध्यानां व्याधीनां भेषजसमुदायोऽस्ति। न ह्यलं ज्ञानवान् भिषङ् मुमूर्षु मातुरमुत्थापयितुम्।

परीक्ष्यकारिणो हि कुशला भवन्ति। यथा हि योगज्ञोऽभ्यासनित्यः इष्वासो धनुरादायेषुमस्यन् नातिविप्रकृष्टे

चेत्यादि। उपायसाध्यानां व्याधीनामनुपायेन उपायं विना न च सिद्धिरस्ति यस्मात् तस्मादुपायाः क्रियन्ते।

नन्वेवं चेत् नहि उपायेन न कस्मात् सर्व्वे साध्या वाप्यसाध्या वा व्याधयः सिध्यन्ति इत्याह न चासाध्येत्यादि। असाध्यानां व्याधीनां भेषजसमुदायो न चास्ति यस्मात् तस्मादसाध्यव्याध्यातुराः सम्पूर्णभेषजोपपन्ना नोत्तिष्ठन्ते। ननु कस्मादसाध्यानां व्याधीनां भेषजसमुदायो नास्ति, दृश्यते हि गुणवान् वैद्योऽस्ति चास्ति च द्रव्यं गुणवत् गुणवांश्च परिचारकः सत्त्वगुणश्चातुरः? इति। तत आह न ह्यलमिति। ज्ञानवान् सर्व्वगुणवानपि भिषक् मुमूर्षुमसाध्य व्याधितमसाध्यव्याधिभ्य उत्थापयितुमलं समर्थो न भवति यस्मात् तस्मात् असाध्यव्याधीनां भेषजसमुदायोऽन्यत्रास्त्यपि नास्त्येव।

ननु तत् कथं ज्ञानवान् भवति भिषगिति? अत आह—परीक्ष्येत्यादि। परीक्ष्य व्याधीन् साध्यासाध्यत्वादिरूपेण साध्यान् व्याधींश्चिकित्सयारब्धुमसाध्यान् हातुं शीलं येषां ते परीक्ष्यकारिणो वैद्याः हि यस्मात् कुशलाः सिद्धिभाजो भवन्ति। तस्मान्मुमूर्षु व्याधितानामुत्थापनसामर्थ्याभावेऽपि भिषक् ज्ञानवान् भवति। असाध्यव्याध्यसाधने अज्ञानादप्राप्तत्ववारणाय दृष्टान्तमाह यथा हीत्यादि। हि यस्मात् इष्वासो धनुष्मान् योगज्ञः

व्याधयश्च, सम्पूर्णभेषजोपपन्नावपि सत्यामसाध्यव्याधयो नोत्तिष्ठन्ते, साध्यव्याधय उत्तिष्ठन्त इति भावः। यतोऽप्यसाध्यव्याधिं प्रति सम्पूर्णभेषजोपपत्तिरेव नास्ति, यदुक्तं,—"न च असाध्यानां व्याधीनां भेषजसमुदायोऽयमस्ति, न ह्यलं ज्ञानवान् भिषङ्मुमूर्षु मातुरमुत्थापयितुम् इति। तथापीह किञ्चिदसम्पूर्णत्वेऽपि सम्पूर्णभेषजोपपन्ना इति ये तु साध्यव्याधयस्ते सत्यामेव भेषजोपपत्तौ जीवन्तीति, असत्यान्तु भेषजसम्पत्तौ बलवज्जीवनकर्म्माभावे म्रियन्त एवेति दर्शयन्नाह—न चोपायेति। उपायेनैव इत्यर्थेन साध्या उपायसाध्या; इदमत्राकूतं—यद् द्विविधं कर्म्म बलवदबलवच्च, तत्र बलवन्नियतविपाककालं,—यथेदं कर्म्मास्मिन्नेव काले मारयति; अबलवच्च मारकं कर्म्म मारयत्येव कालानियमेन,—यदा दृष्टसामर्थ्यमनुगुणामपथ्यसेवाकृपाम्

महति काये नापराधवान् भवति सम्पादयति चेष्टकार्य्यम्, तथा भिषक् स्वगुणसम्पन्न उपकरणवान् वीक्ष्य कर्म्मारभमाणः साध्यरोगमनपराधः सम्पादयत्येवारोग्येण। तस्मान्न भेषजमभेषजेनाविशिष्टं भवति ॥ २ ॥

अभ्यासनित्यः सततं लक्ष्यवेधकारी धनुरादाय धृत्वा इषुं वाणमप्यस्यन् क्षिपन् नातिविप्रकृष्टे अनतिदूरे महति काये नातिसूक्ष्मकायवस्तुनि नापराधवान् लक्ष्यवेधासिद्धिभाक् न भवति, सम्पादयति च इष्टकार्यं लक्ष्यवेधरूपमिति। तथा भिषक् स्वगुणसम्पन्न उपकरणवान् भेषजद्रव्यवान् वीक्ष्य साध्यासाध्यत्वादिरूपेण परीक्ष्य कर्म्म चिकित्सितमारभमाणः साध्यरोगमनपराधः सिद्धिभाक् सन्नारोग्येण सम्पादयत्येव। निगमयति तस्मात् इत्यादि। तस्मात् सम्पूर्णभेषजं विनोत्थानसमर्थस्यातस्य भेषजेन बलोपाधानात् सम्पूर्णभेषजेनापक्रान्तस्य मरणनिवारणोपायभेषजसमुदायाभावाच्च न भेषजमभेषजेनाविशिष्टं तुल्यं भवतीति ॥ २ ॥

औषधाभावरूपाच्च प्राप्नोति तदा मारयति यदा तु न प्राप्नोति तदा न मारयति, यदुक्तं जनपदोद्ध्वंसनीये "कर्म्म किञ्चित् क्वचित् काले विपाकनियतं महत्। किञ्चित्त्वकालनियतं प्रत्ययैः प्रतिबोध्यते ॥" अस्य स्वार्थं प्रपञ्चेन तत्रैव दर्शयिष्यामः। न च वाच्यम् अदृष्टमेव सर्व्वत्र कारणं, तच्च नियतकालविपाकमेव, यदुच्यते "नाकाले म्रियते कश्चिन्नाकाले म्रियते तथा। जगत् कालवशं सर्व्वं कालः सर्व्वत्र कारणम् ॥" इति; यतः, यदिहादृष्टं तदेव दृष्टयागादिप्रत्ययधर्म्मादिजन्यं किञ्चित्, यद् दृष्टेनानुत्पन्नं, तत्रादृष्टकल्पना प्रामाणिकी; यत् तु दाहादि दृष्टेनैवाग्निसम्बन्धेनोपपद्यते, तत्र का कथा दृष्टस्य दृष्टकार्य्यान्यथानुपपत्तिपरिकल्पनीयस्य ? तेन, ये इमे दुर्ब्बलेन कर्म्मणा दृष्टमन्दवदपथ्यसेवाजनितदोषबलादारब्धा व्याधयस्ते बलवता चतुष्पादसम्पन्नेन भेषजेन दोषक्षयकारिणा परं साध्यास्तदभावे तु दुर्ब्बलेनापि कर्म्मणा दृष्टदोषबलादारब्धा व्याधयो न निवर्त्तन्ते इति; यदुक्तं "दैवं पुरुषकारेण दुर्ब्बलं ह्युपहन्यते। दैवेन चेतरत् कर्म्म विशिष्टेनोपहन्यते ॥" इति। अनुपायेनाभेषजेन; अयं भेषजसमुदायः, समुदायः सर्व्वगुणसम्पन्न इत्यर्थः। असाध्ये व्याधौ चिकित्सां कुर्व्वन् वैद्य एव यथोक्तगुणो न भवतीत्यर्थः। न ह्यज्ञो न समर्थः; यद्यसाध्यतां जानाति तदा न प्रवर्त्तत एव, अथ न जानाति, तदा ज्ञानवानेव न भवतीति भावः। चतुष्पादसम्पदावश्यं व्याधिप्रशमो भवतीति दृष्टान्तेनाह यथा हीत्यादि। इष्वासो धानुष्कः, अस्यन् क्षिपन्, नातिविप्रकृष्टे सन्निहिते, नापराधवान् इति लक्ष्यभ्रंशरहितः, इष्टं कार्य्यं लक्ष्यवेधलक्षणम् ॥ ।२ ॥

इदञ्चेदञ्च नः प्रत्यक्षं यदनातुरेण भेषजेनातुरं चिकित्सामः। क्षाममक्षामेण कृशञ्च दुर्ब्बलमाप्याययामः। स्थूलं मेदस्विनमपतर्पयामः। शीतेनोष्णाभिभूतमुपचरामः। शीताभिभूतमुष्णेन। न्यूनान् धातून् पूरयामः। व्यतिरिक्तान् ह्रासयामः। व्याधीन् मूलविपर्य्ययेणोपचरन्तः सम्यक् प्रकृतौ स्थापयामः। तेषां नस्तथा कुर्व्वतामयं भेषजसमुदायः कान्ततमो भवति॥ ३॥

गङ्गाधरः—भेषजस्य रोगप्रशमकत्वे उपपत्त्यन्तरं दर्शयति इदञ्चेत्यादि। नोऽस्माकं प्रत्यक्षमिति। प्रत्यक्षप्रमाणस्याप्रतिहतत्वादुक्तम्। अनातुरेण आतुर्य्यविपरीतेन भेषजेन चिकित्साम इति यदुक्तं तद्विवृणोति क्षाममित्यादि। क्षामं क्षीणं कृशं दुर्ब्बलञ्चाक्षामेण पोषणेनाप्याययामः सन्तर्पयामः। स्थूलं मेदस्विनमपतर्पयामः, अभोजनाद्यपतर्पणम्। उष्णाभिभूतं शीतेनोपचरामः, शीताभिभूतमुष्णेनोपचराम इत्यनेन सम्बन्धः। न्यूनान् धातून् पूरयामः। व्यतिरिक्तान् वृद्धान् ह्रासयामः। व्याधीन् मूलविपर्य्ययेण कारणविपरीतेन गुणरसवीर्य्यविपाकप्रभावेण उपचरन्तो वयं प्रकृतौ सम्यक् स्थापयामः। तेन विपरीतार्थकारित्वापि ज्ञाप्यामः। तेषां क्षामादीनां तथा कुर्व्वतां नोऽस्माकमयं भेषजसमुदायः कान्ततमो भवति। विना हि भेषजसमुदायं केवलं शुभादृष्टमातुराणां व्याधिभ्य उत्थापनाय कान्तमपि न कान्ततमं भवति। हिमान्याद्यभिभूतानां पुरुषाणामग्न्यातपगुरुप्रावरणादिकं शीतविपरीतमन्तरेण केवलातिशुभादृष्टेन शीतादिनिवारणाभावात्॥ ३॥

चक्रपाणिः—भेषजस्य रोगप्रशमकर्त्तृत्वे उपपत्त्यन्तरमाह—इदञ्चेत्यादि। अनातुरेणेत्यातुरगुणविपरीतेन; आतुरमनातुरेण चिकित्साम इति यदुक्तं, तस्यैव विवरणं—'क्षाममक्षामेण' इत्यादि। क्षामो निर्ब्बलः, कृशश्च दुर्ब्बलमाप्याययाम इति सन्तर्पयामः, व्यतिरिक्तानत्यतिरिक्तान् इत्यर्थः; मूलविपर्य्ययेणेति कारणविपर्य्ययेण, तच्च प्रभावादिति बोद्धव्यं, तेन विषविकारस्य विषेणोपचरणम्। एतत् प्रत्यक्षज्ञानेनोपगृहीतं भवति, कान्ततमो विकारप्रशमकर्त्तृत्वेनाभीष्टतमः, अन्येऽपि यथोक्तकर्म्मोपाया: कान्ताः कान्ततराश्च, अयन्तु भेषजसमुदायः सर्व्वोपक्रमकारोगहरत्वेन कान्ततमः॥ ३॥

भवन्ति चात्र ।

साध्यासाध्यविभागज्ञो ज्ञानपूर्व्वं चिकित्सकः ।
काले चारभते कर्म्म यत् तत् साधयति ध्रुवम् ॥ ४ ॥
स्वार्थ* विद्यायशोहानिमुपक्रोशमसंग्रहम् ।
प्राप्नुयान्नियतं वैद्यो योऽसाध्यं समुपाचरेत् ॥ ५ ॥
सुखसाध्यं मतं साध्यं कृच्छ्रसाध्यमथापि च ।
द्विविधञ्चाप्यसाध्यं स्याद् याप्यं यदनुपक्रमम् ॥ ६ ॥

गङ्गाधरः—अत्रोक्तादधिकवचनमस्तीति तदुक्तुमाह—भवन्ति चात्रेति । साध्येत्यादि । अधिकारात् साध्यासाध्यत्वविभागज्ञो व्याधीनाम् । ज्ञानपूर्व्वमिति व्याधीनां साध्यत्वासाध्यत्वादिज्ञानानन्तरं तदुपयोक्तव्यभेषजादिज्ञानानन्तरञ्च । काले आमपक्वादिकालविशेषे यत् कर्म्म योग्यं तत्र यत् कर्म्म चिकित्सक आरभते तत् कर्म्म ध्रुवं तं व्याधिं साधयति । असाध्यसाधनयोग्यं हि कर्म्म नास्त्येवेत्यसाध्ये कर्म्मारब्धं न साधयतीति न व्यभिचारः ॥ ४ ॥

गङ्गाधरः—असाध्यव्याध्युपक्रमे वैद्यानां दोषं दर्शयति—स्वार्थेत्यादि । स्वार्थो धनलाभादिकं स्वप्रयोजनम्, विद्या विद्वत्त्वम्, यशः कीर्त्तिः, एषां या हानिस्ताम् । उपक्रोशं जनापवादम्, असंग्रहं चिकित्सार्थं लोकैरग्राह्यत्वम् । इत्थञ्च साध्ये व्याधौ प्रवृत्तिर्वैद्यानामर्थादिलाभानुपक्रोशोपसंग्रहकरी भवतीत्युक्तं भवति ॥ ५ ॥

गङ्गाधरः—तत्र साध्यत्वासाध्यत्वज्ञानार्थमुपदिशति—सुखसाध्यमित्यादि । साध्यं द्विविधम्—एकञ्च सुखसाध्यमथापि च द्वितीयञ्च कृच्छ्रसाध्यं मतम् । असाध्यमपि द्विविधम्, चकाराद्द्विविधमित्यस्योभयत्रान्वयः । यदेकं याप्यं स्यात् चकारादपरमनुपक्रमं प्रत्याख्येयमित्यर्थः । भेषजेनात्यल्प-

चक्रपाणिः—ज्ञानपूर्व्वमिति भेषजादिज्ञानपूर्व्वं, यत् कर्म्मारभते तत्कर्म्म चिकित्सितरूपं, साधयति साध्यमिति शेषः । असाध्यव्याधौ न प्रवर्त्तितव्यमिति शिक्षयति—अर्थेत्यादि ।—अर्थोऽर्थलाभः, हानिः क्षतिः, उपक्रोशो जनापवादः, असंग्रहश्चिकित्सार्थमनुपादानं, यदि वा, असद्‌ग्रह इति पाठः, तदा चासद्‌ग्रहो राजदण्डेनासत्पुरुषैश्चाण्डालादिभिर्ग्रहणम् ॥ ४।५ ॥

चक्रपाणिः—साध्ये प्रवृत्तिरुक्ता, असाध्ये निवृत्तिः, तेन साध्यासाध्ययोर्भेदकथनपूर्व्वकं लक्षणं वक्तुमाह—सुखसाध्यमित्यादि ।—अकिञ्चित्करत्वेनाऽविद्यमान उपक्रमो यस्य तदनुपक्रमं,

* "स्वार्थ" इत्यत्र "अर्थ" इति चक्रपाणिसम्मतः पाठः ।

साध्यानां त्रिविधश्चाल्पमध्यमोत्कृष्टतां प्रति।
विकल्पो न त्वसाध्यानां नियतानां विकल्पना ॥ ७ ॥
हेतवः पूर्व्वरूपाणि रूपाण्यल्पानि यस्य वै।
न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत् ॥

कालेनाल्पप्रयत्नेनाशु किञ्चित्कार्य्यत्वं प्रशाम्यत्वं वा सुखसाध्यत्वम्। बहुकालेन बहुप्रयत्नेन पुनः कृच्छ्रसाध्यत्वम्। भेषजेन प्रशाम्यत्वं साध्यत्वम्। भेषजेनानुपशाम्यत्वं न च वर्द्धमानत्वं याप्यत्वम्। भेषजेनाकिञ्चित्कारत्वमनुपक्रमत्वम्। भेषजेनानुपशाम्यत्वमसाध्यत्वमिति ॥ ६ ॥

गङ्गाधरः—तत्र साध्यानां त्रिविधविकल्पमाह साध्यानामित्यादि। साध्यानां व्याधीनामल्पमध्यमोत्कृष्टतां प्रति त्रिविधश्च विकल्पः कल्पनास्ति. न त्वसाध्यानां नियतानामनुपक्रमाणां कल्पना वर्त्तते। एतेनेदं ज्ञापितं— याप्यानां याप्यत्वेनाल्पमध्यमोत्कृष्टोपायैस्त्रिविधा कल्पनास्ति। साध्यानां व्याधीनामल्पसाध्यत्वं मध्यमसाध्यत्वमुत्कृष्टसाध्यत्वमिति त्रिविधं साध्यस्य कल्पनम्। यदा साध्यानामल्पसाध्यत्वं बहूपायसाध्यत्वं मध्यसाध्यत्वं नात्यल्प-नात्यधिकोपायसाध्यत्वमुत्कृष्टसाध्यत्वं स्वल्पोपायसाध्यत्वमिति। एतत् त्रिविधोपायसाध्यत्वभेदेन सुखसाध्यं त्रिविधम्, कृच्छ्रसाध्यञ्च त्रिविधम्। याप्यश्चापि तथाभेदात् त्रिविधमिति ज्ञापितम्। असाध्यानां नियतानां सद्यःप्राणहरत्वकालान्तरप्राणहरणविकल्पकरत्वादिविकल्पने प्रयोजनाभावेन अनियमाद्यल्पाद्युपायैरुपशाम्यत्वाभावात् कल्पनाभावः ॥ ७ ॥

गङ्गाधरः—सुखसाध्यलक्षणं प्राथमिकत्वादाह—हेतव इत्यादि। हेतवोऽल्पाः। अल्पहेतूपसेवनेन दोषकोपाद्यस्य व्याधेरुत्पत्तिः। ननु यस्याल्पा हेतवस्तस्याल्पा-

चक्रपाणिः—याप्यत्वञ्चानुपक्रमं न भवति यापनाकर्तृत्वेन किञ्चित्करत्वात्। तत्रोपक्रमस्य स्वल्पमध्यमोत्कृष्टता-ऽल्पमध्यमोत्कृष्टयोगादित्यर्थः; तेनाल्पसाध्यमल्पोपायसाध्यं, मध्यसाध्यं मध्योपायसाध्यम्, उत्कृष्टसाध्यमुत्कृष्टोपायसाध्यमिति भेदत्रयं साध्यानां भवति। असाध्यानान्तु नियतानामिति याप्यव्यतिक्रान्तानामनुपक्रमाणां विकल्पना विकल्पः, नास्तीत्येवम्भूताऽल्पाऽसाध्यादिरूपा नास्ति, प्राणहरवैकल्यकरसद्यःप्राणहरकालान्तरप्राणहरत्वादिकल्पना त्वसाध्यानामस्त्येव, यदसाध्यं तदल्पेन च मध्येन चोत्कृष्टेन चोपायेनासाध्यमेव, याप्यरूपासाध्यानां स्वल्पोपाययाप्यत्वादिभेदो-ऽस्त्येव ॥ ६।७ ॥

चक्रपाणिः—न दोषः प्रकृतिर्भवेदिति व्याध्यारम्भको यो दोषः स तत्प्रकृत्यानुकूलो न

न च कालगुणस्तुल्यो न देशो दुरुपक्रमः।
गतिरेका नवत्वञ्च रोगस्योपद्रवो न च॥
दोषश्चैकः समुत्पत्तौ देहः सर्व्वौषधक्षमः।
चतुष्पादोपपत्तिश्च सुखसाध्यस्य लक्षणम्॥ ८॥

स्येव भवन्ति पूर्व्वरूपाणि, कथं पुनरुच्यते? उच्यते—स्वकारणकुपिता दोषाः सर्व्वेषामेव रोगाणां हेतवो भवन्ति। ते च यदा पौर्व्वदैहिककर्म्मविशेषवशाद् विलक्षणां सामग्रीं तल्लक्षणां सन्निपातमापादयन्ति तदा तत्तद्व्याधिविशेषं ज्वरादिकमुत्पादयन्ति। तदानीं दूष्यस्थानादिसहकारिकारणविशेषससर्गा-संसर्गाभ्यामल्पहेतुकुपिता अपि बहुलक्षणं बहुहेतुकुपिता अल्पलक्षणं व्याधिं जनयन्तीति। अन्यत्राप्युक्तम्—“एकं द्वौ त्रीन् बहून् वापि देहे धात्वादियोगतः। दर्शयन्ति विकारांस्तु कुपिताः पवनादयः॥” इति। किञ्च विकृतिविषमसम-वायेन बहुहेतुकोऽपि व्याधिरल्पलक्षणोऽल्पहेतुकोऽपि बहुरूपो भवतीति तत्त्वम्। तेनैतदेकमेव लक्षणं सुखसाध्यस्य न तु प्रत्येकम्। तथा सति यस्यैकस्य व्याधेर्हेतवः स्वारम्भकदोषदूष्यदूषणहेतवः कट्वादयः स्वहेतवश्च वस्तु-विशेषा दोषा दूष्याश्चाल्पा भवन्ति, पूर्व्वरूपाणि चाल्पानि, रूपाण्यपि चाल्पानि भवन्ति; तस्य च व्याधेस्तुल्यगुणो दूष्यो न भवेत्। तस्य च दोष आरम्भको वातादिर्न प्रकृतिर्भवेत्। गर्भादितो मानवानां विषमवातादिदोषानु-शायिता प्रकृतिर्भवेत्। न वा समपित्तानिलकफानुशायिता प्रकृतिर्भवेत्। स च व्याधिः कालगुणैः शीतोष्णादिभिस्तुल्यो न स्यात्। व्याधिशब्देन चात्र व्याध्यारम्भकदोषः प्रातरादिकालगुणेन तुल्यः सर्व्वत्रैव कफादिः स्यात्। कालो ह्यत्र ऋतुरूपः प्रातरादिरूपश्च। तस्यैव च व्याधेर्देश उत्पत्ति-देशोऽनूपादिरूपो व्याधितपुरुषीयदेहावयवश्च, स च दुरुपक्रमो दुःखेन क्रिया-रम्भस्थाने जातो न स्यात्। तस्यैव रोगस्य गतिरेका स्यादेकमार्गः स्यात्। त्रिसूत्रपणीये मार्गो वाच्यः। नवत्वञ्च तस्य रोगस्याल्पकालोपपत्तिः स्यात्। न तु कालविप्रकृष्टत्वं स्यात्। तेन पुराणसंज्ञकत्वेऽपि ज्वरादीनां सुखसाध्यत्वं

मवेदित्यर्थः; देशो भूमिरातुरश्च, देशो दुरुपक्रमो यथा, वातव्याधौ तुल्यगुणो मरुः, तथा श्लेष्म-व्याधावानूपः; देहश्च दुरुपक्रमो यथा, सर्व्वव्याधीनामेव मर्म्मलक्षणो देशः, तथा वातव्याधेः पक्वाशय इत्यादि। गतिरेका एको मार्ग इत्यर्थः, मार्गास्त्रयस्तु तिस्रैषणीये वक्तव्याः—“शाखा मर्म्मास्थिसन्धयः कोष्ठश्च” इति। एतच्चोत्सर्गन्यायेनोक्तं, तेन, कश्चिद्व्याधिप्रभावादन्यथापि

निमित्तपूर्व्वरूपाणां रूपाणां मध्यमे बले।
कालप्रकृतिदूष्याणां सामान्येऽन्यतमस्य च॥
गर्भिणीवृद्धबालानां नात्युपद्रवपीड़ितम्।
शस्त्रक्षाराग्निकृत्यानामनवं कृच्छ्रदेहजम्॥

न व्याहन्यते। तस्य च रोगस्योपद्रवो न स्यात्। तस्यैव च रोगस्योत्पत्तौ दोषश्चारम्भक एक एव वातायन्यतमः स्यात्। तेनानन्तरमन्येनानुबन्धे तु नासुखसाध्यत्वम्। तस्य च रोगस्याधिकरणं देहः सर्व्वौषधक्षमो वमनादि-निखिलौषधप्रयोगसहः स्यात्। तस्य च रोगस्य चतुष्पादसम्पत्तिः स्यात्। तदा तस्य सुखसाध्यस्य लक्षणं बोध्यम्। यथा वातप्रकृतिके समवातादि-प्रकृतिके वा सत्कर्म्मणि यति पुरुषे स्वल्पहेतुकुपितपित्तदोषरसदूष्यजो व्याधिराग्नेयः शीतकालानुपदेशामर्म्माश्रवयवेषु जातः कोष्ठगतोऽल्पदिनसमुत्थो निरुपद्रवः कालान्तरे कफानुबन्धो वा सर्व्वौषधक्षमे चतुष्पादसम्पदाल्प पूर्व्वरूपोऽल्परूपश्च सुखसाध्यः स्यात्। एषामन्यतमकादिविरहे पुन-रुत्तरोत्तरं नात्युपद्रवपीड़ितं तदा मध्यमोत्कृष्टोपायसाध्यत्वं बोध्यम्। एत-च्चोत्सर्गलक्षणं ज्ञेयम्। तेन व्याधिविशेषस्य लक्षणविशेषेऽपि सुखसाध्यत्वं न विरुध्यते। यदुक्तं "ज्वरे तुल्यर्त्तुदोषत्वं प्रमेहे तुल्यदूष्यता। रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्॥" इति॥ ८॥

गङ्गाधरः—कृच्छ्रसाध्यलक्षणमुपदिशति निमित्तेत्यादि। मध्यमे बले इति बलवत्त्वं निमित्तादीनां संख्याधिक्येन वीर्य्यवेगयोराधिक्येन च भवति। तेन यस्य व्याधेर्द्दोषकोपकारणानि नात्यल्पानि नात्यधिकानि न चातिवीर्य्यवन्ति नात्यल्पवीर्य्यवन्ति, पूर्व्वरूपाणि च रूपाणि च तस्यैव नाधिकसंख्यानि नात्यल्प-संख्यानि नातिवेगवन्ति नात्यल्पवेगवन्ति. कालप्रकृतिदूष्याणामन्यतमस्य सामान्ये तेषां व्याधिना सह समानत्वे व्याधीनां दोषात्मकत्वात् तद्व्याध्या-रम्भकदोषेण सहेत्यर्थः। तेषां त्रयाणां सामान्ये तु सुखसाध्यत्वम्। तं व्याधिं नात्युपद्रवपीड़ितं कृच्छ्रसाध्यं विद्यात्। लक्षणान्तरमाह—गर्भिणीत्यादि।

सुखसाध्यत्वादिलक्षणाभिधानेन विरोधो न वक्तव्यः। यदुक्तं—"ज्वरे तुल्यर्त्तुदोषत्वं प्रमेहे तुल्यदूष्यता। रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्॥" इति॥ ८॥

चक्रपाणिः—कालप्रकृतिदूष्याणामिति निर्द्धारणे षष्ठी. सामान्य इति दोषेण समम्। गुर्व्विणीवृद्धबालानां सर्व्व एव व्याधिः कृच्छ्रसाध्यो बोद्धव्यः। नात्युपद्रवपीड़ितमिति पूर्व्वेण

विद्यादेकपथं रोगं नातिपूर्णचतुष्पदम् ।
द्विपथं नातिकालं वा कृच्छ्रसाध्यं द्विदोषजम् ॥ ९ ॥
शेषत्वादायुषो याप्यमसाध्यं पथ्यसेवया ।
लब्धाल्पसुखमल्पेन हेतुनाशुप्रवर्त्तकम् ॥

गर्भिणीवृद्धबालानां सर्व्वमेव व्याधिमसाध्येतरं कृच्छ्रसाध्यं विद्यात् । एव राज्ञो राजमात्रस्य राजसेवकस्य दरिद्रस्य च सर्व्वमेव सुखसाध्यं व्याधिं कृच्छ्रसाध्यं विद्यात्—सुश्रुतवचनात् । लक्षणान्तरमाह—शस्त्रक्षाराग्निकृत्यानां प्रायेण शस्त्रकृत्यभाजां कृतक्षारकृत्यानां कृताग्निकृत्यानां मध्ये यो व्याधिर्जायते तं कृच्छ्रसाध्यं विद्यात् । अनवं कालप्रकर्षात् पुराणमतिदीर्घकालातीतं व्याधिं कृच्छ्रसाध्यं विद्यात् । कृच्छ्रदेहजं मर्म्मसन्ध्याद्यङ्गावयवजं रोगं कृच्छ्रसाध्यं विद्यात् । नातिपूर्णचतुष्पदमेकपथमेकमार्गं रोगं कृच्छ्रसाध्यं विद्यात्, अति-बहुकालातीतं न चेत् । नातिकालं द्विपथं रोगं कृच्छ्रसाध्यं विद्यात् । द्विदोषजञ्च नातिकालमपि कृच्छ्रसाध्यं विद्यात् ॥ ९ ॥

गङ्गाधरः—अथ द्विधा असाध्यस्य लक्षणोपदेशे याप्यलक्षणमाह—शेषत्वात् इत्यादि । असाध्यं व्याधिं पथ्यसेवयाल्पसुखमल्पेन हेतुनाशुप्रवर्त्तकं सदायुषः शेषत्वावशिष्टायुःसत्त्वात् पथ्यसेवया यत् याप्यं विद्यादायुषः क्षयात् तु पथ्य-सेवयापि असाध्यमेव । आयुःशेषसत्त्वेऽप्यपथ्यसेवया च साध्यमेवेति बोध्यम् । असाध्यलक्षणमाह—लब्धाल्पसुखमित्यादि । पथ्यसेवया लब्धमल्पं सुखं यस्मिन् तं लब्धाल्पसुखम् । अल्पेन हेतुनाशु शीघ्रं प्रवर्त्तते इत्याशुप्रवर्त्तकं

न योऽन्यथायं, किन्तु स्वतन्त्रमेव, शस्त्रक्षाराग्निकृत्याः शस्त्रक्षाराग्निसाध्याः, एषां यो व्याधिः तं कृच्छ्रसाध्यं विद्यादिति सम्बन्धः; कृच्छ्रदेशजं मर्म्मसन्ध्यादिजम् । एकपथस्य विशेषणं नातिपूर्णचतुष्पदमिति; द्विपथमित्यस्य विशेषणं नातिकालम् ॥ ९ ॥

चक्रपाणिः—याप्यत्वेनैवासाध्यं, तेन, यदसाध्यमितिपदं तद्याप्यव्यापकार्थं क्रियमाणभेषजतया तत्रासाध्यत्वशङ्कानिरासार्थम् । शेषत्वादायुष इति वचनं, आयुःशेषे विद्यमान एव याप्य-व्याधिप्रादुर्भावो भवतीति दर्शनार्थम् । पथ्यसेवया भेषजसेवया लब्धमल्पसुखं यत् तल्लब्धाल्प-

गम्भीरं बहुधातुस्थं मर्म्मसन्धिसमाश्रितम्।
नित्यानुशायिनं रोगं दीर्घकालमवस्थितम् ॥
विद्याद् द्विदोषजं तद्वत् प्रत्याख्येयं त्रिदोषजम्।
क्रियापथमतिक्रान्तं सत्त्वमार्गानुसारिणम् ॥
औत्सुक्यारतिसंमोह-करमिन्द्रियनाशनम्।
दुर्ब्बलस्य सुसंवृद्धं व्याधिं सारिष्टमेव च ॥ १०।११ ॥

कर्त्तरि ण्वुल्। गम्भीरं मेदःप्रभृतिगम्भीरस्थानगतं. बहुधातुस्थं रसरक्तादि-द्वित्र्यादिधातुस्थं. मर्म्मसन्धिसमाश्रितं. नित्यानुशायिनं सततानुबन्धं. दीर्घ-कालमवस्थितं द्वित्र्यादिवर्षं व्याप्य स्थितम्. एवम्भूत मन्येकं द्विदोषजं रोगं याप्यं विद्यात्। अनुपक्रममसाध्यमुपदिशति तद्वदित्यादि। तद्वत् त्रिदोषजं गम्भीरं त्रिदोषजं प्रत्याख्येयं विद्यात्। बहुधातुस्थं त्रिदोषजं प्रत्याख्येयं विद्यात्। मर्म्माश्रितं त्रिदोषजं प्रत्याख्येयं विद्यात्। सन्धिसमाश्रितं त्रिदोषजं प्रत्याख्येयं विद्यात्। नित्यानुशायिनं त्रिदोषजं प्रत्याख्येयं विद्यात्। दीर्घ-कालमवस्थितं त्रिदोषजं प्रत्याख्येयं विद्यात्। क्रियापथमतिक्रान्तं रोगं प्रत्याख्येयं विद्यात्। सत्त्वमार्गानुसारिणम् ऊर्द्धाधस्तन्न्यगादिसत्त्वपथगतं रोगं प्रत्याख्येयं विद्यात्। औत्सुक्यं हर्षोद्रेकः. अरतिरनवस्थितचित्तता. संमोहो मानसमोहः. तान् करोति शीलं यस्य तम्। लक्षणमिदमेकम्। इन्द्रियनाशनं रोगं प्रत्याख्येयं विद्यात्। दुर्ब्बलस्य पुंसः सुसंवृद्धमति-शयेन सम्यग्वृद्धं व्याधिं प्रत्याख्येयं विद्यात्। सम्यग्वृद्धस्तु बलवतः कश्चिद् याप्यः स्यात्। दुर्ब्बलस्य तु न सिध्यति। सारिष्टञ्च व्याधिं प्रत्याख्येयं विद्यात्। एतत्कारणात्र उक्तान्यप्यवच्छेदार्थम् ॥ १०।११ ॥

सुखम्, अल्पेन हेतुनाऽऽशु शीघ्रं प्रवर्त्तनं यस्य तदाशुप्रवर्त्तकं स्वार्थे अण्। गम्भीरं मेदः-प्रभृतिधातुगतं नित्यानुशायी नित्यानुबन्धः। विद्याद् द्विदोषजमित्यस्तेभ याप्यलक्षणम्। तद्वदित्यादि तु प्रत्याख्येयलक्षणम्। तद्वदित्यनेन गम्भीरादियाप्यलक्षणयुक्तं सत् त्रिदोषजं प्रत्याख्येयमित्यर्थः। औत्सुक्यं हर्षोद्रेकः, अरतिरनवस्थानलक्षणा, संमोहो मानसो मोहः।

भिषजा प्राक् परीक्ष्यैवं विकाराणां स्वलक्षणम् ।
पश्चात् कार्य्यसमारम्भः कार्य्यः साध्येषु धीमता ॥ १२ ॥
साध्यासाध्यविभागज्ञो यः सम्यक् प्रतिपत्तिमान् ।
न स मैत्रेयतुल्यानां मिथ्याबुद्धिं प्रकल्पयेत् ॥ १३ ॥

तत्र श्लोकौ ।

इहौषधं पादगुणाः प्रभावो भेषजाश्रयः ।
आत्रेयमैत्रेयमती मतिद्वैविध्यनिश्चयः ॥

गङ्गाधरः सुखसाध्यादिव्याधीनुपदिश्य प्रतिज्ञां स्थापयितुं निगमयति भिषजेत्यादि । धीमता भिषजा एवमुक्तरूपेण विकाराणां स्वलक्षणं सुखसाध्य-कृच्छ्रसाध्य-याप्य प्रत्याख्येयरूपं प्राक् परीक्ष्य ज्ञात्वा पश्चात् साध्येषु व्याधिषु कार्य्यसमारम्भश्चिकित्सारम्भः कार्य्य इति । तस्मात् साध्यासाध्यविभागज्ञो यो भिषक् सम्यक् प्रतिपत्तिमान् विकल्पादिबुद्धिमान् स वैद्यो यं व्याधिं प्रतिनियमेन उपक्रमते तं साधयत्येव, असाध्यव्याध्युपक्रमकत्वाभावात् । ततः साध्यं व्याधिं साधयित्वा भेषजस्य व्याधिप्रशमकत्वावधारणद्वारा मैत्रेयतुल्यानां भेषजमभेषजेनाविशिष्टमिति मैत्रेयवादानुवादिनां मिथ्याबुद्धिं भेषजमभेषजेनाविशिष्टमितिरूपां न कल्पयेत् नोत्पादयेदित्यर्थः ॥ १२।१३ ॥

गङ्गाधरः अध्यायार्थमुपसंहरति तत्र श्लोकाविति । इहौषधमिति । इहेति अध्याये महाचतुष्पादे । अनन्तरश्लोकोक्तेनान्वयः । औषधमिति चतुष्पादं षोड़शकलं भेषजमित्यारभ्य यदुक्तं पूर्व्वाध्याये षोड़शगुणमित्यन्तेनोक्तम् । प्रभावो भेषजाश्रय इति तद्भेषजं युक्तियुक्तमलमारोग्यायेत्यनेनोक्तः । आत्रेयमैत्रेयमती द्वे । नेति मैत्रेय इत्यारभ्य भेषजमभेषजेनाविशिष्टमित्यन्तेन

न स मैत्रेयतुल्यानां मिथ्याबुद्धिं विवर्द्धयेदिति, एवंगुणो वैद्यः प्रतिनियमेन यं व्याधिमुपक्रमेत तं साधयत्येव परम् । ततो भेषजस्य व्याधिप्रशमनं प्रति कारणद्वारा * साधने सति भेषजमभेषजेन समानमिति मैत्रेयसदृशानां सर्व्ववादिनां मिथ्याबुद्धेरनुत्पाद इति भावः ॥ १० — १३ ॥

चक्रपाणिः संग्रहे इहेति इहाध्याये । औषधमिति चतुष्पादं, पादगुणा इति यदुक्तं

* प्रत्यवधानद्वारेति पाठान्तरम् ।

चतुर्व्विधविकल्पाश्च व्याधयः स्वस्वलक्षणाः।
उक्ता महाचतुष्पादे येष्वायत्तं भिषग्जितम् ॥ १४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सूत्रस्थाने
महाचतुष्पादो नामो दशमोऽध्यायः ॥ १० ॥

मैत्रेयमतिः। मिथ्या चिन्त्यत इत्यारभ्य तस्मान्न भेषजमभेषजेनाविशिष्टं भवतीत्यन्तेनात्रेयमतिरुक्ता। मतिर्द्वैविध्यनिश्चयस्तु इदञ्चेत्यारभ्य कान्ततमो भवतीत्यन्तेनोक्तः। भवतश्चात्रेत्यारभ्य चतुर्व्विधविकल्पाः सुखसाध्यादि-विकल्पाः स्वस्वलक्षणा उक्ताः ॥ १४ ॥

अध्यायं समापयति। अत्रेत्यादि। प्राग्वद्व्याख्येयम्।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ सूत्र-
स्थानीयमहाचतुष्पादाध्यायजल्पाख्या दशमी शाखा ॥ १० ॥

पूर्व्वाध्याये "गोचरनागुणम्" इति; प्रभावो भेषजाश्रय इति "तद् भेषजं युक्तियुक्तं मदारोग्याय" इति ॥ १४ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-
व्याख्यायां महाचतुष्पादो नाम दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ।

**अथातस्तिस्रैषणीयमध्यायं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ॥ १ ॥**

**इह खलु पुरुषेणानुपहतसत्त्वबुद्धिपौरुषपराक्रमेण हितमिह चामुष्मिंश्च लोके समनुपश्यता तिस्र एषणाः पर्य्येष्टव्या भवन्ति । तद्यथा—प्राणैषणा धनैषणा परलोकैषणेति ॥२॥**

गङ्गाधरः अथानेन चतुष्पादद्वयेन विकाराणामुपशान्तये भेषजनिर्देशोपदेशः कुतो भवति ? किमर्थमारोग्यमिच्छन् ? रोगेण हि मृत्युर्लोकानां क्लेशो वा स्यादारोग्येणापि मृत्युः कालेनावश्यं भविता । न च सुखमात्रशाली स्यादन्यादृशदुःखस्यानिवार्य्यत्वात् ; सुखदुःखमयं हि जगत् । स्वस्थोऽपि मृत्वा पुनर्भविता, आतुरोऽपि प्रेत्य भवितेति चिकित्सया तुल्यैवाचिकित्सेत्याकाङ्क्षायां तिस्रैषणीयमध्यायमाह—अथात इत्यादि । पूर्ववत् सर्व्वं व्याख्येयम् । तिस्र एषणा अधिकृत्य कृतोऽध्याय इति तिस्रैषणीयोऽध्यायः । तिस्रैषणा इति अनुकार्य्यानुकरणयोरभेदेनेन तिस्र एषणाः पर्य्येष्टव्या इत्यस्यानुकार्य्यस्यानुकरणेन तिस्रैषणा इत्यनेन शब्देन सहाभेदविवक्षया रोः स्थाने कृतयलोपासिद्धो भवति पुनः संहिता ॥ १ ॥

गङ्गाधरः इहेत्यादि । इहेति जगति प्रायेण भोगित्वात् पुरुषाणां मोक्षार्थिनां धनैषणाभावेऽपि परलोकैषणा चास्तीति सर्व्वेषामेव तिस्र एषणा उपदिश्यन्ते, यथायोग्येन बोध्याः । पुरुषेण प्राणिना तिस्र एषणाः वासनाः पर्य्येष्टव्याः

चक्रपाणिः— पूर्व्वाध्याये चतुष्पादमारोग्यकारणं व्यवस्थापितं, ततः चतुष्पादसम्पत्त्या प्राप्तारोग्येण सता यदनुष्ठेयं प्राणपरिपालनसाधनं तथा धनार्ज्जनसाधनं तथा धर्म्मार्ज्जनसाधनं, तदिहैषणात्रयमभिधीयत इत्यनन्तरं तिस्रैषणीयोऽभिधीयते । तिस्रैषणाशब्दोऽस्मिन्नस्तीति मत्वर्थीयः, अत्रानुकार्य्यानुकरणयोर्भेदविवक्षया यलोपासिद्धत्वाभावात् संहितया तिस्रैषणीय इति संज्ञायते, अध्यायान्ते "तिस्रैषणीये मात्राश्च" इति श्लोकपादं करिष्यति, यद्यप्यन्येऽप्यत्र वाच्याः सन्ति तथापि प्रधानत्वेनायं गृह्यते ॥ १ ॥

चक्रपाणिः— इहेति भोगार्थिपुरुषाधिकारे ; यतः मोक्षार्थिपुरुषं प्रति धनैषणा सर्व्वथैवानुपयुक्ता । पुरुषेणेति पदं कुर्व्वन् य एव पुरुष एषणात्रयमान्वेष्यति स एव पुरुषो भण्यते नान्यः

भवन्ति। ननु किं सर्व्वेणैव पुरुषेणाथ केनचिदित्यत आह—अनुपहतसत्त्वेत्यादि। सत्त्वं मनः, बुद्धिर्बोधः, पौरुषं दैहिकबलं, पराक्रमो मानसबलम्; ते चानुपहता अव्याहता यस्य तेन तथा। ईदृशेन पुरुषेण तिस्र एषणाः पर्य्येषितव्या भवन्ति, न त्वन्येन पुरुषेण। उपहतबुद्धिपौरुषपराक्रमेण हि सत्त्ववता तासु पर्य्येषणा नार्हन्ति बुद्धिमता उपहतसत्त्वादिना सत्त्वबुद्धिमतोपहतपौरुषपराक्रमेण वा सत्त्वबुद्धिपौरुषवतापि उपहतपराक्रमेण वा पर्य्येषितुमर्हा न स्युः। एतेनैषणात्रयाधिकारी भवत्यनुपहतसत्त्वबुद्धिपौरुषपराक्रमः पुरुष इत्युक्तमाचार्य्येण।

ननु य एव पुरुषोऽनुपहतसत्त्वादिर्भवति तेनैव तिस्र एषणाः पर्य्येष्टव्याः किमर्थं भवन्तीति अत आह—हितमित्यादि। यः पुरुष इह जन्मनि अमुष्मिंश्च जन्मनि परजन्मनि य इह लोके पुनःपुनर्जायते म्रियते च तस्मिन्निह भूलोकेऽमुष्मिंश्च परलोके यस्मिन् जायते न म्रियते पुनःपुनरिति तस्मिंश्च लोके हितं कुशलं समनुपश्यता आकाङ्क्षिणा न तु तदसमनुपश्यता तथा सति यः पुरुषः सत्त्वबुद्धिपौरुषपराक्रमैर्हीनः स चेदिह लोके परलोके च हितमाकाङ्क्षति तदा तेनैव पुरुषेण तिस्र एषणाः पर्य्येष्टव्या भवन्ति। स एव पुरुष एषणात्रयेऽधिकारी भवतीत्यर्थः। एषणा इति इष्यतेऽन्विष्यते हितायेच्छा क्रियते इति हितेच्छाक्रिया, अभीष्टभावो यया क्रियया स्यात् सा क्रिया एषणा। तिस्रः पर्य्येष्टव्या अन्वेषणीया। अन्वेषणा अनुसन्धानम्।

ननु तिस्र एषणाः का इति? अत आह तद् यथेत्यादि। प्राणैषणा जीवितैषणा जीवितस्य हितसुखात्मकस्य दीर्घकालानुबन्धैषणा। धनैषणा धनानाम् आधिक्यानुवर्त्तनैषणा। परलोकैषणा एतद् तस्मात् पुनःपुनर्जन्ममरणोपादानलोकादन्यो लोकः परलोकः, न तु श्रेष्ठो लोकः परलोक इति। सदसत्कर्म्मणोरत्रैव लोके क्रियासाध्यत्वेनान्यलोकस्य तदभावात् एतल्लोकतः श्रेष्ठत्वाभावाल्लोकान्तरस्य। इह लोके हि कृतकर्म्मणा पुरुषेण लोकान्तरे तत्कर्म्मजफलं सुखं वा दुःखं वा भुज्यते। तस्मात् तत्रास्माल्लोकादितरस्मिन् लोके हितैषणा इति परलोकैषणा। सत्त्वत्रैव हिताधिकारात्

पशुतुल्यत्वादिति दर्शयति। पौरुषं शारीरं बलं, पराक्रमस्तु शौर्य्यादिरूपं मानसं बलम्। इहेतीह जन्मनि, अमुष्मिन्निति जन्मान्तरे; इष्यतेऽन्विष्यते साध्यतेऽनयेत्येषणा; प्राणो जीवितं, तत् साध्यते दीर्घत्वेन रोगानुपहतत्वेन चानयेति प्राणैषणा; एवं धनैषणा; परलोकोपकारकस्य धर्म्मस्यैषणा परलोकैषणा; कामैषणा तु प्राणैषणाधनैषणयोरन्तर्भावनीया, शरीरसम्पत्तिधन-

आसान्तु खल्वेषणानां प्राणैषणां तावत् पूर्व्वतरमापद्येत, कस्मात्? प्राणपरित्यागे हि सर्व्वत्यागः। तस्यानुपालनं स्वस्थस्य स्वस्थवृत्तिरातुरस्य विकारप्रशमनेऽप्रमादः। तदुभय-

प्राणहितैषणा धनहितैषणा परलोकहितैषणा इति व्याख्येयम्। यद्यपि लोकातीतं मोक्षधाम तथाप्यस्माल्लोकादन्यत्वमस्ति। स चापि खल्वनुत्तमतमः स्वर्लोकः परलोकशब्देन मोक्षधामाप्युच्यते। एतेन चतुर्व्वर्गान्वेषणा उक्ता भवति। प्राणैषणाधनैषणाभ्यां हि कामो धनैषणार्थः परलोकैषणया धर्म्ममोक्षौ ॥ २ ॥

ननु प्रथमं कैषणा पर्य्येष्टव्या इति, अत आह—आसामित्यादि। आसां त्रिसृणामैहिकैषणाद्वयपारलौकिकैकैषणानां मध्ये ऐहिकयोः पूर्व्वयोर्द्वयो-रेषणयोरापादनपूर्व्वं यः, तत्र पूर्व्वतरमित्यापद्येतेति क्रियाविशेषणम्। तत्र शिष्यः पृच्छति कस्मादिति? उत्तरत्वेन हेतुमाह—प्राणत्यागे हीत्यादि। प्राणो जीवितं, जीवितमायुः। तदायत्ता हि प्राणादयः। प्राणस्य परित्यागे परिहाणौ, सर्व्वपरित्यागः सर्व्वेषामेव सदसतां सुखासुखानां कर्म्मणाञ्च हानिः। एतेन दीर्घकालहितसुखजीवनेनाल्पकालं हितसुखजीवनापेक्षया पारलौकिकमैहिकञ्च सुखाधिकतरम्। अतो रोगारोग्याभ्यां कालाकालेन मृत्यु-पुनर्भवादन्यत्वं तुल्यं नाशकमित्युक्तं भवति। तस्यानुपालनं प्राणस्यानुरक्षणम्। प्राणशब्दो हि प्राणादिपञ्चप्राणार्थं बहुवचननियमः। न त्वन्यार्थं। तत्रैकं प्राणानुपालनमाह स्वस्थस्येत्यादि। स्वस्थस्य स्वस्थवृत्तिः। अपरं प्राणानुपालनमातुरस्य विकारप्रशमने रोगनिवृत्तिक्रियायां चिकित्सायाम्

यत्फलित्वाभिधानात् कामस्य, यदि वा कामैषणायां स्वत एव पुरुषः प्रवृत्तो भवति, नोपदेशमपेक्षत इति तदेषणोपदेशो न कृतः ॥ २ ॥

चक्रपाणिः—प्राणैषणायाः प्रथमानुष्ठाने उपपत्तिमाह—आसामित्यादि। त्रयाणां मध्ये द्वे पूर्वे भवतस्तृतीयायाः सर्वोत्तरत्वेनापकर्षत्वात्, तेन, द्वयोस्तर इति न्यायात् पूर्व्वतरं प्राणैषणेति साधुतरप्रयोगः; प्राणशब्दो जीवितवचन एकवचनान्तोऽप्यस्ति, यदुक्तं—"त्रीण्येकापकालन्याहुः प्राणो येषु प्रतिष्ठितः" इति; तेन, "प्राणप्रत्ययमर्णकं तस्य" इति पदमेकवचनेन प्रयुक्तमेव। विकारान् प्रशमयतीति विकारप्रशमनं चिकित्सा, तस्मिन्; अप्रमादोऽवधानेनानु-

मेतदुक्तं, वक्ष्यते च। तद् यथोक्तमनुवर्त्तमानः प्राणानुपालनाद् दीर्घमायुरवाप्नोतीति प्रथमैषणा व्याख्याता भवति ॥ ३ ॥

अथ द्वितीयां धनैषणामापद्येत। प्राणेभ्यो ह्यनन्तरं धनमेव पर्य्येष्टव्यं भवति। न ह्यतः पापात् पापीयोऽस्ति यदनुपकरणस्य दीर्घमायुः, तस्मादुपकरणानि पर्य्येष्टुं यतेत।

अप्रमादः अवधानमेव। तदुभयमेतदुक्तं, वक्ष्यते च निखिलेन तन्त्रेणानेनेति शेषः। एते स्वस्थवृत्तिव्याधिनिवृत्त्यवधानरूपे द्वे क्रिये प्राणैषणा। प्राणैषणाफलमाह—तद् यथोक्तमित्यादि। ननु प्राणानुपालनं द्विविधं, यथोक्तं स्वस्थाधिकारे स्वास्थ्यरक्षार्थं येन विधिनोक्तं रोगाधिकारे रोगप्रशमनार्थं येन विधिनोक्तं यद्यत्तदनुवर्त्तमानः पुरुषः प्राणरक्षामिच्छता पश्चात् विधिना तद् विविधं प्राणरक्षाकरणं सेवमानः प्राणानुपालनादायुषो रक्षया दीर्घमायुरवाप्नोति। एतेन प्राणानुपालनायुर्दैर्घ्ययोरर्थान्तरभावेन साध्यसाधनभावो नास्तीति वादो निरस्तः। आयुषो दैर्घ्यं पूर्व्वाध्याये व्याख्यातम्। इति प्रथमैषणा प्राधान्यात् प्राणैषणा व्याख्याता ॥ ३ ॥

गङ्गाधरः—अथेति प्राणैषणामापादनतः परीक्ष्यानन्तरं न तु यावत् प्राणैषणानन्तरं धनैषणा। धनैषणाकालेऽपि प्राणैषणानुवृत्तेः। द्वितीयां धनैषणामिति। धनैषणाया द्वितीयत्वे हेतुमाह—प्राणेभ्य इत्यादि। हि यस्माद्धनैषणा प्राणैषणानन्तरं पर्य्येष्टव्या तस्मात् प्राणैषणां विधाय धनैषणामापद्येत। एवकारेण प्राणैषणानन्तरं परलोकैषणा निरस्ता। ननु कस्मात् प्राणैषणानन्तरं धनैषणां हित्वा परलोकैषणा न पर्य्येष्टव्येति? अत आह—न ह्यत इत्यादि। हि यस्मात्। नास्त्युपकरणं सुखारोग्यधर्म्मभोगसाधनं धनं यस्य तस्यानुपकरणस्य दीर्घमायुरेव यादृशं पापं पापकार्य्यं दुःखमतः पापतः पापजदुःखात् तिद्दनस्य दीर्घायुष्ट्वरूपात् पापीयः पापजदुःखतरं नास्ति। तस्मादुपकरणानि धनानि पर्य्येष्टुं यतेतेत्यर्थः।

ह्यनम्। वक्ष्यते चेति निखिलेन शास्त्रेण, प्राणानुपालनादिति प्राणानुपालनसाधनात्, तेन, प्राणानुपालनदीर्घायुष्ट्वयोरर्थाभेदात् साध्यसाधनभावो नास्तीति यच्चोच्यते तन्निरस्तं भवति, प्रथमेति प्रधानात् ॥ ३ ॥

चक्रपाणिः—अथेति प्राणैषणानन्तरं, द्वितीयामिति हेतुगर्भविशेषणम्। तस्मादियमेव द्वितीया प्राणैषणानन्तरमवश्योपादेयत्वेन, तत इयमेवोच्यते इत्यर्थः। प्राणैषणामनु व्याख्या;

तत्रोपकरणोपायाननुव्याख्यास्यामः। तद्यथा—कृषि-पाशुपाल्य-वाणिज्य-राजोपसेवादीनि। यानि चान्यान्यपि सतामविगर्हितानि कर्म्माणि वृत्तिपुष्टिकराणि विद्यात् तान्यारभेत कर्त्तुम्। तथा कुर्व्वन् दीर्घजीवितमनवमतः पुरुषो भवतीति, द्वितीया धनैषणा व्याख्याता भवति ॥ ४ ॥

ननु कैरुपायैर्धनान्यन्वेष्टव्यानीति अत आह—तत्रेत्यादि। धनोपायानिति नोक्त्वा यदुपकरणोपायानिति कृतं तेनैतत् ख्यापितं, धनस्य प्राणोपकरणतयोपार्ज्जनं कर्त्तव्यं, न तु कृपणानामिवेति बोध्यम्। ननु के चोपकरणोपाया इति? अत आह तद्यथेत्यादि। कृषिर्भूमिविलेखनपूर्व्वकशस्यजननं, पाशुपाल्यं गोमहिषादिरक्षणं, येन धनमुपार्ज्ज्यते। वाणिज्यं वणिक्कर्म्म, राजोपसेवा मन्त्रणादिकर्म्मणि नियुक्तः सन् राजानमुपसेवते यत् सा। आदिना द्रव्यग्रहणनियमपूर्व्वकोत्तमर्णत्वादि। अत्रादिना गर्हितादन्यान्यपि कर्म्माणि धनोपार्ज्जने किमाचर्य्याणि न वेति, अत आह यानीत्यादि। अन्यान्यपि सतां साधुकर्म्मणां धार्म्मिकाणां सम्बन्धे न विगर्हितानि कर्म्माणि वृत्तिपुष्टिकराणि विद्यात्, न केवलं सतामविगर्हितानि विद्यात्। सतामविगर्हितानि अनेकानि वृत्तिपुष्ट्योरनुपार्ज्जनानि सन्ति। वृत्तिर्जीवनेन वर्त्तनं, पुष्टिर्धनसम्पत्तिः। एवम्भूतानि पुनः प्रतिग्रहाध्यापनादीनि भवन्ति। तानि कर्त्तुमारभेत। इत्थं धनैषणाफलमाह तथा कुर्व्वन्नित्यादि। तथा कुर्व्वन् उक्तविधिना धनैषणां कुर्व्वन् दीर्घजीवितं व्याप्यानवमतः लोकेऽनवज्ञातः अवज्ञया रहितः यावज्जीवं बहुभिर्मानैर्गृहीतः पुरुषो भवतीत्यर्थः। इति इयं द्वितीया धनैषणा व्याख्याता भवति ॥ ४ ॥

प्राधान्यं दर्शयति, प्राणेभ्यो हीत्यादि। पापशब्देन पापकार्य्यं दुःखमुच्यते। उपकरणमारोग्यभोगधर्म्मसाधनीभूतो धनप्रपञ्चः, स यस्य नास्त्यसावनुपकरणः। धनोपायानिति वक्तव्ये उपकरणोपायानिति यत् करोति, तेन धनस्य भोगाद् धर्म्मसाधनार्थमेवोपादानमिच्छन्ति, न पुनः कृपणस्येव विनियोगशून्यस्य सुसंवर्द्धितमात्रकरणार्थम्। अन्यान्यपीति प्रतिग्रहाध्यापनादीनि, वृत्तिर्वर्त्तनं, पुष्टिर्धनसम्पत्तिः। अनवमतोऽनवज्ञातो बहुमानगृहीत इति यावत्। दीर्घं जीवितं जीवति धारयतीत्यर्थः अनेकार्थत्वाद् धातूनां। यदि वा दीर्घजीवितं यथा स्यात् तथा जीवतीति क्रियाविशेषणेन व्याख्येयम् ॥ ४ ॥

**अथ तृतीयां परलोकैषणामापद्येत। संशयश्चात्र कथं भविष्याम इतश्च्युताः, न वेति। कुतः पुनः संशयः? इत्यत उच्यते। सन्ति ह्येके प्रत्यक्षपराः परोक्षत्वात् पुनर्भवस्य**

<u>गङ्गाधरः</u>—उद्देशक्रमेण तृतीयामेषणां व्याख्याति अथेत्यादि। अथ प्राणैषणाधनैषणानन्तरं परलोकस्यैषणा परलोकैषणा। परोऽस्माज्जन्ममरणयोः पुनःपुनरावृत्तिस्थानरूपाल्लोकात् भिन्नो लोकः परलोकः। तमिच्छता यया क्रियया प्राप्यते सा परलोकैषणा। तामापद्येत। अस्यामेषणायां परलोकस्य अप्रत्यक्षस्य पुनर्भवा पुनर्भवभेदेन द्विविधस्य मध्ये खल्वपुनर्भवस्य कादाचित्कत्वे-नार्य्याणां सम्मतत्वे तथा पुनर्भवस्य दुर्ज्ञेयत्वेन चार्व्वाकादिनास्तिकानामसम्मत-त्वेन अपुनर्भवस्य मोक्षस्य सर्व्वसम्मतत्वेन निर्व्विवादात् मोक्षस्तु विस्तरेण न व्याख्यातः। पुनर्भवस्य चार्व्वाकाद्यसम्मतस्य नास्तिकवादं निरस्यास्तित्वं प्रमा-णेन व्यवस्थापयितुमस्य च निश्चयज्ञानार्थं प्रथमतः संशयमेव परलोके दर्शयति— संशयश्चात्रेत्यादि। यदि न परलोको निश्चयज्ञानविषयः स्यात् तदा न तस्य संशयः स्यात्, यदि च संशयविषयः स्यात् तदा न निश्चितः स्यात्, यदि संशयो न स्यात् तदा निश्चयोऽपि न स्यात्; स स एवेति विरोध्यभावे विरुद्ध-त्वेन ज्ञानाभावात्। तथा च निश्चयज्ञानं प्रति संशयज्ञानस्य हेतुत्वमिति वाच्यम्। न हि उत्पद्यते प्राक् संशयान्निश्चयज्ञानं, वादप्रवृत्त्यभावात्। जन्ममात्रे हि विनोपदेशं न कस्यचिन्निश्चयबुद्धिः प्रवर्त्तते आ हिरण्यगर्भात्। उपदेशो हि भ्रमसंशयच्छेदार्थः। तस्मान्निश्चयज्ञानं प्रति संशयज्ञानं हेतुर्भवति, इत्यत आह—संशयश्चात्रेति। अत्र परलोकेऽनयोर्मध्ये पुनर्भवे संशयश्चेति, वादी वदति। कथं भविष्याम इतश्च्युताः न वेति, प्रतिवादी। इतो-ऽस्माल्लोकाच्च्युताः कथं भविष्यामो न वा भविष्याम इतिरूपेण संशयः। यद्वा इतश्च्युता इह लोके मृतास्माल्लोकाद् गताः सन्तः पुनरिह भविष्यामो वयं न वेति संशयः। कथमिति संशयहेतुं प्रतिवादी पृच्छति। वादी तत्र पुनर्भवे संशयहेतुं दर्शयति उच्यते इत्यादि। हि यस्मात् एकेऽन्ये मुनयः

<u>चक्रपाणिः</u>—परलोकैषणां व्याकरोति अथेत्यादि। अत्र च परलोकस्य दुर्ज्ञेयत्वेन चार्व्वा-कादि-नास्तिकासम्मतत्वेन च परलोके प्रमाणेन व्यवस्थापयितुं निर्णयार्थं प्रमाणप्रवृत्तिविषयं संशयमेव तावत् परलोके दर्शयति संशयश्चात्रेत्यादि। इतश्च्युता इह जन्मनि मृताः, भविष्यामो जन्मान्तरे इत्यर्थः। संशयहेतुं पृच्छति कुतः संशयः पुनरिति; वादिविप्रतिपत्तिं

नास्तिक्यमाश्रिताः, सन्ति चागमप्रत्ययादेव पुनर्भवमिच्छन्ति श्रुतिभेदाच्च।

मातरं पितरं चैके मन्यन्ते जन्मकारणम्।
स्वभावं परनिर्म्माणं यदृच्छाञ्चापरे जनाः॥

प्रत्यक्षपराः प्रत्यक्षमेवैकं प्रमाणं नान्यदस्ति किञ्चित् प्रमाणमिति वादिन आहुः। परोक्षत्वात् पुनर्भवस्य प्रत्यक्षाविषयत्वात्। पुनर्भवस्य प्रेत्यभावस्य जन्मान्तरस्येति यावत्, नास्तिक्यमाश्रिताः प्रत्यक्षाविषयत्वाज्जन्मान्तरं नास्ति; जन्मान्तरं हि कर्म्मकृताद्भवति, तस्मात् तत्कर्म्मापि नास्ति; तद्धि कर्म्मणा येन नास्ति तस्मात् कर्त्तापि नास्ति। कर्म्म हि पुरुषाद्भवतो भवति, तत आत्मापि नास्तीति। नास्तिना प्रचरतीति नास्तिकः तस्य भावो नास्तिक्यमाश्रिताः सन्ति वर्त्तन्ते।

नन्वेवं चेत् तदा कुतः संशयः स्यात्, पुनर्भवो नास्त्येवेति निश्चयादिति; अत आह सन्ति चेति। अत्रापरे इति पूर्व्वम् इत्यनुवर्त्तते। तेनापरे आगमप्रत्ययादेव उपदेशप्रामाण्यात् पुनर्भवमिच्छन्तीति सन्ति चेति वादिविप्रतिपत्तिरेकः संशयहेतुः। अपरस्त्वाह श्रुतिभेदाच्चेति। श्रुतिः प्रतिवादिवचनम्। तस्माच्च संशयश्चेत्यन्वयः। एके पुनर्भवस्य प्रत्यक्षाभावात् परे च श्रुतिभेदाच्च नास्तिक्यवादिनः, अपरे त्वास्तिक्यवादिनः इति संशयः। मातरपितरावेव जन्मकारणमित्येके मुनयो मन्यन्ते, एके तु मुनयः स्वभावमेव जन्मकारणं मन्यन्ते, एके च परनिर्म्माणं जन्मकारणं मन्यन्ते, परे जनास्तु

संशयहेतुमाह प्रत्यक्ष इत्यादि। प्रत्यक्षपरा अनुमानाद्यनपेक्षप्रमाणाः, परोक्षत्वात् प्रत्यक्षाविषयत्वात्, नास्ति पुनर्भवो नास्ति कर्म्मफलं नास्त्यात्मेति, नास्तिना प्रचरन्तीति नास्तिकास्तस्य भावो नास्तिक्यं; प्रत्यक्षप्रमाणेनोपलभ्यन्ते घटपटादि, तदेव परमस्ति; नोपलभ्यते च प्रत्यक्षेण परलोकः, तस्मान्नास्ति परलोक इति नास्तिकाभिप्रायः। अस्ति पुनर्भव इति येषां मतं, तान् दर्शयति सन्तीत्यादि। सन्ति चेत्यत्र 'अपरे' इति वाक्यशेषः, आगमप्रत्ययादागमप्रामाण्यात्, आगमश्च पुनर्भवप्रतिपादकः दानतपोयज्ञ इत्यादि दर्शयिष्यत्यग्रे। इच्छन्तीत्यत्र 'ये' इति वाक्यशेषः; एवंभाववादिविप्रतिपत्तिरेका संशयकारणं दर्शिता। संशयहेत्वन्तरमाह श्रुतिभेदाच्चेत्यादि। श्रूयत इति श्रुतिः, प्रतिवादिवचनमेवं ग्रन्थनिबद्धम्। एतानि च मातापितरावेव जन्मकारणमित्यादीनि पुनर्भवप्रतिक्षेपकाणि वचनानि। आगमप्रत्ययादस्ति

**इत्यतः संशयः. किं नु खल्वस्ति पुनर्भवो न वेति। तत्र बुद्धिमान् नास्तिक्यबुद्धिं जह्यात् विचिकित्सां च : कस्मात् ?**

यदृच्छामेव जन्मकारणं मन्यन्ते। अतः पुनर्भवस्यास्तिक्यवादे संशयः। कीदृश इति आह किं नु खल्वित्यादि। किं नु भोः पुनर्भवोऽस्ति वा नास्ति इति मे संशय इत्यर्थः। इत्थञ्च पुनर्भवः संशयविषयः प्रत्यक्षमात्रप्रमाणादिवादिमुनिभिः प्रत्यक्षाविषयत्वेन प्रमेयत्वाभावान्नास्तित्वेनागमप्रमाणवादिभिस्तु मुनिभिरागमप्रमाणेन प्रमेयत्वाच्चास्तित्वेन च मन्यमानत्वात्। इति पुनर्भवे संशयस्य स्थापना बोध्या।

अत्र पुनर्भवस्यास्तिक्यपक्षस्य मातृत्वेनाश्रित्योपदिशति तत्रेत्यादि। तत्र पुनर्भवस्य नास्तिक्यास्तिक्यसंशयबुद्धिषु मध्ये, बुद्धिमान् प्रशस्तबुद्धिमान्, नास्ति परलोक इति नास्तिवादेनाचरणीं बुद्धिं जह्यात्। ननु परलोकोऽस्तीति मन्यामहे। संशयश्चास्तीति। अत आह विचिकित्सां च जह्यात् संशयञ्च जह्यात्।

पुनर्भव इति यो ब्रूते, तद्वचनेन समं वादिविप्रतिपत्त्यैव संशयकारणं भवतीत्यत उक्तमुपसंहारे 'अतः संशयः' इति। एके मन्यन्ते जन्मकारणमिति। जन्मकारणमितिपदं मातरं पितरं तथा स्वभावं परनिर्म्माणमितिपदद्वयेन सम्बध्यते, यदृच्छामपरे जना इत्यत्र मन्यन्ते जन्मकारणमितिपदं सम्बध्यते, मातापितरावेवात्मान्तरनिरपेक्षावपत्योत्पादने कारणम्, तेन पूर्व्वशरीरं परित्यज्य शरीरान्तरपरिग्रहरूप आत्मनः परलोको नास्तीति प्रथमवादिनः पक्षः। परिदृश्यमानपृथिव्यादिभावानामेवायं स्वभावः यत, संयोगविशेषान्मिलिताः सन्तश्चेतनं पुरुषादिलक्षणं कार्य्यविशेषमारभन्ते, यथा सुरार्थानि प्रत्येकमसदकारणान्यपि मदकरं मद्यमारभन्ते; नात्र कश्चिदात्मा विद्यते, यस्य परलोकः स्यादिति स्वभाववादिनो भावः। परमैश्वर्य्यादिगुणयुक्त आत्मविशेषः, तेन संसारगोऽमनिरपेक्षिणा निर्म्माणं परनिर्म्माणम्, तत्रापि परस्यैवैश्वर्य्यादिगुणयुक्तस्य आत्मविशेषस्य प्रभावात् भूतानि चेतयन्ते नात्मान्तरमस्तीति परलोकाऽभावः। यदृच्छा कारणाप्रतिनियमेनोत्पादः, न कारणप्रतिनियमेन कार्य्योत्पत्तावधारयितुं शक्यतेऽवधारकप्रमाणानां प्रामाण्यानवधारणात्, तस्मादात्मैव पुनर्भवमनुभवतीति न वाच्यमिति यादृच्छिकस्याभिप्रायः।

पुनर्भवास्तित्वपक्षं गृहीत्वा प्राह तत्रेत्यादि। बुद्धिमानिति प्रशस्तबुद्धियुक्तः, नास्त्येव परलोक इति विपर्य्ययज्ञानं नास्तिक्यबुद्धिस्तां जह्यात्; परलोकविषयो यथा विपर्य्ययो धर्म्मानुष्ठानं प्रति विरोधकः, तथा लोकक्रमेणास्ति परलोको न वेति संशयोऽपि धर्म्मानुष्ठानं प्रति विरोधक इत्याह विचिकित्सां चेति। विचिकित्सां जह्यादिति सम्बन्धः, विचिकित्सा

भूतानामिति पाठान्तरम्।

**प्रत्यक्षं ह्यल्पमनल्पमप्रत्यक्षमस्ति यदागमानुमानयुक्तिभिरुपलभ्यते। यैरेव तावदिन्द्रियैः प्रत्यक्षमुपलभ्यते तान्येव सन्ति चाप्रत्यक्षाणि।**

अत्र वादी प्राह कस्मादिति। तत्र हेतुमाह—प्रत्यक्षमित्यादि। प्रत्यक्षपरा मुनयो यदि प्रमाणान्तराण्यनुमानादीनि न मन्यमाना प्रत्यक्षमेव प्रमाणं मन्यमानाः पुनर्भवो नास्तीति वदन्ति, तज्जवात् तन्न ग्राह्यम्। हि यस्मात् प्रत्यक्षमल्पं ; पञ्चविधं चाक्षुषं श्रावणं त्वाचं रासनं घ्राणजमिति। अनल्पमपरिसंख्येयमप्रत्यक्षमस्ति वर्त्तते। नन्वप्रत्यक्षं यदनल्पं भवद्भिरुच्यते, तत् अप्रमेयमस्त्विति। अत आह यदित्यादि। आगमानुमानयुक्तिभिः प्रमाणैर्यदुपलभ्यते तदप्रत्यक्षं वस्तु यावदनल्पमागमादिप्रमाणैः प्रमेयमस्ति इति भावः। एतेन यथैवाव्यभिचारिणोऽव्यपदेश्यस्य व्यवसायात्मकस्य ज्ञानस्येन्द्रियार्थसत्त्वात्मसन्निकर्षोत्पन्नस्य प्रमाजनकत्वेन प्रत्यक्षप्रमाणत्वं भवति, तथैवाव्यभिचारिप्रमाणकत्वेनागमादीनि प्रमाणान्येव भवन्तीति ज्ञापितम्।

नन्वप्रत्यक्षं यावद्भिरागमादिप्रमाणैः प्रमेयाणि वस्तूनि सन्तीत्युच्यते, तानि न सन्तीति मन्यामहे इति व्यापयितुमाह—यैरित्यादि। यैरेवेन्द्रियैश्चक्षुरादिभिस्तावत् प्रत्यक्षं रूपादिकमुद्भूतमुपलभ्यते ज्ञायते भवद्भिर्यतस्ततस्तान्येवेन्द्रियाणि सन्ति च वर्त्तन्त एव। ननु न सन्तीति वक्तुं शक्यते भवद्भिः प्रत्यक्षाभावात् तानि चाप्रत्यक्षाणि। किन्तु प्रमेयाणि सद्भावात्। तस्माच्चक्षुरादीनां प्रमेयत्वसिद्ध्यर्थमागमादीनि प्रमाणानन्तराण्यवश्यमन्तव्यानि भवन्ति। ननु प्रत्यक्षं षड्विधं मानसेन सह चाक्षुषादीनि इति सुखदुःखादिवदिन्द्रियादीनि मानसप्रत्यक्षाणि भवन्ति। मनसो हि चिन्त्यमर्थ इति चेत् न। चक्षुरादिप्रमाणानान्तरावगतानामेवानुबोध्यस्य चिन्त्यत्वात् न त्वनवगतस्य। ननु

सन्त्येव . . सा चेह प्रकृतत्वात् परलोकविषयत्व। अत्रैव हेतुप्रश्नपूर्व्वकं हेतुमाह—कस्मादित्यादि। अप्रत्यक्षत्वात् परलोको नास्तीति प्रथमवादिमतं दूषयति प्रत्यक्षमित्यादि। यथा प्रत्यक्षं प्रमाणमव्यभिचारिप्रमाजनकत्वेन, तथा आगमादीन्यपि तथाभूतप्रमाजनकत्वात् प्रमाणान्येव ; ततश्च प्रत्यक्षाविषयत्वेनैव यत् पुनर्भवस्य नास्तित्वं व्यवस्थाप्यते तन्न युक्तमिति प्रकरणार्थः। पुनर्भवसाधकानि चागमादीन्यग्रे वक्ष्यमाणानि सन्त्येवेति भावः ; आगमादीनि लक्षणतोऽग्रेऽभिधास्यन्ते। प्रत्यक्षाविषयत्वेऽपि चान्यतमप्रमाणसिद्धानि सन्ति तान्याह—यैरेवेत्यादि। प्रत्यक्षमिति प्रत्यक्षविषयो घटादिः ; सन्तीतीन्द्रियोपक्रमणीयेनानुमानगम्यत्वादिति बोद्धव्यम्।

सताञ्च रूपाणामतिसन्निकर्षादतिविप्रकर्षात् आवरणात् करणदौर्बल्यान्मनोऽनवस्थानात् समानाभिहारादभिभवादतिसौक्ष्म्याच्च प्रत्यक्षानुपलब्धिः।

शब्दस्पर्शरूपरसगन्धा इन्द्रियस्य प्रत्यक्षाः सुखादयश्चात्मप्रत्यक्षा इव प्रत्यक्षाण्येवेन्द्रियाणीति, यतश्चक्षुरादीनि गोलकादिरूपाणि। न हि गोलकादिभ्यो भिन्नानि सन्त्यप्रत्यक्षाणि कानिचिदिन्द्रियाख्यानीति न वाच्यम्, इन्द्रियोपक्रमे तस्य निरस्तत्वात्। वातादिदोषानुपहताधिष्ठानानां वातादुपहतेन्द्रियाणां प्रत्यक्षत एव प्रत्यक्षज्ञानाभावाच्च। तस्मादधिष्ठानव्यतिरिक्तानि सन्त्यप्रत्यक्षाणीन्द्रियाणि चक्षुरादीनीति।

तथा सति चाह सताञ्चेत्यादि। नास्तिकस्य प्रत्यक्षविषयीकृतत्वेन वर्त्तमानानां रूपाणां शब्दादीनामतिसन्निकर्षादतिनैकट्यात् प्रत्यक्षानुपलब्धिः प्रत्यक्षेण न ज्ञानं दीपस्येव चक्षुरादेस्तेजःप्रभृतीनामतिसन्निकृष्टे देशे प्रसारणाभावात्। यथा नयनार्पितकज्जलपक्ष्मादीनामदर्शनं तथातिविप्रकर्षादतिदूरत्वात् चक्षुरादेर्ज्योतिरादेर्गत्यभावात् प्रत्यक्षानुपलब्धिः। यथा अत्यूर्द्ध्वं गतानामुड्डीयमानानां पक्षिणामदर्शनम्। तथा तेषामावरणादाच्छादनाच्चक्षुरादीनां सञ्चाराभावेनालोकनाभावान्न प्रत्यक्षोपलब्धिः। यथा जलदाद्यन्तर्गतानामदर्शनं तथा तेषां करणदौर्बल्याच्चक्षुरादिकरणानां कालेनाल्पसत्तया प्रागभावात् पूर्व्वं यथाभूतानां रूपादीनां प्रत्यक्षमुपलब्धिस्तथाभूतानां न प्रत्यक्षोपलब्धिः, यथानेन दूरस्थं दृष्टवता वार्द्धक्ये दशहस्तदूरेणापि न दृश्यते वस्तु, तथा मनोऽनवस्थानात् एकेनेन्द्रियेण अर्थान्तराभिनिविष्टस्य मनसोऽन्यत्रार्थेष्वभिनिवेशाभावात् तेषां तदन्यचाक्षुषादीनां रूपादीनां

इतश्च प्रत्यक्षानुपलब्धिर्न वस्त्वभावनिश्चयकारिणीत्याह सतामित्यादि। सतामित्यत्र वक्ष्यमाणातिसन्निकर्षाद्यभावे प्रत्यक्षेणैव गृह्यमाणत्वेन सतामित्यर्थः। प्रत्यक्षानुपलब्धिरित्यतिसन्निकर्षादिभिः सह प्रत्येकमभिसम्बध्यते, अतिसन्निकर्षादनुपलब्धिर्यथा नयनगतकज्जलादेः, अतिविप्रकर्षाद् यथा दूराकाशगतस्य पक्षिणः, आवरणाद् यथा वस्त्रादिपिहितस्य घटादेः, करणदौर्बल्याद् यथा कामलाद्युपहतस्य चक्षुषः पटशौक्ल्याद्यप्रतिभानं, मनोऽनवस्थानाद् यथा कान्तामुखनिरीक्षणप्रहितमनसः पार्श्वगतानां वचनामनवबोधः, समानाभिहाराद् यथा विल्वराशिप्रविष्टस्य विल्वस्येन्द्रियसम्बन्धस्यापि भेदेनाग्रहणम्, अभिभवाद् यथा मध्याह्ने उल्कापातस्य, सौक्ष्म्यात् यथा त्रिचतुर्हस्तप्रमाणदेशवर्त्तिनः क्रिमिविशेषस्याग्रहणम्।

तस्माद्परीक्षितमेतदुच्यते प्रत्यक्षमेवास्ति नान्यदस्तीति । श्रुतयश्चैता न कारणं युक्तिविरोधात् ।

प्रत्यक्षानुपलब्धिः, यथा वीणादिवाद्यश्रवणासक्तचित्तस्य पार्श्वस्थानां वाक्याश्रवणम्, कान्तामुखप्रेक्षणासक्तचित्तस्य वा पार्श्वस्थपुरुषाणामदर्शनम् । एतेन नास्तिकस्य मनःसन्निकर्षमन्तरेण प्रत्यक्षोपलब्धिवादो निरस्तः । ननु यद्यतिसन्निकृष्टानां ग्रहणयोग्यसन्निकर्षेण प्रत्यक्षोपलब्धिः स्यात् तदाति-विप्रकृष्टानां ग्रहणार्हसन्निकर्षेण प्रत्यक्षोपलब्धिः स्यात् तथा चावरणाच्छन्नाना-मावरणोद्घाटेन प्रत्यक्षोपलब्धिः स्यात् । तथा च चक्षुरादिदौर्बल्ये ग्रहण-योग्यसन्निकर्षेण रूपाणां प्रत्यक्षोपलब्धिः स्यात् तथा मनोऽवस्थानदशायाञ्च पार्श्वस्थानां प्रत्यक्षोपलब्धिः स्यात् । भवतु । किन्तु कलायादिराशिप्रविष्टानां कलायादीनां रूपाणां ग्रहणार्हसन्निकर्षेण नातिसन्निकर्षेण नातिविप्रकर्षेण अनावरणेन करणादौर्बल्येन मनसोऽवस्थानाभावेन च समानाभिहारात् समानस्वरूपतया भेदज्ञानाभावादयं कलायो मम नायं ममेति निश्चयप्रत्यक्षोप-लब्धिर्न स्यात् । यदि च समानाभिहृतानामिन्द्रियसन्निकर्षेण प्रत्यक्षमुप-लब्धिरस्ति कलायत्वादिरूपेणैव न मदीयादितत्तत्कलायत्वेन तस्मात् तदप्रत्यक्षं निश्चयत्वाभावात् । किन्तु मध्यन्दिनोदितनक्षत्रादीनां सतां रूपाणां सूर्य्य-करादिनाभिभवान्न प्रत्यक्षोपलब्धिः । यद्यभिभवाभावे प्रत्यक्षोपलब्धिः स्यात् तदस्तु । किन्त्वतिसूक्ष्माणां लिक्षादिक्रिमीणां द्व्यणुकादिलक्षणानां सतां रूपाणामतिसौक्ष्म्यात् चक्षुर्मानतोऽप्यप्रत्यक्षोपलब्धिः स्यात् । दर्पणविशेषेण पुनः प्रत्यक्षत्वेनोपलब्धौ तेषां प्रमेयत्वसत्त्वात् । द्व्यणुकात्मकानां हि दर्पणादि-विशेषेण त्रसरेण्वादिस्वरूपेण प्रत्यक्षोपलब्ध्यां सत्यां परमाण्वात्मकानान्तु द्व्यणुकात्मकत्वेनैव प्रत्यक्षोपलब्धिः स्यात् न तु त्रसरेण्वादिरूपेण प्रत्यक्षजनक-दर्पणविशेषोऽस्ति । तेन दर्पणविशेषेणापि परमाणोः परमाणुत्वेन प्रत्यक्षोप-लब्धिर्न सिध्यति ।

अथ निगमयति—तस्मादित्यादि । पञ्चेन्द्रियाणां प्रत्यक्षाभावात् सताञ्च भावानामतिसन्निकर्षादितः प्रत्यक्षानुपलब्धेश्च प्रत्यक्षमेवास्ति, "नान्यदस्ति प्रमाणम्" इति वचनमपरीक्षितं परीक्षकैरप्रमाणीकृतं भवति । इत्थञ्च

सम्प्रति श्रुतिभेदवादिमतं दूषयति—श्रुतयश्चेत्यादि । न कारणमिति न पुनर्भवकारणमित्यर्थः ;

आत्मा मातुः पितुर्वा यः सोऽपत्यं यदि सञ्चरेत् ।
द्विविधं सञ्चरेदात्मा सर्व्वो वाऽवयवेन वा ॥
सर्व्वश्चेत् सञ्चरेन्मातुः पितुर्वा मरणं भवेत् ।
निरन्तरं, नावयवः कश्चित् सूक्ष्मस्य चात्मनः ॥

प्रत्यक्षातिरिक्त प्रमाणमवश्यं स्वीकार्य्यं भवति । आगमप्रत्ययादेव ये पुनर्भवमिच्छन्ति, तदागमतो भिन्नश्च नैरप्यस्ति नाप्रत्यक्ष प्रमाणमिति । ततो नास्ति परलोक इति यद्वदन्ति तद्दूषणायाह—श्र तयश्चैता इत्यादि । "मातरं पितरञ्चैके मन्यन्ते जन्मकारणम्" इत्यादयः श्रुतयश्च न कारणं परलोकनास्तित्वस्थापनायाम् ; कस्मात् ? युक्तिविरोधात्, बहुकारणोपपत्तितस्तत्त्वज्ञानार्थमूहविरोधात् ।

युक्तिविरोधं दर्शयितुमाह आत्मा मातुरित्यादि । "मातरं पितरञ्चैके मन्यन्ते जन्मकारणम्" इति यां श्रुतिमाश्रित्य ये त्विदमाहुः । "सिद्धैव चेतना बीजपुरुषा अनेके वैको वायमाहुरादित्यमादिभूतवान्, स एवार्द्धेन नारी भूत्वा तस्यां विराजमसृजत्" इत्येवं पारम्पर्य्यजाता इमे मातापितृभ्यां जायन्ते संहतरूपा न चैषां सन्त्यात्मानः । जायमानस्यात्मसञ्चाराच्चैतन्यादयो भवन्तीति चेत्, तदा यदि मातुर्य आत्मा यो वा पितुरात्मा स एवापत्यं सञ्चरेत्, तदा द्विविधं यथा तथा किमात्मा सञ्चरेत् ? तत्र किं सर्व्व एवात्मा सर्व्वांशेनैव सञ्चरेत् ? अथवावयवेन कियदंशेन सञ्चरेत् ? चेत् सर्व्वांशेनात्मापत्यं सञ्चरेत् तदा मातुश्चेदात्मा सर्व्वांशेन सञ्चरेत् ततो मातुर्मरणं भवेत्, यदि पितुरात्मा सर्व्वांशेन सञ्चरेत् तदा पितुर्वा मरणं भवेत् इत्येको युक्तिविरोधः । अपरश्चायं युक्तिविरोधः । यद्यवयवेन कियदंशेन

युक्तिविरोधादुपपत्तिविरोधात् । अपत्यशरीरं मातापित्रोः कारणत्वमनुमतमेव, यतस्तथाविधौ मातापित्रोः कारणत्वे सत्यपि चैतन्यहेतोरात्मनः परलोकादागमने प्रत्ययाभावोऽवच्छिन्न एवेति । चैतन्यमपत्यस्य, मातापित्रोरपि चैतन्यहेतुर्य आत्मा तत एव भवतीति यो मन्यते, तं प्रत्याह, आत्मा मातुरित्यादि । द्विविधं द्विप्रकारं, सर्व्व इति मातरं पितरं परित्यज्यापत्यं गच्छेत् ; अवयवेनेति एकोऽवयवो वा आत्मनो मातरि पितरि वा तिष्ठेत्, अन्यस्त्वेकांशेन आत्मनोऽपत्यं गच्छेत् । प्रथम-पक्षे दूषणमाह—सर्व्वश्चेदित्यादि । निरन्तरमिति च्छेदः, निरन्तरं तत्कालमेव, यदि मातुरात्मा अपत्यं सञ्चरेत्, तदा तत्कालं मातुर्मरणं, यदि तु पितुरात्माऽपत्यं सञ्चरेत्, तदा तत्कालमेव पितुर्मरणं स्यादिति । द्वितीयं पक्षं दूषयति—नावयव इत्यादि । सूक्ष्मस्य

बुद्धिर्मनश्च निर्णीते यथैवात्मा तथैव ते ।
येषाञ्चैषा मतिस्तेषां योनिर्नास्ति चतुर्विधा ॥

आत्माऽपत्यं सञ्चरेदित्युच्यते तदा तदसम्भवः; कस्मात्? सूक्ष्मस्य च यत आत्मनो निरन्तरमेव कश्चिदवयवो नास्ति। कथमवयवेनात्मापत्यं सञ्चरेदिति? परमाणुसंयोगे हि भवन्त्यवयवाः, स खण्डः, परमाणुस्तु अखण्डः।

यदि चात्मसञ्चारं नोक्त्वा बुद्धिमनसोरन्यतरस्य सञ्चाराच्चैतन्यादयो भवन्तीत्युच्यते, तत्राप्युच्यते बुद्धिरित्यादि। बुद्धिमनश्चेति द्वं यथात्मा सूक्ष्मो निर्णीत आत्मेस्तथैव बुद्धिमनसी सूक्ष्मे निर्णीते। तयोरन्यतरसञ्चारेऽपि सर्वांशेन सञ्चारे निर्बुद्धित्वं निर्मनस्त्वं वा मातुः पितुर्वा स्यात्। अवयवेन सञ्चारस्तु न सम्भवति, सूक्ष्मत्वेनावयवाभावात्। इत्यपरो युक्तिविरोधः। एवमपरश्च युक्तिविरोधोऽयम्—येषामित्यादि। येषामेषा "मातापितरौ जन्मकारणम्" इत्येवं मतिस्तेषां प्राणिजन्मनि चतुर्विधा योनिर्नास्ति। जरायुजाण्डस्वेदोद्भिद्भेदाच्चतुर्विधा प्राणिनामुत्पत्तौ योनिरुक्ता। जरायुजानां देवनरादीनामण्डजानां पक्ष्यादीनाञ्च स्तो मातापितरौ, न तु स्वेदजोद्भिज्जानामित्येवं युक्तिविरोधात् प्राणिजन्मनि मातापितरौ कारणम्। "नात्मास्ति कारणम्" इति श्रुतिः परलोकनास्तित्वस्थापने कारणं न भवति।

द्रव्यस्थूलस्य, स्थूलानां पृथिव्यादीनामवयवा भवन्ति, न तु सूक्ष्माणामाकाशकालमनोबुद्धिप्रभृतीनां; ततश्चावयवाभावादात्मनोऽवयवेन सञ्चरणं दूरमपास्तमित्यर्थः। अथ शङ्कते, मा आत्मा मातापित्रोः सञ्चरतु, बुद्धिस्तु तयोर्मनो वापत्यं सञ्चरतु, अत एवापत्यस्य चैतन्यं भविष्यतीत्याह बुद्धिर्मनश्चेत्यादि। निर्णीते व्यवस्थापिते प्रमाणेन, किम्भूतेनेत्याह, यथैवात्मा निरवयवत्वेनावयवसञ्चरणाक्षमस्तथा तत्कालमेव मातापितृपरित्यागप्रसङ्गेन कार्त्स्न्येनापि सञ्चरितुमक्षमः, तथा ते अपि बुद्धिमनसी निरवयवत्वात् नैकदेशेन सञ्चरेयातां, मातापित्रोस्तत्कालमेवाऽबुद्धिमत्त्वामनस्कत्वप्रसङ्गाच्च न कार्त्स्न्येन सञ्चरेयातामिति भावः। दूषणान्तरमाह येषामित्यादि। मातापितरावेवापत्ये चैतन्यकारणमित्येवंरूपा। चतुर्विधा योनिरिति जरायुजाण्डजसंस्वेदजोद्भिज्जलक्षणा, एवं मन्यते संस्वेदजानां मशकादीनां तथोद्भिज्जानां गण्डूपदादीनां चेतनानां मातापितरौ न विद्येते, ततस्तेषामचैतन्यं स्यात्, मातापित्रोश्चैतन्यकारणयोरभावादिति।

विद्यात् स्वाभाविकं षण्णां धातूनां यत् स्वलक्षणम्।
संयोगे च विभागे च तेषां कर्म्मैव कारणम्॥

अथापरा श्रुतिरियम्। प्राणिनां जन्मकारणं स्वभाव एव ; नात्माऽस्ति जन्मकारणम्, तस्मान्नास्ति परलोकः। स्वभावादेव हि जायमानेषु प्राणिषु चैतन्यादयो जायन्ते—इति ये वदन्ति, तत्र युक्तिविरोधं दर्शयति, विद्यादित्यादि। प्राणिनामुत्पत्तौ कारणं षडेव धातवः—पञ्च महाभूतान्यात्मा चेति। तेषां षण्णां धातूनां यत् स्वलक्षणं तत् स्वाभाविकं स्वभावजं विद्यात्। अनभिव्यक्तशब्द-श्लक्ष्णसूक्ष्मलघुमृदुगुणमार्द्दवशौषिर्य्यलाघवकर्म्मकृल्लक्षणमाकाशं स्वभावसिद्धं न तु चैतन्यादिकर्म्मकृल्लक्षणम्। वायुः पुनरनभिव्यक्त-लघुशीतरूक्ष-खरविशद-सूक्ष्माभिव्यक्तस्पर्शगुणरौक्ष्यग्लानि-विचारवैशद्यलाघव-कृल्लक्षणः स्वभावसिद्धः, न तु चैतन्यादिकृल्लक्षणः। तेजस्त्वनभिव्यक्त-तीक्ष्णोष्णसूक्ष्मलघुरूक्षविशदाभिव्यक्तरूपगुणदाह--पाकप्रभाप्रकाशवर्णकृल्लक्षणं स्वाभाविकं न तु चैतन्यादिकृल्लक्षणम्। आपश्चानभिव्यक्त-द्रवस्निग्ध-शीत-मन्द-सर-सान्द्र-मृदु-पिच्छिलाभिव्यक्त-रसगुण-स्नेहोपक्लेद-बन्धविष्यन्द-मार्द्दवप्रह्लादकृल्लक्षणाः स्वभावसिद्धा न तु चैतन्यादिकृल्लक्षणाः। पृथिवी चानभिव्यक्तगुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूलाभिव्यक्तगन्धगुणसंघातोप-चयगौरवस्थैर्य्यकृल्लक्षणा स्वभावसिद्धा न तु चैतन्यादिकृल्लक्षणा। आत्मा तु चेतनालक्षणः सत्त्वभूतगुणेन्द्रिययोगाच्चैतन्यादिकृत्स्वभावसिद्धः। तत्रात्मान-मन्तरेण केवलपञ्चभूतारब्धे प्राणिनि कथं चैतन्यादयः स्युरिति? तत्राहुः स्वभावकारणवादिनः—पाञ्चभौतिकशुक्रशोणिताहारजरससंयोगे पञ्चभिरेव भूतैर्जायमाना देवनरादयः खलु देवनरादिस्वभावेन चेतनाः, घटादयस्त्वचेतनाः

स्वाभाविकवादिनो भूतचैतन्यपक्षं दूषयति—विद्यादित्यादि। स्वभावकृतं स्वाभाविकं, षण्णां धातूनामिति पृथिव्यप्तेजोवाय्वाकाशात्मनां, एषाञ्च धातुत्वं शरीरधारणात् जगद्धारणाच ; स्वलक्षणमात्मीयमव्यभिचारि लक्षणं, यथा पृथिव्याः काठिन्यादि, अपां द्रवत्वादि, तेजस उष्णत्वादि, वायोश्चलत्वगमनादि, आकाशस्याऽप्रतिघातादि, आत्मनो-ज्ञानादि ; एतेन, एतदेव परमेषां लक्षणं स्वाभाविकं, न तावत्पञ्चमहाभूतानामेषां चैतन्यमपि स्वाभाविकमस्तीति दर्शयति, तच्च यत् प्रत्येकं भूतानां न सम्भवति सन्निकृष्टानामपि न सम्भवति चैतन्यं, यतः, भूतानामपि संयोगादपि चैतन्यसम्भवे बहूनि चेतनानि स्युरन्योन्या-वयवानामेकत्र, तच्च ज्ञातृभेदात् प्रतिसन्धानानुपपत्तिरिति भावः, आत्मसम्बन्धेन तु चैतन्यं

घटादिस्वभावेन जायन्ते। इति नास्त्यात्मा, ततो नास्ति परलोकः, नास्ति च पुनर्भव इति। तत्राभिधीयते न स्वभावमात्रसिद्धिर्भावानामापेक्षिकत्वात्। अपेक्षाकृतमापेक्षिकम्। भावानां स्वेन भावेन जन्मसिद्धिर्न भवति कारणान्तरापेक्षिकत्वात्। स्वो भावो धर्म्मः स्वभावः। कः पुनः स्वो धर्म्मो भावानाम्? यद्यत् स्वस्वलक्षणयुक्तमाकाशादीनां तथान्येषाञ्च यद्यत् स्वस्वलक्षणं तत्तत् सर्व्वं तस्य स्वभावः। तेषां खल्वाकाशादीनां विनात्मानं चैतन्यकृतस्वभावाभावाद्देवनरादिषु तैरारब्धेषु चैतन्यादिसम्भवो न स्यात्, अपेक्षते च चैतन्यहेतुमात्मानमेव। तत्राहुः स्वभावकारणवादिनः—भावानां स्वभावः स्वरूपम्। स्वं रूपं देवनरादिरूपं चेतनं तत्स्वरूपेण देवनरादयो जायन्ते विनात्मानं पञ्चभिरेव भूतैरिति स्वभाव एव जन्मकारणं नात्मा। तस्मात् नास्त्यात्मा नास्ति परलोको नास्ति च पुनर्भव इति। तत्राह न स्वभावसिद्धिर्भावानामापेक्षिकत्वात्। स्वभावस्तत्र चेतनानां जन्मसिद्धौ किमपेक्षते, इत्यत आह संयोगे चेत्यादि। चेतनस्यारम्भे विनात्मानं पञ्चभिर्भूतैः अचेतनैस्तेषां पञ्चानां संयोगे च विभागे च पुनःपुनः संयोगविभागाभ्यां देवनरादिस्वरूपस्य निर्म्माणे तेषां कर्म्मैव तत्संयोगविभागे कारणमपेक्षणीयं भवति। सत्यपि भूतानां क्रियावत्त्वे तेषामचेतनत्वात प्रवृत्त्यसम्भवो विना चैतन्यहेतुमात्मानमिति। तत्र चेदुच्यते यथाकाशादिष्वनभिव्यक्ताश्लक्ष्णत्वादयो गुणास्तथा चैतन्यादयोऽप्यनभिव्यक्ताः सन्ति। कार्य्यारम्भे पञ्चानां संयोगे श्लक्ष्णत्वादिवदभिव्यज्यन्ते। ततः कारणगुणपूर्व्वकः कार्य्यगुणो दृष्ट इति। नैवम्, अनभिव्यक्तश्लक्ष्णत्वादिगुणवदाकाशादीनां कस्याप्यनभिव्यक्तचैतन्यगुणानामाप्तैरुपदेशस्याभावात्। तत्रापि चेदुच्यते पृथिव्यादीनामुपचयसंघातादिकर्म्मभिरारभ्यमाणे देवनरादौ कार्य्याविरोधित्वात कर्म्मणः स्वविरुद्धं कर्म्म चैतन्यादिकारम्भकत्वं मदशक्त्यारम्भकत्ववद्गुडादीनां मद्यकराणामिति। तत्र चेदमुच्यते चैतन्यादीनां कर्म्मजत्वेन कर्म्मत्वप्रसङ्गो गुणत्वञ्च न स्यात्। द्रव्यगुणयोर्हि सजातीयारम्भकत्वं द्रव्याणि हि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरं, कर्म्मासाध्यं कर्म्म न विद्यते। तस्मात् आत्मनाधिष्ठितानि पञ्च भूतानि चेति तानि स्वस्वकर्म्मभिः कृतसंयोग-

सम्मतमेव, वरं; तथापि गर्भोत्पत्तौ भूतानामात्मसम्बन्धे तथा मरणे भूतानामात्मनो वियोगे कर्म्म जन्मान्तरकृतं कारणं, नान्यत्, यत्र तत्र तत्संयोगकारणजन्मान्तरकृतकर्म्मस्वीकारात्

अनादेश्चेतनाधातोर्नेष्यते परनिर्म्मितिः।
पर आत्मा स चेद्धेतुरिष्टोऽस्तु परनिर्म्मितिः॥

विभागाभ्यां चेतनान् देवनरादीनारभन्ते इति युक्तिविरोधाज्जन्मकारणं स्वभावमेवेति श्रुतिर्न कारणं परलोकनास्तित्वस्थापनायामिति।

अथ परनिर्म्माणवादिन आहुः स्वभावमात्रं जन्मकारणं नास्तु। परनिर्म्माणन्तु जन्मकारणम्। परो ह्येकः कश्चित् पुरुषः प्रसिद्धोऽमितसङ्कल्पोऽस्ति स्रष्टा। स एव खलु मनः शरीरं निर्म्माति यथा तथा चात्मानमपि निर्म्माय चेतनं सर्व्वं देवनरादिकं निर्म्माति सङ्कल्पादेव, तस्मान्नित्य आत्मा नास्ति; य इतः प्रेत्य परलोकं गत्वोषित्वा भोगावसाने पुनरिह भवतीति। तन्नित्यस्यात्मनो नास्तित्वान्नास्ति परलोको नास्ति कर्म्म नास्ति कर्म्मफलं नास्ति प्रेत्यभाव इति। अत्र युक्तिविरोधं दर्शयति अनादेरित्यादि। अनादिः खलु चेतनाधातुरव्यक्तं नाम सदसदात्मकं नित्यम्; स आत्मा नित्यस्तस्य परनिर्म्मितिर्नेष्यते नोपपद्यते। यदि हि पूर्व्वमसिद्धः स आत्मा न वर्त्तते परस्तु पुरुषः किमुपादानमात्मानं निर्म्माति यतश्चैतन्यादीनि जायन्ते न च भूतैश्चेतनैश्चेतनं शक्नोति निर्म्मातुं भूतानां चैतन्यादिलक्षणत्वाभावात्। संघाते च मदशक्तिवच्च कार्य्यविरोधिना कर्म्मणा सविरुद्धं कर्म्मपदार्थश्चैतन्यादिगुणत्वात्। स च परः पुरुषः खलु नात्मा कथं चेतनः सम्भवति इत्यत आह पर आत्मेत्यादि। परशब्देनेह खल्वात्मा स एव निर्म्मातीति हेतुश्चेदिष्टः स्याद् भवतां तदास्माकं मतेऽप्यस्तु परनिर्म्मितिः। तस्मादात्मास्ति नित्यः। स एव काले स्थूलमिदं शरीरं विहायेतः प्रेत्य लोकान्तरं गत्वोषित्वह कृतकर्म्मणः फलमुपभुज्य तत्र भोग्यभोगावसानेऽत्र भोग्यभोगार्थमिह पुनर्भवतीति सिध्यति। तस्मादस्त्यात्मा नित्यः, कर्म्म चास्ति, कर्म्मफलञ्चास्त्यस्ति च परलोकोऽस्ति च पुनर्भव इति।

प्रेत्यभावः स्वीकृतो भवतीति भावः। परनिर्म्माणपक्षं दूषयति अनादेरित्यादि। अत्र परनिर्म्माणपक्षे शरीरस्यात्मरहितस्य परेण निर्म्माणं वाभिप्रेतं स्यात्, आत्मनो वापि परेण निर्म्माणमभिप्रेतं स्यात्; तदात्मनः परनिर्म्माणं दूषयति अनादेरिति। नित्यस्य चेतनाधातोरित्यात्मनः, नेष्यते नित्यस्योत्पादककारणाभावादिति भावः, नित्यत्वञ्चात्मनः शारीरे प्रतिपादयिष्यति। अथ शरीरमात्रस्य निर्म्माणमभिप्रेतं तदनुगतमेव, परेणात्मना धर्म्माधर्म्मसहायेन तस्य क्रियमाणत्वादित्याह—पर इत्यादि। हेतुरिति शरीरोत्पादे हेतुरिष्ट इत्यर्थः, अस्तु परनिर्म्मितिरिष्टकी

न परीक्षा न परीक्ष्यं न कर्त्ता कारणं न च ।
न देवा नर्षयः सिद्धाः कर्म्म कर्म्मफलं न च ॥
नास्तिकस्यास्ति नैवात्मा यदृच्छोपहतात्मनः ।
पातकेभ्यः परञ्चैतत् पातकं नास्तिकग्रहः ॥

इत्येवं परनिर्म्माणवादनिरासे प्राणिनां जन्मकारणं यदृच्छामाहुरपरे ये जनास्तत्रापि युक्तिविरोधं दर्शयति—न परीक्षेत्यादि। अपरे ये जना भाषन्ते प्राणिनां जन्मकारणं यदृच्छेति। या इच्छा यदृच्छा नाम यथा यस्य जन्म तथा तस्य जन्म स्यादकारणं देवनरादीनां स्वस्वलक्षणचैतन्यादिमत्त्वेन जन्म स्यादितरेषामचेतनत्वेन। नास्ति तु तत्र कारणमाकस्मिकमेव जन्म सर्व्वेषामिति। तत्रायं युक्तिविरोधः। यदृच्छोपहतात्मन उपहत आत्मा नास्त्यात्मेति यस्य तस्य नास्तिकस्य न परीक्षास्ति. प्रमाणं नास्तीति चेत् तदा परीक्ष्यमपि नास्ति, परीक्षणीयाभावात् तु मातृपितृदुहितृभगिनीदारगुरुवृद्धसिद्धादिरूपेण परीक्षणाभावे यदृच्छाचरणप्रसङ्गः स्यात्। नास्ति च तस्य कर्म्म यत् कृत्वा शुभाशुभं फलं प्राप्नोति। नास्ति हि तस्य कर्म्मफलं शुभमशुभं वा।

प्रत्यभावाभवोऽभिर्नाति भावः, एवं मन्यते, परोऽभस्र्यादिगुणयुक्तात्मविशेषेणैतच्च शरीरं क्रियमाणं चेतनाहेतुभूतानतिरिक्तात्मसम्बन्धमन्तरा चेतनायुक्तं कर्त्तुं न पार्य्यते, घटादिवत् अचेतनत्वप्रसङ्गात्; चेतनाहेतुरात्मा नित्यत्वेन न क्रियते, तस्माच्चेतनाहेतुनित्यत्वेन जन्मान्तरसम्बन्धिनमात्मानं गृहीत्वा शरीरं चेतनं परः करोतीति स्वीकरणीयम्। एवमपि चेश्वरशरीरादिजगद्वैचित्र्यदर्शनात् आत्मनो धर्म्माधर्म्मयोगवैचित्र्य कल्पनीयम्। तथाच तस्यात्मन एव धर्म्माधर्म्मसहायता अवश्यं स्वीकरणीया, तस्मात् स एव शरीराद्युत्पत्तौ कारणमस्तु, किमपरेणेहात्मविशेषकल्पनेन; यदि वा, एवमात्मन्यनेकजन्मसम्बन्धिनि संसारहेतुधर्म्माधर्म्मगुणशालिनि सिद्धे अस्तु सोऽप्यात्मा विशेषकारणमतो न काचित् क्षतिरिति।

यदृच्छावादिमतं दूषयति न परीक्षेत्यादि। यदृच्छावादी स्वल्पैकमपि प्रमाणं नानुमन्यते, ततश्च तस्याप्रामाणिकत्वात् प्रमाणं विनैव यत् किञ्चिद् ब्रुवतो न श्रद्धेयं वचनं भवति, तस्मादुपेक्षणीयमिति प्रकरणाभिप्रायः; यदृच्छया ऽपरिस्थितपक्षतयोपहत इहलोकपरलोकानुपयुक्त आत्मा यस्य स यदृच्छोपहतात्मा, तस्य परीक्षा नास्तीति परीक्षाहेतूनां प्रमाणानामभावादित्यर्थः, परीक्ष्यमपि नास्ति परीक्षकप्रमाणाभावादेव; एवं कर्त्तापि नास्ति तत्कारणमपि नास्ति, प्रमाणास्वीकारादिति भावः। तथा सर्व्वजनसिद्धा देवादयोऽपि न सम्भवन्तीत्यभिधानेन नास्तिकस्य वर्ज्जनीयत्वं दर्शयति; पातकेभ्यो ब्रह्मवधादिभ्यः परं श्रेष्ठं,

तस्मान्मतिं विमुच्यैताममार्गप्रसृतां बुधः।

सतां बुद्धिप्रदीपेन पश्येत् सर्व्वं यथातथम्। इति ॥ ५ ॥

द्विविधमेव खलु सर्व्वं सच्चासच्च। तस्य चतुर्व्विधा परीक्षा—

यतस्तस्य कोऽपि कर्त्ता नास्ति यः कर्म्म करोति यत् कर्म्म परत्र शुभाशुभ फलति। यतश्च यदृच्छया सर्व्वं भवति तस्मात् किमपि कारणं नास्ति। कारणाभावाद् यथेष्टाचरणे सुकृतदुरिताभावाद् देवर्षिसिद्धादीनां पूज्यापूज्यानाम् अभावात्। कथं न मातापित्रादिषु सदसत्कर्म्माण्याचरति। तस्य हि नास्तिकस्यात्मैव नास्ति य इतः प्रेत्य परलोकं गत्वा शुभाशुभञ्च फलं प्राप्नुयात्। वदति च नास्ति कर्म्म नास्ति कर्म्मफलमिति कुरुते च मातरि दुहितरि भगिन्यां दारेषु मातृत्वादिव्यवहारं न यथेष्टाचरणमिति. तस्मादेष यो नास्तिकग्रहः। एतत् खलु पातकेभ्यः परमुत्कृष्टं पातकम्। तस्मादेताम् अमार्गप्रसृतां सज्जनगतिपथभिन्नपथप्रगतां नास्तिकस्य मतिं बुधो विमुच्य सतां जनानां बुद्धिप्रदीपेन यथातथं सर्व्वं पश्येदिति ॥ ५ ॥

गङ्गाधरः एवं नास्तिकनिरासे सति सतां कीदृशी बुद्धिर्यया प्रदीपभूतया खल्वालोककारिण्यालोके सति यथातथं सर्व्वं पश्येदिति। अतः प्रथमतः परीक्षामाह द्विविधमित्यादि। सर्व्वमिति प्राङ्महानिर्व्वाणप्रलयाद् यदासीच्छक्तिरेव परं ब्रह्म तदादेरतदन्तं निखिलं द्विविधमेव प्रतीयमानं भवति। कथमिति तदाह सच्चासच्चेति। अस्तीति सद्वस्तु परीक्ष्यमपरीक्ष्यञ्च। तत्रापरीक्ष्यमलौकिकं वस्तु शक्तिब्रह्म सदेव। ततो जातं लोहितमिव तेजः शुक्ला इवापः कृष्णमिवान्नं. तल्लोहितशुक्लकृष्णवदाभासतेजोऽबन्नोपाहिता सा शक्तिः परमसूक्ष्मस्त्वव्यक्तरूद्धा लोहितशुक्ल-

नास्ति परलोक इत्यादिको ग्रहो नास्तिकग्रहः, नास्तिकबुद्ध्या हि उच्छृङ्खलप्रायः पुरुषः सर्व्वमेव पातकं करोतीति भावः। नास्तिकतापरित्यागेन यथाकर्त्तव्यमाह तस्मादित्यादि। एतामिति नास्तिकबुद्धिम्, अमार्गे अधर्म्मे प्रसृता अमार्गप्रसृता, बुद्धिरेव प्रदीपो बुद्धिप्रदीपः, तेन प्रत्यक्षादिप्रमाणेन पश्येदित्यर्थः, यथातथमिति यथास्वरूपम् ॥ ५ ॥

चक्रपाणिः—सम्प्रति परपक्षं दूषयित्वा स्वपक्षपरलोकसाधनानि प्रमाणान्यवतारयति—द्विविधमित्यादि। सर्व्वमिति यत्किञ्चित्प्रमाणप्रतीयमानं, तद् द्विविधम्। तद्द्वैविध्यमाह—सच्चासच्च। सदिति विधिविषय-प्रमाणगम्यं भावरूपम्, असदिति निषेधविषय-प्रमाणगम्यम् अभावरूपं, परीक्ष्यते व्यवस्थाप्यते वस्तुस्वरूपमनयेति परीक्षा, प्रमाणान्याप्तोपदेशादय इत्यग्रन्थे

**आप्तोपदेशः प्रत्यक्षम् अनुमानं युक्तिश्चेति। आप्तास्तावत्—**

कृष्णवदाभासा गायत्री भगवती दुर्गा सा पुनर्विद्या शान्तिः प्रतिष्ठा निवृत्तिरिति चतस्रः शक्तयो भूत्वैकीभूय परमव्योमरूपः परमात्मा शिवो बभूव। तस्य ज्योतीरूपा सा गायत्री तेजोऽवच्छिन्नांशेन तस्यैव ज्ञानशक्त्याऽध्यवसितं यदृच्छया शक्त्याभीप्सितं क्रियाशक्त्या परिणमन्ती विद्याविद्या भूत्वा विद्याश्रयं सदाशिवमविद्याश्रयांश्चतुरो वेदान् सूते। ते नियतिर्नाम। तच्छक्त्यादेवतदन्तं सर्व्वमपरीक्ष्यं प्रमाणागम्यत्वात्। ते चैकीभूय सद्बभूव। स च कालो महाविष्णुः सत् पुनः कियदंशेन चिद्बभूव। चिच्च संप्रसादांशेन क्षेत्रज्ञः पुरुषो विष्णुर्बभूव। स आत्मा। चितस्तु खल्वसम्प्रसादो गुणांशो ब्रह्मा नाम बभूव। तत् प्रधानं प्रकृतिश्चेत्यनर्थान्तरम्। त्रय एते खलु नापरीक्ष्या न परीक्ष्याः स्वरूपतो भवन्ति। तेन हि कालेन महाविष्णुनानुप्रविष्टं प्रधानं क्षेत्रज्ञाधिष्ठितं सङ्कोचविकाशाभ्यामभिव्यक्तसत्त्वरजस्तमोगुणरूपमव्यक्तं नामात्मा बभूव। तदव्यक्तस्थत्वे कालादयस्ते परीक्ष्याः प्रमाणगोचरत्वादिति। तदव्यक्ताज्जातं यत्किञ्चित् तत्सर्व्वं ब्रह्माण्डस्थं परीक्ष्यं। तच्च सर्व्वं द्विविधमिह विवक्षितं सामान्यविशेषभूतं द्रव्यगुणकर्म्मसमवायाख्यम्। द्विविधमाह सच्चासच्चेति। अस्तीति सत् वस्तु भावश्चेत्येकोऽर्थः। तेषु सत्सु खलु भावेषु मध्ये पुनरितरेतरभेदाद्भिन्नं सर्व्वं सामान्यविशेषभूतं द्रव्यगुणकर्म्मसमवायाख्यमसच्चाभाव इत्येकोऽर्थः। यथा गौरश्वो मेषो महिष इत्येवमादि सत्। तेषु पुनरितरेतरभेदाद्गौरश्वोऽश्वात्मना गौर्न भवतीत्यश्वाभावो गौस्तथाऽश्वः सन् भाव एव गवात्मना न भवत्यश्व इत्यगौरश्वो गवाभाव इति। तस्य भावाभावरूपेण सिद्धस्य सर्व्वस्य द्रव्यगुणकर्म्मसमवायाख्यस्य सामान्यविशेषभूतस्य परीक्षा परीक्षणहेतुश्चतुर्द्धा भवति। का केति तां विवृणोति— आप्तोपदेश इत्यादि। आप्तैरुपदिश्यते यदिदमेवमिदं नैवमित्युपदेश आप्तोपदेशः। शब्दः परीक्षा प्रमाण शब्द्यतेऽनेनेति शब्दः। प्रत्यक्षमिति अक्षस्येन्द्रियस्य प्रतिविषयं वृत्तिः प्रत्यक्षम्। वृत्तिस्तु सन्निकर्षो ज्ञानं वा यदा हि सन्निकर्षस्तदा ज्ञानं प्रमितिः। यदा ज्ञानं तदा हानोपादानोपेक्षाबुद्धयः फलमिति। अनुमानमिति मितेन लिङ्गेनानु पश्चादर्थस्य मानमनुमानमिति। युक्तिश्चेति युज्यते यया बुद्ध्या तर्क्यते सा तर्कात्मिका बुद्धिर्युक्तिरिति।

स्फुटा भवन्ति। आप्तोपदेशं दर्शयितुम् आप्तमेव तावदाह—आप्ता इत्यादि। निःशेषेण मुक्त

रजस्तमोभ्यां निर्म्मुक्तास्तपोज्ञानबलेन ये।
येषां त्रैकालममलं ज्ञानमव्याहतं सदा॥

उपलब्धिसाधनं ज्ञानं परीक्षाप्रमाणमित्यनर्थान्तरं समाख्यानिर्वचनसामर्थ्यात्। परीक्ष्यते यया बुद्ध्या सा परीक्षा साधनं परीक्षा। प्रमीयतेऽनेनेति करणार्थाभिधानः प्रमाणशब्दः। एषां चतुर्णां परीक्षात्वं प्रमाणत्वमेभिर्यदुपलभ्यते तदुपलब्धिव्यापारः। स चाप्तोपदेशोक्तिराप्तोपदेशत्वम्। इन्द्रियार्थसन्निकर्षजन्यत्वं प्रत्यक्षत्वम्। लिङ्गलिङ्गिसम्बन्धजन्यत्वमनुमानत्वम्। बहुकारणोपपत्तिकरण युक्तित्वमिति। न त्वाप्तोपदेशादिचतुष्कान्यतमत्वं प्रमाणत्वं तदन्यतमत्वस्य तत्तदेकैकवृत्तित्वेन चतुष्कवृत्तित्वाभावात्। अथ न परीक्षाचतुष्कमैतिह्यार्थापत्तिसम्भवाभावानामपि परीक्षात्वात्। नैवमैतिह्यस्याप्तोपदेशेऽर्थापत्तिसम्भवाभावानामनुमानेऽन्तर्भावात्। एषां प्रामाण्यं दर्शयिष्यते। पूर्व्वं परीक्षैव परीक्ष्यते। आप्तोपदेशादीनामप्रामाण्यं त्रैकाल्यासिद्धेः। आप्तोपदेशादीनां प्रमाणत्वं नास्ति त्रैकाल्यासिद्धेः। प्रमेयाणां पूर्व्वकालपरकालसहभावकालवृत्तेरनुपपत्तेः। पूर्व्वं प्रमेयात् प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात् प्रत्यक्षोत्पत्तिः। गन्धादिविषयकं ज्ञानं प्रत्यक्षं यत् तद् यदि प्रमेयात् पूर्व्वं पश्चाद्गन्धादिप्रमेयसिद्धिस्तदा इदं गन्धविषयज्ञानमिन्द्रियार्थसन्निकर्षान्नोत्पद्यते, पश्चात् सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः। प्रमेयात् पश्चात् प्रमाणं सिद्धमिति चेत् तदा प्रमाणे खल्वसति केन प्रमीयमाणोऽर्थः प्रमेयः स्यात्? प्रमाणेन हि प्रमीयमाणोऽर्थः प्रमेयमिति सिध्यति। युगपत्सिद्धौ प्रमाणप्रमेययोः प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम्। यदि प्रमाणं प्रमेयमिति द्वे युगपद्भवतः तर्हि च गन्धादिष्विन्द्रियार्थेषु ज्ञानानि प्रतिविषयनियतानि युगपत् स्युरिति ज्ञानानां प्रतिविषयनियतत्वात् क्रमवृत्तित्वाभावः। या इमा घ्राणजादिबुद्धयः क्रमेणार्थेषु प्रवर्त्तन्ते तासां क्रमवृत्तित्वं न सम्भवतीति व्याघाततश्च युगपज्ज्ञानानुपपत्ती मनसो लिङ्गमिति मनो ह्यणु चैकं न युगपदनेकेष्विन्द्रियेषु प्रवर्त्तते तस्मात् क्रमवृत्तित्वं बुद्धीनां ततो विषयाणां युगपद्भावेन प्रमेयत्वमनुपपन्नमिति; तस्मात् प्रत्यक्षादीनां प्रमाणत्वं न सम्भवति

निर्म्मुक्ताः, तपोज्ञानबलेनेति रजस्तमोनिर्म्मुक्तौ कारणत्वेन योजनीयं, त्रिकालमिति अतीतानागतवर्त्तमानविषयम्, अमलमिति यथार्थग्राहित्वेन, अव्याहतमिति क्वचिदपि विषयेऽकुण्ठितप्रवृत्तित्वेन;

आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम् ।
सत्यं वक्ष्यन्ति ते कस्मान्नीरजस्तमसो मृषा * ॥ ६ ॥

इति। अत्रोच्यते—उपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्व्वपरसहभावाद्यथा दर्शनं विभागवचनम्। क्वचिदुपलब्धिहेतुः पूर्व्वं पश्चादुपलब्धिविषयः। यथादित्यस्य प्रकाश उत्पद्यमानानाम्। क्वचित् पूर्व्वमुपलब्धिविषयः पश्चादुपलब्धिहेतुर्यथावस्थितानां प्रदीपः। क्वचिदुपलब्धिहेतुरुपलब्धिविषयश्च सह सम्भवतो द्वौ. यथा धूमेनाग्नेर्ग्रहणमिति। उपलब्धिहेतुश्च प्रमाणं नाम परीक्षा प्रमेयन्तूपलब्धिविषयः परीक्ष्यः। एव प्रमाणप्रमेययोः पूर्व्वपरसहभावे खल्वनियतेऽर्थौ यथा दृश्यते तथा विभज्य वाच्य इति। तत्त्रैकाल्येन प्रतिषेधानुपपत्तिः सामान्येन खल्वु विभज्य प्रतिषेध उक्त इति समाख्याहेतोर्हानोपादानोपेक्षाबुद्धिजनकव्यवसायप्रवर्त्तन्या बुद्धेस्त्रैकाल्ययोगात्। तथाभूता समाख्या। यत् पुनरिदं पश्चात् सिद्धं च प्रमाणेन प्रमीयमाणोऽर्थः प्रमेयमिति विज्ञायत इति। प्रमाणमित्येतस्याः समाख्याया उपलब्धिहेतुत्वं व्यवसायप्रवर्त्तनाधर्मो निमित्तं तस्य त्रैकाल्ययोगः। उपलब्धिमकार्षीत. उपलब्धिं करोति. उपलब्धिं करिष्यति. इति समाख्याहेतोस्त्रैकाल्ययोगात् समाख्या तथाभूता। प्रमितोऽनेनार्थः प्रमीयते प्रमास्यत इति प्रमाणम्। प्रमितं प्रमीयते प्रमास्यत इति च प्रमेयम्। एवं सति भविष्यति अस्मिन् हेतुत उपलब्धिः प्रमास्यतेऽयमर्थः। प्रमेयमिदमित्येतत् सर्व्वं भवतीति। त्रैकाल्यानभ्यनुज्ञाने च व्यवहारानुपपत्तिः। यश्चैवं नाभ्यनुजानीयात् तस्य पाचकमानय पक्ष्यति लावकमानय लविष्यति इति नोपपद्यत इति।

अथाप्तोपदेशादीनामप्रामाण्यं त्रैकाल्यासिद्धेरित्येवमादिवाक्येन प्रमाणप्रतिषेधे खल्विदं भवान् प्रष्टव्यः। अनेन प्रतिषेधेन भवता किं क्रियत इति? किं सम्भवः प्रमाणानां निवर्त्तते. अथासम्भवो ज्ञाप्यत इति? यदि तत्सम्भवो निवर्त्यते, सति सम्भवे प्रत्यक्षादीनां प्रतिषेधानुपपत्तिः। यो हि घटं दृष्ट्वा आह अयं घट इति तत् प्रमाणमेव न त्वघटः स इति तत्प्रतिषेधो निष्फलः। अथ यद्यसम्भवो

आप्ताः रजस्तमोरूपदोषक्षयः, तद्युक्ता आप्ताः. शासति जगत् कृत्स्नं कार्य्याकार्य्यप्रवृत्तिनिवृत्त्युपदेशेनेति शिष्टाः, बोद्धव्यं विशेषेण बुद्धमेतैरिति विबुद्धाः; आप्ताः शिष्टाः विबुद्धा

* असत्यं नीरजस्तमाः इति क्वचित्कः पाठः।

प्राप्यते प्रमाणलक्षणं प्राप्तस्तर्हि प्रतिषेधः प्रमाणासम्भवस्योपलब्धिहेतुत्वादिति। किञ्चातः त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः। त्रैकाल्यासिद्धेः प्रमाणप्रतिषेधस्यानुपपत्तिस्त्रैकाल्यासिद्धेः। पूर्व्वं हि प्रतिषेधसिद्धौ खल्वसति प्रतिषेध्येऽनेन किं प्रतिषिध्यते ? पश्चात् प्रतिषेधसिद्धौ प्रतिषेध्यासिद्धिः प्रतिषेधाभावात्। युगपत् प्रतिषेधप्रतिषेध्ययोः सिद्धावभ्यनुज्ञानादनर्थकः प्रतिषेधः प्रतिषेध्यप्रमाणस्य सिद्धेः। प्रतिषेधलक्षणे च वाक्येऽनुपपद्यमाने सिद्धमाप्तोपदेशादीनां प्रामाण्यमिति। सर्व्वप्रमाणप्रतिषेधाच्च प्रमाणप्रतिषेधानुपपत्तिः। कथमिति चेत् ? तदोच्यते त्रैकाल्यासिद्धेरित्यस्य हेतोर्यद्युदाहरणमुपादीयते तदा हेत्वर्थस्य त्रैकाल्यासिद्धेरित्यस्य प्रत्यक्षादीनामप्रामाण्यसाधकत्वं दृष्टान्ते भवता दर्शयितव्यमिति। नहि दृष्टान्तोपन्यासकरणे प्रत्यक्षादीनामप्रामाण्यं न भवति। तद्यथा प्रत्यक्षादीनामप्रामाण्यमुपादीयमानमप्युदाहरणं नार्थं साधयिष्यतीति सोऽयं सर्व्वप्रमाणैर्व्याहतो हेतुरहेतुः। प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरित्यस्य हेतोर्यद्युदाहरणं भवतोपादीयते तदा हेत्वर्थस्य प्रत्यक्षादीनामप्रामाण्यसाधकत्वं दृष्टान्ते भवता दर्शयितव्यमिति। नहि दृष्टान्तोपन्यासे प्रत्यक्षादीनामप्रामाण्यं न भवति। दृष्टान्तेन खल्दाहरणप्रदर्शने स एव दृष्टान्तः प्रत्यक्षप्रमाणमन्यद्वा प्रमाणमेव भवति। न हि ऋते प्रमाणादन्यः कोऽपि दृष्टान्तः कर्त्तुं शक्यः स्यात्। यद्येवमप्रमाणीभूतदृष्टान्तेनोदाहरणमुपादीयते तदा तदुदाहरणं प्रत्यक्षादीनामप्रामाण्यमर्थं न साधयिष्यति तस्यैवाप्रामाण्यात्। इत्युदाहरणादिभिः सर्व्वैरवयवैः प्रमाणैर्व्याहत एव त्रैकाल्यासिद्धेरिति हेतुरहेतुर्भवति। अयं हि विरुद्धाख्योऽहेतुः। सिद्धान्तमभ्युपेत्य तद्विरोधी हि विरुद्धः इति वाक्यार्थो यस्य विरुद्धाख्यस्याहेतोर्लक्षणस्य सिद्धान्तः। स च वाक्यार्थः खलु यं सिद्धान्तं प्रत्यक्षादीनामप्रामाण्यमभ्युपेत्य क्रियते तं सिद्धान्तं विरुणद्धि। यदि पञ्चावयवा नोपादीयन्ते तदा प्रतिषेधो नोपपद्यते हेतुत्वासिद्धेरिति। तत्प्रामाण्ये वा न सर्व्वप्रमाणविप्रतिषेधः। स्ववाक्ये प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरित्यादिप्रतिषेधलक्षणे पञ्चावयवभूतानां प्रत्यक्षादीनामप्रामाण्ये सति परवाक्ये खलु प्रत्यक्षादिप्रामाण्यवादिनां वाक्येऽभ्यनुज्ञायमाने प्रत्यक्षादीनामवयवभूतानां प्रामाण्यं प्रसज्यते चाविशेषादिति। एवञ्च

इति संज्ञात्रयेणाप्तानां लोके प्रसिद्धिं दर्शयति। तेषामाप्तानां वाक्यमसंशयं निश्चितं सत्यं यथार्थमित्यर्थः। तत्राप्तवाक्यसत्यत्वे हेतुमाह—बुध्यान्त ते कस्मादसत्यं नीरजस्तमा इति। तमप्

तत्प्रामाण्ये सर्व्वाणि प्रमाणानि न प्रतिषिध्यन्ते इति विप्रतिषेधो न स्यादिति। त्रैकाल्याप्रतिषेधश्च शब्दाद्यातोद्यसिद्धिवत् तत्सिद्धेः। प्रत्यक्षादीनामप्रामाण्य-साधने त्रैकाल्यस्य प्रतिषेधो न युक्तः। तत्रैकमुदाहरणं दर्शयति—शब्दा-द्यातोद्यसिद्धिवदिति। यथा पश्चात्सिद्धेन शब्देन पूर्व्वं सिद्धमातोद्यमनुमीयते। साध्यञ्चातोद्यं साधनं शब्दः। अन्तर्हिते ह्यातोद्ये स्वनतोऽनुमानमातोद्यस्य भवतीति। वीणा वाद्यते वंशी पूर्य्यत इति शब्दविशेषेणातोद्यविशेषः प्रतिपद्यते। तथा पूर्व्वसिद्धं वस्तूपलब्धिहेतुना प्रतिपद्यते। एवं शेषमुदाहर्त्तव्यमिति। इत्येवमाप्तोपदेशादीनां प्रामाण्ये सिद्धेऽपि प्रमेयत्वं न सिध्यति। यद्धि प्रमाणं न तत् प्रमेयं भवितुमर्हति स्वज्ञानसाधनत्वाभावात् स्वस्येत्यत उच्यते। प्रमेयता च तुलाप्रामाण्यवत्। गुरुत्वपरिमाणज्ञानसाधनं तुलाप्रमाणं ज्ञान-विषयो गुरुद्रव्यं सुवर्णादि प्रमेयम्। यदा तु सुवर्णादिना तुलान्तरं व्यवस्थाप्यते तदा तुलान्तरप्रतिपत्तौ सुवर्णादि प्रमाणं तुलान्तरं द्रव्यं प्रमेयमिति। एवमनेन प्रमाणेनापरं प्रमाणं यदा प्रमीयते तदा प्रमेयं, यदा तेन किञ्चित् प्रमीयते तदाप्रमाणमिति। तद्यथा प्रमेयेष्वात्मा पठित इच्छादिभिर्लिङ्गै-रनुमीयते। स एव घटाद्युपलब्धौ प्रमाता यथा घटं पश्यतीत्येवमादि। एवं बुद्धिश्च प्रमेयेषु पठिता। सा पुनरिन्द्रियार्थसन्निकर्षोत्पन्नाऽव्यभिचारिण्य-व्यपदेश्या व्यवसायात्मिका प्रत्यक्षं प्रमाणम्। तथा हि प्रमीयते घटादिरिति। उपलब्धिविषयत्वात् तु प्रमेयमुभयाभावात् प्रमितिरित्येकया बुद्ध्या बुद्धिरपरा प्रमीयत इति प्रमाणमपि प्रमेयमिति वात्स्यायनाक्षपादौ।

अथाप्तोपदेशाधीनत्वात् प्रत्यक्षादीनां प्रथममाप्तोपदेशं निरूपयितुमाप्तं लक्षयति आप्तास्तावदित्यादि। रजस्तमोभ्यामिति। तपस्तपस्या, ज्ञानं योगसमाधिसिद्धिजातं तत्त्वज्ञानं, तदेव बलमिति। तपोज्ञानबलेन ये रजस्तमोभ्यां निर्म्मुक्ता निःशेषेण मुक्ताः, एवं येषां विनापि तपोज्ञान-बलं त्रैकालममलमव्याहतं ज्ञानं सदा वर्त्तते, ते तपोयोगसमाधिसिद्धा महर्षयो ब्रह्मादयश्च आप्ता उच्यन्ते। शिष्टा विबुद्धाश्चेत्यनर्थान्तरम्। वात्स्यायनश्चाह च—"आप्तः खलु साक्षात्कृतधर्म्मा यथादृष्टमर्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा। साक्षात्करणमर्थस्याप्तिः, तया प्रवर्त्तत इत्याप्तः। ऋष्यार्य्य-म्लेच्छानां समानं लक्षणम्। तथा च सर्व्वेषां लोके व्यवहाराः प्रवर्त्तन्त

प्रत्ययमात्रः शब्दः, तेन, नीरजस्त्वपकर्षेण तमोऽपि प्रचुरत्वं भवति, न हि सर्व्वथा नीरजस्के

इति ।" शिष्टा इति । स्वशक्तिबलेन कार्य्याकार्य्ये हिताहिते नित्यानित्ये प्रवृत्तिनिवृत्त्युपदेशस्य चिकीर्षया प्रयुक्ता यथार्थशासनमर्थस्य शिष्टिः, तया प्रवर्त्तन्ते इति शिष्टाः । एवं विबुद्धा इति । विशिष्टा यथार्थभूता बुद्धिस्तया प्रवर्त्तन्ते ये ते विबुद्धा इति । तत्र प्रश्नः—सत्यं वक्ष्यन्ति ते कस्मादिति । तत्रोत्तरम्—नारजस्तमसो मृषा । तपोज्ञानबलेन सहजत्वेन च रजोस्तमोभ्यां निर्म्मुक्तत्वादरजस्तमसो जनस्य न मृषा मिथ्यावचनमस्ति । 'नीरजस्तमसोऽमृषा' इति पाठेऽपि स एवार्थः । अमृषा इति बहुवचनान्तपाठे नीरजस्तमसो जनाः । अमृषा नास्ति मृषावचनं येषां ते । 'असत्यं नारजस्तमाः' इति पाठे अरजस्तमाः पुरुषा नासत्यं वक्ष्यन्ति । अतिशयेनारजसः पुरुषा अरजस्तमाः पुरुषा असत्यं न वक्ष्यन्ति । रजसो निवृत्तौ तमोनिवृत्तेन हि तमो विना रजो वर्त्तत इति । ननु येषां रजस्तमोमयशरीरत्वेऽपि रजस्तमोनिर्म्मुक्तं सहजं सहजमेव चित्तं तेषां त्रैकालमव्याहतममलं ज्ञानं सत्यवचनञ्च भवतु । ये पुनस्तपोज्ञानबलेन रजस्तमोभ्यां निर्म्मुक्तास्ते कथं सत्यमेव वक्ष्यन्तीति चेत् ? न । तपोयोगसमाधिसिद्धौ परमेश्वरसाक्षात्करणेन तदुज्ज्वलितचित्तत्वात् । सांख्ये कपिलेनाप्युक्तम्—"योगिनामवाह्यप्रत्यक्षत्वान्न दोषः" । योगिनां योगसमाधौ वाह्यवृत्तिनिरोधेऽप्यवाह्यानामाभ्यन्तराणामर्थानां मनसा प्रत्यक्षत्वान्न प्रत्यक्षलक्षणे न्यूनत्वदोषः । "लीनवस्तुलब्धातिशयसम्बन्धाद्वा" । योगिनां योगकाले तत्र तत्र संयमदेशे यत्र लीनं चित्तं भवति तत्तद्वस्तुनि लब्धो योऽतिशयोऽर्थस्तत्सम्बन्धाच्चित्तस्य तदाकारोल्लेखात् विज्ञानस्य योगजं नाम प्रत्यक्षमुच्यते । तस्माद्वा प्रत्यक्षलक्षणं न न्यूनत्वदोषः । नहि योगिनामीश्वरे संयमादीश्वराकारेणाभिनिष्पत्तौ द्रष्टुरभावात् प्रत्यक्षानुपपत्तिरिति चेत् ? न । "ईश्वरासिद्धेः" योगिनां समाधौ खल्वीश्वरे संयमात् पृथिव्यादीनां मनसि मनसश्च प्रज्ञाने लये प्रज्ञानस्य तामसस्य महतो राजसे महत्तत्त्वे लये राजसस्य महतः सात्त्विके महति लये सात्त्विको महांश्चित्तमित्यात्मनोऽभिधीयते । तेन प्रज्ञानेन प्राज्ञ एष आत्मा खल्वव्यक्ताख्यः समत्रिगुणलक्षण ईश्वरं रसमेव लब्ध्वानन्दी भवति, न त्वीश्वररूपेणाभिनिष्पद्यते । "मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः" । योगिनामीश्वरे संयमादीश्वरसाक्षात्करणे मुक्तबद्धभावान्यतरा-

पुरुषे तमो भवति ; यदुक्तं—"नारजस्कं तमः" इति . वक्ष्यन्ति ते कस्मादसत्यं ? न कस्मादपीत्यर्थः ; असत्यं मिथ्याज्ञानाद्वाऽभिधीयते, सम्यग्ज्ञानेऽपि रागद्वेषाभ्यां वाभिधीयते ; तच्च त्रितयमपि

भावान्न तदीश्वररूपेणाभिनिष्पत्तिसिद्धिः । तदा हि स योगी न मुक्तो देह-सद्भावात्, न वा बद्धो बन्धकारणाविवेकाद्यभावात्, नोभयथाप्यसत्कारत्वम् । योगसमाधित ईश्वरसाक्षात्करणे खलु मुक्तत्वाभावे बन्धाभावे चासत्कारत्वं न भवति । यतः, "तत्सन्निधानादधिष्ठितत्वं मणिवत्" जवाकुसुमादि-सन्निधानाद् यथा स्फटिकादौ मणौ तत्कुसुमाभाधिष्ठितत्वं भवति तथा योगसमाधित ईश्वरसाक्षात्करणेन तदीश्वरसन्निधानात् तदीश्वरेणाधिष्ठितत्वं तस्य योगिनः स्यात् । "तेन हि विशेषकार्य्यमिति जीवानाम्" सिद्धयोगसमा-धीनां जीवतां जीवानां विशेषकार्य्यमिति प्रशंसा । विशेषकार्य्यन्तु तेषां "सिद्ध-रूपबोद्धृत्वाद् यथार्थोपदेशः" । सिद्धयोगसमाधियोगिनां जीवतामीश्वर-सान्निधानादीश्वराधिष्ठितत्वात् सिद्धरूपाणां यद् यद्वस्तु यद्रूपं तत्तद्रूपाणां याथार्थ्येन बोद्धृत्वात् सर्व्वेषां भावानां यथार्थोपदेशः कार्य्यविशेषः सिद्धयोग-समाधेरिति । एवं यथार्थोपदेशशक्तिस्तु सिद्धयोगानाम् । "अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवत्" ईश्वराधिष्ठानेन सिद्धयोगानामन्तःकरणस्य खल्वात्मनो मनसो महत्तरवस्य रजस्तमसोरपनयनात् केवलसात्त्विकत्वे तत्सात्त्विक-महताधिष्ठितत्वान्मनसोऽपि रजस्तमसोर्व्यपगतत्वादुज्ज्वलितत्वादत एव रज-स्तमोभ्यां निर्म्मुक्ता योगिनो भवन्ति । लोहवत् । स्पर्शमणिस्पर्शनेन यथा लोहस्य मलापहरणेन सुवर्णभावादुज्ज्वलितत्वं तीक्ष्णत्वं वा तथान्तः-करणस्येति कपिलवचनेन स्पष्टं रजस्तमोभ्यां निर्म्मुक्तत्वमिति । त्रिविधं रोगविशेषविज्ञानीये च वक्ष्यते । तत्रोपदेशो नामाप्तवचनम्, आप्ता ह्यवितर्कस्मृतिविभागविदो निष्प्रीत्युपतापदर्शिनः । तेषामेवंगुणयोगाद् यद्वचनं तत् प्रमाणम् । अप्रमाणं पुनर्मत्तोन्मत्तमूर्खरक्तदुष्टादुष्टवचनमिति ; आप्तवचनं वेदादिकमिह वक्ष्यते । कपिलेनाक्षपादेन चोक्तम्— "आप्तोपदेशः शब्दः" इति । तत्र शब्द्यते उपदिश्यते योऽर्थः स शब्द इत्यविरोधः । यत् पुनर्वक्ष्यते रोगभिषग्जितीये—शब्दो नाम वर्णसमाम्नायः । स चतुर्व्विधो दृष्टार्थश्चादृष्टार्थश्च सत्यश्चानृतश्चेति । तत्र शब्द्यतेऽर्थ उपदिश्यतेऽनेन वर्णसमाम्नायेनेति शब्द इत्यविरोधस्ताभ्या-मिति । अथात्र विप्रतिपद्यन्ते—अस्तु दृष्टार्थश्चैव सत्यः शब्द आप्तोपदेशः प्रमाणमर्थस्यावधारणात् । अनृतश्च दृष्टार्थादृष्टार्थः शब्दो यो वेदादिः ।

मिथ्याज्ञानमरागद्वेषरूपं रजस्तमोनिर्म्मुक्ते सत्त्वगुणोद्रेकादमलविज्ञाने न सम्भवतीत्यर्थः ; यदि वा,

"तदप्रामाण्यमनृतव्याघातपुनरुक्तिदोषेभ्यः" पुत्रकामेष्टिहवनाभ्यासेषु। तस्य वेदादेर्न प्रमाणत्वम्। कस्मात्? अनृतदोषात्। पुत्रकामेष्टौ, पुत्रकामः पुत्रेष्ट्या यजेतेति। नेष्टौ संस्थितायां पुत्रजन्म दृश्यते। दृष्टार्थवाक्यस्यानृतत्वाददृष्टार्थमपि वाक्यमनृतमग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादि। विहितस्य हवने व्याघाताच्च तस्य वेदादेरप्रामाण्यम्। व्याघातश्चायम्। उदिते होतव्यमनुदिते होतव्यं समयाध्युषिते होतव्यम्—इति विधाय विहितं व्याहन्ति। श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति। शबलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोति। श्यावशबलौ वास्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति। अध्युषिते खल्दितानुदिताधिककाले इति। व्याघाताच्च दृष्टार्थस्याप्यप्रामाण्यम्। चिकित्सिते हि प्रयोगस्यातियोगायोगमिथ्यायोगैः क्रियाया असिद्धिरिति। पुनरुक्तिदोषाच्च वेदादेरप्रामाण्यमभ्यासे। पदावृत्तिरभ्यासः पदावर्त्तने दृश्यमाने खलु वाच्यमाने त्रिः प्रथमामन्वाह त्रिरुत्तमामिति पुनरुक्तो दोषः। पुनरुक्तं हि प्रमत्तवाक्यमिति। तत्र सिद्धान्त उच्यते—वेदादिशास्त्राणामप्रामाण्यं "न कर्म्मकर्त्तृसाधनवैगुण्यात्।" अनृतदोषो हि न वेदादेः। पुत्रकामेष्टौ हि यत्र कर्म्मकर्त्तृसाधनवैगुण्यं भवति तदा न पुत्रजन्म स्यात्। सम्भोगो दम्पत्योः कर्म्मकर्त्तारौ दम्पती, इष्टिः करणं साधनम्। त्रयाणां गुणयोगात् पुत्रजन्म, वैगुण्याद्विपर्य्ययः। पुत्रेष्टिकरणेऽपि सम्भोगस्य कर्म्मणो वैगुण्यं—पाठवीभ्यां प्रयातायामनुतानायां वा निषेकः समीहा भ्रंशश्च। कर्त्तृवैगुण्यम्—अविद्वान् याजकः कपूयाचरणश्च। साधनवैगुण्यं हविरसंस्कृतमुपहतमित्येवमादि। न च व्याघातः। "अभ्युपेत्य कालभेदे दोषवचनात्।" न हि हवने व्याघातः। योऽभ्युपगतं हवनकालं भिनत्ति ततोऽन्यत्र जुहोति तत्रायमभ्युपगतकालभेदे दोष उच्यते। श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोतीत्यादि, तदिदं विधिभ्रंशे निन्दावचनम्। न च पुनरुक्तदोषोऽभ्यासे। "अनुवादोपपत्तेश्च।" अनर्थकोऽभ्यासः पुनरुक्त उच्यते। अर्थवांस्तु खल्वभ्यासोऽनुवादः। न पुनरुक्तः, उपपत्तेः। सोऽयमभ्यासस्त्रिः प्रथमामन्वाह त्रिरुत्तमामित्यनुवादो ह्युपपद्यतेऽर्थवत्त्वात्। इदमहं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेण अववाधे योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इति। पञ्चदश सामिधेनीर्वज्रं मन्त्रोऽभि-

"नीरजस्तमसो मृषा" इति पाठः सुगमः; एतच्चाप्तलक्षणं सहजासम्भ्रमाभिप्रायेण, [illegible]

वदति, तदभ्यासमन्तरेण न भवति। त्रिवचनेन ह्यस्मिन् मन्त्रे प्रथमोत्तमयोरिति योऽस्मान् द्वेष्टीति प्रथमपुरुषयोगे तिङ्प्रयोगघटितमन्त्रः। तस्यानुवाद उत्तममिति। यञ्च वयं द्विष्म इत्युत्तमपुरुषयोगे तिङ्प्रयोगघटितमन्त्रस्त्रिरन्वाह त्रिः पठेदित्यभ्यासे पुनरुक्तदोषो न भवति अनुवादस्यार्थवत्त्वात्। एवम्। "वाक्यविभागस्य चार्थग्रहणात्" न पुनरुक्तदोषः। यथा लोके प्रमाण शब्दस्तथा ब्राह्मणात्मकवाक्यानां विभागश्च त्रिविधः। तस्यार्थग्रहणान्न पुनरुक्तदोषः। "विध्यर्थवादानुवादवचनविनियोगात्" वाक्यविभागस्त्रिविधः। ब्राह्मणात्मकवाक्यानि त्रिविधानि विनियुक्तानि विधिवचनानि अर्थवादवचनानि अनुवादवचनानीति। "विधिर्विधायकः"। यद्वाक्यं विधायकं कर्म्मणश्चोदकं स विधिः। विधिस्तु नियोगोऽनज्ञा वा। विधिं ब्रुवन्ति यानि वाक्यानि तानि विधिवचनानि। तैर्विनियोगः क्रियते। यथाग्निहोत्रं जुहुयात् स्वर्गकाम इत्येवमादि। वाक्येष्वेषु नियुज्यः स्वर्गकामः पुरुषस्तस्य प्रवृत्तिजनकव्यापारः प्रवर्त्तना प्रचोदनेत्यनर्थान्तरम्। स एव विधानकर्त्ता। विधायको विधिस्तस्मिन्नर्थे लिङादीनिङां विधानात् तत्तल्लिङोऽर्थः स्वर्गकामपुरुषस्य प्रवृत्तिजनकव्यापारः। स्वजन्यत्वेन पुरुषप्रवृत्तौ सोऽन्वेतव्यः प्रवृत्तेर्धात्वर्थक्रियायामन्वेतव्यः। तथा च प्रवृत्तिजनकव्यापारजन्यनियोगजन्या या स्वर्गकामपुरुषाश्रया प्रवृत्तिस्तस्याश्चोऽग्निहोत्रकर्म्मको होमः। अत्र नियोक्ता वेदः। यथा लोके खल्विहाद्य भुञ्जीत भवानित्यादौ नियोक्ता वक्ता। स च विध्यर्थलिङा बोध्य इति। अथार्थवादवचनवाक्यं चतुर्द्धा। "स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः।" विधेः फलवादलक्षणा या प्रशंसा नामाशीः सा स्तुतिः, सम्प्रत्ययार्था। स्तूयमानमर्थं श्रद्दधीतेति प्रवर्त्तिका च। फलश्रवणाद्धि प्रवर्त्तते। यथा—सर्व्वजितो वै देवाः सर्व्वमजयन् सर्व्वस्याप्त्यै सर्व्वस्य जित्यै सर्व्वमेवैतेनाप्नोति सर्व्वं जयतीत्येवमादि। अनिष्टफलवादो निन्दा, वर्ज्जनार्थः; निन्दितं न समाचरेदिति। यथा स वा एष प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽन्येन यजेत, स गर्त्ते पतत्ययमेवैतज्जीर्य्यते वा इत्येवमादि। अन्यकर्त्तृकस्य व्याहतस्य विधेर्व्वादः परकृतिः। यथा—हुत्वा वपामेवाग्रेऽभिघारयन्ति, अथ पृषदाज्यम्। तदुह चरकाध्वर्य्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति। अग्नेः प्राणाः पृषदाज्यं स्तोममित्येवमभिदधतीत्येवमादि।

पुरुषाणामाप्तत्वं प्रतिविषयसम्यग्ज्ञानसम्भवेन तद्विषयरागद्वेषासम्भवेन च बोद्धव्यम्; एतेन,

एतिह्यसमाचरितो विधिः पुराकल्पः। यथा—तस्माद्वा एतेन ब्राह्मणा हविः पवमानं सामस्तोममस्तौषन। यो मे यज्ञं प्रतनवामहे इत्येवमादि। कथं परकृतिपुराकल्पावर्थवादाविति नाशङ्काम्। स्तुतिनिन्दावाक्येनाभिसम्बन्धात् विध्याश्रयस्य कस्यचिदर्थस्य द्योतनादर्थवादाविति। "विधिविहितस्यानुवचनमनुवादः।" विध्यनुवचनञ्च विहितानुवचनञ्च अनुवादः। विध्यनुवचनं शब्दानुवादः। विहितानुवचनमर्थानुवादः। यथा पुनरुक्तं द्विविधमेवमनुवादोऽपि द्विविधः। अधिकारार्थं हि विहितमनूद्यते। विहितमधिकृत्य स्तुतिर्वोच्यते निन्दा वा विधिशेषो वाभिधीयते। विहितानन्तरार्थोऽपि चानुवादो भवति। एवमन्यदप्युत्प्रेक्षणीयम्। लोकेऽपि च विधिरर्थवादोऽनुवाद इति च त्रिविधं वाक्यम्। ओदनं पचेदिति विधिवाक्यम्। आयुर्वर्चो बलं सुखं प्रतिभानञ्चान्ने प्रतिष्ठितमित्यर्थवादवाक्यम्। पचतु पचतु भवानित्यभ्यासः, क्षिप्रं पच्यतामिति वा। अङ्ग पच्यतामित्यध्येषणार्थम्। पच्यतामेवेति वाऽवधारणार्थम्। यथा लौकिके वाक्ये विभागेनार्थग्रहणात् प्रमाणत्वं, तथा वेदवाक्येऽपि विभागेनार्थग्रहणात् प्रमाणत्वं भवितुमर्हतीति। अथ खल्वेवमपि वेदस्य प्रमाणत्वं न स्यात्। यतः—"नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः।" पुनरुक्तं दोषत्वादसाधु। साधुरनुवादो निर्दोषत्वादित्येष विशेषो नोपपद्यते शब्दाभ्यासोपपत्तेः। उभयत्र हि प्रतीतार्थः शब्दोऽभ्यस्यते। चरितार्थस्य शब्दस्याभ्यासात् उभयमसाधु—इति। "शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः।" अनुवादपुनरुक्तयोरविशेषो न भवति। विशेष एवास्ति, अभ्यासात्। अर्थवदभ्यासस्यानुवादत्वं समानेऽभ्यासे पुनरुक्तत्वमनर्थकं पुनरुक्तमर्थवाननुवाद इत्येवं विशेषः। शीघ्रतरगमनोपदेशवत् शीघ्रं शीघ्रं गम्यतां शीघ्रतरं गम्यतामिति क्रियातिशयोऽभ्यासेनैवोच्यते। एवमन्योऽप्यभ्यास ऊह्यः। पचति पचतीति क्रियानुपरमः। ग्रामो ग्रामो रमणीय इति वीप्सा। परि परि त्रिगर्त्तेभ्यो वृष्टो देव इति परिवर्ज्जनम्। अध्यधिकुड्यं निषण्णमिति सामीप्यम्। तिक्तं तिक्तमिति प्रकारः। एवमनुवादस्य स्तुतिनिन्दाशेषविधिषु अधिकारार्थता विहितार्थता चेति। वेदस्यानृतव्याघातपुनरुक्तदोषाभावात्प्रामाण्यमिति।

आप्तोपदेशशब्दरूपप्रमाणलक्षणमुक्तं भवति; बुद्धिप्रमाणपक्षे तु आप्तोपदेशजनिता बुद्धिः प्रमाणमिति बोद्धव्यम् ॥ ६ ॥

**आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात् प्रवर्त्तते ।**
**व्यक्ता तदात्वे या बुद्धिः प्रत्यक्षं सा निरुच्यते ॥ ७ ॥**

तत्राह वादी—न खलु प्रतिपक्षहेतुद्वारमात्रादेव शब्दस्य प्रमाणत्वं सिध्यतीति ।

तत्राह सिद्धान्तम्—"मन्त्रायुर्व्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ।" यदायुर्व्वेदेनोपदिश्यते—इदं कृत्वेष्टमाप्नोति वर्ज्जयित्वा चेदमनिष्टं नाप्नोति—तथानुष्ठाने तथैव स्यात सत्यार्थत्वात् । अतोऽन्यथा विपर्य्ययः स्यात् । मन्त्रपदानाञ्च प्रयोगे सर्पराक्षसभयत्रादौ तदर्थस्य प्रत्यक्षदर्शनाच्च प्रामाण्यमाप्तवचनप्रामाण्यकृतं । तद्वन्निखिलवेदाद्याप्तवचनस्य प्रामाण्यमाप्तानां प्रामाण्यात् । आप्तप्रामाण्यं समाधिसिद्धिजनितसर्व्वार्थबोद्धृत्वयथार्थोपदेष्टृत्वं तेषां स्वयमेव बुध्यमानानामुपदेशादन्यन्नावरोधकारणमस्ति । तैरुपदिश्यमानं श्रुत्वा प्रतिपन्ना इयं हास्यन्त्यधिगम्यमेवाधिगमिष्यन्त्युपेक्ष्यमुपेक्षिष्यन्ते चेति त्रिविधेनाप्तोपदेशेन त्रिविधेनैवाप्तप्रामाण्येन परिगृहीतोऽर्थोऽनुष्ठीयमानोऽर्थसाधको भवतीत्याप्तोपदेशप्रामाण्यादेवाप्ताश्च प्रमाणमेव । नाधिकं तदन्तर्भूतत्वात् । दृष्टार्थेनाप्तोपदेशेन मन्त्रेणायुर्व्वेदेन चाथर्व्वान्तर्भूतेन वेदभागेनादृष्टार्थोऽपरो वेदभागोऽनुमातव्यः प्रमाणमिति । दृष्टार्थादृष्टार्थयोरेकस्य वेदस्यैव द्वयोर्भागयोरुपदेष्टुः समानत्वादिति । एवमाप्तोपदेशेऽन्तर्भूतस्य लोकेऽप्युपदेशस्य प्रामाण्यात् तदाश्रयो व्यवहारः । एष खल्वमुष्य पुत्रः पौत्रः प्रपौत्रः एतद्गोत्र एतत्प्रवर इत्येवमादि । प्रत्यक्षमपि च दृश्यमानमनुपदिष्टं न निश्चेतुं शक्नोति । वदति च किमिदं दृश्यत इति तस्मादुपदेशतो ज्ञानमन्तरेण प्रत्यक्षप्रमाणमपि न सिध्यति । तस्माद्वेदानां वेदमितिहासपुराणमपि समानोपदेष्टृत्वात् प्रमाणं मधुब्राह्मणेऽप्युक्तम्—तस्याथर्व्वाङ्गिरसानि मधुकृत इतिहासपुराणं पुष्पमित्यादि ॥ ६ ॥

गङ्गाधरः—इत्याप्तोपदेशाज्ज्ञातमेवार्थम् प्रत्यक्षेणोपलभ्यत इत्यत आप्तोपदेशानन्तरमुद्दिष्टं प्रत्यक्षं लक्ष्यते—आत्मेत्यादि । आत्मा चेतनाधातुरव्यक्तं नाम क्षेत्रज्ञाधिष्ठितं कालानुप्रविष्टं प्रधानं सत्त्वरजस्तमोलक्षणं मनसा

प्रत्यक्षलक्षणमाह—आत्मेन्द्रियेत्यादि । सन्निकर्षादिति सम्बन्धात्, स च सम्बन्धः—संयोगः, समवायः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवेतसमवायः, तद्विशेषणविशेष्यभावलक्षणो बोद्धव्यः । व्यक्ता इत्यनेन व्यभिचारिणीमयथार्थबुद्धिं संशयञ्च निरा-

नित्यानुबन्धं सत्त्वभूतगुणेन्द्रिययोगाच्चैतन्ये कारणमिति। इन्द्रियाणि पञ्च चक्षुरादीनि प्रागुक्तानीन्द्रियोपक्रमणीये, बुद्धिहेतुत्वात्। न तु कर्म्मेन्द्रियाणि पञ्च पाग्वादीनि, पाय्वादिसन्निकर्षे ज्ञानानुत्पत्तेश्च। तेषां स्वस्वार्थग्राहित्वं मनःपुरःसरत्वेन प्रागुक्तम्। मन इति सत्त्वसंज्ञकं, तदपि प्रागिन्द्रियोपक्रमणीये व्याख्यातम्। अर्थाश्च तत्रैवोक्ताः पञ्च शब्दादयः। न तु मनोऽर्थश्चिन्त्यादिः प्रमाणाधिकारान्मानसप्रत्यक्षस्याप्रामाण्यात्। मानस-प्रत्यक्षा हि वक्ष्यन्ते—चिन्त्यविचार्य्यादयो मनोऽर्था इति। आत्मप्रत्यक्षास्तु ज्ञानेच्छाद्वेषसुखदुःखप्रयत्ना इति। तेषां येन कश्चित् किमपि यादृशं चिन्तयति विचारयत्यपरोऽन्यथा चिन्तयति विचारयति तथा येन कश्चित् सुखमनुभवति शत्रुमरणेन तेन तच्छत्रुवान्धवा दुःखमनुभवन्तीति साधारणविषयत्वाभावात् न तन्मानसप्रत्यक्षमात्मप्रत्यक्षञ्च प्रमाणम्। योगिनां योगसमाधौ यत् प्रत्यक्षं तदपि तेषामेव न सर्व्वेषां जनानां प्रत्यक्षं सम्भवति। तैरुपदेशश्चाप्तोपदेश इति। तस्मान्मानसप्रत्यक्षमात्मप्रत्यक्षं, प्रत्यक्षज्ञानमेव न प्रमाणम्। अतोऽत्रार्थाः पञ्च शब्दादयः। तेषां ग्रहणार्थमिन्द्रियाणि मनः पुरःसरति संयोगाय यदा तदा तैर्मनःसंयुक्तरात्मनाभीप्सितः शब्दादिरर्थः सन्निकृष्यते, तदा खल्वात्मना स्वाभीप्सार्थमभीप्सता मनो नियुज्यते। तेन नियुक्तञ्च मन-स्तदर्थग्राहकमिन्द्रियं स्पर्शनेन्द्रियवत्मना गच्छति। मनोयुक्तञ्च तदिन्द्रिय स्वार्थं सन्निकृष्टमेव गृह्णाति। सन्निकर्षश्चावरणाद्यभावे सान्निध्यं यावन्मात्र-व्यवधानेनार्थो ग्रहणमर्हति तावन्मात्रम्। पूर्व्वमुक्तमिन्द्रियार्थसत्त्वात्म-सन्निकर्षजाश्चक्षुर्बुद्ध्यादिकाः क्षणिका निश्चयात्मिकाश्चेति। तेन कतिधा-पुरुषीये वक्ष्यते—"या यदिन्द्रियमाश्रित्य जन्तोर्बुद्धिः प्रवर्त्तते। याति सा तेन निर्द्देशं मनसा च मनोभवा॥" इति। षड्विधा बुद्धयः। तासु मध्ये या बुद्धिरात्मना नियुज्यमानमनःसंयुक्तश्रोत्राद्यन्यतमेन्द्रियाणां स्वार्थेन सह सन्निकर्षात् तदात्वे तात्कालिकी व्यक्ता खल्वव्यभिचारिण्यव्यपदेश्या व्यव-सायात्मिका प्रवर्त्तते सा प्रत्यक्षं नाम परीक्षा प्रमाणं निरुच्यते। स्मृत्यनु-मानादीनां तदात्वाभावान्न प्रत्यक्षत्वम्। पूर्व्वानुभूतार्थस्य हि स्मरणं स्मृतिः। प्रत्यक्षपूर्व्वं हि ज्ञानमनुमानमिति। अनेन प्रत्यक्षज्ञानेन जन्यते या ज्ञानोपा-दानोपेक्षान्यतमा बुद्धिः सा प्रमा। वक्ष्यते च कतिधापुरुषीये—"इन्द्रियाभि-

करोति ; तत्राद्ये तल्लक्षणम्, अनेन च प्रत्यक्षज्ञानानन्तरोत्पन्नानुमानज्ञानं स्मरणञ्च परम्परया

ग्रहः कर्म्म मनसस्तस्य निग्रहः। ऊहो विचारश्च ततः परं बुद्धिः प्रवर्त्तते॥ इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते। कल्प्यते मनसा तूद्ध्वं गुणतो दोषतो यथा॥ जायते विषये तत्र या बुद्धिर्निश्चयात्मिका। व्यवस्यते तया वक्तुं कर्त्तुं वा बुद्धिपूर्व्वकम्॥" इति। इन्द्रियेणाभीप्सितमर्थं जिघृक्षु मनस्तदिन्द्रियमभिमुखीभूय गृह्णातीतीन्द्रियाभिग्रहो मनसः कर्म्म। तदर्थस्य तदिन्द्रियेण ग्रहणानन्तरमस्य तदिन्द्रियस्य तदर्थान्निग्रहो निवृत्तिस्तु मनसः कर्म्म। ततोऽनन्तरं तस्मिन् गृहीतेऽर्थे ऊहस्तक इदमेवमेवंगुण इत्येवमादिर्विचारश्च मनसः कर्म्म। ततः परं बुद्धिः प्रवर्त्तते।

तद् यथा—समनस्केनेन्द्रियेण तदिन्द्रियार्थो गृह्यते। ततः ऊद्ध्वं स गृहीतोऽर्थो गुणतो यथा स्यात् दोषतश्च यथा स्यात् तथा मनसा कल्प्यते। तत्र विषयेऽर्थे तथा गुणतो दोषतः कल्पनया खल्वूहविचाराभ्यां या निश्चयात्मिका बुद्धिर्जायते तया निश्चयात्मिकया बुद्ध्या बुद्धिपूर्व्वकमूहविचारपूर्व्वकं वक्तुं कर्त्तुं वा व्यवस्यते, इति सा निश्चयात्मिका बुद्धिर्व्यवसायसाधिका व्यवसायात्मिकाऽभिधीयते। तत्र या व्यवसायात्मिका बुद्धिरात्मनाभीप्सितार्थग्रहणाय नियुक्तमनसा युक्तेनेन्द्रियेण सहार्थस्य सन्निकर्षात् प्रवर्त्तते सा प्रत्यक्षं नाम, प्रमाणं पञ्चविधं—चाक्षुषं श्रावणं त्वाचं रासनं घ्राणजमिति। तद्धानबुद्धिर्दोषतो विचारेण। गुणतो विचारेणोपादानबुद्धिः। उपेक्षाबुद्धिस्तु गुणदोषोभयाभावतः कल्पनया भवति, सा प्रमा। इन्द्रियोपक्रमणीये सन्निकर्षो व्याख्यातः। इत्थमेवाक्षपादगौतमेनाप्युक्तम्। तद् यथा—"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणम्" इत्युद्दिष्टम्। अथ तल्लक्षणं क्रमेणोक्तं सपरीक्षम्। तद् यथा—"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्।" घ्राणरसनचक्षुस्त्वक्छ्रोत्राणीन्द्रियाणि भूतेभ्यः। पृथिव्यापस्तेजोवायुराकाशमिति भूतानि। गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः। व्याख्यातश्च वात्स्यायनेन इन्द्रियस्यार्थेन सन्निकर्षात् उत्पद्यते यज्ज्ञानं तत् प्रत्यक्षम्। तहींदानीमिदं न भवति। आत्मा मनसा सह स्वयमेव संयुज्यते, मनश्च स्वयमेवेन्द्रियेण सह संयुज्यते, तदिन्द्रियं चार्थेन सह स्वयमेव युज्यते इति। नेदं कारणावधारणमिन्द्रियार्थसन्निकर्षादिति। एतावत् प्रत्यक्षकारणमिति। किन्तु विशिष्टकारणवचनमिति यत् प्रत्यक्षज्ञानस्य

आत्मेन्द्रियमनोऽर्थसन्निकर्षजं व्यवच्छिनत्ति ; आत्मादिचतुष्टयसन्निकर्षाभिधानञ्च प्रत्यक्षकारणाभि-

विशिष्टकारणं तदुच्यते । यत् तु समानमनुमानादिज्ञानस्य न तन्निवर्त्त्यत इति । मनसस्तर्हीन्द्रियेण संयोगो वक्तव्यः । भिद्यमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यत इति समानत्वान्नोक्तः । आत्ममनःसंयोगदिग्देशकालाकाशानि ज्ञानस्य सर्व्वस्यैव सामान्यकारणानि वर्त्तन्त एव । आप्तेर्येन येन वाक्येनोपदिश्यते श्रुत्वा तद्वाक्यमर्थमवगम्य जानाति घट एष पट एष इति श्रावणं ज्ञानं, शाब्दमिन्द्रियार्थसन्निकर्षोत्पन्नत्वात् प्रत्यक्षं प्रसज्यते । यावन्तो ह्यर्थास्तावन्त एव नामधेयशब्दा घटाद्यर्था घटादयः शब्दाः, तैर्घटादिशब्दैर्घटादयोऽर्थाः सम्प्रतीयन्ते ; अर्थसम्प्रत्ययाच्च व्यवहारः । तत्र खल्विन्द्रियार्थसन्निकर्षात उत्पन्नं घटादिवस्तुज्ञानं रूपमिति वा रस इति वा शब्द इति वेत्येवमादि । रूपरसशब्दाश्च विषयनामधेयं, तेन व्यपदिश्यते ज्ञानं रूपमिति जानीते रस इति जानीते इति नामधेयशब्देन व्यपदिश्यमानं सत् खलु शाब्दं ज्ञानं प्रसज्यते । तत आह—व्यपदेश्यमिति । शब्दार्थसम्बन्धे त्वनुपयुक्त यदिदमर्थज्ञानं न तन्नामधेयशब्देन व्यपदिश्यते । गृहीते च शब्दार्थसम्बन्धेऽस्यार्थस्यायं शब्दो नामधेयमिति । यदा तु स एव रूपादिरर्थो गृह्यते, तत्र पूर्व्वं रूपमिदं रसोऽयमित्येवमाप्तोपदेशतो यज्ज्ञानं तज्ज्ञानात्र रूपादिदर्शनज्ञानं विशिष्यते । तदाप्तोपदिष्टरूपादिज्ञानं रूपादिदर्शनज्ञानमेव भवति । तस्य त्वर्थज्ञानस्य चाक्षुषादेः समाख्याशब्दो नास्ति येन शब्देन प्रतीयमानोऽर्थो व्यवहाराय कल्पेत । न चाप्रतीयमानेन व्यवहारः स्यात् । तस्य खल्वर्थस्य यस्यार्थस्य संज्ञाशब्देनेतिकर्त्तव्यतायुक्तेन निर्दिश्यते । रूपमिदमिति ज्ञानं रसोऽयमिति ज्ञानमिति न तु व्यपदिश्यते । चक्षुरादिभी रूपादीन् न गृहीत्वा तत्तदर्थज्ञानकाले समाख्याशब्दो न व्याप्रियते, व्यवहारकाले तु व्याप्रियते । तस्मादशाब्दमिन्द्रियार्थसन्निकर्षोत्पन्नमर्थज्ञानं प्रत्यक्षमित्यव्यपदेश्यविशेषणेनोक्तम् । अथाव्यभिचारीति विशेषणेन ग्रीष्मे मरीचयो भौमेनोष्मणा संसृष्टाः स्पन्दमाना दूरस्थस्य चक्षुषा सन्निकृष्यन्ते । तत्रेन्द्रियार्थसन्निकर्षादुदकमिति ज्ञानमुत्पद्यते । तस्य प्रत्यक्षत्वप्रसङ्गो वार्य्यते । यदतस्मिंस्तदिति तद् व्यभिचारि । यत् तु तस्मिंस्तदिति तदव्यभिचारि ज्ञानं प्रत्यक्षमिति ।

अथ दूराच्चक्षुषायं पुरुषोऽर्थं पश्यन्नावधारयति । धूम इति वा रेणुरिति वा वदेत् । तदिन्द्रियार्थसन्निकर्षोत्पन्नमनवधारणज्ञानमव्यभिचारि भवदपि

ज्ञानपरं, तेन "इन्द्रियार्थसन्निकर्षात् प्रवर्त्तते वा" इत्येतावदेव लक्षणं बोद्धव्यम्, एतेन

प्रत्यक्षं प्रसज्यत इत्यत उक्तं व्यवसायात्मकमिति। व्यवसायो हि गुणतो दोषतः कल्पनया निश्चयात्मिकया बुद्ध्या भवति। चक्षुषा ह्ययमर्थं पश्यन् नावधारयति मनसा हीन्द्रियेणोपलब्धमर्थमुपलभते। एवमिन्द्रियेणानवधारयन् मनसा नावधारयति। यच्चैतदिन्द्रियानवधारणपूर्व्वकं मनसानवधारणं तद्विशेषापेक्षं विमर्शमात्रं संशयो न प्रत्यक्षमिति। सर्व्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेणार्थग्रहणादूर्द्ध्वमूहविचाराभ्यां गुणतो दोषतो वा कल्पनया निश्चयज्ञानाद् व्यवसायः पश्चान्मनसा तदनुव्यवसायः। उपहतेन्द्रियाणामनव्यवसायाभावात्। एवं सति आत्मादिषु सुखादिषु च प्रत्यक्षलक्षणं वक्तव्यम्। तद्ध्यनिन्द्रियार्थसन्निकर्षजमिति चेत्? तदोच्यते— सत एव मनस इन्द्रियत्वेऽपीन्द्रियेभ्यः पृथगुपदेशो धर्म्मभेदात् कृतो न त्विन्द्रियत्वप्रतिषेधार्थम्। भौतिकानीन्द्रियाणि गन्धादिनियतविषयाणि सगुणानाञ्च घ्राणादीनामिन्द्रियत्वं. गुणाश्च तेषां गन्धादयः। मनस्तु अभौतिकं सर्व्वविषयं न चास्य गन्धादिगुणवत्त्वेनेन्द्रियभावः। सर्व्वेन्द्रियचेष्टाप्रत्ययभूतञ्च मन इति धर्म्मभेदः। सति चेन्द्रियार्थसन्निकर्षे मनसः सन्निधिमसन्निधिञ्च युगपज्ज्ञानानुपपत्तिकारणं वक्ष्यते इति।

तर्हि किं मनसश्चेन्द्रियभावान्न लक्षणान्तरं वाच्यमिति? तन्त्रान्तरसमाचाराच्चैतत् प्रत्येतव्यमिति। परमतमप्रतिषिद्धमनुमतमिति। तत्रयुक्तिरिति चेत्? तदुच्यते— यदिहेन्द्रियपदेन मनो गृह्यते तर्हि चास्य प्रत्यक्षलक्षणस्य परीक्षायां वक्ष्यमाणानाम्। "प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात्।" "नात्ममनसो सन्निकर्षाभावे प्रत्यक्षोत्पत्तिरिति।" तत्र सिद्धान्तसूत्रम्। "ज्ञानालिङ्गत्वादात्मनो नानवरोधः।" "तद्यौगपद्यलिङ्गत्वाच्च न मनसोऽनवरोधः" इति सूत्रवैयर्थ्यं स्यात्। तस्मादिह प्रमाणाधिकारे प्रमाणीभूतस्य प्रत्यक्षज्ञानस्येदं लक्षणं. न तु प्रत्यक्षज्ञानमात्रस्य। तस्मात् तन्त्रान्तरसमाचारादात्मादिसुखादिप्रत्यक्षार्थं लक्षणं बोध्यम्। इह प्रमाणाधिकारे मानसप्रत्यक्षलक्षणं न वाच्यमिति। ज्ञानलिङ्ग आत्मा युगपज्ज्ञानानुपपत्ती मनसो लिङ्गमित्यात्ममनःसन्निकर्षापेक्ष इन्द्रियार्थसन्निकर्षः प्रत्यक्षज्ञानकारणम्। प्रत्यक्षानुमानोपमानशब्दानां निमित्तमात्ममनःसन्निकर्ष इति समानः। प्रत्यक्षस्यैवेन्द्रियार्थसन्निकर्ष इत्यसमानः। इत्यसमानत्वादिन्द्रियार्थसन्निकर्षग्रहणमिह कृतम्। सुप्तव्यासक्तमनसाञ्चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात्। एकदा खल्वयं

सुखादिविषयमपि प्रत्यक्षं गृहीतं भवति, तत्र हि हेतुचतुष्टयसन्निकर्षो नास्ति, आत्मसन्निकर्षस्तु

सुप्तः प्रबोधकालं प्रणिधाय तत्प्रणिधानवशात् प्रबुध्यते। यदा तु तीव्रौ ध्वनिस्पर्शौ प्रणिधानमन्तरेण प्रबोधकारणं भवतस्तदा प्रसुप्तस्येन्द्रियार्थसन्निकर्षनिमित्तं प्रबोधज्ञानमुत्पद्यते। तत्र न ज्ञातुर्मनसश्च सन्निकर्षस्य प्राधान्यं भवति। किन्तु तर्हीन्द्रियार्थसन्निकर्षस्येति। न ह्यात्मा जिज्ञासमानः प्रयत्नेन तदा मनः प्रेरयतीति। एवमेकदा खल्वयं विषयान्तरसंसक्तमनाः सङ्कल्पवशाद्विषयान्तरं जिज्ञासमानः प्रयत्नात् प्रेरितेन मनसेन्द्रियं संयोज्य तद्विषयान्तरं जानीते। यदा तु खल्वस्य निःसङ्कल्पस्य निर्जिज्ञासस्य च व्यासक्तमनसो बाह्यविषयोपनिपतनात् ज्ञानमुत्पद्यते, तदेन्द्रियार्थसन्निकर्षस्य प्राधान्यम्। न ह्यत्रासौ जिज्ञासमानः प्रयत्नेन मनः प्रेरयतीति प्राधान्यात् इन्द्रियार्थसन्निकर्षस्य ग्रहणमिह कृतम्। कार्य्यगुणत्वान्नात्ममनसोः सन्निकर्षस्येति। एवमिन्द्रियार्थग्रहणस्य प्रयोजनञ्च। तैर्व्यपदेशो ज्ञानविशेषाणाम्। तैरिन्द्रियैरर्थैश्च व्यपदिश्यन्ते ज्ञानविशेषाः। घ्राणेन सुगन्धिं जिघ्रतीति सुगन्धिविषयं घ्राणजं ज्ञानम्। तथा चक्षुषा घटं पश्यतीति घटविषयं चाक्षुषं ज्ञानमित्येवं पञ्चेन्द्रियज्ञानानि व्यपदिश्यन्ते इति प्राधान्यमिन्द्रियार्थसन्निकर्षस्येति।

ननु सुप्तव्यासक्तमनसाञ्चेन्द्रियार्थयोः सन्निकर्षस्य ज्ञाननिमित्तत्वादिह ग्रहणमित्यत्र स हेतुः, व्याहतत्वादहेतुः। यदि तावत् खल्वात्ममनसोः सन्निकर्षस्य ज्ञानकारणत्वं नेष्यते तदा "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इत्यस्य व्याघातः। तदा मनसः सन्निकर्षमिन्द्रियार्थसन्निकर्षोऽपेक्षते। मनःसंयोगानपेक्षया च युगपज्ज्ञानोत्पत्तिप्रसङ्गः। नैवाव्याघातोऽभूत् सर्व्वविज्ञानानामात्ममनःसन्निकर्षस्य कारणत्वमिति वचनादेवाव्याघातो न स्यात्। ज्ञानकारणत्वेनात्ममनसोः सन्निकर्षस्य ग्रहणं कार्य्यमिति चेत्? न, अर्थविशेषप्राबल्यात्। नास्ति हि व्याघात आत्ममनसोः सन्निकर्षस्य ज्ञानकारणत्वव्यभिचारात्। इन्द्रियार्थसन्निकर्षस्य हि प्राधान्यमर्थविशेषप्राबल्यात्। सुप्तव्यासक्तमनसां हि युगपज्ज्ञानोत्पत्तिर्भवति। अर्थविशेषः कश्चिदेवेन्द्रियार्थः। तस्य प्राबल्यं तीव्रत्वपटुत्वे। तत्रार्थविशेषप्राबल्यमिन्द्रियार्थसन्निकर्षविषयं, न तु सुप्तव्यासक्तमनसामात्ममनःसन्निकर्ष-

प्रमाणज्ञानसाधारणत्वेनैव लक्षणार्थमुपयुक्तः ; इह च प्रत्यक्षफलरूपापि बुद्धिः प्रत्यक्षशब्देनाभिधीयते तथैव लोकव्यवहारात्, परमार्थतस्तु यतो भवतीन्द्रियार्थेरीदृशी बुद्धिस्तत् प्रत्यक्षम् ॥ ७ ॥

विषयम् । तस्मादिन्द्रियार्थसन्निकर्षः प्रधानमिति । असति खल्वात्मनः प्रणिधाने मनसः सङ्कल्पे चासति सुप्तव्यासक्तमनसां नृणां यत् प्रबलार्थतीव्रवज्रादिध्वन्यादिमनोहररूपादिसन्निकर्षादुत्पद्यते ज्ञानं प्रबोधरूपं तत्र प्रबोधत्वमात्मना सह तदैव तदर्थजनितमनःसंयोगो जायमानः कारणमिति । अतो मनःक्रिया च कारणं वक्तव्यमिति युगपत्प्रबलेन्द्रियार्थसन्निकर्षौ मनःक्रियात्ममनःसंयोगश्च भवति । यथैव ज्ञातुरिच्छाजनित एवार्थग्रहणायारम्भो मनसः प्रेरको ह्यात्मगुणस्तथात्मनि गुणान्तरञ्च सत्त्वस्य साधकं प्रवृत्तिदोषजनितमस्ति येन गुणेनात्मना प्रेरितं मन इन्द्रियेण सम्बध्यते । तेन गुणेन अप्रेर्यमाणे मनसि खल्वात्ममनःसंयोगाभावाज्ज्ञानानुत्पत्तौ सत्यामस्यात्मनः सर्वार्थिता निवर्त्तते । तस्मादात्मनि या नित्यैवानद्भूता चेतना वर्त्तते सैवास्य द्रव्यगुणकर्मभिरभिव्यज्यते । नित्यानुबन्धो हि मनस आत्मनि यदा सुप्तव्यासक्तमनसां प्रबलार्थेनेन्द्रियसन्निकर्षः स्यात् तदैवात्मनश्चैतन्यं व्यज्यमानं मनश्चेतयति । चेत्यमानमनःक्रियया चात्माप्युपचर्य्यते युगपदिति सक्रियत्वमात्मन एषितव्यं भवति । अन्यथाकाशादि पूर्व्वपूर्व्वभूतानुप्रविष्टानां चतुर्व्विधानां सूक्ष्माणां भूतानां मनसश्च सक्रियत्वात् ततोऽन्यस्य क्रियाहेतोः असम्भवात् शरीरेन्द्रियविषयाणामनुत्पत्तिप्रसङ्ग इति ।

अथेन्द्रियार्थसन्निकर्षस्य ज्ञानकारणत्वं नोपपद्यते । यतः अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः । इन्द्रियेणार्थस्याप्राप्यग्रहणं काचाद्यन्तर्गतानां तृणादीनामप्रतिहतं दर्शनं भवति । ततो व्यवहितेनेन्द्रियेणार्थः सन्निकृष्यते । व्यवधानेनार्थस्य प्राप्तिर्व्याहन्यते । यदि नक्तञ्चरनयनरश्मिदर्शनात् तद्रश्म्यर्थसन्निकर्षोऽर्थग्रहणहेतुः स्यात् तदा न व्यवहितस्य काचाद्यन्तर्गतस्य सन्निकर्षः स्यात् । ततोऽर्थग्रहणं न स्यात् । अस्ति च काचाद्यन्तरितानां व्यवहितानामुपलब्धिरित्यन्तु ज्ञापयति । अप्राप्यकारीणीन्द्रियाणि ततश्चाभौतिकानि । प्राप्यकारित्वं हि भौतिकधर्म्म इति चेत् ? न । कुड्यान्तरितानुपलब्धेरप्रतिषेधः । अप्राप्यकारित्वे यदीन्द्रियाणां कुड्यान्तरितानामनुपलब्धिश्च न स्यात् तदा प्राप्यकारित्वेऽपि काचाद्यन्तरितानामुपलब्धिर्न स्यात् प्राप्त्यभावात् । काचाद्यन्तरितानान्तु प्रत्यक्षे काचादिभिरप्रतिघातात् तत्सन्निकर्षोत्पत्तिः । न हि काचादयो नयनरश्मिं विष्टम्भन्ति । सोऽप्रतिहन्यमानः सन्निकृष्यते । अथ भौतिकस्य नाप्रतिघात इति चेत् ? न । आदित्यरश्मेः स्फटिकान्तरेऽपि दाह्येऽविघातात् । आदित्यरश्मेर्भौतिकस्याविघातात्

स्फटिकाद्यन्तरेऽप्यविघातात् दाहेऽप्यविघातान्न भौतिकस्याप्रतिघातप्रतिषेधः। कुम्भस्थमुदकमादित्यरश्मिस्तापयति, तथान्यच्च गृहान्तरादिकम्। द्रव्यान्तरस्य च वस्त्रादेरुष्णस्पर्शप्राप्तौ शीतस्पर्शाभिभव इति। एवं स्फटिकान्तरेऽपि तृणादौ प्रकाशनीये प्रदीपादिरश्मीनामप्रतिघातात् प्राप्तस्य ग्रहणमिति। तथा भर्ज्जनकपालस्थं द्रव्यमाग्नेयेन तेजसा दह्यते। तत्र भौतिकस्याप्रतिघातात् प्राप्तिः, प्राप्तौ हि दाहः स्यात्। न त्वप्राप्यकारि स्यात् तेज इति। अविघातादित्ययमविधानः खल्वव्यूह्यमानावयवेन व्यवधायकेन द्रव्येणासर्व्वतो द्रव्यस्य विष्टम्भः क्रियाहेतोरप्रतिबन्धः प्राप्तेरप्रतिषेध इति। दृष्टं हि कलस-निषिक्तानामपां वहिःशीतस्पर्शस्य ग्रहणम्। न चेन्द्रियेणासन्निकृष्टस्य द्रव्यस्य स्पर्शोपलब्धिः। दृष्टा च प्रस्यन्दपरिस्रावौ। तत्र काचादिभिनयनरश्मेः अप्रतिघाताद्विभिद्यार्थेन सह सन्निकर्षादुत्पन्नं ग्रहणमिति। अथ यं नेतरधर्म्म-प्रसङ्गात्। काचादिभिरिव कुड्यादिभिरप्रतिघातः कुड्यादिभिरिव वा काचा-दिभिः प्रतिघात इत्येवमितरधर्म्मप्रसङ्गान्न प्राप्यार्थग्रहणमिति चेत्? तत्र नियमोऽयम्। आदर्शोदकयोः प्रसादस्वाभाव्याद् रूपोपलब्धिवत् तदुपलब्धिः। यथा खल्वादर्शोदकयोः प्रसादस्वभावयोर्नैर्म्मल्यस्वधर्म्मयोः पश्चात्स्थितमलिन-द्रव्येण प्रतिहतपश्चात्प्रसादेन परावृत्तस्वमुखप्रतिबिम्बस्य सन्निकर्षे सति प्रतिरूपोपलब्धिरादर्शादेर्विशदरूपानुग्रहात् तन्निमित्तं प्रतिबिम्बग्रहणम्। तद्विशदरूपोपघाते मलाक्ते त्वादर्शादौ तत्प्रतिबिम्बाभावात्। तथा कुड्यादिषु च प्रतिबिम्बग्रहणं न भवति। तथैव काचादिभिरविघातश्चक्षूरश्मेः प्रसाद-स्वाभाव्यात्। कुड्यादिभिस्तु प्रतिघातो मलिनस्वाभाव्यादिति।

अपि च। दृष्टान्तानुमितानां नियोगप्रतिषेधानुपपत्तिः। प्रमाणस्य याथा-र्थ्येनार्थविषयत्वान्न खलु परीक्षमाणेन पुंसा दृष्टा अनुमिता वा निश्चयेन येऽर्थास्ते नियोक्तुं प्रतिषेद्धुं वा न शक्या भवन्ति। यद् यादृशं दृष्टं तत् तादृशं न भवति, भवति चान्यादृशमित्येवं रूपान्तरनियोगो यथार्थरूपप्रतिषेधो वा कर्त्तुं शक्यते। दृष्टानुमिताः खल्विमे द्रव्यधर्म्माः प्रतिघाताप्रतिघातयोरनुप-लब्ध्युपलब्धी व्यवस्थापिके भवतः। व्यवहितानुपलब्ध्याऽनुमीयते कुड्यादिभिः प्रतिघातः। व्यवहितोपलब्ध्या त्वनुमीयते काचादिभिरप्रतिघात इति। एवमेव सांख्यशास्त्रे कापिलेनापि प्राप्यार्थग्रहणमिन्द्रियाणामुक्तम्। तद्यथा। "नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्व्वप्राप्तेर्वा।" काचाद्यन्तर्वर्त्तिनां चक्षुषा प्रत्यक्षेण ग्रहणादिन्द्रियाणामप्राप्तार्थप्रकाशकत्वं न भवति, अप्राप्तेः।

इन्द्रियेणार्थस्यातिसन्निकर्षातिविप्रकर्षातिसौक्ष्म्यकरणदौर्ब्बल्याभिभवसमानाभिहारावरणमनोऽनवस्थानैरप्राप्तेः। न वार्थस्येन्द्रियेण सर्व्वप्राप्तेः प्राप्तप्रकाशकत्वम्। किन्तु प्राप्तानामेवार्थानां प्रकाशकत्वमिन्द्रियाणाम्। काचाद्यन्तर्वर्त्तिनामपि सन्निकर्षे सतीन्द्रियेण स्वज्योतिषा सूक्ष्मगुणेन काचाद्यन्तः प्रविश्य प्रकाशः क्रियते। न सर्व्वाङ्गप्राप्तेरिन्द्रियाणां सूक्ष्मत्वात्। सूक्ष्मं हि तेजो विशदं समानगुणैरावरणादिभिर्न प्रतिहननीयम्, प्रतिहननीयन्तु विपरीतगुणैः। तथा च काचादिभिः प्रसन्नैरावरणैरप्रतिहतं चक्षुस्तेजः सौक्ष्म्येण काचादिकं विभिद्यान्तः प्रविश्यार्थं काचाद्यन्तर्गतं प्रकाशयति, प्रसादगुणवद्द्रव्यानुग्रहात्। अन्धकारस्थं घटादिकमिव बाह्यालोकानुग्रहात्। अप्रसादगुणवद्भिः कुड्यादिभिश्चक्षुस्तेजो विपरीतगुणैरावरणैः प्रतिहतं चक्षुस्तेजः कुड्यान्तर्गतमर्थं न प्रकाशयति, कुड्यादि विभिद्यान्तःप्रवेशासामर्थ्यात्। इति।

अथैवम्भूतं प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः। वृक्षं पश्यतः खलु वृक्ष एष एवंगुण एवंदोष इत्येवमादि यदिन्द्रियार्थसन्निकर्षान्निश्चयात्मकमव्यपदेश्यमव्यभिचारि ज्ञानमुत्पद्यते तेनासौ हानमुपादानमुपेक्षितुं वा यद्व्यवस्यति तद्व्यवसायात्मकम्। ननु प्रत्यक्षं नाम ज्ञानं, न प्रत्यक्षं नाम प्रमाणान्तरम्। किं तर्हि प्रमाणं न स्यात्? स्यात् प्रमाणमनुमानं नाम। कस्मात्? एकदेशग्रहणाद् वृक्षादेरुपलब्धेः। चक्षुर्हि सूक्ष्मं यावन्मितं तावन्तमेव वृक्षस्यैकदेशमवयवं गृहीत्वा चक्षुषा वृक्षमुपलभते। न च वृक्षैकदेशो वृक्षः। तत्र यथा धूमं गृहीत्वा वह्निमनुमिनोति तथैकदेशं चक्षुषा गृहीत्वा वृक्षमनुमिनोतीति।

अत्र प्रश्नः—किं नु खलु वृक्षस्यैकदेशाद् गृह्यमाणादपरावयवमनुमेयं मन्यसे? तत्र द्वौ पक्षौ। अवयवसमूह एव वृक्षः। तस्यैकदेशग्रहणादवयवान्तराण्यनुमेयानि भवन्तीत्येकः पक्षः। अपरो द्रव्यान्तरोत्पत्तिरवयवसमूहसंयोगादेकं द्रव्यमुत्पद्यते। तानि चावयवान्तराण्यनुमेयानि तदवयवी चानुमेय इति द्वयमिति। तत्रावयवसमूह एवानुमेय इति चेत्? तदा तदेकदेशग्रहणादनुमाने वृक्षबुद्धिर्न स्यात्। न हि वृक्षोऽगृह्यमाणमेकदेशान्तरं गृह्यमाणैकदेशसहित एवावयवसमूहो वृक्ष इति। अथ चेदुच्यते—एकदेशग्रहणादेकदेशान्तरानुमाने समुदायप्रतिसन्धानात् तत्र वृक्षबुद्धिः स्यात्? तर्हि सा वृक्षबुद्धिर्नानुमानं भवति। सति चैवं भवितुमर्हतीति। द्रव्यान्तरोत्पत्तिपक्षे पुनरवयवी नानुमेयः स्यात्। तस्य हि एकदेशसम्बन्धस्य ग्रहणाभावात्। अस्त्येकदेशसम्बन्धग्रहणमयं वृक्षस्य स्कन्ध एषा शाखा पत्रञ्चैतदित्येवमवयावन एकदेशग्रहणेऽपि तदेक-

दृश्यसमुदायस्याविशेषादनुमेयत्वं नावयविनो भवति। तस्माद् वृक्षबुद्धिरनुमानं न भवति। इत्येवमेकदेशग्रहणमाश्रित्य प्रत्यक्षस्यानुमानत्वमनुपपन्नम्।

तथापि चेत्? उच्यते—वृक्षस्यैकदेशग्रहणादनुमीयते वृक्षस्य सर्व्वावयवसङ्घातः। तेन पुनस्तत्सर्व्वावयववान् वृक्ष इति चानुमीयते इति प्रत्यक्षमनुमानमेवेति चेत्? न। प्रत्यक्षेण यावत् तावदप्युपलम्भात्। यावदेकदेशग्रहणं भवताश्रीयते तावदेकदेशस्यापि प्रत्यक्षेणैवोपलम्भः। तस्मात् प्रत्यक्षं नानुमानमिति। न चैष उपलम्भो निर्विषयो भवति। यावच्चार्थजातमुपलभ्यते तावदेव तदुपलम्भस्य विषयः प्रत्यक्षव्यवस्थापकं भवति। किं पुनस्तदन्यदर्थजातमवयवी वा समुदायो वेति। न चैकदेशग्रहणमनुमानत्वोपपादकम् अवश्यं हेत्वभावादिति। अन्यथापि च प्रत्यक्षस्य नानुमानत्वप्रसङ्गः, तत्पूर्व्वकत्वात्। प्रत्यक्षपूर्व्वकं ह्यनुमानं सम्बद्धावग्निधूमौ प्रत्यक्षतो दृष्टवतो धूमं तत्प्रत्यक्षदर्शनादग्नावनुमानं भवति। यत्र च सम्बन्धयोर्लिङ्गलिङ्गिनोः प्रत्यक्षं यच्च लिङ्गमात्रप्रत्यक्षग्रहणं न लिङ्गिनः प्रत्यक्षं, तत्र लिङ्गग्रहणमन्तरेण नानुमानस्य प्रवृत्तिरस्ति। न चैतदनुमानमिन्द्रियार्थसन्निकर्षजत्वात् धूमज्ञानस्य। न चानुमेयस्य इन्द्रियार्थसन्निकर्षादनुमानं भवति। एवमेव प्रत्यक्षानुमानयोर्लक्षणभेदो महानाश्रयितव्य इति।

साङ्ख्ये कापिलेनाप्युक्तम् "अचाक्षुषाणामनुमानेन बोधो धूमादिभिरिव वह्नेरिति।" अथ तर्हि किं सर्व्वत्रैकदेशस्यैव प्रत्यक्षं न समुदायस्येति? "न चैकदेशोपलब्धिरवयविसद्भावात्।" एकदेशोपलब्धिमात्रं न प्रत्यक्षम्। तर्हि किं प्रत्यक्षम्? एकदेशोपलब्धिस्तत्सहचरितावयविनश्चोपलब्धिरिति द्वयमेव प्रत्यक्षम्। कस्मात्? अवयविसद्भावात्। अस्ति ह्ययमेकदेशव्यतिरिक्तोऽवयवी। तस्यावयवसङ्घातस्योपलब्धिकारणानि गन्धरसरूपस्पर्शादीनि प्राप्तस्य खल्वेकदेशोपलब्धौ सत्यामनुपलब्धिरनुपपन्ना भवति। अकृत्स्नग्रहणादनुपपन्नैवेति चेत्? न। प्रत्यक्षकारणगन्धादिनः खल्वस्यावयविन एकदेशाभावात्। न चावयवाः कृत्स्ना गृह्यन्ते। अवयवैरेवावयवान्तरव्यवधानात्। नावयवी च कार्त्स्न्येन गृह्यते। नायमवयवेषु गृह्यमाणेषु परिसमाप्त इति, सेयमेकदेशोपलब्धिर्न निवर्त्तते। कृत्स्नमिति हि निःशेषतायां सत्यां भवतीति शेषे सति त्वकृत्स्नमिति भवति। तच्चैतदवयवेषु बहुषु वर्त्तते। अव्यवधाने ग्रहणात् व्यवधाने चाग्रहणादिति। अथ खल्वङ्ग किं गृह्यमाणस्यावयविनस्त्वगृहीतं न्यत् येनैकदेशोपलब्धिः स्यादिति? न ह्यस्य प्रत्यक्षकारणेभ्यो गन्धादिभ्यो

भिन्ना एकदेशाः सम्भवन्तीति तत्रावयवकृत्स्नं प्रत्यक्षं नोपपद्यत इति। इदं तस्य वृत्तं येषामिन्द्रियार्थसन्निकर्षाद् ग्रहणमवयवानाम्। तैरवयवैः सहावयवी गृह्यते। येषामवयवानां व्यवधानादग्रहणं तैरवयवैः स नावयवी गृह्यते। न चैतत्कृतोऽस्ति भेदः। समुदायोऽप्यशेषतावान समुदायो वृक्षः स्यात्। तत्समाप्तिर्वा उभयथा ग्रहणभावः। मूलस्कन्धशाखापल्लवादीनामशेषतावान् समुदायो वृक्षः स्यात्। समाप्तिर्वा समुदायिनामिति—उभयथा समुदायभूतस्य वृक्षस्य ग्रहणं नोपपद्यते। अवयवस्तावदवयवान्तरस्य व्यवधानादशेषग्रहणं नोपपद्यते। एवं समाप्तिग्रहणमपि नोपपद्यते समाप्तिमतामग्रहणात्। सेयमेकदेशग्रहणसहचारिता वृक्षबुद्धि द्रव्यान्तरोपपत्तौ कल्पते. न समुदायमात्र इति। यदुक्तम् एकदेशोपलब्धिरवयविसद्भावादिति. तत्र साध्यत्वादवयविनि सन्देहः। अवयविसद्भावादित्ययं हेतुः समाप्तिमतामहेतुः साध्यत्वात्। साध्यन्तु खलु तावदेतत्कारणेभ्यो द्रव्यान्तरमुत्पद्यते। एकदेशग्रहणेन गृह्यते चावयवीति साध्यम्. अवयविसद्भावादिति हेतुरपि स एव। अतस्तु हेतोः साध्यत्वात् साध्यसमत्वादहेतुत्वमुपपद्यते। तदेकदेशग्रहणगृहीतोऽवयवी तदेकदेशसमानधर्म्मेण द्रव्यान्तरमुत्पद्यते। यस्यैकदेशग्रहणं तन्नोपपादितं स्यादिति। एवं सति विप्रतिपत्तिमात्रं भवति। विप्रतिपत्तेश्चावयविनि संशयः—किं समुदायो वृक्षोऽन्यो वेति।

तत्राह—सर्व्वाग्रहणमवयव्यसिद्धेः। यद्यवयवी नास्ति तदा सर्व्वग्रहणं नोपपद्यते। किं पुनस्तत् सर्व्वं? द्रव्यगुणकर्म्मसमवायसामान्यविशेषाः। कथं कृत्वा परमाणुसमवस्थानं तावद् दर्शनविषयो न भवतीति. अतीन्द्रियत्वादणूनाम्। द्रव्यान्तरञ्चावयविभूतं दर्शनविषयो नास्तीति। दर्शनविषयस्थाश्चेमे द्रव्यादयो गृह्यन्ते। तेन निरधिष्ठाना न गृह्येरन्। गृह्यन्ते तु कुम्भोऽयं श्याम एको महान् संयुक्तः स्पन्दतेऽस्ति मृन्मयश्चेति। सन्ति चेमेऽत्र गुणादयो धर्म्मा इति। तेन सर्व्वस्य ग्रहणात् पश्यामोऽस्ति द्रव्यान्तरभूतोऽवयवीति। एवमवयविसिद्धेः सर्व्वग्रहणम्। "धारणाकर्षणोपपत्तेश्च।" धारणाकर्षणे द्वे संग्रहकारिते भवतः। संग्रहो नाम संयोगसहचारितं गुणान्तरम्। यथा ह्यपां स्नेहद्रवत्वपैच्छिल्यकारितं मृदादिद्रव्यान्तरेण संयोगादामे कुम्भे गुणान्तरमग्निसंयोगात् पक्वे तत्रैव कुम्भे पुनर्गुणान्तरमुष्णतीक्ष्णत्वादिकारितम्। यदि तदामे कुम्भे यद्गुणान्तरं पक्वे च पुनर्यद्गुणान्तरं स एव संग्रहो नाम तत्संग्रहकारिते चेद्धारणाकर्षणे द्वे नाभविष्यतामथ ते द्वे यद्यवयविकारिते अभविष्यतां

तदा पांशुराशिप्रभृतिष्वपि ते द्वे गुणान्तरे अभ्यास्येताम्। द्रव्यान्तरानुत्पत्तौ च तृणोपलकाष्ठादिषु प्राणिसंगृहीतेष्वपि धारणाकर्षणे नाभविष्यतामिति तस्मात् सर्व्वग्रहणमेव। अथावयविनं प्रत्याचक्षाण आह—मा भूत् प्रत्यक्षलोप इति। अणुसञ्चयं दर्शनविषयमिति प्रतिज्ञातवान किमनुयोज्य इति? एकमिदं द्रव्यमित्येकबुद्धिविषयम्। पर्य्यनुयोज्यस्तु किमेकबुद्धिरभिन्नार्थविषया? आहोस्विदनेकार्थविषयेति? अभिन्नार्थविषयेति चेत्, अर्थान्तरानुज्ञानात् अवयविसिद्धिः। नानार्थविषयेति चेत्, भिन्नेष्वेकदर्शनानुपपत्तिः। अनेकस्मिन एक इति व्याहता बुद्धिर्न दृश्यत इति।

"सेनावनवद् ग्रहणमिति चेत् नातीन्द्रियत्वादणूनाम्।" यथा सेनाङ्गेषु वनाङ्गेषु च दूरादगृह्यमाणपृथक्त्वेषु एकमिदमिति बुद्धिरुपपद्यते, तथा परमाणुषु सञ्चितेष्वगृह्यमाणपृथक्त्वेष्वेकमिदमिति बुद्धिरुपपद्यते। दूरात् अगृह्यमाणपृथक्त्वानां सेनाङ्गानां वनाङ्गानाञ्च यथा च कारणान्तरतो दूरात् पृथक्त्वस्य न ग्रहणम्। तद्यथा। अगृह्यमाणजातीनां धव इति वा खदिर इति वा जातिग्रहणं दूरान्न भवति। एवमगृह्यमाणप्रस्पन्दानां सेनावनाङ्गानां दूरात् प्रस्पन्दनग्रहो न भवति। तथा च गृह्यमाणेऽप्यर्थसमूहे पृथक्त्वस्याग्रहणादेकमिति भाक्तः प्रत्ययो भवति, न त्वणूनाम्। तथा संघाते गृह्यमाणेऽप्यगृह्यमाणपृथक्त्वानां कारणतः पृथक्त्वस्याग्रहणाद्भाक्त एकप्रत्ययो भवति। कस्मात्? अतीन्द्रियत्वादणूनामिति। तथा चाणूनां संघातस्यैवैकप्रत्ययो भवति घट इति पट इति। न त्वणूनां भाक्तोऽपि प्रत्ययो भवति सेनावनाङ्गवत्। अतीन्द्रियत्वादिति गोतमाक्षपादः। साङ्ख्यशास्त्रे कपिलेन विवेकाद् बन्धध्वंसमुपदिश्य तद्विवेकजनकप्रत्यक्षलक्षणमुक्तम्। न केवलं प्रमाणभूतप्रत्यक्षलक्षणमुक्तम्। तेन योगजप्रत्यक्षमिह प्रमाणभूतप्रत्यक्षाधिकारे चरकाक्षपादाभ्यां नोक्तमिति अविरोधः। कपिलेन यत् प्रत्यक्षलक्षणमुक्तं, तद्यथा "यत्सम्बन्धं सद्यत्तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षम्।" व्याख्यानञ्चैतत् यद्विज्ञानं यत् सम्बन्धं सत्। यत्रार्थे यतो जायमानं जन्यत्वेन सम्बन्धयुक्तं सत्। तदाकारोल्लेखि तत् तद्विषयकत्वतज्जन्यत्वाभ्यां नाम्नोल्लेखयुक्तं भवति तद्विज्ञानं तस्यार्थस्य प्रत्यक्षं भवति। विशेषेण ज्ञायते येन तद्विज्ञानम्। खल्विदमेवं दोषाद्धेयमिदमेवंगुणत्वादुपादेयमिदं पुनर्दोषगुणाभावेन प्रयोजनाभावादुपेक्ष्यमित्येवं निश्चीय व्यवस्यति येन तज्ज्ञानं विज्ञानम्। यथा खल्वयं चक्षुषा घटं पश्यन् मनसा वितर्क्यायं मृन्मय एतल्लक्षण एतत्प्रयोजनाय हेय एतदर्थ-

मुपादेय एतदर्थं तूपेक्ष्य इति निश्चिनोति। तत् खलु तद्घटसम्बन्धं तद्घट-सन्निकृष्टचक्षुर्जन्यं घटविषयकं चाक्षुषं ज्ञानमित्येव नाम्नोल्लेखयुक्तं प्रत्यक्ष-मुच्यते। तन्निश्चयज्ञानं व्यवसायलक्षणम्। तेन हि निश्चित्य व्यवस्यति भो ईदृशं घटमानय नेदृशमित्येवमादिव्यवसायः क्रियते। विषयाणामानन्त्याद् विषयभेदेनानन्तमपि चाक्षुषत्वादिभेदेन षड्विधं तदाकारेणोल्लेखात्। तत्-तद्विषयकं चाक्षुषं प्रत्यक्षं तत्तद्विषयकं घ्राणजं ज्ञानं रासनं ज्ञानं त्वाचं ज्ञानं श्रावणं ज्ञानमिति पञ्चधा लौकिकम्। तथा सुखादिविषयकं मानसं ज्ञानञ्च लौकिकमात्मादिविषयकन्तु योगजं मानसमलौकिकमित्युभयं मानसज्ञानं न प्रत्यक्षमपि न प्रमाणं सार्व्वजनीनत्वाभावात् निश्चयत्वाभावाच्च। योऽयं धन-बान्धवादिभिः सुखमनुभवति तैश्च तस्य शत्रुर्दुःखमनुभवतीति। यदि प्रत्यक्षमेव प्रमाणं भवति नहि चानुमानादीनां मानसज्ञानत्वेन प्रामाण्ये सिद्धे पृथग्-वचनानर्थक्यात्। यथा तथा भवत्वनुमानादिकं ज्ञानं मानसज्ञानमेवेति तस्मात् पञ्चविधमिन्द्रियज्ञानं प्रत्यक्षं नामप्रमाणम्। न मानसं ज्ञानं प्रत्यक्षं नाम प्रमाणम्। यत् तु मानसज्ञानं प्रमाणं भवति तदनुमानादिनामधेयं भवति। सुखादिकन्तु मानसप्रत्यक्षप्रमाणाविषयत्वेऽपि प्रमेयमनुमानादिविषयत्वात्।

अथैवं समाधौ योगिनामवाह्यप्रत्यक्षे तु योगजज्ञानमित्याकारोल्लेखेन तत्तदिन्द्रियमनोभिस्तु तदाकारोल्लेखाभावात् प्रत्यक्षलक्षणस्याव्याप्तिदोषः इति चेत्? तदोच्यते "योगिनामवाह्यप्रत्यक्षत्वान्न दोषः"। योगिनां समाधौ चित्तस्य वाह्यवृत्तिनिरोधेऽपि खल्ववाह्यानामर्थानां मनसा प्रत्यक्षत्वान्नाव्याप्ति-दोषः। कणादेनाप्युक्तम "आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम्। तथा द्रव्यान्तरेषु समाहितान्तःकरणानाम्। तत्समवायात् कर्म्मगुणेषु इति।" समाहितान्तःकरणानामात्ममनसोरात्मनि संयोगविशेषादात्मविषयं प्रत्यक्षं भवति। तथा द्रव्यान्तरेष्ववाह्येषु चात्ममनसोः संयोगविशेषात् प्रत्यक्षमिति योगजं मानसं विज्ञानमित्याकारेणोल्लेखान्न दोषः। अस्तु चैवमात्मादिप्रत्यक्ष-मीश्वरप्रत्यक्षे पुनरव्याप्तिः। योगशासने ह्युक्तं पतञ्जलिना—"योग-श्चित्तवृत्तिनिरोधः। वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः। प्रमाणविपर्य्यय-विकल्पनिद्रास्मृतयः। प्रत्यक्षानुमानागमाः प्रमाणानि। विपर्य्ययो मिथ्या-ज्ञानमतद्रूपप्रतिष्ठम्। शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः। अभावप्रत्ययालम्बना वृत्तिर्निद्रा। अनुभूतविषयासम्प्रमोषः स्मृतिः। अविद्याऽस्मितारागद्वेषाभि-निवेशाः क्लेशाः। अनित्याऽशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः

प्रत्यक्षपूर्व्वं त्रिविधं त्रिकालञ्चानुमीयते।
वह्निर्निगूढ़ो धूमेन मैथुनं गर्भदर्शनात्॥
एवं व्यवस्यन्त्यतीतं वीजात् फलमनागतम्।
दृष्ट्वा वीजात् फलं जातमिहैव सदृशं बुधाः॥ ८॥

अविद्या। दृग्दर्शनशक्त्योरेकात्मतेवास्मिता। सुखानुशयी रागः। दुःखानुशयी द्वेषः। स्वरसवाही विदुषोऽपि तथारूढ़ोऽभिनिवेशः।" इत्येवं पञ्चधा चित्तवृत्तिनिरोधे योगे योगिनामवाह्यार्थस्य मानसप्रत्यक्षासम्भवान्नेदं प्रत्यक्षलक्षणं भवति। तदा द्रष्टुः स्वरूपेणावस्थानात मनसश्च प्रज्ञाने लयादभावादिति दोषः। नायं दोषः। लीनवस्तुलब्धातिशयसम्बन्धाद्वा। योगिनां समाधौ तत्तत् संयमदेशविशेषे यत्र लीनं चित्तं भवति तत्तल्लीनवस्तुनि लब्धोऽतिशयो वृत्तिभ्यः पञ्चभ्योऽतिरिक्त एव योऽर्थ ईश्वरपर्य्यन्तस्तत्सम्बन्धाद्वा प्रत्यक्षं भवति। न तत्र लक्षणन्यूनत्वदोषः। तदानीं समाधौ पृथिव्यादीनामहङ्कारान्तानां महति तत्त्वे लयान्महता तत्त्वेन चेतसा त्वव्यक्ताख्य आत्मा पञ्चविंशं षड्विंशं सप्तविंशमष्टाविंशमेकोनत्रिंशं दृष्ट्वा त्रिंशं परमात्मानं शान्तं शिवमद्वैतमव्यवहार्य्यं पश्यति, योगसिद्धश्च भवति; न चेश्वररूपेणाभिनिष्पद्यत इति।

अथ वैशेषिके शास्त्रे कणादेनाप्युक्तम्—"अविद्या आत्मेन्द्रियमनोऽर्थसन्निकर्षाद् यन्निष्पद्यते तदन्यत्। सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि. अरूपिष्वचाक्षुषाणि। अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः। एतेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम्। तत्समवायात्कर्म्मगुणेषु"॥ ७॥

गङ्गाधरः—अथ प्रत्यक्षानन्तर्य्योद्दिष्टमनुमानं लक्ष्यते—प्रत्यक्षपूर्व्वमित्यादि। मानसे प्रत्यक्षे ज्ञाने यत् तु मानसं ज्ञानं प्रमाणं तदुपदेष्टुमनुमानमाह—प्रत्यक्षपूर्व्वमिति। प्रत्यक्षं पूर्व्वं यस्य तत् प्रत्यक्षपूर्व्वम्। त्रिविधं कारणं कार्य्यं सामान्यतो दृष्टम्। त्रिकालं भूतं भवद् भविष्यच्च। वस्तु यत् परोक्षं तदनु प्रत्यक्षात् पश्चाद् यन्मीयते ज्ञायते तदनुमानम्। प्रत्यक्षपूर्व्वमित्यनेन व्याप्तिं

चक्रपाणिः—अनुमानरूपमाह—प्रत्यक्षेत्यादि। प्रत्यक्षग्रहणं व्याप्तिग्राहकप्रमाणोपलक्षणार्थं, तेन, प्रत्यक्षपूर्व्वमिति व्याप्तिग्राहकप्रमाणपूर्व्वं। त्रिविधमित्यनुमानत्रैविध्यं दर्शयति, तेन, कार्य्यात् कारणानुमानं यथा—गर्भदर्शनान्मैथुनानुमानं, तथा कारणात् कार्य्यानुमानं यथा—वीजात्

यद् यस्य कारणं यस्य च कार्य्यस्य यत् कारणं यस्य च सामान्यं यत्र तयोस्तयोः सम्बन्धयोर्नियतसम्बन्धस्य प्रत्यक्षेण ज्ञानं लिङ्गज्ञानं तयोः परोक्षस्य लिङ्गस्मृतिश्च परोक्षस्य ज्ञाने हेतुरिति ज्ञापयिष्यते त्रिविधं रोगविशेषविज्ञानीये रोगभिषग्जितीये च विमाने। अनुमानं नाम तर्को युक्त्यपेक्ष इति। युक्तिश्च अत्रातः परं वक्ष्यते—बुद्धिः पश्यति या भावान् बहुकारणयोगजान्। युक्तिस्त्रिकाला सा ज्ञेया त्रिवर्गः साध्यते यया॥ इति। तेनात्र प्रत्यक्षपदं प्रत्यक्षादिव्यवसायात्मकज्ञानरूपप्रमाणोपलक्षितम्। अप्रत्यक्षाणामुपलब्धिकारणं लिङ्गं पञ्चविधं हेतुपूर्व्वरूपरूपोपशयसम्प्राप्तिभेदेन भवति। तत्पञ्चविधलिङ्गलिङ्गिनोः सम्बन्धज्ञानं प्रत्यक्षादिप्रमाणं पूर्व्वं यस्य तस्य तत्पञ्चविधलिङ्गदर्शनादिना तल्लिङ्गकत्वेन तस्य च स्मृतितोऽप्रत्यक्षस्य मनसा यज्ज्ञानमव्यभिचारि व्यवसायात्मकं तदनुमानम्। तत् खलु बहुकारणयोगेनोपपत्तितो यत् यथा तत् तथा प्रकाशनानन्तरनिश्चयरूपम्। तेन हि गुणतो दोषतो वा निश्चित्य हातुमुपादातुमुपेक्षितुं वा वाङ्मनःशरीरकर्म्मभिर्व्यवस्यति। सम्बन्धश्च लिङ्गलिङ्गिनोः कार्य्यकारणभावः संयोगः समवायश्च। तत् सम्बन्धज्ञानञ्च प्रमाणावयवैः प्रत्यक्षाद्यन्यतमैकानेकैर्भवति। लिङ्गलिङ्गिनोऽर्थयः सम्बन्ध उभयोरेकतरस्य वा नियतधर्म्मसाहित्यं व्याप्तिरुच्यते। स चासकृत्प्रत्यक्षादिना निश्चीयते न सकृत्प्रत्यक्षादिना। तथा च कियदुदाहरति—वह्निर्निगूढो धूमेनेत्यादि। अतीतं कार्य्येण कारणमेवं व्यवस्यन्ति। यथा निगूढो वह्निर्धूमेनानुमीयते कुत्रचिदग्निः संवृतो वर्त्तत इति। यस्तु खलु पूर्व्वं दृष्टवान् धूमो जायते आर्द्रेन्धनजवह्नित एव नान्यस्मात्। ततो वह्निधूमयोर्नियतं धूमस्य धर्म्मस्य वह्नौ धर्म्मिणि साहित्यं ज्ञायते। जन्यजनकभावः सम्बन्धः। अत्र युक्तिः—न हि धूम आर्द्रेन्धनजवह्निमन्तरेण सम्भवति। यत्र कुत्रचिद् धूमो यदि वर्त्तते तदा तेनैव धूमेन तज्जनको वह्निरनुमीयते। गृहान्तरे य आर्द्रेन्धनजो वह्निस्तस्मादुत्तिष्ठन् धूम आकाशे गृहान्तरे वा यद्वर्त्तते तयोर्वह्निधूमयोर्विभागवत्तोनि संयोगः सम्बन्धः। किन्तु तेन धूमेनानु-

सहकारिकारणान्तरयुक्तात् फलानुमानं, तथाऽकार्य्यकारणभूतानाञ्च सामान्यतो दर्शनादनुमानं यथा—धूमाद्वर्संमानक्षणसम्बन्धादग्नेरनुमानम्, एतत् त्रिविधमनुमानं गृहीतं भवति; त्रिकालमित्यनेन त्रिकालविषयत्वमनुमानस्य दर्शयति; अनुमीयते इत्यत्र 'येन तदनुमानम्' इति वाक्यशेषः, तेन, व्याप्तिग्रहणादनु अनन्तरं मीयते सम्यक् निश्चीयते परोक्षार्थो येन तदनुमानं, व्याप्तिस्मरणसहायलिङ्गदर्शनमित्यर्थः। त्रिविधमिति यदुक्तं तस्योदाहरणं दर्शयति—वह्निरित्यादि।

मीयते वर्त्तते खलु कुत्रचिदस्य धूमस्य जनको निगूढो वह्निरिति। इति कार्य्येण कारणस्य वर्त्तमानस्यानुमानम्। एवमेवान्यत् सर्व्वं बोध्यम्। यथा देहेन्द्रियमनःसन्तापेन ज्वरो वर्त्तमानोऽनुमीयते, ज्वरस्य रूपं देहेन्द्रियमनःसन्ताप इत्याप्तोपदेशेन ज्वरस्य धर्म्मिणो धर्म्मस्य तत्सन्तापस्य नियतसाहित्य येन ज्ञातमसकृत् स यदा देहादिसन्तापं स्पर्शनेन जानाति तदा ज्वरमनुमिनोति। स एव ज्वरो यदि गूढलिङ्गो वर्त्तते रोगान्तरतया वा संशीयते तदा ज्वरप्रशमनैरौषधान्नविहारैः प्रयुक्तैस्तस्य व्याधेरुपशयतो ह्रासेन ज्ञातेन ज्वरोऽनुमीयते। अनुपशयतो वृद्ध्याऽनुमीयते रोगान्तरमिति नायं ज्वर इति। रूपेणोपशयेनानुपशयस्वरूपनिदानेन वर्त्तमानव्याधेरनुमानम्। इत्येवं स्वरूपलक्षणेनानुमितस्य व्याधेर्वातादिजत्वेनानुमाने यद् यद् वातादिज-स्वरूपं नामलिङ्गमुक्तं तेषु किञ्चिदव्यभिचारि किञ्चिच्च व्यभिचारि भवदपि तत्तदव्यभिचारिस्वरूप-लिङ्गसहचरित-वातादिजाव्यभिचारि-लिङ्गसहचरितत्वेन वातादिजत्वेनानुमाने लिङ्गं भवत्येव। यदा वातज्वरे कम्पः, कम्परोगे च कम्पः। पित्तज्वरे स्वेदः वातश्लेष्मज्वरेऽपि स्वेदः। तथा स्वेदादिरोगेऽपि स्वेद इत्येवमादि-लिङ्गमेव तत्तद्व्याधिप्रतिपत्तिसाधनत्वात्। प्रतिपत्तिसाधनं हि लिङ्गमिति। वक्ष्यते च निदानस्थाने—"लिङ्गञ्चैकमनेकस्य तथैकस्यैकमुच्यते। बहून्येकस्य च व्याधे-र्बहूनां स्युर्बहूनि च॥ विषमारम्भमूलानां लिङ्गमेकं ज्वरो मतः। ज्वर-स्यैकस्य चाप्येकः सन्तापो लिङ्गमुच्यते। विषमारम्भमूलैश्च ज्वर एको निरुच्यते। लिङ्गैरेतैर्ज्वरश्वास-हिक्काद्याः सन्ति चामयाः॥" इति।

इति कार्य्येण वर्त्तमानस्य कारणस्यानुमानमुदाहृत्यातीतस्य कारणस्य कार्य्येणानुमानमुदाहरति—मैथुनं गर्भदर्शनादित्यादि। अतीतं मैथुनं गर्भ-दर्शनादनुमीयते। एवमेतत्प्रकारेणातीतं कारणं कार्य्येणानुमीय बुधा व्यव-स्यन्ति। अत्रेयं युक्तिरपेक्ष्यते। यः खल्वाप्तोपदेशेन ज्ञातवानेवम् अदुष्ट-शुक्रपुरुषेणादुष्टशोणितगर्भाशयया ऋतुस्नातया सह संवसेत्, तस्य पुत्रादि-कारणादृष्टाधिष्ठितशुक्रं तस्या गर्भाशयगतादुष्टार्त्तवेन संसृष्टं पाञ्चभौतिकं परलोकादवक्रामति बीजधर्म्मा जीवात्मा। तदा तत्पञ्चमहाभूतानामात्मनश्च संयोगात् गर्भसम्भवः स्यादिति। स खलु नार्य्यां गर्भदर्शनादेवमूहति पञ्च

एतच्च व्याकृतमेव, निगूढोऽदृश्यमानः, एवं व्यवस्यन्त्यतीतमिति व्यवच्छेदः। बीजादिति सहकारिकारणान्तरजलकर्षणादियुक्तादिति बोद्धव्यम्; अनागतं फलं सदृशं व्यवस्यतीति सम्बन्धः। 'दृष्ट्वा बीजात् फलं जातम्' इत्यनेन बीजफलयोः कार्य्यकारणलक्षणां व्याप्तिं

महाभूतान्यात्मा चेति षड्धातुसंयोगात् गर्भसम्भवः। षड्धातुसंयोगश्च स्त्रियाः पुंसश्चार्त्तवशुक्रसंयोगमन्तरेण न भवति। तयोः संयोगश्च न तु मैथुनाद् भवतीति युक्तितः पुंसास्या मैथुनमनुमिनोत्यतीतमिति युक्त्यपेक्षस्तर्कः। इहापि गर्भमैथुनयोः कार्य्यकारणभावः सम्बन्धो नियतधर्म्मसाहित्यमुभयोः क्वचित् एकतरस्य च क्वचित्। इत्येवमनूढ़ायाः कुवेरस्य मातुर्गर्भदर्शनात् तस्य पिता तस्या मैथुनमनुमाय विश्रवसः सन्निधौ गत्वोवाच कथमेषानूढ़ा गर्भिणी बभूमात्रागता भगवान ब्रवीतु इति। स होवाच मद्वचनान्न तु पुंसंयोगादिति स्वाप्तोपदेशेनापि तस्या गर्भो जात इति मैथुनाद् गर्भानुमानं न व्यभिचरति, तत्पित्रा हि पूर्व्वं तस्या गर्भदर्शनान्मैथुनमेवानुमितमिति। गर्भकारणत्वेन मैथुनस्य साधारणतया लोके प्रसिद्धेः। उभयोर्नियतधर्म्मसाहित्यमदुष्टशुक्र-पुंसोऽदुष्टार्त्तवगर्भाशयया सह मैथुनं यत्र तत्र गर्भ एकान्तेन, यत्र गर्भस्तत्र तथा मैथुनञ्चैकान्तेनेत्येवमेकतरस्य वा यत्र धूमस्तत्र वह्निः न तु यत्र वह्निस्तत्र धूमो भर्ज्जनकपालादावभावात्; इतिवत्।

अथ कारणेन भविष्यतः कार्य्यस्यानुमानमुदाहरन्ति—एवमित्यादि। वीजात् फलमनागतमिति। अनागतं भविष्यत् फलं वीजादनुमाय व्यवस्यन्तीति योजना। तत्र युक्तिः—क्षेत्रकर्षणं जलमृतुर्वर्षादिर्वीजञ्चेति-चतुष्कसंयोगात् फलमस्य शस्यं भविष्यति। यदिदं कृष्टायां भूमौ वीजं वपति तद्वर्षणादिजलं चेल्लभेत तदाङ्कुरं जनयिष्यत्यथ वर्द्धिष्यते, न चेज्जलं लभेत शोषमापत्स्यते—इति युक्त्या तर्कयति। यदि शोषं नापत्स्यते जलं लब्ध्वा वर्द्धते तदा शरदादौ काले फलिष्यतीति युक्त्यपेक्षस्तर्कोऽत्रानुमानम्। एवमेव व्याधेस्तस्य तस्य निदानसेवनदर्शनात् स स रोगो भविष्यतीत्यनुमीयते। तथा पूर्व्वरूपदर्शनेन भविष्यद्व्याधिः सम्प्राप्तिदर्शनेन तु जायमानो व्याधिरनुमीयते। यथा गर्भदर्शनेन जायमानो बालोऽनुमीयते, तथोपशयेन च स स एव व्याधिरनुमीयते। यथा वातिकज्वरपूर्व्वरूपे घृतपानेनोपशयाद्वातिकज्वरो भविष्यतीत्यनुमीयते, तथा जायमाने रोगे चोपशयादनुमीयते स स एव रोगो जायत इति। एवं सर्व्वत्र कारणेन भविष्यत्कार्य्यानुमानं स्यात्। तत्रासामान्यतो दृष्टञ्च भूतं भवद भविष्यच्च कार्य्यमनुमीयते तदुदाहरन्ति। दृष्ट्वा वीजात् फलं जातमिहैव

दर्शयति। यद्यपि च कारणं कार्य्यं व्यभिचरति, यतः, नावश्यं वीजसद्भावे फलं भवति, तथापि सहकारिकारणान्तरयुक्तं वीजं फलं न व्यभिचरतीत्यभिप्रायो बोद्धव्यः, कारणसामग्री च कार्य्यं न व्यभिचरत्येव ॥ ८ ॥

जलकर्षणबीजर्त्तु-संयोगाच्छस्यसम्भवः।
युक्तिः षड्धातुसंयोगाद् गर्भाणां सम्भवस्तथा॥
मथ्यमन्थनमन्थानसंयोगादग्निसम्भवः।
युक्तियुक्ता चतुष्पाद-सम्पद्व्याधिनिवर्हणी॥
बुद्धिः पश्यति या भावान् बहुकारणयोगजान्।
युक्तिस्त्रिकाला सा ज्ञेया त्रिवर्गः साध्यते यया॥
एषा परीक्षा नास्त्यन्या यया सर्व्वं परीक्ष्यते।
परीक्ष्यं सदसच्चैवं तथा चास्ति पुनर्भवः॥ ६॥

सदृशं बुधा व्यवस्यन्तीति योजना। आम्रबीजादुप्ताद् यत् फलं जातं तत्तदाम्रबीजसदृशं दृष्ट्वा बुधा व्यवस्यन्ति—यादृशं बीजं तादृशं फलं भवति भूतं भविष्यति चेत्येवमनुमाय यत् फलमभीप्सन्ति तद्वीजं वपन्तीत्येवं व्यवस्यन्ति। बीजसदृशं फलं नान्यस्माद्बीजादन्यफलमिति युक्तिः॥ ८॥

गङ्गाधरः—न केवलं बीजात् सदृशं फलं भवतीति फलने कारणान्तरं दर्शयन्ननुमाने युक्तिमुदाहरति—जलकर्षणेत्यादि। व्याख्यास्यते युक्तिव्याख्याने इति। एवमेव गौतमेनाक्षपादेनोक्तम्—"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि"। इत्युद्दिश्य प्रत्यक्षलक्षणमुक्तम्, ततः परम्—अथ तत्पूर्व्वकं त्रिविधमनुमानं पूर्ब्ववच्छेषवत् सामान्यतो दृष्टञ्च। व्याख्यातञ्चेदं लक्षणं वात्स्यायनेन ; अर्थात प्रत्यक्षानुमानोपमानशब्दतो भावानां ज्ञानानन्तरम्। तैः प्रमाणैस्तेषु भावेषु यस्य येन सह कार्य्यकारणभावः संयोगः समवायो वा तस्य तस्य तादृशरूपेण ज्ञातस्याप्रत्यक्षस्य येन सह सम्बन्धस्तस्य प्रत्यक्षादिपूर्ब्वं यस्याव्यपदेश्याव्यभिचारिव्यवसायात्मकज्ञानस्य तत्। अथ तत्पूर्ब्वकं व्यवसायात्मकं ज्ञानमनुमानम्। इति। अथ शब्देन पूर्ब्वं प्रमाणैर्भावानां ज्ञानं सम्बध्यते। तत्पूर्ब्वकमित्यनेन लिङ्गलिङ्गिनोः सम्बन्धदर्शनं लिङ्गदर्शनञ्चाभिसम्बध्यते। लिङ्गलिङ्गिनोः सम्बन्धयोर्दर्शनेन च लिङ्गस्मृतिरभिसम्बध्यते।

चक्रपाणिः—युक्तेः प्रमाणस्यान्यशास्त्राप्रसिद्धत्वेनोदाहरणान्येव तावद्दर्शयति ; उदाहरणे ज्ञाते युक्तेर्लक्षणं सुखेन ज्ञायते इत्यभिप्रायेण, जलकर्षणेत्यादि। कर्षणशब्देन कर्षणसंस्कृता भूमिः गृह्यते, जलकर्षणबीजर्तु संयोगात् शस्यस्य सम्भवो भवतीति यज्ज्ञानं तद्युक्तिरिति योजनीयम्।

पूर्व्वज्ञातानां सम्बन्धानां स्मृत्या लिङ्गदर्शनेन चाप्रत्यक्षोऽर्थोऽनुमीयते। पूर्व्ववदिति—यत्र कारणेन कार्य्यमनुमीयते; यथा मेघोन्नत्या भविष्यति वृष्टिरिति। शेषवत्, तद्—यत्र कार्य्येण कारणमनुमीयते; पूर्व्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वञ्च दृष्ट्वा स्रोतसोऽनुमीयते—भूता वृष्टिरिति। सामान्यतो दृष्टं तत् यदन्यत्र दृष्टस्यान्यत्र दर्शनमिति; यथा कस्यचिद्व्रज्यापूर्व्वकमन्यत्र दृष्टस्य प्राणिणोऽन्यत्र दर्शनम्। तथा चादित्यस्य। तस्मादस्त्यप्रत्यक्षाप्यादित्यस्य व्रज्येति। अथवा पूर्व्ववदिति। यत्र यथापूर्व्वं प्रत्यक्षभूतयोरन्यतरदर्शनेनान्यतरस्य अप्रत्यक्षस्यानुमानम्। यथा धूमेनाग्निरिति। शेषवन्नामपरिशेषः। स च प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गात् शिष्यमाणस्य सम्प्रत्ययः। यथा—सन्नित्यमित्येवम्, आदिना द्रव्यगुणकर्म्मणामविशेषेण सामान्यविशेषसमवायेभ्यो निर्व्विभक्तस्य शब्दस्य तस्मिन् द्रव्यगुणकर्म्मसंशये न द्रव्यं शब्द एकद्रव्यत्वात्, न कर्म्म शब्दान्तरहेतुत्वात्। यस्तु शिष्यते सोऽयमिति शब्दस्य गुणत्वप्रतिपत्तिः। सामान्यतो दृष्टं नाम यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन सामान्यात् अप्रत्यक्षो लिङ्गी गम्यते; यथेच्छादिभिरात्मा। इच्छादयो गुणाः। गुणाश्च द्रव्यसंस्थानास्तद्यदेषां स्थानं स आत्मेति। एवं त्रिभागवचनादेतत् त्रिविधमिति सिद्धे त्रिविधवचनं महतो न्यायस्य लघीयसा सूत्रेणोपदेशात् परं वाक्यलाघवं मन्यमानस्यास्मिन् वाक्यलाघवेऽनादरः। तथा चायमित्थम्भूतवाक्यविकल्पेन प्रवृत्तः। सिद्धान्ते छले शब्दादिषु च बहुलं समाचारः शास्त्र इति। सद्विषयञ्च प्रत्यक्षं। सदसद्विषयञ्चानुमानम्। कस्मात्? त्रैकाल्यग्रहणात्। त्रिकालयुक्ता अर्था अनुमानेन गृह्यन्ते। भविष्यतीत्यनुमीयते. भवतीति चाभूदिति च। असञ्च खल्वतीतमनागतञ्चेति। अथेदमनुमानं परीक्षितं, तद् यथा—"रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम्।" रोधादिभ्यो व्यभिचारादनुमानं नार्थस्य प्रतिपादकं कदापीत्यप्रमाणम्। रोधादपि नदी पूर्णा गृह्यते। तदा चोपरिष्टाद् वृष्टो देव इति मिथ्यानुमानम्। नीडोपघातादपि पिपीलिकाण्डसञ्चारो भवति, तदा च भविष्यति वृष्टिरित्यनुमानं मिथ्येति। पुरुषोऽपि मयूरवासितमनुकरोति, तदापि शब्दसादृश्यान्मिथ्यानुमानं भव-

षड्धातुसंयोगात् पञ्चमहाभूतात्मसंयोगात्, "तथा शब्दो युक्तिरित्यतिकर्षति। * मथ्यं मन्थनकाष्ठमन्थकं, काष्ठं मन्थनं, मन्थानं काष्ठभ्रामणम्; किंवा मन्थक इति पाठः, मन्थानं भ्राम्य-

* युक्तिरित्याकर्षतीति क्वचित् पाठान्तरम्।

तीति। तत्राह—"नैकदेशत्रासस।दृश्येभ्योऽर्थान्तरभावात्।" नायमनुमान-व्यभिचारः। अननुमाने तु खल्वयमनुमानाभिमानः। कथं ? नाविशिष्टो लिङ्गं भवितुमर्हति। पूर्व्वोदकविशिष्टं खलु वर्षोदकं शीघ्रतरत्वं स्रोतसो बहुतरफेन-फलपर्णकाष्ठादिवहुलत्वञ्चोपलभमानः पूर्णत्वेन नद्या उपरिष्टाद् वृष्टो देव इत्यनुमिनोति. नोदकवृद्धिमात्रेण। पिपीलिकाप्रायस्याण्डसञ्चारे भविष्यति वृष्टिरित्यनुमीयते। न त्रासात् कासाञ्चिदिति। नैवं मयूरवासितं तत्-सदृशोऽयं शब्द इति विशेषपरिज्ञातान्मिथ्यानुमानमिति। यस्तु सदृशाद्विशिष्टात् शब्दात् विशिष्टं मयूरवासितं गृह्णाति तस्य विशिष्टोऽर्थो गृह्यमाणो लिङ्गम्। यथा सर्पादीनामिति। सोऽयमनुमातुरपराधः, नानुमानस्य। योऽर्थविशेषेणानु-मेयमर्थमविशिष्टार्थदर्शनेन बुभुत्सत इति। अथ त्रिकालविषयमनुमानं त्रैकाल्यग्रहणादिति यदुक्तं. तत्र च "वर्त्तमानाभावः पततः पतित-पतितव्यकालोपपत्तेः।" वृन्तात् प्रच्युतस्य फलस्य भूमौ प्रत्यासीदतो यदूर्द्ध्वं स पतितोऽध्वा तत्संयुक्तः कालः पतितकालः। योऽधस्तात् स पतितव्योऽध्वा तत्संयुक्तः कालः पतितव्यकालः। नेदानीं तृतीयोऽध्वा वर्त्तते. यत्र पततीति वर्त्तमानः कालो गृह्येत। तस्माद्वर्त्तमानः कालो न विद्यत इति। तत्राह—'तयोरप्यभावो वर्त्तमानाभावे तदपेक्षत्वात्।' नाध्वव्यङ्ग्यः कालः, किन्तु क्रियाव्यङ्ग्यः पततीति। यदा पतनक्रिया व्युपरता भवति स कालः पतितकालः। यदा तु पतिष्यति स पतितव्यकालः। यदा द्रव्ये वर्त्तमाने क्रिया गृह्यते. स वर्त्तमानः कालः। यदि चायं द्रव्ये वर्त्तमानं पतनं न गृह्णाति तदा कस्योपरममुत्पत्स्यमानतां वा प्रतिपद्यते। पतितः काल इति भूता क्रिया। पतितव्यः काल इति चोत्पत्स्यमाना क्रिया। उभयोः कालयोः क्रियाहीनं द्रव्यमधः पततीति क्रियासम्बद्धम्। सोऽयं क्रियाद्रव्ययोः सम्बन्धं गृह्णाति वर्त्तमानः कालस्तदाश्रयौ चेतरौ कालौ तदभावे न स्यातामिति।

अथापि—"नातीतानागतयोरितरेतरापेक्षासिद्धिः।" यद्यतीतानागतावित-रेतरापेक्षौ सिध्येतां, प्रतिपद्येमहि वर्त्तमानविलोपनम्। नातीतापेक्षाऽनागत-सिद्धिः, नाप्यनागतापेक्षाऽतीतसिद्धिः। कया युक्त्या केन कल्पेन वा कथमतीतानागतयोरिति। तन्नोपपद्यते विशेषहेत्वभावात्। दृष्टान्तवत्-

माणकाष्ठं, संयोगात् मेलकादिति बोद्धव्यं, यतः मन्थनस्य क्रियारूपस्य संयोगो न सङ्गच्छते, किंवा मन्थनशब्देन मन्थनरज्जुरुच्यते। युज्यते सम्बध्यतेऽनयेति युक्तिः, तया युक्ता युक्तियुक्ता। चतुष्पाद इति वक्तव्ये सम्पद्ग्रहणं गुणवच्चतुष्पादग्रहणार्थम्।

प्रतिदृष्टान्तोऽपि प्रसज्यते। यथा रूपस्पर्शौ गन्धरसौ नेतरेतरापेक्षौ सिध्येते। एवमतीतानागतावित्रि। नेतरेतरापेक्षा कस्यचित् सिद्धिरिति। यस्मादेकाभावेऽन्यतराभावादुभयाभावः। यद्येकस्यान्यतरापेक्षा सिद्धिरन्यतरस्येदानीं किमपेक्षा? यद्यन्यतरस्यैकापेक्षा सिद्धिरेकस्येदानीं किमपेक्षा? एवमेकस्याभावेऽन्यतरन्न सिध्यतीत्युभयाभावः प्रसज्यते। अर्थसद्भावव्यङ्ग्यश्चायं वर्त्तमानः कालः —विद्यते द्रव्यं विद्यते गुणो विद्यते कर्म्मेति। यस्य चायं नास्ति तस्य "वर्त्तमानाभावे सर्व्वाग्रहणं प्रत्यक्षानुपपत्तेः।" प्रत्यक्षमिन्द्रियार्थसन्निकर्षजं, न चाविद्यमानं सदिन्द्रियेण सन्निकृष्यते। न चायमविद्यमानं किञ्चित् सदनुजानाति। प्रत्यक्षनिमित्तं प्रत्यक्षविषयः प्रत्यक्षज्ञानं सर्व्वं नोपपद्यते। प्रत्यक्षानुपपत्तौ च तत्पूर्व्वकत्वादनुमानागमयोरनुपपत्तिः। सर्व्वप्रमाणविलोपे सर्व्वग्रहणं न भवतीति उभयथा च वर्त्तमानः कालो गृह्यते; क्वचिदर्थसद्भावव्यङ्ग्यः— यथास्ति द्रव्यमिति, क्वचित् क्रियासन्तानव्यङ्ग्यः यथा पचति छिनत्तीति। नानाविधा चैकार्था क्रिया क्रियासन्तानः क्रियाभ्यासश्च। नानाविधा चैकार्था क्रिया पचतीति। स्थाल्यधिश्रयणमुदकासेचनं तण्डुलारोपणमग्न्यभिज्वालनं दर्व्वीघट्टनं मण्डस्रावणमधोऽवतारणमिति। छिनत्तीति क्रियाभ्यासः। उद्यम्योद्यम्य परशुं दारुणि निपातयंश्छिनत्तीत्युच्यते। यच्चेदं पच्यमानं छिद्यमानञ्च तत् क्रियमाणं तस्मिन् क्रियमाणे कृतताकर्त्तव्यतोपपत्तेस्तूभयथा ग्रहणम्।" यदा क्रियासन्तानोऽनारब्धश्चिकीर्षितः सोऽनागतः कालः पक्ष्यतीति। प्रयोजनावसानः क्रियासन्तानोपरमोऽतीतः कालः— अपाक्षीदिति। आरब्धः क्रियासन्तानो वर्त्तमानः कालः पचतीति; तत्र योपरतता सा कृतता, या चिकीर्षितता सा कर्त्तव्यता, या विद्यमानता सा क्रियमाणा। तदेवं क्रियासन्तानस्थस्त्रैकाल्यसमाहारः। पचति पच्यत इति वर्त्तमानग्रहणेन गृह्यते। क्रियासन्तानस्यात्राविच्छेदो विधीयते, नारम्भो नोपरम इति। सोऽयमुभयथा वर्त्तमानो गृह्यते, अपवृक्तो व्यपवृक्तश्च अतीतानागताभ्याम् स्थितिव्यङ्ग्यो विद्यते द्रव्यमिति। क्रियासन्तानविच्छेदाभिधायी च त्रैकाल्यान्वितः पचति छिनत्तीति। अन्यश्च प्रत्यासत्तिप्रभृतेरर्थस्य विवक्षायां तदभिधायी बहुप्रकारो लोकेऽप्युत्प्रेक्षितव्यः। तस्मादस्ति वर्त्तमानः काल इति।

सम्प्रति युक्तेर्लक्षणमाह—बुद्धिरित्यादि। या बुद्धिर्भावान् पश्यति विषयीकरोति, बहुकारणयोगो बहूपपत्तियोगः, अनिश्चयं ज्ञानार्थे, तेन, बहूपपत्तियोगज्ञायमानानर्थान्

अथ प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्युद्देशे—न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्। प्रमाणानां चतुष्ट्वमेवेति न यथार्थम्। ऐतिह्यादीनामपि प्रामाण्यात् न्यूनवचनात्। तत्राह, सत्यमेतान्यपि प्रमाणानि भवन्ति। न तु प्रत्यक्षादिभ्योऽतिरिक्तानि। तस्माच्चत्वार्य्येव प्रमाणानि भवन्ति। कस्मात्? शब्द ऐतिह्यस्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानामनर्थान्तरभावाच्चाप्रतिषेधः। आप्तोपदेशः शब्द इति। न च शब्दलक्षणमैतिह्याद् व्यावर्त्तते। सोऽयमभेदः सामान्यात् संगृह्यत इति वेद आप्तोपदेश इव लोक आप्तोपदेश ऐतिह्यमिति। प्रत्यक्षेण अप्रत्यक्षस्य लिङ्गसम्बन्धस्य प्रतिपत्तिरनुमानम्। तथा चार्थापत्तिसम्भवाभावाः संगृह्यन्ते। वाक्यार्थसम्प्रत्ययेनानभिहितस्यार्थस्य प्रत्यनीकभावाद् ग्रहणमर्थापत्तिरनुमानमेव। वक्ष्यते च रोगभिषगजितीये—"अथप्राप्तिर्नाम यत्रैकेनार्थेन उक्तेनापरस्यार्थस्यानुक्तस्य सिद्धिः। यथा नायं सन्तर्पणसाध्यो व्याधिः इत्युक्ते भवत्यर्थप्राप्तिरपतर्पणसाध्योऽयमिति। नानेन दिवाभोक्तव्यमित्युक्ते भवत्यर्थप्राप्तिर्निशि भोक्तव्यमिति।" सुश्रुतेनाप्युक्तम्—"यदकीर्त्तितमर्थात् आपद्यते सार्थापत्तिरिति।" इत्येवं समाख्यायोगादर्थादित्यनेन यदकीर्त्तितं शब्दादापद्यते तच्छब्दार्थोऽन्योऽर्थो व्यावर्त्तते। यथा न गच्छतीति नञा योऽन्यः प्रतिषेधो नार्थादापद्यते। एवं प्रकरोतीत्येवमादिषु प्रकर्षाद्यर्थोऽर्थान्नापद्यते, स च शाब्द एव।

आग्नेये महापुराणे चाग्निना वसिष्ठायोक्तम्—"प्रकटत्वमभिव्यक्तिः श्रुतिराक्षेप इत्यपि। तस्या भेदौ श्रुतिस्तत्र शाब्दं स्वार्थसमर्पणम्॥" इत्यादिना श्रुतिमुक्त्वाक्षेप उक्तः। "श्रुतेरलभ्यमानोऽर्थो यस्माद्भाति स चेतरः। स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः॥ शब्देनार्थेन यत्रार्थं कृत्वा स्वयमुपार्ज्जनम्। प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया॥ तमाक्षेपं ब्रुवन्त्यत्र स्तुतं स्तोत्रमिदं पुनः। अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः॥ यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः। सा समासोक्तिरुदिता सङ्क्षेपार्थतया बुधैः॥ अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम्। पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयते॥ एषामेकत्र सङ्गे च समाख्या ध्वनिरित्यतः॥" इति। व्याख्यायते चेदं सर्व्वम्। प्रकटत्व-

सा बुद्धिः पश्यति, ऊहलक्षणा सा युक्तिरिति प्रमाणसहायीभूता ; एवमनेन भवितव्यमित्येवं-रूप ऊहोऽत्र युक्तिशब्देनाभिधीयते ; सा च परमार्थतोऽप्रमाणभूतापि वस्तुपरिच्छेदे प्रमाणसहाय-

मित्यादि। शब्दानामर्थस्य प्रकटत्वं प्रकाशकत्वमभिव्यक्तिः। तस्या द्वौ भेदौ—श्रुतिराक्षेप इत्यपि। तत्र मुख्या वृत्तिर्लक्षणा वृत्तिर्गौणी वृत्तिरिति त्रिधा। श्रुतिमुक्त्वाक्षेपं लक्षयति। श्रुतेरलभ्यमानोऽर्थो यस्माद्भाति स चेतरः। स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः॥ इति। श्रुतेर्निरुक्तायास्त्रिविधायाः श्रुतितो न लभ्यमानो यः श्रुत्यर्थादितरोऽर्थः स यतो भाति प्रकाशते स आक्षेपो नाम शब्दस्याभिव्यक्तिः। स एव ध्वनिर्नाम स्यात् यतो ध्वनिना वर्णात्मकशब्दभिन्नशब्देन व्यज्यते ध्वन्यते तस्मात् ध्वनिव्यङ्ग्यो ध्वनिरिति। स चाक्षेपो निर्देशादेव षड्विधः। स्तुतं स्तोत्रं समासोक्तिरपह्नुतिः पर्य्यायोक्तं समाख्या चेति। तत्र स्तुतं लक्षयति। शब्देनार्थेन यत्रार्थं कृत्वा स्वयमुपार्ज्जनम्। प्रतिषेध इवेष्टस्य यो विशेषोऽभिधित्सया॥ तमाक्षेपं ब्रुवन्त्यत्र स्तुतं स्तोत्रमिदं पुनः। अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः॥ इति। यत्राक्षेप शब्देन स्वयं मुख्यया श्रुत्याभिहितेनार्थेन द्वारार्थमुपार्ज्जनं कृत्वा इष्टस्याभिमतस्याभिधित्सयाऽभिधानेच्छया प्रतिषेध इव यो विशेषस्तमाक्षेपमत्र स्तुतं नाम्ना ब्रुवन्ति। तद्यथा "निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः। मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्॥" इति। इह मिथ्यावादिनीति सम्बोधनेन बान्धवजनस्याज्ञातपीडागम इत्यनेन च सखेदत्वं बान्धवपदेन व्यञ्जितम्। इष्टस्य स्वसङ्गमाकाङ्क्षया कान्तस्यानयनार्थं दूतीप्रेषणस्य विवक्षया दूत्याः स्वसङ्गमस्य प्रतिषेध इव विशेष उक्तः—वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकमित्यनेनेति। मम सङ्गमार्थं कान्तसन्निधाने त्वामहं प्रेरीरम्, त्वया तु स्वयं तेन रमिताऽभूरिति—नोचितमिति प्रतिषेध इव विशेषो व्यज्यते इति स्तुतं नामार्थप्राप्तिः।

इदं पुनर्वक्ष्यमाणं स्तोत्रं नामाक्षेपः। "अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः।" यत्राक्षेपेऽधिकारादपेतस्यान्यस्य वस्तुनो या स्तुतिस्तत्स्तुतिकरणमाक्षेपः। स्तोत्रं नामाक्षेपोऽर्थापत्तिरेव। यथा—"धन्यासि या कथयसि प्रियसङ्गमेषु विस्रब्धचाटुकशतानि रतान्तरेषु। नीवीं प्रति प्रणिहितेऽपि करे

त्वेन व्याप्रियमाणत्वात्, तथा तथैव ऊहरूपया प्रायो लोकानां व्यवहारादिह प्रमाणत्वेनोक्ता; अत एव प्रदेशान्तरे युक्तिं विना यथोक्तं प्रमाणत्रयं दर्शयिष्यसि—"त्रिविधा परीक्षा सहोपदेशेन"

प्रियेण सख्यः शपामि यदि किञ्चिदहं स्मरामि ॥" इति। इह सुरतविषयाधिकारादपेतानामन्यासां नारीणां स्तुतिरियं धन्यासीति। नीवीं प्रति प्रियस्य करप्रणिधाने स्मरणमात्राभाववचनेन सुरतसुखानुभवे नैपुण्यमात्मनोऽर्थादापद्यत इति स्तोत्राक्षेपोऽर्थापत्तिः।

अथ समासोक्तिमाह—"यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः। सा समासोक्तिरुदिता सङ्क्षेपार्थतया बुधैः ॥" यथार्थेनोक्ते सति यदि तत्समानविशेषणोऽन्योऽर्थो गम्यते तदा सङ्क्षेपार्थतया सा समासोक्तिर्बुधैरुदिता। यथा—"क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोऽंशुकान्तं गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण। आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥" इति। इह कामीवेति वचनेन क्षिप्त इत्यादिसमानविशेषणोऽन्योऽर्थो गम्यते। स व्यक्तोऽर्थः खल्वर्थापत्तिः समासोक्तिर्नामाक्षेपः ॥

अथापह्नुतिं लक्षयति—"अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम्।" यत्राक्षेपे किञ्चिद्वस्तु अपह्नुत्य खल्वपह्नवं कृत्वान्यार्थसूचनं क्रियते स आक्षेपोऽपह्नुतिर्नामार्थापत्तिरुच्यते। तद्यथा—"कस्य न वा रोषः स्यात् सव्रणमधरं प्रियायाः समीक्ष्य। सभृङ्गपद्माघ्रायिणि वारितवामेऽधुना सहस्व ॥" इति। अत्र नायकान्तरेणाधरं दष्टमपह्नुत्य सभ्रमरपद्माघ्राणे तद्भ्रमरदष्टाधर इत्यर्थादापद्यते इति अपह्नुतिर्नामाक्षेपोऽर्थापत्तिः।

अथ पर्य्यायोक्तं लक्षयति—"पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयते।" अन्येन प्रकारेण यदभिधीयते स आक्षेपः पर्य्यायवचनात् पर्य्यायोक्तं विपर्य्ययोक्तं नामार्थापत्तिः। यथा—"कान्ते कत्यपि वासराणि गमय त्वं मीलयित्वा दृशौ स्वस्ति स्वस्ति निमीलयामि नयने यावन्न शून्या दिशः। आयाता वयमागमिष्यथ सुहृद्वर्गस्य भाग्योदये सन्देशो वद कस्तवाभिलषितस्तीर्थेषु तोयाञ्जलिः ॥" इति। अत्र प्रवासगमने मरणं भविष्यतीति प्रकारान्तरेण अभिहितमिति पर्य्यायोक्तं नामाक्षेपोऽर्थापत्तिरिति।

समाख्यानामाक्षेपमाह—"एषामेकत्र सङ्गे च समाख्याध्वनिरित्यतः ॥" इति। एषां स्तुतस्तोत्रसमासोक्त्यपह्नुतिपर्य्यायोक्तानामाक्षेपाणामेकत्र सङ्गे मेलने

इति वचनात्। तथा, उपमानं गृहीत्वा रोगभिषग्जितीये शब्दादीनि चत्वारि प्रमाणान्यभिधास्यति।
त्रिकाला वर्त्तमानातीतानागतविषया त्रिकालविषया, त्रिकालविषयत्वञ्चास्यास्त्रिकालानुमान-

इत्यतः सम्यगाख्या इत्यस्माद्धेतोः समाख्या नाम ध्वनिराक्षेपोऽर्थापत्तिः स्यात् । तद्यथा—"हन्तालि सन्तापनिवृत्तयेऽस्याः किं तालवृन्तं तरलीकरोषि । उत्ताप एषोऽन्तरदाहहेतुर्नतभ्रुवो न व्यजनापनोद्यः ॥" इति । इह वैदेशिकस्य कामिन्याः कामजतापजन्मकथनस्य विवक्षया किं तालवृन्तं तरलीकरोषीत्यनेन प्रतिषेध इव विशेषः कृत इति स्तुतं नामाक्षेपः । तथा शान्त्यधिकारादर्पनस्य कामोत्कण्ठितचित्तस्य स्तुतिरुत्ताप एषोऽन्तरदाहहेतुरित्यनेन कृता, तेन स्तोत्रं नामाक्षेपः । न व्यजनापनोद्य इति व्यजनापनोद्यो नायमुत्ताप इत्यर्थं तूक्ते नव्यजनापनोद्य इति समानविशेषणोऽन्योऽर्थो गम्यते नवयौवनान्वितजने-नापनोद्य इति समासोक्तिराक्षेपः—तथा कामजमनोव्याकुलत्वमपह्नुत्यान्तर-दाहजनितो दाहः सूचित इति अपह्नुतिर्नामाक्षेपोऽर्थापत्तिः, प्रकारान्तरेण कामजतापाभिधानात् पर्य्यायोक्तं नामाक्षेपोऽर्थापत्तिरिति । एषां पञ्चानाम् आक्षेपाणामेकत्र सङ्गो भवतीत्यतः समाख्या नाम ध्वनिराक्षेपोऽर्थापत्तिरिति । इत्येवं षड्विध आक्षेपोऽर्थापत्तिः षड्विधैवेति ।

इमामर्थापत्तिं परीक्षते गौतमः । "अर्थापत्तिरप्रमाणमनैकान्तिकत्वात्" व्याख्यातमिदं वात्स्यायनेन—असत्सु मेघेषु वृष्टिर्न भवति सत्सु भवति इत्येतदर्थादापद्यते, सत्स्वपि चैकदा न भवति । सेयमर्थापत्तिरप्रमाणमनै-कान्तिकत्वादिति । अनैकान्तिकत्वमर्थापत्तेः । "नानर्थापत्तावर्थापत्त्यभि-मानात्" । असति कारणे कार्य्यं नोत्पद्यत इति वाक्यात् प्रत्यनीकभूतोऽर्थः, सति कारणे कार्य्यमुत्पद्यत इत्यर्थोऽर्थादापद्यते । अभावस्य हि भावः प्रत्यनीक इति सोऽयं कार्य्योत्पादः । सति कारणेऽर्थादापद्यमानो न कारणस्य सत्तां व्यभिचरति । न खल्वसति कारणे कार्य्यमुत्पद्यते । तस्मान्नानै-कान्तिकी । यत् तु सति कारणे निमित्तप्रतिबन्धात् कार्य्यं नोत्पद्यत इति, कारणधर्म्मोऽसौ न त्वर्थापत्तेः प्रमेयम् । किं तर्हि अस्याः प्रमेयम्? सति कारणे कार्य्यमुत्पद्यत इति । योऽसौ कार्य्योत्पादः कारणस्य सत्तां न व्यभिचरति, एतदस्याः प्रमेयम् । एवञ्च सति, अनर्थापत्तावर्थापत्त्यभि-मानं कृत्वा प्रतिषेध उच्यत इति । दृष्टश्च कारणधर्म्मो न शक्यः प्रत्याख्यातु-मिति । "प्रतिषेधाप्रामाण्यञ्चानैकान्तिकत्वात्" । अर्थापत्तिर्न प्रमाणमनै-

विषयोपदेशकत्वेनैव ; त्रिवर्गसाधकत्वञ्च त्रिवर्गसाधनादेव ; उद्देशेन हि प्रायस्त्रिवर्गानुष्ठाने प्रवृत्तिर्भवति ; प्रमाणपरिच्छेदेन तु प्रचारो विरल एव । यत् तु बहुकारणजलकर्षणबीजस्तु-

कान्तिकत्वादिति प्रतिषेधस्य चाप्रामाण्यमनैकान्तिकत्वात्। अर्थापत्तिर्न प्रमाणमित्यनेनार्थापत्तेः प्रामाण्यप्रतिषेधो भवति, न त्वर्थापत्तेः सद्भावप्रतिषेधः स्यात्। एवं हि स प्रतिषेधोऽनैकान्तिको भवति। अनैकान्तिकेनाप्रमाणेन प्रतिषेधेन न कश्चिदर्थः प्रतिषिद्धः स्यात्। तत्रापि यदि मन्यसे—नियतविषयेष्वर्थेषु मध्ये स्वविषये व्यभिचारो भवति, न तु विषयान्तरे। तेनार्थापत्तेः प्रामाण्यं प्रतिषेधविषयः, न त्वर्थापत्तेः सद्भावोऽत्र प्रतिषेधविषय इति। तर्हि न—"तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम्"। प्रतिषेधप्रामाण्ये वा सति नार्थापत्तेरप्रामाण्यम्। अर्थापत्तेरपि कार्य्योत्पादनेन कारणसत्ताया अव्यभिचारो विषयः; न च कारणधर्म्मो विषयः। असत्सु मेघेषु न वृष्टिर्भवतीत्युक्ते भवत्यर्थापत्तिः सत्सु मेघेषु वृष्टिर्भवति निमित्तप्रतिबन्धाभावे सति। निमित्तप्रतिबन्धात् तु क्वचिच्च न भवतीत्यव्यभिचारः। एवमर्थादापद्यते योऽन्योऽर्थः स चेदर्थापत्तिः प्रमाणं भवति, तर्हि शब्दादापद्यते योऽर्थः स चाप्तोपदेशो नाम। "शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात्"। शब्दोऽनुमानं प्रमाणं न तु प्रमाणान्तरम्, शब्दार्थस्यानुमेयत्वात्। तदनुमेयत्वं तु प्रत्यक्षतोऽर्थस्यानुपलब्धेः। यथाऽनुपलभ्यमानो लिङ्गी मितेन लिङ्गेन पश्चाज्ज्ञायते—इत्यनुमानम्। एवमिह मितेन खलु ज्ञातेन शब्देन पश्चात् मीयतेऽनुपलभ्यमानोऽप्यर्थ इत्यनुमानं शब्दः। यथा लोके कश्चिदाह घटमानय पुत्रकेति प्रयुक्तः पुत्रो यादृशं वस्तु घटेति बुद्ध्यानयति तद्वस्तु घटत्वेन ज्ञातं पूर्व्वमभूत्तदुपदेशेन। तदुपदेशेन खलु शब्देनायं घट इति विज्ञायतेऽनुमानेन इति उपदेशः शब्दोऽप्यनुमानमिति। न केवलमर्थस्यानुमेयत्वादनुमानं शब्दः। "उपलब्धेरद्विप्रवृत्तित्वात्"। शब्दस्य प्रमाणान्तरत्वे द्विप्रवृत्तिरुपलब्धिः स्यात्। यथानुमाने लिङ्गप्रकारोपलब्धिरन्यप्रकारोपलब्धिः, प्रत्यक्षे शब्दे तु यथोपदेशात् प्रवर्त्तते उपलब्धिरनुमानेऽपि तथा प्रवर्त्तते तस्माददद्विप्रवृत्तित्वादुपलब्धेः" शब्दोऽनुमानमेव। तत्र चेदुच्यते—अनुमाने लिङ्गलिङ्गिनोः सम्बन्धयोः सम्बन्धप्रतीतौ लिङ्गोपलब्धितो लिङ्गिग्रहणम्। तत आह—"सम्बन्धाच्च"। शब्दार्थयोः सम्बन्धाच्च शब्दोऽनुमानम्। सम्बद्धयोरेव शब्दयोः सम्बन्धप्रतीतौ शब्दोपलब्धितोऽर्थग्रहणमिति शब्दोऽनुमानमिति। तत्राह—"आप्तोपदेश-

संयोगात् भाविकार्य्यज्ञानं युक्तिरुच्यते, तच्चानुमानं, नार्थान्तरभूतं, तत्रानुमानाद् भेदो युक्तेर् इति नाद्रियामहे; किञ्च कारणेभ्यः कार्य्यं प्रतीयमानं न कदापि वर्त्तमानं प्रतीयते, तत्रश्च

सामर्थ्याच्छब्दादर्थसम्प्रत्ययः ।” स्वर्गोऽप्सरस उत्तराः कुरवः सप्त द्वीपाः सप्त समुद्रा लोकसन्निवेश इत्येवमादेरप्रत्यक्षस्यार्थस्य न शब्दमात्रात् प्रत्ययः । किन्तु आप्तैरयं शब्द उक्त इत्याप्तोपदेशसामर्थ्यादेव स्वर्गादि-शब्दादर्थसम्प्रत्ययः स्यात्—अस्ति स्वर्गादिभावः । विपर्य्ययेण संप्रत्यया-भावात् । यद्याप्तः स्वर्गोऽस्तीत्येवमादिकं नाह कस्तर्हि स्वर्ग इत्येवमादिकं सत्यमिति सम्प्रत्ययं गच्छेत् । न त्वेवमनुमाने । तत्रापि लिङ्गलिङ्गिनोराप्तोप-देशेनैव वह्नेर्वह्नित्वेन धूमस्य धूमत्वेन ज्ञानाद्वह्निधूमयोर्नियतधर्म्मसाहित्यं सम्बन्धो ज्ञायत इति । यदुक्तमुपलब्धेरद्विप्रवृत्तित्वादिति—तन्न । अयमेव हि शब्दानुमानयोरुपलब्धेः प्रवृत्तिभेदः । आप्तोपदेशसामर्थ्यादेवास्य शब्द-स्यायमर्थ इति प्रसिद्धिं जानता प्रयुक्ताच्छब्दादर्थस्य सम्प्रत्ययः स्यात् अनुमाने च तदुपदेशेन ज्ञानानां यस्य येन कार्य्यकारणभावः संयोगः समवायो वा तथा दर्शनेन तत्स्मृत्या पुनस्तस्य तस्य तस्य लिङ्गिनो लिङ्गदर्शनेनोपलब्धिरिति द्विप्रवृत्तित्वमेवोपलब्धेः । सम्बन्धाच्चेति यदुक्तं तत्रास्ति च शब्दार्थयोः सम्बन्धोऽनुमतः प्रतिषिद्धश्च । अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थ-विशेषोऽङ्गीकृतो वाच्यवाचकभावः सम्बन्धः । “सिद्धे शब्दार्थसम्बन्धे” इति कात्यायनवार्त्तिकात् । प्राप्तिलक्षणस्तु शब्दार्थयोः सम्बन्धः प्रतिषिद्धः । येन सम्बन्धेन सम्बद्धयोर्लिङ्गलिङ्गिनोर्लिङ्गज्ञानेन लिङ्गी गृह्यतेति । स च सम्बन्धो नास्ति । “प्रमाणतोऽनुपलब्धेः ।” प्रत्यक्षतस्तावच्छब्दार्थप्राप्तेर्नोपलब्धिः अतीन्द्रियत्वात् । रूपिद्रव्यस्य रूपोपलब्धेस्तत्समवायात् संयोगप्रत्यक्षम् । अरूप-स्याप्रत्यक्षमिति । यथा येनेन्द्रियेण गृह्यते शब्दस्तादिन्द्रियविषयत्वमतिक्रान्तो-ऽर्थो न तेनेन्द्रियेण गृह्यते । अस्ति चातीन्द्रियो विषयभूतोऽप्यर्थः । स च नानेनेन्द्रियेण गृह्यते । प्राप्तिलक्षणे तु सम्बन्धे गृह्यमाणे शब्दार्थयोः किं शब्दस्यान्तिकेऽर्थः स्यात् ? अथवार्थान्तिके शब्दः स्यात् ? अथोभयं वाप्युभयत्र स्यादिति । यदेतयोरन्यतमेन प्राप्तिलक्षणः सम्बन्धः शब्दार्थयोरङ्गीक्रियते तदा “पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः ।” स्थानकरणाभावाच्च । शब्दान्तिकेऽर्थ इति चेदनुमानेनोपलभ्यते तदा कण्ठताल्वादिस्थानकरणत उच्चारणे कण्ठादिस्थः शब्दस्तदन्तिके चार्थश्चेद्वर्त्तते तदा अन्नाग्न्यसिशब्दो-

त्रिकालेति पराहतं स्यात् ; अत्र शान्तरक्षित-कमलशीलाभ्यां युक्तिप्रमाणान्तरस्वीकारे पूर्व्वपक्ष-सिद्धान्तावुक्तौ “यस्मिन् सति भवत्येव न भवत्यसतीति च । तस्मादतो भवत्येतत् युक्तिरेषाभि-

च्चारणे मुखपूरणप्रदाहपाटनानि गृह्णीरन्। न च मुखपूरणादीनि विज्ञायन्ते। अग्रहणान्नानुमेयः प्राप्तिलक्षणः शब्दार्थयोः सम्बन्ध इति। अर्थान्तिके शब्द इति चेत् तदा स्वर्गस्तु यत्र न तत्र शब्दः ; उच्चारयितुर्मुखे हि शब्दः। यदि स्वर्गान्तिके स्वर्गशब्दस्तदा कण्ठताल्वादिस्थानकरणाभावादनुच्चारणम्। इत्येवमुभयप्रतिषेधाच्च नोभयमुभयत्रेति। तस्मान्न शब्देनार्थः प्राप्त इति। तत्राह— "शब्दार्थव्यवस्थानादप्रतिषेधः"। शब्दार्थप्रत्ययस्य व्यवस्थादर्शनादनुमीयते व्यवस्थाकरणं शब्दार्थसम्बन्धोऽस्तीति। असम्बन्धे हि यत्तच्छब्दप्रयोगाद्यथेष्टार्थ प्रत्ययप्रसङ्गः, तस्माच्छब्दार्थयोः सम्बन्धप्रतिषेधो न कर्त्तुं शक्यत इति। तत्, "न सामयिकत्वाच्छब्दार्थप्रत्ययस्य"। शब्दार्थव्यवस्थानं न सम्बन्धकारितम्, किन्तु समयकारितं तद्भ्रमः। अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽङ्गीकृतः। प्राप्तिलक्षणस्तु सम्बन्धः प्रतिषिद्धः। समयं तत्रावोचाम। कः पुनरयं समयः ? अस्य शब्दस्येदमर्थजातमभिधेयमित्यभिधानाभिधेयनियमयोगः। तस्मिन्नुपयुक्ते शब्दादर्थसम्प्रत्ययो भवति। विपर्य्यये हि शब्दश्रवणेऽपि तदर्थप्रत्ययाभावः। सम्बन्धवादिनोऽपि शब्दार्थयोर्वाचकवाच्यभावसम्बन्धं ब्रूयात् न तु प्राप्तिलक्षणम्। प्रयुज्यमानग्रहणाच्च लौकिकानां समयोपयोगः। समयपालनार्थञ्च खल्विदं पदलक्षणया वाचाऽन्वाख्यानं व्याकरणं वाक्यलक्षणया वाचात्यर्थं लक्षणम्। पदसमूहो वाक्यमर्थपरिसमाप्ताविति। तदेवम् अप्राप्तिलक्षणस्य शब्दार्थसम्बन्धस्यार्थजुषोऽपि शब्दार्थव्यवस्थानं नानुमाने हेतुर्भवति, प्राप्तिलक्षणस्यानुमानहेतुतयोक्तत्वात्। अस्येदं कारणं कार्य्यं संयोगि समवायि चेति लौकिकमित्युक्तं कणादेन। अस्ति चानुमानमप्राप्तिलक्षणेन सम्बन्धेन। यथा दूरान्नगरे दग्धेऽस्मिन् वा ग्रामान्तरेऽपूढे धूमो दृश्यते वह्नेरसम्बन्धस्तेन चानुमीयते क्वापि वह्निर्भूत इति चेत् ? न। तत्र संयोगसमवायाभावेऽप्यस्ति कार्य्यकारणभावः सम्बन्धः, न सम्प्राप्तिलक्षणः शब्दार्थयोरिव। अर्थास्तु शब्दार्थयोरप्राप्तिलक्षणः सम्बन्धः। नास्तु तेनानुमानम्। प्रत्ययस्तु शब्दादर्थस्य स्वाभाविक इति चेत् ? न। शब्दार्थप्रत्ययो हि सामयिकः। "जातिविशेषे चानियमात्।" ऋष्यार्य्यम्लेच्छानां जातिविशेषे च यथाकामं शब्दविनियोगोऽर्थप्रत्यायनाय प्रवर्त्तते। नास्ति

धीयते। प्रमाणान्तरमेवेदमित्याह चरको मुनिः। नानुमानमियं यस्माद् दृष्टान्तोऽत्र न विद्यते॥" एतत् शान्तरक्षितवचनं कमलशीलेन व्याख्यातं—"तद्भावभावित्वेन यत्कार्य्यता-

च तत्र नियमः। यथा आर्य्याः संस्कृतं भाषन्ते ब्राह्मणादय आर्य्याः स्वस्वदेशवचनं भाषन्ते म्लेच्छाश्चानार्य्यदेशवचनम्। स्वाभाविकस्तु भावः सर्व्वत्र समानः स्यात्। यथाग्निरुष्णः शीतं जलमित्येवमादि सर्व्वत्र तुल्यं न जातिविशेषे व्यभिचरतीति। शब्दो नानुमानम्, किन्तु प्रमाणान्तरमेव। वैशेषिके कणादेनाप्युक्तम् "शब्दार्थावसम्बन्धौ। सामयिकः शब्दार्थप्रत्ययः" इति। अथैवमर्थापत्तेरनुमानेऽन्तर्भाववत् सम्भवस्यापि प्रामाण्ये प्रमाणान्तरत्वं नास्ति अनुमानेऽनर्थान्तरभावात्। अविनाभाववृत्त्या च सम्बन्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणं सम्भवस्तदप्यनुमानमेव। यथा द्रोणस्य समुदायस्य सद्भावग्रहणेनानुमीयते प्रस्थादिमानं समुदायि। न हि प्रस्थादिकसद्भावमन्तरेण द्रोणः सम्भवति। वक्ष्यते च रोगभिषगजितीये, "अथ सम्भवः। सम्भवो नाम यो यतः सम्भवति स तस्य सम्भवः। यथा षड्धातवो गर्भस्य, व्याधेरहितं, हितमारोग्यस्येति। न ह्यात्मानं पञ्च च महाभूतानि विना गर्भः सम्भवति। समुदायेन गर्भेणानुमीयन्ते समुदायिनो धातवः षट्। एवमहितं विना व्याधिर्न सम्भवति, समुदायेन व्याधिनाऽनुमीयते, अहितमस्याचरितमिति। तथा हितमाचरितमारोग्येणानुमीयत इति ॥०॥ एवमभावोऽपि प्रमाणं न प्रमाणान्तरमनुमानेऽनर्थान्तरभावात्। कणादेन चोक्तम् "कार्य्यं कार्य्यान्तरस्य, विरोधि अभूतं भूतस्य, भूतमभूतस्य, भूतो भूतस्य।" इति। तत्राभूतं भूतस्याभावः विरोधित्वात्। तथा च—अस्मिन् सतीदं नोपपद्यते इति विरोधित्वे प्रसिद्धे तत्कार्य्यं नोत्पद्यते। तेनानुमीयते कारणस्य प्रतिबन्धकं किमपि विरोधि वर्त्तत इति। सत्यं प्रमाणचतुष्टयान्तर्भूतान्येतानि प्रमाणानीति। अत्राह वादी—"नाभावप्रामाण्यं प्रमेयासिद्धेः"। अभावस्य न प्रामाण्यं प्रमेयासिद्धेः। प्रमाणेन प्रमीयते यत् तत् प्रमेयम्। तच्च नाभावस्यास्ति। तस्मान्नाभावः प्रमाणं भवति। तत्रोत्तरमाह "लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः"। तस्याभावस्य सिध्यति प्रमेयम्। लक्षितेषु लक्षणैरलक्षितत्वादलक्षितानाम्। यथा सर्व्वमभावो भावेष्वितरेतराभावसिद्धेः। तथा च गवाभावोऽश्वः एवमश्वाभावो गौरिति परस्पराभावसिद्धेः सर्व्वं भावजातमभाव इति। अतोऽश्वस्य भावस्य भावलक्षणेन लक्षितस्य यल्लक्षणं तेन लक्षणेनालक्षितो गोरभाव इति गोरभावस्य प्रमेयमश्वः। गवाऽनुमीयतेऽश्वो भावः। एवं नीलं वस्त्रमानयेत्युक्ते

प्रतीतिरियं युक्तिः। इदञ्च सविकल्पत्वान्न प्रत्यक्षं, नाप्यनुमानं दृष्टान्ताभावात्; तथाहि—दृष्टान्तेऽप्यत एव तत्प्रागभावित्वात् तत्कार्य्यताप्रतिपत्तिः, तत्रापि दृष्टान्तोऽन्योऽन्वेषणीयः,

यस्मिन् वस्त्रे नीललक्षणं न पश्यति तन्नीललक्षणाभावेनानुमीयते नेदमानेतुमुक्तवानिति। यत्र नीललक्षणं पश्यति तत्रानीललक्षणालक्षितं पश्यन् नेतुं प्रतिपद्यत इति प्रतिपत्तिहेतुत्वादभावः प्रमाणं प्रमेयसिद्धेरिति। तत्राह वादी —अभावस्तस्य तत्रोपपद्यते यत्र किञ्चिद् भूत्वा न भवति। तत्र यद् भवति स भावः। स एव यत्र भूत्वा न भवति सोऽभावः। यथामे फले श्यामता भूत्वा पक्वे पुनर्न भवति स श्यामभावोऽभावः, न तु यत् नास्ति सोऽभावः। यथा निम्बे मधुरो नास्तीति। यथा वासःसु खल्वलक्षितेषु लक्षणानि भूत्वा सन्ति तानि तत्रैवालक्षितेषु न भवन्तीत्येवं न दृश्यते। लक्षितलक्षणस्तु नास्तीति दृश्यते तस्मात् तस्मिन्। "असत्यर्थे नाभाव इति चेन् नान्यलक्षणोपपत्तेः"। यथा खल्वयमन्येषु वासःसु नीलवासांस्यानयेत्युक्तस्तन्नीललक्षणानुपपत्तिं पश्यति। नैवं नीललक्षणलक्षितेषु। सोऽयमन्येषु नीलेषु नीललक्षणाभावं पश्यन्नभावेनार्थं प्रतिपद्यत इति। तत्राह वादी— "तत्सिद्धेरलक्षितेष्वहेतुः"। तेषु लक्षितेषु वासःसु सिद्धिर्विद्यमानता येषां भवति न तेष्वभावोऽन्यलक्षितलक्षणानाम्। यानि च लक्षितेषु विद्यन्ते लक्षणानि तेषामलक्षितेष्वभावः इत्यहेतुः। यानि खलु भवन्ति तेषामभावो व्याहत इति। "न लक्षणावस्थितापेक्षसिद्धेः।" न वयं ब्रूमः यानि लक्षणानि भवन्ति तेषामभाव इति। किन्तु केषुचिल्लक्षणान्यवस्थितानि, अनवस्थितानि च केषुचित्, अपेक्षमाणो येषु लक्षणानां भावं न पश्यति तानि लक्षणाभावेन प्रतिपद्यते। "प्रागुत्पत्तेरभावोपपत्तेश्च" अभावद्वैतं खलु भवति। प्राक् चोत्पत्तेरविद्यमानता। उत्पन्नस्य चात्मनो हानादविद्यमानता च। तत्रालक्षितेषु वासःसु प्रागुत्पत्तेरविद्यमानतालक्षणो लक्षणानामभावो नेतर इति। अभावस्य प्रमेयसिद्धेः प्रामाण्यं सिद्धमिति।

अथ तर्को न प्रमाणसंगृहीतो न प्रमाणान्तरम्। प्रमाणानामनुग्राहकस्तत्त्वज्ञानाय कल्पत इति वात्स्यायनेनाक्षपादाभिप्रायो व्यञ्जितः। तेन प्रमाणासंगृहीतोऽपि तर्को नाप्रमाणं तत्त्वज्ञानाय क्लृप्तत्वात्। तर्कापेक्षस्तर्को ह्यनुमानम्। तदव्यान्तरीयत्वेन तर्कस्य सिद्धं प्रामाण्यम्। आप्तोपदेशाव्यान्तरीयत्वेन आप्तस्य प्रामाण्यसिद्धिवत्प्रमाणे संग्रहो न कृतः। अन्यथाप्तस्यापि प्रमाणासंगृहीतत्वादप्रामाण्यं भवतु। तदप्रामाण्ये हीष्टे "मन्त्रायुर्वेदप्रामाण्यवच्च

तत्प्रामाण्यम्" इत्यनवस्था स्यात्, तस्मात् प्रमाणान्तरं युक्तिः। एवं पूर्वपक्षमुत्थाप्य दूषितं— यत—"कार्यकारणभावस्य प्रतिपत्तिर्न सङ्गता। तस्मादस्यां न भेदोऽस्ति साध्यसाधनयोरतः।

तत्प्रामाण्यमाप्तप्रामाण्यात्" इति स्ववचनानुपपत्तिः स्यात्। प्रतिपत्तिहेतुर्हि प्रमाणमिति चोक्तं वात्स्यायनेन। इत्यभिप्रायेणास्मिंस्तन्त्रे युक्तिः प्रमाणत्वेन पृथगुक्ता तत्त्वज्ञानसाधनत्वादिति, अतो न विरोधश्चरकाक्षपादयोरिति। अथ वैशेषिके साङ्ख्ये योगशासने च त्रिविधं प्रमाणमुक्तं—प्रत्यक्षमनुमानं शब्दश्च। गौतमेनाक्षपादेन चतुर्विधं सहोपमानेन। अस्मिंस्तु सह युक्त्या ततो विरोध इति चेत्? न। वैशेषिकादिषु स्वस्वाभिधेयत्वात् षट्पदार्थादीनां वादमार्गोपदेशे आन्वीक्षिकीशासने वादप्रवृत्तौ न्यायवाक्यस्य पञ्चावयवानां परार्थानयोः स्वस्वार्थसाधनत्वादुपमानस्य पृथगभिधानमक्षपादेन कृतम्। तत्र प्रतिज्ञा उपदेशः, हेतुरनुमानम्, दृष्टान्तः प्रत्यक्षम्, उपनय उपमानम्; इति चतुर्भिः प्रमाणैः साधयित्वा तदुपसंहारो निगमनेनेति वादोपयोगित्वादुपमानं पृथगुक्तमक्षपादेन। प्रमेयान्तर्गतत्वेऽपि प्रमाणसंशयादीनां पञ्चानां पृथगुपादानवदिति। वैशेषिकादौ तु तत्तद्वादमार्गोपदेशशास्त्रं प्रसिद्धं यत् तदक्षपादप्रकाशितं तत्प्रतिज्ञवादमार्गोपदेशशास्त्रं कणादकपिलपतञ्जलिचरकादिभिः स्वस्वमहर्षिभिः अङ्गीकृत्य तद्वादमार्गमनुसृत्य स्वे स्वे तन्त्रेऽभिहितस्यार्थस्य परीक्षायां तैरेव पञ्चभिरवयवैः परीक्षा कृता दृष्टान्तप्रदर्शनात्। तद् यथा वैशेषिके "असदिति भूतप्रत्यक्षाभावाद् भूतस्मृतेर्विरोधिप्रत्यक्षवत्।" इति सूत्रे विरोधिप्रत्यक्षवदिति दृष्टान्त उक्तः। अत्रोपदेशः प्रतिज्ञा गवाभावेनाश्वेन गोः प्रतीतिः। असदिति भूतप्रत्यक्षाभावाद् भूतस्मृतेरिति हेतुः। विरोधिप्रत्यक्षवदिति दृष्टान्त उपमानमिति। तथा साङ्ख्येऽपि कपिलेनोक्तः—"स्वभावाच्चेष्टितमनभिसन्धानाद्भृत्यवत्" इति सूत्रे। प्रधानस्य स्वभोगस्यानभिसन्धानात् पुरुषार्थं चेष्टितमित्युपदेशः प्रतिज्ञा। स्वभावादिति हेतुरनुमानम्। भृत्यवदिति दृष्टान्त उपमानमिति। इत्येवं वादे न्यायवाक्यस्य पञ्चावयवानङ्गीकृत्य स्वे स्वे तन्त्रे प्रमाणोपदेशे तूपमानं पृथङ्नोक्तं कणादकपिलादिभिः। एवमस्मिंस्तन्त्रेऽपि चोपमानमिह प्रमाणप्रकरणेऽनुमानेऽन्तर्भूतमिति मत्वा न पृथगुक्तम्। वादमार्गोपदेशे तु रोगभिषग्जितीये पृथगुपमानं वक्ष्यते वादोपयोगिन्यायवाक्यावयवार्थम्। यथा—अथ हेतुः। हेतुर्नामोपलब्धिकारणम्। तत्प्रत्यक्षमनुमानमैतिह्यमौपम्यमिति। तस्मान्नैषां विरोध इति। साङ्ख्ये वैशेषिकेऽप्याप्तोपदेशे

तद्भावव्यवहारे तु योग्यतायाः प्रसाधने। सङ्केतकालविख्यातो विषयेऽर्थो निदर्शनम्॥" एतद् व्याख्यातं कमलशीलेन—"युक्तौ न साध्यसाधनयोर्भेदः, अत्र तद्भावभाविता हेतुः, कार्यकारणता

खल्वैतिह्यस्यान्तर्भावमनुमानेऽर्थापत्तिसम्भवाभावोपमानानामन्तर्भावमनुमाना-विनाभावित्वेन तर्कस्य प्रामाण्यमाप्तोपदेशाविनाभावित्वेनाप्तस्य प्रामाण्यमङ्गीकृत्य स्वे स्वे तन्त्रे प्रत्यक्षानुमानाप्तोपदेशास्त्रय एव प्रमाणान्युक्ता इति। तत्र वैशेषिके-ऽनुमानमुक्तम्। यथा—"हेतुरपदेशो लिङ्गमनुमानं करणमित्यनर्थान्तरम्। अस्येद-मिति बुद्ध्यपेक्षितत्वात्"। अस्येदं कार्य्यकारणं संयोगि च समवायि चेति लौकिकम्। "अस्येदं कार्य्यकारणं सम्बन्धश्चावयवाद्भवति"। "अभूदित्यपि। सति च कार्य्यदर्शनात्। एकार्थसमवायिकारणान्तरेषु दृष्टत्वात्। एकदेश इत्येक-स्मिन् शिरः पृष्ठमुदरं मर्म्माणि तद्विशेषस्तद्विशेषेभ्यः। कारणमिति द्रव्ये कार्य्ये समवायात्। योगाद्वा। कारणे समवायात् कर्म्माणि। तथा रूपं कारणे-कार्थसमवायाच्च। कारणसमवायात् संयोगः। कारणसमवायाच्च तूलकपिण्डा-वयवे वर्त्तमानः प्रचयाख्यं तूलकपिण्डमहत्त्वमारभते। संयुक्तसमवायादग्ने-र्वैशेषिकम्। दृष्टानां दृष्टप्रतिपादनाय प्रपञ्चोऽयं द्रष्टव्यः दृष्टाभावे। तद्वचनादाम्नायप्रामाण्यम्" इति।

व्याख्यानान्येतानि क्रमेण। तद्यथा—हेतुरपदेशो लिङ्गमनुमानं कारण-मित्यनर्थान्तरमिति हेत्वादिकं सर्व्वमेकार्थकम्। हेतुरुपलब्धिविशेषस्य कारणं न तूपलब्धिसामान्यस्य। तदभिप्रायव्यञ्जनार्थमुक्तमपदेश इति। अनेन कारणेनेदमित्यपदेश इति सुश्रुतः। ततो लिङ्गं लिङ्ग्यतेऽप्रत्यक्षोऽर्थोऽनेनेति लिङ्गम्। यथा धूमेनाग्निः पूर्व्वं प्रत्यक्षेण दृष्टः पश्चात् परोक्षोऽनुभूयते। अत एवानुमानं पूर्व्वं प्रमाणेनोपलब्धमर्थं जानमनु पश्चान्मीयते ज्ञायतेऽनेनेत्यनु-मानं लिङ्गज्ञानेन लिङ्गिज्ञानमनुमितिः। तत्करणं यद्यपि लिङ्गज्ञानमनुमानं तथापि तज्ज्ञानस्य स्वरूपानुपपत्त्या यद्विषयं तज्ज्ञानं तदपि लिङ्गमनुमानं करणमित्येकोऽर्थः। कस्मात् तेनानुमितिः स्यादिति? अत आह— "अस्येदमिति बुद्ध्यपेक्षितत्वात्"। अस्येदं कार्य्यकारणं संयोगि सम-वायि चेति वक्ष्यते। तद्बुद्ध्यपेक्षितत्वाल्लिङ्गेनानुमितिः स्यात्। पूर्व्वं हदया बुद्धिर्यत्र भवति। वह्निना काष्ठे दह्यमाने धूमो भवति, नाङ्गारे धूम इत्येवं पश्यन् ऊहयति विचारयति च—भवति नाग्निमन्तरेण धूमः, काष्ठमन्तरेण चाङ्गारे धूमाभावात्। तस्मादार्द्रेन्धनाग्निजो धूम इति तर्कात् बुद्धिः, पश्चात् परोक्षे स्थित-वह्नेः धूमदर्शनेन मीयते—अस्ति खल्वार्द्रेन्धनाग्निरमुत्र देशे इति तर्क्यते। इति

च साध्या, न चानयोर्भेद उपलभ्यते पर्य्यायत्वात् गुरुत्वानयत्। अथ मतं, न कार्य्यकारणता साध्यते किं तर्हि? तत्रावयवहार इति, तत्रोक्त—'तत्रावयव्यवहारे' इत्यादि; तथा हेतुफलतया

तर्कापेक्षस्तर्क एवानुमानमिति। अस्येदमिति बुद्धिं दर्शयति। अस्येदं कार्य्यं कारणं संयोगि समवायि चेति लौकिकमिति। अस्येदं कार्य्यकारणमस्येदं कार्य्यं यथाग्निकार्य्य धूम इति, लोके तेन धूमेनाग्निरनुमीयते। अस्येदं कारणमिति फलस्यास्येदं बीजं कारणमिति। बीजेन कारणेन फलमनुमीयते। अस्येदं संयोगीति बुद्ध्या खल्वाकपर्णेन दृश्यमानेनाकपर्णेन परोक्षो वृक्षोऽनुमीयते। अस्येदं समवायि चेति बुद्ध्या घटावयवदर्शनेन घटानुमानं तत्समवायादिति। कुत एवं जायत इति? अत आह अस्येदं कार्य्यकारणं सम्बन्धश्चावयवाद् भवति। अस्येदं कार्य्यम्, अस्येदं कारणम्, अस्येदं सम्बन्धश्च संयोगः। समवायश्च ज्ञानानां प्रमाणानामवयवादन्यतमस्माद् भवति। तद्दर्शयति अभूदित्यपि सति च कार्य्यदर्शनात्। यदभूदवर्त्तमानं वह्न्यादिकं तदपि सति वर्त्तमाने च कार्य्यदर्शनात् कार्य्यकारणज्ञानं स्यात्। धूमदर्शनेनातीतो वह्निर्वर्त्तमानश्च कार्य्यकारणभावज्ञानादनुमीयते। कस्मादिति? अत उक्तम्। "एकार्थसमवायिकारणान्तरेषु दृष्टत्वात्"। एकस्मिन्नर्थे कार्य्ये घटादौ समवायि कारणं भूः तत्कार्य्यमृत्तिदर्शनेन यथा भूरनुमीयते तद्रूपादिकं कृष्णादिकं तथा तद्घटसमवायिकारणजलादिभूतान्तरेषु तत्कार्य्यरूपादीनां दृष्टत्वात् कार्य्यदर्शनादभूदिति सदिति चानुमीयते। न हि घटोऽयं कृष्णः श्वेतरक्तकृष्णमिलितस्तु वर्णविशेषः। तस्मात् तथाविधघटात्मककार्य्यदर्शनात् तद्घटसमवायिकारणानि पञ्चैव भूतान्यनुमीयन्त इति।

ननु तर्हि कथमेकदेशोऽनुमीयते शिरस्पदादिरिति? अत आह—एकदेश इत्येकस्मिन् शिरःपृष्ठमुदरं मर्म्माणि, तद्विशेषस्तद्विशेषेभ्य इति। एकस्मिन् नरादौ कार्य्ये तद्विशेषस्तस्यैव नरादेर्विशेषः शिरःपृष्ठादिकमेकदेश इत्यनुमीयते तद्विशेषेभ्यः। मनुष्यस्य शिरःपृष्ठादिविशेषेभ्यो वानरस्य शिरःपृष्ठादिविशेषेभ्य इत्येवमादि शेषं बोध्यम्। शिरःपृष्ठादिकं संयोगीति बुद्ध्या तदनुमानम्। कथं समवायीति बुद्ध्यानुमीयते? तदाह—कारणमिति द्रव्ये कार्य्ये समवायात् घटादौ द्रव्ये कार्य्ये समवायीनि पञ्चभूतानीति कार्य्ये द्रव्ये समवायादनुमीयन्ते। घटदर्शनेन तत्समवायिपञ्चभूतानि। ननु मृन्मयोऽयं घट आयसो वा सौवर्णो वा सर्व्व एव पार्थिव इत्यनुमीयते। नास्ति विशेष इति। अत आह—योगाद्वा। योगोऽन्वयः। स खल्वनुप्रवेशः। पृथिव्यनुप्रवेशेन मृल्लोहसुवर्णाना-

भावस्तद्भावः, तत्र व्यवहारो यः स तद्भावव्यवहारः ज्ञानाभिधानप्रवृत्तिलक्षणमनुष्ठानं, तस्मिन् योग्यता मूलं प्रतिसाध्यते; ये यद्व्यापारानन्तरनियतोपलम्भस्वभावास्ते तत्कार्य्यव्यवहारयोग्याः;

मुत्पत्तेर्मृदादिकार्य्यविशेषदर्शनेन मृन्मयादिरूपेण ज्ञानान्मृदाद्यनुमानसहचरित-पृथिवीभूतमनुमीयते तद्योगात्। एवं द्रव्यानुमानमुक्त्वा कर्म्मानुमानमाह—कारणे समवायात् कर्म्माणि। कार्य्यद्रव्यस्य घटादेः कारणे द्रव्ये मृदादौ समवायान्मृदादिकर्म्माण्यनुमीयन्ते। कथं गुणा अनुमीयन्त इति? अत आह—तथा रूपे कारणकार्थसमवायाच्च। तथा रूपे कारणद्रव्याणां रूपादौ गुणे कारणैकार्थसमवायाच्च। मृन्मयादौ घटे ये श्यामरूपादयो गुणास्तेषु मृद्वालुकादिकारणस्यैकस्मिन्नर्थे समवायादनुमीयन्ते। कर्म्माणि यैः कर्म्मभिः मृदादिस्थं रूपादिकं सजातीयरूपाद्यन्तरमारभ्यते। तानि कर्म्माणि मृदादौ कारणे वर्त्तन्ते। मृदादिकारणं रूपादि कारणञ्च द्रव्यमप्येकस्मिन्नर्थे घटादौ रूपे समवायेन वर्त्तत इति। कारणैकार्थसमवायेन गुणे रूपादौ कर्म्माण्यनुमीयन्ते। एवं मृद्वालुकादीनां संयोगश्च कथमनुमीयत इति? अत आह—कारणसमवायात् संयोगः। घटादिकार्य्ये कारणमृदादिसमवायान्मृद्वालुकादेः संयोगोऽनुमीयते। सोऽयं संयोगः पुनः कारणसमवायाच्च तूलकपिण्डावयवे वर्त्तमानः प्रचयाख्यं तूलकपिण्डमहत्त्वमारभते। तूलकपिण्डावयवे यत् कर्म्म यश्च तत्तूलकपिण्डावयवस्थसंयोगस्तयोः कारणं यद्यद्द्रव्यं तत् तूलकपिण्डावयवस्य कारणमिति। कारणस्य यस्मिन्नर्थे समवायस्तस्मिन्नर्थे कर्म्मणः संयोगस्य समवाय इति कारणैकार्थसमवायसम्बन्धेन कर्म्मणा तूलकपिण्डावयवे वर्त्तमानस्तूलकपिण्डावयवसंयोगस्तत्तूलपिण्डमहत्त्वं प्रचयाख्यं समवायाच्चारभते। तेन तत्रापि संयोगः कारणसमवायादनुमीयते। संयुक्तसमवायादग्नेर्वैशेषिकम्। गन्धकादिद्रव्यविशेषस्याग्निना संयुक्तस्य समवायात् तदग्नेर्वैशेषिकं रूपादीत्यनुमीयते। नीलोऽयमग्निर्गन्धकसंयोगात्। इत्येवं दृष्टानां दृष्टप्रतिपादनाय प्रपञ्चोऽयं द्रष्टव्यः। अयं लौकिकस्यानुमानस्य प्रपञ्चो दृष्टानां प्रत्यक्षाणां भावानां कियतां यः कृतः स खलु निखिलानां दृष्टानामनुमानरीतिप्रतिपादनाय द्रष्टव्य इति। दृष्टाभावे तद्वचनादाम्नायप्रामाण्यमिति। ये ये भावा न प्रत्यक्षास्तेषां दृष्टलिङ्गाभावे तद्वचनात् तस्य लिङ्गस्य वचनादुपदेशादनुमाने सम्बन्धज्ञाने आम्नायस्य प्रामाण्यं वेदादिशास्त्रं प्रमाणमिति। आम्नाये ह्यागमो दृश्यते। यदिदमस्य कार्य्यं कारणं संयोगि समवायि चेति तद्वचनादनुमीयेत। तद्यथा—

तद्यथा—सङ्केतकालानुभूताः कुलालादिव्यापारानन्तरोपलभ्यस्वभावघटादयः, तथा च साध्यादिव्यापारानन्तरनियतोपलभ्यस्वभावाः शब्दा इति। स्वभावो हेतुः, ततश्च स दृष्टान्त-

प्राकृतप्रलये क्रमेण स्वस्वकारणे कार्य्याणां लयादव्यक्तस्यात्मनश्च पुनः कालानुप्रविष्टं क्षेत्रज्ञाधिष्ठितं प्रधानमेकीभूय त्रिगुणलक्षणं संहतरूपं पृथग्भूतं कालः क्षेत्रज्ञः प्रधानञ्चेति त्रयं वर्त्तते। तदा तेषां लिङ्गाभावादनुभावाभावाच्च नानुमानं स्यात्। ततः प्राकृतप्रलयस्थितिकालात्यये पुनः सर्गारम्भे कालः प्रवर्त्तमानः क्षेत्रज्ञेनाधिष्ठितं प्रधानमनुप्रविश्य तं क्षेत्रज्ञं चालयित्वा प्रधानं सङ्कोच्य विकाश्य च सत्त्वरजस्तमोगुणानभिव्यज्य चैकीभूतं सत्त्वमव्यक्तं नामात्मा चतुर्विंशतत्त्वं बभूव। तस्मान्महान्। महतोऽहङ्कारः। अहङ्कारात् भूतादितः पञ्च शब्दतन्मात्रादीनि सात्त्विकान्मनोऽधिष्ठातृदेवतागणश्चाभूत्। तैजसादहङ्कारात् सात्त्विकसहायादिन्द्रियाणि दश बभूवुः। ततः कालदिग्योगाच्छब्दमात्रमाकाशं संहतमभूत्। तत्पुनर्वायुं स्पर्शमात्रमनुप्राविशत्। द्विगुणो वायुर्भूत्वा रूपमात्रं तेजोऽनुप्राविशत्। ततस्त्रिगुणं तेजो भूत्वा रसमात्रा आपोऽनुप्राविशत्। ततश्चतुर्गुणा आपो भूत्वा गन्धमात्रां पृथिवीमनुप्राविशन्। पञ्चगुणा पृथिवी बभूव। तेभ्यः पञ्च शब्दादयोऽभिव्यज्यन्त इति। ततश्चैषा पाञ्चभौतिकी पृथिवी कार्य्यरूपा। तया गन्धमात्रामनुमीयेत। अद्भिस्तु रसमात्राम्। तेजसा रूपमात्रं तेजः। वायुना स्पर्शमात्रं वायुम्। स्थूलेनाकाशेन शब्दमात्रमाकाशमिति। तैरिन्द्रियैर्ज्ञानेन्द्रियाण्यनुमीयेरन्। तन्मात्रैश्च महाभूतैस्तामसमहङ्कारमनुमिनोति। सूक्ष्मैरिन्द्रियै राजसं मनसा देवतागणैः सात्त्विकमिति। अहङ्कारेण महान्तम्। महता चाव्यक्तमिति। तदव्यक्तं संहतम्। तेन पुरुषञ्च क्षेत्रज्ञं तत्स्थमनुमिनोतीति। नात ऊर्द्धमनुमानगम्यं लिङ्गाभावादिति। एवमुक्तञ्च साङ्ख्ये कापिलेन। तद्यथा—"अचाक्षुषाणामनुमानेन बोधो धूमादिभिरिव वह्नेः। स्थूलात् पञ्चतन्मात्रस्य। स्थूलपञ्चतन्मात्रस्यानुमानेन बोधः। बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य। बाह्येनेन्द्रियेणानुमितसूक्ष्मेन्द्रियेणाभ्यन्तरेण स्थूलमनोऽनुमितेन सूक्ष्ममनसा तैः पञ्चभिस्तन्मात्रैः आकाशादिभिरहङ्कारस्यानुमानेन बोधः। "तेनान्तःकरणस्य"। तेनाहङ्कारेण महतः स्वल्पात्मनोऽव्यक्तस्य मनसोऽनुमानेन बोधः। "ततः प्रकृतेः" ततो महतः प्रकृतेरव्यक्तस्यात्मनोऽनुमानेन बोधः "संहतपरार्थत्वात् पुरुषस्य।" प्रकृतिः संहतपरार्था कालक्षेत्रज्ञप्रधानानीति समुदायात्मिका। न तु प्रधानमात्रपरार्था। तस्मादव्यक्ताख्यायां संहतरूपायां प्रकृतौ स्थितस्य क्षेत्रज्ञस्य

स्यादनुमानादभेदो युक्तः।" एतौ च पूर्वपक्षसिद्धान्तौ एवंभूतयुक्तस्वीकारादेव प्रतिषिद्धौ।

पुरुषस्य तन्महत एवानुमानेन बोधः। तत्पुरुषस्य कार्य्यत्वात्। न ह्येकेन गुणरूपेण प्रधानेन कर्त्तुं शक्यते महानात्मा. परन्तु संहतरूपेणाव्यक्तेन। तस्मादुभयं महतानुमीयते। "महदाख्यमाद्यं कार्य्यं तन्मनः।" अव्यक्तस्याद्यं कार्य्यं महदाख्यं तत्तस्याव्यक्तस्यात्मनो मनः। न तु देवनरादिस्थूल-पुरुषाणाम्। "चरमोऽहङ्कारः।" अव्यक्तस्यात्मनो महदाख्यमाद्यं कार्य्यम्। तन्महदनुप्रवेशादहमिति मननादहङ्कारो द्वितीयः कार्य्यः। "तत्कार्य्यत्व-मन्येषाम्।" पञ्चमहाभूतमनोदशेन्द्रियपञ्चार्थानामहङ्कारकार्य्यत्वम्। तेन तेन कार्य्येणैवमुपदिष्टेन कारणस्य तस्य तस्यानुमानम्। ननु कीदृशमनुमान-मिति? अत उक्तम्—"प्रतिबन्धदृशः प्रतिबन्ध्यज्ञानमनुमानम्।" येन प्रति-नियमतो यं बध्नाति स प्रतिबन्धनहेतुः। प्रतिबन्धो लिङ्गम्। यं बध्नाति स प्रतिबन्ध्यो लिङ्गी सम्बन्धीति प्रतिबन्धप्रतिबन्ध्ययोः प्रतिबद्धयोः प्रतिबन्ध-दर्शिनः प्रतिबन्ध्यस्य सम्बन्धिनो ज्ञानमनुमानं भवति। प्रतिबन्ध्यं पुन-स्त्रिविधं—प्रसिद्धं भूतं भवद्भविष्यच्च। तदपि कार्य्यं कारणं सामान्यतो दृष्टञ्च प्रसिद्धमिति तेषां प्रतिबन्ध्यानां. प्रतिबन्धस्य लिङ्गस्य। "न सकृद्ग्रहणात् सम्बन्धसिद्धिः।" प्रतिबन्धप्रतिबन्ध्ययोर्भूयोग्रहणात् सम्बन्ध-निश्चयसिद्धिर्भवति. न सकृद्ग्रहणात्. संशयच्छेदाभावात्। भूयो ग्रहणन्तु प्रत्यक्षानुमानाप्तोपदेशान्यतमेनैकेनानेकेन वा यदा स्यात् तदा त्रिभिः सम्बन्धसिद्धिः। प्रतिबन्धप्रतिबन्ध्ययोः सम्बन्धज्ञानसिद्धिस्त्रिभिः प्रमाणैः प्रत्यक्षानुमानाप्तोपदेशैर्भवति। सम्बन्धस्तु —"नियतधर्म्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः।" प्रतिबन्धप्रतिबन्ध्ययोः सम्बन्धो नामोभयोरेकतरस्य वा नियत-धर्म्मसाहित्यं व्याप्तिरुच्यते। धर्म्मेण साहित्यं धर्म्मसाहित्यम्। नियतमेकान्तेन धर्म्मसाहित्यं नियतधर्म्मसाहित्यम। साहित्यं द्विविधं—पृथगपृथक् च। यथा पुत्रेण सहागत इति पृथक्साहित्यम्। वालुकाभिः सह मृत्पिण्डो घटो जात इत्यपृथक्साहित्यम्। तस्य नियतत्वं तत्र तस्यावधारणेन वर्त्तनम। यद्व्यतिरेकेण यस्य वर्त्तनं नास्ति तत्र तस्य तदव्यतिरिच्य वर्त्तनं व्याप्तिः। तद्व्याप्तिमद्व्याप्यं प्रतिबन्धः। तद्व्याप्तिजनकव्यापारवान् व्यापकः प्रतिबन्ध्यः। तत्रोभयोर्नियतधर्म्मसाहित्यम्। यथा फलबीजयोरुभयमव्यतिरिच्यैवोभयस्य जन्यजनकभावेन धर्म्मेण सह वर्त्तनं साहित्यं पृथग्रूपम्। फलस्य हि बीज-

उपसंहरति—पुनरित्यादि।—नात्यन्येतिवचनेनात्मोपमत्वसम्भवादीनामन्यतन्त्रमतानां प्रमाणानां निषेधं करोति। प्रस्तुते परीक्षां प्रयोजयति—"तथा चास्ति उपलभ्यते च पुनर्भवः" इति ॥ ९ ॥

जन्यत्वधर्म्मेण वीजाव्यतिरेकतो वीजसहितं वीजे व्याप्तिः सम्बन्धः। ततः फलेन कार्य्येण वीजमनुमीयतेऽतीतम्। फलं हि व्याप्यं प्रतिबन्धः। वीजन्तु तद्व्यापकं प्रतिबन्ध्यम्। तद्व्याप्तिजनकव्यापारवत्त्वात् फलं व्याप्नोति वीजमिति वीजस्य कर्त्तृत्वात्। तथा वीजस्य फलजनकत्वधर्म्मेण फलाव्यतिरेकतः फलसाहित्यं फले व्याप्तिः सम्बन्धः। ततो वीजेन कारणेन भविष्यत् फलमनुमीयते। इह हि वीजं प्रतिबन्धो लिङ्गं व्याप्यम्। फलन्तु प्रतिबन्ध्यं व्यापकं वीजवृत्तिव्याप्तिजनकव्यापारवत्त्वात्। वीजं व्याप्नुवन्ति फलानीति फलानां कर्त्तृत्वात्। यद्वीजेन न फलस्योत्पत्तिस्तन्न वीजमुच्यते। वीजभावाभावात्। तत् तु पण्डवीजमवीजमुच्यते तद्व्यावृत्तये धर्म्मस्येति। इत्युभयोर्धर्म्मेण नियतं साहित्यं फलवीजयोः।

एवं काण्डवृक्षयोरपि वीजफलयोरिव व्याप्तिः। धर्म्मेण साहित्यस्य नियतत्वं तद्धर्म्मस्य तदन्यावृत्तिकत्वम्। जन्यजनकभावधर्म्मस्य हि वीजफलाभ्यामन्या वृत्तिः। न ह्याम्रवीजस्य पनसफलजनकत्वम्। पनसफलस्य वा आम्रवीजजन्यत्वम्। न ह्यन्यस्माद्वीजादन्यत् फलमुत्पद्यते, न चावीजात्। उभयोरित्यनेनाभिहितं कार्य्येण कारणस्य कारणेन कार्य्यस्यानुमानमिति। धूमेन कार्य्येण कारणमार्द्रेन्धनवह्निरनुमीयते, नियतजन्यजनकभावसाहित्यात्। तथार्द्रेन्धनयोगे भविष्यति वह्निना भविष्यद्धूमोऽनुमीयते। न हि केवलो वह्निर्धूमस्य जनकः। आयसगोलके भर्ज्जनकपालेऽङ्गारे चाग्नेर्निर्द्धूमत्वदर्शनात्। तत् केवलवह्निव्यावृत्तये धर्म्मेतिपदम्। एकतरस्य वेति वचनेन सामान्यतो दृष्टमनुमानं ख्यापितमिति। त्रिविधं त्रिकालञ्चानुमानम्। एकतरस्य यथा— शैत्येनानुमीयते परोक्षं जलम्। वायुसामान्यतो दृष्टेन। अत्र हि जलशैत्ययोरेकतरस्य जलस्य शैत्ये नियतं समवायधर्म्मस्य साहित्यं व्याप्तिः, न तु शैत्यस्य जले व्याप्तिः. वायौ शैत्यसद्भावात्। इति सामान्यतो दृष्टेन वर्त्तमानानुमानम्, कार्य्येण वर्त्तमानातीतानुमानम्, कारणेन भविष्यदनुमानमिति। वाष्पजधूमेन जलह्रदादिषु निगूढतेजोऽनुमेयमेव। जलानुप्रवेशि हि तेजो वाष्पमुद्गिरति, न तु जलमात्रम्। तत्परमाणुचयो वा न धूमरूपेणोच्चरति। पलालादितृणराशितो धूमोत्थानदर्शनात्। परन्तु जलपरमाणुवह्निपरमाणूभयविकारविशेषो धूम इति। अथान्ये त्वाहुः—तत्त्वान्तरं व्याप्तिः। तस्य भावस्तत्त्वं धर्म्मः। यस्य यो धर्म्मस्तत् तस्य तत्त्वं, तस्य तत्त्वान्तरं तत्तद्धर्म्मातिरिक्तो धर्म्मः। तस्य तत्र सा व्याप्तिः। यथा धूमस्य तत्त्वं धूमत्वं

नियतो धर्म्मः। तद्धर्म्मादन्तरं धर्म्मस्तु वह्न्यव्यतिरेकेण वर्त्तनं व्याप्तिः, न तु वह्नेः धूमे ; धूमव्यतिरेकेण वह्नेरयोगोलकादौ वर्त्तनात्। वह्नित्वं तु वह्नेः नियतो धर्म्म इत्येव तत्त्वान्तरं व्याप्तिरिति। तत्राह—"न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः"। उक्तरूपं तत्त्वान्तरं प्रतिबन्धप्रतिबन्ध्ययोर्व्याप्तिर्न भवति। कस्मात्? वस्तुकल्पनाप्रसक्तेः। तत्त्वान्तरन्तु तद्धर्म्मातिरिक्तो धर्म्मः तस्य वस्तुत्वेन कल्पनाप्रसक्तेः। धूमाभावेन वह्न्यभावानुमाने धूमाभावस्य गवाश्वादिनिखिलस्य धूमाभावत्वं धर्म्मः कल्पनीयः। तच्च धूमाभावत्वं गवाश्वादिनिष्ठैकरूपेणासम्भवान्न वस्तु। तत्रावस्तुनि वस्तुत्वेन कल्पना प्रसज्येतेति। तदभावत्वधर्म्मातिरिक्तश्च धर्म्मोऽपि धूमाभावस्य कल्पनीयः। धूमाभावो यद्यवस्तुभूतो विवक्ष्यते तदा तदवस्तुनोऽप्यवस्तुत्वातिरिक्तो धर्म्मः किमपरो वर्त्तते? न च वर्त्तते। अवस्तुनोऽवस्तुत्वं तदतिरिक्तो वा धर्म्मः कश्चिद्वस्तुभूतः। यदि धूमाभावो वस्तुभूतो विवक्ष्यते तदा धूमातिरिक्तः सर्व्वो भावो धूमाभावः। तस्मिन् सर्व्वस्मिन् भावे धूमाभावे यत्तत्वं नियतं घटस्य घटत्वं पटस्य पटत्वमित्येवं धूमातिरिक्तं धूमत्वादिकनिखिलं धूमाभावस्तत्र धूमत्वस्य तत्त्वं किं वस्तु? तत्त्वान्तरं वा किं वस्तु तदपि कल्पनीयं भवति न च धूमत्वस्य धर्म्मः कश्चिच्छक्यते कल्पयितुमिति। तस्मात् तत्त्वान्तरं न व्याप्तिः।

अथ "निजशक्त्युद्भवमित्याचार्य्याः"। प्रतिबन्धप्रतिबन्ध्ययोरुभयोरेकतरस्य वा निजशक्त्युद्भवं तत्त्वान्तरं व्याप्तिरित्याहुराचार्य्या आनुमानिकशास्त्रस्य। यो यस्य नियतो धर्म्मो वह्नेर्वह्नित्वं धूमस्य धूमत्वमित्येवमादिः, तत्तद्धर्म्माद् अन्तरमन्यो धर्म्मो यो निजशक्त्युद्भवः स खलु तस्यान्यवस्तुनि व्याप्तिः। यथा धूमेन वह्न्यनुमाने। धूमस्य धूमत्वं तत्त्वं धूमत्वधर्म्मादन्तरं धर्म्मन्तु वह्नीतराजन्यत्वं वह्न्यव्यतिरेकेण वर्त्तनञ्च धूमस्य निजशक्त्युद्भवं वह्नौ व्याप्तिः। वह्निव्यतिरेकेणाकाशे वर्त्तनञ्च धूमस्य वायुशक्त्युद्भवं न निजशक्त्युद्भवमिति। धूमाभावेन वह्न्यभावानुमाने। धूमाभावो यद्यवस्तुभूतो विवक्षितः स्यात् तदा तस्यावस्तुनो निजशक्तिरप्रसिद्धा। न चावस्तुना लिङ्गेनावस्तुनो लिङ्गिनोऽनुमानं सम्भवति। नहि वस्तुभूतो धूमाभावो वह्न्यभावश्च वस्तुभूतो विवक्षितुं युज्यते। तथाविवक्षायां धूमाभावस्य लिङ्गस्य दर्शनमपेक्षते। यथा घटस्य अदर्शनं दर्शनाभावो दर्शनस्य निवृत्तिर्नाम प्रयत्नो गुणविशेषः, तथा धूमाभावो धूमस्य निवृत्तिर्नाम प्रयत्नविशेषो गुणः। तस्य तत्त्वं निवृत्तित्वं धर्म्मः। तद्धर्म्मादन्तरं धर्म्मन्तु वह्निनिवृत्तिजन्यत्वं धूमनिवृत्तेर्निजशक्त्युद्भवं वह्निनिवृत्तिरूपे

वह्न्यभावे व्याप्तिः सम्बन्धः—इत्याचार्य्या आहुः। तत्राह कपिलः—"निजशक्तिः" इति। निजस्य शक्तिः सा स्वरूपविशेष एव न व्यतिरिक्ता। तथा सति "न स्वरूपशक्तिनियमः पुनर्वादप्रसक्तेः"। निजशक्तिः स्वरूपशक्तिरेव। न व्यतिरिक्ता—इत्येवं नियमो न क्रियते। यथा वह्नेर्दाहिका शक्तिर्धूमस्य मालिन्यकारित्वादिशक्तिरित्येवं स्वरूपशक्तिवचने वह्नौ धूमस्य व्याप्तिर्न भवति। मालिन्यकारित्वादिस्वरूपशक्तितो धूमो न वह्निना व्याप्यते। तद्व्याप्तिसिद्धय्रथं पुनः शक्त्यन्तरवचनप्रसङ्गः स्यात्। तस्मान्निजशक्तिर्न केवलस्वरूपशक्तिः। यत्र यया शक्त्या धर्म्मान्तरमुद्भवति तत्र सा शक्तिर्निजशक्तिरिष्यत इति। कुतः पुनर्वादप्रसक्तिरिति? अत उक्तम्। "विशेषणानर्थक्यप्रसक्तेः"। स्वरूपशक्तिरेव निजशक्तिरिति वचने पुनर्वादप्रसक्तिविशेषणानर्थक्यप्रसक्तेः। निजस्य शक्तिर्निजशक्तिः—इत्यत्र शक्तेर्विशेषणं निजस्येति—तस्यानर्थक्यं प्रसज्यते। स्वरूपशक्त्युद्भवमित्युक्त्या तत्सिद्धेः। स्वरूपेति स्वशब्देन यदुक्तं तदेव निजशब्देनोच्यते। तेन निजस्वरूपशक्त्युद्भवमिति वचने पुनरुक्तिप्रसङ्गः निजस्य स्वरूपशक्तिरित्यर्थात् न केवलं विशेषणानर्थक्यप्रसङ्गः। "पल्लवादिष्वनुपपत्तिश्च"। वृक्षादीनां पल्लवादिकमपि स्वरूपं छायादिकर्म्मकृच्छक्तिकम्। पल्लवादिस्वरूपाणां शक्त्युद्भवं छायादि। वृक्षेण कार्य्येणानुमेये तद्बीजे कारणे छायादिकरणं पल्लवादेर्व्याप्तिर्भवति। न वृक्षस्येति। ततोऽनुमानस्यानुपपत्तिरिति।

तत्रापि "आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात्"। यस्याधेयं यत्स्वरूपं तस्याधेयस्य शक्तिसिद्धौ निजशक्तियोगोऽस्ति. समानन्यायात्। पल्लवाद्याधेयस्य छायादिकर्म्मकरणे शक्तिसिद्धौ वृक्षस्य निजस्य च शक्तियोगोऽस्ति। यथा वह्नेर्निजस्य दाहिका शक्तिर्वह्निर्दहतीति। यदुष्णगुणो वह्निः काष्ठादिदाहकर्म्म करोति तत्र वह्नेर्निजस्य दाहिकायाः शक्तेर्योगोऽस्ति। द्रव्यं हि यत्किञ्चित् कर्म्म करोति। तत्र किञ्चित् स्वप्रभावेण किञ्चिद् गुणप्रभावेण किञ्चित् कर्म्मप्रभावाच्च। यद्यपि तत्र गुणप्रभावात् कर्म्मप्रभावाच्च यत्किञ्चित् करोति तत्र तु द्रव्यस्य स्वप्रभावयोगश्चास्ति। तथापि द्रव्यप्रभावमन्तरेणापि गुणकर्म्मप्रभावात् तत्तद्भवति शक्तिरूपेण समानन्यायात्।

तस्मादुक्तदोषान्निजस्य स्वरूपशक्त्युद्भवं तत्त्वान्तरं न व्याप्तिरिति साङ्ख्ये कपिल उवाच। तत्रानुमानेऽर्थापत्तिसम्भवाभावोपमानानामन्तर्भावान्न न्यूनत्वमिति। तत्रोवाचाक्षपादगौतमो वादमार्गोपदेश आन्वीक्षिकीशासने—"प्रसिद्ध-

साधर्म्म्यात् साध्यसाधनमुपमानम्।" प्रज्ञातेन सामान्यात् प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति। यथा गौरेवं गवय इति। किं पुनरत्रोपमानेन क्रियते? यदा खल्वयं गवा समानधर्म्मं प्रतिपद्यते, तदा प्रत्यक्षतस्तमर्थं प्रतिपद्यत इति। समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थ इत्याह—यथा गौरेवं गवय इति उपमाने प्रयुक्ते गवा समानधर्म्ममर्थमिन्द्रियार्थसन्निकर्षादुपलभमानोऽस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसम्बन्धं प्रतिपद्यते। यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा माषपर्णी—इत्युपमाने प्रयुक्त उपमानात् संज्ञासंज्ञिसम्बन्धं प्रतिपद्यमानस्तामोषधिं भैषज्यायाहरति। एवमन्योऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति। परीक्षितं चैतल्लक्षणं तत्रैव। अत्यन्तप्रायैकदेशसाधर्म्म्यादुपमानासिद्धिः। अत्यन्तसाधर्म्म्यादुपमानं न सिध्यति। न चैवं भवति। यथा गौरेवं गौरिति। प्रायसाधर्म्म्यादुपमानं न सिध्यति। न हि भवति यथानड्वानेवं महिष इति। एकदेशसाधर्म्म्यात् उपमानं न सिध्यति। न हि सर्व्वेण सर्व्वमुपमीयते। एकदेशसाधर्म्म्यं सर्व्वस्य सर्व्वत्रैवास्तीति। तत्रोत्तरम्। "प्रसिद्धसाधर्म्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः।" न साध्यस्य कार्त्स्न्यप्रायाल्पभावमाश्रित्योपमानं प्रवर्त्तते। किन्तु प्रसिद्धसाधर्म्म्यात् साध्यसाधनभावमाश्रित्य प्रवर्त्तते। यत्र चैतदस्ति न तत्रोपमानं प्रतिषेद्धुं शक्यम्। तस्माद् यथोक्तदोषो नोपपद्यत इति। अस्तु तर्हि चोपमानमनुमानम्। प्रत्यक्षेणाप्रत्यक्षसिद्धेः। यथा धूमेन प्रत्यक्षेणाप्रत्यक्षस्य वह्नेर्ग्रहणमनुमानम्। एवं गवा प्रत्यक्षेणाप्रत्यक्षस्य गवयस्य ग्रहणमिति। नेदमनुमानाद्विशिष्यते। तत्र विशिष्यत इत्याह। कया युक्त्या? नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्याम इति। यदा ह्ययमुपयुक्तोपमानो गोदर्शी गवयं गोसमानमर्थं पश्यति तदायं गवय इत्यस्य संज्ञाशब्दस्य व्यवस्थां प्रतिपद्यते, न चैवमनुमानमिति। परार्थं चोपमानं यस्य ह्युपमानमप्रसिद्धं तदर्थं प्रसिद्धोभयेन क्रियते। यथा बलिवासवयोर्युद्धं बलिवासवयोरिवेति। परार्थमुपमानमिति चेत्? न, स्वयमध्यवसायात्। बलिवासवयोर्युद्धं बलिवासवयोरिवेति स्वयमध्यवसीयते, न तूपमा भवति। भवति च भोः स्वयमध्यवसायः। यथा गौरेवं गवय इति। नाध्यवसायः प्रतिषिध्यते। उपमाने तु तन्न भवति। "प्रसिद्धसाधर्म्म्यात् साध्यसाधनमुपमानम्।" न च यस्योभयं प्रसिद्धं तं प्रति साध्यसाधनभावो विद्यते। तथापि तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः। तथेति बादे न्यायवाक्ये

पञ्चावयवे य उपनयस्तदुपमानम्। तत्र यथा। पुरुषो नित्यः, अकृतकत्वात्। यथाकाशः। यथाकाशोऽकृतकस्तथा पुरुषोऽकृतक इति। तथेत्यनेन समानधर्म्मोपसंहारादुपमानं सिध्यति। नानमानमिति। वादेऽवयवार्थं पृथगुपमानं प्रमाणमिष्यते। इत्ययमनयोर्विशेषः—इति कपिलादिभिरपि चाङ्गीकृत्य स्वस्वतन्त्रे वादानभिधानात् प्रमाणेऽभिधेयेऽनुमानेऽन्तर्भावितमुपमानमिति न विरोधः। इत्यनुमानं व्याख्यातम्।

अथानुमानं तर्को युक्त्यपेक्ष इति युक्त्यपेक्षत्वादनुमानावान्तरीयत्वेऽपि युक्तेः सिद्धे प्रामाण्ये बहुकारणोपपत्तितस्तत्त्वज्ञानार्थं पृथगेवेहोक्ता। तामुदाहरति—जलेत्यादि। जलं यथर्त्तु शिशिरवर्षणसेचनादिना सिक्तम। कर्षण क्षेत्रस्य। वीजं वीजधर्म्मकम्, न तु निर्व्वीजांशयुक्तं वीजं पुलाकादि। ऋतुर्यस्य वीजस्य यः प्ररोहकालादिफलोत्पत्तिपर्य्यन्तः कालः। तेषां चतुर्णां सान्निध्यादेकान्तेन शस्यसम्भवः स्यादित्येका युक्तिर्भविष्यद्दर्शिनी भविष्यन्ती नाम। अपरा तु षड्धातुसंयोगाद्गर्भाणां सम्भव इति। यथा दोषरहितायां भूमौ कृष्टायामदोषं वीजमुप्तं यथाहजलोपसिक्तं यथर्त्तुकालेऽङ्कुरं जनयति—तथा दोषहीने गर्भाशये क्षेत्रे दोषहीनशुक्रार्त्तवजलमेके वीजधर्म्मा सूक्ष्मदेहिजीवात्मा यदावक्रामति ऋतुकाले तदात्मा शुक्रार्त्तवीयपञ्चमहाभूतानीति षड्धातुसंयोगाद्ध्रुवं गर्भाणां सम्भवः स्यादिति वर्त्तमानदर्शिनी बुद्धिर्युक्तिर्वर्त्तमाना। अपरा तु—मथ्येत्यादि। मथ्यमन्थनमन्थानसंयोगादग्निसम्भवः। मथ्यं मन्थनार्थमधःस्थकाष्ठमरणिर्नाम, मन्थनमूर्द्ध्वस्थकाष्ठं येन घृष्यति, मन्थानः कर्त्ता; एषां संयोगान्मन्थनक्रिययावश्यमग्निसम्भव इति भविष्यन्ती युक्तिः। अपरा तु तेषां संयोगादग्निसम्भवो दृष्ट इत्यतीता। तथा युक्तियुक्ता चतुष्पादसम्पत्—अविगुणभिषगद्रव्योपस्थातृभेषजानि युक्तियुक्तानि साध्यव्याधिनिवर्हणानि भवन्तीति युक्तिः।

ननु कासौ युक्तिरिति? अत आह—बुद्धिरित्यादि। या बुद्धिर्बहुकारणयोगजान् बहुविधकारणोपपत्तितः खल्वविज्ञाततत्त्वान् भावानर्थान् तत्त्वज्ञानार्थं पश्यति सा बुद्धिर्युक्तिर्नाम। सा त्रिकाला त्रिकालमर्थं पश्यतीति विज्ञेया। यया युक्त्या बुद्ध्या त्रिवर्गं धर्म्मश्चार्थश्च कामश्चेति वर्गत्रयं साध्यते इति त्रिवर्गसाधिनी त्रिकाला तत्त्वज्ञानसाधिनी युक्तिस्तर्क इत्यनर्थान्तरम्। तथा चाभिहितस्तर्कोऽक्षपादगोतमेन—"अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः"। व्याख्यातं वात्स्यायनेन। तर्को

न प्रमाणसंगृहीतो न प्रमाणान्तरं प्रमाणानामनुग्राहकस्तत्त्वज्ञानाय कल्पते। तस्योदाहरणं किमिदं जन्म कृतकेन हेतुना निवर्त्तते? आहोस्विदकृतकेन? अथाकस्मिकमिति? एवमविज्ञातेऽर्थे कारणोपपत्त्या तत्त्वज्ञानार्थमूहः प्रवर्त्तते। यदि कृतकेन हेतुना निवर्त्तते जन्म तदा हेतूच्छेदादुपपन्नोऽयं जन्मच्छेदः। अथाकृतकेन हेतुना, ततो हेतूच्छेदस्याशक्यत्वादनुपपन्नोऽयं जन्मच्छेदः। अथाकस्मिकमित्यकस्मान्निवर्त्तमानं जन्म न पुनर्निवर्त्स्यतीति निवृत्तिकारणं नोपपद्यते। तेन जन्मानुच्छेद इति। एतस्मिंस्तर्कविषये कर्म्मनिमित्तं जन्मेति प्रमाणानि वर्त्तमानानि तर्केणानुगृह्यन्ते। तत्त्वज्ञानविषयस्य विभागात् तत्त्वज्ञानाय कल्पते तर्क इति। सोऽयं तर्कः प्रमाणसहितो वादे साधनायोपलम्भाय वार्थस्य भवतीत्येवमर्थं पृथगुच्यते प्रमेयेऽन्तर्भूतोऽपीति। अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते जानीयेममर्थमिति। अथ जिज्ञासितव्यस्य वस्तुनो व्याहतौ धर्म्मौ विभागेन विमृशति। किं स्विदित्थम्? आहोस्विन्नेत्थमिति? विमृश्यमानयोर्धर्म्मयोरेकं कारणोपपत्त्याऽनुजानाति। सम्भवत्यस्मिन् कारणं प्रमाणं हेतुरिति। कारणोपपत्त्या स्यादेवमेतन्नेतरदिति। तत्र निदर्शनं योऽयं ज्ञाता ज्ञातव्यमर्थं जानीते तञ्च भो जानीयेति जिज्ञासा। स किमुत्पत्तिधर्म्मकोऽनुत्पत्तिधर्म्मको वेति विमर्शः। विमृश्यमानेऽज्ञाततत्त्वेऽर्थे यस्य धर्म्मस्याभ्यनुज्ञाकारणमुपपद्यते तमनुजानाति। यद्ययमनुत्पत्तिधर्म्मकस्ततः स्वकृतस्य कर्म्मणः फलमनुभवति ज्ञाता। दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरमुत्तरं पूर्व्वस्य पूर्व्वस्य कारणम्। उत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति स्यातां संसारापवर्गौ। उत्पत्तिधर्म्मके ज्ञातरि पुनर्न स्याताम्। उत्पन्नः खलु ज्ञाता देहेन्द्रियबुद्धिवेदनाभिः सम्बध्यत इति। नास्येदं स्वकृतस्य कर्म्मणः फलम्। उत्पन्नश्च भूत्वा न भवतीति तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतस्य कर्म्मणः फलोपभोगो नास्ति। तदेवमेकस्यानेकशरीरयोगः शरीरादिवियोगश्चात्यन्तं न स्यादिति। यत्र कारणमुपपद्यमानं पश्यति तत्रानुजानाति सोऽयम्। एवंलक्षण ऊहस्तर्क इत्युच्यते। कथं पुनरयं तत्त्वज्ञानार्थो न तत्त्वज्ञानमेवेति? अनवधारणात् अनुजानात्ययमेकतरं धर्मं कारणोपपत्त्या न त्ववधारयति न व्यवस्यति न निश्चिनोत्येवमेवेदमिति। कथं तत्त्वज्ञानार्थ इति? तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणानुग्रहोद्भावितात् प्रसन्नादनन्तरप्रमाणसामर्थ्यात्तत्त्वज्ञानमुत्पद्यत इत्येवं तत्त्वज्ञानार्थस्तर्कः। सोऽयं तर्कः प्रमाणानि प्रतिसन्दधानः प्रमाणाभ्यनुज्ञानात् प्रमाणसहितो वादे तूपदिष्ट इत्यविज्ञात-

तत्राप्तागमस्तावद्वेदः,यश्चान्योऽपि कश्चिद् वेदार्थादविपरीतः परीक्षकैः प्रणीतः शिष्टानुमतो लोकानुग्रहप्रवृत्तः शास्त्रवादः स चाप्तागमः। आप्तागमादुपलभ्यते दाननपोयज्ञसत्या-

तत्त्वमनुजानातीति। यथा सोऽर्थो भवति तस्य तथाभावस्तत्त्वमविपर्य्ययो याथातथ्यमिति।

इति चतुर्णामाप्तोपदेशादीनां लक्षणान्युक्त्वा तदुपसंहरति एवमित्यादि। एषा चतुर्व्विधैव परीक्षा न त्वतिरिक्ता खल्वन्या परीक्षास्ति। यतो यया चतुर्व्विधयैव परीक्षया सर्व्वं परीक्ष्यते। सर्व्वमिति यत् परीक्ष्यते तत् परीक्ष्यं सर्व्वं सदसच्चैव भावोऽभावश्चेति तत्त्वम्, न तु किञ्चिदिति। तस्मात् तया चतुर्विधया परीक्षया पुनर्भवोऽस्त्येवेति॥ ९॥

गङ्गाधरः प्रत्यक्षमात्रप्रमाणवादिप्रभृतीन् नास्तिकान् निरस्य पुनर्भवस्य अस्तित्वं चतुर्व्विधया परीक्षया स्थापयित्वा पूर्व्वमाप्तोपदेशेन स्थापयति— तत्र आप्तागमस्तावदित्यादि। तावद्वेद ऋग्यजुःसामाथर्व्ववेदः सेतिहास-पुराणः सषडङ्गश्चाप्तागमः यश्चान्योऽपि कश्चिद्वेदार्थादविपरीतः। वेदार्थ-विपरीतस्तु न प्रमाणम्। कथं वेदार्थाविपरीततया ज्ञायते? शिष्टानुमतः शिष्टैराप्तैः श्रुत्यानुमतो यः शास्त्रवादः परीक्षकैः प्रणीतः। वेदवाक्यार्थ एव वाक्यान्तरेण प्रकाशितः। तत्र लोकानुग्रहधर्म्मकर्म्मादिप्रणयनेन वर्त्तते यः स लोकानुग्रहप्रवृत्तः। स च शास्त्रवाद आप्तागम इति। एतेन तदुक्तम्— ऋग्यजुः-सामाथर्व्वान्तर्गता ज्योतिर्व्वेदधनुर्व्वेदगान्धर्व्ववेदायुर्व्वेदाः शिक्षाकल्पव्याकरण-च्छन्दोनिरुक्तज्योतिर्व्वेदास्ते पुनर्महर्षिभिः परीक्षकैः प्रणीताः शाखादिसंज्ञा आप्तागमाः प्रमाणानीति। तस्मादागमादुपलभ्यते खल्वु यत्तदाह— दानेत्यादि। दानादीन्यभ्युदयनिःश्रेयसकराणीति। आप्तागमे श्रुतं दानादिकर्म्मभिः अभ्युदय इह शुभपारत्रिकस्वर्गपुनर्भवादि शुभं भवति। तथा दानादि-

चक्रपाणिः— तत्र शब्दस्य पुनर्भवास्तिपादकत्वं दर्शयति— तत्राप्तागम इत्यादि।—प्रथमं वेदं प्रदर्शयन् वेदस्य निरस्तविभ्रमाशङ्कं प्रामाण्यं दर्शयति, यश्चान्योऽपीत्यनेन ग्रन्थेन वेदार्थो-ऽविपरीतत्वादिभिर्हेतुभिः परिच्छेदनीयप्रामाण्यायुर्व्वेदस्मृतिशास्त्रादीनि दर्शयति, शास्त्ररूपो वादः शास्त्रवादः; आप्तागमादिति वेदात्, यज्ञोऽग्निष्टोमादिः, ब्रह्मचर्य्यमुपस्थसंयमनादि, अभ्युदयः स्वर्गः, निःश्रेयसं मोक्षः, अत्र यथायोग्यतया स्वर्गस्य मोक्षस्य च कारणं बोद्धव्यम्।

ऽहिंसाब्रह्मचर्य्याण्यभ्युदयनिःश्रेयसकराणीति । न चानतिवृत्तसत्त्वदोषाणामदोषैरपुनर्भवो धर्म्मद्वारेषूपदिश्यते । धर्म्मद्वारावहितैश्च व्यपगतभयरागद्वेषलोभमोहमानैर्ब्रह्मपरैराप्तैः कर्म्मविद्भिरनुपहतसत्त्वबुद्धिप्रचारैः पूर्व्वैः पूर्व्वतरैर्महर्षिभिर्दिव्यचक्षुर्भिर्दृष्टोपदिष्टः पुनर्भव इति व्यवस्येत् * ॥ १० ॥

विशेषैर्निःश्रेयसं भवतीति । दानादिविपरीतकर्म्मभिरभ्युदयनिःश्रेयसविपरीतं चाशुभं भवतीत्यर्थादापद्यते । तेनाशुभेन दुःखभोगपूर्व्वकनरकयातनां परत्र भुक्त्वा पुनरिह दुःखभोगाहजन्म प्राप्नोति । नहि चेद्दानादिधर्म्मद्वारेषु निःश्रेयसं भवतीत्यतः पुनर्भवो नास्तीत्यत आह—न चेत्यादि । अनतिवृत्तसत्त्वदोषाणाम्—अतिवृत्तावुपशान्तौ सत्त्वदोषौ मनोदोषौ रजस्तमोगुणौ येषां तेऽतिवृत्तसत्त्वदोषाः । नातिवृत्तसत्त्वदोषास्तेषाम् । येषां मनोदोषरजस्तमोनिवृत्तिर्नाभूत्तेषामपुनर्भवो निःश्रेयसमदोषैराप्तैर्दानादिषु धर्म्मद्वारेषु कर्म्मसु नोपदिश्यते । तर्हि तेषां दानादिषु धर्म्मद्वारेषु किमुपदिश्यत इति ? अत आह—धर्म्मद्वारेत्यादि । धर्म्मद्वारेणावधानवद्भिस्तु व्यपगतभयादिभिर्ब्रह्मपरैर्ब्रह्मविद्भिराप्तैः कर्म्मविद्भिर्येन कर्म्मणा यद्भवति तत् तथा जानद्भिरनुपहतसत्त्वबुद्धिप्रचारैः सत्त्वस्य बुद्धेश्च प्रचारो येषां नोपहतस्तैः पूर्व्वैः पूर्व्वतरैर्महर्षिभिर्दिव्यचक्षुर्भिर्योगचक्षुर्भिर्दृष्टा तेषामनतिवृत्तसत्त्वदोषाणां प्राणिनां पुनर्भव उपदिष्ट इत्यस्ति पुनर्भव इत्याप्तागमाद्व्यवस्येत् ॥ १० ॥

एतेन जन्मान्तरभोग्यस्वर्गादिकजन्मलभ्यमोक्षोपदेशेनात्मनः परलोको भवतीति भावः । आगमान्तरमाह—न चेति । अनतिवृत्तावनुपशान्तौ सत्त्वदोषौ मानसौ रजस्तमोरूपौ येषां ते तथा, तेषामपुनर्भवो मोक्षः, धर्म्मद्वारेषु धर्म्मशास्त्रेषु, अदोषैर्महर्षिभिरुपदिश्यते तेनेति सम्बन्धः, तेन पुनर्भव उपदिश्यते इत्यर्थः । आगमान्तरमुपदर्शयन्नाह—धर्म्मद्वारेत्यादि । ब्रह्म अध्यात्मज्ञानं तत्परैः, कर्म्मविद्भिरनुष्ठातव्ययागादिकर्म्मविद्भिः, अनुपहतसत्त्वगुणबुद्धेः प्रचारो बोधलक्षणो येषां ते तथा ; एतेन विशुद्धबुद्धित्वं दर्शयति ; दिव्यमतीन्द्रियार्थदर्शि चक्षुः समाधिरूपं ज्ञानं येषां ते दिव्यचक्षुषस्तैर्दृष्टोपदिष्टः स्वयमनुभूय कथित इत्यर्थः ; इतिशब्दो ।, एवमित्यागमेन ॥ १० ॥

* एवमिति चक्रपाणिधृतः पाठः ।

एवं पुनर्भवं प्रत्यक्षमपि नोपलभ्यते। मातापित्रोर्विसदृशान्यपत्यानि तुल्यसम्भवानां वर्णस्वराकृतिसत्त्वबुद्धिभाग्यविशेषाः, प्रवरावरकुलजन्म, दास्यैश्वर्य्यं, सुखासुखमायुः,

गङ्गाधरः — आप्तोपदेशप्रमाणेन पुनर्भवोऽस्तीति व्यापयन्तं नास्तिक आह — कस्य खल्विह मृत्वा परलोकं गत्वा पुनरिह भवेत्? शुक्रार्त्तवादिपञ्चभूतविकारसमुदायो हि पुमान् पाञ्चभौतिक इति नास्त्यात्मा। योऽसौ मृत्वा परलोकं गच्छति तत्र भोगं भुक्त्वा पुनरिह भवतीति। अत आह — एवं पुनर्भव इत्यादि। प्रत्यक्षमपि नोपलभ्यते पुनर्भव आत्मानित्यत्वात्। न ह्यात्मानमन्तरेण शुक्रार्त्तवादिभिः पञ्चभिर्महाभूतैर्जायते जन्तुः कश्चन। भूतसंयोगे चैतन्यसम्भवाभावात्। भूतेषु प्रत्येकमदृष्टस्य चैतन्यस्य सङ्घाते तदसम्भवात्। कारणगुणपूर्व्वको हि कार्य्यगुणो भवति। कार्य्ये मदशक्तिवन्न चैतन्यं कारणकर्म्मसम्भूतं स्यात्। चैतन्यं हि गुणः। गुण एव गुणान्तरमारभते। न कर्म्म गुणमारभते इत्यादि विस्तरेण दर्शितं पूर्व्वाध्याये। तस्मादस्त्यात्मा नित्यः संसारी स एव पुनरिह जायते। प्रत्यक्षेण तदुपलभ्यते कथमिति? अत आह — मातापित्रोरित्यादि। विसदृशानामपत्यानि विभिन्नस्वरूपाणि प्रत्यक्षेण दृश्यन्ते। कानि च सुरूपादीनि। कानि च कुरूपादीनि तादृशरूपाणि खलु मातापित्रोः शुक्रार्त्तवविशेषेण सम्भवन्तीति? अत आह — तुल्यसम्भवानामित्यादि। तुल्याभ्यां मातापितृभ्यां तयोः पूर्व्ववच्छुक्रार्त्तवाभ्यां सम्भवो येषामपत्यानां वर्णस्वरादिविशेषाः प्रत्यक्षेण दृश्यन्ते। या चैकस्यापत्यस्य माता यश्च पिता सा च स चापरस्यापत्यस्येति। कस्मात् तस्य तस्यापत्यस्य कारणात् स्वरवर्णादिविशेषाः। आत्मजा हि वर्णस्वराकृतिमनोबुद्धिभाग्यानां विशेषाः। न हि तेषु पञ्चभूतसम्भवत्वेऽपि वर्णस्वराकृतीनां विशेषा भाग्यविशेषादृते सम्भवन्ति। भाग्यविशेषश्च सत्त्वबुद्धिविशेषेण पूर्व्वदेहकृतेन कर्म्मणाभिजायते। भाग्यविशेषाच्च सत्त्वबुद्ध्योर्विशेषः स्यात्। एवं भाग्यविशेषादेव प्रवरावरकुले जन्म। कस्य

चक्रपाणिः — प्रत्यक्षञ्च यद्यपि पुनर्भवं न गृह्णाति, तथापि तत्र पुनर्भवग्राहकानुमानस्य लिङ्गग्रहणे यथा व्याप्रियते, तथा दर्शयति — प्रत्यक्षमपीत्यादि। विसदृशानीति कश्चित् कुरूपः कश्चित् सुरूपः, तुल्यसम्भवानां तुल्योत्पादकारणानां, कश्चिद् गौरः, कश्चित् कृष्णः; एवं स्वरादावपि विशेषो बोद्धव्यः। दास्यैश्वर्य्यमिति कस्यचिदिहास्य कस्यचिदैश्वर्य्यम्। एवमपरत्रापि विपर्य्ययः पुरुषभेदेन

आयुषो वैषम्यम्, इहाकृतस्यावाप्तिः, अशिक्षितानाञ्च रुदितस्तनपानहासत्रासादीनाञ्च प्रवृत्तिः, लक्षणोत्पत्तिः, कर्म्म-

च दास्यम्। कस्य चापत्यस्यैश्वर्य्यम्। सुखं चायुः कस्यचित्। कस्यचित् असुखमायुः। तथैवायुषः कस्य च दैर्घ्यम्। केषाञ्चाल्पत्वमिति भाग्यादेव भवति। न चैतानि मनोबुद्धिभ्यां कृतैः कर्म्मभिरात्मानं विना जातादृभाग्यविशेषात् सम्भवन्ति। न हि मनो वा बुद्धिर्वा वैशेष्यं स्वयमापद्यते विनात्मानं येन विशेषेण कर्म्मविशेषः क्रियते। यदि च सत्त्वमनुविधीयते शरीरं शरीरं चानुविधीयते सत्त्वमिति शरीरविशेषयोगात् सत्त्वविशेषः स्यात्, ततो बुद्धिविशेषः, ताभ्यां कर्म्मविशेषः क्रियते, ततो भाग्यविशेषः स्यादित्युच्यते। तत्राह—इहाकृतस्यावाप्तिरित्यादि। यदि पूर्व्वजन्म नास्ति तत् पूर्व्वजन्मकृतकर्म्मफलेन मनोबुद्धिभाग्यविशेषा न स्युः। तर्हि कथमिह जन्मनि यत् कर्म्म न कृतं तदिहाकृतस्य कर्म्मणः फलावाप्तिः कस्माद् भवति? तस्मादस्त्यात्मा नित्यः सर्व्वस्य कर्त्ता।

य इह पूर्व्वजन्मनि यत्किञ्च कर्म्म चकार शुभं वाशुभं तस्यैतत् फलं यदिहाकृतकर्म्मणो न फलम्। तद्यथा—अशिक्षितानाञ्चेत्यादि। जातमात्रस्य शिशोः शिक्षितानि शिक्षाकर्म्मभिः कृतानि रुदितादीनि यानि तेषामवाप्तिरिति। गौतमेनाप्युक्तम्—"पूर्व्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः"। व्याख्यानमिदं वात्स्यायनेन—जातः खल्वयं कुमारकोऽस्मिन् जन्मन्यगृहीतेषु हर्षभयशोकादिहेतुषु हर्षभयशोकादीन् प्रतिपद्यते लिङ्गानुमेयान्। ते च स्मृत्यनुबन्धादुत्पद्यन्ते, नान्यथा। स्मृत्यनुबन्धश्च पूर्व्वाभ्यासम् अन्तरेण न भवति। पूर्व्वाभ्यासश्च पूर्व्वजन्मनि सति भवति। नान्यथेति। तस्मादस्त्यात्मा नित्यः संसारी। यः पूर्व्वदेहे कर्म्माणि कृत्वा रुदितादिहेतून् उपलभ्याभ्यस्य परलोकं गत्वा पुनरिह जातमात्रं तान् रुदितादिहेतून् स्मृत्वा रोदिति स्तन्यं पिबति हसति त्रस्यति बिभेति हृष्यति शोचति।

बोद्धव्यः; सुखासुखमित्यायुषो विशेषणम्। रुदितादयोऽमी अभ्युत्पन्नबालगोचरतया बोद्धव्याः, एते च रुदितादयो यथायोगमिष्टानिष्टस्मरणमन्तरा न भवन्ति—स्मरणञ्च पूर्व्वज्ञानं विना न भवतीति पूर्व्वजन्मजज्ञानानुमानात् परलोकानुमायका भवन्ति; पूर्व्वप्रतिपादितञ्च विसदृशत्वादिवैचित्र्यमुत्तरत्र प्रतिपादनीयञ्च लक्षणोत्पत्त्यादिकारणान्तरं दर्शने सति पूर्व्वजन्मकृतकारणानुमायकमिति परलोकानुमायकं मन्तव्यम्। लक्षणोत्पत्तिरिति सामुद्रकलक्षणप्रतिपादितलक्षणोत्-

इत्येवमेषामाशिक्षितानां रुदितादीनां प्रवृत्तिदर्शनादस्ति पुनर्भव इति।
तत्राहुर्नास्तिकाः—नास्ति पुनर्भवः। जातमात्रशिशोर्हि "पद्मादिषु
प्रबोधसम्मीलनविकारवत्तद्विकारः"। यथा पद्मादिष्वनित्येषु प्रबोधसम्मीलनं
विकारो भवति स्वभावात्, एवमनित्येषु शिशुषु तत्तदात्मनोऽप्यनित्यस्य
भूतमयस्य हर्षभयशोकरुदितस्तनपानहासत्रासादयो विकाराः सम्प्रतिपद्यन्ते।
तत्रोच्यते—नेदं युक्तं हेत्वभावात्। अनेन हेतुना पद्मादिषु प्रबोधसम्मीलन-
विकार इतिवदनित्यस्य भूतमयस्यात्मनो हर्षादिसम्प्रतिपत्तिरिति। न
ह्यत्रोदाहरणसाधर्म्यात् साध्यसाधनहेतुरस्ति न वा वैधर्म्यात् साध्यसाधन-
हेतुरस्ति। इति हेत्वभावादसम्बन्धार्थकमपार्थकमुच्यते। दृष्टान्ताच्च हर्षादि-
निमित्तस्य न निवृत्तिर्भवति। या च खल्वियमसेवितेषु विषयेषु हर्षादिसम्प्रति-
पत्तिः स्मृत्यनुबन्धकृता प्रत्यात्मं गृह्यते सेयं पद्मादिप्रबोधसम्मीलनदृष्टान्तेन
न निवर्त्तते। यथा चेयं न निवर्त्तते तथा जातस्यापीति। क्रियाजातौ च
पर्णविभागसंयोगौ पद्मादीनां प्रबोधसम्मीलने उच्येते। क्रियाहेतुश्चानुमेयः। एवं
सति दृष्टान्ते किं प्रतिषिध्यते? तत्राह—निर्निमित्तः पद्मादिषु प्रबोधसम्मीलन-
विकार इति। तथा शिशोरपि निर्निमित्ता रुदितादयो विकारा इति चेत्?
न। उष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम्। न निर्निमित्तः
पद्मादिषु प्रबोधसम्मीलनविकार इव शिशोर्जातमात्रस्य हर्षादयो
विकारा निर्निमित्ताः। पञ्चात्मकविकाराणामुष्णादिकालनिमित्तत्वात्।
उष्णादिषु सत्सु भावादसत्स्वभावात्तन्निमित्ताः पञ्चभूतानुग्रहेण निवृ-
त्तानां पद्मादीनां प्रबोधसम्मीलनविकाराः निमित्तात् भवितुमर्हन्ति, न निमित्त-
मन्तरेण। न चात्मनो दृष्टान्तादुत्पत्तिनिरोधः कारणानुमानं भवति। न
हर्षादीनां निमित्तमन्तरेणोत्पत्तिर्नोष्णकालादिवन्निमित्तान्तरोपादानं हर्षादी-
नाम्। तस्मादयुक्तमेतत्। एवमितश्चास्ति नित्य आत्मा चैतन्यकारणम्। प्रेत्या-
हाराभ्यासकृतात् स्तन्याभिलाषाज्जातमात्रस्य शिशोः प्रवृत्तिलिङ्गः स्तन्याभि-
लाषो गृह्यते। स च नान्तरेणाहाराभ्यासं भवति। कया युक्त्येति चेत्?
दृश्यते हि शरीरिणां क्षुधया पीड्यमानानामाहाराभ्यासकृतात् स्मरणानुबन्धा-
दाहाराभिलाषः। न च पूर्व्वशरीरमन्तरेण जातमात्रस्य शिशोरुपपद्यते सः। तेन
स्तन्यपानाभिलाषेणानुमीयते भूतपूर्व्वं शरीरं यत्रानेन शिशुनाहारोऽभ्यस्त
इति। स खल्वयमात्मा पूर्व्वशरीरात् प्रेत्य शरीरान्तरमिदमापन्नः क्षुत्पीड़ितः
पूर्व्वाभ्यस्तं क्षुन्निवृत्तिकरमाहारमनुस्मरन् स्तन्यमभिलषन् पिबति। तस्मात्

**युक्तिश्चैषा षड्धातुसमुदायाद्गर्भजन्म, कर्त्तृकरणसंयोगात् क्रिया, कृतस्य कर्म्मणः फलं नाकृतस्य, नाङ्कुरोत्पत्तिरबीजात्। कर्म्मसदृशं फलं नान्यस्माद्बीजादन्यस्योत्पत्तिरिति युक्तिः ॥ ११।१२ ॥**

भविष्यतीति बीजात् फलं भविष्यदप्यनुमीयते। यतः फलञ्च बीजादनुमीयते। इत्यनुमानेनापि पुनर्भवोऽस्तीत्युपलभ्यते। अत्रानुमाने युक्तिश्चैषा षड्धातुसंयोगाद्गर्भजन्म पञ्चमहाभूतशरीरिसमवायादेव चेतनस्य जन्म। न तु पञ्चमहाभूतमात्राद्विनात्मानमिति युक्तिः। तर्हि षड्धातुसंयोगः कथं स्यादिति? अत आह—कर्त्तृकरणसंयोगात् क्रिया भवति। यथा काष्ठाग्निजलादिकर्त्तृसंयोगात् पाकादिक्रिया भवति। तथा कर्त्ता परलोकस्थ आत्मा, करणं तस्य दैवम्, तन्नियमादिह स्त्रीपुरुषबीजसंयोगः क्षेत्रे गर्भाशये, ततस्तदवक्रमणमात्मनः, ततो जन्म। यच्च कर्म्म पूर्व्वदेहे कृतं तस्यैतत् फलम्, न त्वकृतस्य कर्म्मणः फलमस्ति। यथा नाङ्कुरोत्पत्तिरबीजात्, बीजादेवाङ्कुरोत्पत्तिः, तथा कृतादेव कर्म्मणः फलं शुभमशुभं वोत्पद्यते। कर्म्मसदृशं फलं यत्फलकं यत् कर्म्म तत् फलं तस्मादेव कर्म्मणः स्यात् न त्वन्यस्मात् कर्म्मणोऽन्यत् फलं स्यात्। यथा नान्यस्माद्बीजादन्यस्योत्पत्तिः स्यात् न हि जम्बुबीजादाम्रस्योत्पत्तिरिति युक्तिः। तस्मादस्त्यात्मा नित्यः संसारी कर्त्ता चैतन्यहेतुः, अस्ति च कर्म्म शुभाशुभं यत् फलति, अस्ति कर्म्मफलं येन तस्य फलं भोक्तुं पुनरिह जायते। तस्मादस्ति पुनर्भव इति ॥ ११।१२ ॥

सङ्क्षेपाद्व्युत्पादितमेव। इतश्चेतीह जन्मनि कृतात् कर्म्मणः, अन्यदिति आगामिजन्मान्तरं भविष्यतीत्यनुमीयत इति सम्बन्धः। कथमनुमीयते इत्याह फलादित्यादि। फलात् फलसदृशापत्यदर्शनात् बीजं पूर्व्वजन्मकृतं कर्म्मादि कारणमनुमीयते, तथा फलञ्च आगामिजन्मान्तर-सुखदुःखादिबीजादिह जन्मकृतात् कर्म्मणोऽनुमीयते इति योजना।

तर्करूपयुक्तिविषयतां परलोकस्य दर्शयति युक्तिश्चैषेत्यादि। षड्धातुसमुदायाद्गर्भजन्मेति वदता आत्मसम्बन्धमन्तरा चेतना गर्भस्य नोपपद्यते, आत्मा च परलोकसम्बन्ध एवेति परलोकसद्भावे युक्तिरुपदर्श्यते। कर्त्तृकरणसंयोगात् क्रियेति आत्मानं कर्त्तारं विना क्रिया परिदृश्यमाना योगादिलक्षणा न भवतीति। आत्मन ऊहं दर्शयति—कृतस्येत्यादिनाऽबीजादित्यन्तेन, परिदृश्यमानदारिद्र्यैश्वर्य्यादि-फलेन जन्मान्तरकृतस्य कर्म्मणः कारणभावं दर्शयति, कर्म्मसदृशं फलमिति पूर्व्वकृतशुभकर्म्मणः शुभं पुत्रधनादिफलम्। अत्र दृष्टान्तमाह नान्येत्यादि। नान्यबीजात् शालिबीजादन्यस्य यवाङ्कुरस्योत्पत्ति-

एवं प्रमाणैश्चतुर्भिरुपदिष्टे पुनर्भवे धर्म्मद्वारेष्ववधीयेत। तद्यथा गुरुशुश्रूषायामध्ययने ब्रह्मचर्य्यायां दारक्रियायाम् अपत्योत्पादने भृत्यभरणेऽतिथिपूजायां दानेऽनभिध्यायां तपस्यनसूयायां देहवाङ्मानसे कर्म्मण्यक्लिष्टे देहेन्द्रियमनोऽर्थ-बुद्ध्यात्मपरीक्षायां मनःसमाधाविति। यानि चान्यान्यपि

गङ्गाधरः इति परलोके चतुर्भिः प्रमाणैः स्थापिते यथा परलोकैषणा कर्त्तव्या, तदाह एवमित्यादि। एवमित्युक्तप्रकारेण चतुर्भिराप्तोपदेश-प्रत्यक्षानुमान युक्तिभिः प्रमाणैराप्तपुरुषैरुपदिष्टे पुनर्भवे सति धर्म्मद्वारेष्ववधीयेत। कथं धर्म्मद्वारेष्ववधानं कुर्य्यात्? तदाह तद्यथेत्यादि। धर्म्मद्वारेष्वित्यस्य विशेषणं प्रत्येकं गुरुशुश्रूषायामित्यादि। प्रथमाश्रमे स्वन्दपनयनानन्तरं गुरुशुश्रूषायां तथा वेदादीनामध्ययने धर्म्मद्वारे ब्रह्मचर्य्यायां धर्म्मद्वारे कायवाङ्मनोभिर्मैथुनत्यागो ब्रह्मचर्य्या तदङ्गानि भैक्ष्यचर्य्यादीनि। ततः सर्व्ववेदादि-शास्त्राध्ययनानन्तरं समावर्त्त्य गृहाश्रमे कर्त्तव्ये दारक्रियायां विवाहकर्म्मणि धर्म्मद्वारे ततोऽपत्योत्पादने धर्म्मद्वारे जाते ह्यपत्ये ऋणमुक्तिः स्यात्। भृत्यभरणे मातापित्रादीनां भृत्यानां भरणे धर्म्मद्वारे। तथाऽतिथिपूजायामतिथिभोजनादौ। दाने नित्यं किञ्चिद्यथाशक्तिदानक्रियायाम्। अनभिध्यायां परस्ववाञ्छावर्ज्जने। ततो वानप्रस्थाश्रममाश्रित्य तपसि तपस्यायाम्। अनसूयायां परगुणेषु दोषारोपण-वर्ज्जने। तथैवाक्लिष्टे देहवाङ्मानसे कर्म्मणि धर्म्मद्वारेऽवधीयेत। ततश्चतुर्थ-माश्रममाश्रित्य देहेन्द्रियमनोऽर्थबुद्ध्यात्मपरीक्षायां खलु देहपरीक्षायामिन्द्रिय-परीक्षायां मनःपरीक्षायामर्थस्य विषयस्य शब्दादेः परीक्षायां बुद्धिपरीक्षाया-मात्मपरीक्षायाञ्च धर्म्मद्वारेऽवधीयेत। तथा मनःसमाधौ योगे धर्म्मद्वारे-ऽवधीयेतेति।

त्यर्थः। युक्तिमुपसंहरति इति युक्तिरिति। अत्र बहुवक्तव्ये प्रमेये तथाविधोपयोगाभावात् विस्तरभयाच्च विस्तरो न कृतः॥ ११।१२॥

चक्रपाणिः सम्प्रति परलोकं व्युत्पाद्य तदुपयुक्तधर्म्मसाधनान्याह एवमित्यादि। धर्म्म-द्वारेषु धर्म्मसाधनद्वारेषु, इह चातिथिपूजादीनि सद्वृत्तोक्तान्यपि प्रकरणप्राप्तत्वेनोदाहरणार्थं पुनरभिधीयन्ते; देहादिपरीक्षायामवधीयेत इति वचनादवधानोपदर्शनेन देहादीनां क्षयित्वादि-धर्म्मनिरूपणेनोपजायमानां मतिं विषयानभिषङ्गञ्च जायमानमिच्छन्ति; विषयेषु प्रसक्ति

एवंविधानि कर्म्माणि सतामविगर्हितानि स्वर्ग्याणि वृत्तिपुष्टिकराणि विद्यात् तान्यारभेत कर्त्तुम्। तथा कुर्वन्निह चैव यशो लभते प्रेत्य च स्वर्गमिति तृतीया परलोकैषणा व्याख्याता भवति ॥ ३३ ॥

अथ खलु त्रय उपस्तम्भाः, त्रिविधं बलम्, त्रीण्यायतनानि, त्रयो रोगाः, त्रयो रोगमार्गाः, त्रिविधा भिषजः, त्रिविधमौषधमिति ॥ ३४ ॥

अथानुक्तानि कर्म्माण्यनुमन्यते यानि चान्यानीत्यादि। स्वर्ग्याणि स्वर्गहितानि वृत्तिपुष्टिकराणि तथा कृष्यादिवाणिज्यादीनि शुभानि विद्यात् तान्यारभेत कर्त्तुम्। तत्फलमाह तथेत्यादि। इह यशो लभते प्रेत्य स्वर्गं चकारान्मनःसमाधिसिद्धौ मोक्षञ्च लभते इति। इति तृतीया परलोकैषणा व्याख्याता भवति ॥ ३३ ॥

गङ्गाधरः — इत्येवं तिस्र एषणा व्याख्याय त्रित्वसामान्यादन्यानि त्रिकाणि व्याख्यातुमाह अथ खल्वित्यादि। त्रय उपस्तम्भा इति। ये शरीरमुपगत्य स्तभ्नन्ति त उपस्तम्भाः शरीरधारणक्रियानुकूलास्त्रय इति। त्रिविधं बलं बलाधानं ह्युपस्तम्भाः। यथा गृहरक्षणार्थं स्तम्भादिकं गृहबलाधानं तथा शरीररक्षणार्थमुपस्तम्भत्रयम्। त्रीण्यायतनानि कारणानि। यथा लोके कारणाधीनं बलमबलञ्च तथा शरीरादिबलाबलं युक्तायुक्तकारणत्रयाधीनं तत्रायोगकारणाधीनास्त्रयो रोगाः रोगाणाञ्च त्रयो मार्गाः। तेषां रोगाणां प्रतिकारकास्त्रिविधा भिषजः। प्रतिकारसाधनानि त्रिविधमौषधमिति। इत्येष समासात् त्रिकाणामुद्देशः ॥ ३४ ॥

तथया वार्त्तयेत्यादि [illegible] स्वर्ग्याणि स्वर्गहितानि [illegible] वृत्तिपुष्टि, वृत्तिपुष्टि [illegible] धर्म्मैषणायां [illegible] वृत्तिपुष्टिकराणि [illegible] यशो लभते धार्म्मिको [illegible] परलोकैषणा [illegible] पुनर्भवोऽस्तीति [illegible] धर्म्मैषणाया [illegible] ॥ ३३ ॥

चक्रपाणिः [illegible] त्रिविधस्याविच्छिन्नानि [illegible]

त्रय उपष्टम्भा इत्याहारः स्वप्नो ब्रह्मचर्य्यमिति। एभिस्त्रिभिर्युक्तियुक्तैरुपष्टब्धमुपष्टम्भैः शरीरं बलवर्णोपचयोपचितमनुवर्त्तते यावदायुषः संस्कारात्। * संस्कारः स हितमुपसेवमानस्य य इहैवोपदेक्ष्यते ॥ १५ ॥

गङ्गाधरः—उद्देशानन्तरं तेषां निर्द्देशेन विभागः क्रियते—त्रय उपष्टम्भा इत्यादि। आहारोऽत्राशितखादितपीतलीढ़भेदेन चतुर्व्विधोऽप्यभ्यवहारसामान्यादेक एवेह गण्यते। जिह्वया ब्याहरणमाहारः। स्वप्नोऽपि सुप्तिसुषुप्तिभेदेन द्विविधोऽपि, तथा—"तमोभवा श्लेष्मसमुद्भवा च मनःशरीरश्रमसम्भवा च। आगन्तुकी व्याध्यनुवर्त्तिनी च रात्रिस्वभावप्रभवा च निद्रा॥" इति भेदेन षड्विधोऽपि बहिश्चैतन्याभावहेतुत्वेन स्वप्नत्वसामान्यादेक एव गण्यते। ब्रह्मचर्य्यमिति कायवाङ्मनोभिर्म्मैथुनवर्ज्जनसामान्यादेकमेव गण्यते। इत्युपष्टम्भत्रयं निर्द्दिश्य तेषां प्रयोजनान्याह—एभिरित्यादि। एभिस्त्रिभिराहारस्वप्नब्रह्मचर्य्यैरुपष्टम्भैर्युक्तियुक्तैः समयोगयुक्तैः प्रयोगाकृतैराचरितैरुपष्टब्धं दृढ़ीभूतं शरीरं बलवर्णोपचितं सदनुवर्त्तते। तथात्वे हि शरीरस्य पुंसामिह परत्र च शुभं सम्पद्यते। कियन्तं कालमिति? अत आह—यावदायुषः संस्कारादिति। यावदायुषः शरीरानुवर्त्तनं संस्कारात्। त्रिभिरुपष्टम्भैरायुः संस्क्रियते।

धारकत्वेन, तदनु बलमुपष्टम्भाहारादिजन्यत्वात्, तदनु रोगायतनानि बल-विरोधकर्त्तृत्वेन, तदनु रोगास्तज्जन्यत्वेन, तदनु तन्मार्गज्ञानं सुविन्यस्तमेव, तदनु रोगप्रतिषेधार्थं प्रधानकारणवैद्याभिधानं, तदनु तदुपकरणत्वेन भैषज्यम् ॥ १४ ॥

चक्रपाणिः अन्येन स्तभ्यमानं धार्य्यमाणमुप समीपं प्रधानकारणस्य गत्वा स्तम्भयति धारयतीत्युपष्टम्भः ; यथा गृहधारणनियुक्तप्रधानस्तम्भसमीपवर्त्ती तद्बलाधायक उपष्टम्भः, तथेहापि शरीरस्यायुःसंवर्त्तकेन कर्म्मणा ध्रियमाणस्याहारादयो धारकत्वेनोपष्टम्भा इत्युच्यन्ते। आयतनानि कारणानि रोगस्येति शेषः। ब्रह्मचर्य्यशब्देन इन्द्रियसंयमसौमनस्यप्रभृतयो ब्रह्मज्ञानानुगुणा गृह्यन्ते ; आहारादयश्चेह प्रधानकल्पतया प्रशस्ता एव गृह्यन्ते, तेन, विरूपकाहारादीनां शरीरानुपष्टम्भकत्वं नोद्भावनीयम् ; अत एव युक्तियुक्तैरिति विशेषणं करिष्यति ; युक्तया प्रशस्तेन योगेन युक्ता युक्तियुक्ताः। ब्रह्मचर्य्यस्यायुक्तिरनभ्यासादतिमात्रेन्द्रियसंयमनादिरूपा, सा हि मनःक्षोभादिहेतुर्भवति। उपचितं युक्तम् ; आयुःसंस्कारादायुःकारण-धर्म्माधर्म्मावसानं यावदित्यर्थः, संस्कारशब्दः कारणवचनः ; आहारादयश्च प्राधान्येनोक्ताः, तेन अभ्यङ्गादीनां

* संस्कारमहितमनुपसेवमानस्येति चक्रपाणिसम्मतः पाठः।

**त्रिविधं बलमिति—सहजं, कालजं, युक्तिकृतञ्च। सहजं पुनस्तद् यच्छरीरसत्त्वयोः प्राकृतम्। कालकृतमृतुविभागजं वयःकृतञ्च। युक्तिकृतं पुनस्तद् यदाहारचेष्टायोगजम् ॥१६॥**

संस्कारः करणं गुणाधानम्। ह्रासगुणनिवृत्त्यान्यगुण आधीयते। आयुस्तु प्राक्तनकर्म्मफलजनितनियतकालप्रमाणं शरीरेन्द्रियसत्त्वात्मसंयोगरूपम्। कः पुनरायुषः संस्कार इति? अत आह—संस्कार इत्यादि। स हि संस्कार आयुषः। तमुपष्टम्भमुपसेवमानस्य खल्विह शास्त्रे य उपदेक्ष्यते आहारादिसम्यग्योगेनायुषो ह्रासनिवृत्तिगुणाधानरूप इति ॥ १५ ॥

<u>गङ्गाधरः</u>—अथ क्रमोद्दिष्टं बलं निर्दिशति—त्रिविधं बलमितीत्यादि। सहजमिति जायमानस्य यच्छरीरसत्त्वयोः प्राकृतं स्वाभाविकं गर्भारम्भकाले यादृशप्राक्तनकर्म्मजनितशुभाशुभफलवशाद् यादृशषड्धातुयोगे यादृशरसाहारसेवमानाया मातुर्विपक्वरसेन च प्रकृत्या सह शरीरसत्त्वाभ्यां जातं बलं तच्छरीरसत्त्वयोः प्राकृतं बलं सहजं बलमुच्यते। कालकृतं बलमृतुविभागजम्। सहजबलस्य षडृतुकालस्वभावाज्जातं वृद्धिमध्यह्रासरूपं बलं प्रागुक्तम्—"आदावन्ते च दौर्ब्बल्यं विसर्गादानयोर्नृणाम्। मध्ये मध्यबलं त्वन्ते श्रेष्ठमग्रे च निर्दिशेत् ॥" इति। वयःकृतञ्चेति बाल्ययौवनवार्द्धक्यकृतम्। यत् प्राकृतबलस्य ह्रासवृद्धिमध्यरूपं बलं तदपि कालकृतमुच्यते। युक्तिकृतञ्चेति युक्तिकृतं पुनस्तत्तदाहारचेष्टायोगजम्। बलादिबलकारिभ्य आहारेभ्यो युक्तियुक्तेभ्यो जातं तथा चेष्टाभ्यश्च जातं तथा वाजीकरणयोगेभ्यश्च जातं बलं युक्तिकृतमिति ॥ १६ ॥

शरीरधारकत्वेऽविरुद्धत्वमेव। नन्वाहारादीनि सम्यगाचरतोऽपि विशेषैरसात्म्येन्द्रियार्थसंयोगादिजन्यैर्व्याधिभिरन्तरापि मरणं दृष्टमित्याह—संस्कारमित्यादि। संस्कारं कारणम् अहितं शरीरस्येति शेषः, य इहैवोपदेक्ष्यत इति 'आयतनानि' इत्यादिना ग्रन्थेन ॥ १५ ॥

<u>चक्रपाणिः</u>—युक्तिराहारचेष्टयोः सम्यक् शरीरेण योजना। सत्त्वं मनः, मनसो बलं धैर्य्योत्साह उच्यते, प्राकृतमिति जन्मादिप्रवृत्तं प्राकृतधातुवृद्ध्या हेत्वन्तरनिरपेक्षं वृद्धं, दृश्यन्ते हि केचित् स्वभावादेव बलिनो दुर्ब्बलाश्च केचित्। ऋतुविभागजम् 'आदावन्ते च दौर्ब्बल्यम्' इत्याद्युक्तम्। आहारस्य मांससर्पिरादेः, चेष्टाया उचितविश्रामव्यायामादेर्योग आहारचेष्टायोगः; अन्ये तु योगशब्देन रसायनप्रयोगं ग्राहयन्ति ॥ १६ ॥

त्रीण्यायतनानीत्यर्थानां कर्म्मणः कालस्य चातियोगायोग-मिथ्यायोगाः। तत्रातिप्रभावतां दृश्यानामतिमात्रं दर्शनम् अतियोगः, सर्व्वशोऽदर्शनमयोगः, अतिसूक्ष्मासन्न* तथातिविप्रकृष्ट-रौद्र-भैरवाद्भुत-द्विष्ट-बीभत्स-विकृतादिरूप-दर्शनं

गङ्गाधरः— क्रमिकत्वात् त्रीण्यायतनान्याह त्रीण्यायतनानीति। अर्थानां शब्दस्पर्शरूपरसगन्धाः पञ्च तावात्तेषाम् अतियोगायोगमिथ्यायोगा एकमायतनम्। कर्म्मणश्चातियोगायोगमिथ्यायोगा इत्येकमायतनम्। कालस्य चातियोगायोगमिथ्यायोगा इत्येकमायतनम्। कारणं रोगाणामिति त्रीण्यायतनानि रोगाणां कारणानि। अतियोगायोगमिथ्यायोगानामसम्यग्योगत्वेनैकत्वादेकतया गण्यत इति त्रीणि। न तु नव।

तत्रादितोऽर्थानामतियोगादिषूदाहर्त्तव्येषु प्राधान्यात् प्रथमं चक्षुरर्थातियोगादीनुदाहरति तत्रेत्यादि। तत्र तेषु त्रिष्वायतनेषु मध्ये, अतिप्रभावतां सूर्य्यादीनां देवर्षिगन्धर्व्वादीनाञ्च दृश्यानामतिमात्रं दर्शनं चक्षुरर्थानामतिशयेन योग इत्यतियोगः। दृश्यानामित्यधिकारः। दृश्यानां सर्व्वशोऽदर्शनं चक्षुरर्थानामयोगः। अतिसूक्ष्मादीनां चक्षुरर्थानां दृश्यानां दर्शनं सम्यग्दृश्यत्वाभावान्मिथ्यायोगः। अतिविप्रकृष्टं रूपमतिदूरस्थं मूर्त्तम्। रौद्रमुग्रं रूपम्। भैरवं भीमं मूर्त्तम्। अद्भुतमाश्चर्य्यं मूर्त्तम्। द्विष्टं द्रष्टा यद्रूपं द्वेष्टि तद्रूपम्। बीभत्सं विड़ादिरूपम्। विकृतं कर्णादिहीनं मूर्त्तम्। आदिपदेनामनोज्ञमूर्त्तमिति। रूपशब्देन रूपगुणवद्द्रव्यमुच्यते। इति त्रिधाविकल्पश्चक्षुरर्थस्यासात्म्ययोग एकः।

चक्रपाणिः— अर्थानामिन्द्रियार्थानाम्, कर्म्मणः कायवाङ्मनःप्रवृत्तेः, कालस्य शीतोष्णवर्षलक्षणस्य। अतिप्रभावतामातपाग्निप्रभृतीनाम्। अत्र हीनमात्रदर्शनं विकारं न करोति, तेन सर्व्वशः इत्युक्तम्, एवमन्यत्रापि सर्व्वश इति व्याख्येयम्। अदर्शनञ्चातिप्रभावतामेव बोद्धव्यम्, अप्रभावताञ्च घटादीनां दर्शनमतियोगादपि न दोषकरम्। अतिश्लिष्टं नयनप्रत्यासन्नम्, अतिविप्रकृष्टमतिदूरवर्त्ति, रौद्रमकस्मात् तकारणात्मकं, भैरवं भयजनकम् अद्भुतमपि व्याघ्रादि, द्विष्टं यद्यस्य द्वेष्यं, बीभत्सं मनस उद्वेगकारकं, विकृतं हीनाङ्गादि, विद्यामनं प्रदितेति भयजनकम्, आदिग्रहणात् अमेध्यादीनां ग्रहणम्। रौद्रादयो यद्यपि न रूपं किन्त्वाकृतिविशेषाः, तथापि रूपैकार्थसमवायेन चक्षुरर्था एव, न चेन्द्रियार्थग्रहणेन रूपादीनामेव परं ग्रहणमिति पूर्व्वमेव व्याख्यातं, यतः,

* अतिश्लिष्टेति चक्रपाणिः

मिथ्यायोगः। तथातिमात्रस्तनितपटहोत्क्रुष्टादीनां शब्दानाम् अतिमात्रं श्रवणमतियोगः, सर्व्वशोऽश्रवणमयोगः, परुषेष्ट-विनाशोपघातप्रधर्षणभीषणादिशब्दश्रवणं मिथ्यायोगः। तथातितीक्ष्णोग्राभिष्यन्दिनां गन्धानामतिमात्रं घ्राणमतियोगः, सर्व्वशोऽघ्राणमयोगः, पूतिद्विष्टामेध्यक्लिन्नविषपवनकुणप-

अथापरानुदाहरति तथेत्यादि। अतिमात्रस्य स्तनितादिषु सर्व्वत्रान्वयः। अतिमात्रस्य स्तनितस्य मेघशब्दस्य। अतिमात्रस्य पटहशब्दस्य ढक्काशब्दस्य। अतिमात्रस्योत्क्रुष्टस्योच्चैःशब्दस्य। आदिना वीरदर्पसिंहनादादीनामतिमात्राणां शब्दानाञ्चातिमात्रं श्रवणं श्रवणार्थस्यातियोगः। अनतिमात्रस्तनितादीनां शब्दानामतिश्रवणमप्यतियोगः। सर्व्वशो ध्वनीनामश्रवणं श्रवणान्निवृत्तिः श्रवणार्थस्यायोगः। परुषादीनां शब्दानां श्रवणं श्रवणार्थस्य मिथ्यायोगः। परुषशब्दोऽमनोज्ञशब्दः। इष्टविनाशशब्दः पुत्रधनादिविनाशध्वनिः। उपघात इष्टस्यैव पुत्रादेरुपघातशब्दः। प्रधर्षणशब्दो दुर्व्वचनशब्दः। भीषणशब्दो भयानकशब्दः। यन्नामग्रहणेन यस्य भयं स्यात् तच्छब्द इह भीषणः, न त्वतिमात्रस्तनितादिशब्दः। आदिनातिसूक्ष्मातिप्रकृष्टकलहशब्दादीनां ग्रहणम्। इति त्रिविधविकल्पः श्रवणार्थस्यासात्म्ययोग एकः।

गन्धस्याल्पत्वेन प्राग्रसस्पर्शाभ्यां त्रिविधयोगं दर्शयति—तथातीत्यादि। अतितीक्ष्णगन्धो मरिचादीनाम्। अत्युग्रगन्धश्चर्मकादीनाम्। अत्यभिष्यन्दि-गन्धो ज्योतिष्मतीक्षवकादीनाम्। तेषां गन्धानामतिमात्रं घ्राणं ग्रहणं नासया घ्राणार्थस्यातियोगः। साधुगन्धानामप्यतिमात्रं घ्राणं घ्राणार्थस्यातियोगः। सर्व्वशोऽघ्राणं गन्धानां घ्राणार्थस्यायोगः। पूत्यादीनां गन्धानां घ्राणं घ्राणार्थस्य मिथ्यायोगः। पूतिर्दुर्गन्धः। द्विष्टगन्धो यं घ्राता द्वेष्टि। अमेध्यगन्धोऽपवित्रवस्तु-गन्धः। क्लिन्नगन्धो वस्तूनां क्लेदभावे जाते यो गन्धः। विषगन्धोऽथ पवनानीतो गन्धः। कुणपगन्धः शवगन्धः। आदिना विस्रगन्धादीनां ग्रहणम्।

स्पर्शनरसनयोः सम्यग्योगोऽसम्यग्योगो च बहवः स्पर्शरस-व्यतिरिक्ताः स्नानाभ्यङ्गादयः प्रकृति-संयोगसंस्कारादयश्च कारणत्वेन वक्तव्याः; अतिमात्रस्तनितं प्रवृद्धो मेघध्वनिः, पटहः पटहशब्दः, उत्क्रुष्टं दर्पादतिमात्रं शब्दितं, प्रधर्षणं तिरस्कारः; तीक्ष्णो गन्धश्चक्षुर्विरेचनकारकः, यथा—कृष्णजीरकादीनाम्, उग्रो वमनकारको वचादीनाम्, अभिष्यन्दी सैमित्यकारकः काञ्जिकसुरासवा-

गन्धादिघ्राणं मिथ्यायोगः । तथा रसानामत्यादानमतियोगः, अनादानमयोगः, मिथ्यायोगो राशिवर्ज्जेष्वाहारविधिविशेषायतनेषु उपदेक्ष्यते । तथातिशीतोष्णानां स्पृश्यानां स्नानाभ्यङ्गोत्-

भक्षणादिकम्मणा बहुकार्य्यहेतुत्वात् प्राक् स्पर्शाद्रसातियोगादीनाह—तथेत्यादि । रसानां मधुरादीनामत्यादानं भोजनादिना सततं ग्रहणं रसनार्थस्यातियोगः । रसानामनादानमयोगः ; सर्व्वशो रसानामशनभक्षणपानलेहाभावः । मिथ्यायोग इति रसानां मिथ्यायोगो राशिवर्ज्जेष्वाहारविधिविशेषायतनेषु विमानस्थाने रसविमानेऽध्याये उपदेक्ष्यते । तद्यथा—प्रकृतिकरणसंयोगदेशकालोपयोगसंस्थोपयोक्तृराशीनामाहारविधिविशेषायतनानामष्टानां मध्ये राशिं वर्ज्जयित्वा प्रकृत्यादीनां सप्तानां विपर्य्ययेणाहारस्योपयोगः रसनार्थस्य मिथ्यायोगः । राशेः परिमाणलक्षणस्य विपर्य्ययेणोपयोगोऽतियोगः स्यात् । सर्व्वशोऽनादानमल्पमात्रेण वा रसानामादानमयोगः स्यात् । अतो मिथ्यायोगासम्भवादाह राशिवर्ज्जेष्विति । राशिवक्ष्यते—"राशिस्तु सर्व्वग्रहपरिग्रहो मात्राऽमात्राफलविनिश्चयार्थः प्रकृतः । तत्र सर्व्वस्याहारस्य प्रमाणग्रहणमेकपिण्डेन सर्व्वग्रहः । परिग्रहश्च पुनः प्रमाणग्रहणमेकैकशेनाहारद्रव्याणाम् । सर्व्वस्य ग्रहः सर्व्वग्रहः ; सर्व्वतश्च ग्रहः परिग्रह उच्यते ।" इति रसानां करणादिना योगवदाहारादिना च योगः स्यादिति । अत आहारमात्रस्य योगो नोक्तः ।

पारिशेष्यात् सर्व्वेन्द्रियव्यापकत्वाच्च स्पर्शनेन्द्रियस्यार्थेन सह त्रीन्

दीनां, पूति अत्यर्थक्लिन्नं, विषयुक्तः पवनो विषपवनः, कुणपः शवः । रसानामिति रससहितानां द्रव्याणाम् । इहानादानमिति कुर्व्वन् । हीनयोगोऽपि रसानां विकारकर इति दर्शयति ; आहारविधिविशेषायतनानि रसविमाने वक्ष्यमाणानि "प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपयोक्तृष्टमानि" ; तत्र राशिवर्ज्जेष्वितिवचनेन राशिं पृथक् करोति,—राशेराहारस्य परिमाणरूपस्य यो दोषः—हीनमात्रत्वमतिमात्रत्वं वा, तस्यातियोगायोगाभ्यामेव गृहीतत्वात्, न मिथ्यायोगो राशेः सम्भवति ; उक्तं हि—"राशिः पुनर्मात्राऽमात्राफलविनिश्चयार्थः" इति । प्रकृत्यादीनान्तु दोषादाहारस्य मिथ्यायोग एव परं सम्भवति, यतः प्रकृतिविरुद्धानां माषादीनां भोजनं मिथ्यायोग एवाहारस्य भवति ; एवं संस्कारविरुद्धशक्तुपिण्डिकेऽपि मिथ्यायोग एव, तथा संयोगविरुद्धसमघृतमधुमर्पिरुपयोगेऽपि, एवं कालादिविरुद्धोदाहरणमपि रसविमाने प्रतिपादितं सर्व्वं मिथ्यायोगरूपमेव, तेषामयोगातियोगानिरपेक्षाणामेव दोषकर्तृत्वात् । शीतोष्णादीनामित्यादि ।—यद्यपि शीतोष्णादीनामभ्यङ्गादीनाञ्च हीनयोगोऽपि रोगकरस्तथापि

सादनादीनश्चात्युपसेवनमतियोगः, सर्व्वशोऽनुपसेवनमयोगः, * विषम-स्थानाभिघाताशुचि-भूत-संस्पर्शादयश्चेति मिथ्या-योगः ॥ १७ ॥

तत्रैकं स्पर्शनेन्द्रियमिन्द्रियव्यापकं चेतःसमवायि स्पर्शन-व्याप्तेर्व्यापकमपि च चेतः।

योगानुदाहरति—नयेत्यादि। अतिशब्दस्य शीतोष्णाभ्यां सहान्वयः। स्पर्शानामिति न कृत्वा स्पृश्यानामित्युक्तया ज्ञापितञ्चेदम्—शब्दादयो ह्यर्था द्रव्यधर्म्मा नान्तरेण धर्म्मिणं वर्त्तन्ते। तस्माद्धर्म्मिणामुपादानेनोपचारात् तदिन्द्रियग्राह्याणामर्थानां ग्रहणं सिद्धमिति। अतिशीतात्युष्णानां स्पृश्यानां स्पर्शनमात्रमतियोगः। स्नानादीनामपि चातिमात्रमुपसेवनं स्पर्शनेन्द्रियार्थस्यातियोगः। सर्व्वशः स्पृश्यानामसेवनमयोगः स्पर्शनेन्द्रियार्थस्य। विषमस्थानस्याभिघातस्याशुचिद्रव्यस्य भूतानाञ्च स्पर्शादयः स्पर्शाः स्पर्शनेन्द्रियार्थस्य मिथ्यायोग इति ॥ १७ ॥

गङ्गाधरः—इत्येवं पञ्चानामिन्द्रियाणां पञ्चभिः स्वस्वार्थैः सह त्रिविधयोगस्यैकां संज्ञामाह—तत्रेत्यादि। तत्र तेषु पञ्चभिरिन्द्रियैः सह पञ्चानामर्थानामतियोगायोगमिथ्यायोगेषु स्वल्विन्द्रियाणां पञ्चानां मध्ये त्वेकं स्पर्शनेन्द्रियं त्वगिन्द्रियमिन्द्रियव्यापकम्। शेषाणां चतुर्णां श्रवणरसननयनघ्राणानां पायूपस्थहस्तपादवागिन्द्रियाणाञ्च व्यापकं तानि सर्व्वाणि व्याप्य वर्त्तते। तच्च चेतःसमवायि—चेतो मनस्तस्य समवायो योगो विद्यतेऽस्येति—तत् स्पर्शनेन्द्रियस्य सर्व्वेन्द्रियव्यापकस्य सर्व्वव्याप्तेस्तत्समवायि चेतोऽपि स्वरूपत एकत्वाणुत्वगुणत्वेनाव्यापकञ्च व्यापकं भवति।

सर्व्वशोऽनुपसेवनमितिवचनं सर्व्वशोऽनुपसेवनस्य भूरिव्यक्तविकारकर्त्तृत्वाभिप्रायेण; अननुपूर्व्व्या इत्योलकमसञ्ज्ञनेन, यथा—स्नात्वा उत्सादनं, तथोष्णपीडितस्य सहसा शीतलपानीयावगाहनसेवादि। अभिघातः खड्गाहननादि, भूताः प्राणिनः पिशाचकण्टकप्रभृतयः; आदिग्रहणात् यत् किञ्चित् स्पर्शनसम्बन्धं शरीरोपघातकमयोगातियोगव्यतिरिक्तं, तत् गृह्यते ॥ १७ ॥

चक्रपाणिः—ननु चक्षुरादीनि पञ्चेन्द्रियाणि, अतस्तेषां प्रतिनियताः पञ्चासात्म्येन्द्रियार्थसंयोगाः, तत् कथमेकोऽसात्म्येन्द्रियार्थसंयोग इत्याभ्यायत इत्याशङ्क्य स्पर्शनेन्द्रियस्य सर्व्वेन्द्रिय-

* 'स्नानादीनां शीतोष्णादीनां च स्पृश्यानामननुपूर्व्व्योपसेवनं' इति चक्रपाणिः।

तस्मात् सर्व्वेन्द्रियाणां व्यापकस्पर्शकृतो यो भावविशेषः, सोऽयमनुपशयात् पञ्चविधस्त्रिविधविकल्पो भवत्यसात्म्येन्द्रियार्थसंयोगः। सात्म्यार्थो ह्युपशयार्थः ॥ १८ ॥

तस्मादित्यादि। तस्मात् सर्व्वेन्द्रियव्यापकस्पर्शनेन्द्रियसमवायित्वाच्चेतसः खल्वात्मनाभीप्सितार्थग्रहणाय प्रेरितेन स्पर्शनेन्द्रियत्वेन प्राप्तस्य तदर्थग्राहकस्येन्द्रियस्य तस्मिंस्तस्मिन् स्वे स्वेऽर्थे सर्व्वेन्द्रियाणां व्यापकस्य स्पर्शनेन्द्रियस्य स्पर्शकृतो यो भावविशेषः स तु तदिन्द्रियस्य तदर्थप्राप्तिनिवृत्त्यन्यतरलक्षणः स्पर्शनेन्द्रियस्पर्शनक्रियाकृतो मेलकामेलकसमवायपृथक्त्वान्यतर एव तदिन्द्रियस्थशब्दादिभिः सहार्थानां शब्दादीनां मेलनं यः करोति स च समवायः। यस्त्वमेलनं करोति तत् पृथक्त्वमिति उभयमेव संज्ञयैवेन्द्रियार्थसंयोग उच्यते। द्रव्यस्था हि शब्दादयो गुणास्तदिन्द्रियगुणे तदर्थगुणस्य मेलने तयोर्वाश्रयद्रव्यसंयोगमन्तरेण न सम्भवन्तीति। स च द्विविधः—सात्म्योऽसात्म्यश्च। य उपशेते स सात्म्यः। यो नोपशेते सोऽसात्म्य इति अतस्त्रिविधो विकल्पः पञ्चविधः। सोऽयमिन्द्रियेणार्थस्य अतियोगायोगमिथ्यायोगात्मकः संयोगोऽनुपशयाद्धेतोरसात्म्येन्द्रियार्थसंयोगः संज्ञया भवति। तस्मादयोगोऽपि लभ्यते। कस्मादसात्म्येति? तत्राह—सात्म्यार्थो ह्युपशयार्थः। हि यस्मात् सात्म्यमित्ययमर्थ उपशयार्थः। विकल्पः पञ्चविधः। यदात्मना सहैकतां याति तत् सात्म्यम्। असात्म्यार्थो-

व्यापकत्वं दर्शयित्वा सर्व्वेन्द्रियानुगतं स्पर्शमर्थग्रहणकारणमेकरूपं दर्शयति, ततश्च तस्यैकस्य असात्म्येन्द्रियार्थेन संयोगादुपपन्न एकरूपोऽसात्म्येन्द्रियार्थ-संयोग इति दर्शयति तत्रैकमित्यादिना सात्म्यार्थो ह्युपशयार्थ इत्यन्तेन। एकं स्पर्शनमिति स्पर्शनमेव नान्यच्चक्षुरादि, इन्द्रियाणामिति निर्द्धारणे षष्ठी. इन्द्रियाणि चक्षुरादीनि व्याप्नोतीतीन्द्रियव्यापकम्। स्पर्शनं हि सर्व्वेष्विन्द्रियेषु अस्ति. अत एव स्पृष्टमेवार्थमिन्द्रियाणि गृह्णन्ति. तर्हि न कथं सदैवार्थग्रहणं स्यादित्यत आह चेत इत्यादिना। श्रोत्रञ्चास्मद्दर्शने पाञ्चभौतिकं कर्णशष्कुलीगतनभोरूपं, तेन, तस्यापि स्पर्शोऽस्ति; चेतःसमवायि मनःसम्बन्धि, मनःसम्बन्धकथनेनार्थग्रहणं प्रति समर्थत्वं स्पर्शस्य दर्शयति, मनोऽधिष्ठितानामिन्द्रियाणामर्थग्राहकत्वात्. ननु किमणुपरिमाणेन मनसैकत्रस्थितेनैव स्पर्शनस्य सर्व्वेन्द्रियव्यापकस्य सम्बन्धात् सर्व्वेन्द्रियाणि प्रवर्त्तन्ते, तथा सति युगपत् पञ्चज्ञानोत्पत्तिप्रसङ्ग इत्याह—स्पर्शनेन्द्रियव्याप्तेर्व्यापकमपि चेत इति। स्पर्शनेनेन्द्रियाणां व्याप्तिः स्पर्शनेन्द्रियव्याप्तिः, तस्याश्चेतोऽपि व्यापकम्, एतदुक्तं भवति—यावति प्रदेशे स्पर्शनं

ऽनुपशयार्थः। इत्येकमायतनं रोगाणां व्याख्यातम्। नैष सर्व्वरोगस्य हेतुः। वक्ष्यते हि कतिधापुरुषीये—"अत्युग्रशब्दश्रवणात् श्रवणात् सर्व्वशो न च। शब्दानाञ्चातिहीनानां भवन्ति श्रवणाज्जडाः॥ परुषोद्भीषणाशस्ताप्रियव्यसनसूचकैः। शब्दैः श्रवणसंयोगो मिथ्यायोगः स उच्यते॥ असंस्पर्शोऽतिसंस्पर्शो हीनसंस्पर्श एव च। स्पृश्यानां संग्रहेणोक्तः स्पर्शनेन्द्रियबाधकः॥ यो भूतविषवातानामकालेनागतश्च यः। स्नेहशीतोष्णसंस्पर्शो मिथ्यायोगः स उच्यते॥ रूपाणां भास्वतां दृष्टिर्विनश्यति हि दर्शनात्। दर्शनाच्चातिसूक्ष्माणां सर्व्वशश्चाप्यदर्शनात्॥ द्विष्टभैरवबीभत्स-दूरातिश्लिष्टदर्शनात्। तामसानाञ्च रूपाणां मिथ्यायोगः स उच्यते॥ अत्यादानमनादानमोकसात्म्यादिभिश्च यत्। रसानां विषमादानमल्पादानञ्च दूषणम्॥ अतिमृद्वतितीक्ष्णानां गन्धानामुपसेवनम्। असेवनं सर्व्वशश्च घ्राणेन्द्रियविनाशनम्॥ पूतिभूतविषद्विष्टा गन्धा ये चाप्यनार्त्तवाः। तैर्गन्धैर्घ्राणसंयोगो मिथ्यायोगः स उच्यते॥ इत्यसात्म्यार्थसंयोगस्त्रिविधो दोषकोपनः। असात्म्यमिति तद्-विद्याद् यन्न याति सहात्मताम्॥ मिथ्यातियोगहीनेभ्यो यो व्याधिरुपजायते। शब्दादीनां स विज्ञेयो व्याधिरैन्द्रियको बुधैः॥" इति। असात्म्यार्थसेवनन्तु न खलु बुद्धिभ्रंशमन्तरेण सम्भवति। ततो बुद्धेरतियोगायोगमिथ्यायोगेष्वन्तर्भवन्नप्यसात्म्येन्द्रियार्थसंयोगो नियमत एव ऐन्द्रियकव्याधीनां हेतुरित्यतः पृथगुक्तः॥ १८॥

तिष्ठति, तावन्तं देशं मनोऽपि भ्रमति प्रत्यक्षेणार्थग्रहणार्थं, तेन, यस्मिन् यदा प्रदेशे मनो वर्त्तते, तदा तेन प्रदेशेन चक्षुरादिरूपेणार्थं गृह्णाति, न युगपज्ज्ञानोत्पत्तिः; प्रकृते योजयति—तस्मादित्यादि। व्यापकश्चाप्यो स्पर्शश्चेति व्यापकस्पर्शस्तेन कृतस्तन्निबन्धन, सर्व्वेन्द्रियाणां भावविशेषः स्वभावविशेषोऽर्थग्रहणकारणीभूतः स्पर्श इत्यर्थः, यमभिकृत्योक्तम्—"स्पर्शनेन्द्रियसंस्पर्शः स्पर्शो मानस एव च। द्विविधसुखदुःखानां वेदनानां प्रवर्त्तकः॥" इति, अत्र श्लोके स्पर्शनसम्बन्धकृतः सर्व्वेन्द्रियस्पर्शः स्पर्शनेन्द्रिय-संस्पर्श-शब्देनोक्तः, मानसस्तु स्पर्शस्त्विन्द्रियेण विपर्य्येण सतापि सम्भवतीति तत्रैव व्याख्येयम्। विशेष इत्यत्रास्तीति शेषः, सोऽयमेकस्येन्द्रियव्यापकस्य स्पर्शस्यैकरूपोऽसात्म्येन्द्रियार्थसंयोगः। अनुपशयादिति दुःखकर्त्तृत्वात्, पञ्चविधः सन् चक्षुरसात्म्येन्द्रियार्थसंयोगो घ्राणासात्म्येन्द्रियार्थसंयोग इत्यादिरूपः पुनस्त्रिविधविकल्पो भवति अयोगातियोगमिथ्यायोगेनेति भावः; एवञ्चैकप्रकारस्त्रिप्रकारस्तथा पञ्चदशप्रकारः असात्म्येन्द्रियार्थसंयोग उक्तो भवति। अनुपशयशब्देन चक्षुराद्यनुपशयविशेषः; अत्रासात्म्येन्द्रियार्थसंयोगस्य पञ्चविधत्वं हेतोरुपदेशात् बोद्धव्यम्, न हेत्वेकरूपोऽनुपशयः पञ्चविधत्वम्

**कर्म्म वाङ्मनःशरीरप्रवृत्तिः । तत्र वाङ्मनःशरीरातिप्रवृत्तिरतियोगः, सर्व्वशोऽप्रवृत्तिरयोगः, सूचकानृताकाल-कलहाप्रियाबद्धानुपचारपरुष-वचनादिर्वाङ्मिथ्यायोगः ।**

गङ्गाधरः—शेषाणां व्याधीनां हेतुस्तु बुद्धिभ्रंशाज्ज्ञानस्य कर्म्मणोऽतियोगायोगमिथ्यायोगात्मकः प्रज्ञापराध इत्यतोऽनन्तरं कर्म्मणोऽतियोगादीन् उदाहर्त्तुं कर्म्म चाह—कर्म्मेत्यादि। वाङ्मनःशरीरप्रवृत्तिः कर्म्म क्रिया। तत्र वाग्देहप्रवृत्तिश्चेष्टा। न तु मनःप्रवृत्तिः। गोतमश्चाक्षपाद उवाच—"प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः" व्याख्यातञ्चेदं सूत्रं वात्स्यायनेन—मनोऽत्र बुद्धिरित्यभिप्रेतम्। बुध्यतेऽनेनेति बुद्धिः। सोऽयमारम्भः शरीरेण वाचा मनसा च पुण्यः पापश्च दशविधः। तत्र वाचाचर्य्यते यत् सत्यं हितं प्रियं स्वाध्यायश्चेति चत्वारि कर्म्माणि येनारम्भेण स वाचारम्भः शुभः। शरीरेण दानं परित्राणं परिचरणञ्चेति त्रीणि कर्म्माणि येनारम्भेण स शरीरारम्भः। मनसा चाचर्य्यते। दया चास्पृहा च श्रद्धा चेति त्रीणि कर्म्माणि येनारम्भेण स मानस आरम्भः शुभः। इति दशविधः पुण्य आरम्भः। पापस्तु वाचारम्भः खलवनृतपरुषसूचनासम्बन्धवचनादीनाम्। शरीरारम्भस्तु हिंसास्तेयप्रतिषिद्धमैथुनादीनाम्। मनसारम्भः पुनः परद्रोहपरद्रव्याभीप्सानास्तिक्यादीनाम्। इति पापानां कर्म्मणां हेतुर्वाग्देहमनसामतिप्रवृत्तिः कर्म्मणोऽतियोगः। तेषामेव सर्व्वशोऽप्रवृत्तिः कर्म्मणोऽयोगः।

एषां प्रत्येकं मिथ्यायोगमाह—सूचकेत्यादि। सूचकं खलोक्तिः। अनृतमसत्यवचनम्। अकालवचनं यस्मिन् काले यद्वक्तव्यं तन्नोक्त्वा तदितरकाले वचनम्। कलहवचनं स्फुटम्। अप्रियवचनं कटूक्तिः। अबद्धवचनमसम्बन्धवचनम्; यस्मिन् यद् वचनं नार्हति तस्मिंस्तद्वचनं सततमेव वाग्वचनम्।

असात्म्येन्द्रियार्थस्य कर्त्तुं समर्थः; यतश्चक्षुरादीनां प्रतिनियतान्येवोपघातकान्यतिभास्वररूपादीनि, ततश्च स्पर्शेन्द्रिय-व्याप्तत्वापि नैकस्पर्शनेन्द्रियस्यं चक्षुरादीनाम्, एकत्वे ह्येकेन्द्रियोपघातकमन्येषामप्युपघातकं स्यादिति मन्तव्यम्। सात्म्योपशययोरेकार्थतां दर्शयति—सात्म्यार्थो ह्युपशयार्थ इति। एतेन, अनुपशयेनेन्द्रियार्थसंयोगं दर्शयित्वाऽसात्म्येन्द्रियार्थसंयोग इति संज्ञाकरणमविरुद्धमिति दर्शितं भवति ॥ १८ ॥

चक्रपाणिः—अर्थानामयोगातियोगमिथ्यायोगानभिधाय कर्म्मणस्तानाह कर्म्मेत्यादि। अत्र यद्यपि भूरिप्रधानशारीररोगकर्त्तृत्वेन पूर्व्वं शारीरमेव कर्म्मासात्म्यमभिधातुं युज्यते, तथाप्यस्य-

भयशोकक्रोधलोभमोहमानेर्ष्यामिथ्यादर्शनादिर्मानसो मिथ्यायोगः। वेगविधारणोदीरण-विषमस्खलनगमन-पतनाङ्गप्रणिधानाङ्गप्रदूषणप्रहारावमर्द्दनप्राणोपरोधसंक्लेशनादिः शारीरो मिथ्यायोगः। संग्रहेण चातियोगायोगवर्ज्जं कर्म्म वाङ्मनःशरीरजमहितमनुपदिष्टं यत्तच्च मिथ्यायोगं विद्यादिति ॥१६॥

अनुपचारवचनं प्रतिकूलवचनम्। परुषवचनं कर्कशोक्तिः। आदिना प्रलापादिवचनम्। इति वाङ्मिथ्यायोगः। भयेत्यादि मनोमिथ्यायोगः। मोहोऽज्ञानम्। मानश्चित्तोन्नतिः। मिथ्यादर्शनं नास्तिक्यबुद्धिः। आदिना अतत्त्वज्ञानम्। इति मनसः कर्म्मणो मिथ्यायोगः। शारीरमिथ्यायोगमाह— वेगविधारणेत्यादि। वेगानामविधार्य्याणां मूत्रपुरीषादिवेगानां प्रवृत्तानां धारणमनुपस्थितानामुदीरणम्। विषमशब्दस्याङ्गप्रणिधानान्तैः सहान्वयः। विषमस्खलनं समस्थाने विषमपतनं विषमगमनमयथावद्गमनम्। विषमपतनमुच्चैःस्थानात्। विषमाङ्गप्रणिधानं वैषम्येणाङ्गविक्षेपादिकम्। अङ्गप्रदूषणमतिकण्डूयनादिभिः प्रदोषः। अङ्गप्रहारो दण्डादिभिरुपघातः। अङ्गावमर्द्दनमङ्गविमर्दः। प्राणोपरोधो निश्वासप्रश्वासधारणम्। संक्लेशनं संक्लेशो व्रतोपवासादिभिः। आदिना विषमव्यायामादीनां ग्रहणम्। इति शारीरः कर्म्मणो मिथ्यायोगः। अनुक्तमिथ्यायोगमुपसंहरति—संग्रहेणेत्यादि। इहोक्तवाङ्मनःशरीराणि योगायोगवर्ज्जं यदहितमिह च परत्राहितस्य पापस्य कारणमनुपदिष्टं तच्च सर्व्वं कर्म्मणो मिथ्यायोगं विद्यात् ॥ १९ ॥

त्वेन वाङ्मानसे कर्म्मणी पूर्व्वमुक्ते, प्रत्येकमिथ्यायोगकथने तु प्राधान्यात् शारीर एव मिथ्यायोगः प्रथमं दर्शितः; अत्रातियोगायोगातिप्रवृत्तिमिथ्यायोगरूपाऽप्रवृत्तिर्विहितानां कायवाङ्मनःकर्म्मणां बोद्धव्या, अविहिताचरणस्य तु सर्व्वस्य मिथ्यायोगत्वेन वक्तव्यत्वात्। वेगोदीरणमप्राप्तवेगोदीरणम्; विषमशब्दोऽङ्गप्रणिधानान्तैः संबध्यते, अङ्गदूषणमतिकण्डूयनादिभिः; संक्लेशनं मध्यातपजलसेवादिभिः; असद्वचनम् असम्बद्धमसत्यवाक्यं यावत् तावत् कीर्त्तनम्; अनुपचारमननुकूलवचनम्; इह चानृतवचनादयोऽधर्म्मद्वारेण रोगकराः।

अनुक्तमिथ्यायोगसंग्रहणार्थमाह— संग्रहेणेत्यादि। अहितमिह जन्मनि, अनुपदिष्टमित्यनेन परलोकेऽधर्म्महेतुतया पापकारकं परदारसेवादि ग्राहयति, एतेन यदुच्यते—अधर्म्मस्य अग्रहणात् न्यूनमेतदायतनमिति, तन्न भवति; शारीरमानसिकवाचनिककर्म्ममिथ्यायोगेनैवाधर्म्मोत्पादाद्वाह्यतरव्यापारेणैवाधर्म्मजन्यानां विकाराणां क्रियमाणत्वात्, यथाऽऽत्माऽभिनः कर्मभिः क्रियते

त्रिविधविकल्पं त्रिविधमेव कर्म्म प्रज्ञापराध इति व्यवस्येत्॥ २०॥

गङ्गाधरः अस्य संज्ञामाह। त्रिविधेत्यादि। एतदतियोगायोग-मिथ्यायोगैर्विकल्पो यस्य तं त्रिविधविकल्पं, त्रिविधमेव वाङ्मनःशरीर-प्रवृत्तिरूपं कर्म्म वाचा कृतं मनसा कृतं शरीरकृतञ्च प्रज्ञापराध इतिसंज्ञं व्यवस्येत्। प्रज्ञाया अपराधो धीधृतिस्मृतिभ्रंशस्तन्मूलत्वादेतत् त्रिविधं कर्म्म च प्रज्ञापराध उच्यते। यथा आम्राज्ञात आम्र एवोच्यते। एतत् प्रज्ञापराधाख्यं त्रिविधं कर्म्म यत् पापं जनयति तत् खलु किञ्चित् सद्यःफलं गोदोहनवत्, किञ्चित् कालान्तरफलं वृक्षमूले जलसेचनवत्। तत्र कालान्तरफलं पर-लोकाहितं पापं जनयति पुनर्ज्जन्माहितञ्च। यत् सद्यःफलं तदिहैव जन्मनि पापं जनयति। तत्पापमपि प्रज्ञापराधमूलकत्वात् प्रज्ञापराध एवोच्यते। कालान्तरफलन्तु यदिह जन्मनि पुनर्ज्जन्मनि परलोके चाहितं पापं जनयति तत् पापं न प्रज्ञापराध उच्यते। कालान्तरे परिणामतोऽशुभजनकत्वात् परिणाम एवोच्यते। न तु सर्व्वं पापं प्रज्ञापराधेऽथवा परिणामेऽन्तर्भवति। त्रिविधन्तु खल्वेतत् कर्म्म वाङ्मनःशरीरप्रवृत्तिरूपं प्रज्ञापराधाख्यं यथा पापं जनयति तथा खल्विहैव पुनर्ज्जन्मनि च व्याधिं जनयति। यत्तु तत्र पुनर्ज्जन्मनि यं व्याधिं जनयति तत् कर्म्म दैवसंज्ञकं, स च व्याधिः कर्म्मज उच्यते। यत् तु यं व्याधिमिह जन्मनि जनयति स व्याधिः प्रज्ञापराधज आगन्तुप्रभृतिरुच्यते। वक्ष्यते च शारीरे कतिधापुरुषीये—"धीधृतिस्मृति-विभ्रष्टः कर्म्म यत् कुरुतेऽशुभम्। प्रज्ञापराधं तं विद्यात् सर्व्वदोषप्रकोपणम्॥ उदीरणं गतिमतामुदीर्णानाञ्च निग्रहः। सेवनं साहसानाञ्च नारीणा-ञ्चातिसेवनम्॥ कर्म्मकालातिपातश्च मिथ्यारम्भश्च कर्म्मणाम्। विनयाचार-लोपश्च पूज्यानाञ्चाभिधर्षणम्॥ ज्ञातानां स्वयमर्थानामहितानां निषेवणम्।

धर्म्मोत्पादावान्तरव्यापारेणैव, अन्ये तु कालमिथ्यायोगेऽधर्म्मं क्षिपन्ति, अधर्म्मो हि कालवशादेव फलति न तत्कालमिति कृत्वा; एतच्च प्रथमाध्याय एव प्रपञ्चितम्॥ १९॥

चक्रपाणिः सम्प्रति कर्म्मासम्यग्योगः प्रज्ञापराधमूलत्वात् प्रज्ञापराध एव उच्यत इति त्रिविधमित्यादिना दर्शयन्, यदुक्तं पूर्व्वहेतुत्रयकथने "असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्च" इत्यस्याविरोधं दर्शयति; एवं यदग्रे वक्ष्यति—"कालः पुनः परिणाम उच्यते" तत्रापि पूर्व्वोक्ताविरोधोपदर्शनं व्याख्येयमिति। त्रिविधविकल्पमिहातियोगादिरूपम्॥ २०॥

शीतोष्णवर्षलक्षणाः पुनर्हेमन्तग्रीष्मवर्षाः संवत्सरः स कालः। तत्रातिमात्रस्वलक्षणः कालः कालातियोगः, हीन-स्वलक्षणः कालः कालायोगः, यथास्वलक्षणविपरीतलक्षणस्तु

परमौन्मादिकानाञ्च प्रत्ययानां निषेवणम्॥ अकाल्यादेशसञ्चारौ मैत्री संक्लिष्ट कर्म्मभिः। इन्द्रियोपक्रमोक्तस्य सद्वृत्तस्य च वर्ज्जनम्॥ ईर्ष्यामानभय-क्रोध-लोभमोहमदभ्रमाः। तज्जं वा कर्म्म यत् क्लिष्टं क्लिष्टं यद् देहकर्म्म च॥ यच्चान्यदीदृशं कर्म्म रजोमोहसमुत्थितम्। प्रज्ञापराधं तं शिष्टा ब्रुवते व्याधि-कारणम्॥ बुद्ध्या विषमविज्ञानं विषमञ्च प्रवर्त्तनम्। प्रज्ञापराधं जानीयात् मनसो गोचरं हि तत्॥" २०॥

गङ्गाधरः—अथ कालातियोगायोगमिथ्यायोगानुदाहरति शीतेत्यादि। वर्षणे यद्यपि शीतोष्णे द्वे विद्येते तथापि मिश्रलक्षणत्वेन प्रत्येकतो भेद-मादायोक्तं वर्षेति। लक्षणं लिङ्गं क्रमेण बोध्यम्। हेमन्तः शीतलक्षणः। ग्रीष्म उष्णलक्षणः। वर्षास्तु वर्षलक्षणाः, एवं त्रिलक्षणहेमन्तग्रीष्मवर्षात्मकः संवत्सरः कालः। नैतस्मादतिरिक्तः कालोऽस्ति। तमेव संवत्सरमावृत्य द्विपरार्द्धकाल आयुर्ब्रह्मविष्ण्वादीनामुपदिश्यते। स महाकल्पः, शीतोष्ण-वर्षलक्षणातिरिक्तलक्षणकालाभावात्। शिशिरस्य हि शीतलक्षणत्वेन हेमन्तेन ग्रहणम्। वसन्तस्योष्णलक्षणत्वेन ग्रीष्मेण ग्रहणम्। शरदो वर्षलक्षणत्वेन वर्षासु ग्रहणमिति।

तस्य कालस्य योगत्रयमुदाहरति—तत्रातिमात्रेत्यादि। अतिमात्रस्वलक्षणः हेमन्तादिः कालः कालातियोगः। अतिमात्रशीतलक्षणो हिमश्च शिशिरश्च हिमशिशिरातियोगः। अतिमात्रोष्णलक्षणो वसन्तो ग्रीष्मश्च वसन्तग्रीष्माति-योगः। अतिमात्रवृष्टिलक्षणा वर्षाः शरच्च वर्षाशरदतियोगः। तेषामतिमात्र-शीतोष्णवर्षणानामतियोगात् ते काला उक्ता अतियोगा इति। हीन-स्वलक्षणेत्यादि। हीनस्वलक्षणस्तु हेमन्तादिः कालः कालायोगः। कालस्य सर्व्वशो योगाभावासम्भवाद्धीनयोग एव कालायोग उक्तः। हीनशीतलक्षणो हेमन्तः शिशिरश्च तयोरयोगः। हीनोष्णलक्षणो वसन्तो ग्रीष्मश्च तयोरयोगः।

चक्रपाणिः—कालातियोगादीन् दर्शयति—शीतोष्णेत्यादि।—अतिमात्रस्वलक्षणोऽतिमात्र-शीतादिः, यथास्वलक्षणात् शीतादेः विपरीतलक्षणं, यथा—हेमन्ते वर्षणं वर्षासु शीतमित्यादि॥२१॥

**कालः कालमिथ्यायोगः। कालः पुनः परिणाम उच्यते ॥ २१ ॥**

हीनवर्षलक्षणा वर्षाः शरच्च तयोरयोगः। यथास्वलक्षणविपरीतलक्षणस्तु कालः कालमिथ्यायोगः। अन्यतातिरिक्तशीतलक्षणः स्वलक्षणः कालो हेमन्तः शिशिरश्चातिलक्षणोऽतियोगः, हीनलक्षणोऽयोगः, ताभ्यां विपरीतलक्षणस्तु हिमे शिशिरे चोष्णवर्षान्यतरलक्षणो हिमशिशिरमिथ्यायोगः। एवं वसन्तग्रीष्मयोः शीतवर्षलक्षणान्यतरलक्षणो वसन्तो ग्रीष्मो वसन्तग्रीष्ममिथ्यायोगः। तथा शीतोष्णलक्षणान्यतरलक्षणा वर्षाः शरच्च वर्षाशरन्मिथ्यायोग इति।

एषां सामान्यधर्म्मेण संज्ञार्थमाह कालः पुनरित्यादि। काल इति कलयति कालयति वा भूतानीति। समयोगातियोगायोगमिथ्यायोगयुक्तः सर्व्वः कालः। परिणमयति भूतानीति परिणामहेतुत्वात् परिणाम उच्यते। तितरामेवैतन्त्रिविधविकल्पोऽपि कालपरिणामसंज्ञ उच्यते। एष हि कालः सर्व्वाणि शुभाशुभानि कर्म्माणि परिणमय्य धर्म्माधर्म्मरूपेण परिणामसंज्ञ एव भवति। तस्माद् धर्म्माधर्म्मावपि परिणामाख्यत्वात् कालेन गृह्येते न तु प्रज्ञापराधेन। सद्यःफलकर्म्मणः फलन्तु प्रज्ञापराधेन गृह्यते, कालान्तरे परिणामाभावादिति। वक्ष्यते च कतिधापुरुषीये—"निर्दिष्टा कालसम्प्राप्तिर्व्याधीनां हेतुसंग्रहे। चयप्रकोपप्रशमाः पित्तादीनां यथा पुरा ॥ मिथ्यातिहीनलिङ्गाश्च वर्षान्ता रोगहेतवः। जीर्णभुक्तप्रजीर्णान्न-कालाकालस्थितिश्च या ॥ पूर्व्वमध्यापराह्नाश्च रात्र्या यामास्त्रयश्च ये। येषु कालेषु नियता ये रोगास्ते च कालजाः ॥ अन्येद्युष्को द्व्यहग्राही तृतीयकचतुर्थकौ। स्वे स्वे काले प्रवर्त्तन्ते काले ह्येषां बलागमः ॥ एते चान्ये च ये केचित् कालजा विविधा गदाः। अनागते चिकित्स्यास्ते बलकालौ विजानता ॥ कालस्य परिणामेन जरामृत्युनिमित्तजाः। रोगाः स्वाभाविका दृष्टाः स्वभावो निष्प्रतिक्रियः ॥ निर्दिष्टं दैवशब्देन कर्म्म यत् पौर्व्वदेहिकम्। हेतुस्तदपि कालेन रोगाणामुपलभ्यते ॥ न हि कर्म्म महत् किञ्चित् फलं यस्य न भुज्यते। क्रियाघ्नाः कर्म्मजा रोगाः प्रशमं यान्ति तत्क्षयात् ॥ धीधृतिस्मृतिविभ्रंशः सम्प्राप्तिः कालकर्म्मणाम्। असात्म्यार्थागमश्चेति ज्ञातव्या दुःखहेतवः ॥" इति ॥ २१ ॥

इत्यसात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति त्रयस्त्रिविधविकल्पाः कारणं विकाराणाम्। समयोगयुक्तास्तु प्रकृतिहेतवो भवन्ति ॥ २२ ॥

सर्व्वेषामेव भावानां भावाभावौ नान्तरेण योगायोगातियोगमिथ्यायोगात् समुपलभ्येते। यथास्वयुक्त्यपेक्षिणौ हि भावाभावौ ॥ २३ ॥

गङ्गाधरः—इत्यसात्म्येत्यादि। इति पूर्व्वोक्ता असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति त्रयः खल्वतियोगायोगमिथ्यायोगविकल्पा विकाराणां कारणं भवन्ति। एभ्योऽन्यो यः समयोगः स कस्य कारणमिति? अत आह—समयोगेत्यादि। समयोगयुक्तास्तु खल्विन्द्रियार्थसंयोगबुद्धिसंयोगकालसंयोगाः प्रकृतिहेतवः स्वास्थ्ये हेतवो भवन्ति ॥ २२ ॥

गङ्गाधरः—कस्मादिति? अत आह—सर्व्वेषामित्यादि। सर्व्वेषामिति सर्गावस्थायां यावन्तो भावास्तावतामेव भावानां वस्तूनां भावाभावौ। यथास्वस्वरूपेण वर्त्तनं भावः, अन्यथारूपेण वर्त्तनमभावः। एतौ द्वौ न कालबुद्धीन्द्रियार्थानां समयोगायोगातियोगमिथ्यायोगादन्तरेण विना समुपलभ्येते। कस्मादिति? अत आह—यथास्वेत्यादि। भावाभावौ हि यस्माद् भावानां यथास्वयोगापेक्षिणौ। कालादीनां समयोगापेक्षी भावानां भावः। तेषामेवातियोगायोगमिथ्यायोगापेक्षी भावानामभाव इति। तदुक्तं कतिधापुरुषीये— "विषमाभिनिवेशो यो नित्यानित्ये हिताहिते। ज्ञेयः स बुद्धिविभ्रंशः समं

चक्रपाणिः—आयतनान्युपसंहरति इतीत्यादि। विकाराणां हेतवो भवन्तीति सम्बन्धः, तथा समयोगयुक्ताः सम्यग्योगयुक्ताः प्रकृतिहेतवो भवन्तीति योज्यम्, प्रकृतिरारोग्यम् ॥ २२ ॥

चक्रपाणिः—इदानीं धातुसाम्यवैषम्यहेतुत्वेन सम्यग्योगायोगौ च प्रतिपाद्य बाह्यानामपि वृक्षघटादीनां सम्यक्स्थिति-विनाशयोः सम्यग्योगायोगावेव कारणमिति दृष्टान्तार्थं भावस्वरूपज्ञानार्थञ्चाह—सर्व्वेषामित्यादि। भावः सम्यगवस्थानम्, अभावोऽसम्यगवस्थानं विनाशो वा; योगात् सम्यग्योगाद् भावः अयोगादिभ्योऽभावः; यथास्वं युक्तिर्या यस्य भावस्याभावस्य वा युक्तिः स्वकारणयुक्तिस्तदपेक्षिणौ भवत इति सम्बन्धः; यथा वृक्षस्य भावेऽवस्थानेऽनत्यल्पपानीययोगादियुक्तिः, अभावे तु वृक्षस्य पानीयात्यल्पातियोगायोगौ तथा वज्रपातनादियुक्तिः, तदयुक्त्यपेक्षी वृक्षस्य भावाभावौ भवत इत्यादि कल्पनीयम् ॥ २३ ॥

त्रयो रोगा इति निजागन्तुमानसाः। तत्र निजः शरीरदोषसमुत्थः, आगन्तुर्भूतविषवाय्वग्निसम्प्रहारादिसमुत्थः। मानसः पुनरिष्टस्यालाभाल्लाभाच्चानिष्टस्योपजायते ॥ २४ ॥

तत्र बुद्धिमता मानसव्याधिपरीतेनापि सता बुद्ध्या हिताहितमवेक्ष्यावेक्ष्य धर्मार्थकामानामहितानामनुपसेवने हितानाञ्चोपसेवने प्रयतितव्यम्। न ह्यन्तरेण लोके

बुद्धिर्हि पश्यति ॥ विषयप्रवणं चित्तं धृतिभ्रंशान्न शक्यते। नियन्तुमहितादर्थाद् धृतिर्हि नियमात्मिका ॥ तत्त्वज्ञाने स्मृतिर्यस्य रजोमोहावृतात्मनः। भ्रश्यते स स्मृतिभ्रंशः स्मर्त्तव्यं हि स्मृतौ स्थितम् ॥" इति प्रथमाध्यायोक्तस्य काल बुद्धीन्द्रियार्थानामित्यादिवचनस्य प्रपञ्चोऽयमिति ॥ २३ ॥

गङ्गाधरः—अथ क्रमप्राप्तं त्रयो रोगा इति निजागन्तुमानसाः। निजस्यायं निजः शरीरदोषसमुत्थः। शारीरदोषवातपित्तकफवैषम्यं तत्कृतश्च ज्वरादिर्निजः। आगन्तुरिति भूतादिसमुत्थः। भूता देवग्रहादयः। विषं स्थावरं जङ्गमञ्च तथोपविषञ्च। वायुः सामुद्रो विषजुष्टादिश्च दुष्टवायुः। अग्निर्लौकिकाग्निः। सम्प्रहारः शस्त्रास्त्रम्, आदिना दण्डमुष्ट्यादिकम्। मानसो रोगस्तु इष्टस्यालाभादनिष्टस्य लाभाच्च उपजायते। क्रोधशोककामादिर्मानसदोषस्य रजसस्तमसश्चानिग्रहात्। यदि तयोर्निग्रहो भवति सत्त्वञ्चोद्रिक्तं स्यात् तदा नानिष्टलाभादिष्टस्यालाभाच्च क्रोधादयो भवन्ति ॥ २४ ॥

गङ्गाधरः—अथास्मिंस्तन्त्रे निजागन्तुव्याधीनामुपायस्य विस्तरेण वक्ष्यमाणत्वमभिप्रेत्य तयोरुपायमिह नोक्त्वा मानसव्याध्युपशमोपायमाह—तत्रेत्यादि। बुद्धिमता प्रशस्तबुद्धिमत्पुरुषेण प्रशस्तया बुद्ध्या हिताहितमवेक्ष्य मानसव्याधिविपरीतेन लोभमोहक्रोधादिविपर्य्ययेण सता साधुना कर्म्मणा धर्म्मार्थकामानामहितानामनुपसेवने हितानाञ्च धर्म्मार्थकामानामुपसेवने प्रयति-

चक्रपाणिः—रोगानाह—त्रयो रोगा इति। इष्टलाभाज्जायते कामहर्षादिः, अनिष्ट-प्रियवियोगादिलाभाच्च शोकादयः; यदि वा, इष्टस्यालाभाल्लाभाच्चानिष्टस्येति पाठः, अत्र तु पाठे चकारादिष्टलाभोऽपि हेतुर्बोद्धव्यः ॥ २४ ॥

चक्रपाणिः—सम्प्रति मानसव्याधिचिकित्साया अवक्तव्यत्वेनेहैव तच्चिकित्सामाह—तत्रेत्यादि। मानसव्याधिपरीतेनापीत्यभिधानेन शारीरव्याध्युपयुक्तेनापि वक्ष्यमाणमनुष्ठेयमिति

**त्रयमेतन्मानसं किञ्चिन्निष्पद्यते सुखं वा दुःखं वा, तस्मादेतच्चानुष्ठेयम्। तद्विद्यवृद्धानाञ्चोपसेवने प्रयतितव्यम् आत्मदेशकालबलशक्तिज्ञाने यथावच्चेति ॥ २५ ॥**

भवति चात्र।

**मानसं प्रति भैषज्यं त्रिवर्गस्यान्ववेक्षणम्।**
**तद्विद्यसेवा विज्ञानमात्मादीनाञ्च सर्व्वशः ॥ इति ॥ २६ ॥**

तव्यम्। कस्मात्? न ह्यन्तरेणेत्यादि। हि यस्मात्। लोके त्रयमेतद्धर्म्मार्थकाममन्तरेण मानसं सुखं वा दुःखं वा किञ्चिन्न निष्पद्यते, तस्मादेतच्च हितमेव धर्म्मार्थकाममनुष्ठेयं बुद्धिमता। हिताहितं बुद्ध्यावेक्ष्य को धर्म्मो मम हितः कोऽहितः, कश्चार्थो हितः कोऽहितः, कः कामश्च हितः को वाप्यहित इति हितानामुपसेवनेऽहितानामनुपसेवने प्रयतितव्यम्। तथा तद्विद्यवृद्धानां चोपसेवने प्रयतितव्यम्। तेनात्महिताहितान धर्म्मार्थकामान वेदितुमर्हति। एवमात्मदेशकालबलशक्तिज्ञाने यथावच्च प्रयतितव्यं तद्विद्यवृद्धोपसेवनेनेति। तद्विद्यवृद्धोपसेवनेन हि भवत्यात्मज्ञानं देशज्ञानं कालज्ञानं बलज्ञानं शक्तिज्ञानं यथावत्। यस्यात्मनि यः कामोऽर्थो धर्म्मो वा हितोऽप्यहितो वा, यस्मिन् देशे च यो धर्म्मोऽर्थो वा कामो वा हितो वाऽहितो वा। यस्य धर्म्मस्यार्थस्य कामस्य यादृशं बलं हितमहितं वा यस्य यादृशी शक्तिर्हिता वाऽहिता। तत् सर्व्वं तद्विद्यवृद्ध उपसेवनेन तुष्ट उपदिशेदिति मानसव्याधिप्रतीकारोपाय उक्तः। तत्र प्रमाणं श्लोकमाह भवति चात्रेति। मानसं प्रतीत्यादि। मानसं व्याधिं प्रति भैषज्यं त्रिवर्गस्य धर्म्मस्यार्थस्य कामस्य चान्ववेक्षणम्। तदवेक्षणार्थमुपदेष्टुस्तद्विद्यस्य सेवा। तद्विद्योपसेवनेन चात्मादीनामात्मदेशकालबलशक्तीनां विज्ञानं स्यादिति ॥ २५।२६ ॥

सुखयति। त्रयमेतद्धर्म्मार्थकामरूपं, मानसं सुखं वा मानसं दुःखं वा निष्पद्यत इति योज्यम्; तद्विद्य इह मानस-व्याधि-भेषजवेदी। आत्मदेशेत्यादि।—कोऽहं, किं मे हितमित्यात्मज्ञानम्। को देशः, अस्मिन् किमुचितमिति देशज्ञानम्; एवं कालादावपि ज्ञानं बोद्धव्यम् ॥ २५ ॥

चक्रपाणिः—सम्यगसुखबोधार्थं सुखग्रहणार्थं श्लोकेनाह—मानसं प्रतीत्यादि। मानसं विकारम् इति भावः। त्रिवर्गश्च धर्म्मादिः ॥ २६ ॥

त्रयो रोगमार्गा इति—शाखा मर्म्मास्थिसन्धयः कोष्ठश्च। तत्र शाखा रक्तादयो धातवस्त्वक् च स बाह्यो रोगमार्गः। मर्म्माणि पुनर्वस्तिहृदयमूर्द्धादीनि; अस्थिसन्धयोऽस्थिसंयोगाः तत्रोपनिबद्धाश्च स्नायुकण्डराः स मध्यमो रोगमार्गः। कोष्ठः पुनरुच्यते महास्रोतः शरीरमध्यं महानिम्नमाम-

गङ्गाधरः—अथ "त्रयो रोगमार्गाः" इति यदुक्तं, ते तु शाखा च मर्म्मास्थिसन्धयश्च कोष्ठश्चेति पृथक्पदेन ह्येकैको मार्ग उक्तः। तत्र शाखा रक्तादयः षड् धातवस्त्वक् चेति सप्तक एको मार्गः। त्वक् चेति पृथक्पदेन त्वग्गतरसश्चोपलक्ष्यते। तेनाहारपरिपाकजो हृदयस्थो रसो व्यावर्त्तते, तस्य कोष्ठस्थत्वेन कोष्ठान्तर्भूतत्वात्। एवं प्लीहयकृद्गतरक्तस्य कोष्ठान्तर्गतत्वान्न शाखासंज्ञा। एष बाह्यो रोगमार्ग एकः। सुखसाध्यत्वख्यापनार्थमेतदुपदेशः। मर्म्माणि पुनरित्यादि। वस्तिहृदयमूर्द्धादीनीति। सप्तोत्तरं मर्म्मशतम्। तत्र प्राधान्याद्वस्तिहृदयमूर्द्ध्नामुपादानमादिना शेषाणां चतुरुत्तरं मर्म्मशतस्य ग्रहणम्। तद्विस्तरेण शारीरे व्याख्यास्यते। अस्थिसन्धय इति किमस्थि च सन्धयश्चेति किमस्थ्नां सन्धय इति? तत्राह अस्थिसन्धय इति अस्थिसंयोगास्तत्रोपनिबद्धाश्च स्नायुकण्डराः। स्नायुः सूक्ष्मसिराः, कण्डरा अस्थिवत् स्थूलसिराः। इति मर्म्मादीनामेकमार्गत्वेनोक्तिप्रयोजनमाह—स मध्यमो रोगमार्ग इति। मध्यममार्गत्ववचनेन तद्रोगाणां कृच्छ्रसाध्यत्वं ख्यापितम्। तृतीयं मार्गं व्याचष्टे—कोष्ठः पुनरित्यादि। शरीरमध्यमुदरादिमहास्रोतोमहासरणिश्छिद्रं महानिम्नं महागर्त्तमामपक्वाशयश्चेति पर्य्यायशब्दः। तन्त्रान्तरे चोक्तम्—"स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च। हृदुण्डुकः

चक्रपाणिः—अथ प्रतिरोगमार्गानाह—त्रय इत्यादि। मर्म्मास्थिसन्धिभ्यामेको मार्गः। अत्र शाखेति संज्ञाकरणं व्यवहारार्थं, तथा रक्तादीनां धातूनां शाखाभिधेयानां वृक्षशाखातुल्यत्वेन बाह्यत्वज्ञापनार्थम्। त्वक् चेति त्वक्शब्देन तदाश्रयोऽपि रसो गृह्यते; साक्षात् तु रसानभिधानं हृदयस्थायिनो रसस्य शाखासंज्ञाव्यवच्छेदार्थं, तस्य हि कोष्ठग्रहणेनैव ग्रहणम्। अनेन न्यायेन यकृत्प्लीहाश्रितञ्च शोणितं कोष्ठत्वेनैवाभिप्रेतमिति बोद्धव्यं सामान्यन्यायत्वात्, उक्तञ्च कोष्ठविवरणे—"स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च। हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते॥" अस्थिसन्धिविवरणम्—अस्थिसंयोगा इति; तत्रेति, अस्थिकण्डरा इह तन्वी स्थूल-

पक्वाशयश्चेति पर्य्यायशब्दैः तन्त्रे। स रोगमार्ग आभ्यन्तर इति ॥ २७ ॥

तत्र गण्डपिडकालज्यपचीचर्म्मकीलाधिमांसमशककुष्ठ-व्यङ्गादयो विकारा बहिर्मार्गजाश्च वीसर्पश्वयथुगुल्मार्शो-विद्रध्यादयः शाखानुसारिणो भवन्ति रोगाः। पक्षवधग्रहा-पतानकार्द्दित-शोष-राजयक्ष्मास्थि--सन्धि--शूल--गुदभ्रंशादयः शिरोहृद्वस्तिरोगादयश्च मध्यममार्गानुसारिणो भवन्ति रोगाः। ज्वरातीसारच्छर्द्यलसक-विसूचिका-कास-श्वास-हिक्कानाहोदर-प्लीहादयोऽन्तर्मार्गजाश्च। वीसर्पश्वयथुगुल्मार्शोऽभ्यन्तर-विद्रध्यादयः कोष्ठानुसारिणो भवन्ति रोगाः ॥ २८ ॥

फुष्फुसश्च कोष्ठ इत्यभिधीयते। इति। अस्य प्रयोजनमाह—स इत्यादि। स आभ्यन्तरो रोगमार्गस्तृतीयः। एतन्मार्गगतरोगाणां सुखदुःखयाप्यासाध्यत्वं यथालक्षणं भवतीति ख्यापितम् ॥ २७ ॥

गङ्गाधरः—अथैतत्त्रिमार्गप्रतिनियतविशिष्टव्याधीनुपदर्शति—तत्रेत्यादि। गण्डो व्रणशोथो न गलगण्डः। आदिनाऽजगल्लिकादीनां ग्रहणम्। वीसर्पादयश्च शाखानुसारिणो रक्ताद्यनुसारिणोऽपि भवन्ति। कोष्ठानुसारिणश्च भवन्तीति वक्ष्यते। तेषां ये रक्ताद्यनुसारिणस्ते तु न कोष्ठानुसारिणः। कोष्ठानुसारिणो ये तेऽपि न शाखानुसारिण इति भेदः। मध्यममार्गानुसारिणस्तु रोगाः पक्षवधपक्षग्रहापतानकादयः स्युः। पक्षशब्देन सह वधग्रहयोः प्रत्येकमन्वयः। आदिना हिक्कादयः शिरोहृद्वस्तिरोगादय इति। पुनरादिशब्देन वृषणवृद्ध्यादयः।

कोष्ठानुसारिणो रोगानाह—ज्वरातिसारेत्यादि। ज्वरोऽतिसार इत्यादयो

स्नायुः; आमस्य पक्वस्य चाशय आमपक्वाशयः; एतच्च मार्गभेदकथनं तदाश्रितव्याधीनां सुखसाध्यत्वादिज्ञानार्थम् ॥ २७ ॥

चक्रपाणिः—सम्प्रति यन्मार्गाश्रितो यो रोगो भवति तं दर्शयति—तत्र गण्डेत्यादि।—बहिर्मार्गजाश्चेति विसर्पादीनां विशेषणं, विसर्पादयो ह्यन्तर्मार्गभाजोऽपि सम्भवन्त्यतस्तद्व्युदासार्थम्। पक्षशब्दो वधग्रहाभ्यां सम्बध्यते, शोषो धातुविशोषः। ज्वरो यद्यपि सार्व्वशरीरिक

त्रिविधा भिषज इति ।—
भिषक्छद्मचराः सन्ति सन्त्येके सिद्धसाधिताः ।
सन्ति वैद्या गुणैः* युक्तास्त्रिविधा भिषजो भुवि ॥
वैद्यभाण्डौषधैः पुस्तैः पल्लवैरवलोकनैः ।
लभन्ते ये भिषक्शब्दमज्ञास्ते प्रतिरूपकाः ॥
श्रीयशोज्ञानसिद्धीनां व्यपदेशादतद्विधाः ।
वैद्यशब्दं लभन्ते ये ज्ञेयास्ते सिद्धसाधिताः ॥
प्रयोगज्ञानविज्ञान-सिद्धिसिद्धाः सुखप्रदाः ।
जीविताभिसरास्ते स्युर्वैद्यत्वं तेष्ववस्थितम् ॥२९॥ इति ।

रोगा अन्तर्मार्गजाः कोष्ठानुसारिणः । विसर्पादयश्च कोष्ठानुसारिणोऽन्तर्मार्गजा एव भवन्तीति ॥ २८ ॥

गङ्गाधरः—अथ त्रिविधा भिषज इति यदुक्तं तद्व्याचष्टे—भिषक्छद्मचराः सन्ति सन्त्येके सिद्धसाधिताः । सन्ति वैद्यगुणैर्युक्तास्त्रिविधा भिषजा भुवि ॥ इति न स्वश्लोकं । वैद्यप्रभेदोपदेशप्रयोजनं वैद्यानामातुरैर्हेयतोपादेयता च ।

त्रिविधवैद्यलक्षणमाह—वैद्यभाण्डेत्यादि । वैद्यानां भाण्डमौषधाधारपात्रम् । पल्लवैरवलोकनादिति विस्तारतश्चातुर्य्यावलोकनैः एवंप्रकारेण ये वैद्यशब्दं लभन्ते ते वैद्यप्रतिरूपका भिषक्छद्मचरा अज्ञा आतुरैर्हेया इति ।

अथ सिद्धसाधितवैद्यलक्षणमाह—श्रीत्यादि । अन्यत्र चिकित्सया श्रियं यशो ज्ञानं चिकित्साक्रियासिद्धिं लभन्ते इत्येवं व्यपदेशं कुर्व्वन्ति य आत्मनः । किन्तु ते तद्विधा न स्युः । तादृशा ये वैद्यशब्दं लभन्ते ते सिद्धसाधिता वै ज्ञेयास्तेऽप्यातुरैर्हेया इति ।

अथ सद्गुणवैद्यलक्षणमाह—प्रयोगेत्यादि । प्रयोगमौषधप्रयोगकरणम्, ज्ञानं शास्त्रज्ञानम्, विज्ञानं लोकव्यवहारज्ञानम्, सिद्धिः सर्व्वत्र चिकित्सा-

एव तथापि विशेषेणामाशयसमुत्थत्वादिहोच्यते, अन्तर्मार्गजाश्चेति विसर्पादिविशेषणम् । अर्शो बहिर्बल्याश्रितं शाखागतम्, अन्यच्च कोष्ठगतम् । बहिर्मार्गजो गुल्मः, यो बहिरुत्तुण्डित उपलभ्यते बहिश्च पच्यते, स ज्ञेयः, अन्यस्तु सर्व्वः कोष्ठगत एव ॥ २८ ॥

चक्रपाणिः—भिषक्छद्मचराः भिषग्वेशचराः ; सिद्धेन प्रसिद्धेन साधिताः सिद्धसाधिताः,

* वैद्यगुणैरिति चक्रपाणिधृतः पाठः ।

त्रिविधमौषधमिति—दैवव्यपाश्रयं युक्तिव्यपाश्रयं सत्त्वावजयश्चेति। तत्र दैवव्यपाश्रयं—मन्त्रौषधिमणिमङ्गल-* नियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादि। युक्तिव्यपाश्रयं—पुनराहारौषधद्रव्याणां योजना। सत्त्वावजयः—पुनरहितेभ्योऽर्थेभ्यो मनोनिग्रहः॥ ३०॥

शारीरदोषप्रकोपे खलु शरीरमेवाश्रित्य प्रायशस्त्रिविधमौषध-

कर्म्मणः सिद्धिः; ताभिः सिद्धाः प्रख्याता ये व्याधितानां सुखप्रदास्ते प्राणाभिसरा वैद्या उच्यन्ते। तेषु वैद्यत्वं भवत्यन्वर्थस्थितम्। इति। जीवितायायुषेऽभिमुखीभूय सरन्तीति जीविताभिसरास्ते व्याधितैरुपादेया इति॥ २९॥

गङ्गाधरः—अथ त्रिविधं भेषजं व्याचष्टे—त्रिविधमित्यादि। त्रिविधमौषधमिति यदुक्तं तद्दैवव्यपाश्रयं युक्तिव्यपाश्रयं सत्त्वावजयश्चेति। दैवयुक्तिव्यपाश्रयं पूर्व्वाध्याये व्युत्पादितमिह निर्दिशति। तत्र मन्त्रौषधिप्रभृति दैवं विशेषेणापाश्रित्य व्याधीन् प्रशमयतीति दैवव्यपाश्रयम्। अत्रौषधिः—प्रशस्तवृक्षादिधारणत्वेन विहिता या। मङ्गलं शुभकृत् कर्म्म। आदिना स्तोत्रपाठादि। युक्तिव्यपाश्रयं पुनरिति। युक्तिं योगं विशेषेणापाश्रित्य यदौषधं व्याधीन् प्रशमयति तदाहारस्यौषधद्रव्याणाञ्च योजना इति। आहारपदं विहारोपलक्षणम्। सत्त्वावजयः पुनरित्यादि। सत्त्वं मनः। अस्यार्थेभ्योऽहितेभ्यो निग्रहः सत्त्वावजय उच्यते॥ ३०॥

गङ्गाधरः—एषु यदौषधं यत्र व्याधौ विधेयं तदाह—शरीरेत्यादि। शरीरदोषाणां वातपित्तकफानां प्रकोपे निजागन्तुव्याधिषु शरीरमेवाश्रित्य त्रिविध-

वैद्यभाण्डं वस्तिनेत्रादि, प्रतिरूपका वैद्यसदृशाः, व्यपदेशोऽन्यसम्बन्धेन कीर्त्तनम्, अतद्विधा ज्ञानहीनाः॥ २९॥

चक्रपाणिः—दैवमदृष्टं तद्व्यपाश्रयं, तच्च यददृष्टजननेन व्याधिप्रशमकं मन्त्रादि, यद्वा, दैवशब्देन देवा उच्यन्ते, तानाश्रित्य यदुपकरोति तत् तथा, मन्त्रादयो हि देवप्रभावादेव व्याधिहराः, बल्युपहारादिप्रीताश्च देवा एव प्रभावाद् व्याधीन् घ्नन्ति; अत्र दैवव्यपाश्रयमात्रावुक्तमाशुव्याधिहरत्वेन, प्रणिपातो देवादीनां शारीरो नमस्कारः, गमनं विदूरदेवादिगमनम्॥ ३०॥

चक्रपाणिः—सम्प्रति प्रकारान्तरेणोपयुक्तं भेषजत्रैविध्यमाह—शरीरेत्यादि। प्रायःशब्दः

* बल्युपहारहोम इत्यधिकः पाठश्चक्रसम्मतः।

मिच्छन्ति। अन्तःपरिमार्ज्जनं वहिःपरिमार्ज्जनं शस्त्रप्रणिधानं चेति। तत्रान्तःपरिमार्ज्जनं यदन्तःशरीरमनुप्रविश्यौषधमाहारजातव्याधीन् प्रतिमार्ष्टि। यत् पुनर्वहिःस्पर्शनमाश्रित्याभ्यङ्गस्वेदप्रदेहपरिषेकोन्मर्द्दनाद्यैरामयान् प्रमार्ष्टि तद्‌ वहिःपरिमार्ज्जनम्। शस्त्रप्रणिधानं पुनश्छेदनभेदनव्यधनदारणलेखनोत्पाटनप्रच्छनसीवनैषणक्षारजलौकाश्चेति ॥ ३१ ॥

भवन्ति चात्र

प्राज्ञो रोगे समुत्पन्ने वाह्येनाभ्यन्तरेण वा।
कर्म्मणा लभते शर्म्म शस्त्रोपक्रमणेन वा ॥

मौषधमिच्छन्ति। सत्त्वावजयेनाप्यपवर्ज्जनं स्यात्। ततः सत्त्वावजयोपयोगित्वमुपपद्यते। प्रायश इत्युक्तया क्वचिद्व्यभिचारस्त्रिविधस्य द्रष्टव्यः।

तत्र युक्तिव्यपाश्रयं त्रिविधमाह—अन्तरित्यादि। तत्रान्तःपरिमार्ज्जनं तदौषधं यच्छरीरस्याभ्यन्तरमनुप्रविश्याहारजातव्याधीन् प्रमार्ष्टि। तथा यत् पुनः शरीरस्य वहिःस्पर्शनमाश्रित्याभ्यङ्गादिभिः कर्म्मभिस्तैलादिकं यदामयान् प्रमार्ष्टि तद्वहिःपरिमार्ज्जनमिति। संशोधयति संशमयति चेत्युभयार्थः प्रमार्ज्जनम्। आद्यपदेनावगाहनादीनां ग्रहणम्।

अथ शस्त्रप्रणिधानमाह—शस्त्रेत्यादि। छेदनं द्विधाकरणम्। भेदनम् आशयान्तःप्रवेशनम्। व्यध आशयातिरिक्तस्थानेऽन्तर्भेदः। दारणं विदीर्णीभावः। लेखनं खननम्। उत्पाटनम् अन्तःशुषिरादुद्धरणम्। प्रच्छनं पाठीनदंष्ट्रादिना किञ्चिदुद्धरणम्। सीवनं सूत्रादिना सन्तानीकरणम्। एषणं नाडीगत्यनुसन्धानम्। क्षारो द्रव्याणां भस्मनः क्षरणजः सारभागः। जलौका रक्तपा इति। इतिशब्दः समाप्तौ ॥ ३१ ॥

गङ्गाधरः—अत्र प्रमाणश्लोकानाह भवन्ति चात्रेत्यादि। प्राज्ञ इत्यादयः श्लोकाः। प्राज्ञो बुद्धिमान् रोगे समुत्पन्ने सति वाह्येन वहिःपरिमार्ज्जनेन कर्म्मणा, आभ्यन्तरेणान्तःपरिमार्ज्जनेन वा कर्म्मणा, शस्त्रोपक्रमणेन वा शरीरदोषकोप इत्यनेन सम्बध्यते, तेन, मानसदोषजेऽप्युन्मादापस्मारादावप्यनादि भवतीति दर्शयति ॥ ३१ ॥

चक्रपाणिः—वैद्यभेदाभिधानप्रसङ्गेनातुरभेदमाह—प्राज्ञ इत्यादि। शर्म्म सुखमारोग्यमिति

वालस्तु खलु मोहाद्वा प्रमादाद्वा न बुध्यते।
उत्पद्यमानं प्रथमं रोगं शत्रुमिवाबुधः ॥ ३२ ॥
अणुर्हि प्रथमं भूत्वा रोगः पश्चाद् विवर्द्धते।
स जातमूलो मुष्णाति वलमायुश्च दुर्म्मतेः ॥
न मर्त्यो लभते श्रद्धां * तावद् यावन्न पीड्यते।
पीड़ितस्तु मतिं पश्चात् कुरुते व्याधिनिग्रहे ॥
अथ पुत्रांश्च दारांश्च ज्ञातींश्चाहूय भाषते।
सर्व्वस्वेनापि मे कश्चिद् भिषगानीयतामिति ॥
तथाविधश्च कः शक्तो दुर्व्वलं व्याधिपीड़ितम्।
कृशं क्षीणेन्द्रियं दीनं परित्रातुं गतायुषम् ॥

कर्म्मणा शर्म्म लभते। वाह्याभ्यन्तरशस्त्रोपक्रमणानि दैवव्यपाश्रयमित्यादिना व्याख्यातानि। वालस्तु खल्वप्राज्ञो मोहाद्वा प्रमादाद्वा शत्रुमिवोत्पद्यमानं रोगं न बुध्यते। यतो न बुधः ॥ ३२ ॥

गङ्गाधरः—कस्माच्छत्रुरिवेति? अत आह अणुर्हीत्यादि। हि यस्मात्। रोगः प्रथममणुः सूक्ष्मो भूत्वा पश्चाद्विवर्द्धते। वृद्धस्तु स रोगो जातमूलः सन् दुर्म्मतेस्तस्याबुधस्य वलमायुश्च मुष्णाति।

प्रथमं कस्मान्न बुध्यत इति? अत आह—न मर्त्य इत्यादि। मर्त्यो यावन्न रोगेण पीड्यते तावच्छ्रद्धां प्रतिकारार्थं न लभते। यदा पीड़ितो भवति तदा पश्चान्मतिं व्याधिनिग्रहे कुरुते।

व्याधिनिग्रहे मतिं कृत्वा यत् करोति तदाह—अथेत्यादि। अथ व्याधिनातिपीड़ितः सन् तद्व्याधिनिग्रहे मतिं कृत्वा पुत्रान् दारान् ज्ञातींश्चाहूय भाषते। किं भाषते? सर्व्वस्वेनापि मे मम सम्बन्धे कश्चिद्भिषगानीयतामिति भाषते। ततः परं तथाविधं व्याधिपीड़ितं दुर्व्वलं कृशं क्षीणेन्द्रियं दीनं गतायुषं को भिषक् त्रातुं शक्तः? ततः स वालोऽबुधस्त्रातारं भिषजमनासाद्य जीवितं

यावत्। प्रमादो बुद्ध्वापि रोगाप्रतीकारः, संज्ञा सम्यग् ज्ञानं व्याधिरयं त्वरया प्रतिकर्त्तव्य इति। एवमाकारं त्रातारं वैद्यमनासाद्य; तथाविधं हि रोगिणं वैद्यो नोपसर्पतीति भावः।

---

* न मूढो लभते संज्ञामिति पाठश्चक्रसम्मतः।

स त्रातारमनासाद्य बालस्त्यजति जीवितम्।
गोधा लाङ्गूलबद्धेवाकृष्यमाणा बलीयसा॥
तस्मात् प्रागेव रोगेभ्यो रोगेषु तरुणेषु वा।
भेषजैः प्रतिकुर्व्वीत य इच्छेत् सुखमात्मनः॥ ३३॥

त्यजति। कथम्? गोधेत्यादि। लाङ्गूले बद्धा गोधा यथा बलीयसा जनेन आकृष्यमाणा जीवितं त्यजति।

तस्मादित्यादि। तस्माद्धेतोः य आत्मनः सुखमिच्छेत् स खलु प्रागेव रोगेभ्यो जनिष्यमाणेभ्यो रोगेभ्यः पूर्व्वं दोषं चये प्रकोपे वा प्रसरे वा स्थानसंश्रये पूर्व्वरूपे वा भेषज्यैस्तच्चयादीनि प्रतिकुर्व्वीत। रोगेषूत्पन्नेषु तरुणेषु अजातमूलेषु भेषजैस्तान् रोगान् प्रतिकुर्व्वीत। इति। उक्तञ्च सुश्रुतेऽपि एकविंशतितमे व्रणप्रश्नाध्याये सूत्रस्थाने "तत्र सञ्चितानां दोषाणां स्तब्धपूर्णकोष्ठता पीतावभासता मन्दोष्मता चाङ्गानां गौरवमालस्यं चयकारणविद्वेषश्चेति लिङ्गानि भवन्ति। तत्र प्रथमः क्रियाकालः। अत ऊर्द्ध्वं प्रकोपणानि वक्ष्यामः" इत्यारभ्य "तेषां प्रकोपात् कोष्ठतोदसञ्चरणाम्लिकापिपासापरिदाहोऽन्नद्वेषहृदयोत्क्लेशाश्च भवन्ति। तत्र द्वितीयः क्रियाकालः। अत ऊर्द्ध्वं प्रसरं वक्ष्यामः। तेषामेभिरातङ्कविशेषैः प्रकुपितानां पर्य्युषितकिण्वोदकपिष्टसमवाय इवोद्रिक्तानां प्रसरो भवति। तेषां वायुर्गतिमत्त्वात् प्रसरणहेतुः। सत्यप्यचैतन्ये स हि रजोभूयिष्ठः रजश्च प्रवर्त्तकं सर्व्वभावानाम्। यथा महानुदकसञ्चयोऽतिवृद्धः सेतुमवदीर्य्यापरेणोदकेन व्यामिश्रः सर्व्वतः प्रधावत्येवं दोषाः कदाचिदेकशो द्विशः समस्ताः शोणितसहिता वानेकधा प्रसरन्ति। तद्यथा—वातः पित्तं श्लेष्मा शोणितम्। वातपित्ते वातश्लेष्माणौ पित्तश्लेष्माणौ वातशोणिते पित्तशोणिते श्लेष्मशोणिते। वातपित्तशोणितानि वातश्लेष्मशोणितानि पित्तश्लेष्मशोणितानि वातपित्तकफाः। वातपित्तकफशोणितानीत्येवं पञ्चदशधा प्रसरन्ति। कृत्स्नेऽर्द्धेऽवयवे वापि यत्राङ्गे कुपितो भृशम्। दोषो विकारं नभसि मेघवत् तत्र वर्षति॥ नात्यर्थं कुपितश्चापि लीनो मार्गेषु तिष्ठति। निष्प्रत्यनीकः कालेन हेतुमासाद्य कुप्यति॥ तत्र वायोः पित्तस्थानगतस्य पित्तवत् प्रतीकारः। पित्तस्य कफस्थानगतस्य कफवत्। कफस्य वातस्थान-

तत्र श्लोकौ।

एषणाः समुपष्टम्भा बलकारणमामयाः।
तिस्रै षणीये मार्गाश्च भिषजो भेषजानि च॥

गतस्य वातवत्। एष क्रियाविभागः। एवं प्रकुपितानां प्रसरताञ्च वायो-र्विमार्गगमनाटोपौ। ओषाचोषपरिदाहधूमायनानि पित्तस्य। अरोचका-ऽविपाकाङ्गसादाश्छर्द्दिश्चेति श्लेष्मणो लिङ्गानि भवन्ति। तत्र तृतीयः क्रिया-कालः। अत ऊर्द्ध्वं स्थानसंश्रयं वक्ष्यामः। एवं कुपितास्तांस्तान् शरीर-प्रदेशानागत्य तांस्तान् व्याधीन् जनयन्ति। ते यदोदरसन्निवेशं कुर्व्वन्ति तदा गुल्मविद्रध्युदराग्निसङ्गानाहविसूचिकातिसारप्रभृतीन् जनयन्ति। वस्तिगताः प्रमेहाश्मरीमूत्राघातमूत्रदोषप्रभृतीन्। मेढ्रगता निरुद्धप्रकशोपदंशशुक्रदोषप्रभृ-तीन्। गुदगता भगन्दरार्शःप्रभृतीन्। वृषणगता वृद्धीः। ऊर्द्ध्वजत्रुगतास्तूर्द्ध्वजान्। त्वङ्मांसशोणितस्थाः क्षुद्ररोगान् कुष्ठानि विसर्पांश्च। मेदोगता ग्रन्थ्यपच्यर्व्वुद-गलगण्डालजीप्रभृतीन्। अस्थिगता विद्रध्यनुशयीप्रभृतीन्। पादगता श्लीपदवातशोणितवातकण्टकप्रभृतीन्। सर्व्वाङ्गगता ज्वरसर्व्वाङ्गरोगादीन्। तेषामेवमभिनिर्विष्टानां पूर्व्वरूपप्रादुर्भावः। तत्र प्रतिरोगं वक्ष्यामः। तत्र पूर्व्वरूपगतेषु चतुर्थः क्रियाकालः। अत ऊर्द्ध्वं व्याधिदर्शनं वक्ष्यामः। शोफार्व्वुदग्रन्थिविद्रधिविसर्पप्रभृतीनां प्रव्यक्तलक्षणता ज्वरातिसारप्रभृतीनाञ्च। तत्र पञ्चमः क्रियाकालः। अत ऊर्द्ध्वमेतेषामवदीर्णानां व्रणभावमापन्नानां षष्ठः क्रियाकालः। ज्वरातिसारप्रभृतीनाञ्च दीर्घकालानुबन्धः। तत्राप्रति-क्रियमाणेऽसाध्यतामुपयान्ति। भवन्ति चात्र। सञ्चयञ्च प्रकोपञ्च प्रसरं स्थानसंश्रयम्। व्यक्तिं भेदञ्च यो वेत्ति दोषाणां स भवेद्भिषक्॥ सञ्चये-ऽपहृता दोषा लभन्ते नोत्तरा गतीः। ते तूत्तरासु गतिषु भवन्ति बलवत्तराः॥ सर्व्वैर्भावैस्त्रिभिर्वापि द्वाभ्यामेकेन वा पुनः। संसर्गे कुपितं क्रुद्धं दोषं दोषो-ऽनुधावति॥" इति॥ ३३॥

गङ्गाधरः—अथाध्यायार्थसंग्रहार्थमाह तत्र श्लोकाविति। त्रिस्रैषणाविति। एषणादयस्त्रिका अष्टौ। कृष्णात्रेयेण कृष्णात्रिपुत्रेण पुनर्व्वसुना। शक्तेन

इति शेषः। संग्रहे धीमता भावा इति च्छेदः। अष्टौ भावा इति सम्बन्धः; भावेषु विषयेषु असात्म्येन्द्रियार्थसंयोगे न, येषु एषणादिष्वष्टसु। सर्व्वमिति धर्म्मार्थकामाः॥ १०—३४॥

त्रित्वेनाष्टौ समुद्दिष्टाः कृष्णात्रेयेण धीमता ।
भावाभावेषु शक्तेन * येषु सर्व्वं प्रतिष्ठितम् ॥ ३४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
तिस्रैषणीयो नाम एकादशोऽध्यायः ॥११॥

## द्वादशोऽध्यायः ।

अथातो वातकलाकलीयमध्यायं व्याख्यास्यामः, इतिह
स्माह भगवानात्रेयः ॥ १ ॥

समर्थेन । येष्वष्टसु त्रिकेषु एषणादिषु सत्सु चासत्सु च भावाभावेषु सर्व्वं वस्तु प्रतिष्ठितम् । ते त्रिका अष्टौ समुद्दिष्टा इति ॥ ३४ ॥

अध्यायं समापयति । अग्नीत्यादि । पूर्व्ववद्व्याख्येयम् ।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ सूत्रस्थानीय-
तिस्रैषणीयाध्यायजल्पाख्या एकादशी शाखा ॥ ११ ॥

---

गङ्गाधरः—अथान्तर्व्वहिःपरिमार्ज्जनशस्त्रप्रणिधानैर्यद् व्याधिप्रशमं भिषक् कुर्य्यात् तत्र शारीरदोषाणां वातादीनामंशांशज्ञानमन्तरेण न स्यात् इत्यतो वातकलाकलीयमारभते—अथात इत्यादि । अस्याध्यायस्य प्रथमोपात्तवातकलाकलेतिपदमधिकृत्य कृतोऽध्यायः स वातकलाकलीयः, तमध्यायं व्याख्यास्यामः, इत्यादि सर्व्वं पूर्व्ववद्व्याख्येयम् । कला च कला चेति आभीक्ष्ण्ये द्विर्भावे कलाकले । वातस्य कलाकले वातकलाकले तयोर्ज्ञानं तत् तथा ॥ १ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-
व्याख्यायां तिस्रैषणीयो नाम एकादशोऽध्यायः ॥ ११ ॥

---

चक्रपाणिः—पूर्व्वाध्याये रोगाः स्वरूपमार्गबाह्यकारणभेषजैरभिहिताः, उपयुक्तज्ञानाः तत्कारणवातादयो बहुवाच्यत्वान्नोक्ताः, अतः सम्प्रति पृथक्प्रकरणे तेऽभिधीयन्ते वातकलाकलीये ; तत्रापि प्राधान्यात् वायुरेव प्रथममुच्यते । कला गुणः, यदुक्तं—"षोडशकलम्" इति । अकला

* भावाभावेष्वसक्तेन इति चक्रपाणिः ।

वातकलाकलाज्ञानमधिकृत्य परस्परमेतानि जिज्ञासमानाः समुपविश्य महर्षयः पप्रच्छुरन्योन्यम्। किंगुणो वायुः किमस्य प्रकोपणमुपशमनानि वास्य कानि? कथं चैनमसङ्घातमनवस्थितमनासाद्य प्रकोपणप्रशमनानि प्रकोपयन्ति प्रशमयन्ति वा? कानि चास्य कुपिताकुपितस्य शरीराशरीरचरस्य शरीरेषु चरतः कर्म्माणि बहिः शरीरेभ्यो वेति? ॥ २ ॥

गङ्गाधरः—अधिकारात् प्रसङ्गतः पित्तादीनां कलाकलाज्ञानाय यद्वक्ष्यते तदपि परिगृह्यते। वातकलाकलेत्यादि। वातकलाकलाज्ञानं वातस्यांशांशयोः ज्ञानमधिकृत्य महर्षयः सांकृत्यायनकुशादयः समुपवेश्य परस्परमेतानि वक्ष्यमाणानि किंगुणो वायुरित्यादीनि जिज्ञासमाना ज्ञातुमिच्छन्तोऽन्योन्यं परस्परं पप्रच्छुः। यानि पप्रच्छुस्तानि क्रमेण दर्शयति—किंगुण इत्यादि। को गुणो यस्य स किंगुणो वायुरिति प्रथमः प्रश्नः। किमस्य वायोः प्रकोपणं प्रकोपयतीति नन्द्यादित्वात् युच। वायोः प्रकोपकारणं किं भवतीति द्वितीयः प्रश्नः। एवमस्य कुपितस्य वायोरुपशमनानि कानि भवन्तीति तृतीयः प्रश्नः। कथमित्यादि। कथञ्च केन प्रकारेण खल्वेनं कुपितं वायुमसङ्घातममूर्त्तमनवस्थितं सततचलस्वभावादस्थिरं ततो न ग्रहणार्हम्। अतोऽनासाद्य न प्राप्य प्रकोपणानि कथं प्रकोपयन्ति प्रशमनानि वा कथं प्रशमयन्तीति चतुर्थः प्रश्नः। अथास्य च वायोः शरीराशरीरचरस्य शरीरचरस्य लोकेषु चरस्य च कुपितस्य चाकुपितस्य च खलु शरीरेषु चरतः कानि कर्म्माणि, शरीरेभ्यो बहिर्लोकेषु चरतो वा कानि कर्म्माणीति पञ्चमः प्रश्नः ॥ २ ॥

गुणविरुद्धो दोष, वातकलाकलीयो वातगुणदोषीय इत्यर्थः। यदि वा कला सूक्ष्मो भागः, तस्यापि कला कलाकला तस्यापि सूक्ष्मो भाग इत्यर्थः ॥ १ ॥

चक्रपाणिः—अत्रानेकविधवचनरूपतया वातादिगुणकथनं, बहुविधसम्मतिदर्शनार्थं तन्त्रप्रशंसार्थं च। असङ्घातमिति पित्तश्लेष्मवद्द्रवघनसङ्घातरहितम्, अनवस्थितमिति चलस्वभावम्, अनासाद्येति चक्षुषेनाऽभिविज्ञायमानत्वेन चेति मन्तव्यम् ॥ २ ॥

अत्रोवाच कुशः साङ्कृत्यायनः, रूक्षलघुशीतदारुणखर-विशदाः षडिमे वातगुणा भवन्ति ॥ ३ ॥

तत् श्रुत्वा वाक्यं कुमारशिरा भरद्वाज उवाच, एवमेतद् यथा भगवानाह, एत एव वातगुणा भवन्ति । स त्वेवंगुणै-र्द्रव्यैः एवंप्रभावैश्च कर्म्मभिरभ्यस्यमानैर्वायुः प्रकोपमापद्यते । समानगुणाभ्यासो हि धातूनां वृद्धिकारणमिति ॥ ४ ॥

गङ्गाधरः—एषामुत्तराणि क्रमेण दर्शयति—अत्रोवाचेत्यादि । अत्र एषु प्रश्नेषु मध्ये प्रथमप्रश्नोत्तरं साङ्कृत्यायनः कुशो महर्षिरुवाच—तद्यथा, रूक्षेत्यादि । रूक्षादय इति गुणवचनाः शब्दाः शुक्लादिवत्, मत्वर्थीयप्रत्ययलोपे धर्म्मिपराश्च भवन्ति, तथैवोक्तं पूर्व्वाध्याये रूक्षः शीतो लघुरित्येवमादि-वचने; न च लक्षणया तथा प्रयोगः साधुः स्यात् । शुक्लादयो गुणे हि पुंसि वर्त्तन्ते, तेषां गुणिलक्षणायामपि स्वलिङ्गत्यागाभावाद् गुणिलिङ्गानुपपत्ति-र्भवति । ततः शुक्लः पटः शुक्ला साटी शुक्लं वस्त्रमित्येवं न भवति । पूर्व्वाध्याये सप्तगुणो वायुरुक्तः । तत्र सूक्ष्मश्चलश्चोक्तः । इह तु नोक्तः । परन्तु दारुणो गुणोऽधिक उक्तः । षडिमे वातगुणा इति चोक्तम् । तेन न विरुद्धमाशङ्क्यम् । प्रश्नेऽनवस्थितवचनेन चलत्वं कर्म्म प्रसिद्धमिति मत्वा नेहोक्तम् । सूक्ष्मत्वञ्च प्रश्नेऽसङ्गानवचनेनोक्तम् । तदप्यनुमत्येह नोक्तमिति ॥ ३ ॥

गङ्गाधरः—इति साङ्कृत्यायनकुशस्य वातगुणवचनं वाक्यं श्रुत्वा कुमारशिरा भरद्वाज उवाच—एवमेतदित्यादि । भगवान् भवान् यथैवमेतद् रूक्षलघु-शीतेत्यादयो गुणा वातस्येत्युवाच, एत एव रूक्षादयो वातगुणा भवन्ति । तथाविधगुणस्य वायोः प्रकोपणानि खल्वेवं भवन्ति । तद्यथा—स त्वेवमित्यादि । स तु रूक्षलघुशीतादिगुणो वायुरेवंगुणै रूक्षलघुशीताद्यन्यतमा-नेकद्रव्यैकगुणैर्द्रव्यैरेवंप्रभावै रूक्षादिगुणजनकधर्म्मजनकप्रभावैर्धावनरात्रिजाग-रणादिभिः कर्म्मभिश्चानेकद्रव्यैकगुणैः प्रकोपमापद्यते । कस्मात्? समान-गुणाभ्यासो हि यस्माद् धातूनां वृद्धिकारणमिति । कस्मात्तु न रौक्ष्यादयो

चक्रपाणिः—रूक्षादयो भावप्रधानाः, तेन, रूक्षत्वादयो गुणा मन्तव्याः; दारुणत्वं चलत्वं चलत्वात् भवति वा, दारुणत्वं शोषणत्वात् काठिन्यं करोति, दीर्घञ्जीवितीयोक्तं च स्वगुणं भवति । कुमारशिरा इति [illegible] । एवंगुणैरि-

तत् श्रुत्वा वाक्यं काङ्कायनो वाह्लीकभिषगुवाच, एवमेतत् यथा भगवानाह। एतान्येव वातप्रकोपणानि भवन्ति। अतो विपरीतानि खल्वस्य प्रशमनानि भवन्ति। प्रकोपविपर्य्ययो हि धातूनां प्रशमकारणमिति ॥ ५ ॥

तत् श्रुत्वा वाक्यं वडिशो धामार्गव उवाच, एवमेतद् यथा भगवानाह। एतान्येव वातप्रकोपप्रशमनानि भवन्ति। यथा ह्येनमसङ्घातमनवस्थितमनासाद्य प्रकोपणप्रशमनानि प्रकोप-

गुणा वर्त्तन्ते। रुक्षत्वादिधर्म्मजनकप्रभावास्तु कर्म्मसु वर्त्तन्ते। प्रभावोऽचिन्त्यशक्तिः। कर्म्मापि निश्चेष्टसमवायिकारणत्वेन गुणशब्देन गुण इवाभिधीयते। तेन समानगुणाभ्यास इति समानगुणकर्म्माभ्यासः। नैकवारोपसेवितः समानगुणः कर्म्म वा वृद्धिकारणं भवतीति सूचनार्थमभ्यास इत्युक्तमिति ॥ ४ ॥

गङ्गाधरः—तदित्यादि। एवमुक्तं कुमारशिरसा वाक्यं श्रुत्वा काङ्कायनो वाह्लीकभिषगुवाच—भगवान् भवान् यथाह एतदेवमीदृशं भवति। यत एतान्येव भवदुक्तानि वातप्रकोपणानि भवन्ति। अतो विपरीतानि रुक्षादिविपरीतानि खलु स्निग्धगुरूष्णमृदुश्लक्ष्णपिच्छिलस्थूलस्थिरगुणद्रव्याणि तत्प्रभावाणि च कर्म्माणि अस्य प्रकुपितस्य वातस्य प्रशमनानि भवन्ति। कस्मात्? प्रकोपणविपर्य्ययो हि यस्माद् धातूनां प्रशमकारणमिति। एकद्वित्र्यादिगुणतो यथा प्रकोपः स्यात् तथैकद्वित्र्यादिगुणद्रव्यैस्तथैवप्रभावैः कर्म्मभिर्धातूनां प्रशमः स्यादिति ॥ ५ ॥

गङ्गाधरः—तत् श्रुत्वेत्यादि। काङ्कायनस्य तद्वाक्यं श्रुत्वा धामार्गवो वडिशो महर्षिरुवाच—एवमित्यादि। भगवान् भवान् यथा वातप्रशमनान्युवाच, एतदेवम् ईदृशमेव भवति। यत एतान्येव वातप्रकोपस्य प्रशमनानि भवन्ति। यथा हीत्यादि। यथा खल्वेनं वायुं रुक्षादिगुणमसङ्घातं सूक्ष्ममनवस्थितं चलं रुक्षादीनि प्रकोपणानि प्रकोपयन्ति। यथा च तद्गुणविपरीतानि

रिति प्रभावाद्रौक्षादिकारकैर्जागरणादिभिः, प्रभावाभिधानञ्च कर्म्मणो निर्गुणत्वात्; अभ्यस्यमानैरिति न सकृत्प्रयुक्तैः ॥ ३।४ ॥

चक्रपाणिः—शरीराणामिति शरीरावयवानां, शुषिरकराणि रन्ध्रकराणि, आश्रयमिति

यन्ति प्रशमयन्ति वा । तथानुव्याख्यास्यामः ;—वातप्रकोपणानि खलु रूक्षलघुशीतदारुणखरविशदशुषिरकराणि शरीराणाम् । तथाविधेषु शरीरेषु वायुराश्रयं गत्वा आप्याय्यमानः प्रकोपमापद्यते । वातप्रशमनानि पुनः स्निग्धगुरूष्णश्लक्ष्णमृदुपिच्छिलघनकराणि शरीराणाम् । तथाविधेषु शरीरेषु वायुरासज्जमानश्चरन् प्रशान्तिमापद्यते ॥ ६ ॥

तत् श्रुत्वा वडिशवचनमवितथमृषिगणैरनुमतमुवाच वार्योविदो राजर्षिः एवमेतत् सर्व्वमनपवादं यथा भगवानाह ।

प्रशमनानि प्रशमयन्ति तथानुव्याख्यास्यामः । तद्यथा वातप्रकोपणानि खलु रूक्षादीनि द्रव्याणि रूक्षादिशुषिरान्तकराणि शरीराणां भवन्ति । तथाविधेषु शरीरेषु रूक्षादीन्यासेवमानानां जनानां रूक्षादिगुणवत्सु शरीरेषु शुषिरान्वितेषु वायुराश्रयं गत्वावकाशं प्राप्याप्याय्यमानो विवर्द्धमानश्चलस्वभावः सर्व्वत्रातिशयेन चलति । शरीरेऽवकाशलाभात् सुतरां प्रकोपम् आपद्यते इत्युच्यते । वातप्रशमनानि पुनरिति । रूक्षादिगुणविपरीतानि खलु स्निग्धगुरूष्णादीनि घनकराणि सेवमानानां जनानां रूक्षादिभिः शुषिरमापन्नेषु शरीरेषु स्निग्धादिभिर्घनीभूतेषु शुषिररहितेषु वायुरवकाशमलब्ध्वा खल्वासज्जमानः स्थिरो भवंश्चरन् प्रशान्तिमापद्यते । इति ॥ ६ ॥

गङ्गाधरः तत् श्रुत्वेत्यादि । एवमुक्तं भागवतवडिशवचनं तत्र स्थितैः ऋषिगणैरवितथं बुद्धानुमतं तच्छ्रुत्वा वार्य्योविदो राजर्षिरुवाच—भगवान् भवान् यथाह एतत् सर्व्वमनपवादमपवादवचनहीनमेवमेव भवति । एवमेव प्रकोपणानि प्रकोपयन्ति । एवमेव च प्रशमनानि वातं प्रशमयन्तीति ।

समानगुणस्थानम्, आप्यायमानश्चीयमानः, दारुणविपरीतो मृदुः शुषिरविपरीतो घनः, आसज्यमानोऽवतिष्ठमानः क्षीयमाणावयव इति यावत् ; एतेनैतदुक्तं भवति,—यद्यपि वायुना वातकारणानां वातशमनानां वा तथा सम्बन्धो नास्ति, तथापि शरीरसम्बद्धैस्तैर्वातस्य शरीरचारिणः सम्बन्धो भवति, ततश्च वातस्य समानगुणयोगात् वृद्धिर्विपरीतगुणयोगाच्च ह्रास उपपन्न एवेति ॥ ५।६ ॥

यानि तु खलु वायोः कुपिताकुपितस्य शरीराशरीरचरस्य शरीरेषु चरतः कर्म्माणि वहिः शरीरेभ्यो वा भवन्ति। तेषामवयवान् प्रत्यक्षानुमानोपमानैः साधयित्वा नमस्कृत्य वायवे यथाशक्ति प्रवक्ष्यामः ॥ ७ ॥

वायुस्तन्त्र-यन्त्र-धरः प्राणोदान-समानव्यानापानात्मा प्रवर्त्तकश्चेष्टानामुच्चावचानां नियन्ता प्रणेता च मनसः।

यानि त्वित्यादि—पञ्चमप्रश्नोत्थापनम्। कुपिताकुपितस्य शरीराशरीरचरस्य वायोः शरीरेषु चरतो यानि कर्म्माणि शरीरेभ्यो वहिर्लोके चरतश्च वायोर्यानि कर्म्माणि भवन्ति पृष्टानि, वायवे नमस्कृत्य तेषां कर्म्मणाम् असंख्येयत्वेन कार्त्स्न्येन वक्तुमशक्यत्वादवयवान् कतिचित् यानाप्तोपदिष्टांस्तान् प्रत्यक्षानुमानोपमानैः प्रमाणैः साधयित्वा यथाशक्ति प्रवक्ष्यामो व्याख्यास्यामः ॥ ७ ॥

गङ्गाधरः—तद्यथा—वायुस्तन्त्रेत्यादि। तन्त्रं शारीरधातूनां यस्य यो नियमस्तस्य धारणकृद्वायुः। यन्त्रधरश्च यन्त्रमस्य शरीरस्य धातूनां यथा यन्त्र यस्य चलनस्थानभ्रमणादिव्यापारो येन भवति तद् यन्त्रं तस्य धारणकृत्, प्राणादिपञ्चरूपः। तत्र चोक्तम्—"स्थानं प्राणस्य मूर्द्धोरः कण्ठजिह्वास्यनासिकम्। ष्ठीवनं क्षवथूद्गार-श्वासकामादिकर्म्मकृत् ॥ १। वृषणौ वस्तिमेढ्रञ्च श्रोण्यूरुवङ्क्षणं गुदम्। अपानस्थानमेतत् तु शुक्रमूत्रशकृत्क्रियः। २। समानोऽग्निसमीपस्थः कोष्ठे चरति सर्व्वतः। भुक्तं गृह्णाति पचति विवेचयति मुञ्चति। ३। उदानस्य पुनः स्थानं नाभ्युरःकण्ठ एव च। वाक्प्रवृत्तिश्च यत्नोजो-बलवर्णाग्निकर्म्मकृत्। ४। देहं व्याप्नोति सर्व्वन्तु व्यानः सर्व्वगतिर्नृणाम्। गतिप्रसारणाक्षेप-निमेषादिक्रियः सदा। ५।" इति। उच्चावचानां प्रवर्त्तक इति। उच्चैश्च नीचैश्च चेष्टानां सर्व्वासां प्रवर्त्तकः प्रेरकः। मनसो

चक्रपाणिः—शरीराशरीरचरस्येति वातस्वरूपकथनं, तेन, शरीरेषु चरत इति वहिः शरीरेभ्यो वेति च पुनरुक्तं न भवति; अवयवानिति वचनं, कार्त्स्न्येनाभिधानमशक्यं बहुप्रपञ्चत्वादिति दर्शयति; साधयित्वा प्रतिपाद्य, तन्त्रं शरीरं, यदुक्तं—"तन्त्रयन्त्रेषु भिन्नेषु तमोऽन्त्यं प्रविविक्षताम्" तदेव यन्त्रम्, यद्वा, तन्त्रस्य यन्त्रं सन्धयः। प्राणाद्यात्मा प्राणादिस्वरूपः, चेष्टाविशेषणम्—उच्चावचानां विविधानाम् इत्यर्थः, किंवा शुभाशुभानामित्यर्थः; नियन्ताऽनीप्सिते

**सर्व्वेन्द्रियाणामुद्द्योतकः * सर्व्वेन्द्रियार्थानामतिवोढ़ा सर्व्व-शरीरधातुव्यूहकरः सन्धानकरः शरीरस्य प्रवर्त्तको वा † । अतः प्रकृतिः स्पर्शशब्दयोः श्रोत्रस्पर्शनयोर्मूलं हर्षोत्साहयो-र्योनिः समीरणोऽग्नेर्दोषसंशोषणः क्षेप्ता वहिर्मलानां**

नियन्ता प्रणेता च । मनो यस्मिन प्रवर्त्ततेऽथ न प्रवर्त्तते तत्र नियमकृद्वायुः । मनो यत्र गच्छति न वा गच्छति तत्र प्रणेता नायको वायुः । सर्व्वेन्द्रियाणां दशानां श्रोत्रादीनामुद्द्योतकः प्रकाशकः । सर्व्वेषामिन्द्रियार्थानां शरीरगतानां शब्दादीनामतिवोढ़ा । सर्व्वेषां शरीरधातूनां व्यूहं सङ्घातं करोति ; रचना-कृदिति । शरीरस्य सन्धानकरः शरीरावयवसंयोजनकृत् । प्रवर्त्तको वा शरीरस्येवेति । शरीरावयवानां स्वस्वक्रियायां प्रवर्त्तकः प्रेरकः । अतः शरीरगतयोः शब्दस्पर्शयोः प्रकृतिर्वायुरेव, न त्वाकाशः । शब्दानां मूल-प्रकृतित्वेऽप्याकाशस्य शब्दाभिव्यक्तिन ह्याकाशाद्भवति, न वाकाशीयशब्दो हेत्वन्तरेणाभिव्यज्यते ; आकाशानुप्रवेशेन वायौ यः शब्दः स च तदनुप्रवेशेन च तेजःप्रभृतिषु यः शब्दः स स च पाञ्चभौतिके शरीरधातौ सर्व्व एकीभूय स्थूलशब्दो जातः, स एव वाय्वभिहननेनाभिव्यज्यते, इति शब्दप्रकृति-र्वायुर्न तु वायुरेव न त्वन्यदिति नियमः । तथा स्पर्शस्य प्रकृतिर्वायुः । वायोरनु-प्रवेशात् तेजोऽम्बुपृथिवीपृष्णशीतखरस्पर्शाः स्पर्शविशेषा अपि स्पर्शस्य मूल-प्रकृतिर्वायुः । अतः श्रोत्रस्पर्शनयोरिन्द्रिययोर्मूलं कारणम् । यद्यपि चाकाश-बहुलपाञ्चभौतिकं श्रोत्रं तथापि चाकाशवद्वायुरपि तद्वाकाशात् न्यूनः श्रोत्रे तेजःप्रभृतिभ्योऽधिकः क्रियाहेतुत्वात् । अन्यथा श्रोत्रे शब्दग्रहणक्रियाया अनुपपत्तिः । हर्षोत्साहयोर्योनिः । हर्ष आह्लादः, उत्साहः कार्य्येषु मनस उद्योगः ; तयोर्योनिरभिव्यक्तिकारणम् । समीरणोऽग्नेः जाठराग्नेः सन्धुक्षण-

विषये प्रवर्त्तमानस्य मनसः ; प्रणेता च मनस पूर्वेप्सितेऽर्थे उद्योजकः किंवा, उद्योगकारक इति वा पाठः, सोऽप्यभिन्नार्थः । अभियोढेवाभिवोढा सर्व्वेन्द्रियग्राहकत्वेन, तच्चास्य वायुमयेन स्पर्शनेन्द्रियेण सर्व्वेन्द्रियाणां व्यापकत्वात् पूर्व्वाध्यायप्रतिपादितेन न्यायेन बोद्धव्यम् । व्यूह-करः सङ्घातकरो रचनाकर इति यावत् ; प्रकृतिः कारणं, शब्दकारणत्वञ्च वायोर्नित्यमाकाशानु-प्रवेशात्, उक्तं हि त्वाष्ट्रीन्यभिधाय—"तेषामेकगुणः पूर्व्वो गुणवृद्धिः परे परे" इति ; पुनरुक्तं त्वाष्ट्रीन्यभिधाय "विष्टं ह्यपरं परेण इति । श्रवणमूलत्वं वायोः कर्णशष्कुलीरचनाविशेषे

* उद्योजक इति चक्रपाणिः । † प्रवर्त्तको चाप इति चक्रपाणिः ।

स्थूलाणुस्रोतसां भेत्ता कर्त्ता गर्भाकृतीनाम्। आयुषो-ऽनुवृत्तिप्रत्ययभूतो भवत्यकुपितः ॥ ८ ॥

कुपितस्तु खलु शरीरे शरीरं नानाविधैर्विकारैरुपतपति बलवर्णसुखायुषामुपघाताय। मनो व्याहर्षयति सर्व्वेन्द्रिया-ण्युपहन्ति। विहन्ति गर्भान् विकृतिमापादयत्यतिकालं धारयति। भयशोकमोहदैन्यातिप्रलापान् जनयति प्राणां-श्चोपरुणद्धि ॥ ९ ॥

प्रकृतिभूतस्य खल्वस्य लोके चरतः कर्म्माणीमानि भवन्ति।

प्रेरकः। दोषसंशोषणः शरीरक्लेदस्त्रद्दो दोषसंशोषकरः। क्षेप्ता बहि-र्मलानां मूत्रपुरीषादीनां क्षेप्ता बहिष्करणकर्त्ता। स्थूलाणुस्रोतसां स्थूलानां सूक्ष्माणाञ्च स्रोतसां भेत्ता गलनासिकादिषु च्छिद्राणां निर्म्माणकर्त्ता। कर्त्ता गर्भाकृतीनां देहावयवानां निर्म्माणकर्त्ता। आयुषोऽनुवृत्तिप्रत्ययभूतः शारीरवायुगमनेनायुषोऽनुवृत्तिरनुमीयते। इत्येवंभूतो भवत्यकुपितो वायुः शरीरचरः ॥ ८ ॥

गङ्गाधरः—अथ कुपितस्य शारीरस्य कर्म्माण्याह—कुपितस्तु खल्वित्यादि। तुशब्देन शरीरचरो वायुरनुवर्त्तते। खलु वाक्यालङ्कारे। शरीरचरो वायुः कुपितः सन नानाविधैर्ज्वरादिभिर्व्याधिभिः शरीरमुपतपति। ततो बलवर्ण-सुखायुषामुपघाताय भवति। मनो व्याहर्षयति ग्लापयति। सर्व्वेन्द्रियाणि दर्शेन्द्रियाणि उपहन्ति। गर्भान विहन्ति। गर्भान् विकृतिमङ्गवैगुण्यमापादयति प्रापयति। गर्भानतिकालं प्रसवकालमतीत्य धारयति। भयादीन् जनयति। प्राणांश्चोपरुणद्धि मारयति। इति कुपिताकुपितस्य शरीरचरस्य वायोः कर्म्माणि व्याख्यातानि भवन्ति ॥ ९ ॥

गङ्गाधरः—अथ शरीरेभ्यो बहिर्लोके चरतोऽकुपितस्य वायोः कर्म्माणि व्याख्यायन्ते। तद्यथा—प्रकृतिभूतस्येत्यादि। प्रकृतिभूतस्याकुपितस्यास्य वायोर्लोके चरतः सप्तस्कन्धस्य तस्याशितीये दर्शितस्य प्रवहावहोद्वहसंवह-

व्यापियमाणत्वात्, मूलं प्रधानकारणम्; उत्साहः कार्य्येषूद्योगो मनसः, योनिरभिव्यक्तिकारणं, दोषसंशोषणः शरीरक्लेदसंशोषणः, भेत्ता कर्त्ता,—एतच्च शरीरोत्पत्तिकाले; भूतदाहः स्वरूप-ध्वंसः, उपघातायेति च्छेदः, गर्भानिति विकृतिमापादयत्यतिकालं धारयतीत्यनेन च सम्बध्यते।

तद्यथा—धरणीधारणं ज्वलनोज्ज्वालनम् आदित्यचन्द्र-नक्षत्रग्रहगणानां सन्तानगतिविधानं सृष्टिश्च मेघानाम् अपाञ्च विसर्गः प्रवर्त्तनं स्रोतसां पुष्पफलानाञ्चाभिनिर्व्वर्त्तन-मुद्भेदनञ्चौद्भिदानाम् ऋतूनां प्रविभागः विभागो धातूनां धातुमानसंस्थानव्यक्तिः बीजाभिसंस्कारः शस्याभिवर्द्धनम् अविक्लेदोपशोषणमवैकारिकविकाराश्चेति ॥ १० ॥

प्रकुपितस्य खल्वस्य लोकेषु चरतः कर्म्माणीमानि भवन्ति। तद्यथा—उत्पीड़नं सागराणामुद्वर्त्तनं सरसां

विवहपरिवहपरावहा इति सप्तात्मनः कर्म्माणीमानि वक्ष्यमाणानि भवन्ति। तद्यथेत्यादि। तेषां सप्तानां कर्म्माणि साधारणत्वेनाह धरणीधारण मित्यादि। धरणीधारणं भूगोलधारणम्। ज्वलनस्याग्नेर्ज्वालनम्। आदित्या-दीनां ग्रहगणानां धारावाहिगतिविधानमित्यावहस्य कर्म्माणि। सृष्टिश्च मेघानाम्। अपां विसर्गः। स्रोतसां प्रवर्त्तनम्। पुष्पफलानामभिनिर्व्वर्त्तनम्। औद्भिदानामुद्भेदनमित्युद्वहस्य कर्म्माणि। ऋतूनां प्रविभागो धातूनां विभागो धातूनां मानसंस्थानव्यक्तिश्चेति प्रवहस्य कर्म्माणि। बीजानामभिसंस्कारो गुणाधानं शस्याभिवर्द्धनं विक्लेदहीनानामुपशोषणम्। अवैकारिकविकाराश्च संवहस्य कर्म्माणि। एवमन्यान्यपि द्रष्टव्यानि यानि व्यासोक्तानि मात्रा-शितीये दर्शितानि ॥ १० ॥

गङ्गाधरः—अथ प्रकुपितस्य लोके चरतोऽस्य सप्तस्कन्धस्य प्रवहाद्यात्मकस्य कर्म्माणीमानि भवन्ति—तद्यथा. उत्पीड़नमित्यादि। लोके चरतो वायोः प्रकोपकारणमुक्तं व्यासेन "विष्णोनिश्वासतो वातो यदा वेगसमीरितः। सहसोदीर्य्यते तात जगत् प्रव्यथते तदा॥" इति। एवं प्रकुपितस्य सप्तस्कन्धस्य बहिश्चरस्य वायोः कर्म्म। सागराणामुत्पीड़नमुत्प्लावनम्। सरसामुद्वर्त्तनमधिक-

आदित्यादीनां सन्तानेनाविच्छेदेन गतिविधानं सन्तानगतिविधानं, स्रोतसामिति नदीनां, प्रविभागो विभागकरणं, धातूनामिति पृथिव्यादीनां, धातवः कार्य्यद्रव्याणि प्रस्तरादीनि, मानं परिमाणं संस्थानमाकृतिस्तयोर्व्यक्तिरभिव्यक्तिः कारणमिति यावत्; बीजस्य शाल्यादेः, अभि-संस्कारोऽङ्कुरजननशक्तिः, अविक्लेदः शाकफलादर्द्रभागविच्छिन्नत्वम्, उपशोषणञ्च पाकेन यथा-

प्रतिसरणमापगानाम् आकम्पनञ्च भूमेराधमनमम्बुदानां शिखरिशिखरावमथनमुन्मथनमनोकहानां नीहारनिर्ह्राद-पांशुसिकतामत्स्यभेकोरगक्षाररुधिराश्माशनिविसर्गो व्यापादनञ्च षण्णामृतूनां शस्यानामसङ्घातो भूतानाञ्चोपसर्गो भावानाञ्चाभावकरणम्। चतुर्युगान्तकराणां मेघ-सूर्य्यानलानां * विसर्गः ॥ ११ ॥

स हि भगवान् प्रभवश्चाव्ययश्च भूतानां भावाभावकरः सुखासुखयोर्विधाता मृत्युर्यमो नियन्ता प्रजापतिरदितिर्विश्व-

जलवर्द्धनादूर्द्ध्वं प्रवर्त्तनम्। प्रतिसरणमापगानां नदीनां विपरीतस्रोतोगमनम्। भूमेराकम्पन कम्पः। अम्बुदानां मेघानामाध्मनमतिशब्दजननम। शिखरिशिखरावमथनं पर्व्वतानां शृङ्गभञ्जनम्। उन्मथनमनोकहानां वृक्षाणां भञ्जनम्। नीहारादीनां विसर्गः। निर्ह्रादो ध्वनिः। क्षारो भस्मादिः। रुधिरं रक्तम्। अश्म क्षुद्रप्रस्तरम्। अशनिर्वज्रः। एषां विसर्ग आकाशाद्वर्षणम्। व्यापादनञ्च षण्णामृतूनां व्यापज्जननमतियोगायोगमिथ्यायोगलक्षणकरणम्। शस्यानाम् असङ्घातोऽपुष्टिकरणम्। भूतानाञ्चोपसर्गः राक्षसादीनामुपद्रवः। भावानां चाभाव-करणं वस्तूनामभावकरणम्। चतुर्युगान्तकराणां मेघादीनां विसर्गः मरणम ॥११॥

गङ्गाधरः—कस्मादेवं करोति कुपितो बहिश्चरो वायुरिति? अत आह—स हीत्यादि। हि यस्मात् स भगवान वायुः प्रभवश्चाव्ययश्च भूतानां सुखा-

दीनामाश्रयाणामेव विक्लेदोपशोषणं, शस्यानामेवावैकारिकविकारेण सर्व्वस्मिन्नेव जगति प्रकृतिरूपकरणत्वं मन्ते। शिखरी पर्व्वतः, अनोकहो वृक्षः, ऊर्द्ध्वं वर्त्तनमुद्वर्त्तनं, प्रतिसरणं प्रतीपगमनम्; विसर्ज्जनं विसर्गः, स च पृथङ्नीहारादिभि सम्बध्यते; नीहारः शिशिरसमूहः, निर्ह्रादो मेघं विना गर्ज्जितम्, अशनिर्वज्रमेघोऽग्निः, असङ्घातोऽनुत्पादोऽनुपचयो वा, उपसर्गो मारकादिप्रादुर्भावः, मेघसूर्य्यानलादी विसर्गं सृष्टिः, वायुरिह देवताकल्पोऽभिप्रेतः, तेन तस्य भूतरूपचतुर्युगान्तकरानिलकरणकिक्रम् अविरुद्धम्; एवं यदन्यदप्यनुपपद्यमानं वायोस्तदपि देवताकल्पत्वेनैव समाधेयम् ॥ *—११ ॥

चक्रपाणिः—सम्प्रति सामान्येन पुनः कुपिताकुपितस्य वायोः स्वरूपमुच्यते—स हि भगवानित्यादि। प्रभवः कारणम्, अव्ययोऽक्षयः, भूतानामित्युत्तरेण सम्बध्यते, मृत्युर्यमादि-

* मेघसूर्य्यानलानिलानामिति पाठश्चक्रपाणिसम्मतः।

कर्म्मा विश्वरूपः सर्व्वगः सर्व्वतन्त्राणां विधाता भावानामणुर्विभुर्विष्णुश्च क्रान्ता लोकानां वायुरेव भगवानिति ॥१२॥

तत् श्रुत्वा वार्य्योविदवचो मारीचिरुवाच—यद्यप्येवमेतत् किमर्थस्यास्य वचने विज्ञाने वा सामर्थ्यमस्ति भिषग्विद्यायाम्? भिषग्विद्यां वाधिकृत्य कथा प्रवर्त्तते? १३ ॥

वार्य्योविद उवाच। भिषक् पवनमतिवलमतिपरुषमतिशीघ्रकारिणमात्ययिकं चेन्नानुनिशम्येत्, सहसा प्रकुपितमतिप्रयतः कथमग्रेऽभिरक्षितुमभिधास्यति प्रागेवैनमत्ययभयादिति? वायोर्यथार्था स्तुतिरपि भवत्यारोग्याय बलवर्णवृद्धये वर्च्चस्वित्वायोपचयाय ज्ञानोपपत्तये परमायुःप्रकर्षाय चेति ॥ १४ ॥

सुखयोश्च भावाभावकरः। विधाता मृत्युर्यमो नियन्ता प्रजापतिरदितिर्विश्वकर्म्मा विश्वरूपः सर्व्वगः सर्व्वतन्त्राणां नियमानां विधाता। भावानामणुर्विभुर्विष्णुर्लोकानां क्रान्ता सर्व्वलोकक्रमणकर्त्ता। वायुरेव भगवान् इति ॥ १२ ॥

गङ्गाधरः—तदित्यादि। इति पञ्चमप्रश्नोत्तरं वार्य्योविदराजर्षिवचः। तत् श्रुत्वा मारीचिरुवाच यद्यप्येवमित्यादि। यद्यपि वहिश्चरस्य कुपिताकुपितस्य वायोरेवंविधमेतत् कर्म्म तथापि अस्यार्थस्य वहिश्चरस्य वायोः कुपिताकुपितस्य भिषग्विद्यायामायुर्व्वेदवचने उक्तौ विज्ञाने वा किं सामर्थ्यमस्ति, भिषगविद्याञ्चाधिकृत्यास्य वायोः कथा किं प्रवर्त्तत इति? तत्र वार्य्योविद उवाच—भिषग्विद्यायामस्य वहिश्चरस्य वायोर्वचनेन चेत् पवनमतिवलमित्यादिकरूपेण नानुनिशाम्येत् तदा भिषक् प्रकुपितं तथाविधं पवनं प्रागेवात्ययभयादभिरक्षितुं कथं सहसाभिधास्यति? तस्मात् भिषग्विद्यायामस्य वहि-

भेदागमे ज्ञेयाः, सर्व्वतन्त्राणां सर्व्वकर्म्मणां, तन्त्रशब्दः कर्म्मवचनोऽप्यस्ति, यदुक्तं—"कृतन्त्राणां" कर्म्मणामित्यर्थः ॥ १२—१४ ॥

मारीचिरुवाच, अग्निरेव पित्तान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति। तद्यथा—पक्तिमपक्तिं दर्शनमदर्शनं मात्रामात्रत्वमुष्मणः प्रकृतिविकृतिवर्णौ शौर्य्यं भयं क्रोधं हर्षं मोहं प्रसादमित्येवमादीनि चापराणि द्वन्द्वादीनि इति ॥ १५ ॥

अरस्य वायोर्वचनं विज्ञानञ्च समयोजनं भवति। तथा वायोर्यथार्था स्तुतिरपि भवत्यारोग्यादिनिमित्तार्थेति ॥ १३।१४ ॥

गङ्गाधरः—मारीचिरुवाचेति। तद्वाय्योर्विदवचनं श्रुत्वा मारीचिरुवाच। यदुवाच तदाह—अग्निरेवेत्यादि। न केवलं वायुः कुपिताकुपितः शुभाशुभानि करोति। यथा वायुस्तथाग्निस्तेजोभूतं पित्तान्तर्गततेजोभूतबहुलपञ्चभूतविकार-समुदायात्मकं हि पित्तं पञ्चात्मकं तदन्तर्गतोऽग्निः पञ्चसु पित्तेषु वर्त्तमानः कुपिताकुपितः शुभाशुभानि करोति। न तु तदन्तर्गतानि वाय्वादीनि। वाय्वा-दीनि वा इत्येवशब्देन व्यावर्त्त्यते। पित्तेनेत्युक्तया धात्वन्तरस्थानामुष्मणां व्यावृत्तिः कृता। कानि शुभानि कानि चाशुभानि करोतीति, अत आह—तद्यथेत्यादि। यथाहं पक्त्यपक्त्यादिकं करोति। अकुपितो वह्निः पित्तान्तःस्थः पक्तिं दर्शन-मुष्मणो मात्रां देहादेः प्रकृतिवर्णं शौर्य्यं हर्षमेवमादीनि शुभानि करोति। कुपितस्तु पित्तान्तःस्थो वह्निरपक्तिमन्नानामदर्शनमुष्मणोऽमात्रत्वं देहादेर्विकृति-वर्णं भयं क्रोधं मोहमेवमादीनि त्वशुभानि कर्म्माणि करोति। इति। सुश्रुते चैक-विंशतितमेऽध्यायेऽभिहितम्—"अत्र जिज्ञास्यम्—किं पित्तव्यतिरेकादन्योऽग्निः? आहोस्वित् पित्तमेवाग्निरिति? अत्रोच्यते—न खलु पित्तव्यतिरेकादन्यो-ऽग्निरुपलभ्यते। आग्नेयत्वात् पित्ते दहनपचनादिष्वभिवर्त्तमानेऽग्निवदुपचारः क्रियतेऽन्तरग्निरित्यादि। क्षीणे ह्यग्निगुणे तत्समानगुणद्रव्योपयोगादतिवृद्धे शीतक्रियोपयोगादागमाच्च पश्यामो न खलु पित्तव्यतिरेकादन्योऽग्निरिति। तथाऽदृष्टहेतुकेन विशेषेण पक्वामाशयमध्यस्थं पित्तं चतुर्व्विधमन्नं पचति

चक्रपाणिः—तत्र श्रुत्वेत्यादि सुगमम्। वर्च्चस्वित्वं तेजस्वित्वम्। पित्तान्तर्गत इति वचनेन शरीरे ज्वालादियुक्तवह्निनिषेधेन पित्तोष्मरूपस्य वह्नेः सत्त्वं दर्शयति, न तु पित्ताद्भेदं, विशेषाग्निमान्द्यस्य ग्रहण्यध्याये वक्ष्यमाणत्वात्, तथा पित्तहरस्य सर्पिषोऽग्निवर्द्धनत्वेनोक्तत्वात्। पक्तिमपक्तिमित्यविकृतिविकृतिभेदेन पाचकस्याग्नेः कर्म्म, दर्शनमदर्शनं नेत्रगतस्यालोचकस्य, ऊष्मणो मात्रामात्रत्वं वर्णभेदौ च त्वग्गतस्य भ्राजकस्य, भयशौर्य्यादयो हृदयस्थस्य साधकस्य;

तत् श्रुत्वा मारीचिवचः काश्यप उवाच, सोम एव शरीरे श्लेष्मान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति। तद्यथा—दार्ढ्यं शैथिल्यमुपचयं कार्श्यमुत्साहमालस्यं वृषतां क्लीवतां ज्ञानमज्ञानं बुद्धिं मोहमेवमादीनि चापराणि द्वन्द्वादीनि इति ॥ १६ ॥

विवेचयन्ति च रसदोषमूत्रपुरीषाणि। तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्म्मणाऽनुग्रहं करोति। तस्मिन् पित्ते पाचकोऽग्निरिति संज्ञा। यत् तु यकृत्प्लीह्नोः पित्तं तस्मिन् रञ्जकोऽग्निरिति संज्ञा। स रसस्य रागकृदुक्तः। यत् पित्तं हृदयसंस्थितं तस्मिन् साधकोऽग्निरिति संज्ञा। सोऽभिप्रार्थितमनोरथसाधनकृदुक्तः। यद् दृष्ट्यां पित्तं तस्मिन्नालोचकोऽग्निरिति संज्ञा। स रूपग्रहणेऽधिकृतः। यत् तु त्वचि पित्तं तस्मिन् भ्राजकोऽग्निरिति संज्ञा। सोऽभ्यङ्गपरिषेकावगाहावलेपनादीनां क्रियाद्रव्याणां पक्ता च्छायानाञ्च प्रकाशक इति ॥" इह च पक्त्यपक्तिभ्यां पावको जाठराग्निरुक्तः। दर्शनादर्शनाभ्यामालोचकोऽग्निः। उष्मणो मात्रामात्रत्वाभ्यां भ्राजकोऽग्निः। प्रकृतिविकृतिवर्णाभ्यां रञ्जकोऽग्निः। शौर्य्यादिभिस्तु साधकोऽग्निरुक्तः। अपराणि द्वन्द्वादीनि सुखदुःखादीनि ॥ १५ ॥

गङ्गाधरः अथैतन्मारीचिवचः श्रुत्वा काश्यप उवाच सोम एवेत्यादि। शरीरे श्लेष्मान्तर्गतः सोम एव धातुरापो नाम भूतं कुपिताकुपितः शुभाशुभानि करोति, न तु वायुर्वाग्निर्वा। सोमबहुलपञ्चभूतात्मकस्तु श्लेष्मा। तत्रस्थः सोमोऽब्धातुः, न त्वन्योऽब्धातुः। कानि शुभानि कानि चाशुभानि करोतीति? अत आह तद्यथेत्यादि। अकुपितश्लेष्मान्तर्गतसोमो धातुः शरीरदार्ढ्यमुपचयमुत्साहं वृषतां ज्ञानं बुद्धिमेवमादीनि चापराणि द्वन्द्वादिषु शुभानि करोति। धैर्य्यं सुखादीनीत्यादिना गृह्यते। कुपितश्लेष्मान्तर्गतस्तु सोमो धातुः शरीरस्य शैथिल्यं कार्श्यमालस्यं क्लीवतामज्ञानं मोहञ्चेत्येवमादिषु द्वन्द्वादिषु अशुभानि अधैर्य्यदुःखादीनि च करोतीत्यादिशब्देनोक्तम्। सुश्रुते चोक्तम्—"श्लेष्मा तु पञ्चधा, क्लेदकोऽवलम्बको

रञ्जकस्य तु बहिःस्फुटकार्य्यादर्शनादुदाहरणं न कृतम्; सोमो जलदेवता, यदि वा, चन्द्रः ॥ १५।१६ ॥

तत् श्रुत्वा काश्यपवचो भगवान् पुनर्व्वसुरात्रेय उवाच, सर्व्व एव भवन्त सम्यगाहुरन्यत्रैकान्तिकवचनात्। सर्व्व एव खलु वातपित्तश्लेष्माणः प्रकृतिभूताः पुरुषमव्यापन्नेन्द्रियं बलवर्णसुखोपपन्नमायुषा महतोपपादयन्ति। सम्यगिवाचरिता धर्म्मार्थकामा निःश्रेयसेन महता पुरुषमिह चामुष्मिंश्च

रोधकस्तर्पकः श्लेषकश्चेति। तत्रामाशयस्थः पित्ताशयस्योपरिष्टात् तत्प्रत्यनीकत्वादूर्द्ध गतित्वात् तेजसश्चन्द्र इवादित्यस्य। स चतुर्व्विधाहारस्याधारः। तेन च तत्रोदकगुणैराहारः प्रक्लिन्नो भिन्नसङ्घातः सुखजरश्च भवति। माधुर्य्यात् पिच्छिलत्वाच्च प्रक्लेदित्वात् तथैव च। आमाशये सम्भवति श्लेष्मा मधुरशीतलः॥ स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य चोदककर्म्मणानुग्रहं करोति। उरःस्थस्तु त्रिकसन्धारणमात्मवीर्य्येणान्नरससहितेन हृदयावलम्बनं करोति। जिह्वामूलकण्ठस्थो जिह्वेन्द्रियस्य सौम्यत्वात् सम्यग्रसज्ञाने वर्त्तते। शिरःस्थः स्नेहसन्तर्पणाधिकृतत्वादिन्द्रियाणामात्मवीर्य्येणानुग्रहं करोति। सन्धिस्थस्तु श्लेष्मा सर्व्वसन्धिसंश्लेषात् सर्व्वसन्ध्यनुग्रहं करोतीति।" एषां कोपाकोपाभ्यां दार्ढ्यादीनि भवन्तीति॥१६॥

गङ्गाधरः—तत् श्रुत्वेत्यादि। काश्यपस्य तद्वचः श्रुत्वा भगवान् पुनर्व्वसुरात्रेय उवाच। यदुवाच तदाह—सर्व्व एवेत्यादि। भगवन्तो भवन्तो महर्षयः सर्व्व एव वातादेरेकैकस्य यदाहुस्तत् सम्यगाहुः। अन्यत्रैकान्तवचनात्। प्राणिनां शुभाशुभयोः कारणस्यैकान्तवचनादव्यभिचारित्ववचनादन्यत्र। वातादेरेकैकस्य कुपिताकुपितस्य निखिलशुभाशुभयोः कारणत्वाभावात्। सम्यगाहुरित्यनेन वातादेरेकैकस्य यथा यथा यत् यत् कुशादिभिरुक्तं तत् सर्व्वमनुमत्य निखिलशुभाशुभयोः कारणत्वाभावाद् व्यभिचारश्चाह स्मान्यत्रैकान्तवचनादित्यनेनेति। तर्हि किमेकान्तवचनमिति? अत आह—सर्व्व एव खल्वित्यादि। सर्व्वे खलु समस्ता एव वातपित्तश्लेष्माणः प्रकृतिभूता अकुपिता अव्यापन्नेन्द्रियं बलवर्णसुखोपपन्नं महतायुषा चोपपादयन्ति पुरुषम्। सम्यगिवेत्यादि दृष्टान्तः। यथा धर्म्मार्थकामाः सम्यगाचरिता महता निःश्रेयसेन शुभेन पुरुषमिह लोके

चक्रपाणिः—एकान्तिकवचनादित्यवधारणादित्यर्थः। निःश्रेयसेन सुखेन, ऋतवश्च इति शीतोष्णवर्षलक्षणाश्चतुर्म्मासेन ऋतुना, उपघातकाल इति कोपोच्छेदे काले॥ १७।१८॥

लोके, विकृतास्त्वेनं महता विपर्य्ययेणोपपादयन्ति। ऋतवस्त्रय इव विकृतिमापन्ना लोकमशुभेनोपघातकाले। इत्येतदृषयः श्रुत्वा सर्व्व एवानुमेनिरे वचनमात्रेयस्य भगवतोऽभिननन्दुश्चेति ॥ १७ ॥

भवति चात्र।

तदात्रेयवचः श्रुत्वा सर्व्व एवानुमेनिरे।
ऋषयोऽभिननन्दुश्च यथेन्द्रवचनं सुराः ॥ १८ ॥

चामुष्मिंश्च लोके उपपादयन्ति। विकृतास्त्वित्यादि। विकृतास्तु खलु कुपिता वातपित्तश्लेष्माण एनं पुरुषं महता विपर्य्ययेण व्यापन्नेन्द्रियं बलवर्ण-सुखानुपपन्नमल्पेनायुषा चोपपादयन्ति। तत्र दृष्टान्तः—ऋतव इत्यादि। विकृतिमापन्नास्त्रय ऋतव उपघातकाले लोकमशुभेन यथोपपादयन्ति तथा। इतीत्यादि। इत्येतत् पुनर्व्वसूक्तं वचनं सर्व्व एव कुशादय ऋषयोऽनुमेनिरे। अभिननन्दुश्च तेन वचनेनेति ॥ १७ ॥

गङ्गाधरः—तत्र वचनं दर्शयति—भवति चात्रेत्यादि। तदात्रेयेत्यादि। ऋषयोऽत्र कुशादयः। यथेन्द्रवचनं श्रुत्वा सर्व्वे देवा अनुमन्यन्तेऽभिननन्दुश्च तथा। नन्वेवमस्तु सर्व्वमनपवादं न चास्ति खल्वात्रेयवचनेऽप्यैकान्तिकत्वं, यत एतदुक्तं सुश्रुतेन—"वातपित्तश्लेष्माण एव देहसम्भवे हेतवः। तैरेवाव्यापन्नै-रधोमध्योर्द्ध सन्निविष्टैः शरीरमिदं धार्य्यतेऽगारमिव स्थूणाभिस्तिसृभिः, अतश्च त्रिस्थूणमाहुरेके। त एव च व्यापन्नाः प्रलयहेतवः। तदेभिरेव शोणितचतुर्थैः सम्भवस्थितिप्रलयेष्वप्यविरहितं शरीरं भवति। भवति चात्र। "नर्त्ते देहः कफादस्ति न पित्तान्न च मारुतात्। शोणितादपि वा नित्यं देह एतैस्तु धार्य्यते ॥" इति। एवं "शोणितस्य स्थानं यकृत्प्लीहानौ, तच्च प्रागभिहितम्। तत्रस्थमेव शेषाणां शोणितस्थानानामनुग्रहं करोति। भवति चात्र। अनुष्णशीतं मधुरं स्निग्धं रक्तञ्च वर्णतः। शोणितं गुरु विस्रं स्यात् विदाहश्चास्य पित्तवत् ॥" इति। एवं "पित्तप्रकोपणैरेव चाभीक्ष्णं द्रवस्निग्ध-गुरुभिश्चाहारैर्दिवास्वप्नक्रोधानलातपश्रमाभिघाताजीर्णविरुद्धाध्यशनादिभिरसृक् प्रकोपमापद्यते"—इति चेत्, सत्यं "शोणितचतुर्थैः" इति वचनेन "त्रिस्थूणमिति" वचनेन च शोणितस्य वातपित्तश्लेष्मपरतन्त्रत्वं ख्यापितम्। न तु त इव स्वतन्त्राः स्वतन्त्र स्वकोपनैः कुपितमकुपितञ्च प्रकोपणविपर्य्ययैः किञ्चिदशुभं

तत्र श्लोकौ।

गुणाः षड्विधो हेतुर्विविधं कर्म्म तत् पुनः।
वायोश्चतुर्विधं कर्म्म पृथक् च कफपित्तयोः॥
महर्षीणां मतिर्या या पुनर्व्वसुमतिश्च या।
कलाकलीये वातस्य तत् सर्व्वं संप्रकाशितम्॥ १६॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने वातकलाकलीयो द्वादशाध्यायः॥ १२॥

इति निर्द्देशचतुष्कम्।

शुभं वा कर्त्तुमलं भवति। भवतु। न च भवति रसमांसादिधातुरिवासाश्रिताप्रसारि चाप्रकोपि चानिर्हार्य्यं प्रकोपकालवर्ज्जमित्यभिप्रायेण तत्रैवोवाच सुश्रुतः—"यस्माद्रक्तं विना दोषैन कदाचित् प्रकुप्यति। तस्मात् तस्य यथादोषं कालं विद्यात् प्रकोपणे॥" इति। भगवतः पुनर्व्वसोरात्रेयस्य वचनमैकान्तिकमेवातिशयग्राह्यमिति ख्यापनार्थमृषिगणानुमतत्वमुपदर्शयितुं श्लोक उक्तः॥ १८॥

गङ्गाधरः—अध्यायार्थमुपसंहर्त्तुमाह—तत्र श्लोकौ इति। गुणाः षड्ति वातगुणाः कुशोक्ताः। त्रिविधो हेतुरिति वातप्रकोपणहेतुः। कुमारशिराभरद्वाजप्रोक्तः प्रशमहेतुः काङ्कायनप्रोक्तः वडिशप्रोक्तश्च। वायोर्विविधं चतुर्व्विधं कर्म्म कुपिताकुपितशरीरचरबहिश्चरस्य। कुपितस्य शरीरचरस्य कर्म्म विविधम्। अकुपितशरीरचरस्य कर्म्म विविधम्। कुपितस्य बहिश्चरस्य कर्म्म विविधं। अकुपितस्य बहिश्चरस्य कर्म्म विविधमिति चतुर्व्विधं कर्म्म। शेषं सुगमम्॥१९॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि। इति निर्द्देशचतुष्कः। विस्तरवचनं निर्द्देशः। निर्द्देशानां चतुर्भिर्निष्पन्न एक इति निर्द्देशचतुष्कः। इति निर्द्देशचतुष्कव्याख्या।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ सूत्रस्थानीयवातकलाकलीयद्वादशाध्यायजल्पाख्या द्वादशी शाखा॥ १२॥

चक्रपाणिः—संग्रहे गुणाः षड्ति रुक्षादयः, द्विविधो हेतुरिति वातप्रकोपहेतुर्वातप्रशमहेतुः, त्रिविधं नानाप्रकारं सन्निखिलमेव वायोः कर्म्म तत् कुपिताकुपिताऽशरीरशरीरचरभेदेन भवति, चतुष्कमिति योजनीयं, न हि चतुर्व्विधव्यतिरेकेण वायोः पृथग्विधं कर्म्मोक्तम्॥ १९॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थानव्याख्यायां वातकलाकलीयो नाम द्वादशोऽध्यायः॥ १२॥

निर्द्देशचतुष्कः समाप्तः।

# त्रयोदशोऽध्यायः।

अथातः स्नेहाध्यायं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥

सांख्यैः संख्यातसंख्येयैः सहासीनं पुनर्व्वसुम्।
जगद्धितार्थं पप्रच्छ वह्निवेशः स्वसंशयम् ॥

गङ्गाधरः—अथैषां कुपिताकुपितानां शरीरचराणां वातपित्तश्लेष्मणां स्वस्थेषु पुरुषेषु धातुसाम्यस्थापनस्यातुरेषु विषमधातुसाम्यकरणस्य चोपायानां प्रधानतमानां संशोधनानां नियतापेक्षणीयस्नेहस्वेदयोः पौर्व्वापर्य्यनियमात् प्राक् स्वेदात् वातादिनिर्देशाच्चानन्तरं स्नेहाध्यायमारभते—अथात इत्यादि। स्नेहोऽधिकरणयोगायोगादिज्ञानविषयतयाऽधीयते यत्र स स्नेहाध्यायः। सर्व्वमन्यत् पूर्व्ववद्व्याख्येयम् ॥ १ ॥

गङ्गाधरः—तत्र प्रश्नाः स्नेहविषये उत्थाप्यन्ते—सांख्यैरित्यादि। संख्या सम्यग्वस्तुतत्त्वज्ञानं तेनाचरन्तीति साङ्ख्याः। तैः सङ्ख्यातसंख्येयैः। सङ्ख्यातं सम्यग्ज्ञातं सङ्ख्येयं सम्यग्ज्ञेयमात्मादितत्त्वं यैस्तैस्तथा विज्ञातविज्ञेयैः।

चक्रपाणिः—निर्देशवातकलाकलीये वातादयोऽभिहिताः, तेषां भेषजं यथा कल्पनीयं, तदुपदेष्टुं कल्पनाचतुष्कोऽभिधीयते। भेषजानां कल्पना भेषजकल्पना, सा च कल्पना आश्रयद्रव्याभिधानं विना न पार्य्यते कल्पयितुम्, अतः स्नेहादिद्रव्यगोचरा स्नेह-स्वेद-वमन-विरेचनकल्पनेहाभिधीयते, वस्तिकल्पना तु बहुवक्तव्यत्वान्नोक्ता; अत्रापि वमनादिप्रवृत्तौ स्नेहस्यैव प्रथमं विधीयमानतया तथा दोषप्रधानस्य वातस्य प्रधानभेषजत्वाच्च तत्प्रतिपादक एव स्नेहाध्यायोऽभिधीयते। स्नेहस्य प्रतिपादकोऽध्यायः स्नेहाध्यायः ॥ १ ॥

चक्रपाणिः—संख्या सम्यग्ज्ञानं, तेन व्यवहरन्तीति सांख्याः; संख्यातं ज्ञातं संख्येयं ज्ञेयं यैस्ते तथा; यदि वा, संख्यातसंख्येयमिति पाठः, तदा पुनर्व्वसुविशेषणमेतत्, अर्थस्तु समानः; सांख्यैः सहावस्थानदर्शनमात्रेयस्य कर्त्तव्यप्रश्नानुगुणमनःसमाधानोपदर्शनार्थम्। संशयमिति संशयेन विषयिणा विषयं लक्षयति, तेन संशयविषयमित्यर्थः।

किंयोनयः कति स्नेहाः के च स्नेहगुणाः पृथक्।
कालानुपाने के कस्य कति काश्च विचारणाः॥
कति मात्राः कथंमानाः का च केषूपदिश्यते।
कश्च केभ्यो हितः स्नेहः प्रकर्षः स्नेहने च कः॥
स्नेह्याः के के च न स्नेह्याः स्निग्धातिस्निग्धलक्षणम्।
किं पानात् प्रथमं पीते जीर्णे किञ्च हिताहितम्॥
के मृदुक्रूरकोष्ठाः का व्यापदः सिद्धयश्च काः।
अच्छे संशोधने चैव स्नेहे का वृत्तिरिष्यते॥
विचारणाः केषु योज्या विधिना केन तत् प्रभो।
स्नेहस्यामितविज्ञान! ज्ञानमिच्छामि वेदितुम्॥२॥
अथ तत्संशयच्छेत्ता प्रत्युवाच पुनर्वसुः।
स्नेहानां द्विविधा सौम्य! योनिः स्थावरजङ्गमा॥३॥

स्वसंशयविषयानाह—किंयोनय इत्यादि। स्नेहाः किंयोनयः का योनिर्येषां ते किंयोनय इति। स्नेहविषये स्नेहानां का योनिरित्यादिकान् पञ्चविंशतिप्रश्नान् कृत्वाग्निवेश उवाच—हे गुरोऽमितविज्ञान प्रभो स्नेहस्य तज्ज्ञानं वेदितुमिच्छामि॥ २॥

गङ्गाधरः—अथैवमग्निवेशेन पृष्टः पुनर्व्वसुस्तत्संशयच्छेत्ता क्रमेण प्रत्युवाच तद् यथा—स्नेहानामित्यादि। किंयोनयः स्नेहा इति प्रथमप्रश्नस्योत्तरमाह। हे सौम्याग्निवेश स्नेहानां योनिर्द्विविधा स्थावरा योनिर्जङ्गमा च योनिः।

किं योनयः किं वा आधारकारणाः, कालश्चानुपानञ्च कालानुपाने, विचारणा द्रव्यान्तरासंयुक्तस्नेहपानं वर्ज्जयित्वा स्नेहोपयोग, कथंमानाः कीदृक्माना, का चेति मात्रा, प्रकर्षः कालप्रकर्षः, स्नेहने स्नेहयुक्तिक्रियायां; के न चेति के न च स्नेह्याः, किं पानात् प्रथमं पूर्व्वं हिताऽहितं, किञ्च पीते तु स्नेहे तथा जीर्णे च स्नेहे हिताहितमिति योज्यम्; सिद्धयो व्यापत्साधनानि भेषजानि। अच्छ इति पृथङ्निर्देशात् गोवलीवर्दन्यायेन संशमन इति भवति। वृत्तिरिति, वृत्तिरुपचारविधानं, ज्ञानं शास्त्रम्॥ २।३॥

तिलः पियालाभिषुकौ विभीतक-
श्चित्राभयैरण्डमधूकसर्षपाः ।
कुसुम्भबिल्वारुकमूलकातसी-
निकोठकाक्षोडकरञ्जशिग्रुकाः ॥
स्नेहाश्रयाः * स्थावरसंज्ञितास्तथा
स्युर्जङ्गमा मत्स्यमृगाः सपक्षिणः ।
तेषां दधि क्षीरघृतामिषं वसा
स्नेहेषु मज्जा च तथोपदिश्यते ॥ ४ ॥
सर्व्वेषां तैलजातानां तिलतैलं विशिष्यते ।
बलार्थे स्नेहने चाग्र्यमैरण्डन्तु विरेचने ॥ ५ ॥

तत्र तिलादयः स्थावरसंज्ञिताः स्नेहाश्रया योनयः स्युः । अभिषुक औत्तरापथिकः, चित्रा रक्त एरण्डः गोरक्षकर्कटीबीजं जयपालबीजं वा, अभया हरीतकी, अरुकः अरुष्करः भल्लातकफलम्, निकोठकः क्षुद्र आक्षोडः, आक्षोडः पर्व्वतस्थ आक्षोडः । जङ्गमस्नेहयोनिमाह—स्युर्जङ्गमा मत्स्यमृगाः पक्षिणश्च स्नेहयोनयः । तेषां दध्यादिकं स्नेहेषूपदिश्यते न तु रोमादिकम् । स्थावरजङ्गमयोनिनिर्देशेनैव कति स्नेहा इति द्वितीयप्रश्नस्याप्युत्तरमुक्तम् । तिल-तैलमित्यादि भेदाः स्थावरस्नेहाः । दध्यादिभेदा जङ्गमस्नेहाः । इति ॥ ३।४ ॥

गङ्गाधरः—अथ के च स्नेहगुणाः पृथगिति तृतीयप्रश्नस्योत्तरमाह—सर्व्वेषामित्यादि । तिलादीनां बीजप्रभवः सर्व्वः स्थावरः स्नेहस्तैलमुच्यते लोके । सर्व्वेषां तैलजातानां तैलसमूहानां मध्ये तिलतैलं प्रशस्तगुणतो विशिष्यते । तदाह—बलार्थे स्नेहने च यतोऽग्र्यं तिलतैलं ततो विशिष्यते

चक्रपाणिः—अभिषुक औत्तरापथिकः, चित्रा गोरक्षकर्कटी तद्बीजमिह, यदि वा, चित्रा लोहितैरण्डः, अतसी उमा इति ख्याता, अरुकनिकोठाक्षोडा औत्तरापथिकाः, स्नेहाशयाः स्नेहस्थानानि, एते च आविष्कृततमत्वेनोक्ताः, तेन निम्बतैलादयो बोद्धव्याः, आमिषं मांसम् ॥ ४ ॥

चक्रपाणिः—तैलजातानामिति, जातशब्दः प्रकारवचनः, यथा—"यदाहारजातमग्निवेश" इत्यादि, अत्र यद्यपि योगात् तिलभवमेव तैलं, तथापि रूढ़ेह सर्व्व एव स्थावरस्नेहास्तैलमित्युच्यन्ते,

* स्नेहाशया इति वा पाठः ।

सर्पिस्तैलं वसा मज्जा सर्व्वस्नेहोत्तमा मताः।
एभ्यश्चैवोत्तमं सर्पिः संस्कारस्यानुवर्त्तनात् ॥

सर्व्वेषां तैलजातानां मध्ये। ऐरण्डन्तु तैलं विरेचनेऽग्र्यं तस्मात् तेषां तैलजातानां मध्ये विशिष्यते ॥ ५ ॥

गङ्गाधरः—स्थावरजङ्गमानां मध्ये पुनर्विशेषमाह—सर्पिरित्यादि। सर्पिरादयश्चत्वारः स्नेहाः स्नेहोत्तमा न तु शेषाः स्थावरजङ्गमाः स्नेहोत्तमाः। तत्रापि विशेषमाह—एभ्यश्चेत्यादि। एभ्य सर्पिरादिभ्यश्च सर्पिरेवोत्तमम्। कस्मात्? संस्कारस्यानुवर्त्तनात्। सर्पिर्यथा द्रव्यान्तरैः संस्कारे तद्‌द्रव्यान्तरगुणैर्गुणाधानं संस्कारमावहति, न तथा तैलं वसा मज्जा चेति। तदुक्तम्—"नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते। यथा सर्पिरतः सर्पिः सर्व्वस्नेहोत्तमं मतम् ॥" इति। तथा च सर्पिर्यथा सर्व्वथैव संस्कारकद्रव्यगुणान स्वगुणसहितानावहति न स्वगुणपरिभवेण, न तथा तैलादयः। ते हि किञ्चित्-स्वगुणसहितान् संस्कारकद्रव्यगुणानधिकतयैवावहन्तीत्यवधेयम्। न हि सर्पिषः स्नेहशैत्यगुणौ तद्विरोधिभ्यां संस्कारकद्रव्यचित्रकादीनां रूक्षोष्णाभ्यां गुणाभ्यां संस्कारेणाभिभूयते। तदुक्तम् "स्नेहाद्वातं शमयति पित्तं माधुर्य्यशैत्यतः। घृतं तुल्यगुणं दोषं संस्कारात् तु जयेत् कफम् ॥" इति। विरुद्धाना-

यदुक्तं सुश्रुते "निष्पत्तेस्तद्‌गुणत्वाच्च तैलत्वमितरेष्वपि" इति। विशिष्यतेऽतिरिच्यते; अग्रमित्यैरण्डेन सम्बध्यते ॥ ५ ॥

चक्रपाणिः—सर्व्वस्नेहोत्तमा इत्यत्र सर्व्वशब्देन दधिक्षीरादयो गृह्यन्ते, सर्व्वस्नेहोत्तमत्वञ्च सर्पिरादीनां स्नेहगुणप्रकर्षवत्त्वेन; संस्कारो गुणान्तरारोपणं, तस्यानुवर्त्तनमनुविधानं स्वीकरणमिति यावत्, एतदुक्तं भवति—यत् न तथा तैलादयो द्रव्यान्तरसंस्कृताः संस्कारगुणानावहन्ति यथा सर्पिरिति, अत एवोक्तं—"नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते। यथा सर्पिरतः सर्पिः सर्व्वस्नेहोत्तमं मतम् ॥" अत एव संस्कारकद्रव्य-चित्रकादिगुणानुविधानेऽपि सर्पिर्न स्वगुणान् स्नेह-शैत्यादीन् जहाति, किन्तु, स्वगुणान् तद्‌गुणांश्च वहति, यतः, अनुशब्देन पश्चाद्वाचिना स्वगुणवर्त्तनस्य पश्चात् संस्कारकगुणवर्त्तनमुच्यते, अत एवोक्तं—"स्नेहाद् वातं शमयति पित्तं माधुर्य्यशैत्यतः। घृतं तुल्यगुणं दोषं संस्कारात् तु जयेत् कफम् ॥" न च वाच्यं—रूक्षोष्णचित्रकादिसंस्कारात् रूक्षोष्णं सर्पिर्भूतं, ततश्च सर्पिषः स्नेहशैत्ये तद्विरुद्धे कथं स्थितः, यतः, सर्पिःसम्बद्ध-चित्रकावयवानुगतं हि रूक्षोष्णत्वं, सर्पिर्गते च स्नेहशैत्ये इति भिन्नाश्रयत्वान्न विरोधः, इदमेव च सर्पिषः संस्कारानुवर्त्तनं, यद्—गुण-विरुद्धस्यापि तस्यानुपघातेन धारणम्। संस्कारकचित्रकादिगुणवहनेऽपि सर्पिषः शैत्यादयः कदाचिदभिभूयन्ते संस्कारक-

घृतं पित्तानिलहरं रसशुक्रौजसां हितम्।
निर्व्वापणं मृदुकरं स्वरवर्णप्रसादनम्॥

मपि संस्कारकद्रव्यगुणानामावहनं स्वगुणानुपघातेन यत् तत् संस्कारानुवर्त्तनम्। एवमेव तैलादीनामल्पतरत्वेन संस्कारानुवर्त्तनं बोध्यम्। चन्दनोशीरादिशीतद्रव्यसंस्कृतन्तु तैलं स्वभावादुष्णमपि शीतं भवति। बाहुल्यात् तैलञ्च दाहं शमयति। "विरुद्धगुणसमवाये भूयसाल्पमवजीयते" इति तत्रोष्णत्वस्य संस्कारद्रव्यशैत्येनावर्जितत्वात् तत्तैलेन दाहप्रशमनमिति। ये तु स्वगुणपरित्यागपूर्व्वकसंस्कारकद्रव्यगुणानामावहनं संस्कारानुवर्त्तनं तच्च सर्व्वथा तैलेऽपि वर्त्तते, न तु सर्पिषि; यतः "स्नेहाद्वातं शमयति पित्तं माधुर्य्यशैत्यतः" इत्युक्तम्, तेन क्वचित् कस्यचिद्गुणस्यानुपघातेनापि संस्कारद्रव्यगुणानामावहनमित्याहुः। तन्न। तिलतैलगव्यपुराणघृतादिविशेषाणाम् अविशेषापत्तेः संस्कारेण। एतद्दोषपरिहारार्थमन्ये तु व्याचक्षते—निखिलस्वगुणानुपघातेन स्वगुणविरोधिसंस्कारद्रव्यगुणानामावहनं संस्कारानुवर्त्तनम्। तेन क्वचित् शैत्यमाधुर्य्यादिगुणोपघातेन संस्कारद्रव्यगुणावहनेऽपि स्नेहनगुणस्य कुत्रापि नोपघातः स्यादिति निखिलस्वगुणानुपघातो वर्त्तते इति यत् तदपि न सम्यक्। यदि हि तत्र घृतस्य शैत्यादिगुणाभिभवः संस्कारद्रव्यगुणैः स्नेहनगुणमात्रञ्चानुवर्त्तते, तत् कथं तैस्तैर्द्रव्यैर्घृतसाधनमुपदिश्यते न तैलसाधनम्, तैलं हि बलार्थं स्नेहने चाग्रमुष्णञ्च साधितुमुपादिश्यतां तुल्यत्वात्, किमर्थं कफहरणाय तैलं पित्तशमनाय सर्पिरुपादिश्यते? पित्तं माधुर्य्यशैत्यत इति वचनासङ्गतिश्च स्यादिति।

स्नेहानां पृथग्गुणानाह—घृतं पित्तानिलहरमित्यादि। ओजः सर्व्वधातुसारो बलाधिष्ठानमिति। निर्व्वापणमग्निदाहज्वालाप्रशान्तिकरम्। मृदुकरं कोमलत्वकरम्।

गुणैरुष्णादिभिर्न पुनः स्नेहगुणः, तस्य स्नेहेषु सर्व्वात्मना व्यवस्थितस्य प्रबलत्वात्, अत एव सर्पिरादयः स्नेह-प्रधानत्वात् स्नेहा इत्युच्यन्ते। अन्ये तु संस्कारानुवर्त्तनं स्वगुणोपघातेन संस्कारकगुणवहनं प्रवर्त्तते, एतच्च तैले तिष्ठति न सर्पिषीति वदन्ति, सर्पिषि तु संस्कारानुवर्त्तनमुक्तं यत्, तत्सर्पिषि सर्व्वथा कस्यचिद् गुणस्य संस्कारगुणेन स्वगुणोपघातात् भवति; तथा हि दाहप्रशमनार्थं ज्वरे चन्दनादिशीतद्रव्यसाधिततैलमुक्तं, यतः, शीतेन साधिततैलमुष्णमपि स्वभावात् शीतमेव भवतीति स्नेहगुणानभिधत्ते। घृतमित्यादि। निर्व्वापणं दाहप्रशमनम्।

मारुतघ्नं न च श्लेष्म-वर्द्धनं बलवर्द्धनम्।
त्वच्यमुष्णं स्थिरकरं तैलं योनिविशोधनम्॥
विद्धभग्नाहतभ्रष्ट-योनिकर्णशिरोरुजि।
पौरुषोपचये स्नेहे व्यायामे चेष्यते वसा॥
बलशुक्ररसश्लेष्म-मेदोमज्जविवर्द्धनः।
मज्जा विशेषतोऽस्थ्नाञ्च बलकृत् स्नेहने हितः॥ ६॥
सर्पिः शरदि पातव्यं वसा मज्जा च माधवे।
तैलं प्रावृषि नात्युष्ण-शीते स्नेहं पिबेन्नरः॥ ७॥

तैलगुणमाह—मारुतघ्नमित्यादि। स्थिरकरं शरीरस्थैर्य्यकरम्। तैलमिति तिलतैलादि सर्व्वं स्थावरयोनिकम्। तत्र तिलतैलं विशिष्टगुणमिति बोध्यम्।

वसागुणानाह—विद्धेत्यादि। विद्धे च भग्ने चाहते च भ्रष्टयोनौ च कर्णरुजि च शिरोरुजि च पौरुषोपचये शुक्रोपचये स्नेहे शरीरस्नेहकरणे व्यायामे कृते वसा जन्तुस्नेहो हृदयस्थमेद इष्यते।

मज्जगुणानाह—बलेत्यादि। मज्जा बलवर्द्धनश्च शुक्रवर्द्धनश्च रसवर्द्धनश्च श्लेष्मवर्द्धनश्च मेदोवर्द्धनश्च मज्जवर्द्धनश्च विशेषतोऽस्थ्नां बलकृच्च शरीरस्नेहने हितश्च भवति॥ ६॥

अन्नपानादिके तैलादीनां प्रभेदगुणा विस्तरेण वक्ष्यन्ते—अथ कालानुपाने के कस्येति। कस्य स्नेहस्य कः कालः किमनुपानञ्च इत्येतयोरुत्तरमाह—सर्पिरित्यादि। शरदि काले सर्पिः पातव्यम्। माधवे वसन्ते ऋतुवचन-

मारुतघ्नमित्यादि तैलगुणः, स्थिरकरमङ्गस्थैर्य्यकरम्। विद्धेत्यादि वसागुणः, पौरुषोपचयः शुक्रोपचयः, स्नेहे शरीरस्नेहने कर्त्तव्ये। बलशुक्रेत्यादि मज्जगुणः॥ ६॥

चक्रपाणिः—सर्पिरादिपानकालमाह—सर्पिः शरदीत्यादि। माधवे वैशाखे, प्रावृडाषाढ़-श्रावणौ, यदुक्तं—"प्रावृट् शुक्रनभौ ज्ञेयौ" इति। शरदि बहुपित्तत्वेन पित्तविरुद्धं घृतमेव यौगिकं, माधवस्तैलादिः। वसामज्ज्ञोस्तु नातिशीतोष्णत्वात् साधारणोष्णयोस्तयोरनुपाने शीतत्वेन वोष्णत्वेन वा निर्देशो न कृतः "यथासत्त्वन्तु शैत्योष्णे वसामज्ज्ञे विनिर्दिशेत्" इति तु वचनेन शैत्योष्णाभिधानं सामान्येन तैलसर्पिषोरुष्णशैत्याभिधानान्न प्रकर्षप्राप्तशैत्योष्णत्वज्ञापकं,।

वातपित्ताधिके रात्रावुष्णे चापि पिबेन्नरः ।
श्लेष्माधिके दिवा शीते पिबेच्चामलभास्करे ॥ *

प्रकरणात् न तु वैशाखमात्र माधवशब्दोपादानेन चैत्रवैशाखात्मकवसन्तो ग्राह्यः, न तु संशोधनाभिप्रायेणोक्तः फाल्गुनचैत्रात्मको वसन्तोऽत्र गृह्यते। एतेन शरदपि आश्विनकार्त्तिकात्मकः, न तु कार्त्तिकाग्रहायणात्मकः। एवं तैलं प्रावृषीति। श्रावणभाद्रात्मिकायां प्रावृषि न त्वाषाढ़श्रावणात्मिकायाम् इति ख्यापितम्। हिमशिशिरग्रीष्मे पुनरत्युष्णशीते समये यथार्ह घृतादि-स्नेहं न पिबेत् ॥ ७ ॥

गङ्गाधरः तत्रापवादमाह—वातपित्तेत्यादि। आत्ययिके व्याधावुपस्थिते तूष्णे ग्रीष्मे रात्रौ वातपित्ताधिके वाताधिके पित्ताधिके च स्नेहं पिबेत्। वात-श्लेष्माधिके तु ग्रीष्मे स्नेहपानं दिनेऽपि न प्रतिषिध्यते रात्रौ प्रतिषिध्यते। श्लेष्माधिके व्याधौ शीते हिमे शिशिरे चामलभास्करे मध्याह्ने दिवा स्नेहं नरः पिबेत्। पित्ते च पिबेत्। वाताधिके प्रतिषिध्यते।

अत एवोक्तं—"तैलवसामज्जसर्पिषान्तु यथापूर्वं श्रेष्ठत्वं वातविकारेषु भवति, यथोत्तरं पित्त-विकारेषु" इति। तत्र उत्तरस्य सर्पिषः शैत्यात् पित्तहरत्वम्, तैलस्य तूष्णत्वात् वातश्लेष्म-हरत्वम्, वसामज्ज्ञोस्तु साधारणत्वेन मध्यगतत्वमिति स्थितम्। एवं वसामज्ज्ञोः साधारण-त्वेन तथा बल्यत्वधातुवृद्धिकरत्वाभ्यामनतिशीतोष्णे तथा बलक्षयधातुक्षयासन्ने माधवे प्रायः प्रयोगो युक्तः, चैत्रस्तु मुख्यसाधारणगुणोऽपि प्रभूतश्लेष्मतया न स्नेह-विषय इत्यनुक्तः।

सामान्येन स्नेहोपयोगेऽप्रशस्तं कालमाह—नात्युष्णेत्यादि। नात्युष्णे ग्रीष्मे, नातिशीते हेमन्ते शिशिरे च तथा वर्षजनितशैत्ये वर्षाकाले; अयञ्चानात्ययिकविकारे सति कालनियमो ज्ञेयः, अन्ये उष्णे शीते च काले स्नेहोपदेशात् ॥ ७ ॥

चक्रपाणिः कालविशेषे दोषविशेषे च पानक्रमं दर्शयति—वातेत्यादिना। वातश्च पित्तञ्च वातपित्तं तदधिको वातपित्ताधिकः; रात्राविति सायम्, उष्णे ग्रीष्मे, श्लेष्माधिकग्रहणमत्यन्त-शीतविकारगृहीतपुरुषोपलक्षणार्थं, तेन, वातश्लेष्माधिकः श्लेष्माधिकश्च गृह्यते, अत एव सुश्रुतेऽप्युक्तं—"वातपित्ताधिको रात्रौ वातश्लेष्माधिको दिवा" इति। केवलवाताधिकस्य तथा पित्ताधिकस्य श्लेष्माधिकस्य साधारणे च शरदादौ काले उत्सर्गसिद्ध एव पानकालो वक्ष्यमाणो भवति। वक्ष्यति हि—"पिबेत् संशमनस्नेहमन्नकाले" इत्यादि। अन्ये तु ब्रुवते—वाताधिक-ग्रहणेन केवलवातस्यापि ग्रहणं श्लेष्माधिकव्यपदेशाच्च वातश्लेष्मपित्तश्लेष्मणोरपि ग्रहणमिति। शीते हेमन्तादौ, अमलः प्रबलरश्मिर्यस्मिन् दिनस्य भागे भास्करः सोऽमलभास्करो मध्याह्न इति यावत्।

* "श्लेष्माधिको दिवा शीते पिबेच्चामलभास्करे" इति चक्रसम्मतः पाठः।

अत्युष्णे वा दिवा पीतो वातपित्ताधिकेन च।
मूर्च्छां पिपासामुन्मादं कामलां वा समीरयेत् ॥
शीते रात्रौ पिबन् स्नेहं नरः श्लेष्माधिकोऽपि वा।
आनाहमरुचिं शूलं पाण्डुतां वा समृच्छति ॥ ८ ॥
जलमुष्णं घृते पेयं यूषस्तैलेऽनु शस्यते।
वसामज्ज्ञोस्तु मण्डः स्यात् सर्व्वेषूष्णमथाम्बु वा ॥ ९ ॥
ओदनश्च विलेपी च रसो मांसं पयो दधि।
यवागूः सूपशाकौ च यूषः काम्बलिकः खडः ॥

तत्र दोषानाह—अत्युष्णेत्यादि। अत्युष्णे ग्रीष्मे वातपित्ताधिकेन वाताधिकेन पित्ताधिकेन वा नरेण दिवा पीतः स्नेहो मूर्च्छादीन् समीरयेत्।
शीतेत्यादि। शीते हिमऋतौ शिशिरे वा श्लेष्माधिको नरो रात्रौ स्नेहं पिबन्नानाहादीन् समृच्छति। इति स्नेहपाने काल उक्तः ॥ ८ ॥

गङ्गाधरः—अथानुपानं किं कस्येत्यस्योत्तरमाह जलमुष्णमित्यादि। घृते पीतेऽनुपेयमुष्णं जलं शस्यते। तैले पीतेऽनुपेयो यूषः शस्यते। व्यवहितञ्चेति सूत्रेण व्यवधानेनानुशब्दप्रयोगश्छान्दसः। वसामज्ज्ञोस्तु पीतयोरनुपेयो मण्डः स्यात्। अथवा सर्व्वेषु घृततैलवसामज्जसु पीतेष्वनुपेयमुष्णमम्बु शस्यते। भल्लातकतौवरस्नेहे शीतमेव जलं पिबेदिति वक्तव्यं तन्त्रान्तरसंवादात्। अनुपानमानं यथाह स्नेहपरिपाकयोग्यं विद्यते ॥ ९ ॥

गङ्गाधरः—अथ स्नेहस्य कति विचारणा इत्यस्योत्तरमाह ओदनश्चेत्यादि। ओदनादयोऽक्षितर्पणान्ताश्चतुर्व्विंशतिः स्नेहस्य प्रविचारणाः

उक्तकालनियमविपर्य्यये दोषमाह अत्युष्णे वेत्यादि। अत्युष्णे काले दिवा पीतः स्नेहः श्लैष्मिकस्यापि यथोक्तविकारकरः, तथा वातपित्ताधिकेन पीतः शीतकालेऽपि यथोक्तविकारकरः; एवं निशापानेऽपि वाक्यार्थः, परं निषिद्धस्य कालस्य दोषस्य च मेलकेऽत्यर्थं दोषविकारप्रकर्षोपकर्षौ तर्कणीयौ ॥ ८ ॥

चक्रपाणिः—अनुपानमाह जलमित्यादि। तैलेऽम्बिवत्यनुपाने, अनुपानपरिमाणन्तु सम्यग्भेषजपाकार्थं क्रियमाणं भेषजाऽवैकारिकपाकेनैवोन्नेयं वृद्धवैद्यव्यवहाराच्च ॥ ९ ॥

चक्रपाणिः—विचारणाः संख्यया स्वरूपेण चैकग्रन्थेनाह—ओदनश्चेत्यादि। विलेपी विरलद्रवा यवागूर्बहुसिक्थसमन्विता ज्ञेया; सशाकपल्लवेन कृतो यूषः खडः, काम्बलिको दधिलवणतिलादि-

सक्तवस्तिलपिष्टञ्च मद्यं लेहास्तथैव च ।
भक्ष्यमभ्यञ्जनं वस्तिस्तथा चोत्तरवस्तयः ॥
गण्डूषः कर्णतैलञ्च नस्तःकर्म्माक्षितर्पणम् । *
चतुर्विंशतिरित्येताः स्नेहस्य प्रविचारणाः ॥ १० ॥

भवन्ति । तत्रोदनोऽन्नं पञ्चगुणजलसाध्यम् । विलेपी दरदलितक्षुद्रतण्डुलानां चतुर्गुणजले साधनेन विरलद्रवा बहुसिक्थसमन्विता यवागूः । रसो मांसरसः । मांसं यथावत् पक्वं मांसम् । पयो दधि च प्रसिद्धम् । यवागूः पेया दरदलितक्षुद्रतण्डुलानां षड्गुणजले साधनेन सिक्थसमन्विता द्रवरूपा । सूपशाकौ चेति सूपो विदलकृतश्चतुर्दशगुणतोयेऽष्टादशगुणतोये वा पक्त्वा पादशिष्टो द्रवः । शाकः फलादिषड्विधः । यूषः काम्बलिकः खड़श्च । विदलकृतश्चतुर्दशगुणतोयेऽष्टादशगुणतोये वा पक्त्वार्द्धशिष्टो द्रवो यूषः । काम्बलिकश्च यूषः—"तक्रं कपित्थं चाङ्गेरी मरिचाजाजिचित्रकैः । सुपक्वः खड़यूषोऽयं यूषः काम्बलिकोऽपरः । दध्यम्ललवणस्नेह-तिलमाषसमन्वितः ॥" इति ।

सक्तव इत्यादि । सक्तवो यवादिसक्तवः । तिलपिष्टं तिलशष्कुल्यादिकं पिष्टकम् । मद्यं प्रसिद्धम् । लेहाः शर्करादिना पाकात् कृता उत्कारिकाः । भक्ष्यं घृतपूरादिकम् । तथाभ्यञ्जनं गात्रे म्रक्षणम् । वस्तिरनुवासनविधिना । उत्तरवस्तयो योनिशिश्नपथेन वस्तिना दानम् ।

गण्डूष इत्यादि । गण्डूषोऽसञ्चार्य्यस्नेहमात्राया मुखे धारणम् । कर्णतैलं कर्णपूरणम् । नस्तःकर्म्म पञ्चविधम् । अक्षितर्पणं नेत्राभ्यन्तरे दानेनाक्षितृप्तिकरणम् । प्रविचारणा प्रकर्षेण विशेषात् चर्य्यते भक्षणपानलेहाभ्यञ्जनादिरूपेण उपसेव्यते यत् तत् प्रवर्त्तना । ओदनादयश्चतुर्व्विंशतिर्भवन्ति । स्नेहयुक्ता एते भक्ष्यन्ते इत्येवमादय आचरणम् । न तु सम्यगेव जाठराग्निसम्बन्धेन व्याप्रियन्ते । अभ्यङ्गादीनि हि भ्राजकपित्तोष्मणा पच्यन्ते । तस्मात् प्रविचारणासंज्ञा कृता न सञ्चारणासंज्ञेति । ओदनादिनिर्देशेऽधिकगणनाऽधवच्छेदार्थं पुनश्चतुर्व्विंशतिरित्युक्तम् ॥ १० ॥

कृत इ्यवम्लः, एतयोरुदाहरणं यथा—"तक्रं कपित्थचाङ्गेरी-मरिचाजाजिचित्रकैः । सुपक्वः खड़यूषोऽयमयं काम्बलिको मतः । दध्यम्लो लवणस्नेह-तिलमाषान्वितः स्मृतः" ॥ इति । लेहः शर्करादीनां पाकात् कृतः, लिह्यत इति लेहः । प्रविचार्य्यते ऽवचार्य्यते ऽनुकल्पेनोपयुज्यते ऽनयेति प्रविचारणा

* नस्तःकर्णाक्षितर्पणमिति चक्रपाणिः ।

अच्छपेयस्तु यः स्नेहो न तामाहुर्विचारणाम्।
स्नेहस्य स भिषग्दृष्टः कल्पः प्राथमकल्पिकः॥ ११॥
रसैश्चोपहितः स्नेहः समासव्यासयोगिभिः।
षड्भिस्त्रिषष्टिधा सङ्ख्यां प्राप्नोत्येकश्च केवलः॥
एवमेषा चतुःषष्टिः स्नेहानां प्रविचारणा।
ओकर्त्तुव्याधिपुरुषान् प्रयोज्या जानता भवेत्॥ १२॥

गङ्गाधरः—अथ केवलस्नेहपानमपि विचारणा भवतीत्याशङ्क्याह अच्छपेयस्त्वित्यादि। अच्छ एवानाविलतया पेयस्तु यः स्नेहस्तां विचारणां नाहुः। कस्मात्? स्नेहस्येत्यादि। यतः स्नेहस्य स खल्वच्छपेयकल्पः प्राथमकल्पिको भिषग्दृष्टः। तदनन्तरं प्रकृतिदेहदोषादीनवेक्ष्य तथा पानाशक्तौ च ओदनादिविचारणा कर्त्तव्या॥ ११॥

गङ्गाधरः—अथ "काश्च विचारणाः" इति प्रश्नस्योत्तरमाह रसैरित्यादि। ओदनादिविचारणासु च विचारणाः सर्पिरादि स्नेहो रसैर्मधुरादिभिः षड्भिः समासव्यासयोगिभिरुपहितो उपाश्रितमान् सन् त्रिषष्टिधासङ्ख्यां प्राप्नोति। केवलोऽनुपहितश्चैक इत्येवमेषा स्नेहानां चतुःषष्टिः प्रविचारणा ओकर्त्तुव्याधिपुरुषान् जानता भिषजा प्रयोज्या भवेत्। यद्यपि स्वच्छपेयो न विचारणा तथापि ओदनादयः, ओदनादयश्च स्नेह-विचारणायां स्नेहयुक्ता एव बोद्धव्याः। अभ्यञ्जनादयस्तु यद्यपि शुद्धस्नेहसम्पाद्यास्तथापि जठराग्निसम्बन्धेन व्याप्रियन्त इति तन्त्रे विचारणाशब्देनोच्यन्ते॥ १०॥

चक्रपाणिः—केवलस्नेहपानन्तु स्नेहने प्राकरणिकत्वेन न विचारणासंज्ञयोच्यते, एतदेवाह अच्छपेय इत्यादि। अच्छश्च पेयश्च अच्छपेयः, ओदनाद्यसम्बन्धे सति पेय इत्यर्थः, न तामाहुर्विचारणामिति वचनेन वैद्यपरम्परासिद्धोऽयं व्यवहार इति दर्शयति। भिषग्भिर्दृष्टो भिषग्दृष्टः। प्रथमे श्रेष्ठे कल्पे पक्षे भवतीति प्राथमकल्पिकः श्रेष्ठ इत्यर्थः॥ ११॥

चक्रपाणिः—प्रकारान्तरेण विचारणाभेदमाह रसैश्चेत्यादि। समासो रसानामन्योन्यमेलकः, व्यासोऽमेलकः, समासव्यासवद्भिः षड्भीः रसैरोदनादिगतैरुपहितो युक्तः सन् स्नेहस्त्रिषष्टिसंख्यां प्राप्नोति; एकश्च केवल इत्यच्छपेयं वर्ज्जयित्वाऽभ्यञ्जनादि-प्रयोज्यः; त्रिषष्टिरसभेद आत्रेयभद्रकाप्यीये "स्वाद्वम्लादिभिर्योगम्" इत्यादिवाक्ये वक्ष्यमाणो बोद्धव्यः; एवं स्नेहानां रसयुक्तानां चतुःषष्टिः प्रविचारणाः स्युः, चतुःषष्टिरिति स्नेहानामित्यनेन सम्बध्यते, तेन, प्रविचारणेत्येकवचनमुपपन्नं स्यात्। न सर्व्वविचारणा सर्व्वत्र कर्त्तव्या, किन्तु, सात्म्यर्तुव्याधिदोषपुरुषान् परीक्ष्य या यत्र युज्यते तत्र सा कर्त्तव्येत्याह ओकर्त्त्वित्यादि। ओकोऽभ्यासः। पुरुषग्रहणेन कश्चित् देशोऽयं पुरुषो वर्त्तत इति परीक्षया देशोऽप्यवरुद्धो बोद्धव्यः, वयोबलप्रभृतयश्च बोद्धव्याः॥१२॥

प्रथमकल्पविचारणा भवतीति चतुःषष्टिरुक्ता। रसानां षण्णां समासव्यासयोगेन त्रिषष्टिविधत्वमात्रेयभद्रकाप्यीये वक्ष्यते। सुश्रुते च रसभेदविकल्पे प्रोक्तः। तद्यथा—"यथाक्रमं प्रवृत्तानां द्विकेषु मधुरो रसः। पञ्चानुक्रमते योगानम्लश्चतुर एव च॥ त्रींश्चानुगच्छति रसो लवणः कटुको द्वयम्। तिक्तः कषायमन्वेति ते द्विका दश पञ्च च॥" तद्यथा—मधुराम्लो मधुरलवणो मधुरकटुको मधुरतिक्तो मधुरकषायः। इत्येते पञ्चानुक्रान्ता मधुरेण। अम्ललवणोऽम्लकटुकोऽम्लतिक्तोऽम्लकषाय इत्येते चत्वारोऽनुक्रान्ता अम्लेन। लवणकटुको लवणतिक्तो लवणकषाय इत्येते त्रयोऽनुक्रान्ता लवणेन। कटुतिक्तः कटुकषाय इति द्वावेतावनुक्रान्तौ कटुकेन। तिक्तकषाय इत्येकएवानुक्रान्तस्तिक्तेन। एते पञ्चदश द्विकसंयोगा व्याख्याताः।

त्रिकं वक्ष्यामः। "आदौ प्रयुज्यमानस्तु मधुरो दश गच्छति। षडम्लो लवणस्तस्मादद्धन्त्विकं रसः कटुः॥" तद्यथा—मधुराम्ललवणो मधुराम्लकटुको मधुराम्लतिक्तो मधुराम्लकषायो मधुरलवणकटुको मधुरलवणतिक्तो मधुरलवणकषायो मधुरकटुतिक्तो मधुरकटुकषायः मधुरतिक्तकषाय एवमेते त्रिकसंयोगानां दशानामादौ मधुरः प्रयुज्यते।

अम्ललवणकटुकोऽम्ललवणतिक्तोऽम्ललवणकषायोऽम्लकटुतिक्तोऽम्लकटुकषायोऽम्लतिक्तकषाय एवमेषां षण्णामादावम्लः प्रयुज्यते।

लवणकटुतिक्तो लवणकटुकषायो लवणतिक्तकषाय एवमेषां त्रयाणामादौ लवणः प्रयुज्यते।

कटुतिक्तकषाय एवमेकस्यादौ कटुकः प्रयुज्यते। एवमेषा त्रिकसंयोगविंशतिर्व्याख्याता।

चतुष्कान वक्ष्यामः। "चतुष्करससंयोगान् मधुरो दश गच्छति। चतुरोऽम्लस्तु गच्छेत्तु लवणस्त्वेकमेव तु॥" तद्यथा—

मधुराम्ललवणकटुको मधुराम्ललवणतिक्तो मधुराम्ललवणकषायो मधुराम्लकटुतिक्तो मधुराम्लकटुकषायो मधुराम्लतिक्तकषायो मधुरलवणकटुतिक्तो मधुरलवणकटुकषायो मधुरलवणतिक्तकषायो मधुरकटुकतिक्तकषायः, एवमेषां चतुष्कसंयोगानां दशानामादौ मधुरः प्रयुज्यते।

अम्ललवणकटुतिक्तोऽम्ललवणकटुकषायोऽम्ललवणतिक्तकषायोऽम्लकटुतिक्तकषायः, एवमेषां चतुर्णां चतुष्कसंयोगानामादावम्लः प्रयुज्यते।

लवणकटुतिक्तकषाय एवमेकस्यादौ लवणः प्रयुज्यते।

**अहोरात्रमहः कृत्स्नमर्द्धाहश्च प्रतीक्ष्यते।**
**प्रधाना मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति।**
**इति तिस्रः समुद्दिष्टा मात्राः स्नेहस्य मानतः॥ १३॥**

एवमेते चतुष्करससंयोगाः पञ्चदश व्याख्याताः।

पञ्चकान् वक्ष्यामः। "पञ्चकान् पञ्च मधुर एकमम्लस्तु गच्छति।" तद् यथा—मधुराम्ललवणकटुतिक्तो मधुराम्ललवणकटुकषायो मधुराम्ललवणतिक्तकषायो मधुराम्लकटुतिक्तकषायो मधुरलवणकटुतिक्तकषायः। एवमेषां पञ्चानां पञ्चकरससंयोगानामादौ मधुरः प्रयुज्यते।

अम्ललवणकटुतिक्तकषाय एवमेकस्यादावम्लः प्रयुज्यते। एवमेते षट् पञ्चकरससंयोगा व्याख्याताः।

षट्कमेकं वक्ष्यामः। "षट्क एकः पृथक् षट् च त्रिषष्टिः स्यू रसा इति।" मधुराम्ललवणकटुतिक्तकषाय एवमेकः षट्को रसः। पृथक् च षट् मधुरश्चाम्लश्च लवणश्च कटुकश्च तिक्तश्च कषायश्चेति। एवं समासव्यासप्रयोगात् त्रिषष्टिर्भवन्ति रसा इति॥ १२॥

<u>गङ्गाधरः</u>—अथ स्नेहस्य कति मात्राः कथंमाना इति प्रश्नद्वयस्योत्तरमाह—अहोरात्रमित्यादि। निर्द्देशादेव त्रिधा मात्रा स्नेहस्य प्रधाना मध्यमा ह्रस्वा च। क्रमेणाहोरात्रं या जरां प्रति प्रतीक्षते सा प्रधाना। या कृत्स्नमहर्जरां प्रति प्रतीक्षते सा मध्यमा मात्रा। या चार्द्धाहं जरां प्रति प्रतीक्षते सा ह्रस्वा मात्रा भवतीति। मात्राणामन्यतमया मात्रया चतुःषष्टिप्रविचारणानामन्यतमया प्रविचारणया खल्वोदनादिप्रविचारणान्यतमया प्रविचारणया स्नेहस्तेन भिषजा स्नेहः प्रयोक्तव्यो य ओकादीन् जानाति। ओकोऽभ्यास एतस्य पुंसोऽस्य स्नेहस्याभ्यासोऽस्ति न चापरस्येत्येवं यो भिषक् जानाति। ऋतुश्च यो जानाति। यस्याभ्यस्तस्य स्नेहस्य यस्मिन् ऋतौ विधानमविधानञ्च जानाति यः। तत्र व्याधिञ्च यो जानाति। वातजो वा पित्तजः कफजोऽन्यथा वेति, तत्र योग्यं स्नेहं तस्य कालं ज्ञात्वा प्रयोजयेत्, तत्रापि पुरुषं यथा तथा जानीयात्।

<u>चक्रपाणिः</u>—मात्रायाः संख्यां प्रमाणञ्चाह—अहोरात्रमित्यादि। अहोरात्रशब्दोऽष्टप्रहरोपलक्षणः, एवमहःशब्दार्द्धाहशब्दौ चतुःप्रहरद्विप्रहरोपलक्षणौ, तेन प्रहरावतीतेऽप्यहनि पीता मात्रा यथोक्तप्रहरकालमासाद्य दिनान्तरे रात्रौ वा जीर्य्यमाणा मन्तव्या। अन्ये त्वहोरात्रशब्देन व्युत्पत्त्या कृत्स्ना रात्रिरहोरात्रेणैवोच्यते, कृत्स्नार्द्धाहौ तु प्रहरोपलक्षणाविति वर्णयन्ति, अत्र यद्यप्यहोरात्र-

तासां प्रयोगान् वक्ष्यामि पुरुषं पुरुषं प्रति ।
प्रभूतस्नेहनित्या ये क्षुत्पिपासासहा नराः ॥
पावकश्चोत्तमबलो येषां ये चोत्तमा बले ।
गुल्मिनः सर्पदष्टाश्च विसर्पोपहताश्च ये ॥
उन्मत्ताः कृच्छ्रमूत्राश्च गाढवर्च्चस एव च ।
पिबेयुरुत्तमां मात्रां तस्याः पाने गुणान् शृणु ॥
विकारान् शमयत्येषा शीघ्रं सम्यक्प्रयोजिता ।
दोषानुकर्षिणी मात्रा सर्व्वमार्गानुसारिणी ।
बल्या पुनर्नवकरी शरीरेन्द्रियचेतसाम् ॥ १४ ॥
अरुष्करस्फोटपिडका-कण्डूपामाभिरर्दिताः ।
कुष्ठिनश्च प्रमीढाश्च वातशोणितिकाश्च ये ॥

पुरुषोऽयं कस्मिन देशे जातो वसति वा किंप्रकृतिकः किंसारः किंवयाः किमग्निः किंबलः किंकोष्ठ इत्येवंप्रकारेण यो जानाति पुरुषमिति ।

अथैषां मात्राणां का मात्रा केषु प्रयोक्तव्या इति प्रश्नस्योत्तरमाह—इति तिस्र इत्यादि । प्रभूतस्नेहनित्या नित्यं प्रचुरस्नेहसात्म्या ये ते तावत् स्नेहमुपसेवितुं प्रभवन्ति । अतोऽन्ये च ये क्षुत्पिपासासहाः स्युस्तेऽपि प्रभवन्ति । तेभ्योऽन्येषां येषां पावको जाठराग्निरुत्तमबलस्तेऽपि चोत्तमां मात्रां पातुं प्रभवन्ति । तेभ्योऽन्ये च ये बले भवन्त्युत्तमास्तेऽपि प्रभवन्ति । गुल्मिप्रभृतयश्च व्याधिबलात् प्रभवन्तीत्यत एते स्नेहस्योत्तमां मात्रां पिबेयुः । तस्या उत्तममात्रायाः पाने गुणान शृणु । तद् यथा—विकारानित्यादि शरीरेन्द्रियचेतसामित्यन्तेन ॥ १३।१४ ॥

गङ्गाधरः—अथ मध्यममात्राहं पुरुषमाह—अरुष्केत्यादि । अरुष्कोऽरुंषिका

परिणामिनी मात्रा क्रियते, तदा तद्दहराहारो न कर्त्तव्यः, अत एवैतत्पानं पुरुषविशेषविषयकथने वक्ष "क्षुत्पिपासासहा नराः" इति । प्रभूतस्नेहनित्याः प्रभूतस्नेहसात्म्याः, सम्यक्प्रयोजितेतिवचनेन महाव्यापत्तिकत्वमस्याः सूचयति । सर्व्वमार्गाः कोष्ठसान्धममर्माशाखाः, पुनर्नवकरी निःशेषदोषहरत्वेन ॥ १३।१४ ॥

चक्रपाणिः—अरुष्केत्यादि मध्यममात्रागुणः, अरुष्काऽरुंषिका । कोष्ठमार्ग इति कोष्ठमार्ग-

नातिबह्वाशिनश्चैव मृदुकोष्ठास्तथैव च।
पिबेयुर्मध्यमां मात्रां मध्यमाश्चापि ये बले ॥
मात्रैषा मन्दविभ्रंशा न चातिबलहारिणी।
सुखेन च स्नेहयति शोधनार्थे च युज्यते ॥ १५ ॥
ये तु वृद्धाश्च बालाश्च सुकुमाराः सुखोचिताः।
रिक्तकोष्ठत्वमहितं येषां मन्दाग्नयश्च ये ॥
ज्वरातीसारकासाश्च येषां चिरसमुत्थिताः।
स्नेहमात्रां पिबेयुस्ते ह्रस्वां ये चावरा बले ॥
परिहारे सुखा चैषा मात्रा स्नेहनबृंहणी।
वृष्या बल्या निराबाधा चिरञ्चाप्यनुवर्त्तते ॥ १६ ॥
वातपित्तप्रकृतयो वातपित्तविकारिणः।
चक्षुःकामाः क्षतक्षीणा वृद्धा बालास्तथाबलाः ॥

अरुष्कादिव्याधिस्वभावात् तदार्त्ताः कुष्ठिप्रभृतयश्च स्नेहस्य मध्यमां मात्रां पिबेयुः। नातिबह्वाशिनो नात्यल्पाशिनश्च ये मध्यमाहारा इति। अस्या गुणानाह—मात्रैषेत्यादि। मन्दविभ्रंशा अल्पक्लेशकरी मात्रा ॥ १५ ॥

गङ्गाधरः—अथ ह्रस्वमात्रायोग्यं पुरुषमाह—ये त्वित्यादि। वृद्धबालादयः स्नेहमात्रां ह्रस्वां पिबेयुः। सुकुमारा मृदुस्वभावाः। सुखोचिताः सुखजनकभावाभ्यासवन्तः। येषां रिक्तकोष्ठत्वं शून्योदरत्वमहितं शून्ये सति कोष्ठे कष्टं स्यात्। येषां ज्वरादयो रोगाश्चिरोत्थितास्ते। ये चावराः कनिष्ठा बले दुर्ब्बला इति।

ह्रस्वमात्राया गुणानाह—परिहार इत्यादि। एषा ह्रस्वा मात्रा खल्वल्पपरिहारविषयत्वात् सुखा। स्नेहनी च बृंहणी च। निराबाधा व्यापत्तिरहिता, चिरञ्च कालमेषा मात्रानुवर्त्तते, न शीघ्रं निवर्त्तते ॥ १६ ॥

गङ्गाधरः—अथ "कश्च केभ्यो हितः स्नेहः" इत्यनेन पृष्टः कः स्नेहः केभ्यो

स्नेहकरणे, एतेन उत्तममात्रा संशमने एव परं, न तु शोधनाङ्गस्नेहे कर्त्तव्ये इति दर्शयति। ये त्वित्यादि ह्रस्वमात्रागुणः, परिहारे सुखेत्यल्पमात्रपरिहारत्वेन ॥ १५।१६ ॥

चक्रपाणिः—यः स्नेहो यत्र कार्य्यस्तमाह—वातपित्तेत्यादि। वातपित्तविकारग्रहणेनैव वातपित्त-

आयुःप्रकर्षकामाश्च बलवर्णस्वरार्थिनः ।
पुष्टिकामाः प्रजाकामाः सौकुमार्य्यार्थिनश्च ये ॥
दीप्त्योजःस्मृतिमेधाग्नि-बुद्धीन्द्रियबलार्थिनः ।
पिबेयुः सर्पिरार्त्ताश्च दाहशस्त्रविषाग्निभिः ॥ १७ ॥
प्रवृद्धश्लेष्ममेदस्काश्चलस्थूलगलोदराः ।
वातव्याधिभिराविष्टा वातप्रकृतयश्च ये ॥
बलं तनुत्वं लघुतां दृढ़तां स्थिरगात्रताम् ।
स्निग्धश्लक्ष्णतनुत्वक्तां ये च काङ्क्षन्ति देहिनः ॥
क्रिमिकोष्ठाः क्रूरकोष्ठास्तथा नाड़ीभिरर्द्दिताः ।
पिबेयुः शीतले काले तैलं तैलोचिताश्च ये ॥ १८ ॥

जनेभ्यो हित इति, तस्योत्तरमाह—वातपित्तेत्यादि। ये वातपित्तप्रकृतयस्तथा ये वातपित्तविकारिणः एवं चक्षुःकामादयश्च ये दाहादिभिरार्त्ताश्च ये ते सर्पिः पिबेयुस्तेषां सर्पिर्हितमिति वाक्यम् ॥ १७ ॥

गङ्गाधरः—अथ येषां तैलं हितं तानाह—प्रवृद्धेत्यादि। ये प्रवृद्धश्लेष्ममेदस्काः प्रवृद्धश्लेष्माणः प्रवृद्धमेदस्काश्च। चले च स्थूले च गलोदरे येषां ते। ये च बलादिकं काङ्क्षन्ति. क्रिमिकोष्ठाः तथा क्रूरकोष्ठाश्च ये। ये च नाड़ीभिः नाड़ीव्रणैरर्द्दिताः, ये च तैलोचितास्तैलसेवनमभ्यस्तवन्तस्ते शीतले काले हिमे शिशिरे दिवा तैलं पिबेयुः। तैलं प्रावृषीति पूर्व्वमुक्तं नात्युष्णशीते इति च तत्रातिशीतवर्ज्जनं तदपवादे पुनरिह शीतले काले विधिरुक्तः ॥ १८ ॥

प्रकृतिषु रूक्षेषु पुनस्तदभिधानं वातपित्तप्रकृतीनां स्तोकश्लेष्मविकारेऽपि घृतपानोपदेशार्थम्। एवं "वातव्याधिभिराविष्टा वात-प्रकृतयश्च ये" इत्यत्र व्याख्येयम्। बलार्थिन इत्यत्र बलशब्दः स्मृत्यादिभिः सम्बध्यते ; आर्त्ताः पीड़िता दाहादिभिरिति सम्बन्धः ॥ १७ ॥

चक्रपाणिः—तैलविषयमाह—प्रवृद्धेत्यादि। शीतले काल इति तैलस्योष्णत्वेन शीतलेऽपि काल इत्यर्थः ; तेन सामान्यप्रतिषेधः—"नात्युष्णशीते स्नेहं पिबेन्नरः" इति न विरुध्यते ; यदि वा, सर्पिःपानकालापेक्षया शीतत्वं बोद्धव्यम् ॥ १८ ॥

वातातपसहा ये च रुक्षा भाराध्वकर्षिताः।
संशुष्करेतोरुधिरा निस्पीतकफमेदसः* ॥
अस्थिसन्धिशिरास्नायु-मर्म्मकोष्ठमहारुजः।
बलवान् मारुतो येषां खानि चावृत्य तिष्ठति ॥
महच्चाग्निबलं येषां वसासात्म्याश्च ये नराः।
तेषां स्नेहयितव्यानां वसापानं विधीयते ॥ १९ ॥
दीप्ताग्नयः क्लेशसहा घस्मराः स्नेहसेविनः।
वातार्त्ताः क्रूरकोष्ठाश्च स्नेह्या मज्जानमाप्नुयुः ॥ २० ॥
येभ्यो येभ्यो हितो यो यः स्नेहः स परिकीर्त्तितः।
स्नेहनस्य प्रकर्षौ तु सप्तरात्रत्रिरात्रकौ ॥ २१ ॥

गङ्गाधरः—अथ वसा येषां हिता तानाह—वातातपेत्यादि। भारकर्षिता अध्वकर्षिताश्च। संशुष्करेतसो ये, ये च संशुष्करुधिराः, ये च निस्फीतकफमेदसः। निशब्दो निषेधे। येषां कफो न स्फीतो मेदश्च न स्फीतं ते क्षीणकफमेदस इति। ये चास्थ्यादिमहारुजः, अस्थ्यादिषु महारुजा येषाम्। येषां खानीन्द्रियाणि स्रोतांसि चावृत्य बलवान् वायुस्तिष्ठति। येषामग्निबलं महत्, ये च नरा वसासात्म्यास्तेषां स्नेहयितव्यानां स्नेहार्हाणां वसापानं प्रशस्यत्वेन विधीयते ॥ १९ ॥

गङ्गाधरः—अथ येषां मज्जा हितस्तानाह—दीप्ताग्नय इत्यादि। घस्मरा अद्मरा बहुभोजिन इति। वातार्त्ताश्च ये, ये च क्रूरकोष्ठा अथ च स्नेह्याः स्नेहनार्हा न तु स्नेहास्ते मज्जानमाप्नुयुः पिबेयुरिति ॥ २० ॥

गङ्गाधरः—उपसंहरति येभ्य इत्यादि। अथ "प्रकर्षः स्नेहने च कः" इति प्रश्नस्योत्तरमाह—स्नेहनस्येत्यादि। स्नेहनस्य द्वौ प्रकर्षौ सप्तरात्रश्च त्रिरात्रश्च

चक्रपाणिः—वसाविषयमाह—वातातपेत्यादि। संशुष्कनिष्पीतशब्दौ क्षीणार्थावेव ; महारुज इत्यस्थ्यादिभिः सम्बध्यते ; खानि स्रोतांसि। दीप्ताग्नय इत्यादि मज्जपानविषयः, घस्मरा बहुभक्षकाः, आप्नुयुरुपयुञ्जीरन् ॥ १९।२० ॥

चक्रपाणिः—प्रकर्षावित्यल्पप्रकर्ष-भूयःप्रकर्षौ, तेन अल्पत्वेन त्रिरात्रिकः प्रकर्षो भूयस्त्वेन

* निष्पीतकफमेदसेति चक्रपाणिः।

स्वेद्याः शोधयितव्याश्च रूक्षा वातविकारिणः।
व्यायाममद्यस्त्रीनित्याः स्नेह्याः स्युर्ये च चिन्तकाः ॥२२॥
संशोधनादृते येषां रूक्षणं संप्रवक्ष्यते।
न तेषां स्नेहनं शस्तमुत्सन्नकफमेदसाम् ॥
अभिष्यन्दाननगुदा नित्यं मन्दाग्नयश्च ये।
तृष्णामूर्च्छापरीताश्च गर्भिण्यस्तालुशोषिणः ॥

इति। अच्छोपसेवया क्रूरकोष्ठस्य सप्तरात्रः प्रकर्षस्तथा मृदुकोष्ठस्याच्छोपसेवने त्रिरात्रः प्रकर्षः। ओदनादिविचारणया स्नेहनप्रकर्षो नानुगतस्तस्य सम्यगलक्षणदर्शनेन प्रकर्षो बोध्यः ॥ २१ ॥

<u>गङ्गाधरः</u>—अथ "स्नेह्याः के" इति प्रश्नस्योत्तरमाह—स्वेद्या इत्यादि। वक्ष्यमाणा ये स्वेद्याः स्वेदार्हाः स्वेदसाध्यव्याधिमन्तः। ये च शोधयितव्या वमनादिना। ये च रूक्षा ये च वातविकारिणः। ये च व्यायामादिनित्याः नित्यं व्यायामकारिणः। नित्यं मद्यपायिनो नित्यं स्त्रीसम्भोगिनश्च। ये च चिन्तकाः सततचिन्ताकारिणस्ते सर्व्वे स्नेह्याः स्नेहनार्हाः। तेषां स्नेहः कर्त्तव्य इति ॥ २२ ॥

<u>गङ्गाधरः</u>—अथ "के च न स्नेह्याः" इति प्रश्नस्योत्तरमाह—संशोधनादित्यादि। येषां संशोधनादृते रूक्षणं कर्त्तव्यं वक्ष्यते तेषां स्नेहनं न शस्तम्। ते तु न स्नेह्यास्तेषां संशोधने कर्त्तव्ये तु स्नेहः कार्य्यः। उत्सन्नकफमेदसाञ्च स्नेहनं न शस्तम्। एवं ये खल्वभिष्यन्दाननगुदाः। अभिष्यन्दो स्रावं स्रवन्तावाननगुदौ येषां ते। तथा ये नित्यं मन्दाग्नयः। कश्चिन्मन्दाग्नयस्तु न स्नेहने प्रति-

साप्तरात्रिक इति च स्यात्; एतच्च वक्ष्यमाणसद्यःस्नेहप्रयोगातिरिक्तप्रयोगे बोद्धव्यं, यदि वा, सद्यःस्नेहप्रयोगा अपि प्रायेणैव स्नेहयन्ति, स्नुत्यर्थन्तु तेषु सद्य इत्युक्तं; यदुक्तं—"त्र्यहावरं सप्तदिनं परन्तु स्निग्धो नरः स्वेदयितव्य इष्टः। नातः परं स्नेहनमादिशन्ति सात्म्यीभवेत् सप्तदिनात् परन्तु" ॥ २१ ॥

<u>चक्रपाणिः</u>—सामान्येन स्नेह्यानाह—स्वेद्या इति। स्वेद्याः, स्वतन्त्रस्वेदसाध्याः वातव्याधिन्यः, शोधनाङ्गस्वेदसाध्यानान्तु 'शोधयितव्याः' इत्यनेनैव गृहीतत्वात्; चिन्तका इति चिन्ताबहुलाः ॥ २२ ॥

<u>चक्रपाणिः</u>—अस्नेह्यानाह—संशोधनादृत इत्यादि। येषां रूक्षणं वक्ष्यते लङ्घनतर्पणीये "अभिष्यन्ना महादोषा मर्म्मस्था व्याधयश्च ये। ऊरुस्तम्भप्रभृतयो रूक्षणीया निदर्शिताः ॥" इत्यनेन

अन्नद्विषश्छर्दयन्तो जठरामगरार्द्दिताः।
दुर्ब्बलाश्च प्रतान्ताश्च स्नेहग्लाना मदातुराः॥
न स्नेह्या वर्त्तमानेषु न नस्तोवस्तिकर्म्मसु।
स्नेहपानात् प्रजायन्ते तेषां रोगाः सुदारुणाः॥ २३॥
पुरीषं ग्रथितं रुक्षं वायुरप्रगुणो मृदुः।
पक्ता खरत्वं रौक्ष्यञ्च गात्रस्यास्निग्धलक्षणम्॥ २४॥
वातानुलोम्यं दीप्तोऽग्निर्वर्च्चः स्निग्धमसंहतम्।
मार्द्दवं स्निग्धता चाङ्गे स्निग्धानामुपजायते॥ २५॥

पिष्यन्ते। छर्दयन्तश्छर्दिरोगवन्तः। जठररोगामदोषगरदोषार्द्दिता ये। प्रतान्ता ग्लानिमन्तः। स्नेहग्लानाः स्नेहसेवने ये ग्लायन्ति न हृष्यन्ति ते। ये मदातुराः सर्व्वदा मदरोगार्त्ता मद्यादिपानजमदनित्याश्च ते सर्व्वे जना न स्नेह्याः स्नेहनार्हा न भवन्ति, तेषां स्नेहो न कार्य्यः। नस्तःकर्म्मसु नस्यप्रधमनादिषु वर्त्तमानेषु क्रियमाणेषु तथा वस्तिकर्म्मसु निरूहानुवासनकर्म्मसु क्रियमाणेषु ते जना न स्नेह्याः। एषां स्नेहने दोषमाह—स्नेहपानादित्यादि। तेषाम् अस्नेह्यानां स्नेहपानात् सुदारुणा रोगाः कफादितो जायन्ते॥ २३॥

गङ्गाधरः—अथ "स्निग्धातिस्निग्धलक्षणं किम" इति प्रश्नस्योत्तरमाह—पुरीषमित्यादि। पुरुषस्य यस्य स्नेहने कृते पुरीषं ग्रथितं ग्रन्थिभूतं वर्त्तते न द्रवीभूतं स्यादेवं रुक्षञ्च तत् पुरीषं दृश्यते। वायुश्च प्रगुणो यथास्वगुणो न भवति। पक्ता जाठराग्निर्मृदुर्मन्दः। गात्रस्य खरत्वं कर्कशत्वं रौक्ष्यञ्च चिक्कणत्वराहित्यं स्यात् तदा तस्यास्निग्धलक्षणं स्नेहायोगलक्षणं विद्यात्। प्रश्ने स्निग्धातिस्निग्धलक्षणपदमस्निग्धेऽप्युपलक्षणात्॥ २४॥

गङ्गाधरः—अथ स्नेहस्य सम्यग्योगलक्षणमाह—वातानुलोम्यमित्यादि।

तेषां शोधनादृते स्नेहनं न शस्तं, यदा च शोधने विरुध्यन्ते तदा परं शोधनादृतेऽपि स्नेहः कर्त्तव्य इति भावः; वत्सन्तो मृदुः कफो मेदश्च येषां ते तथा,—पुनश्च विशेषणं, विरूक्षणीया पृथग्भूता एव भवन्तीति दर्शयति। अभिष्यन्दो द्रवप्रधानश्लेष्मविकारी, गरः कृत्रिमं विषम् अतिप्रतान्तोऽतिक्षीणद्रवधातुः वर्त्तमानेषु क्रियमाणेष्वित्यर्थः॥ २३॥

चक्रपाणिः—अस्निग्धलक्षणमाह—पुरीषमित्यादि। मृदुरिति पक्तुर्विशेषणम्। वातानुलोम्यमित्यादि स्निग्धलक्षणम्। पाण्डुतेत्याद्यतिस्निग्धलक्षणम्। आक्यमिन्द्रियवत्स्वम्॥ २४।२५॥

पाण्डुता गौरवं जाड्यं पुरीषस्याविपक्वता।
तन्द्रीररुचिरुत्क्लेशः स्यादतिस्निग्धलक्षणम् ॥ २६ ॥
द्रवोष्णमनभिष्यन्दि भोज्यमन्नं प्रमाणतः।
नातिस्निग्धमसङ्कीर्णं श्वः स्नेहं पातुमिच्छता ॥
पिबेत् संशमनं स्नेहमन्नकाले प्रकाङ्क्षितः।
शुद्ध्यर्थं पुनराहारे नैशे जीर्णे पिबेन्नरः ॥
उष्णोदकोपचारी स्याद् ब्रह्मचारी क्षपाशयः।
शकृन्मूत्रानिलोद्गारानुदीर्णांश्च न धारयेत् ॥

स्निग्धं वर्च्चश्चासंहतञ्च वर्च्च इति। अङ्गे मार्दवं स्निग्धता च। स्निग्धानां सम्यक् स्निग्धानाम् ॥ २५ ॥

गङ्गाधरः—अथातिस्निग्धलक्षणमाह—पाण्डुतेत्यादि। पुरुषस्य पाण्डुता च गौरवञ्च जाड्यञ्च गात्रे, न तु पुरीषस्येति योजना; जाड्यासम्भवात्। अविपक्वता तु पुरीषस्यामता अतिस्निग्धलक्षणमिति ॥ २६ ॥

गङ्गाधरः—अथ किं पानात् प्रथमं हिताहितमिति प्रश्नस्योत्तरमाह—द्रवोष्णमित्यादि। स्नेहः श्वः परदिने पातुमिच्छता पुंसा पूर्व्व दिने द्रवञ्च उष्णञ्च अनभिष्यन्दि चानतिस्निग्धञ्च असङ्कीर्णं द्वित्र्यादिद्रव्याणामेकीकरणेन निष्पन्नपाकं सङ्कीर्णं तदन्यदसङ्कीर्णमन्नं भोज्यं, परदिने तु यदा प्रकाङ्क्षा भोजनाकाङ्क्षा स्यात् तदान्नकाले संशमनं स्नेहं स पुमान् पिबेत्। शुद्ध्यर्थं स्नेहने कर्त्तव्ये नैशाहारे जीर्णे प्रातःकाले स नरः पिबेत्। ततः पीते स्नेहे जीर्णे च किञ्च हिताहितमिति प्रश्नस्योत्तरमाह—उष्णोदकोपचारीत्यादि। उष्णोदकेन पानस्नानशौचादुपचारशीलः स्यात् तथा ब्रह्मचारी मैथुनवर्ज्जी स्यात्। तथा क्षपाशयः स्यात् न तु दिवाशयो रात्रिजागरणो वा स्यात्।

चक्रपाणिः—स्नेहात् पूर्व्वं यत् पथ्यं तदाह—द्रवोष्णमित्यादि। असङ्कीर्णमविरुद्धवीर्य्यम्, श्व इत्यागामिदिने। अन्नकाले त्रिमहरादिलक्षणे, बुभुक्षा कदाचिन्न स्यादपि, तदर्थं विशेषणं "प्रकाङ्क्षित" इति। शुद्ध्यर्थं स्नेहं नैशे दिनान्तरकृत आहारे जीर्णे एव प्रातरेव पिबेदित्यर्थः। संशमनार्थस्नेहो यदि अरुणाभ्ये प्रातरेव क्रियते तदा कोष्ठोपलेपकदोषस्याभयात् तेन दोषेण सम्बद्धो दोषोत्क्लेशं कुर्य्यात् न संशमनं, संशोधनार्थस्तु दोषोत्क्लेशं करोतीत्यपेक्षणीय एवेति भावः। एतच्च कालकथनमुत्सर्गेण, तेन, "वातपित्ताधिको रात्रौ" इत्युक्तकालविरोधो न स्यात्।

व्यायाममुच्चैर्वचनं क्रोधशोकौ हिमातपौ।
वर्ज्जयेदप्रवातञ्च सेवेत शयनासनम्॥
स्नेहं पीत्वा नरः स्नेहं प्रतिभुञ्जान एव च।
स्नेहमिथ्योपचाराद्धि जायन्ते दारुणा गदाः॥ २७॥
मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया।
स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः॥ २८॥
गुड़मिक्षुरसं मस्तु क्षीरमुल्लोड़ितं दधि।
पायसं कृशरं सर्पिः काश्मर्य्यत्रिफलारसम्॥

एवमुदीर्णान् शकृदादीनां वेगान न धारयेत्। व्यायामादिकञ्च वर्ज्जयेत्। शयनासनमप्रवातं प्रवातगमनरहितदेशे सेवेत। स्नेहं पीत्वा त्वपरं स्नेहं प्रतिभुञ्जाने नरे स्नेहमिथ्योपचाराद् दारुणा गदा जायन्ते। हि यस्मात् तस्मात् स्नेहं पीत्वा भोजनादौ स्नेहान्तरं न भुञ्जीत इति। पीते जीर्णे च स्नेहे हितञ्चाहितञ्चोक्तम्॥ २७॥

गङ्गाधरः—अथ के मृदुक्रूरकोष्ठा इत्यूनविंशप्रश्नस्योत्तरमाह—मृदुकोष्ठ इत्यादि। यो मृदुकोष्ठ स खल्वच्छस्नेहोपसेवया त्रिरात्रेण स्निह्यति। तथा स्नेहनदर्शनान्मृदुकोष्ठोऽयमित्यनुमीयेत। सप्तरात्रेणाच्छोपसेवया क्रूरकोष्ठस्तु स्निह्यतीति स्नेहनदर्शनादनुमीयेतायं क्रूरकोष्ठ इति॥ २८॥

गङ्गाधरः—एवं मृदुकोष्ठस्य लक्षणान्तराण्याह—गुड़मित्यादि। गुड़ाद्यन्यतमं पीत्वा मृदुकोष्ठो नरो विरिच्यत इति गुड़ाद्यन्यतमपानेन विरेचनदर्शनादनुमीयेतायं मृदुकोष्ठ इति। उल्लोड़ितमालोड़ितं दधि। कृशरं कृशरा—तिलतण्डुलमाषमयी यवागूः। तदुक्तम्—"तिलतण्डुलमाषैस्तु क्रिसरा

अपायामेव स्वपितीति अपाशयः। अप्रवातञ्चेति शयनासनविशेषणम्। स्नेहं प्रतिभुञ्जान इति स्नेहे जीर्णेऽपि स्नेहप्रयोगानुगुणमन्यस्नेहमविरुद्धवीर्य्यादिगुणयुक्तं भुञ्जानः, पूर्वेण, स्नेहे पीते जीर्णे किञ्च हिताहितमिति प्रश्नद्वयस्योत्तरमिदम्—"उष्णोदकोपचारी स्यात्" इत्यादि स्यात्॥ २६।२७॥

चक्रपाणिः—मृदुकोष्ठादिलक्षणमाह—मृद्वित्यादि। अत्यर्थहितत्वात् कोष्ठज्ञानस्यान्यथापि तल्लक्षणमाह—गुड़मित्यादि।—उल्लोड़ितं दधिसरः, कृशरा तिलतण्डुलमाषकृता यवागूः, काश्मर्य

द्राक्षारसं पीलुरसं जलमुष्णमथापि वा।
मद्यं वा तरुणं पीत्वा मृदुकोष्ठो विरिच्यते॥
विरेचयन्ति नैतानि क्रूरकोष्ठं कदाचन।
भवति क्रूरकोष्ठस्य ग्रहण्यत्युल्वणानिला॥
उदीर्णपित्ताल्पकफा ग्रहणी मन्दमारुता।
मृदुकोष्ठस्य तस्मात् स सुविरेच्यो नरः स्मृतः॥ २९॥
उदीर्णपित्ताः ग्रहणी यस्य चाग्निबलं महत्।
भस्मीभवति तस्याशु स्नेहः पीतोऽग्नितेजसा॥

क्षिशरेति च॥" काश्मर्य्यत्रिफलारसं काश्मर्य्यादीनां चतुर्णां प्रत्येकं रसः। तरुणं मद्यम्। एषां मात्रावत्पानं मृदुकोष्ठं विरेचयति न तु स्वल्पमात्रम्।

अथ क्रूरकोष्ठलक्षणमाह विरेचयन्तीत्यादि। एतानि गुड़ादीनि क्रूरकोष्ठं नरं कदाचन न विरेचयन्ति। एषां गुड़ादीनां यथार्हमात्रया पानेन विरेचनस्यादर्शनेनानुमीयेतायं क्रूरकोष्ठ इति। ननु केन हेतुनैवं कोष्ठः स्यादित्यत आह भवतीत्यादि। क्रूरकोष्ठस्य नरस्य ग्रहणी नाड़ी अत्युल्वणानिला भवति, तस्माद्दुर्व्विरेच्यः स्यात्। मृदुकोष्ठस्य नरस्य ग्रहणी नाड़ी उदीर्णपित्ततयाल्पकफा मन्दमारुता च भवति। तस्माद् गुड़ादिभिरल्पविरेचनशक्तिभिर्द्रव्यैः स मृदुकोष्ठो नरः सुविरेच्यः स्मृत इति॥ २९॥

गङ्गाधरः—अथ का व्यापद इत्यनेन स्नेहस्य का व्यापत्तयः स्युरिति प्रश्नस्योत्तरमाह उदीर्णपित्तेत्यादि। यस्य ग्रहणी नाड़ी उदीर्णपित्ता प्रबलपित्ता न तु कफमारुतयुक्ता, तथाग्निबलञ्च यस्य महत्, तस्य नरस्य पीतः स्नेहोऽग्नितेजसाशु भस्मीभवति। न केवलमाशु स्नेहस्य जीर्णता स्यात्।

हि—"तिलतण्डुलमाषैस्तु कृसरा क्षिसरेति च"। क्रूरकोष्ठानां विरेचनहेतुमाह भवतीत्यादि। ग्रहणी कोष्ठस्याग्न्यधिष्ठानभूता नाड़ी, यदुक्तम् अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता इति। उदीर्णपित्तेत्यादि मृदुकोष्ठस्वरूपकथनं; क्रूरकोष्ठस्य ग्रहणीगतो वायुर्गुड़ादीनां सरत्वं प्रतिबध्नाति, मृदुकोष्ठस्य हि ग्रहण्यां विरोधको वायुर्नास्ति स्तम्भकोऽपि श्लेष्माल्पः उष्णतरसगुणञ्च पित्तं प्रबलं; तेन, गुड़ादिभिः सुखं विरेचनं भवतीति भावः॥ २८।२९॥

चक्रपाणिः—सम्प्रति स्नेहव्यापदो दर्शयति— उदीर्णेत्यादि। ओजः सर्व्वधातुसारभूतं हृदि स्थितं, प्रभावादेव स्थानात् भ्रंशयन् क्षपयंश्च। बलीयसानेन स्नेहेभ्यश्चो वह्निरितरां बलवान् भवतीति

स जग्ध्वा स्नेहमात्रां तामोजः प्रक्षारयन् बली ।
स्नेहाग्निरुत्तमां तृष्णां सोपसर्गामुदीरयेत् ॥
नालं स्नेहसमृद्धस्य शमायान्नं सुगुर्व्वपि ।
स चेत् सुशीतं सलिलं नासादयति दह्यते ।
यथैवाशीविषः कक्षमध्यगः स्वविषाग्निना ॥ ३० ॥
अजीर्णे यदि तु स्नेहे तृष्णा स्याच्छर्द्दयेद्भिषक् ।
शीतोदकं पुनः पीत्वा भुक्त्वा रुक्षान्नमुल्लिखेत् ॥
न सर्पिः केवले * पित्ते पेयं सामे विशेषतः ।
सर्व्वं ह्यनुचरेद् † देहं हत्वा संज्ञाञ्च मारयेत् ॥

स महाबलो देहाग्निर्जठराग्निस्तां पीतां स्नेहमात्रां जग्ध्वा पुनर्बली बलवान् सन्नोजः प्रक्षारयन् सोपसर्गामुत्तमां प्रबलां तृष्णामुदीरयेत् ।

तर्हि तदग्निप्रशान्त्यर्थं गुर्व्वन्नमश्नीयादित्याशङ्कायामाह—नालमित्यादि । स्नेहसमृद्धस्य सम्यग्वृद्धस्य महाबलस्य देहाग्नेः शमाय शान्त्यै सुगुर्व्वप्यन्नं भुक्तं नालं न समर्थं भवति । तदा स महाबलाग्निः स्नेहपानेन लब्धबलाग्निश्च पुरुषो यदि तदा सुशीतलं जलं नासादयति पानाय न प्राप्नोति, तदा तेनाग्निना दह्यते दाहवान् स्यात् । तत्र दृष्टान्तः—यथैवेत्यादि । यथा खल्वाशीविषः सर्पः कक्षमध्यगः संवृतस्थानमध्यगः सन् स्वविषाग्निना दह्यते । इति स्नेहव्यापद उक्ताः ।

अथ सिद्धयश्च का इति प्रश्नस्योत्तरमाह—तस्मात् स तदा सुशीतलं जलम्पिपासाशान्तेः पिबेदिति ख्यापितम् । तत्र चान्यदाह—अजीर्णे इत्यादि । यदि तु तत्र पीते स्नेहे खल्वजीर्णे तृष्णा स्यात् तदा तं स्नेहं छर्द्दयेद् भिषक् । ततोऽनन्तरं पुनः शीतोदकं पीत्वा रुक्षान्नञ्च भुक्त्वा उल्लिखेत् वमेत् । इति स्नेहव्यापत्सिद्धिं तात्कालिकीमुक्त्वा तदकरणेऽन्या व्यापद आह—

उदीरयति, वचनं हि— "नालं स्नेहसमृद्धस्य शमायान्नं सुगुर्व्वपि" । उत्तमां महतीं मात्रां, सोपसर्गां सोपद्रवां, कक्षः काष्ठसमूहः ; छर्द्दयेदिति प्रथमं स्नेहमेव तृष्णाकारकं तं स्नेहं छर्द्दयित्वा पुनः शीतोदकं पीत्वा रुक्षान्नञ्च भुक्त्वा उल्लिखेदिति योजनीयम् ।

* केवलमिति चक्रपाणिधृतः पाठः । † अनुचरेदित्यत्र अनुसरेदिति चक्रः ।

तन्द्रीरुत्क्लेश आनाहो ज्वरः स्तम्भो विसंज्ञता ।
कुष्ठानि कण्डूः पाण्डुत्वं शोथार्शांस्यरुचिस्तृषा ॥
जठरं ग्रहणीदोषः स्तैमित्यं वाक्यनिग्रहः ।
शूलमामप्रदोषश्च जायन्ते स्नेहविभ्रमात् ॥
तत्राप्युल्लेखनं शस्तं स्वेदः कालप्रतीक्षणम् ।
प्रति प्रतिव्याधिबलं बुद्ध्वा स्रंसनमेव च ॥

न सर्पिरित्यादि । तस्मात् केवले पित्ते विशेषतः सामे पित्ते सर्पिर्न पेयम् । कस्मात् ? सर्व्वं हीत्यादि । हि यस्मात् पित्तस्य तीक्ष्णगुणसहयोगात् स्नेहस्य व्यवायित्वेन सर्पिः सर्व्वं देहमनुचरेत् । ततो विकाशिगुणेन संज्ञां हत्वा मारयेत् इति ।

पित्ते स्नेहव्यापद उक्त्वा वातपित्ताधिके श्लेष्माधिके चान्येषु स्नेहेषु स्नेहमिथ्यायोगेन या व्यापदो जायन्ते ता आह—तन्द्रीरित्यादि । स्तम्भः शरीरस्य । स्तैमित्यमार्द्रवसनावगुण्ठितत्वमिव शरीरं मन्यते । वाक्यनिग्रहो वाग्रोधः । आमप्रदोष आमविषलक्षणः । स्नेहविभ्रमात् स्नेहमिथ्योपचारात् ।

आसां स्नेहव्यापदां सिद्धीराह—तत्रापीत्यादि । तत्र तासु स्नेहव्यापत्सु उल्लेखनं वमनं शस्तं, स्वेदः शस्तः । कालप्रतीक्षणं स्नेहदोषक्षयपर्य्यन्तमभोजनं, यावत्कालं स्नेहो जीर्य्यति । प्रतिव्याधिबलं तन्द्रोत्क्लेशादिप्रत्येकव्याधिबलं बुद्ध्वा प्रतिस्रंसनं कर्त्तव्यम् । यत्र व्याधौ यत् स्रंसनमर्हति

न सर्पिरित्यादि । न सर्पिः सामे पित्ते पेयं, केवलन्त्वसंस्कृतं विशेषतो न पेयं सामपित्त एवेति योजना, एवं मन्यते—संस्कृतं तिक्तकादिभिः घृतं सामे पित्ते तिक्तकादि-पाचनगुणानुयोगात् योग्यं कदाचिद् भवत्यप्यसंस्कृतन्तु सर्व्वथा विरुद्धमेव ; यदि वा, केवलमसंस्कृतं सर्पिः पित्ते सामान्येन सामे निरामे वा न पेयं, सामे पित्ते विशेषत इति योजना ; एतेन, यत्रापि सामान्येन घृतं विहितं, यथा—"अतःऊर्द्ध्वं कफे मन्दे वातपित्तोत्तरे ज्वरे । परिपक्वेषु दोषेषु सर्पिःपानं यथाऽमृतम्" ; तत्राप्युचितभेषजसंस्कृतमेव बोद्धव्यं ; यदि वा, न केवलं पित्ते सामे सर्पिर्विशेषतो न पेयं, किं तर्हि, तैलादीन्यपि वातश्लेष्मविहितानि, तयोः सामयोर्न पेयानीत्यर्थः । तस्मिन् व्याख्यानेऽपेयमित्यकारप्रश्लेषो द्रष्टव्यः । अनुरज्जेत् पित्तवर्णं कुर्य्यात्, संज्ञा स्मृतिस्तद्धननञ्चेह व्याधिप्रभावात् । स्तैमित्यम् आर्द्रवस्त्रगुण्ठितत्वमिव, आमप्रदोषा

तक्रारिष्टप्रयोगश्च रूक्षपानान्नसेवनम्।
मूत्राणां त्रिफलायाश्च स्नेहव्यापत्तिभेषजम्॥ ३१॥
अकाले चाहितश्चैव मात्रया न च योजितः।
स्नेहो मिथ्योपचाराच्च व्यापद्येतातिसेवितः॥
स्नेहात् प्रस्कन्दनो जन्तुस्त्रिरात्रोपरतः पिबेत्।
स्नेहञ्च * द्रवमुष्णञ्च त्र्यहं भुक्त्वा रसौदनम्॥

तदेव तत्र कर्त्तव्यम्। एवं तक्रारिष्टप्रयोगश्च कर्त्तव्यः। रूक्षपानान्नसेवनं तथा मूत्राणामष्टानां सेवनं त्रिफलायाश्च सेवनमिति स्नेहव्यापत्तिभेषजमुक्तं भवति॥ ३०।३१॥

गङ्गाधरः—व्यापत्कारणान्याह अकाले चेत्यादि। यस्य स्नेहस्य यः काल उक्तस्तद्विपरीतकाले योजितः स्नेहो व्यापद्येत। अहितो यो यस्य स स्नेहो योजितो व्यापद्येत। मात्रया न च योजितो यो यस्य हितः स्नेहः स चेन्मात्रया न युज्यते तदा व्यापद्येत। मिथ्योपचाराच्च यथाविधिविपर्य्ययेण उपयोगाच्च स्नेहो व्यापद्येत। अतियोगेन सेवितश्च यो यस्य हितः स्नेहः स व्यापद्येत। इति।

स्नेहव्यापत्सिद्धिमप्याह स्नेहादित्यादि। अकालादियोजितस्नेहव्यापदि जातायां स्नेहात् ततस्नेहपानात् प्रस्कन्दनः प्रचलितः सन् स्नेहपानं विहाय त्र्यहं द्रवमुष्णं मांसरसौदनं भुक्त्वा त्रिरात्रोपरतस्त्रिरात्रं विश्रम्य पुनश्च स्नेहं

अलसकविसूचिकादयः, कालवर्त्तीक्षणं स्नेहजनितदोषक्षयं यावद्भोजनं; तक्रारिष्टानाञ्च चिकित्सावश्यकाणानां प्रयोगः, मूत्राणाञ्च त्रिफलायाश्च सेवनमिति सम्बन्धः॥ ३०।३१॥

चक्रपाणिः—मिथ्योपचारात् यथोक्तविध्यननुष्ठानात्, अतिसेवितः कालप्रकर्षेण सेवितः। संशोधनस्नेहपाने वृत्तिप्रचारमाह—स्नेहादित्यादि। स्नेहात् स्नेहप्रयोगात्, त्रिरात्रोपरतः त्रिरात्रं परित्यक्तस्नेहपान इत्यर्थः; प्रस्कन्दनं विरेचनं, स्नेहोपरतस्य त्रिरात्र एव भोजनं दर्शयति स्नेहवदित्यादि। रसप्रधानमोदनं रसौदनम्।

* स्नेहवद् द्रवमुष्णञ्च इति वा पाठः।

एकाहोपरतस्तद्वद् भुक्त्वा प्रच्छर्दनं पिबेत्।
स्यात्तु संशोधनार्थाय * वृत्तिः स्नेहे विरिक्तवत्॥३२॥
स्नेहद्विषः स्नेहनित्या मृदुकोष्ठाश्च ये नराः।
क्लेशासहा मद्यनित्यास्तेषामिष्टा विचारणाः॥
लावतैत्तिरिमायूर-हंसवाराहकौक्कुटाः।
गव्याजौरभ्रमात्स्याश्च रसाः स्युः स्नेहने हिताः॥
यवकोलकुलत्थाश्च स्नेहाः सगुडशर्कराः।
दाड़िमं दधि सव्योषं रससंयोगसंग्रहः॥ ३३॥

पिबेत्। तत्र तद्वद्द्रवमुष्णञ्च मांसस्य रसौदनं भुक्त्वा एकाहोपरतः एकाह विरम्य प्रच्छर्दनं वमनमौषधं पिबेत्। एवंप्रकारेण वमनानन्तरं पुनरेकाहं विश्रम्य त्रिदिनानन्तरं पुनरन्तं स्नेहं पिबेदिति तात्पर्य्यम्। इति व्यापत्सिद्धिमुक्त्वा "अच्छे संशोधने चैव स्नेहे का वृत्तिरिष्यते" इति प्रश्नस्योत्तरमाह—स्यात् त्वित्यादि। संशोधनार्थाय खल्वच्छे स्नेहे पीते विरिक्तवद्वृत्तिः स्यात्। विरिक्तस्य वृत्तिर्वक्ष्यते॥ ३२॥

<u>गङ्गाधरः</u>—इति वृत्तिमुक्त्वा "विचारणाः केषु योज्याः" इति प्रश्नस्योत्तरमाह—स्नेहद्विष इत्यादि। स्नेहद्विडादिषु विचारणा इष्टा भवन्ति। "विधिना केन तत् प्रभो विचारणा योज्याः" इति प्रश्नस्योत्तरमाह—लावेत्यादि। ओदनादयो या विचारणा उक्तास्तासु मध्ये मांसरसा लावादीनां मांसरसा स्नेहनक्रियायां हिताः। (बभ्रु नेकुलः)। एषां रसानां संस्कारद्रव्याण्याह—यवेत्यादि। रस-

वमने स्नेहवृत्तिमाह—एकेत्यादि। एकाहोपरतः स्नेहादिति योजना, तद्वदिति स्नेहवद् द्रवमुष्णञ्च रसौदनं स्नेहोपरमदिवस एव।

संशमनविधिमाह—स्यात् त्वित्यादि। असंशोधनार्थीये संशमने, वृत्तिरुपचारः, विरिक्तवदित्यनागतावेक्षणेनोपकल्पनीयवक्ष्यमाणं 'सम्यग्विरिक्तं तैलम्' इत्यादिग्रन्थप्रतिपादनीयमुपचारमाह, न तु पेयादिक्रमम्। यद्यपि वमनोक्ता एव तत्रोक्तभोज्यादयो विरेचनवृत्तावप्यतिदिष्टास्तथापीह वमनविधिं परित्यज्य विरेचनविध्यतिदेशो धूमपानप्रतिषेधार्थः, विरेचने हि तत्र धूमपानवर्ज्जम्' इति कृतं, स्नेहपाने च धूमपानं निषिद्धं मात्राशितीये,—"न मद्य-दुग्धे पीत्वा च न स्नेहम्" इत्यादिना॥ ३२॥

<u>चक्रपाणिः</u>—विचारणाविषयमाह—स्नेहद्विष इत्यादिना। लावादिरसानामुक्तानां संस्कारम्

* स्यात्त्वसंशोधनार्थीये इति चक्रसम्मतः पाठः।

स्नेहयन्ति तिलाः पूर्व्वं जग्धाः सस्नेहफाणिताः।
कृशराश्च बहुस्नेहास्तिलकाम्बलिकास्तथा ॥
फाणितं शृङ्गवेरञ्च तैलञ्च सुरया सह।
पिवेद्रुक्षो भृतैर्मांसैर्जीर्णेऽश्नीयाच्च भोजनम् ॥
तैलं सुराया मण्डेन वसां मज्जानमेव वा।
पिवेत् सफाणितं क्षीरं नरः स्निह्यति वातिकः ॥
धारोष्णं स्नेहसंयुक्तं पीत्वा सशर्करं पयः।
नरः स्निह्यति पीत्वा वा सरं दध्नः सफाणितम् ॥

संयोगसंग्रहः रसानां संयोगा यैर्द्रव्यैः कार्य्यास्तेषामेष सङ्क्षेपः। यथायोग्यं यवादिभिः सह रसः संयोजनीय इति ॥ ३३ ॥

गङ्गाधरः स्नेहयन्तीत्यादि। विचारणासु निर्दिष्टमिति यदुक्तं तत्र तिलमाह भोजनात् पूर्व्वं सस्नेहफाणितास्तिलजग्धाः स्नेहयन्ति। बहुस्नेहाः कृशरास्तिलमाषयवाग्वो भोजनात् पूर्व्वं जग्धाः स्नेहयन्ति। तथा तिल-काम्बलिकाः तिलबहुलकाम्बलिका यूषाः भोजनात् पूर्व्वं जग्धास्तथा स्नेहयन्ति।

मद्यविचारणायां योगमाह फाणितमित्यादि। फाणितमर्द्धावशिष्टपक्व इक्षुरसः। शृङ्गवेरमार्द्रकम्। तत् त्रिष्टं फाणितञ्च तैलञ्च त्रयमेकीकृत्य सुरयां मिश्रयित्वा रुक्षो नरः पिवेत्। तस्मिन् जीर्णे सति भृतैर्मांसैर्भोजनञ्चाश्नीयात्। भृतैर्भर्टित्रीकृतैः।

अपरञ्च—तैलमित्यादि। सुराया मण्डेन सह तैलं वसां मज्जानं वा पिवेद् वातिको नरः स्निह्यति। सफाणितं क्षीरं वातिको नरः पिवेत्, ततः स्निह्यति।

अथ पयोविचारणायां योगमाह धारोष्णं सशर्करं बहुसर्पिरादिस्नेहयुक्तं पयः पीत्वा नरः स्निह्यति। सफाणितं दध्नः सरं वा पीत्वा नरः स्निह्यति।

चक्र—मध्येत्यादि। रसे स्नेहार्थीकरस उचितः संयोगो येषां ते रससंयोगास्तेषां संग्रहणं संग्रहः ॥ ३३ ॥

चक्रपाणिः—पूर्व्वमिति भोजनात् पूर्व्वम्। तिलप्रधानाः काम्बलिकास्तिलकाम्बलिकाः। फाणितम्

पाञ्चप्रसृतिकी पेया पायसो माषमिश्रकः ।
क्षीरसिद्धो बहुस्नेहः स्नेहयेदचिरान्नरम् ॥
सर्पिस्तैलवसामज्ज-तण्डुलप्रसृतैः कृता * ।
पाञ्चप्रसृतिकी पेया पेया स्नेहनमिच्छता ॥ ३४ ॥
ग्राम्यानूपौदकं मांसं गुड़ं दधि पयस्तिलान् ।
कुष्ठी शोथी प्रमेही च स्नेहने न प्रयोजयेत् ॥
स्नेहैर्यथास्वं तान् सिद्धैः स्नेहयेदविकारिभिः ।
पिप्पलीभिर्हरीतक्या सिद्धैस्त्रिफलयापि वा ॥ ३५ ॥

अपरश्चाह पाञ्चप्रसृतिकीत्यादि । वक्ष्यमाणा पाञ्चप्रसृतिकी पेया पीता नरमचिरात् स्नेहयेत् । माषमिश्रः क्षीरसिद्धो बहुसर्पिरादिस्नेहयुक्त-स्तण्डुलकृतः पायसो भुक्तो नरमचिरात् स्नेहयति ।

पाञ्चप्रसृतिकीं पेयामाह सर्पिरित्यादि । पाञ्चप्रसृतिकीति-संज्ञाबलात् । सर्पिरादीनां पञ्चानां प्रत्येकमेकैकं प्रसृतं पलद्वयं गृहीत्वा तैः पञ्चानां पञ्चभिः प्रसृतैः षड्गुणतोये कृता पेया पाञ्चप्रसृतिकी पेया । स्नेहनमिच्छता पेया पातव्या ॥ ३४ ॥

गङ्गाधरः—अथ याभिर्विचारणाभिर्येषां स्नेहनं न कार्य्यं तदाह—ग्राम्येत्यादि । कुष्ठी शोथी प्रमेही च स्वस्य स्नेहने ग्राम्यमांसमानूपमांसमौदकञ्च मांसं गुड़ञ्च दधि च पयश्च तिलांश्च न प्रयोजयेत्, तद्वर्द्धकत्वात् । कैस्तु तान् स्नेहयेदिति ? अत आह—स्नेहैरित्यादि । कुष्ठाद्यधिकारे कुष्ठादिहरत्वेन यथास्वं स्वस्वहरद्रव्येण सिद्धैर्घृतादिभिः स्नेहैरविकारिभिस्तत्तद्विकार-विरोधित्वेन विकाराकारिभिस्तान् कुष्ठिप्रभृतीन् नरान् वैद्यः स्नेहयेत् । अथवा पिप्पलीभिः कल्कैः सिद्धैः स्नेहैर्घृतादिभिः हरीतक्या कल्कभूतया वा सिद्धैः स्नेहैः त्रिफलया वा कल्कभूतया सिद्धैः स्नेहैस्तान् कुष्ठिशोथिप्रमेहिणः स्नेहयेत् ॥ ३५ ॥

इत्यादौ शृङ्गबेरमिश्र शृङ्गबेररसं, भृष्टैर्भर्ज्जितैःकृतैः । पाञ्चप्रसृतिकत्वग्रे वक्ष्यमाणा ; माषमिश्रको माषतण्डुलकृतमन्नं ; पेया पातव्या ॥ ३४ ॥

चक्रपाणिः—यथास्वमिति । यो यत्र स्नेहो युज्यते सर्पिरादिः । सिद्धैरिति पिप्पलीभिस्तथा

* कृतेयच्छेति वा पाठः ।

द्राक्षामलकयूषाभ्यां दध्ना चाम्लेन साधयेत्।
व्योषगर्भं भिषक् स्नेहं पीत्वा स्निह्यति तन्नरः॥
यवकोलकुलत्थानां रसाः क्षीरं सुरा दधि।
क्षीरसर्पिश्च * तत्सिद्धं स्नेहनीयं घृतोत्तमम्॥
तैलमज्जवसासर्पिर्बदरत्रिफलारसैः।
योनिशुक्रप्रदोषेषु साधयित्वा प्रयोजयेत्॥ ३६॥
गृह्णात्यम्बु यथा वस्त्रं प्रस्रवत्यधिकं यथा।
तथाग्निर्जीर्य्यति स्नेहं तथा स्रवति चाधिकम् †॥

गङ्गाधरः—अथापरविचारणामाह—द्राक्षेत्यादि। द्राक्षायूषेणामलकयूषेण दध्ना चाम्लेन मिलित्वा चतुर्गुणेन व्योषगर्भं त्रिकटुकं पादिकं कल्कीकृत्य स्नेहं यथार्हं घृतादिकं साधयेत्। तत् पीत्वा नरः स्निह्यति। अपरञ्चाह—यवेत्यादि। यवादीनां प्रत्येकं रसः। बहुवचनात् त्रयो रसाः क्वाथाः। क्षीरं सुरा दधि चेति त्रयमिति षड्द्रवद्रव्याणि प्रत्येकम्। क्षीरोत्थ-सर्पिः समानानि। कल्कहीनमिदं सिद्धं स्नेहनीयं घृतोत्तमम्। तैलेत्यादि। तैलादिचतुःस्नेहं व्यस्तं समस्तं वा यथार्हमेकवद्भावेन समस्तमेव वा बदरादीनां चतुर्णां रसैश्चतुर्भिः प्रत्येकं स्नेहसमानैर्मिलित्वा चतुर्गुणैरकल्कं साधयित्वा योनिशुक्रप्रदोषेषु स्नेहनार्थं प्रयोजयेदिति॥ ३६॥

गङ्गाधरः—सर्व्वान् प्रश्नानुक्त्वा स्नेहसेवने मात्राधिक्यादिदोषानाह—गृह्णातीत्यादि। यथा वस्त्रं सममात्रमम्बु यथावद्गृह्णाति, तत्राधिकमम्बु यथा प्रस्रवति; तथाग्निः सममात्रं स्नेहं जीर्य्यति, तत्राधिकं स्नेहं स्रवति।

हरीतक्या तथा त्रिफलया चेति पृथग्योजनीयं; पिप्पल्यादिभिः सिद्धस्नेहश्च कुष्ठादिषु यथासम्भवमिति केचित्। यूषशब्दः क्वाथवचनः, व्योषगर्भं व्योषकल्कम्, अत्र त्रिभिर्द्रव्यैर्मिलित्वा चातुर्गुण्यम्। यवकोलादौ षड् द्रव्याणि स्नेहसमानि, क्षारो यवक्षारः कल्कः। तैलमज्जेत्यादि। चतुःस्नेहो उत्तम एव। तैलमज्जवसासर्पिषामेकत्र भावात् द्वितीयोऽयं प्रयोगः॥ ३५।३६॥

चक्रपाणिः—सम्प्रति स्नेह उपयुक्तो यथा शरीरं संश्लेषाधिको दृश्यते, तदाह—गृह्णातीत्यादि। तत्र शिष्येणाप्यप्रश्नमपि शिष्यहितत्वादभिधीयते; यथाग्नीत्यत्राप्यधिक [illegible]। [illegible] स्रवति तदपि च स्नेहलक्षणमुक्तं, यदुच्यते—"[illegible]

---

* क्षारः सर्पिश्च इति पाठान्तरम्। † यथाग्निर्जीर्य्यति स्नेहस्तथा स्रवति चाधिकम्। इति चक्रः।

यथा वाऽऽर्द्रेऽत्र मृत्पिण्डमासिक्तं त्वरया जलम् ।
स्रवति स्रंसते स्नेहस्तथा त्वरितसेवितः ॥ ३७ ॥
लवणोपहिताः स्नेहाः स्नेहयन्त्यचिरान्नरम् ।
तद्ध्यभिष्यन्द्यरुक्षञ्च सूक्ष्ममुष्णं व्यवायि च ॥ ३८ ॥
स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरम् ।
स्नेहस्वेदोपपन्नस्य संशोधनमथेतरत् ॥ ३९ ॥

न तु जीर्य्यति। तस्मादधिकमात्रं स्नेहं सेवमानस्य गुदतः स्रावमात्रेण किं स्यादिति ? अत आह— यथा वेत्यादि। यथाग्निमात्रां विना शीघ्रं स्नेहनमिच्छता त्वरितसेवितः स्नेहो मात्राधिक्येन पीतः स्रवति गुदतः स्रंसते च। यथा त्वरया त्वत्वासिक्तं जलं मृत्पिण्डमार्द्रेऽत्र उपनक्लिन्नं कृत्वा स्रवति तन्मृत्पिण्डं स्रंसते गालयति ॥ ३७ ॥

गङ्गाधरः—तर्हि शीघ्रस्नेहनमिच्छता किं कार्य्यमिति ? अत आह—लवणेत्यादि। यावन्तः स्नेहा उक्तास्तावन्त एव स्नेहाः सैन्धवलवणेनोपहिताः सन्तोऽचिरात् शीघ्रं नरं स्नेहयन्ति। कस्मात् ? तद्धीत्यादि। हि यस्मात् तल्लवणमभिष्यन्दि चारुक्षञ्च सूक्ष्मञ्चोष्णञ्च व्यवायि च। अभिष्यन्दित्वेन लवणं दोषसङ्घातं विलालयति, अरुक्षत्वात् स्नेहयति, सूक्ष्मत्वात् देहान्तः सूक्ष्मदेशं प्रविशति, उष्णत्वात् स्नेहं पीतं शीघ्रं जरयति, व्यवायित्वात् कृत्स्नं देहं स्नेहसहितं व्याप्नोति। तस्मादचिरात् स्नेहयति ॥ ३८ ॥

गङ्गाधरः—अथास्याग्रे विधानप्रयोजनमाह—स्नेहमित्यादि। शोधने कर्त्तव्ये खल्वग्रे स्नेहं प्रयुञ्जीत। ततोऽनन्तरं स्वेदं प्रयुञ्जीत। एवं स्नेहस्वेदोपपन्नस्य नरस्य संशोधनं प्रयुञ्जीत। अथवेतरत् संशमनं वेति ॥ ३९ ॥

दर्शनम्" इति ; तेनैकदिन एवाधिकस्नेहपानं क्रियतामित्याह— यथा चेत्यादि। आर्द्रेव ईषत् क्लेदावस्था ; त्वरितसेवितः स्नेहो धातुसन्नेहविरहित एव स्रंसतेऽधो याति वायाम्, न तावता स्नेहनं भवतीति भावः ॥ ३७ ॥

चक्रपाणिः—स्नेहने सर्वस्नेहेषु लवणप्रयोगमाह— लवणोपहिता इत्यादि। तद्धीति लवणम्, अभिष्यन्दि दोषसङ्घातविश्लेषकं, व्यवायि कृत्स्नदेहव्यापि [illegible]। [illegible]

तत्र श्लोकः।

स्नेहाः स्नेहविधिः कृत्स्नो व्यापत्सिद्धिः सभेषजा।
यथाप्रश्नं भगवता व्याहृतं चान्द्रभागिणा ॥४०॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
स्नेहाध्यायो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोक इत्यादि। चान्द्रभागिणा भगवता चन्द्रभागापुत्रेण पुनर्व्वसुनात्रेयेणेति ॥ ४० ॥

अध्यायं समापयति—अग्नीत्यादि। पूर्व्ववद् व्याख्येयम्।

इति श्रीगङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ सूत्रस्थानीय-
स्नेहाख्यत्रयोदशाध्यायजल्पाख्या त्रयोदशी शाखा ॥ १३ ॥

स्वेदोपकल्पनाध्याययोः सम्बन्धसूचनं स्वेदादिषु स्नेहस्य प्रागभावमाह स्नेहमित्यादि। चान्द्रभागी आग्निवेशः ॥ १८—४० ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-
व्याख्यायां स्नेहाध्यायो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्द्दशोऽध्यायः ।

**अथातः स्वेदाध्यायं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**अतः स्वेदाः प्रवक्ष्यन्ते यैर्यथावत् प्रयोजितैः ।**
**स्वेदसाध्याः प्रशाम्यन्ति गदा वातकफात्मकाः ॥**
**स्नेहपूर्व्वं प्रयुक्तेन स्वेदेनावजितेऽनिले ।**
**पुरीषमूत्ररेतांसि न सज्जन्ति कथञ्चन ॥**

गङ्गाधरः—अथ स्नेहानन्तर्य्यात् स्वेदस्य विधानमुपदेष्टुमारभते—अथात इत्यादि। पूर्व्वाध्यायवद्व्याख्येयम् ॥ १ ॥

गङ्गाधरः अत इत्यादि। "स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरम्" इत्यतो हेतोः स्नेहानन्तरं ते स्वेदाः प्रवक्ष्यन्ते, यैः स्वेदैर्यथावत्प्रयोजितैः स्वेदसाध्या वातकफात्मका गदाः प्रशाम्यन्ति। न हि सर्व्वे वातकफात्मका गदा यथावत् प्रयोजितैः स्वेदैः प्रशाम्यन्ति। कषायमद्यनित्यादीनामस्वेद्यत्वेन वक्ष्यमाणानां वातकफात्मगदशान्त्यभावात्। तत उक्तं स्वेदसाध्या इति। अयथावत् प्रयोगेण पित्तप्रकोपमूर्च्छादिसम्भवादुक्तं यथावत् प्रयोजितैरिति। वातकफात्मका वातात्मकाः कफात्मका वातकफात्मकाश्चेति व्यस्तसमस्ताः।

स्वेदाशिषमाह,—यथा वातकफात्मकं गदं प्रशमयति स्नेहपूर्व्वमित्यादि। प्रयुक्तेनेत्यस्याः क्रियाया विशेषणं स्नेहपूर्व्वम्। न सज्जन्ति पुरीषादीनि शरीराभ्यन्तरे संसक्तानि न भवन्ति, विबन्धकवातावजयात्। केवलकफजे च प्रेरकवातजयाच्च।

चक्रपाणिः—स्नेहपूर्व्वकत्वात् स्वेदस्य स्वेदाध्यायोऽभिधीयते ; स्वेदप्रतिपादकोऽध्यायः स्वेदाध्यायः। वातकफात्मका असंसृष्टवातकफजाः ; वातकफजत्वेऽप्युदरादयः स्वेदेन न शाम्यन्ति, अत आह—"स्वेदसाध्याः" ; एतेनोदरादयोऽस्वेद्या व्यावर्त्त्यन्ते।

स्नेहपूर्व्वमिति क्रियाविशेषणं। न सज्जन्ति अप्रवृत्तानि न भवन्ति। यथान्यायं यथागमम्,

शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः।
नमयन्ति यथान्यायं किं पुनर्जीवतो नरान् ॥ २ ॥
रोगर्त्तुव्याधितापेक्षो नात्युष्णोऽतिमृदुर्न च।
द्रव्यवान् कल्पितो देशे स्वेदः कार्य्यकरो मतः ॥
व्याधौ शीते शरीरे च महान् स्वेदो महाबले।
दुर्ब्बले दुर्ब्बलः स्वेदो मध्यमे मध्यमो हितः ॥ ३ ॥

वातकफजे व्याधौ स्नेहस्वेदोत्कृष्टत्वं दर्शयति शुष्काण्यपीत्यादि। हि यस्मात् शुष्काण्यपि काष्ठानि जीवहीनानि नीरसानि दृढानि स्नेहक्रियापूर्व्वक-स्वेदनक्रिययोपपादनैर्यथान्यायं क्रमेणासहसा पुरुषा नमयन्ति। वक्राणि ऋजूकुर्व्वन्ति ऋजूनि च वक्राणि कुर्व्वन्ति। जीवितान् नरान् सरसान् मृदूंश्च पुनर्यत् स्नेहपूर्व्वकस्वेदरूपपादितान् वैद्या नमयन्ति तत्र किं वैचित्र्यमिति ॥२॥

गङ्गाधरः—कीदृशोऽयं कार्य्यं कुरुत इति? अत आह रोगेत्यादि। रोगापेक्ष ऋतुविशेषापेक्षो व्याधितपुरुषापेक्षश्च। नात्युष्णो नातिमृदुश्च तत्तद्रोगहरद्रव्यैः कल्पितः स्वेदः स्वेद्ये देशे कृतः कार्य्यकरश्चोक्तः। तत्र नात्युष्णो नातिमृदुरिति यदुक्तं तत्र विशेषमाह व्याधावित्यादि। शीते व्याधौ शरीरे च शीते महाबले पुरुषे महास्वेदस्तच्छरीरसह्यत्वेनासह्योष्णभिन्नः स्वेदः कार्य्यः। तथा शीते व्याधौ शीते च शरीरे दुर्ब्बले पुरुषे दुर्ब्बलः स्वेदो हितः। एवं शीते व्याधौ शीते च शरीरे मध्यमबले पुरुषे मध्यमः स्वेदो हितः ॥ ३ ॥

पुनश्च स्नेहस्वेदोपपादनैरित्यनेन संबध्यते। यदि वा यथान्यायं यथासहजं नमयन्तीति सम्बन्धः ॥ १।२ ॥

चक्रपाणिः—रोगर्त्तु व्याधितश्च बलवत्त्वादिनापेक्षत इति रोगर्त्तुव्याधितापेक्षः। नात्युष्णो नातितीव्रतापः, द्रव्यवानिति स्निग्धद्रव्यादिद्रव्यवान्, कल्पित इति रोगादीनपेक्ष्य यथोचितेन द्रव्येण, देशे आमाशयादौ यथायोग्यतया सम्पादित इति मन्तव्यम्।

रोगाद्यपेक्षयोक्तकल्पनां दर्शयति—व्याधावित्यादि। व्याधौ महाबले तथा शीते कालकृते महाबले, महानिति बहुतापः एव पुनःपुनः क्रियमाणत्वेन मृदुस्वेदापेक्षयाऽधिकतापत्वेन ज्ञेयः;

वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते ।
स्निग्धरूक्षस्तथा स्निग्धो रूक्षश्चाप्युपकल्पितः ॥
आमाशयगते वाते कफे पक्वाशयाश्रिते ।
रूक्षपूर्व्वो हितः स्वेदः स्नेहपूर्व्वस्तथैव च ॥
वृषणौ हृदयं दृष्टी स्वेदयेन्मृदु वा न वा ।
मध्यमं वङ्क्षणौ शेषमङ्गावयवमिष्टतः ॥

गङ्गाधरः अथ स्वेदविषयानाह वातश्लेष्मणीत्यादि । स्वेदस्योष्णत्वात् शीतगुणे वातश्लेष्मणि रोगे स्निग्धरूक्षद्रव्यैरुपकल्पितः स्निग्धरूक्षः स्वेद इष्यते । वाते वा केवलवाते स्निग्धद्रव्यैरुपकल्पितः स्निग्धः स्वेद इष्यते । कफे वा केवलकफे रूक्षः स्वेदश्च रूक्षद्रव्यैरुपकल्पित इष्यते ।

तत्र वाते स्निग्धः कफे रूक्षः स्वेद इति यदुक्तं तत्रापवादमाह आमाशयेत्यादि । आमाशयेति कफस्थानमात्रोपलक्षणम् । पक्वाशयेति वातस्थानोपलक्षणम् । तेन कफस्थानगते वाते रूक्षपूर्व्वः स्वेदो हितः । पूर्व्वं कफानहितत्वात् स्नेहकर्म न कृत्वा रूक्षन्तु कफाहितत्वात् कृत्वा पश्चाद्वाताहितत्वात् स्निग्धः स्वेदो हितः । वातस्थानाश्रिते कफे स्नेहपूर्व्वः स्वेदो हितः । पूर्व्वं वातस्थानानुरोधात् स्नेहकर्म कृत्वा वाताहितत्वाद् रूक्षञ्च न कृत्वा पश्चात् कफाहितत्वाद् रूक्षः स्वेदो हितः कार्य्यः । इति । उक्तञ्च "स्थानं जयेद्धि पूर्व्वं तु स्थानस्थस्याविरुद्धतः" इति ।

अथ यत्र यत्र स्वेदः कार्य्यो न कार्य्यस्तथा यथा कार्य्यस्तदाह वृषणौ

दृष्टी इति च तथा मध्यम इति च वङ्क्षणादिषु पूर्व्ववद्योजनीयं. स्निग्धरूक्षद्रव्यकृतः स्निग्धरूक्षः, स्निग्धरूक्षद्रव्यादयो वातश्लेष्मादिषु यथासंख्यं मन्तव्याः । पुनश्च स्निग्धरूक्षादिकथनं द्रव्यापेक्षकल्पनोदाहरणम् । वाते स्निग्धः, कफे रूक्षः ।

तं देशविशेषसम्बन्धेन व्यभिचारयन् देशापेक्षाञ्च कल्पनामाह आमाशयेत्यादि । आमाशयगते वाते रूक्षपूर्व्वश्च स्थानापेक्षया रूक्षं कृत्वा पश्चाद् वातापेक्षः स्निग्धः कार्य्यः, एवं पक्वाशयगते कफे स्नेहपूर्व्वो व्याख्येयः । आमाशयशब्देन कफस्थानं ज्ञेयं, कफस्थानापेक्षया हि प्रथमं रूक्षः क्रियते. यदुक्तम् "स्थानं जयेद्धि पूर्व्वन्तु स्थानस्थस्याविरुद्धतः" इति ।

मृद्विति । स्वेदैकसाध्ये वृषणादिगते व्याधौ मृदुस्वेदः, प्रतिक्रियोपायान्तरसम्भवे तु न वेति बोद्धव्यम्, इष्टत इत्यानुरूप्येणाभ्यो वैद्येच्छातश्च । इष्टत इति भावक्तादिच्छावचनः ।

सुशुद्धैर्लक्तकैः * पिण्ड्या गोधूमानामथापि वा।
पद्मोत्पलपलाशैर्वा स्वेद्यः संवृत्य चक्षुषी॥
मुक्तावलीभिः शीताभिः शीतलैर्भाजनैरपि।
जलार्द्रैर्जलजैर्हस्तैः स्विद्यतो हृदयं स्पृशेत्॥ ४॥
शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे।
सञ्जाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता॥ ५॥

इत्यादि। स्वेदैकसाध्यवृषणहृदयदृग्गते व्याधौ मृदु मृदुतापेन स्वेदयेत्। वृषणादीनि। विना स्वेदं क्रियान्तरसाध्ये व्याधौ वृषणादीनि न वा स्वेदयेत्। वंक्षणस्थे व्याधौ वंक्षणौ मध्यमं मध्यमतापेन स्वेदयेत्। पश्चात् शेषमङ्गावयवमातुरस्येष्टतः स्वेदयेत्।

ननु वृषणादिषु मृदुस्वेदं कैर्द्रव्यैः कुर्य्यादिति? अत आह—सुशुद्धैरित्यादि। सुशुद्धैः शुक्लादिदूषकद्रव्यरहितैः। लक्तकैर्लक्तकवल्कैः। गोधूमानां पिण्ड्या वा। पद्मोत्पलान्यतरस्य पत्रैर्वा चक्षुषी संवृत्य स्वेदः कार्यः।

हृदयं यदि मृदुस्वेद्यं तर्हि कथं स्वेदयेदिति? अत आह—मुक्तावलीभिरित्यादि। मुक्तावली बहुमुक्ता ग्रथिताः श्रेणीभवन्ति। ताभिः पुनःपुनर्जलादिना चक्षुष्यद्रवेण वा सेचनेनार्द्रीकृत्य शीतीकृताभिर्मुक्तावलीभिरुष्णीकृत्य स्विद्यतो जनस्य हृदयं स्पृशेत्। अथवा मृदु यथा स्यात् तथा स्वेदनद्रव्येण स्विद्यतो जनस्य हृदयं मुक्तावलीभिः शीताभिः स्पृशेत्। अथवा शीतलैः कांस्यादीनां भाजनैर्हृदयं स्पृशेत्। अथवा स्विद्यतो जनस्य हृदयं जलार्द्रैर्जलजैः पद्मादिभिः स्पृशेत्। अथवा जलार्द्रहस्तैः स्पृशेदिति। वृषणस्वेदमुक्तत्वात् हृदयस्वेदवद् बोध्य इति। प्राधान्याद्वा हृदयपदोपादानं वृषणोपलक्षणात्॥४॥

गङ्गाधरः—ननु कियन्तं कालं स्वेदयेत्? अत आह—शीतशूलेत्यादि। शीतापगमेऽपि शूलं वर्त्तते इति। शीतशूलयोरुभयव्युपरमे इति। तथा सति

स्वेदे क्रियमाणे चक्षुषः संरक्षणोपायमाह—सुशुद्धैरित्यादि। नक्तकः कर्पटावयवः। स्वेदे क्रियमाणे हृदयरक्षणार्थमाह—मुक्तावलीत्यादि। जलजानि पद्मादीनि। एवमन्येषामव-सामान्यत्वात् वृषणरक्षाप्युन्नेतव्या, प्राधान्यात् हृदय-चक्षुःपालनमुक्तम्॥ ३।४॥

चक्रपाणिः—शीतशूलेत्यादौ स्वेद इति स्वेदभवे धर्मे, स्वेदनाद् विरतिर्मतेत्युपदिशन् शीतादि-व्युपरमे सति स्वेदो निवर्त्तनीयः, शीताद्यनुपरमे च स्वेदः कर्त्तव्य इति द्वयमुपदिशति। तत्र इह

* नक्तकैरिति चक्रपाणिसम्मतः पाठः।

पित्तप्रकोपो मूर्च्छा च शरीरसदनं तृषा ।
दाहः स्वेदाङ्गदौर्ब्बल्यमतिस्विन्नस्य लक्षणम् ॥
उक्तस्तस्याशितीये यो ग्रैष्मिकः सर्व्वशो विधिः ।
सोऽतिस्विन्नस्य कर्त्तव्यो मधुरः स्निग्धशीतलः ॥ ६ ॥
कषायमद्यनित्यानां गर्भिण्या रक्तपित्तिनाम् ।
पित्तिनां सातिसाराणां रूक्षाणां मधुमेहिनाम् ॥

स्तम्भगौरवे च वर्त्तेते इत्यत आह—स्तम्भगौरवनिग्रहे इति। एवं सति यावत् न शरीरं मृदु स्यात् तावत् स्वेदयेत्। शरीरस्य मार्दवे च सञ्जाते दोषस्य अविनिर्गमे स्वेदनो विरामे पुनः शीतशूलादिसम्भवः स्यात्। अत उक्तं—स्वेदे सञ्जाते घर्म्मे सम्यग्जाते स्वेदनादिरतिविरामो मतः इति स्वेदस्य सम्यग्योगलक्षणम्। अतिस्वेदलक्षणमप्यनेन ज्ञापितम्। शीतशूलव्युपरमाभावे स्वेदनादिरतिरसम्यग्योगलक्षणम्। स्वेदमिथ्यायोगलक्षणमप्यन्यथा स्वेदकरणमिति तयोर्लक्षणं स्वयं मुक्तकण्ठेनोक्तम् ॥ ५ ॥

गङ्गाधरः—अथातिस्वेदलक्षणमाह—पित्तप्रकोप इत्यादि। स्वेदाङ्गदौर्ब्बल्यमिति स्वेदातिप्रवृत्त्याङ्गदौर्ब्बल्यमिति अतिस्विन्नस्य लक्षणम्।

अस्यातिस्वेदस्यापचिकित्सामाह—उक्त इत्यादि। तस्याशितीयेऽध्याये यो ग्रैष्मिको विधिरुक्तः स विधिः सर्व्वशो यावानेव खलु मधुरः स्निग्धः शीतलश्च तावानेवातिस्विन्नस्य कर्त्तव्यः। न तु मद्यमल्पं न वा पेयमथवा सुबहूदकमिति यथाविधिः कर्त्तव्यः ॥ ६ ॥

गङ्गाधरः—अथ किं सर्व्वानेव पुरुषान् वातश्लेष्मणि वाते वा कफे वा स्वेदयेदिति? अत आह—कषायमद्यनित्यानामित्यादि। कषायनित्यादीनां

एव स्वेदनिवृत्तिविषयशीतादिव्युपरमोत्पादः स्वेदस्य सम्यग्योगलक्षणं तथा शीतादिव्युपरमानुत्पादश्च स्वेदानिवृत्तिविषयो योगलक्षणमुक्तं भवतीति नायोगलक्षणानभिधानमुद्भावनीयम् ॥५॥

चक्रपाणिः—अतिस्विन्नचिकित्सितमाह—उक्त इत्यादि। ग्रैष्मिकविधिरित्यनेन लब्धे पुनर्मधुरः शीतल इत्यादिवचनम्, मद्यमल्पं न वा पेयम् इत्यत्रोपदिष्टमद्यपानस्य प्रतिषेधार्थं मधुरशीतादियोगविशेषविधानार्थञ्च ॥ ६ ॥

चक्रपाणिः—अस्वेद्यानाह—कषायेत्यादि। कषायद्रव्यकृतं मद्यं कषायमद्यम्, किंवा कषायशब्दोऽमधुरवचनः, तेन, मद्यपाने कषायनित्यस्य वातप्रधानता स्यात् कषायस्य वातकारित्वात्,

विदग्धभ्रष्टब्रध्नानां विषमद्यविकारिणाम् ।
श्रान्तानां नष्टसंज्ञानां स्थूलानां पित्तमेहिनाम् ॥

पुंसां वातश्लेष्मजे वाते कफे वा न स्वेदमवचारयेत् । कषायनित्याः पाचनादिकषायाणां नित्यसेविनः । मद्यनित्याः सततमद्यसेविनः । रक्तपित्तिप्रभृतीनां वमनविरेचने कर्त्तव्ये संशोधनीयस्वेदत्वेऽपि प्रतिषेधोऽयम् । पित्तिनामिति पित्तप्रकृतीनां पित्तव्याधिमताञ्च । सातिसाराणामतिसारवताम् । मधुमेहिनामिति सर्व्वमेहिणां विशेषेण मधुमेहिनाम् । प्रमेहस्य देहशैथिल्यीकरत्वेन प्रमेहकृतशैथिल्यदेहस्य पुनर्देहशैथिल्यीकरस्वेदो न युक्तः स्यात् । पित्तमेहिनामिति यत् पुनरुक्तं तत् पित्तसम्बन्धे विशेषेण प्रतिषेधार्थमिति कश्चित् । तन्न तन्त्रकर्त्तुरभिप्रेतम् । मेहिनामिति करणेनैव सिद्धेः । तस्मात् मधुमेहिनामिति ओजःसंसृष्टवायुजमधुमेहिनां कार्श्येनापतिकृतत्वे वायुना मधुरस्यौजसः प्रदुष्टा मधुरत्वापन्नमुत्रमेहवतां स्वेदेन पुनरोजसो द्रवीभावेणाधिकक्षरणसम्भवे प्रतिषेधोऽयम् । पुनः पित्तमेहिनां स्वेदप्रतिषेधः । शेषाणां कफपित्तादिमेहानां सर्व्वेषां स्वेदप्राप्तौ कृत इति तत्त्वम् । विदग्धभ्रष्टब्रध्नानाम् । ब्रध्नं गुदं विदग्धं पक्वं भ्रष्टं वाहिर्निर्गतं वा येषां तेषां पक्वगुदवर्त्तीनां गुदभ्रंशवताञ्च । मद्यनित्यानामित्युक्त्या मद्यामयकृतसर्व्वव्याधिषु प्रतिषेधो मद्यनित्यानां कृतः । पुनर्मद्यविकारिणामिति वचनेनानित्यमद्यानां मद्यकृतविकारे स्वेदप्रतिषेधः कृतः । श्रान्तानां श्रमवताम् । नष्टसंज्ञानाम्

वाते च स्वेदो विहित एव, तत् कथं कषायनित्यं प्रति स्वेदनिषेध इति, तन्निरस्तं स्यात् ; किंवा, कषायनित्या रूक्षानिलस्वधातवो भवन्ति कषायस्य विष्टम्भकस्तम्भकत्वेन तनश्च तेषां स्वेदः सर्व्वभेदसावहतीत्यतः कषायनित्यनिषेधः । रक्तपित्तिनामभिधानादेव स्वेदे निषिद्धे पुनः स्वेदनिषेधो रक्तपित्तिनां यद्यन्योऽपि स्वेदसाध्यो वातश्लेष्मजो विकारो भवति तथापि स्वेदनिषेधार्थं तथा रक्तपित्तिनां वमनविरेचनाङ्गतया प्राप्तस्वेदप्रतिप्रसवनिषेधार्थञ्च, एवं पित्तमेहिकामल्यादिष्वपि व्याख्येयम् । पित्तिनामिति पित्तप्रकृतीनां, मधुमेहशब्देन सर्व्व एव मेहा गृह्यन्ते ; मधुमेहशब्दो हि सर्व्वेष्वेव मेहेषु वर्त्तते इति कथयन्नाचार्य्योऽपि दर्शितोऽयम्, मेहेषु च सर्व्वेष्वेव शरीरशैथिल्यप्रवृत्तेषु विशेषतः शरीरशैथिल्यहेतुत्वेन स्वेदो न युज्यते ; पित्तमेहिनामिति तु पुनरभिधानं पित्तसम्बन्धेन विशेषप्रतिषेधसाधनार्थम् ; ब्रध्नो गुदः, मद्यविकारिणामिति मद्यनित्यस्य वात-

तृष्यतां क्षुधितानाञ्च क्रुद्धानां शोचतामपि।
कामल्युदरिणाञ्चैव क्षतानामाढ्यरोगिणाम्॥
दुर्व्वलातिविशुद्धाना*मुपक्षीणौजसां तथा।
भिषक् तैमिरिकाणाञ्च न स्वेदमवतारयेत्॥ ७॥
प्रतिश्याये च कासे च हिक्काश्वासेष्वलाघवे।
कर्णमन्याशिरःशूले स्वरभेदे गलग्रहे॥
अर्दितैकाङ्गसर्व्वाङ्ग-पक्षाघाते विनामके।
कोष्ठानाहविबन्धेषु शुक्राघाते विजृम्भके॥
पार्श्वपृष्ठकटीकुक्षि-संग्रहे गृध्रसीषु च।
मूत्रकृच्छ्रे महत्त्वे च मुष्कयोरङ्गमर्दके॥
पादोरुजानुजङ्घार्त्ति-संग्रहे श्वयथावपि।
खल्लीष्वामेषु शीते च वेपथौ वातकण्टके॥

अक्षानानाम्। क्षतानाम् व्रणवताम् रक्तदुष्टिभयात् प्रतिषेधः। आढ्यरोगिणां वातरक्तरोगवताम। एषां स्वेदैकसाध्ये महात्ययकारिणि व्याधौ स्वेदो न प्रतिषेध्यः। प्रबलात्ययापेक्षया स्वल्पात्ययदोषादेषां स्वेदे। उक्तं च—"भूयोविरोधे स्वल्पमप्यन्याय्यमिष्टम्।" इति॥ ७॥

गङ्गाधरः—स्वेदप्रतिषेधमुक्त्वा स्वेद्यानाह प्रतिश्याये चेत्यादि। अलाघवं देहगौरवे। विनामके देहविनमनकारिणि दण्डापतानकादिव्याधौ। विजृम्भके बहुजृम्भणे। पार्श्वादीनां संग्रहे वेदनायाम। अङ्गमर्दके सर्व्वाङ्गमर्दे। पादादीनामार्त्तौ रुजायां तेषां संग्रहे विमर्दे च। खल्लीषु करपादादौ विमोटन-

कफजमदात्यये स्वेदनिषेधार्थम्। आढ्यरोगोऽत्र वातरक्तम्। एषु चास्वेद्यविषयेषु यदि स्वेदैकसाध्यः सन्न्यासादिर्भवति तदा महाप्रत्यवायभयादल्पप्रत्यवायमुपेक्ष्यापि स्वेदो विधेय इति न्यायसिद्धमेव, यदाहुर्न्यायविदः "यद् भूयोविरोधे स्वल्पमन्याय्यम्" इति॥ ७॥

चक्रपाणिः—प्रतिश्याये चेत्यादिना स्वेद्यान् दर्शयति। विनामकः शरीरविनमनकारी वातः, विजृम्भको बहिरायामः, जृम्भाबहुत्वं वा; पादजानूरुजङ्घाभिरार्त्तिः संग्रहश्च पृथक् संबध्यते,

* अतिविशुष्काणामिति चक्रः।

सङ्कोचायामशूलेषु स्तम्भगौरवसुप्तिषु ।
सर्व्वाङ्गेषु विकारेषु स्वेदनं हितमुच्यते ॥ ८ ॥
तिलमाषकुलत्थाम्ल-घृततैलामिषौदनैः ।
पायसैः कृशरैर्मांसैः पिण्डस्वेदं प्रयोजयेत् ॥
गोखरोष्ट्रवराहाश्व-शकृद्भिः सतुषैर्यवैः ।
सिकतापांशुपाषाण-करीषायसपुटकैः ॥
श्लैष्मिकान् स्वेदयेत् पूर्व्वैर्वातिकान् समुपाचरेत् ॥ ९ ॥

रूपासु । आमेऽपक्वान्नदोषजविसूचिकादिषु । वातकण्टके गुल्फाश्रितवातरोगविशेषे । सङ्कोचे वातव्याधिविशेषे शरीराकुञ्चनकारिणि वातरोगे । आयामोऽन्तरायामो वातरोगः । शूलं गुल्मादिजं तेषु । स्तम्भः शरीरचालनशक्तिनाशिरोगः । गौरवं देहस्य स्तम्भकृतमेव तेनास्य वचनं न पुनरुक्तम् । सुप्तिः स्पर्शाज्ञानम् । सर्व्वाङ्गेषु विकारेषु ज्वरादिषु वातश्लेष्मादिषु स्वेदनं हितमुच्यते । इति ॥ ८ ॥

गङ्गाधरः अथ स्वेदद्रव्याण्याह तिलेत्यादि । तिलादिभिः स्वेदो वाते स्निग्धस्वेदः । अन्नं भक्तमोदनः पुनरामिषरसकृतः । कृशरस्तिलमाषकृता यवागूः । पिण्डस्वेदम् एतेषां प्रत्येकं पिण्डाकारं कृत्वा स्वेदं प्रयोजयेदिति स्निग्धस्वेदद्रव्याणि ।

अथ रूक्षस्वेदद्रव्याण्याह गोखरेत्यादि । गवादीनां शकृद्भिरार्द्रैः सतुषयवैः पिण्डैः । सिकतादीनां पुटकैः पोट्टलीकृतैः । करीषं शुष्कगोमयादिकमतो न पुनरुक्तम् । आयसं क्षुद्रीकृतलौहम् । एभिर्गोखरादीनां शकृदादिभिः श्लैष्मि-

[illegible]ल्ली हस्तपादावमोटनम्, वातकण्टको गुल्फाश्रितो वातः, [illegible] इति पूर्व्वमुक्तोऽपि पुनर्गौरववचनमङ्गानां गुरुत्वप्रतिपादनार्थम्, [illegible] नातिगुरुत्व [illegible] यतः, सर्व्वत्र तत् विरुद्धं न वर्त्तते, यतः, "[illegible]" इत्यत्र न रूक्षशब्देन स्निग्धत्वमभिधीयते, किं तर्हि ? रूक्षताप्रतिषेधमात्रमेव ॥ ८ ॥

चक्रपाणिः— वक्ष्यमाणानां सङ्करादिस्वेदानां द्रव्याण्याह — तिलमाषेत्यादि । पिण्डरूपः स्वेदः पिण्डस्वेदः । करीषः शुष्कगोमयः ; आयसः अयोविकारः, स चेह पुटकरणयोग्यो बोद्धव्यः ; पूर्व्वैरिति तिलमाषादिभिः । यथासंख्यमित्यनेन तिलमाषादयो वाते, गोखरादिमन्त्योक्ताश्च श्लेष्मणि

द्रव्याण्येतानि शस्यन्ते यथास्वं प्रस्तरेष्वपि ॥
भूगृहेषु च जेन्ताकेष्णगर्भगृहेषु च ।
विधूमाङ्गारतप्तेष्वभ्यक्तः स्विद्यति ना सुखम् ॥ १० ॥
ग्राम्यानूपौदकं मांसं पयो बस्तशिरस्तथा ।
वराहमध्यपित्तासृक् स्नेहवत्तिलतण्डुलाः ॥
इत्येतानि समुत्क्वाथ्य नाडीस्वेदं प्रयोजयेत् ।
देशकालविभागज्ञो युक्त्यपेक्षो भिषक्तमः ॥ ११ ॥

कान् व्याधीन् स्वेदयेत्। रूक्षस्वेदत्वात्। श्लैष्मिकानित्यादि। पूर्व्वं तिलादीनां पिण्डैर्वातिकान् विकारान् स्वेदयेत् स्निग्धत्वात्। वातश्लैष्मिकान् विकारांस्तु द्वाभ्यामेताभ्यां मिलिताभ्यां स्वेदयेदिति। पिण्डस्वेद एव सङ्करस्वेद उच्यते। अथैषां द्रव्याणां प्रस्तरेऽपि स्वेदमतिदिशति द्रव्याणीत्यादि। एतानि तिलादीनि द्रव्याणि प्रस्तरेष्वपि यथास्वं वातिके तिलादीनि श्लैष्मिके गोखरादिशकृदादीनि वातश्लैष्मिके तदुभयानि शस्यन्ते।

प्रस्तरस्वेदो विवक्ष्यते। तथान्येषु येषु यानि शस्यन्ते तदाह—भूगृहेष्वित्यादि। एतान्यत्र तिलादीनि द्रव्याणि नेहानुवर्त्तन्ते। कस्मादिति? अत आह—विधूमाङ्गारतप्तेष्विति। येषां काष्ठानां वातहरत्वं तेषां काष्ठानां विधूमाङ्गारतप्तेषु भूगृहादिषु वातिको ना तैलाभ्यक्तः सुखं स्विद्यति। तथा कफहरकाष्ठानां विधूमाङ्गारतप्तेषु भूगृहादिषु श्लैष्मिको ना तैलाद्यभ्यक्तः सुखं स्विद्यति। ताभ्यामुभाभ्यां काष्ठाभ्यां विधूमाङ्गारतप्तेषु भूगृहादिषु वातश्लैष्मिको ना तैलाद्यभ्यक्तः सुखं स्विद्यति। इति विधूमाङ्गारपदेन तद्योग्यकाष्ठानि स्निग्धरूक्षस्वेदद्रव्याणि ख्यापितानि ॥ १० ॥

गङ्गाधरः अथान्यस्वेदद्रव्याण्याह ग्राम्येत्यादि। बस्तशिरश्छागमस्तकम्। वराहस्य मध्यदेहः। पित्तञ्चासृक् च स्नेहवत् यावद्बीजमेरण्डबीजादिकं तत्र प्राधान्यान्निस्तुषीकृत्य ग्रहणार्थं पृथगुक्तं तिलतण्डुला इति। इत्येतानि ग्राम्यमांसादीनि यथायोग्यं वातिके स्वेदनार्थमुत्क्वाथ्य नाडीस्वेदं प्रयोजयेत्। स यो भिषक्तमो देशादिविभागज्ञः स्यात् ॥ ११ ॥

प्रस्तरस्वेदे कर्त्तव्या इति दर्शयति। भूस्वेदार्थेषु गृहेषु भूगृहेष्विति; उष्णगर्भगृहेष्विति कुटीस्वेदं दर्शयति. अभ्यक्त इति सम्यगभ्यक्तः। बस्तशिरश्छागमस्तकम्। स्नेहवन्तश्चैरण्डबीजादयः तिलाश्च

वारुणामृतकैरण्ड-शिग्रु मूलकसर्षपैः।
वासावंशकरञ्जार्क-पत्रैरश्मन्तकस्य च ॥
शोभाञ्जनकशैरीय-मालतीसुरसार्ज्जकैः।
पत्रैरुत्क्वाथ्य सलिलं नाड़ीस्वेदं प्रयोजयेत् ॥
भूतीकपञ्चमूलाभ्यां शैरीयैः * दधिमस्तुना।
मूत्रैरम्लैश्च सस्नेहैर्नाड़ीस्वेदं प्रयोजयेत् ॥ १२ ॥
एत एव च निर्य्यूहाः प्रयोज्या जलकोष्ठके।
स्वेदनार्थं घृतक्षीर-तैलकोष्ठांश्च कारयेत् ॥ १३ ॥

गङ्गाधरः—अन्यान्यपि नाड़ीस्वेदद्रव्याण्याह—वारुणेत्यादि। वरुण एव वारुण इति। अमृतकं गुड़ूची। शिग्रुः शोभाञ्जनः। मूलकं मूलकबीजम्, सर्षपसाहचर्य्यात्। वासा वासकः। वंशो वेणुः। करञ्जो गोकरञ्जः। अर्कः श्वेतो रक्तश्च। एषां वासादीनां पत्रैरश्मन्तकस्य पाषाणभेदस्य चाङ्गेर्य्या वा पत्रैरित्यन्वयः। शोभाञ्जनकः रक्तशोभाञ्जनोऽथवा किञ्चित् स्थूलफलः शोभाञ्जनकः। सुरसार्ज्जकौ द्वौ पर्णासभेदौ। एषां वरुणादीनां यथार्ह लक्पत्रादिभिरुत्क्वाथ्य देशकालविभागज्ञो भिषक्तमो युक्त्यपेक्षः नाड़ीस्वेदं प्रयोजयेत्। एवमन्यान्यपि द्रव्याणि नाड़ीस्वेदस्याह भूतीकेत्यादि। भूतीको यमानी। पञ्चमूलं महत् वातकफहरत्वात्। शैरीयो झिण्टी। दध्नो मस्तु दधिमस्तु। मूत्रैरष्टभिः पूर्व्वोक्तैः। अम्लैरम्लवर्गैः। स्नेहैर्घृत-तैलादिभिः सह उत्क्वाथ्य वातश्लेष्मके नाड़ीस्वेदं प्रयोजयेत् देशादिविभागज्ञो भिषक्तम इति योज्यम्। क्रमेण त्रिविधविभागेनोक्त्या वातिकादिक्रमोक्त-विकारेषु क्रमेण त्रय एते नाड़ीस्वेदा इति ख्यापितम् ॥ १२ ॥

गङ्गाधरः—एषामतिदेशञ्चान्यत्राप्याह—एत इत्यादि। एते ग्राम्यमांसादि-क्वाथादयस्त्रयो निर्य्यूहाः क्रमाद्वातिकादिषु व्याधिषु जलकोष्ठके स्वेदे प्रयोज्या

तण्डुलाश्च स्नेहवन्तिस्तण्डुलाः। ग्राम्येत्यादिना वातापहो नाड़ीस्वेद उक्तः, वारुणेत्यादिना कफापहः, भूतीकेत्यादिना वातश्लेष्मापहः। वारुणः वरुणः, अमृतका गुड़ूची, सर्षपैरित्यत्र पत्रैरिति संबध्यते, वंशो वेणुः, पुनः शोभाञ्जनग्रहणात् द्वितीयो विटपशोभाञ्जनो गृह्यते शैरीयः झिण्टी।

* सुरसेति वा पाठः।

गोधूमशकलैश्चूर्णैर्यवानामम्लसंयुतैः।
सस्नेहकिण्वलवणैरुपनाहः प्रशस्यते ॥
गन्धैः सुरायाः किण्वेन जीवन्त्या शतपुष्पया।
उमया कुष्ठतैलाभ्यां युक्तया चोपनाहयेत् ॥
चर्म्मभिश्चोपनद्धव्यः सलोमभिरपूतिभिः।
उष्णवीर्य्यैरलाभे तु कौशेयाविकशाटकैः ॥

दशादिविभागशः। न केवलं जलकोष्ठस्वेदः। कोष्ठान्तरञ्चाह स्वेदनार्थमित्यादि। घृतादीनां कोष्ठांश्च स्वेदनार्थं कारयेदिति। ग्राम्यमांसादिक्वाथेन पक्वघृताद्यन्यतमकोष्ठं वाते। वरुणादिक्वाथे पक्वघृताद्यन्यतमकोष्ठं श्लैष्मिके। भूतीकादिक्वाथे पक्वघृताद्यन्यतमकोष्ठं वातश्लैष्मिके कारयेदिति ॥ ३३ ॥

<u>गङ्गाधरः</u> अथोपनाहस्वेदद्रव्याण्याह गोधूमेत्यादि। गोधूमशकलैर्गोधूमानां सूक्ष्मसूक्ष्मखण्डैर्यवानां चूर्णैरम्लकाञ्जिकादियुक्तैः सस्नेहैः सकिण्वैर्मद्यकिट्टसहितैर्लवणैरुपनाहः स्वेदार्थं बहलमुपलेपं कृत्वा बन्धनं प्रशस्यते इति वातिके। कफे त्वपरञ्चाह—गन्धैरित्यादि। गन्धैः सुगन्धिद्रव्यैश्चन्दनागुरुपत्रादिभिः सुराकिट्टेन युक्तया जीवन्त्या शतपुष्पया च कफे उपनाहयेत्। वातकफे तु कुष्ठतैलाभ्यां युक्तया उमया चोपनाहयेत्। बहलमुष्णं लेपयित्वा बध्नीयात्। इति।

अतोऽनन्तरमुक्तेन स्वेदे प्रलेपद्रव्याण्युक्त्वात्र बन्धनद्रव्याण्याह—चर्म्मभिरित्यादि। अपूतिभिः पूतिगन्धवर्ज्जितशुष्कैश्चर्म्मभिः सलोमभिरुष्णवीर्य्यगोधूमादिना बहलप्रलेपं दत्त्वोपनद्धव्यः बन्धनीयः। ईदृशचर्म्मणोऽलाभे तु कौषेयशाटकैः क्रिमिकीटकृतकोषसम्भवसूत्रनिर्म्मितवस्त्रैश्चाविकशाटकैः कम्बलैर्बन्धनीय इति।

एवं पूर्ववत् नाड्यादिस्वेदोपकरणोऽपि, जलकोष्ठोऽवगाहार्थं कृतं महज्जलपात्रम्, एवं घृतक्षीरतैलकोष्ठाश्च व्याख्याताः ॥ ९—१३ ॥

<u>चक्रपाणिः</u>—गोधूमशकलैर्गोधूमचूर्णैः, किण्वः सुराबीजम्। उपनाहो बहलं लेपं दत्त्वा चर्म्मादिभिरावेष्ट्य व्याधियुक्तस्याङ्गस्य बन्धनम्; उपनाह प्रशस्यते इत्यत्र उपनाहोऽनग्निस्वेदो ग्राह्यः। गन्धैश्च सुगन्धिद्रव्यैरुपनाहो बन्धनीयः, उष्णवीर्य्यैरिति उष्णवीर्य्यानूपादिप्राणिचर्म्मभिः, आविकशाटकः कम्बलः।

रात्रौ बद्धं दिवा मुञ्चेत् मुञ्चेद्रात्रौ दिवाकृतम् ।
विदाहपरिहारार्थं स्यात् प्रकर्षस्तु शीतले ॥ १४ ॥
सङ्करः प्रस्तरो नाडी परिषेकोऽवगाहनम् ।
जेन्ताकोऽश्मघनः कर्षूः कुटी भूः कुम्भिकैव च ॥
कूपो होलाक इत्येते स्वेदयन्ति त्रयोदश ।
तान् यथावत् प्रवक्ष्यामि सर्व्वानेवानुपूर्व्वशः ॥ १५ ॥

तत्र वस्त्रान्तरितैरवस्त्रान्तरितैर्वा पिण्डैर्यथोक्तैरुपस्वेदनं सङ्करस्वेद इति विद्यात् ॥ १६ ॥

अथ बन्धनमोचनकालमाह रात्रावित्यादि । रात्रौ प्रलेपं दत्त्वा बद्धं दिवा मुञ्चेत् विदाहपरिहारार्थम् । एवं दिवाकृतं प्रलेपं दत्त्वा बन्धनं रात्रौ मुञ्चेत् विदाहपरिहारार्थम् । तस्य प्रकर्षस्तु शीतले काले हिमे शिशिरे च । इति ॥ १४ ॥

गङ्गाधरः अथ स्वेदानुपसंहरति सङ्कर इत्यादि । सङ्करादय इत्येते त्रयोदश स्वेदयन्ति । तांस्त्रयोदश स्वेदान् सर्व्वाननुपूर्व्वशः सङ्करादुक्तक्रमेण यथावद् येन प्रकारेण तेषां विधानं तथा प्रवक्ष्यामि ॥ १५ ॥

गङ्गाधरः अथैषां स्वेदानां नाम प्रकारानाह तत्रेत्यादि । तत्र सङ्करादिषु त्रयोदशसु स्वेदेषु मध्ये यथोक्तैस्तिलमाषादिभिः पिण्डैर्वाते । गोशकृदादिभिः पिण्डैः कफे । तद्गुणैर्मिश्रितैः पिण्डैर्वातकफे । वस्त्रान्तरितैरवस्त्रान्तरितैर्वा यथार्हमुष्णीकृतैरुपस्वेदनं सङ्करस्वेदः सङ्करेण स्वेद इति विद्यात् । (१) ॥ १६ ॥

उपनाहस्यैव बन्धमोक्षविधिं दर्शयति रात्रौ बद्धमित्यादि । दिवाकृतमित्यत्र बद्धमिति शेषः । विदाहो रक्तादिविदाहः, शीतले इत्यत्र काले इति शेषः । प्रकर्षं इत्याद् बन्धनकालस्यातिरिक्तकालत्वं बन्धनस्य ॥ १४ ॥

चक्रपाणिः सम्प्रति साग्निस्वेदानां लक्षणमभिधातुं सङ्करादीन् स्वेदान् नामतस्तावदुद्दिशति—सङ्कर इत्यादि । सङ्करादिस्वेदाश्चायुर्व्वेदपरम्परासिद्धाः, तत्र कश्चिन्नाडीस्वेदादौ नाड्या प्रणीयत इत्यन्वयोऽप्यनुसरणीयः, जेन्ताकादयश्चान्वर्थनिरपेक्षा एव ॥ १५ ॥

चक्रपाणिः—पिण्डैर्यथोक्तैरिति तिलमाषादिपिण्डैः, तथा गोखरादिमलपांशुपुटककरीषैश्च पिण्डैः ; स्वेदनमेवोपस्वेदनम् ॥ १६ ॥

शूकशमीधान्यपुलाकानां वेशवारपायसकृशरोत्कारिकादीनां वा प्रस्तरे कौषेयकाविकोत्तरप्रच्छदे पञ्चाङ्गुलोरुबूकार्कपत्रप्रच्छदे वा स्वभ्यक्तसर्वगात्रस्य शयानस्योपरि स्वेदनं प्रस्तरस्वेद इति विद्यात् ॥ १७ ॥

स्वेदद्रव्याणां पुनर्मूलफलपत्रशुङ्गवल्कादीनां* मृगशकुनिपिशितशिरःपदादीनामुष्णस्वभावानां वा यथार्हमम्ललवणस्नेहोपसंहितानां मूत्रक्षीरादीनां वा कुम्भ्यां बाष्पमनुद्वमन्त्याम्

गङ्गाधरः प्रस्तरस्वेदमाह शूकेत्यादि। शूकं धान्यम्। शालिषष्टिकाशुधान्ययवगोधूमादिकञ्च। शमीधान्यं मुद्गमाषादि। पुलाकस्तुच्छधान्यं तण्डुलहीनं निष्पन्नरूपम्। वेशवारः पारिभाषिकः 'निरस्थिपिशितं स्विन्नं पिष्टं गुडघृतान्वितम्। कणामरिचसंयुक्तं वेशवार इति स्मृतम्॥' कृशरा च तिलमाषकृता यवागूः। उत्कारिका माषादिकृतपाल्कः। आदिना तिलमाषादीनां पूर्वोक्तानां यथार्हमुष्णीभूतानां प्रस्तरे विस्तृतीकृते घने काष्ठादिविस्तारीभूते स्थाने स्थापिते कौषेयाविककम्बलेनोत्तरमुपरि प्रच्छाद्य शय्यारूपे कृते। अथवा पञ्चाङ्गुलादीनां पत्रैरुपरि प्रच्छाद्य शय्यारूपे कृते स्वभ्यक्तसर्वगात्रस्य तत्र शयानस्य यदुपस्वेदनं तत् प्रस्तरस्वेद इति विद्यात् (२) ॥१७॥

गङ्गाधरः अथ नाडीस्वेदप्रकारमाह स्वेदद्रव्याणामित्यादि। स्वेदद्रव्याणां स्वेदोपगानां दशानां मूलफलपत्रशुङ्गवल्कादीनाम्। तथात्र पूर्वोक्तानां ग्राम्यानूपौदकमांसादीनां वरुणादीनाञ्च तथा मृगशकुनिपिशितादीनामुष्णस्वभावानां वा यथार्हं यथादोषादिकमम्ललवणघृतादिस्नेहोपसंहितानामम्लादियुक्तानां मूत्रक्षीरादीनां गवादिमूत्राणां गव्यादिक्षीरदधिमस्तुतक्रादीनां तैः पूरितायां

चक्रपाणिः—पुलाकस्तुच्छधान्यकम्। उत्कारिका माषादिकृतमणिकोत्कारा कुलिकाभक्ष्यविशेषः, प्रस्तीर्य्यत इति प्रस्तरः शयनप्रमाणेन स्वेदवस्तूनां विस्तरणं, तस्मिन् प्रस्तरे कौषेयाविकोत्तरप्रच्छदे कौषेयाविकपिहित इत्यर्थः; पञ्चाङ्गुल एरण्डभेदः ॥ १७ ॥

चक्रपाणिः स्वेदेत्यादिना नाडीस्वेदमाह। स्वेदनद्रव्याणि स्वेदोपगणोक्तानि, इह च नाडीस्वेदकार्थमुक्तानि; शिरः पदो मस्तकम्; बाष्पमनुद्वमन्त्यामित्यनेन क्वथनकाले बाष्पो यथा न निर्याति तथा कर्त्तव्यमिति दर्शयति; अवकलितानां बाष्पं स्वेदकारकगात्रः सन् नाड्या उपहरेदिति

* मूलफलपत्रभङ्गादीनामिति चक्रपाणिधृतः पाठः।

उत्क्वथितानां नाड्या शरेषीकावंशदलकरञ्जार्कपत्रान्यतमकृतया गजाग्रहस्तसंस्थानया व्याममदीर्घया व्यामार्द्धदीर्घया* वा व्यामचतुर्भागाष्टभागमूलाग्रपरिणाहस्रोतसा सर्वतो वातहरपत्रसंवृतच्छिद्रया द्विस्त्रिर्वा विनामितया वातहरसिद्धस्नेहाभ्यक्तगात्रो बाष्पमुपहरेत्। बाष्पो ह्यनृजुगामी विहतचण्डवेगस्त्वचमविदहन् सुखं स्वेदयतीति नाडीस्वेदः ॥१८॥

कुम्भ्यां बाष्पमनुद्वमन्त्यां तस्याः कुम्भ्या मुखे शरावादिना पिधाय स्थिते सति बाष्पनिर्गमाभाववत्यामुत्क्वथितानां बाष्प शरेषीकादिकृतया नाड्या नलिकया तस्याः कुम्भ्या मुखे संलग्नया वातहरद्रव्यसिद्धस्नेहाभ्यक्तगात्रः पुमानुपहरेत्।

तत्र नाडीप्रकारमाह शरेषीकेत्यादि। शरेषीका शराग्रभागे या सा इषिका तस्याः पत्रम्। वंशस्य पत्रम्। करञ्जपत्रमर्कपत्रमेषामन्यतमपत्रकृतया नाड्या गजाग्रहस्तसंस्थानया हस्तिनः शुण्डाग्रवत्स्थूलाकारवृत्ताग्रभागया। व्याममदीर्घया प्रसारितबाहुद्वयपुरुषपरिमितदीर्घया। व्यामार्द्धदीर्घया सार्द्धव्याममदीर्घया वा व्यामस्य चतुर्भागैकभागमितमूले परिणाहस्रोतो व्यामस्याष्टमभागमिताग्रपरिणाहस्रोतो यस्यां तया। सर्वतश्चतुर्दिग्भागे तस्या नाड्या यावन्ति छिद्राणि तावन्ति वातहरपत्रैरेरण्डादिपत्रैः संवृतानि यस्यास्तया नाड्या द्विर्वा त्रिर्वा वक्रीकृत्य विनामितया कुम्भीमुखे संलग्नया बाष्पमुपहरेत्। द्वित्रिविनामेन बाष्पस्त्वनृजुगामी द्वित्रिभङ्गेण विहतचण्डवेगश्च सन् त्वचं चर्म खल्वविदहन् सुखं स्वेदयति नरमिति नाडीस्वेदः। इति (३) ॥ १८ ॥

स्वस्थन्यः। नाडीकरणविधिमाह शरेषीकेत्यादि। वंशदलो वंशविदलः, गजाग्रहस्तसंस्थानत्वं नाड्या अग्र एव बोद्धव्यं, व्यामस्तिर्यक्प्रसृतबाहुद्वयप्रमाणं, व्यामदीर्घत्वं नाड्या बहुस्वेदे कर्त्तव्यम्. व्यामचतुर्थभागेन व्यामाष्टभागेन च मूले अग्रे च यथासंख्यमानं नाड्या वेष्टितव्यं, परिणाहेन वेष्टनेन स्रोतो यस्याः सा तथा। यथोक्तनाडीकरणगुणमाह—बाष्पो हीत्यादि। विहतचण्डवेगत्वं नाडिकाया दीर्घत्वेन वक्रत्वेन च बोद्धव्यम् ॥ १८ ॥

* व्यामार्द्धदीर्घयेति चक्रधृतः पाठः।

वातिकोत्तरवातिकानां पुनर्मूलादीनामुत्क्वाथैः सुखोष्णैः कुम्भीर्वर्षुनिकाः प्रनाडीर्वा पूरयित्वा यथार्हसिद्धस्नेहाभ्यक्तगात्रं वस्त्रावच्छन्नं परिषिञ्चयेदिति परिषेकः ॥ १९ ॥

वातहरोत्क्वाथक्षीरतैलघृतपिशितरसोष्णसलिलकोष्ठकावगाहस्तु यथोक्त एवावगाहः ॥ २० ॥

अथ जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत । तत्र पूर्वस्यां

गङ्गाधरः अथ परिषेकस्वेदमाह वातिकेत्यादि । वातिकोत्तरवातिकानीति वातिकानि केवलवातहराणि द्रव्याणि । तथोत्तरवातिकानि प्रबलवातत्रिदोषहराणि च यानि द्रव्याणि तेषाम् । मूलादीनां मूलफलपत्रशुङ्गवल्कादीनाम् । सुखोष्णैरुत्क्वाथैः शरीरसहोष्णैः । वर्षुनिकाः कुम्भीः पूरयित्वा अथवा प्रनाडीः प्रकृष्टा नाडी नलिका निविष्टा यासु कुम्भीषु ताः पूरयित्वा यथार्हसिद्धस्नेहाभ्यक्तगात्रं यथादोषव्याधिपुरुषप्रकृतिदेशकालं हितद्रव्यसाधितघृतादिस्नेहाभ्यक्तगात्रं पुरुषं वस्त्रावच्छन्नं सर्वगात्रं वस्त्रेणाच्छाद्य परिषेचयेत् । इति परिषेकस्वेदः (४) ॥ १९ ॥

गङ्गाधरः अथावगाहस्वेदमाह वातहरेत्यादि । वातहराणां द्रव्याणामुत्क्वाथः क्षीरं तैलं घृतं पिशितरस उष्णसलिलञ्च तथा नाडीस्वेदोक्तो ग्राम्यानूपोदकमांसादिक्वाथो वरुणादिक्वाथो भूतीकादिक्वाथश्च तैः पूरितकोष्ठेऽवगाहस्तु यथोक्त एवावगाहः स्वेदः (५) ॥ २० ॥

गङ्गाधरः अथ जेन्ताकस्वेदविधानमाह—अथ जेन्ताकमित्यादि । अथेत्यानन्तर्यार्थे । जेन्ताकं कूटागारविशेषप्रवेशजातस्वेदं चिकीर्षुः कर्त्तुमिच्छन् वैद्यस्तज्जेन्ताककरणयोग्यां भूमिं परीक्षेत । तत्र जेन्ताके स्वेद्यपुरुषस्य

चक्रपाणिः—परिषेकविधिमाह—वातिकोत्तरेत्यादि । वातिकानि वातहरणानि, उत्तरवातिकानि उत्तरवाते प्रधानवाते वातश्लेष्मणि हितानीह ग्राह्याणि, वार्षुलिका अल्पघटी, सहस्रधारा इत्यन्ये ; प्रणाडी वेणुनलनाडीशाखाः । यथोक्त एवेति लोकप्रसिद्ध इवेति, अवगाहोऽवगाहस्वेदः ॥ १९।२० ॥

चक्रपाणिः—जेन्ताकविधिमाह—अथेत्यादि । अथशब्दो मङ्गल आनन्तर्ये वा । पूर्वस्यामुत्तरस्यां

दिश्युत्तरस्यां वा गुणवति प्रशस्ते भूमिभागे कृष्णमृत्तिके सुवर्णमृत्तिके वा परीवापपुष्करिण्यादीनां जलाशयानामन्यतमस्य कूले दक्षिणे पश्चिमे वा सूपतीर्थे समसुविभक्तभूमिभागे च सप्ताष्टौ वाऽरत्नीः सूपक्रम्योदकात् प्राङ्मुखमुदङ्मुखं वाभिमुखतीर्थं कुटागारं कारयेत्, उत्सेधविस्तारतः परमरत्नीः षोडश, समन्तात् सुवृत्तं मृत्कर्म्मसम्पन्नमनेकवातायनम्। अस्य कुटागारस्यान्तः समन्ततो भित्तिमरत्निविस्तारोत्सेधां पिण्डिकां कारयेदा कपाटात्। मध्ये चास्य

वासग्रामात् पूर्व्वस्यां दिशि अथ वोत्तरस्यां दिशि यो भूमिभागो गुणवान् भूरुहादीनां सम्यगुत्पन्नत्वादिरूपेण जनितत्वेनानुमीयते प्रशस्तश्च दृश्यते मनोरमतया। तथा कृष्णमृत्तिकः सुवर्णमृत्तिको वा दृश्यते तस्मिन् भूमिभागे परीवापादीनां जलाशयानामन्यतमस्य जलाशयस्य दक्षिणे कूले पश्चिमे वा कूले। सूपतीर्थे सुष्ठु समीपे तीर्थं जलप्रान्तभागो यस्य तत्र। सुविभक्तभूमिभागे सुष्ठु स्वल्पनुन्नतनीचरूपेण विभक्ते भूमिभागे स्थाने।

सप्ताष्टाविति। उदकात् तत्तज्जलाशयजलपर्य्यन्तीकृत्य सप्तारत्नीरष्टौ वारत्नीः। सूपक्रम्य सुष्ठु आरभ्योपक्रम्य पश्चिमे कूले जलाशयतीर्थमभिमुखं प्राङ्मुखं कुटागारं कारयेदथवा दक्षिणे कूले तत्तीर्थजलमभिमुखीकृत्योत्तरमुखं कुटागारं कारयेत्। कुटं गूढ़ं सुसंवृतमगारं कुटागारं तत्ताकम्। यादृशं कुटागारं कारयेत् तदाह उत्सेधेत्यादि। उत्सेधत उच्चतः परं षोड़शाऽरत्नीर्विस्तारतश्च षोड़शारत्नीर्व्याप्य समन्तात् सुवृत्तं गोलाकारमनेकवातायनं बहुगवाक्षं मृत्कर्म्मसम्पन्नं मृत्तिकया भित्तिं कृत्वाऽलेपनादिना सम्यङ्निर्म्मितं गृहं कार्य्यम्।

अस्येत्यादि। अस्य कुटागारस्यान्तर्मध्ये भित्तेः समन्ततश्चतुर्दिशि अरत्निमात्रोच्चामरत्निमात्रविस्तारां पिण्डिकां कारयेत्। कुटागारस्यास्य कपाटद्वारपर्य्यन्तं मृत्तिकया पिण्डिकां हस्तमात्रोच्चां हस्तमात्रविस्तारां कारयेत्।

वा इति प्रमादात् बोद्धव्यः, गुणवतीति सम्यक्प्ररोहादियुक्तत्वेन, प्रशस्तभूमिभागत्वं सुपाकारादिरहितत्वेन, परीवापो दीर्घिका, सुष्ठु च उपसमीपे तीर्थं यस्य तस्मिन् सूपतीर्थे, अरत्निर्हस्तः, प्राङ्मुखमिति पश्चिमे, उदङ्मुखमिति दक्षिणे, एवं ह्यभिमुखं तीर्थं स्यात्, कुटागारमिति वर्त्तुलागारम्,

कूटागारस्य चतुष्किष्कुमात्रं पुरुषप्रमाणं मृन्मयं कन्दुसंस्थानं बहुसूक्ष्मच्छिद्रमङ्गारकोष्ठकस्तम्भं सपिधानं कारयेत्। तच्च खादिराणामाश्वकर्णादीनां वा काष्ठानां पूरयित्वा प्रदीपयेत्। स यदा जानीयात् साधुदग्धानि काष्ठानि गतधूमान्यवतप्तञ्च केवलमग्निना तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति। तत्र तं पुरुषं वातहराभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवेशयेत्, प्रवेशयंश्चैनमनुशिष्यात् सौम्य! प्रविश कल्याणायारोग्याय चेति। प्रविश्य चैनां पिण्डिकामधिरुह्य पार्श्वापरपार्श्वाभ्यां यथासुखं शयीथाः, न च त्वया स्वेदमूर्च्छा-

मध्य इत्यादि। अस्य कूटागारस्य मध्ये चतुर्दिशि षोड़शहस्तमिते कृते तदेकहस्ते पिण्डिकयावृते शेषे यावत् स्थानमुद्वृत्तं तावत्स्थाने चतुष्किष्कुमात्रं पुरुषप्रमाणं मृन्मयं कन्दुसंस्थानं यया चुल्लिकया लोके तण्डुलादीनि भज्जन्ति तद्भर्जनचुल्लिका कन्दुनामोच्यते। तदाकारं बहुसूक्ष्मच्छिद्रमग्निप्रज्वालाकृतज्वलदङ्गारस्थानकोष्ठस्तम्भं कारयेत्। तस्योर्द्ध्वमुखाच्छादनार्थमेकं पिधानञ्च कारयेत्। तच्चेत्यादि। तच्च काष्ठस्तम्भं खादिरादीनां काष्ठानां पूरयित्वा खादिरादिकाष्ठैः पूरयित्वा दीपयेत् प्रज्वालयेत्। तृप्त्यर्थयोगे करणे षष्ठी विभाषावचनादिह करणे षष्ठी। स इत्यादि। स वैद्यो यदा जानीयात् काष्ठानि सुदग्धानि गतधूमानि अतीतधूमानि। अग्निना तप्तञ्च केवलं कृत्स्नं तदग्निगृहं स्वेदयोग्येनोष्मणा युक्तञ्चेति जानीयात्। तत्रेत्यादि। तदा खल्वेनं स्वेद्यं पुरुषं वातहरद्रव्यसाधितस्नेहाभ्यक्तगात्रं वस्त्रावच्छन्नं कृत्वा तद्गृहं प्रवेशयेत्। वैद्यस्त्वेनं पुरुषमीदृशप्रकारेण प्रवेशयन् यदा प्रवेशयति तदा प्रविशन्तमेनं पुरुषमनुशिष्यात् यथा तद्गृहं प्रविश्याचरेत्। तदनुशासनमाह सौम्येत्यादि। भोः सौम्य! प्रविश तद् गृहं कल्याणायारोग्याय चेति। प्रविश्येत्यादि। प्रविश्य यथा वर्त्तेत भवान् तद् ब्रूमः। गृहमेतत् प्रविश्य चैनां पिण्डिकामधिरुह्यारोहणं कृत्वा पार्श्वापरपार्श्वाभ्यां यथासुखं त्वं शयीथाः।

आ कवाटादित्यनेन द्वारपर्य्यन्तं लक्षयति, किष्कुर्हस्तः, पुरुषप्रमाणमित्यङ्गेन, कुम्भः कुम्भाकाराऽग्निस्थानम्, अङ्गारार्थं कोष्ठोऽवकाशो विद्यते यस्मिन् सोऽङ्गारकोष्ठकः स एव स्तम्भः, खादिराणाम्

परीतेनापि सता पिण्डिकैषा विमोक्तव्या आ प्राणोच्छ्वासात्। भ्रश्यमानो ह्यतः पिण्डिकावकाशात् द्वारमनधिगच्छन् स्वेदमूर्च्छापरीततया सद्यः प्राणान् जह्याः, तस्मात् पिण्डिकामेनां न कथञ्चन मुञ्चेथाः। त्वं यदा जानीयाश्च, विगताभिष्यन्दमात्मानं सम्यक् प्रस्रुतस्वेदपिच्छं सर्व्वस्रोतोविमुक्तं लघूभूतमपगतविबन्धस्तम्भसुप्तिवेदनागौरवमिति, ततस्तां पिण्डिकामनुसरन् द्वारं प्रपद्येथाः। निष्क्रम्य च न सहसा चक्षुषोः परिपालनार्थं शीतोदकमुपस्पृशेथाः। अथ व्यपगतसन्ताप-

एकपार्श्वेन शयित्वा तत् पार्श्वं परिवर्त्यापरपार्श्वेन शयीथाः। इत्येवं प्रकारेण यथासुखं शयीथाः। न चेत्यादि। तत्र स्वेदमूर्च्छापरीतेनापि त्वया सता पिण्डिकैषा न विमोक्तव्या न त्याज्या। आ प्राणोच्छ्वासात् यावत् प्राणोच्छ्वासं वर्त्तेत। कस्मादिति? अत आह— भ्रश्यमान इत्यादि। स्वेदमूर्च्छापरीततया यद् यस्मात् पिण्डिकावकाशात् त्वं भ्रष्टः स्यास्तदा भ्रश्यमानस्त्वं बहिरागन्तुकामः स्वेदमूर्च्छापरीततया द्वारमस्यागारस्यानधिगच्छन् सद्यः प्राणान् जह्याः। तस्मादित्यादि। तस्मात् पिण्डिकामेनां कथञ्चन न मुञ्चेथाः। न च तत्र स्थितो परिस्थाम। कस्मात्? यदा त्वं जानीयात् आत्मानं निजं विगताभिष्यन्दं सम्यक्प्रस्रुतस्वेदपिच्छं सर्व्वस्रोतोविमुक्तं बद्धभूतस्रोतोभ्यो विमुक्तं लघूभूतशरीरमपगतविबद्धस्तम्भादिकं स्वं जानीया यदा तदा। तत इत्यादि। ततः परं तां पिण्डिकामनुसरन् द्वारं प्रपद्येथाः। द्वारं प्रपद्य निष्क्रम्य च तस्मात् चक्षुषोः परिपालनार्थं शीतोदकं सहसा ग्रीष्मार्त्तेनया नोपस्पृशेथाः। ततः किं कर्त्तव्यमिति? अत आह— अथ व्यपगतेत्यादि।

इति पूरणे षष्ठी, स इत्यत्र त्वमित्यध्याहार्य्यम्, जानीया इत्यर्थः ; किंवा जानीयादिति पाठः, तत्रत्यापि प्रपद्येतेति पाठः ; एवञ्च सुगमम्। पिच्छा स्वेदस्य न पिच्छिलो भागः, सर्व्वेषु स्रोतःसु विमुक्तमपगतबन्धं सर्व्वस्रोतोविमुक्तम्, अपगतविबन्धमस्तु अपगतमलविबन्धो बोद्धव्यः ; चक्षुषोः परिपालनार्थमिति— अभ्यागतस्य सहसा शीतजलप्रवेशेन शीतजलपरिहत ऊष्मा नयनोपघातं करोतीत्यभिप्रायः। अत्र जेन्ताके भूमिविशेषपरिग्रहजलसान्निध्यादयो मङ्गलार्थाः ; जलसान्निध्यमस्तु

क्रमशस्तु मुहूर्त्तात् सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीयात्; इत्येष जेन्ताकः स्वेदः ॥ २१ ॥

शयानस्य प्रमाणेन घनामश्ममयीं शिलाम्।
तापयित्वा मारुतघ्नैर्दारुभिः संप्रदीपितैः ॥
व्यपोह्य सर्व्वानङ्गारान् प्रोक्ष्य चैवोष्णवारिणा।
तां शिलामथ कुर्व्वीत कौषेयाविकसंस्तराम् ॥
तस्यां स्वभ्यक्तसर्व्वाङ्गः स्वपन् स्विद्यति ना सुखम्।
रौरवा*जिनकौषेय-प्रावाराद्यैः सुसंवृतः ॥
इत्युक्तोऽश्मघनस्वेदः कर्षूस्वेदः प्रवक्ष्यते।
खानयेच्छयनस्याधः कर्षूं स्थानविभागवित् ॥

मुहूर्त्तात् मुहूर्त्तं कालं स्थित्वाऽवगतसन्तापक्लमः सन् सुखोष्णेन वारिणा यथान्यायं परिषिक्तः स्नातोऽश्नीयादिति। एष जेन्ताकस्वेदः ६ ॥२१॥

गङ्गाधरः—अथाश्मघनस्वेदविधानमाह शयानस्येत्यादि। शयानस्य यः पुरुषः शयित्वा स्विद्येत् तस्य पुरुषस्य समानप्रमाणेन दीर्घां यथार्हं विस्तारवतीञ्च अश्ममयीं प्रस्तरमयीं शिलां घनां बहलामविरतसन्तापेन पुरुषारोहणे तद्भङ्गान्न यथा स्यात् तथा तथाभूतां वातघ्नैर्देवदार्व्वादिभिर्दारुभिः सम्प्रदीपितैरग्निना प्रज्वालितैस्तापयित्वा सर्व्वानङ्गारान् व्यपोह्य दूरीकृत्योष्णवारिणा प्रोक्ष्य अभ्युक्ष्य तत्र शिलायां कौषेयवस्त्रेणाविककम्बलेन वा संस्तरं शय्यां कृत्वा शय्यायुक्तायां तस्यामुष्णशिलायां पुमान् स्नेहेन स्वभ्यक्तसर्व्वाङ्गः सन् रौरवाजिनादिभिः सुसंवृतश्च सन् शयानः सुखं स्विद्यति। इत्यश्मघनस्वेद उक्तः ७।

अथ कर्षूस्वेदविधानं प्रवक्ष्यते खानयेदित्यादि। कर्षूं हण्डिकाकारां मृत्तिकाम्। शयनस्याधः खानयेत् तां हण्डिकाकारां गोलाकृतिगर्त्तरूपां कर्षूं

स्वेद्यमानस्य दर्शनेन ह्रदेः परिपालनार्थञ्च स्थानं, तथा स्नेहादिसंसर्जनक्रियार्थं कूटागारस्य जलसान्निध्ये सुखेन करणार्थञ्च ॥ २१ ॥

चक्रपाणिः—कौरवं कार्पासं, कर्षूः अभ्यन्तरविस्तीर्णोऽल्पमुखो गर्त्तः, अनत्युत्सेधविस्तारामिति

* "रौरव" इत्यत्र "कौरव" इति चक्रः।

दीप्तैरधूमैरङ्गारैस्तां कर्षूं पूरयेत्ततः ।
तस्यामुपरि शय्यायां स्वपन् स्विद्यति ना सुखम् ॥२२।२३॥
अनत्युत्सेधविस्तारां वृत्ताकारामलोचनाम् ।
घनभित्तिं कुटीं कृत्वा कुष्ठाद्यैः संप्रलेपयेत् ॥
कुटीमध्ये भिषक् शय्यां स्वास्तीर्णाञ्चोपकल्पयेत् ।
प्रावाराजिनकौषेय-कुथकम्बलगोलकैः ॥
स हसिड्काभि*रङ्गार-पूर्णाभिस्ताञ्च सर्व्वशः ।
परिवार्य्यान्तरारोहेदभ्यक्तः स्विद्यते सुखम् ॥ २४ ॥
य एवाश्मघनस्वेद-विधिर्भूमौ स एव तु ।
प्रशस्तायां निवातायां समायामुपदिश्यते ॥ २५ ॥

दीप्तैरधूमैरङ्गारैः पूरयेत् तत उपरि खट्वादिशय्यां स्थापयित्वा तत्र स्वपन् शयानः पुमान् सुखं स्विद्यतीति कर्षूस्वेदः (८) ॥ २२।२३ ॥

गङ्गाधरः—अथ कुटीस्वेदविधानमाह—अनत्युत्सेधेत्यादि । अनतीत्यनतिशयपरिसरामनतिशयोत्सेधां वृत्ताकारां वर्त्तुलाकारामलोचनां गवाक्षरहितां घनभित्तिं निविडभित्तिं कुटीं स्वल्पगृहं कृत्वा तस्या अभ्यन्तरं कुष्ठादिभिरुष्णवीर्य्यैर्द्रव्यैः सम्प्रलेपयेत् । तत्प्रलेपने कुटीमध्ये स्वास्तीर्णां शय्यां भिषगुपकल्पयेत् । प्रावारादिभिरङ्गारपूर्णाभिर्हसन्तिकाभिश्च तां शय्यां परिवार्य्य स्नेहाभ्यक्तः पुमान् तदन्तरा तन्मध्यमारोहेत् । तेन सुखं स्विद्यति । इति कुटीस्वेदः (९) ॥ २४ ॥

गङ्गाधरः—अथ भूस्वेदविधानमाह—य एवेत्यादि । शयानस्य प्रमाणेनेत्यादिना य उक्तोऽश्मघनस्वेदविधिः स एव तु विधिः प्रशस्तायां समायां भूमौ

स्वल्पप्रमाणोच्छ्रायविस्ताराम्, अलोचनां निर्गवाक्षां, कुष्ठाद्यैरित्यत्रादिशब्दः प्रकारवचनः, तेन उष्णसुगन्धिद्रव्यैरिति स्यात्, हसन्तिकाऽङ्गारधानिका, परिवार्य्येति हसन्तिकाभिरित्यनेन सम्बध्यते । तामिति उपकल्पितशय्यां कुटीम् आरोहेदिति सम्बन्धः ॥ २२-२५ ॥

* "स हसिड्काभिः" इत्यत्र "हसन्तिकाभिः" इति चक्रसम्मतः पाठः ।

कुम्भीं वातहरक्काथ-पूर्णां भूमौ निखानयेत् ।
अर्द्धभागं त्रिभागं वा शयनं तत्र चोपरि ॥
स्थापयेदासनं वापि नातिसान्द्रपरिच्छदम् ।
अथ कुम्भ्यां सुसन्तप्तान् प्रक्षिपेदयसो गुडान् ॥
पाषाणान् वोष्मणा तेन तत्स्थः स्विद्यति ना सुखम् ।
सुसंवृताङ्गः स्वभ्यक्तः स्नेहैरनिलनाशनैः ॥ २६ ॥
कूपं शयनविस्तारं द्विगुणञ्चापि वेधतः ।
देशे निवाते शस्ते च कुर्य्यादन्तः सुमार्ज्जितम् ॥

चोपदिश्यते । तद्यथा "शयानस्य प्रमाणेन भूमिं शस्तां समां तथा । तापयित्वा मारुतघ्नदारुभिः सम्प्रदीपयेत् ॥ व्यपोह्य सर्व्वानङ्गारान् प्रोक्ष्य चैवोष्णवारिणा । तां भूमिमथ कुर्व्वीत कौषेयाविकसंस्तराम् ॥ तस्यां निवाते स्वभ्यक्तः शयानः स्विद्यते सुखम् । रौरवाजिनकौषेय-प्रावाराद्यैः सुसंवृतः ॥" इति भूस्वेदः (१०) ॥ २५ ॥

गङ्गाधरः—अथ कुम्भीस्वेदविधानमाह—कुम्भीमित्यादि । वातहरदेवदार्व्वादि-क्वाथेन पूर्णां कुम्भीं भूमौ खातं तत्कुम्भ्या अर्द्धं निखातं त्रिभागं वा निखातं यथा स्यात् तथा निखातां कुर्य्यात् । तत्र चोपरि खट्वादिकं स्थापयित्वा शयनं शय्या-मासनं वा नातिसान्द्रपरिच्छदं स्थापयित्वाथ तस्यां भूमौ निखातायां कुम्भ्यां वातहरक्वाथपूर्णायां सुसन्तप्तान् लौहगुडकान् बहून् पाषाणान् वा सुसन्तप्तान् गुडकान् प्रक्षिपेत् । तेनोष्मणा तत्स्थस्तदुपरि स्थापितशयनासने स्थितः पुमान् अनिलनाशनैः स्नेहैः स्वभ्यक्तगात्रः सन् प्रावारादिना सुसंवृताङ्गः सन् सुखं स्विद्यति । इति कुम्भीस्वेदः (११) ॥ २६ ॥

गङ्गाधरः—अथ कूपस्वेदविधानमाह—कूपमित्यादि । यावन्मात्रस्थाने शयनमर्हति तावन्मात्रविस्तारं दीर्घाकाररूपं वेधतोऽधस्तान्निम्नं द्विगुणं कूपं

चक्रपाणिः—शयनं तत्र चोपरीत्यत्र कुम्भीकोपरि शयनं खट्वादि तथा कर्त्तव्यं यथा कुम्भीका न भज्यते, तत्रस्थ इति यथोक्तशयनासनस्थः । कूपमिति कूपमिव कूपगम्भीरत्वेन, द्विगुणमिति

हस्त्यश्वगोखरोष्ट्राणां करीषैर्दग्धपूरिते ।
स्ववच्छन्नः सुसंस्तीर्णेऽभ्यक्तः स्विद्यति ना सुखम् ॥ २७ ॥
धीतीकान्तु करीषाणां यथोक्तानां प्रदीपयेत् ।
शयनान्तःप्रमाणेन शय्यामुपरि तत्र च ॥
सुदग्धायां विधूमायां यथोक्तामुपकल्पयेत् ।
स्ववच्छन्नः स्वपंस्तत्राभ्यक्तः स्विद्यति ना सुखम् ॥
होलाकस्वेद इत्येष सुखः प्रोक्तो महर्षिणा ।
इति त्रयोदशविधः स्वेदोऽग्निगुणसंश्रयः ॥ २८ ॥

प्रशस्ते निवाते देशे कुर्य्यात् । तं कूपं लेपनेन सुमार्ज्जितं कृत्वा तत्र हस्त्यश्वादीनां करीषैः शुष्कपुरीषैर्दग्धपूरिते तद्दग्धेनिधूमाग्नियुक्ते पूरिते कूपे उपरि खट्वामारोप्य सुसंस्तीर्णे शयने वातनाशनैः स्नेहैरभ्यक्तः सन प्रावारादिना स्ववच्छन्नः संश्च शयानः पुमान् सुखं स्विद्यति । इति कूपस्वेदः १२ ॥ २७ ॥

गङ्गाधरः — अथ होलाकस्वेदविधानमाह धीतीकान्त्वित्यादि । यथोक्तानां गोखराश्वादीनां करीषाणां धीतीकां दीर्घाकृतिं वर्त्तिं शयनान्तःप्रमाणेनाभिप्रज्वाल्यनाय निर्म्माय संशोष्यादिना प्रदीपयेज्ज्वालयेत् तां धीतीकां सुदग्धायां विधूमायां सत्यां तत्र चोपरि खट्वादिकं स्थापयित्वा यथोक्तं शय्यामुपकल्पयेत् । तत्र शय्यायां वातनाशनस्नेहैरभ्यक्तः सन् प्रावारादिना स्ववच्छन्नः स्वपन् शयानः पुमान् सुखं स्विद्यति । इत्येष सुखः सुखकृत् होलाकस्वेदो महर्षिणा पुनर्वसुना प्रोक्त इति । १३ ॥

उपसंहरति इतीत्यादि । अग्निगुणसंश्रय इति सङ्करादित्रयोदशविधः स्वेद उक्तो भवति ॥ २८ ॥

विस्तारात् बोद्धव्यं, शयनं इत्यत्र स्वननप्रमाणेन, सुसंस्तीर्णे इति सुष्ठुसंस्तीर्णे आच्छादिते, शय्यायां खट्वोपरिस्थितायां कूप इति बोद्धव्यम् ॥ २६।२७ ॥

चक्रपाणिः — धीतीकामिति होलाकस्वेदः, धीतीका शुष्कगोमयादिकृतोऽग्न्याश्रयविशेषः, यथोक्तानामिति पूर्वोक्तहस्त्यश्वादिभवानां, शयनान्तःप्रमाणेनेति 'धीतीकां कृत्वा' इत्यध्याहार्य्यं योज्यं, यथोक्तामिति नातिस्थान्त्रुपरिच्छदाम् । उपसंहरति इतीत्यादि । अग्नेर्गुणमुष्णत्वमाश्रित्य स्वेद्यतीत्यग्निगुणसंश्रयः ॥ २८ ॥

व्यायाम उष्णसदनं गुरुप्रावरणं क्षुधा।
बहुपानं भयक्रोधावुपनाहाहवातपाः॥
स्वेदयन्ति दशैतानि नरमग्निगुणादृते।
इत्युक्तो द्विविधः स्वेदः संयुक्तोऽग्निगुणैर्न च॥ २९॥
एकाङ्गसर्व्वाङ्गगतः स्निग्धो रूक्षस्तथैव च।
इत्येतत् त्रिविधं द्वन्द्वं स्वेदमुद्दिश्य कीर्त्तितम्॥

गङ्गाधरः—अथाग्निगुणादृतेऽपि स्वेदानाह व्यायाम इत्यादि। व्यायामः शरीरचेष्टा मल्लक्रीडादिः। उष्णसदनमग्नियोगं विना वातादिशीतस्पर्शनादि-रहितं गर्भगृहम्। गुरुप्रावरणं कम्बलादिकम्। क्षुधा बुभुक्षा। बहुपानमुष्णानां मद्यादीनां बहुमात्रया पानम्। भयञ्च क्रोधश्च तौ। उपनाहो बन्धनम्। स च द्विविधः साग्निर्निरग्निश्च। तत्र साग्निरुष्णवद्द्रव्यप्रलेपं घन-प्रलेपं दत्त्वा लोमशचर्म्माविकवस्त्रकौषेयवस्त्रैर्बन्धनम्। निरग्निस्तु सलोम-चर्म्मादिना बन्धनम्। आहवो युद्धम्। व्यायामान्तर्गतत्वेऽपि विशेषार्थमस्य पृथगभिधानम्। शरीरचेष्टातिक्रमेणापि प्राणवधार्थं युद्धं करोतीति। अतिन्यासाच्च युद्धस्य। आतपो रौद्रम्। एतानि दश व्यायामादीनि अग्निगुणादृते स्वत एवौष्ण्यस्वभावान्नरं स्वेदयन्ति।

उपसंहरति इत्युक्त इत्यादि। अग्निगुणैः संयुक्त एकस्त्रयोदशविधः स्वेदः। अग्निगुणैर्न च संयुक्तोऽपर एको दशविधः स्वेदः। इति द्विविधः स्वेद उक्तः। स च द्विविधः पुनर्द्विविधः। एकाङ्गगतः सर्व्वाङ्गगतश्च। आद्यः सङ्कर-स्वेदादिर्द्वितीयः प्रस्तरस्वेदादिः। उपनाहादिश्चैकाङ्गगतः व्यायामादिः

चक्रपाणिः—सम्प्रत्यनग्निस्वेदानाह—व्यायाम इत्यादि। उष्णं सदनमिष्यग्निसन्ताप-व्यतिरेकेण निर्व्वातकतया घनभित्तितया च यद् गृहं स्वेदयति, तद् बोद्धव्यम्। बहुपानमिति बहुमद्यपानम्। उपनाहो द्विविधः, साग्निरनग्निश्च, तत्र यः साग्निरुपनाहः स सङ्कर एव बोद्धव्यः, यदुक्तं,—"कोलं कुलत्थाः सुरदारुरास्ना" इत्यादिना आरग्वधीये, यस्त्वनग्नि-कृतत्वेन शरीरोष्मरोधं कृत्वा स्वेदयति स इह बोद्धव्यः। आतपश्च यद्यपि उष्णः, तथाप्यग्निकृतं तस्यौष्ण्यं न भवतीत्यनाग्नेयः स्वेदः उक्तः; अग्निगुणादृते साक्षादग्निसम्बन्धेन तादृगुष्ण्याद् विना ॥ २९ ॥

चक्रपाणिः—सर्व्वस्वेदमुपसंहरति—इत्युक्त इत्यादि। एकाङ्गगताः सङ्करनाड्यादयः,

स्निग्धः स्वेदैरुपक्रम्यः स्विन्नः पथ्याशनो भवेत् ।
तदहः स्विन्नगात्रस्तु व्यायामं वर्ज्जयेन्नरः ॥ ३० ॥

तत्र श्लोकाः ।

स्वेदो यथा कार्य्यकरो हितो येभ्यश्च यद्विधः ।
यत्र देशे यथायोग्यो देशो रक्ष्यश्च यो यथा ॥
स्विन्नातिस्विन्नरूपाणि तथातिस्विन्नभेषजम् ।
अस्वेद्याः स्वेदयोग्याश्च स्वेदद्रव्याणि कल्पना ॥
त्रयोदशविधः स्वेदो विना दशविधोऽग्निना ।
संग्रहेण च षट् स्वेदाः स्वेदाध्याये निदर्शिताः ॥

सर्व्वाङ्गगतः । पुनश्चैव स द्विविधः स्वेदः । स्निग्धो रूक्ष इति द्विविधः । इत्येतत् त्रिविधं द्वन्द्वं साग्निगुणोऽनग्निगुणश्च । एकाङ्गगतः सर्व्वाङ्गगतश्च । स्निग्धो रूक्षश्चेति स्वेदमुद्दिश्य कीर्त्तितः । स्निग्धः पुमान् स्वेदैरुपक्रम्यः स्विन्नश्च पथ्याशनो भवेत् । स्विन्नगात्रस्तु पुमान् तदहर्व्यायामं वर्ज्जयेदिति ॥ २९।३० ॥

गङ्गाधरः अध्यायार्थमाह तत्र श्लोका इत्यादि । स्वेदो यथा कार्य्यकर इति । स्नेहपूर्व्वप्रयुक्तेनेत्यादिग्रन्थः । येभ्यो यद्विधो हित इति वाते स्निग्ध इत्यादि ग्रन्थः । यत्र देशे यथायोग्य इति आमाशयगते वाते इत्यादिना ग्रन्थेनोक्तः । देशो रक्ष्यश्च यो यथेति वृषणौ हृदयं दृष्टी इत्यादिना ग्रन्थेनोक्तः । स्विन्नेत्यादि । स्विन्नातिस्विन्नरूपाणीत्यादीनि स्पष्टानि । संग्रहेण

सर्व्वाङ्गगताः प्रस्तरजेन्ताकाद्यः, स्निग्धो वातविहितः स्वेदः, रूक्षः कफविहितः । स्निग्धरूक्षस्तु वातश्लेष्मविहितोऽनयोर्न भिद्यत इति पृथक् नोक्तः, द्वन्द्वं परस्परं विरुद्धं युग्मम् । स्विन्नेन यथा कर्त्तव्यं तदाह स्विन्न इत्यादि । पथ्याशनो भवेदित्यत्र यद्यपि श्लक्ष्णाहिकया नोक्तं, तथापि स्वेदनानुनिर्विष्यदोषस्य यत् पथ्यं तदेव बोद्धव्यम् ॥ ३० ॥

चक्रपाणिः—संग्रहे स्वेदो यथा कार्य्यकर इति स्नेहपूर्व्वं प्रयुक्तेनेत्यादि, येभ्यश्च यद्विध इति

स्वेदाधिकारे यद्वाच्यमुक्तमेतन्महर्षिणा ।
शिष्यैस्तु प्रतिपत्तव्यमुपदेष्टा पुनर्वसुः ॥ ३१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
स्वेदाध्यायो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

च पर् स्वेदा इति । इत्युक्तो द्विविधः स्वेद इत्यादिना ग्रन्थेनोक्तः । स्वेदाधिकारे महर्षिणेति पुनर्वसुमुपदिष्टेनाग्निवेशेन स्वेदाधिकारे यद्वाच्यं तदेतदुक्तं शिष्यैस्तु तत्प्रतिपत्तव्यमिहोपदेष्टा पुनर्वसुरिति ॥ ३१ ॥

अध्यायं समापयति अग्नीत्यादि । पूर्ववद् व्याख्येयम् । इति स्वेदाध्यायः ।

इति श्रीगङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ सूत्रस्थानीय-
चतुर्दशस्वेदाध्यायजल्पाख्या चतुर्दशी शाखा ॥ १४ ॥

जाते स्विन्ने इत्यादि संगृह्णाति, यत्र देशे यथा स्वेद इति आचारसारे वाते कफप्राये इत्यादि । शेषं सुगमम् ॥ ३१ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्वेददीपिकायां सूत्रस्थान-
व्याख्यायां स्वेदाध्यायो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

# पञ्चदशोऽध्यायः ।

अथात उपकल्पनीयमध्यायं व्याख्यास्यामः

इतिह स्माह भगवानात्रेयः ॥ १ ॥

इह खलु राजानं राजमात्रमन्यं वा विपुलद्रव्यं संभृतसम्भारं वमनं विरेचनं वा पाययितुकामेन भिषजा प्रागेवौषधपानात् सम्भारा उपकल्पनीया भवन्ति । सम्यक् चैव हि गच्छत्यौषधे प्रतिभोगार्थाः । व्यापन्ने चौषधे व्यापदः परि-

__गङ्गाधरः__—स्वेदाध्याये प्रोक्तं "स्नेहस्वेदोपपन्नस्य संशोधनमनन्तरम्" इति । ततः स्वेदाध्यायानन्तरं संशोधनयोर्वमनविरेचनयोरुपकल्पनीयमध्यायमारभते—अथात इत्यादि । उपकल्पनीयमिति वमनविरेचनयोः संशोधनयोः कल्पनमुप लक्ष्यीकृत्य यत् कल्प्यते तदुपकल्पनमधिकृत्य कृतोऽध्यायस्तमुपकल्पनीयमध्यायं व्याख्यास्याम इत्यादि सर्व्वं पूर्व्ववद्व्याख्येयम् ॥ १ ॥

__गङ्गाधरः__—इह खल्वित्यादि । इह खलु लोके राजानं, राजमात्रं राजवत् मात्रा परिच्छदो यस्य तम्, अन्यं वा विपुलद्रव्यं धनजनाद्याढ्यं सम्भृतसम्भारं सम्यक् भृतमाहरणादिना भृतः सम्भारस्तत्र योग्याखिलवस्तुसमुदायो येन तं, कृतप्रस्तुततद्योग्यसकलद्रव्यं पुमांसं वमनमौषधं विरेचनञ्चौषधं पाययितुकामेन भिषजा प्रागेवौषधपानात् वमनविरेचनौषधपानात् पूर्व्वं सम्भारा वमनविरेचनयोरुपयुक्ता द्रव्यसमूहा उपकल्पनीयाः समीपे कल्पनीयाः क्लृप्तीकरणीया भवन्ति । कस्मात् ? सम्यक् चैव हीत्यादि । हि यस्मात् । वमनविरेचनयोरौषधे पीते सम्यक् चैव योगं गच्छति सति प्रतिभोगार्थाः वमनविरेचनभोगानन्तरं पुनर्भोगार्थाः सम्भारा भवन्ति । न केवलं प्रतिभोगार्थाः । व्यापन्ने चौषधे असम्यग्योगं गच्छति व्यापदः अयोगादि-

__चक्रपाणिः__—स्नेहस्वेदोपपन्नस्य संशोधनमनन्तरमित्यनेनैवोक्तात् सम्बन्धादुपकल्पनीय इति शोधनोपकल्पनावाचको ज्ञेयः । राज्ञ इव मात्रा परिच्छदो यस्य स राजमात्रः, विपुलद्रव्यस्तु

संख्याय प्रतीकारार्थाः । न हि सन्निकृष्टे काले प्रादुर्भूतायामापदि सत्यपि क्रयाक्रये सुकरमाशु सम्भरणमौषधानां यथावत् ॥ २ ॥

इत्येवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच । ननु भगवन्नादावेव ज्ञानवता तथा प्रतिविधातव्यं, यथा प्रतिविहिते सिध्येदेवौषधमेकान्तेन । सम्यक्प्रयोगनिमित्ता हि सर्व्वकर्म्मणां सिद्धिरिष्टा, व्यापच्चासम्यक्प्रयोगनिमित्ता । अथ सम्यगसम्यक् च समारब्धं कर्म्म सिध्यति व्यापद्यते वा अनियमेन, तुल्यं भवति ज्ञानमज्ञानेनेति ॥ ३ ॥

योगव्यापदः परिसंख्याय ज्ञात्वा तत्तद्व्यापदः प्रतिकारार्थाश्च सम्भारा उपकल्पनीया भवन्ति ।

कथमग्रे कल्पनीया भवन्ति व्यापत्प्रतिकारार्थाः सम्भाराः, न ह्येकान्तेन व्यापदः सम्भवन्ति यदि च भवेयुस्तदा तदर्था आनेतव्या भवन्ति सम्भारा इत्याशङ्कायामाह—न हीत्यादि । हि यस्मात् प्रादुर्भूतायां व्यापदि सत्यां सन्निकृष्टे निकटे कालेऽर्थात् तत्क्षणे तत्प्रतीकारार्थमौषधानामाशु सम्भरणम् आहरणं सत्यपि क्रयाक्रये क्रयणस्थानहट्टादितः आनयनं सम्भवति न सुकरं भवति यथावत् । गमनागमनाभ्यां व्यापद्वृद्धिः स्यादिति । तस्मात् प्रागेवौषधपानादुपकल्पनीयाः सम्भारा इति ॥ २ ॥

गङ्गाधरः—इत्येवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच । तद्यथा नन्वित्यादि । ननु भगवन् गुरु आदावेव भिषजा संशोधनं पाययितुकामेन पुरुषं बलेन वयसा क्रियासहासहत्वतः कार्श्याकार्श्याभ्यां दोषेण दोषबलेन प्रकृतिविकाराभ्यां जानीयात् । तत एवं ज्ञानवता तत्पुरुषयोग्यमौषधं मात्रया तथा प्रतिविधातव्यम्, यथा प्रतिविहिते सति तौषधे तदौषधमेकान्तेन सिध्येन्न भवत्ययोगातियोगमिथ्यायोगाय । सम्यगित्यादि । हि यस्मात् सम्यक्प्रयोगनिमित्ता सर्व्वकर्म्मणां सिद्धिर्भवतीष्टा । व्यापच्चासम्यक्प्रयोग-

वमनादिः, परिसंख्यायेति ज्ञात्वा ; क्रयः पण्यम्, आक्रयो मूल्यम् । अनियमेनेति सम्यगारब्धञ्च सिध्यति व्यापद्यते च ॥ १—३ ॥

तमुवाच भगवानात्रेयः। शक्यं तथैव प्रतिविधातुमस्माभिरस्मद्विधैर्वाप्यग्निवेश यथा प्रतिविहिते सिध्येदेवौषधम् एकान्तेन, तच्च प्रयोगसौष्ठवमुपदेष्टुं यथावन्न हि कश्चिदस्ति यं एतदेवमुपदेष्टु*मुपधारयितुमुत्सहेत, उपधार्य्य वा तथा प्रतिपत्तुं प्रयोक्तुं वा। सूक्ष्माणि हि दोषभेषजदेशकालबलशरीरा-

निमित्ता, कथं तर्हि व्यापत् सम्भवेत्? यदि चैवं ज्ञानपूर्व्वकप्रयोग कर्म्म सम्यगसम्यक् च समारब्धं सत् कस्यचित् सिध्यति कस्यचिद् व्यापद्यते वा स्वल्पनियमेन, तर्हि च ज्ञानमज्ञानेन तुल्यं भवतीति। ततः केन हेतुना व्यापदो भावित्वाशङ्कायां तत्प्रतिकारार्थमग्रे सम्भारा उपकल्पनीया भिषजा भवन्तीति ॥ ३ ॥

गङ्गाधरः—इत्येवं पृष्टो भगवानात्रेयस्तं पृच्छन्तमग्निवेशमुवाच तदुत्तरम्। तद्यथा—शक्यमित्यादि। भो अग्निवेश! यथा प्रतिविहिते सत्यौषधं सिध्येत् औषधमेकान्तेन तथा त्वापरं प्रतिविधातुमस्माभिः शक्यं भवत्यस्मद्विधैर्वा तपोबलेन रजस्तमोभ्यां विनिर्म्मुक्तानिमधन्त्वाव्याहतबुद्ध्या सत्त्वज्ञतया तत्त्वज्ञानवद्भिर्वा शक्यं भवति। यदुच्यते त्वया यथा तत्प्रयोगसौष्ठवं स्यात् तथा भवतोपदिश्यतामिति तत्र ब्रूमः। तच्चेत्यादि। तच्च प्रयोगसौष्ठवं यथावदुपदेष्टुं समर्थः कश्चित् न ह्यस्ति य एतत् प्रयोगसौष्ठवमुपदेष्टुमुत्सहेत यो वा तत् प्रयोगसौष्ठवमुपधारयितुमुत्सहेत, तादृशोऽपि कश्चिन्नास्ति।

श्रुत्वा च तत्प्रयोगसौष्ठवोपदेशमुपधार्य्य तथा प्रतिपत्तुं बोद्धुं बुद्ध्वा वा तत्प्रयोगसौष्ठवार्थं प्रयोक्तुमस्मभ्योऽस्मद्विधेभ्यो वान्यः कश्चिदस्ति कस्मादिति चेत्? तदोच्यते—सूक्ष्माणि हीत्यादि। हि यस्मात् प्रतिपुरुषं दोषभेषजादीनां

चक्रपाणिः—प्रयोगसौष्ठवं प्रयोगसुष्ठुत्वं, यथावदुपदेष्टुं शक्यमस्माभिरस्मद्विधैर्वेति योजना; एतदिति प्रयोगसौष्ठवम्, एवमिति यथावत्, उपधारयितुमिति ग्रन्थेन धारयितुम्, प्रतिपत्तुमित्यर्थतो ग्रहीतुम्। सूक्ष्माणीत्यादि। सूक्ष्माणीव सूक्ष्माणि दुर्बोधत्वेन, तत्र दोषस्यावस्थान्तराणि—क्षयस्तथा वृद्धिस्तथा समत्वं, ऊर्द्ध्वमधो देहगमनं तथाधोदेहगमनं तिर्य्यग्गमनं वा, तथा शाखाश्रयित्वं कोष्ठाश्रयित्वं मध्यमार्गाश्रयित्वं, तथा स्वदेशगमनं परदेशगमनं, तथा स्वतन्त्रं परतन्त्रं, तथाऽशांशविकल्पस्तथा धातुविशेषाश्रयित्वं, तथा कालप्रकृतिदूष्यानुगुणत्वादिकृतं स्वातन्त्र्यमतिपातित्वं ज्ञेयानि; एवं भेषजस्यावस्थान्तराणि—तरुणत्वं, वृद्धत्वम्, आर्द्रत्वं, शुष्कत्वं,

* उपदिश्यमिति चक्रः।

हारसात्म्यसत्त्वप्रकृतिवयसामवस्थान्तराणि । यान्यनुचिन्त्यमानानि विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्य्युः किं पुनरल्प-

प्रतिक्षणमवस्थान्तराणि जायमानानि सूक्ष्माणि भवन्ति। यानि सूक्ष्माणि दोषभेषजादीनां प्रतिक्षणमवस्थान्तराण्यनुचिन्त्यमानानि विमलविपुलबुद्धेरपि पुरुषस्य बुद्धिमाकुलीकुर्य्युरल्पबुद्धेर्जनस्य तु किम्। यदाकुलीकुर्य्युर्बुद्धिमल्पबुद्धेस्तानि दोषभेषजादीनां सूक्ष्माण्यवस्थान्तराणि। तत्र दोषाणामवस्थान्तराणि खलु क्षयवृद्धिसाम्यानि तथोर्द्ध्वाधस्तिर्य्यग्गमनानि कोष्ठशाखामर्म्मास्थिसन्धिसमाश्रयणानि तथा स्वस्थानावस्थानपरस्थानप्रस्थानस्थानाकर्षणानि च तथा स्वातन्त्र्यपारतन्त्र्यसमतन्त्रत्वानि तथा बलाबलमध्यबलानि तथा धातुविशेषाश्रयणधातुविशेषदूषणादीनि तथा कालप्राकृतत्ववैकृतत्वदूष्यानुगुणत्वादीनि चेति। एवं भेषजानामवस्थान्तराणि तरुणत्ववृद्धत्वमध्यत्वार्द्रत्वशुष्कत्वजन्तुभक्षितत्वाभक्षितत्वशुद्देशोत्पन्नत्वानुत्पन्नत्व--द्रव्यान्तर--मिश्रितत्वामिश्रितत्व-स्वरसादि-कल्पनायोग्यत्वायोग्यत्व सम्पूर्णासम्पूर्ण-रसवीर्य्य-विपाक-गुण-प्रभाव-तत्तत्पुरुषदोषानुरूपकर्म्मकरत्वादीनि। देशस्यावस्थान्तराणि जाङ्गलानूपसाधारणानि। तेषां सम्पद्व्यापदश्च। कालानामवस्थान्तराणि शिशिरादिषडृतुरूपाणि प्रातरादीनि च स्वलक्षणालक्षणातिलक्षणमिथ्यालक्षणानि च। शारीराणि स्वास्थ्यातुर्य्यबाल्यपौगण्डकैशोरयौवनमध्यवार्द्धक्यादीनि च व्याधिगतानि पक्वापक्वत्वकालरूपाणि। बलस्यावस्थान्तराणि साहजिकत्वकालकृतत्व-वयःकृतत्वयुक्तिकृतत्वानि। शरीरस्यावस्थान्तराणि कृशत्वाकृशत्वमध्यत्वसारवत्त्वनिःसारत्वादीनि मृदुत्वामृदुत्वसौकुमार्य्यादीनि च। आहारस्यावस्थान्तराणि प्रकृतिकरणदेशकालसंयोगराशिप्रभृतीनि। सात्म्यस्यावस्थान्तराणि देशतऋतुतः प्रकृतितश्च विकृतितश्च स्वभावतश्च व्यवस्थारूपाणि। सत्त्वस्य खलु

द्रव्यान्तरसंयुक्तत्वं, स्वरसादिकल्पनायोगित्वं, रसवीर्य्यविपाकैः प्रभावैश्च तस्मिन् देहे दोषादौ तत्तत्कार्य्यकर्तृत्वमेवमादीनि; देशस्त्वानूपजाङ्गलसाधारणप्रशस्तादिभेदभिन्नः; कालावस्थान्तराणि तु ऋतुभेदाः, पूर्व्वाह्णादिश्च तथा व्याध्यवस्था ज्वरावाहादय इत्येवमादीनि; बलन्तु सहजयुक्तिकृतम् उत्कृष्टापकृष्टमध्यादिभेदभिन्नम्; शरीरन्तु स्थूलत्वसारवत्त्वनिःसारत्वादिभिः, तथा परिपालनीयवृद्धैर्मर्म्मोपघातस्य विषयादिभिश्च भिन्नम्; आहारस्तु प्रकृतिकरणसंयोगराशिभेदादिभिर्भिन्नः; सात्म्यन्तु देशतः कालतो व्याधितः प्रकृतितः स्वभावतोऽभ्यासतश्च भिन्नं स्यात्, सत्त्वन्तु भय-शौर्य्य-विषाद-हर्षादिभेदाद्भिन्नं स्यात्; प्रकृतिभेदास्त्वनेकप्रकारभिन्नवातादारब्ध-

बुद्धेः। तस्मादुभयमेतद् यथावदुपदेक्ष्यामः। सम्यक् प्रयोगं चौषधानां व्यापन्नानाञ्च व्यापत्साधनानि सिद्धिषूत्तर कालम् ॥ ४ ॥

इदानीं तावत् सम्भारान् विविधानपि समासेनोपदेक्ष्यामः। तद् यथा—दृढं निवातं प्रवातैकदेशं सुखप्रविचारमनुपत्यकं

मनसोऽवस्थान्तराणि शोकभयलोभमोहक्रोधेर्ष्येच्छाद्वेषसुखदुःखविषादादीनि, ब्राह्मार्षादिसात्त्विकराजसतामसत्वानि च। वातादिदूषितत्वादूषितत्वरजस्तमो-दुष्टत्वादुष्टत्वानि च। प्रकृतेरवस्थान्तराणि समापित्तानिलकफादित्वेऽपि तल्लक्षणसद्भावासद्भावक्षयादीनि। वयसोऽवस्थान्तराणि बाल्यादीनि तेषां ताद्रूप्येण सद्भावासद्भावादीनि। एतानि दोषादीनामवस्थान्तराणि त्वौषध-प्रयोगेऽपेक्ष्यन्ते। तस्मात् खल्वल्पबुद्धेर्जनस्य बुद्धेर्दोषभेषजादीनां सूक्ष्मा-वस्थान्तरैराकुलीकरणादेतद्‌द्वयप्रमाणमुभयं यथावदुपदेक्ष्यामः। किमुभयमिति? अत आह—सम्यगित्यादि। एकमौषधानां सम्यक् प्रयोगं व्यापन्नानाञ्चौष-धानां व्यापत्साधनानीति द्वितीयं सिद्धिषु सिद्धिस्थानेऽतः परमुपदेक्ष्याम इति ॥ ४ ॥

गङ्गाधरः—इदानीमिहाध्याये संशोधनमभिप्रेत्य सम्यग्योगे प्रतिभोगार्थान् व्यापत्सु व्यापत्प्रतिकारार्थांश्च तावत् सम्भारान् विविधानपि समासेन सङ्क्षेपेणोपदेक्ष्यामः। तद् यथेत्यादि। संशोधनं पाययितुकामो भिषक् तावत् पूर्वं वास्तुविद्याकुशलं जनं प्रशस्तं गृहमेवोपकल्पयेत्। वास्तुविद्याकुशलो गृहकारो यद्‌गृहमुपकल्पयेत तं गृहकारं वैद्यो दृढमित्येवमादुक्तं गृहमुपकल्पयेत्। दृढं निवातमपि प्रवातैकदेशं तस्मिन् वायुर्न सञ्चरेदेकदेशे तु प्रकृष्टवायुः सञ्चरेत्। सुखप्रविचारं सुखेन प्रकर्षेण सञ्चरणयोग्यम्; गमनागमनप्रवेशादिषु सुखम्। अनुपत्यकम्—अन्यस्य महतो गृहपर्व्वतादेरुपत्यकासामीप्यं नास्ति

त्वेन बोद्धव्याः; वयोभेदास्तु बाल्ययौवनवार्द्धक्याद्यवस्थाकृततदवान्तरभेदाः; एतानि दोषाद्यव-स्थान्तराणि चिकित्साप्रयोगे यथा यथापेक्ष्यन्ते, तदुदाहरणं शास्त्रेऽनुसरणीयम्; इह लिख्यमानन्तु विस्तरत्वं ग्रन्थस्यावहतीति नोक्तम्; उभयमेतदुत्तरकालं सिद्धिषूपदेक्ष्याम इति योजना ॥ ४ ॥

चक्रपाणिः—विविधानपीत्यपिशब्दः समासेनापीत्येवंरूपो ज्ञेयः, तेन गृहादयोऽपि विस्तरेणोच्यन्ते, संग्रहणीयादयश्च समासेनेति द्वयमपि सुखं स्यात्; यदि वा, द्विविधानपीति

धूमातपरजसा*मनभिगमनीयमनिष्टानाञ्च शब्दस्पर्शरसरूप-गन्धानां सोपानोदूखलमुषलवर्च्चःस्थानस्नानभूमिमहानसोपेतं वास्तुविद्याकुशलः प्रशस्तं गृहमेव तावत् पूर्व्वमुपकल्पयेत् ॥५॥

ततः शीलशौचाचारानुरागदाक्ष्यप्रादक्षिण्योपपन्नानुपचारकुशलान् सर्व्वकर्म्मसु पर्य्यवदातान् सूपौदनपाचकस्नापकसंवाहकोत्थापकसंवेशकौषधपेषकांश्च परिचारकान् सर्व्वकर्म्मस्वप्रतिकूलान् तथा गीतवादित्रोल्लापकश्लोकगाथाख्यायिकेतिहासपुराणकुशलानभिप्रायज्ञाननुमतांश्च देशकाल-

यस्य तदनुपत्यकम्। गृहद्गृहपर्व्वतादेर्दूरदेशे तद्गृहमुपकल्पयेत्, न तु पर्व्वतादेः समीपे। धूमातपरजसामगम्यं नथैवानिष्टानाममनोज्ञानां शब्दादीनामगम्यञ्च सन्नतोभावेनागमनानर्हं सोपानादुपेतम् ॥ ५ ॥

गङ्गाधरः—प्रथममीदृशं गृहं निर्म्माय शीलशौचादुपपन्नानुपचारकुशलान् तत्तत्कर्म्माचरणे कौशल्ययुक्तान् सर्व्वकर्म्मसु पर्य्यवदातान् सर्व्वकर्म्मकरणे निःसन्देहं शिक्षितान् सूपौदनपाचकान् स्नापकान् स्नानकारकान् संवाहकान् हस्तपादादिसंमर्द्दकान् उत्थापकान् गात्रोत्थानकारकान् शय्यासनादिभ्यः संवेशकान् शयनादिकारकान् औषधपेषकांश्च परिचारकानुपकल्पयेत्। तत्र शीलं सुस्वभावः। शौचं शुचिता। आचारः साधुव्यवहारः। अनुरागो भर्त्तरि। अनुरक्तिभक्तिः। दाक्ष्यं तत्तत्कर्म्मसु निपुणता। प्रादक्षिण्यं प्रकृष्टमानुकूल्यं वामताहीनम्। तथा पारिपद्यांश्च गीतादिकुशलादीनुपकल्पयेत्। गीतादिषु कुशलान् शिक्षया निपुणान्। गीतं गानम्। वादित्रं वीणामुरजकांस्यवंश्यादिवाद्यम्। उल्लापकं स्तुतिपाठः। श्लोकः काव्यादिपद्यम्। गाथा प्रबन्धः। आख्यायिका उपलब्ध्यर्था शास्त्रविशेषः। इतिहासः पुरावृत्तम्। पुराणं

पाठः, तेन भोगार्थानि तथा व्यापन्नसाधनानि गृह्यन्ते। अनुपत्यकं यद्, विदूरमन्यस्य महतो गृहस्य, उदकं पीयते येन तदुदपानम् ॥ ५ ॥

चक्रपाणिः—प्रादक्षिण्यमानुकूल्यम्, उल्लापकं स्तोत्रम्, इतिहासोऽज्ञायमानकर्त्तृ कापोपदेशः, मृग-

* धूमातपरजसामित्यत्र धूमातपजलरजसामिति तथा सोपानोदूखलेत्यत्र सोदपानोदूखलेत्यादि पाठश्चक्रसम्मतः।

विदः पारिपथ्यांश्च, तथा लावकपिञ्जलशशहरिणैणकालपुच्छकमृगमातृकोरभ्रान्, गां दोग्ध्रीं शीलवतीमनातुरां जीवद्वत्सां सुप्रतिविहिततृणशरणपानीयाम्, पात्र्याचमनीयोदकोष्ठमणिकघटपिठरपर्य्योगकुम्भीकुम्भकुण्डशरावदर्व्वीकटोदञ्चनपरिपचनमन्थानचर्म्मचेलसूत्रकार्पासोर्णादीनि च शयनासनादीनि च, उपन्यस्तभृङ्गारप्रतिग्रहाणि, सुप्रयुक्ता-

पञ्चलक्षणं शास्त्रं ब्राह्मपाद्यादिसंज्ञम्। अभिप्रायज्ञान् भर्त्तुरिङ्गितेनाभिप्रायं ज्ञातुमर्हान् अनुमतांश्च भर्त्तुरभिमतान् मनोज्ञान्। देशकालविदश्च—यस्मिन् देशे यथा कार्य्यं तद्विदः। यस्मिन् काले च यथा विधातव्यं तद्विदश्च। एवं पारिपथ्यानुपकल्प्य तथोपभोगार्थं लावादीनुपकल्पयेत्। कालपुच्छो हरिणभेदः। एणः कृष्णसारः। मृगमातृका बृहदुदरवृहच्छरीरहरिणः। उरभ्रो मेषः।

गामित्यादि। एतान् रसमांसाद्यर्थमुपकल्प्य च दुग्धार्थं गां दोग्ध्रीं दुग्धवतीं शीलवतीमनातुरां जीवद्वत्सां न तु आतुरां मृतवत्सां वा। सुप्रतिविहितं भक्षणार्थं सुष्ठुविहितं तृणं प्रति पुनर्व्विहितं तृणम्। तथा शरणं गृहं सुष्ठु परिष्कृतं कृत्वा प्रतिपुनःपरिष्कृतं कृत्वा विहितम्। तथा पानार्थं पानीयं दत्त्वा प्रतिपुनर्विहितं यस्यास्ताम्। तथा पात्र्यादीनुपकल्पयेत्।

पात्रीत्यादि। पात्री क्षुद्रपात्रम्। आचमनोदकोष्ठम् आचमनार्थं कोष्ठं पात्रं तथोदकोष्ठमुदकाधारबृहत्पात्रम्। मणिको गोणकः। घटः प्रसिद्धो लोके। पिठरः स्थाली। पर्य्योगः कटाहः। कुम्भी बृहत्कुम्भः। कुम्भो हृद्दावयवः क्षुद्रकलसः। कुण्डः स्नानविशेषरूपपात्रम्। शराव उपढौकनम्। दर्व्वी पाकार्थं दण्डः। कटः शयनासनाद्यर्थः मल्यातः। उदञ्चनः पिधानार्थमुत्तरशरावः। परिपचनं तैलपाचनिका। मन्थानं मन्थनदण्डः। चर्म्म हरिणादीनाम्। चेलं जीर्णवस्त्रम्। सूत्रं कार्पासादीनाम्। कार्पासं तूलकम्। ऊर्णा मेषलोम। आदिना रज्जुप्रभृतीनां ग्रहणम्। तथा शयनासनादीनि चोपकल्पयेदीदृशानि।

मातृका पृथूदरो हरिणः, शरणं गृहम्, आचमनीयोदकोष्ठमाचमनार्थमुदककोष्ठं, किंवा, आचम्यते येन पात्रेण तदाचमनम्, मणिको गोणकः, पिठरः स्थाली, पर्य्योगः कटाहः, कुम्भो हृदावयवोऽल्पमुखो घटः, कटस्तृणादिरचितमासनम्, उदञ्चनं पिधानशरावः, परिपचनं तैलपाचनिका,

स्तरणोत्तरप्रच्छदोपधानानि स्वापाश्रयाणि, संवेशन*स्नेह-स्वेदाभ्यञ्जनप्रदेहपरिषेकानुलेपनवमनविरेचनास्थापनानुवासन-शिरोविरेचनमूत्राच्चारकर्म्मणामुपचारसुखानि, सुप्रक्षालितोप-धानाश्च सुश्लक्ष्णखरमध्यमा दृषदः. शस्त्राणि चोपकरणार्थानि. धूमनेत्रञ्च वस्तिनेत्रञ्चोत्तरवस्तिकञ्च कुशहस्तकञ्च तुलाञ्च मानभाण्डञ्च घृततैलवसामज्जक्षौद्रफाणितलवणेन्धनोदकमधु-सीधुसुरासौवीरकतुषोदकमैरेय-मेदक-दधि-दधिमण्डोदस्वित्-धान्याम्लमूत्राणि च. तथा शालिषष्टिकमुद्गमाषयवतिलकुलत्थ-बदरमृद्वीकाकाश्मर्य्यपरुषकाभयामलकविभीतकानि. नानाविधानि च

उपन्यस्तेत्यादि । उपन्यस्तभृङ्गारपानप्रहाणि समीपे धारिता भृङ्गार-प्रतिग्रहा येषां तानि । भृङ्गारो नालमुखजलपात्रविशेषः । प्रतिग्रहः निष्ठी-विकादिक्षेपणपात्रम् । सुप्रयुक्तानि सुविहितानि आस्तरणमुत्तराच्छादनवस्त्र-मुपधानञ्च यत्र तानि । आस्तरणं खट्वादिकम् । उत्तरप्रच्छदः खट्वादुपरि विस्तरणार्थं घनबहलवस्त्रादिकृता शय्या । उपधानं शिरोधारणार्थं तूलक-कृतम् । स्वापाश्रयाणि निद्रार्थं शयनशय्याः ।

शयनासनव्यतिरिक्तानि चेमान्यादिपदोक्तान्युपकल्पयेत् संवेशनेत्यादि । तानि संवेशनादिषु सुखानि । संवेशनमानयनशयनस्थानम् । स्नेहादि-कर्म्मणामुपचारे सुखानि यानि कानि च तान्युपकल्पयेत् ।

सुप्रक्षालितेत्यादि । एवं सुप्रक्षालितोपधानाः शिलापुत्रा यासां तादृश्यः, श्लक्ष्णाश्च खराश्च मध्यमाश्च दृषदः प्रस्तरशिला उपकल्पयेत् । तथोपकरण-रूपाणि शस्त्राणि कुद्दालपशु कर्त्तरीदात्रादीनि ।

धूमनेत्रमित्यादि । तथा धूमनेत्रञ्चेत्यादिकमुपकल्पयेत् । उत्तरवस्तिक-मुत्तरवस्तिनेत्रम् । कुशहस्तं रञ्जनी. आर्द्रद्रव्यपरिपचनमित्यन्ये । तुलां तोलकरणार्थां दण्डपालीम् । मानभाण्डं मानार्थं परिमाणभाण्डम् । घृत-तैलेत्यादि । घृतादीनि स्पष्टार्थानि । तथा शालीत्यादीनि च विभीत-

कानि गङ्गुरशेमाणि, सुप्रक्षालितेत्यादौ उपधानः शिलापुत्र इति प्रसिद्धः, दृषदः पाषाणपट्टकाः,

* उपवेशनेत्यधिकः पाठः ।

स्नेहस्वेदोपकरणानि द्रव्याणि, तथैवोर्द्ध्वहरानुलोमिकोभयभागिकसंग्रहणीयदीपनीयपाचनीयोपशमनीयवातहराणि समाख्यातानि चौषधानि, यच्चान्यदपि किञ्चिद्व्यापदः परिसंख्यायोपकरणं विद्यात्, यच्च प्रतिभोगार्थं तत्तदुपकल्पयेत् ॥ ६।७ ॥

ततस्तं पुरुषं यथोक्ताभ्यां स्नेहस्वेदाभ्यां यथार्हमुपपादयेत्। तं चेदस्मिन्नन्तरे कश्चिन्मानसः शारीरो वा व्याधिः कश्चित् तीव्रतरः सहसाभ्यागच्छेत्, तमेव तावदस्योपावर्त्तयितुं यतेत। ततस्तमुपावर्त्त्य तावन्तमेवैनं कालं तथाविधेनैव कर्म्मणोपाचरेत्। ततस्तं पुरुषं स्नेहस्वेदोपपन्नमनुपहतमानसमभिसमीक्ष्य

कार्नात्यन्तानि नानाविधानीत्यादीनि च स्पष्टानि। तथैवेत्यादि। ऊर्द्ध्वभागहरादीनि षड्विरेचनाश्रितीयोक्तानि समाख्यातानि संज्ञातानि। यच्चान्यदप्युक्तेभ्योऽन्यदनुक्तं यच्च व्यापदः परिसंख्याय ज्ञात्वा तूपकरणं वैद्यो विद्यात्। यच्चान्यदुक्तेभ्योऽनुक्तं द्रव्यं प्रतिभोगार्थं विद्यात् तत्तत् सर्व्वमुपकल्पयेत् ॥ ६।७ ॥

गङ्गाधरः—इत्युपकल्पनामुक्त्वा वमनप्रयोगमाह—ततस्तमित्यादि। तत एवमुपकल्पनादनन्तरं तं संशोध्यं पुरुषं यथोक्ताभ्यां यथा येन प्रकारेणोक्ताभ्यां स्नेहस्वेदाभ्यां यथार्हमुपपादयेत्। तच्चेत्यादि। उक्तस्नेहविधिना स्नेहयित्वा स्वेदोक्तविधिना स्वेदयेत्। तं पुरुषं चेदस्मिन् स्नेहकर्म्मणि स्वेदे वा क्रियमाणेऽत्रान्तरं मानसः शारीरो वा तीव्रतरो व्याधिरागच्छेत् सहसा तदा तं पुरुषमस्य स्नेहस्य स्वेदस्य वोपावर्त्तयितुं निवर्त्तयितुं भिषग् यतेत। तीव्रतररूपेण यदि व्याधिर्नागच्छेत् तदा नोपावर्त्तयितुं यतेतेति। तत इत्यादि। ततः परं तं पुरुषं स्नेहस्वेदयोरुपावर्त्तनादनन्तरं तावन्तमेव कालमेनं पुरुषं तथाविधेन तत्तद्व्याधियोग्येन कर्म्मणैवोपाचरेत्। ततो निवृत्ततद्व्याधिं तं

शस्त्राणि चोपकरणार्थानीति कुद्दालकर्त्तरीप्रभृतीनि, कुशहस्तकं वर्ज्जनी, अन्ये तु आर्द्रद्रव्यपरिपचनमभिदधति; मानभाण्डं प्रतिमानम् ॥ ६।७ ॥

चक्रपाणिः—तच्चेत्यादावस्मिन्नन्तरे इति स्नेहस्वेदकरणसमये, तावन्तमेव कालमिति यावत्-

सुखोषितं प्रजीर्णभक्तं शिरःस्नातमनुलिप्तगात्रं स्रग्विणमनुपहतवस्त्रसंवीतं देवताग्निद्विजगुरुवृद्धवैद्यानर्च्चितवन्तम् इष्टे नक्षत्रे तिथिकरणमुहूर्त्ते च कारयित्वा ब्राह्मणान् स्वस्तिवाचनं प्रयुक्ताभिराशीर्भिरभिमन्त्रितां मधुमधुकसैन्धवफाणितोपहितां मदनफलकषायमात्रां पाययेत् ॥ ८ ॥

मदनफलकषायमात्राप्रमाणन्तु खलु सर्व्वसंशोधनमात्राप्रमाणानि च प्रतिपुरुषमपेक्षितव्यानि भवन्ति, यावद्धि यस्य संशोधनं पीतं वैकारिकदोषहरणायोपपद्यते न चातियोगायोगाय, तावदस्य मात्राप्रमाणं वेदितव्यं भवति ॥ ९ ॥

पीतवन्तन्तु खल्वेनं मुहूर्त्तमनुकाङ्क्षेत् । तस्य यदा

पुरुषं पुनः स्नेहस्वेदोपपन्नमनुपहतमानसं स्वस्थचित्तमभिसमीक्ष्य सुखोषितं प्रजीर्णभक्तं पूर्व्वदिनकृताहारे जीर्णे सति शिरःस्नातं शिरःपर्य्यन्तं सर्व्वाङ्गं जले मज्जयित्वा स्नातं चन्दनागुर्व्वादिघृष्टद्रवेणानुलिप्तगात्रं स्रग्विणमनुपहतवस्त्रसंवीतमक्षुण्णवस्त्रं वसानं संवीतञ्च कुर्व्वाणं देवतादीनर्च्चितवन्तं खल्विष्टे शुभनक्षत्रादियुक्तकाले ज्योतिषशास्त्रोक्तरक्षणविधानेन प्रयुक्ताभिराशीर्भिरभिमन्त्रितां मध्वाद्युपहितां मदनफलकषायमात्रां वैद्यः पाययेत् । मदनफलकषायमात्राप्रमाणं तथा खलु सर्व्वसंशोधनमात्राप्रमाणानि च प्रतिपुरुषमपेक्षितव्यानि भवन्ति । कस्मादिति ? अत आह—यावद्धीत्यादि । अस्य पुंसो यावन्मात्रं संशोधनमौषधं पीतं वैकारिकदोषहरणायोपपद्यते न चातियोगादयः, तावदेव संशोधनौषधस्य मात्राप्रमाणं भिषजा वेदितव्यं भवतीति ॥ ८।९ ॥

गङ्गाधरः—मध्वादिकं मदनफलकषाये यथायोग्यं देयम् । एवं यथार्हमात्रां वमनौषधं पीतवन्तमेनं पुरुषं मुहूर्त्तं कालमनुकाङ्क्षेत् । ततस्तस्य वम्यस्य

कालेन व्याधिप्रशमः कृतस्तावन्तम् ; इष्टे इति शोधनकर्त्तुर्नक्षत्रात्तानुगुणे औषधप्रयोगार्थं विहित इत्यर्थः, यदुक्तं ज्योतिषे—"पुष्यो हस्तस्तथा ज्येष्ठा रोहिणी श्रवणाश्विनी । स्वातिः सौम्यञ्च भैषज्ये कुर्य्यादन्यत्र वर्ज्जयेत्" इति । कारयित्वेति स्वस्तिवचनं कारयित्वा ॥ ८ ॥

चक्रपाणिः—प्रतिपुरुषमपेक्षितव्यानीत्यनेन प्रतिपुरुषं शोधनमात्राभेदं दर्शयति—यावद्

जानीयात् स्वेदप्रादुर्भावेणैव दोषप्रविलयनमापद्यमानम् लोमहर्षेण च स्थानेभ्यः प्रचलितं कुक्षिसमाध्मापनेन च कुक्षिमनुगतं हृल्लासास्यस्रवणाभ्यामपचितोर्द्धमुर्खीभूतम्। अथास्मै जानुसममसंबाधं सुप्रयुक्तास्तरणोत्तरप्रच्छदोपधानं स्वापाश्रयमासनमुपवेष्टुं प्रयच्छेत्। प्रतिग्रहांश्चोपचारयेत्। ललाटप्रतिग्रहे पार्श्वोपग्रहणे नाभिप्रपीड़ने पृष्ठोन्मर्द्दने च अनपत्रपणीयाः सुहृदोऽनुमताः प्रयतेरन्॥ १०॥

अथैनमनुशिष्यात्—विवृतोष्ठतालुकण्ठो नातिमहता व्यायामेन वेगानुदीर्णानुदीरयन् किञ्चिदवनम्य ग्रीवामूर्द्ध-

यदा स्वेदप्रादुर्भावः स्यात् तदा दोषं प्रविलयनं द्रवीभावमापद्यमानं जानीयात्। लोमहर्षणेत्यादि। लोमहर्षो यदा स्यात् तदा दोषं स्थानेभ्यः प्रचलितं जानीयात्। यदा कुक्षिसमाध्मानं स्यात् तदा दोषं कुक्षिमनुगतं जानीयात्। यदास्य हृल्लास आस्यस्रवणञ्च स्यात् तदा दोषमपचितमूर्द्धमुर्खीभूतं जानीयात्। अथानन्तरमस्मै वम्याय पुरुषाय जानुसमं जानुच्चमसंबाधं सुप्रयुक्तमास्तरणं शय्यामुत्तरप्रच्छदेनाच्छादितमुपधानयुक्तं स्वापाश्रयमासनं उपवेष्टुं प्रयच्छेत्। प्रतिग्रहानित्यादि। प्रतिग्रहांश्च ये लक्षविशेषं धारयेयुस्तानुपचारयेत्। ते यथोपचरेयुस्तथा कुर्व्वतः प्रेरयेत्। तत्र यत्र यत्र प्रतिग्रहणं कारयेत् तदाह—ललाटेत्यादि। तस्य वम्यपुरुषस्य जानुसमासने तूपविष्टस्य कञ्चित् परिचारकं ललाटप्रतिग्रहे यथासुखमुपमर्द्दने नियोजयेत्। कञ्चित् तस्य पार्श्वोपग्रहणे कञ्चिन्नाभिप्रपीडने कञ्चित् पृष्ठोन्मर्द्दने च। ते तु सुहृद उपचारका अनपत्रपणीया व्यपगतलज्जाः सन्तोऽनुमतास्तत्र तत्र प्रतिग्रहणे तथा प्रयतेरन्॥ १०॥

गङ्गाधरः—अथैनमित्यादि। अथैवं प्रतिग्रहणे नियुज्य भिषगेनं वाम्यमानं पुरुषमनुशिष्यात्। भो विवृतोष्ठतालुकण्ठो भूत्वा नातिमहता व्यायामेन

इत्यादि। मात्राशितीयोक्त "यावद्‌ध्यस्याशनम्" इत्यादिग्रन्थव्याख्यानानुसारेण व्याख्येयम्। अनुकाङ्क्षेदिति परीक्षयन् धारयेत, असम्बाधमित्यसङ्कीर्णम्। प्रतिगृह्णन्तीति प्रतिग्रहाः ललाटप्रतिग्रहादयः, अनपत्रपणीया अलज्जाविषयाः। उपवेगं वेगसमीपम्, एतेन सर्व्वथाऽप्रवृत्ते वेगे

शरीरमुपवेगमप्रवृत्तान् प्रवर्त्तयन् । सूपलिखितनखाभ्यामङ्गुलीभ्यामुत्पलकुमुदसौगन्धिकनालैर्वा कण्ठमनभिस्पृशन् सुखं प्रवर्त्तयस्वेति । स तथाविधं कुर्य्यात् । ततोऽस्य वेगान् प्रतिग्राहगतानवेक्षेत । वेगविशेषदर्शनाद्धि कुशलो योगायोगातियोगविशेषानुपलभते । वेगविशेषदर्शी पुनः कृत्यं यथार्हमवबुध्येत लक्षणेन, तस्माद् वेगानवेक्षेतावहितः ॥ ११ ॥

तत्रामून्ययोगयोगातियोगविशेषज्ञानानि भवन्ति । तद् यथा—अप्रवृत्तिः कुतश्चित् केवलस्य वाप्यौषधस्य विभ्रंशो

वेगकृदव्यापारेण उदीर्णान् वमिवेगानुदीरयन् प्रेरयन् किञ्चिदवनम्य ग्रीवादिकम् अप्रवृत्तान् वमिवेगसमीपवेगान् प्रवर्त्तयन् सूपलिखितौ नखौ ययोस्ताभ्यां सुकर्त्तितनखाभ्यामङ्गुलीभ्यां तर्ज्जनीमध्यमाभ्यां कण्ठमनभिस्पृशन्नीषदभिस्पृशन् सुखं वमिं प्रवर्त्तयस्व । अथवोत्पलादिनालैः कण्ठमीषदभिस्पृशन् प्रवर्त्तयस्वेति अनुशिष्यात् ।

स इत्यादि । ततः स पुरुषस्तथाविधं कुर्य्यात् । स वमनाय प्रवर्त्तमानः पुमानुक्तानुशासनप्रकारेण वमेत् । वैद्यस्तु ततो वमतः पुरुषस्यास्य प्रतिग्राहगतान् वेगानवेक्षेत । कस्मात् ? वेगविशेषेत्यादि । कुशलो दक्षो वैद्यः खलु वमिवेगविशेषदर्शनादयोगादिविशेषानुपलभतेऽनुमिनोति । तथानुमाने किं स्यादिति ? अत आह—वेगेत्यादि । वेगविशेषदर्शी पुनस्तद्वेगविशेषं दृष्ट्वातियोगादीनां भाविनां यथार्हं कृत्यं प्रतिकर्त्तव्यं तल्लक्षणेन अवबुध्येतेति । तस्माद् वमनवेगानवधानयुक्तः सन्नवेक्षेत ॥ ११ ॥

गङ्गाधरः—ननु कीदृशलिङ्गेनायोगादीन् बुध्येतेति ? अत आह—तत्रामूनीत्यादि । अमूनि वमनस्यायोगादिविशेषविज्ञानानि भवन्ति । तद् यथा—अप्रवृत्तिरित्यादि । कुतश्चित् कारणात् सूपलिखितनखाङ्गुल्यादिना कण्ठस्पर्शनादपि वमनस्याप्रवृत्तिरीषत्प्रवृत्तिर्वा । केवलस्य वौषधस्य वमनार्थं पीतस्य

प्रवर्त्तनं निषेत्स्यति । वेगविशेषदर्शनाद्धीत्यादिग्रन्थस्य भाविनो योगायोगादीन् वेगविषयानुपलभ्य तर्कयतीत्यर्थः ; किंवा, वैगिकी शुद्धिरभिधातव्या "जघन्य-मध्य-प्रवरे तु वेगाश्चत्वार इष्टा वमने षडष्टौ" इत्यादिना, तामनेन दर्शयति ॥ ९—११ ॥

चक्रपाणिः—अप्रवृत्तिः कुतश्चिदिति सर्व्वस्यैवाप्रवृत्तिः, तथा केवलस्य कृत्स्नस्य चौषधीय-

विबन्धो वेगानामयोगलक्षणानि भवन्ति। काले प्रवृत्तिः अनतिमहती व्यथा यथास्वं * दोषहरणं स्वयञ्चावस्थानमिति योगलक्षणानि भवन्ति। योगेन तु दोषप्रमाणविशेषेण तीक्ष्णमृदुमध्यविभागो ज्ञेयः। योगाधिक्येन तु फेनिलरक्त-चन्द्रिकोपगमनमित्यतियोगलक्षणानि भवन्ति ॥ १२ ॥

विभ्रंशो न दोषसहितस्य। वेगानां विबन्धश्चेति वमनायोगस्य लक्षणानि। अथ वमनस्य सम्यग्योगलक्षणान्याह काले प्रवृत्तिरित्यादि। काल इति यथाहकाले नातिशीघ्रं नातिविलम्बं वमनप्रवृत्तिः। अनतिमहती व्यथा वमन-करणे क्लेशो नातिमहान्। यथास्वं दोषहरणम्। तद्यथोक्तम्—'क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स इष्टः।' इति। स्वयमवस्थानं निवृत्तिर्वमनस्येति सम्यग्योगलक्षणानि भवन्ति। तथा दोषप्रमाणविशेषेण वमनप्रवृत्तौ त्रिविधस्तीक्ष्णमध्यमृदुभेदो ज्ञेयः। सम्यग्योगलक्षणेन प्रस्थद्वय-दोषनिर्गमने तीक्ष्णं वमनम्। सार्द्धप्रस्थदोषनिर्गमे मध्यमं वमनम्। एक-प्रस्थदोषनिर्गमे मृदुवमनं विद्यात्। तथा वेगतश्च मृदुमध्यतीक्ष्णभेदा वमनस्य ज्ञेयाः। तदुक्तं—"जघन्यमध्यप्रवरे तु वेगाश्चत्वार इष्टा वमने षडष्टौ" इति। "वमने च विरेके च तथा शोणितमोक्षणे। अर्द्धत्रयोदशपलं प्रस्थमाहुर्मनी-षिणः॥" वमने तु पीतमौषधमपनीय निर्गतदोषो मेयः स्यात्। स्वयञ्चाव-स्थानमिति यथास्वदोषहरणे सति स्वयमेव वमनस्यावस्थानं निवृत्तिर्भवतीति सम्यग्योगस्य वमने लक्षणानि भवन्ति। तद्योगाधिक्येन तु फेनिलादि वमनं भवतीति वमनातियोगलक्षणानि भवन्ति ॥ १२ ॥

दोषस्याप्रवृत्तिः, तथौषधस्य विभ्रंशः प्रातिलोम्येन गमनं, यथा—वमनस्याधः ऊर्द्ध्वञ्च विरेचनस्य, एतदेव सिद्धावुक्तम्,—"अयोगः प्रातिलोम्येन न वाल्पं वा प्रवर्त्तनम्" इति; किंवा; कुतश्चिद्वा अप्रवृत्तिः स्तोकदोषप्रवृत्तिरित्यर्थः, तथा केवलस्य चाप्यौषधस्य प्रवृत्तिरिति; यथाक्रममिति वमने प्रथमं श्लेष्मा, तदनु पित्तं, तदनु वायुः; यदुक्तं—"क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यग् वमितः स इष्टः" इति। सम्यग्योगोऽपि हर्त्तव्यदोषस्याल्पत्वमध्यत्वोत्कृष्टत्वेन त्रिविधो भवतीति दर्शयन्नाह—योगेन त्वित्यादि। तुशब्दोऽवधारणे, तेन योगेनैव यः प्रमाण-विशेषोऽल्पत्वादिस्तेन, न त्वयोगातियोगाभ्यामित्यर्थः; अयञ्च तीक्ष्णादियोगविभागः पेयाक्रमोप-

* यथाक्रममिति चक्रपाणिस्वीकृतः साधीयान् पाठः।

तत्रातियोगायोगनिमित्तानिमानुपद्रवान् विद्यात् । आध्मानं परिकर्त्तिका परिस्रावो हृदयोपशरणमङ्गग्रहो जीवादानं विभ्रंशः स्तम्भः क्लम उपद्रवा इति ॥ १३ ॥

योगेन तु खल्वेनं छर्द्दितवन्तमभिसमीक्ष्य सुप्रक्षालित-पाणिपादास्यं मुहूर्तमाश्वास्य स्नैहिकवैरेचनिकोपशमनीयानां धूमानामन्यतमं सामर्थ्यतः पाययित्वा पुनरेवोदकमुपस्पर्शयेत् । उपस्पृष्टोदकञ्चैनं निवातमगारमनुप्रवेश्य संवेश्य चानु-शिष्यात् —उच्चैर्भाष्यमत्यासनमतिस्थानमतिचंक्रमणं क्रोध-शोकहिमातपावश्यायातिप्रवातान्, यानयानं ग्राम्यधर्म्ममस्वपनं निशि, दिवा स्वप्नम्, विरुद्धाजीर्णासात्म्याकालप्रमिताति हीनगुरु-

गङ्गाधरः—तत्रेत्यादि । तत्रातियोगायोगनिमित्तानुपद्रवानिमान् विद्यात् । आध्मानमित्यादि । आध्मानं सवेदनमुदरपूर्णता । परिकर्त्तिका गुदे कर्त्तन-वत् पीड़ा । परिस्रावो मुखस्य वमने, गुदस्य विरेचने । हृदयोपशरणम् उपद्रवणम् । अङ्गग्रहोऽङ्गवेदना । जीवादानं जीवरक्तनिर्गमः । विभ्रंशः शरीरस्य स्तम्भश्च । क्लमस्तेत्युपद्रवा व्यापदः सिद्धिस्थाने विस्तरेण वक्ष्यन्ते ॥ १३ ॥

गङ्गाधरः—तत्सिद्ध्यर्थञ्च अथात्राह योगेनेत्यादि । सम्यग्योगेन च्छर्द्दित-वन्तमेनं पुरुषमभिसमीक्ष्य सुप्रक्षालितपाणिपादास्यं मुहूर्त्तमाश्वास्य विश्राम्य स्नैहिकधूमादीनामन्यतमं धूमं सामर्थ्यतः पाययित्वा पुनरेवोदकमुपस्पर्शयेत् मुखादीनि प्रक्षालयेत्, न तु स्नापयेत् ।

उपस्पृष्टेत्यादि । उपस्पृष्टोदकञ्चैनं वमितं पुरुषं निवातमगारं गृहमनु-प्रवेश्य संवेश्य च शाययित्वानुशिष्यात् । उच्चैर्भाष्यादीन् निशि चास्वपनं

कार्य्यः, तथाहि वक्ष्यति सिद्धौ—"पेयां विलेपीम्" इत्यादि । तत्रातियोगेत्यादौ आध्मानादयः शोधनसिद्धौ "बहुदोषस्य रूक्षस्य" इत्यादिना ग्रन्थेन प्रपञ्चेन वक्तव्याः, अतस्तत्रैषां योगाति-योगजन्यो यश्चायोगजन्यः स स्फुटो ज्ञेयः ॥ १२—१३ ॥

चक्रपाणिः—स्नैहिकधूमपानविकल्पः पुरुषप्रकृत्यपेक्षः, अत एव सामर्थ्यत इत्युक्तं यद्-

विषमभोजनवेगसन्धारणोदीरणमिति भावानेतान् मनसाप्यसेवमानः सर्व्वमाहारमद्या इति। स तथा कुर्य्यात् ॥ १४ ॥

अथैनं सायाह्ने परे वाह्नि सुखोदकपरिषिक्तं पुराणानां लोहितशालितण्डुलानां स्वविक्लिन्नां मण्डपूर्व्वां सुखोष्णां यवागूं पाययेदग्निबलमभिसमीक्ष्य च, एवं द्वितीये तृतीये चान्नकाले। चतुर्थे त्वन्नकाले तथाविधानामेव शालितण्डुलानामुत्स्विन्नां विलेपीमुष्णोदकद्वितीयामस्नेहलवणाम् अल्पस्नेहलवणां वा भोजयेत्। एवं पञ्चमे षष्ठे चान्नकाले। सप्तमे त्वन्नकाले तथाविधानामेव शालीनां द्विप्रसृतं सुस्विन्न-

-दिवा स्वप्नं विरुद्धादिभोजनं मलमूत्रादिवेगसन्धारणमनुदीर्णानां मलादिवेगानामुदीरणम्। इत्येतान भावान मनसाप्यसेवमानः सर्व्वमाहारमद्याः इत्यनुशिष्यात्। स वमितः पुमांस्तथा कुर्य्यात् ॥ १४ ॥

गङ्गाधरः—अथैनमित्यादि। एवं निवातगृहे शयानमेनं पुरुषमथानन्तरं सायाह्नेऽथवा परदिने सुखोदकपरिषिक्तं शिरःस्नातं वा पुराणानां समातीतानां लोहितशालितण्डुलानां यवागूं स्वविक्लिन्नामतिद्रवीभूतां सुखोष्णां मण्डपूर्व्वामादौ तदुपरितनद्रवांशं पीत्वाग्निबलमभिसमीक्ष्य शेषं घनीभूतांशं पाययेत्। ततो द्वितीयभोजनकाले तृतीयभोजनकाले चाग्निबलमभिसमीक्ष्य तथाभूतां यवागूं पाययेत्। चतुर्थे त्वन्नकाले तथाविधानां पुराणानां लोहितशालितण्डुलानामुत्स्विन्नामतिसिद्धां विलेपीमुष्णोदकद्वितीयामस्नेहलवणामल्पस्नेहलवणां वा भोजयेत्। इह भोजने तदुष्णोदकपानादिवचनेन पूर्व्वेषु त्रिषु जलस्नेहलवणानि वर्ज्जयेदिति ज्ञापितम्। एवं पञ्चमे षष्ठे चान्नकाले च चतुर्थान्नवद्विधिः।

सप्तमे इत्यादि। सप्तमे त्वन्नकाले तथाविधानां पुराणानां लोहितशालि-

यस्य युञ्जन इत्यर्थः, अतिस्थानमिति अत्यर्थं दण्डायमानत्वेनावस्थितिः; प्रमितभोजनमेकरसाभ्यासः; अतिहीनकं नवशालिकं धान्यादि; गुरुशब्देन स्वभावगुरुलकुचपिष्टकादेर्यथोक्तमात्रयापि भोजननिषेधः ॥ १४ ॥

चक्रपाणिः—सायाह्न इत्यादौ सम्यगग्निशुद्धिलक्षणे भूते सायाह्ने, किञ्चिल्लघुत्वापरेऽह्नि; यदुक्तं सिद्धौ—'वमितं लङ्घयेत् सम्यक् जीर्णलिङ्गान्यपेक्षयन्। तानि दृष्ट्वा तु पेयादिक्रमं

मोदनमुष्णोदकानुपानं तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेण भोजयेत् । एवमष्टमे नवमे चान्नकाले । दशमे त्वन्नकाले लावकपिञ्जलादीनामन्यतमस्य मांसरसेनोदकलावणिकेनाति सारवता भोजयेत् ; उष्णोदकानुपानम् । एवमेकादशे द्वादशे चान्नकाले । अत ऊर्द्ध्वमन्नगुणान् क्रमेणोपभुञ्जानः सप्तरात्रेण प्रकृतिभोजनमागच्छेत् ॥ १५ ॥

अथैनं पुनरेव स्नेहस्वेदाभ्यामुपपाद्यानुपहतमनसमभिसमीक्ष्य सुखोषितं सुप्रजीर्णभक्तं कृतहोमबलिमङ्गलजप्यप्राय-

तण्डुलानां द्विप्रसृतं चतुःपलं सुस्विन्नमोदनमुष्णोदकानुपानं तनुना स्वल्पघनेन तनुस्नेहलवणोपपन्नेन मुद्गयूषेण भोजयेत् । एवंप्रकारेणाष्टमेऽन्नकाले नवमे चान्नकाले च भोजयेत् । दशमे त्वन्नकाले लावादीनां मांसरसेनातिसारवतातिघनेन तथोदकलावणिकेन व्यक्तोदकलवणवता पुराणरक्तशालितण्डुलानामोदनं भोजयेत् । उष्णोदकानुपानम् । तत्रानुपिबेदुष्णोदकम् । एवंप्रकारेणैकादशद्वादशवारभोजनं कर्त्तव्यं । अत ऊर्द्ध्वं त्रयोदशवारान्नभोजनेऽन्नगुणान् यथाभिकामं गुरुकठिनमधुरादीन क्रमेणोपभुञ्जानः सप्तरात्रेण प्रतिदिनं द्विराहारेण चतुर्द्दशभिराहारैः प्रकृतिभोजनं स्वाभाविकमाहारमागच्छेत् इति ॥ १५ ॥

गङ्गाधरः—वमनविधानमुक्त्वा विरेचनविधानमाह—अथैनमित्यादि । अतः परमेनं वामितं जातबलम् । सप्ताहादूर्द्ध्वं पुनरेवोक्तरूपेण स्नेहस्वेदाभ्यां पूर्व्वं स्नेहयित्वा स्वेदेनोपपन्नं कृत्वाऽनुपहतमनसं प्रसन्नचित्तं प्रसमीक्ष्य वैद्यः सुखोषितं सुखेन रात्रौ कृतवासं सुप्रजीर्णभक्तं कृतहोमादिकम् इष्टतिथ्यादौ

कुर्य्यान्न लङ्घनम् ॥" इति । मण्डपूर्व्वां मण्डप्रधानाम् अयञ्च द्वादशकालनिवर्त्तनीयः क्रमः प्रधानशुद्धिशुद्धे ज्ञेयः , मध्ये त्वष्टानुकालिकः ; उक्तं हि—"पेयां विलेपीम्" इत्यादि । अत इत्यादि । अन्नगुणान् मधुरादीन् गुरुकठिनादींश्च ; एतच्च संसर्ज्जनक्रमादूर्द्ध्वं सप्तरात्रेण प्रकृतिभोजनगमनं तदा कर्त्तव्यं, यदि वमनानन्तरं विरेचनं न कर्त्तव्यं भवति ; तत्करणे तु संसर्ज्जनक्रमादूर्द्ध्वमेव स्नेहपानं, यदुक्तं—"संसृष्टभक्तं नवमेऽह्नि सर्पिस्तं पाययेद्वाप्यनुवासयेद्वा" इति । तथा सुश्रुतेऽप्युक्तं—"पक्षाद्विरेको वान्तस्य" इति । यदि संसर्ज्जनक्रमं तथानुगुणाभ्यासञ्च कृत्वा स्नेहः क्रियते, तदा पश्चाद् विरेको वान्तस्य न स्यात् ॥ १५ ॥

श्चित्तमिष्टतिथिनक्षत्रकरणमुहूर्त्ते ब्राह्मणान् स्वस्ति वाचयित्वा त्रिवृत्कल्कमक्षमात्रं यथार्हालोडनप्रविनीतं पाययेत् । प्रसमीक्ष्य दोष-भेषज-देश-काल-बल-शरीराहार-सात्म्य-सत्त्व-प्रकृतिवयसामवस्थान्तराणि विकारांश्च । सम्यक् विरिक्तञ्चैनं वमनोक्तेन * धूमवर्ज्जेन विधिनोपपादयेत् आ बलवर्णप्रतिलाभात् । बलवर्णोपपन्नञ्चैनमनुपहतमनसमभिसमीक्ष्य सुखोषितं सुप्रजीर्णभक्तं शिरःस्नातमनुलिप्तगात्रं स्रग्विणमनुपहतवस्त्रसंवीतम् अनुरूपालङ्कारालङ्कृतं सुहृदां दर्शयित्वा ज्ञातीनां दर्शयेत् । अथैनं कामेष्ववसृजेत् ॥ १६ ॥

ब्राह्मणान् स्वस्ति वाचयित्वा दोषभेषजादीनामवस्थान्तराणि विकारांश्च प्रसमीक्ष्य विवेच्य त्रिवृत्कल्कमात्रां विरेचनोपगस्य मात्रां यथार्हेणालोडनद्रवेण प्रतिविनीतमालोड्य पाययेत् ।

सम्यगित्यादि । सम्यग्विरिक्तञ्च खल्वेनं पुरुषं वमनोक्तेन विधिना धूमवर्ज्जेनोपपादयेदुपचारयेत् । तद्यथा—निवृत्ते विरेचने सुप्रक्षालितपाणिपादास्यमेनं निवातमगारमनुप्रवेश्य संवेश्य शय्यायामनुशिष्यात् । उच्चैर्भाष्यादीनि मनसाप्यसेवमानः सर्व्वमाहारमद्या इति । स तथा कुर्य्यात् । ततः सायाह्ने परे वाह्नि सुखोदकपरिषिक्तमित्यादुक्तक्रमेणाहारविधानसेवनं कारयेदा बलवर्णप्रतिलाभात् । सम्यग्योगायोगातियोगलक्षणञ्च । काले प्रवृत्तिरनतिमहती व्यथा यथाक्रमं दोषहरणं स्वयञ्चावस्थानमिति सम्यग्योगलक्षणानि भवन्ति, एवं सम्यग्योगेन तीक्ष्णमध्यमृदुभेदो विरेचनस्यापि ज्ञेयः । तद्यथा—"जघन्यमध्यप्रवरे तु वेगाश्चत्वार इष्टा वमने षडष्टौ । दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा द्वित्रिचतुर्गुणश्च ॥ पित्तान्तमिष्टं वमनं विरेकादर्द्धं कफान्तञ्च विरेकमाहुः । द्वौ त्रीन सविट्कानपनीय वेगान मेयं विरेके वमने तु पीतम् ॥" इति । योगाधिक्येन तु फेनिलरक्तचन्द्रिकोपगमनमिति । तदतियोगनिमित्ता

चक्रपाणिः—अथैनमिति कृतसंसर्ज्जनक्रमं, प्रतिविनीतम् आलोडितं, दोषादयः पूर्व्ववद् व्याख्येयाः ; विकारांश्चेति कुष्ठज्वरादीन् विरेचनसाध्यान्, पूर्व्वन्तु "सूक्ष्माणि हि" इत्यादौ

*. वमनानन्तरलक्षणोक्तेनेति चक्रपाणिगृहीतः पाठः ।

भवन्ति चात्र ।

अनेन विधिना राजा राजमात्रोऽथवा पुनः ।
यस्य वा विपुलं द्रव्यं स संशोधनमर्हति ॥
दरिद्रस्त्वापदं प्राप्य प्राप्तकालं विरेचनम् ।
पिबेत् काममसंभृत्य सम्भारानपि दुर्लभान् ॥
न हि सर्व्वमनुष्याणां सन्ति सर्व्वपरिच्छदाः ।
न च रोगा न बाधन्ते दरिद्रानपि दारुणाः ॥
यद्यच्छक्यं मनुष्येण कर्त्तुमौषधमापदि ।
तत्तत् सेव्यं यथाशक्ति वसनान्यशनानि च ॥
मलापहं रोगहरं बलवर्णप्रसादनम् ।
पीत्वा संशोधनं सम्यगायुषा युज्यते चिरम् ॥ १७ ॥

आध्मानादयश्चोपद्रवा व्यापदो भवन्ति। ते वमने प्रागुक्ताः। सिद्धिस्थाने विस्तरेण वक्ष्यन्ते सिद्धयश्च तासामिति।

अथ वैद्यो यत् कुर्य्यात् तदाह—बलवर्णोपपन्नञ्चेत्यादि। कामेष्ववसृजेत् तस्य यथाकामं कर्म्मसु कर्त्तव्येषु विधानमादिशेदिति॥ १६ ॥

गङ्गाधरः—अथोपसंहरति भवन्ति चात्रेत्यादि। अनेनेत्यादि। अनेनोक्तरूपेण विधिना राजा राजमात्रो वा धनवान् वा यस्य विपुलं धनमेव द्रव्यमस्ति, स एवंविधानेन संशोधनमर्हति, न त्वन्यः। दरिद्रस्तु खलु यदा व्याधिरूपमापदं प्राप्नोति तदा दुर्लभान् सम्भारानसम्भृत्यापि काममिष्टतः पिबेत्। कस्मात्? न हीत्यादि। हि यस्मात् सर्व्वमनुष्याणां सर्व्वपरिच्छदा न सन्ति। न च दारुणा रोगा दरिद्रान् न बाधन्ते? अपि च बाधन्ते। अत एव यद्यद् येन मनुष्येणौषधमापदि रोगे कर्त्तुं शक्यं यथाशक्ति तत् सेव्यं तेन। तथा

विकारो नोक्तः, तस्य परीक्ष्यत्वेनैव ग्रहणात्, किंवा, दोषग्रहणेनैव तत्र विकारग्रहणम्; कामेषु ईप्सितेषु, अवसृजेन्नियन्त्रणं कुर्य्यात् ॥ १६ ॥

चक्रपाणिः—सम्प्रति दरिद्रस्य यथोक्तं सम्भारमकृत्वापि संशोधनकरणमाह—दरिद्र इत्यादि। दुर्लभानिति वचनेन सुलभानि दरिद्रेणोत्पादनीयानि। संशोधनकरणगुणमाह—मलापहमित्यादि ॥ १७ ॥

तत्र श्लोकाः।

ईश्वराणां वसुमतां वमनं सविरेचनम्।
सम्भारा ये यदर्थञ्च समानीय प्रयोजयेत्॥
यथा प्रयोज्या या मात्रा यदयोगस्य लक्षणम्।
योगातियोगयोर्यच्च दोषा ये चाप्युपद्रवाः॥
यदसेव्यं विशुद्धेन यश्च संसर्ज्जनक्रमः।
तत् सर्व्वं कल्पनाध्याये व्याजहार पुनर्व्वसुः॥ १८॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
उपकल्पनीयो नाम पञ्चदशोऽध्यायः॥ १५॥

वमनादिकञ्च। मलापहं रोगहरं बलवर्णप्रसादनञ्च संशोधनं पीत्वा सम्यग्योगेन पुमान् चिरमायुषा युज्यते॥ १७॥

गङ्गाधरः—तत्राध्यायार्थमाह—तत्र श्लोका इत्यादि। ईश्वराणामित्यादि। ईश्वरा इह राजानः राजमात्राश्च। शेषं स्पष्टमित्यस्याध्यायस्यार्थः॥ १८॥

अध्यायं समापयति—अग्नीत्यादि। पूर्व्ववद्व्याख्येयम्।

इति श्रीगङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ सूत्रस्थानीयोपकल्पनीयाख्यपञ्चदशाध्यायजल्पाख्या पञ्चदशी शाखा॥ १५॥

चक्रपाणिः—संग्रहे—ईश्वराः सविलासाः, तेन, राज्ञो राजमात्रस्य ग्रहणं, प्रयोजयेदिति सम्भारानिति शेषः॥ १८॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थानव्याख्यायाम् उपकल्पनीयो नाम पञ्चदशोऽध्यायः॥ १५॥

---

## षोड़शोऽध्यायः ।

अथातश्चिकित्साप्राभृतीयमध्यायं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

चिकित्साप्राभृतो विद्वाञ्छास्त्रवान् कर्म्मतत्परः ।
नरं विरेचयति यं स योगात् सुखमश्नुते ॥
यं वैद्यमानी त्वबुधो विरेचयति मानवम् ।
सोऽतियोगादयोगाच्च मानवो दुःखमश्नुते ॥ २ ॥

गङ्गाधरः—अथवं संशोधने कृतेऽसम्यक्कृते च यद्यत् स्यात् तत् तदुक्त्वा चिकित्साप्राभृतीयमध्यायमारभते—अथात इत्यादि । चिकित्सा प्राभृतमुपढौकनं यस्य स चिकित्साप्राभृतो वैद्य इति कश्चिदाह । प्राभृतं प्रकर्षेण भृतिः प्रभृतिः । प्रभरणं सम्भाराणाम् । चिकित्सायां प्रभरणेन वर्त्तते यः स चिकित्साप्राभृतो वैद्यः । तमधिकृत्य कृतोऽध्यायः । तम् । शेषं सर्व्वं पूर्व्ववद्-व्याख्येयम् ॥ १ ॥

गङ्गाधरः—चिकित्साप्राभृत इत्यादि । प्रभृतिः सम्भाराणां प्रकर्षेण भृतिर्भरणमायोजनं प्रभृतिः, तया वर्त्तते यः स प्राभृतः । चिकित्सायां प्राभृतो यः स चिकित्साप्राभृतः । एवं विद्वान् ज्ञानवान् तथा शास्त्रवान् आयुर्व्वेदे विद्वानपि शास्त्रान्तराध्ययनवान् । तथा कर्म्मसु चिकित्साक्रियासु तत्परः कुशलः । यं नरं विरेचयति वमनविरेचनाभ्यां दोषान् देहान्निःसारयति स नरो वमनविरेचनयोः सम्यग्योगात् सुखमश्नुते । इतरवैद्यकृतसंशोधने दोषमाह—यं वैद्यमानीत्यादि । यस्तु खल्वबुधो न पण्डितः किन्तु वैद्यमानी आत्मानं वैद्यं मन्तुं शीलं यस्य सः । वैद्यमान्यपण्डितो वैद्यो यं नरं विरेचयति वामयति वा स मानवो वमनविरेचनयोरतियोगादयोगाच्च दुःखमश्नुते ॥ २ ॥

चक्रपाणिः—पूर्व्वाध्यायोक्तवमनविरेचनयोर्विस्तरेण सम्यग्योगादिलक्षणं तथा तत्प्रवृत्तिविषयपुरुषांश्चाभिधातुं चिकित्साप्राभृतीयोऽभिधीयते ।—चिकित्सा प्राभृतरूपा सदा यत्नेन आतुरोपढौकनीयत्वेन यस्य विद्यते स चिकित्साप्राभृतीयः । योगात् सम्यग्योगात्, सुखमारोग्यम् । विरेचयतीत्यत्र वामयतीत्यपि बोद्धव्यं विरेचनशब्दस्य वमनेऽपि प्रवृत्तेः । सोऽतियोगादित्यादि । दुःखं विकारः, यदुक्तं—"विकारो दुःखमेव तु ।" ननु वमनादौ कस्मान्मिथ्यायोगो नोच्यते ?

दौर्ब्बल्यं लाघवं ग्लानिर्व्याधीनामल्पता रुचिः।
हृद्वर्णशुद्धिः क्षुत् तृष्णा काले वेगप्रवर्त्तनम् ॥
बुद्धीन्द्रियमनःशुद्धिर्मारुतस्यानुलोमता।
सम्यग्विरिक्तलिङ्गानि कायाग्नेश्चानुवर्द्धनम् ॥ ३ ॥
ष्ठीवनं हृदयाशुद्धिरुत्क्लेशः श्लेष्मपित्तयोः।
आध्मानमरुचिश्छर्दिरदौर्ब्बल्यमलाघवम् ॥

गङ्गाधरः—ननु स योगात् सुखमश्नुते इति यदुक्तं तत् सम्यग्योगः कथं विज्ञायत इति? अतो विरेचनस्य सम्यग्योगलक्षणान्याह—दौर्ब्बल्यमित्यादि। विरेचनकृतं दौर्ब्बल्यम् न तु व्याध्यादिकृतम्। लाघवञ्च शरीरस्य। ग्लानिश्चाहर्षः शरीरस्य। व्याधीनां तेषां तेषामल्पता। एवं रुचिश्चाहारे भवति। हृच्छुद्धिर्मनोबुद्धिस्थानवक्षसः शुद्धिरजाड्यम्। वर्णशुद्धिर्वर्णप्रसन्नता। काले क्षुधा तृष्णा मलमूत्रयोः प्रवर्त्तनञ्च। बुद्धीन्द्रियमनसां शुद्धिः। बुद्धेर्दशानामिन्द्रियाणां मनसश्च शुद्धिर्मलापहतिः। मारुतस्यानुलोमताऽधोगतिशीलता। कायाग्नेश्च जाठराग्नेरनुक्रमेण वर्द्धनम्। सम्यग्विरिक्तस्य लिङ्गानि भवन्ति ॥ ३ ॥

गङ्गाधरः—विरेचनस्यायोगलक्षणान्याह—ष्ठीवनमित्यादि। ष्ठीवनं मुखेन स्वल्पोद्गिरणम्। हृदयस्याशुद्धिर्जाड्यम्। उत्क्लेश उपस्थितवमनत्वमिव

यावता यस्य वस्तुन उचितो योगः स योगः, तस्य स्वल्पो वा योगः सर्व्वथा वाऽयोगोऽयोग इष्यते, तस्यैवातिमात्रयोगो विकारकरोऽतियोगः; अनुचितसम्बन्धेन तु वस्तुनो मिथ्यायोगः, तेनेहाप्युत्क्लिष्टश्लेष्मादिधर्म्मप्रयुक्ते पुरुषे विरेचनं सर्व्वथाऽयौगिकमेव, तच्च प्रयुक्तं प्रतीपगमनेनैव याति, विरेचने मिथ्यायोगोऽयमयोगः, एवं वमनादिष्वपि ज्ञेयम्, एवम्भूतस्य मिथ्यायोगस्य अयोगेनैव ग्रहणात्, उक्तं हि—"प्रातिलोम्येन दोषाणां हरणात् ते ह्यकृत्स्नशः। अयोगसंज्ञं कृच्छ्रेण यदागच्छति चाल्पशः" ॥ इति। दृढविरेचनोपयुक्तस्य वमनोपयुज्यमानस्य हीनमात्रत्वातिमात्रत्वाभ्यां विना यदुष्याधिकरणत्वं तन्मिथ्यायोगादेव परं स्यात्, यदुक्तं तिस्रैषणीये—'मिथ्यायोगो राशिवर्ज्जेष्वाहारविधिविशेषायतनेषूपदेक्ष्यते' इति। सत्यं, भेषजस्य मिथ्यायोगोऽयं, वमनस्य तु दोषहरणरूपस्यायोग इति, एवञ्च विरेचनादावपि ज्ञेयम्। यद्यप्यत्रापि मिथ्यायोगः कथञ्चित् पार्य्यते कल्पयितुं, तथापि प्रयोजनशून्यत्वादाचार्य्येण पृथङ् न कृतः; शब्दादिषु तु मिथ्यायोगानां सम्बन्धमात्रस्यापि परिहारार्थं पृथक् कृत इति ॥ ११२ ॥

चक्रपाणिः—दौर्ब्बल्यमित्यादि विरेचनस्य सम्यग्युक्तायुक्तातियुक्तस्य लक्षणानि; अदौर्ब्बल्यं

जङ्घोरुसदनं तन्द्रा स्तैमित्यं पीनसागमः।
लक्षणान्यविरिक्तानां मारुतस्य च निग्रहः॥ ४॥
विट्पित्तकफवातानामागतानां यथाक्रमम्।
परं स्रवति यद्रक्तं मेदोमांसोदकोपमम्॥
निःश्लेष्मपित्तमुदकं शोणितं कृष्णमेव वा।
तृष्यतो मारुतार्त्तस्य सोऽतियोगः प्रमुह्यतः॥ ५॥
वमनेऽतिकृते लिङ्गान्येतान्येव भवन्ति हि।
ऊर्द्ध्वगा वातरोगाश्च वाग्ग्रहश्चाधिको भवेत्॥ ६॥
चिकित्साप्राभृतं तस्मादुपेयाच्छरणं नरः।
युञ्ज्याद् य एनमत्यन्तमायुषा च सुखेन च॥ ७॥

श्लेष्मपित्तयोर्वा। आध्मानश्चारुचिश्च छर्द्दिश्च तथा विरेचनकृतदौर्ब्बल्यं न भवति। अलाघवं शरीरस्य। जङ्घयोरूर्व्वोश्च सदनमवसादः। तन्द्रा निद्रावत् क्लान्तिः। स्तैमित्यमार्द्रवसनावगुण्ठितत्वमिव देहस्य। पीनसस्य प्रतिश्यायस्य आगमः। मारुतस्य निग्रहो नानुलोमना। एतान्यसम्यग्विरिक्तानां लक्षणानि भवन्ति॥ ४॥

गङ्गाधरः—अथ विरेचनस्यातियोगलक्षणान्याह—विट्पित्तेत्यादि। अधोभागे खलु विरेचने यस्य विडादीनां यथाक्रममागतानां परं रक्तं स्रवति। तत् रक्तं मेदोमांसोदकोपमं निःश्लेष्मपित्तं केवलमुदकं कृष्णं शोणितमेव वा स्रवति। तस्य तृष्यतो मारुतार्त्तस्य मारुतलिङ्गान्वितस्य प्रमुह्यतश्च स विरेचनस्यातियोगो भवति॥ ५॥

गङ्गाधरः—अथ वमनातियोगलक्षणान्याह—वमनेऽतीत्यादि। वमनेऽतिशयेन कृते सत्येतान्येव कफपित्तानिलानां यथाक्रममागतानां परं रक्तं स्रवतीत्यादीनि लिङ्गानि भवन्ति। अधिकञ्च लिङ्गं वातरोगा ऊर्द्ध्वगा भवन्ति। वाग्ग्रहश्च भवतीति। तस्मात् संशोधने कर्त्तव्ये बुद्धिमान् नरश्चिकित्सा-

स्थौल्यानपगमः। यथाक्रममिति पठन् क्रमेणैवेति दर्शयति, यदुक्तं—"प्रासिश्च विट्पित्त-कफानिलानां सम्यग्विरिक्तस्य भवेत् क्रमेण।" आगतानां परमुक्तमिति योजना॥ ३—५॥

चक्रपाणिः—अतियोगलक्षणं वमनेऽतिदिशति—वमन इत्यादि। वमनातियोगे विट्पित्तकफ-

अविपाकोऽरुचिः स्थौल्यं पाण्डुता गौरवं क्लमः।
पिडकाकोठकण्डूनां सम्भवोऽरतिरेव च॥
आलस्यश्रमदौर्ब्बल्यं दौर्गन्ध्यमवसादकः।
श्लेष्मपित्तसमुत्क्लेशो निद्रानाशोऽतिनिद्रता॥
क्लैव्य तन्द्रिरबुद्धित्वमशस्तस्वप्नदर्शनम्।
बलवर्णप्रणाशश्च तृप्यतो बृंहणैरपि॥
बहुदोषस्य लिङ्गानि तस्मै संशोधनं हितम्।
ऊर्द्ध्वञ्चैवानुलोमञ्च यथादोषं यथाबलम्॥ ८॥
एवं विशुद्धकोष्ठस्य कायाग्निरभिवर्द्धते।
व्याधयश्चोपशाम्यन्ति प्रकृतिश्चानुवर्त्तते॥

प्राभृतं विद्वांसं शास्त्रवन्तं कर्म्मतत्परं वैद्यं शरणं रसिकत्वेनोपेयात्। तादृशवैद्यस्य शरणागतत्वे शुभमाह—युञ्ज्यादित्यादि। यश्चिकित्साप्राभृतो वैद्य एवं संशोधनकामं सम्यग्वमनविरेचनाभ्यामल्पयमायुषा सुखेन च युञ्ज्यात्। तस्मान्नातुरं वैद्यपातितं वैद्यं संशोधनकामः शरणमुपेयादिति॥ ६।७॥

गङ्गाधरः—यस्य संशोधनं कर्त्तव्यं तदाह अविपाक इत्यादि। क्लमोऽनायासतः श्रम इव। श्रम इति स्वल्पायासेनातिश्रान्त इव भवति। अवसादको मनोऽवसन्नता। निद्रानाशो वातदोषेण। अतिनिद्रता कफदोषवृद्ध्या। क्लैव्यं स्त्रीष्वसामर्थ्यम्। अबुद्धित्वं पूर्व्ववद्बुद्धिस्फूर्तिहानिः। एतानि बहुदोषस्य नरस्य लिङ्गानि भवन्ति। संशोधनन्तु तस्मै नराय हितम्। तस्मै किं संशोधनं हितमिति? अत आह ऊर्द्ध्वञ्चेत्यादि। अविपाकादुक्तलक्षणस्य यथादोषं यथाबलञ्चोर्द्ध्वञ्चानुलोमञ्च संशोधनं हितमिति॥ ८॥

गङ्गाधरः—ईदृशसंशोधनफलमाह एवमित्यादि। एवमुक्तप्रकारेण संशुद्ध-

वातानामिति न योजनीयं, येन वमनप्रयोगे कफपित्तानिलागमकृतः क्रमो भवेत्; यदुक्तं—"क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स इष्टः" इति॥ ६।७॥

चक्रपाणिः—संशोधनविषयबहुदोषलक्षणमाह—अविपाक इत्यादि। क्लम इत्यनायासकृतः श्रमः, श्रमस्त्विह स्वल्पेनायासेन ज्ञेयः, अवसादको मनोऽवसादः, निद्रानाशो वातप्रधानेन दोषेण, अतिनिद्रता श्लेष्मप्रधानेन।

इन्द्रियाणि मनोबुद्धिर्वर्णश्चास्य प्रसीदति ।
बलं पुष्टिरपत्यञ्च वृषता चास्य जायते ॥
जरां कृच्छ्रेण लभते चिरं जीवत्यनामयः ।
तस्मात् संशोधनं काले युक्तियुक्तं पिबेन्नरः ॥
दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ।
जिताः संशोधनैर्ये तु न तेषां पुनरुद्भवः ॥
दोषाणाञ्च द्रुमाणाञ्च मूलेऽनुपहते सति ।
रोगाणां प्रसवाणाञ्च गतानामागतिर्ध्रुवा ॥ ६ ॥

कोष्ठस्य नरस्य कायाग्निवर्द्धनेऽपि व्याधयश्चोपशाम्यन्ति प्रकृतिश्चानुवर्त्तते। या गर्भादियादृशप्रकृतिः सानुवर्त्तते। इन्द्रियादिकञ्चास्य प्रसन्नं भवति। बलादिकञ्चास्य जायते। जरां वलिपलितानवयावस्थां कृच्छ्रेण चिरेण लभते चायम्। चिरञ्च कालमनामयो जीवति। तस्मादित्यादि।—तस्मात् कायाग्निवर्द्धनादिफलकत्वात् संशोधनं वमनविरेचनं काले दोषोपचयकाले संशोधनार्हकाले च युक्तियुक्तं युक्त्या यदुपयुक्तं भवति तत् तु नरः पिबेत्।

ननु कस्मात् संशोधनं पिबेत् न संशमनमिति ? अत आह—दोषा इत्यादि। लङ्घनपाचनैः संशमनैर्जिता दोषाः कदाचित् पुनः कुप्यन्ति। ये तु दोषाः संशोधनैर्जितास्तेषां दोषाणां पुनरुद्भवो न भवतीति। कस्मादेवं स्यादिति ? अत आह—दोषाणाञ्चेत्यादि। दोषाणाञ्च द्रुमाणाञ्च मूलेऽनुपहते सति। सति हि मूले रोगाणां प्रसवाणाञ्च गतानामपि ध्रुवा पुनरागतिः स्यात्। तथा च लङ्घनपाचनैः संशमनैर्दोषाणां मूलानुच्छेदाद्रोगजयेऽपि कदाचित् तद्दोषकोपः स्यात्। यथा द्रुमाणां मूले त्वच्छिन्ने सति सति हि मूले प्रसवाणामङ्कुराणां

समूलदोषापहारकत्वेन संशोधनस्य, लङ्घनपाचनयोस्तु दोषापहरत्वे सत्यपि न संशोधनवद् दोषहन्तृत्वमित्याह—दोषा इत्यादि। कदाचिदित्यल्पहेतुप्राप्त्या, न तेषां पुनरुद्भव इति बलवद्दोषकारणत्वं विनेति मन्तव्यम्। उक्तेऽर्थे दृष्टान्तमाह—दोषाणामित्यादि। लङ्घनपाचनाभ्यां रोगकारणीभूतदोषप्रकोपहरणमात्रे कृते रोगो यो निवृत्तः, स मूलभूताशयव्यवस्थितदोषानुच्छेदाद् यत्किञ्चिदनुगुणकालादिप्राप्त्या पुनः कुपितदोषेण भवतीति भावः ॥ ८१ ॥

भेषजक्षयिते पथ्यमाहारैश्चैव वृंहणम्।
घृतमांसरसक्षीर-हृद्ययूषोपसंहितैः॥
अभ्यङ्गोत्सादनैः स्नानैर्निरूहैः सानुवासनैः।
तथा स लभते शर्म्म युज्यते चायुषा चिरम्॥ १० ॥
अतियोगानुबन्धानां सर्पिष्पानं प्रशस्यते।
तैलं मधुरकैः सिद्धमथवाप्यनुवासनम्॥
यस्य त्वयोगस्तं स्निग्धं पुनः संशोधयेन्नरम्।
मात्राकालबलापेक्षी स्मरन् पूर्व्वमनुक्रमम्॥ ११ ॥

पुनरागतिर्न वा भवति। भेषजक्षयिते खलु संशोधनौषधैः क्षयो मूलोच्छेदो जातो यस्य तस्मिन् भेषजक्षयिते दोषे सति स संशुद्धः पुमान् पथ्यं तथाहारैश्च घृतादुरपसंहितैर्घृतादियुक्तैर्वृंहणमभ्यङ्गादिभिश्च वृंहणं लभते। तथा शर्म्म सुखं लभते। चिरञ्चायुषा युज्यते। यथा द्रुमाणां मूले च्छिन्ने प्रसराः पुनर्नागच्छन्ति॥ ९।१० ॥

गङ्गाधरः—ननु प्रमादेन वैद्यमानिना लवुधेन कृते संशोधनेऽतियोगे निवृत्ते यद्यनुबन्धो वर्त्तते तदा किं कर्त्तव्यमिति? अत आह—अतियोगेत्यादि। येषामतियोगकृतलक्षणानुबन्धो वर्त्तते तेषां तत्तद्व्यापत्प्रशमनौषधस्य सर्पिषः पानम्। अथवा मधुरकैर्जीवनीयैर्दशभिः सिद्धं कल्कैः साधितं तैलमनुवासनं प्रशस्यते। अथ यस्य त्रिरेकायोगः स्यात् तं जनं पुनः स्नेहेन स्निग्धं स्वेदेन च स्विन्नं पूर्व्वं यादृशमौषधं यन्मात्रं दत्तं तेन न सम्यक् युक्तमभूत। तत सर्व्वमनुक्रमं स्मरन् मात्राकालबलान्यपेक्ष्य पुनः संशोधयेदिति॥ ११ ॥

चक्रपाणिः—सम्प्रति शोधनेन यथा दोषक्षयः तथा धातुक्षयोऽपि स्यात्, तेन प्रतिकारमाह—भेषज इत्यादि। आहारैरेवेत्येवावधारणे, तेन, भैषज्यैः वृंहणं निषेधयति, भेषजस्य वीर्य्यप्रधानस्य तदा दुःसहत्वात्। अनुवासनैरित्यत्र चकारो बोद्धव्यः, तेन अभ्यङ्गादिभिश्च वृंहणं पथ्यम्॥ १० ॥

चक्रपाणिः—अतियोगादिचिकित्सामाह—अतियोगेत्यादि। स्मरन् पूर्व्वमनुक्रममित्यनेन, यः

स्नेहने स्वेदने शुद्धौ रोगाः संसर्ज्जने च ये ।
जायन्तेऽमार्गविहिते तेषां सिद्धिषु साधनम् ॥ १२ ॥
जायन्ते हेतुवैषम्याद्विषमा देहधातवः ।
हेतुसाम्यात् समास्तेषां स्वभावोपरमः सदा ॥ १३ ॥
प्रवृत्तिहेतुर्भावानां न निरोधेऽस्ति कारणम् ।
केचित्तु तत्रापि मन्यन्ते हेतुं हेतोरवर्त्तनम् ॥ १४ ॥

गङ्गाधरः—अथ स्नेहादौ क्रियमाणे यदि सम्यग्योगाभावादयोगादितो रोगा अन्ये भवन्ति तत्र किं कर्त्तव्यमिति ? अत आह—स्नेहन इत्यादि । स्नेहनादौ तथा शुद्धौ तथा सम्यग्योगे पेयादिसंसर्ज्जने चामार्गविहिते यथावन्मार्गविधानाभावेऽयोगातियोगादौ सति ये रोगा जायन्ते, तेषां साधनं सिद्धिषु सिद्धिस्थाने वक्ष्यत इति शेषः ॥ १२ ॥

गङ्गाधरः—नन्वेवं चेत् कुतो देहधातूनां वैषम्यं भवति, कुतो वा साम्यं, तयोश्च साम्यवैषम्ययोरनुवृत्तिः कुतः स्यात्, कुतो वा निवृत्तिः ? इत्याशङ्कायामाह—जायन्त इत्यादि । देहधातवो देहस्य धारका ये भावास्ते । हेतुवैषम्यात् तेषामुत्पत्तौ स्थितौ च हेतूनां वैषम्याद्वृद्धिहान्यन्यतरस्माद्विषमा जायन्ते । तथा देहधातूनां ये हेतवस्तेषां साम्यात् वृद्धिह्रासव्यतिरेकावस्थायामवस्थानात् ते देहधातवः समा जायन्ते । तयोर्देहधातुसाम्यवैषम्ययोः सदैवाविरतं स्वभावोपरमः । स्वभावस्य स्वस्य धर्मस्य स्वस्य रूपस्य चोपरमो नाशो भवति । तत्र भावानां स्वस्वधर्माणां स्वस्वरूपाणाञ्च सदैवाविरतप्रवृत्तौ हेतुरस्ति । सदैवाविरतनिरोधे

पूर्व्वंमयोगे हेतुभूतः, तं परिहरन्तीति शिक्षयति । अमार्गविहिते,अविधिविहिते । साधनमित्यत्र वक्ष्यत इति शेषः ॥ ११ । १२ ॥

चक्रपाणिः—सम्प्रति यद्देतत् सिद्धौ वक्ष्यमाणं, तदनुपक्रमेण च सर्व्वरोगजातानामेव क्षणभङ्गभावे पक्षेऽपि रोगप्रशमकत्वं प्रतिपादयितुं प्रकरणमारभते—जायन्त इत्यादि । तेषामिति विषमाणां धातूनां समानाञ्च, स्वभावात् विनाशकारणं निरपेक्षादुपरमो विनाशः स्वभावोपरमः, सदैवाविलम्बेन, तेनोत्पन्नमात्र एव विनश्यन्तीत्यर्थः ॥ १३ ॥

चक्रपाणिः—अमुमेवार्थं उपपत्तिमाह—प्रवृत्तीत्यादि । प्रवृत्तिहेतुरुत्पत्तिहेतुर्भावानामस्ति, निरोधे विनाशे हेतुर्भावानां कारणं नास्ति, यस्मात् सर्व्व एव भावाः प्रदीपादिवदुत्पत्तौ कारणापेक्षिणः, विनाशे तु द्वितीयक्षणाविद्यमानत्वलक्षणे सहजसिद्धत्वे न हेत्वन्तरमपेक्षन्ते, यतः न स्वाभाविक-

एवमुक्तवाथ*माचार्य्यमग्निवेशोऽभ्यभाषत।
स्वभावोपरमे कर्म्म चिकित्साप्राभृतस्य किम्॥
भेषजैर्विषमान् धातून् कान् समीकुरुते भिषक्।
का वा चिकित्सा भगवन् किमर्थं वा प्रयुज्यते॥ १५॥

विनाशे कारणं नास्ति। इत्यकारणं प्रतिक्षणं भङ्गः स्यादिति। तत्र केचिन्महर्षयो भावानां स्वभावोपरमेऽविरतनिरोधे हेतोरवर्त्तनं हेतुर्नास्तीति य एव हेतोरसद्भावस्तमेव भावानां सदा स्वभावोपरमे हेतुं मन्यन्ते॥ १३।१४॥

गङ्गाधरः—एवमित्यादि। इत्येवमर्थमुक्त्वा वदन्तमाचार्य्यमात्रेयपुनर्व्वसुमभि लक्ष्यीकृत्याग्निवेशोऽभाषत। तत्रोक्त्वेति क्त्वाप्रत्ययः परापरयोगे। यथा—तत् सर्व्वं दृष्ट्वानुमाविशदिति, नदीं गत्वा पर्व्वतोऽयमिति, न तु पूर्व्वकाले। क्रिययोरेककर्त्तृकयोराचार्य्यकर्त्तृकक्रियान्तराभावात्, भिन्नकर्त्तृकयोरेककर्त्तृकयोर्वा। यथा यत्र क्रियाद्वयं पूर्व्वपरकालस्थं तत्र क्त्वा स्यादिति; तदा भवतु पूर्व्वकाले। "एककर्त्तृकयोः पूर्व्वकाले" इति मूलस्यार्थमेककर्त्तृकयोरिति पदमुपात्तं पाणिनिना। भिन्नकर्त्तृकयोः क्रिययोः परापरयोगाभावान्न स्यात् क्त्वा इति। अग्निवेशो यदभाषत तदाह—स्वभावेत्यादि। भो भगवन् भावानां सदैव स्वभावोपरमे सति चिकित्साप्राभृतस्य वैद्यस्य किं कर्म्म? सदैव स्वभावोपरमे विषमा धातवो न क्षणमपि वर्त्तन्ते। तदा कान् विषमान् धातून् भिषक् भेषजैः समीकुरुते? सदैव च धातूनां वैषम्यस्वभावोपरमे चिकित्सा वा का स्यात् वैषम्यसमीकरणं

कथं हेत्वन्तरापेक्षा स्यात्, न ह्युत्पन्नः पदार्थः स्वाभाविकं ध्वंसं प्रति कारणान्तरमपेक्षते। तदेवं सर्व्वथा भावानामेव स्वाभाविके नाशे, देहधातूनामपि नाशः स्वाभाविक एवेति भावः। व्याधिप्रशमे च चिकित्साऽपेक्षकं पक्षान्तरमाह—केचिदित्यादि। तथापि विनाशेऽपि हेतुः कारणं, हेतोरवर्त्तनमिति उत्पादकहेतोरभावं मन्यन्त इति योजना। एवमपि हेतुपरम्परायाः क्षणिकत्वेन तत्कार्य्याणामपि स्वभावादेव निरयसन्निहितसहेतुविनाशहेतूनां न विनाशहेतुचिकित्सापेक्षेति भावः॥ १४॥

चक्रपाणिः—एवमुत्थितायां शङ्कायां गुरुं पृच्छति एवमित्यादि। किमित्याक्षेपे, कर्म्म साध्यं, स्वभावोपरमे सति न किमपि साध्यं पश्यामीति भावः। कान् समीकुरुते, विषमाणाम् अस्थिरत्वेन साम्यं तत्र कर्त्तुं न पार्य्यते इत्याशयः। का वा चिकित्सेति रोगप्रशमं प्रत्यकारणत्वेन

* एवमुक्तार्थमिति चक्रपाणिसम्मतः पाठः।

तच्छिष्यवचनं श्रुत्वा व्याजहार पुनर्व्वसुः ।
श्रूयतामत्र या सौम्य युक्तिर्दृष्टा महर्षिभिः ॥ १६ ॥
न नाशकारणाभावाद् भावानां नाशकारणम् ।
ज्ञायते नित्यगस्येव कालस्यात्ययकारणम् ॥
शीघ्रगत्वाद् यथाभूतस्तथा भावो विपद्यते ।
निरोधे कारणं तस्य नास्ति नैवान्यथाक्रिया ॥ १७ ॥

हि चिकित्सोच्यते। यदि स एव वैषम्योपरमः सदा भवति तदा किमर्थं चिकित्साकर्म्म भिषजा प्रयुज्यते? इत्यग्निवेशोऽभाषत ॥ १५ ॥

<u>गङ्गाधरः</u>—तत्रोत्तरमाह शिष्यस्याग्निवेशस्य तद्वचनं श्रुत्वा पुनर्व्वसुरात्रेयो व्याजहार। किं व्याजहार? तदाह श्रूयतामित्यादि। अत्र भावानां सदा स्वभावोपरमे महर्षिभिर्या युक्तिर्बुद्धिर्दृष्टा सा श्रूयतां सौम्याग्निवेशेति ॥१६॥

<u>गङ्गाधरः</u>—कीदृशी सा युक्तिरिति? अत आह न नाशेत्यादि। भावानां सदैव स्वभावस्योपरमो यो नाशस्तस्य कारणं न ज्ञायते नोपलभ्यते। कस्मात्? नाशकारणाभावात्। यथा नित्यगस्य कालस्य सदात्ययोऽनवरतमतीतत्वं ज्ञायते, तस्यात्ययस्य कारणं न ज्ञायते शीघ्रगत्वात्। भावानां स्वभावो हि शीघ्रगः। यथा कालस्वभावोऽपि चक्रवद् भ्रमणात्मकः स च शीघ्रगः। तस्मान्नाशकारणाभावो न नाशकारणं सम्भवति। तर्हि कथं भावानां स्वभावोपरमः सदा स्यादिति? अत आह यथाभूत इत्यादि। यो भावो यदा यथाभूतो वर्त्तते तथाभूतेनोत्तरावस्थामारभ्य पूर्व्वावस्थानतो विपद्यते। तत्र पूर्व्वावस्थाया निरोधे तस्य कारणं नास्ति। न च तन्निरोधेऽन्यथाक्रिया पूर्व्वभावादन्यथाक्रियोत्तरावस्थायामस्ति। यथा हेतुवैषम्याद्धातवो वातादयो विषमा भवन्ति। विषमा एवोत्तरावस्थां तत्पूर्व्वावस्थिकविषमरूपेणैवारभ्य

चिकित्सा नास्तीत्यर्थः, किमर्थं वा प्रयुज्यत इति यन्निवृत्त्यर्थं चिकित्सा प्रयुज्यते तद्धातुवैषम्यं स्वभावान्निवृत्तमिति चिकित्साप्रयोजनं नास्ति ॥ १५ ॥

<u>चक्रपाणिः</u>—पूर्व्वोक्तहेतुविनाशं दृष्टान्तेन हेतुमन्तमाह न नाशेत्यादि। भावानां नाशकारणं न ज्ञायते, तत् किमभावादेव, यथा शश-विषाणं, तद् वाऽज्ञानयोग्यत्वात् पृथिव्यां निखातमूलकीलकादिवत् सदपि न ज्ञायते इत्याह—नाशकारणाभावात् इति, नाज्ञानयोग्यत्वेन, किं तर्हि अभावादेवेत्यर्थः। अत्र दृष्टान्तमाह—नित्यगस्येत्यादि। निमेषादिरूपत्वेन नित्यगस्य,

पूर्व्वावस्थविषमस्वभावनाशमुपयान्ति। न तु विषमस्वभावनाशं प्राप्योत्तरावस्थां साम्यस्वभावेनारभन्ते। तस्मात् प्रवृत्तौ खलु भावानामुत्पत्तौ कारणमस्ति न तु निरोधे। वक्ष्यते च स्वयं महर्षिणा गर्भावक्रान्तिशारीरे "आत्मजश्चायं गर्भ" इत्यारभ्य "गर्भाशयमनुप्रविश्य शुक्रशोणिताभ्यां संयोगमेत्य गर्भत्वेन जनयत्यात्मनात्मानमात्मसंज्ञो हि गर्भः। तस्य पुनरात्मनो जन्मानादित्वान्नोपपद्यते। तस्मादजात एवायमजातं गर्भं जनयति। अजातो ह्यजातेन जनितः। स चैव गर्भः कालान्तरेण बाल्ययुवस्थविरभावान् प्राप्नोति। स यस्यां यस्यामवस्थायां वर्त्तते तस्यां तस्यां जातो भवति। या त्वस्य पुरस्कृतावस्था तस्यां जनिष्यमाणः। तस्मात् स एव जातश्चाजातश्च युगपद् भवति। तस्मिंश्च एतदुभयं सम्भवति जातत्वञ्चैव जनिष्यमाणत्वञ्च। स च जातो जन्यते। स चैवानागतेष्ववस्थान्तरेष्वजातो जनयत्यात्मनात्मानम्। सतो ह्यवस्थान्तरगमनमात्रमेव जन्म चोच्यते। तत्र तत्र वयसि तस्यां तस्यामवस्थायाम्। यथा सतामेव शुक्रशोणितबीजानां प्राक् संयोगाद्गर्भत्वं न भवति। तच्च संयोगाद् भवति। यथा सतस्तस्यैव पुरुषस्य प्रागपत्यात् पितृत्वं न भवति तच्चापत्याद्भवति। तथा सतस्तस्यैव गर्भस्य तस्यां तस्यामवस्थायां जातत्वमजातत्वं चोच्यते" इति। अथ—शीघ्रगत्वाद् यथा भूतस्तथा भावो विपद्यते इति। भावः किं प्राणी चाप्राणी चोच्यते? तेषाञ्च शीघ्रगत्वे किं कारणमिति? तत्रोच्यते केनचिन्महर्षिणा प्राणी चाप्राणी च सर्व्वो भावः क्षणिकः शीघ्रगः। पाञ्चभौतिकत्वेऽपि सर्व्वेषां दिक्कालोपादानकत्वाच्चक्रवद्भ्रमणस्वभावेन कालेऽविरतं भ्रामितत्वादिति वादमाश्रित्य वादिवचनमक्षपादगौतमेनोक्तम् "स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनाम्" इति। व्याख्यानञ्चैतद्वात्स्यायनेन "स्फटिकस्याभेदेनावस्थितस्योपधानभेदान्नानात्वाभिमानः। कस्मात्? स्फटिकेऽप्यपरापरोत्पत्तेः। स्फटिकेऽप्यन्या व्यक्तय उत्पद्यन्ते अन्या निरुध्यन्ते इति. कथम्? क्षणिकत्वाद्व्यक्तीनाम्। क्षणश्चाल्पीयान् कालः। क्षणस्थितिकाः क्षणिकाः। कुतः पुनर्गम्यते क्षणिका व्यक्तय इति? उपचयापचयप्रबन्धदर्शनाच्छरीरादिषु। पक्तिनिर्वृत्तस्याहाररसस्य शरीरे रुधिरादिभावेनोपचयोऽपचयश्च प्रबन्धेन प्रवर्त्तते। उपचयाद्व्यक्तीनामुत्पादोऽपचयान्निरोधः। एवञ्च सत्यवयवपरिणामभेदेन वृद्धिः शरीरस्य कालान्तरेण गृह्यत इति।

एवं मन्यते—निरपेक्षः कालो यथा विनश्वरत्वे न हेत्वन्तरं विनाशेऽपेक्षते, तथा सर्व्व एव भावाः, यद्धि यस्य हेत्वन्तरापेक्षं, न तस्य तदवश्यम्भावि, यथा—पटस्य रागः, हेत्वन्तरापेक्षी चेद्

सोऽयमुपचयापचयप्रबन्धो व्यक्तिमात्रे वेदितव्य इति"। तत्रोवाच गौतमः— "नियमहेत्वभावाद् यथादर्शनमभ्यनुज्ञा।" व्याख्यानञ्च तद्वात्स्यायनेन—"पदार्थानां सर्व्वासु व्यक्तिषूपचयापचयप्रबन्धः शरीरवदिति नायं नियमः। कस्मात्? हेत्वभावात्। नात्र प्रत्यक्षमनुमानं वा प्रतिपादकमस्तीति। तस्माद् यथादर्शनमभ्यनुज्ञा। यत्र यत्रोपचयापचयप्रबन्धो दृश्यते, तत्र तत्र व्यक्तीनाम् अपरापरोत्पत्तिरुपचयापचयप्रबन्धदर्शनेनाभ्यनुज्ञायते; यथा शरीरादिषु। यत्र यत्र न दृश्यते, तत्र तत्र प्रत्याख्यायते; यथा ग्रावप्रभृतिषु। स्फटिकेऽप्युपचयापचयप्रबन्धो न दृश्यते। तस्मादयुक्तं स्फटिकेऽप्यपरापरोत्पत्तिरिति। यथा चार्कस्य कटुकिम्ना सर्व्वद्रव्याणां कटुकिमानमापादयेत् तादृगेतदिति।" तत्र चोवाचापरः कश्चित् "यस्याशेषनिरोधेनापूर्व्वोत्पादं निरन्वयं द्रव्यसन्ताने क्षणिकानां मन्यते।" क्षणिकानां भावानां द्रव्यसन्ताने द्रव्यस्योपचयापचयप्रबन्धे खल्वु निःशेषेण निरोधेनापचयेनापूर्व्वस्योपचयस्योत्पत्तिस्तत्र पूर्व्वभावान्वयो नास्तीति मन्वानः कश्चनोवाच—"नोत्पत्तिविनाशकारणोपलब्धेः।" नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञा। न सर्व्वत्रैव प्राण्यप्राणिष्वभ्यनुजानीहि। कस्मात्? उत्पत्तिविनाशकारणोपलब्धेः। प्राणिषु शरीरवत् उत्पत्तिकारणं तावदुपलभ्यते। अप्राणिष्वपि यथावयवोपचयो वल्मीकादीनाम्। विनाशकारणञ्चोपलभ्यते यथा घटादीनामवयवविभागः। यस्य त्वपचितावयवं निरुध्यते, स्वरूपमनुपचितावयवञ्च स्वरूपमुत्पद्यते तस्याशेषनिरोधे निरन्वये त्वपूर्व्वोत्पादे च न कारणमुभयत्राप्युपलभ्यते इति। तत्र सिद्धान्तमुवाचाक्षपादगौतमः—"क्षीरविनाशे कारणानुपलब्धिवद् दध्युत्पत्तिवच्च तदुपपत्तिः।" यथानुपलभ्यमानं क्षीरविनाशकारणं दध्युत्पत्तिकारणञ्चाभ्यनुज्ञायते, तथा स्फटिकेऽप्यपरापरासु व्यक्तिषु विनाशकारणमुत्पत्तिकारणञ्चाभ्यनुज्ञेयमिति।

तत्राह वादिवचनम् "लिङ्गतो ग्रहणान्नानुपलब्धिः।" क्षीरविनाशलिङ्गं दध्युत्पत्तिः। ततः क्षीरविनाशकारणं गृह्यते। तथा शरीरावस्थान्तरोत्पत्तिः पूर्व्वावस्थाया लिङ्गम्। ततः पूर्व्वावस्थाया विनाशकारणं गृह्यते। ततो विनाशकारणस्य नानुपलब्धिरिति। तत्रोवाच पुनर्व्वसुः—विनाशकारणाभावात् भावानां नाशकारणम्। न जायते यथाभूतस्तथा भावो विपद्यते॥ इति। न हि क्षीरविनाशे कारणानुपलब्धिवद् दध्युत्पत्तिवच्च तदुपपत्तिर्भवति।

विनाशः स्यात्, नावश्यम्भावी स्यात्; एतद्विपर्य्ययाच्चानपेक्षत्वं विनाशस्य सिद्धम्। सम्प्रति अहेतुको विनाशः उत्पत्त्यनन्तरमेव स्यात्, पश्चात् स्थिरत्वेन संस्काराधानमपि भावेषु न पार्य्यते

क्षीरदध्नोः प्रकृतिविकृतिभावाद् यथाभूतो भाव उत्तरावस्थायां तथा भावः पूर्व्वावस्थायां विपद्यत इति। अत्र दृष्टान्तत्वाभावात् क्षीरदध्नोः पूर्व्वानुरूपेण उत्तररूपोत्पत्तौ पूर्व्वभावो हि हेतुः, न पूर्व्वभावविनाशः। ततो विक्रियमाणं क्षीरमेव दध्युत्पत्तौ हेतुः, न क्षीरविनाश इति। अतः क्षीरविनाशलिङ्गं न दध्युत्पत्तिः। भवतु वा दध्युत्पत्तिः क्षीरविनाशलिङ्गम्। तेन लिङ्गेन क्षीरविनाश एव गृह्यते न तु क्षीरविनाशकारणं गृह्यते। तस्माद्विनाशकारणानुपलब्धिरिति पुनर्व्वसुः। अथैवं चेत् तदा न सर्व्वभावाणां क्षणिकत्वम्। स्फटिकादिषु द्रव्येषूपचयापचयाभावादपरापरोत्पत्तौ व्यक्तीनां न लिङ्गमुपचयापचयप्रबन्धोऽस्ति। तस्माद् यथादर्शनमभ्यनुज्ञा। इति वात्स्यायनव्याख्यानम्। तत्र कश्चित् परिहारमाह "न पयसः परिणामो गुणान्तरप्रादुर्भावात्।" पयसः परिणामो दधि, न विनाशः। इत्येक आहुः। परिणामश्च अवस्थितस्य द्रव्यस्य पूर्व्वधर्म्मनिवृत्तौ धर्म्मान्तरोत्पत्तिरिति। गुणान्तरप्रादुर्भाव इत्यपर आहुः। गुणान्तरप्रादुर्भावश्च सतो द्रव्यस्य पूर्व्वगुणनिवृत्तौ गुणान्तरोत्पत्तिरिति। स खल्वेकपक्षीभाव इव।

अत्र तु प्रतिषेधः—"व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्व्वद्रव्यनिवृत्तेरनुमानात्।" सम्मूर्च्छनलक्षणादवयवव्यूहान्तराद् द्रव्यान्तरे दध्नुत्पन्ने गृह्यमाणे पूर्व्वं पयोद्रव्यमवयवविभागेभ्यो निवृत्तमित्यनुमीयते। यथा मृदवयवानां व्यूहान्तराद् व्यूहान्तरस्थाल्यामुत्पन्नायां पूर्व्वं मृत्पिण्डद्रव्यं मृदवयवविभागेभ्यो निवर्त्तत इति। मृद्वद्वावयवान्वयः। पयोदध्नोर्नाशेऽपरनिरोधे निरन्वयो द्रव्यान्तरोत्पादो घटत इति।

अथाभ्यनुज्ञाय च निष्कारणं क्षीरविनाशं दध्युत्पादञ्च प्रतिषेधमुच्यते—"क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः।" क्षीरदधिवत् निष्कारणौ विनाशोत्पादौ स्फटिकादिव्यक्तीनामिति नायमेकान्तः। कस्मात्? हेत्वभावात्। नात्र हेतुरस्ति। अकारणौ विनाशोत्पादौ स्फटिकादिव्यक्तीनां न पुनर्विनाशकारणाभावात्। कुम्भस्य विनाश उत्पत्तिकारणाभावादुत्पत्तिः। एवं स्फटिकव्यक्तीनां विनाशोत्पत्तिकारणाभावाद्विनाशोत्पत्त्यभावः प्रतिक्षणमिति। निरधिष्ठानञ्च दृष्टान्तवचनं गृह्यमाणयोर्विनाशोत्पादयोः स्फटिकादिषु स्यादयमाश्रयवान् दृष्टान्तः। क्षीरविनाशकारणानुपलब्धिवद् दध्युत्पत्तिवच्चेति तु न गृह्यते। तस्मान्निरधिष्ठानोऽयं दृष्टान्तः। इति। अभ्यनुज्ञाय च स्फटिकस्य

कश्चिन्मित्याह—यथा भूत इति। यादृश उत्पन्नः, तथेति तादृश एव। पूर्व्वसाधितमहेतुविनाशित्वं

अनुत्पादविनाशौ योऽत्र साधकस्तस्याप्यनुज्ञानादप्रतिषेधः । कुम्भवन्न निष्कारणौ विनाशोत्पादौ स्फटिकादिव्यक्तीनामित्यभ्यनुज्ञं योऽयं दृष्टान्तः प्रतिषेद्धमशक्यत्वात् । क्षीरदधिवत् तु निष्कारणौ विनाशोत्पादाविति शक्योऽयं दृष्टान्तः प्रतिषेद्धुं कारणतो विनाशोत्पत्तिदर्शनात् । क्षीरदध्नोर्विनाशोत्पत्ती पश्यता तत्कारणमनुमेयम् । कार्य्यलिङ्गं हि कारणमित्यक्षपादगोतमः । अत्रोवाच भगवानात्रेयः पुनर्वसुः "जायन्ते हेतुवैषम्याद्विषमा देहधातवः । हेतुसाम्यात् समास्तेषां स्वभावोपरमः सदा ॥" इति । प्राणिनां देहधातवो वातपित्तकफरसरुधिरादयो हेतुवैषम्यात् कालबुद्धीन्द्रियार्थानामतियोगायोगमिथ्यायोगाद्विषमा जायन्ते इति । समानानां तेषां कालादीनामतियोगादितः समानां धातूनामुपचयोऽपचयोऽसमानां वैषम्येण । तेषाञ्चैवासमानहेतूनाम् अतियोगादितोऽपचयोऽसमानधातूनां वैषम्येणोपचयः समानामिति । एवं हेतुसाम्याद्देहधातवः समा जायन्ते इति । तेषामेव कालादीनां हेतूनां समयोगात् समानां धातूनामुपचयः । विशेषाणामपचयो भवति साम्येनैव । तत्र विषमाणामुपचयापचययोः समानाञ्चोपचयापचययोस्तत्तद्विषमोपयुक्ताहाराचारादिभिर्नान्तरमेव पदेन च येनतःद् देहरसादिमलादीनामुपचयापचयौ यद्भवतस्तत्र पूर्व्वावस्थायां यथाभूतो देहधातुः समो वा विषमो वा तथाभावेनैवोत्तरावस्थायां तं तं धातुमारभ्याकारणं विपद्यते । उत्तरावस्थाप्रवृत्तौ तु तत्तदाहाराचारादिरसमलसंयोगः कारणमिति । निरन्तरमाहारादिजनितरसमलानुवृत्तेर्निरन्तरमेव तेषां धातूनां समानां विषमाणां वा स्वभावोपरमः स्यात् । तत्रान्यथाक्रियापूर्व्वावस्थायां यथाभूतः । ततोऽन्यथाक्रियोत्तरावस्थायां नैवास्ति शीघ्रगत्वाद्भावानाम् । सर्व्वो हि भावो लोके कालानुप्रविष्टः प्राणी । तत्र तत्द्रव्यात्मकश्चेतनः । अप्राणी तु आत्ममनोवर्ज्जसप्तद्रव्यात्मकः । तस्मादविरतभ्रमणस्वभावकालान्वयाच्छीघ्रगत्वस्वभावः । यथा-सावात्मा बीजधर्म्मा मानुषशुक्रार्त्तवसंयोगं मानुषगर्भाशयगतमुपेत्य प्रथमादिषु कललादिरूपावस्थान्तरं प्रतिक्षणं प्राप्तः सर्व्वसम्पूर्णाङ्गः कालेन मनुष्यविग्रहेण प्रसूतो जायते. गवादिशुक्रार्त्तवसंयोगं गवादिगर्भाशयगतमुपेत्य तथैव गवादिविग्रहेण जायते । जातश्च शिशुरूपेणाहारादिरसपोषणमवाप्य रस-

तथा शीघ्रगत्वहेतुसाधितमसत्कार्य्यत्वमुपसंहरति — निरोध इत्यादि । अन्यथाक्रिया अन्यथाकरणं संस्काराधानमिति यावत् ॥ १६।१७ ॥

रक्तादिधातुपुष्टिं प्रत्यग्रस्वभावां प्रतिक्षणं प्राप्तो यौवनपर्य्यन्तं प्रतिक्षणमुत्तरावस्थारम्भपूर्व्वावस्थानाशाभ्यामवस्थान्तरमुपेत्य वृद्धिमुपैति। स्थैर्य्यस्वभावात् तु धातूनां मध्यावस्थायां तथाविधाहारादिरसपोषणे स्थिरभावेन वर्त्तते। प्रतिक्षणमुत्तरावस्थारम्भपूर्व्वावस्थानाशाभ्यामवस्थान्तरञ्चोपैति। तथा ततः परं ह्रासस्वभावाद्धातूनां वार्द्धक्ये तथाविधाहारादिजनितरसपोषणेऽपि प्रतिक्षणमुत्तरावस्थारम्भपूर्व्वावस्थाविनाशाभ्यां क्रमेणावस्थान्तरमुपेत्य ह्रासमुपैतीति। शैशवादिक्रमेण परिणामे कारणं शरीरारम्भकः कालः। इत्येवं पूर्व्वपूर्व्वव्यूह उत्तरोत्तरव्यूहमारभ्य नश्यति, मनुष्यभावञ्च न जहाति। गवादिभावञ्च न प्राप्नोति। तस्मात् क्षणभङ्गे व्यूहान्तरद्रव्यान्तरोत्पत्तिः, न तज्जातीयभिन्नद्रव्यान्तरोत्पत्तिः। पूर्व्वद्रव्यनिवृत्तावपि पूर्व्वव्यूहनिवृत्तिर्न तज्जात्यारम्भकपूर्व्वद्रव्यनिवृत्तिः। उत्तरमपि तज्जातिदर्शनात्। यथा गर्भाशयगतं जीवाधिष्ठितं शुक्रार्त्तवं कललादिक्रमेण प्रतिक्षणमुत्तरावस्थारम्भपूर्व्वावस्थानाशाभ्यां सर्व्वसम्पूर्णाङ्गो बहिर्निःसृतो जायते मनुष्यादिः शिशुः, तथा क्षीरविनाशकारणानुपलब्धिवद्दध्युत्पत्तिवच्च भावानां पूर्व्वपूर्व्वावस्थानाशकारणानुपलब्धिरुत्तरोत्तरावस्थागमनमुत्पत्तिः प्रतिक्षणम्। क्षीरं हि कालेन परिणमत् खलूत्तरोत्तरावस्थामारभ्याकारणं विनश्यति। तत्कारणमुपलब्ध्यभावान्नास्त्येव। एवं प्रतिक्षणमुत्तरोत्तरावस्थारम्भपूर्व्वपूर्व्वावस्थानाशाभ्यां स्वभावेन काले दधि जायते। ततो जातस्य शिशोः शैशवादिवार्द्धक्यावस्थान्तरावस्थान्तरगमनं जन्म यथा प्रतिक्षणमुत्तरोत्तरावस्थारम्भपूर्व्वपूर्व्वावस्थानाशाभ्यां भवति। तथा जातस्य दध्नोऽपि प्रतिक्षणमुत्तरोत्तरावस्थारम्भपूर्व्वपूर्व्वावस्थानाशाभ्यां मधुराम्लात्यम्लादिस्वरूपेण तरुणमध्यपुराणत्वावस्थान्तरमापद्यते दधित्वञ्च न जहाति। तत्र पूर्व्वव्यूहस्य कार्य्यमुत्तरव्यूहो लिङ्गं न तु पूर्व्वव्यूहनाशस्य कार्य्यमुत्तरव्यूहः। अतो न पूर्व्वव्यूहनाशस्य लिङ्गं दधि। तस्मात् तन्नाशकारणं न ज्ञायत इत्यतो नास्ति। एवमजीवेषु सर्व्वेषु स्फटिकादिषूपचयापचयकारणं कालादि। तत्तदारम्भकञ्च वायुश्च। यदा पर्व्वते सजीवे स्फटिकादिकं जायते तदा तत्तत्पर्व्वतादुपचयापचयं तस्य तस्याहारादिपोषणेन जाते प्रतिक्षणमेव तथैवोत्तरावस्थारम्भपूर्व्वावस्थानाशौ भवतः कालेन परिणामात्। पर्व्वतादानीते स्फटिके निर्ज्जीवे त्वाहारवत्पोषणकारणाभावान्नोपचयः वायुकालादिभ्यस्त्वपचयो वा भवति। कालेनैव वाय्वग्निजलादिभिरवस्थान्तरप्राप्तं दृश्यमानञ्च लोके स्फटिकादिकमुच्यते। नूतनमिदं मध्यममिदं

याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः ।
सा चिकित्सा विकाराणां कर्म्म तद्भिषजां मतम् ॥ १८ ॥

पुराणमिदमिति । वल्मीकादीनामवयवोपचयकारणमाहारसवद्वल्मीककीटोद्धृतमृदप्यस्ति । तद्वल्मीकापचयेऽपि तदुद्धृतमृदा मेलनेन पूर्व्ववल्मीकमृद्वृद्धिं प्राप्योत्तरावस्थामारभ्य पूर्व्वावस्थिकरूपेण नश्यन्तीति । तत्र कारणं नास्त्युपलब्ध्यभावात् । घटादीनां विनाशकारणमवयवविभागो न परावस्थारम्भकपूर्व्वावस्थाव्यूहनाशे कारणमिति । एवञ्च प्राण्यप्राणिनां सर्व्वेषामुत्तरावस्थारम्भ-पूर्व्वावस्थानिष्कारण-विनाशयोः नियमस्वभावाद्यथादर्शनमभ्यनुज्ञावचनं नाद्रियते । शरीरवत् सर्व्वासु व्यक्तिषु कालकृतावस्थान्तरदर्शनात् । प्राण्यप्राणिषु सर्व्वत्रैव प्रतिक्षणमवस्थान्तरदर्शनादेव च प्रतिक्षणमुत्तरोत्तरव्यूहारम्भाकारणपूर्व्वपूर्व्वव्यूहनाशप्रबन्धः । क्वचिद्विनाशकारणानुपलब्धेः क्वचिदुपलब्धेश्च नानैकान्तः । इति ॥ १७ ॥

गङ्गाधरः—इत्येवं भावानां स्वभावोपरमे प्रवृत्तिहेतुं निरोधे कारणाभावस्य युक्तिमुक्त्वा स्वभावोपरमे कर्म्म चिकित्साप्राभृतस्य किमिति ? प्रश्नोत्तरमाह—याभिरित्यादि । विषमधातूनां प्रतिक्षणं विषमा धातव उत्तरावस्थां विषमधातुकामारभ्य नश्यन्ति । इत्येवं विषमधातुप्रबन्धे शरीरे याभिः क्रियाभिस्ते विषमा धातवः समा जायन्ते सा क्रिया विकाराणां विषमधातूनां चिकित्सा । तदेव चिकित्साक्रिया भिषजां कर्म्म मतम् । एतेन भिषजो विषमान् धातून् कान् समीकुरुते भिषगित्यस्याप्युत्तरमुक्तं भवति । विकाराणामिति वचनेन प्रतिक्षणं

चक्रपाणिः—एतेन विषमे धातौ साम्यं संस्कार आधीयत इत्येवंरूपापि चिकित्सा निरस्ता मन्तव्या, एवं व्यवस्थिते पूर्व्वाक्षिप्तं चिकित्सितं समादधाति याभिरित्यादि । "सा चिकित्सा" इत्यनेन "का वा चिकित्सा" इत्याक्षेपः परिहृतः । "कर्म्म तत्" इत्यनेन प्रथमोद्दिष्ट आक्षेपः परिहृतः । "इत्यर्थं क्रियते क्रिया" इत्यनेन "किमर्थं वा" इत्याक्षेपः परिहृतः । "कान् समीकुरुते" इत्याक्षेपस्तु, "समैस्तु हेतुभिर्यस्मात्" इत्यादिना परिहृतः । विषमेषु धातुषु याभिः क्रियाभिः समा धातवो जन्यन्ते सा चिकित्सा ; एवं मन्यते—यद्यपि धातुवैषम्यं विनश्वरम्, तथापि विनश्यदपि तद्धातुवैषम्यं स्वकार्य्यं विषममेव धातुमारभते, एवं सोऽप्यपरं विषममिति न धातुवैषम्यसन्ताननिवृत्तिर्धातुसाम्यजनकत्वहेतुं विना ; यदा तु धातुसाम्यहेतुरुपयुक्तो भवति, तदा तेन सहितं वैषम्यसन्ततिरहितमपि कारणं सममेव धातुसन्तानमारभते, यथा मुद्गरप्रहारसहितो घटपरमाणुसन्तानो विसदृशं कपालसन्तानमारभते ॥ १८ ॥

कथं शरीरे धातूनां वैषम्यं न भवेदिति।
समानाञ्चानुबन्धः स्यादित्यर्थं क्रियते क्रिया ॥ १९ ॥
त्यागाद्विषमहेतूनां समानाञ्चोपसेवनात्।
विषमा नानुबध्नन्ति जायन्ते धातवः समाः ॥
समैस्तु हेतुभिर्यस्माद् धातून् संजनयेत् समान्।
चिकित्साप्राभृतस्तस्माद् दाता देहसुखायुषाम् ॥ २० ॥
धर्म्मस्यार्थस्य कामस्य नृलोकस्योभयस्य च।
दाता सम्पद्यते वैद्यो दानाद् देहसुखायुषाम् ॥ २१ ॥

वैषम्येणारब्धोत्तरावस्थाप्रबन्धानां विकाराणां सा चिकित्सेत्युक्तेः। का वा चिकित्सेत्यस्याप्युत्तरं सा चिकित्सेति वचनम्। किमर्थं वा प्रयुज्यते इति प्रश्नस्योत्तरमाह—कथमित्यादि। विषमधातूत्तरप्रबन्धो वैषम्यं कथमपि धातूनां शरीरे न भवेदित्यर्थं समीकृतेषु च धातूत्तरप्रबन्धः समानामेव स्यान्न तु विषमाणामिति चार्थं चिकित्साक्रिया क्रियते ॥ १८।१९ ॥

गङ्गाधरः नन्‌ याभिः क्रियाभिरिति काभिरिति? अत आह त्यागादित्यादि। विषमहेतूनां कालबुद्धीन्द्रियार्थानामतियोगायोगमिथ्यायोगयुक्तानां त्यागात्। समानां समयोगयुक्तानां तेषामेव कालबुद्धीन्द्रियार्थानामुपसेवनात् विषमा धातवो न जायन्ते न चानुबध्नन्ति समाश्च जायन्ते। अथैवमाचरणं सद्वैद्य एव किं स्वयं स्वयं कर्तुमर्हतीति? अत आह—समैरित्यादि। यस्माच्चिकित्साप्राभृतो वैद्यः समैः समयोगयुक्तैस्तु हेतुभिर्धातून समान संजनयेत्, तस्माद्देहसुखानामायुषाञ्च दाता भवति न तत्तुल्यो वैद्यमानी ॥ २० ॥

गङ्गाधरः—देहसुखायुषां दानाद्यच्च फलं लभते तदाह धर्म्मस्येत्यादि।

चक्रपाणिः—एवं व्यवस्थिते, "कथं शरीरे" इत्यादिग्रन्थो व्याख्येयः; वैषम्यं न भवेत् नोत्पद्येतेत्यर्थः। समानाञ्चानुबन्ध इति सन्तत्योत्पादः। विषमा नानुबध्नन्ति इति हेत्वभावात् विषमसन्तानस्योत्पादो न भवति। समानाञ्चोपसेवनादिति समहेतूनां सेवनात् ॥ १९।२० ॥

चक्रपाणिः—देहसुखायुषां दानात् धर्म्मादीनां दाता भवति, देहसम्पत्तिसाध्यत्वाद् धर्म्मादीनामपीति भावः ॥ २१ ॥

इति कल्पनाचतुष्कः।

तत्र श्लोकाः ।

चिकित्साप्राभृतगुणो दोषो यश्चेतराश्रयः ।
योगायोगातियोगानां लक्षणं सिद्धिसंश्रयम् ॥
बहुदोषस्य लिङ्गानि संशोधनगुणाश्च ये ।
चिकित्सासूत्रमात्रञ्च सिद्धिव्यापत्तिसंश्रयम् ॥
या च युक्तिश्चिकित्साया यच्चार्थं कुरुते भिषक् ।
चिकित्साप्राभृताध्याये तत् सर्व्वमवदन्मुनिः ॥ २२ ॥

इति कल्पनाचतुष्कः ।

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने चिकित्साप्राभृतीयो नाम षोड़शोऽध्यायः ॥१६॥

वैद्यो नृलोकस्य नरस्य जनस्य देहसुखायुषां दानात् धर्मस्यार्थस्य कामस्य दाता सम्पद्यते । तस्मादुभयस्य च सुखायुषाश्च धर्म्मादित्रिवर्गस्य च दाता सम्पद्यते । न केवलं सुखायुषाम् । धर्मादयो हि सुखायुषामायत्ताः । इति ॥ २१ ॥

अध्यायार्थमाह तत्र श्लोका इत्यादि । चिकित्साप्राभृतो विद्वानित्यादिना चिकित्साप्राभृतस्य वैद्यस्य गुणः । इतराश्रयो वैद्यमान्यबुधवैद्याश्रयो दोषश्च यं वैद्यमानीत्यादिनोक्तः । दौर्बल्यमित्यादिना सम्यग्योगादिलक्षणमुक्तम् । अविपाक इत्यादिना बहुदोषस्य लक्षणमुक्तम् । एवं विशुद्धकोष्ठस्येत्यादिना संशोधनगुणा उक्ताः । अतियोगानुबन्धानामित्यादिना शुद्धिव्यापत्तिसंश्रयं चिकित्सासूत्रमात्रमुक्तम् । जायन्ते इत्यादिना या च युक्तिरित्याद्युक्तम् ॥२२॥

अध्यायं समापयति अर्थ्यत्यादि । पूर्ववद्व्याख्येयम् । इति कल्पनाचतुष्कः । स्नेहस्वेदोपकल्पनीयचिकित्साप्राभृतीयैश्चतुर्भिः कल्पनाध्यायैर्निष्पन्नः कल्पनाचतुष्कः ।

इति श्रीगङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ सूत्रस्थानीय-षोड़शाध्यायचिकित्साप्राभृतीयस्य जल्पाख्या षोड़शी शाखा ॥१६॥

चक्रपाणिः—संग्रहे सिद्धिसंश्रयञ्च व्यापत्तिसंश्रयञ्च सिद्धिव्यापत्तिसंश्रयम्; तत्र सिद्धिसंश्रयं सिद्धिसंस्थानसंश्रयेण, व्यापत्तिसंश्रयम् 'अतियोगानुबद्धानाम्' इत्यादिनोक्तम् ॥२२॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-व्याख्यायां चिकित्साप्राभृतीयो नाम षोड़शोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः ।

अथातः कियन्तःशिरसीयमध्यायं व्याख्यास्यामः

इतिह स्माह भगवानात्रेयः ॥ १ ॥

कियन्तः शिरसि प्रोक्ता रोगा हृदि च देहिनाम् ।
कति चाप्यनिलादीनां रोगा मानविकल्पजाः ॥
क्षयाः कति समाख्याताः पिड़काः कतिधानघ ।
गतिः कतिविधा प्रोक्ता दोषाणां दोषसूदन ॥ २ ॥
हुताशवेशस्य वचस्तच्छ्रुत्वा गुरुरब्रवीत् ।
पृष्टवानसि यत् सौम्य तन्मे शृणु सविस्तरात् ॥ ३ ॥

गङ्गाधरः—अथ भेषजस्वस्थार्थनिर्द्देशकल्पनाचतुष्कचतुष्टयैः संक्षेपेण रोगनिदानभेषजचिकित्सा अभिहिताः। अधुना विस्तारवचनेन सूत्ररूपेण रोगानभिधातुं रोगचतुष्के वक्तव्ये तत्राप्यङ्गानां मर्म्मणां सप्तोत्तरशते शिरोहृदययोः प्राधान्यात् तद्गतरोगानभिधातुं प्रथमं कियन्तःशिरसीयमध्यायमारभते। अथात इत्यादि। "कियन्तः शिरसि प्रोक्ता रोगा" इति वाक्यस्याध्यायादिस्थस्यैकदेशं कियन्तःशिरसीतिपदमधिकृत्य कृतोऽध्यायः कियन्तःशिरसीयः, तं तथा। सर्व्वमन्यत् पूर्ववद्व्याख्येयम् ॥ १ ॥

गङ्गाधरः—कियन्त इत्यादि—प्रोक्ताः प्रवचनेनोपदिष्टा इति। तेन संख्यया वातादिजत्वादिना च ज्ञातुमेते प्रश्ना अग्निवेशेन कृताः ॥ २ ॥

गङ्गाधरः—हुताशेत्यादि। गुरुरात्रेयः पुनर्व्वसुर्हुताशवेशस्य तद्वचः श्रुत्वाऽब्रवीत्। हे सौम्याग्निवेश! त्वं यत् पृष्टवानसि तन्मे सविस्तराच्छृणु ॥ ३ ॥

चक्रपाणिः—पूर्व्वचतुष्कचतुष्टयेन भेषजमभिहितम्, सम्प्रति तद्विषयरोगाभिधानार्थं रोगचतुष्कोऽभिधातव्यः; चिकित्सा च विधेयत्वेनैव प्रधानमतः प्रथममुक्ता, किञ्च दर्शितश्चायं प्रथमाध्याय एव सम्बन्धः; एवञ्चाङ्गेषु मर्म्मसु च प्रधानभूतशिरोहृदयरोगाभिधायकत्वेन कियन्तःशिरसीयोऽभिधीयते ॥ १ ॥

चक्रपाणिः—क्षयस्थानवृद्धयो दोषमानं, तस्य विकल्पो दोषान्तरसम्बन्धासम्बन्धकृतो भेदः।

दृष्टाः पञ्च शिरोरोगाः पञ्चैव हृदयामयाः।
व्याधीनां द्व्यधिका षष्टिर्दोषमानविकल्पजा ॥
दशाष्टौ च क्षयाः सप्त पिडका माधुमेहिकाः।
दोषाणां त्रिविधा चोक्ता गतिर्वक्ष्यामि विस्तरम् ॥ ४ ॥

गङ्गाधरः — तत्र प्रथमप्रश्नः कियन्तः शिरसि प्रोक्ता रोगा इति तस्योत्तरमाह — दृष्टाः पञ्च शिरोरोगा इति। हृदि च देहिनां कियन्तो रोगाः प्रोक्ताः इति प्रश्नस्योत्तरं पञ्चैव हृदयामया इति। कति चाप्यनिलादीनां रोगा मानविकल्पजा इति प्रश्नस्योत्तरम् — व्याधीनां द्व्यधिका षष्टिर्दोषमानविकल्पजा इति। सर्व्वेषामेव व्याधीनां ज्वररक्तपित्तादीनां दोषमानविकल्पजा द्व्यधिका षष्टिर्दोषषष्टिर्भेदाः। तत्रापि ज्वरादीनां शुद्धदोषजानां स्वस्वाधिकारे निर्दिष्टसंख्याम् कल्पनीयाः। तेन पञ्चविधशिरोरोगा अपि पञ्चविंशतिविधाः कल्पनीयाः। एवं हृदामयादयः सर्व्वे बोध्याः। क्षयाः कति समाख्याताः? इत्यस्योत्तरं — दशाष्टौ च क्षया इति। अष्टादश क्षयाः। एते च पञ्चविंशतिधा कल्पनीयाः। पिडकाः कतिधा नच इत्यस्योत्तरं सप्त पिडका माधुमेहिका इति प्राधान्यात् अन्याश्चासङ्ख्यकत्वेन कतिचिच्च वक्ष्यन्ते। गतिः कतिविधा चोक्ता इत्यस्योत्तरमाह — दोषाणां त्रिविधा चोक्ता गतिः। तांश्च सर्व्वान् विस्तरं प्रकारभेदेन निदानादिवचनेन च वक्ष्यामीति ॥ ४ ॥

माधुमेहिका इत्यत्र मधुमेहशब्दः सामान्येन प्रमेहवचनः, यतोऽत्रैव सामान्येन वक्ष्यते — "विना प्रमेहमप्येता जायन्ते दुष्टमेदसः" इति, अन्यथा हि 'विना मधुमेहम्' इति कृतं स्यात्, तथा चिकित्सिते वक्ष्यति सामान्येनैव, यत् "प्रमेहिणो याः पिडका यथोक्ताः, रोगाधिकारे पृथगेव सप्त" इत्यादि, तथा मधुमेहपिडकानां चिकित्सितोपदेशाच्च सर्व्वमेहभवत्वं पिडकानां, मधुमेहभवत्वेन हि मधुमेहस्यैवाऽसाध्यत्वात् न तज्जपिडकानामुपक्रमणीयत्वमस्ति, किञ्च, प्रदेशान्तरेऽपि मधुमेहशब्देनायं सर्व्वप्रमेहानुक्तत्वात्, यथा — "गुल्मी च मधुमेही च राजयक्ष्मी च यो नरः। अचिकित्स्या भवन्त्येते बलमांसपरिक्षये ॥" इति। अत्रापि यदि वातिको मधुमेहः अभिप्रेतः स्यात्, तदा तस्य स्वरूपत एवासाध्यत्वेन 'बलमांसपरिक्षये सति' इति विशेषणमनर्थकं स्यात्; सुश्रुतेनापि च सामान्येन प्रमेह एवैताः पिडका दर्शिताः यदुक्तं — "तद्वच्च वसामेदोभ्यामभिपन्नस्य शरीरस्य त्रिभिर्दोषैश्चानुगतधातोः प्रमेहिणः पिडका जायन्ते" इत्यादि; सर्व्व एव प्रमेहा यस्मात् देहं मधुरीकृत्य जायन्ते तस्मान्मधुमेहा इत्युच्यन्ते, वचनं हि — "षट्पदपिपीलिकाभिसरणम्" इति, तथा च वाग्भटः, "मधुरं यच्च सर्व्वेषु प्रायो मध्विव मेहति। सर्व्वे हि मधुमेहाख्या माधुर्य्याच्च तनोरतः ॥" विस्तरम् इति वक्ष्यामीत्यनेन सम्बध्यते ॥ २–४ ॥

सन्धारणाद् दिवास्वप्नाद् रात्रौ जागरणान्मदात्।
उच्चैर्भाष्यादवश्यायात् प्राग्वातादतिमैथुनात्॥
गन्धादसात्म्यादाघ्राताद् रजोधूमानिलातपात्।
गुर्व्वम्लहरितादानादतिशीताम्बुसेवनात्॥
शिरोभितापाद् दुष्टामाद् रोदनाद् वाष्पनिग्रहात्।
मेघागमान्मनस्तापाद् देशकालविपर्ययात्॥
वातादयः प्रकुप्यन्ति शिरस्यस्रञ्च दुष्यति।
ततः शिरसि जायन्ते रोगा विविधलक्षणाः॥
प्राणाः प्राणभृतां यत्र श्रिताः सर्व्वेन्द्रियाणि च।
यदुत्तमाङ्गमङ्गानां शिरस्तदभिधीयते॥ ५ ॥

गङ्गाधरः—अथ विस्तरेण शिरोरोगमाह—सन्धारणादित्यादि। अविधार्य्याणां मूत्रादिवेगानां सन्धारणात्। मदान्मदकरद्रव्यातिसेवनेन मत्तभावात्। हरितमार्द्रकमरिचधन्याकादि। गुर्व्वम्लहरितानामत्यादानात्। शीताम्बुनश्च अतिसेवनात्। शिरोऽभितापाच्छिरसोऽभिहननात्। दुष्टामात् दुष्टामाजीर्णात्। उष्णामादिति पाठे उष्णाच्चामाजीर्णाच्च। देशकालविपर्य्ययात् देशस्य पूर्व्वस्थिते-विपर्य्ययात्। तथा कालस्य ऋतोर्विपर्य्ययात्। तेन कालातियोगमिथ्या-योगयोः शिरोरोगहेतुत्वं व्यावृत्तमिति। तथातिमैथुनादित्यनेन मैथुनायोग-मिथ्यायोगयोर्व्यावृत्तिः कृता। गुर्व्वम्लहरितानाञ्चात्यादानाच्चानादान-मिथ्यादानयोश्च व्यावृत्तिः। एभ्यो व्यस्तसमस्तेभ्यो हेतुभ्यो वातादयः पृथक् समस्ताश्च शिरसि प्रकुप्यन्ति। अस्रं रक्तञ्च एभ्यो हेतुभ्यो दुष्यति शिरस्येवेति। सर्व्वस्मिन्नेव शिरोरोगे रक्तदोषश्च वक्तव्य एव। ततो वातादिभ्यः सह दुष्ट-रक्तेभ्यः शिरसि विविधलक्षणा वक्ष्यमाणा अर्द्धावभेदकादयो रोगा जायन्ते। ननु किमिदं शिरः कर्णभ्रूभ्य ऊर्द्ध्वम् अथ मुखकर्णाक्षिश्रोत्रसहितं सर्व्वम्? यदि सर्व्वं तदा मुखादिरोगाश्च शिरोरोगा भवन्तीति? अत आह—प्राणा इत्यादि।

चक्रपाणिः—सन्धारणादिति वेगसन्धारणात्, हरितमार्द्रकादि, अतीति पूर्व्वेण परेण च शीताम्बुसेवनादित्यनेन सम्बध्यते; दुष्टामात् किंवा उष्णाऽमादिति पाठः, तत्रोष्णाच्चामाच्च इत्यर्थः। देशकालविपर्य्ययादित्यत्र देशविपर्य्यय उपसर्गगृहीतत्वं देहस्य; अस्रञ्च प्रदुष्यतीत्य-

अर्द्धावभेदको वा स्यात् सर्व्वं वा रुज्यते शिरः ।
प्रतिश्यामुखनासाक्षि-कर्णरोगशिरोभ्रमाः ॥
अर्दितं शिरसः कम्पो गलमन्याहनुग्रहः ।
विविधाश्चापरे रोगा वातादिक्रिमिसम्भवाः ॥ ६ ॥
पृथग्दृष्टास्तु ये पञ्च संग्रहे परमर्षिभिः ।
शिरोगदांस्तांच्छृणु मे यथास्वैर्हेतुलक्षणैः ॥ ७ ॥
उच्चैर्भाष्यातिभाष्येभ्यस्तीक्ष्णपानात् * प्रजागरात् ।
शीतमारुतसंस्पर्शाद् व्यायामाद् † वेगनिग्रहात् ॥
उपवासादभिघाताद् विरेकवमनादति ।
वाष्पशोकभयत्रासाद् भारमार्गातिकर्षणात् ॥

यत्र प्राणाः श्रिताः प्रतिष्ठिताः । हृदयादिषु स्वस्वस्थानेषु स्थितिः प्राणानां यदायत्ता । सर्व्वन्द्रियाणि पञ्च बुद्धीन्द्रियाणि यत्र श्रितानि स्वस्वाधिष्ठानवर्त्तीनि यत्र श्रितानि । यदङ्गानां मध्ये उत्तममङ्गं तदङ्गं शिर इत्यभिधीयते ॥५॥

गङ्गाधरः—तेन किं पञ्चेन्द्रियाधिष्ठानयज्जमुत्तमाङ्गं शिर उच्यते ? इत्यत आह—अर्द्धावभेदको वेत्यादि । वाशब्देन अनन्तवातादीनामनुक्तानां ग्रहणम् । क्रिमिसम्भवा इत्यन्तैर्ये रोगास्ते सर्व्वे शिरोरोगाः । तेभ्यः पृथग् ये पञ्च शिरोगदाः परमर्षिभिर्दृष्टास्तान् स्वैर्हेतुलक्षणैर्मे शृणु ॥ ५—७ ॥

गङ्गाधरः—उच्चैर्भाष्येत्यादि । तीक्ष्णानामाघ्राणात् वक्ष्यमाणेन वमनादतीत्यतिशब्देन सह तीक्ष्णाघ्राणादीनामन्वयः । एभ्य उच्चैर्भाष्यादिभ्यो हेतुभ्यो

भिदधानः सर्व्वशिरोरोगे रुक्दृष्टिं दर्शयति । प्राणा इत्यादिनाऽङ्गेषु शिरःप्राधान्यं दर्शयन् प्रकृतशिरोरोगाणामेवात्यहितत्वं दर्शयति ; तेन नोक्तं शिरःप्राधान्याभिधानं । श्रिता इव श्रिताः शिर-उपघाते उपघातात् ; उपरिष्ठादङ्गमुत्तमाङ्गम् ॥ ५ ॥

चक्रपाणिः—प्रकृतान् शिरोरोगानाह—अर्द्धेत्यादिना क्रिमिसम्भवा इत्यन्तेन । एतच्च "जायन्ते रोगा विविधलक्षणाः" इत्यस्य विवरणम् ॥ ६ ॥

चक्रपाणिः—शिरोगतत्वेन नासादिरोगेषु प्राप्तेष्वपि तान् विहायैवाष्टोदरीये प्रोक्तांस्तानेव शिरःशूललक्षणान् रोगान् प्रपञ्चेन वक्तुमाह—पृथगित्यादि । संग्रहेऽष्टोदरीये. तेन

* तीक्ष्णपानादिति चक्रः ।　　　　† व्यवायादिति चक्रः ।

शिरोगता वै धमनीर्वायुराविश्य कुप्यति।
ततः शूलं महत् तस्य वातात् समुपजायते॥
निस्तुदेते भृशं शङ्खौ घाटा सम्भिद्यते तथा।
भ्रुवोर्मध्यं ललाटञ्च तपतीवातिवेदनम्॥
बध्येते स्वनतः श्रोत्रे निष्कृष्येते इवाक्षिणी।
घूर्णतीव शिरः सर्व्वं सन्धिभ्य इव मुच्यते॥
स्फुरत्यतिसिराजालं स्तभ्यते च शिरोधरा।
स्निग्धोष्णमुपशेते च शिरोरोगेऽनिलात्मके॥ ८॥
कट्वम्ललवणक्षार-मद्यक्रोधातपानलैः।
पित्तं शिरसि संदुष्टं शिरोरोगाय कल्पते॥

वायुः शिरोगता धमनीराविश्य कुप्यति। ततः शिरोगतधमनीप्रविष्टात् कुपिताद् वातात् तस्य जनस्य शिरसि महच्छूलं समुपजायते। तच्छूलं यथा—निस्तुदेते इत्यादि वातजशिरःशूललक्षणम्। शङ्खौ द्वौ भृशं निःशेषतस्तुदेते सूचीभिरिव व्यथेते। तथा घाटा सम्भिद्यते सम्यग्भिन्नवत् पीड्यते। भ्रुवोर्मध्यं ललाटञ्चातिवेदनं यथा स्यात् तथा तपतीव तापयुक्तमतिवेदनायुक्तञ्च भवति। द्वे श्रोत्रे बध्येते। स्वनतः सततशब्देन सम्बध्येते। निष्कृष्येते इवाक्षिणी। द्वे चक्षुषी स्थानान्निर्गते इव भवतः। सर्व्वं शिरः कण्ठादूर्द्ध्वं सर्व्वं घूर्णतीव। तथा सर्व्वं शिरः सन्धिबन्धनान्मुच्यत इव श्लथीभवति। शिरसि यावत्यः सिरास्तावत्सिराजालमतिस्फुरति स्पन्दतेऽतिशयेन। शिरोधरा ग्रीवा स्तभ्यते स्तब्धा भवति। स्निग्धोष्णमुपशेते वातहरत्वादिति। एतल्लक्षणमनिलात्मके शिरोरोगे भवति॥ ८॥

गङ्गाधरः—अथ पित्तजशिरःशूलमाह—कट्वम्लेत्यादि। स्पष्टम्। दूषत इत्यादि।

भाक् विकारद्वयोऽत्र प्रकरणे शिरोरोगशब्देनोच्यन्ते, शिरोरोगशब्दस्य शूल एव हजाकरे भूतत्वात्; तीक्ष्णपानं तीक्ष्णमद्यपानं, किंवा तीक्ष्णं मदिरादि; बध्येत इव बध्येत इत्यर्थः पीडायुक्तत्वेन॥ ७—८॥

दह्यते दूयते तेन शिरः शीतं सुपूयते ।
दह्येते चक्षुषी तृष्णा भ्रमः स्वेदश्च जायते ॥ ९ ॥
आस्यासुखैः स्वप्नसुखैर्गुरुस्निग्धातिभोजनैः ।
श्लेष्मा शिरसि संदुष्टः शिरोरोगाय कल्पते ॥
शिरो मन्दरुजं तेन सुप्तस्तिमितभारिकम् ।
भवत्युत्पद्यते तन्द्रा तथालस्यमरुचिस्तथा ॥ १० ॥
वाताच्छूलं भ्रमः कम्पः पित्ताद्दाहो मदस्तृषा ।
कफाद्गुरुत्वं तन्द्रा च शिरोरोगे त्रिदोषजे ॥ ११ ॥

दह्यते दूयते च शिरः । तेन दाहतोदेन शिरः शीतं सुपूयते काङ्क्षति । सुपसर्गेण सुपूयतेरिच्छार्थः । चक्षुषी दह्येते । भ्रमो घूर्णनं चक्रस्थितस्येव ॥ ९ ॥

गङ्गाधरः—कफजशिरःशूलमाह आस्यासुखैरित्यादि । आस्यासुखादयः कफजशिरःशूलकारिकफस्य हेतवः । तल्लक्षणमाह शिर इत्यादि । तेन शिरसि दुष्टकफेन मन्दरुजं शिरो भवति । सुप्तञ्च भवति । स्तिमितञ्च भारिकञ्च भारान्वितं शिरो भवति । उत्पद्यते तन्द्राश्चारुचिश्चालस्यञ्चेति ॥ १० ॥

गङ्गाधरः—त्रिदोषजशिरःशूललक्षणमाह वातादित्यादि । वातजादिशिरोरोगाणां सर्वलक्षणव्याप्त्यर्थं लक्षणमिदमुक्तम् । हेतुश्च नोक्तः सर्वहेतूनामनुमतत्वार्थमिति । ननु पित्तजशिरःशूले भ्रम उक्तः । कथमत्र वाताद्भ्रम उच्यते ? अथोच्यते—भ्रमस्तु रजःपित्तानिलाद्भवति । तत्र पित्तज इह वातज इति । मदो मत्तता । उक्तानां वातादिजानां पृथग्लक्षणेषु मदस्यानुक्तेः त्रिदोषजेऽस्मिन्नर्द्धावभेदकानन्तवातसूर्य्यावर्त्तानामन्तर्भावः । उक्तं हि सुश्रुते शिरोरोगविज्ञानीयेऽध्याये—शिरो रुजति मर्त्त्यानां वातपित्तकफैस्त्रिभिः । सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥ सूर्य्यावर्त्तानन्तवातार्द्धावभेदकशङ्खकैः । एकादशप्रकारस्य लक्षणं संप्रवक्ष्यते ॥ यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम् । बन्धोपतापैश्च भवेद्विशेषः शिरोऽभितापः स

चक्रपाणिः—शीतं सुपूयते शीतमिच्छन्ति । स्वप्नसुखमनुचितदिवास्वप्नेन ज्ञेयं, सुप्तमिव सुप्तं प्रबोधरहितत्वेन, भाराक्रान्तमिव भारिकम् ॥ ९-११ ॥

समीरणेन (१)॥ यस्योष्णमङ्गारचितं यथैव भवेच्छिरो धूमवती च नासा। शीतेन रात्रौ च भवेद्विशेषः शिरोऽभितापः स तु पित्तकोपात् (२)॥ शिरो गलं यस्य कफोपदिग्धं गुरु प्रतिष्टब्धमथो हिमञ्च। शूनाक्षिकूटं वदनञ्च यस्य शिरोऽभितापः स कफप्रकोपात् (३)॥ शिरोऽभितापे त्रितयप्रवृत्ते सर्व्वाणि लिङ्गानि समुद्भवन्ति (४)॥ रक्तात्मकः पित्तसमानलिङ्गः स्पर्शासहत्वं शिरसो भवेच्च (५)॥ वसाबलासक्षतसम्भवानां शिरोगतानामिह संक्षयेण। क्षयप्रवृत्तः शिरसोऽभितापः कष्टो भवेदुग्ररुजोऽतिमात्रम्॥ संस्वेदन-च्छर्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति (६)॥ निस्तुद्यते यस्य शिरोऽतिमात्रं संभक्ष्यमाणं स्फुरतीव चान्तः। घ्राणाच्च गच्छेत् सलिलं सरक्तं शिरोऽभितापः क्रिमिभिः स घोरः (७)॥ यस्योदयं या प्रतिमन्दमन्दमक्षि-भ्रुवं रुक् समुपैति गाढम्। विवर्द्धते चांशुमता सहैव सूर्य्यापवृत्तौ विनि-वर्त्तते च॥ शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमाप्नुयाच्च। तं भास्करावर्त्तमुदाहरन्ति सर्व्वात्मकं कष्टतमं विकारम् (८)॥ दोषास्तु दुष्टास्त्रय एव मन्यां संपीड्य घाटां सरुजां सुतीव्राम्। कुर्व्वन्ति साक्षिभ्रुव-शङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु॥ गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजांश्च रोगान्। अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् (९)॥ यस्योत्तमाङ्गार्द्धमतीव जन्तोः संभेदतोदभ्रमशूलयुक्तम्। पक्षाद्दशाहादथ वाप्यकस्मात् तस्यार्द्धभेदं त्रितयाद्व्यवस्येत् (१०)॥ शङ्खाश्रितो वायुरुदीर्णवेगः कृतानुयात्रः कफपित्तरक्तैः। रुजः सुतीव्राः प्रतनोति मूर्द्ध्नि त्रिदोषतश्चापि हि शङ्खयास्तु॥ सुकष्टमेनं खलु शङ्खकाख्यं महर्षयो वेदविदः पुराणाः। व्याधिं वदन्त्युद्गतमृत्युकल्पं भिषक्सहस्रैरपि दुर्निवारम् (११)॥ इति।

निमिस्तु राजा विदेह उवाच "हिमशीतात्मकौ नित्यं सहितौ कफ-मारुतौ। कुर्व्वाते वेदनां तीव्रां दिनात् पूर्व्वाह्ण एव च॥ आदित्यतेजसा युक्ते विनिवृत्ते तु भास्करे। स्रोतसां विवृतत्वाच्च ततः श्लेष्माभिगच्छति॥ उत्थितो मातरिश्वा च स्वमार्गं प्रतिपद्यते। तस्मान्मध्यन्दिनादूर्द्ध्वं वेदनात्र प्रशाम्यति॥" इति। सूर्य्यावर्त्तस्य यद्वातश्लेष्मिकत्वमुक्तं तद्वातमध्यकफोत्-कटपित्ताल्पसन्निपातजत्वेन व्याख्यानम्। तदसाध। यतो विदेहेनैवोक्तं— "—सूर्य्योपवृत्तविपर्य्ययस्य। तत्र वातानुगं पित्तं चिरं शिरसि तिष्ठति। मध्याह्ने तेजसाऽर्कस्य तद्वृद्धं शिरसो रुजाम्॥ करोति पैत्तिकीं घोरां संशाम्यति

दिनक्षये। अस्तं गते प्रभाहीने सूर्य्ये वायुर्निवर्त्तते॥ पित्तं शान्तिमवाप्नोति ततः शाम्यति वेदना। एवं पित्तानिलकृतः सूर्य्यावर्त्तविपर्य्ययः॥" इति। सूर्य्यावर्त्तनद्विपर्य्यययोस्तुल्यचिकित्साभिधानात् पित्तोत्कटमध्यवायुस्वल्पकफरूपसन्निपातकृतः सूर्य्यावर्त्तविपर्य्यय इति व्याख्यानम्। सन्निपातहरत्वेन तुल्यचिकित्सा तु दोषबलाबलं दृष्ट्वैव कार्य्येति अनन्तवातश्च सर्व्वैरेव महर्षिभिस्त्रिदोषजः पठितः। अर्द्धभेदस्तु विदेहेन पठितः "शिरसोऽन्यतरे पार्श्वे कुपितो मारुतो यदा। श्लेष्मणा रुध्यते जन्तोस्तोदस्फुटनदाहनैः॥ शङ्खावदारणं गाढ़मर्द्धं तदवरुध्यते। नयनञ्चावदीर्य्येत सोऽर्द्धभेदः कफानिलात्॥ द्व्यहात् त्र्यहात् सपक्षाहात् पक्षान्मासाच्च देहिनाम्॥" इति यत् कफानिलजः पठ्यते तदपि मध्यकफवातप्राधान्ये पित्ताल्पतया सान्निपातिकत्वेनाभिमतम्। यच्चाप्यन्यत्र पठितम्—"रूक्षाशनात्यध्यशन प्राग्वातावश्यमथुनैः। वेगसन्धारणायास-व्यायामैः कुपितोऽनिलः॥ केवलः सकफो वापि गृहीत्वा शिरसो बली। मन्याभ्रूशङ्खकर्णाक्षि-ललाटार्द्धेऽतिवेदनाम्॥ शस्त्रारणिनिभां कुर्य्यात् तीव्रां सोऽर्द्धावभेदकः। नयनं वाथवा श्रोत्रमतिवृद्धो विनाशयेत्॥" इति यद्वातकफजत्वेनोक्तं तदपि वातोत्कटमध्यकफाल्पपित्तजत्वेन सान्निपातिकत्वख्यापकमिति। शङ्खकस्तु विदेहेन पठितः—"चीयते तु यदा पित्तं शङ्खयोरनिलेरितम्। निरुणद्धि ततो मर्म्म परिशोषितमूष्मणा॥ ततः शङ्खौ विभज्येते दह्येते इव वह्निना। सूचीभिरिव तुद्येते निकृन्त्येते इवारया॥ शङ्खको नाम शिरसि व्याधिरेष सुदारुणः। तृष्णामूर्च्छाज्वरकरस्त्रिरात्रात् परमन्तकृत्॥ कुशलेन ह्युपक्रान्तस्त्रिरात्रादेव जीवति॥" इति वातपित्तजत्वेन यत् पठितं तदपि पित्तप्रधानमध्यवायुस्वल्पकफजत्वेन सान्निपातिकत्वख्यापनार्थम्। यतोऽभिहितम् "योऽधिकस्तेन निर्देशः क्रियते समदोषयोः" इति। अन्यत्राप्युक्तम्—"पित्तरक्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः। तीव्ररुग्दाहरागं हि शोथं कुर्व्वन्ति दारुणम्॥ स शिरो विषवद्वेगी निरुध्याशु गलं तथा। त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः॥ त्र्यहाज्जीवति भैषज्यं प्रत्याख्याय समाचरेत्॥" इति च यदुक्तं तदपि शोथादिलिङ्गेन कफानुबन्धः सूचितः। सर्व्वत्रैव यद्रक्तसम्बन्धो विदेहादिभिरुक्तः स चरकवचनात् तत्रापि व्याख्येय इति सर्व्वतन्त्राविरोधः। सुश्रुतेन रक्तज-क्षयजौ यौ शिरोरोगावुक्तौ तौ पुनश्चरकेण सर्व्वत्र शिरोरोगे रक्तदुष्ट्याः सद्भावात् प्रबलरक्तजस्यापि पित्तलिङ्गक्रियाभ्यां तुल्यत्वात् पैत्तिक-

तिलक्षीरगुडाजीर्ण-पूतिसङ्कीर्णभोजनात्।
क्लेदोऽसृक्कफमांसानां दोषलस्योपजायते॥
ततः शिरसि संक्लेदात् क्रिमयः पापकर्म्मणः।
जनयन्ति शिरोरोगं जाता बीभत्सलक्षणम्॥
छेदव्यथनरुक्राग-शोफदौर्गन्ध्यदुःखितम्।
क्रिमिरोगातुरं विद्यात् क्रिमीणां लक्षणेन च *॥ १२॥

शिरोरोगे. अनयस्य वातिकपैत्तिकशिरोरोगेऽन्तर्भावः कृतः। विदेहे ह्युक्तम् "शून्यं भ्रमति यद्देन शिरो विभ्रान्तनेत्रता। मूर्च्छा चाङ्गावसादश्च शिरोरोगे क्षयात्मके॥" इति। चक्षुष्येणाप्युक्तम् "स्त्रीप्रसङ्गादभीघातादथ वा देहकर्षणात्। क्षिप्रं संजायते कृच्छ्रः शिरोरोगः क्षयात्मकः॥ वातपित्तात्मकं लिङ्गं व्यामिश्रं तत्र लक्षयेत्।" इति। पृथग्वातजपित्तजशिरोरोगलिङ्गं व्यामिश्रं तत्र लक्षयेदिति न पृथगुक्तः। क्षयात्मकः शिरोरोग इति न न्यूनत्वमिति सर्व्वत्र दोषनिर्देशे बोध्यम्॥ ११॥

गङ्गाधरः— अथ क्रिमिजशिरोरोगमाह तिलेत्यादि। संकीर्णभोजनादिति बहुद्रव्याणि मेलयित्वैकविधत्वेन निष्पन्नस्य भोजनात्। दोषलस्य बहुसञ्चितदोषवतः पुंसः। कफरक्तमांसानि क्लिद्यन्ति। पापकर्म्मणोऽधर्म्मवतस्तस्य। ततस्तस्माद्रक्तकफमांससंक्लेदाच्छिरसि जाताः क्रिमयः बीभत्सलक्षणं घ्राणादिरन्ध्रेण पूयादिप्रवृत्तिलक्षणं शिरोरोगं जनयन्ति। पापकर्म्मण इत्यनेन शिरसि क्रिमिरोगोऽतिदुःखदो भवत्यधर्म्मेण सर्व्वेति सूचितम्। रूपमाह—छेदश्छेदनवत् पीड़ा शिरसि भवति। व्यधनं विद्धवत् पीड़ा। रुक् सामान्यतो वेदना। क्रिमीणां लक्षणेन क्रिमिरोगोक्तलक्षणेन। इति पञ्च शिरोरोगा विस्तरेण व्याख्याताः॥ १२॥

चक्रपाणिः— सङ्कीर्णभोजनं विरुद्धाहारः, दोषलस्य बहुदोषस्य। पापकर्म्मण इत्यनेनाधर्म्मबल एवायमतिदुःखकिमिरोगो भवतीति दर्शयति बीभत्सलक्षणमिति। घ्राणादिभ्यः पूयादिप्रवृत्तिः॥ १२॥

* दर्शनेन च इति चक्रः।

शोकोपवासव्यायाम-रूक्षशुष्काल्पभोजनैः ।
वायुराविश्य हृदयं जनयत्युत्तमां रुजम् ॥
वेपथुर्वेष्टनं स्तम्भः प्रमोहः शून्यता भ्रमः * ।
हृदि वातातुरे रूपं जीर्णे चात्यर्थवेदना ॥ १३ ॥
उष्णाम्ललवणक्षार-कटुकाजीर्णभोजनैः ।
मद्यक्रोधातपैश्चाशु हृदि पित्तं प्रकुप्यति ॥
हृद्दाहस्तिक्तता वक्त्रे पित्ताम्लोद्गिरणं क्लमः ।
तृष्णा मूर्च्छा भ्रमः स्वेदः पित्तहृद्रोगलक्षणम् ॥ १४ ॥
अत्यादानं गुरुस्निग्धमचिन्तनमचेष्टनम् ।
निद्रासुखञ्चाप्यधिकं कफहृद्रोगकारणम् ॥
हृदयं कफहृद्रोगे सुप्तं स्तिमितभारिकम् ।
तन्द्रारुचिपरीतस्य भवत्यश्मावृतं यथा ॥ १५ ॥

गङ्गाधरः—अथ पञ्चैव हृदयामया इति यदुद्दिष्टं तस्य विस्तरं प्रवक्ति—शोकेत्यादि । शोकेत्यादिनार्द्धश्लोकेन वातहृद्रोगनिदानम् । वायुरित्यादिना सम्प्राप्तिः । आविश्य हृदयं हृदयं गत्वा रसं दूषयित्वा । वेपथुरित्यादिना चैकश्लोकेन वातहृद्रोगलिङ्गम् । वेष्टनमुद्वेष्टनवत् वक्षोदवदारिका । (१) ॥ १३ ॥

गङ्गाधरः—उष्णाम्लेत्यादि । उष्णाम्लेत्यादिना पित्तहृद्रोगस्य निदानम् । प्रकुप्यतीत्यनन्तरं तत आविश्य हृदयं जनयत्युत्तमां रुजामित्यनुवर्त्य व्याख्येयम् । हृद्दाहेत्यादिना पित्तहृद्रोगलिङ्गम् । (२) ॥ १४ ॥

गङ्गाधरः—अत्यादानमित्यादि । अत्यादानमित्यादिना कफहृद्रोगनिदानम् । अत्यादानमतिमात्रया भोजनम् । अचिन्तनमल्पचिन्तनं वा । कफहृद्रोगकारणमित्यतोऽनन्तरं कफ आविश्य हृदयं जनयत्युत्तमां रुजमित्यनुवर्त्त्य व्याख्यातव्यम् । हृदयमित्यादिना कफहृद्रोगलिङ्गम् । स्तिमितभारिकमिति

चक्रपाणिः—शोकोपवासेत्यादि हृद्रोगलक्षणं. वेष्टनमुद्वेष्टनमिव, दरो दरदारिका, अचिन्तनं

* भ्रम इत्यत्र दर इति चक्रः ।

हेतुलक्षणसंसर्गादुच्यते सान्निपातिकः।
हृद्रोगः कष्टदः कष्ट-साध्य उक्तो महर्षिभिः॥
त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते।
तिलक्षीरगुड़ादीनि ग्रन्थिस्तस्योपजायते॥
मर्म्मैकदेशे संक्लेदं रसश्चास्योपगच्छति।
संक्लेदात् क्रिमयश्चास्य भवन्त्युपहतात्मनः।
मर्म्मैकदेशे ते जाताः सर्पन्तो भक्षयन्ति च॥
तुद्यमानं स हृदयं सूचीभिरिव मन्यते।
छिद्यमानं यथा शस्त्रै र्जातकण्डुं महारुजम्।
हृद्रोगं क्रिमिजं विद्यादेनं दद्यः सुदारुणम्॥ *

आर्द्रवसनावगुण्ठनवद्धारेणाक्रान्तम्। अश्मावृतं प्रस्तरशिलाक्रान्त मिव। (३) ॥ १५ ॥

गङ्गाधरः—हेतुलक्षणेत्यादि। हेतुलक्षणेत्यादिना सान्निपातिकहृद्रोगस्य निदानादीनि अतिदिष्टानि (४)। क्रिमिहृद्रोगं वक्तुं तन्निदानमाह— त्रिदोषेत्यादि। आदिशब्देनाजीर्णप्रीतिसंयोगविरुद्धभोजनादीनां ग्रहणम्। ग्रन्थिरित्यादिना क्रिमिहृद्रोगस्य सम्प्राप्तिः। मर्म्मैकदेशे हृदयैकदेशे। ग्रन्थिः ग्रन्थिवदपक्वरसकृत उपजायते। रसश्च रसमयश्च रसग्रन्थिरस्य पुंसः संक्लेदमुपगच्छति। अस्योपहतात्मनः। दुष्टस्वभावेनाप्रतिकर्त्तुमनसोऽस्य नष्टस्वभावस्य रसमयग्रन्थेः संक्लेदात् कफस्थाने मर्म्मैकदेशे हृदयैकदेशे क्रिमयो भवन्ति। मर्म्मैकदेशे जातास्तु ते क्रिमयो हृदयं सर्पन्तो भक्षयन्ति च। तत्रक्रिमिहृद्रोगलक्षणमाह तुद्यमानमित्यादि। स इति उक्तरूपेण हृदयैकदेशजप्रसर्पत्क्रिमिभक्षितहृदयः पुमान् सूचीभिरिव तुद्यमानं हृदयं मन्यते। शस्त्रैश्च छिद्यमानं यथा तथा हृदयं मन्यते। विद्वानात्मवानातुरः प्राज्ञः।

स्वरूपचिन्तनम्, अश्मावृतमश्माक्रान्तं, ग्रन्थिरिव ग्रन्थिः, स च रसदोषकृतः; मर्म्मैकदेशे हृदयैकदेशे; द्वितीयं मर्म्मेतिपदं कर्म्मतापन्नम् ॥ १३—१६ ॥

* नायं पाठश्चक्रपाणिसम्मतः।

हृद्रोगं क्रिमिजन्त्वेतैर्लिङ्गैर्बुद्ध्वा सुदारुणम्।
त्वरेत जेतुं तं विद्वान् विकारं शीघ्रकारिणम्॥ १६॥
द्व्युल्बणैकोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट्।
समैश्चैको विकारास्ते सन्निपातास्त्रयोदश॥ १७॥

शीघ्रकारिणं शीघ्रमरणकारकम्। सुश्रुतेऽप्युक्तम्—"वेगाघातोष्णरुक्षान्नैरतिमात्रोपसेवितैः। विरुद्धाध्यशनाजीर्णासात्म्यैश्चापि भोजनैः॥ दूषयित्वा रसं दोषा विगुणा हृदयं गताः। कुर्वन्ति हृदये बाधां हृद्रोगं तं प्रचक्षते॥ चतुर्व्विधः स दोषैश्च पञ्चमः क्रिमिभिस्तथा। पृथग् लिङ्गं प्रवक्ष्यामि चिकित्सितमनन्तरम्॥ आयम्यते मारुतजे हृदयं तुद्यते तथा। निर्म्मथ्यते दीर्य्यते च स्फोट्यते पाट्यतेऽपि च (१)॥ तृष्णोष्मादाहचोषाः स्युः पैत्तिके हृदयक्लमः। धूमायनञ्च मूर्च्छा च स्वेदः शोषो मुखस्य च (२)॥ गौरवं कफसंस्रावोऽरुचिः स्तम्भोऽग्निमार्दवम्। माधुर्य्यमपि चास्यस्य बलासावतते हृदि (३)॥ उत्क्लेशः ष्ठीवनं तोदः शूलो हृल्लासकस्तमः। अरुचिः श्यावनेत्रत्वं शोषश्च क्रिमिजे भवेत् (४)॥ भ्रमक्लमौ सादशोषौ ज्ञेयास्तेषामुपद्रवाः। क्रिमिजे क्रिमिजातीनां श्लैष्मिकाणाञ्च ये मताः" (५)॥ इति। अत्र त्रिदोषजहृद्रोगस्यानुक्तत्वात् वातादित्रिविधहृद्रोगहेतुलक्षणोऽभिमतः। इति पञ्चविधहृद्रोगस्य विस्तराभिधानं पुनश्च चिकित्सिते कारिष्यते॥ १६॥

गङ्गाधरः—अथ "व्याधीनां द्व्यधिका षष्टिर्दोषमानविकल्पजा" इत्येतद्विस्तरेणाभिधीयते—द्व्युल्बणेत्यादि। यथा वृद्धैरित्यादिवक्ष्यमाणवचनात् वृद्धानां वातपित्तकफानां संसर्गतः सान्निपाता विकारास्त्रयोदश भवन्ति। तत्र द्व्युल्बणस्त्रयो विकारा एकोल्बणैर्वृद्धैर्दोषैस्त्रयः सान्निपाता इति ते षट् सान्निपाताः स्युः। तद्यथा वातपित्तोल्बणः सान्निपातो वातकफोल्बणः पित्तकफोल्बणश्चेति त्रयो वृद्धद्विदोषोल्बणाः सान्निपाताः (३)। वृद्धैकदोषोल्बणाश्च सान्निपातास्त्रयो वृद्धवातोल्बणो वृद्धपित्तोल्बणो वृद्धकफोल्बणः सन्निपात इति षट् सन्निपाताः (६)। हीनमध्याधिकैश्च वृद्धैर्दोषैः षट् सन्निपाताः स्युः। तद्यथा वृद्धवातवृद्धतरपित्तवृद्धतमकफ इत्येवं संसर्गेण

चक्रपाणिः—"कति चाप्यनिलादीनाम्" इत्याद्युक्तस्योत्तरं—द्व्युल्बणैरित्यादि। हीनमध्याधिकैरिति वृद्धवृद्धतरवृद्धतमैः। संसर्गे नवेति च्छेदः, अस्यैव विवरणं "षट् तेभ्यः" इत्यादि।

संसर्गेण नवैते षडेकवृद्ध्या समैस्त्रयः। *

पृथक् त्रयश्च तैर्वृद्धैर्व्याधयः पञ्चविंशतिः।

यथा वृद्धैस्तथा क्षीणैर्दोषैः स्युः पञ्चविंशतिः ॥ १८ ॥

वृद्धिक्षयकृतश्चान्यो विकल्प उपदिश्यते।

एकः सन्निपातः। वृद्धवातवृद्धतरकफवृद्धतमपित्तज इत्येवं द्वितीयः। वृद्ध-पित्तवृद्धतरकफवृद्धतमवातज इत्येवं तृतीयः। वृद्धपित्तवृद्धतरवातवृद्धतम-कफज इत्येवं चतुर्थः। वृद्धकफवृद्धतरपित्तवृद्धतमवातज इत्येवं पञ्चमः। वृद्धकफवृद्धतरवातवृद्धतमपित्तज इत्येवं षष्ठः। इति षट् सन्निपाताः स्युः। (६) इति द्वादश सन्निपाताः (१२)। वृद्धैः समैस्त्रिभिर्दोषैश्च सन्निपात एक इति त्रयोदश ते सन्निपाताः स्युरिति। (१३) ॥ १७ ॥

गङ्गाधरः—अथ द्विदोषभेदानाह संसर्गेण नवैते षडेकवृद्ध्या समैस्त्रय इति। वृद्धानां वातपित्तकफानामन्यतमाभ्यां द्वाभ्यां संसर्गेण जाता विकारा नव भवन्ति। एते द्वन्द्वा एकैकदोषवृद्ध्या षट्। समवृद्धैर्द्वन्द्वैस्त्रयः। इति नवधा। वृद्धवाताधिकवृद्धपित्तज इत्येवं वातपित्तज एकः (१)। वृद्ध-पित्ताधिकवृद्धवातज इति द्वितीयो वातपित्तजः (२)। वृद्धवाताधिकवृद्ध-कफज इत्येवं वातकफज एकः। वृद्धकफाधिकवृद्धवातज इत्येवं द्वितीयो वातकफजः (२)। वृद्धपित्ताधिकवृद्धकफज इत्येवं पित्तकफज एकः। वृद्ध-कफाधिकवृद्धपित्तज इत्येवं द्वितीयः पित्तकफजः (२)। इत्येवमेकैकवृद्ध्या षड् द्वन्द्वजाः (६)। समवृद्धैर्द्वन्द्वैर्दोषैस्त्रयः। यथा वृद्धसमवातपित्तजः। वृद्धसमवातकफजः। वृद्धसमपित्तकफजः। इति त्रयः। इत्येवं नव संसर्गजा विकाराः (९)। पृथक् त्रयश्च तैर्वृद्धैर्व्याधय पञ्चविंशतिरिति। वृद्धैस्तै-र्वातपित्तकफैर्दोषैः पृथक् जाता रोगास्त्रयः। वृद्धवातजो वृद्धपित्तजो वृद्ध-कफज इति त्रयः। इत्येवं वृद्धैर्दोषजाता व्याधयः पञ्चविंशतिर्ज्वरादयो भवन्ति। स्वस्वाधिकारे सङ्ख्या भेदाः कल्पनीया एव। न तु ततोऽधिक-प्रकृतिसमवेतदोषजाः इति (२५)। इति वृद्धावस्थायां दोषाणां पञ्चविंशति-भेदवत् क्षीणावस्थायाञ्च पञ्चविंशतिभेदानाह—यथा वृद्धैरित्यादि। वृद्धैः समैस्त्रय इति वृद्धैः समैः। वृद्धिक्षयकृत इत्यस्य विवरणं वृद्धिरेकस्येत्यादि। अत्र च यद्यपि समतापि वृद्धिक्षयविकल्पे पठ्यते, तथापि समतायां स्वातन्त्र्येण विकाराकर्तृत्वात् वृद्धिक्षयकृत

* "संसर्गे नव षट् तेभ्यश्चैकवृद्ध्या समैस्त्रयः" इति चक्रधृतपाठः।

वृद्धिरेकस्य समता चैकस्यैकस्य सङ्क्षयः ।
द्वन्द्ववृद्धिः क्षयश्चैकस्यैकवृद्धिर्द्वयोः क्षयः ॥ १८ ॥

दोषैर्यथा पञ्चविंशतिर्व्याधयो भवन्ति तथा क्षीणदोषैः स्वभावतः क्षयावस्थैः दोषैर्जाताः व्याधयः पञ्चविंशतिः स्युः। क्षीणैरल्पवर्णैस्त्रिभिर्दोषैस्त्रयः सन्निपाता रोगाः। क्षीणैरेकाल्पवर्णैस्त्रिभिर्दोषैर्जातास्त्रयः सन्निपाता रोगाः। इति षट् स्युः। एवं क्षीणहीनमध्याधिकैर्दोषैर्जाताः षट् सन्निपाता रोगाः। इति क्षीणदोषजा द्वादश सन्निपाताः स्युः। एवं क्षीणदोषैः समैर्जात एकः सन्निपात इति त्रयोदश क्षीणदोषजाः सन्निपाताः। क्षीणदोषजाश्च नव द्वन्द्वजाः। एकैकक्षीणदोषद्वन्द्वजा षट्। समैः क्षीणदोषैस्त्रयः इति नव। एवं क्षीणदोषैः पृथग्जातास्त्रयो रोगा इति क्षीणदोषजाताः पञ्चविंशतिः भवन्ति। एवं क्षीणदोषजा न ज्वरादयो व्याधयो यावन्तो वक्ष्यन्ते वृद्धदोषैर्हि ज्वरादयो भवन्तीति। यथास्वाधिकारे सम्यासो वक्ष्यन्ते ॥ १८ ॥

गङ्गाधरः—शेषान् दोषभेदानाह वृद्धिक्षयकृतश्चेत्यादि। दोषाणां वृद्धिक्षयोभयकृताऽन्यो निरुक्तपञ्चाशतोऽन्यः। तद्यथा—वृद्धिरित्यादि। वातादीनां त्रयाणामेकस्य वृद्धिः। एकस्य समता। अपरस्य क्षयः। इत्येवं वृद्धसमक्षीणदोषैर्जात एकविधो रोगः षड्विधो भवति। तद्यथा—वृद्धवातसमपित्तक्षीणकफज एकः। (१) वृद्धवातसमकफक्षीणपित्तजो द्वितीयः (२)। वृद्धपित्तसमवातक्षीणकफजस्तृतीयः (३)। वृद्धपित्तसमकफक्षीणवातजश्चतुर्थः (४)। वृद्धकफसमवातक्षीणपित्तजः पञ्चमः (५)। वृद्धकफसमपित्तक्षीणवातजः षष्ठः (६)। इति षट्। द्वन्द्ववृद्धिः क्षयश्चैकस्येति त्रिभ्य एकस्त्रिविधः। तद्यथा वृद्धवातपित्तक्षीणवातज एकः (१)। वृद्धवातकफक्षीणपित्तजो द्वितीयः (२)। वृद्धवातपित्तक्षीणकफजस्तृतीयः (३)। इति त्रयः। इति नव। (९) एकवृद्धिर्द्वयोः क्षय इत्येवं त्रयः। तद्यथा—वृद्धकफक्षीणवातपित्तज एकः (१)। वृद्धपित्तक्षीणवातकफजो द्वितीयः (२)। वृद्धवायुक्षीणपित्तकफजस्तृतीयः (३)। इति त्रयः। इत्येवं द्वादश भेदा इति। पूर्व्वैः पञ्चाशता सह द्वाषष्टिका षष्ट्यव्याधीनां दोषमानविकल्पजा इत्युक्तम्। वृद्धिरेकस्य समता चैकस्य संक्षय इत्यनेन षड् विकाराः ; द्वन्द्ववृद्धिः क्षयश्चैकस्य इत्यनेन त्रयः ; एकवृद्धिर्द्वयोः क्षयस्तेन त्रयः ; एवं द्विषष्टिप्रकारा भवन्ति ॥ १७।१८ ॥

चक्रपाणिः—वृद्धिरेकस्येत्यादेरुदाहरणं—"प्रकृतिस्थं यदा पित्तम्" इत्यादि। अत्र केचिदेतत्

**प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये।**
**स्थानादादाय गात्रेषु यत्र यत्र विसर्पति॥**
**तदा भेदश्च दाहश्च तत्र तत्रानवस्थितः।**
**गात्रदेशे भवेत् तस्य श्रमो दौर्ब्बल्यमेव च॥ २०॥**

भवतीति (६२)। नन्वेवमप्यमूना द्विषष्टिर्भवतु। सम्भवन्ति चैभ्योऽधिका विकल्पाः। तद्यथा—एकस्य वृद्धिः समता द्वयोश्चेति त्रयस्तथा। द्वयोर्वृद्धिश्च समता चैकस्येति त्रय इति॥ तथा षड्‌विधा कल्पना वृद्धावस्थायां पृथग्जेषु द्वन्द्वजेषूक्ता; तथा, क्षयश्चैकस्य समता द्वयोश्चेति त्रयस्तथा। द्वयोः क्षयश्च समता चैकस्येति त्रय इति षड्‌विधा कल्पना क्षयावस्थायां पृथग्जेषु द्वन्द्वजेषु चोक्तैवाविकृतत्वादिति चेत्? तदा वृद्धिरेकस्य, समता चैकस्य, एकस्य संक्षयः इति षण्णामपि चानुपपत्तिः। वृद्धिक्षयव्यतिरिक्तस्य समस्याविकृतत्वादेकवृद्धिः क्षयश्चैकस्येत्येवमेव षड् भवन्तु—इति चेत्? प्रकृतिस्थं यदा पित्तमित्यादिना समस्यापि दाहादिकार्य्यवचनात् वृद्धक्षीणदोषाकर्षणात् दुष्टिवचनात्। नैवम्। यत एकस्य वृद्धिः समता द्वयोश्चेत्यादिषु च समावस्थस्याकर्षणादिदुष्टिसम्भवात्। अत्रोच्यते—समदोषस्य दुष्टदोषसंसर्गाभावे पृथगज-द्वन्द्वजानामभिधानं वृद्धैकदोषजे समयोः शेषयोर्न हि तत्संसर्गजा दुष्टिर्भवति, न वा वृद्धदोषद्वयजे समस्य शेषस्य दुष्टिर्भवतीति ख्यापनार्थं वृद्धिक्षयकृतव्याधिषु यस्यैकस्य वृद्धिरपरस्यैकस्य क्षयस्तत्रैव समस्याकर्षणदुष्टिर्भवति नियमेन, तत्स्वभावादिति च ख्यापनार्थमिहोक्तम्—"वृद्धिरेकस्य समता चैकस्यैकस्य संक्षयः" इति। ननु तर्हि कथमुक्तम्—"एकः प्रकुपितो दोषः सर्व्वानेव प्रकोपयेत्" इति? उच्यते, सर्व्वानेव यत् प्रकोपयेदित्युक्तं, तदेवं नियमेन प्रकोपयेत् न तु सर्व्वत्रैव प्रकोपयेदित्यभिप्रायेणोक्तमिति। अथ "वृद्धिरेकस्य समता चैकस्यैकस्य संक्षयः" इति त्रीनुदाहरति—प्रकृतिस्थमित्यादि। प्रकृतिस्थं स्वप्रमाणस्थं पित्तं श्लेष्मणः क्षये पारिशेष्यात् वृद्धो वायुः स्थानात् पित्तं स्वस्थानादादाय गात्रेषु यत्र यत्र विसर्पति तदा तत्र तत्रानव-

एव परमुदाहरणं दृष्टान्तार्थं पठन्ति, शेषोदाहरणन्तु कृत्स्ने तन्त्रे बोद्धव्यम्। केचित् तु—वृद्धिक्षय-विकल्पस्य दुर्बोधत्वेन सर्व्वेषामेव द्वादशानामपि विकल्पानामाचार्य्येण लक्षणं कृतमिति कृत्वा सर्व्वमेव पठन्ति। ननु प्रकृतिस्थे पित्ते कथं तदा दाहश्चेति सङ्गतं भवतु, न हि

प्रकृतिस्थं कफं वायुः क्षीणे पित्ते यदा बली।
कर्षेत् कुर्य्यात् तदा शूलं शैत्यस्तम्भनगौरवम् ॥ २१ ॥

स्थितो भेद इव पीड़ा वातेन कदाचित्, कदाचित् पित्तेन दाहः। तथा गात्रदेशे श्रमोऽनायासेन वातात्, वैवर्ण्यञ्च तस्य भवतीति। अत्र जिज्ञास्यम्— दुष्टिस्तु खलु दोषाणां किं विकृतिः, किं प्रकृतिसहिता विकृतिः? यदि विकृतिरेव दुष्टिः, तदा स्वप्रमाणाद्वृद्धिर्हानिश्चावस्था दुष्टिर्भवति; ततः स्वप्रमाणस्थं पित्तं श्लेष्मणः क्षये वृद्धवायुना नीतं यत्र तत्र यद्दाहं करोति तत् किं स्वमानस्थमदुष्टं पित्तं करोति? न ह्यदुष्टस्य पित्तस्य कार्य्यो दाहः। अथ तर्हि प्रकृतिसहिता विकृतिः; सा च प्रकृतिः समानावस्था। तस्यां विकृतिर्वृद्धिर्वा हानिर्वा। तत्रेयं वृद्धिलक्षणा दुष्टिर्दाहात् कार्य्यादनुमेया। वातेन रञ्जकस्योदरस्थस्य पित्तस्यैकदेशाकर्षणात् कथं वृद्धिस्तक्यते, हानिरेव हि तदर्थां स्यात्। तत्राहुरेके—गात्रेषु यत्र यत्र पित्तं वातेनाकृष्यते तत्र तत्र स्थितं भ्राजकं पित्तं सर्व्वशरीरगं यत् तत्तेन सह संयुक्तं वृद्धं भवति। तदेव दाहं करोतीति। तत्रान्ये ब्रुवते—यतः स्थानस्थात् पित्तादाकृष्यते तत् पित्तं नहि ह्रसति। तत् पित्तह्रासकृतं कर्म्म च तदा भवतु, भवत्येव तत्। इहाकृष्टपित्तकार्य्यप्रकरणे भगवता नोक्तम्। तस्मात् तस्य पित्तस्य क्षीणत्वात् पित्तस्य वृद्धस्य भ्राजकस्य ह्रासकरणार्थं न विरेचनं विहितम्। विरेचनेन हि कोष्ठस्थरञ्जकपित्तस्य निर्हरणं स्यात्। इह च तत् पित्तं क्षीणमिति। तस्मादाकृष्टपित्तस्य स्वस्थाननयनं विहितम्। वृद्धभ्राजकह्रासार्थमभ्यङ्गावगाहनादिकं वा प्रयोक्तव्यमिति। स्थानाकृष्टेरपि वृद्धिक्षयविशेषरूपा दुष्टिः। न वृद्धिक्षयव्यतिरिक्तेति। एवमन्यदुदाहार्य्यमित्येके ब्रुवते न चात्र पठन्ति ॥ १७।२० ॥

गङ्गाधरः—अन्ये तु तान्यप्युदाहरणानि पठन्ति, तद्यथा प्रकृतिस्थं कफमित्यादि। बली वृद्धो वायुः प्रकृतिस्थं कफं क्षीणे पित्ते सति यदाकर्षेत् तदा शूलं वायुः कुर्य्यात्, शैत्यस्तम्भनगौरवं कफः कुर्य्यादित्याकृष्टकफकार्य्यं शैत्यादिकमिति। व्याख्यारम्भात् पूर्व्वं कफः प्रकृतिस्थ एव। व्याख्यारम्भे तु

प्रकृतिस्थो दोषो विकारकारी, न च वायोर्दाहः सम्भवति, उच्यते—यत्र यत्रेति वचनात्; यत्र कुपितेन वायुना पित्तं नीतं, तत्र शरीरावयवे प्रकृतिमानास्थतमपि पित्तं वृद्धमेव। यतस्तस्मिन्

प्रकृतिस्थं यदा वातं पित्तं कफपरिक्षये ।
संरुणद्धि तदा दाहः शूलञ्चास्योपजायते ॥ २२ ॥
प्रकृतिस्थं कफं पित्तं यदा वातपरिक्षये । *
संनिरुन्ध्यात् तदा कुर्य्यात् सतन्द्रागौरवं ज्वरम् ॥ २३ ॥
प्रकृतिस्थं यदा वातं श्लेष्मा पित्तपरिक्षये ।
संनिरुन्ध्यात् तदा कुर्य्याच्छीतकं गौरवं ज्वरम् ॥ २४ ॥

खल्वाकृष्टो दोषस्तत्स्थानस्थतद्दोषसंयोगाद्वृद्ध एव भवतीति, अन्यथा शैत्यादिकं न सम्भवतीति । एवं सर्व्वत्र स्थानाकृष्टसमदोषैर्बोध्यम् । कुपितदोषेण समदोषस्याकर्षणं स्थानस्थावयवह्रासे स्थानान्तरस्थावयवमेलनेन वृद्धौ कारणं न तु समदोषस्य दुष्टिरिति बाह्यहेतुव्यापारवत् ॥ २१ ॥

गङ्गाधरः—प्रकृतिस्थमित्यादि । कफपरिक्षये वृद्धं पित्तं प्रकृतिस्थं वातं यदा संरुणद्धि तदा पित्तेनास्य दाहः क्रियते । शूलन्तु पित्तनिरुद्धवातः करोतीति । यदि स्थानाकृष्टिदुष्टिविशेष उच्यते तदा तद्रत संरोधश्च दुष्टिविशेषो भवतु । न ह्यस्ति पित्तकफयोराकर्षणशक्तिः पङ्गुत्वात् ॥ २२ ॥

गङ्गाधरः—प्रकृतिस्थं कफमित्यादि । प्रकृतिस्थं स्वप्रमाणे स्थितमकुपितं कफं वातपरिक्षये वृद्धं पित्तं संनिरुन्ध्यात् तदा कफकार्य्यतन्द्रागौरवसहितं ज्वरं पित्तं कुर्य्यादिति ॥ २३ ॥

गङ्गाधरः—प्रकृतिस्थं यदेत्यादि । प्रकृतिस्थं वातं पित्तपरिक्षये वृद्धः श्लेष्मा यदा सन्निरुन्ध्यात् तदा वातकार्य्यं शीतकं स्वकार्य्यं गौरवं ज्वरञ्च कफः कुर्य्यात् ॥ २४ ॥

*देशे वातान पित्तसम्बन्ध उचितो न भवत्येवेत्यधिकन तत्र पित्तेन दाह उपपन्न एव, एवम्

प्रकृतिस्थमित्यादौ तु—

श्लेष्माणं हि समं पित्तं यदा वातपरिक्षये ।
निर्वाहयेत् तदा कुर्य्यात् सतन्द्रागौरवं ज्वरम् ॥
प्रवृद्धो हि यदा श्लेष्मा पित्ते क्षीणे समीरणम् ।
रुन्ध्यात् तदा प्रकुर्व्वीत शीतकं गौरवं रुजम् ॥
समीरणे परिक्षीणे कफं पित्तं समत्वगम् ।
कुर्व्वीत सन्निरुन्धानो मृद्वग्नित्वं शिरोग्रहम् ॥ इति चक्रसम्मतः पाठः ।

प्रकृतिस्थं यदा पित्तं श्लेष्मा मारुतसंक्षये ।
संनिरुन्ध्यात् तदा कुर्य्यान्मूर्द्धस्त्वं शिरोग्रहम् ॥
निद्रां तन्द्रां प्रलापञ्च हृद्रोगं गात्रगौरवम् ।
नखादीनाञ्च पीतत्वं ष्ठीवनं कफपित्तयोः ॥ २५ ॥
हीनवातस्य तु श्लेष्मा पित्तेन सहितश्चरन् ।
करोत्यरोचकापाकौ सदनं गौरवं तथा ॥
हृल्लासमास्यस्रवणं सदाहं पाण्डुतां मदम् ।
विरेकस्य च वैषम्यं वैषम्यमनलस्य च ॥ २६ ॥
हीनपित्तस्य तु श्लेष्मा मारुतेनोपसंहितः ।
स्तम्भं शैत्यञ्च तोदञ्च जनयत्यनवस्थितम् ॥
गौरवं मृदुतामग्नेर्भक्ताश्रद्धाञ्च वेपनम् ।
नखादीनाञ्च शुक्लत्वं गात्रपारुष्यमेव च ॥ २७ ॥

गङ्गाधरः—प्रकृतिस्थं यदेत्यादि । यदा मारुतसंक्षये वृद्धः श्लेष्मा प्रकृतिस्थं पित्तं संनिरुन्ध्यात् तदा पित्तकार्य्यं प्रलापं स्वकार्य्यन्तु मूर्द्धस्त्वं शिरोग्रहं निद्रां तन्द्रां हृद्रोगं गात्रगौरवं कुर्य्यात् । नखादीनां पीतत्वं पित्तकार्य्यम् । कफपित्तयोः ष्ठीवनं तदुभयस्य कार्य्यं भवेत् ॥ २५ ॥

गङ्गाधरः—अथ द्वन्द्ववृद्धिः अपरस्यैकस्यैत्यस्योदाहरणत्रयमाह हीनवातस्येत्यादि । पित्तेन वृद्धेन सहितो वृद्धः श्लेष्मा हीनवातस्य स्वप्रमाणतः क्षीणो वातो यस्य तस्य देहे चरन्नरोचकाद्यनलवैषम्यान्तं करोति । तत्रास्यस्रवणान्तं कफकार्य्यम् । शेषं पित्तकार्य्यम् ॥ २६ ॥

गङ्गाधरः—हीनपित्तस्येत्यादि । मारुतेन वृद्धेनोपसंहितो वृद्धः श्लेष्मा स्तम्भादीनि जनयेत् । अनवस्थितं तोदं वातो वृद्धः स्वकार्य्यं वेपनञ्च गात्रपारुष्यञ्च जनयति ॥ २७ ॥

अन्यत्रापि प्रकृतिस्थस्यापि दोषस्य विकारे व्याख्येयम् । अन्ये तु ब्रुवते—प्रकृतिस्थानामपि दोषाणां दुष्टदोषसम्बन्धाद् विकारकारित्वं स्यात्, यथा रक्तादीनाम् ॥ १९—२५ ॥

मारुतस्तु कफे हीने पित्तञ्च कुपितं द्वयम्।
करोति यानि लिङ्गानि शृणु तानि समासतः॥
भ्रममुद्वेष्टनं तोदं दाहं स्फुटनवेपने। *
अङ्गमर्द्दं परीशोषं हृदये धूपनं तथा॥ २८॥
वातपित्तक्षये श्लेष्मा स्रोतांस्यपिदधद् भृशम्।
चेष्टाप्रणाशं मूर्च्छाञ्च वाक्सङ्गञ्च करोति हि॥ २९॥
वातश्लेष्मक्षये पित्तं देहौजः स्रंसयेच्चरत्।
ग्लानिमिन्द्रियदौर्ब्बल्यं तृष्णां मूर्च्छां क्रियाक्षयम्॥३०॥
पित्तश्लेष्मक्षये वायुर्म्मर्म्माण्यभिनिपीड़यन्।
प्रणाशयति संज्ञाञ्च वेपयत्यथ वा नरम्॥ ३१॥
दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति यथाबलम्।
क्षीणा जहति लिङ्गं स्वं समाः स्वं कर्म्म कुर्व्वते॥ ३२॥

गङ्गाधरः—मारुत इत्यादि। कफे हीने वृद्धो मारुतः पित्तञ्च वृद्धमिति द्वयं कुपितं यानि लिङ्गानि करोति तानि समासतः शृणु। भ्रममित्यादि। इति द्वन्द्ववृद्धैकक्षयोदाहरणानि त्रीणि॥ २८॥

गङ्गाधरः—अथैकवृद्धिद्वन्द्वक्षयोदाहरणान्याह त्रीणि वातपित्तक्षय इत्यादि। श्लेष्मा वृद्धः। अपिदधदाच्छादयन्॥ २९॥

गङ्गाधरः—वातश्लेष्मक्षय इत्यादि। देहौजश्चरत् पित्तं स्रंसयेत् क्षरयेत्॥ ३०॥

गङ्गाधरः—पित्तश्लेष्मक्षय इत्यादि। वायुर्वृद्धो मर्म्माणि हृदयादीनि॥३१॥

गङ्गाधरः—इति वृद्धिक्षयोभयकृतान् द्वादश दोषविकल्पानुक्त्वा शिष्याणामाशङ्कामुद्धारन्याह दोषा इत्यादि। दोषाणां द्विषष्टिविकल्पाः। वृद्धावस्थायां

चक्रपाणिः—हीनवातस्येत्यादि द्वन्द्ववृद्धिः क्षयश्चैकस्येत्यस्योदाहरणं, देहौजो देहसारः, किंवा देहश्च ओजश्च देहौजः॥ २६—३१॥

चक्रपाणिः—दोषाणां वृद्धिसाम्यक्षयलक्षणानि पृथगाह दोषा इत्यादि। स्वं लिङ्गमिति

* स्फुटनवेपने इत्यत्र स्फोटनमुत्तमम् तथा हृदये धूपनमित्यत्र धूपनं भूपनमिति च पाठान्तरम्।

पञ्चविंशतिः, क्षयावस्थायां पञ्चविंशतिः, वृद्धिक्षयावस्थायां द्वादश। इति य उक्तास्तत्र वृद्धानां क्षीणानां कानि कार्य्याणीति शिष्याणामाशङ्का। तत्राह—प्रवृद्धा दोषा यथाबलं स्वं लिङ्गं दर्शयन्ति। प्रकुपितलक्षणं वक्ष्यते त्रिशोथीये—"दोषप्रकृतिर्वैशेष्यं नियतं वृद्धिलक्षणम्" इति। वातकलाकलीये चोक्तं प्रत्येकं प्रकुपितलक्षणम्। तद्यथा "कुपितस्तु खलु वायुः शरीरे शरीरं नानाविधैर्विकारैरुपतपति बलवर्णसुखायुषामुपघाताय। मनो व्याहर्षयति सर्व्वेन्द्रियाणि उपहन्ति विहन्ति गर्भान् विकृतिमापादयति अतिकालं वा धारयति। भयशोकमोहदैन्यातिप्रलापान् जनयति। प्राणांश्चोपरुणद्धि।" इति। वक्ष्यते च महारोगाध्याये "स्रंसभ्रंशव्यासङ्गभेदहर्षतर्षकम्पावर्त्तमर्द-चालतोदव्यथाचेष्टादीनि। तथा खरपरुषविशदशुषिरारुणकषायविरसमुखशोष-सुप्तिसङ्कोचनखञ्जतादीनि वायोः कर्म्माणि" इति।

अथ कुपितस्य पित्तस्य च वातकलाकलीये—"अपक्तिरदर्शनममात्रावत्त्व-मुष्मणो विकृतिवर्णौ भयं क्रोधमोहावित्येवमादीन्यशुभानि यानि।" तथा महारोगाध्याये च पित्तकर्म्माणि। तद्यथा "दाहौष्ण्यपाकस्वेदक्लेदकोथ-स्रावरागाः। तथा यथास्वगन्धवर्णरसादिनिर्व्व र्त्तनं पित्तकर्म्माणीति।" एवं कुपितस्य कफस्य वातकलाकलीये "शैथिल्यं कार्श्यमालस्यं क्लीवतामज्ञानं मोह इत्येवमादीनि यान्यशुभानि तानि कुपितस्य कफस्य कर्म्माणि।" महा-रोगाध्याये च "श्वैत्यशैत्यगौरवस्नेहमाधुर्य्यस्थैर्य्यपैच्छिल्यमात्स्न्यानि श्लेष्मण

वैकारिकम्, यथाबलमिति—अतिवृद्धेरतिवृद्धं मध्यवृद्धेर्मध्यवृद्धमित्यादि, लिङ्गं स्वं जहतीत्यनेन दोषाणां प्रकृतिलिङ्गक्षयव्यतिरिक्तं विकारकर्तृत्वं नास्तीति दर्शयति, यतः वृद्धा उन्मार्गगामिनो दोषा दूष्यं दूषयन्तो ज्वरादीन् कुर्व्वन्ति, न क्षीणाः, स्वयमेव दुःस्थितत्वात्। स्वं कर्म्मेति प्राकृतं कर्म्म। एते च द्विषष्टिर्भेदा आविष्कृततमत्वेनोक्ताः, तेनैकदोषक्षये द्विदोषवृद्धौ वृद्ध-वृद्धतरभेदादिभ्योऽधिकत्वं नाशङ्कनीयम्। ननु भवत्येषं संख्या यदि सन्निपातो दोषाणां स्यात्, स तु न भवितुमर्हति, यतः वातादीनां परस्परं विरुद्धाः सन्ति गुणाः, विरुद्धगुणानान्तु परस्परोपघातो भवति, यथा—वह्नितोययोः। नैवं, विरोधो हि भावानां कार्य्योन्नेयः, नान्यतो दृष्टमात्रेण कल्पयितुं पार्य्यते; यतः, अन्यत्र तोयदहनयोर्भेद उपलब्धः, तत् किं पाञ्चभौतिक-द्रव्यारम्भेऽपि तयोर्विरोधात् पाञ्चभौतिकं द्रव्यं न स्यात्, तोयाग्निगुणातिरेकाद्वाम्लरसो न स्यात्; तस्मादनुपलभ्यमानदोषसंसर्गे विरोधस्य स्वभावपर्य्यनुयोगो न युज्यते; अथ मन्यसे एवं विरुद्धगुणानामपि दोषाणामविरोधे "विरुद्धगुणसन्निपाते भूयसाऽल्पमवजीयते" इति, तथा "ह्रासहेतुर्विशेषस्तु" इति वचने तर्हि निरर्थके, न, अनयोः प्रभावात् प्रतिपादितविषयव्यतिरेके चरितार्थत्वात्; प्रभावश्च तयोर्विरोधको भवत्येव; यथा—त्रिदोषकरत्विकुष्ठगता गुणा समान्

आत्मरूपाणि। कर्म्माणि च—“श्वैत्यशैत्यकण्डूस्थैर्य्यगौरवस्नेहसुप्तिक्लेदोपदेहबन्धमाधुर्य्यलवणचिरकारित्वादीनि श्लेष्मणः कर्म्माणि।” इति प्रवृद्धानां दोषाणां लिङ्गम्। क्षीणा जहति लिङ्गं स्वं समाः स्वं कर्म्म कुर्व्वत इति। स्वं प्राकृतं कर्म्म लिङ्गं क्षीणा दोषा जहति। त्रिशोथीये वक्ष्यते—“वाते पित्ते कफे चैव क्षीणे लक्षणमुच्यते। कर्म्मणः प्रकृताद्धानिर्वृद्धिर्वापि विरोधिनाम्”॥ इति। तत् प्राकृतन्तु स्वं कर्म्म समानां दोषाणां स्वं स्वं कर्म्म। तच्च तत्रैव त्रिशोथीये—“उत्साहोच्छ्वासनिश्वास-चेष्टाधातुगतिः समा। समो मोक्षो गतिमतां वायोः कर्म्माविकारजम् (१)। दर्शनं पक्तिरूष्मा च क्षुत् तृष्णा देहमार्द्दवम्। प्रभा प्रसादो मेधा च पित्तकर्म्माविकारजम् (२)। स्नेहो बन्धः स्थिरत्वञ्च गौरवं वृषता बलम्। क्षमा धृतिरलोभश्च कफकर्म्माविकारजम् (३)॥” इति। वातकलाकलीये चोक्तम्—“शरीरे चरतो वायोरकुपितस्य कर्म्माणि। वायुस्तन्त्रयन्त्रधरः, प्राणोदानसमानव्यानापानात्मा, प्रवर्त्तकश्चेष्टानामुच्चावचानाम्, नियन्ता प्रणेता च मनसः, सर्व्वेन्द्रियाणामुद्योतकः, सर्व्वेन्द्रियार्थानाम् अभिवोढा, सर्व्वशरीरधातुव्यूहकरः, सन्धानकरः शरीरस्य, प्रवर्त्तको वाचः, प्रकृतिः स्पर्शशब्दयोः, श्रोत्रस्पर्शनयोर्मूलम्, हर्षोत्साहयोर्योनिः, समीरणोऽग्नेः, दोषसंशोषणः, क्षेप्ता बहिर्मलानां, स्थूलाणुस्रोतसां भेत्ता, कर्त्ता गर्भाकृतीनाम्, आयुषोऽनुवृत्तिप्रत्ययभूतो भवत्यकुपितः।” इति। पित्तस्य चाकुपितस्य कर्म्माणि—“पक्तिर्दर्शनं मात्रामात्रत्वमूष्मणः प्रकृति-

दोषान् कुर्व्वते परं, न तु विरुद्धत्वेन दोषहरणं कुर्व्वते, त्रिदोषकर्त्तृत्वप्रभावात्। तथा आमलकेऽम्लत्वं वातं हन्ति, माधुर्य्यशैत्ये तु पित्तं, श्लेष्माणञ्च कटुत्वतिक्तत्वे, अम्लं कषायशैत्याभिभूतं वातं न निहन्ति, माधुर्य्यशैत्ये चाम्लत्वाभिभूते पित्तं न जयत एवमादि। तस्मात् दोषाणां प्रभावाद् यं दृष्टत्वादवधार्य्यते, यत् न ते परस्परमुपघ्नन्ति। एवम्भूतप्रभावत्वे तु तेषामदृष्टमेव कारणं, प्राणिनां दुःखजनकेन अदृष्टेन तेऽविरोधेन निवेश्यन्ते, अत एव वक्ष्यति—“विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्। दोषाः सहजसात्म्यत्वाद् घोरं विषमहीनिव॥ सहजं दैववशात् स्वाभाविकं सात्म्यत्वम्, अनेन व्याख्यानेन “यथा दोषा अन्योन्यं नोपघ्नन्ति, तथा रसरक्तादीनपि नोपहन्युः” इत्यादि यदुच्यते कैश्चित्, सर्व्वं तन्निरस्तम्। ननु “कालतृष्यप्रकृतिभिर्दोषस्तुल्यो हि सन्ततं, निष्प्रत्यनीकं कुरुते” इति चिकित्सिते वक्ष्यति, तेन प्रकृतिर्दोषस्य प्रतिपक्षा भवतीत्युक्तम्। प्रकृतिश्च जन्मप्रभृतिवृद्धो वातादिरुच्यते,—“दोषानुशायिता ह्येषां देहप्रकृतिरुच्यते” इत्यादिवचनात्; तदयं प्राकृतेन दोषेण दोषस्य विरोधः कथं तर्हि उपपन्नः? उच्यते—तत्र प्रकृतेः प्रत्यनीकता इत्यर्थगुणत्वेन मन्तव्या; समानां हि प्रकृतिं प्राप्य दोषः प्रवृद्धबलो भवति, असमानान्तु प्राप्य तथा बलवान् न स्यात्, न समानया प्रकृत्या हन्यते; एवम्

वातादीनां रसादीनां मलानामोजसस्तथा ।
क्षयास्तत्रानिलादीनामुक्तं संक्षीणलक्षणम् ॥ ३२ ॥
घट्टते सहते शब्दं नोच्चैर्द्रवति शूलति ।
हृदयं ताम्यति स्वल्पचेष्टस्यापि रसक्षये ॥
परुषा स्फुटिता म्लाना त्वग् रूक्षा रक्तसंक्षये ।
मांसक्षये विशेषेण स्फिग्ग्रीवोदरशुष्कता ॥
सन्धीनां स्फुटनं ग्लानिरक्ष्णोरायास एव च ।
लक्षणं मेदसि क्षीणे तनुत्वञ्चोदरस्य च ॥

वर्णः सौम्य इव श्वेयपादीनि यानि शुभानि।" अथाकुपितस्य कफस्य कर्म्माणि—"दार्ढ्यमुपचय उत्साहो ज्ञानं बुद्धिरित्येवमादीनि यानि शुभानि।" एतानि प्राकृतानि कर्म्माणि क्षीणा वातादयो जहति। प्राणादिभेदेन वातादीनां प्राकृतकर्म्माणि वातकलाकलीये व्याख्यातानि ॥ ३२ ॥

गङ्गाधरः—अथ दश चाष्टौ क्षया इत्युद्दिष्टं विसर्गं प्रवक्ति—वातादीनामित्यादि। वातादिरसादिसप्तधातुमूत्रपुरीषादीनामोजसश्च क्षया अष्टादश। तत्रानिलादीनां क्षीणा जहति स्वं स्वं कर्म्म इत्यनेन संक्षीणलक्षणमुक्तम् ॥ ३३ ॥

गङ्गाधरः—रसादीनां क्षयानाह—घट्टते इत्यादि। रसस्य संक्षये हृदयं घट्टते विक्षोभ्यते। तथोच्चैः शब्दं न सहते हृदयम्। तथा हृदयं द्रवति धावते धकधक करोति शूलति शूलयुक्तं भवति। ताम्यति च ग्लायति। स्वल्पचेष्टस्येत्यनेन स्वल्पचेष्टा भवति (१)। परुषेत्यादि। रक्तसंक्षये त्वक् परुषा च स्फुटिता च म्लाना च रूक्षा च भवति (२)। मांसक्षये विशेषेण स्फिगादिशुष्कता। तेभ्योऽन्यत्र च शुष्कता स्वल्पा (३)। सन्धीनामित्यादि। मेदसि क्षीणे सन्धीनां स्फुटनम्। अक्ष्णोर्ग्लानिः। आयासो देहे। उदरस्य तनुत्वं

अन्यथाप्युन्नेयम्, अतिवृद्धेन वायुना श्लेष्मणो दुर्ब्बलस्य दुष्टत्वात् विरोधो भवत्येव, कश्चिन्नेतावता संसर्गसन्निपातासम्भवः ॥ ३२ ॥

चक्रपाणिः—सम्प्रत्यष्टादश क्षयानाह वातादीनामित्यादि। अत्र मलानामित्यनेन मूत्रपुरीषयोः पञ्चेन्द्रियमलानाञ्च ग्रहणम्। विशेषेणेतिवचनादन्यगात्राणामपि शुष्कता लभ्यते ॥३३॥

चक्रपाणिः—सन्धीनामित्यादि मेदःक्षयलक्षणम्। केशेत्यादि अस्थिक्षयस्य। बाध्यते चास्येति

केशलोमनखश्मश्रु-द्विजप्रपतनं श्रमः।
ज्ञेयमस्थिक्षये रूपं सन्धिशैथिल्यमेव च ॥
शीर्य्यन्त इव चास्थीनि दुर्ब्बलानि लघूनि च।
प्रततं वातरोगाणि क्षीणे मज्जनि निर्द्दिशेत् ॥
दौर्ब्बल्यं मुखशोषश्च पाण्डुता सदनं भ्रमः*।
क्लैव्यं शुक्राविसर्गश्च क्षीणशुक्रस्य लक्षणम् ॥
क्षीणे शकृति चान्त्राणि पीड़यन्निव मारुतः।
रूक्षस्योन्नमयेत् कुक्षिं तिर्य्यगूर्द्ध्वञ्च गच्छति ॥
मूत्रक्षये मूत्रकृच्छ्रं मूत्रवैवर्ण्यमेव च।
पिपासा बाधते चास्य मुखञ्च परिशुष्यति ॥
मलायनानि चान्यानि शून्यानि च लघूनि च।
विशुष्काणि च लक्ष्यन्ते यथास्वं मलसंक्षये ॥

कृशत्वमिति लक्षणम् (४)। केशेत्यादि। अस्थिक्षये केशादीनां प्रपतनम्। श्रमस्तु अनायासे। सन्धिशैथिल्यञ्च लक्षणं ज्ञेयम् (५)। शीर्य्यन्त इत्यादि। मज्जनि क्षीणेऽस्थीनि शीर्य्यन्त इव तथा दुर्ब्बलानि लघूनि चास्थीनि भवन्ति। प्रततं सततं वातरोगयुक्तान्यप्यस्थीनि स्युः। तथा निर्द्दिशेत् (६)। दौर्ब्बल्यमित्यादि। सदनमङ्गावसादः। भ्रमो गात्रघूर्णनम्। क्लैव्यं स्त्र्यप्रवर्त्तनम्। शुक्रस्य चाविसर्गः स्त्रीसंसर्गेऽल्पविसर्गो वा। क्षीणशुक्रस्यैतल्लक्षणम् (७)। सुश्रुते च क्षय-लक्षणानि वातादीनामुक्तानि। तत्र वातक्षये मन्दचेष्टताऽल्पवाक्त्वमप्रहर्षो मूढ़संज्ञता च (१)। पित्तक्षये मन्दोष्माग्निता निष्प्रभत्वञ्च (२)। श्लेष्मक्षये रूक्षतान्तर्दाहः। आमाशयेतराशयशून्यता। सन्धिशैथिल्यं तृष्णा दौर्ब्बल्यं प्रजागरणञ्चेति (३)। अथ मलानां क्षयलक्षणान्याह—क्षीणे शकृतीत्यादि। क्षीणे पुरीषे रूक्षस्य मारुतो वृद्धः सन्नन्त्राणि पीड़यन्निवोन्नमयेत् कुक्षिञ्च तिर्य्यगूर्द्ध्वं गच्छति (१)। मूत्रक्षय इत्यादि। मूत्रक्षये मूत्रकृच्छ्रा-

कर्म्मणि शेषलक्षणा षष्ठी। मलायनानीत्यनेन पञ्चेन्द्रियाधिष्ठानानां मुखनासिकाचक्षुःकर्णानां

* भ्रम इति चक्रः।

विभेति दुर्ब्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः ।
दुश्छायो दुर्म्मना रूक्षः क्षामश्चैवौजसः क्षये ॥ ३४ ॥
हृदि तिष्ठति यच्छुद्धं रक्तमीषत् सपीतकम् ।
ओजः शरीरे संख्यातं तन्नाशान्ना विनश्यति ॥ ३५ ॥

दीनि भवन्ति (२)। प्राधान्यात् पुरीषमूत्रक्षयलक्षणानि पठित्वा शेषाणां पञ्चानां श्रोत्रमलत्वङ्मलनेत्रमलरसनामलनासिकामलानां सङ्क्षेपेण लक्षणानि आह—मलायनानि चेत्यादि। यथास्वं मलसंक्षयात् श्रोत्रादीनां स्वस्वमलसंक्षयात् मूत्रपुरीषायतनाभ्यामन्यानि मलायनानि. श्रोत्ररन्ध्रे द्वे त्वगधिष्ठानं त्वग्गतलोमकूपमात्रं चक्षुरधिष्ठानं चक्षुर्गोलके द्वे रसनाधिष्ठानं जिह्वा घ्राणाधिष्ठानं द्वे नासारन्ध्रे। एतानि मलायनानि शून्यानि च लघूनि च विशुष्काणि च लक्ष्यन्ते। इति श्रोत्रादिमलक्षयलक्षणानि (५)। पारिशेष्यात् ओजसः क्षयलक्षणमाह—विभेतीत्यादि। ओजसः क्षयेऽन्तु विभेति। दुर्ब्बलः स्यात्। अभीक्ष्णं ध्यायति। सर्व्वेन्द्रियेषु व्यथा पीड़ा भवति। दुश्छायो मन्दच्छविः। दुर्म्मना दुर्ब्बलमनाः। क्षामः क्षीणदेहः। इति ॥ ३४ ॥

गङ्गाधरः ओजसः क्षयलक्षणमुक्त्वा तस्यौजसो लक्षणमाह—हृदीत्यादि। हृदये तिष्ठति यच्छुक्लं शुक्लवर्णमीषद्रक्तं सपीतकमीषत्पीतवर्णं तच्छरीरे ओजः संख्यातम्। तस्यौजसो नाशान्ना पुरुषो विनश्यतीत्युक्त्या त्विदमष्टबिन्दुमानमोजः ख्यापितम्, तदवयवनाशमात्रान्ना नश्यति। तन्त्रान्तरे चोक्तं—"प्राणाश्रयस्यौजसोऽष्टौ बिन्दवो हृदयाश्रयाः" इति। शारीरे च वक्ष्यते—"तावच्चैव श्लेष्मणश्चौजसः" इति अनेनार्द्धाञ्जलिमानं यदोजः तस्यैवेदं लक्षणम्। न हि तस्यावयवनाशे नृणां नियमतो मरणम्। अस्यार्द्धाञ्जलिमितस्यौजसः क्षये विभेति दुर्ब्बलोऽभीक्ष्णमित्यादिलक्षणं भवति न तु मरणमिति। कश्चित् तु "अष्टबिन्दुमितन्तु प्रधानं हृदि तिष्ठति" इत्यादिलक्षणमिति। तस्याष्ट-

त्वगिन्द्रियाधिष्ठानभूतानाञ्च लोमकूपप्रजननानां यथास्वं मलायनानि गृह्यन्ते; यदुक्तं जतूकर्णे—"दोषाणां धातूनां ओजोमूत्रशकृदिन्द्रियमलायनानामष्टादश क्षयास्ते लक्ष्याः स्वगुणक्रियानाशात्" इति। ओजःक्षयलक्षणमाह—बिभेतीत्यादि।—दुर्म्मना मनोबलविहीनः। ओजसो द्रव्यत्वेन लक्षणमाह—हृदीत्यादि।—शुद्धमिति शुक्लम्, रक्तमीषदिति किञ्चिद्रक्तं, सपीतकमिति ईषत्पीतकं, तेन शुक्लवर्णमोजः, रक्तपीतौ तु वर्णावत्रानुगतौ; किंवा, ईषदित्यल्पप्रमाणं, तेन अष्टबिन्दुकमोज इति दर्शयति, यदुक्तं तन्त्रान्तरे—"प्राणाश्रयस्यौजसोऽष्टौ बिन्दवो हृदयाश्रयाः"

**प्रथमे जायते ह्योजः शरीरेऽस्मिञ्छरीरिणाम्।**
**सर्पिर्वर्णं मधुरसं लाजगन्धि प्रजायते ॥ ३६ ॥**

बिन्दुमितस्यौजसो नाशान्ना पुरुषो विनश्यति, अर्द्धाञ्जलिमितस्य (ओजसः) क्षये तु न नश्यतीति व्याचष्टे, तन्न। सुश्रुते चार्द्धाञ्जलिमितस्य ओजसस्त्रिविधः क्षय उक्तः। विस्रंसो व्यापत् क्षयश्चेति। तत्राश्रयोऽभिकीर्त्तितमुक्तम्। क्षये मरणमुक्तं तदनुपपत्तेः। तस्माद् यदेवार्द्धाञ्जलिमितं तदेवाष्टबिन्दुमितं भवति। बिन्दुशब्देनात्र कर्षः। कर्षाष्टकमर्द्धाञ्जलिर्भवति। तस्यार्द्धाञ्जलिमितस्य स्थानं हृदयम्। तच्च शुद्धमीषद्रक्तं सपीतकम्। तस्यौजसः क्षये विस्रंसे व्यापदि च बिभेतीत्यादिलक्षणं भवति। त्रिधा हि विस्रंसे व्यापदि च लक्षणं भवति। तत्रैकविधमिहोक्तं सुश्रुतेऽन्यद्विधमुक्तम्। न हि सर्व्वः सर्व्वं वक्तीति। तदोजसस्तु नाशात् सर्व्वशः क्षयान्ना पुमान् विनश्यति। इति द्वयोरविरोधः ॥ ३५ ॥

<u>गङ्गाधरः</u>—तस्यौजस उत्पत्तिक्रममाह प्रथम इत्यादि। रसादीनां सर्व्वेषां यत् परं तेजस्तदेवौजः प्रथमेऽस्मिञ्छरीरे शरीरिणां सर्पिर्वर्णं मधुरसं जायते। ततो लाजगन्धि प्रजायते। इति। सुश्रुते चोक्तं—"तत्र रसादीनां शुक्रान्तानां धातूनां यत् परं तेजस्तत् खल्वोजः। तदेव बलमित्युच्यते स्वशास्त्रसिद्धान्तात्। तत्र बलेन स्थिरोपचितमांसता सर्व्वचेष्टास्वप्रतीघातः स्वरवर्णप्रसादो बाह्यानाम् आभ्यन्तराणाञ्च करणानामात्मकार्य्यप्रतिपत्तिर्भवति। भवन्ति चात्र—ओजः सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं सरम्। विविक्तं मृदु मृत्स्नञ्च प्राणायतनमुत्तमम् ॥ देहः सावयवस्तेन व्याप्तो भवति देहिनाम्। तदभावाच्च शीर्य्यन्ते शरीराणि शरीरिणाम् ॥ अभिघातात् क्षयात् कोपाच्छोकाद्ध्यानाच्छ्रमात् क्षुधः। ओजः संक्षीयते ह्येभ्यो धातुग्रहणनिःसृतम् ॥ तेजः समीरितं तस्माद्विस्रंसयति देहिनाम् ॥ तस्य विस्रंसो व्यापत् क्षय इति लिङ्गानि व्यापन्नस्य

इति ; एतच्चाष्टबिन्दुकं परमोजो ज्ञेयम्, अर्द्धाञ्जलिपरिमाणन्तु यदोजस्तदप्रधानम्। यच्छारीरे वक्ष्यति—"तावदेव श्लेष्मण ओजसश्च प्रमाणम्" इत्यनेन ; तस्माद्द्विविधमिहोजः ; अत एव अर्थेदशमहामूलीये वक्ष्यति— तत् परस्यौजसः स्थानम् इति ; परस्य श्रेष्ठस्याष्टबिन्दुकस्येत्यर्थः। इह च क्षयलक्षणमर्द्धाञ्जलिमानस्यैव ज्ञेयम्, अष्टबिन्दुकस्य त्ववयवनाशेऽपि मृत्युर्भवतीति "हृदि" इत्यादिना ग्रन्थेन दर्शयति ; एतच्चौजः सर्व्वधातुसमुदायरूपं, तेन रसधातुरूपेणावस्थानमिति नाष्टमधातुत्वप्रसक्तिः ; अत एव सुश्रुतेऽप्युक्तं—"रसादीनां शुक्रान्तानां यत् परं तेजस्तत्

भवन्ति। सन्धिविश्लेषो गात्राणां सदनं दोषच्यवनं क्रियासन्निरोधश्च विस्रंसे। स्तब्धगुरुगात्रता वातशोफो वर्णभेदो ग्लानिस्तन्द्रा निद्रा च व्यापन्ने। मूर्च्छा मांसक्षयो मोहः प्रलापो मरणमिति क्षये। भवन्ति चात्र— त्रयो दोषा बलस्योक्ता व्यापद्विस्रंसनक्षयाः। विश्लेषसादौ गात्राणां दोषविस्रंसनं श्रमः॥ अप्राचुर्य्यं क्रियाणाञ्च बलविस्रंसलक्षणम्। गुरुत्वं स्तब्धताऽङ्गेषु ग्लानिर्वर्णस्य भेदनम्॥ तन्द्रा निद्रा वातशोफो बलव्यापदि लक्षणम्। मूर्च्छा मांसक्षयो मोहः प्रलापोऽज्ञानमेव च। पूर्व्वोक्तानि च लिङ्गानि मरणञ्च बलक्षये॥ इति। तत्र विस्रंसे व्यापन्ने च क्रियाविशेषैरविरुद्धैः बलमास्थापयेत्। मूढसंज्ञमितरञ्च वर्ज्जयेत्।" तन्त्रान्तरेऽपि—"भ्रमरैः फलपुष्पेभ्यो यथा संह्रियते मधु। तद्वदोजः शरीरेभ्यो गुणैः संह्रियते नृणाम्।" इति। तदेव यथा जायते तदुक्तं "प्रथमे जायते ह्योजः" इत्यादिना। एते चाष्टादश क्षया आविष्कृततमत्वेनोक्ताः, न तु नियमेन। सन्ति हि शारीरभावास्तेभ्योऽधिकाः स्वेदार्त्तवस्तन्यगर्भस्वरोदकादयः तेषाञ्च क्षया उन्नेयाः। उक्तञ्च सुश्रुते "तेजोऽप्यार्द्रं यं क्रमशः पच्यमानानां धातूनामभिनिर्वृत्तमन्तरस्थं स्नेहजातं रसारव्यं स्त्रीणां विशेषतो भवति। तेन मार्द्दवसौकुमार्य्यमृदुलपल्लोमतोत्साहदृष्टिस्थितिपक्तिकान्तिदीप्तयो भवन्ति। तत् कषायतिक्तशीतरूक्षविष्टम्भवेगविघातव्यवाय-व्यायामव्याधिकर्षणैश्च विक्रियते। तस्यापि पारुष्यवर्णभेदतोदनिष्प्रभतानि विस्रंसने भवन्ति। कार्श्यमन्दाग्निताधस्तिर्य्यक्‌च्युतिर्व्यापत्तौ। दृष्ट्यग्निबलहान्यनिलप्रकोपमरणानि क्षये"। इति। तथा स्वेदक्षयलक्षणमप्युक्तं—स्वेदक्षये स्तब्धरोमकूपता त्वक्शोषः स्पर्शवैगुण्यं स्वेदनाशश्च। तत्राभ्यङ्गस्वेदोपयोगश्च।१। आर्त्तवक्षये यथोचितकालादर्शनमल्पता वा योनिवेदना च। तत्र संशोधनमाग्नेयानाञ्च द्रव्याणां विधिवदुपयोगः।२। स्तन्यक्षये स्तनयोर्म्लानता स्तन्यासम्भवोऽल्पता वा, तत्र श्लेष्मवर्द्धनद्रव्योपयोगः।३। गर्भक्षये गर्भस्य अस्पन्दनमनुन्नतकुक्षिता च, तत्र प्राप्तवस्तिकालायाः क्षीरवस्तिप्रयोगो मेध्यान्नोपयोगश्चेति।४। स्वर-

तद्वदोजः" इति। अन्यत्राप्युक्तं—"भ्रमरैः फलपुष्पेभ्यो यथा संह्रियते मधु। तद्वदोजः शरीरेभ्यो गुणैः संह्रियते नृणाम्॥ इति। प्रथमे जायते इत्यादिपाठस्तु नातिप्रसिद्धः। एतेऽष्टादश क्षया आविष्कृततमत्वेनोक्ताः, तेन उदकक्षयस्वरक्षयाद्यनभिधानं नोद्भावनीयम्" उक्तं हि—"स्वरक्षयमुरोरोगम्" इति। तथोदकक्षयलक्षणं, यथा—'ताल्वोष्ठकण्ठक्लोमसंशोषं पिपासाञ्च दृष्ट्वा उदकवहान्यस्य दुष्टानीति जानीयात्" इति॥ ३४—३६॥

व्यायामोऽनशनं चिन्ता रूक्षाल्पप्रमिताशनम्।
वातातपो भयं शोको रूक्षपानं प्रजागरः॥
कफशोणितशुक्राणामतिवर्त्तनमोक्षणम्।
कालो भूतोपघातश्च विज्ञेयाः क्षयहेतवः॥ ३७॥
गुरुस्निग्धाम्ललवणान्यतिमात्रं निषेविणाम्।
नवमन्नञ्च पानञ्च निद्रामास्यासुखानि च॥
त्यक्तव्यायामचिन्तानां संशोधनमकुर्व्वताम्।
श्लेष्मा पित्तञ्च मेदश्च मांसञ्चातिप्रवर्द्धते॥

क्षयश्च स्वरभङ्गरोगलक्षणे बोध्यः। ५। उदकक्षयस्तु तालवोष्ठकण्ठक्लोमसंशोषपिपासादिभिर्लक्षणैरुदकवहानि स्रोतांस्यस्य दुष्टानीति व्यवस्येत्। इति॥३६॥

गङ्गाधरः—क्षयलक्षणानि अष्टादशानामुक्त्वा तेषां क्षयनिदानानि आह—व्यायाम इत्यादि। अल्पाशनं मानतः प्रमिताशनम्, अनशनं लङ्घनम्। कफशोणितशुक्राणामतिवर्त्तनमतिप्रवृत्तिः, वमनादियोगेन कफस्य। शोणितस्यातिमोक्षणं सिराव्यधादिभिः। शुक्रस्य अतिमोक्षणमतिमैथुनादिना। कालो वार्द्धक्यातुर्य्यादिः। भूतोपघातः पिशाचाद्यभिषङ्गः। एते क्षयहेतवो विज्ञेयाः। ननु व्यायामादिकं वातपित्तप्रकोपकं कथं क्षयहेतुरिति चेत्? न। साधारणतया क्षयहेतुत्वेनोक्तया यथार्हं हेतुतया व्याख्येयं। यद् यस्य विशेषवत् तस्य क्षयहेतुस्तदिति व्यायामेनातियुक्तेन कफक्षयः स्यात्। वातपित्तक्षयस्तु अतिस्निग्धाद्यशनादिना स्यादित्येवं यथार्हता अत्र बोध्या॥३७॥

गङ्गाधरः—इति क्षयानुक्त्वा सप्त पिड़का मधुमेहिका इति यदुद्दिष्टं तस्य विस्तरं प्रवक्ति—गुरुस्निग्धेत्यादि। निद्रामास्यासुखानि च भजतामिति शेषः। मेहिनामित्यर्थादापद्यते। मेहिनां गुर्व्वाद्यश्नतां निद्रास्यासुखभजतां त्यक्त-

चक्रपाणिः—सामान्येन क्षयाणां हेतुमाह—व्यायाम इत्यादि। प्रमिताशनम् एकरसाभ्यासः, अतिवर्त्तनमतिप्रवृत्तिर्बहिर्गमनमिति यावत्, कालो वार्द्धक्यमादानञ्च, भूतोपघातः पिशाचाद्युपघातः। अत्र वातक्षयहेतुर्नोक्तो विरुद्धत्वात्, स श्लेष्मलदिवास्वपनादिर्ज्ञेयः, किंवा अभावात् किञ्चाभावः, सतश्च विरुद्धरूपस्य वातस्याप्यनुत्पादात् क्षयो ज्ञेयः॥ ३७॥

चक्रपाणिः—सम्प्रति सप्त पिड़का वक्तव्याः, तत्रासां प्रधानहेतुत्वेन प्रमेहान् तावत्स्थितानादि-

तैरावृतगतिर्वायुरोज आदाय गच्छति ।
यदा वस्तिं तदा कृच्छ्रो मधुमेहः प्रवर्त्तते ॥
स मारुतस्य पित्तस्य कफस्य च मुहुर्म्मुहुः ।
दर्शयत्याकृतिं गत्वा क्षयमाप्यायते पुनः ॥ ३८ ॥
उपेक्षयास्य जायन्ते पिड़काः सप्त दारुणाः ।
मांसलेष्ववकाशेषु मर्म्मस्वपि च सन्धिषु ॥
शराविका कच्छपिका जालिनी सर्षपी तथा ।
अलजी विनताख्या च विद्रधी चेति सप्तमी ॥ ३९ ॥

व्यायामादीनां श्लेष्मादिकं प्रवर्द्धते । तैः प्रवृद्धैरावृतगतिर्वायुर्यदा तु ओज आदाय वस्तिमागच्छति तदा तेषां सर्व्वएवमेहः कृच्छ्रः कृच्छ्रसाध्यो मधुमेहः प्रवर्त्तते मधुमेहरूपेण परिवर्त्तते । स मधुमेहः मुहुर्मुहुः कदाचित् मारुतस्य कदाचित् पित्तस्य कदाचित् कफस्य आकृतिं दर्शयति, मुहुर्मुहुः क्षयं गच्छति, क्षयं गत्वा च पुनराप्यायते वृद्धिमाप्नोति । अकारणमेवैवं स्यादिति ॥३८॥

गङ्गाधरः—अस्य मधुमेहस्य उपेक्षया अचिकित्सया प्रतिकाराकरणे दारुणाः सप्त पिड़का जायन्ते । मांसलादिषु मात्रावकाशेषु । तथा चोक्तं—मधुमेहे मधुसमं जायते स किल द्विधा । क्रुद्धे धातुक्षयात् वायो दोषावृतपथेऽथवा । आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयन । क्षीणः क्षणात् क्षणात् पूर्णो भजते कृच्छ्रसाध्यताम् ॥ इति । स एवायं कृच्छ्रसाध्यो मधुमेहः । अस्मिन् उपेक्षिते सप्त पिड़काः स्युः । यश्चासाध्यस्तत्र न पिड़काः स्युरिति । सुश्रुते तु प्रमेहिणो दश पिडका भवन्तीति यदुक्तं, तत्र पुत्रिणीमसूरिकाविदारिकाणां तिसृणां नातिपीडाकरत्वेन गणनयात्र नोपदेशः कृतः । तासाञ्च पिडकानामुपसंहारार्थमथान्याः पिडकाः सन्तीत्यादि वक्ष्यते । पिडकानामुत्पत्तिप्रदेशमाह—मांसलेष्वित्यादि । ताः सप्ताह—शराविकेत्यादि । शराविकादिषट्संज्ञा यौगिक्यः स्वस्वलक्षणे स्फुटीकृताः । अलजी तु रूढिसंज्ञा ॥ ३९ ॥

क्रमेणाह—गुर्व्विल्यादि । नवं पानमिति नवं मद्यम् । निद्रामास्यासुखानि चेत्यत्रान्ते भजतामिति शेषः । ओजः प्रसादो धातूनामिति यावत्; कृच्छ्र इति कृच्छ्रसाध्यः, उपेक्षयाऽचिकित्सया ;

अन्तोन्नता मध्यनिम्ना श्यामा क्लेदरुगन्विता।
शराविका स्यात् पिड़का शरावाकृतिसंस्थिता ॥ ४० ॥
अवगाढ़ार्त्तिनिस्तोदा महावास्तुपरिग्रहा।
श्लक्ष्णा कच्छपपृष्ठाभा पिड़का कच्छपी मता ॥ ४१ ॥
स्तब्धा सिराजालवती स्निग्धस्रावा महाशया।
रुजा निस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी ॥ ४२ ॥
पिड़का नातिमहती क्षिप्रपाका महारुजा।
सर्षपी सर्षपाभाभिः पिड़काभिश्चिता भवेत् ॥ ४३ ॥
दहति त्वचमुत्थाने तृष्णामोहज्वरप्रदा।
विसर्पत्यनिशं दुःखाद् दहत्यग्निरिवालजी ॥ ४४ ॥
अवगाढ़रुजाक्लेदा पृष्ठे वाप्युदरेऽपि वा।
महती विनता नीला पिड़का विनता मता ॥ ४५ ॥

गङ्गाधरः—शराविकालक्षणमाह—अन्तोन्नतेत्यादि। स्पष्टम् ॥ ४० ॥

गङ्गाधरः—अवगाढ़ेत्यादि। अवगाढ़ेत्यादिना कच्छपिका ॥ ४१ ॥

गङ्गाधरः—स्तब्धेत्यादि। स्तब्धेत्यादिना जालिनी सिराजालवती जाला-कारेण सिरासमूहवती। ततो जालिनीति संज्ञा ॥ ४२ ॥

गङ्गाधरः—पिड़केत्यादि। सर्षपी सर्षपाभाभिः पिड़काभिश्चिताऽधिष्ठिता व्याप्तेत्यर्थः। तेन सर्षपीति संज्ञा ॥ ४३ ॥

गङ्गाधरः—दहतीत्यादि। दहतीत्यादिनाऽलजी। त्वचं चर्म्म। उत्थाने पिड़कोद्गमकाले। विसर्पति स्थानात् स्थानान्तरं व्रजति ॥ ४४ ॥

गङ्गाधरः—अवगाढ़ेत्यादि। अवगाढ़रुजेत्यादिना विनता विनम्रभाव-मापन्ना विनता ततो विनता संज्ञा मता ॥ ४५ ॥

शराविकादि-संज्ञान्वयो विवरणे स्फुटः। अलजीसंज्ञा कृता; एताश्च प्राधान्यादुक्ताः; तेन सुश्रुतेऽपि पिड़काधिक्यमुक्तं यत्, तन्न विरोधि। सिराजालं सिरासमूहः, चिताऽधिष्ठिता ॥३८—४५॥

विद्रधिं द्विविधामाहुर्बाह्यामाभ्यन्तरीं तथा ।
बाह्या त्वक्स्नायुमांसोत्था कण्डराभा महारुजा ॥ ४६ ॥
शीतकान्नविदाह्युष्ण-रूक्षशुष्कातिभोजनात् ।
विरुद्धाजीर्णसंक्लिष्ट-विषमासात्म्यभोजनात् ॥
व्यापन्नबहुमद्यत्वाद् वेगसन्धारणाच्छ्रमात् ।
जिह्मव्यायामशयनादतिभाराध्वमैथुनात् ॥
अन्तःशरीरे मांसासृक् प्रविशन्ति यदा मलाः ।
तदा संजायते ग्रन्थिर्गम्भीरस्थः सुदारुणः ॥
हृदये क्लोम्नि यकृति प्लीह्नि कुक्षौ च वृक्कयोः ।
नाभ्यां वङ्क्षणयोर्वापि वस्तौ वा तीव्रवेदनः ॥४७॥

गङ्गाधरः—विद्रधिमित्यादि । विद्रधिमित्यादिना विद्रधिः । अस्यास्तु द्वैविध्येऽपि विद्रधित्वसामान्यात् पिडकानां न सप्तत्वव्याघात इति । त्वक्स्नायुमांसोत्था यतो गम्भीरधातुसमुत्था । तस्माद्बाह्या कण्डराभा स्थूलस्नायुप्रकारा ॥ ४६ ॥

गङ्गाधरः—बाह्याभ्यन्तरविद्रध्योर्वातादिजविद्रधितुल्यलक्षणत्वेऽपि आभ्यन्तरविद्रधेर्बाह्यविद्रधितो गरिष्ठत्वेनान्तरविद्रधीमुपलक्ष्योपदेष्टुं तन्निदानमाह शीतकेत्यादि । शीतकान्नादीनां प्रत्येकमतिभोजनेत्यनेनान्वयः । विरुद्धादीनाञ्च प्रत्येकं भोजनेत्यनेनान्वयः । संक्लिष्टं दोषलम् । व्यापन्नं गुणसम्पद्रहितम् । बहु पीतं मद्यं येन तस्य भावः तस्मात् व्यापन्नबहुमद्यत्वात् । जिह्मं कौटिल्येनाचरितं व्यायामशयनं व्यायामश्च शयनञ्च तत् तस्मात् । अतिशब्दस्य भारादिभिः प्रत्येकमन्वयः । अन्तःशरीरे शरीराभ्यन्तरे । मांसासृक् मांसञ्चासृक् च तद्द्वयमभ्यन्तरे यदस्ति यदा तदेव प्रविशन्ति मला वातपित्तकफास्तदा ग्रन्थिर्ग्रन्थिरिवाकृत्या गम्भीरस्थः अत्यन्तावगाढमूलः सुदारुणः कष्टदो जायते । अभ्यन्तर उत्पत्तिस्थानान्याह—

चक्रपाणिः—विद्रधिं द्विविधामित्यनेनाभ्यन्तरविद्रधेरपि विद्रधित्वेन पिडकानां सप्तत्वेऽविरोध इति दर्शयति । कण्डराभा स्थूलस्नाय्वाकारा । अन्तर्विद्रधेर्गरीयस्त्वेन निदानान्याह—शीतकेत्यादि । संक्लिष्टं दोषलम्, व्यापन्नञ्च बहु च मद्यमुपयुङ्क्ते यः स व्यापन्नबहुमद्यः ।

दुष्टरक्तातिमात्रत्वात् स वै शीघ्रं विदह्यते।
ततः शीघ्रविदाहित्वाद् विद्रधीत्यभिधीयते ॥ ४८ ॥
व्यधच्छेदभ्रमानाह-शब्दस्फुरणसर्पणैः।
वातिकीं पैत्तिकीं तृष्णा-दाहमोहमदज्वरैः ॥
जृम्भोत्क्लेशारुचिस्तम्भ-शीतकैः श्लैष्मिकीं विदुः।
सर्व्वासु तु महच्छूलं विद्रधीषूपजायते ॥ ४९ ॥
शस्त्रास्त्रैर्भिद्यत इव चोल्ककैरिव दह्यते।
विद्रधी व्यम्लतां याता वृश्चिकैरिव दश्यते ॥ ५० ॥
तनु रूक्षारुणं श्यावं फेनिलं वातविद्रधी।
तिलमाषकुलत्थोद-सन्निभं पित्तविद्रधी ॥
श्लैष्मिकी स्रवति श्वेतं बहलं पिच्छिलं बहु।
लक्षणं सर्व्वमेवैतद् भजते सान्निपातिकी ॥ ५१ ॥

हृदये इत्यादि। क्लोमेति कण्ठोरसोः सन्धिरूपे स्थाने यत् परिशोषात् पिपासा भवति। कुक्षावुदरगह्वरे। वृक्कयोर्वक्षोऽधःपार्श्वयोः। संहतरूपो ग्रन्थिः। शीघ्रं विदह्यते पच्यत इत्यर्थः। शीघ्रविदाहित्वाद्विद्रधीति पृषोदरादित्वात् रूपसिद्धिः ॥ ४७।४८ ॥

गङ्गाधरः—तस्य लक्षणमाह—व्यधेत्यादि। व्यधो विद्धवत् पीडा। छेदः क्षुद्रखड्गादिच्छेदनवत् पीड़ा। भ्रमो घूर्णनवत् पीडा। आनाहो मलविबद्धता। शब्दस्फुरणसर्पणानि तु विद्रधौ। एतैर्व्यधादिभिः सर्पणान्तैर्वातिकीं विद्रधीम्, तृष्णादिभिर्ज्वरान्तैः पैत्तिकीम्, जृम्भेत्यादिभिः श्लैष्मिकीं विदुः। शीतमेव शीतकम्। सर्व्वासु विद्रधीषु सामान्यलक्षणं महच्छूलम् ॥ ४९ ॥

गङ्गाधरः—पक्वलक्षणमाह शस्त्रेत्यादि। शस्त्रविशेषेण भेदच्छेदवत् पीडा। उल्काग्निदाहवद् दाहश्च। इति वातादिजविद्रधेः पक्वाया लक्षणम्। विद्रधी व्यम्लतां पक्वतां याता वृश्चिकैरिव दश्यत इति पक्वलक्षणम् ॥ ५० ॥

गङ्गाधरः—विदीर्णस्य च पूयस्रावभेदं दर्शयति तन्वित्यादि। तन्वित्यादिना स्रावलक्षणम्। तिलादीनां प्रत्येकमुदशब्दस्यान्वयः। उदकार्थं उदकशब्दो-

अन्तःशरीर इति कोष्ठे, मला दोषाः, ग्रन्थिरिव ग्रान्थ्यः। स इति ग्रन्थिः; व्यधादयो व्यथा-

अथासां विद्रधीनां साध्यासाध्यत्वविशेषविज्ञानार्थं स्थानकृतलिङ्गविशेषमुपदेक्ष्यामः । तत्र प्रधानमर्म्मजायां विद्रध्यां हृद्घट्टनतमकप्रमोहकासाः । क्लोमजायान्तु पिपासामुखशोषगलग्रहाः । यकृज्जायां श्वासः । प्लीहजायामुच्छ्वासोपरोधः । कुक्षिजायां कुक्षिपार्श्वान्तरांसशूलम् । वृक्कजायां पार्श्वपृष्ठकटीग्रहः * । नाभिजायां हिक्का । वङ्क्षणजायां सक्थिसादः । वस्तिजायां कृच्छ्रपूतिमूत्रवर्च्चस्त्वम् । पक्वप्रभिन्नासूर्द्ध्वजासु मुखात् स्रावः, अधोजासु तु गुदात्, उभयतस्तु नाभिजासु । आसां हृन्नाभिवस्तिजाः परिपक्वाः सान्निपातिकी च

ऽप्यस्ति । बहुशब्दो बहुत्ववाचकोऽपि यदातिशयार्थे प्रयुज्यते न तु संख्यायां तदैकवचनान्तोऽपि विशेष्यानुरूपलिङ्गवचनविभक्तिनियमात् विशेषणस्येति । वातजादीनां विद्रधीनां त्रिसृणां लक्षणस्रावावुक्त्वा तदतिदेशेनाधिकलक्षणस्रावाभावात् सान्निपातिकविद्रधेर्लक्षणं स्रावञ्चाह — लक्षणमित्यादि । लक्षणं सर्व्वमिति व्यधादिवातवेदनाविशेषतन्वादिस्रावविशेषौ वातविद्रधेर्लक्षणं तृष्णादितिलादुदकसन्निभस्रावौ पैत्तिकविद्रधेर्लक्षणं जम्भादिबहलश्वेतबहुपिच्छिलस्रावौ श्लैष्मिकविद्रधेर्लक्षणं सर्व्वासाञ्च महच्छूलं शस्त्रवद्भेदनमुल्काग्निदाहवद् दाहश्च पक्वत्वे वृश्चिकवद्दंशनञ्चेत्येतत्सर्व्वलक्षणं सान्निपातिकी विद्रधी भजते ॥ ५१ ॥

गङ्गाधरः—अथेत्यादि । तत्र प्रधानमर्म्मेति हृदयम् । तत्र जातायां तमकः श्वासविशेषः, प्रमोहोऽत्रेन्द्रियमात्रमोहः । यकृदित्यादि । कुक्षिपार्श्वान्तरांसशूलं कुक्षौ पार्श्वान्तरे अंसे भुजोपरिदेशे च शूलम् । पक्वप्रभिन्नासूर्द्ध्वजासु हृदयक्लोमयकृत्प्लीहकुक्षिषु जातासु मुखात् स्रावः । अधोजासु वङ्क्षणवस्तिजासु पक्वप्रभिन्नासु गुदात् । नाभिजासु उभयत इति मुखात् गुदाच्च । स्थानकृतलिङ्गविशेषप्रदर्शनप्रयोजनमाह—आसामित्यादि । हृन्नाभिवस्तिजाः

प्रकाराः, शीतमेव शीतकम्, व्यम्लतां याता विदाहं प्राप्ता । तमकः श्वासभेदः ; कुक्षिपार्श्वान्तरांसशूलकमिति कुक्षिपार्श्वान्तरांसेषु शूलम् । हृन्नाभिवस्तिजासु सान्निपातिकीं पृथक् पठन्,

* पृष्ठकोटिग्रहः इति पाठान्तरम् ।

मरणाय। शेषाः पुनः कुशलमाशुप्रतिकारिणं चिकित्सकम् आसाद्योपशाम्यन्ति। तस्मादचिरोत्थितां विद्रधीं शस्त्रसर्प-विद्युदग्नितुल्यां स्नेहस्वेदविरेचनैश्चोपक्रमेत। सर्व्वशो गुल्म-वच्चेति ॥ ५२ ॥

परिपक्वा मरणाय। प्रागेवोत्पन्नमात्रं परमकुशलभिषजा आदौ पाकं वारयितुकामेन गुणवता गुणवदातुरस्य चेदुपक्रान्ता न पक्तुं पार्य्यन्ते। तदा न मरणायेति—परिपक्वा इति वचनेन ज्ञापितम्। सान्निपातिकी च पक्वा चापक्वा च यत्र तत्र जाता मरणाय। अत्रापि हृन्नाभिवस्तिजा इत्येक-वचनान्ततयानुवर्त्यान्वेतव्यम्। पृथक् पाठात् परिपक्वा इत्यस्य नानुवृत्तिः। सान्निपातिक्याः सामान्येनोक्त्या पक्वायाश्चासाध्यत्वोक्तेर्लाभात्। इदन्तु वचनं हृदयनाभिवस्तिजा सान्निपातिकी विद्रधी कुशलेनापि भिषजा गुणवदातुरस्य अप्यादौ पाकं वारयितुकामेनाप्युपक्रान्ता पच्यते। यदि वा कस्यचित् न पच्यते तदापि मरणायेति ख्यापनार्थमिति। शेषाः पुनरिति—परिपक्वहृन्नाभि-वस्तिजाभ्यः सान्निपातिक्याश्चान्या क्लोमयकृत्प्लीहकुक्षिवृक्कवङ्क्षणजा वाता-दिजाः। हृन्नाभिवस्तिजा अप्यपक्वा वातादिजाः कुशलादिकं वैद्यमासाद्योप-शाम्यन्ति। कुशलमाशुप्रतिकारिणमिति विशेषणद्वयेन पुनरेतत् ख्यापितम्। हृन्नाभिवस्तिजा अपरिपक्वा सर्व्वे वातजादयः परिपक्वा ऊर्द्ध्वं मुखात् स्रुति-शीला असाध्याः सन्त्योऽपि कुशलेनोपक्रान्ताः शरीरबाह्यतो विदीर्णाश्चेदास्रावं स्रवन्ति न तु मुखात्, तदा कदाचिदुपशाम्यन्ति, इति ज्ञापितम्। सर्व्वासाञ्च कष्टसाध्यत्वमुक्तमिति। "हृन्नाभिवस्तिजास्तु खलु बाह्यशरीरतः प्रभिन्ना अपि कुशलेनोपक्रान्ता न सिध्यन्ति" इति पूर्व्वमुक्तम्।

तस्मादित्यादि। सर्व्वासामेव कष्टसाध्यत्वात् कष्टत्वादिकं दर्शयति—शस्त्रेत्यादि। शस्त्रवच्छेदकत्वम्। सर्पवदाशु संहारित्वम्। विद्युदग्निर्वज्राग्निः, तद्वदाशुमारकः। ननु सुश्रुते हृदयादिवद्गुदजापि विद्रधी उक्ता। तद्यथा—"गुर्व्वसात्म्यविरुद्धान्न-शुष्कसंक्लिन्नभोजनात्। अतिव्यवायव्यायाम-वेगाघात-विदाहिभिः॥ पृथक् सम्भूय वा दोषाः कुपिता गुल्मरूपिणम्। वल्मीकवत्

सान्निपातिकीं पक्वामपक्वाञ्चासाध्यां दर्शयति। शस्त्रादिदृष्टान्तत्रयात् [illegible] सर्पवदाशुसंहारित्वं, विद्युदग्निवदाशुमारकत्वं ज्ञेयम् ॥ ४१—५२ ॥

भवन्ति चात्र ।

**विना प्रमेहमप्येता जायन्ते दुष्टमेदसः ।**
**तावच्चैता न लक्ष्यन्ते यावद्वास्तुपरिग्रहः ॥ ५२ ॥**

समुन्नद्धमन्तः कुर्व्वन्ति विद्रधिम् ॥ गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा । वृक्कयोः प्लीह्नि यकृति हृदये क्लोम्नि वा तथा ॥ तासां लिङ्गानि जानीयाद्वाह्यविद्रधिलक्षणैः ॥" इत्यादि । गुदजायास्तु तत्रैव लक्षणमुक्तं—"गुदे वातनिरोधश्च" इतिमात्रम् । एवम्—"स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः । दाहज्वरकरो घोरो जायते रक्तविद्रधिः ॥ अपि सम्यक् प्रजातानामसृक् कायात् अनिःसृतम् । रक्तजं विद्रधिं विद्यात् कुक्षौ मक्कल्लसंज्ञितम् । सप्ताहान्नोपशान्तश्चेत् ततोऽसौ संप्रपच्यते ॥" इति । रक्तविद्रधी च वातादिविद्रधिवदुक्ता । तथा वाह्यविद्रधी च वातपित्तकफसन्निपातजक्षतजरक्तजभेदात् षोढ़ा उक्ता । तत्र वातादिजानामभ्यन्तरविद्रधीनाञ्च लक्षणान्येव वातादिजवाह्यानाम् । क्षतजायास्तु—"तैस्तैर्भावैरभिहते क्षते चापथ्यसेविनः । क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ॥ ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः । एष विद्रधिरागन्तुः पित्तविद्रधिलक्षणः । कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरः । पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥" इति । कथमत्राचार्य्येण नोक्ता इति चेत् ? न । आभ्यन्तरविद्रधौ गुदजातविद्रध्या आर्त्तवजविद्रध्या वस्तिजायामन्तर्भावात् । वस्तिशब्देन वस्तिसामीप्याद्गुदं वस्तिमुखञ्च गृह्यते । तत्र गुदजायां कृच्छ्रपूतिवातवर्च्चस्त्वं वस्तिमुखजायां कृच्छ्राल्पपूतिमूत्रवर्च्चस्त्वमिति वस्तिजायां कृच्छ्रपूतिमूत्रत्वमिति वचनस्य व्याख्यानम् । सुश्रुतेऽप्युक्तं—"गुदे वातनिरोधश्च वस्तौ कृच्छ्राल्पमूत्रता" इति । अत्रापि वातनिरोधः कृच्छ्रवातत्वं तेनापि कृच्छ्रवर्च्चस्त्वं गम्यते । रक्तजाभ्यन्तरविद्रध्याश्च रक्तजगुल्मेऽन्तर्भावाच्च । सप्ताहानन्तरपाकित्वेन तदारम्भकवातजत्वेन वातजायामन्तर्भावाद्वा । आविष्कृततमत्वेन मूत्ररूपत्वेन वात्रानुक्तत्वदोषाभावाच्च । सर्व्वशो गुल्मवच्चोपक्रमेदित्युक्तया गुल्मविद्रध्यन्यतरत्वेन विज्ञानादेरप्रयोजनस्य व्याधिनिवर्त्तनस्यानपायाच्च ॥ ५२ ॥

गङ्गाधरः—ननु सुश्रुते प्रमेहिकपिड़काव्यतिरिक्ताश्च दश पिड़का उक्ताः । कथमत्र माधुमेहिका एवेति ? अत आह—भवन्ति चात्रेति । विनेत्यादि ।

चक्रपाणिः—प्रमेहं विनाप्युक्तपिड़कासम्भवं दर्शयति—विनेत्यादि ।—एतेन च पिड़कानां

शराविका कच्छपिका जालिनी चेति दुःसहा।
जायन्ते ता ह्यतिबलाः प्रभूतश्लेष्ममेदसः॥ ५४॥
सर्षपी त्वलजी चैव विनता विद्रधी च याः।
साध्याः पित्तोल्वणास्तास्तु संभवन्त्यल्पमेदसः॥ ५५॥
मर्म्मस्वंसे गुदे पाण्योर्स्तले सन्धिषु पादयोः।
जायन्ते यस्य पिड़काः स प्रमेही न जीवति॥ ५६॥
तथान्याः पिड़काः सन्ति पीतरक्तासितारुणाः।
पाण्डुराः पाण्डुवर्णाश्च भस्माभा मेचकप्रभाः॥

प्रमेहं विनापि दुष्टमेदस एता जायन्ते। याः पिड़का भवन्ति तासामेव माधुमेहिकपिड़कावल्लिङ्गसाध्यासाध्यत्वादिकं बोध्यम्। वास्तुपरिग्रहः स्थानस्य परि सर्व्वतो ग्रहणमित्यर्थः॥ ५३॥

गङ्गाधरः—आसां दोषदूष्यनियममाह—शराविकेत्यादि। दुःसहाः कष्टदत्वात्। प्रभूतश्लेष्ममेदस इत्यनेन (विना प्रमेहं प्रभूतश्लेष्ममेदसः) कफमेहिनामेव गुरुस्निग्धादिसेवनेन मधुमेहत्वे शराविकादिकास्तिस्रो भवन्ति॥५४॥

गङ्गाधरः—नन्वन्यमेहिनां सर्षपीत्यादिकाश्चतस्रः पित्तोल्वणा अल्पमेदसो भवन्तीत्यनेन पित्तमेहिनां गुरुस्निग्धादिसेवनेन मधुमेहत्वे एव भवन्ति सर्षप्यादयश्चतस्रो न तुल्यमेहिनामिति। अत्र विद्रधी बाह्या न त्वाभ्यन्तरा, तस्य दोषादिविशेषोक्तत्वात्। आभ्यन्तरा हि विद्रधी यस्य यन्मयप्रमेहस्तस्य तन्मयी भवति, यद्यपि मधुमेहत्वे त्रैदोषिकत्वं तथापि पूर्व्वप्रमेहदोषाधिक्येन मधुमेहत्वेऽपि तद्व्यपदेशात्। पूर्व्वप्रमेहकृद्दोषस्याप्राधान्येनोल्वणत्रिदोषजत्वेन मधुमेहत्वे त्रिदोषजा विद्रधी भवति। सुतरां सुश्रुतेनोक्तम्—"ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तन्मयाः।" इति॥ ५५॥

गङ्गाधरः—प्रमेहमात्रे पिड़काया असाध्यत्वमाह—मर्म्मस्वित्यादि। बहुवचनात् सप्तोत्तरे मर्म्मशते। तले हस्ततले॥ ५६॥

गङ्गाधरः—ननु सुश्रुते दश पिड़काः प्रमेहिणामप्रमेहिणाञ्चोक्ताः। अत्र तु

माधुमेहिकत्वं यत् पूर्व्वमुक्तं तत् प्रायिकत्वेन ज्ञेयम्। वास्तु स्थानं, विद्रधी चेति बाह्यविद्रधी॥ ५३—५६॥

चक्रपाणिः—पिड़काप्रसङ्गेनान्यासामपि पिड़कानामाविष्कृतानां लक्षणं ब्रूते—तथाऽन्या

मृद्वश्च कठिनाश्चान्याः स्थूलाः सूक्ष्मास्तथापराः ।
मन्दवेगा महावेगाः स्वल्पशूला महारुजाः ॥

सप्तेति विरोध इति ? अत आह—तथान्या इत्यादि । सप्त पिड़का आविष्कृततमतयोक्ताः अन्याश्च पिड़काः सन्ति । ताः कीदृश्य इति ? अत आह पीतेत्यादि । अत एव सुश्रुतोक्ता "महत्यल्पचिता ज्ञेया पिड़का सा तु पुत्रिणी । मसूरसमसंस्थाना ज्ञेया सा तु मसूरिका । विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥" इति तिस्रोऽन्तर्भाव्याः । पाण्डुरा धूसराः । पाण्डुवर्णाः रूक्षपाण्डुवर्णाः । भस्माभाः श्यावाऽनुश्वेतवर्णाः । मेचकप्रभाः स्निग्धकृष्णवर्णाः । सुश्रुतेऽप्युक्तं नाम विशेषेण "स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा । कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥ यवाकारा सुकठिना ग्रथिता मांससंश्रिता । पिड़का श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते ॥ घनामवक्त्रां पिड़कामुन्नतां परिमण्डलाम् । अन्त्रालजीमल्पपूयां तां विद्यात् कफवातजाम् ॥ विवृतास्यां महादाहां पक्वोडुम्बरसन्निभाम् । विवृतामिति तां विद्यात् पित्तोत्थां परिमण्डलाम् ॥ ग्रन्थयः पञ्च वा षड् वा दारुणाः कच्छपोन्नताः । कफानिलाभ्यामुद्भूतां विद्यात् तां कच्छपीमिति ॥ पाणिपादतले सन्धौ ग्रीवायामूर्द्ध जत्रुणि । ग्रन्थिर्वल्मीकवद् यस्तु शनैः समुपचीयते ॥ तोदक्लेदपरीदाह-कण्डूमद्भिर्व्रणैर्वृतः । व्याधिर्वल्मीक इत्येष कफपित्तानिलोद्भवः ॥ पद्मपुष्करवन्मध्ये पिडकाभिः समाचिताम् । इन्द्रवृद्धान्तु तां विद्याद् वातपित्तोत्थितां भिषक् ॥ कर्णौ परिसमन्ताद्वा पृष्ठे वा पिड़कोग्ररुक् । शालूकवत् पनसिकां तां विद्यात् श्लेष्मवातजाम् ॥ हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरम् । पाषाणगर्द्दभं विद्याद्बलाशपवनात्मकम् ॥ विसर्पवत् सर्पति यो दाहज्वरकरस्तनुः । अपाकः श्वयथुः पित्तात् स ज्ञेयो जालगर्द्दभः ॥ बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम् । पित्तप्रकोपात् सम्भूतां कक्षामिति विनिर्द्दिशेत् ॥ अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः । क्वचित् सर्व्वत्र वा देहे स्मृता विस्फोटका इति ॥ कक्षाभागेषु ये स्फोटा जायन्ते मांसदारणाः । अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः ॥ सप्ताहाद द्वादशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् । तामग्निरोहिणीं विद्यादसाध्यां सन्निपाततः ॥ विदारीकन्दवद्वृत्तां

इत्यादि ।—पाण्डुरा धूसराः, पाण्डुवर्णास्तु रूक्षपाण्डुवर्णा ज्ञेयाः, मेचकप्रभाः स्निग्धकृष्णवर्णाः ।

ता बुद्ध्वा मारुतादीनां यथास्वं हेतुलक्षणैः ।
ब्रूयादुपाचरेदाशु प्रागुपद्रवदर्शनात् ॥ ५७ ॥

कक्षावंक्षणसन्धिषु । रक्तां विदारिकां विद्यात् सर्व्वजां सर्व्वलक्षणाम् ॥ प्राप्य मांससिरास्नायुः श्लेष्मा मेदस्तथानिलः । ग्रन्थिं कुर्व्वन्ति भिन्नोऽसौ मधुसर्पिर्वसानिभम् । स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः । मांसं विशोष्य ग्रथितां शर्करां जनयेत् पुनः । दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः सिराः । स्रवन्ति सहसा रक्तं तं विद्याच्छर्कराव्वुदम् ॥ पामाविचर्च्च्यौ कुष्ठेषु रकसा च प्रकीर्त्तिता । शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ॥ मेदोरक्तानुगैश्च व दोषैर्वा जायते नृणाम् । सकीलः कठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपि वा । कोलमात्रः सरुक् स्रावी जायते कदरस्तु सः ॥ अरूंषि बहुवक्त्राणि बहुक्लेदीनि मर्द्धनि ॥ कफासृक्कृमिकोपेण नृणां विद्यादरूंषिकाम् । दाहज्वर-रुजावन्तस्ताम्राः स्फोटाः सपीतकाः । गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः ॥ शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः । जायन्ते पिड़का यूनां वक्त्रे या मुखदूषिकाः ॥ कण्टकैराचितं वृत्तं कण्डूमत् पाण्डु मण्डलम् ॥ पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् ॥ अवेदनं स्थिरञ्चैव यस्य गात्रेषु दृश्यते । माषवत् कृष्णमुत्सन्नमनिलात्तं मशकं विदुः ॥ व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो वहिः । कीलोपमं स्थिरकरं चर्म्मकीलन्तु तद्विदुः ॥ वातेन तोदपारुष्यं पित्तादसितवक्त्रता । श्लेष्मणा स्तिमितं तस्य ग्रथितत्वं सवर्णता ॥ शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् । स्विन्नस्याप्लाव्यमानस्य कण्डू रक्त-कफोद्भवा । कण्डूयनात् ततः क्षिप्रं स्फोटः स्रावश्च जायते । एकीभूतं व्रणैर्घोरं तां विद्यादहिपूतनाम् ॥ स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः । प्रक्लिद्यते यदा स्वेदात् सकण्डूं जनयेत् तदा ॥ तत्र कण्डूयनात् क्षिप्रं स्फोटः स्रावश्च जायते । प्राहुर्वृषणकच्छुं तां श्लेष्मरक्तप्रकोपजाम् ॥" इति ।

सर्व्वमुपसंहर्त्तुमाह—ता इत्यादि । उपाचरेच्चेति मारुतादीनां भेषजैरिति । प्रागुपद्रवदर्शनादिति पिड़कायामुपद्रवोत्पत्तेः पूर्व्वमेवोपाचरेदित्यर्थः । उपद्रव-सहिता हि पिड़काः साध्या अपि कृच्छ्रा भवन्ति इति ज्ञापितमिति ॥ ५७ ॥

उपाचरेच्चेति मारुतादीनां भेषजैरित्यर्थोभवति ; प्रागुपद्रवदर्शनादित्यनेन उपद्रवयुक्ता पिड़का-दुःसाध्येति दर्शयति ॥ ५७ ॥

तृट्श्वासमांससङ्कोच-*-मोहहिक्कामदज्वराः ।
विसर्पमर्म्मसंरोधाः पिड़कानामुपद्रवाः ॥ ५८ ॥
क्षयः स्थानञ्च वृद्धिश्च दोषाणां त्रिविधा गतिः ।
ऊर्द्ध्वञ्चाधश्च तिर्य्यक् च विज्ञेया त्रिविधापरा ॥
त्रिविधा चापरा कोष्ठ-शाखामर्म्मास्थिसन्धिषु ।
इत्युक्ता विधिभेदेन दोषाणां त्रिविधा गतिः ॥ ५९ ॥

गङ्गाधरः—उपद्रवानाह—तृडित्यादि। मर्म्मसंरोधो वक्ष-उपरोधः ॥५८॥

गङ्गाधरः—अथोद्दिष्टदोषाणां त्रिविधा चोक्ता गतिरपि विस्तरेणाह—क्षय इत्यादि। गतिरवस्था प्रकारश्च। स्वस्थानुरसामान्येन वातादीनां त्रिधा गतिः। तत्रातुराणां वातादेः क्षयश्च वृद्धिश्च क्षयवृद्धद्वयम्। क्षयवृद्धिसहचरस्थानञ्चेति चतुर्द्धापि त्रिधैव, ततो नातिरेकात्। स्वस्थानान्तु स्थानं साम्यमेवेत्यर्थः तात्पर्य्यतो व्याख्येयः। तत्र क्षयस्त्ववयवापचयः, न च ध्वंस एव। स्थानं समत्वेनावस्थानम। वृद्धिरवयवोपचयः। स च द्विधा स्वस्थानस्थो नान्यो दूषक एव, यस्तु चय इत्युच्यते। द्वितीयस्तु स्वस्थानात् प्रसारी दूष्यदूषको विशिष्टव्याधिजननोन्मुखो यस्तु प्रकोप इत्युच्यते। क्षयलक्षणान्युक्तानि प्राक्, वृद्धिलक्षणान्येषाम् सुश्रुते—यथा "वृद्धिः पुनरेषां स्वयोनिवर्द्धनात्युपसेवनाद्भवति। तत्र वातवृद्धौ त्वक्पारुष्यं कार्श्यं कार्ष्ण्यं गात्रस्फुरणमुष्णकामिता निद्रानाशोऽल्पबलत्वं गाढ़वर्च्चस्त्वञ्च। पित्तवृद्धौ पीतावभासता सन्तापः शीतकामित्वमल्पनिद्रता मूर्च्छा बलहानिरिन्द्रियदौर्ब्बल्यं पीतविण्मूत्रनेत्रत्वञ्च। श्लेष्मवृद्धौ शौक्ल्यं शैत्यं स्थैर्य्यं गौरवमवसादस्तन्द्रा निद्रा सन्ध्यस्थिविश्लेषश्चेति" त्रिविधम्। गत्यन्तरमाह—ऊर्द्ध्वमित्यादि। अत्रापि गतिरित्यनुवर्त्तते। एषा गतिरूर्द्ध्वादिगमनरूपैवावस्था प्रायेण वृद्धावस्थायामेव ॥

गत्यन्तरमाह—त्रिविधेत्यादि। अत्र चकाराद्गतिरनुवर्त्तते। तेन कोष्ठे गतिरेका, शाखासु गतिरेका, मर्म्मास्थिसन्धिषु गतिरेका, कष्टसाध्यत्व-

चक्रपाणिः—सङ्कोचः पूतिभावः ॥ ५८ ॥

चक्रपाणिः—सम्प्रति दोषाणां गतिं विवृणोति—क्षय इत्यादि। स्थानं स्वमानावस्थानं, गतिः

* सङ्कोथ इति वा पाठः।

**चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमम्।**
**भवन्त्येकैकशः षट्सु कालेष्वभ्रागमादिषु ॥ ६० ॥**

ख्यापनायोक्ता। एताश्च तिस्रो गतयः तिस्रैषणीये त्रिविधरोगमार्गव्याख्याने विस्तरेण व्याख्याताः। गतिमुपसंहरति इत्युक्तेत्यादि। विधिभेदेनेति—विधिस्तु प्रकारः। अन्वयवान् प्रकारः, निरन्वयो भेद इति। तेनाभिन्नजातीयानामेव कस्यचिद्धर्म्मान्तरस्य योगः प्रकारः समाने भावे वर्त्तते। संख्यावन्मात्रे तु भेद इति। विधिभेदेन क्षयादेरकप्रकारेण ऊर्द्ध्वादेरकप्रकारेण कोष्ठादेरकप्रकारेण विधेरपि भेदेन त्रिविधा गतिरित्युक्ता ॥ ५९ ॥

<u>गङ्गाधरः</u>—क्षयादिप्रकाराणां चयत्वादिप्रकारत्वाभावात् पुनर्गतिप्रकारं पृथगाह—चयेत्यादि। चयेति प्रचयः प्राधान्येन चयः। प्रकोपश्च प्राधान्येन कोपः। प्रशमोऽपि प्रकर्षेण शम इति बोध्यम्। अभ्रागमो वर्षाः। तदादिषु षट्सु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृट्सु कालेष्वृतुषु। पित्तादीनामिति पित्तकफवातानामेकैकशो अयौगपद्येन पृथक् पृथगित्यर्थः। यथाक्रमं प्रचयप्रकोपप्रशमा भवन्ति।

तेन प्राग् दक्षिणायनादेको मास आषाढः परश्चैको मासः श्रावणः; तौ प्रावृट्। ततो वर्षासु भाद्राश्विनयोः पित्तं प्रचीयते। शरदि कार्त्तिकाग्रहायणयोः प्रकुप्यति। ततः प्रागुत्तरायणादेको मासः पौषः परश्चैको मासो माघ इति हेमन्ते पौषमाघयोः प्रशाम्यति। श्लेष्मा तु पौषमाघयोर्हेमन्ते प्रचीयते। फाल्गुनचैत्रयोर्वसन्ते प्रकुप्यति। वैशाखज्यैष्ठयोर्ग्रीष्मे प्रशाम्यति। वातः पुनस्तत्र वैशाखज्यैष्ठात्मके ग्रीष्मे प्रचीयते। आषाढश्रावणात्मिकायां प्रावृषि प्रकुप्यति। भाद्राश्विनयोर्वर्षासु प्रशाम्यति। अभ्रागमादिष्वित्यत्रादिशब्देन तद्गुणसंविज्ञानबहुव्रीहिणा पूर्व्वपूर्व्वस्य प्रशमकालमादायैवोत्तरोत्तरस्य प्रचयादौ कालत्रयं विवक्षितमाचार्य्येण। तेनोक्ता व्याख्या न व्याहन्यते। सुश्रुते तु ऋतुचर्य्याध्याये सूत्रस्थाने "इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षड़ृतवो

प्रकारोऽवस्था वा। चय इत्यत्र प्रशब्दोऽनुसन्निर्दिष्टः, तेन प्रकृष्टचयः, एवं प्रशमोऽपि; एतेन वर्षादिषु पित्तादीनां प्रकृष्टचया भवन्तीति दर्श्यते, इतरदोषस्यापि च स्तोकमात्रेण चयो यथासम्भवं सूच्यते; तेन शरद्यनुबलत्वेन कफप्रकोपो भवतीत्यादि गृहीतं स्यात् ॥ ५९ ॥

<u>चक्रपाणिः</u>—यथाक्रममिति वर्षाशरद्धेमन्तग्रीष्मप्रावृट्क्रमेण, किंवा यथाक्रममिति यथायोग्यतया। पित्तादीनामिति पित्तकफवातानाम्, एकैकश इति अयौगपद्येन, एतच्च प्राधान्येनैव

भवन्ति दोषोपचयप्रकोपप्रशमनिमित्तम्। ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः। तद्यथा भाद्रपदाश्विनौ वर्षाः। कार्त्तिकमार्गशीर्षौ शरत्। पौषमाघौ हेमन्तः। फाल्गुनचैत्रौ वसन्तः। वैशाखज्यैष्ठौ ग्रीष्मः। आषाढश्रावणौ प्रावृट्" इत्यादि। तस्याशीतीयव्याख्याने सर्व्वं लिखितमिति। षट्स्वृतुष्विति नोक्त्वा षट्सु कालेष्वभ्यागमनिरूपणोक्त्या संवत्सर इव षड़्तुकोऽहोरात्रोऽपि शीतोष्णवर्षलक्षणः पूर्व्वरात्राद्यात्मकवर्षादिषड़्तुलिङ्गकः पित्तकफवातानां प्रचयप्रकोपप्रशमहेतुः ख्यापितः। तद्यथा—रात्रौ प्रथमदशदण्डात्मकवर्षासु पित्तमुपचीयते। मध्यरात्रे शरदि प्रकुप्यति। रात्रिशेषे हेमन्ते प्रशाम्यति। श्लेष्मा तु तत्र हेमन्ते रात्रौ शेषदण्डदशकरूपायां वर्षर्त्तुलक्षणायां प्रचीयते। पूर्व्वाह्णे प्रकुप्यति वसन्तलक्षणे। मध्याह्ने ग्रीष्मलक्षणे प्रशाम्यति। सुश्रुतेऽप्युक्त-मृतुचर्य्याध्याये "तत्र पूर्व्वाह्णे वसन्तस्य लिङ्गम् मध्याह्ने ग्रीष्मस्य अपराह्णे प्रावृषः प्रदोषे वार्षिकम् शारदमर्द्धरात्रे प्रत्यूषसि हेमन्तमुपलक्षयेत् एव-महोरात्रमपि संवत्सरमिव शीतोष्णवर्षलक्षणं दोषचयप्रकोपप्रशमैर्जानीया-दिति।" प्रचयादिषु प्रशब्दोपादानेन प्राधान्येन चयप्रकोपप्रशमाः ख्यापिताः। तेन वर्षासु कफस्य किञ्चिच्चयः, शरदि किञ्चित्प्रकोपः, शान्तिर्हेमन्ते। हेमन्ते च पित्तस्य किञ्चिच्चयः, वसन्ते च किञ्चित्कोपः, शान्तिर्ग्रीष्मादौ। ग्रीष्मो-त्तरे च पित्तस्य कफस्य किञ्चिच्चयः, प्रावृषि च किञ्चित्कोपः, वर्षादौ शान्तिः। न वर्षान्ते। तत्र पुनश्चयः स्यादिति बोध्यम्। वस्तुतस्तु पित्तादीना-मिति पूर्व्वं पित्तस्य ग्रहणं विसर्गाभिप्रायेण। चयस्य च प्राथमिकत्वेन तदनु-रोधाच्च चयस्य तु कफस्याप्यादानप्रथमर्त्तौ च सम्भवात्। यथाक्रममिति चयादि-क्रमेण पित्तादीनां वर्षादिषु षट्सु एकैकशः प्रत्येक एवर्त्तौ यथाक्रमं भवन्तीत्यर्थः। एषा कालकृता मिथ्यायोगातियोगायोगव्यतिरिक्तसमयोगयुक्ता प्राकृता काल-कृता गतिश्चयाद्या पुनश्चोच्यते। तेन उक्तञ्चान्यत्र—"चयप्रकोपप्रशमा वायो-र्ग्रीष्मादिषु त्रिषु। वर्षादिषु च पित्तस्य कफस्य शिशिरादिषु॥" कफस्य चयो वातस्य प्रकोपः। भाद्राश्विनादिद्विद्विमासरूपवर्षादिषु त्रिषु क्रमेण यथा पित्तस्य चयप्रकोपप्रशमाः, कफस्य चयप्रकोपप्रशमाः, वातस्य चयप्रकोपप्रशमा भवन्ति,

ज्ञेयम्, तेन प्रावृषि श्लेष्मपित्तकोपेनाप्रधानेन न व्यभिचारः; यदुक्तम्—"वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः" इत्यत्र हि पवनादय इति पवनप्रधानाः, एवं वसन्ते वातपित्तप्रकोपे व्याख्येयम्। अत्र च षट्सु ऋतुषु पित्तश्लेष्मवातानां प्रबलचयादयः विभज्यमानत्वेन पित्तचयकाले वातस्य कोपः, शरदि पित्तस्य प्रकोपकाले वातप्रशमः, हेमन्ते पित्तप्रशमः, कफस्य चयः, वसन्ते

गतिः कालकृता चैषा चयाद्या पुनरुच्यते।
गतिश्च द्विविधा दृष्टा प्राकृती वैकृती तथा॥ ॥

तथा पुनः फाल्गुनचत्रादि-द्विद्विमासात्मकवसन्तादिषु त्रिषु क्रमेण पित्तस्य चय-प्रकोपप्रशमाः, कफस्य चयप्रकोपप्रशमाः, वातस्य चयप्रकोपप्रशमा भवन्ति। तथा सति षट्सु वर्षादिषु पित्तस्य प्रथमा द्वितीयाश्चयप्रकोपप्रशमाः। वर्षासु पित्तस्य चयः शरदि प्रकोपो हेमन्ते प्रशमः। पुनर्वसन्ते चयो ग्रीष्मे प्रकोप प्रावृषि प्रशमः। एवं कफस्य हेमन्ते चयो वसन्ते प्रकोपो ग्रीष्मे प्रशमः। पुनः प्रावृषि चयो वर्षासु प्रकोपः शरदि प्रशमः। तथा वायोर्ग्रीष्मे चयः प्रावृषि प्रकोपो वर्षासु प्रशमः। पुनः शरदि चयो हेमन्ते प्रकोपो वसन्ते प्रशमः। इत्येकैकशः षट्स्वृतुषु द्विधा गतिः प्राकृती वैकृती च दृष्टा पूर्व्वाश्चयप्रकोपप्रशमाः प्राकृती गतिः। सेषा वैकृती गतिरिति। एवमहोरात्रेऽपि षट्सु भागेषु द्विविधा गतिः प्राकृती वैकृती च द्रष्टव्या। एवन्तु प्रकृतिस्थः कालोऽपि हेतुर्निजानां व्याधीनां न तु मानसानां कालादीनामित्यतस्त्रिविधहेतुषु नोक्तः॥ ६०॥

गङ्गाधरः—ननु प्रावृषि पित्तस्य शरदि कफस्य वसन्ते वातस्य प्रशमहेतु-स्तर्हि "वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम्। कुर्य्यात् पित्तश्च शरदि तस्य चानुबलः कफः॥ कफो वसन्ते तमपि वातपित्तं भवेदनु॥" इति वचनद्वयं कथं संगच्छते इत्याकाङ्क्षायामाह—गतिः कालेत्यादि। एषा उक्त-रूपा चयप्रकोपप्रशमात्मिका गतिः कालकृता ऋतुस्वभावादेव भवति। न तु निदानान्तरमपेक्षते। निदानविशेषात् पुनरतो विपर्य्ययेणापि भवतीति कालकृता चेति चकारेण ज्ञापितम्। तथा सति कार्त्तिकाग्रहायणात्मिकायां शरदि कालस्वभावात् प्रकुपिते पित्ते सति काले स्वभावात् शान्तोऽपि कफः किञ्चित्तुषारपतनान्निःशेषेण न प्रशाम्यति, अनुबन्धरूपेणावतिष्ठते वायु-श्चयारम्भान्मध्ये। एवं वसन्ते च कालस्वभावात् हेमन्तसञ्चितः प्रकोपमापन्नः कफः प्रबलः, वायुस्तत्र शान्तोऽप्यादानस्वभावेन सूर्य्यसन्तापरौक्ष्यात् निःशेषेण न प्रशाम्यति। सशेषत्वमापन्नोऽनुबन्धरूपेण कुप्यति। तत्र चयारम्भेण मध्यमं

कफप्रकोप एव परं, तथा कफप्रशमके ग्रीष्मे वातचय इति च स्यात्। वातं परित्यज्य पित्तादीना-मित्यभिधानं विसर्गस्याभिप्रेतत्वेनाग्रे वक्तव्यत्वात् कृतम्, विसर्गे च पित्तचय एव स्यादिति कृत्वा॥ ६०॥

चक्रपाणिः—गतिमेवान्तरमाह—गतिश्चेत्यादि।—अत्र पित्तमादौ कृतं शरीरस्थितिहेतुत्वेन-

पित्तादेवोष्मणः पक्तिर्नराणामुपजायते ।
पित्तञ्चैव प्रकुपितं विकारान् कुरुते बहून् ॥ ६२ ॥
प्राकृतस्तु बलं श्लेष्मा वैकृतो मल उच्यते ।
स चैवौजः स्मृतं काये स च पाप्मोपदिश्यते ॥ ६३ ॥

भवति । एवं प्रावृषि च ग्रीष्मसञ्चितो वायुः कालस्वभावात् भूवाष्पादितः प्रकोपमापन्नः प्रबलस्तत्र च पित्तमपि शान्तिमापद्यमानं भूवाष्पमेघनिष्यन्दनादिभ्यः कालस्वभावान्निःशेषेण न प्रशाम्यति. सशेषमापन्नमनुबन्धरूपेण कुप्यति । कफश्च तत्र चयमापद्यमानः कालस्वभावात् भूवाष्पादितो मध्यमं कुप्यति इति । कालकृतापि निदानविशेषकृता कालकृतैव गतिर्बोध्या ।

अस्यास्तु चयाद्यनेकगतेर्विधिभेदमाह—चयाद्या पुनरित्यादि । उक्तरूपा चयाद्या तु पित्तादीनां गतिः प्राकृती वैकृती चेति द्विधोच्यते । पित्तस्य वर्षादिषु त्रिषु चयाद्या गतिः प्राकृती वसन्तादिषु त्रिषु वैकृती । कफस्य हेमन्तादिषु त्रिषु चयाद्या गतिः प्राकृती प्रावृडादिषु त्रिषु वैकृती । वायोः पुनर्ग्रीष्मादिषु त्रिषु चयाद्या गतिः प्राकृती शरदादिषु त्रिषु वैकृतीति । उक्तञ्च—"वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् । वैकृतोऽन्यः स दुःसाध्यः प्राकृतश्चानिलोद्भवः ॥" इति । तथेत्यादि । तथा पित्तादीनां चयाद्या प्राकृती वैकृती द्विधा गतिर्दृष्टा । प्राकृती स्वास्थ्यावस्था वैकृतीत्वातुर्य्यावस्था इति । द्विधा पित्तादीनां गतिरित्यर्थः । तदद्वयमुदाहरति आहारेत्यादि । अत्रापि पित्तस्यादावुपादानमग्नेः शरीररक्षणहेतुत्वेन तदात्मकत्वात् । पक्तिः पाको भुक्तानामिति शेषः । पित्तं पाचकाख्यमपि रूपं वातः समानाख्यः पक्तृपुरुषवत् । कफः क्लेदकाख्यो जलवत् एभिस्त्रिभिः पाकः सम्पद्यते यथा लोके पुरुषाग्निजलैस्त्रिभिरिति । पित्तवातकफानां स्वास्थ्यावस्थारूपा प्राकृती वैकृती गतिर्दाहादिभिः । पित्तञ्चैवेत्यादि बहूनिति ओषचोषादीन ॥ ६१।६२ ॥

गङ्गाधरः—कफस्योदाहरणमाह प्राकृतस्त्वित्यादि । प्राकृतः प्रकृतिगतिमाश्रितः । बलमोजोरूपस्य श्लेष्मणः कर्म्म बलमिति बलहेतुः । मल इति

कर्त्तृत्वेन, पक्तिः पाकः, बलमिति बलहेतुत्वेन, मल इति शरीरमलिनीकरणात्, ओज इति सारभूतं, यद्वा द्वितीयश्लेष्मिकौजोहेतुत्वेनौजः, वक्ष्यति हि शारीरे—"तावच्चैव श्लैष्मिकौ-

सर्व्वा हि चेष्टा वातेन स प्राणः प्राणिनां स्मृतः।
तेनैव रोगा जायन्ते तेन चैवोपरुध्यते ॥ ६४ ॥
नित्यं सन्निहितामित्रं परीक्ष्यात्मानमात्मवान्।
नित्यं युक्तः परिचरेदिच्छन्नायुरनित्वरम् ॥ ६५ ॥

तत्र श्लोकौ।

शिरोरोगाः सहृद्रोगा रोगा मानविकल्पजाः।
क्षयाश्च पिड़काश्चोक्ता दोषाणां गतिरेव च ॥

मालिन्यकारः मन्दाग्न्यादिविकारहेतुरुच्यते। नन्वोजःकर्म्म बलं कथं प्राकृतश्लेष्मा कुरुते इति? अत आह—स चेति। बलकृदेव यः प्राकृतः श्लेष्मा स एव काये ओजः ख्यातमिति। वक्ष्यते च शारीरे "तावदेव श्लेष्मणश्चौजसः प्रमाणम्।" इति। सुश्रुतेऽप्युक्तं "सौम्यमोजः सर्व्वधातूनां तेजः।" इत्युपचारात् स वैकृतः श्लेष्मा पाप्मा रोगः ॥ ६३ ॥

गङ्गाधरः—सर्व्वा हीत्यादि। वातेनेति प्रकरणात् प्राकृतेन। सर्व्वा चेष्टा इति प्राकृतक्रिया गमनादयः। तेनेति वैकृतेन उपरुध्यते मार्य्यते हन्यते इत्यर्थः ॥ ६४ ॥

गङ्गाधरः—नन्वेवं तदा किं कर्त्तव्यमिति? अत आह—नित्यमित्यादि। सन्निहितामित्रं स्वशरीरस्थत्वेनातिनिकटस्थान्यमित्राणि शत्रवो वैकृतपित्तादयो यस्य तं तथाभूतमात्मानमात्मवान् प्रशस्तमनाः परीक्ष्य युक्त आत्महिताहितचेताः सन् नित्यगमनशीलमायुरनित्वरमगमनशीलतया नित्यमिच्छन् परिचरेदिति ॥ ६५ ॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—तत्रेत्यादि। शिरोरोगा इत्यादिश्लोकद्वयं स्पष्टम् ॥ ६६ ॥

जसश्च प्रमाणम्" इति। दुःखहेतुत्वात् पाप्मा। सर्व्वा हि चेष्टा इत्यविकृतगमनादयः, उपरुध्यते हिंस्यते ॥ ६१—६४ ॥

कियन्तःशिरसीयेऽस्मिन्नध्याये तत्त्वदर्शिना ।
ज्ञानार्थं भिषजाञ्चैव प्रजानाञ्च हितैषिणा ॥ ६६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
कियन्तःशिरसीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥

अध्यायं समापयति—अग्नीत्यादि । पूर्ववत् व्याख्यातव्यम् ।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ
सूत्रस्थाने कियन्तःशिरसीयसप्तदशाध्यायजल्पाख्या
सप्तदशी शाखा ॥ १७ ॥

चक्रपाणिः—आत्मवानिति प्रशंसायां मतुप्प्रत्ययः; युक्त इत्युपयुक्तः; अनित्वरम् अगत्वरम् ॥ ६५।६६ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-
व्याख्यायां कियन्तःशिरसीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः।

अथातस्त्रिशोथीयमध्यायं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः॥ १॥

त्रयः शोथा भवन्ति वातपित्तश्लेष्मनिमित्ताः। ते पुनर्द्विविधा निजागन्तुभेदेन। तत्रागन्तवश्छेदनभेदनक्षणनभञ्जनपिच्छनोत्पेषणवेष्टनप्रहारवधबन्धनव्यधनपीड़नादिभिर्वा

गङ्गाधरः—अथ शिरोरोगहृद्रोगयोः सम्भेदयोरुक्तत्वे दोषमानविकल्पजविकाराणां विशिष्टव्याधिषु ज्वरादिषु हेतूनां क्षयाणां गतीनाञ्च विस्तरवचनेऽपि च विशिष्टव्याधिविशेषाणामुत्सेधलक्षणानां पिड़कानां मध्ये या अन्याः सामान्यत उक्तास्तासां विस्तरेण वक्तुं त्रिशोथीयमध्यायमारभते—अथात इत्यादि। अध्यायादौ त्रयः शोथा इति वाक्यस्यार्थे त्रिशोथमधिकृत्य कृतोऽध्याय इति त्रिशोथीयस्तं तथा सर्व्वं पूर्व्वाध्यायवद्व्याख्येयम्॥ १॥

गङ्गाधरः— यद्यप्यत ऊर्द्ध्वं विधिभेदो वक्ष्यते तथाप्यादौ चिकित्सार्थं प्राधान्याच्च प्रतिवातादिजत्वेन त्रिविधानाह—त्रय इत्यादि। ननु वातपित्तश्लेष्मनिमित्तास्तु खलु निजा एव तिस्रैषणीये ह्युक्तम्। तत्र निजः शरीरदोषसमुत्थः। आगन्तुः भूतविषादुत्थः। कथमत्र ते वातपित्तकफनिमित्तास्त्रयः शोथाः पुनर्द्विधा भवन्ति निजागन्तुकभेदेनेति चेत्? न। शोथा वातादिजत्वेन यदा ज्ञातव्यास्तदा त्रय एव. अन्यथा तु निजागन्तुभेदेनेति।

ननु वातादिजा एव शोथाः पुनर्द्विविधाः ते इति पदेन सामान्यतः शोथा इत्यस्मादनुवृत्तेर्द्विधा प्रतिलोमतन्त्रयुक्त्यादावागन्तुशोथस्य निदानलिङ्गचिकित्सासूत्राण्याह—तत्रागन्तवश्छेदनेत्यादि। छेदनं द्विधाकरणम्। भेदनमाशयावदारणम्। क्षणनं चूर्णनम्। भञ्जनं जर्ज्जरीकरणम्। पिच्छनमत्यर्थपीड़नम्।

चक्रपाणिः—पूर्व्वाध्याये पिडका उक्ताः, ताश्च शोथरूपाः, तेन शोथाधिकारात् त्रिशोथीयोऽभिधीयते। वक्ष्यमाणद्विविधादिभेदे विद्यमानेऽपि वातादिकृतत्रित्वाभिधानमग्रे वातादिकृतस्यैव प्राधान्यख्यापनार्थम्। भेदनमाशयविदारणं, क्षणनमस्थिचूर्णनम्, भञ्जनं जर्ज्जरीकरणं, पिच्छन-

भल्लातकपुष्पफलरसात्मगुप्ताशूकक्रिमिशूकाऽहितपत्रलता-गुल्म-संस्पर्शनैर्वा स्वेदनपरिसर्पणावमूत्रणैर्वा विषिणां सविषाविष-प्राणिदंष्ट्रादन्तविषाणनखनिपातनैर्वा सागरविषवातहिमदहन-संस्पर्शनैर्वा शोथाः समुपजायन्ते ॥ २ ॥

ते पुनर्यथास्वं हेतुजैर्व्यञ्जनैरादावुपलभ्यन्ते निज-व्यञ्जनैकदेशविपरीतैः, व्रण-बन्ध-मन्त्रागद-प्रलेप-प्रतापनिर्व्वा-पणादिभिश्चोपक्रमैरुपक्रम्यमाणाः प्रशान्तिमापद्यन्ते ॥३।४॥

उत्पेषणं शिलयेवोत्पेषणवत्। वेष्टनं सर्पादिवद्ग्रन्थिबन्धनम्। व्यधनं विद्धवत् कण्टकादिना। आत्मगुप्तायाः शूकः। क्रिमीणां शूकवतां शूकः क्रिमिशूकः। अहितपत्रादिः वृश्चिकाल्यादीनां पत्रादिः। स्वेदनेत्यादिना विषिणामित्यनेनान्वयः। ते पुनरिति च्छेदनाद्यागन्तुजाः शोथा आदौ यथास्वं हेतुजैः खड्गादि-हेतुभवैर्व्यञ्जनैर्लक्षणैर्निजव्यञ्जनैकदेशविपरीतैः शारीरदोषजलक्षणेभ्यः। आग-न्तूनामेकदेशेन इपल्लक्षणेन निजो रोगः पूर्व्वमेव वातादिभिरन्वीयते। आगन्तुर्हि व्यथापूर्व्वो जायते, पश्चात् निजैर्दोषैरनुबध्यते इति। किञ्चिद्विपरीतैरादौ प्रथममुपलभ्यन्तेऽर्थात् उत्तरकालं वातादिभिरनुबध्यन्ते इत्यर्थः। उक्तं हि—"आगन्तुरन्वेति निजं विकारं निजस्तथागन्तुमतिप्रवृद्धः" इति। आगन्तुशोथस्य हेतुलक्षणे उक्त्वा क्रियोपक्रमसूत्रमाह—व्रणेत्यादि। व्रणे बन्धो व्रणबन्धः। बन्धमन्त्रादयो यथायोग्यं विधेयाः। आदिना शोधनरोपणादीनां ग्रहणम्। चकारस्तुकारार्थः न तु समुच्चये। पूर्व्वमुपक्रमाभावात् ॥ २—४ ॥

अत्यर्थपीडनं, उत्पेषणं शिलोत्पेषणमिव, वेष्टनमग्रन्थिबन्धनं सर्पादिभिः, शूकवतां क्रिमीणां शूकः शूकक्रिमिशूकः, स्वेदनादिभिर्विषिणामिति योज्यम् ॥ १।२ ॥

चक्रपाणिः—आदावुपलभ्यन्त इति वचनादुत्तरकालमागन्तोरपि निजतुल्यतां ब्रूते, यदुक्तम्—'आगन्तुरन्वेति निजं विकारम्' इति। निजव्यञ्जनैकदेशविपरीतैरिति निजलक्षणेभ्य आगन्तूनामेकदेशो विपरीतो भवति, स च वातादिजन्यव्यथावर्णविकारत्वाज् ज्ञेयः; किंवा, आगन्तुर्व्यथापूर्व्वो भवति पश्चाद् वातादिभिरनुबध्यते, निजस्तु पूर्वं वातादिलक्षणैर्युज्यते, पश्चाद् वेदनावान् स्यादित्येकदेशविपरीतत्वम्। व्रणेऽरिष्टबन्धो बन्धः, बन्धादयश्च यथायोग्यतया योक्तव्याः ॥ ३।४ ॥

निजाः पुनः स्नेहस्वेदवमनविरेचनास्थापनानुवासनशिरोविरेचनानामयथावत्प्रयोगान्मिथ्यासंसर्जनाद्वा च्छर्द्यलसकविसूचिका-श्वास-कासातीसारशोष-पाण्डुरोगोदर-*-प्रदरभगन्दरार्शोविकारातिकर्षणाद्वा कुष्ठकण्डूपिड़कादिभिर्वा च्छर्दिक्षवथूद्गार-शुक्र-वात-मूत्र-पुरीषवेगविधारणैर्वा कर्म्मरोगोपवासातिकर्षितस्य वा सहसातिगुर्व्वम्ललवणपिष्टान्नफलशाकरागदधिहरितक-मद्य-मन्दकविरूढ़नवशूकशमीधान्यानूपौदकपिशितोपयोगात् मृत्पङ्कलोष्ट्रभक्षणाल्लवणातिभक्षणाद्गर्भसंपीड़नादामगर्भप्रपतनात् प्रजातानाञ्च मिथ्योपचारादुदीर्णदोषत्वाच्च शोथाः प्रादुर्भवन्तीत्युक्तः सामान्यो हेतुः ॥ ५ ॥

<u>गङ्गाधरः</u>—निजशोथानां हेतुलिङ्गक्रियासूत्राण्याह—निजाः पुनरित्यादि। अयथावदित्ययोगात्। मिथ्यासंसर्जनादिति स्वेदादीनां यस्य यत् पथ्यमुक्तं तद्विपरीतपथ्याहारात्। छर्द्यादिरोगातिकर्षणं शोथहेतुर्भवति। आदिनाऽपथ्यादेर्ग्रहणम्। छर्दिप्रभृतीनां वेगविधारणानि शोथहेतवः। कर्म्मेति पञ्चकर्म्मणां रोगाणामुपवासस्य चातियोगैः कर्षणञ्च शोथहेतुः। अत्रानुक्तरोगातिकर्षणोपसंहारार्थं पुनर्वचनम्। सहसा तु अतिगुर्व्वम्लादिभक्षणं शोथहेतुः। अत्र रागो रागषाड़वः। मन्दकं मन्दजातम्। विरूढ़मङ्कुरितम्। नवं नूतनञ्च शूकधान्यम् तथा शमीधान्यञ्च। मृदादिभक्षणं शोथहेतुः। प्रजातानाञ्च मिथ्योपचारादिति नवप्रसूतानां पथ्यविपरीतसेवनात्। उदीर्णदोषत्वाद्वातादीनां स्वकारणकुपितत्वात् किंवा स्वस्वकारणं विनैतेभ्यः कारणेभ्य उदीर्णत्वात् तेन। एते हेतवो दोषं कोपयन्तः शोथं जनयन्तीति दोषव्याध्युभयस्यैव हेतुत्वमेषामिति बोध्यम् ॥ ५ ॥

<u>चक्रपाणिः</u>—छर्द्यादयः पुराणा एव शोथहेतवः। कर्म्मोपवासातिकर्षितस्य तु सहसातिगुर्व्वादिसेवनं शोथहेतुः। कर्म्मेति पञ्चकर्म्म। विरूढ़नवशूकशमीधान्यादि [illegible], प्रजातानामचिरप्रसूतानाम् ॥ ५ ॥

---

* पाण्डुरोगज्वरोदर इति चक्रपाणिधृतः पाठः।

अयन्त्वत्र विशेषः। शीतरूक्षलघुविशदश्रमो*पवासातिकर्षणक्षपणादिभिर्वायुः कुपितस्त्वङ्मांसशोणितादीन्यभिभूय शोथं जनयति। स क्षिप्रोत्थानप्रशमो भवति, तथा श्यावारुणवर्णः प्रकृतिवर्णो वा। चलनः स्पन्दनः खरपरुषभिन्नत्वग्रोमा। छिद्यत इव †भिद्यत इव सूचीभिरिव तुद्यते। पिपीलिकाभिरिव संसृप्यते। सर्षपकल्कावलिप्त इव चिमिचिमायते सङ्कुच्यते आयम्यते इति वातशोथः॥ ६॥

उष्णतीक्ष्णकटुक्षारलवणाम्लाजीर्णभोजनैरग्न्यातपप्रतापैश्च पित्तं प्रकुपितं त्वङ्मांसशोणितादीन्यभिभूय शोथं जनयति। स क्षिप्रोत्थानप्रशमो भवति। कृष्णनीलपीतताम्रावभास उष्णो मृदुः कपिलताम्रलोमा। स उष्यते दूयते धूप्यते उष्मायते स्विद्यते क्लिद्यते। न च स्पर्शमुष्णं सुष्यते इति पित्तशोथः॥ ७॥

गङ्गाधरः—वातादिविशेषहेतुमाह अयमित्यादि। शीतेत्यादि। शीतादीनि द्रव्याणि। श्रमः। उपवासातिकर्षणम्। क्षपणं वमनादिभिर्दोषक्षपणम्। आदिना व्यायामादीनां ग्रहणम्। तस्य रूपमाह—स इत्यादि। प्रकृतिवर्णो गात्रसवर्णः। चलनः वृद्धिह्रासाभ्यां संक्रमणः। स्पन्दनः स्फुरणः। सङ्कुच्यते इत्याकुञ्चनवान्। आयम्यते इत्यायतो भवति॥ ६॥

गङ्गाधरः—पित्तशोथस्य सहेतुलिङ्गमाह उष्णेत्यादि। कपिलेति पिङ्गलवर्णः। उष्यत इति पार्श्वस्थवह्निनेव दह्यते। दूयते तप्यते। धूप्यते धूममिवोद्गमति। उष्मायते बहिरुष्णो भवत्यन्यैरप्युष्णतयोपलभ्यते। स्विद्यते घर्म्मवान् भवति। क्लिद्यते पाकात् संक्लेदो भवति। न चोष्णं स्पर्शं सुष्यते न सहते॥ ७॥

चक्रपाणिः—क्षपणं वमनादिभिः; प्रकृतिवर्णो देहसमानवर्णः, चलः संक्रमवान्, स्पन्दनः कम्पनः। उष्यते पार्श्वस्थेनेव वह्निना दह्यते, धूप्यते धूममिवोद्गमति, उष्मायते बहिः परैः

* श्रम इति चक्रः।  † पीड्यते इवेत्यधिकः पाठश्चक्रपाणिधृतः।

गुरुमधुरशीतस्निग्धोपयोगैरतिस्वप्नाव्यायामादिभिश्च श्लेष्मा प्रकुपितस्त्वङ्मांसशोणितादीन्यभिभूय शोथं जनयति। स कृच्छ्रोत्थानप्रशमो भवति। पाण्डुश्वेतावभासो गुरुः स्निग्धः श्लक्ष्णः स्थिरः स्त्यानः शुक्लाग्ररोमा स्पर्शोष्णसहश्चेति श्लेष्मशोथः ॥ ८ ॥

यथास्वकारणाकृतिसंसर्गाद् द्विदोषजास्त्रयः शोथा भवन्ति। यथास्वकारणाकृतिसन्निपातात् सान्निपातिक एक एवं सप्तविधो भेदः। प्रकृतिभिस्ताभिर्भिद्यमानो द्विविधस्त्रिविधश्चतुर्व्विधः सप्तविधोऽष्टविधः शोथ उपलभ्यते। स पुनश्चैक एवोत्सेधसामान्यात् ॥ ९ ॥

गङ्गाधरः—कफशोथस्य सहेतुलिङ्गमाह—गुर्व्वित्यादि। कृच्छ्रोत्थानप्रशम इति चिरेणास्योत्पत्तिः प्रशमश्च स्यात् ॥ ८ ॥

गङ्गाधरः—शोथस्य वातादिजत्वेन त्रिविधत्वेऽपि संसर्गतोऽपि भेदं दर्शयति—यथास्वेत्यादि। स्पष्टम्। ननु तर्हि त्रिविधत्वाद्यनियमो भवतीत्युक्तसंख्याधिक्यमपि भवतीति ? अत आह—प्रकृतिभिरित्यादि। प्रकृतिभिरित्युपादानकारणैस्ताभिस्ताभिरिति दोषागन्तुरूपाभिः पृथग्दोषरूपाभिः संसृष्टदोषरूपाभिः सन्निपतितदोषरूपाभिः, द्विविध इति प्रागेव स्वनिदानकुपितदोषहेतुकत्वेन प्रागेव दोषसम्बन्धाभावेन च्छेदनादिहेतुकत्वेन भेदाद् द्विविधः शोथः। पुनः स एव द्विविधः शोथ उत्तरकालं यथास्वदोषानुबन्धेन प्रागेव च दोषसम्बन्धेन त्रिदोषाविनाभावात् वातजत्वादिभेदेन त्रिविधः। स एव त्रिविधः शोथः पृथग्दोषसंसृष्टदोषभेदेन चतुर्व्विधः। संसर्गो हि द्वाभ्यां त्रिभिश्च भवति। स च पुनः पृथग्दोषद्वन्द्वदोषसन्निपतितदोषजत्वभेदेन सप्तविधश्च भवति। दोषाणां पृथग्द्वन्द्वसन्निपतितत्वे तु मानविकल्पेन द्विषष्टिविधत्वान्तर्भाव इति बोध्यम्। उत्सेधसामान्यादिति उच्छ्रितत्वसामान्यात् ॥ ९ ॥

अप्युष्णत्वेनोपलभ्यते, स्विद्यति स्वेदनवान् स्यात्, न सुषूयते न सहते, स्पर्शनञ्च न सहते, उष्णञ्च न सहते। स कृच्छ्रोत्थानप्रशम इति चिरोत्थानप्रशमः, प्रकृतिभिरिति कारणैः, उत्सेधः उन्नतत्वम् ॥ ८—९ ॥

भवन्ति चात्र ।

दूयन्ते* यस्य गात्राणि स्वपन्तीव रुजन्ति च ।
पीड़ितान्युन्नमन्त्याशु वातशोथं तमादिशेत् ॥
यश्चाप्यरुणवर्णाभः शोथो नक्तं प्रणश्यति ।
स्नेहोष्णमर्द्दनाभ्याञ्च प्रणश्येत् स च वातिकः ॥ १० ॥
यः पिपासाज्वरार्त्तस्य दूयतेऽथ विदह्यते ।
स्विद्यते क्लिद्यते गन्धी स पैत्तः श्वयथुः स्मृतः ॥
यः पीतमुखनेत्रत्वक् पूर्व्वं मध्यात् प्रसूयते ।
तनुत्वक् चातिसारी च पित्तशोथः स उच्यते ॥ ११ ॥
यः शीतलः सक्तगतिः कण्डुमान् पाण्डुरेव च ।
यः पीड़ितो नोन्नमति श्वयथुः स कफात्मकः ॥
यस्य शस्त्रकुशच्छेदाच्छोणितं न प्रवर्त्तते ।
कृच्छ्रेण पिच्छां स्रवति स चापि कफसम्भवः ॥ १२ ॥

गङ्गाधरः—एषां लिङ्गान्युक्तवापि पुनः प्रायोभावीणि लिङ्गान्याह—भवन्तीत्यादि । दूयन्ते इत्यादिना वातशोथस्य लिङ्गानि । स्वपन्तीवेति निर्व्वेदनानि । रुजन्ति व्यथन्ते । तेन कदाचिद्वायोर्निश्चलत्वान्न व्यथन्ते, चलत्वात् तु कदाचिद्व्यथन्ते गात्राणि शोथप्रदेशे न त्वन्यत्र । एवं शोथप्रदेशे गात्राणि पीड़ितान्याशून्नमन्ति । नक्तं प्रणश्यतीति प्रशाम्यति ॥ १० ॥

गङ्गाधरः—यः पिपासेत्यादिना पित्तशोथस्य । दूयते इतीह विदाहादिना । वातिके तु वेदनादिना दूयन्त इति बोध्यम् । गन्धीति पाकात् क्लेदेन पूयगन्धवान् भवति । मध्यादिति पूर्व्वं मध्यशरीरमारभ्य प्रसूयते पित्तेन दोषेणेति शेषः । मध्यदेशप्रसवेन पित्तानुमानात् ॥ ११ ॥

गङ्गाधरः—यः शीतल इत्यादिना कफशोथस्य ॥ १२ ॥

चक्रपाणिः—दूयन्त इत्यादि पुनः श्लोकेन पुनर्लक्षणाभिधानं प्रायो भाविलक्षणदर्शनार्थम् । स्वपन्तीवेति निर्व्वेदनः, एतेन, वायोश्चलत्वेन क्षणाच्च रुक्, क्षणाच्च तदभाव इति ज्ञेयम् । मध्यादिति शरीरमध्यात् । सक्तगतिरविसारी, छिन्नादिति च्छेदात् ॥ १०—१२ ॥

* धूयन्ते इति वा पाठः ।

निदानाकृतिसंसर्गाच्छ्वयथुः स्याद् द्विदोषजः ।
सर्व्वाकृतिः सन्निपाताच्छोथो व्यामिश्रलक्षणः ॥ १३ ॥
यस्तु पादाभिनिर्व्वृत्तः शोथो गुर्व्वङ्गगो * भवेत् ।
जन्तोः स च सुकष्टः स्यात् प्रसूतः स्त्रीमुखाच्च यः ॥१४॥
यश्चापि गुह्यप्रभवः स्त्रिया वा पुरुषस्य वा ।
स च कष्टतमो ज्ञेयो यस्य च स्युरुपद्रवाः ॥ १५ ॥
छर्द्दिः श्वासोऽरुचिस्तृष्णा ज्वरोऽतीसार एव च ।
सप्तकोऽयं सदौर्व्वल्यः शोथोपद्रवसंग्रहः ॥ १६ ॥

गङ्गाधरः—निदानेत्यादिना द्वन्द्वजानां शोथानाम् । सर्व्वाकृतिरित्यादिना सान्निपातिकस्य ॥ १३ ॥

गङ्गाधरः—एषामसाध्यत्वादिज्ञानार्थमाह—यस्त्वित्यादि । पादाभिनिर्व्वृत्त इति पादमभि लक्ष्यीकृत्यादौ जातः । गुर्व्वङ्गगः सर्व्वाङ्गगः इत्यर्थः । पादादिक्रमेणादावधोदेहे जातमात्रं लघुदेहे जातत्वेऽपि शोथो न प्रतिकर्त्तुं शक्यते । स यदा गुरुमूर्द्ध देहं गच्छति तदा जेतुं न शक्यतेऽसाध्य इत्यर्थः—सुकष्ट इति पदेन ख्यापितः । प्रसूतः स्त्रीमुखाच्च य इति स्त्रिया विशेषणोक्तत्वादेप पुंसो जन्तोरसाध्यशोथोपदेशः । स्त्रिया मुखमादावारभ्य यो गुर्व्वङ्गगो भवेत् स स्त्रियाः सुकष्टोऽसाध्य इत्यर्थः । उक्तं हि—"अधोभागो गुरुः स्त्रीणामूर्द्धं पुंसां गुरुस्तथा ।" इति ॥ १४ ॥

गङ्गाधरः—स्त्रीपुंसयोरुभयोरसाध्यशोथलक्षणमाह—यश्चेत्यादि । गुह्यप्रभवः गुह्यात् प्रसूत इत्यर्थः । अत्रापि कष्टतमपदेनासाध्य उच्यते । उपद्रवयुक्तस्त्वेऽप्युभयस्य शोथस्यासाध्यत्वम् ॥ १५ ॥

गङ्गाधरः—उक्तानुपद्रवानाह—छर्द्दिरित्यादि । अथोत्सेधसामान्यादेकदेशिकानां शोथानां सम्प्राप्तिवचनेन स्वरूपमाह । दोषभेदे लक्षणञ्चात्र भिन्नाधिकाराद्ग्रन्थान्तरेण न वक्ष्यते यथास्वदोषलिङ्गैर्ज्ञातव्यत्वादिति ॥ १६ ॥

चक्रपाणिः—पादाभिनिर्व्वृत्तः गुरुपार्ष्णी लघावधोदेशे जातः सन् यदा न जीयते, तदा गुरुमूर्द्धदेशं गतः स च न पार्य्यते जेतुम्, यो हि लघौ प्रदेशे जेतुं न पार्य्यते गुरुप्रदेशागतो नितरामेव न पार्य्यते; एवम्, प्रसूतः स्त्रीमुखाच्च य इत्यपि ज्ञेयम्, वचनं हि—"अधोभागो गुरुः स्त्रीणामूर्द्धः पुंसां गुरुस्तथा" इति । उक्तानुपद्रवानाह—छर्द्दिरित्यादि ॥ १४—१६ ॥

* सर्व्वाङ्गगः इति चक्रः ।

यस्य श्लेष्मा प्रकुपितो जिह्वामूलेऽवतिष्ठते ।
आशु संजनयेच्छोथं जायतेऽस्योपजिह्विका ॥ १७ ॥
यस्य श्लेष्मा प्रकुपितः काकलेष्ववतिष्ठते ।
आशु संजनयेच्छोथं करोति गलशुण्डिकाम् ॥ १८ ॥
यस्य श्लेष्मा प्रकुपितो गलबाह्येऽवतिष्ठते ।
शनैः संजनयेच्छोथं गलगण्डोऽस्य जायते ॥ १९ ॥

गङ्गाधरः—यस्येत्यादि । यस्येत्यादिना उपजिह्विकालक्षणम् । सुश्रुते त्वेनमधिजिह्वमाह । तद्यथा—"जिह्वाग्ररूपः श्वयथुः कफात् तु जिह्वोपरिष्टादपि रक्तमिश्रात् । ज्ञेयोऽधिजिह्वः खलु रोग एष विवर्ज्जयेदागतपाकमेनम् ॥" इति । तेनात्राशु संजनयेदित्यनेनाशुकारिरक्तसंसर्गोऽत्र कफस्य ज्ञापितः ॥ १७ ॥

गङ्गाधरः—यस्येत्यादि । अत्रापि आशुसंजनयेच्छोथमिति वचनेन आशुकारिरक्तसंसर्गः कफस्य सूचितः । इदं गलशुण्डीलक्षणम् । अत्र काकलं तालुमूलम् । सुश्रुते तु—"श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो दीर्घः शोथो ध्मातवस्तिप्रकाशः । तृष्णाकासश्वासकृत् तं वदन्ति व्याधिं वैद्या गलशुण्डीति नाम्ना ॥" इति । "शोथः स्थूलस्तोददाहप्रपाकी प्रागुक्ताभ्यां तुण्डिकेरी मता तु ।" इत्यस्याप्यत्रावरोधः ॥ १८ ॥

गङ्गाधरः—यस्येत्यादि । पुनर्यस्येत्यादिना गलगण्डलक्षणम् । एषोऽत्र दोषभेदेन नोक्तः पदाधिकारात् । सुश्रुते हि स्वाधिकाराद्विस्तरेणोक्तः । तद्यथा—"वातः कफश्चापि गले प्रवृद्धो मन्ये तु संसृत्य तथैव मेदः । कुर्व्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः ॥ तोदान्वितः कृष्णसिरावनद्धः कृष्णोऽरुणो वा पवनात्मकस्तु । मेदोऽन्वितश्चोपचितश्च कालात् भवेत् मदिग्धे च गलेऽरुजश्च ॥ पारुष्ययुक्तश्चिरवृद्ध्यपाको यदृच्छया पाकमियात् कदाचित् । वैरस्यमास्यस्य च तस्य जन्तोर्भवेत् तथा तालुगलप्रशोषः ॥ स्थिरः सवर्णोऽल्परुगुग्रकण्डूः शोथो महांश्चापि कफात्मकस्तु । चिराभिवृद्धिं कुरुतेऽचिराद्वा प्रपच्यते मन्दरुजं कदाचित् ॥ माधुर्य्यमास्यस्य च तस्य जन्तोर्भवेत् तथा तालुगलप्रलेपः । स्निग्धो मृदुः पाण्डुरनिष्टगन्धो मेदःकृतो नीरुगथातिकण्डूः ॥

चक्रपाणिः—समानदुष्टलेपसामान्यात् प्रागेहिकान् शोथानाह—यस्येत्यादि । काकलं तालुमूलम् । आशुरितिवचनेन गलगण्डकारिणो दोषाच्चिरक्रिया भवन्ति । गलग्रहादौ चाशुकारिणो

यस्य श्लेष्मा प्रकुपितस्तिष्ठत्यन्तर्गले स्थिरः।
आशु संजनयेच्छोथं जायतेऽस्य गलग्रहः॥ २० ॥
यस्य पित्तं प्रकुपितं सरक्तं त्वचि सर्पति।
शोथं सरागं जनयेद्विसर्पस्तस्य जायते॥ २१ ॥
यस्य पित्तं प्रकुपितं त्वचि रक्तेऽवतिष्ठते।
शोथं सरागं जनयेत् पिड़का तस्य जायते॥ २२ ॥
यस्य पित्तं प्रकुपितं शोणितं प्राप्य शुष्यति।
तिलकाः पिप्लवो व्यङ्गो नीलिका तस्य जायते॥ २३ ॥

प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः। स्निग्धास्यता तस्य भवेच जन्तोर्गलेऽनुशब्दं कुरुते च नित्यम्॥ कृच्छ्राच्छ्वसन्तं मृदुसर्वगात्रं संवत्सरातीतमरोचकार्त्तम्। क्षीणन्तु वैद्यो गलगण्डिनं तं भिन्नस्वरञ्चैव विवर्जयेत् तु॥ निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले। महान् वा यदि वा ह्रस्वस्तं गण्डमिति निर्दिशेत्॥" इति गलगण्डाधिकारः॥ १९॥

गङ्गाधरः—यस्येत्यादि। यस्य प्रकुपितः श्लेष्मा स्थिरः सन्नन्तर्गले तिष्ठति, तस्य तदन्तर्गले स आशु शोथं संजनयेत्। स च शोथो गलग्रहो नाम जायते॥२०॥

गङ्गाधरः—यस्य पित्तमित्यादि। यस्य प्रकुपितं पित्तं सरक्तं त्वचि सर्पति। तत् सरक्तं पित्तं त्वचि सरागं शोथं जनयेत्। तस्य स तु शोथो विसर्पो नाम जायते। विसर्पोऽयं विस्तरेण चिकित्सिते वक्ष्यते॥ २१॥

गङ्गाधरः—यस्येत्यादि। यस्य प्रकुपितं पित्तं त्वचि स्थिते रक्तेऽवतिष्ठते। तत् पित्तं त्वक्स्थरक्तावस्थितं सरागं शोथं जनयेत्। स च शोथः पिड़का नाम जायते॥ २२॥

गङ्गाधरः—यस्य पित्तमित्यादि। यस्य प्रकुपितं पित्तं शोणितं प्राप्य शुष्यति शोषयति, शोषणविशेषात् तस्य तिलकस्तिल इव प्रतिकृतिस्तिलकाल इति नाम जायते, पिप्लवो जतुमणिर्नाम च जायते। व्यङ्गो मुखदेशे न्यच्छो जायते।

शोथा भवन्ति। विसर्पस्य पिड़कायाश्च तुल्यकारणत्वेऽपि विसर्पे सर्पणशीलो शोथः पिड़कायान्तु स्थितो शोथः, अत एव पिड़कासंप्राप्तौ "अवतिष्ठते" इत्युक्तम्॥ १७—२०॥

चक्रपाणिः—यस्य पित्तमित्यादौ पित्तं प्राप्य शोणितं कर्तृ शुष्यतीति योजनीयम्। पिप्लवो

यस्य पित्तं प्रकुपितं शङ्खयोरवतिष्ठते ।
श्वयथुः शङ्खको नाम दारुणस्तस्य जायते ॥ २४ ॥
यस्य पित्तं प्रकुपितं कर्णमूलेऽवतिष्ठते ।
ज्वरान्ते दुर्ज्जयोऽन्ताय शोथस्तस्योपजायते ॥ २५ ॥
वातः प्लीहानमुद्धूय कुपितो यस्य तिष्ठति ।
शनैः परितुदन् पार्श्वं प्लीहा तस्याभिवर्द्धते ॥ २६ ॥
यस्य वातः प्रकुपितो गुल्मस्थानेऽवतिष्ठते ।
शोथं सशूलं जनयन् गुल्मस्तस्योपजायते ॥ २७ ॥

नीलिका नाम च जायते। सुश्रुते क्षुद्ररोगाधिकारे विशेषेणैते रोगा उक्ताः। तद्यथा—"कृष्णानि तिलमात्राणि नीरुजानि समानि च। वातपित्तकफोद्रेकात् तान् विद्यात् तिलकालकान्॥ नीरुजं सममुत्पन्नं मण्डलं कफरक्तजम्। सहजं रक्तमीषच्च श्लक्ष्णं जतुमणिं विदुः॥ क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः। सहसा मुखमागम्य मण्डलं विसृजत्यतः। नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत्॥" इति ॥ २३ ॥

गङ्गाधरः—यस्येत्यादि। यस्य प्रकुपितं पित्तं द्वयोः शङ्खयोरवतिष्ठते, तस्य तयोः शङ्खदेशयोर्दारुणः श्वयथुः शङ्खको नाम जायते॥ २४ ॥

गङ्गाधरः—यस्य पित्तमित्यादि। यस्य प्रकुपितं पित्तं ज्वरितस्य कर्णमूलेऽवतिष्ठते तस्य ज्वरान्ते कर्णमूले ततः शोथो जायते। स दुर्ज्जयोऽन्ताय भवति॥ २५ ॥

गङ्गाधरः—वात इत्यादि। यस्य कुपितो वातः प्लीहानमुद्धूय तिष्ठति, तस्य वामे पार्श्वे शनैः परितुदन् प्लीहा नाडी अभिवर्द्धते॥ २६ ॥

गङ्गाधरः—यस्येत्यादि। यस्य प्रकुपितो वातो गुल्मस्थाने गुल्मनिदानोक्ते स्थानेऽवतिष्ठते, तस्य स वातः सशूलं शोथं गुल्माख्यं जनयन् जनयति। तस्य स गुल्म उपजायते॥ २७ ॥

जतुका इति प्रसिद्धाः। दारुणोऽनुपक्रमादाशु मारकः। दुर्ज्जयोऽन्तायेति दुर्ज्जयो वा यथाक्रममुपक्रम्यमाणः, अन्तायेति मिथ्योपक्रमाद् वेति मन्तव्यम्; अयमेव शोथोऽन्यत्राप्युक्तः—"सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः। शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते" इति॥२१—२५॥

यस्य वातः प्रकुपितः शोथशूलकरश्चरन्।
वङ्क्षणाद् वृषणौ याति वृद्धिस्तस्योपजायते ॥ २८ ॥
यस्य वातः प्रकुपितस्त्वङ्मांसान्तरमाश्रितः।
शोथं सजनयेत् कुक्षावुदरं तस्य जायते ॥ २९ ॥

गङ्गाधरः—यस्य वात इत्यादि। यस्य प्रकुपितो वातो वङ्क्षणे शोथशूलकरः संश्चरन् वङ्क्षणाद्वृषणौ याति, तस्य वृद्धिर्नाम रोग उपजायते इति। सुश्रुतेऽयं वृद्धिरोगः प्रपञ्चेनोक्तः। तद्यथा—"वातपित्तश्लेष्मशोणितमेदोमूत्रान्त्रनिमित्ताः सप्त वृद्धयः। तासां मूत्रान्त्रनिमित्ते वृद्धी वातसमुत्थे केवलमुत्पत्तिहेतुरन्यतरः। अधः प्रकुपितोऽन्यतमो हि दोषः फलकोषवाहिनीरभिप्रपद्य धमनीः फलकोषयोर्वृद्धिं जनयति, तां वृद्धिमिति आचक्षते। तासां भविष्यन्तीनां पूर्व्वरूपाणि वस्तिकटिमुष्कमेढ्रेषु वेदना मारुतनिग्रहः फलकोषशोफश्चेति। तत्रानिलपरिपूर्णां वस्तिमिवाततां परुषाम् अनिमित्तानिलरुजं वातवृद्धिमाचक्षते। १। पक्वोडुम्बरसङ्काशां ज्वरदाहोष्मवतीं चाशुसमुत्थानपाकां पित्तवृद्धिम्। २। कठिनामल्पवेदनां शीतां कण्डूमतीं श्लेष्मवृद्धिम्। ३। कृष्णस्फोटावृतां पित्तवृद्धिलिङ्गां रक्तवृद्धिम्। ४। मृदुस्निग्धां कण्डूमतीमल्पवेदनां तालफलप्रकाशां मेदोवृद्धिम्। ५। मूत्रसन्धारणशीलस्य मूत्रवृद्धिर्भवति, गच्छतोऽस्य पूर्णा दृतिरिव क्षुभ्यति। मूत्रकृच्छ्रवेदनां वृषणयोः श्वयथुं कोषयोश्चापादयति, तां मूत्रवृद्धिं विद्यात्। ६। भारहरणबलवद्विग्रहवृक्षप्रपतनादिभिश्चायासविशेषैर्वायुरतिप्रवृद्धः प्रकुपितश्च स्थूलान्त्रस्येतरस्य चैकदेशं विगुणमादायाधो गत्वा वङ्क्षणसन्धिमुपेत्य ग्रन्थिरूपेण स्थित्वाऽप्रतिक्रियमाणे च कालान्तरेण फलकोषं प्रविश्य मुष्के शोफमापादयति। आध्मातो वस्तिरिवाततः प्रदीर्घः शोफो भवति। सशब्दमवपीडितश्चोर्द्ध्वमुपैति। विमुक्तश्च पुनराध्मति। तामन्त्रवृद्धिमसाध्यामाचक्षते।७।" इति। अत्र वङ्क्षणसन्धिस्था यदा तदासाध्येति ज्ञेयम् ॥ २८ ॥

गङ्गाधरः—यस्य वात इत्यादि। यस्य प्रकुपितो वातस्त्वङ्मांसान्तरमाश्रितः सन् शोथं जनयेत्, तस्य स कुक्षावुदरं जायते ॥ २९ ॥

चक्रपाणिः—गुल्मादयो विसर्पपर्यन्ता अपि इहोत्सेधसामान्यात् केवलं उच्यन्ते। शोथसंग्रह इति शोथरूपेणोत्सेधरूपेण संग्रहः शोथसंग्रहः ॥ २९—३१ ॥

यस्य वातः प्रकुपितः कुक्षिमावार्य्य तिष्ठति ।
नाधो व्रजति नाप्यूर्द्ध्वमानाहस्तस्य जायते ॥ ३० ॥
रोगाश्चोत्सेधसामान्यादधिमांसार्ब्बुदादयः ।
विशिष्टा नामरूपाभ्यां निर्द्देश्याः शोथसंग्रहे ॥ ३१ ॥

गङ्गाधरः—अस्य भेदो वक्ष्यते—यस्येत्यादि। यस्य प्रकुपितो वातः कुक्षिमावार्य्य तिष्ठति, नाधो नाप्यूर्द्ध्वं व्रजति, तस्य स आनाहो नाम रोगो जायते ॥ ३० ॥

गङ्गाधरः—उपसंहरति रोगा इत्यादि। इह शोथसंग्रहे उत्सेधसामान्यात् अन्ये येऽधिमांसार्ब्बुदादयो रोगास्ते नामरूपाभ्यां विशिष्टा निर्दिष्टा बुद्धिमद्भिः। तद्यथा सुश्रुते "गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमसृक् प्रदूष्य। वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम्। कुर्व्वन्ति मांसोपचयञ्च शोफं तमर्ब्बुदं शास्त्रविदो वदन्ति॥ वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा च। तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि समादिशन्ति॥ दोषः प्रदुष्टो रुधिरं सिराश्च सम्पीड्य सङ्कोच्य गतस्त्वपाकम्। सास्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशु वृद्धिम्॥ स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं स्यात्। रक्तक्षयोपद्रवपीड़ितत्वात् पाण्डुर्भवेदर्ब्बुदपीड़ितस्तु॥ मुष्टिप्रहारादिभिरर्द्दितेऽङ्गे मांसं प्रदुष्टं प्रकरोति शोफम्। अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम्॥ प्रदुष्टमांसस्य नरस्य गाढ़मेतद्भवेन्मांसपरायणस्य॥ मांसार्ब्बुदन्त्वेतदसाध्यमुक्तं साध्येष्वपीमान्यपि वर्ज्जयेत्तु। संप्रस्रुतं मर्म्मणि यच्च जातं स्रोतःसु वा यच्च भवेदचाल्यम्॥ यज्जायतेऽन्यत् खलु पूर्व्वजाते ज्ञेयं तदध्यर्ब्बुदमर्ब्बुदज्ञैः॥ यद् द्वन्द्वजातं युगपत् क्रमाद्वा द्विरर्ब्बुदं तच्च भवेदसाध्यम्॥ न पाकमायान्ति कफाधिकत्वान्मेदोऽधिकत्वाच्च विशेषतस्तु। दोषस्थिरत्वाद्ग्रथनाच्च तेषां सर्व्वार्ब्बुदान्येव निसर्गतस्तु॥" ग्रन्थिश्च सुश्रुते यथा—"वातादयो मांसमसृक् प्रदुष्टाः सन्दूष्य मेदश्च कफानुबन्धम्। वृत्तोन्नतं विग्रथितन्तु शोफं कुर्व्वन्त्यतो ग्रन्थिरिति प्रदिष्टः॥ आयम्यते व्यथ्यत एति तोदं प्रभज्यते कृत्यत एति भेदम्। कृष्णोऽमृदुर्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम्॥ दन्दह्यते धूप्यति चातिमात्रं पापच्यते प्रज्वलतीव चाति। रक्तः सपीतोऽप्यथवापि पित्ताद्भिन्नः स्रवेदुष्णमतीव दुष्टम्॥ शीतो विवर्णोऽल्परुजोऽतिकण्डुः पाषाणवत् संहनन-

नोपपन्नः । चिराभिवृद्धिश्च कफप्रकोपाद्भिन्नः स्रवेद्रक्तघनञ्च पूयम् ॥ शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धो महानल्परुजोऽतिकण्डुः । मेदःकृतो गच्छति चातिभिन्ने पिण्याकसर्पिःप्रतिमन्तु मेदः ॥ व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुर्हि सिराप्रतानम् । सम्पीड्य सङ्कोच्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम् ॥ ग्रन्थिः सिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात् सरुजश्चलश्च । अरुक् स एवाप्यचलो महांश्च मर्म्मोत्थितश्चापि विवर्ज्जनीयः ॥" इति । अपची चात्र द्रष्टव्या सुश्रुतोक्ता । तद्यथा—"हन्वस्थिकक्षाक्षकबाहुसन्धिमन्यागलेषूपचितन्तु मेदः । ग्रन्थिं स्थिरं वृत्तमथायतं वा स्निग्धं कफश्चाल्परुजं करोति ॥ तं ग्रन्थिभिश्चामलकास्थिमात्रैर्मत्स्याण्डजालप्रतिमैस्तथान्यैः । अनन्यवर्णैरुपचीयमानं चयापकर्षादपचीं वदन्ति ॥ कण्डूयुतास्तेऽल्परुजः प्रभिन्नाः स्रवन्ति नश्यन्ति भवन्ति चान्ये । मेदःकफाभ्यां खलु रोग एष सुदुस्तरो वर्षगणानुबन्धि ॥" इति । गण्डमालापची च नात्रोक्ता । "कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागलवङ्क्षणेषु । मेदःकफाभ्यां चिरमन्दपाकैः स्याद्गण्डमाला बहुभिश्च गण्डैः ॥ ते ग्रन्थयः केचिदवाप्तपाकाः स्रवन्ति नश्यन्ति भवन्ति चान्ये । कालानुबन्धं चिरमादधाति सैवापचीति प्रवदन्ति केचित् ॥" इति । पाकं प्राप्ता गण्डमालैवापचीत्यर्थः । श्लीपदमुक्तं सुश्रुतेन यथा—"कुपितास्तु दोषा वातपित्तश्लेष्माणोऽधः प्रपन्ना वङ्क्षणोरुजानुजङ्घास्वत्रातिष्ठमानाः कालान्तरेण पादमाश्रित्य शनैः शोफं जनयन्ति । तत् श्लीपदमित्याचक्षते । तत् त्रिविधम्—वातपित्तकफनिमित्तमिति । तत्र वातजं खरं कृष्णं परुषमनिमित्तानिलरुजं परिस्फुटति च बहुशः । पित्तजन्तु पीतावभासमीषन्मृदु ज्वरदाहप्रायञ्च । श्लेष्मजन्तु श्वेतं स्निग्धावभासं मन्दवेदनं भारिकमिति महाग्रन्थिकं कण्टकैरुपचितञ्च । तत्र संवत्सरातीतमतिमहद्वल्मीकजात प्रस्नुतमिति वर्ज्जनीयानि । भवन्ति चात्र—त्रीण्यप्येतानि जानीयात् श्लीपदानि कफोच्छ्रयात् । गुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति विना कफात् ॥ पुराणोदकभूयिष्ठाः सर्व्वर्त्तुषु च शीतलाः । ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥ पादवद्धस्तयोश्चापि श्लीपदं जायते नृणाम् । कर्णाक्षिनासाशिश्ने च केचिदिच्छन्ति तद्विदः ॥" इति । ब्रध्नरोगश्चान्यत्र दृश्यते—"अत्यभिष्यन्दिगुर्व्वाम-सेवनान्निचयं गतः । करोति ग्रन्थिवच्छोफं दोषो वङ्क्षणसन्धिषु ॥ ज्वरशूलाङ्गदाहाढ्यं तं ब्रध्नमिति निर्दिशेत् ॥" इति । एवं शिलाबुप्रभृतिगलरोगादयः स्वाधिकारे वाच्याः ॥ २१ ॥

वातपित्तकफा यस्य युगपत् कुपितास्त्रयः ।
जिह्वामूलेऽवतिष्ठन्ते विदहन्तः समुच्छ्रिताः ॥
जनयन्ति भृशं शोथं वेदनाश्च पृथग्विधाः ।
तं शीघ्रकारिणं रोगं रोहिणीति विनिर्दिशेत् ॥
त्रिरात्रं परमश्चास्य जन्तोर्भवति जीवितम् ।
कुशलेन त्वनुक्रान्तः क्षिप्रं सम्पद्यते सुखी ॥ ३२ ॥

गङ्गाधरः—प्राधान्यादाशुकारित्वाच्च गलगतरोहिणीमाह । अथास्य गलशोथविशेषमाह—वातेत्यादि । यस्य पृथग्वातपित्तकफाः युगपच्च कुपितास्त्रयो वातपित्तकफाः समुच्छ्रिताः प्रवृद्धा जिह्वामूलेऽन्तर्विदहन्तोऽवतिष्ठन्ते, तत्र भृशं शोथश्च जनयन्ति । पृथग्विधाः प्रतिदोषजा वेदनाश्च जनयन्ति । तं जिह्वामूले जातं शोथं शीघ्रकारिणं शीघ्रमारकं रोगं रोहिणीति नाम्नादिशेत् । वातपित्तकफा इति पृथक् पुनस्त्रय इति वचनात् युगपत् कुपिताश्च त्रय इति वातपित्तकफाः सन्निपतिता इत्यर्थः । शीघ्रकारित्ववचनात् रक्तमप्यत्र बोध्यम् । समुच्छ्रिता इति अतिवृद्धाः । भृशमतिदुःखदम् । शीघ्रकारिणं मोचनहननान्यतरत् शीघ्रं कर्त्तुं शीलं यस्य तं तथा । उक्तं हि—"स शीघ्रं शीघ्रकारित्वात् प्रशमं याति हन्ति वा" इति । शीघ्रमारकत्वं दर्शयति—त्रिरात्रमित्यादि । परमं जीवितमित्यायुः परमायुरित्यर्थः । अस्य जन्तोस्त्रिरात्रं परमायुर्भवतीत्यर्थः । इति त्वकुशलभिषजोपक्रान्तत्वेऽनुपक्रान्तत्वे च बोध्यम् । कुशलेन तु भिषजा क्षिप्रमनुक्रान्तश्चिकित्सितुमारब्धः रोहिणीमान् पुमान् क्षिप्रं सुखी आरोग्यवान् सम्पद्यते । इत्युभयत्रैव क्षिप्रशब्दान्वयः । एतेनाविरुद्धा सुश्रुतेनाप्युक्ता वातादिभेदेन रोहिणी । यथा—"गलेऽनिलः पित्तकफौ च मूर्च्छितौ पृथक् समस्ताश्च तथैव शोणितम् । प्रदूष्य मांसं गलरोधिनोऽङ्कुरान् सृजन्ति यान् साऽसुहरा तु रोहिणी ॥ जिह्वां समन्ताद्भृशवेदना ये मांसाङ्कुराः कण्ठनिरोधिनः स्युः । तां रोहिणीं वातकृतां वदन्ति वातात्मकोपद्रवगाढयुक्ताम् ॥ क्षिप्रोद्गमा क्षिप्रविदाहपाका तीव्रज्वरा पित्तनिमित्ततः स्यात् । स्रोतोनिरोधिन्यपि मन्दपाका गुर्व्वी स्थिरा सा कफसम्भवा वै ॥ गम्भीरपाक्यप्रतिवार्य्यवीर्य्या

चक्रपाणिः—समुच्छ्रिता अतिरिक्तप्रमाणाः, भृशमत्यर्थं दुःखकारणम् । क्षिप्रमित्यनुपक्रान्त इत्यनेन सम्बध्यते, तेन त्रिरात्रकारित्वं यस्य रुजस्य कथं शीघ्रकारित्वम् इति चोद्यं नोत्तिष्ठते, किंवा,

सन्ति चैवंविधा रोगाः साध्या दारुणसम्मताः।
ये हन्युरनुपक्रान्ता मिथ्याचारेण वा पुनः॥ ३३॥
साध्याश्चैवापरे सन्ति व्याधयो मृदुसम्मताः।
यत्नायत्नकृतं येषु कर्म्म सिध्यत्यसंशयम्॥ ३४॥
असाध्याश्चापरे सन्ति व्याधयो याप्यसंज्ञिताः।
सुसाध्वपि कृतं येषु कर्म्म यात्राकरं भवेत्॥ ३५॥
सन्ति चाप्यपरे रोगा येषु कर्म्म न सिध्यति।
अपि यत्नकृतं * वैद्यैर्न तान् विद्वानुपाचरेत्॥ ३६॥

त्रिदोषलिङ्गा त्रयसम्भवा स्यात्। स्फोटाचिता पित्तसमानलिङ्गाऽसाध्या प्रदिष्टा रुधिरात्मिकेयम्॥" इति। पञ्च रोहिण्यः स्युरिति॥ ३२॥

गङ्गाधरः—नन्वेवं शीघ्रकारी किमेष एव रोगोऽस्ति, न त्वन्यः? इत्याकाङ्क्षायामाह—सन्ति चेत्यादि। एवंविधा इति शीघ्रकारिणो रोगाः ज्वरान्तजातकर्णशोथवलयादयः। साध्या दारुणसम्मता इति दारुणत्वं विवृणोति—ये हन्युरित्यादि। कुशलेनोपक्रान्तत्वे साध्यत्वम्। अकुशलेनोपक्रान्तत्वे तथा चानुपक्रान्तत्वे ये हन्युस्ते दारुणत्वेन साध्यतया सम्मताः॥ ३३॥

गङ्गाधरः—दारुणत्वप्रसङ्गेन मृदुत्वादिकमप्याह—साध्याश्चेत्यादि। मृदुत्वं विवृणोति—यत्नायत्नेत्यादि। कर्म्मेति कर्त्तृपदम्॥ ३४॥

गङ्गाधरः—साध्यस्य दारुणत्वमृदुत्वभेदावुक्त्वा असाध्यस्य भेदमाह—असाध्या इत्यादि। याप्यसञ्ज्ञिता इति विवृणोति। येषु रोगेषु सुसाधुरूपेण कृतं कर्म्म चिकित्सा यात्राकरं कालक्षेपणकरयापनाकृदित्यर्थः॥ ३५॥

गङ्गाधरः—असाध्यस्य भेदान्तरमाह—सन्तीत्यादि। न सिध्यतीत्यसिद्धत्वं विवृणोति। अपीत्यादि। कुशलैरपि वैद्यैर्यत्नकृतमपि कर्म्म येषु न सिध्यति

क्षिप्रं सम्पद्यते सुखीति व्याधिमहिम्ना भवति, व्याधेरेवैतत् स्वरूपं यत् क्षीप्रं हन्ति क्षीप्रं प्रशाम्यतीति; यदुक्तं "स शीघ्रं शीघ्रकारित्वात् प्रशमं याति हन्ति वा" इति॥ ३२॥

चक्रपाणिः—एतदेव शीघ्रकारित्वम् अन्येष्वपि ज्वरान्तकर्णशोथवलयादिष्वस्तीत्याह—सन्ति चेत्यमित्यादि। दारुणा इति सम्मता दारुणसम्मताः। दारुणत्वप्रसङ्गेन मृद्वादिभेदानप्याह—

* प्राज्ञैरिति पाठान्तरम्।

साध्याश्चैवाप्यसाध्याश्च व्याधयो द्विविधाः स्मृताः ।
मृदुदारुणभेदेन ते भवन्ति चतुर्व्विधाः ॥ ३७ ॥
त एवापरिसंख्येया भिद्यमाना भवन्ति हि ।
रुजावर्णसमुत्थान-स्थानसंस्थाननामभिः ॥

प्रयोजनसिद्धिं न करोति ते रोगाः प्रत्याख्येया इत्यर्थः । विद्वानिति साध्यत्वासाध्यत्वादिसर्व्वप्रकारेण व्याधिं तदुपक्रमञ्च सर्व्वथैव विदितवान्, तान् नोपाचरेत् ॥ ३६ ॥

गङ्गाधरः एवं मृदुदारुणभेदेन साध्यस्यासाध्यस्य च भेदानुपसंहरति—साध्याश्चैवेत्यादि । मृदुदारुणभेदेनेति मृदुसाध्या दारुणसाध्या मृद्वसाध्या दारुणासाध्या इति चतुर्व्विधा भवन्ति । अत्रासाध्यानां मृदुत्वं याप्यत्वं दीर्घकालेन मारकत्वम् । दारुणत्वन्तु प्रत्याख्येयत्वं सद्यःप्राणहन्तृत्वञ्चेति कश्चित्, तन्न । कालान्तरेण मारकत्वेऽपि च दारुणत्वात् । तस्य हि प्रत्याख्येयत्वमस्त्येवेति । त एवेति चतुर्व्विधा एव रुजा वातादिकृतवेदना चिमिचिमादिरनेकः । वर्णा अपि वातादिकृताः श्यावादयो बहवः । समुत्थानानि वातादीनां कारणानां कारणानि । रूक्षजागरणादीनि तथा स्वस्वव्याधीनां स्वस्वकारणानि बहूनि सन्ति । स्थानानि व्याधीनाञ्च तानि तानि बहूनि गात्रप्रदेशरूपाणि सन्ति । संस्थानानि वातादिभिः समविषमसमवायारब्धत्वेन कृतानि रूपाणि अपरिसंख्येयानि नामानि ज्वररक्तपित्तादीनि अपरिसंख्येयानि तैर्भिद्यमानास्ते चतुर्व्विधा व्याधयोऽपरिसंख्येया भवन्ति ।

साध्याश्चैवेत्यादि । याप्याकरं यापनाकरं, कालैरर्थैः, असाध्ये अशा एवोत्साहात् प्रवर्त्तन्त इत्यर्थः । असाध्यस्य मृदुदारुणत्वं याप्यप्रत्याख्येयभेदेन, तथा सद्यःप्राणहर-कालान्तरप्राणहरत्वादिना च ॥ ३६—३७ ॥

चक्रपाणिः—रुजावर्णेत्यादि ।—समुत्थानभेदा हेतुभेदाः,—रूक्षभोजनरात्रिजागरणादिभिन्नहेतुजन्यो हि वातो भिन्नोपक्रमसाध्यश्च भवतीति भावः ; स्थानभेदा आमाशयादयो रसादयश्च ; संस्थानमाकृतिः, यथा—गुल्मार्बुदादिः ; नामभेदो यथा—एकस्मिन्नेव राजयक्ष्मणि राजयक्ष्म-

व्यवस्थाकरणं तेषां यथा स्थूलेषु संग्रहः।
तथा प्रकृतिसामान्यं विकारेषूपदिश्यते॥
विकारनामाकुशलो न जिह्रीयात् कदाचन।
न हि सर्व्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः॥३८॥
स एव कुपितो दोषः समुत्थानविशेषतः।
स्थानान्तरगतश्चापि विकारान् कुरुते बहून्॥

नन्वेवं चेदपरिसंख्येयत्वं व्याधीनां कथं चिकित्सितुं व्यवहर्त्तव्यमिति? अत आह—व्यवस्थेत्यादि। तेषां परिसंख्याविहीनानां व्याधीनां चिकित्सार्थं स्थूलेषु रोगेष्वष्टोदरीयोक्तेषु यथा संग्रहः सङ्क्षेपो व्यवस्थाकरणं संख्ययोक्तार्थमुपदिश्यते तथा संख्ययाऽनुक्तेषु विकारेषु प्रकृतिसामान्यं समताकारणसमानताव्यवस्थाकरणमुपदिश्यते। प्रकृतिभूतकारणवातादिसामान्यं हि सर्व्वेष्वेव व्याधिषु वर्त्तते। तद्भेदेन सर्व्वेषां व्याधीनां संख्या व्यवस्था कर्त्तव्येति भावः। विकारेष्वपि दृश्यते इति पाठेऽपि तुल्यार्थः। वक्ष्यते ह्यष्टोदरीये "सर्व्वे विकारा वातपित्तकफान् नातिवर्त्तन्ते" इति।

ननु रुजावर्णादिभेदेन ज्ञातत्वे चिकित्साविशेषात् तस्य ज्ञानमावश्यकमन्यथा तद्रोगस्य रुजावर्णनामाद्यज्ञाने प्रतीकारो न भवतीति? अत आह—विकारनामेत्यादि। विकाराणां ज्वररक्तपित्तादिनामभेदेनाविदितवान् चिकित्सितुमिति शेषः। लज्जाभावे हेतुमाह—न हीत्यादि॥ ३७।३८॥

गङ्गाधरः—कुतो नामतो न ध्रुवा स्थितिरिति? अत आह—स एवेत्यादि। स एव ज्वरादितत्तद्व्याध्यारम्भक एव दोषः पुनः समुत्थानविशेषतः अतीसारा-

कोषादिसंज्ञा। नन्वेवमपरिसंख्येयत्वे कथं व्यवहार इत्याह—व्यवस्थेत्यादि। व्यवस्थाकरणं चिकित्साव्यवहारार्थं संख्याकथनम्। यथास्थूलेष्विति ये ये स्थूला ज्वरमूत्रकृच्छ्रादयः तेषु संग्रहोऽष्टोदरीयरोगसंग्रह इत्यर्थः। स्थूलेषु विकारेषु अष्टोदरीये संज्ञयाऽनुक्तेषु कथं व्यवस्थाकरणमित्याह—तथेत्यादि। प्रकृतिसामान्यं समानकारणता, तेन अनुक्तेषु साक्षाद् व्याधिषु, वातजोऽयं श्लेष्मजोऽयमिति तथा रसजोऽयम् रक्तजोऽयमित्यादिका चिकित्साव्यवहारार्थं व्यवस्था कर्त्तव्येति भावः; अत एवाष्टोदरीये वक्ष्यति—"सर्व्वे विकारा वातपित्तकफान् नातिवर्त्तन्ते" इति। ज्वररक्तपित्तादिकन्नामाज्ञानेऽपि वातादिकारणत्वज्ञानेनैव प्रचरितव्यमित्याह—विकारेत्यादि। स्थानान्तरगतश्चेत्यत्र चकार एकस्थानगतोऽपि बहुविकारं करोतीति समुच्चिनोति, यतो वक्ष्यति—

तस्माद्विकारप्रकृतीरधिष्ठानान्तराणि च।
समुत्थानविशेषांश्च बुद्ध्वा कर्म्म समाचरेत् ॥ ३९ ॥
यो ह्येतत् त्रितयं ज्ञात्वा कर्म्माण्यारभते भिषक्।
ज्ञानपूर्व्वं यथान्यायं स कर्म्मसु न मुह्यति ॥ ४० ॥
नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः।
विकृताः प्रकृतिस्था वा तान् बुभुत्सेत पण्डितः ॥ ४१ ॥

दीनां कारणविशेषतश्च नामतः स्थितिरस्ति। ततोऽन्येषां स्थानान्तरगतः सन् चकारात् तत्स्थानस्थोऽपि वा बहून् विकारानतीसाररक्तपित्ताद्यतिरिक्तान् कुरुते। ततो नामभेदतः स्थितिर्न ध्रुवास्ति।

ननु नामाज्ञाने सति कथं चिकित्सितव्यमिति? अत आह—तस्मादित्यादि। तस्मादिति व्याधीनां नाम्नः स्थितेरभवनात्। विकारप्रकृतीर्व्याधीनां समवायिकारणानि वातादिदोषान् रसरक्तादिदूष्यांश्च तेषां कार्य्यं दृष्ट्वाऽधिष्ठानान्तराणि च बुद्ध्वा कर्म्म चिकित्सितं समाचरेत्। नन्वामाशयगतपक्वाशयगतवातयोः रूक्षस्वेदं स्नेहपूर्व्वस्वेदं न प्रयुज्य सर्व्वत्र रूक्षो वा स्निग्धो वा स्वेदः प्रयुज्यतामिति? अत आह अधिष्ठानेति। आशयान्तराणि। ननु मृत्तिकाजपाण्डुरोगादीनां प्रकृतिर्वातादीनां विज्ञानेन न प्रशमो भवतीति तत्र का गतिरिति? अत आह समुत्थानेत्यादि ॥ ३९ ॥

गङ्गाधरः—एतत्त्रितयविज्ञानपूर्व्वककर्म्मकरणे फलमाह—यो ह्येतदित्यादि। ज्ञानपूर्व्वमिति व्याधीनां प्रकृत्यधिष्ठाननिदानविशेषज्ञानानन्तरं तत्र यस्य यत् प्रतिक्रिया तस्याः क्रियाया ज्ञानपूर्व्वकं यथान्यायं यस्मिन् व्याधौ यत् कर्म्म शास्त्रोक्तं तस्मिन् व्याधौ तत् कर्म्म यो भिषक् आरभते स भिषक् कर्म्मसु व्याधिप्रतिकारकर्म्मसु न मुह्यति ॥ ४० ॥

गङ्गाधरः—नन्वेवं सति व्याधीनां प्रकृत्यादीनां ज्ञानस्यावश्यकत्वे के

"करोति गलमाश्रितः। कण्ठोद्ध्वंसञ्च कासञ्च स्वरभेदमरोचकम्" इति। अधिष्ठानान्तराणि आशयान्तराणि, ज्ञानपूर्व्वमिति चिकित्साज्ञानपूर्व्वकं, यथान्यायं यथागमम्; एवं मन्यते—यत् वातादध्यादिज्ञानमेव कारणं रोगाणां चिकित्सायामुपकारि, नामज्ञानन्तु व्यवहारमात्रप्रयोजनार्थं, न स्वरूपेण चिकित्सायामुपकारीति ॥ ३८—४० ॥

चक्रपाणिः—सम्प्रति वातादिविज्ञानेन रोगज्ञानमुद्दिष्टं तेनोपोद्घातेन, वातादीनां प्रकृति-

उत्साहोच्छ्वासनिश्वास-चेष्टा धातुगतिः समा।
समो मोक्षो गतिमतां वायोः कर्म्माविकारजम् ॥ ४२ ॥
दर्शनं पक्तिरुष्मा च क्षुत् तृष्णा देहमार्द्दवम्।
प्रभा प्रसादो मेधा च पित्तकर्म्माविकारजम् ॥ ४३ ॥
स्नेहो बन्धः स्थिरत्वञ्च गौरवं वृषता बलम्।
क्षमा धृतिरलोभश्च कफकर्म्माविकारजम् ॥ ४४ ॥

चावश्यविज्ञेया भवन्तीति ? अत आह—नित्या इत्यादि। वातपित्तकफास्त्रयः समस्ता एव न त्वन्यतमः। विकृताः क्षीणा वा वृद्धा वा ये क्षीणवृद्धसंसृष्टसमाना वा। प्रकृतिस्था वा। क्षीणा वा वृद्धा वा क्षीणवृद्धसंसृष्टा वा ये केऽपि भवन्तु ते केनचिद्रूपेण प्राणभृतां देहे नित्या एव सततसम्बन्धा एव सन्तः सर्व्वक्रियाहेतव एव भवन्ति। पण्डितस्तान् विकृतान् वा प्रकृतिस्थान् वा वातपित्तकफान् बुभुत्सेत ज्ञातुमिच्छेत् ॥ ४१ ॥

गङ्गाधरः—तत्रादौ प्रकृतिस्थानां लक्षणान्याह उत्साहोच्छ्वासेत्यादि। चेष्टेति यथार्थभूता वाङ्मनःशरीरप्रवृत्तिः समा चेष्टा। धातुगतिः परपरधातुपोषकतया गमनमवस्था वा समा अविकृता। गतिमतां मूत्रपुरीषादीनां समो मोक्षो यथाकालं यथामानं वहिर्मोचनम् ॥ ४२ ॥

गङ्गाधरः—अथ पित्तकर्म्माण्याह—दर्शनमित्यादि। दर्शनमित्यादिषु पित्तस्य प्राकृतकर्म्माणि। पक्तिर्भुक्तानां पाकः। उष्मा देहे स्वाभाविकमौष्ण्यं पाचकाग्निर्वा। प्रभा देहकान्तिः। प्रसादो मनःप्रसन्नता ॥ ४३ ॥

गङ्गाधरः—स्नेह इत्यादि। स्नेह इत्यादिना कफस्य प्राकृतकर्म्माणि। स्नेहः शरीरस्य चैक्कण्यम्। बन्धः सानुबन्ध इति कश्चित्। शरीरावयवसन्धीनां बन्ध इति युक्तः। स्थिरत्वमशिथिलत्वम्। देहस्य गौरवं देहस्य

स्थानाम् अप्रकृतिस्थानाञ्च लक्षणं वक्तुमाह—नित्या इत्यादि। बुभुत्सेत ज्ञातुमिच्छेत् ॥ ४१ ॥

चक्रपाणिः—चेष्टेत्यविकृता चेष्टा। धातुगतिरिति रसादीनां पोष्यं धातुं प्रति गमनम्। गतिमतामिति पुरीषादीनां बहिर्निःसरणम्, प्रसादो मनःप्रसादः, बन्धः सन्धिबन्धः, स्थिरत्वम् अक्षोभित्वम्, गौरवं प्राकृतं शरीरगौरवम्, क्षमा सहिष्णुता, धृतिर्मनसोऽचाञ्चल्यम्, अप्रमादश्च

**वाते पित्ते कफे चैव क्षीणे लक्षणमुच्यते ।**
**कर्म्मणः प्राकृताद्धानिर्वृद्धिर्वापि विरोधिनाम् ॥ ४५ ॥**

स्वाभाविकगुरुता । वृषता पुंस्त्वशक्तिः । क्षमादयस्त्रयः प्रभावाः कफकर्म्माणि । बलमोजःकृतम् ॥ ४४ ॥

गङ्गाधरः—वातादीनां प्राकृतकर्म्माण्युक्त्वा विकृतकर्म्माण्याह—वात इत्यादि । अत्र कश्चित् तु वृद्धिर्वापि विरोधिनामिति वाताद्यन्यतमक्षयेऽन्यतमवृद्धिर्भवतीति व्याचष्टे, तन्न । युगपत्त्रयाणां क्षयानुपपत्तेः पित्तवृद्धौ श्लेष्मणः सर्व्वांशेन विनाशापत्तेश्च । वस्तुतस्तु 'क्षीणा जहति लिङ्गं स्वम्' इत्युक्तया इदमेव बोध्यम् । तद्यथा 'कर्म्मणः प्राकृताद्धानिः' इति वातस्य प्रकृतिस्थस्य प्राकृतं कर्म्म उत्साहादिकमुक्तं यत् तस्माद्धानिरपचयः । अल्पोत्साहोऽनुत्साहः अल्पोच्छ्वासोऽल्पनिश्वासः । अल्पचेष्टा । रसादीनामुत्तरोत्तरधातुपोषकत्वमल्पम् । मलादीनामल्पमोक्ष इति क्षीणवातस्य कर्म्म । अथवा प्राकृतादुत्साहादिकर्म्मणो विरोधिनामनुत्साहादीनां वृद्धिरिति तत्तदेव कर्म्म लभ्यते । क्षीणे वातस्येति तुल्यमेव क्षयलक्षणमुभयथैव भवतीति वाशब्द उपात्तः । एवं पित्तस्य प्रकृतिस्थस्य यत् यत् प्राकृतं कर्म्म दर्शनादिकमुक्तं तस्माद्धानिरपचयस्तस्माद्वा विरोधिनामदर्शनादीनां वृद्धिः पित्ते क्षीणे लक्षणमुच्यते । तथा च पित्तक्षयेऽल्पदर्शनमदर्शनं वा । अल्पपक्तिरपक्तिर्वा । अल्पोष्मानुष्मा वा । अल्पक्षुधा अक्षुधा वा, अल्पतृष्णा चातृष्णा वा, देहमार्दवमल्पं न वा, अल्पप्रभा अप्रभा वा, मनसश्चाल्पप्रसादोऽप्रसादो वा, अल्पमेधा चामेधा वेति भवतीति । एवं कफस्य प्रकृतिस्थस्य प्राकृतं कर्म्म स्नेहादिकं यद्यदुक्तं तस्मात् तस्मात् कर्म्मणो हानिरपचयस्तत्तत्कर्म्मणो विरोधिनां रौक्ष्यादीनां वृद्धिर्वा कफे क्षीणे लक्षणमुच्यते । तथा च श्लेष्मक्षये देहस्याल्पस्निग्धत्वं रौक्ष्यं वा, शरीर-

श्लेष्मणः प्रभावात् क्रियन्ते, एवमन्यत्रापि ज्ञेयम् । कर्म्मणः प्राकृतादिति वातादिप्रकृतिकर्म्मत्वेनोक्तादुत्साहादेः, हानिरपचयः । वृद्धिर्वापि विरोधिनामिति—उक्तप्राकृतलक्षणविरोधिनां कर्म्मणां वृद्धिः, यथा—वातक्षये उत्साहविरोधिनो विषादस्य वृद्धिः, पित्तक्षयेऽदर्शनापक्त्यादीनाम्, श्लेष्मक्षये रौक्ष्यादीनां वृद्धिः, इह प्राकृतकर्म्महानौ सत्याम् नावश्यं विरोधिकर्म्मवृद्धिरत उक्तं वृद्धिर्वेत्यादि, न ह्यवश्यमुत्साहहानावल्पमात्रायां सत्यां विषादो वर्द्धते, मलोऽभ्यूनत्वे वा मलाक्षीणो वर्द्धते ; किंवा, उत्साहाद्यभावेनाभावमुखेन ज्ञानार्थं 'कर्म्मणः प्राकृताद्धानिः' इत्युक्तम्, विषादादिना तु विधिमुखेन ज्ञानार्थं 'वृद्धिर्वापि विरोधिनाम्' इत्युक्तम् ; यदुच्यते—वृद्धिर्वापि

**दोषप्रकृतिवैशेष्यं नियतं वृद्धिलक्षणम्।**
**दोषाणां प्रकृतिर्हानिर्वृद्धिश्चैव परीक्ष्यते ॥ ४६ ॥**

सन्धीनामल्पबन्धनमबन्धो वा, देहमांसाद्यवयवस्याल्पशैथिल्यं शैथिल्यं वा, देहेऽल्पगुरुत्वं लघुत्वं वा, स्त्रीसंसर्गेशक्तिरल्पा न वा, अल्पबलमबलं वा, अल्पक्षमा अक्षमा वा, अल्पधृतिरधृतिर्वा, अल्पलोभोऽलोभो वा भवतीति ॥ ४५ ॥

गङ्गाधरः—वातादीनां प्राकृतकर्म्मणां भावाभाववचनेन क्षयलक्षणमुक्त्वा वृद्धिलक्षणमाह—दोषेत्यादि। दोषाणां वातपित्तकफानां प्रकृतिः स्वभावः रौक्ष्यादिकम्। तस्य वैशेष्यमाधिक्यमेवात्र विवक्षितम्, न त्वल्पत्वाधिक्ये। पदार्थान्वयतन्त्रयुक्त्याऽल्पत्वस्य क्षयलक्षणत्वेनोक्तत्वात् तदितरवृद्धिलक्षणे वक्तव्ये तदितरस्याधिक्यमात्रस्यैव वैशेष्यपदेन लब्धत्वात्। तथा च वातस्य प्रकृतिस्थस्य रौक्ष्यशैत्यलाघवसौक्ष्म्यचलत्ववैशद्यखरत्वानां प्रकृतीनामाधिक्यं वातस्य वृद्धिलक्षणम्। तस्य रौक्ष्यशैत्याद्याधिक्यं न पित्तकफयोर्वृद्धिलक्षणम्, पित्ते कफे च तत्तद्धर्म्मस्यानियतत्वात्। सत्यपि हि पित्तस्य रौक्ष्ये कफे च शैत्ये रौक्ष्यादिसहचरितसौक्ष्म्यशैत्यादयश्च न पित्ते कफे चेति नियतत्वाभावः। नियतत्वं हि तद्वदन्यावृत्तिकत्वं यादृप्येण यस्य यद्वृत्तिकत्वं तादृप्येण तदितरावृत्तिकत्वमिति रूपेण ग्राह्यम्। एवं पित्तस्य प्रकृतिस्थस्य सस्नेहौष्ण्यत्वतीक्ष्णत्वद्रवत्वाम्लकटुत्वसरत्वानां प्रकृतीनां धर्म्माणां वैशेष्यमाधिक्यं पित्तस्य वृद्धिलक्षणम्। तथा श्लेष्मणश्च प्रकृतिस्थस्य गौरवशैत्यमृदुत्वस्निग्धत्वमाधुर्य्यस्थैर्य्यपैच्छिल्यानां प्रकृतीनां धर्म्माणां वैशेष्यमाधिक्यं श्लेष्मणो वृद्धिलक्षणमिति कश्चिद्व्याचष्टे। तन्न मनोरमम्। वातस्य रौक्ष्यशैत्यादीनां पित्तस्य सस्नेहौष्ण्यादीनां कफस्य गुरुत्वशैत्यादीनां विज्ञानार्थं लक्षणान्तरं वक्तव्यत्वावश्यकत्वेन न्यूनत्वदोषादिति। तस्मादत्र व्याख्यास्यामः। प्रकृतिः स्वमानस्थस्य रौक्ष्यादिगुणः प्राकृतं कर्म्म च प्रकृतिस्थत्वे हि वातादीनां रौक्ष्यादिधर्म्मजनितमपि कर्म्म

विरोधिनामिति—विरोधिदोषाणाम्, यथा—पित्तवृद्धौ तु श्लेष्मक्षयो जायते, इत्येवमादि; तन्न, यतः अन्यदोषवृद्धावन्यस्यावश्यं न क्षयो भवति, तथाहि सति, पित्तवृद्धौ सत्यां सर्व्वदा श्लेष्मक्षयः स्यात्, न च दोषाः परस्परघातकाः इति प्रागेव प्रतिपादितम्, प्रदेशान्तरेऽपि दोषाणां स्वलक्षणहानिरेव परं क्षयलक्षणं "क्षीणा जहति लिङ्गं स्वम्" इत्यनेनोक्तम् ॥ ४२—४५ ॥

चक्रपाणिः—वृद्धिलक्षणमाह—दोषेत्यादि। प्रकृतिः स्वभावस्तस्य वैशेष्यमाधिक्यं, श्लेष्मणः स्नेहशैत्यमाधुर्य्यादियों प्रकृतिस्तस्या स्नेहातिशैत्यातिमाधुर्य्यादि वैशेष्यं वृद्धिलक्षणम्।

तत्र श्लोकाः ।

**सङ्ख्या निमित्तं रूपाणि शोथानां साध्यता न च ।**
**तेषां तेषां विकाराणां शोथांस्तांस्तांश्च पूर्व्वजान् ॥**

रौक्ष्यादिवत् प्रकृतिर्भवति । तेषां वैशेष्यम् । तेषां विशेषोऽत्र पदार्थोऽन्यतन्त्रयुक्त्या आधिक्यं न तु हानिः । तस्माज्जातं प्रकृतगुणजकर्म्मणामधिकबलेनानुवृत्तिसहितातिरिक्तं यद्यत् कर्म्म आध्मानादिकं तत् सर्व्वं दोषप्रकृतिवैशेष्यम् । तत् तु वृद्धिलक्षणमित्यर्थः । उक्तं हि—"दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति यथाबलम्" इति । इत्थञ्च वातादीनां रौक्ष्यादिगुणवृद्ध्या जनिताध्मानादिभिर्लिङ्गै रौक्ष्यादीनां वृद्ध्यनुमानेनैव वातादीनामपि वृद्ध्यनुमानं सिध्यति तत्तद्गुणसमुदायविशिष्टो हि वातादिः न त्वतिरिक्त इति । उक्तञ्च महारोगाध्यायोक्तकर्म्माणि प्रतिसंस्कृत्य—"आध्मानस्तम्भरौक्ष्यस्फुटनविमथनक्षोभकम्पप्रतोदाः, कण्ठोद्ध्वंसावसादौ श्रमकविलपनं स्रंसशूलप्रभेदाः । पारुष्यं कर्णनादो विषयपरिणतिभ्रंशदृष्टिप्रमोहाः, विस्पन्दोद्वेष्टनानि ग्लपनमशयनं ताड़नं पीड़नञ्च ॥ नामोन्नामौ विषादो भ्रमपरिपतनं जृम्भणं रोमहर्षौ, विक्षेपाक्षेपशोषग्रहणशुषिरता च्छेदनं वेष्टनञ्च । वर्णः श्यावोऽरुणो वा तृड़पि च महती स्वापविश्लेषसंज्ञा, विद्यात् कर्म्माण्यमूनि प्रकुपितमरुतः स्यात् कषायो रसश्च ॥ विस्फोटाम्लकधूमकाः प्रलपनं स्वेदस्त्रतिमूर्च्छनं, दौर्गन्ध्यं दरणं मदो विसरणं पाकोऽरतिस्तृड्भ्रमौ । उष्मातृप्तितमःप्रवेशदहनं कट्वम्लतिक्ता रसाः, वर्णः पाण्डुविवर्ज्जितः कुथितता कर्म्माणि पित्तस्य वै ॥ तृप्तिस्तन्द्रा गुरुता स्तैमित्यं कठिनता मलाधिक्यम् । स्नेहापक्त्युपलेपाः शैत्यं कण्डूः प्रसेकश्च ॥ शोफो निद्राधिक्यं द्वावेव रसौ पटुस्वादू । वर्णः श्वेतोऽलसता कर्म्माणि कफस्य जानीयात् ॥" इति । एवमपि महारोगाध्याये वक्ष्यन्ते । नन्वेतैः प्राकृतहानिवृद्धिलक्षणैः किं स्यादिति ? अत आह—दोषाणामित्यादि । अर्थादेतैरविकारजैः कर्म्मभिर्दोषाणां प्रकृतिः स्वभावेनावस्था परीक्ष्यते परीक्षकैः । एतैः क्षीणलक्षणैर्दोषाणां हानिः परीक्ष्यते । एतैश्च वृद्धिलक्षणैर्दोषाणां वृद्धिः परीक्ष्यतेऽनुमानादिभिः ॥ ४६ ॥

गङ्गाधरः—अध्यायार्थसंग्रहायाह—तत्रेत्यादि । त्रयः शोथा इत्यादिना

नियतमिति प्रतिनियतम् । यद्यस्य प्रकृतिलक्षणं तद् वृद्धं सत् तस्यैव वृद्धिलक्षणमित्यर्थः, अन्ये तु निश्चितमित्याहुः ॥ ४८ ॥

चक्रपाणिः—संग्रहे शोथानां साध्यतामिति स्नेहौष्ण्यमर्द्दनाभ्याञ्च प्रणश्येत्, स च वातिकम

विधिभेदं विकाराणां त्रिविधं बोध्यसंग्रहम्।
प्राकृतं कर्म्म दोषाणां लक्षणं हानिवृद्धिषु॥

शोथानां सङ्ख्या। छेदनेत्यादिना आगन्तुशोथानां निमित्तम्। ते पुनरित्यादिना च रूपं बहुवचनात्। व्रणवन्धेत्यादिना क्रियासूत्रञ्च। निजा इत्यादिना दोषजशोथानां निमित्तं सामान्यत उक्तम्। अयन्त्वत्र विशेष इत्यादिना दोषविशेषवातशोथानां निमित्तं बहुवचनात्। ( प्रदीप्तस्त्वित्यादिना सम्प्राप्तिम् )। स क्षिप्रोत्थानेत्यादिना रूपञ्च। उष्णतीक्ष्णेत्यादिना पित्तशोथानां निमित्तम्। प्रकुपितमित्यादिना सम्प्राप्तिम्। स क्षिप्रेत्यादिना रूपञ्च। गुरुमधुरेत्यादिना कफशोथानां निमित्तम्। प्रकुपित इत्यादिना सम्प्राप्तिम्। स कृच्छ्रेत्यादिना रूपञ्च। यथास्वेत्यादिना द्वन्द्वजशोथानां निमित्तं रूपञ्च। पुनर्यथास्वेत्यादिना सान्निपातिकशोथानां निमित्तं रूपञ्चोक्तम्। प्रकृतिभिरित्यादिना पुनः सङ्ख्या। बहुवचनादुक्ता बोध्या बहुवचनाच्च। भवन्ति चात्रेत्यादिना वातादिजानां शोथानां पुनरधिकरूपञ्चोक्तमिति बोध्यम्। स्नेहोष्णमर्द्दनाभ्याञ्चेत्यादिकमपि ह्युपशयं बहुवचनाद्विद्यात्। यस्तु पादाभिनिर्वृत्त इत्यादिना तेषां तेषां विकाराणां वातादिजानां शोथानामसाध्यतावचनेन तदितरेषां साध्यता। तेषाञ्च न च साध्यता उक्ता। एतेन यस्तु स्नेहोष्णमर्द्दनाभ्यामित्याद्युपशयवचनं साध्यतापरतया व्याचष्टे तद् दूषितं भवति। छर्द्दिरित्यादिना तूपद्रवाश्च न साध्यतावचनेन बोध्याः। यस्येत्यादिना सम्पद्यते सुखीत्यन्तेन ऐकदेशिकांस्तांस्तान् पूर्व्वजान् प्राक् शोथरूपेण जातान् पश्चादुपजिह्वादिव्रणादिरूपेण भाविनः शोथान् निमित्तसम्प्राप्तिरूपसहितान् चैकैकश्लोकेन त्रिभिस्तु रोहिणीरोगञ्चोक्तवान्। इति यथोक्तक्रमेण सङ्ख्यानिमित्तरूपाणि बोध्यानि न तु यथाक्रमेण। सन्ति चैवेत्यादिनाऽधिमांसभेदम्। विकारनामाकुशल इत्यादिना त्रिविधो बोध्यसंग्रहः। विकारविज्ञानार्थं बोध्यानां प्रकृत्यधिष्ठानान्तरसमुत्थान विशेषाणां संग्रहः। उत्साहेत्यादिना वातादीनां प्राकृतं कर्म्म।

इत्युक्तं ज्ञेयम्; न चेति न च साध्यताम्, यथा—"यस्तु पादाभिनिर्वृत्तः" इत्यादि। तेषामित्युपर्य्युपजिह्वादीनाम्। शोथान् पूर्व्वजानित्यभिदधानः, उपजिह्वादिषु पूर्व्वं शोथो भवति, पश्चादुपजिह्वादिरोगत्वमिति दर्शयति, अत एव "आशु सञ्जनयेत् शोथम्" इत्युक्त्वा "जायतेऽस्योप-

वीतमोहरजोदोष-लोभमानमदस्पृहः ।
व्याख्यातवांस्त्रिशोथीये रोगाध्याये पुनर्व्वसुः ॥४७॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने त्रिशोथीयो नाम अष्टादशोऽध्यायः ॥ १८ ॥

वाते पित्ते इत्यादिना दोषाणां हानिवृद्धिषु लक्षणम् । एतत् सर्व्वं व्याख्यातवानित्यस्य कर्म्मपदम् ॥ ४७ ॥

अध्यायं समापयति—अग्नीत्यादि । पूर्व्ववद्व्याख्येयम् । इति त्रिशोथीयाध्यायः । इतिशब्दः समाप्तिवचनः ।

इति वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ सूत्रस्थानीयः अष्टादशाध्यायत्रिशोथीयजल्पाख्या अष्टादश शाखा ॥ १८ ॥

जिह्विका" इत्युक्तम् । बोध्यो बोद्धव्यो विकारप्रकृत्यादिः, तस्य त्रिविधं संग्रहमिति, "तस्माद् विकारप्रकृतीः" इत्याद्युक्तं त्रयम् ॥ ४७ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-व्याख्यायां त्रिशोथीयो नाम अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः ।

अथातोऽष्टोदरीयमध्यायं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥१॥

इह खल्वष्टावुदराणि । अष्टौ मूत्राघाताः । अष्टौ क्षीरदोषाः । अष्टौ रेतोदोषाः ।०। सप्त कुष्ठानि । सप्त पिड़काः । सप्त वीसर्पाः ।०। षड़तीसाराः । षडुदावर्त्ताः ।०। पञ्च गुल्माः । पञ्च प्लीहदोषाः । पञ्च कासाः । पञ्च श्वासाः । पञ्च हिक्काः । पञ्च तृष्णाः । पञ्च च्छर्द्दयः । पञ्च भक्तस्यानशनस्थानानि । पञ्च शिरोरोगाः । पञ्च हृद्रोगाः । पञ्च पाण्डुरोगाः । पञ्चोन्मादाः ।०। चत्वारोऽपस्माराः । चत्वारोऽक्षिरोगाः । चत्वारः

गङ्गाधरः—अथ क्षुद्रव्याधीनां व्यवस्थाकरणं स्थूलव्याधिवदुक्तम्, ननु स्थूलव्याधीनां व्यवस्थाकरणञ्च च किं तावदित्याकाङ्क्षायां त्रिशोथीयानन्तरमष्टोदरीयमाह—अथात इत्यादि । अध्यायादौ अष्टावुदराणीति वचनस्यार्थमादाय अष्टोदरमिति पदमधिकृत्य कृतोऽध्याय इत्यष्टोदरीयस्तम् इति सर्व्वं प्राग्वत् व्याख्यातव्यम् ॥ १ ॥

गङ्गाधरः—उदररोगस्यापि शोफरूपत्वेन त्रिशोथीयानन्तरं प्रथममेकादिसङ्ख्याकसन्न्यासादीन् विहायाष्टसङ्ख्याकोदरस्य ग्रहणं बोध्यम् । तत्सामीप्यात् सप्तादिसङ्ख्यकव्याधीनामपि निर्देशश्चात्रोद्देश इति । सप्त कुष्ठानीति प्राधान्यात् महाकुष्ठानि । भक्तस्यानशनस्य स्थानानि आकररूपाणि अरोचककारणम्

चक्रपाणिः—पूर्व्वाध्याये उक्तं 'व्यवस्थाकरणं तेषां यथास्थूलेषु संग्रहः' इति, तदनु जिज्ञासायामष्टावुदराणीत्यादि यथास्थूलं संग्रहोऽभिधीयते । अष्टोदरीय इति चार्थपरसंज्ञा, उदराभिधानमादौ पूर्व्वाध्यायोक्तशोथसामान्यात्, उदराणि उत्सेधसामान्यात् शोथप्रभेदा एव ॥ १ ॥

चक्रपाणिः—इहैकादिसङ्ख्यापरित्यागादष्टसंग्रहणमादौ कृतम्, अष्टसङ्ख्याया बहुत्वेन प्राधान्यात् । विंशतिसङ्ख्या मेहादीनाम् ऊनविंशत्यध्यायसङ्ख्यानुपूर्व्वीप्रसङ्गभावान्न कृता प्रथमं निर्देशः ; यद्यपि चिकित्सिते अष्टादश कुष्ठानि, तथापीह महाकुष्ठाभिप्रायेण सप्तोच्यते । षडुदावर्त्ता इत्यत्र न वेगान्धारणीयोक्तन्यायेन वातादिनिरोधजात्वं उदावर्त्ता इहोच्यन्ते । गुल्मैर्व्याख्याता इति

कर्णरोगाः । चत्वारः प्रतिश्यायाः । चत्वारो मुखरोगाः । चत्वारो ग्रहणीदोषाः । चत्वारो मदाः । चत्वारो मूर्च्छायाः । चत्वारः शोषाः । चत्वारि क्लैव्यानि ।०। त्रयः शोथाः । त्रीणि किलासानि । त्रिविधं लोहितपित्तम् ।०। द्वौ ज्वरौ । द्वौ व्रणौ । द्वावायामौ । द्वे गृध्रस्यौ । द्वे कामले । द्विविधमामम् । द्विधा वातशोणितम् । द्विविधान्यर्शांसि ।०। एक ऊरुस्तम्भः । एकः संन्यासः । एको महागदः ।०। विंशतिः क्रिमिजातयः । विंशतिः प्रमेहाः । विंशतिर्योनिव्यापदः ।०। इत्यष्टचत्वारिंशद्रोगाधिकरणान्यस्मिन् संग्रहे समुद्दिष्टानि । तानि यथोद्देशमभिनिर्दिश्यन्ते ॥ २ ॥

अष्टावुदराणीति—वातपित्तकफसान्निपातप्लीहबद्धच्छिद्रोदकोदराणीति ।०। अष्टौ मूत्राघाता इति—वातपित्तकफसन्निपाताश्मरीशर्कराशुक्रशोणितनिमित्ता इति ।०। अष्टौ क्षीरदोषा इति—वैवर्ण्यं वैगन्ध्यं वैरस्यं पैच्छिल्यं फेनसङ्घातो रौक्ष्यं गौरवमतिस्नेहश्चेति ।०। अष्टौ रेतोदोषा इति—तनु शुष्कं फेनिलमश्वेतं पूत्यतिपिच्छिलमन्यधातूपहितमवसादि चेति ॥ ३ ॥

इत्यर्थः । कारणस्य कार्य्यरूपत्वेनाभिनिर्वृत्त्या पञ्चारोचका इति लभ्यत्वान्न रोगाधिकरणे कारणवचने दोषः । इत्यष्टचत्वारिंशत् स्थूलरोगाधिकरणानि । क्षुद्ररोगाधिकरणान्यप्यनया दिशा उद्देष्टव्यानि बुद्धिमता भवन्ति ॥ २ ॥

गङ्गाधरः—यथोद्देशं रोगसङ्ख्या निर्द्दिशति अष्टावुदराणीतीत्यादि । एषां याद्रूप्येण यया सङ्ख्यया उपदेशे चिकित्सायामुपयोगितास्तिताद्रूप्येण प्रभेदासङ्ख्योपदर्शनं बोध्यम् । तेन द्वन्द्वजादीनां चिकित्सामेलकेन प्रयोजनसिद्धेर्न

यथा गुल्मभेदस्तथापीह । पञ्च तृष्णेति संभोजनस्नेहादिजनितानामपि वातादिजन्य एवावरोधात्,

सप्त कुष्ठानीति—कपालोडुम्बरमण्डलर्ष्यजिह्वपुण्डरीक-सिध्मकाकणानीति ।०। सप्त पिड़का इति—शराविका कच्छ-पिका जालिनी सर्षप्यलजी विनता विद्रधी चेति ।०। सप्त विसर्पा इति—वातपित्तकफाग्निकर्द्दमकग्रन्थिसन्निपाताख्याः ॥ ४ ॥

षड़तीसारा इति—वातपित्तकफसन्निपातभयशोकजाः ।०। षडुदावर्त्ता इति—वातमूत्रपुरीषशुक्रच्छर्द्दिक्षवथुजाः ॥ ५ ॥

पञ्च गुल्मा इति—वातपित्तकफसन्निपातशोणितजाः। पञ्च प्लीहदोषा इति—गुल्मैर्व्याख्याता भवन्ति ।०। पञ्च कासा इति—वातपित्तकफक्षतक्षयजाः। पञ्च श्वासा इति—महोर्द्ध-च्छिन्नतमकक्षुद्राः ।०। पञ्च हिक्का इति—महती गम्भीरा व्यपेता क्षुद्रा चान्नजा च। पञ्च तृष्णा इति—वात-पित्तामक्षयोपसर्गात्मिकाः ।०। पञ्च छर्द्दय इति—द्विष्टान्न-संयोगवातपित्तकफसन्निपातोद्रेकात्मिकाः ।०। पञ्च भक्तस्यान-शनस्थानानीति—वातपित्तकफद्वेषायासाः ।०। पञ्च शिरोरोगा

द्वन्द्वजस्यादिना उपदेशः। सान्निपातिकस्य विकृतिविषमारम्भाच्चिकित्सा विशेषोपदेशार्थं पृथगभिधानमिति सर्व्वत्र बोध्यम्। उदराध्यायेऽष्टोदराणां पृथक् लक्षणानि दर्शयितव्यानि ॥ ३ ॥

गङ्गाधरः—सप्त कुष्ठानीत्यादि। सप्त कुष्ठानि लक्षणतो वक्ष्यन्ते। सप्त पिड़काः कियन्तःशिरसीये दर्शिताः। षडुदावर्त्ता नवेगानधारणीये दर्शितवेग-धारणलक्षणैर्बोध्याः ॥ ४।५ ॥

गङ्गाधरः—पञ्च गुल्मा इत्यादि। पञ्च प्लीहदोषा इति गुल्मैर्व्याख्याता इति—वातपित्तकफसन्निपातशोणितजा इति। प्लीहशब्देनात्रोपलक्षणात् यकृद्दोषा अपि पञ्च तथैव बोध्याः। कियन्तःशिरसीये शोफसामान्यादुक्तः प्लीहदोषोऽत्र सङ्ख्याया व्यवस्थाकरणार्थमुपदिष्टः। पञ्च शिरोरोगा इत्यादि।

स्थानमिव स्थानं कारणं, तेन अनशनस्थानान्यरोचकानीत्यनेन कारणेन कार्य्याण्यरोचकानि

इति—पूर्व्वोद्देशमभिसमस्य वातपित्तकफसन्निपातक्रिमिजाः ।०। पञ्च हृद्रोगा इति—शिरोरोगैर्व्याख्याताः । पञ्च पाण्डुरोगा इति—वातपित्तकफसन्निपातमृज्जाः ।०। पञ्चोन्मादा इति—वातपित्तकफसन्निपातागन्तुनिमित्ताः ॥ ६ ॥

चत्वारोऽपस्मारा इति—वातपित्तकफसन्निपातनिमित्ताः ।०। चत्वारोऽक्षिरोगाश्चत्वारश्च कर्णरोगाश्चत्वारः प्रतिश्यायाः चत्वारो मुखरोगाश्चत्वारो ग्रहणीदोषाश्चत्वारो मदाश्चत्वारो मूर्च्छाया इत्यपस्मारैर्व्याख्याताः ।०। चत्वारः शोषा इति—साहससन्धारणक्षयविषमाशनजाः ।०। चत्वारि क्लैव्यानीति—वीजोपघातात् ध्वजभङ्गाज्जरायाः शुक्रक्षयाच्च ॥ ७ ॥

त्रयः शोथा इति—वातपित्तश्लेष्मनिमित्ताः । त्रीणि किलासानीति रक्तताम्रशुक्लानि ।०। त्रिविधं लोहितपित्तमिति उर्द्ध्वभागमधोभागमुभयभागञ्च ॥ ८ ॥

द्वौ ज्वरावित्युष्णाभिप्रायः शीतसमुत्थः, शीताभिप्रायश्चोष्ण-

पूर्व्वोद्देशमभिसमस्येति कियन्तःशिरसीयोक्तानां पञ्चशिरोरोगाणामुद्देशमभि लक्ष्यीकृत्य समस्याद्धावभेदकाद्यन्तर्भावेण संक्षिप्य । शिरोरोगैरिति वातपित्तकफसन्निपातक्रिमिजा इत्यर्थः ॥ ६ ॥

गङ्गाधरः—चत्वारोऽक्षिरोगा इत्यादि । अपस्मारैर्व्याख्याता इति अक्षिरोगकर्णरोगप्रतिश्यायमुखरोगग्रहणीदोषमदमूर्च्छानां सप्तानां चतुश्चतुर्व्विधत्वमपस्मारवत् वातपित्तकफसन्निपातजत्वभेदादित्यर्थः ॥ ७।८ ॥

गङ्गाधरः—द्वौ ज्वरावित्यादि । शीतसमुत्थ इत्यनेनैवोष्णाभिप्रायत्वस्य लाभेऽपि यत् पुनरुष्णाभिप्राय इत्युक्तं तन्निदानविपरीतज्वरितस्य भवतीति

गृह्यन्ते ; तेन संग्रहे कारणाभिधानमन्याय्यमिति न भवति । पूर्व्वोद्देशमभिसमस्येति कियन्तःशिरसीये विस्तरोक्तान् संक्षिप्य, किंवा कियन्तःशिरसीय एव 'अर्द्धावभेदको वा स्यात्' इत्यादि यदुद्देशमभिसमस्य परित्यज्य शिरस्येव रुजारूपा ये पञ्चोच्यन्ते । साहसं सन्धारणं क्षयो विषमाशनमिति पाठे कारणेन कार्य्यस्य चतुर्व्विधः शोष उच्यते । द्वौ ज्वरावित्यादौ शीतसमुत्थेनैव

समुत्थः ।०। द्वौ व्रणाविति—निज आगन्तुश्च ।०। द्वावायामौ इति—बाह्यश्चाभ्यन्तरश्चेति ।०। द्वे गृध्रस्याविति—वाताद् वातकफाच्च। द्वे कामले इति—कोष्ठाश्रया शाखाश्रया च ।०। द्विविधमाममित्यलसको विसूचिका च। द्विविधं वात-शोणितमित्युत्तानं गम्भीरञ्च ।०। द्विविधान्यर्शांसीति—शुष्काण्यार्द्राणि च ॥ ९ ॥

एक ऊरुस्तम्भ इत्यामत्रिदोषसमुत्थः ।०। एकः संन्यास इति—त्रिदोषात्मको मनःशरीराधिष्ठान इति ।०। एको महागद इत्यतत्त्वाभिनिवेशः ॥ १० ॥

विंशतिः क्रिमिजातय इति—यूकाः पिपीलिकाश्च द्विविधा

ज्ञापनार्थम्, एवं शीताभिप्रायश्चोष्णसमुत्थ इत्यत्रापि बोध्यम्। किंवा शीत-समुत्थ इत्यत्र किं शीतस्य समुत्थस्य पित्तस्यापि उष्णाभिलाषजनकत्वमस्तीति तद्वारणाय शीतसमुत्थज्वरस्य लक्षणविधया विशेषणमुक्तमुष्णाभिप्राय इति। एवमुष्णसमुत्थस्य लक्षणविधया विशेषणं शीताभिप्राय इति बोध्यम्।

द्विविधमाममिति त्रिविधकुक्षीयविमानेऽन्नविषाख्यस्यामस्याऽन्तर्भावात्। अन्ये तु अन्नविषस्य विषान्तरत्ववदत्र न ग्रहणं विषत्वादित्याहुः ॥ ९ ॥

गङ्गाधरः—एकः संन्यास इत्यादि। मनःशरीराधिष्ठान इति युगपदुभयाश्रयः एको महागद इति अतत्त्वाभिनिवेश इति लक्षणः सत्त्वसांसारिकदुःखरूपः कामक्रोधादिसकलमानसव्याधिरतत्त्वाभिनिवेशत्वसामान्यादेक एव वर्ण्यते। महागदत्वञ्चास्य प्रायेणापहार्य्यत्वात् ॥ १० ॥

गङ्गाधरः—विंशतिरित्यादि। विंशतिः क्रिमिजातय इति जातिभेदेनोप-

उष्णाभिप्रायता लब्धा, यतः निदानविपरीतमिच्छति ज्वरी, तत्राह उष्णाभिप्रायताविशेषणं शीतसमुत्थत्वेन दैहिकस्यापि ज्वरस्य शीतसमुत्थत्वनिरासार्थम्, एवं शीताभिप्रायेऽपि वक्तव्यम्। द्विविधमाममिति आमविषस्य त्रिविधकुक्षीये वक्ष्यमाणस्यालसक एवान्तर्भावात्, अन्ये त्वामविषस्य विषत्वेनान्यविषतन्त्रविषयत्वादिहाग्रहणमिति ब्रुवते। अतत्त्वाभिनिवेशो मानसो विकारः, स च सर्वसंसारिदुःखहेतुतया गद इत्युच्यते ॥ ९—१० ॥

चक्रपाणिः—क्रिमीणां संज्ञा प्रायो लक्ष्या ज्ञातव्या। पिपीलिका क्रिमयः। दोषस्य सूक्ष्मेण

बहिर्मलजाः ।०। केशादा लोमादा लोमद्वीपाः सौरसा औडुम्बरा जन्तुमातरश्चेति षट् शोणितजाः ।०। अन्त्रादा उदरावेष्टा हृदयचरारचुरवो दर्भपुष्पाः सौगन्धिका महागुदाश्चेति सप्त कफजाः ।०। ककेरुका मकेरुका लेलिहाः सशूलसौसुरादाश्चेति पञ्च पुरीषजा इति ॥ ११ ॥

विंशतिः प्रमेहा इति— उदकमेहश्चेक्षुवालिकारसमेहश्च सान्द्रमेहश्च सान्द्रप्रसादमेहश्च शुक्लमेहश्च शुक्रमेहश्च शीतमेहश्च शनैर्मेहश्च सिकतामेहश्च लालामेहश्चेति दश श्लेष्मनिमित्ताः ।०। क्षारमेहश्च कालमेहश्च नीलमेहश्च लोहितमेहश्च मञ्जिष्ठामेहश्च हरिद्रामेहश्चेति षट् पित्तनिमित्ताः ।०। वसामेहश्च मज्जमेहश्च हस्तिमेहश्च मधुमेहश्चेति चत्वारो वातनिमित्ताः । इति विंशतिर्मेहाः ॥ १२ ॥

विंशतिर्योनिव्यापद इति —वातिकी पैत्तिकी श्लैष्मिकी सान्निपातिकी चेति चतस्रो दोषजाः ।०। दोषदूष्यसंसर्गप्रकृतिनिर्देशैरवशिष्टाः षोडश निर्दिश्यन्ते ।०। रक्तयोनि

देशस्तु बहिर्मलशोणितकफपुरीषजत्वभेदोपदेशेन चिकित्सासिद्धौ क्रिमिप्रकारदर्शनेनापि मलशोणितादिजन्यत्वविज्ञानार्थः । पिपीलिका इति लिख्याः । बहिर्मलजा इत्यादि स्थानभेदकथनं चिकित्साविशेषार्थम् ॥ ११ ॥

गङ्गाधरः— विंशतिः प्रमेहा इति विवृणोति । उदकमेहश्चेत्यादि । उदकमेहादिनाम्नोपदेशः कफजत्वादिना चोपदेशश्चिकित्साविशेषार्थं साध्यत्वादिज्ञानार्थञ्च ॥ १२ ॥

गङ्गाधरः—विंशतिर्योनिव्यापद इति । वातिकीत्यादिभेदेन चतुर्विधत्वोपदेशस्तु वातादिदोषहरचिकित्सार्थम् । दोषेत्यादि ।—दोषस्य वातादे रक्तादिना दूष्येण संसर्गः दोषदूष्यसम्बन्धः । प्रकृतिर्हेतुस्तैर्निर्देशा विस्तरोक्तयः

रक्तादिना संसर्गो दोषदूष्यसम्बन्धः ; प्रकृतिः कारणं, तत्र दोषदूष्यसंसर्गनिर्देशेन रक्तयोन्यादयः,

श्चारजस्का चाचरणा चातिचरणा च प्राक्चरणा चोपप्लुता च परिप्लुता चोदावर्त्तिनी च कर्णिनी च पुत्रघ्नी चान्तर्म्मुखी च सूचीमुखी च शुष्का च वामिनी च षण्डयोनिश्च महायोनिश्चेति विंशतिर्योनिव्यापदो भवन्ति ।०। इति केवलश्चायमुद्देशो यथोद्देशमभिनिर्द्दिष्टो भवति ॥ १२ ॥

सर्व्व एव निजा विकारा नान्यत्र वातपित्तकफेभ्योऽभि-

तद्यथा। एतेन रक्तयोन्यादीनां षोड़शानां दोषदूष्यसंसर्गं निदानञ्चावेक्ष्य चिकित्सा कर्त्तव्येति सूचितम्। केवलश्चेत्यादि। अयमष्टावुदराणीत्यादिः केवलः कृत्स्न उद्देशः। कश्चिदत्र मदात्ययरोगस्य मदरूपत्वेन मदेऽन्तर्भावं व्याचष्टे, तन्न। मदात्ययो हि मद्यपानात्ययः। मदस्तु वातादिदोषकृतो विविधशोणितीये वक्ष्यन्ते। वस्तुतस्तु पानात्ययपरमदपानविभ्रमशूलाम्लपित्तस्वरभेदादीनामनुक्तानां संग्रहार्थं व्यवस्थाकरणमिति वचनं पूर्व्वाध्याये उक्तम्। एषामुदरादीनां प्राधान्येन चिकित्सोपयोगिभेदकधर्म्मेण संख्या उक्ताः। प्रकारान्तरेण तु भेदकधर्म्मान्तरेण चिकित्साप्रकारान्तरख्यापनार्थं स्वतन्त्रे तन्त्रान्तरे च यः संख्याभेदः कृतः सोऽप्यनेनाविरुद्धो बोध्यः। स च प्रतिरोगव्याख्याने दर्शयिष्यामः ॥ १२ ॥

गङ्गाधरः—अथ शूलाम्लपित्तस्वरभङ्गपानात्ययादीनामनुक्तानां तथा त्रिशोथीयेऽसंख्याध्याये उक्तानां महारोगाध्याये च वक्ष्यमाणानां रोगाणां निजानामुपसंहारार्थमाह सर्व्व एवेत्यादि। सर्व्वे इत्युक्ता अनुक्ता वक्ष्यमाणाश्च सर्व्वे एव निजा दोषजा विकारा वातपित्तकफेभ्योऽन्यत्र हेतौ नाभिनिर्व्वर्त्तन्ते। यदि चागन्तवोऽपि पश्चाद्दोषसम्बन्धेन व्यभिचरन्ति तथाप्यागन्तौ दोष-

प्रकृतिनिर्देशेन प्राक्चरणाद्यो योनिव्यापत्तिविकित्सिते वीक्ष्य व्याकर्त्तव्याः। अत्र मदा एव मदात्ययरूपतां यान्तीति कृत्वा मदात्ययाः पृथङ्नोक्ताः। इह चोक्तानां रोगाणां यद्यपि प्रकारान्तरेण अन्यथापि संख्या स्यात्, तथाहि—अष्टौ ज्वराः, द्वावुन्मादौ निजागन्तुकभेदेनेत्यादि, तथापि प्रधानविवक्षया एत एव भेदा गृहीताः। प्राधान्यञ्च स्वाधिकारे रोगाणामनुसरणीयम् ॥११—१२॥

चक्रपाणिः—सम्प्रत्युदरादीनां तथा वक्ष्यमाणानां महारोगे तथानुक्तानामिह सर्व्वे रोगाणां निजानां वातपित्तश्लेष्माण एव कारणं ... रोगाणां चिकित्सोपयोगि सूत्रं दर्शयितुमाह—सर्व्वे इत्यादि।—सर्व्वे इत्युक्ता अनुक्ताश्च। यद्यप्यागन्तु

निर्व्वर्त्तन्ते । यथा हि शकुनिः सर्व्वा दिशः परिपतन् स्वां छायां नातिवर्त्तते, तथा स्वधातुवैषम्यनिमित्ताः सर्व्वे विकारा वातपित्तकफान् नातिवर्त्तन्ते । वातपित्तश्लेष्मणां तु खलु स्थानसंस्थानप्रकृतिविशेषान् समीक्ष्य तदात्मकानपि सर्व्वविकारांस्तांस्तानेवोपदिशन्ति बुद्धिमन्तः ॥ १४ ॥

प्रत्यनीकचिकित्सा न कार्य्येति ज्ञापनाय निजा इत्युक्तम् । अत्र दृष्टान्तमाह यथा हीत्यादि । शकुनिः पक्षी । सुश्रुतेऽप्युक्तं—"सर्व्वेषाञ्च व्याधीनां वातपित्तश्लेष्माण एव मूलं तल्लिङ्गत्वाद्दृष्टफलत्वादागमाच्च । यथा हि कृत्स्नं विकारजातं विश्वरूपेणावस्थितं सत्त्वरजस्तमांसि न व्यतिरिच्य वर्त्तन्ते, एवमेव कृत्स्नं विकारजातं विश्वरूपेणावस्थितमव्यतिरिच्य वातपित्तश्लेष्माणो वर्त्तन्ते" इति । तथा स्वधातुवैषम्यनिमित्ता इति स्वपदेन वाताद्यन्यतमज्वरादीनां पित्तादिव्यतिरिक्तत्वं ख्यापितम् । धातुपदेन बाह्यहेतुव्यायामादिकट्वादिगुरुमधुरादीनां बाह्यहेतूनां निरासः । उक्तं हि "जायन्ते हेतुवैषम्याद्विषमा देहधातवः" इति । वैषम्यपदेन साम्यनिमित्तानामुत्साहादीनां दर्शनादीनां स्नेहादीनाञ्च निरासः । निमित्तपदेन न पश्चात् धातुवैषम्यजनकानामागन्तूनां दण्डाद्यभिघातादीनां निरासः । न हि दण्डाद्यभिघातेन जाताः क्षतादयः पूर्व्वं धातुवैषम्यनिमित्ता भवन्तीति । एवं सर्व्वे विकारा इति ज्वरादिरूपा न तु वातादिवैषम्यरूपाः । इति च निमित्तपदेन ख्यापितम् ।

ननु प्लीहोदरादयः पूर्व्वमेवागन्तुं विनैव स्वधातुवैषम्यनिमित्ताः पृथङ्निर्दिष्टाः किं दोषागन्तुभ्यामतिरिच्यन्ते इति ? अत आह वातपित्तेत्यादि । प्लीहादयो हि पूर्व्वं वाताद्यविनाभूता भवन्ति । वातेत्यादि । वातादीनां स्थानं रसादि पक्वाशयादि, संस्थानं लिङ्गम्, प्रकृतिः समवायिकारणं रौक्ष्यादिगुणः, तेषां विशेषान् प्रभेदानभिसमीक्ष्य तदात्मकान् धातुस्थान-

अपि दोषसम्बन्धो न व्यभिचरति, तथाप्यागन्तौ रोगे दोषापेक्षया न चिकित्सेत्यागन्तुव्युदासार्थं निजा इत्युक्तम् । स्वशब्देनागन्तुकृतं धातुवैषम्यं निराकरोति ; ननु यदि वातादिजन्या एव सर्व्वविकारास्तत् किमर्थमन्यथाप्युदरादयः प्लीहजन्यादिभिः निर्दिश्यन्त इत्याह—वातपित्तेत्यादि । —स्थानं रसादयो वस्त्यादयश्च, संस्थानमाकृतिर्लक्षणमिति यावत्, प्रकृतिः कारणम्, एषां विशेषानभिसमीक्ष्य तांस्तानुपदिशन्ति "अष्टावुदराणि" इत्येवमादुपदिशन्ति ; तदात्मकानपीति

भवन्तश्चात्र—

**स्वधातुवैषम्यनिमित्तजा ये विकारसङ्घा बहवः शरीरे।**
**न ते पृथक् पित्तकफानिलेभ्य आगन्तवस्त्वेव ततो विशिष्टाः॥**

संस्थानप्रकृत्यात्मकत्वेन तांस्तान् वातादिजानेवोदरादीन् सर्व्वविकारान बुद्धिमन्त उपदिशन्ति। वातपित्तकफसन्निपातप्लीहवद्धच्छिद्रोदकोदराणीत्यष्टावुदराणीति एवमादीन्। स्थानविशेषेण नाम रक्तगुल्मादुपदेशः। संस्थानविशेषणोपदेशस्तु इक्षुरसमेहादिव्यपदेशः। प्रकृतिविशेषेण व्यपदेशस्तु प्लीहोदरादीत्यन्ये। तन्न। स्थानविशेषत्वात् प्लीहादेः। परन्तु शीतज्वर उष्णज्वर इत्यादि रसज्वररक्तज्वरेत्येवमादिरूपेण। किन्तु वातादिहेतुलक्षणवशात् वातादिजा एव ते सर्व्वे रोगा बोध्या इति॥ १४॥

<u>गङ्गाधरः</u>—अत्राधिकार्थप्रदर्शनार्थमाह भवन्तश्चात्रेत्यादि। अत्रापि स्वधातुवैषम्यनिमित्तजा इति पूर्व्ववद्व्याख्येयम्, तत्र बहुव्रीहिः अत्र कर्म्मधारयः स्वधातुवैषम्यपदस्य निमित्तपदेन सह। ततो जनेड इति तु भावार्थः। प्रकरणात् बहव इति बहवो रोगास्ते च विकारसंघाः स्वस्वलक्षणरूपविकारसमूहवन्तः। एतद्विशेषणेन स्वस्वलक्षणस्यापि स्वधात्वात्मकत्वं ख्यापितम्। शरीरे इति पदं मानसव्याध्यागन्तुव्याधयोर्व्यवच्छेदार्थम्। पित्तकफानिलेभ्यो न पृथङ् नान्ये वर्त्तन्ते इत्यर्थः। अत्र पित्तस्यादावुपादानं छन्दोऽनुरोधात्। वाताद्यात्मका एव नान्यात्मकाः, यथा मृदात्मका एव घटादयः इति। आगन्तवस्तु ततो वातादिभ्यो विशिष्टा अन्ये एव।

वातादिजनितानपि। तत्र स्थानविशेषादुपदेशो यथा—ऊरुस्तम्भरक्तयोनिकामलाप्रभृतयः, संस्थानविशेषात् पिण्डिकागुल्मप्रभृतयः, प्रकृतिविशेषात् श्लेष्मप्लीहोदरप्रभृतयः। अन्ये तु व्याख्यानयन्ति—यतस्तानेवेति वातादिजानेवेति व्यपदिशन्ति, तदात्मकानपीति यथोक्ताष्टादिसंख्यायुक्तानपि, यद्यपि प्लीहादिकारणान्तरेण भिन्ना अपि रोगास्तथापि वातादिस्थानजन्यत्वेन तथा वातादिलक्षणयुक्तत्वेन तथा वातादिकारणजातत्वेन वातादिजा एव सर्व्वविकारा इति वाक्यार्थः॥ १४॥

<u>चक्रपाणिः</u>—अमुमेवार्थं श्लोकेनाह—स्वधात्वित्यादि।—स्वशब्दोऽयं वक्ष्यमाणशरीरापेक्षः, तेन शरीरधातुवैषम्यं गृह्यते, मानसन्तु प्रतिक्षिप्यते; धातवश्च न स्वरूपेण रोगकारणमिति वैषम्यपदं कृतम्। आगन्तवो हि रोगा अभिघातज्वराद्यो धातुवैषम्यजा भवन्ति, अतस्तद्व्युदासार्थं निमित्तपदम्, आगन्तुषु वैषम्यं विद्यमानमपि कारणत्वेन न व्यपदिश्यते अप्रधानत्वात्। किन्त्वागन्तुरेव व्युदासिप्रहारादिरत्र चिकित्साविशेषप्रयोजककारणं; निजे तु वैषम्यमेव चिकित्सा-

**आगन्तुरन्वेति निजं विकारं निजस्तथागन्तुमतिप्रवृद्धः ।**
**तत्रानुबन्धं प्रकृतिञ्च सम्यग् ज्ञात्वा ततः कर्म्म समाचरेत्तु ॥१५॥**

ननु कथं त्रयः शोथा भवन्ति वातपित्तश्लेष्मनिमित्तास्ते पुनर्द्विधा निजागन्तुभेदेनेति वचनेनागन्तोर्वाताद्यात्मकत्वं सङ्गच्छते इति ? अत आह—आगन्तुरित्यादि । निजमिति वातादिदोषवैषम्यरूपं पूर्व्वमागन्तुदण्डाद्यभिघातजनितो भूतादिजनितश्च, उत्तरकालं निजं वातादिदोषवैषम्यरूपमन्वेति । अतिप्रवृद्धश्चेत् बहुकालेन च शारीरप्रायो भवतीति बोध्यः । तथा निजः वातादिदोषजो व्याधिरतिप्रवृद्धः कालान्तरेणानुबन्धादतिबलवान् आगन्तुरत्र भूतादिकमन्वेति । तस्मादागन्तुरपि वाताद्यनुबन्धरूपात्मकत्वेनोत्तरकालं नातिवर्त्तते । ननु कामज्वरादीनां मानसव्याधीनां किमागन्तुकत्वम्, किं मानसत्वम् इति चेत् ? न । कामादीनां मानसव्याधित्वात् तज्जानां ज्वरादीनामागन्तुजत्वात् । ननु तत्रोत्तरकालं वातादिप्रत्यनीकं कर्म्म किं कर्त्तव्यमिति ? अत आह—तत्रेत्यादि । प्रकृतिं कामशोकादिकारणं वातादिकारणञ्च सम्यक् बलाबलत्वेन ज्ञात्वा । किंवा अनुबन्धमप्रधानम्, प्रकृतिं प्रधानम् । यदुक्तं "स्वतन्त्रो व्यक्तलिङ्गो यथोक्तसमुत्थानोपशमो भवत्यनुबन्ध्यः । तद्विपरीतोऽनुबन्ध इति" ॥ १५ ॥

प्रयोजकम् । 'निमित्तजाः' इति च स्वधातुवैषम्यपदस्य कर्म्मधारयत्वेन, बहुव्रीहिपक्षे त्वनर्थक एव स्यात् । विकारसङ्घा इत्याशावुदराणीत्यादयः । बहुवचनेनैव बहुत्वे लब्धे पुनः 'बहवः' इति वचनं बहुवचनस्य त्रित्वमात्रेणैव चरितार्थत्वनिषेधार्थम् । न ते पित्तकफानिलेभ्यः पृथगिति पित्तकफानिला एव ते तृष्णादिविशेषभाज इत्यर्थः ; इह पित्तमादौ कृतं छन्दोऽनुरोधात्, किंवा प्राधान्यानियमज्ञापनार्थं कृतम् । अत्र च धातुवैषम्यमात्रं विकारो नोक्तः, तस्य वातादिवैषम्यरूपत्वेन सिद्धत्वादेव ; यस्तु धातुवैषम्यविशेषो धातुवैषम्यजातो ज्वरादिरूपः, स इह शिष्यं प्रति विकृतवाताद्यभेदेन प्रतिपाद्यते । तत इति पूर्व्वोक्तविकारसङ्घात् । विशिष्टा इति पित्तकफानिलव्यतिरिक्ताः ।

सम्प्रति भिन्नयोर्निजागन्त्वोः सम्बन्धमाह—आगन्तुरित्यादि । निजं प्रथमसमुत्पन्नं विकारमागन्तुर्भूतादिजन्यो विकारोऽन्वेत्यनुगतो भवति, यथा दोषज एव ज्वरे उन्मादे वा पश्चाद् भूतनिवेशोऽपि भवति, तथागन्तुमुत्पन्नमभिघातजं ज्वरं भूतजमुन्मादं पश्चाद्धेतुमासाद्य निजोऽपि तत्र दोषलक्षणलक्षितो गदो भवति । 'अति प्रवृद्धः' इति वचनेन आगन्त्ववस्थायामपि निजदोषो वृद्धोऽस्त्येव, परं प्रवृद्धोऽसौ न भवति स्वलक्षणाकर्तृत्वेनेति दर्शयति । अपिशब्देन तु निजस्य निजेन तथागन्तोरप्यागन्तुना अनुबन्धः सूच्यते । अत्र निजागन्त्वोरनुकार्यमाह—तत्रेत्यादि । अनुबन्धः पश्चात्कालजातः, प्रकृतिर्मूलभूतः सम्यग्ज्ञात्वेति बलवत्त्वा-

तत्र श्लोकौ।

विंशकाश्चैककाश्चैव त्रिकाश्चोक्तास्त्रयस्त्रयः।
द्विकाश्चाष्टौ चतुष्काश्च दश द्वादश पञ्चकाः॥
चत्वारश्चाष्टका वर्गाः षट्कौ द्वौ सप्तकास्त्रयः।
अष्टोदरीये रोगाणामध्याये सम्प्रकीर्त्तिताः॥ १६॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने-
ऽष्टोदरीयो नाम एकोनविंशोऽध्यायः॥ १६॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोकाविति॥ १६॥

अध्यायं समापयति—अग्नीत्यादि। इति पूर्ववद्‌व्याख्येयम्। इत्यष्टोदरीयः। इतिशब्दः समाप्तिवचनः॥

इति वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ सूत्र-
स्थानीयैकोनविंशाष्टोदरीयाध्यायजल्पाख्या
एकोनविंशी शाखा॥ १९॥

बलवत्त्वादिना; किंवा, अनुबन्धोऽप्रधानः, प्रकृतिरनुबन्ध्यः प्रधानमित्यर्थः; यदुक्तं—"स्वतन्त्रो व्यक्तलिङ्गः स्वचिकित्सायथाप्रशमश्चानुबन्ध्योऽतो विपरीतस्त्वनुबन्धः" इति॥ १९।१६॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्वेददीपिकायां सूत्रस्थान-
व्याख्यायाम् अष्टोदरीयो नाम ऊनविंशोऽध्यायः॥ १९॥

## विंशोऽध्यायः ।

**अथातो महारोगाध्यायं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**चत्वारो रोगा भवन्ति, आगन्तुवातपित्तश्लेष्मनिमित्ताः । तेषां चतुर्णामपि च रोगाणां रोगत्वमेकविधं भवति रुक्सामान्यात् । द्विविधा पुनः प्रकृतिरेषामागन्तुनिजविभागात् ।**

गङ्गाधरः—अथ त्रिष्वध्यायेषु तावन्तः सामान्यतो वातादिजा उक्ताः । सम्प्रति परिशिष्टान् वातादेकजान् नानाव्याधीनुपदेष्टुं महारोगाध्यायमाह अथात इत्यादि । रोगस्यात्र महत्त्वमेकैकजनानात्वमिति महारोगाणां विज्ञानायाध्यायस्तं तथा इति कश्चित् । तन्न । संग्रहश्लोके सम्यक् महति रोगाणामध्याये तत्त्वदर्शिनेति स्ववचनविरोधात् । तेन रोगाणामध्यायः रोगाध्यायः । महांश्चासौ रोगाध्यायश्चेति महारोगाध्यायः । पूर्व्वाध्यायापेक्षयास्य महत्त्वादिति । सर्व्वं पूर्व्वाध्यायवद्व्याख्येयम् ॥ १ ॥

गङ्गाधरः—चत्वार इत्यादि । यद्यपि तिस्रैषणीये त्रयो रोगा इति निजागन्तुमानसा इत्युक्तं, तथापि मानसव्याधेरागन्तुत्वख्यापनार्थं पुनरिहोच्यते—आगन्तुरित्यादि इति कश्चित् । तन्न । वचनमिदं हि शारीरव्याध्यभिप्रायेण । तत्र हि शारीरमानसोभयाभिप्रायेण तद्वचनमुक्तम् । तेषामित्यादि । रुक्सामान्यादिति धातुवैषम्यसामान्यात् दुःखत्वसामान्याद्वा । प्रकृतिः समवायिकारणं स्वभावो वा । आगन्तुत्वं पूर्व्वमस्वयदोषानपेक्षत्वे सति दुःखजनकत्वम् । मानसव्याधिकामादिदण्डाद्यभिघाताभ्यां जातज्वरादेश्च जनकयोर्मानसदोषदण्डाद्यभिघातयोः पूर्व्वसम्बन्धापेक्षाशीलत्वाभावादागन्तुत्वम् । पूर्व्वाह्णादिकालिककफादेः शेषरात्र्यादिसम्बन्धापेक्षप्रकोपेण ज्वरादिव्याधिजनकत्वम् । न

चक्रपाणिः—पूर्व्वं सामान्येन वातादिजन्या उक्ताः, सम्प्रत्यवशिष्टान् केवलवातादिजन्यान् अभिधातुं महारोगाध्यायोऽभिधीयते । आगन्तोरुक्तस्यापि त्रिशोथीये पुनरिह विशेषेण लक्षणाद्यभिधानार्थमभिधानम् । प्रकृतिरिह स्वभावः । मन शारीरविशेषादिति आगन्तोरपि मनःशारीरव्याधिहानम, पूर्वं निजस्यापि ; आगन्तुग्रहणेन च मानसोऽपि कामादिगृ ह्यते ।

द्विविधञ्चैषामधिष्ठानं मनःशरीरविशेषात्। विकाराः पुनः

तु सञ्चयनिरपेक्षप्रकोपेणेति नागन्तुत्वम्। तिसृषणीये तु यदुक्तमागन्तुत्वं भूतविषवाय्वग्निसम्प्रहारादिसमुत्थ इत्यनेन तत्रागन्तुशब्देन विरुध्यते। तत्र हि मानसनिजागन्तुजास्त्रिधा व्याधय एवोक्ताः। अत्र तु निजागन्तुजावेव शारीरव्याध्यधिकाराभिप्रायेणागन्तुनिजभेदादित्युक्तौ। द्विविधञ्चैषामधिष्ठानं मनःशरीरविशेषादित्युक्तेर्न चानुपपत्तिः। शारीराणां कामभयादिजज्वरादीनां मनोऽधिष्ठानाभिप्रायात्। न तु मानसकामादिव्याधेरधिष्ठानाभिप्रायेण मनःशरीरविशेषादित्युक्तम्। अथापस्मारोन्मादादीनामुभयाश्रयत्वं तदा किं तेषां मानसत्वम्, किं शारीरत्वं? न तावन्मानसत्वं शारीरदोषजन्यत्वात् न वा शारीरत्वं मनःसंश्रयत्वात्। किन्तु मानसातिरिक्तशारीरातिरिक्तत्वाभ्यामत्र मानसव्याध्यतिरिक्तत्वमेवास्तीति। मानसव्याध्यतिरिक्तव्याध्यधिकारोऽयं रोगचतुष्क इति च नाशङ्क्यं चतुर्णामपि रोगाणां रोगत्वमेकविधं भवति रुक्सामान्यादिति वचनानुपपत्तेः। यदि चागन्तुवातपित्तकफनिमित्तानां चतुर्णां रोगत्वं रुक्सामान्यादेकविधत्वमन्यत्र रुक्सामान्यसत्त्वे कथं व्याहन्यत इति? तर्हि द्विविधञ्चैषामधिष्ठानं मनःशरीरविशेषादित्यत्र मनःशरीरविशेषादित्युक्तापत्तिः स्यादिति कश्चित्। तन्न। तत्र केवलमानसव्याधेरनधिकरणत्वाभिप्रायेणैवोक्तं—चत्वारो रोगा भवन्तीत्यादि। एषां चतुर्णान्तु द्विविधमधिष्ठानं शारीराभिप्रायेण मनःशरीरविशेषादित्युक्तम्। यद्यप्यपस्मारोन्मादादेरुभयाश्रयत्वं तथाप्यपस्मारोन्मादाद्यारम्भकदोषस्य वातादेः प्राक्सत्त्वाल्पभावे रजस्तमसोराधिक्ये अपस्मारोन्मादादिजनकत्वात् शारीरत्वेऽपि क्षीणसत्त्वमानसत्वप्राधान्यान्मनस एवाधिष्ठानत्वात्। अधिष्ठानं हि न केवलमाधारवस्त्वात्मा तूच्यते। किन्त्वाधेयवस्तुनो यः स्वस्वधर्म्मस्तेनावच्छिन्न आधार उच्यते। यथा वह्न्याधारकप्रमहानसादिर्वह्निधर्म्मोष्णत्वावच्छिन्नकपृत्वादिमान तथा चात्र दुष्यत्वे सत्यधिकरणत्वमधिष्ठानत्वमिति बोध्यम्। सर्व्वेषामेव हि रोगाणामागन्तुनिजानां स्वजनितदुःखस्य मनोऽनुभूतत्वाच्च मानसत्वम् न वा मनोऽधिष्ठानमिति। अत ऊर्द्ध्वञ्च मुखानि तु खल्वागन्तोरित्यादिना चागन्तोः कारणोपदेशे केवलमानसव्याधेर्दोषरजस्तमसोरदृष्टत्वाच्च। त्रिशोथीये "त एवापरिसंख्यया भिद्यमाना भवन्ति हि। रुजावर्णसमुत्थान-

एवं चतुर्विधत्वादि प्रतिपाद्य पुनः प्रकारान्तरेणाऽपरिसंख्येयतां रोगाणामाह—

**अपरिसंख्येयाः प्रकृत्यधिष्ठानलिङ्गायतनविकल्पविशेषाणाम् अपरिसंख्येयत्वात् ॥ २ ॥**

**मुखानि तु खल्वागन्तोनखदशनपतनाभिघाताभिषङ्गाभि-**

स्थानसंस्थाननामभिः ॥" इत्यनेनापरिसंख्येयत्वस्योक्तत्वेऽपि पुनरिहापरिसंख्येयत्ववचनं रोगपरिसंख्योपदेशप्रकरणत्वान्न पुनरुक्तं बोध्यम् । किंवा उक्ततत्प्रकारा विविधप्रकारेणात्रापरिसंख्येयत्ववचनमिदं सप्रत्रोपादानार्थमिति न पुनरुक्तम् । अत्र हि प्रकृतिः समवायिकारणम् । प्रकृतिभूतद्रव्यं वातादिः । अधिष्ठानमपि दूष्यत्वेनावस्थानं रसरक्तादि । लिङ्गं लिङ्गीभूतज्वरादीनां लिङ्गम् । आयतनं वातादीनां पक्वाशयादि । तथा चात्रोक्तानां तत्रोक्तानाञ्च प्रकृत्यादीनां रुजावर्णादीनाञ्च विकल्पविशेषाणामपरिसंख्येयत्वाद्विकारा अपरिसंख्येया इति पर्य्यवसितोऽर्थो बोध्यः । तद्यथा—दोषदूष्यलिङ्गीभूतलिङ्गपक्वाशयादीनां रुजावर्णवाह्यहेतुरात्रिजागरणादिगात्रप्रदेशविशेषलिङ्गनाम्नाञ्च विशेषाणां विकल्पेन तद्भेदे भवन्त्यपरिसंख्येया रोगा इति निष्कर्षः । दोषा हि संसर्गांशांशयोर्विकल्पेनापरिसंख्येयाः । दूष्याश्च रसादयः शरीरावयवाः परस्परमेलकाल्पत्वाधिकत्वादिना विभज्यमाना अपरिसंख्येयाः । लिङ्गानि च लिङ्गीभूतानां ज्वरादीनां प्रत्येकशश्चापरिसंख्येयत्वानि तन्त्रे त्वाचार्य्येणाविष्कृततमान्युपदिश्यन्ते । आयतनानि च वातादीनां शरीरप्रदेशेऽपरिसंख्येयान्याचार्य्येणाविष्कृततमानि कतिचिदुपदिश्यन्ते ॥ २ ॥

गङ्गाधरः—एषाम् अव्यवहितपूर्व्ववर्त्तिकारणान्याह—मुखानीत्यादि । यद्यपि

विकारा इत्यादि । पुनरिति वक्ष्यमाणप्रकारान्तरेण, प्रकृतिः प्रत्यासन्नं कारणं वातादि, अधिष्ठानं दूष्यं, लिङ्गानि लक्षणानि, आयतनानि वाह्यहेतवो दुराहाराचाराः, एषां विकल्परूपो विशेषो विकल्पविशेषः ; तेषामपरिसंख्येयत्वादिति—अत्र दोषाः संसर्गांशांशविकल्पादिभिरसंख्येयाः, दूष्यास्तु शरीरावयवा अणुशः परस्परमेव मेलकेन विभज्यमाना असंख्येयाः ; लिङ्गानि कृत्स्नविकारगतान्यसंख्येयान्येव, आविष्कृतानि तु तन्त्रे कथितानि ; हेतवश्चावान्तरविशेषादसंख्येयाः ; प्रत्ययता एव विकाराः । केचित् पुनरेषामिति पठन्ति, स तु पाठो नानुमतत्वात्, यदि च स्यात्, तदा देहमनःप्रत्ययसमर्थकम्—'एषाम्' इति पदम् । बहुवचनन्तु मनःशरीरयोर्बहुत्वविवक्षया ॥ ११२ ॥

चक्रपाणिः—मुखानि कारणानि, यथा "राजमहामसमलक्ष्मीमुखानाम् इति । प्रेरणमिति

चाराभिशापवध-बन्धनव्यधन-वेष्टन-पीड़नरज्जुदहनशस्त्राशनि-भूतोपसर्गादीनि । निजस्य तु खलु मुखं वातपित्तश्लैष्मिकं वैषम्यम् ॥ ३ ॥

द्वयोस्तु खल्वागन्तुनिजयोः प्रेरणमसात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति । सर्व्वेऽपि खल्वेते प्रवृद्धाश्चत्वारो रोगाः परस्परमनुबध्नन्ति । न चान्योन्येन सह सन्देहमापद्यन्ते ॥ ४ ॥

तिस्रैषणीये भूतविषवाय्वग्न्यात्यादिनागन्तुकारणान्युक्तानि तथाप्यत्र प्रकरणात् भाष्यरूपेण तद्विषयव्यवसायार्थं पुनरुक्तान्यपुनरुक्तानि भवन्ति । निजस्येति शरीरदोषसमुत्थस्य विशिष्टस्य ज्वरादिरूपस्य धातुवैषम्यस्य निजत्वे तस्य स्वहेतुत्वासम्भवात् वैषम्यं प्रत्येकशो हानिराधिक्यञ्च संसृष्टानामपि सन्निपतितानां ह्रस्ववृद्धसंसृष्टसाम्यञ्च । एतानि खल्वागन्तुनिजयोः कारणानि कर्त्तृ भूतानि सन्निकृष्टानि । प्रेरणमिति प्रेरयन्तीति कर्त्तारं कुर्व्वत् प्रयोजकमित्यर्थः । तेन नखादिपातनादेर्वातादिवैषम्यस्य च प्रयोजकमसात्म्येन्द्रियार्थसंयोगादित्रयं बोध्यम् । ज्वररक्तपित्तादीनां प्रतिनियतकारणमिथ्याहारादीनां वातादिप्रेरकत्ववत् ज्वरादिजनकत्वमप्यस्तीति न्यूनत्वदोषो नाशङ्क्यः । तत्रापि मिथ्याहारादीनां प्रतिनियतज्वराद्यारम्भकतया वातादिप्रेरकत्वं न तु व्याधिजनकत्वम् । साक्षादेव यत्र तु बाह्यहेतूनां वातादिप्रेरकत्ववत् साक्षाद्व्याधिजनकत्वं तत्र तज्जत्वेनैवाचार्य्यैर्व्याधयो व्यपदिश्यन्ते । यथा मृत्तिकाजपाण्डुरोगादयः । एतेन रक्तादिजत्वेन गुल्मादीनां व्यपदेशो व्याख्यातो भवति । अनुबध्नन्तीत्यनुगच्छन्तीति । अष्टोदरीये यदेतदुक्तम्—आगन्तुरन्वेतीत्यादिना तदागन्तुनिजयोः परस्परानुबन्धकत्ववचनमप्यत्र वातजादीनामन्यतमानुबन्धकत्वख्यापनार्थमत्र पुनरुक्तम् । नन्वतिवृद्धत्वे वातजपित्तजकफजागन्तुजानामन्यतमानुबन्धकत्वे मिश्रीभावेणागन्तुनिजयोर्निजागन्तुजान्यतमत्वेन सन्देहः स्यादिति चेत्? नेति । अर्थमाह—न चेत्यादि । तथात्वेनान्योन्येन ते रोगा न सन्देहसमापद्यन्ते परस्परानुबन्ध्यत्वे ॥ ३।४ ॥

कारणम्, अनेकार्थत्वाद्धातूनाम् । अनुबध्नन्त्यनुगच्छन्ति । न सन्देहमापद्यन्त इति न सन्देहविषयतामापद्यन्ते । मिश्रीभूता अपि प्रतिस्वंभिन्नैर्लक्षणैर्ज्ञायन्त इत्यर्थः ॥ ३।४ ॥

आगन्तुर्हि व्यथापूर्व्वमुत्पन्नो जघन्यं वातपित्तश्लेष्मणां वैषम्यमापादयति । निजे तु वातपित्तश्लेष्माणः पूर्व्वं वैषम्यमापद्यन्ते, जघन्यं व्यथामभिनिर्व्वर्त्तयन्ति ॥ ५ ॥

तेषां त्रयाणामपि दोषाणां शरीरे स्थानविभागमनुव्याख्यास्यामः । तद् यथा—वस्तिः पुरीषाधानं कटी सक्थिनी पादावस्थीनि च वातस्थानानि । तत्रापि पक्वाशयो

गङ्गाधरः—तत्र हेतुमाह—आगन्तुर्हीत्यादि । जघन्यमिति पश्चात् । वैषम्यमापादयतीति वातादिवैषम्यमं रुक्तो भवति इत्यर्थः । पूर्व्वं व्यथावर्पातपतति दुःखं प्राक् व्यथाया जघन्यमुत्तरकाले वातादिवैषम्यमापादयति । निजे तु वातादयः पूर्व्वं पश्चाद्व्यथां तत्रोत्पादयन्ति परं दुःखमाधिदैवमाधिभौतिकमाध्यात्मिकं वा । इति आगन्तुनिजयोः पूर्व्वोत्तरकाले व्यथादोषवैषम्यदोषवैषम्यव्यथात्मकभेदकलक्षणम् । अत्र वातजस्य पित्तजानुबन्धकत्वे मिश्रीभावे को भेद इति नाशङ्क्यः तयोर्मिश्रीभावे स्वस्वलक्षणमेव भेदकमलं तदुक्तेनेति । अथ प्रकृत्यधिष्ठानसमुत्थानं ज्ञात्वा कर्म्माचरणमुपदिष्टम् । तत्रागन्त्वादिप्रकृतिरुक्ता ॥ ५ ॥

गङ्गाधरः—असात्म्येन्द्रियार्थसंयोगादिसमुत्थानमुक्तम् अधिष्ठानन्तु किं तावद्वातादीनामित्यत आगन्तोर्वातादीनान्तु स्थानेषु वक्तव्येषु तत्रागन्तोः स्थानप्रतिनियमाभावेन, वातादीनान्तु स्थाननियमाद्वातादीनां स्थानान्याह—तेषामित्यादि किंवा वातादीनां मिश्रीभावे सन्देहनिरासार्थं भेदकस्थानान्याह—तेषामित्यादि । त्रयाणामपीत्यपिशब्दः समुच्चये । निजागन्तुभेद उक्तः, त्रयाणाञ्च दोषाणां मिश्रीभावे सन्देहनिरासार्थं स्थानविभागमनुव्याख्यास्याम इति भावः ।

तद्यथेत्यादि । वातस्थानानीति प्राणादिभेदेन हृत्कण्ठवह्निपायुसर्व्वाङ्गेषु पक्वाशये च नित्यं स्थितस्य वातस्य शीर्षादिविशेषसञ्चारस्थानवदेतानि वस्त्या-

चक्रपाणिः—आगन्तुनिजयोर्भेदकं लक्षणमाह—आगन्तुर्हीत्यादि । आगन्तुरुत्पन्नः सन्, व्यथापूर्व्वमिति पीडां प्रथमं कृत्वा पश्चाद्दोषाणां वैषम्यमिति दोषवैषम्यलक्षणमुक्तम्,—स्वलक्षणकारकन्तु वैषम्यमागन्तोरादितः प्रभृति विषमाममन्यकिञ्चित्करमिति भावः ॥ ५ ॥

चक्रपाणिः—आगन्तुनिजयोर्भेदकं लक्षणमभिधाय निजविकारकराणां वातादीनां भेदज्ञानार्थम्

विशेषेण वातस्थानम्। स्वेदो रसो लसीका रुधिरमामाशय-श्चेति पित्तस्थानानि। तत्राप्यामाशयो विशेषेण पित्त-स्थानम्। उरः शिरो ग्रीवा पर्व्वाण्यामाशयो मेदश्च

दीनि व्यानापानवातयोः सञ्चारस्य स्थानानि वैशेषिकाणि। तत्रापि पक्वाशयो विशेषेण बोध्यः। समानापानव्यानानां त्रयाणामधिष्ठानत्वात् प्रायेण वस्त्यादिषु स्थानेषु वातविकारा भवन्ति। एषु च स्थिते वाते जिते सर्व्व-वातविकारजयः स्यादित्यभिप्रायेणोक्तान्येतानि स्थानानि। उक्तं हि सुश्रुते—"तत्र समानवातः श्रोणिगुदसंश्रयः, श्रोणिगुदयोरुपर्य्यधो नाभेः पक्वाशय इति। प्राणोदानौ समानश्च व्यानश्चापान एव च। स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम्॥ वायुर्यो वक्त्रसञ्चारी स प्राणो नाम देहधृक्॥ सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते। प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान्॥ उदानो नाम यस्तूर्द्ध्वमुपैति पवनोत्तमः। तेन भाषितगीतादि विशेषोऽभिप्रवर्त्तते। ऊर्द्ध्वं जत्रुगतान् रोगान् करोति च विशेषतः॥ आमपक्वाशयचरः समानो वह्निसङ्गतः। सोऽन्नं पचति तज्जांश्च विशेषान् विविनक्ति हि। गुल्माग्निसादातिसारप्रभृतीन् कुरुते गदान्॥ कृत्स्नदेहचरो व्यानो रससंवाहनोद्यतः॥ स्वेदासृक्स्रावणो वापि पञ्चधा चेष्टयत्यपि॥ क्रुद्धश्च कुरुते रोगान् प्रायशः सर्व्वदेहगान्॥ पक्वाधानालयोऽपानः काले कर्षति चाप्ययम्। समीरणः शकृन्मूत्र-शुक्रगर्भार्त्तवान्यधः॥ क्रुद्धश्च कुरुते रोगान् घोरान् वस्तिगुदाश्रयान्। शुक्रदोषप्रमेहाश्च व्यानापानप्रकोपजाः॥ युगपत् कुपिताश्चापि देहं भिन्द्युरसंशयम्॥" इति वचनैः वातिकस्थानान्युक्तानि।

पित्तस्थानान्याह—स्वेद इत्यादि। लसीका देहोदकस्य पिच्छाभागः। तत्राप्यामाशयः पित्तस्य विशेषेण स्थानम् पाचक-रञ्जक-भ्राजकानां त्रयाणामधिष्ठानत्वात्। प्रायेणैतेषु स्थानेषु स्थितस्य पित्तस्य जितत्वे सर्व्वपित्त विकारावजयः स्यादित्यभिप्रायेणोक्तानि। आमाशयः पक्वामाशयमध्यम्। सुश्रुते हि पक्वामाशयमध्यं पित्तस्येत्युक्तम्।

श्लेष्मणः स्थानान्याह—उर इत्यादि। अत्रामाशय इत्यामाशयस्योर्द्ध्वा-

आह—तेषामित्यादि। पुरीषाधानं पक्वाशयः। यद्यपि प्राणादिभेदभिन्नस्य वायोः पृथगेव स्थानानि वक्ष्यति, यथा, "स्थानं प्राणस्य शीर्षोरःकण्ठजिह्वास्यकर्णनासिकाः" इत्यादि, तथापीदं वैशेषिकं स्थानं ज्ञेयं, यतः, अत्र प्रायो वातादिविकारा भवन्ति, भूतास्तु दुर्ज्ञेयाः। अत्र च विजिते

श्लेष्मणः स्थानानि। तत्राप्युरो विशेषेण श्लेष्मणः स्थानम्॥ ९ ॥

सर्व्वशरीरचरास्तु खलु वातपित्तश्लेष्माणो हि सर्व्वस्मिन् शरीरे कुपिताकुपिताः शुभाशुभानि कुर्व्वन्ति। प्रकृतिभूताः शुभान्युपचयबलवर्णप्रसादादीनि। अशुभानि पुनर्विकृतिमापन्नानि विकारसंज्ञकानि। तत् विकाराः सामान्यजा

वयवभागः। अत्राप्युरो विशेषेण श्लेष्मणः स्थानमिति, क्लेदकावलम्बकश्लेषकाणां त्रयाणामधिष्ठानत्वात्। प्रायेणेषु स्थानेषु स्थितस्य कफस्य जये सर्व्वश्लेष्मविकारजयः स्यादित्यभिप्रायेणोक्तान्येतानि स्थानानि। सुश्रुते तु श्लेष्मणः स्थानमामाशय इति यदुक्तं तत्राप्यामाशयोर्द्ध्वभागाभिप्रायेण बोध्यम्। अथवा पाचकपित्तस्थानाभिप्रायेण। सुश्रुतेनोक्तं—पक्वामाशयमध्यं पित्तस्येति। अत्र त्वामाशयः पित्तस्थानतया यदुक्तं तद् रञ्जकपित्ताभिप्रायेणेति बोध्यम्। आमाशयः श्लेष्मणः स्थानं यत् सुश्रुतेनोक्तं तत् क्लेदकश्लेष्मस्थानाभिप्रायेण। अत्र तदपि तदभिप्रायेणेति न विरोधः। एवमेव स्थानभेदेन लक्षणभेदेन परस्परानुबन्धवातादीनां मिश्रीभावे सन्देहस्पर्शो न स्यादिति भावः॥ ६ ॥

<u>गङ्गाधरः</u>—स्थानभेदवचनस्य प्रयोजनान्तरमाह सर्व्वेत्यादि। सर्व्वशरीरचरत्वमेषां त्रयाणामेव पञ्चपञ्चात्मकत्वेन बोध्यम्। न केवलं व्यानभ्राजकश्लेषकमात्रेण। तथात्वे तु कुपिताकुपिताः शुभाशुभानि कुर्व्वन्तीति वचनस्यानैकान्तिकत्वप्रसङ्गात् प्राणादिपाचकादिक्लेदकादीनामपि कुपिताकुपितानां शुभाशुभकर्त्तृत्वात्। सर्व्वस्मिन् हीति हिशब्दार्थस्य यस्मादित्यस्य ततो विकारा इत्यत्र तत् इत्यनेन सहान्वयः। किंवा एवार्थे हि सर्व्वस्मिन्नेव शरीरे इत्यर्थः। तत् इति तत्रेत्यर्थः।

कुपिताकुपिताः शुभाशुभानीत्यस्यानुलोमतश्चयुक्तयान्वयशङ्कानिरासार्थं शुभाशुभानि च विवरितुमाह—प्रकृतीत्यादि विकारसंज्ञकानीति।

वाते सर्व्ववातविकाराद्यजयः; हसीकोदकस्य पिच्छाभागः, पित्तस्थाने आमाशय इति आमाशयाधोभागः, श्लेष्मस्थानेष्वामाशय आमाशयोर्द्ध्वभागः॥ ६ ॥

<u>चक्रपाणिः</u>—सामान्यजा इति वातादिभिः प्रत्येकं मिलितैश्च ये जन्यन्ते। नानात्मजा इति

नानात्मजाश्च। तत्र सामान्यजाः पूर्व्वमष्टोदरीये व्याख्याताः। नानात्मजांस्त्विहाध्यायेऽनुव्याख्यास्यामः। तद् यथा—अशीतिर्वातविकाराः। चत्वारिंशत् पित्तविकाराः। विंशतिः श्लेष्मविकाराः॥ ७।८॥

तत्रादित एव वातविकाराननुव्याख्यास्यामः। नखभेदश्च विपादिका च पादशूलश्च पादभ्रंशश्च पादसुप्तता च वातखुड्डता च गुल्फग्रहश्च पिण्डिकोद्वेष्टनश्च गृध्रसी च जानुभेदश्च जानुविश्लेषश्चोरुस्तम्भश्चोरुसादश्च पाङ्गुल्यश्च गुदभ्रंशश्च गुदार्त्तिश्च वृषणाक्षेपश्च शेफःस्तम्भश्च वङ्क्षणा-

विकारान् विवृणोति तत्र इत्यादि। तत इति तत्रोपचयबलादिरूपाणि शुभानि। विकारसंज्ञकानीति। विकाराः सामान्यजा नानात्मजाश्चेति द्विधेति शेषः। तत्र सामान्यजा इति सामान्येन तत्तद्व्याधित्वरूपेण जायन्ते वाताद्वा पित्ताद्वा कफाद्वा द्वन्द्वाद्वा सन्निपतिताद्वाऽन्यस्माद्वा ये ते सामान्यजाः। नानात्मजा इति नानात्मकत्वेन बहुव्याधित्वरूपेण जायन्ते वाताद्वा पित्ताद्वा कफाद्वा ये ते नानात्मजाः। ज्वरादयो हि ज्वरत्वावच्छिन्नाः प्रत्येकं वातादिव पित्तादितोऽपि जायन्ते। नखभेदविपादिकादयश्च केवलादेव वातात् बहुव्याधित्वावच्छिन्ना जायन्ते। न तु वातादिव पित्तादित इति बोध्यम्। तत्रेति सामान्यजनानात्मजविकारेषु मध्ये सामान्यजा इति स्थूला उदरादयः सूक्ष्माश्च व्यवस्थाकरणमित्यादिना व्याख्याता इत्यर्थः। इहाध्याये तु नानात्मजान् व्याख्यास्यामः। तद्यथेत्यादि। तत्रादित एवेत्यत्र भूरिदारुण विकारकर्त्तृत्वादिति हेतुरूह्यः॥ ७।८॥

गङ्गाधरः—नखभेदश्चेत्यादि। नखभेदः कुनखः। विपादिका पाणिपादस्फुटनम्। वातखुड्डता वाल्मुक इति लोके। पिण्डिका जानुनोधोमांसपिण्डः। तस्योद्वेष्टनं दण्डादिनेव ताडनम्। अत्र कश्चिदाह गृध्रसी गृध्रसीशूलम्। ऊरुस्तम्भ

ये वातादिभिर्दोषान्तरासंपृक्तैर्जन्यन्ते। विपादिका पाणिपादस्फुटनं, पादभ्रंशः पादस्यारोपविषयदेशादन्यत्र पतनम्, सुप्तिः पादयोर्निश्चेष्टत्वं स्पर्शाज्ञता वा, वातखुड्डता वाल्मुक इति इति प्रसिद्धः। गृध्रसीशब्देन गृध्रसीशूलं गृह्यते, ऊरुस्तम्भेन च ऊरुस्तम्भमात्रं वातजन्यत्वेन

नाहश्च विड्भेदश्च श्रोणिभेदश्चोदावर्त्तश्च खञ्जत्वञ्च वामनत्वञ्च त्रिकग्रहश्च पृष्ठग्रहश्च पार्श्वमर्द्दश्चोदरावेष्टश्चोन्मादश्च हृद्द्रवश्च वक्षोद्घर्षश्च वक्ष उपरोधश्च वक्षस्तोदश्च बाहुशोषश्च ग्रीवास्तम्भश्च मन्यास्तम्भश्च कण्ठोद्ध्वंसश्च हनुभेदश्चौष्ठ-

ऊरुस्तम्भनवातः। कर्णाक्षिशूलादयश्च वातातिसारे विड्भेदश्चेत्यादि वातजन्यत्वेन गृह्यन्ते न तु गृध्रस्यादिरोगाः. तेषां पैत्तिकादिप्रभेदादित्युक्त्वा दोषान्तरसम्बन्धस्तत्रानुबन्धरूप इत्याह। तन्न मनोरमम्। यतोऽत्र नखभेदो नखभङ्गरतो, न तु कुनखः। विपादिका वातव्याध्युक्ता पाणिपादस्फुटनम्। पादशूलः स्वनामा। गुल्फग्रहो गुल्फशूलः। पिण्डिकोद्वेष्टनमुक्तम्। गृध्रसी वातव्याध्युक्ता। तत्र वाताद्वातकफात् तन्द्रेति यत् कफस्यम्बन्ध उक्तः स च नारम्भकत्वेन किन्तूत्तरकालम्, नातोऽस्याः सामान्यजत्वम्। जानुभेदः जानुभङ्गः। जानुविश्लेषो जानुसन्धिशैथिल्यम्। ऊरुस्तम्भश्चेति नोरुस्तम्भाख्यो व्याधिः श्लेष्मभेदःप्रधानजः, किन्तूरुस्तम्भनमात्रं वातकृतमन्यदेकम्। पाङ्गुल्यं पङ्गुता वातमात्रजव्याधिविशेषः, न त्वामवातादिकृतपाङ्गुल्यमात्रलिङ्गम्। पाङ्गुल्यस्य वातकर्म्मत्वेऽपि रोगान्तरलिङ्गत्वे रोगत्वाभावात्। वक्ष्यते हि "व्यानाथ यानि चोक्तानि व्याधिलिङ्गानि संग्रहे। व्याधयस्ते तदात्वे हि लिङ्गानीष्टानि नामयाः॥" इति। अनयैव दिशा एवशीतिवातव्याधिषु उन्मादाद्याख्या ये सामान्यजा दृश्यन्ते तेऽत्र न वातव्याधिषु बोध्याः, किन्तु केवलवातजमनोमत्तत्वमात्रादिरूपेण तत्तत्सम्प्राप्तिव्यतिरिक्ता ज्ञेयाः। वातरोगाध्याये यावन्तो रोगा उक्तास्तावन्तस्तु वातनानात्मजा एव। तत्र तत्र हि पित्ताद्यावरणादित्वेन आरम्भकत्वं वातस्यैव, न तु पित्तादेः। अत एव विड्भेदो न वातातिसारीयविड्भेदः परन्तु अतीसारग्रहण्यादिसामान्यजव्याधीनां सम्प्राप्तिं विना केवलवातजद्रवपुरीषातिनिःसरणं विड्भेदः। उदरावेष्ट इत्युदरस्या समन्ताद्वेष्टनवत्। हृद्द्रव इति हृदयस्य द्रुतिः स्फुरणम्। बाहुशोषोऽवबाहुकः। मन्यास्तम्भश्च वातरोगाधिकारे वाच्यः। कण्ठोद्ध्वंस इति शुष्ककासः। राजयक्ष्मणि कफलिङ्गत्वेन य उक्तः स च कफमिश्रवातानुबन्ध एव; स चात्र न ज्ञेयः। हनु-

गृह्यन्ते, एवं कर्णाक्षिशूलयोः शूलमात्रं, वातजातीसारेऽपि विड्भेदो वातजः, एवञ्च न गृध्रस्यादीनां

भेदश्चाक्षिभेदश्च दन्तभेदश्च दन्तशैथिल्यञ्च मूकत्वञ्च गद्गदत्वञ्च वाक्सङ्गश्च कषायास्यता च मुखशोषश्चारसज्ञता च कर्णशूलश्चाशब्दश्रवणञ्चोच्चैःश्रुतिश्च बाधिर्य्यञ्च वर्त्मस्तम्भश्च वर्त्मसङ्कोचश्च तिमिरञ्चाक्षिशूलञ्चाक्षिव्युदासश्च भ्रूव्युदासश्च शङ्खभेदश्च ललाटभेदश्च शिरोरुक् च केशभूमिस्फुटनञ्चार्द्दितञ्चैकाङ्गरोगश्च सर्व्वाङ्गरोगश्चाक्षेपकश्च दण्डकश्च श्रमश्च भ्रमश्च वेपथुश्च जृम्भा च हिक्का च विषादश्च

भेदो हनुस्तम्भः। ओष्ठभेद ओष्ठस्तम्भः। अक्षिभेदोऽक्षिगोलकभ्रमणाभावरूपोऽक्षिस्तम्भः। दन्तभेद इति दन्तभङ्गः। दन्तशैथिल्यं चलदन्तता। वाक्सङ्गो जातोत्तरकालं वाक्प्रवृत्त्यभावः अस्फुटवचनत्वं वा। अरसज्ञता रसज्ञानाभावः। अशब्दश्रवणमल्पशब्दश्रवणम्। न तूच्चैः। उच्चैःश्रुतिर्दूरध्वनिश्रवणं न स्वल्पध्वनेः। बाधिर्य्यं स्वल्पगुरूभयशब्दाश्रवणम्। वर्त्मस्तम्भ इत्यक्षिवर्त्मद्वयचलनाभावः। वर्त्मसङ्कोच इत्यक्षिवर्त्मद्वयान्यतरस्य सङ्कुचितत्वं विस्फारणाभावः। तिमिरमिति लिङ्गनाशाः षट् तथान्ये च। अक्षिशूलमक्षिवेदना। अक्षिव्युदास इत्यक्षिभ्रष्टता, नेत्रस्य स्वस्थानच्युतता। भ्रूव्युदास इति भ्रुवोः स्वस्थानादधो निपतनम्। शङ्खभेद इति ललाटैकदेशः शङ्खः तस्य भेदो वेदना भङ्गो वा न तु शङ्खकरोगः। ललाटभेद इति मध्यललाटे वेदना भङ्गो वा। शिरोरुगिति केवलं शिरःपीडा, न तु पञ्चशिरोरोगा ये उक्ताः। केशभूमिस्फुटनं विदरणम्। अर्द्दितादयः षट् वातरोगाध्याये वाच्याः। तमोऽन्धकारप्रवेशमात्रम्। भ्रमो गात्रशिरोघूर्णनम्। हिक्केति न पञ्च हिक्काः ये सामान्यजा

सामान्यजत्वं, यथोक्तातङ्कस्य केवलवातजन्यत्वात्; उदरस्यावेष्टनमिवोदरस्यावेष्टः, अशब्दश्रवणं शब्दाभावेऽपि शब्दश्रवणम्, उच्चैः श्रुतिर्महत एव स्वरमात्रश्रवणम्, अल्पशब्दस्य तु सर्व्वथैवाश्रवणम्, बाधिर्य्यं शब्दमात्रस्यैवाश्रवणम्; तिमिरन्तु वातजमेव, दोषान्तरसम्बन्धसत्त्वानुबन्धरूपः; एकाङ्गरोगः सर्व्वाङ्गरोगश्चेति ज्वरादिषु उष्मात्मकपीडादीनां कदाचिदेकाङ्गव्यापकत्वेनैकाङ्गरोगः, तेषामेव कदाचित् सर्व्वाङ्गव्यापकत्वेन सर्व्वाङ्गरोगः, दोषान्तरसम्बन्धोऽपि व्याप्यव्यापी वातकृत एव, "वायुना यत्र नीयन्ते तत्र वर्षन्ति मेघवत्" इति वचनात्; तथा [illegible] वातिकः स्मृतिमोहरूपः; अत्र कस्यचिदङ्गस्य पादादेः शूलादयोऽभिहिताः, न हृत्पीडादीनां,

प्रलापश्च ग्लानिश्च रौक्ष्यञ्च पारुष्यञ्च श्यावारुणावभासता चास्वप्नश्चानवस्थितचित्तत्वञ्च * इत्यशीतिर्वातविकाराः । वातविकाराणामपरिसङ्ख्येयानामाविष्कृततमा एव व्याख्याताः । सर्व्वेष्वपि खल्वेतेषु वातविकारेषूक्तेष्वन्येषु चानुक्तेषु वायोरिदमात्मरूपमपरिणामि कर्म्मणश्च स्वलक्षणम् । यदुप-

उक्ताः, किन्तु हिक्कनमात्रं हिगितिशब्दप्रवृत्तिः । विषादो मनोदैन्यम् । अतिप्रलापश्चेति वातकृतः । प्रलापस्तु पित्तकृत इति प्रलापयोर्भेदात् न सामान्यजत्वम् । ग्लानिरुहर्षः । अनवस्थितत्वं क्षणिकस्वभाववैपर्य्ययत्वत्वम् ।

ननु वातरोगाध्याये वक्ष्यमाणखल्वीमिन्मिनादीनां किं न वा नानात्मजत्वमिति ? अत आह—इत्यशीतिरित्यादि । आविष्कृतत्वं प्रायोभावित्वम् । तेनान्येऽपि वातरोगाः सन्ति ।

नन्वेषामुक्तानामनुक्तानाञ्च वातरोगाणां कथं संग्रहत्वमिति ? अत आह—सर्व्वेष्वित्यादि । वायोरिदमात्मरूपमपरिणामीति आत्मरूपं सम्बन्धाश्रयत्वादुपाधिव्यतिरिक्तं अपरिणामि सहजसिद्धं लिङ्गमकुपितवायोरिदं स्वाभाविकं लिङ्गमित्यर्थः । स्थानान्तरादिसम्बन्धोपाधिना हि परिणामिलिङ्गन्तु यथाक्रमं बोध्यम् । कर्म्मणश्चेति चकारेण वायोरिदमपरिणामीत्यनुवर्त्तते । विकाराधिकारात् वायोर्विकारित्वमर्थादेव लभ्यते । तेन वृद्धस्य वायोः कर्म्मणश्च स्वलक्षणमिदमपरिणामि पित्तादुपाधिव्यतिरिक्तं स्वरूपतः सिद्धम् । स्वं रूपं लिङ्गं कर्म्म हि वायोः क्रिया । तस्य लिङ्गं श्रमादिकं वक्ष्यते । न तु तस्य लिङ्गानि वक्ष्यन्ते । कर्म्म पुनः प्रवृत्तिरुत्क्षेपणादि पञ्चविधमाहुरन्ये । तन्न, बहुविधत्वात् । कीदृशं वायोर्वातविकारेषु स्वीयं रूपं ? तस्य च कर्म्मणश्च

तत्र येऽभिहितास्ते प्रधानभूताः प्रायोभावित्वेन, अनुक्तास्तु वातविकाराणामपरिसंख्येयत्वेन ग्राह्याः ।

वायोरिदमित्यादौ वायोरिदमात्मरूपं स्वरूपम्, अपरिणामीति सहजसिद्धं नान्योपाधिकृतमित्यर्थः । कर्म्मणश्चेति विकृतस्य वायोः कर्म्मणः, स्वलक्षणमित्यात्मीयं लक्षणम् ।

* उन्मादश्चेत्यत्र हृन्मोहस्तथा हनुभेदश्चेत्यत्र हनुग्रहस्तथा हिक्का चेत्यत्र विषाद इति चक्रसम्मतः पाठः ।

लभ्य तत्तदवयवं वा विमुक्तसन्देहा वातविकारमेवाध्यवस्यन्ति कुशलाः ॥ ६ ॥

तद्यथा—रौक्ष्यं शैत्यं लाघवं विशदता गतिरमूर्त्तत्वञ्च वायोरात्मरूपाणि। एवंविधत्वाच्च वायोः कर्म्मणः स्वलक्षण-मिदमस्य भवति तं तं शरीरावयवमाविशतः। तद्यथा—

स्वलक्षणं कीदृशमिति ? अत आह—यदुपलभ्येत्यादि। वातविकारेषु वायो-रर्थात् वृद्धस्य संसर्गाद्यन्तरेण स्वाभाविकं यदात्मरूपं कृत्स्नं तत्तदवयवं वा एकदेशं वोपलभ्य विमुक्तसन्देहाः वातविकारत्वेन संशयपरिहीणाः कुशला भिषजः वातविकारमेवाध्यवस्यन्ति। न तु पित्तादिविकारत्वेन वाशब्देन कृत्स्नमपि इति लभ्यते। एतच्च यदितिपदस्य कर्म्मणश्च स्वलक्षणमित्यनेन अप्यन्वयः। तेन वातविकारेषु वृद्धस्य वायोः कर्म्मणश्च स्वाभाविकं यत् कृत्स्नं स्वलक्षणं तत्तदवयवं वोपलभ्य विमुक्तसन्देहा वातरोगत्वेनैवाध्यव-स्यन्ति न तु पित्तादिरोगत्वेनेत्यर्थो बोध्यः ॥ ९ ॥

गङ्गाधरः—ननु वातविकारेषु वायोरर्थात् वृद्धस्यापरिणामि किमात्मरूपं किञ्च तस्य कर्म्मणोऽपरिणामि स्वलक्षणमिति ? तत्तदाह—तद्यथेति। गतिश्चलत्वम्। अमूर्त्तत्वं सूक्ष्मत्वम् न तु परमाणुत्वम्। किन्तु वृहत्त्वेऽपि सूक्ष्मानुसारित्वाभिप्रायकगुण इति यावत्। एतानि चात्मरूपाणि वायोः साम्यहान्यवस्थयोरपि भवन्त्यपि मानाधिक्येनात्र बोद्धव्यानि। वृद्धावस्थ-त्वाद् वायोर्यथा हीनस्य वा समस्य वा वृद्धस्य वा वह्नेरुष्णत्वं वर्त्तमानमेवाल्पं वा समं वा वृद्धं वा भवति। तेन चोष्णत्वेन किञ्चिद्दहति, समञ्च दहति, अधिकं वा दहतीतिवत् अत एवाह एवंविधत्वादिति। वृद्धरौक्ष्यादिरूपत्वादस्य वृद्धस्य वायोस्तं तं शरीरावयवमाविशतः कर्म्मणश्च स्वलक्षणमिदं भवति। शरीराव-यवापेक्षया हि कर्म्मविशेषः स्यात्। स्याच्चामाशयादिपित्तादिसम्बन्धेन कर्म्म च प्रवृत्तिः।

अत्राप्यपरिणामीति पित्तश्लेष्मसम्बन्धानपेक्षं, न तु शरीरावयवानपेक्षमिति, यतः, सूत्रे—"तं तं शरीरावयवमाविशतः" इति ; अत एव च मांसादीनां शरीरावयवापेक्षत्वेन न सर्व्वत्र समः ; एवञ्च पित्तश्लेष्मणोरपि आत्मरूपादि व्याख्येयं ॥ ७—९ ॥

चक्रपाणिः—अमूर्त्तत्वमित्यदृश्यत्वम्, एवंविधत्वादिति रौक्ष्यादिगुणत्वाद्वायोरिति सम्बन्धः

स्रंसभ्रंश-व्यासङ्गभेद* हर्ष-तर्षकम्पावमर्दचालतोदव्यथाचेष्टादीनि । तथा खरपरुषविशदशुषिरारुणकषायविरसमुखशोषसुप्तिसङ्कोचनखञ्जतादीनि च वायोः कर्म्माणि । तैरन्वितं वातविकारमेवाध्यवस्येत् ॥ १० ॥

सा च वायोरत्र वृद्धचलत्वादिगुणेन भवतीति अभिप्रायेण वृद्धवायोः कर्म्मणो लिङ्गमिदमस्य भवतीति यदुक्तं तदाह—तत्रेत्यादि । स्रंस इति स्वस्थानतोऽधस्तात् स्थानान्तरचलनमदूरतः । भ्रंशः स्वस्थानतो दूरगमनम् । व्यासङ्ग इत्यन्यासक्तिरित्यर्थः । भेद इत्यङ्गभेदोऽङ्गभङ्गवत्पीड़ा । हर्षेत्यङ्गस्य । तेनाङ्गहर्षो लोमाञ्चः । कश्चित् वायोः प्रभावात् हर्षो हृष्टचित्तत्वमाह. तन्न ; चलत्वगुणकार्य्यमध्यत्वासाहचर्य्यादनुभवाकौशलात् । कम्पो वेपथुः । अवमर्दोऽङ्गवेदना । चालः स्पन्दनम् । तोदः सूचीवद्व्यथा । व्यथा पीड़ा । चेष्टा गमनक्षेपणादि । अत्रादिपदप्रयोगेण पृथक् पदकरणं वायोश्चलत्वगुणस्य प्राधान्यात् । तज्जन्यकर्म्मणो लिङ्गान्येतानीति ख्यापनार्थम् । खरत्वादिगुणजन्यकर्म्मणो लिङ्गान्याह—तथा खरेत्यादि । खरत्वगुणेन वृद्धवायोः कर्म्मणो लिङ्गं खरत्वम् पुंसः शरीरस्य कर्कशत्वम् । परुषत्वं अचिक्कण्यम् शरीरस्य निःस्नेहत्वमित्यर्थः । रौक्ष्यगुणेन वृद्धवायोः कर्म्मणः विशदत्वं देहेऽपैच्छिल्यं विशदगुणेन वृद्धस्य वायोः कर्म्मणो लिङ्गम् । सूक्ष्मगुणेन वृद्धस्य वायोः कर्म्मणो लिङ्गं शुषिरत्वं देहेऽघनत्वम् । वायोर्भौतिकत्वेन पाञ्चभौतिकशरीरसम्बन्धेन चारुणवर्णः । वैशद्यगुणेन वृद्धस्य वायोः कर्म्म पैच्छिल्याभावः । कषायरसता विरसता च तथा व्याख्याता । रौक्ष्यगुणेन वृद्धस्य वायोः कर्म्मणो लिङ्गं मुखस्य कषायरसता रसाभिव्यक्तौ च दृश्यते । वाय्वाकाशबाहुल्यात् कषाय इति । विरसता स्वभावरसवैपरीत्यं मुखस्य रौक्ष्यवैरस्यञ्च भवति वा । शोषस्तु रौक्ष्यलाघवगुणाभ्यां वृद्धस्य कर्म्मणो लिङ्गम् । सुप्तिः अस्पर्शज्ञानं लाघवचलत्वगुणाभ्यां वृद्धस्य कर्म्मणो लिङ्गम् । सङ्कोचनं शैत्यगुणेन वृद्धस्य चलत्वगुणेन चलनकर्म्मणो लिङ्गम् । खञ्जत्वं लाघवरौक्ष्याभ्यां वृद्धस्य शोषणकर्म्मणः कर्म्म । आदिपदेनाध्मानादिकं बोध्यम् । वायोः

स्रंसः किञ्चित्स्वस्थानस्खलनं, भ्रंशस्तु दूरगतिः, व्यासो विस्तरणं, हर्षो वायोरवस्थितत्वेन

* भेदेत्यनन्तरं सादस्तथा सङ्कोचनेत्यनन्तरं स्तम्भमसिरपञ्चिकः पाठस्तत्कर्तृकृतः ।

तं मधुराम्ललवणस्निग्धोष्णैरुपक्रमेत। स्नेहस्वेदास्थापनानुवासननस्तःकर्म्म-भोजनाभ्यङ्गोत्सादन-परिषेकादिभिर्वात-हरैर्मात्रां कालञ्च प्रमाणीकृत्य। तत्रास्थापनानुवासनन्तु खलु सर्व्वोपक्रमेभ्यो वाते प्रधानतमं मन्यन्ते भिषजः। तद्धि आदित एव पक्वाशयमनुप्रविश्य केवलं वैकारिकं वातमूलं छिनत्ति। तत्रावजिते वातेऽपि शरीरान्तर्गतवातविकाराः प्रशान्तिमापद्यन्ते। यथा वनस्पतेर्मूले छिन्ने स्कन्ध-

कर्म्माणीति वृद्धवायोः कर्म्मणः कर्म्माणि कर्म्मभूतलिङ्गानि। एतैः कर्म्मभिरनुमितेन कर्म्मणानुमेया भवन्ति। वातस्य वृद्धया रौक्ष्यादयो गुणा लिङ्गभूताः। तैश्च गुणैर्वातो वृद्धोऽनुमीयते इति। ततः सुतरां तैः स्वं सादिभिरन्वितं विकारं वातविकारमेव वातरोगत्वेनैवाध्यवस्येत् न त्वन्यविकारत्वेनेति॥ १०॥

गङ्गाधरः—प्रसङ्गादस्य वातस्य प्रशममुत्रमाह—तमित्यादि। तं वातरोगं मधुरादिभिः रौक्ष्यादिगुणविपरीतैः स्निग्धोष्णैर्युगपत् स्निग्धत्वोष्णत्ववद्भिस्तैला-दिभिः उपक्रमेतेति विवृणोति स्नेहेत्यादि। मधुरादिभिः स्नेहादिपरिषेका-द्यन्तोपक्रमाणां रौक्ष्यादिविपरीतत्वात् वातहरत्वम्। मात्रां कालञ्च प्रमाणी-कृत्येत्यस्य मधुरादिभिः स्नेहादिभिश्च सहान्वयादुपक्रमेतेत्यस्य चोभयत्रान्वयः। आस्थापनानुवासनन्तु इत्येकवचनम् आनुपूर्व्विकत्वेन युगलत्वाभिप्रायात्। सर्व्वोपक्रमेभ्यः स्नेहस्वेदादिभ्यो मध्ये वाते प्रधानतमम्, न तु पित्तादौ। प्रधानतमत्वं दर्शयितुं हेतुमाह—तद्धीत्यादि। आस्थापनानुवासनं हि आदित एव वातरोगे प्रयोगमात्रं शीघ्रमेव वैकारिकं वातमूलं न तु प्राकृतं, छिनत्तीति वायोर्यत् स्थानसमाश्रयणेन तत्तद्विकारकत्त्वं तत्स्थानसंयोगमुच्छिनत्ति। तदुच्छेदेन कथमन्यत्रगतवातविकाराः प्रशाम्यन्तीति? अत आह—तत्रेत्यादि। तत्र वैकारिकमूलभूतस्थानसंयोगे वातस्यावजिते शरीरान्तर्गतवातविकारा

प्रभावाद् वा क्रियते, वर्त्तुलीकरणं वर्त्तः, चालः स्पन्दः, रसवर्गो वायुना रसवर्णरहितेनापि प्रभावात् क्रियते॥ १०॥

चक्रपाणिः—प्रस्तावागतत्वेन चिकित्सामाह—मधुरेत्यादि। आदित एवेति शीघ्रमेव, केवलं वैकारिकमिति सकलविकारकारकम्॥ ११॥ १२॥

शाखाप्ररोहकुसुमफलपलाशादीनां नियतो विनाशस्तद्वत्॥ ११।१२॥

पित्तविकारांश्चत्वारिंशतोऽत ऊर्द्ध्वमनुव्याख्यास्यामः। तद्यथा—ओषश्च प्लोषश्च दाहश्च दवथुश्च धूमकश्चाम्लकश्च विदाहश्चान्तर्दाहश्चोष्माधिक्यञ्च अतिस्वेदश्चाङ्गस्वेदश्चाङ्गगन्धश्चाङ्गावदरणञ्च शोणितक्लेदश्च मांसक्लेदश्च त्वग्दाहश्च त्वगवदरणञ्च चर्म्मदलनञ्च * रक्तकोठश्च रक्तविस्फोटश्च रक्तमण्डलञ्च रक्तपित्तञ्च हरितत्वञ्च हारिद्रत्वञ्च नीलिका च

इतरस्थानगता अन्ये लिङ्गभूता विकारा अपि प्रशान्तिमापद्यन्ते। तत्र दृष्टान्तमाह—यथेत्यादि॥ ११।१२॥

गङ्गाधरः क्रमिकत्वात् चत्वारिंशत् पित्तविकारानाह—पित्तेत्यादि। तद्यथेत्यादि। ओषश्चेति ओषः पार्श्वस्थितेन वह्निनेव उष्मा पीड़ा। प्लोषः किञ्चिद्दहनमिव। दाहः सर्व्वाङ्गदहनमिव। दवथुः धकधकीति लोके। धूमको धूमोद्गिरणमिव। अम्लकोऽम्लोद्गिरणमिव। विदाहो भुक्तानामद्धपरिपाकः। अन्तर्दाहः अभ्यन्तरेऽत्युष्णत्वात्। उष्माधिक्यञ्च बाहिरोष्णाधिक्यम्। अङ्गस्वेदः सर्व्वदा किञ्चित् किञ्चित्स्वेदः। अङ्गगन्धः इति गात्रेऽव्यक्तगन्धः। अङ्गावदरणं गात्रप्रदेशविशेषे विदीर्णता। त्वग्दाहः शरीरबाह्यतश्चर्म्मज्वालामात्रम्। त्वगवदरणं बाह्यत्वङ्मात्रविदीर्णता। चर्म्मावदरणं समत्वचां विदीर्णता। रक्तकोठश्चेति यदुक्तं "वरटीदष्टनीकाशो लोहितोऽस्रकफपित्तात्। क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः" इति। रक्तविस्फोटश्चेति सुश्रुते क्षुद्ररोगाधिकारे—"अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः। क्वचित् सर्व्वत्र वा देहे स्मृता विस्फोटका इति॥" रक्तमण्डलञ्चेति पक्वोडुम्बरवद्रक्तवर्णत्वात् रक्तमण्डलः। सुश्रुते परिमण्डलाख्य उक्तः—"विवृतास्यां महादाहां पक्वोडुम्बरसन्निभाम्।

चक्रपाणिः—ओषः पार्श्वस्थितेनेव वह्निना पीड़ा, प्लोषः किञ्चिद् दहनमिव दाहः, सर्व्वाङ्गदहनमिव दवथुः धग्धगिकेति लोके ख्याता, धूमको धूमोद्गमनमिव, त्वगवदरणं बाह्यत्वङ्मात्रावदरणम्, चर्म्मावदरणन्तु षण्णामपि त्वचां दरणं, रक्तपित्तं दोषान्तरासंपृक्तं रक्तपैत्तिकं ज्ञेयम्;

* चर्म्मावदरणमिति चक्रः।

कक्षा च कामला च तिक्तास्यता च लोहितगन्धास्यता च पूति-मुखता च तृष्णाधिक्यञ्च अतृप्तिश्चास्यपाकश्च गलपाकश्चाक्षि-पाकश्च गुदपाकश्च मेढ्रपाकश्च जीवादानञ्च तमःप्रवेशश्च हरितहारिद्रनेत्रवर्च्चस्त्वञ्च। इति चत्वारिंशत् पित्तविकाराणा-मपरिसंख्येयानामाविष्कृततमा व्याख्याताः ॥ १३ ॥

सर्व्वेष्वपि तु खल्वेतेषु पित्तविकारेषूक्तेष्वनुक्तेषु चान्येषु पित्तस्येदमात्मरूपमपरिणामि कर्म्मणश्च स्वलक्षणम्। यदुप-लभ्य तदवयवं वा विमुक्तसन्देहाः पित्तविकारमेवाध्यवस्यन्ति

विवृतामिति तां विद्यात् पित्तोत्थां परिमण्डलाम् ॥" इति। रक्तपित्तञ्चेति रक्तसंसर्गेण रक्तीभूतं पित्तं रक्तपित्तम्। न तु रक्तपित्ताख्यो य उच्यते तस्य यवकोलादिकारणैः पित्तं प्रकुप्य रक्तञ्च विरुद्धं यकृत्प्लीहप्रभवरक्तवहस्रोतो-ऽभिगम्य दूषयित्वा रक्तपित्तं जनयतीति रक्तप्रदोषात् भेदात् किंवा तस्यापि वातादिसंसर्गत्वादारम्भे पैत्तस्यैव कर्त्तृत्वात् सामान्यजत्वाभावाच्च नानात्मज-त्वम्। तदेवात्र गृह्यते। हरितत्वं रक्तवर्णत्वम्। हारिद्रत्वं हरिद्रावर्णत्वम्। नीलिका क्षुद्ररोगे सुश्रुतोक्ता विशोधीये त्विग्वता। कक्षा चेति सुश्रुते— "बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम्। पित्तप्रकोपात् सम्भूतां कक्षामिति विनिर्द्दिशेत् ॥" इति। कामला चेति कामला पित्तपाण्डोरवस्थाविशेषः। कामला बहुपित्तैषा बोध्या। पाण्डोर्हि सामान्यजत्वेऽपि पित्तपाण्डौ पित्तस्याहारात् व्याप्यन्तरत्वेन कामला भवति। तस्मान्न कामलायाः सामान्यजत्वम्। तिक्ता-स्यता तिक्तमुखत्वम्। लोहितगन्धास्यता मुखे रक्तगन्धत्वम्। पूतिमुखता दुर्गन्धमुखता। तृष्णाधिक्यं केवलतृष्णातिशयः न तु तृष्णाख्यरोगविशेषः, तस्य सामान्यजत्वात्। अतृप्तिः सदा बुभुक्षा। जीवादानं विरेचनव्यापद्विशेष उक्तो यो जीवरक्तनिर्गमः। हरितेत्यादिना एक एव रोगः। इतीत्यादि सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १३ ॥

गङ्गाधरः—सर्व्वेष्वित्यादि। पित्तस्यात्मरूपेषु वर्णश्चाशुक्लसदृशः। गन्धश्च

एवं तृष्णाधिक्यञ्च तृष्णामात्रं, कक्षा कक्षदेशगतमांसक्षरणं, स्फोटाः सुश्रुतक्षुद्ररोगोक्ताः, गन्धो विस्त्र इत्यामगन्धः, यथार्थमित्यामगन्धवर्णसदृशम्, अग्निमद् गृहमग्निगृहम् ॥ १२—१७ ॥

कुशलाः। तद्यथा—औष्ण्यं तैक्ष्ण्यं द्रवमनतिस्नेहो वर्णश्चाशुक्लो* गन्धश्च विस्रो रसौ कटुकाम्लौ सरश्च पित्तस्यात्मरूपाणि। एवंविधत्वाच्चास्य कर्म्मणः स्वलक्षणमिदमेतस्य भवति तं तं शरीरावयवमाविशतः। तद्यथा—दाहौष्ण्यपाकस्वेदक्लेदकोथ†स्रावरागाः यथास्वगन्धवर्णरसादिनिर्व्वर्त्तनं पित्तस्य कर्म्माणि। तैरन्वितं पित्तविकारमेवाध्यवस्येत् ॥ १४।१५ ॥

तं मधुरतिक्तकषायशीतैरुपक्रमैरुपक्रमेत स्नेहविरेचनप्रदेहपरिषेकाभ्यङ्गादिभिः पित्तहरैर्मात्रां कालञ्च प्रमाणीकृत्य। विरेचनन्तु सर्व्वोपक्रमेभ्यः पित्ते प्रधानतमं मन्यन्ते भिषजः। तद्धि आदित एवामाशयमनुप्रविश्य केवलं वैकारिकं पित्तमूलमपकर्षति। तत्रावजिते पित्ते शरीरान्तर्गतपित्तविकाराः

विस्र आमगन्धः। एवंविधत्वाच्चेति औष्ण्यादिगुणवत्त्वात्। वृद्धपित्तस्य औष्ण्यादिगुणजनितस्य कर्म्मण इदं वक्ष्यमाणं दाहादिकं कर्म्म स्वलक्षणम्।

कर्म्मणो लक्षणान्याह एवमित्यादि। पूर्व्वमिह व्याख्यातम्। दाहेत्यादि। पित्तस्य औष्ण्यतीक्ष्णताभ्यां वृद्धस्य कर्म्म वर्द्धयित्व दाहादिकं तेन कर्म्मणा शरीरे दाहौष्ण्यपाकादिरागान्ता औष्ण्यतीक्ष्णताभ्यां सहचरितद्रवानतिस्नेहाभ्यां भवन्ति पित्तस्य दहनादिकर्म्मणो लिङ्गानि। यथास्वगन्धवर्णेत्यादि। अशुक्लानारुणगुणेन वृद्धस्य पित्तस्य कर्म्मणश्चिह्नमशुक्लास्तावन्तो वर्णाः शरीरस्य। गन्धश्च शरीरस्य विस्रः। रसश्च शरीरे कटुरसेन वृद्धस्य कटुकश्चाम्लरसेनाम्लः। सर्व्वं पूर्व्ववद्व्याख्येयम् ॥ १४।१५ ॥

<u>गङ्गाधरः</u>—प्रसङ्गादागतत्वात् पैत्तिकरोगाणां क्रियासूत्रमाह—तमित्यादि। शीतैरिति स्पर्शतः पाकतो वीर्य्यतश्च। उपक्रमेत्याह—स्नेहेत्यादि। आमाशयमिति पक्वामाशयमध्यस्थानस्योर्द्धम्। ततःप्रभृति पित्तस्याधोभागगमनेन यावद्वैकारिकमूलस्थानसंयोगं छिनत्तीत्यभिप्रायेणाह अपकर्षतीति छिनत्ति।

* वर्णश्च शुक्लारुणवर्ज्जं इति चक्रस्वीकृतः पाठः।

† कोथस्यानन्तरं कण्डू इति चक्रः।

प्रशान्तिमापद्यन्ते ; यथाग्नौ व्यपगते केवलमग्निगृहं शीतीभवति तद्वत् ॥ १६।१७ ॥

श्लेष्मविकारान् विंशतिमत ऊर्द्ध्वं व्याख्यास्यामः। तद्-यथा—तृप्तिश्च तन्द्रा च निद्राधिक्यञ्च स्तैमित्यञ्च गुरुगात्रता च आलस्यञ्च मुखस्रावश्च मुखमाधुर्य्यञ्च श्लेष्मोद्गिरणञ्च बलाशकश्चापक्तिश्च हृदयोपलेपश्च कण्ठोपलेपश्च धमनीप्रतिचयश्च गलगण्डश्च अतिस्थौल्यञ्च शीताग्निता चोदर्दश्च श्वेतावभासता च श्वेतनेत्रमूत्रवर्च्चस्त्वञ्च। इति विंशतिः

व्यपगते व्यपोढ़े केवलमग्निहीनमग्निसन्तप्तमात्रम् अग्निगृहमग्निमद्-गृहम् ॥ १६।१७ ॥

गङ्गाधरः—उद्देशक्रमप्राप्तान् श्लैष्मिकान् विंशतिं रोगानाह—श्लेष्मेत्यादि। तृप्तिश्चेत्यादि। येनात्मानं तृप्तमिव मन्यते सर्व्वदा सा तृप्तिः। बलाशको बलक्षयः। कश्चित् तु—"नित्यं मन्दज्वरो रूक्षः शूनकस्तेन सीदति। स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलाशकी ॥" इत्याह, तन्न। वातश्लेष्मारब्धत्वेन नानात्मजत्वाभावात्। धमनीप्रतिचयो धमन्युपलेपेन धमनीनां पुष्टता। गलगण्डस्तु कफारब्ध एव वातानुबन्धेन कफेनारब्धत्वं हि वातजकफजमेदोजत्व-व्यपदेशोऽनुबन्धत्वेन तेषामाधिक्यात्। न पुनर्वसुना ज्वरादिवत् वातजादिः। शीताग्निता मन्दाग्निता। उदर्दश्चेति तन्त्रान्तरे हुक्तो यथा "शीतमारुत संस्पर्शात् प्रदुष्टौ कफमारुतौ। पित्तेन सह सम्भूय वहिरन्तर्विसर्पतः ॥ पिपासारुचिहृल्लास-देहसादाङ्गगौरवम्। रक्तलोचनता तेषां पूर्व्वरूपस्य लक्षणम् ॥ वरटीदष्टसंस्थानः शोथः सञ्जायते वहिः। सपाण्डुस्तोदबहुलश्छर्दिर्ज्वरविदाहवान् ॥ उदर्दमिति तं विद्याच्छीतपित्तमथापरे। वाताधिकं शीतपित्तमुदर्दश्च कफाधिकः ॥" इति। एवमन्यत्रापि—"सोत्सङ्गैश्च सरागैश्च कण्डूमद्भिश्च मण्डलैः। शैशिरः कफजो व्याधिरुदर्द इति कीर्त्तितः ॥" इति। एष एवात्र विवक्षितः। पूर्व्वश्च कफाधिकत्वेन यो निरुक्तस्तस्य वातमात्रादिजत्वाभावेन सामान्यजत्वाभावात्।

चक्रपाणिः—तृप्तिर्येन तृप्तमिवात्मानं सर्व्वदा मन्यते, बलाशको बलक्षयः, किंवा श्लेष्मोद्रेकान्मन्दज्वरित्वम् स्तब्धाङ्गता वा बलाशकः, धमनीप्रतिचयो धमन्युपलेपः, शीताग्निता,

श्लेष्मविकाराः, श्लेष्मविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याता भवन्ति ॥ १८ ॥

सर्व्वेष्वपि तु खल्वेतेषूक्तेषु श्लेष्मविकारेषु चाप्यनुक्तेषु चान्येषु श्लेष्मण इदमात्मरूपमपरिणामि कर्म्मणश्च स्वलक्षणम्। यदुपलभ्य तदवयवं विमुक्तसन्देहाः श्लेष्मविकारमेवाध्यवस्यन्ति कुशलाः। तद् यथा—श्वैत्यशैत्यगौरवस्नेहमाधुर्य्यस्थैर्य्यपैच्छिल्यमात्स्न्यानि श्लेष्मण आत्मरूपाणि। एवंविधत्वाच्चास्य कर्म्मणः स्वलक्षणमिदमस्य भवति तं तं शरीरावयवमाविशतः। तद् यथा—श्वैत्यशैत्यकण्डूस्थैर्य्यौत्सेध-गौरव-स्नेह* सुप्ति-क्लेदोपदेहबन्धनमाधुर्य्यचिरकारित्वादीनि श्लेष्मणः कर्म्माणि। तैरन्वितं श्लेष्मविकारमेव अध्यवस्येत् ॥ १९।२० ॥

तं कटुतिक्तकषायतीक्ष्णोष्णरूक्षैरुपक्रमैरुपक्रमेत। स्वेद-

पित्तवातारब्धत्वे तु वातादिजत्वव्यपदेशाभावात्। इतीत्यादि। सर्व्वं पूर्व्ववद्व्याख्येयम् ॥ १८ ॥

गङ्गाधरः—श्वैत्येत्यादि। पूर्व्वाध्याये श्वेतवर्णानुपदेशस्तत् कथयितुमनावश्यकत्वादत्र तु विज्ञानाय श्वेतवर्णोपदेशः। मात्स्न्यं मृत्स्नावन्मसृणत्वरूपं मृदुत्वं वा। श्वैत्यादीनि शरीरस्य। तेन कफस्य वृद्धस्य कर्म्मानुमानात्। तेन कर्म्मणा कफस्य वृद्धाः श्वैत्यादयोऽनुमीयन्ते। तैश्च वृद्धः कफोऽनुमीयते। अत्र सुप्तिः कफकर्म्मलक्षणं, वाताशीतिरोगेषु पादसुप्तता यद्यप्युक्ता तथापि कफस्य शैत्यगुणकर्म्मणा सुप्तिर्भवतीतिवत् वातस्यापि शैत्यगुणकर्म्मणा सुप्तता भवितुमर्हतीति वातस्थाने पादे सुप्तता उक्ता। कफस्थाने तु कफजा इति भेदेन बोध्या। गन्धश्च नानाविधः। आदिना शोफलवणरसादीनां ग्रहणम् ॥१९।२०॥

गङ्गाधरः—तमित्यादि। तमित्यादि पूर्व्वोदिशा व्याख्येयम्। आदित

मन्दाग्निता, मात्स्न्यं मसृणता, श्लेष्मकर्म्मसु सुप्तिर्निष्क्रियत्वेन, वाते तु स्पर्शाज्ञानेन ; अत्रामावस्थम्

* स्नेहेत्यस्यानन्तरं स्तम्भ इत्यधिकः पाठश्चक्रसम्मतः।

वमनशिरोविरेचनव्यायामादिभिश्च श्लेष्महरैर्मात्रां कालञ्च प्रमाणीकृत्य। वमनन्तु सर्व्वोपक्रमेभ्यः श्लेष्मणि प्रधानतमं मन्यन्ते भिषजः। तद्धि आदित एवामाशयमनुप्रविश्य केवलं वैकारिकश्लेष्ममूलमूर्द्ध्वमुत्क्षिपति। तत्रावजिते श्लेष्मणि शरीरान्तर्गताः श्लेष्मविकाराः प्रशान्तिमापद्यन्ते। यथा भिन्ने केदारसेतौ शालियवषष्टिकादीनि अनभिष्यन्दमानान्यम्भसा प्रशोषमापद्यन्ते तद्वदिति॥ २१।२२ ॥

भवन्ति चात्र।

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्।
ततः कर्म्म भिषक् पश्चाज्ज्ञानपूर्व्वं समाचरेत् ॥ २३ ॥

एवामाशयमित्यामाशयस्योर्द्ध्वावयवस्य विशेषेण श्लेष्मस्थानत्वात्। अत्राप्युरो विशेषेण श्लेष्मणः स्थानमिति वचनेन वक्षसः श्लेष्मण प्रधानस्थानत्वेऽपि श्लेष्मणः सर्व्वेषु स्थानेष्वाशयरूपेष्वेव आशयस्त्वामाशय एव। ततःप्रभृति ऊर्द्ध्वहरणेन सर्व्वाशयश्लेष्महरणं भवतीति ज्ञापनाय हि ऊर्द्ध्वमुत्क्षिपतीत्यूर्द्ध्व-श्लेष्महरणेन श्लेष्मण आमाशयेन वैकारिकमूलसंयोगमारभ्य वक्षःप्रभृति-संयोगं छिनत्तीत्यर्थः। अत्र दृष्टान्तमाह—यथा भिन्ने इत्यादि। अम्भसा अनभिष्यन्दमानानीत्यन्वयः॥ २१।२२ ॥

गङ्गाधरः—ननु वाताद्यात्मरूपकर्म्मलक्षणानां विज्ञाने किं प्रयोजनमित्यत आह पद्येन—भवन्तीत्यादि। रोगमित्यादि। आदौ रोगं परीक्षेतेति चेत् सुतरां रोगपरीक्षायां वातादिलिङ्गज्ञानमपेक्षते इति भावः। तत औषधं परीक्षेत इत्यन्वयः। औषधपरीक्षा हि व्याध्यपेक्षिणी भवतीति। अतो रोगपरीक्षानन्तरं भेषजपरीक्षा उपपद्यते। अत एव सुतरां रोगपरीक्षाभेषजपरीक्षानन्तरं प्रति-क्रिया भवतीत्याह—ततः कर्म्म आस्थापनाद्युपक्रमणम्। ज्ञानपूर्व्वमिति अन्यत्र

अनुप्रविश्येति वचनेन श्लेष्मस्थानेष्वामाशयस्य प्राधान्यम्, पूर्व्वन्तु "तत्रापि उरो विशेषेण" इति वचनेनोरः प्रधानम्, एवमुभयमपि तुल्यं ज्ञेयम् ॥ १८—२२ ॥

चक्रपाणिः—सम्प्रति रोगज्ञानस्य चिकित्सायामुपयोगमाह—रोगमित्यादि। औषधं परीक्षेतेति

यस्तु रोगमविज्ञाय कर्म्माण्यारभते भिषक् ।
अप्यौषधविधानज्ञस्तस्य सिद्धिर्यदृच्छया ॥ २४ ॥
यस्तु रोगविशेषज्ञः सर्व्वभैषज्यकोविदः ।
देशकालप्रमाणज्ञस्तस्य सिद्धिरसंशयम् ॥ २५ ॥

तत्र श्लोकाः ।

संग्रहः प्रकृतिर्देशो विकारो मुखमीरणम् ।
असन्देहोऽनुबन्धश्च रोगाणां संप्रकाशितः ॥ २६ ॥
दोषस्थानानि रोगाणां गणा नानात्मजाश्च ये ।
रूपं पृथक् च दोषाणां कर्म्म चापारणामि यत् ॥ २७ ॥

कृतास्थापनादिकर्म्मदर्शनादिजनितज्ञानपूर्व्वम् । रोगविज्ञानं विना कर्म्मारम्भे दोषमाह—यस्त्वित्यादि । यदृच्छयेति । यदि कदाचित् व्याध्यनुरूपेण दैवात् कर्म्म भवति तदा सिद्धिरपि भवतीति न त्वेकान्तेन । एकान्तेन सिद्धिं दर्शयितुमाह—यस्त्वित्यादि । तस्य कर्म्मण्यारभमाणे सिद्धिरित्यर्थः ॥ २३—२५ ॥

गङ्गाधरः—अध्यायार्थसंग्रहार्थमाह—तत्रेत्यादि । संग्रह इति चत्वारो रोगा इत्यादिना व्याधीनां संक्षेपः । प्रकृतिरिति द्विविधा पुनरित्यादिना । देश इति द्विविधश्चैषामित्यादिनाधिष्ठानम् । विकाराश्च मुखानि च तत्तथा । विकारा इति विकाराः पुनरित्यादिना विकारापरिसङ्ख्यानम् । मुखमिति मुखानि त्वित्यादिना सन्निकृष्टकारणानि । ईरणमिति द्वयोस्तु खल्वित्यादिना मुखानां प्रेरणं त्रिविधमुक्तम् । असन्देह इति न चान्योन्येत्यादिना । अनुबन्धश्चेति सर्व्वेष्वित्यादिना छन्दोऽनुरोधेन असन्देहवचनात् पूर्व्वं कृतोऽत्र परं निरूपितो बोध्यः । तेषां त्रयाणामित्यादिना दोषस्थानानि । नानात्मजा रोगाणां गणाः इति सर्व्वशरीरचरास्त्वित्यादिनारभ्य नखभेदश्चेत्यादिना निर्देशेन दोषाणां पृथक् प्रत्येकं रूपम् । सर्व्वेष्वपीत्यारभ्य रौक्ष्यमित्यादिना वातस्य, पुनः सर्व्वेषु

सम्बन्धः, औषधपरीक्षा रोगापेक्षिणी, तेन, तदनन्तरमेव सा भवतीति भावः ; अतः कर्म्मेति चिकित्साम्, ज्ञानपूर्व्वमिति कर्म्मदर्शनजनितज्ञानपूर्व्वम् ॥ २३—२५ ॥

चक्रपाणिः—संग्रहे "संग्रह इति चत्वारो रोगाः" इत्यादि संक्षेपोक्तिः, प्रकृतिरिति "द्विविधा पुनः" इत्यादि, देश इति "द्विविधश्चैषामधिष्ठानम्" इत्यादि, विकाराश्च मुखञ्च विकारमुखं,

पृथक्त्वेन च दोषाणां निर्दिष्टाः समुपक्रमाः।
सम्यङ् महति रोगाणामध्याये तत्त्वदर्शिना ॥ २८ ॥

इति रोगचतुष्कः।

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
महारोगो नाम विंशतितमोऽध्यायः ॥ २० ॥

इत्यारभ्य औष्ण्येत्यादिना पित्तस्य, पुनः सर्व्वेष्वित्यारभ्य श्वैत्येत्यादिना कफस्य स्वकर्म्मणो रूपम्। पृथक्त्वेन दोषाणां समुपक्रमा इति तं मधुराम्ले-त्यादिना वातस्य, पुनस्तं मधुरतिक्तेत्यादिना पित्तस्य, पुनस्तं कटुतिक्तेत्यादिना कफस्योपक्रमाः। रोगाणां महति अध्यायेऽस्मिन निर्दिष्टास्तत्त्वदर्शिना पुनर्व्वसुनेत्यर्थः ॥ २६—२८ ॥

इति रोगचतुष्को रोगाणां विज्ञानायाध्यायचतुष्क इत्यर्थः।

अध्यायं समापयति—अग्नीत्यादि। महारोगाध्याय इति समाप्तिवचनम्।

इति वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ सूत्र-स्थानीयमहारोगाध्यायजल्पाख्या विंशी शाखा ॥ २० ॥

तत्र विकाराः "विकाराः पुनः" इत्यादिना "सूत्राणि" इत्यादिना सूत्रम्, "इयांस्तु" इत्यादिना ईरणम्, असन्देहः "न चान्योन्य" इत्यादिना, "सर्व्वेषु" इत्यादिना अनुबन्धः, नानात्मजाः सर्व्वे दोषान्तरासंसृष्टदोषजन्या उक्ताः ॥ २३—२८ ॥

इति रोगचतुष्कः।

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-व्याख्यायां महारोगो नाम विंशोऽध्यायः ॥ २० ॥

# एकविंशोऽध्यायः ।

अथातोऽष्टौनिन्दितीयमध्यायं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

इह खलु शरीरमधिकृत्याष्टौ निन्दिताः पुरुषा भवन्ति, तद्यथा—अतिदीर्घश्चातिह्रस्वश्चातिलोमा चालोमा चातिगौरश्चातिकृष्णश्चातिस्थूलश्चातिकृशश्चेति ॥ २ ॥

<u>गङ्गाधरः</u>—रोगनिरूपणानन्तरं भेषजरोगयोर्यथायोजनं कर्त्तव्यं तदुपदेष्टुं योजनाचतुष्कमारभते। तत्र प्रायेण व्याधिविशेषं भेषजयोजनायां शरीरविशेषेणापेक्षत इत्यतः श्लेष्मिकनानात्मजेषु चातिस्थौल्यञ्चोक्तम्। तत्र भेषजयोजनार्थमष्टौनिन्दितीयमारभते अथात इत्यादि। अस्याध्यायस्यादौ अष्टौ निन्दिताः पुरुषा भवन्ति इत्यस्य वाक्यस्याष्टौनिन्दितेतिपदमधिकृत्य कृतोऽध्याय इति तथा। सर्व्वं पूर्व्ववद् व्याख्येयं भवति ॥ १ ॥

<u>गङ्गाधरः</u>—इह खलु भोः शरीरमधिकृत्याष्टौ निन्दिताः पुरुषा भवन्ति। मनोऽधिकृत्य च ये निन्दिताः पुरुषाः खलशठादयस्तेऽस्मिंस्तन्त्रे शारीरव्याधिचिकित्साप्रधानत्वान्नोपदिष्टाः। अतिदीर्घादयः षडिह निन्दिताः प्रस्तावात् शरीरनिन्दाधिकाराच्चोक्ताः कुब्जकाणभङ्गरादयश्चैकदेशनिन्दितत्वान्नोक्ताः। निन्दितत्वं न दृश्यत्वेन कुत्सितत्वम्, आकृतिसौष्ठवादतिदीर्घादीनामपि सौन्दर्य्यात्। किन्तु क्रियाविशेषेऽसाधुत्वम्। तथा सत्यतिदीर्घादीनां षण्णां कुत्रचित् क्रियाविशेषेऽसाधुत्वेनातिनिन्दितत्वात् तद्द्वयं नोक्तं तदुन्नेयम् ॥ २ ॥

<u>चक्रपाणिः</u>—रोगचतुष्के रोगा उक्ताः, भेषजञ्च भेषजचतुष्के, रोगभेषजयोस्तु योजना यथा कर्त्तव्या तद् वक्तुं योजनाचतुष्कोऽभिधीयते; सा च योजना रोगेण समं भेषजानां प्रायः शरीरमेवापेक्षत इति शरीरभेदप्रतिपादकोऽष्टौनिन्दितीयोऽभिधीयते ॥ १ ॥

<u>चक्रपाणिः</u>—शरीरमधिकृत्येति वचनेन मनोऽधिकृत्य ये निन्दिता अधार्म्मिककदर्य्यादयः, तानिहानुपयुक्तान् निराकरोति; अतिदीर्घादयश्च षडिह निन्दितप्रस्तावादुच्यन्ते; निन्दितत्वञ्च तेषां लोकविगानादेव; अतिदीर्घश्चेत्यादि चकारः कुब्जादिनिन्दितग्रहणार्थम् ॥ २ ॥

तत्रातिस्थूलातिकृशयोर्भूय एवापरे निन्दितविशेषा भवन्ति। अतिस्थूलस्य तावदायुषो ह्रासो जरोपरोधः कृच्छ्रव्यवायता दौर्ब्बल्यं दौर्गन्ध्यं स्वेदाबाधः क्षुदतिमात्रं पिपासातियोगश्चेति भवन्त्यष्टौ दोषाः। तदिदमतिस्थौल्यम् अतिसंपूरणाद्गुरुमधुरस्निग्धोपयोगात् अव्यवायात् अव्यायामाद् दिवास्वप्नाद् हर्षनित्यत्वात् अचिन्तनाद्बीजस्वभावाच्चोपजायते ॥ ३ ॥

तस्य ह्यतिमात्रं मेदस्विनो मेद एवोपचीयते न तथेतरे धातवस्तस्मादस्यायुषो ह्रासः। शैथिल्यात् सौकुमार्याद्गुरुत्वाच्च मेदसो जरोपरोधः। शुक्राल्पत्वान्मेदसावृतमार्गत्वाच्चास्य कृच्छ्रव्यवायता। दौर्ब्बल्यमसमत्वाद्धातूनाम्। दौर्गन्ध्यन्तु मेदोदोषान्मेदसः स्वभावात् स्वेदनत्वाच्च। मेदसः श्लेष्म-

गङ्गाधरः—अष्टसु मध्ये पुनरतिशयेन क्रियाविशेषोऽतिस्थौल्यातिकार्श्ययो-र्निन्दितत्वं दर्शयितुमाह—तत्रेत्यादि। भूय इति अतिदीर्घाद्यपेक्षयैव भूयस्त्वं यथा स्यात् तथाऽपरे निन्दितविशेषाः क्रियासु निन्दाविषयधर्म्मविशेषा भवन्ति। तानाह—अतिस्थूलस्येत्यादि। अष्टौ दोषा इति निन्दितक्रियाविशेषहेतुत्वात्। अतिस्थौल्यहेतुमाह—तदिदमित्यादि। बीजस्वभावादित्यतिस्थूल-मातापितृशोणितशुक्रस्वभावात् ॥ ३ ॥

गङ्गाधरः—एभ्यो हेतुभ्योऽतिस्थूलत्वोद्भवे तदष्टदोषजन्मप्रकारमाह—तस्य ह्यतीत्यादि। अतिमात्रमेदस्विन इति वचनार्थविवरणं मेद एवोपचीयत इत्यादि। तस्मादतिमेदस एवातिवृद्धत्वान्यधातूनामयथोपचयाद्विषमधातुत्वात्। दौर्ब्बल्यञ्चा-

चक्रपाणिः—तत्रातिस्थूलकृशयोरधिकनिन्दितत्वेन विशेषं वक्तुमाह—तत्रेत्यादि। भूय एवेत्यतिदीर्घादितुल्यलोकविगानादधिका निन्दिताश्च ते विशेषाश्चेति निन्दितविशेषाः। अति-स्थौल्यस्य हेतुमाह—तदित्यादि। अति संपूरणमतिभोजनम्। बीजस्वभावादिति स्थूलमाता-पितृजन्यत्वात्। सम्प्रति स्थूलस्य साधारणादप्याहारात् भूरिमेदोजन्माह—तस्य हीत्यादि। मेदस्विन इति हेतुगर्भविशेषणं, तेन यस्मादतिस्थूलशरीरे मेदो देहव्यापकत्वेन [illegible] प्रायो वर्द्धते, नान्ये रसादयस्तदभिभूतत्वादित्यर्थः। तस्मादिति विषमधातुत्वात्। मेदोदोषादिति

संसर्गाद् विष्यन्दित्वाद्बहुत्वाद्*व्यायामासहत्वाच्च स्वेदाबाधः । तीक्ष्णाग्नित्वात् प्रभूतकोष्ठवायुत्वाच्च क्षुदतिमात्रं पिपासातियोगश्चेति ॥ ४ ॥

भवन्ति चात्र ।

मेदसावृतमार्गत्वाद्वायुः कोष्ठे विशेषतः ।
चरन् सन्धुक्षयत्यग्निमाहारं शोषयत्यपि ॥
तस्मात् स शीघ्रं जरयत्याहारञ्चापि काङ्क्षति ।
विकारांश्चाश्नुते घोरान् कांश्चित् कालव्यतिक्रमात् ॥५॥
एतावुपद्रवकरौ विशेषादग्निमारुतौ ।
एतौ हि दहतः स्थूलं वनदावो वनं यथा ॥ ६ ॥

समधातुत्वात् । दौर्गन्ध्यन्तु मेदोदोषात्. मेदो हि दुष्टदुर्गन्धिमत् दुर्गन्धाय भवति । दुष्टमेदसो दुर्गन्धित्वे हेतुमाह मेदसः स्वभावात् स्वेदनत्वाच्चेति । पुंसः स्वेदजनकत्वे हि मेदसः स्वभाव एव हेतुः । स्वेदातिशयाच्च गात्रे दौर्गन्ध्यं स्यादिति भावः । स्वेदाबाध इति स्वेदस्यानिवृत्तिः । तत्र हेतुर्मेदसः श्लेष्मसंसर्गः । श्लेष्मा हि विष्यन्दी स्नेहगुणात् । तत्संसर्गेण मेदसोऽपि विष्यन्दनं बहुत्वात् । बहुमेदा हि श्लेष्मसंसर्गेण सुतरां विस्यन्दते । व्यायामासहत्वाच्चेति व्यायामासहत्वं ह्यतिस्थूलस्य देहशैथिल्यात् सौकुमार्य्यात् देहगुरुत्वात् दौर्बल्याच्चेति पूर्व्वोक्ता हेतवोऽत्राप्युन्नेयाः । तीक्ष्णाग्नित्वं हि पित्ताद् भवति ॥ ४ ॥

गङ्गाधरः—अत्र तु प्रभूतकोष्ठवायुत्वमुक्तमित्यतः प्रभूतकोष्ठवायुत्वेऽपि तीक्ष्णाग्नित्वं दर्शयितुमाह भवन्तीत्यादि । स इति मेदस्वी । कालव्यतिक्रमात् वयसः कालाधिक्यात् ॥ ५ । ६ ॥

दुष्टमेदोदुर्गन्धयुक्तं भवति, स्वभावादिति स्वभावादपि मेद आमगन्धित्वेन दुर्गन्धम्, स्वेदनत्वाच्चेति सति च स्वेदे दुर्गन्धत्वानुभवसिद्धेत्यर्थः, श्लेष्मसंसर्गादिभ्यो हेतुभ्य स्वेदावरोधो ज्ञेयः ॥ ३।४ ॥

चक्रपाणिः—मेदसेत्यादौ वायोरनतिवृद्धत्वेनाग्निसन्धुक्षणत्वम्, न वैषम्यापादकत्वम्, यतः, अतिवृद्धो हि वैषम्यं वह्नेः करोति वायुः ; स इति मेदस्वी ; कालव्यतिक्रमादिति भोजनकालाति-

* अत्र गुरुत्वादित्यधिकः पाठश्चके ।

मेदस्यतीवसंवृद्धे सहसैवानिलादयः ।
विकारान् दारुणान् कृत्वा नाशयन्त्याशु जीवितम् ॥ ७ ॥
मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः ।
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥ ८ ॥
इति मेदस्विनो दोषा हेतवो रूपमेव च ।
निर्दिष्टं वक्ष्यते वाच्यमतिकार्श्ये त्वतः परम् ॥ ९ ॥
सेवा रूक्षान्नपानानां लङ्घनं प्रमिताशनम् ।
क्रियातियोगः शोकश्च निद्रावेगविनिग्रहः ॥
रूक्षस्योद्वर्त्तनस्नानस्याभ्यासः प्रकृतिर्जरा ।
विकारानुशयः क्रोधः कुर्व्वन्त्यतिकृशं नरम् ॥ १० ॥
व्यायाममतिसौहित्यं क्षुत्पिपासामयौषधम् ।
कृशो न सहते तद्वदतिशीतोष्णमैथुनम् ॥

गङ्गाधरः—मेदोऽतिवृद्धौ दोषान्तरमाह—मेदस्यतीवेत्यादि । स्पष्टम् ॥ ७ ॥

गङ्गाधरः—ननु मेदस्वी कथं विज्ञायत इति ? अतोऽतिस्थूललक्षणमाह—मेदोमांसेत्यादि । इति निर्दिष्टमित्यन्वयः । अतिकार्श्ये तु दोषा हेतवो रूपमेव च इति यत्तत् वाच्यं वक्तव्यं नोक्तमतः परमूर्द्ध्वं तद्वक्ष्यते इत्यर्थः ॥८।९॥

गङ्गाधरः—तत्रादौ हेतूनाह—सेवेत्यादि । प्रमितस्य स्तोकस्य मात्राल्पस्याशनमिति प्रमिताशनम् । क्रियातियोगो वमनादिसंशोधनक्रियाणामतियोगः । निद्राया रात्रौ स्वभावतः प्रवृत्ताया विनिग्रहो न तु दिने वेगनिग्रहः । उद्वर्त्तनञ्च स्नानञ्च तत्तस्य रूक्षस्य स्नेहतैलादिहीनस्य अभ्यासः सततं क्रिया । प्रकृतिरतिकृशमातापित्रोः शोणितशुक्रस्य स्वभावः । जरा वार्द्धक्यम् । विकारानुशयो व्याधेश्चिरानुवृत्तिः ॥ १० ॥

गङ्गाधरः—अतिकृशस्य दोषानाह—व्यायाममित्यादि । व्यायामाद्यसहत्वे

क्रमात् । अतिस्थूललक्षणमाह—मेदोमांसेत्यादि । वाच्यमभिधेयम्, किंवा, वाच्यमिति निन्दितम्, अवर्ण्यमिति यावत् ॥ ५—८ ॥

चक्रपाणिः—प्रमितस्य स्तोकस्याशनं प्रमिताशनम्, क्रियातियोगो वमनातियोगः, प्रकृतिरेह-

प्लीहा कासः क्षयः श्वासो गुल्मार्शांस्युदराणि च।
कृशं प्रायोऽभिधावन्ति रोगाश्च ग्रहणीगताः ॥ ११ ॥
शुष्कस्फिगुदरग्रीवो धमनीजालसन्ततः।
त्वगस्थिशेषोऽतिकृशः स्थूलपर्व्वा नरो मतः ॥ १२ ॥
सततं व्याधितावेतावतिस्थूलकृशौ नरौ।
सततञ्चोपचर्य्यौ हि कर्षणैर्बृंहणैरपि ॥ १३ ॥
स्थौल्यकार्श्ये वरं कार्श्यं समोपकरणौ हि तौ।
यद्युभौ व्याधिरागच्छेत् स्थूलमेवातिपीडयेत् ॥ १४ ॥

कृशस्यातिस्थूलस्येव हेतुन न दर्शितवान् दौर्ब्बल्यदोषस्य दृश्यमानत्वात्। अतिकृशस्यातिदौर्ब्बल्ये यत्किञ्चिदाहारादेवातिगुर्व्वाहारा भवन्ति, सुतरां तीक्ष्णाग्निदोषा न भवन्ति इति भावः। प्लीहादयश्च रोगा अतिकृशं धावन्ति ॥ ११ ॥

गङ्गाधरः अतिकृशस्य रूपमाह—शुष्कस्फिगित्यादि। स्थूलपर्व्वा स्थूलग्रन्थिः ॥ १२ ॥

गङ्गाधरः अनयोः क्रियासूत्रमाह सततमित्यादि। सततं हि अतिस्थूले कर्षणोपचारः। अतिकृशे सततं बृंहणोपचारः कर्त्तव्यः। तत्र हेतुः सततं व्याधितावित्यादि। सततव्याधितत्वञ्चातिस्थूलस्य देहस्य शैथिल्यादि। शुक्राल्पत्वदौर्ब्बल्यदोगन्ध्यादित्वञ्च कृशस्य सततव्याधितत्वं व्यायामाद्यसहत्वम् ॥ १३ ॥

गङ्गाधरः अनयोरप्यतिनिन्दितत्वं दर्शयति स्थौल्येत्यादि। स्थौल्यकार्श्ये इति निर्द्धारणे सप्तमी। वरमिति किञ्चिदिष्टम्। वरत्वं दर्शयति—समोपेत्यादि। हि शब्दो हेत्वर्थे। समोपकरणावपि तावुभौ अतिस्थूलातिकृशौ यस्मात् व्याधिः सहसा आगच्छेत्। आगच्छंश्च स्थूलमेवातिपीडयेत्।

जनकं बीजम्, अनुशयोऽनुबन्धः। कृशस्य लक्षणम्—शुष्केत्यादि। त्वगस्थिशेष इति दृश्यते इति शेषः, स्थूलपर्व्वा स्थूलग्रन्थिः ॥ ९—१२ ॥

चक्रपाणिः—कर्षणबृंहणैरिति यथासंख्यम्। वरमिति मनागिष्टम्, स्थूलमेवातिपीडयेदिति स्थूलस्य दुरुपक्रमत्वात्। यतः स्थूलस्य सन्तर्पणमतिस्थौल्यकरम्, अपतर्पणञ्चास्य प्रवृद्धाग्नित्वान्न सोढुं क्षमः, कृशे तु सन्तर्पणं योग्यमेवेति भावः ॥ १३।१४ ॥

सममांसप्रमाणस्तु समसंहननो नरः।
दृढेन्द्रियो विकाराणां न बलेनाभिभूयते ॥ १५ ॥
क्षुत्पिपासातपसहः शीतव्यायामसंसहः।
समपक्ता समजरः सममांसचयो मतः ॥ १६ ॥
गुरु चातर्पणञ्चेष्टं स्थूलानां कर्षणं प्रति।
कृशानां बृंहणार्थन्तु लघु सन्तर्पणन्तु यत् ॥ १७ ॥

नतु अतिकृशमतिपीड़येत्। अतिकृशस्य गमनागमनादिष्वतिस्थलतः किञ्चिदधिकयोग्यत्वात्। सन्तर्पणापतर्पणादिषु च किञ्चित् क्षमत्वम्। समोपकरणत्वञ्चानयोः अतिव्यायामव्यवायक्षुत्पिपासातिशीतोष्णत्वासहत्वम ॥ १४ ॥

<u>गङ्गाधरः</u>—निन्दितपुरुषप्रसङ्गात् प्रशस्तपुरुषं दर्शयति समेत्यादि। कश्चिदत्र "मांसशब्देनोपचयः स्तद्विपर्य्ययश्च विवक्षितस्तेन सममुपचयस्य प्रमाणं यस्य स तथा" इति व्याचष्टे, तन्न; अतिदीर्घादेः समोपचयप्रमाणत्वेऽपि निन्दितत्वात्। वस्तुतस्तु समे मांसप्रमाणे यस्य स तथा, मांसस्य समत्वं यथायोग्यंनातिस्थौल्यं नातिकार्श्यमित्यर्थः। प्रमाणस्य समत्वं नातिदैर्घ्यं नातिह्रस्वत्वं यथायोग्यमित्यर्थः। समसंहननः समं यथायोग्यं शरीरमांसादीनां सन्निवेशो दार्ढ्यं नातिशैथिल्यं नातिदार्ढ्यमित्यर्थः। दृढेन्द्रिय इति दृढ़ दृष्ट्यादिः। तथा सति स नरो देहे जातानां विकाराणां बलेन नाभिभूयते। तथा क्षुधादिसहस्यात्। समपक्तादिश्च मतः ॥ १५।१६ ॥

<u>गङ्गाधरः</u>—अतिस्थूलस्य यत् कर्षणमुक्तमतिकृशस्य च यद्बृंहणमुक्तं तयोः सूत्रे आह—गुरु चेत्यादि। स्थौल्ये तीक्ष्णाग्नित्वप्रभूतकोष्ठवायुत्वाभ्यां गुरुद्रव्यं यदतर्पणं तदिष्टमप्यपोषकत्वात् कर्षणं स्यात्। न तु यद्द्रव्यं सन्तर्पणं तद्बृंहणं कृशानां भवति। अतर्पणमिति येन न तृप्तिः स्यात् तदतर्पणम्। तर्पणद्रव्यञ्च

<u>चक्रपाणिः</u>—सम्प्रति प्रशस्तपुरुषमाह—समेत्यादि। मांसशब्देनेहोपचयस्तद्विपर्य्ययश्च विवक्षितः, तेन सममुपचयस्य प्रमाणं यस्य स तथा। संहननं मेलकः। अपरमपि सममांसप्रमाणगुणानाह—क्षुदित्यादि ॥ १५।१६ ॥

<u>चक्रपाणिः</u>—एवं स्थूलकृशौ प्रतिपाद्य तयोर्योजनीयं भेषजमाह—गुर्व्वित्यादि। गुरु चातर्पणञ्च, यथा मधु। एतद्धि गुरुत्वात् वृद्धमग्निं यापयति अतर्पणत्वाच्मेदो हन्ति। एवं प्रभातिकाप्रभृतीनामतर्पणानां संस्कारादिना गुरुत्वं कृत्वा भोजनं देयम्। कृशानान्तु लघु तर्पणं देयम्, तद्धि

वातघ्नान्यन्नपानानि श्लेष्ममेदोहराणि च ।
रूक्षोष्णा वस्तयस्तीक्ष्णा रूक्षाण्युद्वर्त्तनानि च ॥
गुडूचीभद्रमुस्तानां प्रयोगस्त्रैफलस्तथा ।
तक्रारिष्टप्रयोगश्च प्रयोगो माक्षिकस्य च ॥

श्लेष्मसंसृष्टमेदस्त्वादिष्टमित्यतः प्रशातिकायवादीनामतर्पणानां संस्कारेण च गुरूणां लघुत्वं विधाय भोजनम्। तथा गुरूणां संस्कारेणातर्पणत्वं विधाय भोजनं स्थूलानां कर्षणं प्रतीष्टं भवति। अतिस्थूलस्य ज्वरादौ व्याधौ दुरुपक्रमत्वात्। न हि तस्य सन्तर्पणं स्थौल्यकरत्वाद्धितम्। नाप्यतर्पणमतितृड्डाग्निवायुत्वात् सह्यं स्यादिति। कृशानां बृंहणार्थं लघु यद्द्रव्यं भवति अग्निकरत्वात्। तदतिकृशस्याल्पाग्नित्वादिष्टमपि तथाबृंहणत्वान्न चरं गुरुत्वबृंहणाद्युत्तमत्वापेक्षया देयम्। यच्च सन्तर्पणं द्रव्यं तदपि पुष्टिकरत्वादिष्टमित्यर्थः। इत्यत्र गुरुत्वापतर्पणत्वोभयं यत्र तदिष्टं स्थौल्ये। लघुत्वसन्तर्पणत्वोभयं यत्र तदिष्टं कार्श्ये। एवं सति स्वभावगुरुद्रव्यं संस्कारेणापतर्पणं कृत्वा स्थौल्ये स्वभावलघु च द्रव्यं संस्कारेण लघु च कृत्वा स्थौल्ये प्रयोक्तव्यम्। तथा कार्श्ये स्वभावलघु यद्द्रव्यं तत् संस्कारेण सन्तर्पणं कृत्वा स्वभावगुरु च यद्द्रव्यं तदपि संस्कारेण गुरु कृत्वा प्रयोजयेदित्यर्थः। लघुत्वस्यापतर्पणत्वं गुरुत्वस्य सन्तर्पणत्वमिति। तत्रादौ स्थौल्ये गुरु चातर्पणं कर्षणमिति सूत्रं विवृणोत्यत्रैव चिकित्सास्थाने विवरणाभिप्रायात् ॥ १७ ॥

गङ्गाधरः — वातघ्नेत्यादि। वातघ्नानि गुरुस्निग्धोष्णानि। श्लेष्ममेदोहराणि रूक्षोष्णलघूनि च अन्नपानानीत्यन्वयः। एतदपि भाष्यरूपेण सूत्रम्। "रूक्षोष्णा वस्तयस्तीक्ष्णाः" इति वास्तवातहराणामिति वचनात् स्नेहद्रव्यनिर्मितत्वाद्वस्तेः सत्त्वस्या एव। सति च वातहरत्वे तीक्ष्णरूक्षोष्णद्रव्ययोगेण तथात्वविधानान्मेदःश्लेष्महरत्वं बोध्यम्। एवं रूक्षद्रव्यकृतोद्वर्त्तनस्य जलोपसेकेन गुरुत्वात् वातहरत्वापतर्पणत्वञ्च बोध्यम्। गुडूचीभद्रमुस्तानां प्रयोगस्त्रिदोषहरत्वात्

लाघवादग्निवृद्धिकरं सन्तर्पणत्वाच्च पुष्टिकृत्। एतच्च द्वितयमप्यभावतमत्वेनोक्तम्। तेन मेदस्विनो यल्लघु चातर्पणं प्रशातिकाप्रियङ्ग्वादि, तच्च कर्त्तव्यम्। तथा कृशस्यापि नवान्नादि गुर्वपि सन्तर्पणं कर्त्तव्यम्। परं लाघवं गौरवञ्च तत्संस्कारादिना प्रतिकर्त्तव्यम् ॥ १७ ॥

चक्रपाणिः — माक्षिकस्येति मधुनः, न च मधुनो वृष्यप्रयोगेषु दृष्टत्वाद् बृंहणत्वं वाच्यम्, यतः योगवाहि मधु यदा वृष्येण युज्यते तदा वृष्यत्वं करोति, लेखनयुक्तन्तु लेखनकरम्, तथा

विडङ्गं नागरं क्षारं काललोहरजो मधु।
यवामलकचूर्णस्य प्रयोगः श्रेष्ठ उच्यते॥
विल्वादिपञ्चमूलस्य प्रयोगः क्षौद्रसंयुतः।
शिलाजतुप्रयोगश्च साग्निमन्थरसः परः॥
प्रशातिका प्रियङ्गुश्च श्यामाका यवका यवाः।
जूर्णाह्वाः कोद्रवा मुद्गाः कुलत्थाश्च मुकुष्ठकाः * ॥
आढकीनाञ्च बीजानि पटोलामलकैः सह।
भोजनार्थं प्रयोज्यानि पानञ्चानु मधूदकम्॥
अरिष्टांश्चानुपानार्थं मेदोमांसकफापहान्।
अतिस्थौल्यविनाशाय प्रविभज्य प्रयोजयेत्॥ १८॥

तथा त्रैफलप्रयोगोऽपि तथा तक्रारिष्टप्रयोगश्च। माक्षिकस्य मधुनः प्रयोगस्तु तस्य योगवाहित्वेन बृंह्यप्रयोगे दृष्टत्वेऽपि केवलस्य बृंह्यत्वाभावात् स्वभावेन रौक्ष्यादिगुणयोगाच्च कर्षणमिति बोध्यम्। उक्तं हि "नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु॥" इति। विडङ्गादीनामोषधिद्रव्याणां गुरुत्वाभावेऽपि प्रभावात् स्थौल्यकर्षणत्वम्। काललोहरजस्तीक्ष्णलौहस्य जारितमारितचूर्णः। मधु इति पुनः पाठात् विडङ्गादीनां सहयोगेन प्रयोगो बोध्यः। पूर्व्वं हि केवलस्य माक्षिकस्य प्रयोग उक्तः। विल्वादिक्षौद्रसंयुत इत्येको योगः। प्रयोगः सततोपसेवनमित्यर्थः। शिलाजतित्यारभ्य साग्निमन्थरस इत्यन्तोऽप्येको योगः। अथ गुरु चापतर्पणमाह प्रशातिकेत्यादि। प्रशातिका ओड़िधान्यमिति लोके प्रसिद्धा। प्रियङ्गुश्चेति प्रियङ्गुनामधान्यविशेषः। श्यामाका इति श्यामघासबीजानि। यवकाः स्वल्पयवाः। यवा बृहद्यवाः प्रसिद्धाः। जूर्णाह्वा जुनारा इति लोके। आढ़की तुवरी। मधूदकमिति मधुमिश्रोदकमित्यर्थः॥ १८॥

स्वरूपेणापि रूक्षादिगुणयोगात् कर्षणं, वचनं हि—"नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु।" विडङ्गादिप्रयोगो गौरवनिरपेक्ष एवातिस्थौल्यहरः प्रभावात्। प्रशातिका उड़िकेति प्रसिद्धा। यवकाः स्वल्पयवाः, चक्रमुद्रक वनमुद्रक इति प्रसिद्धः, आढकी तुवरी॥ १८॥

* कुलत्थाश्चक्रमुद्गका इति चक्रस्वीकृतः पाठः।

अस्वप्नञ्च व्यवायञ्च व्यायामं चिन्तनानि च ।
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणाभिप्रवर्द्धयेत् ॥
स्वप्नो हर्षः सुखा शय्या मनसो निर्वृतिः शमः ।
चिन्ताव्यवायव्यायाम-विरतिः संप्रहर्षणम् * ॥
नवान्नानि नवं मद्यं ग्राम्यानूपौदका रसाः ।
संस्कृतानि च मांसानि दधि सर्पिः पयांसि च ॥
इक्षवः शालयो माषा गोधूमा गुडवैकृतम् ।
वस्तयः स्निग्धमधुरास्तैलाभ्यङ्गश्च सर्व्वदा ॥
स्निग्धमुद्वर्त्तनं स्नान-गन्धमाल्यनिषेवणम् ।
शुक्लं वासो यथाकालं दोषाणामवसेचनम् ॥
रसायनानां वृष्याणां योगानाञ्चोपसेवनम् ।
हत्वातिकार्श्यमाधत्ते नृणामुपचयं परम् ॥ १८ ॥

गङ्गाधरः—अतिस्थौल्यप्रतिक्रियामुक्त्वातिकृशस्य प्रतिक्रियामाह—अस्वप्नमित्यादि। अस्वप्नादिकं क्रमेण वर्ज्जयितुं स्वप्नादिकं क्रमेण वर्द्धयेत्। स्वप्न इत्यादि। सुखा शय्या सुखदशय्या। मनसो निर्वृतिः अनिर्वृत्यभावः। शमः शान्तिर्मनस एवेत्यन्वयः। चिन्तादिभ्यो विरतिर्निवृत्तिः। ग्राम्यानूपौदकमांसानां रसा ग्राम्यानूपौदका रसाः। संस्कृतानि च मांसानीति वचनेन मांससामान्यस्य संस्कारेण लघुत्वमुत्पाद्य प्रयोगः कार्श्ये न पथ्यं बोध्यमिति ज्ञापकेन नवान्नादीनां सर्व्वेषां गुरुसन्तर्पणानामपि संस्कारेण लघुत्वमाधाय कार्श्ये न प्रयोग इति ज्ञापितम्। तथा प्रकृतिलघूनामपि सन्तर्पणत्वमाधाय प्रयोगः कार्श्ये बोध्यः। प्रकृतिलघूनां तथा प्रकृतिसन्तर्पणानाञ्च

चक्रपाणिः—कार्श्यचिकित्सामाह—स्वप्न इत्यादि। शमः शान्तिः। ननु नवान्नादीनां गुरूणां संस्कारादिनाऽगौरवं प्रतिकर्त्तव्यमग्निमान्द्यभयात्, तत् किमिति लघून्येव रक्तशाल्यादीनि तथा न क्रियन्ते, तानि हि प्रकृत्या लघूनि तर्पणानि च मधुरयोगात्? न, उभयस्याभिप्रेतत्वात्, प्रकृतिलघु च तर्पणं रक्तशाल्यादि, संस्कारादिलघु च नवान्नादि सन्तर्पणकरणमिति; एवं पूर्व्वोक्त-

* प्रियदर्शनमिति चक्रपाणिः।

अचिन्तनाच्च कार्य्याणां ध्रुवं सन्तर्पणेन च।
स्वप्नप्रसङ्गाच्च नरो वराह इव पुष्यति ॥ २० ॥
यदा तु मनसि क्लान्ते कर्म्मात्मानः क्लमान्विताः।
विषयेभ्यो निवर्त्तन्ते तदा स्वपिति मानवः ॥ २१ ॥

रक्तशाल्यादीनां सुतरामनुक्तानां प्रयोगः कार्य्य इतो लघुसन्तर्पणन्तु यदिति सूत्रेणैव प्रतिपादितो भवति। वस्तेय इत्यस्य विशेषणं स्निग्धमधुरा इति। गन्धमाल्यादीनां मनःप्रहर्षणत्वात् पुष्टिकरत्वम्। यथाकालं यस्य दोषस्य यश्च यः कालस्तस्मिन् काले चीयमानस्य तस्य दोषस्यावसेचनं निर्हरणमपचयकरणमित्यर्थः ॥ १९ ॥

गङ्गाधरः—प्रशस्ततमान्याह—अचिन्तनाच्चेत्यादि। कार्य्याणामिति पदेन सत्कर्म्मकरणेऽपि चिन्ताव्यवच्छेदार्थं चिन्तामात्रस्यैव कर्षणत्वात्। वराह इवेत्यनेन पुष्टिकरणे प्रशस्ततमत्वं ख्यापितम्। स्वप्नप्रसङ्गादिति सततनिद्रयाऽतिमात्रनिद्रया चेत्यनाभ्यां स्वप्नप्रस्तावान्निद्रायाः स्थौल्यकार्श्ययोः प्रधानभेषजत्वेन विशेषादुपदेशं कर्त्तुमारभते—यदा त्वित्यादि। मनसीति चेतसि। क्लान्ते इति क्लमान्विते। क्लमस्तूक्तः सुश्रुते "योऽनायासश्रमो देहे प्रवृद्धः श्वासवर्ज्जितः। क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः॥" इति. देहक्लमाभिप्रायेण उक्तस्तदनुसारेण मनःप्रभृतीनां निश्चेष्टता क्लमः। कर्म्मात्मान इन्द्रियाणि। कालस्वभावात् श्रमादिहेत्वन्तरतो वा मनसि चेष्टाहीने मनःप्रयुज्यानीन्द्रियाणि क्लमान्वितानि भूत्वा विषयेभ्यः शब्दस्पर्शादिभ्यो निवर्त्तन्ते यदा तदा मानवो राशिपुरुषः स्वपितीत्यतो न परमात्मा सुप्तोऽनुमीयते। एतेन समनस्केन्द्रियाणां विषयतो निवृत्तिर्निद्रेति ख्यापितम्। तस्याश्च भेदाः "तमोभवा" इत्यादिनात्रैवाध्याये वक्ष्यन्ते इति। कश्चित्तु—एकस्तु स्वप्नो निरिन्द्रियप्रदेशे मनोऽवस्थानमित्याह, परे तु मेध्यामनःसंयोगो निद्रा स्वप्नः। पुरी तन्मनःसंयोगो निद्रासुषुप्तिरित्याहुः। तदमूलकम्। वस्तुतस्तु कर्म्मात्मान इत्यनेन

प्रभातिकादावप्यनुसर्त्तव्यम्। अचिन्तनाच्चेत्यादिना प्रकृष्टं बृंहणकारणमुच्यते, स्वप्नप्रसङ्गो नित्यं स्वप्नमतिमात्रञ्च ॥ १९।२० ॥

चक्रपाणिः—सम्प्रति प्रस्तावानुगतं स्थौल्यकार्श्यचिकित्साप्रधानभूतं स्वप्नं निद्राख्यं सर्व्वतो निरूपयति—यदा त्वित्यादि। मनसीत्यन्तःकरणे, किंवा मनोयुक्त आत्मा मन इत्युच्यते, तस्मिन्

आत्मबुद्ध्यहङ्काराणां व्यवच्छेदः। बाह्यानां दशानामिन्द्रियाणाञ्च ग्रहणम्। मनसश्च क्लान्तिः स्वस्थानस्य हृदयस्य तमसावरणेन निमीलनाद्भवति। मनसश्च सर्व्वेन्द्रियाणां चेष्टामत्ययस्य क्रमात् सर्व्वेन्द्रियाणां क्रमो निश्चेष्टता भवति। सुतरां सर्व्वेन्द्रियाणि विषयेभ्यो निवर्त्तन्ते। यतः स राशि-पुरुषस्य स्वापो निद्रेत्यर्थः। समनस्केन्द्रियाणां विषयतो निवृत्तिस्तु राशि-पुरुषस्य वस्तुतो निद्रा। किन्तु राशिपुरुषस्य सर्व्वबाह्येन्द्रियाणां विषयतो निवृत्त्यां नानुमीयते आत्मनो निद्रा। सा चात्मनि नीरजस्तमोऽन्यतरसंयोगः तैजसतामसाहङ्कारान्यतरसंयोग इति यावत्। तत्संयोगे तु हेतुस्तम आत्ममनः-स्थानश्च, श्लेष्मणोद्रेकश्चश्रमादिः। तमःश्लेष्मादिना हि उद्रिक्तरजस्ककेवलान्यतर-त्वेन तमस उद्रेकात् सत्त्वस्य लाघवादुद्रिक्तरजस्केन केवलेन वोद्रिक्तेन तमसा हृदयावरणम्। हृदयावरणेन हि मनश्चेतयितुमात्मा नालं भवति, चैतन्या-भावात् प्रकाशाभावाच्च। सक्रियमपि मनो बाह्येन्द्रियाणां स्थानेषु न गन्तु-मर्हति। नातश्चेन्द्रियाणि स्वस्वविषयेषु प्रयोक्तुमर्हति। ततश्चेन्द्रियाणि न स्वविषयान् ग्रहीतुमर्हन्ति। सुतरां विषयेभ्यो निवर्त्तन्ते इति। बाह्येन्द्रियाणां विषयतो निवृत्त्या मानवानां बाह्येन्द्रियकार्य्यकाले कर्म्माभावेनानुमीयते आत्मनो राजसतामसाहङ्कारान्यतरयोगः। सा च निद्रा द्विधा। तत्र तैजसा-हङ्कारयोगः स्वप्नः। तामसाहङ्कारयोगः सुषुप्तिः। अत्र तु निद्रा सुप्तिः सुषुप्ति-श्चोच्यते। तयोस्तमोभवेत्यादिना विवरणात् स्वप्नस्य पुनरिन्द्रियस्थाने विव-रितव्यत्वम्। "मनोवहानां पूर्णत्वात् दोषैरतिबलैस्त्रिभिः। स्रोतसां दारुणान् स्वप्नान् काले पश्यति दारुणे॥ नातिप्रसुप्तः पुरुषः सफलानफलांस्तथा। इन्द्रियेशेन मनसा स्वप्नान् पश्यत्यनेकधा॥ दृष्टं श्रुतानुभूतञ्च प्रार्थितं कल्पितं तथा। भाविकं दोषजञ्चैव स्वप्नं पञ्चविधं विदुः॥" इत्यादि। तत् स्वप्न-दर्शनस्य विवरणं न तु स्वप्नस्य निद्रारूपस्य। सुप्तिसुषुप्त्योर्लिङ्गन्तु देहिनो बुद्धिकर्म्मेन्द्रियकार्य्याभावः। तत्र बुद्धिकर्म्मेन्द्रियाणां नातिकार्य्याभावः स्वप्नस्य लिङ्गम्। अतिशयेन कार्य्याभावस्तु सुषुप्तेः। श्वासोच्छ्वासप्राणा-पानादिकन्तु न बुद्धिकर्म्मेन्द्रियाणां कार्य्यम्। आत्मलिङ्गत्वादात्मकार्य्यं सुखादिवत्। उक्तं हि माण्डूक्योपनिषदि "स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग

क्लान्ते इति निष्क्रिये, कर्म्मात्मान इतीन्द्रियाणि, क्रमान्विताः क्रियारहिताः, विषयेभ्यो रूपादिभ्यः, मनसोऽप्रवृत्त्येन्द्रियाण्यपि न प्रवर्त्तन्त इति भावः, तदा स्वपितीति स्वप्नगुणयुक्तो भवति, स्वप्नश्च निरिन्द्रियप्रदेशे मनोऽवस्थानम्; किंवा, कर्म्मात्मान इति संसार्य्यात्मानः। क्लमसि क्लान्ते

एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः। यत्र सुप्तो न कञ्चन कामं कामयते न च कञ्चन स्वप्नं पश्यति तत् सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः।" इत्यादि। सुषुप्तिकाले केवलमनोमात्रयुक्तत्वात् तदितरतत्त्वानां लयात् पुनर्ज्जन्मान्तरसंस्कारतः सर्व्वतत्त्वसम्पूर्णः स एव जीव इति बुद्धिमान जागरितः स्यात्। उक्तं हि कैवल्योपनिषदि—"स एव माया परिमोहितात्मा शरीरमास्थाय करोति सर्व्वम्। स्त्रियान्नपानादिविचित्रभोगैः स एव जाग्रत् परितृप्तिमेति॥ स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके। सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति॥ पुनश्च जन्मान्तरकर्म्मयोगात् स एव जीवः स इति प्रबुद्धः॥" इत्यादि। प्रथमः पादस्तु जागरितस्थान आत्मा। तमःश्लेष्माद्यभावे सत्त्वोद्रेकात् तमसात्ममनःस्थानहृदयावरणाभावेन उद्रिक्तसत्त्वेन प्रकाशात् सात्त्विकाहङ्कारोद्रेकः। प्रवर्त्तको हि सत्त्वम्। अतस्तेन चोद्रिक्तसात्त्विकाहङ्कारेण प्रवर्त्तकेनात्मा मनश्चेतयितुमर्हन् मनश्चेतयति। तच्चेतितनश्च मनः श्रोत्रादीनां स्वस्वस्थानेषु गन्तुमर्हन् गच्छच्च श्रोत्रादीनि चेतयित्वा स्वस्वकर्म्मसूपयुङ्क्ते। प्रयोजितानि पुनः श्रोत्रादीनि स्वस्वविषयान् गृह्णन्तीति जागरणं सात्त्विकाहङ्कारात्मसंयोगः। तस्य लिङ्गानि बाह्येन्द्रियकर्म्माणि। माण्डूक्येऽप्युक्तं—"जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुक् वैश्वानरः प्रथमः पादः॥" इति। सुश्रुतेऽप्युक्तं—"तद्धृदयं विशेषेण चेतनास्थानम्। अतस्तस्मिंस्तमसावृते सर्व्वप्राणिनः स्वपन्ति। भवति चात्र। पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम्। जाग्रतस्तद्विकशति स्वपतश्च निमीलति॥ निद्रान्तु वैष्णवीं पाप्मानमुपदिशन्ति। सा स्वभावत एव सर्व्वप्राणिनोऽभिस्पृशति। तत्र यदा संज्ञावहानि स्रोतांसि तमोभूयिष्ठः श्लेष्मा प्रतिपद्यते तदा तामसी नाम निद्रा सम्भवत्यनवबोधिनी सा प्रलयकाले। तमोभूयिष्ठानामहःसु निशासु च भवति। रजोभूयिष्ठानामनिमित्तम्। सत्त्वभूयिष्ठानामर्द्धरात्रे। क्षीणश्लेष्मणामनिलबहुलानां मनःशरीराभितापवतां च नैव सा वैकारिकी भवति। भवन्ति चात्र। हृदयं चेतनास्थानमुक्तं सुश्रुत देहिनाम्। तमोऽभिभूते तस्मिंस्तु निद्रा विशति देहिनाम्॥ निद्राहेतुस्तमः सत्त्वं बोधने हेतुरुच्यते। स्वभाव एव वा हेतुर्गरीयान् परिकीर्त्यते॥ पूर्व्वदेहानु-

आत्मानः क्लान्ता भवन्ति, तमोऽधीनप्रवृत्तित्वादात्मनो, ततश्च मनोनिवृत्त्या आत्मानोऽपि न विषयान् गृह्णन्ति, इन्द्रियाणि चात्मनोऽप्रवृत्त्यैव न प्रवर्त्तन्ते॥ २१॥

निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम् ।
वृषता क्लीवता ज्ञानमज्ञानं जीवितं न च ॥ २२ ॥
अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता ।
सुखायुषी न वा कुर्य्यात् कालरात्रिरिवागता ॥
सैव युक्ता पुनर्युङ्क्ते निद्रा देहसुखायुषा ।
पुरुषं योगिनं सिद्धा सत्या बुद्धिरिवागता ॥ २३ ॥

भूतांस्तु भूतात्मा स्वपनः प्रभुः । रजोयुक्तेन मनसा गृह्णात्यर्थान् शुभाशुभान् ॥ करणानान्तु वैकल्ये तमसाभिप्रवर्द्धिते । अस्वपन्नपि भूतात्मा प्रसुप्त इव चोच्यते ॥" इति । अस्वपन्निति वैकल्याभिप्रायेण प्रसुप्त इति । तैजसतामसाहङ्कारयोगाभिप्रायेणोक्तम् ॥ २०।२१ ॥

गङ्गाधरः अथ निद्राफलमाह निद्रायत्तमित्यादि । निद्रायत्तं सुखं दुःखमित्यादि भावाभावरूपं निद्रायाः समयोगायोगमिथ्यायोगातियोगयुक्ताया आयत्तमधीनम् । तत्र समयोगयुक्तनिद्रायत्तानि सुखपुष्टिबलवृषताज्ञानजीवितानि भवन्ति । इतराणि दुःखादीनि मिथ्यायोगादियुक्तनिद्रायत्तानि भवन्तीत्यर्थः । न चेत्यजीवितमल्पजीवितञ्च ॥ २२ ॥

गङ्गाधरः प्रतिलोमतन्त्रयुक्त्या तद्द्वयमुदाहरति— अकालेऽतीत्यादि । अकाले इति दिवाद्यविहितकाले निषेविता निद्रा मिथ्यायोगयुक्ता भवति । अतिप्रसङ्गात् निषेविता निद्राऽतियोगयुक्ता भवति । न च निषेविता निद्रा अयोगयुक्ता भवति । एषा त्रिविधा निद्रा सुखायुषी नैव कुर्य्यात् । वाशब्द एवार्थे । कालरात्रिः काल एव यम इति यावत् । अथवा सकलकालिकी निद्रा कालरात्रिः । सैवेति निद्रा युक्ता समयोगयुक्ता सुखायुषा सुखेनायुषा च पुरुषं युङ्क्ते । योगिनं योगवन्तं यथा सत्या बुद्धिस्तत्त्वज्ञानम् ॥ २३ ॥

चक्रपाणिः—सम्प्रति विधिना सेवितायां निद्राया गुणम् अविधिना च दोषमाह—निद्रायत्तमित्यादिना स चेत्यन्तेन । अत्र च सुखादि विधिसेवितनिद्राफलम्, दुःखादि त्वविधिनिद्राफलम् । एतदेव विभजते—अकाल इत्यादि । अकाल इति दिवादौ निद्रां प्रति निषिद्धे काले । अनेन च मिथ्यायोगो निद्राया उक्तः, कालरात्रिः कालो यमः, सत्या बुद्धिस्तत्त्वज्ञानम् ॥ २२—२३ ॥

गीताध्ययनमद्यस्त्री-कर्म्मभाराध्वकर्षिताः।
अजीर्णिनः क्षताः क्षीणा वृद्धा बालास्तथावलाः॥
तृष्णातीसारशूलार्त्ताः श्वासिनो हिक्किनः कृशाः।
पतिताभिहतोन्मत्ताः श्रान्ता यानप्रजागरैः॥
क्रोधशोकभयक्लान्ता दिवास्वप्नोचिताश्च ये।
सर्व्व एते दिवास्वप्नं सेवेरन् सार्व्वकालिकम्॥

गङ्गाधरः—निद्रायाः कालमाह—गीतेत्यादि। गीतादिकर्षितानां रौक्ष्यविरोधी स्निग्धदिवास्वप्नो देहपुष्टिकरो रौक्ष्यहरश्च भवतीत्यारोग्यं तेषां भवति। अजीर्णिन इति जीर्ण एव भुञ्जीतेति वचनादजीर्णे सति भोजनाभावादभुक्तवत एवाजीर्णिनो दिवानिद्रा तदजीर्णपरिपाकाय भवति। एवं क्षतादीनामपि बोध्यम्। उक्तं हि सुश्रुते "सर्व्वर्त्तुषु दिवास्वप्नः प्रतिषिद्धोऽन्यत्र ग्रीष्मात्। प्रतिषिद्धेष्वपि तु बालवृद्धस्त्रीकर्षितक्षतक्षीणमद्यनित्ययानवाहनाध्वकर्म्मपरिश्रान्तानामभुक्तवतां मेदःस्वेदकफरसरक्तक्षीणानामजीर्णिनाञ्च मुहूर्त्तं दिवास्वपनमप्रतिषिद्धम्। रात्रावपि जागरितवतां जागरितकालादर्द्धमिष्यते दिवास्वप्नः" इति। तस्मात् मेदःस्वेदक्षीणाः कृशा एव भवन्ति। रसक्षीणशब्देन रक्तक्षीणशब्देन च पुनरबलाः। दिवास्वप्नश्च तृट्शूलहिक्काजीर्णातिसारिणामित्यनेन वाच्यत्वान्न न्यूनता। तथा पतिता अभिहता उन्मत्ताः क्रोधक्रान्ताः शोकक्रान्ताः भयक्रान्ताश्च कफक्षीणा एव। यानप्रजागरैरिति बहुवचनं प्रत्येकं बहुत्वाभिप्रायेण। प्रजागरो रात्रिजागरणम्। दिवास्वप्नोचिताः सर्व्वर्त्तुषु अभ्यस्तदिवास्वप्नाः। सुश्रुतेऽप्युक्तं "दिवा वा यदि वा रात्रौ निद्रा सात्म्यीकृता तु यैः। न तेषां

चक्रपाणिः—सम्प्रति दिनेऽपि येषां निद्रा सेव्या तानाह—गीतेत्यादि। इह गीताद्यध्ययनकर्षितानां दिवास्वप्नात् धातुपुष्टौ सत्यामारोग्यम्, अतीसारादिषु च प्रभावाद्दिवापि निद्रा हिता, अजीर्णिनस्तु अजीर्णपाकार्थं दिवानिद्रा, निद्रा हि स्रोतोऽवरोधेनाग्निबलं कृत्वा शीघ्रमाहारं पचति; दिवास्वप्नसात्म्यानां सहसा तत्परित्यागे दोष एव स्यात्; रात्रौ जागरितानाञ्च तज्जनितवातक्षोभशमार्थं दिवास्वप्नः, स च जागरणार्द्धकालेन कर्त्तव्यः, यदुक्तम्—'यावत्कालं न सुप्तः स्याद् रात्रौ स्वप्नाद् यथोचितात्। ततोऽर्द्धमात्रं तत्कालं दिवास्वप्नो विधीयते॥' अयञ्च दिवास्वप्नोऽभुक्तवतामेव, यदुक्तं हारीते—"भुक्त्वा स्वप्नं न सेवेत सुप्तोऽप्यसुखितो भवेत्"। अन्यत्राप्युक्तं व्यायामादिषु दिवास्वप्नविधाने—"नरान् निरशनान् कामं दिवा स्वापयेत्" इति।

धातुसाम्यं तथा ह्येषां बलञ्चाप्युपजायते ।
श्लेष्मा पुष्णाति चाङ्गानि स्थैर्य्यं भवति चायुषः ॥ २४ ॥
ग्रीष्मे त्वादानरुक्षाणां वर्द्धमाने च मारुते ।
रात्रीणाञ्चातिसङ्क्षेपाद् दिवा स्वप्नः प्रशस्यते ॥ २५ ॥
ग्रीष्मवर्ज्ज्येषु कालेषु दिवास्वप्नात् प्रकुप्यतः ।
श्लेष्मपित्ते दिवास्वप्नस्तस्मादन्येषु नेष्यते ॥
मेदस्विनः स्नेहनित्याः श्लेष्मलाः श्लेष्मरोगिणः ।
दूषीविषार्त्ताश्च दिवा न शयीरन् कदाचन ॥ २६ ॥

स्वपतां दोषो जाग्रतां वा विपरीयते ॥" इति । सार्व्वकालिकं सार्व्वर्त्तुकं न तु भुक्ते वाप्यभुक्ते वा । एषामभुक्तवतां दिवास्वप्नकल्पमाह —धात्वित्यादि ॥२४॥

गङ्गाधरः —ननु सार्व्वर्त्तुकमभुक्तवतां गीतकर्षितादीनां दिवास्वप्नो भवत्वेवं भुक्तवतां किमन्यथा स्यादिति ? अत आह —ग्रीष्मे इत्यादि । सार्व्वकालिकमित्यनेन गीतकर्षितादीनामभुक्तवतां दिवास्वप्नो विहितः । ग्रीष्मे त्वित्यादिना सर्व्वेषामेव स्वस्थातुराणां भुक्तवतामभुक्तवताञ्च विहितः । केचिदभुक्तवतामेवेत्याहुः ॥ २५ ॥

गङ्गाधरः —ग्रीष्मवर्ज्जेषु कालेषु पुनरभुक्तवतां गीतकर्षितादीनां दिवास्वप्नस्य विहितत्वात् तेषां भुक्तवतामन्येषां भुक्तवतामभुक्तवताञ्च ग्रीष्मेतरेषु ऋतुषु दिवास्वप्नो निषिद्धो बोध्यः । तस्मादिति श्लेष्मपित्तप्रकोपात् । अन्येषु ग्रीष्मेतरेषु ऋतुषु । दिवा स्वाप्यानुक्त्वा दिवा न स्वाप्यानाह —मेदस्विन इत्यादि । एते कदाचन कस्मिंश्चित् कालेऽपि दिवा न शयीरन् । तेनैषां भुक्तेऽभुक्ते च ग्रीष्मे च ग्रीष्मेतरे च ॥ २६ ॥

सार्व्वकालिकमिति ग्रीष्मं परित्यज्यापि । 'रात्रीणाञ्चातिसंक्षेपात्' इत्यनेनाल्पनिद्रत्वञ्च सूचयति ॥ २४।२५ ॥

चक्रपाणिः —"न शयीरन् कदाचन" इतिवचनात् ग्रीष्मेऽपि दिवास्वप्नं मेदस्विप्रभृतीनां निषेधयति, गीतकर्षणादौ तु बलाबलं निरूप्य दिवास्वप्नप्रवृत्तिर्वा विधेया । विपर्य्ययेणाप्रवर्त्तनमिति

हलीमकं शिरःशूलं स्तैमित्यं गुरुगात्रता।
अङ्गमर्दोऽग्निनाशश्च प्रलेपो हृदयस्य च॥
शोफारोचकहृल्लास-पीनसार्द्धावभेदकाः।
कोठोऽरुः पिडका कण्डूस्तन्द्रा कासो गलामयः॥
स्मृतिबुद्धिप्रमोहश्च संरोधः स्रोतसां ज्वरः।
इन्द्रियाणामसामर्थ्यं विषवेगप्रवर्त्तनम्॥
भवेन्नृणां दिवास्वप्नस्याहितस्य निषेवणात्।
तस्माद्धिताहितं स्वप्नं बुद्ध्वा स्वप्यात् सुखं बुधः॥ २७॥
रात्रौ जागरणं रुक्षं स्निग्धं प्रस्वपनं दिवा।
अरुक्षमनभिष्यन्दि त्वासीनप्रचलायितम्॥ २८॥

गङ्गाधरः—अथाविहितदिवास्वप्ननिषेवणे दोषमाह—हलीमकमित्यादि। स्मृतिबुद्धिप्रमोहः स्मृतिभ्रंशो बुद्धिभ्रंशश्चेत्यर्थः। स्रोतसां संरोधो रसादिवहानां स्रोतसामन्तःशुषिररोधः। विषवेगप्रवर्त्तनं दूषीविषार्त्तानां सद्योविषं भुक्तवताञ्च विषवेगः पुनर्भवति। सुश्रुतेऽप्युक्तं—"विकृतिर्हि दिवास्वप्नो नाम। तत्र स्वपतामधर्म्मः सर्व्वदोषप्रकोपश्च। तत्प्रकोपाच्च कासश्वासप्रतिश्यायशिरोगौरवाङ्गमर्दारोचकज्वराग्निदौर्ब्बल्यानि भवन्ति। रात्रावपि जागरितवतां वातपित्तनिमित्तास्त एवोपद्रवा भवन्ति। भवन्ति चात्र। तस्मान्न जागृयाद्रात्रौ दिवास्वप्नञ्च वर्ज्जयेत्। ज्ञात्वा दोषकरावेतौ बुधः स्वप्नं मितं चरेत्॥ अरोगः सुमना ह्येवं बलवर्णान्वितो वृषः। नातिस्थूलकृशः श्रीमान् नरो जीवेत् समाः शतम्॥" इति। तस्मात् गीतकर्षितादीनामभुक्तवतां ग्रीष्मे च दिवास्वप्नेन धातुसाम्यादिसद्भावात् तदितरथा दिवास्वप्ननिषेवणेन हलीमकादिसम्भवात् हिताहितं स्वप्नं बुद्ध्वा बुधः सुखं स्वप्यात्। इह स्वप्नो यत्सुखं भवतीति। हितं स्वप्नमाचरेदित्यर्थः। एतेन दिवास्वप्नस्य विशेषणोक्त्या रात्रिस्वप्नश्च लभ्यते॥२७

गङ्गाधरः—ननु रात्रौ जागरणे दिवा स्वप्ने च को दोषो गुणो वेति? अत

दूषीविषार्त्तीनां बोद्धव्यम्; स्वप्यात् सुखमिति सुखं यथा भवति तथा स्वप्यात्, तच्चाहितस्वप्नपरित्यागेन हितस्वप्नसेवया च॥ २६।२७॥

चक्रपाणिः—रात्राविस्यादिना जागरणस्य स्वप्नस्य च रुक्षत्वं स्निग्धत्वञ्च तत्कार्य्यकर्तृत्वात्

देहवृत्तौ यथाहारस्तथा स्वप्नः सुखो मतः ।
स्वप्नाहारसमुत्थे तु स्थौल्यकार्श्ये विशेषतः ॥ २९ ॥
अभ्यङ्गोत्सादनं स्नानं ग्राम्यानूपौदका रसाः ।
शाल्यन्नं सदधि क्षीरं स्नेहो मद्यं मनःसुखम् ॥
मनसोऽनुगुणा गन्धाः शब्दाः संवाहनानि च ।
चक्षुषोस्तर्पणं लेपः शिरसो वदनस्य च ॥

आह—रात्रावित्यादि । रूक्षं रूक्षयतीति रूक्षत्वगुणजनकम् । एवं स्निग्धं स्निग्धगुणो जन्यतया विद्यतेऽस्य तत् तथा । एतेन भुक्तवतामभुक्तवतां दिवास्वप्नरात्रिजागरणयोर्मिथो विपरीतत्वं ज्ञापितम् । स्वप्नविशेषत्वादासीनप्रचलायितस्य उपविष्टस्य किञ्चिन्निद्रारूपस्य गुणमाह—अरूक्षेत्यादि । अनभिष्यन्दि अस्निग्धम् ॥ २८ ॥

गङ्गाधरः—विहारेषु स्वप्नस्य प्राधान्यमाह—देहेत्यादि । देहस्य वृत्तौ सुख इति मिथ्यायोगायोगातियोगभिन्नयोगयुक्तः । स्वप्नाहारेति अतियोगादियुक्ताभ्यां स्वप्नाहाराभ्यां समुत्थं स्थौल्यम् अयोगादियुक्ताभ्यां स्वप्नाहाराभ्यां समुत्थं कार्श्यं विशेषतो भवति । स्थौल्यकार्श्ययोर्विशेषहेतुत्वेनोक्तिरिहाष्टौ निन्दिताः पुरुषा उक्तास्तेष्वतिनिन्दितत्वात् तदधिकाराच्च । एतेन समयोगयुक्तेनाहारेणैव स्वप्नेनापि नातिस्थूलकृशः स्यादिति सुश्रुतेन तुल्यवाक्यता बोध्या ॥ २९ ॥

गङ्गाधरः—स्वप्नस्य निमित्ततो विनष्टस्य जनकान्याह—अभ्यङ्गेत्यादि । मनसोऽनुगुणा इति गन्धाः शब्दा इत्येताभ्यामन्वीयते । संवाहनानि सुखजनक-

रूपचर्य्यते । किञ्च जागरणं रात्रौ दिने वा रूक्षमेव, परं दिवा जागरणं न विरूक्षणं शरीरे करोति रात्रिस्वप्नप्रस्निग्धत्वात्, रात्रौ जागरणन्तु रौक्ष्यं करोति, तेन तत् रूक्षमुच्यते ; एवं दिवास्वप्नेऽपि वाच्यम् । स्वप्नप्रसङ्गेन स्वप्नभेदगुणमाह—अरूक्षमित्यादि । अनभिष्यन्दमस्निग्धमित्यर्थः । आसीनप्रचलायितमुपविष्टस्य किञ्चिन्निद्रासेवनम्, यदाहुर्जनाः प्रधानं विहारेषु । स्वप्नप्राधान्ये हेतुमाह—देहवृत्तावित्यादि । ॥२८।२९ ॥

चक्रपाणिः—सुखहेतुस्वप्नजनकं हेतुमाह—अभ्यङ्गेत्यादि । कालशयोचित इति यस्मिन्

स्वास्तीर्णं शयनं वेश्म सुखं कालस्तथोचितः।
आनयन्त्यचिरान्निद्रां प्रनष्टा या निमित्ततः॥ ३० ॥
कायस्य शिरसश्चैव विरेकश्छर्दनं भयम्।
चिन्ता क्रोधस्तथा धूमो व्यायामो * रक्तमोक्षणम्॥
उपवासोऽसुखा शय्या सत्त्वौदार्य्यं तमोजयः।
निद्राप्रसङ्गमहितं वारयन्ति समुत्थितम्॥

वाहनानि शरीरप्रदेशविशेषे मुष्टुमर्द्दनानि। स्वास्तीर्णं शयनं सुखम्। वेश्म च सुखमिति बोध्यम्। कालस्तथोचित इति यस्य पुरुषस्य यः कालो निद्राया-मभ्यस्तः स कालस्तस्योचित इत्यर्थः। निमित्तत इति निद्राया अनिमित्ततो विनष्टाया व्यवच्छेदः। सुश्रुते चोक्तं "निद्रानाशोऽनिलात् पित्तान्मनस्तापात् क्षयादपि। सम्भवत्यभिघाताच्च प्रत्यनीकैः प्रशाम्यति॥ निद्रानाशेऽभ्यङ्गयोगो मूर्द्ध्नि तैलनिषेवणम्। गात्रस्योद्वर्त्तनञ्चैव हितं संवाहनानि च॥ शालिगोधूम-पिष्टान्न-भक्ष्यैरैक्षवसंस्कृतैः। भोजनं मधुरं स्निग्धं क्षीरमांसरसादिभिः॥ रसैर्विलेशयानाञ्च विष्किराणां तथैव च। द्राक्षासितेक्षुद्रव्याणामुपयोगो भवेन्निशि॥ शयनासनयानानि मनोज्ञानि मृदूनि च। निद्रानाशे तु कुर्व्वीत तथान्यान्यपि बुद्धिमान्॥" इति॥ ३०॥

गङ्गाधरः—अथ निद्रानाशस्य हेतूपदेशादतियोगयुक्तनिद्राप्रतिषेधमाह—कायस्येत्यादि। असुखा शय्या सुखस्याजनिका शय्या। सत्त्वौदार्य्यं सत्त्वगुणभूयिष्ठता। तमोजयस्तमोगुणस्य योगाभ्यासादिना जयः। निद्राप्रसङ्गमहितमिति अहितनिद्राप्रसङ्गोऽतियोगयुक्तनिद्रा। सुश्रुतेऽप्यति-निद्राप्रतिषेध उक्तस्तद्यथा—"वमेन्निद्रातियोगे तु कुर्य्यात् संशोधनानि च। लङ्घनं रक्तमोक्षञ्च मनोव्याकुलनानि च॥" इति॥ अतियोग-

काले निद्रा पुरुषेणाभ्यस्ता, स कालस्तस्योचितः। निमित्ततः प्रनष्टेति वचनमरिष्टजनितनिद्राभाव-प्रतिषेधार्थम्, अरिष्टं ह्यनिमित्तमुच्यते॥ ३०॥

चक्रपाणिः—अत्र निद्राप्रतिषेधहेतुमाह—कायस्येत्यादि। सत्त्वौदार्य्यम् सत्त्वभूयिष्ठत्वम्;

* तथा इत्यत्र कथा इति एवं व्यायाम इत्यत्र व्यवाय इति चक्रसम्मतः पाठः।

एत एव च विज्ञेया निद्रानाशस्य हेतवः ।
कार्य्यं कालो विकारश्च प्रकृतिर्वायुरेव च ॥ ३१ ॥
तमोभवा श्लेष्मसमुद्भवा च मनःशरीरश्रमसम्भवा च ।
आगन्तुकी व्याध्यनुवर्त्तिनी च रात्रिस्वभावप्रभवा च निद्रा ॥

युक्तनिद्रावारकस्य समयोगयुक्तनिद्रानाशकत्वं दर्शयति—एत एव चेत्यादि। निद्रानाशस्य स्वस्थपुरुषस्य [समयोगेन सेव्याया अपि निद्राया नाशस्येत्यर्थः। आतुरस्य तु सुश्रुतोक्तनिद्रानाशोऽनिलादिना दर्शितः। आचार्य्येणापि दर्श्यते—कार्य्यमित्यादि। स्वस्थातुरोभयपरतया कार्य्यकालप्रकृतयो बोध्याः। कार्य्यं कर्म्म। क्रियासक्तो हि न निद्राति। कालो वार्द्धक्यम्। तमोभूयिष्ठस्य श्लेष्मजयं। विकारो ज्वरादिः। वृद्धो हि वार्द्धक्यावस्थास्वभावान्न निद्राति। प्रकृतिः स्वभाव. वायुर्वायुप्रकृतिः, न तु समावस्थो वायुर्निद्रानाशहेतुः; विषमस्य तु वायोर्विकारपदेन लाभात्। वायुप्रकृतिको हि जागरूकः स्फुटितकरचरणादिक उक्त इति। एतेन प्रकृतिः स्वभावः वायुर्विशेषेण निद्रापहारक इति ज्ञापनार्थं पुनरुक्त इति यद्व्याख्यातं तद्दूषितं भवति। जागरूकत्वस्वभावस्तु पुंसां न निसर्गतः स्यात्, प्रकृतिभूतवायुना हि भवति। सुश्रुते दिवानिद्रावद्रात्रिजागरणमपि रोगविशेषे हितमुक्तम्। तद्यथा "कफमेदोविषार्त्तानां रात्रौ जागरणं हितम्। दिवास्वप्नश्च तृट्शूल-हिक्काजीर्णातिसारिणाम् ॥" इति ॥ ३१ ॥

गङ्गाधरः—निद्राविधिमुक्त्वा निद्रायाः कारणभेदेन भेदानाह—तमोभवेत्यादि। तमोभवेति आत्ममनःस्थानहृदयपद्मस्य तमोगुणावरणमन्तरेण

तमोजयस्तमोगुणजयः, स च योगाभ्यासादिना भवति। एत एव चेति स्वस्थे क्रियमाणा इति बोद्धव्यम्। निद्रातिप्रसङ्गे सति क्रियमाणा अतिप्रसङ्गनिषेधका भवन्ति। अपरानपि निद्रानाशहेतूनाह—कार्य्यमित्यादि। कार्य्यमिति कार्य्यासक्तो न निद्रां याति। काल इति वार्द्धक्यं; वृद्धा हि स्वभावत एव जागरूका भवन्ति। विकारो व्याधिः शूलादिः। प्रकृतिः स्वभावः, स्वभावादेव केचिदनिद्रा भवन्ति। विकारग्रहणेनैव वाते लब्धे पुनर्वातग्रहणं विशेषेण वायोर्निद्रापहारकत्वप्रतिपादनार्थम् ॥ ३१ ॥

चक्रपाणिः—निद्राविशेषानाह—तमोभवेत्यादि। तमोभवा इति तमोगुणोद्रेकभवा, मनः-

**रात्रिस्वभावप्रभवा मता या तां भूतरात्रीं * प्रवदन्ति निद्राम्।**
**तमोभवामाहुरघस्य मूलं शेषाः पुनर्व्याधिषु निर्दिशन्ति॥ ३२॥**

निद्रा कापि न भवतीति, तस्य तमसो निद्रासाधारणकारणस्य श्लेष्मादि-हेतुव्यतिरेकेण यः स्वतो भवत्युद्रेकस्तस्य यन्निद्राजनकत्वं सा निद्रा तमोभवा। एषा पुनरघस्य मूलतयाऽत्रैव वक्ष्यते। सुश्रुते तु—"तामसी नामोक्ता सा प्रलयकाले भवति। तदन्या चेयं श्लेष्मसमुद्भवा केवलवृद्धेन श्लेष्मणा द्वितीया निद्रा। मनःशरीरश्रमसम्भवा तु मनसो वा शरीरस्य वा श्रमेण यदा न च मनो न चेन्द्रियाणि स्वस्वविषयेषु प्रवर्त्तन्ते तर्हि ततो निद्राति, न तु श्रमेण। वायुवृद्ध्या निद्रानाशः स्यात् तात्कालिकः। कालान्तरे तु ततो वातान्निद्रानाश एवोच्यते। आगन्तुकी रिष्टरूपा निद्रा, न तत्र तमःश्लेष्मादिको हेतुः। ज्वरारिष्टादिलक्षणं हि—"शेते निपतितोऽपि वा" इत्यादि व्याध्यनुवर्त्तिनी सन्निपातिकज्वरादौ। रात्रिस्वभावात् प्रभवति या सा रात्रिस्वभावप्रभवा। सा तु न तमसा न वा श्लेष्मणा न वा मनःशरीरश्रम-सम्भवा न वा आगन्तुकी नापि व्याध्यनुवर्त्तिनी। दिवा तु या निद्रा सा तमःश्लेष्मादिसम्भवा। हेतुव्यतिरेकेण न भवतीति भावः।

एतासु च निद्रासु प्रशस्तां निद्रामाह—रात्रिस्वभावेत्यादि। भूतानि राति ददातीति भूतरात्री, तां तथा। आसु चातिनिन्दितनिद्रामाह—तमोभवा-मित्यादि। अघस्य मूलमिति तमोगुणबाहुल्येन सदैव निद्राक्रान्तस्य सद्वृत्ताद्य-नुष्ठानाभावेन पापं जायते इति भावः। शेषा इति व्याधिषु स्वभावप्रवृत्तादि-व्याधिषु। रात्रिस्वभावप्रभवाया हि निद्रायाः स्वभावव्याधित्वात् क्षुत्पिपासा-

शरीरश्रमसम्भवा तु निद्रा मनःशरीरयोः श्रमेण क्रियोपरमे सति नेन्द्रियाणि न च मनो विषयेषु प्रवर्त्तन्ते, ततश्च निद्रा स्यात्, श्रमश्चायमनतिवृद्धो भूरिवातप्रकोपकोऽभिप्रेतः, तेन श्रमस्य वात-जनकत्वेन निद्रानाशः किमिति न भवतीति न वाच्यम्, दृश्यते चैतम्, यत् श्रान्तानामनिद्रा न भवतीति। आगन्तुकी रिष्टभूता, व्याध्यनुवर्त्तिनी सन्निपातज्वरादिकार्य्या, रात्रिस्वभावात् प्रभवतीति रात्रिस्वभावप्रभवा। दिवाप्रभवन्ती तु निद्रा तमःप्रभृतिभ्यश्चैव एव स्यात्।

आसु निद्रासु प्रशस्तां निद्रामाह—रात्रीत्यादि। भूतानि प्राणिनो दधाति पुष्णातीति भूतधात्री, धात्रीव धात्री। अघस्य पापस्य मूलमिति कारणम्। तमोगृहीतो हि

* भूतधात्रीमिति वा पाठः।

तत्र श्लोकाः ।

निन्दिताः पुरुषास्तेषां यौ विशेषेण निन्दितौ ।
निन्दिते कारणं दोषास्तयोर्निन्दितभेषजम् ॥
येभ्यो यदा हिता निद्रा येभ्यश्चाप्यहिता यदा ।
अतिनिद्रानिद्रयोश्च * भेषजं यद्भवा च या ॥

जन्ममरणादीनामिव । मनःशरीरश्रमभवापि हि निद्रा व्याधिरूपा भवत्येव । तदा धातुवैषम्यात् ॥ ३२ ॥

गङ्गाधरः— अध्यायार्थसंग्रहाय श्लोकानाह तत्रेत्यादि । इह खल्वित्यारभ्यातिकृशश्चेत्यन्तेन निन्दिताः पुरुषाः । तत्रातिस्थूलेत्यारभ्य भवन्तीत्यन्तेन तेषां यौ विशेषेण निन्दितौ । अतिस्थूलस्येत्यादिना दोषा इत्यन्तेनातिस्थूलस्य दोषाः । तदिदमित्यादिना निर्दिष्टमित्यन्तेन कारणम् । वक्ष्यते वात्यमित्यादिनातिकृशं नरमित्यन्तेन कारणम् । व्यायाममित्यादिना मन इत्यन्तेनातिकृशस्य दोषाः । सततमित्यादिना प्रयोजयेदित्यन्तेन स्थौल्यभेषजम् । अस्वप्नमित्यादिना पुष्यतीत्यन्तेन कृशस्य भेषजम् । यदा त्वित्यादिना बुद्धिरवागतेत्यन्तेन निद्रायाः सामान्यतो हितत्वमुक्त्वा गीताध्ययनेत्यादिना नेष्यत इत्यन्तेन येभ्यो यदा हिता निद्रा । मेदस्विन इत्यादिना कदाचनेत्यन्तेन येभ्यो यदा अहिता सा सदोषा । हलीमकेत्यादिना विशेषत इत्यन्तेन अभ्यङ्गादित्यादिना निमित्तत इत्यन्तेन अनिद्राय अनिद्रपुरुषाय भेषजं निद्राजननाय इति । कायस्येत्यादिना अतिनिद्राय पुरुषाय भेषजम् ।

सदा निद्रात्मकत्वेनानुष्ठेयं सद्वृत्तं न करोति, ततश्चाधर्म्मोत्पादः । व्याधिष्विति शरीरव्याधिषु, श्लेष्मादयो व्याधय एव, तेषु च भूता निद्रा व्याधिरूपैव ; आगन्तुकी चासाध्यव्याधिभवा च स्वयमप्यसाध्यभूता व्याधिरूपा, तेन ताश्च व्याधिषु मध्ये निर्दिशन्ति ; किंवा व्याधिषु आधारेषु निर्दिशन्तीत्यर्थो ज्ञेयः ॥ ३२ ॥

* अतिनिद्रानिद्रयोश्चेत्यत्र अतिनिद्रायानिद्राय तथा या या यथा यत्प्रभवा इत्यत्र या या यथाप्रभावा च इति चक्रधृतः पाठः ।

या या यथा यत्प्रभवा निद्रा तत्सर्व्वमत्रिजः।
अष्टौनिन्दितसंख्याने व्याजहार पुनर्व्वसुः ॥ ३३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽष्टौनिन्दितीयो नामैकविंशोऽध्यायः ॥ २१ ॥

तमोभवेत्यादिना यद्भवा पुरुषाय या या निद्रा। रात्रिस्वभावप्रभवेत्यादिना यथाप्रभवा या निद्रा तत्सर्व्वं सामान्यत उक्तम् ॥ ३३ ॥

अध्यायं समापयति—अष्टौत्यादि। सर्व्वं पूर्व्ववद्व्याख्येयम्।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ
सूत्रस्थानीयाष्टौनिन्दितीयाख्यैकविंशाध्यायजल्पाख्या
एकविंशी शाखा ॥ २१ ॥

चक्रपाणिः—संग्रहे अनिद्रायेति अविद्यमाननिद्राय पुरुषाय। यथाप्रभावा इति मूलधात्री-स्यादिवर्जितप्रभावा ॥ ३३ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थानव्याख्यायाम् अष्टौनिन्दितीयो नाम एकविंशोऽध्यायः ॥ २१ ॥

# द्वाविंशोऽध्यायः ।

अथातो लङ्घनबृंहणीयमध्यायं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

तपःस्वाध्यायनिरतानात्रेयः शिष्यसत्तमान् ।
षडग्निवेशप्रमुखानुक्तवान् परिचोदयन् ॥
लङ्घनं बृंहणं काले रूक्षणं स्नेहनं तथा ।
स्वेदनं स्तम्भनञ्चैव जानीयात् स भवेद् भिषक् ॥ २ ॥
तमुक्तवन्तमात्रेयमग्निवेश उवाच ह ।
भगवन् लङ्घनं किं तल्लङ्घनीयाश्च कीदृशाः ॥
बृंहणं बृंहणीयाश्च रूक्षणीयाश्च रूक्षणम् ।
के स्नेहाः स्नेहनीयाश्च स्वेदाः स्वेद्याश्च के मताः ॥
स्तम्भनं स्तम्भनीयाश्च वक्तुमर्हसि तद् गुरो ।

अथ पुरुषे भेषजयोजनायां शरीरदैन्यस्थौल्याद्यपेक्षावत्क्रियाविशेषलङ्घनबृंहणादिषु योग्यताऽयोग्यताज्ञानमप्यपेक्षणीयं भवतीत्यतोऽष्टोनिन्दितीयानन्तरं लङ्घनबृंहणीयोऽभिधीयते अथात इत्यादि। लङ्घनं बृंहणमितिपदद्वयार्थमधिकृत्य कृत इति लङ्घनबृंहणीयः ॥ १ ॥

गङ्गाधरः—तप इत्यादि। तपःस्वाध्यायनिरतानग्निवेशप्रमुखान् षट् शिष्यसत्तमान् अग्निवेशभेलजतूकर्णपराशरहारीतक्षारपाणीन् परिचोदयन्नध्यापनविधौ पूर्वं गुरुर्ब्रूयात् शिष्यं प्रति पठेति प्रेरणवाक्यम्, इति प्रेरणवाक्यं ब्रुवन्नुक्तवान। किमुक्तवान तदाह—यदुक्तं लङ्घनमित्यादि। काले इत्यस्य लङ्घनादिभिः प्रत्येकमन्वयः ॥ २ ॥

गङ्गाधरः—तमित्यादि। अग्निवेशस्य षट्सु शिष्येषु विशिष्टबुद्धिमत्त्वादग्रे

चक्रपाणिः—योजनापेक्षणीयशरीरमभिधाय लङ्घनादिविषयत्वात् योजनाया लङ्घनादीनि एव विषयतः स्वरूपतश्च वक्तुं लङ्घनबृंहणीयोऽभिधीयते ॥ १ ॥

लङ्घनप्रभृतीनाञ्च षण्णामेषां समासतः ।
कृताकृतातिवृत्तानां * लक्षणं वक्तुमर्हसि ॥ ३ ॥
तदग्निवेशस्य वचो निशम्य गुरुरब्रवीत् ।
यत् किञ्चिल्लाघवकरं देहे तल्लङ्घनं स्मृतम् ॥
बृहत्त्वं यच्छरीरस्य जनयेत् तच्च बृंहणम् ।
रौक्ष्यं खरत्वं वैशद्यं यत् कुर्य्यात् तद्धि रूक्षणम् ॥
स्नेहनं स्नेहविष्यन्द-मार्द्दवक्लेदकृन्मतम् ।
स्तम्भगौरवशीतघ्नं स्वेदनं स्वेदकारकम् ।
स्तम्भनं स्तम्भयति यत् गतिमन्तं चलं द्रवम् ॥ ४ ॥

तत्प्रश्नेनैवान्येषां प्रश्नसिद्धेन प्रश्नान्तरं तेषां दर्शितम् । कृताकृतातिवृत्ताना-मिति कृतं सम्यक् कृतम् । अकृतमसम्यङ्मिथ्याभ्यां कृतम् । अतिवृत्तमति-योगयुक्तम् ॥ ३ ॥

गङ्गाधरः—क्रमिकप्रश्नोत्तरमाह यत्किञ्चिदित्यादि । देहे लाघवकर-मित्युक्तेरेव सिद्धौ यत् पुनर्यत्किञ्चित्पदं तदयोगातियोगमिथ्यायोगयुक्त-त्वेऽपि लङ्घनत्वख्यापनार्थमिति बोध्यम् । यत्किञ्चित्पदं बृहत्त्वादिभिः सर्व्वैः सम्बध्यते । तेन यत् शरीरस्य यत्किञ्चिद्बृहत्त्वं जनयेत् तच्च बृंहणमित्यादि-रूपेण केचिद्व्याचक्षते, तन्न । यत्किञ्चिद्वस्तु देहे लाघवकरं भवति तल्लङ्घनं स्मृतमित्यर्थः । तेनैवायोगादेर्लाभात् । रौक्ष्यमित्यादि प्राधान्येन रौक्ष्यम् । खरत्ववैशद्ये तदनुगते इति कश्चिद्व्याचष्टे । रौक्ष्यमितिमात्रोक्त्यैव रूक्षणलक्षण-सिद्धौ खरत्ववैशद्ये पुनर्यदुक्ते तद्रौक्ष्यानुमानार्थं लिङ्गत्वख्यापनार्थम् । देहे हि रौक्ष्यं खरत्ववैशद्याभ्यामनुमीयते, न तु प्रत्यक्षमुपलभ्यते । न च रौक्ष्यं स्निग्धत्वाभावो देहे प्रत्यक्षमेव हि दृश्यते : खरत्वं वैशद्यञ्च रौक्ष्यकार्य्यमिति । स्नेहविष्यन्दः शरीरस्य स्नेहविलयनं शरीरात् स्नेहक्षरणमिव । स्नेहविष्यन्दा-दिभिरनुमीयते देहे स्निग्धत्वमिति । स्वेदकारकमिति घर्म्मकारकमित्यर्थः ।

चक्रपाणिः—परिचोदयन्निति ज्ञानार्थं प्रेरयन् । कृतेत्यादौ कृतं सम्यक्कृतम् ॥ २।३ ॥

चक्रपाणिः—रौक्ष्यमित्यादौ रौक्ष्यमेव प्रधानं बोद्धव्यम् ; खरत्ववैशद्ये तु तदनुगते । विष्यन्दो

* कृताकृतातिरिक्तानामितिपाठश्चक्रधृतः ।

लघूष्णतीक्ष्णविशदं रूक्षं सूक्ष्मं सरं खरम् ।
कठिनञ्चैव यद् द्रव्यं प्रायस्तल्लङ्घनं स्मृतम् ॥ ५ ॥
गुरु शीतं मृदु स्निग्धं बहलं स्थूलपिच्छिलम् ।
प्रायो मन्दं स्थिरं श्लक्ष्णं द्रव्यं बृंहणमुच्यते ॥ ६ ॥
रूक्षं लघु खरं तीक्ष्णमुष्णं स्थिरमपिच्छिलम् ।
प्रायशः कठिनञ्चैव यद् द्रव्यं तद्धि रूक्षणम् ॥ ७ ॥

स्तम्भगौरवशीताभावधर्म्मैरनुमीयते इह स्वेदः । स्तम्भयतीति स्थिरीकरोति । गतिमन्तमिति अव्यक्तगतियुक्तम् । चलं किञ्चिद्गतिमन्तम् । द्रवमकठिनं मूर्त्तिमन्तम् । तेन वातस्य अव्यक्तगतिमतस्तु चलद्रवसहचारितस्य स्तम्भकद्रव्यं स्तम्भनं भवति । न तु केवलस्य । किंवा स्तम्भनलक्षणमेवैतत् । तन्न । तस्मात् केवलवातसम्भवे वातस्य वृद्धा गतिः । एषां हि लङ्घनादीनां सम्यक्प्रयोगादिभिः शुभाशुभे क्रियेते । तदर्थं भिषगवहिता भवन्ति । तस्मात् यत्किञ्चित् वस्तु अव्यक्तगतिमद् वा किञ्चिद्गतिमन्तं द्रवं वा भावं स्तम्भयति रुणद्धि तद्वस्तु स्तम्भनमित्यर्थः । लङ्घनादिपदयोगास्तु कर्त्तरि कृत्प्रत्ययेन बोध्या न तु भावे ल्युटा । लाघवकरोमीति स्तम्भयतीत्यादि कृन्णिचोः प्रयोगदर्शनात् ॥ ४ ॥

गङ्गाधरः—लङ्घनादिद्रव्यं क्रमेण विवृणोति लघ्वित्यादि । लघ्वादिनवगुणयुक्तद्रव्यं देहे लाघवकरत्वाल्लङ्घनं स्मृतम् ॥ ५ ॥

गङ्गाधरः—गुरु शीतमित्यादि । एतल्लघ्वादिनवगुणविपरीतगुरुशीतादिनवगुणवद् द्रव्यं बृंहणम् । लघोर्विपरीतो हि गुणो गुरुः । उष्णस्य शीतः । तीक्ष्णस्य मन्दः । विशदस्य पिच्छिलः । रूक्षस्य स्निग्धः । सूक्ष्मस्य स्थूलः सान्द्रश्च । सरस्य स्थिरः । खरस्य श्लक्ष्णः । कठिनस्य मृदुः । प्राय इत्यनेन मन्दगुणस्य आधिक्यं यस्मिन् द्रव्ये तद् द्रव्यं चिरकारित्वाद् बृंहणम् । क्वचित्तीक्ष्णगुणवद्द्रव्यस्यापि पिप्पल्यादेर्बृंहणत्वं ख्यापितमित्यर्थः ॥ ६ ॥

गङ्गाधरः—रूक्षमित्याद्यष्टगुणयुक्तं द्रव्यं रूक्षणम् । लङ्घनं

विलङ्घनम् । स्वेदकारकं घर्म्मकारकम् । स्तम्भयतीति विरुणद्धि ; चलमिति किञ्चिद्गतिमत्, गतिमन्तमिति अव्यक्तगतिमन्तम्, एतच्चातिसारशोणितस्रुतिविषदाहवेगनादिषु बोद्धव्यम् न तु केवलवाते गतिमन्तं प्रति, स्तम्भकस्य वर्द्धकत्वात् । गुर्व्वित्यादौ बहलं घनम्, मन्दमिति

द्रवं स्निग्धं सरं स्थूलं * पिच्छिलं गुरु शीतलम्।
प्रायो मन्दं मृदु च यद् द्रव्यं तत् स्नेहनं मतम्॥ ८॥
उष्णं तीक्ष्णं सरं स्निग्धं रुक्षं सूक्ष्मं द्रवं स्थिरम्।
द्रव्यं गुरु च यत् प्रायस्तद् वै स्वेदनमुच्यते॥ ९॥
शीतं मन्दं मृदु श्लक्ष्णं सूक्ष्मं रुक्षं द्रवं स्थिरम्।
यद् द्रव्यं लघु चोद्दिष्टं प्रायस्तत् स्तम्भनं स्मृतम्॥ १०॥

हि सरगुणयुक्तम्, रुक्षणन्तु स्थिरगुणयुक्तमिति भेदः। भेदश्च लघुरुक्षगुणाधिक्येन लङ्घनरुक्षणयोरिति बोध्यम्। बोध्यश्च लङ्घनेनापि रौक्ष्यमल्पं देहे लाघवमधिकं रुक्षणेन रौक्ष्यमधिकं लाघवमल्पमिति। तथा द्रव्याद्रव्यभूतत्वं लङ्घनस्य। रुक्षणस्य तु द्रव्यभूतत्वमिति॥ ७॥

<u>गङ्गाधरः</u>—द्रवमित्यादि। द्रवादिनवगुणयुक्तं द्रव्यं स्नेहनम्। अत्रापि मन्दगुणस्याधिक्येन स्नेहनं क्वचित् किञ्चित्तीक्ष्णत्वेऽपि स्नेहनत्वस्य न व्यवच्छेदः॥ ८॥

<u>गङ्गाधरः</u>—उष्णमित्यादि। उष्णादिभिः सप्तभिर्गुणैः स्वेदनम्। उष्णादिसप्तगुणसहचरितः स्थिरो वा सरो वा स्थिरसरान्यतरसहितैः स्निग्धरुक्षान्यतरसहितैश्च स्निग्धो वा रुक्षो वा गुणो यस्य तद्द्रव्यं स्वेदनमिति भावः॥ ९॥

<u>गङ्गाधरः</u>—शीतमित्यादि। शीतादिनवगुणयुक्तं स्तम्भनम्। प्रायःपदेन प्रभावात् क्वचिदन्यस्यापि लङ्घनबृंहणत्वादिकं बोध्यं लक्षणतो लङ्घनादिकम्॥ १०॥

चिरकारि। स्थूलं संहतावयवं लड्डुकपिष्टकादि। विरुक्षणद्रव्यकथने यद्गुणमेव लङ्घनद्रव्यमुक्तं तद्गुणमेव विरुक्षणं यद्यप्युक्तं, तथापि रुक्षगुणस्यात्र प्राधान्यम्, लङ्घने तु लघुगुणप्राधान्यं ज्ञेयम्, तथा लङ्घनमद्रव्येणोपवासेनापि क्रियते विरुक्षणन्तु द्रव्यकार्य्यतयैव प्राधान्यात् उक्तम्, तेन लङ्घनविरुक्षणयोर्भेदकता; यत् तु वक्ष्यति "कृतासिकृतलिङ्गं यल्लङ्घिते तद्विरुक्षिते" इति, तत् प्रायोवादात्। विरुक्षणस्य हि मुख्यः स्नेहाभावः, लङ्घनस्य तु गौरवाभाव इति स्फुट एव भेदः प्रतिभाति॥ ४-७॥

<u>चक्रपाणिः</u>—स्वेदगुणकथने स्निग्धं रुक्षमिति स्निग्धं वा रुक्षं वेत्यर्थः। एवं सरस्थिरावपि विकल्पेन ज्ञेयौ। पिपासेति पिपासानिग्रहः; मारुतो यद्यपि सोमसम्बन्धात् तथा लङ्घनं न भवति,

* श्लक्ष्णमित्यपि क्वाचित्कः पाठः।

चतुष्प्रकारा संशुद्धिः पिपासा मारुतातपौ ।
पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम् ॥ ११ ॥
प्रभूतश्लेष्मपित्तास्र-मलाः संसृष्टमारुताः ।
बृहच्छरीरा बलिनो लङ्घनीया विशुद्धिभिः ॥ १२ ॥

गङ्गाधरः— लङ्घनादिद्रव्यमुक्त्वा स्वरूपतो लङ्घनादिकं वक्तुमादौ लङ्घनस्य प्रभेदानाह— चतुरित्यादि । चतुष्प्रकारा संशुद्धिरिति वमनविरेचनास्थापन-शिरोविरेचनानीति । अनुवासनस्य बृंहणत्वात्तद्व्यवच्छेदाय चतुष्प्रकारेति । पिपासेति— पिपासानिग्रहस्तृष्णावेगधारणमित्यर्थः । मारुतेति—वायुर्वायुः प्राकृत एव लङ्घनं स्यात् देहे लाघवकरत्वात् । न तु विकृतः प्रागादि-दिग्रुक्ष्यादिसोमसम्बन्धेन लाघवकरत्वाभावात् ग्रीष्मादौ चातपसम्बन्धेन वैकृतस्य देहलाघवं प्रत्यकुशलत्वाच । आतपश्च लङ्घनं सर्व्वदैव देहलाघव-करत्वात् । पाचनानीति— आहारान् पचन्तं जाठरमग्निं सन्धुक्षयन्ति तद्बलं बर्द्धयन्ति च । यानि पाचयन्ति तानि पाचनानि वाय्वग्निगुणबहुलानि सैन्धव-मरिचादीनि द्रव्याणि । लौकिकोऽयञ्च वह्निरपि पाचनः । उपवासस्तु जाठराग्निसन्धुक्षणेन बलदानेन च आहारपाचनोऽपि द्रव्यमयत्वाभावात् पृथगुपदिष्टः । आतपान्तास्तु सप्त न पाचना जाठराग्निसन्धुक्षणत्वाभावेन, देह-लाघवकरत्वात् तु पृथगुक्ताः । एवञ्च व्यायामोऽप्यद्रव्यभूतत्वात् पृथगुक्तः न तु पाचनत्वेन संगृहीतः । अत एव लङ्घनस्य द्रव्याद्रव्यसाधारणत्वख्यापनार्थं लङ्घ-नलक्षणे यत्किञ्चिदित्युक्तम् न तु द्रव्यमित्युक्तम् ॥ ११ ॥

गङ्गाधरः— शिष्यपृष्टलङ्घनीयोपदेशार्थं लङ्घनप्रभेदान् दशोक्त्वा तद्दशविध-लङ्घनेषु प्रतिलङ्घनयोगमाह— प्रभूतेत्यादि । विशुद्धिभिरिति चतुर्भिः संशोधनैः यथास्वाधिकारोक्तवम्यविरेच्यास्थाप्यशिरोविरेच्यत्वेनोक्ता ये ते प्रभूतश्लेष्मा-दयः संशोधनीया इत्यर्थः ॥ १२ ॥

तथापि स्वरूपेण लङ्घनमेव । पचत्यग्निं प्रतिपक्षक्षपणेन बलदानेन च यत् पाचयति तत् पाचनं, तच्च वाय्वग्निगुणभूयिष्ठम् । चतुष्प्रकारा संशुद्धिरित्यनुवासनं वर्ज्जयित्वा, तस्य बृंहण-त्वात् ॥ ८—११ ॥

चक्रपाणिः— वक्तव्य दशप्रकारलङ्घनस्य भिन्नं विषयमाह— प्रभूतेत्यादि । आदाविति वमन-

येषां मध्यबला रोगाः कफपित्तसमुत्थिताः।
छर्द्यतीसारहृद्रोग-विसूच्यलसकज्वराः॥
विबन्धगौरवोद्गार-हृल्लासारोचकादयः।
पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत्॥
एत एव यथोद्दिष्टा येषामल्पबला गदाः।
पिपासानिग्रहैस्तेषामुपवासैश्च तान् जयेत्॥ १३॥
रोगान् जयेन्मध्यबलान् व्यायामातपमारुतैः।
बलिनां किं पुनर्येषां रोगाणामवरं बलम्॥

गङ्गाधरः— अधिकबलदोषविषयकलङ्घनमुक्त्वा क्रमिकत्वात् मध्यबलदोषविषयकलङ्घनयोग्यानाह येषामित्यादि। मध्यबला इत्यादिविशेषणं छर्द्यतीसाराद्यरोचकादय इत्यन्तस्य। प्रायेणादाविति वचनेन मध्यबलपित्तश्लेष्मजच्छर्दिज्वरादिष्वादौ उपवासविधानं न विरुद्धमिति ख्यापितम्। न च लङ्घनमत्र पाचनशब्देनोच्यते पृथगुक्तत्वात्। क्रमिकत्वादल्पबलदोषविषयकलङ्घनयोग्यानाह एत एवेत्यादि। एत एव श्लेष्मपित्तसमुत्थिताश्छर्द्यतीसारादयो यथोद्दिष्टा गदा अल्पबलाः। अल्पबलत्वेन येषां जायन्ते तेषां पिपासानिग्रहैरुपवासैश्च तान् श्लेष्मपित्तसमुत्थितान् छर्द्यतीसारादीनल्पबलान् गदान् जयेत् संशमयेत्। जयेदित्युक्त्या प्रभूतश्लेष्मजादिच्छर्द्यतीसारज्वरादीन् पुनरादावेवोपवासेनोपक्रम्य पश्चात् संशोधनपाचनादिभिर्जयेदिति ख्यापितम्। अल्पबलानामेषां पिपासानिग्रहोपवासाभ्यामेव जयः स्यात्, न संशोधनाद्यपेक्षा भवतीति भावः॥ १३॥

गङ्गाधरः— रोगानित्यादि। रोगानिति बलिनां पुंसां छर्द्यतीसारादीन् मध्यबलानादावुपवासेन तथा पाचनैरुपक्रम्य पश्चात् व्यायामातपमारुतैर्जयेत्। पुनर्येषां रोगाणां बलमवरं बलिनां पुंसां तेषां रोगाणां व्यायामातपमारुतैर्जये किम्? अर्थादतिसुखेन तान् जयेदिति भावः॥

मस्ते च्छर्द्यादीनां निरामाणां संशमनीयत्वात्। रोगानिति लङ्घनीयरोगान्, बलिनामिति पदं बलवतामेव व्यायामादिविशेषविधानार्थं, मध्यबलानामप्येतेनाल्पबला एव गता व्यायामादिविषया इति भावः।

त्वग्दोषिणां प्रमीढानां * स्निग्धाभिष्यन्दिबृंहिणाम् ।
शिशिरे लङ्घनं शस्तमपि वातविकारिणाम् ॥ १४ ॥
अदिग्धविद्धमक्लिष्टं वयःस्थं सात्म्यचारिणाम् ।
मृगमत्स्यविहङ्गानां मांसं बृंहणमिष्यते ॥ १५ ॥
क्षीणाः क्षताः कृशा वृद्धा दुर्ब्बला नित्यमध्वगाः ।
स्त्रीमद्यनित्या ग्रीष्मे च बृंहणीया नराः स्मृताः ॥
शोषार्शोग्रहणीदोषैर्व्याधिभिः कर्षिताश्च ये ।
तेषां क्रव्यादमांसानां बृंहणा लघवो रसाः ॥

नन्वेवमस्त्वेषामन्येषां पुंसां त्वग्दोषप्रमेहवातजरोगादीनां किं न लङ्घनसाध्यत्वमिति ? अत आह—त्वग्दोषिणामित्यादि । स्निग्धाभिष्यन्दि इति अतिस्निग्धत्वे गुदादितोऽभिष्यन्दमानस्नेहानाम् । बृंहिणां बृंहणयुक्तानाम् । शिशिरे इति पौषमाघयोस्तत्र पुंसामतिबलत्वात् संशोधनेतरलङ्घनं, कार्त्तिकाग्रहायणयोस्तु संशोधनरूपं लङ्घनं, तयोः संशोधनकालत्वेनोक्तत्वात् । न तु शिशिरगुणयुक्ते हेमन्तशिशिररूपर्त्तुद्वये चातुर्मासिकलङ्घनमिति दशविधमेवोक्तम् ॥ १४ ॥

<u>गङ्गाधरः</u>—लङ्घनानन्तरत्वात् बृंहणं द्रव्यं पूर्व्वं लक्षणेन उक्तमधुना स्वरूपत उपदिशति—अदिग्धेत्यादि । दिग्धेन विषाक्तशरादिना विद्धमिति दिग्धविद्धम् । न तददिग्धविद्धमिति । अक्लिष्टं रोगाद्यविकृतम् । वयःस्थं यूनां सम्बन्धे । किंवा वयःस्थामिति पाठः षष्ठीबहुवचनान्तत्वेन बोध्यः । सात्म्यचारिणामिति सात्म्यदेशे ये चरन्ति ते सात्म्यचारिणस्तेषाम् ॥ १५ ॥

<u>गङ्गाधरः</u>—बृंहणीयाश्च कीदृशाः ? इति प्रश्नोत्तरमाह—क्षीणा इत्यादि । ग्रीष्मे चेति क्षीणादिभिन्ना अपि बृंहणीया इति बोध्यम् । शीघ्रबृंहणीयानाह—शोषेत्यादि । क्रव्यादमांसानां मांसभक्षकमृगादीनां व्याघ्रकुम्भीरगृध्रादीनां

बृंहिणां बृंहणयुक्तानां, लङ्घनं शस्तमिति दशविधमपि । शिशिर इति शिशिरगुणयुक्ते हेमन्ते शिशिरे च । अत्र च लङ्घनं बलवत्त्वात् प्राणिनां कार्य्यम् ॥ १२—१४ ॥

<u>चक्रपाणिः</u>—अदिग्धविद्धमिति विषाक्तशस्त्राविद्धम् । सात्म्यदेशे चरन्तीति सात्म्यचारिणः ।

* प्रमूत्राणामिति चक्रः ।

स्नानमुत्सादनं स्वप्नो मधुराः स्नेहवस्तयः ।
शर्कराक्षीरसर्पींषि सर्व्वेषां विद्धि बृंहणम् ॥ १६ ॥
कटुतिक्तकषायाणां सेवनं स्त्रीष्वसंयमः ।
खलिपिण्याकतक्राणां मध्वादीनाञ्च रूक्षणम् ॥
अभिष्यन्दा महादोषा मर्म्मस्था व्याधयश्च ये ।
ऊरुस्तम्भप्रभृतयो रूक्षणीया निदर्शिताः ॥ १७ ॥
स्नेहाः स्नेहयितव्याश्च स्वेदाः स्वेद्याश्च ये नराः ।
स्नेहाध्याये मयोक्तास्ते स्वेदाख्ये च सविस्तरम् ॥ १८ ॥
द्रवं तन्वसरं यावच्छीतीकरणमौषधम् ।
स्वादुतिक्तकषायञ्च स्तम्भनं सर्व्वमेव तत् ॥

मांसानां रसा लघवः स्वभावतो लघवः । श्येनादीनां मांसानां रसाः स्वभावतो गुरवश्च । संस्कारेण लघूकृता बृंहणाः शीघ्रं बृंहणा इत्यर्थः । सर्व्वपुरुषसाधारणबृंहणान्याह— स्नानमित्यादि । सर्व्वेषां पुंसां सर्व्वमिदं बृंहणं विद्धीत्यर्थः ॥ १६ ॥

गङ्गाधरः— अथ पूर्व्वं लक्षणत उक्तं रूक्षणद्रव्यं स्वरूपत आह— कट्वित्यादि । स्त्रीष्वसंयम प्रायेण स्त्रीसेवनम् । खलिप्रभृतीनां मध्वादीनाञ्च सेवनमित्यन्वयः । खलिर्निःस्नेहसर्षपखलिः । पिण्याको निःस्नेहतिलखलिः, किंवा पिण्याकशाकविशेषः । आदिना भृष्टचणकादयः । रूक्षणीयाश्च कीदृशाः ? इति प्रश्नस्योत्तरमाह—अभिष्यन्दा इत्यादि । अभिष्यन्दाः स्रुयमाणाक्षिनासादयः, महादोषा व्याधयः । प्रभृतिशब्देन प्रमोहादयः ॥ १७ ॥

गङ्गाधरः—अथ के स्नेहाः ? इत्यादिप्रश्नचतुष्टयस्योत्तरे वक्तव्ये लक्षणतः स्नेहस्वेदावुक्तौ प्रागिहाध्याये स्वरूपतः सविस्तरं तथा स्नेह्याः स्वेद्याश्च के ? इति प्रश्नस्योत्तरमाह— स्नेहा इत्यादि । स्वेदाख्ये चेति स्वेदाध्याये ॥ १८ ॥

गङ्गाधरः— अथ स्तम्भनं कीदृशम् इति प्रश्नोत्तरे वक्तव्ये पूर्व्वं लक्षणतः

लघव इति संस्कारेण लघवः ; किंवा क्रव्यादानां ये लघवः श्येनादयः, तन्मांसरसा इत्यर्थः ॥ १५।१६ ॥

चक्रपाणिः— मध्वादीनाञ्च सेवनमिति सम्बन्धः ; खलिः सर्षपखलिः ; पिण्याकं तिलखलिः,

पित्तक्षाराग्निदग्धा ये च्छर्द्यतीसारपीड़िताः।
विषस्वेदातियोगार्त्ताः स्तम्भनीयास्तथापरे ॥ १९ ॥
वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे।
हृदयोद्गारकण्ठास्य-शुद्धौ तन्द्राक्लमे गते ॥
स्वेदे जाते रुचौ चापि क्षुत्पिपासाऽसहोदये।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥ २० ॥

स्तम्भनद्रव्यमुक्तमधुना स्वरूपत आह—द्रवमित्यादि। सान्द्रमपि द्रव्यं घृत-दुग्धादिकं द्रवं भवतीत्यत आह—तन्विति। तनु अबहलमसान्द्रमित्यर्थः। असरमिति यन्न सरति तदसरं स्थिरगुणयुक्तम्। शीतीकरणं स्पर्शतो वीर्य्यतश्च यद्द्रव्यमशीतं शीतं करोति. यद्यपि पूर्व्वं शीतं मन्दमित्यादिभिर्गुणैर्लक्षणतो द्रव्यं स्तम्भनमुक्तम्। पुनश्चात्र द्रवतन्वादिगुणः स्वरूपतोऽत्र स्तम्भनद्रव्यमुप-संहारार्थमुक्तं तद्द्रव्याणामपरिसंख्येयत्वात्। स्वाद्वित्यादिरसनिर्देशेन वीर्य्यतो-ऽशीतीकरणस्वाद्वादिरसद्रव्यं न स्तम्भनं भवतीति ज्ञापनार्थम् ॥

गङ्गाधरः—स्तम्भनीयाश्च कीदृशा? इति प्रश्नस्योत्तरमाह—पित्तेत्यादि। पित्तादिदग्धानां दाहस्तम्भः कार्य्यः। विषार्त्तानां विषवेगस्तम्भः कार्य्यः। स्वेदो घर्म्मस्तस्यातियोगे स्तम्भः कार्य्यः। परे इति रक्तपित्तादय इति ॥ १९ ॥

गङ्गाधरः—अथ लङ्घनप्रभृतीनां षण्णां कृताकृतातिवृत्तानां लक्षणं वक्तु-मर्हसि. इति प्रश्नोत्तरं क्रमेणाह—वातमूत्रेत्यादि। तन्द्राक्लमौ सुश्रुतेनोक्तौ। रुचौ चापि जातायामिति लिङ्गविपर्य्ययेणान्वेतव्यम्। क्षुत्पिपासाऽसहोदये क्षुधातृष्णयोर्युगपदुदये इति कश्चित्. तन्न; "सृष्टमारुतविण्मूत्रं क्षुत्पिपासा-सहं लघुम्" इत्यादि सुश्रुतवचनदर्शनात्। क्षुधापिपासयोरसहोदयः। असह-त्वेन क्षुधातृष्णयोः समस्तयोरुदये इत्यर्थः। समाहारद्वन्द्वसमासात्। कृत-मिति सम्यक्कृतम्। अन्तरात्मनीति मनसि। इति सम्यक्कृतलङ्घनस्य लक्षणम्। इति लक्षणविपरीतलक्षणञ्च अकृतलङ्घनलक्षणं सुतरां बोध्य-मिति ॥ २० ॥

किंवा पिण्याकशाकम्। प्रभृतिग्रहणाद्दाह्यवातप्रमेहादयो ग्राह्याः। तन्वबहलम्। सरति गच्छतीति सरं, न सरमसरं स्थिरमित्यर्थः ॥ १७—१९ ॥

चक्रपाणिः—क्षुत्पिपासयोरसहः पीडाकरत्वेनोदयः क्षुत्पिपासहोदयः, न तु क्षुत्पिपासयोर्युग-

पर्व्वभेदोऽङ्गमर्द्दश्च कासः शोषो मुखस्य च।
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्ब्बल्यं श्रोत्रनेत्रयोः ॥
मनसः सम्भ्रमोऽभीक्ष्णमूर्द्ध्वं वातस्तमो हृदि।
देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत् ॥ २१ ॥
बलं पुष्ट्युपलम्भश्च कार्श्यदोषविवर्ज्जनम्।
लक्षणं वृंहिते स्थौल्यमति चात्यर्थवृंहिते ॥ २२ ॥
कृतातिकृतचिह्नं यल्लङ्घिते तद्विरूक्षिते। *
स्तम्भितः स्याद् बले लब्धे यथोक्तैश्चामयैर्जितैः ॥ २३ ॥

गङ्गाधरः—अतो नोक्तातिकृतलङ्घनलक्षणमाह—पर्व्वभेद इत्यादि। क्षुत्प्रणाशोऽत्र क्षुधादयानन्तरं क्षुन्नाशः। अरुचिश्च। मनसः सम्भ्रमो भ्रान्तिरेव। ऊर्द्ध्वं देहे वातो वायुः कुपितत्वेन लक्ष्यते इत्यूर्द्ध्वं वातः। ऊर्द्ध्वगतिमान् वातः। तमो हृदीत्यन्धकारप्रवेशवत् ॥ २१ ॥

गङ्गाधरः—अथ वृंहणस्य कृताकृतातिवृत्तस्य लक्षणमाह—बलमित्यादि। पुष्ट्युपलम्भः शरीरपोषणारम्भज्ञानम्। कार्श्यदोषविवर्ज्जनमिति कार्श्ये ये दोषा व्यायामाद्यसहत्वादीनि तेषां विवर्ज्जनं विशेषेण सम्यग्वर्ज्जनमित्यर्थः। वृंहिते सम्यग्वृंहिते। इति सम्यक्कृतवृंहणलक्षणमेतल्लक्षणविपरीतलक्षणन्तु अकृतवृंहणलक्षणं सुगममतो नातिवातिवृंहणलक्षणमाह—स्थौल्यमतीति। अतिस्थौल्यमत्यर्थवृंहणलक्षणमित्यर्थः ॥ २२ ॥

गङ्गाधरः—अथ रूक्षणस्य कृतादिलक्षणमतिदेशेनाह—कृतातीत्यादि। लङ्घनस्य मुक्तकण्ठेन कृतातिकृतचिह्नमुक्तम्। अतो रूक्षणस्यापि तथाविधेन कृतातिकृतचिह्नं नार्थापत्त्याऽप्यकृतरूक्षणलक्षणं बोध्यमिति न प्रश्नोत्तरोक्तौ न्यूनता। एवं स्नेहाध्याये स्निग्धस्य, स्वेदाध्याये स्वेदस्य कृताकृतातिवृत्तस्य लक्षणमुक्तमिति। अतोऽत्र न पुनरुक्तमिति बोध्यम्। स्तम्भनस्य कृताकृतातिवृत्तस्य लक्षणमाह—स्तम्भित इत्यादि। स्तम्भित इति सम्यक्

पर्व्वभेदः, अत एव सुश्रुते—"सृष्टमारुतविण्मूत्र-क्षुत्पिपासासहं लघुम्" इत्यादि। अन्तरात्मनीति मनसि। मनसः सम्भ्रमो भ्रान्तिरेव, ऊर्द्ध्वं काये वात ऊर्द्ध्वं वातः ॥ २०—२१ ॥

चक्रपाणिः—कार्श्यदोषविवर्ज्जनमिति कार्श्ये ये दोषाः शीतोष्णासहत्वादयः, तेषां वर्ज्जनम्। बले लब्धे इति बलवान् यदा पुरुषो भवति। यथोक्तैरिति "पित्तक्षाराग्निदग्धा ये" इत्याद्यभि-

* कृताकृतस्य लिङ्गं यल्लङ्घिते तद्विरूक्षिते इति चक्रधृतः पाठः।

श्यावता स्तब्धगात्रत्वमुद्वेगो हनुसंग्रहः ।
हृद्वर्च्चोनिग्रहश्च स्यादतिस्तम्भितलक्षणम् ॥ २४ ॥
लक्षणञ्चाकृतानां स्यात् षण्णामेषां समासतः ।
तदौषधानां धातूनामशमो वृद्धिरेव च ॥
इति षट् सर्व्वरोगाणां प्रोक्ताः सम्यगुपक्रमाः ।
साध्यानां साधने सिद्धा मात्राकालानुरोधिनः ॥ २५ ॥

भवति चात्र ।

दोषाणां बहुसंसर्गात् सङ्कीर्य्यन्तेऽप्युपक्रमाः ।
षट्त्वन्तु नातिवर्त्तन्ते त्रित्वं वातादयो यथा ॥ २६ ॥

स्तम्भितः । बले लब्धे इति स्तम्भनीया पित्तक्षाराग्निदग्धाद्यामयजयेन यदा पुरुषो बलवान् भवति तदा इत्यर्थः ॥ २३ ॥

गङ्गाधरः—एतत् सम्यक्स्तम्भितलक्षणविपरीतलक्षणन्तु अकृतस्तम्भनलक्षणं बोध्यमिति नोक्त्वातिस्तम्भितलक्षणमाह—श्यावतेत्यादि । उद्वेगः सम्यगात्मत्वाभावः ॥ २४ ॥

गङ्गाधरः—विस्तरेण सम्यक्कृतलङ्घनादीनां लक्षणेनार्थापत्त्या मिथ्याकृतलङ्घनादीनां लक्षणलाभेऽपि शिष्यानुकम्पया समासेन षण्णामेकलक्षणम् अकृतानामाह लक्षणमित्यादि । तदौषधानामिति तल्लङ्घनादिकं यत् यदौषधं येषां ते तदौषधा व्याधयः । धातूनामिति दोषाणाम् दोषाश्च धातुसंज्ञका भवन्ति । तेन लङ्घनादिसाध्यतत्तद्व्याध्यारम्भकदोषाणामशमो न शान्तिश्च पुनर्वृद्धिरेव भवति । अल्पमात्रकृतत्वे दोषशमाभावात् । उपसंहरति—इतीत्यादि । इति षट् विदित्वा सर्व्वरोगाणां सम्यगुपक्रमाः किंवा यथायोग्यत्वेऽपि संशोधनस्य सर्व्वव्याधिविषयत्वात् सर्व्वरोगाणामितिवचनं विरुध्यते । साध्यानामित्यसाध्यरोगव्यवच्छेदाय । सिद्धा इत्युपक्रमविशेषणम् । मात्राकालावननुरुध्य साध्यानामपि व्याधीनां साधनाय न स्युरिति ज्ञापनार्थमाह—मात्रेत्यादि ॥ २५ ॥

गङ्गाधरः—ननु षण्णां लङ्घनादीनामेकैकेनोपक्रमेण किमेकैकव्याध्युपशमो

मिश्रैः, बहुना कफवातरोगः, किंवा भेषज्यानभिप्रायः । तदौषधानामिति लङ्घनादिसाध्यानाम्, वृद्धिरेव चेति स्तोकमात्रकृतलङ्घनादिक्रियया, दोषक्षोभमात्रस्य कृतत्वात्, धातूनामिति दोषाणाम्, "दोषा अपि धातुशब्दं लभन्ते" इति वचनात् ॥ २२—२५ ॥

चक्रपाणिः—सम्यगुक्तलङ्घनाद्युपक्रमाणां विकारापेक्षया संसर्गमाह—दोषाणामित्यादि ।

तत्र श्लोकः।

इत्यस्मिन् लङ्घनाध्याये व्याख्याताः षडुपक्रमाः।
यथाप्रश्नं भगवता चिकित्सा यैः प्रवर्त्तिता ॥ २७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने लङ्घन-बृंहणीयो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

भवति? भवति च किं व्यस्तसमस्तेन? ततश्च षट्त्वमित्याशङ्क्याह भवति चात्रेत्यादि। दोषाणां वातपित्तकफानां बहुसंसर्गात् द्विशस्त्रिशश्च हीनाधिकमध्यक्षयवृद्धिभिः संसर्गात् सुतरां बहुत्वम् त्रित्वन्तु नातिवर्त्तन्ते, तथा लङ्घनादीनामेकैकश उपयोगेन न व्याध्युपशमो भवतीति लङ्घनादयोऽप्युपक्रमाः सङ्कीर्यन्ते मिलिता भवन्त उपयोक्तव्या भवन्ति। यथा कुत्रचित् सन्निपातज्वरादौ लङ्घनस्वेदने कुत्रचित् बृंहणस्वेदनादि क्वचित् स्नेहनवमनादि इत्येवमादयः। एवञ्च लङ्घनादयः सङ्कीर्णा अपि षट्त्वं नातिवर्त्तन्ते। यथा वातादयस्त्रयो दोषाः द्विषष्टिधा भवन्तोऽपि त्रित्वं नातिवर्त्तन्ते। परस्परं संसृष्टा अपि मधुघृतवत् स्वस्वकार्य्यारम्भकत्वान्न तु स्वस्वकार्य्यातिरिक्तकार्य्यारम्भकत्वादतिवर्त्तन्ते इति भावः ॥ २६ ॥

अध्यायार्थमुपसंहरति—तत्र श्लोक इत्यादि एकश्लोकेन। स्पष्टम् ॥ २७ ॥

अध्यायं समापयति अग्नीत्यादि। पूर्ववद् व्याख्यातव्यम्।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ सूत्रस्थानीय-द्वाविंशलङ्घनबृंहणीयाध्यायजल्पाख्या द्वाविंशी शाखा ॥२२॥

दोषाणां यस्मात् संसर्गो बहुप्रसरमात्, तत्साधनार्थमुपक्रमा अपि सङ्कीर्य्यन्ते मिश्रतां यान्ति, यथा—क्वचिल्लङ्घनस्वेदने, क्वचित् बृंहणस्वेदने, एवमादि। षट्त्वन्तु नातिवर्त्तन्त इति संसृष्टा अपि लङ्घनादिस्वरूपं न जहति, लङ्घनादयः परस्परयुक्ता मधुसर्पिःसंयोगवन्न प्रकृतिगुणान-पेक्षकार्य्यान्तरमारभन्त इति भावः। अत्रैव दृष्टान्तमाह—त्रित्वमित्यादि। अयञ्च दृष्टान्तः संसर्गिसंख्याऽपरित्यागमात्रकः ॥ २६।२७ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-व्याख्यायां लङ्घनबृंहणीयो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ।

अथातः सन्तर्पणीयमध्यायं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

सन्तर्पयति यः स्निग्धैर्मधुरैर्गुरुपिच्छिलैः ।
नवान्नैर्नवमद्यैश्च मांसैश्चानूपवारिजैः ॥
गोरसैर्गौडिकैश्चान्यैः * पैष्टिकैश्चातिमात्रशः ।
चेष्टाद्वेषी दिवास्वप्न-शय्यासनसुखे रतः ॥
रोगास्तस्योपजायन्ते सन्तर्पणनिमित्तजाः ।
प्रमेहपिड़काकोठ-कण्डूपाण्ड्वामयज्वराः ॥
कुष्ठान्यामप्रदोषाश्च मूत्रकृच्छ्रमरोचकः ।
तन्द्रा क्लैव्यमतिस्थौल्यमालस्यं गुरुगात्रता ॥

गङ्गाधरः—अथोक्तानां षण्णां लङ्घनादीनामुपक्रमाणां सन्तर्पणापतर्पणत्व-भेदेन पुनर्द्विविधत्वादनन्तरं सन्तर्पणीयोऽध्यायोऽभिधीयते अथात इत्यादि। सन्तर्पणमधिकृत्य कृत इति सन्तर्पणीयः ॥ १ ॥

गङ्गाधरः सन्तर्पयतीति तृपसन्दीपनप्रीणनयोरिति विभाषितचौरादिको धातुः सन्तृप्यतीत्यर्थः न तु सन्तर्पणमाचरतीत्यर्थः। तदर्थे प्रयोगासाधुत्वात्। सन्तर्पणं हि द्विविधम्; स्निग्धं रूक्षञ्च। "सक्तूनां षोड़शगुणो भागः सन्तर्पणं पिबेत्" इति वक्ष्यमाणवचनदर्शनात्। तत्र स्निग्धसन्तर्पणोत्थ व्याधीनाह स्निग्धैरित्यादि। स्निग्धादिभिर्नवान्नादिभिर्द्रव्यैश्चेष्टादिभिः अद्रव्यैश्च यः सन्तृप्यति चेष्टाद्वेष्यादिश्च यः तस्य सन्तर्पणं शीघ्रमप्रतिकुर्वतः सन्तर्पणनिमित्तजाः प्रकरणात् स्निग्धसन्तर्पणनिमित्तजा रोगा उपजायन्ते। ते रोगाः के इति? अत आह—प्रमेहेत्यादि। आमप्रदोषा

चक्रपाणिः—व्याख्यातषडुपक्रमाणामेव सन्तर्पणापतर्पणभेदेन द्विविधानां द्विविधविषये प्रवृत्तिं दर्शयितुं सन्तर्पणीयोऽभिधीयते। सन्तर्पयति सन्तर्पणमाचरति। स्निग्धैरित्यादिवचनम्, अस्निग्धादिभिरपि सक्तुप्रभृतिभिस्तृप्तिमात्रकारकत्वेन सन्तर्पणनिषेधार्थम्। भवति हि तृप्ति-कारके सन्तर्पणशब्दप्रयोगः, यथात्रैव सन्तर्पणप्रयोगे—"सक्तूनां षोड़शगुणो भागः सन्तर्पणं

* अन्यैरिति पाठः।

इन्द्रियस्रोतसां लेपो बुद्धेर्मोहः प्रमीलकः।
शोथश्चैवंविधाश्चान्ये शीघ्रमप्रतिकुर्व्वतः ॥ २ ॥
शस्तमुल्लेखनं तत्र विरेको रक्तमोक्षणम्।
व्यायामश्चोपवासश्च धूमाश्च स्वेदनानि च ॥
सक्षौद्रश्चाभयाप्राशः प्रायो रुक्षान्नसेवनम्।
चूर्णप्रदेहा ये प्रोक्ताः कण्डूकोठविनाशनाः ॥ ३ ॥
त्रिफलारग्वधं पाठां सप्तपर्णं सवत्सकम्।
मुस्तं निम्बं समदनं जलेनोत्क्वथितं पिबेत् ॥
तेन मेहादयो यान्ति नाशमभ्यस्यतो ध्रुवम्।
मात्राकालप्रयुक्तेन सन्तर्पणसमुत्थिताः ॥ ४ ॥

विसूच्यादयः। इन्द्रियस्रोतसां चक्षुरादीनामधिष्ठानगोलकादीनामतिमलेन तेषां स्रोतोलेपो बोध्यः। बुद्धेर्मोह इति मनोमोहः। बुद्धेरस्फूर्त्त्यनुमेयः। प्रमीलकः सर्व्वदा प्रध्यानम्। एवंविधाश्चान्ये प्रतिश्यायादयः ॥ २ ॥

गङ्गाधरः—तेषां प्रमेहादीनां जन्मनः पूर्व्वं तत्प्रतीकारार्थं क्रियासूत्राण्याह—शस्तमित्यादि। उल्लेखनं वमनम्। उल्लेखनविरेकरक्तमोक्षणव्यायामोपवासधूमस्वेदसौद्रान्विताभयाभक्षणरुक्षान्नसेवनादीनां स्निग्धसन्तर्पणविपरीतत्वात् तन्निमित्तकप्रमेहादिप्रशमकत्ववचनेन अरुक्षसन्तर्पणनिमित्तजमूर्च्छाभ्रमादिव्याधिप्रशमकत्वं स्निग्धादीनामुक्तं भवतीति ये चोक्ता इत्यारग्वधीये ॥ ३ ॥

गङ्गाधरः—त्रिफलेत्यादि। समदनमिति मदनफलकल्कं वमनार्थं युक्त्या प्रक्षिप्य पिबेदित्यर्थः। शमनार्थन्तु तुल्यमानेन ग्राह्यम्। तेनेति त्रिफलादिक्वथितपानेन। अयमुल्लेखनार्थमपि योगः ॥ ४ ॥

"पिबेत्" इति। शय्यासनसुखेरतस्यैव चेष्टासु दिवे स्वप्ने पुनरुद्वर्त्तनं शय्यासनस्थितस्यापि गीतादिचालनादिचेष्टानिषेधार्थम्; आमप्रदोषा विसूचिकादयः, प्रमीलकः सततं प्रध्यानम् ॥ ३।२ ॥

चक्रपाणिः—सक्षौद्रश्चाभयाप्राश इति क्षौद्रेण सह हरीतकीप्राशः, किंवा आमलकहरीतक्यादिप्राशः। ये चोक्ता इत्यारग्वधीये। तेनेति क्वाथेन करणभूतेन अभ्यस्यतोऽभ्यासं कुर्व्वाणस्य, किंवा तेन क्वाथेन त्रिफलादीन्यभ्यस्यत इति योजना ॥ ३।४ ॥

मुस्तमारग्वधः पाठा त्रिफला देवदारु च ।
श्वदंष्ट्रा खदिरो निम्बो हरिद्रा * त्वक् च वत्सकात् ॥
रसमेषां यथादोषं प्रातः प्रातः पिबेन्नरः ।
सन्तर्पणकृतैः सर्वैर्व्याधिभिः सम्प्रमुच्यते ॥
एभिश्चोद्वर्त्तनोद्घर्ष-स्नानयोगोपयोजितैः ।
त्वग्दोषाः प्रशमं यान्ति तथा स्नेहोपसंहितैः ॥ ५ ॥
कुष्ठं गोमेदको हिङ्गु क्रौञ्चास्थि त्र्यूषणं वचा ।
वृषकैले श्वदंष्ट्रा च खराह्वा चाश्मभेदकः ॥
तक्रेण दधिमण्डेन बदराम्लरसेन वा ।
मूत्रकृच्छ्रं प्रमेहञ्च पीतमेतद्व्यपोहति ॥ ६ ॥
तक्राभयाप्रयोगैश्च त्रिफलायास्तथैव च ।
अरिष्टानां प्रयोगैश्च यान्ति मेहादयः क्षयम् ॥ ७ ॥

गङ्गाधरः—मुस्तमित्यादि । मुस्तेत्यादिर्विरेकाथ योगः । त्वक् च वत्सकात् कुटजत्वगित्यर्थः । यथादोषमिति दोषमानापेक्षया मानेन । एभिरिति मुस्तादिभिः । उद्वर्त्तनमभ्यक्तगात्रे म्रक्षणम् । उद्घर्षस्त्वनभ्यक्तगात्रे म्रक्षणम् । स्नानार्थकाथोऽपीत्येवंरूपयोगेनोपयोजितैः । त्वग्दोषाः कण्ड्वादयः । स्नेहोपसंहितैः स्नेहानां सर्पिस्तैलादीनां साधनरूपेणोपयुक्तैरेभिश्च मुस्तादिभिः कल्कैः कटुतैलादिकं पक्त्वाभ्यङ्गयोगेनेत्यर्थः ॥ ५ ॥

गङ्गाधरः—कुष्ठमित्यादि । गोमेदको मणिविशेषः । क्रौञ्चेति कोंच इति ख्यातः पक्षी । खराह्वा खुरासिनी अजमोदा ॥ ६ ॥

गङ्गाधरः—तक्राभयेत्यादि स्पष्टम् ॥ ७ ॥

चक्रपाणिः—यथादोषमिति दोषप्रमाणापेक्षया गृहीतमात्रम् । उद्वर्त्तनमभ्यङ्गपूर्व्वकम्, उद्घर्षस्त्वनभ्यङ्गपूर्व्वकः । स्नेहोपसंहितैरिति स्नेहसाधनेनोपयुक्तैः । गोमेदको मणिविशेषः, क्रौञ्चः पक्षी, कोंच इति ख्यातः पक्षी । खराह्वाऽजमोदा । कोष्ठोदकाप्लुतः इत्यगुरूदकाप्लुतः,

* हरिद्रे इति वा पाठः ।

ऊषणं त्रिफला क्षौद्रं क्रिमिघ्नमजमोदकः ।
मन्थोऽयं सक्तवः * सर्पिर्हितो लोहोदकाप्लुतः ॥ ८ ॥
व्योषं विड़ङ्गं शिग्रूणि त्रिफलां कटुरोहिणीम् ।
बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम् ॥
हिङ्गु केवूकमूलानि यमानीधान्यचित्रकान् ।
सौवर्च्चलमजाजीञ्च हवुषाञ्चेति चूर्णयेत् ॥
चूर्णतैलघृतक्षौद्र-भागाः स्युर्मानतः समाः ।
सक्तूनां षोड़शगुणो भागः सन्तर्पणं पिबेत् ॥
प्रयोगादस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः ।
प्रमेहा मूढ़वाताश्च कुष्ठान्यर्शांसि कामलाः ॥

गङ्गाधरः—ऊषणमित्यादि। लोहोदकाप्लुत इति षड़ङ्गपरिभाषया अगुरुक्वाथमर्द्धशृतं कृत्वा तदुदकोपहितः सन् मन्थो भवति। अत्रानन्तरव्योषमित्यादियोगनिर्दिष्टप्रमाणसाहचर्य्यात् ऊषणादीनामपि मानं बोध्यम्। तेन ऊषणत्रिफलाक्रिमिघ्नाजमोदानां मिलितानां यावन्मानं तावन्मानं क्षौद्रस्य तावच्च सर्पिषः। चूर्णादीनां सर्व्वेषां षोड़शगुणमानं सक्तूनामित्येवं सर्व्वमर्द्धशृतागुरुक्वाथेनालोड्य पानं सन्तर्पणं रूक्षमिति बोध्यम् ॥ ८ ॥

गङ्गाधरः—व्योषमित्यादि। यमानीति वनयमानी। अजाजी जीरकम्। हवुषामिति स्वनामख्याताम्। चूर्णयेदिति व्योषादिहवुषान्तानां चूर्णानां मिलितानां यावन्मानं तावन्मानं तिलतैलम्। तावच्च क्षौद्रम्। तावच्च घृतम्। सक्तूनान्तु चूर्णापेक्षया षोड़शगुणो भाग इत्येवं सर्व्वं द्रवानुक्तत्वादर्द्धशृतजलेन आलोड्य सन्तर्पणं पिबेत्। सन्तृप्यन्ते प्रयुक्ते यस्मात् सन्तर्पणं सन्तृप्यतेऽनेन वा तत्तथा। एतच्च रूक्षसन्तर्पणमप्यपतर्पणं बोध्यम्। स्निग्धसन्तर्पणमत्यनीक-त्वेनोक्तत्वात्। सन्तर्पणोत्थिता इति स्निग्धसन्तर्पणोत्थिताः। चूर्णतैलेति उपकरणञ्च षड़ङ्गविधानेन। इह प्रयोगे वक्ष्यमाणव्योषाद्युक्तमानेन साहचर्य्याच्चूर्णादिमानं ज्ञेयम् ॥ ५—८ ॥

चक्रपाणिः—सन्तर्पणमिति जलालोड़ितशक्तुरूपतया, तेन सन्तर्पणसंज्ञकस्याप्यपतर्पणता

* सर्पिरित्यत्र तैलमिति चक्रोक्तः पाठः ।

प्लीहा पाण्डामयः शोफो मूत्रकृच्छ्रमरोचकः।
हृद्रोगो राजयक्ष्मा च कासश्वासगलग्रहाः॥
क्रिमयो ग्रहणीदोषाः श्वैत्रं स्थौल्यमतीव च।
नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च वर्द्धते॥ ९॥
व्यायामनित्यो जीर्णाशी यवगोधूमभोजनः।
सन्तर्पणकृतैर्दोषैः स्थौल्यं मुक्त्वा विमुच्यते॥ १०॥
उक्तं सन्तर्पणोत्थानामपतर्पणमौषधम्।
वक्ष्यन्ते सौषधाश्चोर्द्धमपतर्पणजा गदाः॥ ११॥
देहाग्निबलवर्णौजः-शुक्रमांसपरिक्षयः।
ज्वरः कासानुबन्धश्च पार्श्वशूलमरोचकः॥
श्रोत्रदौर्ब्बल्यमुन्मादः प्रलापो हृदयव्यथा।
विण्मूत्रसंग्रहः शूलं जङ्घोरुत्रिकसंश्रयम्॥
पर्व्वास्थिसन्धिभेदश्च ये चान्ये वातजा गदाः।
ऊर्द्ध्ववातादयः सर्व्वे जायन्ते ऽपतर्पणात्॥ १२॥

वचनन्तु अपतर्पणरूपरूक्षसन्तर्पणार्थं परिभाषारूपं बोध्यम। तेन सर्व्वत्र सन्तर्पणमेतयैव दिशा कार्य्यमिति। श्वैत्रं श्वित्रित्तम्॥ ९॥

गङ्गाधरः—संग्रहेण सन्तर्पणप्रतीकारमाह—व्यायामेत्यादि। उक्तमित्यादि। सन्तर्पणोत्थानामिति स्निग्धसन्तर्पणोत्थानाम्, अपतर्पणमिति स्निग्धसन्तर्पण-विपरीतं तर्पणमपतर्पणमित्यर्थः, न तु तर्पणमात्रविपरीतमपतर्पणम्। बृंहणादिव्योपादियोगयोः सन्तर्पणाख्यया स्वयमुक्तत्वात्। अपतर्पणजा इति रूक्षसन्तर्पणजाः स्निग्धसन्तर्पणविपरीततर्पणजा इत्यर्थः। स्निग्धतर्पण-विपरीततर्पणन्तु द्विविधम्; उपवासाद्यद्रव्यभूतं रूक्षादिद्रव्यभूतञ्च॥ १०।११॥

गङ्गाधरः—अपतर्पणजाः के गदा इति? अत आह—देहाग्नीत्यादि। ऊर्द्ध्व-वातादय इति श्वासादयः, किंवा "अधः प्रतिहतो वायुः श्लेष्मणा कुपितेन च।

ज्ञेया। श्वैत्रं श्वित्रित्वम्, श्वैत्यमिति पाठे श्वेतावभासता। ऊर्द्ध्ववातादय इति पूर्व्वा-व्याख्या—'ऊर्द्ध्व वाताक्रमो हदि' इत्यादि, ऊर्द्ध्ववातः श्वासादिर्व्वत्रोर्द्ध्वं वायुर्याति, किंवा

तेषां सन्तर्पणं तज्ज्ञैः पुनराख्यातमौषधम्।
यत् तदर्थे * समर्थं स्यादभ्यासे वा तदिष्यते॥
सद्यःक्षीणो हि सद्यो वै तर्पणेनोपचीयते।
नर्ते सन्तर्पणाभ्यासाच्चिरक्षीणस्तु पुष्यति॥ १३॥
देहाग्निदोषभैषज्य-मात्राकालानुवर्त्तिना।
कार्य्यमत्वरमाणेन भेषजं चिरदुर्ब्बले॥
हिता मांसरसास्तस्मै पयांसि च घृतानि च।
स्नानानि वस्तयोऽभ्यङ्गास्तर्पणास्तर्पणाश्च ये॥ १४॥

करोत्यनिशमुद्गारमूर्द्ध्वं वातः स उच्यते॥" इति तन्त्रान्तरोक्त ऊर्द्ध्ववातः। आदिना भ्रमादयः। अपतर्पणात् स्निग्धसन्तर्पणविपरीतलङ्घनादिरूक्षसन्तर्पणात्॥१२॥

गङ्गाधरः—अपतर्पणजव्याधिप्रशान्त्यर्थं चिकित्सासूत्राण्याह—तेषामित्यादि। सन्तर्पणं स्निग्धसन्तर्पणं यदौषधमाख्यातमुक्तं तद्यत् तत्तद्व्याधिं प्रशमयितुं सद्यः समर्थं स्यात् तदर्थं तद्व्याधिप्रशमहेतुसन्तर्पणार्थं तदिष्यते। अथ सद्यः प्रशमने समर्थं न स्यात् तत्र व्याधौ तदेवौषधमभ्यासे इष्यते। सद्यस्तर्पणाभ्यासयोर्विषयमाह—सद्यः इत्यादि। सद्यःपदं समाहाद्यन्तपरं तर्पणेन सद्यः उपचीयते। किं पुनः सद्यः सन्तर्पणेनेत्युभयत्र तर्पणोपचययोः सद्यःपदान्वयः। नर्ते इति वचनेन सद्यस्तर्पणस्य चिरक्षीणतर्पणकरणव्यवच्छेदादित्यर्थः। तस्माद्देहाद्यनुवर्त्तिना सन्तर्पणेन अभ्यस्यमानेन चिरनिषेव्यमाणेन चिरदुर्ब्बले भेषजं चिकित्सनं कार्य्यम्, न तु शीघ्रं सेव्यमानेन। शीघ्रसेव्यमानं हि सन्तर्पणं देहाग्न्यादूषणायाय भवतीति भावः।

सन्तर्पणमाह—हिता इत्यादि। तस्मा इति चिरक्षीणाय। वस्तय इति स्नेहवस्तयः। तर्पणास्तर्पणा इति तर्पणसंज्ञा, ये स्निग्धतर्पणाः शर्करापिप्पली-

तन्त्रान्तरोक्त रोगविशेषः पुन [illegible]— [illegible]: प्रतिहतो वायुः श्लेष्मणा कुपितेन च। करोत्यनिशमुद्गारमूर्द्ध्वं वातः स उच्यते" इति॥ ९—१२॥

चक्रपाणिः—सद्यस्तर्पणतर्पणाभ्यासयोर्विषयभेदमाह—सद्य इत्यादि। अत्वरमाणेनेति वचनेन

* यत्तत्रात्वमिति पाठः।

ज्वरकासप्रसक्तानां कृशानां मूत्रकृच्छ्रिणाम्।
तृष्यतामूर्द्ध्ववातानां वक्ष्यन्ते तर्पणा हिताः ॥ १५ ॥
शर्करापिप्पलीतैल-घृतक्षौद्रैः समांशकैः * ।
सक्तुर्द्विगुणितो वृष्यस्तेषां मन्थः प्रशस्यते ॥ १६ ॥
सक्तवो मदिरा क्षौद्रं शर्करा चेति तर्पणम्।
पिबेन्मारुतविण्मूत्र-कफपित्तानुलोमनम् ॥ १७ ॥
फाणितं सक्तवः सर्पिर्दधिमण्डोऽम्लकाञ्जिकम्।
तर्पणं मूत्रकृच्छ्रघ्नमुदावर्त्तहरं पिबेत् ॥ १८ ॥
मन्थः खर्ज्जूरमृद्वीका-वृक्षाम्लाम्लीकदाड़िमैः।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥ १९ ॥

त्यादिनात्रैव वक्ष्यन्ते। न त्वपतर्पणाः, ये रूक्षसन्तर्पणत्वात् तर्पणसंज्ञकाः पूर्व्वं श्रूयपर्णीमित्यादिना व्योषमित्यादिना चोक्ताः ॥ १३।१४ ॥

गङ्गाधरः—इति तर्पणांस्तर्पणान वक्तुं विषयोपदेशपूर्व्वकमाह—ज्वरेत्यादि। तर्पणा इति स्निग्धतर्पणत्वेन तर्पणसंज्ञकाः ॥ १५ ॥

गङ्गाधरः—शर्करेत्यादि। शर्करादिसर्व्वद्रव्यात् द्विगुणितः सक्तुर्मन्थः। अत्राप्यालोडनार्थम् अनुक्तं केवलाद्धशृतजलं बोध्यम्। सक्तवस्तु सर्व्वत्रैव दोषापेक्षया भृष्टयवलाजादीनां बोध्याः। एतच्च वचनं स्निग्धसन्तर्पणरूप-तर्पणसाधनार्थं परिभाषारूपं बोध्यम्। तेन सर्व्वत्रैवानेन वचनेनोक्तपानेन यत् स्नेहद्रव्यप्रधानं साध्यते तत् स्निग्धसन्तर्पणं भवति मन्थसंज्ञा। तेषामिति ज्वरकासादीनामुक्तानाम् ॥ १६ ॥

गङ्गाधरः—अपरमाह—सक्तव इत्यादि। अत्र मदिरादिभ्यस्त्रिभ्यो द्विगुणाः सक्तवः ॥ १७ ॥

गङ्गाधरः—अपरं तर्पणमाह—फाणितमित्यादि। अत्र प्रत्येकसमफाणितादिसर्व्वद्विगुणाः सक्तवः। किंवा प्रत्येकं समं समफाणितसर्पिर्भ्यां द्वाभ्यां द्विगुणः सक्तुः, सर्पिर्दधिमण्डाम्लकाञ्जिकैरालोडनं बोध्यम् ॥ १८ ॥

गङ्गाधरः—मन्थ इत्यादि। मन्थ इत्यादिनापरं तर्पणम्। खर्ज्जूरादीनां

चिरस्थितेऽप्लेष्मा क्रियमाणमग्निमान्द्यादिदोषं करोतीति सूचयति। तर्पणात्तर्पणाख्येति सन्तर्पण-

* शर्करापिप्पलीमूल-घृतक्षौद्रसमांशकैरिति चक्रपाणिसम्मतः पाठः।

स्वादुरम्लो जलकृतः सस्नेहो रूक्ष एव वा।
सद्यः सन्तर्पणो मन्थः स्थैर्य्यवर्णबलप्रदः ॥ २० ॥

तत्र श्लोकः।

सन्तर्पणोत्था ये रोगा रोगा ये चापतर्पणात्।
सन्तर्पणीये तेऽध्याये सौषधाः परिकीर्त्तिताः ॥ २१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
सन्तर्पणीयो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

प्रत्येकं समानानां पिष्टानां कल्कैर्युक्तः सक्त्वादिगुणसक्तुरिति सन्तर्पणानां सक्तुयोनित्वाल्लभ्यते ॥ १९ ॥

गङ्गाधरः—सद्यस्तर्पणमाह—स्वादुरित्यादि। स्वादुः शर्करामध्वादियोगात्। अम्ल इति दाडिमामलकादियोगात्। जलकृत इति जलेनालोडितः। सस्नेहो घृतादियोगात् स्नेहसक्तुमयो मन्थः। रूक्ष एव वेति घृतादियोगं विनापि रूक्षसक्तुमयो वा मन्थः द्रवशैत्यविकाशित्वैः सद्यः सन्तर्पयतीति भाव। एवञ्च लङ्घनादीनां षण्णामुपक्रमाणामरोगत्वे सेव्यमानानां व्याधिहेतुत्वमुक्तं भवति। यतस्तु बृंहणस्नेहनयोः सन्तर्पणत्वमुक्तं, तज्जातानाञ्च व्याधीनामपतर्पणं वमन विरेचनव्यायामोपवासरूक्षान्नस्वेदनादिकमुक्तम्। अत एव बृंहणस्नेहने द्वे सन्तर्पणे भवतश्चत्वारि लङ्घनादीन्यपतर्पणानि भवन्तीति द्वैविध्यं षण्णामिति बोध्यम् ॥ २० ॥

गङ्गाधरः अध्यायार्थमुपसंहर्त्तुमाह तत्रेत्यादि। स्पष्टम् ॥ २१ ॥

गङ्गाधरः अग्निवेशेत्यादि ॥

इति वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ सूत्रस्थानीयत्रयोविंशाध्यायसन्तर्पणीयजल्पाख्या त्रयोविंशी शाखा ॥ २३ ॥

कारकमन्थादय, तेन इह संज्ञामात्रेण ये तर्पणा अपतर्पणकारका व्योषादयस्ते न ग्राह्या, किन्तु शर्करापिप्पलीत्याद्रिमन्थयाद्याः शर्करादिमन्थोक्तमानेनापतर्पणे ग्राह्याः ॥ १३—१९ ॥

चक्रपाणिः—स्वादुरम्लेत्यादिना सद्यस्तर्पणमाह अम्ल इति अम्लदाडिमादियोगात्; अत्र रूक्षसक्तुकृतस्यापि मन्थस्य द्रवत्वशैत्यदेहानुसारित्वैः सद्यस्तर्पणत्वं भवत्येव, अत एव सद्य इत्युक्तम्; स्नेहादिबृंहणद्रव्ययोगात् तु कालान्तरतर्पकत्वमपि भवति ॥ २०।२१ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्वेददीपिकायां सूत्रस्थानव्याख्यायां सन्तर्पणीयो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

# चतुर्व्विंशोऽध्यायः।

अथातो विधिशोणितीयमध्यायं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

विधिना शोणितं जातं शुद्धं भवति देहिनाम्।
देशकालौकसात्म्यानां विधिर्यः सम्प्रकाशितः ॥ २ ॥
तद्विशुद्धं हि रुधिरं बलवर्णसुखायुषा।
युनक्ति प्राणिनां * प्राणः शोणितं ह्यनुवर्त्तते ॥ ३ ॥

गङ्गाधरः—अथ भेषजयोजनाकल्पनायां पुंसां देहे शोणितमपि धातुषु प्रधानत्वादपेक्षणीयं भवतीत्यतोऽनन्तरं विधिशोणितीयाध्यायमाह—अथात इत्यादि। अध्यायादौ विधिना शोणितमिति पदस्यार्थतो विधिशोणितेति-शब्दमधिकृत्य कृतोऽध्याय इति विधिशोणितीयस्तं तथा। सर्व्वं पूर्व्ववत् ॥ १ ॥

गङ्गाधरः—विधिनेत्यादि। विधिना तेन सम्यगाहाराचाराभ्यां देहिनां देहे जातं शोणितं शुद्धमदुष्टमेव भवति। केन विधिना तदाह—देशेत्यादि देहिनां विशेषणम्। विधिर्यः संप्रकाशित इति तस्याशितीये देशकालौकसात्म्यानां देहिनामाहाराचारयोर्यो विधिः सम्यक् प्रकाशितस्तेनैव विधिना कृताहारजरसाज्जातमिति योज्यम् ॥ २ ॥

गङ्गाधरः—ननु तस्य च विशुद्धरुधिरस्य किं फलमिति? अत आह—तद्-

चक्रपाणिः—सम्प्रति वातादिवद्बहुविकारकर्तृत्वेन शोणितस्य शोणितविकाराणां पूर्व्वोक्तान् पूर्वोपक्रमान् रक्तजन्यहरणादीन् विशेषेण दर्शयितुं विधिशोणितीयोऽभिधीयते; इयमप्यर्थपरा संज्ञा। विधिनेति सम्यगाहाराचारविधिना। शुद्धं भवतीत्यत्र भवति विद्यत इत्यर्थः, उत्पादकस्य जातशब्देनैवोक्तत्वात्। केन विधिनेत्याह—देशेत्यादि। सात्म्यशब्दस्य देशादिभिः प्रत्येकमन्वयः। ओकसात्म्यमभ्याससात्म्यम्। संप्रकाशित इति तस्याशितीये; संप्रकाशित इत्यत्र तेनेति शेषः, अतो यः संप्रकाशितो विधिस्तेन विधिनेति सम्बन्धः। अन्ये व्याख्यानयन्ति—शोणितं जातं तावद् भवति, तच्च कारणान्तरदुष्टं सत् विधिना यथोक्तेन पुनः शुद्धं भवतीति योजनीयम्। विशुद्धं शोणितं किं करोतीत्याह—तद्विशुद्धमित्यादि। तेन विधिना विशुद्धं

* प्राणिनमिति चक्रः।

प्रदुष्टं बहुतीक्ष्णोष्णैर्मद्यैरन्यैश्च तद्विधैः।
तथातिलवणक्षारैरम्लैः कटुभिरेव च ॥

इत्यादि। विशुद्धञ्च तद्रुधिरं बलादिभिर्युनक्ति। हि यतः प्राणिनां प्राणः शुद्धमशुद्धं वा शोणितमनुवर्त्तते। शोणितव्यतिरेकेण प्राणो नानुवर्त्तते इत्यर्थः। वक्ष्यते च "दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः। शङ्खौ मर्म्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम् ॥" इति। सुश्रुतेऽपि सूत्रस्थाने शोणितवर्णनीयाध्याये प्रोक्तं— "तत्र पाञ्चभौतिकस्य चतुर्व्विधस्य षड्रसस्य द्विविधवीर्य्यस्याष्टविधवीर्य्यस्य वानेकगुणस्योपयुक्तस्याहारस्य सम्यक् परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते। तस्य च हृदयं स्थानम्। स हृदयाच्चतुर्व्विंशतिधमनीरनुप्रविश्योर्द्ध्वगा दश दश चाधोगामिनीश्चतस्रस्तिर्य्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति वर्द्धयति धारयति यापयति जीवयति चादृष्टहेतुकेन कर्म्मणा। तस्य शरीरमनुधावतोऽनुमानाद्गतिरुपलक्षयितव्या क्षयवृद्धिवैकृतैः। तस्मिन् सर्व्वशरीरावयवदोषधातुमलाशयानुसारिणि रसे जिज्ञासा—किमयं तैजसः सौम्य इति? अत्रोच्यते; स खलु द्रवानुसारी स्नेहनजीवनतर्पणधारणादिभिर्विशेषैः सौम्य इत्यवगम्यते। स खल्वाप्यो रसो यकृत्प्लीहानौ प्राप्य रागमुपैति। भवतश्चात्र—रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम्। अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥ रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्त्तते। तद्वर्षाद्द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम् ॥ आर्त्तवं शोणितन्त्वाग्नेयमग्नीषोमीयत्वात् गर्भस्य पाञ्चभौतिकञ्चापरे जीवरक्तमाहुराचार्य्याः। विस्रता द्रवता रागः स्पन्दनं लघुता तथा। भूम्यादीनां गुणा ह्येते दृश्यन्ते चात्र शोणिते ॥ रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते। मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः ॥" इत्यादि ॥ २ ॥

गङ्गाधरः—विशुद्धिहेतुमुक्त्वा शोणितस्य दुष्टिहेतुमाह—प्रदुष्टमित्यादि। प्रदुष्टता शोणितस्य वस्तुनः प्रकृतिविपर्य्ययः। अन्यैश्च तद्विधैरिति प्रदुष्टं बहुतीक्ष्णोष्णैः। अन्यैरिति पानकादिभिः। अन्नैरिति पाठो वा। अतिलवणक्षारैः

तद्विशुद्धम्, किंवा नदति शोणितम्। प्राणः शोणितं अनुवर्त्तते इति शोणिताव्यतिरेकमनुविधीयते, यदुक्तं—"दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः। शङ्खौ मर्म्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम्" इति ॥ १—२ ॥

चक्रपाणिः—शुद्धिहेतुमभिधाय दुष्टिहेतुमाह—प्रदुष्टेत्यादि। प्रदुष्टं स्वप्रकृतिविपरीतम्।

कुलत्थमाषनिष्पाव-तिलतैलनिषेवणात् ।
पिण्डालुमूलकादीनां हरितानाञ्च सर्व्वशः ॥
जलजानूपवैलानां प्रसहानाञ्च सेवनात् ।
दध्यम्लमस्तुशुक्तानां सुरासौवीरकस्य च ॥
विरुद्धानामुपक्लिन्न-पूतीनां भक्षणेन च ।
भुक्त्वा दिवा प्रस्वपतां द्रवस्निग्धगुरूणि च ॥
अत्यादानं तथा क्रोधं भजताञ्चातपानलौ ।
छर्द्दिवेगप्रतीघातात् काले चानवसेचनात् ॥
श्रमाभिघातात् सन्तापादजीर्णाध्यशनात् तथा ।
शरत्कालस्वभावाच्च शोणितं सम्प्रदुष्यति ॥ ४ ॥

इति केचिद्भेषजतया व्याचक्षते तन्न, अन्नप्रकरणात् । अन्नैरित्यस्य विशेषणं कटुभिरित्यन्नम् । निष्पावः श्वेतशिम्बा । पिण्डालुः पिण्डाकारालुकः । हरितानां मरिचादीनाम् । वैलानामिति बिलेशयानाम् । विरुद्धानां संयोगविरुद्धानाम् । उपक्लिन्नपूतीनां क्लेदीभूतानां पूतिगन्धीनां द्रव्याणाम् । द्रवस्निग्धगुरूणि भजतामित्यनेनान्वयः । अत्यादानमित्यर्थादाहारद्रव्याणामतिभोजनम् । भजतां क्रोधमातपानलौ च भजतामित्यन्वयः । अयुक्त्या क्रोधादिसेवनादित्यर्थः । काले चेति शोणितस्य दुष्टस्य यदावसेचनं कर्त्तव्यं तदानीम् । अनव सेचनात् अमोक्षणात् । अजीर्णे सति अधि चाशनमजीर्णाध्यशनम् अजीर्णभोजनम् । अध्यशनञ्च पूर्व्वाह्नभुक्तशेषे यत् भोजनम् । तदुक्तं— "भुक्तस्योपरि यद् भुङ्क्ते तदध्यशनमुच्यते ।" सम्प्रदुष्यतीति शोणितस्य दुष्टिः स्वभावान्यथात्वं क्षयो वृद्धिश्चेति ॥ ४ ॥

अन्नैश्च तद्विधैरिति मधुरलवणकाद्विभिः, किंवा "अन्नैः" इति पाठः । "तथाऽतिलवणक्षारैः" इत्यादि केचिद् भेषजविषयं वर्णयन्ति ; तद्विधैरिति वचनेनाकपानस्यातिलवणादेर्गृहीतत्वात् । निष्पावः श्वेतशिम्बिः ; अत्यादानं तृप्तिमतिक्रम्य भोजनम्, काले चेति शोणितदुष्टियुक्ते शरत्काले । अजीर्णेऽध्यशनमजीर्णाध्यशनम्, किंवा अजीर्णस्यापक्वस्याशनम्, अध्यशनन्तु पूर्व्वान्नशेषे यद्भुज्यते, यदाह—"भुक्तस्योपरि यद् भुक्तं तदध्यशनमुच्यते" ॥ ४ ॥

ततः शोणितजा रोगाः प्रजायन्ते पृथग्विधाः ।
मुखनासाक्षिपाकश्च * पूतिघ्राणास्यगन्धता ॥
गुल्मोपकुशवीसर्प-रक्तपित्तप्रमीलकाः ।
विद्रधी रक्तमेहश्च प्रदरो वातशोणितम् ॥
वैरस्यम् † अग्निनाशश्च पिपासा गुरुगात्रता ।
सन्तापश्चातिदौर्बल्यमरुचिः शिरसोऽतिरुक् ॥
विदाहश्चान्नपानस्य तिक्ताम्लोद्गिरणं क्लमः ।
क्रोधप्रचुरता बुद्धेः संमोहो लवणास्यता ॥
स्वेदः शरीरदौर्गन्ध्यं मदः कम्पः स्वरक्षयः ।
तन्द्रानिद्रातियोगश्च तमसश्चातिदर्शनम् ॥

गङ्गाधरः—तत इत्यादि। उपकुशो मुखरोगविशेषः। उक्तं हि सुश्रुते—"वेष्टेषु दाहो भवति तेन दन्ताश्चलन्ति च। यस्मिन्नुपकुशो नाम पित्तरक्तकृतो गदः॥" इति। प्रमीलका इति सततप्रध्यानम्। क्लम इति सौश्रुते—"योऽनायासश्रमो देहे प्रवृद्धः श्वासवर्जितः। क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः॥" इति। बुद्धेः सम्मोहो मनःसम्मोहः। लवणास्यता यद्यपि लवणो रसः कफकरस्तथापि रक्तस्यापि पाञ्चभौतिकत्वेन लवणरसस्य प्रत्यक्षोपलब्ध्या कफकरत्ववद्रक्तकरत्वं न विरुद्धम्। स्वेदो घर्म्मः। मदो मत्तता। तन्द्रानिद्रातियोगश्चेति। तत्र तन्द्रा तु "इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः। निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत्। तमोवातकफात् तन्द्रा निद्रा श्लेष्मतमोभवा॥" इत्यन्यत्र दर्शनात्। रक्तस्य च तमोबहुलत्वात् तमोगुणबहुलतन्द्रानिद्रयोरतियोगः स्यात्। अत एव च तमसोऽन्धकारस्यातिमात्रस्य दर्शनं भवति। कण्डूः कण्डूयनता। उत्कोठः। पिडका त्रिशोथीये दर्शिता।

चक्रपाणिः—उपकुशो मुखरोगविशेषः, यदुक्तं सुश्रुते "वेष्टेषु दाहो भवति तेषु दन्ताश्चलन्ति च। यस्मिन्नुपकुशो नाम पित्तरक्तकृतो गदः॥" इति। कुष्ठ इत्युक्तेऽपि चर्म्मदलाभिधानं विशेषार्थम्। शोणिताश्रया इतिभाषया शोणितस्य वातादिवत् स्वातन्त्र्येण रोगकर्तृत्वं निरा-

* मुखपाकोऽक्षिरोगश्च इति चक्रः। † वैवर्ण्यमिति पाठः क्वचित्।

कण्डूरक्कोठपिड़का-कुष्ठचर्म्मदलादयः।
विकाराः सर्व्व एवैते विज्ञेयाः शोणिताश्रयाः ॥ ५ ॥
शीतोष्णस्निग्धरूक्षाद्यै रुपक्रान्ताश्च ये गदाः।
सम्यक् साध्या न सिध्यन्ति रक्तजांस्तान् विनिर्द्दिशेत् ॥
कुर्य्याच्छोणितरोगेषु रक्तपित्तहरीं क्रियाम्।
विरेकमनुवासञ्च स्रावणं शोणितस्य च ॥ ६ ॥

कुष्ठचर्म्मदलादय इति कुष्ठोक्तौ पुनश्चर्म्मदलादय इति विशेषेण रक्तदुष्टिव्यापनार्थं क्षुद्रकुष्ठचर्म्मदलादीनामस्मिन् संग्रहे त्वनुक्तत्वेन सप्तकुष्ठातिरिक्तानां तेषाम् अत्राभावस्य लाभार्थञ्च। शोणिताश्रया इति वचनेन शोणितस्य वातादिवत् कर्त्तृत्वाभावः ख्यापितः ॥ ५ ॥

गङ्गाधरः अनुक्तभूरिशोणिताश्रयव्याध्युपसंहारार्थमाह शीतेत्यादि। आदि ग्रहणात् वक्ष्यमाणशोणितव्याधिप्रतीकारोपक्रमभिन्नलङ्घनबृंहणाद्युपक्रमाणां ग्रहणम्। सम्यगुपक्रान्ता इति सम्बन्धः। ननु शीतोष्णाद्युपक्रमैः किं न रक्तप्रशमः स्यादिति? अत आह कुर्य्यादित्यादि। अत्रायं भावः शोणिताश्रयव्याधीनां वातादिजन्यत्वेऽप्याश्रयस्य शोणितस्य प्राधान्यात् तन्निर्हरणं विनादितो येषां साध्यानां रोगाणां केवलवातादिप्रशमनशीतोष्णाद्युपक्रमेण सम्यक् सिद्धिर्भवति तान् रक्तजान् व्याधीनादिशेत्। रक्तस्य स्रावणं ततो विरेचनं ततोऽनुवासनं ततो रक्तपित्तहरीं रक्तपित्तसंशमनीं क्रियां कुर्य्यात्। न तु तथोगरक्तपित्तहरणवमनक्रियाम्। न त्वादितो रक्तपित्तसंशमनीं क्रियां ततो विरेचनं ततोऽनुवासनं ततो रक्तविस्रावणमिति ॥ ६ ॥

करोति। अनुक्तभूरिशोणितरोगसंग्रहार्थमाह शीतोष्णेत्यादि। आद्यग्रहणात् तीक्ष्णमृद्वादीनां ग्रहणम्; सम्यगिति पूर्व्वेण योजनीयम्; तत्र शीतोष्णस्निग्धरूक्षाद्यैरिति शोणितदुष्टिमनपेक्ष्य वातादिजयार्थमात्रप्रयुक्तैरिति मन्तव्यम्, येन शोणितव्याधेरपि शान्तिर्वक्ष्यमाणरक्तपित्तहरक्रियादिभिः शीतोष्णस्निग्धादिक्रियाप्रविष्टैव, ततश्च शोणितरोगस्यापि शीतादिक्रियाभिरेव शोणितप्रतिकूलाभिः प्रशमो भवति; प्रभूतशोणिताश्रयास्तु वातादयः स्वाश्रयप्रभावात् स्वचिकित्सामात्रेण न प्रशाम्यन्ति। रक्तपित्तहरक्रियादयो यथायोग्यतया योक्तव्याः ॥ ५। ६ ॥

बलदोषप्रमाणाद्वा विशुद्ध्या रुधिरस्य वा।
रुधिरं स्रावयेज्जन्तोराशयं प्रसमीक्ष्य वा ॥ ७ ॥
अरुणाभं भवेद्वातात् फेनिलं विशदं तनु।
पित्तात् पीतासितं रक्तं स्त्यायत्यौष्ण्याच्चिरेण च ॥
ईषत्पाण्डु कफाद् दुष्टं पिच्छिलं तन्तुमद् घनम्।
संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम् ॥ ८ ॥
तपनीयेन्द्रगोपाभं पद्मालक्तकसन्निभम्।
गुञ्जाफलसवर्णञ्च विशुद्धं विद्धि शोणितम् ॥ ९ ॥

गङ्गाधरः—शोणितस्य विस्रावणं यथा कर्त्तव्यं तदाह—बलदोषेत्यादि। बलस्यातुरबलस्य शोणितरूपदोषस्य च प्रमाणात् परिमाणमनुसृत्य जन्तो रुधिरं स्रावयेत्। किंवा रुधिरस्य दुष्टस्य विशुद्ध्या विशुद्धिं यावत् वीक्ष्य विस्रावयेत्। यावद्दुष्टरक्तनिर्गमः स्यात् तावत् विस्रावयेत्। विशुद्धरक्तदर्शने तु सति रक्तं स्तम्भयेदिति भावः। आशयरक्तजव्याधिस्थानं समीक्ष्य वा रक्तं विस्रावयेत् तद्व्याध्याश्रयस्थानस्य रक्तवर्णतादौ विनष्टे रक्तं स्तम्भयेदिति भावः ॥ ७ ॥

गङ्गाधरः—विशुद्ध्या रुधिरस्य वेति यदुक्तं कथं रक्तं दुष्टत्वेन विशुद्धत्वेन वा ज्ञेयं स्यादिति? अतः शोणितदुष्टिविशुद्धिलक्षणानि क्रमेणाह—अरुणाभमित्यादि। स्त्यायत्यौष्ण्याच्चिरेण चेति पित्तदुष्टरक्तमौष्ण्यादधिकोष्णताच्चिरेण स्त्यायति घनीभवति ॥ ८ ॥

गङ्गाधरः—विशुद्धरक्तलिङ्गमाह—तपनीयेत्यादि। तपनीयं वह्निना द्रवत्सुवर्णः। इन्द्रगोपः स्वनाम्ना प्रसिद्धः कीटविशेषः। अत्र नानावर्णता रक्तस्य वातादिनानामकृतिपुरुषीयत्वात्। शोणितस्य दुष्टिविशुद्ध्योः सुश्रुतवचनानि

चक्रपाणिः—दुष्टशोणितस्रावणप्रमाणमाह—बलेत्यादि। बलदोषप्रमाणादिति बलस्य तथा दोषस्य शोणितव्याधिरूपस्य प्रमाणं वीक्ष्य, दोषशब्दो ह्यत्र रोगे वर्त्तते। विशुद्ध्या रुधिरस्य वेति यावता स्रावणेन शोणितं शुद्धं स्यात्। आशयं स्थानं दुष्टशोणिताशयमिति यावत्, यथा स्वल्पे कुष्ठे स्तोकमेव विस्राव्यमुपादेयम्, महति कुष्ठे बहु स्रावणीयम्, यदुक्तम्—"प्रच्छानमल्पे कुष्ठे महति च शस्तं सिराव्यधनम्"। एषु च पक्षेषु यद् यत्रानल्पत्वं भवति तत् तत्र ग्राह्यम् ॥ ७ ॥

चक्रपाणिः—दुष्टरक्तलक्षणमाह अरुणाभमित्यादि। स्त्यायति घनं भवति। विशुद्ध-

च यथा शोणितवर्णनीये—"तत्र फेनिलमरुणं कृष्णं परुषं तनु शीघ्रगमस्कन्दि च वातेन दुष्टम्। नीलं पीतं हरितं श्यावं विस्रमनिष्टं पिपीलिकामक्षिकाणामस्कन्दि च पित्तदुष्टम्। गैरिकोदकप्रतीकाशं स्निग्धशीतलं बहलं पिच्छिलं चिरस्रावि मांसपेशीप्रभं श्लेष्मदुष्टञ्च। पित्तवद्रक्तेनातिकृष्णञ्च। द्विदोषलिङ्गं संसृष्टम्। जीवशोणितमन्यत्र वक्ष्यामः। इन्द्रगोपप्रतीकाशमसंहतमविवर्णञ्च प्रकृतिस्थं जानीयात्। विस्राव्याण्यन्यत्र वक्ष्यामः। अथाविस्राव्याः सर्वाङ्गशोफः क्षीणस्य चाम्लभोजननिमित्तः। पाण्डुरोग्यर्शसोदरिशोषिगर्भिणीनाञ्च श्वयथवः।" अथान्यत्रेति अष्टविधशस्त्रकर्मणीयेऽध्याये. तद्यथा—"स्राव्याः विद्रधयः पञ्च भवेयुः सर्वजाहते" इति। "तत्र शस्त्रविस्रावणं द्विविधम्। प्रच्छानं सिराव्यधनञ्च। तत्र ऋज्वसङ्कीर्णं सूक्ष्मं सममनवगाढमनुत्तानमाशु च शस्त्रं पातयेन्मर्म्मसिरास्नायुसन्धीनाञ्चानुपघाति। तत्र दुर्द्दिने दुर्व्विद्धे शीतवातयोरस्विन्नेऽभुक्तवतः स्कन्नत्वाच्छोणितं न स्रवत्यल्पं वा स्रवति। भवति चात्र। मदमूर्च्छाश्रमार्त्तानां वातविण्मूत्रसङ्गिनाम्। निद्राभिभूतभीतानां नृणां नासृक् प्रवर्त्तते॥ तद्दुष्टं शोणितमनिर्ह्रियमाणं कण्डूशोफरागदाहपाकवेदनां जनयेत्। अत्युष्णातिस्विन्नातिविद्धत्वाद् विस्रावितमतिप्रवर्त्तते। तदतिप्रवृत्तं शिरोऽभितापमान्ध्यमधिमन्थं तिमिरप्रादुर्भावं धातुक्षयमाक्षेपकं पक्षाघातमेकाङ्गविकारं तृष्णादाहौ हिक्कां कासं श्वासं पाण्डुरोगं मरणञ्चापादयति। भवन्ति चात्र। तस्मान्न शीते नात्युष्णे नास्विन्ने नातितापिते। यवागूं प्रतिपीतस्य शोणितं मोक्षयेद्भिषक्॥ सम्यग् गत्वा यदा रक्तं स्वयमेवावतिष्ठते। शुद्धं तदा विजानीयात् सम्यग्विस्रावितञ्च तत्॥ लाघवं वेदनाशान्तिर्व्याधेर्वेगपरिक्षयः। सम्यग्विस्राविते लिङ्गं प्रसादो मनसस्तथा॥ त्वग्दोषा ग्रन्थयः शोफा रोगाः शोणितजाश्च ये। रक्तमोक्षणशीलानां न भवन्ति कदाचन॥

अथ खल्वप्रवर्त्तमाने रक्ते एलाशीतशिवकुष्ठतगरपाठाभद्रदारुविडङ्गचित्रकत्रिकटुकागारधूमहरिद्रार्काङ्कुरनक्तमालफलैर्यथालाभं त्रिभिश्चतुर्भिः समस्तैर्वा चूर्णीकृतैः सर्षपतैललवणप्रगाढैर्व्रणमुखमवघर्षयेदेवं सम्यक् प्रवर्त्तते। अथातिप्रवृत्ते लोध्रमधुकप्रियङ्गुपत्तङ्गगैरिकसर्जरसरसाञ्जनशाल्मलीपुष्पशङ्खशुक्तिमाष

रक्तलिङ्गं नानावर्णता नानाकालादिप्रकृतित्वात् मनुष्याणाम्; तपनीयं लोहितसुवर्णम्, इन्द्रगोपः स्वनामप्रसिद्धः कीटविशेषः ॥ ४१ ॥

यवगोधूमचूर्णः शनैः शनैर्व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणावपीडयेत्। सालसर्ज्जार्ज्जुनारिमेदमेषशृङ्गधवधन्वनत्वग्भिर्वा चूर्णिताभिः क्षौमेण वा ध्मापितेन समुद्रफेनलाक्षाचूर्णैर्वा यथोक्तैर्व्रणबन्धनद्रव्यैर्गाढं बध्नीयात्। शीताच्छादनभोजनागारैः शीतैः परिषेकप्रदेहैश्चोपाचरेत्। क्षारेणाग्निना वा दहेत्। यथोक्तव्यधनादनन्तरं वा तामेवातिप्रवृत्तां सिरां विध्येत्। काकोल्यादिकाथं वा शर्करामधुमधुरं पाययेत्। एणहरिणोरभ्रशशमहिषवराहाणां वा रुधिरं क्षीरयूषरसैः सुस्निग्धैश्च अश्नीयात्। उपद्रवांश्च यथास्वमुपाचरेत्। भवन्ति चात्र। धातुक्षयात् स्रुते रक्ते मन्दः सञ्जायतेऽनलः। पवनश्च परं कोपं याति तस्मात् प्रयत्नतः। तं नातिशीतैर्लघुभिः स्निग्धैः शोणितवर्द्धनैः। ईषदम्लैरनम्लैर्वा भोजनैः समुपाचरेत्॥ चतुर्व्विधं यदेतद्धि रुधिरस्य निवारणम्। सन्धानं स्कन्दनञ्चैव पाचनं दहनं तथा॥ व्रणं कषायः सन्धत्ते रक्तं स्कन्दयते हिमम्। तथा सम्पाचयेद्भस्म दाहः सङ्कोचयेत् सिराः॥ अस्कन्दमाने रुधिरे सन्धानानि प्रयोजयेत्। सन्धाने भ्रश्यमाने तु पाचनैः समुपाचरेत्॥ कल्पैरेतैस्त्रिभिर्वैद्यः प्रयतेत यथाविधि। असिद्धिमत्सु चैतेषु दाहः परम इष्यते॥ सशेषदोषे रुधिरे न व्याधिरतिवर्त्तते। सावशेषे ततः स्थेयं न च कुर्य्यादतिक्रमम्॥ देहस्य रुधिरं मूलं रुधिरेणैव धार्य्यते। तस्माद् यत्नेन संरक्ष्यं रक्तं जीव इति स्थितिः॥ स्रुतरक्तस्य सेकाद्यैः शीतैः प्रकुपितेऽनिले। शोफं सतोदं कोष्णेन सर्पिषा परिषेचयेत्॥ इति।

अत ऊर्द्धं प्रवक्ष्यामि न विध्येद् याः सिरा भिषक्। वैकल्यं मरणञ्चापि व्यधात् तासां ध्रुवं भवेत्॥ सिराशतानि चत्वारि विद्याच्छाखासु बुद्धिमान्। षट्त्रिंशच्च शतं कोष्ठे चतुःषष्टिञ्च मूर्द्धनि॥ शाखासु षोडश सिराः कोष्ठे द्वात्रिंशदेव तु। पञ्चाशज्जत्रुणश्चार्द्ध्वमवेध्याः परिकीर्त्तिताः। तत्र सिराशतमेकैकस्मिन् सक्थ्नि भवति तासां जालन्धरा त्वेका। तिस्रश्चाभ्यन्तराः। तत्रोर्व्वीसंज्ञे द्वे लोहिताक्षसंज्ञा चैका। एतास्त्ववेध्याः। एतेनेतरसक्थिबाहू च व्याख्यातौ। एवमष्टस्वकृत्याः षोडश शाखासु। द्वात्रिंशत् श्रोण्याम्। तासामष्टौ अशस्त्रकृत्याः—द्वे द्वे विटपयोः कटीकतरुणयोश्च। अष्टावष्टावेकैकस्मिन् पार्श्वे, तासामेकैकामूर्द्धगां परिहरेत् पार्श्वसन्धिगते च द्वे। चतस्रो विंशतिश्च पृष्ठवंशमुभयतः। तासामूर्द्धगामिन्यौ द्वे द्वे परिहरेद् बृहती सिरे। तावत्य एवोदरे। तासां मेढ्रोपरि रोमराजीमुभयतो द्वे द्वे परिहरेत्। चत्वारिंशद्वक्षसि। तत्र चतुर्दशाशस्त्रकृत्याः—हृदये द्वे। द्वे द्वे स्तनमूले। स्तनरोहितापलाप-

स्तम्भेषूभयतोऽष्टौ । एवं द्वात्रिंशदशस्त्रकृत्याः पृष्ठोदरोरःसु भवन्ति । चतुःषष्टि-सिराशतं जत्रुण ऊर्द्ध्वं भवति । तत्र षट्पञ्चाशच्छिराधरायाम् । तासामष्टौ चतस्रश्च मर्म्मसंज्ञाः परिहरेत् । द्वे कृकाटिकयोर्द्वे विधुरयोः । एवं ग्रीवायां षोड़शाव्याध्याः । हन्वोरुभयतोऽष्टावष्टौ । तासान्तु सन्धिधमन्यौ द्वे द्वे परिहरेत् । षट्त्रिंशज्जिह्वायाम् । तासामधः षोड़शाशस्त्रीकृत्याः— रसवहे द्वे, वाग्वहे च द्वे । द्विर्द्वादश नासायाम् । तासामौपनासिक्यश्चतस्रः परिहरेत् । तासामेव च तालु-न्येकां मृदावुद्देशे । अष्टात्रिंशदुभयोर्नेत्रयोः । तासामेकैकामपाङ्गयोः परिहरेत् । कर्णयोर्दश । तासां शब्दवाहिनीनामेकैकां परिहरेत् । नासानेत्रगतास्तु ललाटे षष्टिः । तासां केशान्तानुगताश्चतस्रः । आवर्त्तयोरेकैका, स्थपन्या-ञ्चैका परिहर्त्तव्या । द्वादश मूर्द्धि । तासामुत्क्षेपयोर्द्वे परिहरेत्, सीमन्तेष्वेकैका-मेकामधिपताविति । एवमशस्त्रकृत्याः पञ्चाशज्जत्रुण ऊर्द्ध्वमिति । भवन्ति चात्र । व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः सिराः । प्रतानाः पद्मिनीकन्दाद्बिसा-दीनां यथा जलम् ॥

अथातः सिराव्यधविधिशारीरं व्याख्यास्यामः । बालस्थविररूक्षक्षतक्षीण-भीरुपरिश्रान्तमद्यमध्वकर्षितमत्तवान्तविरिक्तास्थापितानुवासितजागरितक्लीब-कृशगर्भिणीनां कासश्वासशोषप्रवृद्धज्वराक्षेपकपक्षाघातोपवासपिपासामूर्च्छा-प्रपीड़ितानाञ्च सिरां न विध्येत् । याश्चाव्यध्याः व्यध्याश्चादृष्टा दृष्टाश्चायन्त्रिता यन्त्रिताश्चानुत्थिता इति । शोणितावसेकसाध्यास्तु विकाराः प्रागभिहितास्तेषु चापक्के ष्वन्येषु चानुक्तेषु यथाभ्यासं यथान्यायञ्च सिरां विध्येत् । प्रतिषिद्धाना-मपि च विषोपसर्गे आत्ययिकेषु सिराव्यधनमप्रतिषिद्धम् । तत्र स्निग्धस्विन्न-मातुरं यथादोषप्रत्यनीकद्रवप्रायमन्नं भुक्तवन्तं यवागूं पीतवन्तं वा यथाकाल-मुपस्थाप्यासीनं स्थितं वा प्राणानबाधमानो वस्त्रपट्टचर्म्मान्तर्वल्कललतानामन्य-तमेन यन्त्रयित्वा नातिगाढं नातिशिथिलं शरीरप्रदेशमासाद्य यथोक्तं शस्त्रं गृहीत्वा सिरां विध्येत् । नैवातिशीते नात्युष्णे न प्रवाते न चाभ्रिते । सिराणां व्यधनं कार्य्यमरोगे वा कदाचन ॥ तत्र व्यध्यसिरं पुरुषं प्रत्यादित्य-मुखमरत्निमात्रोच्छ्रिते उपवेश्यासने सक्थ्नोराकुञ्चितयोर्निवेश्य कूर्परसन्धिद्वय-स्योपरि हस्तावन्तः कृत्वाङ्गुष्ठौ मन्ययोः स्थापयित्वा यन्त्रणशाटकं ग्रीवा-मुष्क्योरुपरि परिक्षिप्यान्येन पुरुषेण पश्चात्स्थितेन वामहस्तेनोत्तानेन शाटका-न्तद्वयं ग्राहयित्वा वैद्यो ब्रूयात् दक्षिणहस्तेन सिरोत्थापनार्थं नात्यायतशिथिलं यन्त्रमावेष्टय इति । अस्तकृत्त्वावणार्थं यन्त्रं पृष्ठमध्ये च पीड़य इति । कर्म्म-

पुरुषश्च वायुपूर्णमुखं स्थापयेत्। एष उत्तमाङ्गगतानामन्तर्मुखवर्ज्यानां सिराणां व्यधने यन्त्रविधिः ॥

तत्र पादव्यध्यसिरस्य पादं समे स्थाने सुस्थिरं स्थापयित्वान्यं पादमीषत् सङ्कुचितमुच्चैः कृत्वा व्यध्यपादं जानुसन्धेरधःशाटकेनावेष्ट्य हस्ताभ्यां प्रपीड्यागुल्फं व्यध्यप्रदेशस्योपरि चतुरङ्गुलं प्लोतादीनामन्यतमेन बद्ध्वा पादसिरां विध्येत्। अथोपरिष्टाद्धस्तौ द्वाङ्गुष्ठकृतमुष्टी सम्यगासने स्थापयित्वा सुखोपविष्टस्य पूर्ववद्यन्त्रं बद्ध्वा हस्तसिरां विध्येत्। गृध्रसीविश्वच्योः सङ्कुचितजानुकूर्परः स्यात्। श्रोणिपृष्ठस्कन्धेषून्नमितपृष्ठस्यावाक्शिरस्कस्योपविष्टस्य विस्फूर्जितपृष्ठस्य विध्येत्। उदरोरसोः प्रसारितोरस्कस्योन्नमितशिरस्कस्य विस्फूर्जितदेहस्य। बाहुभ्यामवलम्ब्यमानदेहस्य पार्श्वयोः। अवनामितमेढ्रस्य मेढ्रे। उन्नामितविदष्टजिह्वाग्रस्याधोजिह्वायाम्। अतिव्यात्ताननस्य तालुनि दन्तमूलेषु च। एवं यन्त्रोपायानन्यांश्च सिरोत्थापनहेतून् बुद्ध्यावेक्ष्य शरीरवशेन व्याधिवशेन च विदध्यात्। मांसलेष्ववकाशेषु यवमात्रं शस्त्रं निदध्यात्। अतोऽन्येष्वर्द्धयवमात्रं व्रीहिमात्रं वा व्रीहिमुखेन। अस्थ्नामुपरि कुठारिकया विध्येदर्द्धयवमात्रम्। भवन्ति चात्र। व्यभ्रे वर्षासु विध्येत ग्रीष्मकाले तु शीतले। हेमन्तकाले मध्याह्ने शस्त्रकालास्त्रयः स्मृताः ॥ सम्यक्शस्त्रनिपातेन धारया या स्रवेदसृक्। मुहूर्त्तमूर्द्धात् तिष्ठेच्च सुविद्धां तां विनिर्दिशेत् ॥ यथा कुसुम्भपुष्पेभ्यः पूर्वं स्रवति पीतिका। तथा सिरासु विद्धासु दुष्टमग्रे प्रवर्त्तते ॥ मूर्च्छितस्यातिभीतस्य श्रान्तस्य तृषितस्य च। न वहन्ति सिरा विद्धास्तथानुत्थितयन्त्रिताः ॥ क्षीणस्य बहुदोषस्य मूर्च्छयाभिद्रुतस्य च। भूयोऽपराह्णे विस्राव्या सापरेद्युस्त्र्यहेऽपि वा ॥ रक्तं सशेषदोषन्तु कुर्य्यादपि विचक्षणः। न चातिमात्रं कुर्य्याच्छेषं संशमनैर्जयेत् ॥ बलिनो बहुदोषस्य वयःस्थस्य शरीरिणः। परं प्रमाणमिच्छन्ति प्रस्थं शोणितमोक्षणे ॥

तत्र पाददाहपादहर्षावबाहुकचिप्पविसर्पवातशोणितवातकण्टकविचर्च्चिकापाददारीप्रभृतिषु क्षिप्रमर्म्मण उपरिष्टात् द्व्यङ्गुले व्रीहिमुखेन सिरां विध्येत्। श्लीपदे तच्चिकित्सिते यथा वक्ष्यते। क्रोष्टुकशिरःखञ्जपङ्गुलवातवेदनासु जङ्घायां गुल्फस्योपरि चतुरङ्गुले। अपच्यामिन्द्रवस्तेरधस्तात् द्व्यङ्गुले। जानुसन्धेरुपर्य्यधो वा चतुरङ्गुले गृध्रस्याम्। ऊरुमूलसंश्रितानान्तु गलगण्डे। एतेनेतरसक्थिबाहू च व्याख्यातौ। विशेषतस्तु वामबाहौ कूर्परसन्धेरभ्यन्तरतो बाहुमध्ये प्लीह्नि कनिष्ठिकानामिकयोर्मध्ये वा। एवं दक्षिणबाहौ यकृदाल्ये

कफोदरे चैतामेव च कासश्वासयोरप्यादिशन्ति। गृध्रस्यामिव विश्वच्याम्। श्रोणिं प्रतिसमन्तात् द्व्यङ्गुले प्रवाहिकायां शूलिन्याम्। परिकर्त्तिकोपदंशशूकदोषशुक्रव्यापत्सु मेढ्रमध्ये। वृषणयोः पार्श्वे मूत्रवृद्ध्याम्। नाभेरधश्चतुरङ्गुले सेवन्या वामपार्श्वे दकोदरे। वामपार्श्वे कक्षास्तनयोरन्तरेऽन्तर्विद्रधौ पार्श्वशूले च। बाहुशोषावबाहुकयोरप्येके वदन्त्यंसयोरन्तरे। त्रिकसन्धिमध्यगतां तृतीयके। अधःस्कन्धसन्धिगतामन्यतरपार्श्वसंस्थितां चातुर्थके। हनुसन्धिमध्यगतामपस्मारे। शङ्खे केशान्तसन्धिगतामुरोऽपाङ्गललाटेषु चोन्मादेऽपस्मारे च। जिह्वारोगेष्वधोजिह्वायां दन्तव्याधिषु च। तालुनि तालव्येषु। कर्णयोरुपरि समन्तात् कर्णशूले तद्रोगेषु च। गन्धाग्रहणे नासारोगेषु च नासाग्रे। तिमिरोऽपाकप्रभृतिष्वक्ष्यामयेषूपनासिके ललाटापाङ्गयोश्चैता एव शिरोरोगाधिमन्थप्रभृतिषु रोगेष्विति।

अत ऊर्द्ध्वं दुष्टव्यधनमनुव्याख्यास्यामः। तत्र दुर्विद्धातिविद्धा कुञ्चिता पिच्चिता कुट्टिता अप्रस्रुता अत्युदीर्णा अन्तेऽभिहता परिशुष्का कूणिता वेपिताऽनुत्थितविद्धा शस्त्रहता तिर्य्यग्विद्धाऽपविद्धाऽव्याध्याविद्रुता धेनुका पुनःपुनर्विद्धा सिरास्नाय्वस्थिसन्धिमर्म्मसु चेति विंशतिर्दुष्टव्यधाः। तत्र या सूक्ष्मशस्त्रविद्धा न व्यक्तमसृक् स्रवति रुजाशोफवती च सा दुर्विद्धा (१) प्रमाणातिरिक्तविद्धायामन्तःप्रविशति शोणितं शोणितातिप्रवृत्तिर्वाऽप्यतिविद्धा (२) कुञ्चितायामप्येवम् (३)। कुण्ठशस्त्रप्रमथिता पृथुलीभावमापन्ना पिच्चिता (४)। अनासादिता पुनःपुनरन्तयोश्च बहुशः शस्त्राभिहता कुट्टिता (५)। शीतभयमूर्च्छाभिरप्रवृत्तशोणिता अप्रस्रुता (६)। तीक्ष्णमहामुखशस्त्रविद्धा अत्युदीर्णा (७)। अल्परक्तस्राविण्यन्तेऽभिहताविद्धा (८)। क्षीणशोणितस्यानिलपूर्णा परिशुष्का (९)। चतुर्भागावसादिता किञ्चित्प्रवृत्तशोणिता कूणिता (१०)। दुःस्थानबन्धनात् वेपमानायाः शोणितसम्मोहो भवति सा वेपिता (११)। अनुत्थितविद्धायामप्येवम् (१२)। छिन्नातिप्रवृत्तशोणिता क्रियासङ्गकरी शस्त्रहता (१३)। तिर्य्यक्प्रणिहितशस्त्रा किञ्चिच्छेषा तिर्य्यग्विद्धा (१४)। बहुशः क्षता हीनशस्त्रप्रणिधानेनापविद्धा (१५)। अशस्त्रकृत्या अव्याध्या (१६)। अनवस्थितविद्धा विद्रुता (१७)। प्रदेशस्य बहुशोऽवघट्टनादारोहव्यधा मुहुर्मुहुः शोणितस्रावा धेनुका (१८)। सूक्ष्मशस्त्रव्यधनाद्बहुशो विच्छिन्ना पुनःपुनर्विद्धा (१९)। स्नाय्वस्थिसिरासन्धिमर्म्मसु विद्धा वा रुजां शोषं वैकल्यं मरणं वापादयति (२०)। भवन्ति चात्र। सिरासु शिक्षितो नास्ति चला ह्येताः

स्वभावतः। मत्स्यवत् परिवर्त्तन्ते तस्मादयत्नेन ताडयेत्॥ अजानता गृहीते तु शस्त्रे कायनिपातिते। भवन्ति व्यापदश्चेता बहवश्चाप्युपद्रवाः॥ स्नेहादिभिः क्रियायोगैर्न तथा लेपनैरपि। यान्त्याशु व्याधयः शान्तिं यथा सम्यक् सिराव्यधात्॥ सिराव्यधश्चिकित्सार्द्धं शल्यतन्त्रे प्रकीर्त्तितः। यथा प्रणिहितः सम्यग् वस्तिः कायचिकित्सिते॥ तत्र स्निग्धस्विन्नवान्तविरिक्तास्थापितानुवासितसिराविद्धैः परिहर्त्तव्यानि क्रोधायासमैथुनदिवास्वप्नवाग्व्यायामयानोत्थानासनचंक्रमणशीतवातातपविरुद्धासात्म्याजीर्णान्या बलाभात्मासमेके मन्यन्ते। एतेषां विस्तरमुपरिष्टाद्वक्ष्यन्ते। भवतश्चात्र। सिराविषाणतुम्बैस्तु जलौकाप्रच्छनैस्तथा। अवगाढं यथापूर्व्वं निर्हरेद्दुष्टशोणितम्॥ अवगाढे जलौका स्यात् प्रच्छनं पिण्डिते हितम्। सिराङ्गव्यापके रक्ते शृङ्गोऽलाबुस्त्वचि स्थिते॥" इत्येवं शोणितस्रावणाय वैद्यः स्वधिगतसर्व्वशास्त्रार्थोऽपि शस्त्रावचारणे योग्यां कुर्य्यात्। उक्तं हि सुश्रुते—"सुबहुश्रुतोऽप्यकृतयोग्यः कर्म्मस्वयोग्यो भवति। तत्र पुष्पफलालावुकालिन्दकत्रपुषैर्व्वारुकर्क्कारुकप्रभृतिषु छेद्यविशेषान् दर्शयेदुत्कर्त्तनपरिकर्त्तनानि चोपदिशेत्। दृतिवस्तिप्रसेवकप्रभृतिषूदकपङ्कपूर्णेषु भेद्ययोग्याम्। सरोम्णि चर्म्मण्याततते लेख्यस्य। मृतपशुसिरासूत्पलनालेषु च वेध्यस्य। घुणोपहतकाष्ठवेणुनलनालीशुष्कालाबुमुखेष्वेष्यस्य। पनसबिम्बीबिल्वफलमज्जमृतपशुदन्तेष्वाहार्य्यस्य। मधूच्छिष्टोपलिप्ते शाल्मलीफलके विस्राव्यस्य। सूक्ष्मघनवस्त्रान्तयोर्मृदुचर्म्मान्तयोश्च सीव्यस्य। पुस्तमयपुरुषाङ्गप्रत्यङ्गविशेषेषु बन्धयोग्याम्। मृदुमांसपेशीषूत्पलनालेषु च कर्णसन्धिबन्धयोग्याम्। मृदुषु मांसखण्डेष्वग्निक्षारयोग्याम्। उदकपूर्णघटपार्श्वस्रोतस्यलाबुमुखादिषु च नेत्रप्रणिधानवस्तिव्रणवस्तिपीड़नयोग्यामिति। भवतश्चात्र। एवमादिषु मेधावी योग्यार्हेषु यथाविधि। द्रव्येषु योग्यां कुर्व्वाणो न प्रमुह्यति कर्म्मसु॥ तस्मात् कौशलमन्विच्छन् शस्त्रक्षाराग्निकर्म्मसु। यस्य यत्रेह साधर्म्म्यं तत्र योग्यां समाचरेत्॥" इति। एवं कृतयोग्यो वैद्योऽष्टविधशस्त्रावचारणाय शस्त्राणि विंशतिं जानीयात्। उक्तं हि सुश्रुते—"विंशतिः शस्त्राणि। तद्यथा—मण्डलाग्रकरपत्रवृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधारसूचीकुशपत्राटीमुखशरारीमुखान्तर्म्मुखत्रिकूर्च्चककुठारिकाव्रीहिमुखारावेतसपत्रकवडिशदन्तशङ्क्वेषण्य इति। तत्र मण्डलाग्रकरपत्रे स्यातां छेदने लेखने च। वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च। सूचीकुशपत्राटीमुखशरारीमुखान्तर्म्मुखत्रिकूर्च्चकानि विस्रावणे। कुठारिकाव्रीहिमुखारावेतसपत्रकाणि व्यधने सूची च। वडिशो दन्त-

शङ्कश्चाहरणे। एषण्येषणे आनुलोम्ये च। सूच्यः सेवने। इत्यष्टविधे कर्म्मण्युपयोगः शस्त्राणां व्याख्यातः। तेषामथ यथायोगग्रहणसमासोपायः कर्म्मसु वक्ष्यते। तत्र वृद्धिपत्रं वृन्तफलसाधारणे भागे गृह्णीयाच्छेदनान्येवं सर्व्वाणि। वृद्धिपत्रं मण्डलाग्रञ्च किञ्चिदुत्तानपाणिना लेखने बहुशोऽवचार्य्यम्। वृन्ताग्रे विस्रावणानि। विशेषेण बालवृद्धसुकुमारभीरुनारीणां राज्ञां राजपुत्राणाञ्च त्रिकूर्च्चकेन विस्रावयेत्। तलप्रच्छादितवृन्तमङ्गुष्ठप्रदेशिनीभ्यां व्रीहिमुखम्। कुठारिकां वामहस्तन्यस्तामितरहस्तमध्यमाङ्गुल्यङ्गुष्ठविष्टब्धयाऽभिहन्यात्। आराकरपत्रैषण्यो मूले। शेषाणि तु यथायोगं गृह्णीयात्। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः। तत्र नखशस्त्रैषण्यावष्टाङ्गुले। सूच्यो वक्ष्यन्ते। बडिशो दन्तशङ्कश्चानताग्रे तीक्ष्णकण्टकप्रथमयवपत्रमुखे। एषणी गण्डूपदाकारमुखी। प्रदेशन्यग्रपर्व्वप्रदेशसमाना मुद्रिका। दशाङ्गुला शरारीमुखी सा कर्त्तरीति कथ्यते। शेषाणि तु षडङ्गुलानि। तानि सुग्रहाणि सुलौहानि सुधाराणि सुरूपाणि सुसमाहितमुखाग्राणि अकरालानि चेति शस्त्रसम्पत्। तत्र वक्रं कुण्ठं खण्डं खरधारमतिस्थूलमत्यल्पमतिदीर्घमतिह्रस्वमित्यष्टौ शस्त्रदोषाः। अतो विपरीतगुणमाददीत अन्यत्र करपत्रात् तद्धि खरधारमस्थिच्छेदनार्थम्। तत्र धारा भेदनानां मासूरी। लेखनानामर्द्धमासूरी। व्यधनानां विस्रावणानाञ्च कैशिकी। छेदनानामर्द्धकैशिकीति। तेषां पायना त्रिविधा, क्षारोदकतैलेषु। तत्र क्षारपायितं शरशल्यास्थिच्छेदनेषु। उदकपायितं मांसच्छेदनभेदनपाटनेषु। तैलपायितं सिराव्यधनस्नायुच्छेदनेषु। तेषां निशाणार्थं श्लक्ष्णशिला माषवर्णा। धारासंस्थापनार्थं शाल्मलीफलकमिति। भवति चात्र। यदा सुनिशितं शस्त्रं रोमच्छेदि सुसंस्थितम्। सुगृहीतं प्रमाणेन तदा कर्म्मसु योजयेत्॥ अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरुविन्दजलौकाग्निक्षारनखगोजीशेफालिकाशाकपत्रकरीरबालाङ्गुल्य इति। शिशूनां शस्त्रभीरूणां शस्त्राभावे तु योजयेत्। त्वक्सारादिचतुष्कं छेद्ये भेद्ये च बुद्धिमान्॥ आहार्य्यच्छेद्यभेद्येषु नखं शस्त्रेषु योजयेत्। विधिः प्रवक्ष्यते पश्चात् क्षाराग्निजलौकसाम्॥ ये स्युर्मुखगता रोगा नेत्रवर्त्मगताश्च ये। गोजीशेफालिकाशाकपत्रैर्विस्रावयेत् तु तान्॥ एष्येषु त्वेषणालाभे बालाङ्गुल्यङ्कुरा हिताः। शस्त्राण्येतानि मतिमान् शुद्धशैक्यायसानि तु॥ कारयेत् करणैः प्राप्तं कर्म्मारं कर्म्मकोविदम्। प्रयोगज्ञस्य वैद्यस्य सिद्धिर्भवति नित्यशः। तस्मात् परिचयः कार्य्यः शस्त्राणामादितः सदा॥" इति।

अथातो जलौकावचारणीयाध्यायो व्याख्यायते। तदुक्तं सुश्रुतेन— "नृपाढ्यबालस्थविरभीरुदुर्बलनारीसुकुमाराणामनुग्रहार्थं परमसुकुमारोऽयं शोणितावसेचनोपायोऽभिहितो जलौकसः। तत्र वातपित्तकफदुष्टशोणितं यथासङ्ख्यं शृङ्गजलौकालाबुभिरवसेचयेत्। स्निग्धशीतरूक्षत्वात् सर्व्वाणि सर्व्वैर्वा। भवन्ति चात्र। उष्णं समधुरं स्निग्धं गवां शृङ्गं प्रकीर्त्तितम्। तस्माद् वातोपसृष्टे तु हितं तदवसेचने॥ शीताधिवासा मधुरा जलौका वारिसम्भवा। तस्मात् पित्तोपसृष्टे तु हितं सा त्ववसेचने॥ अलाबु कटुकं रूक्षं तीक्ष्णञ्च परिकीर्त्तितम्। तस्मात् श्लेष्मोपसृष्टे तु हितं तदवसेचने॥ तत्र प्रच्छिते तनुवस्त्रपटलावनद्धेन शृङ्गेण शोणितमवसेचयेदा चूषणात्। सान्तर्दीपयाऽलाब्वा।

अथ जलायुका वक्ष्यन्ते। जलमासामायुरिति जलायुकाः, जलमासामोक इति जलौकसः। ता द्वादश। तासां सविषाः षट्, तावत्य एव निर्व्विषाः। तत्र सविषाः कृष्णाः कर्व्वुरा अलगर्द्दा इन्द्रायुधाः सामुद्रिका गोचन्दनाश्चेति। तासु अञ्जनचूर्णवर्णा पृथुशिराः कृष्णा वर्म्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्व्वुरा। रोमशा महापार्श्वा कृष्णमुख्यलगर्द्दा। इन्द्रायुधवदूर्द्ध्वराजिभिश्चित्रिता इन्द्रायुधा। ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका। गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति। ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरो दाहश्छर्द्दिर्मदः सदनमिति लिङ्गानि भवन्ति। तत्र महागदः पानालेपननस्यकर्म्मादिषूपयोज्यः। इन्द्रायुधादष्टमसाध्यम्। इत्येताः सविषाः सचिकित्सिता व्याख्याताः।

अथ निर्व्विषाः। कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी सावरिका चेति। तत्र मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धमुद्गवर्णा कपिला। किञ्चिद्रक्ता वृत्तकाया पिङ्गाशुगा च पिङ्गला। यकृद्वर्णा शीघ्रपायिणी दीर्घतीक्ष्णमुखी शङ्कुमुखी। मूषिकाकृतिवर्णाऽनिष्टगन्धा च मूषिका। मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरीकमुखी। स्निग्धा पद्मपत्रवर्णा दशाङ्गुलप्रमाणा च सावरिका, सा च पश्वर्थे। इत्येता अविषा व्याख्याताः। तासां यवनपाण्ड्यसह्यपोतनादीनि क्षेत्राणि तेषु महाशरीरा बलवत्यः शीघ्रपायिण्यो महाशना निर्व्विषाश्च विशेषेण भवन्ति। तत्र सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः कलुषेष्वम्भःसु च सविषाः। पद्मोत्पलनलिनकुमुदसौगन्धिककुवलयपुण्डरीकशैवालकोथजाता विमलेष्वम्भःसु च निर्व्विषाः। भवति चात्र। क्षेत्रेषु विचरन्त्येताः सलिलेषु सुगन्धिषु। न च सङ्कीर्णचारिण्यो

नात्युष्णशीतं लघु दीपनीयं रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनवस्थितासृगग्निर्विशेषेण च रक्षितव्यः ॥ १० ॥

न च पङ्कशयाः सुखाः ॥ तासां प्रग्रहणमार्द्रचर्म्मणान्यैर्वा प्रयोगैर्गृह्णीयात् । अथैनां नवे महति घटे सरस्तडागोदकपङ्कमावाप्य निदध्यात् । भक्ष्यार्थं चासामुपहरेच्छैवालं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य । शय्यार्थं तृणमौदकानि च पत्राणि । द्व्यहात् त्र्यहाच्चाभ्योऽन्यज्जलं भक्ष्यञ्च दद्यात् । सप्तरात्रात् सप्तरात्राच्च घटमन्यं संक्रामयेत् । भवन्ति चात्र । स्थूलमध्याः परिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः । अग्राहिण्योऽल्पपायिन्यः सविषाश्च न पूजिताः ॥

अथ जलौकोऽवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुजं स्यात् । गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः सलिलसरकमध्ये मुहूर्त्तस्थिता विगतक्लमा ज्ञात्वा ताभी रोगं ग्राहयेत् । श्लक्ष्णशुक्लार्द्रपिचुप्रोतावच्छन्नां कृत्वा मुखमपावृणुयात् । अगृह्णन्त्यै क्षीरबिन्दुं शोणितबिन्दुं वा दद्यात् । शस्त्रपदानि वा कुर्व्वीत । यद्येवमपि न गृह्णीयात् तदान्यां ग्राहयेत् । यदा च निविशते अश्वखुरवदाननं कृत्वोन्नम्य च स्कन्धं तदा जानीयात् गृह्णातीति । गृह्णन्तीञ्चार्द्रवस्त्रावच्छन्नां धारयेत् सेचयेच्च । दंशे तोदकण्डुप्रादुर्भावैर्जानीयात् शुद्धमियमादत्त इति । शुद्धमाददानामपनयेत् । अथ शोणितगन्धेन न मुञ्चेन्मुखमस्याः सैन्धवचूर्णेनावकिरेत् । अथ पतितां तण्डुलकण्डनप्रदिग्धगात्रीं तैललवणाभ्यक्तमुखीं वामहस्ताङ्गुष्ठाङ्गुलीभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गुष्ठाङ्गुलीभ्यां शनैः शनैरनुलोममनुमार्ज्जयेत् आ मुखात् । वामयेत् तावत् यावत् सम्यग्वान्तलिङ्गानि । सम्यग्वान्ता सलिलसरकन्यस्ता भोक्तुकामा सती चरेत् । या सीदति न चेष्टते सा दुर्व्वान्ता, तां पुनः सम्यग्वामयेत् । दुर्व्वान्ताया व्याधिरसाध्य इन्द्रमदो नाम भवति । अथ सुवान्तां पूर्व्ववत् सन्निदध्यात् । शोणितस्य च योगायोगानवेक्ष्य जलौकोव्रणान् मधुनावघट्टयेत् । शीताभिरद्भिश्च परिषेचयेत् । बध्नीत वा व्रणं कषायमधुरस्निग्धशीतैश्च प्रदेहैः प्रदिह्यादिति । भवन्ति चात्र । क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणम् । जलौकसाञ्च यो वेत्ति तत्साध्यान् स जयेद्गदानिति ॥ ९ ॥

गङ्गाधरः—अथापनीतरक्तपुरुषस्य हितान्नमाह—नात्युष्णेत्यादि । ननु कुतो हेतोर्नात्युष्णशीतलघुदीपनीयान्नमवसेचितरक्तस्य हितमिति ? अतस्तत्र

चक्रपाणिः—नात्युष्णादिभोजने हेतुमाह—तदेत्यादि । अतिशीतमग्निमान्द्यं करोति,

प्रसन्नवर्णेन्द्रियमिन्द्रियार्थमिच्छन्तमव्याहतपक्तिवेगम्।
सुखान्वितं पुष्टि *-बलोपपन्नं विशुद्धरक्तं पुरुषं वदन्ति ॥११॥
यदा तु रक्तवाहीनि रससंज्ञावहानि च।
पृथक् पृथक् समस्ता वा स्रोतांसि कुपिता मलाः ॥

हेतुमाह—तदेत्यादि। हि यस्मात् तदा तात्कालिकं शोणितावसेचने कृते सति तस्मिन् काले तत्पुरुषस्य शरीरमनवस्थितासृक् प्रचलद्रक्तम्। तत्रात्युष्णमन्नं पानञ्च प्रचलद्रक्तं प्रचालयति। अतिशीतमन्नपानमाशु स्तम्भयति। तदा कोष्ठाग्निश्च दुर्ब्बलः स्यात्, स च विशेषेण रक्षणीयः। तत्रातिशीतगुर्व्वदीपनीयान्नपानं मन्दीकरोति। तस्मात् नात्युष्णं नातिशीतं लघु दीपनीयञ्चान्नं पानञ्च हितमित्यर्थः। ततः प्रचलद्रक्तमाक्रमेण स्तम्भनं वह्निवलवर्द्धनञ्चेति बोध्यम्। पूर्व्वं तपनीयेत्यादिना शोणितमोक्षणकाले विशुद्धरक्तदर्शनं यावत् रक्तमोक्षणं कर्त्तव्यमुक्तं तदर्थं रक्तविशुद्धिलक्षणमुक्तम् ॥ १० ॥

गङ्गाधरः—सम्प्रति शोणितविशुद्ध्या अनुमानलक्षणमाह—प्रसन्नेत्यादि। अव्याहतः पक्तुराहारपाको वेगश्च मूत्रपुरीषादीनां यस्य तं तथा। पुष्टिर्देहस्य ॥ ११ ॥

गङ्गाधरः—अथ शोणितदुष्टिजव्याधिप्रसङ्गतः शोणितवहस्रोतोदुष्टिजरोगान् आह—यदेत्यादि। रस आहारजनित आद्यधातुः। संज्ञा बुद्धिः। तदाश्रयत्वात् केवलबुद्धिः स्रोतसाञ्चाभावादत्र संज्ञाशब्देन मन उच्यते। यत् तु रससंज्ञाधातुमावहन्तीति रससंज्ञावहानि रसवहधमनीस्थानं हृदयम्, तदुपघाताच्च मनोविक्षोभात् संज्ञाया अपि मोहाकुलत्वादिकमुपपद्यते इति तन्न। सन्न्यासे प्राणायतनमाश्रिता इत्युक्त्या सर्व्वत्रैव बुद्ध्यायतनाश्रयं विना मनःक्षोभवृद्धि

अत्युष्णञ्च प्रचलस्यासृजो नितरां प्रचलतां करोति, तस्मान्नात्युष्णशीतम्। लघु दीपनीयञ्चाग्निदीप्त्यर्थमेव ॥ १० ॥

चक्रपाणिः—सम्प्रति शोणितादर्शनेनापि विशुद्धरक्तज्ञानार्थं लक्षणमाह प्रसन्नेत्यादि। अव्याहतौ पक्तिश्च वेगश्च पुरीषादीनां यस्य स तथा। सम्प्रति रक्तवाहिधमनीदुष्ट्या ये व्याधयो भवन्ति, तानाह—यदा त्वित्यादि। संज्ञावहानीति संज्ञाहेतुमनोवहानि, मनस्तु केवलशरीरम्

* पुष्टीत्यत्र तुष्टीति वा पाठः।

मलिनाहारशीलस्य रजोमोहावृतात्मनः ।
प्रतिहत्यावतिष्ठन्ते जायन्ते व्याधयस्तदा ॥
मदमूर्च्छायसंन्यासास्तेषां विद्याद् विचक्षणः ।
यथोत्तरं बलाधिक्यं हेतुलिङ्गोपशान्तिषु ॥ १२ ॥
दुर्ब्बलं चेतसः स्थानं यदा वायुः प्रपद्यते ।
मनो विक्षोभयन् जन्तोः संज्ञां संमोहयेत् तदा ॥
पित्तमेवं कफश्चैवं मनो विक्षोभयन्नृणाम् ।
संज्ञां नयत्याकुलतां विशेषश्चात्र कथ्यते ॥ १३ ॥

मोहाद्यसम्भवात् । हृदयमात्रोपघाते हि चैतन्याभावो न सम्भवति, सम्भवति च चैतन्याल्पता । मला इति दुष्टवातपित्तकफानां संज्ञा । यदुक्तं—"शरीरदूषणाद्दोषा मलिनीकरणान्मलाः । धारणाद्धातवो ज्ञेया वातपित्तकफास्त्रयः ॥" इति ।

वातादीनां दुष्टिहेतुमाह—मलिनेत्यादि । मलहेतवो मलिनाः, ते च रजस्तमोवातादिदुष्टिजनका ये आहारा भवन्ति तच्छीलस्य । रजोमोहेति रजस्तमोभ्यामावृत आत्मा मनो यस्य तस्य तथा । मोहहेतुत्वात् मोहशब्देन तम उच्यते । मानसदोषौ हि रजस्तमश्च । स्वस्वहेत्वाहाराद् दुष्टाभ्यान्तु ताभ्यां दूषितमनसः पुनर्वातादिहेत्वाहारात् पृथक् पृथक् वातादयः समस्ता वा मलाः सरक्तमनोवहस्रोतांसि प्रतिहत्यावतिष्ठन्ते यदा तदा मदमूर्च्छायसन्न्यासा व्याधयो जायन्ते । तेषां मदादीनां हेतुलिङ्गोपशान्तिषु एकरूपासु यथोत्तरं बलाधिक्यं विचक्षणो विद्यात् । मदे तु हेत्वल्पबलत्वाल्लिङ्गाल्पबलत्वं ततश्च शान्तिक्रियाया अप्यल्पबलद्रव्यसाध्यत्वं नाधिकद्रव्यसाध्यभेषजापेक्षा । ततो मूर्च्छाये हेतुबलाधिक्याल्लिङ्गबलाधिक्यम् । ततः शान्तिक्रियायामधिकबलभेषजापेक्षा ततोऽपि सन्न्यासे इति ॥ १२ ॥

गङ्गाधरः—एतच्च सूत्ररूपं भाष्येण स्वयं व्याकरोति—दुर्ब्बलमित्यादि । दुर्ब्बलमिति रजोमोहावृतत्वेन, चेतसः स्थानं हृदयं दुर्ब्बलं यदा कुपितो वायुः प्रतिपद्यते तदा जन्तोर्मनो विक्षोभयन् संज्ञां मोहयेत् । पित्तमेवमिति

अचमनीभूतम्, यदुक्तम्—"सत्त्वादीनां पुनः केवलं शारीरमचमनीभूतम्" इत्यादि ; किंवा सत्त्वसंज्ञं

सक्तानल्पद्रुताभाषं चलस्खलितचेष्टितम्।
विद्याद्वातमदाविष्टं रूक्षश्यावारुणाकृतिम्॥
सक्रोधं परुषाभाषं सम्प्रहारकलिप्रियम्।
विद्यात् पित्तमदाविष्टं रक्तपीतासिताकृतिम्॥
स्वल्पासम्बन्धवचनं * निद्रालस्यसमन्वितम्।
विद्यात् कफमदाविष्टं पाण्डुं प्रध्यानतत्परम्॥
सर्व्वाण्येतानि लिङ्गानि सन्निपातकृते मदे।
जायन्ते शाम्यति क्षिप्रं मदो मद्यमदाकृतिः॥
यश्च मद्यकृतः प्रोक्तो विषजो रौधिरश्च यः।
सर्व्व एते मदा नर्त्ते वातपित्तकफाश्रयात् † ॥ १४ ॥

दुर्ब्बलं चेतसः स्थानं यदा कुपितं पित्तं पश्चिं प्रपद्यते तदा जन्तोर्मनो विक्षोभयन् संज्ञां मोहयेत। कफश्चैवमिति दुर्ब्बलं चेतसः स्थानं यदा कफः प्रतिपद्यते तदा नृणां मनो विक्षोभयन् संज्ञामाकुलतां नयति॥ १३॥

गङ्गाधरः—तत्र विशेषमाह—सक्तेत्यादि। सक्तमव्यक्तमनल्पं बहु द्रुतं शीघ्रम् आभाषते यस्तम्। पित्तमदे परुषाभाषं परुषं कर्कशं ब्रूते यस्तम्। कफजे मदे स्वल्पसंज्ञामाकुलतां नयेत्, असम्बन्धवचनं स्वल्पमालापः। सर्व्वाणीत्यादि। मदस्य स्वरूपमाह—जायते इत्यादि। मदः क्षिप्रन्तु जायते क्षिप्रं शाम्यति यथा मदो मद्यमदाकृतिरिति। अथ रौधिरमदप्रसङ्गात् मद्यविषजयोरपि मदयोर्भेदमाह—यश्चेत्यादि। यश्च मद्यकृतो यश्च विषजो यश्च रौधिरो मदः। एते सर्व्वे मदा वातपित्तकफाश्रयात् वातात् पित्तात् कफादृते न भवन्ति।

धातुमावहन्तीति रससंज्ञावहानि। रसवहधमनीनान्तु हृदयं स्थानं, तदुपघाताच्च मोह उपपन्न एव। मला इति दुष्टदोषसंज्ञा, यदुक्तम्—"मलिनीकरणान्मलाः" इति। यथोत्तरं लिङ्गाधिक्यं मदमूर्च्छासन्न्यासेषु मोहरूपं ज्ञेयम्, मदेऽपि हि स्तोको मोहोऽस्ति, उत्तरयोस्तु व्यक्त एव मोहः॥ ११–१३॥

चक्रपाणिः—परुषं ब्रूत इति परुषाभाषः। मदस्वरूपमाह—जायत इत्यादि। मद-प्रसङ्गेन मद्यविषजयोरपि। मदयोधातुर्व्विध्यमाह—यश्चेत्यादि। वातपित्तकफत्रयादिति वातात्

* स्वल्पसम्बन्धवचनमिति चक्रः। † वातपित्तकफत्रयादिति चक्रः।

नीलं वा यदि वा कृष्णमाकाशमथवारुणम्।
पश्यंस्तमः प्रविशति शीघ्रञ्च प्रतिबुध्यते॥
वेपथुश्चाङ्गमर्दश्च प्रपीडा हृदयस्य च।
कार्श्यं श्यावारुणा च्छाया मूर्च्छाये वातसम्भवे॥ १५॥
रक्तं हरितवर्णं वा वियत् पीतमथापि वा।
पश्यंस्तमः प्रविशति सस्वेदः प्रतिबुध्यते॥
सपिपासः ससन्तापो रक्तपीताकुलेक्षणः।
संभिन्नवर्च्चाः पीताभो मूर्च्छाये पित्तसम्भवे॥ १६॥

एते-इति-पदेन पूगकोद्रवादिमदव्यवच्छेदः, तेषां न त्रैविध्यमिति भावः। एतेन मद्यविषजयोरपि मदयोरस्य रौधिरस्य लक्षणवत् लक्षणानीति सूचितम्॥ १४॥

गङ्गाधरः—क्रमिकत्वात् मूर्च्छायलक्षणान्याह—नीलमित्यादि। यद्यपि आकाशस्य वस्तुनो रूपाभावान्न चाक्षुषं भवति तथापि वातादिदुष्ट्या नयने जातं नीलादिरूपमधिकं तदधिकं नीलादिरूपमाकाशं व्याप्नोतीत्याकाशं नीलादिकं पश्यति। यथा ज्योत्स्नातपतमांस्याकाशं व्याप्नुवन्तीति ज्योत्स्नाद्यन्वितमाकाशं पश्यति तथा। न तु शुक्तौ रजतदर्शनवत् रज्ज्वां सर्पदर्शनवद्वा। पैत्तिके कफजे चैवं बोध्यम्। वायोश्चलत्वेन शीघ्रं प्रतिबोधः। श्यावारुणा च्छायेति श्यावच्छायारुणच्छाया। वातजा चेयं मूर्च्छा श्यावारुणा च्छाया क्लेशमरणाय भवतीति कश्चिदाह—"वायवी तु विनाशाय क्लेशाय महतेऽपि वा" इति वचनात्, तन्न। वायुकृतश्यावारुणच्छाया नारिष्टम्। किन्तु या श्यावारुणमतिच्छाया स्यादनिमित्ता तस्या अरिष्टत्वमेवेति बोध्यम्।

पित्तात् कफात् वातपित्तकफाच्च. एतेन तेषामप्येतदेव लक्षणं वातादिकृतं भवतीति भावः॥ १४॥

चक्रपाणिः—मूर्च्छायलक्षणमाह—नीलं वेत्यादि। तत्र वातमूर्च्छायां श्यावारुणा छाया रिष्टरूपत्वान्मरणाय स्यात् वायव्यत्वादिति चोद्यं कुर्व्वन्ति, उक्तं हि—"वायव्या सा विनाशाय क्लेशाय महतेऽपि वा" इति; तन्न, अनिमित्ता हि छाया रिष्टं विनाशयति, न तु दृश्यमाननिमित्ता; इह च वातसम्बन्धो दृश्यत एव निमित्तम्; किंवा "क्लेशाय महतेऽपि वा" इति

मेघसङ्काशमाकाशमावृतं वा तमोघनैः ।
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥
गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्म्मणा ।
सप्रसेकः सहृल्लासो मूर्च्छाये कफसम्भवे ॥ १७ ॥
सर्व्वाकृतिः सन्निपातादपस्मार इवागतः ।
स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः ॥ १८ ॥
दोषेषु मदमूर्च्छाया गतवेगेषु * देहिनाम् ।
स्वयमेवोपशाम्यन्ति संन्यासो नौषधैर्विना ॥ १९ ॥

रक्तमित्यादि पित्तमूर्च्छायलक्षणम्। मेघेत्यादि। मेघसङ्काशमित्यादिकफजमूर्च्छायलक्षणम्। अत्र तमोघनैरिति तमोभिश्च घनैश्च तमोवद्घनैर्वा। चिरादिति कफस्य चिरकर्त्तृत्वात्। सर्व्वाकृतिरित्यादिना सन्निपातजमूर्च्छायलक्षणम्। अपस्मार इवागतस्तमःप्रवेशकालेऽपस्मारे यथा भवति तथा सान्निपातिकमूर्च्छाये स्यात्। विशेषमाह विनेत्यादि। बीभत्सचेष्टितानि फेनोद्वमनदन्तखादनाङ्गविक्षेपणनेत्रवैकृतादीनि भवन्त्यपस्मारे तानि तु न सान्निपातिकमूर्च्छाये भवन्तीति भेदः। स सान्निपातजमूर्च्छायः। एतेनास्यासाध्यत्ववचनेनान्येषां साध्यत्वं बोध्यम्। मदस्य मद्यमदाकृतित्वेन अल्पतमःप्रवेशो मदे भवति मूर्च्छाये च तमःप्रवेश एव भवतीति भेदो दर्शितः ॥ १५—१८ ॥

गङ्गाधरः—मदमूर्च्छाययोः साध्यत्वादि साधर्म्म्यञ्च दर्शयन सन्न्यासे वैधर्म्म्यं दर्शयति—दोषेष्वित्यादि। गतवेगेषु अतीतवेगेषु। कृतवेगानां दोषाणां वेगकरणकाले अल्पबलत्वेन स्वल्पवत्तमःप्रवेशनकारित्वं वेगापगमे तु दोषाणां श्रान्तकृद्धपुरुषवत् दुर्ब्बलत्वात् मदाश्च मूर्च्छायाश्च स्वयमेवोपशाम्यन्ति। दौर्ब्बल्ये हि न वेगहेतुर्दृश्यते लोके इति मदमूर्च्छाययोः साधर्म्म्यं, सन्न्यासे तनयोर्वैधर्म्म्यमाह—सन्न्यासो नौषधैर्विनेति ॥ १९ ॥

वचनादेव चास्य मूर्च्छाया मारकत्वं व्यभिचरितम्। तमोभिर्घनैश्चेति तमोघनैः, किंवा तमोभिरेव घनैः। विना बीभत्सचेष्टितैरिति दन्तखादनाङ्गविक्षेपणादिकं विना ॥ १५—१८ ॥

चक्रपाणिः—सन्न्यासस्य मूर्च्छादिभ्यो भेदकं लक्षणमाह—दोषेष्वित्यादि। कृतवेगेष्विति

* हृतवेगेषु तथा कृतवेगेषु इति वा पाठः।

वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः ।
संन्यस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिताः ॥
स ना संन्याससंन्यस्तः काष्ठीभूतो मृतोपमः ।
प्राणैर्विमुच्यते शीघ्रं मुक्त्वा सद्यःफलाः क्रियाः ॥ २० ॥
दुर्गेऽम्भसि यथा मज्जद्भाजनं त्वरया बुधः ।
गृह्णीयात् तलमप्राप्तं तथा संन्यासपीड़ितम् ॥ २१ ॥
अञ्जनान्यवपीड़ाश्च धूमाः प्रधमनानि च ।
सूचीभिस्तोदनं शस्त्रं दाहः पीड़ा नखान्तरे ॥

ननु विनौषधं संन्यासः किं स्वभावादेवातीतवेगेषु दोषेषु स्वयं नोपशाम्यति इति ? अतस्तत्र स्वभावो न हेतुरित्यभिप्रायेणाह—हेतुं वाग्देहेत्यादिकम् । अतिबला इति मला वातादयो दोषा मदमूर्च्छायकरा यादृशबलेन भवन्ति—तदधिकबलेन कुपिताः सुतरां वाग्देहमनसां त्रयाणामेव चेष्टामाक्षिप्य निरस्याबलं दुर्ब्बलं पुरुषं संन्यस्यन्ति सन्निक्षिपन्ति सम्यक् तमसि प्रवेशयन्ति । न तु बलवन्तं पुरुषम् । अतः सोऽधिकबलोन्नद्धकुपितप्राणायतनाश्रितदोषवान् दुर्ब्बलो ना पुमान् संन्याससंन्यस्तः सन् सुतरां काष्ठीभूतो निस्पन्दमानो भवति च मृतोपमो मृतवत् । श्वासोच्छ्वासादिप्राणलिङ्गैर्नोपलभ्यते । ननु तर्हि किं मृत एव भवतीति ? अत आह—प्राणैरित्यादि । संन्यासकाल एव यदि सद्यःफलाः प्रयोगमात्रेण प्रबोधरूपफलजनिकाः क्रिया न कुर्य्यात् तदा प्राणैर्विमुच्यत एव इति मृतोपम इत्युच्यते । अत एव दोषाणामतिबलवतां वेगापगमो न भवति । जन्तोर्दुर्ब्बलत्वेनातिप्रबलकुपितदोषाश्रितप्राणायतनत्वात् अतिक्रान्त्या स्वयं न प्रतिबोधो भवति । मदमूर्च्छाययोश्च दोषा नेदृक्प्रबला न च जन्तुरबल इत्यतः स्वयं प्रतिबोधः स्यात् ।

ननु प्राणविमोचनजनकदोषवेगोपहतपुरुषाः किं क्रियाविशेषेण प्राणान् न त्यजन्तीति ? अत आह दुर्गेत्यादि । एतेन प्राणमोचनात् पूर्व्वं सद्यःफलाः क्रियाः कार्य्या इति ज्ञापितम् । सद्यःफलाः क्रिया आह—अञ्जनानीत्यादि ।

वेगं कृत्वा क्षीणबलेषु, वेगो हि दोषाणां बलक्षयकारणं भवति, यदुक्तं विषमज्वरे—"कृत्वा वेगं गतबलाः" इत्यादि; संन्यस्यन्त्यचेष्टं कुर्व्वन्ति; प्राणायतनमिति हृदयम्, मुक्त्वा त्यक्त्वा, सद्यःफलामिति सद्यःप्रबोधनकारिकां तीक्ष्णाञ्जनादिकाम्, शस्त्रैरिति च तोदनेन सम्बध्यते ।

लुञ्चनं केशलोम्नाञ्च दन्तैर्दंशनमेव च।
आत्मगुप्तावघर्षश्च हितस्तस्यावबोधने॥
संमूर्च्छितानि तीक्ष्णानि मद्यानि विविधानि च।
प्रभूतकटुयुक्तानि तस्यास्ये गालयेन्मुहुः॥ २२॥
मातुलुङ्गरसं तद्वन्महौषधसमायुतम्।
तद्वत् सौवर्च्चलं दद्यात् युक्तं मद्याम्लकाञ्जिकैः॥
हिङ्गूषणसमायुक्तं यावत् संज्ञाप्रबोधनम्।
प्रबुद्धसंज्ञमन्नैश्च लघुभिस्तमुपाचरेत्॥ २३॥
विस्मापनैः संस्मरणैः प्रियश्रुतिभिरेव च।
पटुभिर्गीतवादित्रैः शब्दैश्चित्रैश्च दर्शनैः॥
स्रंसनोल्लेखनैर्धूमैरञ्जनैः कवलग्रहैः।
शोणितस्यावसेकैश्च व्यायामोद्घर्षणैस्तथा॥

अञ्जनानीति प्रबोधफलकत्वात् तीक्ष्णानि। सूचीभिस्तोदनं शस्त्रैश्च तोदनमित्यन्वयः। दाहो वह्निना। पीड़ा नखान्तरे। लुञ्छनमुत्पाटनं केशानां लोम्नाञ्च। तस्यावबोधने संन्याससंन्यस्तस्य सद्यः प्रबोधने। सद्यःफलयोगान्तराण्याह— संमूर्च्छितानीत्यादि। तीक्ष्णानि विविधानि मद्यानि संमूर्च्छितानि मिलितानि कृत्वा तस्यास्ये यत्नेन मुहुर्गालयेत्। प्रभूतकटुतिक्तानि च संमूर्च्छितानि तस्यास्ये मुहुर्गालयेत्॥ २०—२२॥

गङ्गाधरः—मातुलुङ्गेत्यादि। मातुलुङ्गरसं महौषधयुक्तमित्यास्ये गालयेत्। तद्वदित्यादिकमप्यास्ये मुहुर्गालयेत्। सौवर्च्चलमित्यत्र सौवीरमिति केचित्। हिङ्गिनि क्लीवलिङ्गम्, ऊषणसमायुक्तं हिङ्गु मद्याम्लकाञ्जिक इत्यर्थः। अथवा हिङ्गूषणयुक्तं मद्याम्लकाञ्जिकैश्च युक्तं सौवर्च्चलमित्येको योगः। प्रबुद्धसंज्ञं प्रबोधयुक्तमनसं लघुभिरन्नैरुपाचरेत्॥ २३॥

गङ्गाधरः—विस्मापनैरित्यादि। तथा विस्मापनैरित्यादिभिस्तमुपाचरेत्।

संमूर्च्छितानीति मिलितानि; गालयेदिति यत्नेन मुखे प्रक्षिपेत्। सौवर्च्चलं केचित् सौवीरमाहुः।

प्रबुद्धसंज्ञं मतिमाननुबन्धमुपाचरेत् ।
ततः संरक्षितव्यो * हि मनःप्रलयहेतुतः ॥ २४ ॥
स्नेहस्वेदोपपन्नानां यथादोषं यथाबलम् ।
पञ्च कर्म्माणि कुर्व्वीत मूर्च्छायेषु मदेषु च ॥ २५ ॥
अष्टाविंशत्यौषधस्य तथा तिक्तस्य सर्पिषः ।
प्रयोगः शस्यते तद्वन्महतः षट्पलस्य च ॥
त्रिफलायाः प्रयोगो वा सघृतक्षौद्रशर्करः ।
शिलाजतुप्रयोगो वा प्रयोगः पयसोऽपि वा ॥
पिप्पलीनां प्रयोगो वा पयसा चित्रकस्य वा ।
रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते ॥

ननु प्रबुद्धचित्तं संन्यासिनं कुतः पुनरेतैरुपाचरदिति ? अत आह—प्रबुद्धेत्यादि । संन्याससंन्यस्तः पुमान प्रतिबुद्धोऽपि संन्यासकरदोषानुबन्धवान तस्मात् तदनुबन्धदोषप्रशमनार्थं प्रबुद्धसंज्ञमपि विज्ञापनादिभिरुपाचरेत् । नन्वस्तु अनुबन्धो दोषाणां तेन किमिति ? अत आह—तत इति । ततोऽनन्तरमपि संन्यस्तो भवितुमर्हति तदारम्भकदोषानुबन्धात् । अतो हि यस्मात् ततोऽनन्तरं मनःप्रलयस्य हेतुतः संन्यासरूपमाहतः स पुमान् रक्षितव्यः पुनर्मनःप्रलयो यथा न भवितुमर्हतीति भावः ॥ २४ ॥

गङ्गाधरः—मदमूर्च्छयोः संन्यासस्य दोषनिर्म्मूलताहेतुक्रिया आह—स्नेहेत्यादि । पञ्च कर्म्माणि वमनादीनि प्रकरणात् । संन्यासे लब्धे मदमूर्च्छाययोरप्येकाविभवात् तुल्या क्रिया योग्येत्यत आह—मूर्च्छायेषु मदेषु चेति । अष्टाविंशत्यौषधस्य पानीयकल्याणघृतस्य । तिक्तस्य सर्पिष इत्यस्य महतः षट्पलस्येति चान्वयः । तेन महातिक्तघृतस्य षट्पलतिक्तघृतस्य च प्रयोगस्तद्वत् अष्टाविंशत्यौषधस्य प्रयोगवत् शस्यते । तिक्तषट्पलमहातिक्तघृते कुष्ठचिकित्सिते वक्ष्यमाणे । सघृतक्षौद्रशर्करास्त्रिफलायाः प्रयोगः । शिलाजतुनः केवलस्य शुद्धस्य प्रयोगः रक्तिद्वयादिक्रमेणापप्रयोगः सघृतक्षौद्रशर्कर एव । पयसाऽपि सघृतक्षौद्रशर्करः प्रयोगः क्रमेणापप्रयोगः । पलमानमारभ्येति बोध्यम्

अनुबन्धं सततम्, मन हेतुत इति मोहहेतुतः । अष्टाविंशत्यौषधस्येति पानीयकल्याणस्य ;

---

* संरक्षितव्यमिति पाठः ।

रक्तावसेकाच्छास्त्राणां सतां सत्त्ववतामपि।
सेवनान्मदमूर्च्छायाः प्रशाम्यन्ति शरीरिणाम् ॥ २६ ॥

तत्र श्लोकौ।

विशुद्धञ्चाविशुद्धञ्च शोणितं तस्य हेतवः।
रक्तप्रदोषजा रोगास्तेषु रोगेषु चौषधम् ॥
मदमूर्च्छायसन्न्यास-हेतुलक्षणभेषजम्।
विधिशोणितकेऽध्याये सर्व्वमेतत् प्रकाशितम् ॥ २७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने विधिशोणितीयो नाम चतुर्व्विंशोऽध्यायः ॥२४॥

इति योजनाचतुष्कः।

आहारद्रव्यसात्। पिप्पलीनां प्रयोगः पयसा पिप्पलीवर्द्धमानयोगः। चित्रकस्य वा पयसा रक्तिकाद्यादिक्रमेण पिप्पलीवर्द्धमानवद्वा प्रयोगः। रसायनानाम् अभयामलकादीनां प्रयोगः। कौम्भस्य दशाब्दिकस्य शताब्दिकस्य वा। रक्तावसेकादिति पुनर्मदमूर्च्छायामित्यभिप्रायेण सुश्रुते रक्तमोक्षणे मूर्च्छितस्य यः प्रतिषेधः कृतस्तत् रक्तमोक्षणे यो मूर्च्छति तस्यैव बोध्यः। सतां शास्त्राणां वेदपुराणादीनां पुण्यजनकानां सेवनादिति श्रवणपठनपाठनादितः। सतां सत्त्ववतामपि सात्त्विकसत्पुरुषाणां सेवनात् शुश्रूषणसङ्गादित इति ॥ २५।२६ ॥

गङ्गाधरः—अध्यायार्थोपसंहारार्थमाह तत्र श्लोकावित्यादि। स्पष्टम्। योजनाचतुष्क इति चिकित्सायां भेषजयोजनायै चतुष्कश्चतुर्भिरध्यायैर्निष्पादित इत्येकः प्रकारः ॥ २७ ॥

अग्नीत्यादि पूर्व्ववत्।

इति श्रीगङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ सूत्रस्थानीय-चतुर्व्विंशविधिशोणितीयाध्यायजल्पाख्या चतुर्व्विंशी शाखा ॥२४॥

तिलकस्य महतकथा तिलकस्य वटपत्रकस्येति सम्बन्धः, एते च तिलकवटपत्रमहतिलकपूते कुष्ठचिकित्सिते वक्ष्यते। कौम्भं दशाब्दिकम् ॥ १९—२७ ॥

इति योजनाचतुष्कः।

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थानव्याख्यायां विधिशोणितीयो नाम चतुर्व्विंशोऽध्यायः ॥ २४ ॥

# पञ्चविंशोऽध्यायः ।

**अथातो यज्जःपुरुषीयमध्यायं व्याख्यास्यामः,**

**इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**पुरा प्रत्यक्षधर्म्माणं भगवन्तं पुनर्व्वसुम् ।**

**उपासतां * महर्षीणां प्रादुरासीदियं कथा ॥**

**आत्मेन्द्रियमनोऽर्थानां योऽयं पुरुषसंज्ञकः ।**

**राशिरस्यामयानाञ्च प्रागुत्पत्तिविनिश्चये ॥ २ ॥**

<u>गङ्गाधरः</u>—अथ भेषजयोजनायां लङ्घनबृंहणादुपक्रमा न विना हिताहारं सिध्यन्तीत्यतो योजनाचतुष्कानन्तरमाहारस्य हितत्वाहितत्वविज्ञानार्थम् अन्नपानचतुष्क आरभ्यमाणे समासेनान्नपानगुणोपदेशार्थं यज्जःपुरुषीयोऽभिधीयते—अथात इत्यादि। अत्र प्रश्नादौ किंनु भोः पुरुषो यज्ज इति पदस्यार्थं यज्जःपुरुष इति अधिकृत्य कृतोऽध्याय इति यज्जःपुरुषीयोऽध्यायः। शेषं सर्व्वं पूर्व्ववद्व्याख्येयम् ॥ १ ॥

<u>गङ्गाधरः</u>—प्रश्नावतारार्थमाह—पुरेत्यादि। प्रत्यक्षधर्म्माणमिति तपःप्रभावात् साक्षात्कृतो धर्म्मो यस्य तम्। उपासतां उपासीनानां, लिङः परस्मैपदसंज्ञाविधानसामर्थ्यात् तङामपि परस्मैपदत्वादिह शतृप्रत्ययः। प्रादुरासीत् प्रादुरभूत्। इयं कथा वक्ष्यमाणरूपा। किंविषया सा कथा? तदाह—आत्मेन्द्रियेत्यादि। आत्मेन्द्रियमनोऽर्थानां योऽयं प्रत्यक्षभूतो राशिः

<u>चक्रपाणिः</u>—य इमे योजनाचतुष्के षडुपक्रमा अभिहितास्तेऽन्नपानापेक्षयैव व्याधिहरणे समर्थाः, अतोऽन्नपानचतुष्कोऽभिधीयते, तत्रापि सङ्क्षेपेणान्नपानगुणाभिधायको यज्जःपुरुषीयोऽभिधीयते। तत्रादौ पुरुषव्याधिकारणनिश्चायकप्रकरणमाहारगुणप्रभावतारार्थं तथा पूर्व्वोक्तषडुपक्रमणीयरोगकारणज्ञानार्थञ्च 'यज्जः पुरुष' इति प्रश्नं प्राधान्येनाधिकृत्य कृतोऽध्यायो यज्जःपुरुषीयो ज्ञेयः। यद्यपि "पुरुषो यज्जः" इति प्रश्नक्रमः, तथापि प्रश्नार्थोऽत्र गृहीतः ॥ १ ॥

<u>चक्रपाणिः</u>—प्रत्यक्षधर्म्मत्वं तपःप्रभावात्, इयमित्यग्रे वक्ष्यमाणा, कथा तत्त्वजिज्ञासार्थम् अन्योन्यपृच्छा। राशिरेकैक आत्मेन्द्रियमनोऽर्थसमुदय इत्यर्थः; अस्य राशेरामयानाञ्चोत्पत्तिविनिश्चये उत्पत्तिविनिश्चयविषयिणी कथा प्रादुरासीदिति सम्बन्धः ॥ २ ॥

*, समेतानामिति वा पाठः।

तदन्तरं काशिपतिर्वामको वाचमर्थवित्।
व्याजहारर्षिसमितिमभिष्टुत्याभिवाद्य च॥
किं नु भोः पुरुषो यज्जस्तज्जास्तस्यामयाः स्मृताः।
न वेत्युक्ते नरेन्द्रेण प्रोवाचर्षीन् पुनर्व्वसुः॥
सर्व्वे एवामितज्ञान-विज्ञानच्छिन्नसंशयाः।
भवन्तश्छेत्तुमर्हन्ति काशिराजस्य संशयम्॥ ३॥

संघातः खलु पुरुषसंज्ञो देवनरादिसाधारणस्तस्य प्रागुत्पत्तिविनिश्चयेऽस्यामयानाञ्च प्रागुत्पत्तिविनिश्चये॥ २॥

गङ्गाधरः—कस्तां कथां पप्रच्छेति? अत आह तदन्तरमित्यादि। तदन्तरं राशिपुरुषस्य तस्य चामयानां प्रागुत्पत्तिविनिश्चये कथायामुपस्थितायां मध्येऽर्थवित् काशिपतिर्वामको नाम राजर्षिऋषिसमितिमृषीणां समवायं समूहमभिवाद्याभिष्टुत्य च वाचं व्याजहार। कां वाचमिति? अत आह—किंन्वित्यादि। नु भो यज्जः पुरुषो यस्मात् कारणात् पुरुषो राशिसंज्ञको देवनरादिर्जायते तस्य पुरुषस्यामयाश्च तज्जास्तस्मात् कारणाज्जाताः किं न वेति भवद्भिः स्मृता इति नरेन्द्रेण वामकेन काशिराजेनोक्तः पुनर्व्वसुऋषीनन्यान् तत्र समवेतान् प्रोवाच। किं प्रोवाचेति? अत उच्यते—सर्व्वे एवेत्यादि। भवन्त ऋषयः सर्व्वे एवामितज्ञानविज्ञानाभ्यां छिन्नसंशयाः काशिराजस्य संशयं छेत्तुमर्हन्ति। इति॥ ३॥

चक्रपाणिः—तामेव परस्परप्रश्नरूपां कथां दर्शयति—तदन्तरमित्यादि। अन्तरशब्दः कालवचनः, यथा—"अपस्माराय कुर्व्वन्ति येषां किञ्चिदथान्तरम्" इति, किञ्चित्कालमित्यर्थः; तेन तदन्तरमिति कथारम्भकाल इत्यर्थः; काशी वाराणसी, तस्याः पतिः; तेषां बहुत्वाद् विशेषणं 'वामकः' इति। यस्माज्जातो यज्जः, तत एव पुरुषजनकात् कारणाज्जातास्तज्जाः; न वेति अन्यतः पुरुषो जायतेऽन्यतश्च तस्य रोगा इत्यर्थः; नरेन्द्रेणेति काशिपतिनाम्ना राजर्षिणा।

अमिताभ्यां ज्ञानविज्ञानाभ्यां छिन्नः संशयो येषां ते तथा; "भवन्तश्छेत्तुमर्हन्ति काशिराजस्य संशयम्" इति पाठः सुगमः; "भवन्तोऽर्हन्ति नश्छेत्तुं काशिराजे च संशयम्" इति तु पाठे,—नोऽस्माकं काशिराजेऽस्मन्मध्यगत इत्यर्थः, एतेन स्वपक्षे काशिराजे न व्यामोहवचनं वक्तव्यमिति शिक्षयति; चकारेणान्येषाञ्च ऋषीणां संशयं समुच्चिनोति; अन्ये तु,—

पारीक्षिस्ततस्तदा धीमान् मौद्गल्यो वाक्यमब्रवीत् ।
आत्मजः पुरुषो रोगा आत्मजाः कारणं हि सः ॥
स चिनोत्युपभुङ्क्ते च कर्म्म कर्म्मफलानि च ।
न ह्यते चेतनाधातोः प्रवृत्तिः सुखदुःखयोः ॥ ४ ॥

गङ्गाधरः—तद्वचनं श्रुत्वा यो य ऋषिर्यदुवाच तदर्शयति—पारीक्षिरित्यादि। राशिपुरुषस्य देवनरादेश्चतुर्व्विंशतितत्त्वविकारसमुदायस्य प्रागुत्पत्तौ यावन्ति कारणानि तस्य पुरुषस्य रोगाणाञ्च प्रागुत्पत्तौ यावन्ति कारणानि तावतां कारणानामेकैककारणवादमाश्रित्य शेषा ऋषयः प्रत्यूचुः। तत्र तेषु ऋषिषु मध्येऽग्रे मौद्गल्यः पारीक्षिस्तत्पुरुषरोगयोः प्रागुत्पत्तौ कारणं परीक्ष्य विचार्य्य वाक्यमब्रवीत्। यदब्रवीत् तदाह—आत्मज इत्यादि। आत्मा चेतनाधातुरव्यक्तं नाम महता जीवेनात्मना प्रलयोपाहितः प्राज्ञः, स खल्वहङ्कारादिभिर्द्वाविंशत्या सूक्ष्मैस्तावद्भिरुपाहितः सूक्ष्मशरीरी तैजसः, स पुनः पूर्व्वपूर्व्वभूतानुप्रविष्टपञ्चभूतोपाहित एव वैश्वानर इति त्रिधा। तस्मादेवात्मनः एष एष देवनरादिराशिपुरुषो जायत इत्यात्मजः पुरुषः। तस्य पुरुषस्य रोगाश्चात्मजास्तस्मादेवात्मनोऽजायन्त इत्यात्मजा इति यज्जःपुरुषस्तज्जा एव तस्यामयाः। कस्मात्? कारणं हि स इति। हि यस्मात् स आत्मैव कारणं भवति। कथं? स चिनोतीत्यादि। स आत्माऽव्यक्तं चेतनाधातुस्थूलपञ्चभूतोपाहितः सन् वैश्वानरो नाम जागरितस्थानः सप्ताङ्ग एकोनविंशतिमुखः स्थूलमिदं शरीरं गृहीत्वा कर्म्म धर्म्माधर्म्मसाधनं कर्म्म वाङ्मनःशरीरप्रवृत्तिमयोगातियोगमिथ्यायोगसमयोगैर्बुद्धियोगेन चिनोति चयं करोति। तत् कर्म्मफलानि चोपभुङ्क्ते। जागरितः स्थूलं सर्व्वं विषयं सुखासुखानि बुद्धिसमयोगेन वाङ्मनःशरीरप्रवृत्तिं समां करोति तेन धर्म्मः

नोऽस्माकं संशयं काशिराजे च संशयमिति व्याख्यानयन्ति;—संशयद्वये चैकोऽत्र ऋषीणाम् "आत्मेन्द्रिय" इत्यादिना श्लोकेन दर्शितः संशयः, स च पुरुषस्यामयानाञ्च प्रागुत्पत्तिं प्रथमोत्पत्तिं प्रतीति व्याख्यानयन्ति; द्वितीयस्तु काशिपतेर्यथोक्त एव ॥ ३ ॥

चक्रपाणिः—आत्मजः पुरुष इत्यादि प्रश्नद्वयस्योत्तरम्, तत्र पूर्व्वप्रश्नस्य, पुरुषस्यामयानाञ्च कुत उत्पत्तिरित्येवंरूपस्य प्रश्नस्योत्तरम्—आत्मजः पुरुषो रोगाश्चेति, काशिपतिप्रश्नमात्रेऽप्युत्तरमेतत्—यत एवात्मतः पुरुषो जायते तत एव रोगा इत्यनुरूपमेव; प्रश्नपरतया स्वस्य ग्रन्थस्य सुगमैव। कारणत्वे हेतुमाह—स चिनोतीत्यादि। चिनोति कर्म्म, कर्म्मफलानि च

> शरलोमा तु नेत्याह न ह्यात्मात्मानमात्मना।
> योजयेद्व्याधिभिर्दुःखैर्दुःखद्वेषी कदाचन ॥
> रजस्तमोभ्यान्तु मनः परीतं सत्त्वसंज्ञकम्।
> शरीरस्य समुत्पत्तौ विकाराणाञ्च कारणम् ॥ ५ ॥

स्यात् तत्फलानि सुखादीनि उपभुङ्क्ते। बुद्धिविषमयोगेण यां वाङ्मनःशरीरप्रवृत्तिमाचरति तद्विषमयोगकृतकर्म्मफलमधर्म्मः शारीरमानसदोषवैषम्यञ्च रोगस्तत्फलानि दुःखान्युपभुङ्क्ते। एवं ततफलानि स्वप्नेऽपि स एवाव्यक्ताख्यश्चेतनाधातुरात्मा त्रयोविंशतितत्त्वोपाहितस्तैजसो नामान्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तः सुखानि दुःखानि चोपभुङ्क्ते इति। नन्वहिताहाराचारादितो दुःखानि हिताहाराचारादितः सुखानि भवन्ति, कुत आत्मजानि भवन्तीति? अत आह—न ह्यृत इत्यादि। हि यस्मात् चेतनाधातोरात्मन ऋते सुखदुःखयोः प्रवृत्तिरुत्पत्तिर्न भवति। यदि बुद्धिसमयोगात् कर्म्म करोति ततो धर्म्मश्चारोग्यञ्च सुखं जायते। यदि विषमयोगेण बुद्ध्या कर्म्म चाचरति तदा कर्म्मणां वैषम्यादधर्म्मो धातुवैषम्यं चातुर्य्यं दुःखं जायत इति ॥ ४ ॥

<u>गङ्गाधरः</u>—शरलोमेत्यादि। तच्छ्रुत्वा पारीक्षिवचनं नेत्याह शरलोमा ऋषिः। आत्मजः पुरुष इति यदुक्तं तदसम्यक्। तस्य रोगाश्चात्मजा इति यदुक्तं तन्न। कस्मात्? न ह्यात्मेत्यादि। हि यस्मादात्मा दुःखद्वेषी स आत्मना निजेनात्मानं स्वं दुःखैर्व्याधिभिः कदाचन न योजयेत्। तस्मात् नात्मजा रोगा इष्यन्ते न च पुरुष आत्मज इति। तर्हि भवता कुतः पुरुषप्रागुत्पत्तिः कुतस्तस्य रोगाणामुच्यत इति? अत आह—रजस्तमोभ्यामित्यादि। सत्त्वसंज्ञकं मनो रजस्तमोभ्यां परीतं सत् पुरुषशरीरस्य समुत्पत्तौ कारणं तस्य विकाराणाञ्च समुत्पत्तौ कारणं भवति। रजो हि प्रवर्त्तकं ,तमो मोहात्मकम्। यदा तु रज उद्रिक्तं भवति तदा

शरीरारोग्यविकारादीनि भुङ्क्ते इति योजना, कर्म्मसहायस्यात्मनः शरीरविकारादिकर्त्तृत्वात् कारणत्वमिति भावः; एतदेव व्यतिरेकेणाह—न ह्यृत इत्यादि। चेतनाधातुरात्मा, सुखदुःखयोरिति सुखदुःखसाधनयोः नीरुक्शरीरविकारयोरित्यर्थः ॥ ४ ॥

<u>चक्रपाणिः</u>—मन इत्युक्ते मन्यतेऽनेनेति व्युत्पत्त्या आत्मापि गृह्यते, तदुक्तं—"सत्त्वसंज्ञकम्"

वार्य्योविदस्तु नेत्याह न ह्येकं कारणं मनः।
नर्त्ते शरीराच्छारीर-रोगाणां मनसः स्थितिः॥
रसजानि तु भूतानि व्याधयश्चापृथग्विधाः *।
आपो हि रसवत्यस्ताः स्मृता निर्वृत्तिहेतवः॥ ६॥

बुद्धिसमयोगेन समयोगयुक्तानि कर्म्माणि स्वयं मनो वाग्देहाभ्याञ्च करोति तत्फलं धर्म्मः सुखञ्चारोग्यं भवति। यदा तम उद्रिक्तं भवति तदा बुद्धिविषमयोगेण विषमयोगयुक्तानि कर्म्माणि स्वयं मनः शरीरवाग्भ्याञ्च करोति। तत्फलमधर्म्मो दुःखञ्चातुर्य्यञ्च भवतीति। यदा तु मनः सत्त्वसंज्ञकं जीवस्पृक् ताभ्यां धर्म्माधर्म्माभ्यां परलोकं पुरुषं नीत्वा तत्र भोगावसाने पुनर्धर्म्माधर्म्माभ्यां ताभ्यां सूक्ष्मशरीरिणं परलोकादवक्रामयद्गर्भाशयमनुप्रवेशयति तदा राशिपुरुषो जायत इति यन्मनोजः पुरुषस्तन्मनोजा रोगा इति॥ ५॥

गङ्गाधरः तच्छरल्लोमवचनं श्रुत्वा वार्य्योविदो राजर्षिस्तन्नेत्याह। मनसः शरीरस्य प्रागुत्पत्तिर्विकाराणाञ्च प्रागुत्पत्तिरिति यदुक्तं तन्न। कस्मात्?—न ह्येकं कारणं मनः। हि यस्मादेकं मनो न शरीरप्रागुत्पत्तौ कारणम्, न च रोगाणां प्रागुत्पत्तौ कारणम्। कारणान्तरादुत्पत्तौ मन उपपादकम्। ततः कारणान्तरमस्ति। तच्च किमिति? अत आह—नर्त्ते इत्यादि। स्थूलादस्माच्छरीरादृते शारीररोगाणां न स्थितिः न च मनसः स्थितिः। तर्हि कुतः पुरुषो जायते कुतश्च रोगा इति? अत आह—रसजानीत्यादि। देवनरादिभूतानि प्राणिनो रसजानि मातापित्रोराहारजरससम्भूतशुक्रशोणितगर्भिण्याहाररसेभ्यो जायन्ते। भूतानि प्राणिनस्तेषां व्याधयश्चापृथग्विधाः शुक्रदोषशोणितदोषाहाररसजा एव। ननु रसनार्थो रसः कथमुपयुज्यते इति? अत आह—आपो हीत्यादि। हि यस्मादापो रसवत्यस्ता एवापः पाञ्चभौतिकरसस्य निर्वृत्तिहेतवः। तत्पञ्चभूतारब्धेऽद्भ्य एव मधुरादयो निर्व्वर्त्तन्ते। इति॥ ६॥

इति। नर्त्ते शरीरात् शारीरा वातादिजन्याः शोषादयस्तिष्ठन्ति, तथा न मनसः स्थितिर्वा ऋते शरीरादिति योज्यम्; रजस्तमःपरीतस्य हि मनसो नित्यं शरीर एव स्थितिः; यत्तु निर्दोषं मनः, तत्तु पुरुषस्य नापि च व्याधेः कारणमिति भावः। रसजानीत्यादौ स्मृता निर्वृत्तिहेतव इति व्याधिपुरुषयोः; एतेन व्याधिपुरुषजनकरसकारणत्वेनापः कारणकारणतया पुरुष-

* व्याधयश्च पृथग्विधा इति पाठः।

हिरण्याक्षस्तु नेत्याह न ह्यात्मा रसजः स्मृतः ।
नातीन्द्रियं मनः सन्ति रोगाः शब्दादिजास्तथा ॥
षड्धातुजस्तु पुरुषो रोगाः षड्धातुजास्तथा ।
राशिः षड्धातुजो ह्येष साङ्ख्यैराद्यैः परीक्षितः ॥ ७ ॥

गङ्गाधरः—हिरण्येत्यादि । तच्छ्रुत्वा वार्य्योविदवचनं कुशिको हिरण्याक्षस्तन्नेत्याह । रसजानि भूतानि रसजाश्च तेषां विकारा इति यदुक्तं तन्न । कस्मादिति ? अत आह—न ह्यात्मेत्यादि । हि यस्मादात्मा न रसजो न च मनश्चातीन्द्रियं रसजं न च सर्व्वे रोगा रसजा यतो रोगाः शब्दादिजाश्च सन्ति इति ।

तर्हि कुतो जायते पुरुषः कुतश्च तस्य रोगा जायन्त इति ? अत आह—षड्धातुजस्त्वित्यादि । पञ्चमहाभूतानि खं वायुर्ज्योतिरापो भूरिति आत्मा च चेतनाधातुरव्यक्तं नामेति षड्भ्यो धातुभ्यो यः पुरुषो जातः स षड्धातुजः पुरुषः, तस्मादेष राशिः पुरुषो जायते । तथा तस्य रोगाश्च षड्धातुजाः षड्धातुपुरुषाज्जायन्ते । तर्हि कुतो बुद्ध्यादयोऽस्य जायन्त इति ? अत आह—राशिरित्यादि । एष राशिश्चतुर्व्विंशतेस्तत्त्वानां सङ्घातो यस्मात् षड्धातुज एवाद्यैः साङ्ख्यैर्महर्षिभिः परीक्षितः । वक्ष्यते—"खादयश्चेतनाधातुषष्ठाश्च पुरुषः स्मृतः" इति । तद्यथा—प्राक् सर्गादिदं तमोभूतं यदासीत् तत् खलु मूलं मूलानां मूलाभावादमूलम् । तदसत् । क्रियागुणव्यपदेशाभावात् । सदेवासत् । प्राक्सर्गात् क्रियागुणव्यपदेशाभावात् सतः क्रियागुणव्यपदिष्टादर्थान्तरत्वात् । न त्वसदेवासत् । न ह्यसतः सदुत्पद्यते । उपादानमनुपमृद्यैव सतः प्रादुर्भावमसङ्गात् । न हि खपुष्पादुत्पद्यते फलम् । उपादानमुपमृद्यैव प्रादुर्भावनियमात् । यथा वीजमुपमृद्यैवाङ्कुरो जायते । जनिष्यमाणोऽङ्कुरो हि वीजमुपमृद्य प्रादुर्भवति । क्रमनिर्देशाच्च । क्रमश्चायं वीजं परिणमदवस्थान्तरेण जायते, सोऽपि व्यूहः पूर्व्वव्यूहविनाशे व्यूहान्तरत्वेन जायत इत्येवं पूर्व्वपूर्व्वव्यूहनाशानन्तरं कार्य्यरूपेण प्रादुर्भवतीति नासतः सदुत्पत्तिः । सैवासत् खलु सदेव शक्तिरेव मूलं ब्रह्म सर्व्वेषां कार्य्याणां यानि मूलानि तेषां मूलम् ।

विकारयोः कारणं भवति ; किं वा, आपो निम्नं तिष्ठेत्तव इति रसानां, किं वा यस्मात् रसस्य आपः, तस्मात् ता निम्नं तिष्ठेत्तव इति योजना ॥ ५।६ ॥

चक्रपाणिः—न ह्यात्मेत्यादौ नातीन्द्रियं मनो रसजं स्मृतमिति योजना, यस्मादतीन्द्रियं मन

तस्याः शक्तेर्मूलाभावादमूलं तद्ब्रह्म। सा शक्तिः प्राक् सर्गात् स्वप्रभावैर्गुणांशै-र्निगूढ़ासीत्। तस्या अतिपरमव्योमरूपो मुख्यांशोऽपरिणामी। गुणांशस्तु प्रभावः परिणामी। क्षीरवत्। यथा क्षीरस्य स्नेहांशोऽपरिणामी मुख्यः। स्नेहातिरिक्तो द्रवांशः परिणामी गुणांशः। तद्गुणीभूतद्रवांशविशिष्टो मुख्यांश-स्नेह एकमेव क्षीरं न द्वितीयम्। तथा शक्तिरेवासद्ब्रह्म सदेव तद्गुणाख्य-प्रभावविशिष्टमतिपरमव्योममुख्यांशभूतमेकमेवाद्वितीयम्, यथैवालोककृत् प्रभाव-विशिष्टं वह्न्यादीनां रूपमेकमेवाद्वितीयम्। न हि रूपादतिरिक्त आलोक-कृत् प्रभावः। न हि स प्रभावो द्रव्यं क्रियागुणाभावात्। न वा रूपादन्यो गुणो गुणे रूपे वृत्त्यसम्भवात्। न वा कर्म्म रूपे गुणे वृत्त्यदर्शनात्। न च सम-वायो मेलकत्वासामर्थ्यात्। तस्मात् रूपादनन्य एवालोककृत् प्रभावो घनाघन-ताभ्यां रूपालोकाख्याभ्यां व्यपदेशः। तथातिपरमव्योमप्रभावयोरपृथग्भावा-देकत्वं न च विजातीयद्वैतत्वं मुख्यांशभूता च शक्तिगुणांशभूतप्रभावश्च तच्छक्तिरिति शक्तित्वेन विजातीयत्वाभावान्मुख्यांशगुणांशत्वाभ्यां द्वैतत्वेऽपि सजातीयत्वादेकत्वं शक्तित्वात् ततो न द्वितीयमिति। सर्गकालरूपे तस्याः प्रभावविशेषे समुद्रिक्ते सति सा शक्तिरेव सद्ब्रह्म प्रसुप्तादुत्थितमिव किमपि नास्तीति दृष्ट्वा बहु स्यां प्रजायेयेत्यालोचयाञ्चकार। ततस्तत्तेजोऽसृजत। तच्च लोहितमिव न तु लोहितं रूपं सर्व्वेषां तेजसां मूलं तेजः उष्णत्वं क्रमेण स्थूलं सत् तेजसि त्र्यात्मके भूतेऽभिव्यक्तं लोहितं रूपं भवति। तच्चक्षुर्ब्रह्म। तत्तेज ऐक्षत। बहु स्यां प्रजायेयेत्यालोचयाञ्चकार। तदपोऽसृजत। ताः पुनः शुक्ला इव न तु शुक्लरूपं सर्व्वासामपां मूलं क्रमेण स्थूला भूता चतुरा-त्मिकास्वप्स्वभिव्यक्ताः शुक्लरूपं भवति। ता अमृतं मधुररस इव न तु मधुरो रसः सर्व्वस्य मधुररसस्य मूलं क्रमेण स्थूलं भूत्वा पाञ्चभौतिके भूम्यप्गुणबहुले-ऽभिव्यक्तो मधुररसो भवति। ता आपः प्राणो ब्रह्म। ता आप ऐक्षन्त बहु स्याम प्रजायेमहीति। बहु स्याम प्रजायेमहीत्यालोच्य ता आपोऽन्नमसृजन्त। तच्चान्नं कृष्णमिव न तु कृष्णरूपं सर्व्वेषामन्नानां मूलमन्नं पृथिवीतत्त्वं क्रमेण स्थूलं सत् पञ्चात्मिकायां पृथिव्यामभिव्यक्तं कृष्णरूपं भवति। तदगन्ध इव न तु गन्धः सर्व्वेषां गन्धानां मूलं क्रमेण स्थूलं सत् पृथिवीबहुले पाञ्च-भौतिकेऽभिव्यक्तं गन्धो भवति। तदन्नं ब्रह्म। आभिस्तेजोऽबन्नाख्याभि-स्तिसृभिर्देवताभिरेकीभूताभिर्विशिष्टा सा शक्तिर्ब्रह्म लोहितशुक्लकृष्णवत्

आत्मा चातीन्द्रियः, तस्मान्न रसत्वं, इत्यादि आचमानं कारणगुणानुविधानादैन्द्रियकं स्यादित्यर्थः;

आभासमाना हिरण्यवदाभासा गायत्री नाम देवता परमसूक्ष्मध्वनिभिरवरुद्धाति-परव्योमरूपा बभूव। सा वाक् सा सरस्वती सा दुर्गा सा सावित्रीत्येवमादि-समाख्याभिरभिहिता। सा शक्तिः स्वयमेवैतत्तेजोऽवन्नं तत् संहतरूपा गायत्री चेत्येवं सर्व्वं सदजायतेत्यभिहितम्। "असद्वा इदमग्र आसीत ततो वै सद-जायत।" इति। सेयं देवता गायत्री पुनरेव स्वस्थानि तेजोऽवन्नानि परि-णमयन्ती विद्या शान्तिः प्रतिष्ठा निवृत्तिरिति चतस्रः शक्तयो भूत्वैकीभूय परम-व्योमरूपश्चतुर्व्यूहः प्रथमो जीव एव पर आत्मा बभूव स स्वयः शुभ्रु अथः शुभावहत्रिभिरूपस्तस्मात् तत् सुकृतं कारणीभूतधर्म्मरूपमुच्यते। राशिपुरुषे ह्येष शुभाशुभकर्म्मणा धर्म्माधर्म्मरूपो भवति। तदुक्तं—"तदात्मानं स्वयमकुरुत तस्मात्तत् सुकृतमुच्यते" इति। एष सर्व्वं मन्वानो मनो ब्रह्म। सा गायत्री वाग्ब्रह्मतया वदन्नयश्च वाग्ब्रह्म। गायत्रीस्थमन्नं ब्रह्म यत्तेनायं विश्वं बिभ्रदन्नं ब्रह्म। याश्चापो गायत्रीस्थास्ताः प्राणो ब्रह्म तेन प्राणेनायश्च प्राणन् प्राणो ब्रह्म। यत्तत् गायत्रीस्थं तेजश्चक्षुर्ब्रह्म। तेन चक्षुषा चायं पश्यंश्चक्षुर्ब्रह्म। या च सा प्राक् सर्गादेका शक्तिरासीत् क्रियागुणव्यपदेशाभावा-दसत् खलु शून्यमिवातिपरमव्योम तच्छ्रोत्रं ब्रह्म। तेन चायं शृण्वन् श्रोत्रं ब्रह्म स्यात्मषट्क एष पुरुषः प्रथमसंहतरूपः इति षड्धातुरादिपुरुषः। तस्मा-ज्जातश्चेतनाधातुरव्यक्तं नामात्मा।

स च खादयश्च पञ्चेति षड्धातुजानि चतुर्व्विंशतिस्तत्त्वानि तैजसाख्यः सूक्ष्मशरीरी षड्धातुः पुरुषः। तद्यथा—सेयं गायत्री देवी खल्वेवं पर आत्मा स्वयं सुकृतं परमव्योम व्योमेव प्रतिकृतिरीशो व्योमकोऽनन्तशक्तिमान भूत्वा पुनर्हन्ताहमिमास्तिस्रो देवतास्तेजोऽवन्नाख्या अनेन जीवेनात्मना परमव्योम्ना व्योमकेशेनानुप्रविश्य निखिलस्य नामरूपे व्याकरवाणीति। तासां तिसृणां देवतानां तेजोऽवन्नानामेकैकां त्रिवृतं त्रिवृतं करवाणीति चालोचयाञ्चकार। ततः सा तेनैकीभूय तस्य परमव्योम्नः शिवस्यादि-जीवस्यादिभूतत्वादादित्यस्य परमपुरुषस्य ज्योतिः स्वरूपेणावर्त्तत। स हि सर्व्वं तया सूते इति सविता। सा च सावित्री तत् सवितुर्वरेण्यम्। तदप्युक्तं तत् परं ब्रह्म ह सर्गावस्थायामिति। स खलु परमव्योम परमपुरुषः शिवो-ऽनन्तशक्तिमानजः स विष्णुर्ब्रह्मा सोऽग्निरिन्द्रः स्वाङ्गुलिपरिमाणेन

इत्यन्तरमाह—खलीत्यादि। अहितशब्दरूपादिजन्ये विकारे न रसः कारणमित्यर्थः। आत्मा पृथिव्यादीनि च पञ्च षड् धातवः; यदुक्तं—"खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः" ॥ ७ ॥

चतुरशीत्यङ्गुलिपरिमितस्त्रिधाविभागकल्पनया भूर्भुवः स्वरिति त्रिपात् पुरुषः। तस्याधस्तात् पञ्चाशदङ्गुलिपरव्योम भूः। तदूर्द्ध्वं चतुर्व्विंशत्यङ्गुलिपरव्योम भुवः। तदूर्द्ध्वं दशाङ्गुलिमितपरमव्योम स्वरिति। तत्र भूर्लोकेऽष्टौ लोकाः। एतत्सप्तपातालसहितभूर्लोकः। आन्तरीक्षन्तु भुवर्लोकः। स्वर्लोकस्तु इन्द्रादिदेवलोकः। महर्लोको जनलोकः तपोलोकः सत्यलोकश्चेति सप्तलोकादूर्द्ध्वं प्रकृतेः परं विष्णुलोकोऽष्टमो लोकः। इत्यष्टलोकी भूर्लोकः प्रथमः पादः। तत् पञ्चाशदङ्गुलिमितपरव्योम्न ऊर्द्ध्वं चतुर्व्विंशत्यङ्गुलिपरिमित परव्योम कौमारलोकः। पञ्च ब्रह्मपुरुषा ऋग्वेदयजुर्व्वेदसामवेदाथर्व्ववेदसदाशिवानां स्थानं भुवर्लोको द्वितीयः पादः। इति द्वौ पादौ विश्वानि भूतानि। तत ऊर्द्ध्वं दशाङ्गुलं स्वर्लोकः सा द्यौस्तृतीयः पाद इति त्रिपात् परमव्योमैव शिवः परमपुरुषः परमात्मा हिरण्मयः षष्ठः कोषः। तस्य हृदयातिपरमव्योम्नि तस्य चात्मा सा शक्तिरजा तिष्ठति यस्यां सर्गावस्थायां तेजोऽबन्नलक्षणा गायत्री तस्य ज्योतिः स्वरूपेण भाति सा खल्वमृतं तस्मिन् परमे व्योम्नि सर्व्वतो वर्त्ततेऽभ्यन्तरतश्च वाह्यतश्चाधस्ताच्चोर्द्ध्वतश्च पूर्व्वतश्च दक्षिणतश्च पश्चिमतश्चोत्तरतश्चेति। सा चतुर्थः पाद इति गायत्रीविशिष्टत्रिपात्पुरुषश्चतुष्पाद्ब्रह्माऽस्यां सर्गावस्थायाम्। प्राक् सर्गान्महानिर्व्वाणावस्थायां सैका शक्तिमूलं ब्रह्म, यदुक्तम् "असद्वा इदमग्र आसीत्" इति, न तदा पादव्यपदेशो भेदकाभावात्। उक्तञ्च—"एतावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति। अत्र पाद इति औस्थाने सुः, पादावित्यर्थः। उक्तञ्च तथा—"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं सर्व्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम्॥" इति। अत्र सहस्रपादेनासङ्ख्यत्वं विवक्षितम्। तत उक्तम्—"सर्व्वतः पाणिपादं तत् सर्व्वतोऽक्षिशिरोमुखम्। सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति॥" इति। शीर्षाक्षिपादादिकं नास्य लोकवद्व्याकृतम्। तदुक्तं—"सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम्। सर्व्वस्य प्रभुमीशानं सर्व्वस्य शरणं बृहत्॥" सर्व्वेन्द्रियगुणाभासत्वात् सर्व्वेन्द्रियाभावेऽपि सर्व्वेन्द्रियकर्म्मकृच्छक्तिमत्त्वमुक्तम्—"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति वेद्यं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्॥" इति। एवंविधसहस्रशीर्षादियः पुरुषस्तस्याव्याकृतं परमव्योमरूपं (सर्व्वाङ्गं) स्वाङ्गुलिमानेन चतुरशीत्यङ्गुलमधस्ताच्चतुःसप्तत्यङ्गुलपरव्योम्ना स भूमिमष्टलोकी-

भूर्लोकसहितं भुवर्लोकं सर्व्वतो वृत्वाहृत्य स्वाङ्गुलिमानेन दशाङ्गुलं स्वर्लोको भूर्भुवर्लोकादतिशयेनाहृतत्वेनोत्कृष्टत्वेनातिष्ठदिति। तत्र दशाङ्गुलिमितायां दिवि त्रिपादस्य पुरुषस्य तृतीयपादः परव्योम्नि अमृतं ज्योतिःस्वरूपा गायत्री चतुर्थः पाद इति।

अथ यथास्य द्वौ पादौ विश्वानि भूतानि बभूवुर्यथा च स भूमिं भुवर्लोकमावृणोत्। तद्यथा—तस्यैव परमव्योम्नः पुरुषस्य स्वाङ्गुलिमानेन चतुरशीत्यङ्गुलिपरिमितस्य यदूर्द्ध्वं दशाङ्गुलं तच्छिरोग्रीवमिवोच्यते। तद्दशाङ्गुलादधस्ताच्चतुर्व्विंशत्यङ्गुलं कण्ठादिनाभिपर्य्यन्तमन्तरीक्षमिवोच्यते भुवर्लोकः। तत्र कण्ठाद्यधस्ताद्द्वादशाङ्गुलं हृदयं तदभ्यन्तरे यदतिपरमव्योम तत्र पञ्च देवसुषयः। ऊर्द्ध्वमेका सुषिः पूर्व्वस्मिन्नेका दक्षिणस्मिन्नेका पश्चिमे चैका उत्तरस्मिंश्चैका मध्ये यदतिपरमव्योम सा शक्तिर्ब्रह्म तस्यात्मा वर्त्तते। तदुक्तं—"हिरण्मये परे कोषे विरजं ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदो विदुः॥"

इत्येवं स्वयमेवाभूत् स इति स्वयम्भूर्यथा ससर्ज्ज। तदुक्तं मनुना—"ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम्। महाभूतादिवृत्तौजाः प्रादुरासीत् तमोनुदः॥" इति। तद्यथा—अथासौ भगवानव्यक्तः स्वयम्भूः परमव्योमरूपोऽनन्तशक्तिमानुत्तमपुरुषोऽकामयत बहु स्यां प्रजायेयेति। ततः स तपोऽतप्यत। स तपस्तप्त्वा इदं सर्व्वमसृजत। यदिदं किञ्च तत् सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्। निरुक्तञ्चानिरुक्तञ्च। निलयनञ्चानिलयनञ्च। विज्ञानञ्चाविज्ञानञ्च। सत्यञ्चानृतञ्च। सत्यम् अभवत्। यदिदं किञ्च तत् सत्यमाचक्षत इति। तद्यथा—असौ खल्वनन्तशक्तिमान् परमव्योम परमात्मा व्योमकेशस्तत् तपोबलेन स्वशक्तिषु प्रधानानां तिसृणां ज्ञानशक्तियदृच्छाशक्तिक्रियाशक्तीनां प्रथमज्ञानशक्त्या करिष्यमाणानाञ्च यत् प्रयोजनं यत् कारणं यत् करणञ्च तदेवाध्यवसाय यदृच्छया शक्त्या बुद्ध्याध्यवसितं तदेवमेव स्यान्नैवं स्यादित्येवमभ्यनुमन्यत। ततस्तस्य क्रियाशक्तिस्तस्य दशाङ्गुलादधस्ताच्चतुःसप्तत्यङ्गुलिमिते परमव्योम्नि ज्योतिःस्वरूपेण स्थितायाः अतिसूक्ष्मध्वनिरूपाया वाचो गायत्र्या यास्तेजोऽबन्नाख्यास्तिस्रो देवताः परिणामिनीस्ताः क्षोभयामास। तेन त्रिवृत्त्रिवृदेकैका भूत्वैकीभूय तत् परमामृतवागेव किञ्चित् स्थूलीभूय नादोऽभूत्। पुनस्तं नादं सा क्रियाशक्तिः क्षोभयामास। तेन नादात् क्षोभ्यमाणाद्बिन्दुर्बभूव। बिन्दोश्च पुनः क्रिया-

शक्त्या क्षोभ्यमाणादोमिति ध्वनिरभूत्। तदोङ्कारस्तु सत्। तस्मिरुक्तं तस्याकारोकारमकारयोगेण संहितायां निरुक्तिरुक्ता। तस्मादोङ्कारात् क्रिया-शक्त्या क्षोभितादकारादयो मातृकावर्णध्वनयो बभूवुरिति मातृकावर्णास्त्यत् तदोङ्कारविपर्य्ययं तदेवेति त्यत्। नैषामकारादीनां निरुक्तिरस्ति ततोऽनि-रुक्तम्। इति। सैषा प्रणवमातृकात्मिका देवी शुद्धा परा विद्या तस्य पुरुषस्य वागीश्वरी नाम शक्तिः। सैवेयं बभूव। तदुक्तं—"पञ्चाशल्लिपिभिर्विभक्तमुखदोः-पन्मध्यवक्षःस्थलां भास्वन्मौलिनिबद्धचन्द्रशकलामापीनवक्षोरुहाम्। मुद्रामक्ष-गुणं सुधाढ्यकलसं विद्याञ्च हस्ताम्बुजैर्बिभ्राणां विशदप्रभां त्रिनयनां वाग्-देवतामाश्रये॥" इति।

तत्तदोङ्कारादिवर्णात्मकध्वन्याश्रयो यावानसौ परमव्योमभागः स एव सदाशिवो नाम महाभूतः प्रथमो ब्रह्मपुरुषो बभूव। तद्विज्ञानं नाम सत्। एष तत् परमपुरुषस्य हृदयं यदूर्द्ध्वं सुषिस्तद्बहिर्द्वारपालः शिवस्योदानो नाम प्राणः। एष एव लोके त्रिगुणविशेषयोगादयमाकाशोऽभूदयञ्च वायुरभूत्। पुरुषे चास्य हृदयस्य मध्ये य आकाशः स आत्मा, पञ्च च तद्वच्छिद्राणि सन्ति। तत्रोर्द्ध्व-च्छिद्राद्बहिरुदानो नाम प्राणस्तिष्ठति। अथासौ या शुद्धविद्या सा पुनः क्रिया-शक्त्या क्षोभ्यमाणा परिणमन्ती अकारादीनामनन्तसंयोगात् कला विद्या तच्छुद्धविद्याविपरीतविद्या खल्वविद्या नाम बभूव। इति। कलां विद्यामविद्यां त्यद्रूपामसृजत्। सा चतुर्द्धा—ऋग्विद्या यजुर्व्विद्या सामविद्याऽथर्व्वविद्येति। तत्र प्रथमा धातुप्रातिपदिकप्रत्ययागमादिरूपा ऋग्विद्या बभूव। ततः सुप्तिङन्त-पदरूपा यजुर्व्विद्या। ततो गीतभूतवाक्यरूपा सामविद्या। ततो वाक्यभूताथर्व्व-विद्या च बभूवेति तत्रान्तर्भूतानि षडङ्गानि। सा च निरुक्तिमती चानिरुक्ति-मती च। सच्च त्यच्च। एतच्चतुर्द्धाविद्याश्रयास्तत्तत्परमव्योमभागा ऋग्वेद-यजुर्व्वेदसामवेदाथर्व्ववेदा बभूवुरिति। वेदाश्चत्वारो ब्रह्मपुरुषा विज्ञानविपरीता अविज्ञानरूपास्त्यदित्युच्यन्ते। नियतिर्नाम हि वेदचतुष्को नियमकरत्वात्। तस्मान्नियतिर्न ब्रह्म। स्वभावश्च यस्य यो भवति तं यदृच्छया बुद्धिशक्त्याध्यव-सितो नियतः कृत इति स्वभावो न ब्रह्म। यदृच्छा च न ब्रह्म। ब्रह्मणः शक्ति-विशेषत्वात्। उक्तञ्च "द्वे ब्रह्मणी ब्रह्मपरे त्वनन्ते विद्याविद्ये निहिते यत्र गूढे। क्षरन्त्वविद्या अमृतन्तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः॥" इति। चत्वार एते वेदा ब्रह्मपुरुषास्तस्य हृदयस्य पूर्व्वदक्षिणपश्चिमोत्तरसुषिषु क्रमेण द्वारपालाः। तद्यथा—"योऽस्य पूर्व्वसुषिस्तस्माद्बहिःस्थितो द्वारपाल ऋग्वेदः।

शिवस्य तस्य प्राणः स एवास्मिन् लोके एष आदित्यः पुरुषे देवनरादौ वाक्च-चक्षुश्च अभूत्। प्राणश्च हृदयस्य पूर्व्वसुषिद्वारे ।१। योऽस्य दक्षिणसुषिस्तस्माद्वहिः स्थितो द्वारपालो यजुर्व्वेदः। स तस्य शिवस्य व्यानो नाम प्राणः। स एतस्मिन् लोके चन्द्रमाः पुरुषे च देवनरादौ हृदयस्य दक्षिणसुषौ व्यानाख्यः प्राणः श्रोत्रञ्च। २। योऽस्य प्रत्यङ् सुषिस्तस्माद्वहिःस्थितो द्वारपालः सामवेदः। स तस्य शिवस्यापानो नाम प्राणः। स एवास्मिन् लोकेऽग्निः पुरुषे देवनरादौ हृदयस्य पश्चिमसुषिद्वारेऽपानो नाम प्राणो वाक् चेति। ३। अथ योऽस्योदङ् सुषिस्तस्माद्वहिःस्थितो द्वारपालोऽथर्व्ववेदः। स शिवस्य समानो नाम प्राणो मनश्च। स एवास्मिन् लोके पर्ज्जन्यो वर्षणोद्यतमेघः। पुरुषे च देवनरादौ हृदयस्योत्तरसुषिद्वारे समानो नाम प्राणो भवतीति। ४।" इत्येवं पञ्चसदाशिवर्व्वेदादीन् कुमारान् सावित्री सुषुवेऽनः सावित्री परमव्योम च शिवस्तया सुषुवेऽतः सविताऽभिधीयते।

अथैषां पञ्चानां यशस्तेजइन्द्रियवीर्य्यान्नार्थं पुनर्ऋक्षादयस्तपस्तेपुः। तद्यथा—"तस्य हृदयाभ्यन्तरे स्थितं गायत्रीस्थं यत्तेजोऽवन्नमेवामृतं तत्र या आपो मधुररस इव यो रसस्तत् पुष्पम्। स एव खल्वृच ऋग्वेदमभ्यतपन्नृचः ततस्तस्यर्व्वेदस्य यशस्तेज इन्द्रियं वीर्य्यञ्चेत्येतेषु जातेषु पुष्पञ्च परिणमन्नन्नमम्ल इव रसोऽजायत। तद् यत् पूर्व्वसुषिद्वारादक्षरत्। तज्ज्योतीरूपेण तदादित्यं हृदयेऽभितो मण्डलरूपेणाश्रयत्। तदेव सत्त्वगुणयोगादेतदादित्यस्य मण्डले शुक्ररूपं सदस्ति। १। एवं यजूंषि यजुर्व्वेदमभ्यतपन्। ततस्तस्य यजुर्व्वेदस्य यशस्तेज इन्द्रियं वीर्य्यमजायत। स एव च रसः परिणमन् लवण इव रसोऽन्नाद्यमजायत, तद्यद्दक्षिणसुषिद्वारेणाक्षरत्तत्तदादित्यं शिवं हृदयेऽभितो ज्योतीरूपं मण्डलाकारेणाश्रयत्। तद्वा एतद् यदेतदादित्यस्य मण्डले रजोगुणयोगाद्रक्तं रूपं सदस्ति। २। एवं सामानि सामवेदमभ्यतपंस्ततस्तस्य सामवेदस्य यशस्तेज इन्द्रियं वीर्य्यमजायत। स एव च रसः परिणमन् कटुक इव रसोऽन्नाद्यमजायत। तद् यत् पश्चिमसुषिद्वारेणाक्षरत्तत्तदादित्यं शिवमभितो हृदये ज्योतिःस्वरूपेण मण्डलाकारं भूत्वाश्रयत्। तद्वा एतद् यदेतदादित्यस्य मण्डले सत्त्वतमोगुणयोगात् श्यामरूपं सदस्ति। ३। अथाथर्व्वाङ्गिरसा इतिहासपुराणमभ्यतपन्। ततस्तस्येतिहासपुराणस्य यशस्तेज इन्द्रियं वीर्य्यमजायत। स एव च रसः परिणमंस्तिक्तरस इव रसोऽन्नाद्यमजायत। तद्यदुत्तरसुषिद्वारेण अक्षरत्तत्तदादित्यं शिवमभितो ज्योतीरूपेण हृदये मण्डलाकारेणाश्रयत्। तद्वा

एतत् यदेतदादित्यस्य मण्डले तमोगुणयोगात् परं कृष्णरूपं सदस्ति । ४ । अथ गृह्वा एव देवताः सदाशिवं ब्रह्माभितपन्नभितप्तस्य तस्य ततो यशस्तेज इन्द्रियं वीर्य्यमजायत । रसश्च स एव परिणमन् कषाय इव रसोऽन्नाद्यमजायत । तत् यदूर्द्धं सुषिद्वारेणाक्षरत्तत्तदादित्यं शिवमभितो ज्योतीरूपं सन्मण्डलाकारेण हृदयेऽश्रयत् । तद्वा एतत् यदेतदादित्यस्य मण्डलमध्ये क्षोभत इव वर्त्तते । ५ । इति ।

इत्येवं भेदकैदेशाङ्गुलात् स्वर्लोकादधस्ताद्भुवर्लोको नाभिपर्य्यन्तं विशिष्यते । २ । इत्येवं विज्ञानञ्चाविज्ञानञ्च सृष्ट्वा स परमात्मा समण्डलः सन वृत्तौजाः सन् प्राक् सर्गात् यत्तम आसीत तन्नुनोद । अथ नाभेरधस्तात् पञ्चाशदङ्गुलिमिते परमे व्योम्नि सत्यञ्चानृतञ्च सत्यमभवत् । तथाभूतः सन सर्व्वभूतमयो भूत्वा स परमव्योम पुरुष उद्दिदीपे । तदुक्तं मनुना "योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्व्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥" इति । तद्यथा अधस्तात् पञ्चाशदङ्गुलं परमव्योम विद्याविद्याश्रयपञ्चब्रह्मपुरुषैरावृतं यत्तत्र स्वल्वोङ्कारादिवर्णमयो देवस्त्रिधा भूत्वा ऋग्यजुःसामवेदेषु प्रविवेश । तथैवाथर्व्ववेदस्त्रिधा भूत्वा शान्तिभागेनर्ग्वेदमनुप्राविशत् । पौष्टिकांशेन यजुर्व्वेदमाभिचारिकांशेन सामवेदमित्येवं त्रयी बभूव । तच्चैकीभूतं सदाख्यं वस्तुभूतमेकं बभूव । तत्सदेव द्विधा भूत्वार्द्धेन चिद्बभूवार्द्धं सदेव स महाविष्णुः कालो नामाक्षरपुरुषादुत्तम इति पुरुषोत्तमः । तत्र योऽंशः परमव्योम्नः स रुद्र इति । हरिमहदादिसंहरणात् । चिच्च सम्प्रसादो मुख्यांशोऽसम्प्रसादो गुणांश इति भेदेन द्विधा अभवत् । तत्र चिन्मुख्यांशः सम्प्रसादः क्षेत्रज्ञ आत्मा पुरुषः स कूटस्थः सन्नानन्दतीति आदौ सत ततश्चित् तत आनन्द इति सच्चिदानन्दो विष्णुः । परमव्योम्नस्त्वधस्तादक्षे जातत्वादधोऽक्षजश्चोच्यते । स हि परमात्मनो ब्रह्मस्य परव्योम्नो योऽ[illegible]त्प्रसादांशेनावृतस्तावानंश इति चित्प्रसादांशोपाधिना भिद्यते । अत्र स [illegible]नोऽंशस्तत्तत्पुरुषो नाम । चिद्गुणांशः पुनरसम्प्रसादो ब्रह्मा नाम प्रधानमुच्यते । तत्र परमव्योम्नो योऽंशः स ईशानो नाम शिवः । एतत् कालक्षेत्रज्ञप्रधानमिति त्रयं सत्यमेव सत । सदनुप्रविष्टत्वात । ततस्तत प्रधानं क्षेत्रज्ञेनाधिष्ठितं कालमनुप्रविश्य क्षेत्रज्ञं क्षोभयन् प्रधानं सङ्कोच्य विकाश्य त्रीन् सत्त्वरजस्तमोगुणान क्रमेणाविद्या नाम कलाविद्याऽभिव्यञ्जयन्ती तत् त्रिगुणलक्षणं कालानुप्रविष्टं क्षेत्रज्ञाधिष्ठितं प्रधानं संहतीकृत्याव्यक्त नामात्मानं

ससर्ज्ज। यो व स स्वयंभूर्भगवानव्यक्तः परमव्योमैव व्योमकेशः प्रथमसंहृतरूपः। स एवेत्थं विद्या तदाश्रयब्रह्मपुरुषादेव्रतत् प्रधानान्तसंहतरूपः सन्नव्यक्तं नाम सदसदात्मकमात्मा बभूव। एष द्वितीयः संहतरूपः पुरुषः।

एतदव्यक्तादिचतुर्व्विंशतितत्त्वानि तथैतच्चतुर्व्विंशतितत्त्वमयं लोकं पुरुषञ्च देवनरादिकं सर्व्वं सत्यमनृतं प्रायेणाचार्य्या नव्याः साङ्ख्या उपदिशन्ति, न तु प्रधानान्तानां सर्गम्। आद्यैस्तु साङ्ख्यैस्तत् सर्व्वमेवोपदिष्टम्। तद्यथा सुश्रुते—"सर्व्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः सम्भवहेतुरव्यक्त नाम। तदेकं बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम्। तस्मादेव क्षेत्रज्ञाधिष्ठितादव्यक्तात् तल्लक्षण एव महानुत्पद्यते।" इत्यादिकमुपदिष्टम्। पराशरेणाप्येतदुपदिष्टं तद्यथा—"गुणसाम्ये ततस्तस्मिन् पृथक् पुंसि व्यवस्थिते। कालः स्वरूपं रूपं तद्विष्णोर्मैत्रेय वर्ण्यते॥ ततस्तत् परमं ब्रह्म परमात्मा जगन्मयः। सर्व्वगः सर्व्वभूतेशः सर्व्वात्मा परमेश्वरः॥ प्रधानं पुरुषञ्चापि प्रवेश्यात्मेच्छया हरिम्। क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययं॥ यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते। मनसो नोपकर्त्तृत्वात् तथासौ परमेश्वरः॥ स एव क्षोभको ब्रह्मन् क्षोभ्यश्च पुरुषो मतः। स सङ्कोचविकाशाभ्यां प्रधानस्य व्यवस्थितः॥ गुणसाम्यात् ततस्तस्मात क्षेत्रज्ञाधिष्ठितान्मुने। गुणव्यञ्जनसम्भूतिः सर्गकाले द्विजोत्तम॥ प्रधानतत्त्वसम्भूतं महान्तं तत् समावृणोत। सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्॥" इत्यादि। शेषं सर्व्वं समानम्। लैङ्गे च—"गुणसाम्ये ततस्तस्मिन् सुविभागे तमोमये। सर्गकाले प्रधानस्य क्षेत्रज्ञाधिष्ठितस्य वै॥ गुणभावाद्व्यज्य आत्मा महान् प्रादुर्ब्बभूव ह। सूक्ष्मेण महता सोऽथ ह्यव्यक्तेन समावृतः॥ सत्त्वोद्रिक्तो महानग्र सत्त्वमात्रः प्रकाशकः। मनो महांस्तु विज्ञेयमेकं तत् कारणं स्मृतम्॥ समुत्पन्नं लिङ्गमात्रं क्षेत्रज्ञाधिष्ठितन्तु तत्। धर्म्मादीनि च रूपाणि तस्य लोकार्थहेतवः॥ मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः। प्रज्ञा चितिः स्मृतिः संविज्ज्ञानं विश्वमेव च॥ महान् सृष्टिं विकुरुते चोद्यमानः सिसृक्षया। सङ्कल्पो व्यवसायश्च तस्य वृत्तिद्वयं स्मृतम्॥ त्रिगुणः स तु विज्ञेयः सात्त्वराजसतामसः। त्रिगुणाद्राजसोद्रिक्तादहङ्कारस्ततोऽभवत्॥ महता चावृतः सोऽभूत् भूतादिर्वाबतस्ततः। तस्मादेव तमोद्रिक्तादहङ्काराद‌जायत॥ भूततन्मात्रसर्गस्तु भूतादिस्तामसस्तु सः। भूतादिस्तु विकुर्व्वाणः शब्दमात्रं ससर्ज्ज ह॥ आकाशं शुषिरं तस्मादुत्पन्नं शब्द-

लक्षणम् । आकाशं शब्दमात्रञ्च भूतादिश्चावृणोत् पुनः ॥ शब्दमात्रं तदाकाशं स्पर्शमात्रं ससर्ज्ज ह । बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः ॥ आकाशः शब्दमात्रस्तु स्पर्शमात्रं समावृणोत् । वायुश्चापि विकुर्व्वाणो रूपमात्रं ससर्ज्ज ह ॥ ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यते । स्पर्शमात्रस्तु वायुर्वै रूपमात्रं समावृणोत् ॥ ज्योतिश्चापि विकुर्व्वाणं रसमात्रं ससर्ज्ज ह । सम्भवन्ति ततश्चापस्ता वै सर्व्वरसात्मिकाः ॥ रसमात्रा अपस्तास्तु रूपमात्रोऽग्निरावृणोत् । आपश्चापि विकुर्व्वन्त्यो गन्धमात्रां ससर्ज्जिरे ॥ संघातो जायते ताभ्यस्तस्य गन्धो गुणो मतः । अद्भिः समावृता भूमिर्गन्धमात्रगुणा तथा ॥ तस्मिंस्तस्मिंस्तु सा मात्रा तेन तन्मात्रता स्मृता । अविशेषवाचकत्वात् अविशेषास्ततस्तु ते ॥ एषान्तघोराऽमूढत्वाद् विशेषास्तु ततश्च ते । भूततन्मात्रसर्गोऽयं विज्ञेयस्तु परं परम् ॥ वैकारिकादहङ्कारात् सत्त्वोद्रिक्तात तु सात्त्विकः । वैकारिकस्तु सर्गोऽयं युगपत् संप्रवर्त्तते ॥ बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्म्मेन्द्रियाणि च । सतैजसात् साधकानि देवा वैकारिकादश ॥ एकादशं मनस्तत्र स्वगुणेनोभयात्मकम् । श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी ॥ शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि वक्ष्यति । पादौ पायुरुपस्थश्च हस्तौ वाक् पञ्चमी भवेत् ॥ गतिर्विसर्गो ह्यानन्दः शिल्पो वाक्यञ्च कर्म्म तत् । आकाशः शब्दमात्रस्तं स्पर्शमात्रं तदाविशत् ॥ द्विगुणस्तु तदा वायुः शब्दस्पर्शात्मकोऽभवत् । रूपमात्रञ्चाविवेश शब्दस्पर्शगुणो मरुत् । त्रिगुणस्तु ततस्त्वग्निः सशब्दस्पर्शरूपवान् ॥ शब्दस्पर्शरूपगुणो रसमात्रं समाविशत् । तस्माच्चतुर्गुणा ह्यापो विज्ञेयास्तु रसात्मिकाः ॥ शब्दस्पर्शरूपरसा गन्धमात्रमथाविशन् । संहता गन्धमात्रेण आचिन्वंस्ते महीमिमाम् ॥ तस्मात् पञ्चगुणा भूमिः स्थूला भूतेषु शब्द्यते । शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः ॥" इति । इत्येतानि चतुर्व्विंशतिस्तत्त्वानि खल्वधस्तात् परमव्योम्नि पञ्चाशदङ्गुलेऽसौ परमात्मा स्वयम्भूर्भगवानव्यक्तः शिवस्तच्चतुर्व्विंशतितत्त्वरूपसर्व्वभूतमयो देवो भूतोद्भवो । एवञ्च लोकं सृष्ट्वा तद्वेदकान् पुरुषान् सिसृक्षुः स सर्व्वभूतमयः पुरुषः स्वादव्यक्तादिचतुर्व्विंशतितत्त्वमयाच्छरीरादादावपः ससर्ज्ज । ततस्तास्वप्सु तानि चतुर्व्विंशतिं तत्त्वानि बीजान्यक्षिपत् । तत्र तैर्बीजैरेकमण्डमभवत् । तस्मिन्नण्डे प्रथमः शरीरी पुरुष एको बभूव । स नारायणो नाम । तदुक्तं मनुना—"सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्ज्जादौ तासु बीजमवासृजत् ॥ तदण्डमभवद्धैमं

सहस्रांशुसमप्रभम्। तस्मिन् जज्ञे स्वयं ब्रह्मा सर्व्वलोकपितामहः॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः। ता यदस्यायनं पूर्व्वं तेन नारायणः स्मृतः॥ यत्तत् कारणमव्यक्तं नित्यं सदसदात्मकम्। तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते॥ तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम्। स्वयमेवात्मनो ध्यानात् तदण्डमकरोद् द्विधा॥ ताभ्यां स शकलाभ्याञ्च दिवं भूमिञ्च निर्म्ममे। मध्ये व्योम दिशश्चाष्टावपां स्थानञ्च शाश्वतम्॥ उद्ववर्हात्मनश्चैव मनः सदसदात्मकम्। मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम्॥ महान्तमपि चात्मानं सर्व्वाणि त्रिगुणानि च। विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च॥ तेषान्त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम्। सन्निवेश्यात्ममात्रासु सर्व्वभूतानि निर्म्ममे॥ यन्मूर्त्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति षट्। तस्माच्छरीरमित्याहुस्तस्य मूर्त्तिं मनीषिणः॥ तदाविशन्ति भूतानि महान्ति सह कर्म्मभिः। मनश्चावयवैः सूक्ष्मैः सर्व्वभूतकृदव्ययम्॥ तेषामिदन्तु सप्तानां पुरुषाणां महौजसाम्। सूक्ष्माभ्यो मूर्त्तिमात्राभ्यः सम्भवत्यव्ययाद्व्ययम्॥ आद्याद्यस्य गुणन्त्वेषामवाप्नोति परः परः। यो यो यावतिथश्चैषां स स तावद्गुणः स्मृतः॥ सर्व्वेषान्तु सनामानि कर्म्माणि च पृथक् पृथक्। वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्म्ममे॥ कर्म्मात्मनाञ्च देवानां सोऽसृजत् प्राणिनां प्रभुः। साध्यानाञ्च गणं सूक्ष्मं यज्ञञ्चैव सनातनम्॥ अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्। दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्॥ कालं कालविभक्तीश्च नक्षत्राणि ग्रहांस्तथा। सरितः सागरान शैलान् समानि विषमाणि च॥ तपो वाचं रतिञ्चैव कामांश्च क्रोधमेव च। सृष्टिं ससर्ज्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः॥ कर्म्मणाञ्च विवेकार्थं धर्म्माधर्म्मौ व्यवेचयत्। द्वन्द्वैरयोजयच्चेमाः सुखदुःखादिभिः प्रजाः॥ अण्व्यो मात्रा विनाशिन्यो दशार्द्धानान्तु याः स्मृताः। ताभिः सार्द्धमिदं सर्व्वं सम्भवत्यनुपूर्व्वशः॥ यन्तु कर्म्मणि यस्मिन् स न्ययुङ्क्त प्रथमं प्रभुः। स तदेव स्वयं भेजे सृज्यमानः पुनः पुनः। हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते। यद् यस्य सोऽदधात सर्गे तत् तस्य स्वयमाविशत्॥ यथर्त्तुलिङ्गान्यृतवः स्वयमेवर्त्तुपर्य्यये। स्वानि स्वान्यभिपद्यन्ते तथा कर्म्माणि देहिनः॥ लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत्॥" इति। इत्युक्तया रीत्याऽण्डमध्याज्जातोऽसौ नारायणो नाम महान् ब्रह्मा सर्व्वतत्त्वमय आदिभूतत्वादादित्यः। सर्व्वमेव सूक्ष्मं सुषुवे तस्मात् सविता। तद्यथा—तस्य दक्षिणपार्श्वात् प्रधानं नाम योऽसौ ब्रह्मा

स रजोगुणमाश्रित्य सरस्वत्या सह चतुर्म्मुख एव सत्यलोकस्थो ब्रह्माविर्बभूव। योऽसौ क्षेत्रज्ञः पुरुषो विष्णुः स एव सत्त्वगुणमाश्रित्य लक्ष्म्या सहैव वैकुण्ठस्थो विष्णुश्चतुर्भुज आविर्बभूव। कल्पान्तमहाकल्पान्तप्राकृतप्रलयेष्वस्य हृदयात् रुद्राधिदैवतः कालो महाविष्णुर्हरिराविर्भूय रुद्ररूपी सन् संहृत्य जनार्द्दनो नाम विष्णुः सन्नहिपर्य्यङ्के शयानो वर्त्तते। इत्येष एव त्रयो देवा इत्युक्तम्। अथैष नारायणो महान् ब्रह्मा तदण्डं द्विधा कृत्वा तस्योर्द्ध्वेनाण्डकपालेन सुवर्णमयेन स्वर्गलोकमधोऽण्डकपालेन सप्तपातालसहितां भूमिं निर्म्ममे। मध्ये दिक्कालाभ्यां सहैकीकृत्य यदिदं द्यावापृथिव्योरभ्यन्तरमन्तरीक्षं यद्व्योम तद्भुवर्लोकं निर्म्ममे। या दिक् महाभूतस्याकाशस्याधिदेवता सात्त्विकादहङ्काराद्बभूव तां कालेन नभोभागैरेकीकृत्याष्टौ दिशश्च निर्म्ममे। शाश्वतञ्चापां स्थानं सोममण्डलं निर्म्ममे। एवं निर्म्माय सर्व्वतत्त्वमयात् स्वस्य शरीरात् मन उज्जहार। तद्धि सदसदात्मकं सात्त्विकाहङ्कारसम्भूतसत्त्वगुणबहुलत्रिगुणानुप्रविष्टपञ्चब्रह्मपुरुषर्ग्वेदादिमयत्वात्। पञ्च ब्रह्मपुरुषा मनःक्रियागुणव्यपदेशाभावात् प्रागसत्। त्रिगुणन्तु सदिति। एवमुक्तं मनोमयकोषव्याख्याने—"तस्य यजुरेव शिर ऋग्दक्षिणः पक्षः सामोत्तरः पक्ष आदेश आत्माऽथर्व्वाङ्गिरसः पुच्छं प्रतिष्ठेति।" अत्रादेशः सदाशिवो विद्याश्रयः पुरुषः। तस्मान्मनसश्चाभिमन्तारमीश्वराधिदैवतमहङ्कारमुज्जहार। ततश्चैव महान्तमप्यात्मानं जीवसंज्ञमव्यक्तात्मानुप्रविष्टमव्यक्तस्थत्रिगुणानुप्रविष्टविद्याश्रयसदाशिवात्मकं प्रज्ञानमुज्जहार। विज्ञानमयकोषव्याख्याने चोक्तं—"तस्य श्रद्धैव शिरः सत्यं दक्षिणः पक्ष ऋतमुत्तरः पक्षो योग आत्मा महः पुच्छं प्रतिष्ठेति।" विषयाणां ग्रहीतॄणि श्रोत्रादीनि पञ्च बुद्धीन्द्रियाणि सर्व्वाणि खल्वाहङ्कारिकत्रिगुणमयानि शनैः क्रमेणोज्जहार। एवमुद्धृतेषु तेषु मनोऽहङ्कारमहत्पञ्चबुद्धीन्द्रियेषु मध्ये तेषां षण्णाममितौजसामहङ्कारपञ्चबुद्धीन्द्रियाणां सूक्ष्मान् सूक्ष्मानेकैकानवयवान् तास्वात्ममात्रास्वव्यक्तानुप्रविष्टप्रज्ञानमात्रासु मध्ये त्वेकैकस्यामात्ममात्रायां सन्निवेश्य सर्व्वभूतानि सूक्ष्मशरीरिणो निर्म्ममे। एषां संज्ञामाह—यद् यस्मात् षट् तेषामहङ्कारादीनां षण्णां सूक्ष्मा मूर्त्त्यवयवा इमानि वक्ष्यमाणानि महाभूतादीनि आश्रयन्तीति तस्मात् तस्य मूर्त्तिं तस्य शरीरमित्याहुः। यदा षण्णां सूक्ष्मानवयवान् खल्वात्ममात्रासु सन्निवेशयामास तदा महान्ति पञ्च भूतानि सर्व्वभूतकृदव्ययं मनश्च सूक्ष्मावयवैः सूक्ष्मैश्चावयवैः कर्म्मभिः पञ्चेन्द्रियैः पाय्वादिभिः सह विशन्ति।

तदुक्तवन्तं कुशिकमाह तन्नेति शौनकिः।
कस्मान्मातापितृभ्यां हि विना षड्धातुजो भवेत् ॥
पुरुषः पुरुषं गौर्गामश्वोऽश्वन्तु प्रजायते।
मातापितृभवाश्चोक्ता रोगास्तावत्र कारणम् ॥ ८ ॥ *

इति पञ्चमहाभूतमनःपञ्चकर्म्मेन्द्रियपञ्चबुद्धीन्द्रियाहङ्कारा इति सप्तदशकं लिङ्गं महत आत्मनः सूक्ष्मशरीरमव्यक्तस्यात्मनः सह महताष्टादशकं लिङ्गमिति। पञ्च शब्दादयश्च महाभूतसहचरितत्वान्न पृथगुक्ताः। अत एव तेषां महौजसां सप्तानां बुद्धीन्द्रियाणां पञ्चानामहङ्कारस्य महतोऽव्यक्तानुप्रविष्टमहतश्चात्मनश्च सूक्ष्माभ्यो मूर्त्तिमात्राभ्यः खल्वव्ययादस्मात् सूक्ष्मशरीराद्वयं स्थूलशरीरं सम्भवतीति। तदव्यक्तानुप्रविष्ट एव महानात्मशब्देनोच्यते। स हि चेतनाधातुः पञ्च महाभूतानीति षड्धातवः पुरुषस्योत्पत्तौ कारणानि रोगाणाञ्च कारणानि। इत्येवमाद्यः साङ्ख्यः परीक्षितः। इति ॥ ७ ॥

गङ्गाधरः—तदित्येवमुक्तवन्तं कुशिकं हिरण्याक्षं शौनकिराह। तन्नेति। तत्र प्रश्नमाह—कस्मादित्यादि। सूक्ष्मशरीरी षड्धातुः पुरुषो भवतु बीजधर्म्मा। तस्मादेव केवलात् मातापितृभ्यां विना कस्मादेष राशिः स्थूलपुरुषो जातो भवेत्? मातापितृभ्यां विना स्वेदजा उद्भिज्जा जायन्त इति दृश्यते इति चेत् तत्राह—पुरुष इत्यादि। न खलु सर्व्वे प्राणिनः स्वेदजोद्भिज्जवद् विना मातापितृभ्यां जायन्ते। पुरुषो देवनरादिस्तद्विधमेव पुरुषं प्रजायते उत्पादयति। न तु गामश्वं वा। गौश्च गां प्रजायते न देवनरादिपुरुषमश्वं वा। अश्वश्चाश्वं प्रजायते न देवनरादिपुरुषं गां वान्यं वेति। तस्मान्मातापितृभवाः पुरुषा रोगाश्च मेहादयो मातापितृभवा उक्ताः। अत एव तौ मातापितरौ खल्वत्र पुरुषोत्पत्तौ रोगोत्पत्तौ च कारणम्। तद्यथा—मातापित्रोः

चक्रपाणिः—कुशिक इति हिरण्याक्षस्य नाम। कस्मादित्याक्षेपे, मातापित्रनपेक्षित्वे सर्व्वप्राणिषु षड्धातुसमुदायस्य विद्यमानत्वेन नरगोऽश्वादिभेदो न स्यादिति भावः। हेत्वन्तरमाह—पित्र्या मेहादयश्चोक्ता इति,—पितृतोऽपत्यं गच्छन्तीति पित्र्याः, आदिशब्देन कुष्ठार्शःप्रभृतयो ग्राह्याः; स्वपक्षं दर्शयति—तावत्र कारणमिति, तौ मातापितरौ ॥ ८ ॥

* पुरुषः पुरुषाद् गौर्गौरश्वादश्वः प्रजायते।
पित्र्या मेहादयश्चोक्ता रोगास्तावत्र कारणम् ॥ इति चक्रसम्मतः पाठः।

भद्रकाप्यस्तु नेत्याह न ह्यन्धोऽन्धं प्रजायते ।
मातापित्रोरपि च ते प्रागुत्पत्तिन जायते * ॥
कर्म्मजस्तु मतो जन्तुः कर्म्मजास्तस्य चामयाः ।
न ह्यृते कर्म्मणो जन्म रोगाणां पुरुषस्य वा ॥ ९ ॥

अदुष्टार्त्तवरेतसोः ऋतुकाले मातुरदुष्टगर्भाशयायाः पित्रा सह संयुक्ताया गर्भाशयगतं रेतो यदार्त्तवेन संयुक्तं भवति तदा षड्धातुः सूक्ष्मशरीरी वीजधर्म्मान्त गर्भमवक्रम्य प्रविश्य पूर्व्वमाकाशादीन् पञ्चमहाभूताख्यान् धातून् सृजति। ततः पितृजशुक्रगतपञ्चमहाभूतमातृशोणितगतपञ्चमहाभूतमातृभुक्तगतपञ्चमहाभूतानि चेत्येवं चतुर्व्विधपञ्चाकाशादिधातवः सूक्ष्मशरीरी चात्मेति षड्भ्यो जायते पुरुषस्तेभ्य एव च रोगा आदिबलप्रवृत्ताः कुष्ठार्शःप्रभृतयः शुक्रशोणितदोषान्वयाः पितृजाश्च मातृजाश्चेति द्विधा ॥ ८ ॥

गङ्गाधरः—इति शौनकिवचनं श्रुत्वा भद्रकाप्यस्तु तन्नेत्याह। कस्मात्? न ह्यन्धोऽन्धं प्रजायते इति। हि यस्मादन्धो नान्धं पुरुषः पुरुषं गौर्गामश्वो वाऽश्वं प्रजायते। तस्मान्न मातापितृभवा राशिपुरुषाः। अपि च ते तव मातापित्रोः प्रागुत्पत्तिर्न युज्यते। तयोरपि मातापितरौ, तयोरपि मातापितरावित्येवं वीजभूतयोस्तयोरमातापितृभवत्वमन्तरेणोपपत्तिन स्यादिति। सत्यम्। वीजभूतौ मातापितरौ न मातापितृजौ भवतः। तदुक्तं मनुना तत्र नारायणस्योत्पत्तिरण्डमध्यतो दर्शिता तेन नारायणेन च सृष्टानि शूद्रान्तानि सूक्ष्माणि दर्शितानि स्थूलपुरुषसर्गश्चोक्तः—"द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत्। अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभुः॥ तपस्तप्त्वाऽसृजद्यन्तु स स्वयं पुरुषो विराट्। तं मां वित्तास्य सर्व्वस्य स्रष्टारं द्विजसत्तमाः॥" इति। एवं तर्हि चामातापितृजश्च स वीजपुरुषो नारायण इत्यनैकान्तो नाशङ्क्यः स हि न राशिसंज्ञः पुरुषः। विराडादयस्तु राशिपुरुषा इत्येवमुपपत्तौ चाह—(देवनरादि विशेषोपपत्तिर्न स्यात् तस्मादुच्यते) कर्म्मजस्त्वित्यादि। जन्तुस्तु

चक्रपाणिः—न ह्यन्ध इत्यादि। मातापितृकारणत्वेऽन्धेन जातोऽन्धः स्यादित्यर्थः। हेत्वन्तरमाह—मातापित्रोरपीत्यादि। ते तव मातापितृकारणवादिनः, प्रागिति सर्गादौ निःशरीरिणि मातापित्रोरुत्पत्तिर्न स्यात्, सर्गादौ निःशरीरिण्यादिभूतयोर्मातापित्रोरभावादुत्पादो नोपपन्न इति भावः॥ ९॥

* युज्यते इति द्वितीयः पाठः।

भरद्वाजस्तु नेत्याह कर्त्ता पूर्व्वं हि कर्म्मणः।
दृष्टं न चाकृतं कर्म्म यस्य स्यात् पुरुषः फलम्॥

सर्व्व एव कर्म्मजः शुभाशुभकर्म्मफलदैवजः। तस्य च रोगाः कर्म्मजा एव। कस्मात्? तत आह—न ह्यत इत्यादि। हि यस्मात् कर्म्मणः शुभाशुभलक्षणाद्वाङ्मनःशरीरारम्भाद् वैधावैधादृते पुरुषस्य रोगाणां वा न जन्म स्यात्। कर्म्म हि सद्यःफलं कालान्तरफलञ्च। सद्यःफलमाहाराचारादि कालान्तरफलञ्च तथा यज्ञादिवैधमवैधञ्च पापकर्म्मेति॥ ९॥

गङ्गाधरः—तद्भद्रकाप्यवचनं श्रुत्वा तन्नेत्याह भरद्वाजः कुमारशिराः। कस्मात्? कर्त्ता पूर्व्वं हि कर्म्मण इत्यादि। हि यस्मात् कर्म्मणः पूर्व्वं राशिपुरुषः कर्त्तास्ति स कुतो जातः? नन्वस्त्यकृतं प्रसिद्धं कर्म्म ततः पुरुषो जायत इति चेत् तत्रोच्यते—दृष्टमित्यादि। यस्य कर्म्मणः फलं पुरुषः स्यात् पुनर्ज्जन्म पुरुषस्य स्यात् तत् कर्म्म न खल्वकृतं योगिभिर्दृष्टं कर्म्मणः कर्त्तुस्तस्य जन्म कुतः कर्म्म स्यान्न च किमपि पूर्व्वं तत् पुरुषेणाकृतमस्ति। तस्मान्न कर्म्मजः पुरुषः। सत्यञ्च तत्। यः पुरुषः प्रथमो जातस्तस्य तत्प्रथमजन्मनो हेतुर्नारायणकृतमेव दैवं न स्वकृतम्। तत्र जन्मनि यत् स्वकृतं कर्म्म तत्फलं तस्य पुनर्ज्जन्म। तस्मात् कर्म्मजः पुरुषः। उक्तञ्चैतत् मनुना तद्दर्शितमग्रे—“सर्व्वेषान्तु स नामानि कर्म्माणि च पृथक् पृथक्” इत्यारभ्य “कर्म्मणाञ्च विवेकार्थं धर्म्माधर्म्मौ व्यवेचयत्” इत्यादिना। तथा चासौ नारायणो महान् ब्रह्मा सूक्ष्मशरीरिणः पुरुषान् सृष्ट्वा पृथक् पृथक् नामानि देवनरपशुपक्षिप्रभृतीनि तेषां नामानि कर्म्माणि देवानां नराणां पशुपक्ष्यादीनां पृथक् पृथक् निर्म्ममे। तत्र हिंस्राहिंस्रमृदुक्रूरधर्म्माधर्म्मसत्यानृतादिद्वन्द्वकर्म्माणि सृष्ट्वा यस्मिन् कर्म्मणि यं सूक्ष्मं पुरुषं तत् प्रथमसर्गकाले नियुक्तवान्। स पुमान् पुनःपुनर्जायमानः स्वयमेव तत् कर्म्म भजते। तच्च कर्म्म तं स्वयमाविशति। तत् कर्म्मणाञ्च फलस्य विवेचनार्थं धर्म्माधर्म्मौ स नारायणो विवेचयाञ्चकार। इति तन्नारायणब्रह्मणा कृतकर्म्मवशाज्जातः पुरुषो देवनरादि-

चक्रपाणिः—कर्त्ता पूर्व्वं हीत्यादि। कर्म्मणः पूर्व्वं कर्त्ता भवतीति शेषः, येन कर्म्मणा स पुरुषः कर्त्तव्यः, तस्य कर्म्मणः पुरुषपूर्व्वभाविकत्वात् कारणत्वं स्वीकर्त्तव्यम्, ततश्च स चेद् विना कर्म्म पुरुषोऽभूत्, कथं पुरुषस्य कर्म्म कारणमिति भावः; अथ शङ्कते—अकृतमेवादौ पुरुषजनकं कर्म्म भविष्यतीत्याह—दृष्टं न चेत्यादि। अकृतं कर्म्म न दृष्टं प्रमाणेन नोपलभ्यम्

भावहेतुः स्वभावस्तु व्याधीनां पुरुषस्य च ।
खरद्रवचलोष्णत्वं तेजोऽन्तानां यथैव हि ॥ १० ॥
काङ्कायनस्तु नेत्याह न ह्यारम्भफलं भवेत् ।
भवेत् स्वभावाद् भावानामसिद्धिः सिद्धिरेव च ॥
स्रष्टा त्वमितसङ्कल्पो ब्रह्मापत्यं प्रजापतिः ।
चेतनाचेतनस्यायं कारणं * सुखदुःखयोः ॥ ११ ॥

योनिषु ब्राह्मणादिवर्णतया जातोऽपि कश्चिद्धिंस्रः कश्चिदहिंस्रः कश्चिन्मृदुः कश्चित् क्रूरः कश्चिद्धार्म्मिकः कश्चिदधार्म्मिकः कश्चित् सत्यवादी कश्चिन्मिथ्यावादीत्येवमादि विशेषो भवति। इत्येवञ्चेदुच्यते तत्राह—भावहेतुरित्यादि। योऽसौ प्रथमसर्गे नारायणेन हिंसाहिंसादिभिर्यो नियुक्तः स खलु हिंसादिको धर्म्मः स्वभाव उच्यते। न कर्म्म। स एव स्वभावो नाम पुरुषस्य भावहेतुर्व्याधीनाञ्च भावहेतुरिति। तत्र दृष्टान्तः—खरेत्यादि। हि यस्माद् यथैव तेजोऽन्तानां भूजलानिलतेजसां क्रमेण खरत्वादयः स्वभावाः आदिसर्गे तथैव सृष्टत्वात् ॥१०॥

गङ्गाधरः—तद्भरद्वाजवचनं श्रुत्वा काङ्कायनो नेत्याह बाह्लीकभिषक्। कस्मात्? तत आह—न ह्यारम्भेत्यादि। हि यस्मादिह पुरुषेणारभ्यते यत् यत् कर्म्म तस्य तस्यैवारम्भस्य शुभस्याशुभस्य वा तथाविधं शुभमशुभं वा फलं भवेत्। न स्वभावादेव भावानां शुभाशुभानां सिद्धिरसिद्धिर्वा भवेत्। तस्मान्न स्वभावजः पुरुषः स्वभावजा व्याधयः। किं तर्हि तयोः कारणमिति? अत आह—स्रष्टा त्वित्यादि। अमितसङ्कल्पो ब्रह्माऽसौ नारायणः प्रजापतिरपत्यं सृष्टा यथा सूक्ष्मशरीरिणां स्रष्टा तथा राशिसंज्ञमपत्यञ्च स्रष्टा

इत्यर्थः, यस्मात् शुभाशुभकर्म्म क्रियाजन्यमेव धर्म्माधर्म्मरूपं सर्व्वं भवतीति भावः ; भावहेतुरुत्पत्तिहेतुः। स्वाभाविकत्वे दृष्टान्तमाह—खरेत्यादि। तेजोऽन्तानामिति "खरद्रवचलोष्णत्वं भूजलानिलतेजसाम्" इत्यादि वक्ष्यमाणक्रमेण भवेत् ॥ १० ॥

चक्रपाणिः—स्वभावादित्यत्रादौ "यदि" इत्यध्याहर्त्तव्यम्, तेन यदि स्वभावादेव भावानां विकारशरीरादीनां सिद्ध्यसिद्धी भवतः, तदा आरम्भफलं न भवेत्, स्वाभाविकत्वाद् भावानाम् ; य इमे लोकशास्त्रसिद्धा यागकृष्यध्ययनाद्यारम्भास्ते निष्प्रयोजना भवेयुरकारणत्वादित्यर्थः। स्रष्टेत्यादौ—जगतः सुखदुःखयोश्च स्रष्टा प्रजापतिरिति योजना ; स च ब्रह्मणोऽपत्यम् ; अमित-

* चेतनाचेतनस्यास्य जगत इति वा पाठः ।

तन्नेति भिक्षुरात्रेयो न ह्यपत्यं प्रजापतिः।
प्रजाहितैषी सततं दुःखैर्युञ्ज्यादसाधुवत् ॥
कालजः पुरुषस्तत्रैव कालजास्तस्य चामयाः।
जगत् कालवशं सर्व्वं कालः सर्व्वत्र कारणम् ॥ १२ ॥
तथर्षीणां विवदतामुवाचेदं पुनर्व्वसुः।
मैवं रोचत तत्त्वं हि दुष्प्राप्यं * पक्षसंश्रयात् ॥

प्रथममर्द्धेन नारी भूत्वार्द्धेन पुरुषो भूत्वा विराजमसृजदित्येवं प्रागदर्शितं मनूक्तमिति। तथा चेतनाचेतनस्य देवनरादेर्वृक्षादेश्च जगतः सुखदुःखयोश्चायं ब्रह्मा स्रष्टा। सुखमारोग्यं दुःखं विकारः। तन्मनूक्तं प्रागदर्शितम्—'द्वन्द्वैरयोजयच्चेमाः सुखदुःखादिभिः प्रजाः' इति। प्रथमसर्ग एव सुखदुःखादियुक्ताः प्रजाः सूक्ष्मा ब्रह्मणा सृष्टा इति ॥ ११ ॥

गङ्गाधरः—तत् काङ्कायनवचनं श्रुत्वा आत्रेयो भिक्षुस्तन्न इत्याह। कस्मात्? तत आह—न ह्यपत्यमित्यादि। प्रजाहितैषी प्रजापतिर्ब्रह्मा हि यस्मादसाधुवत् सततमपत्यं दुःखेन युज्यात्। यच्च मनुनोक्तं द्वन्द्वैः सुखदुःखादिभिरिमाः प्रजा अयोजयदिति, तदादिसर्गे सूक्ष्मशरीरिप्रजाः सुखदुःखादिद्वन्द्वभाक्शीलताभिरयोजयदिति। यो हितमाचरेत् स सुखं भुञ्जीत यस्त्वहितं स दुःखमिति। तस्मात्तु ब्रह्मा प्रथममपत्यं विराजं विना नान्यदपत्यं सृजति न च रोगस्य कारणमिति। तर्हि कस्मात् पुरुषो जायते कस्माद्वा तस्य रोगा इति? अत आह—कालज इत्यादि। पुरुषः कालजः कालविशेषाज्जायते। तस्यामयाश्च कालजाः कालाज्जायन्ते। जगत् सर्व्वं कालवशम्। तस्मात् सर्व्वत्रैव कालः कारणं भवति ॥ १२ ॥

गङ्गाधरः—तथर्षीणां विवदतां निरुक्तरूपेण विवदमानानामृषीणां पारीक्षिप्रभृतीनां विवादं श्रुत्वा पुनर्व्वसुरात्रेय इदमुवाच। किमुवाच तदाह—

सङ्कल्प इति युगपदपरिमितस्थावरजङ्गमरूपकार्य्यकर्तृत्वेनापरिमितजननसङ्कल्प इत्यर्थः। असाधुवदित्यसाधुरिवापत्यद्रोहकारी ॥ ११।१२ ॥

चक्रपाणिः—पक्षसंश्रयादिति रागतः पक्षसंग्रहात्; निश्रितानिवेति परमार्थतोऽनिश्रिता एव, परं पक्षरागात् बुद्धिप्रकर्षैर्न्निश्रिता इवाभिधीयन्ते पक्षा इत्यर्थः। पक्षान्तमिति सत्यवाचीव-

* रोचत इत्यत्र वोचत तथा दुष्प्राप्यमित्यत्र दुष्प्रापम् इति पाठः।

वादान् सप्रतिवादांश्च वदन्तो निश्चितानिव ।
पक्षान्तं नैव गच्छन्ति तिलपीड़कवद्गतौ ॥
मुक्त्वैवं वादसंघट्टमध्यात्ममनुचिन्त्यताम् ।
नाविधूते तमःस्कन्धे ज्ञेये ज्ञानं प्रवर्त्तते ॥
येषामेव हि भावानां सम्पत् संजनयेन्नरम् ।
तेषामेव विपद्व्याधीन् विविधान् समुदीरयेत् ॥ १३ ॥

नैवं रोचत । एवं भवन्तो मा रोचत । कस्मादिति ? अत आह—तत्त्व हीत्यादि । हि यस्मात् तत्त्वं याथात्म्यं पक्षसंश्रयात् दुष्प्राप्यं भवति । कस्मादिति ? अत आह—वादानित्यादि । यस्माद् वादिनः सप्रतिवादान् वादांश्च निश्चितानिव वदन्तो नैव पक्षान्तं गच्छन्ति । तिलपीडकवद्गतौ । यथा तिलपीडकस्तिलानां गतौ नैवान्तं गच्छति । तस्मादेवं वादसंघट्टं तमः-स्कन्धकार्य्यं मुक्त्वाऽध्यात्ममात्मानमधिकृत्य भवद्भिरनुचिन्त्यताम् । कस्मादिति ? अत आह—नाविधूत इत्यादि । हि यस्मादविधूते तमःस्कन्धे सति ज्ञेयेऽर्थे ज्ञानं न प्रवर्त्तते । प्रवर्त्तते तु खलु विधूत एव सति तमःस्कन्धे । इति ।

इत्येवमुक्त्वा पुनर्व्वसुः स्वयमत्र तत्त्वमाह—येषामित्यादि । येषां भावानां सम्पत् खल्ववैगुण्यं नरं संजनयेत्, तेषामेव भावानां विपत् खलु वैगुण्यं विविधान् व्याधीन् समुदीरयेत् संजनयेत् । अव्यापन्ना ह्येते भावाः खलु नरं संजनयन्ति । आत्मा च मनश्च रसश्च षड्धातुकश्च मातापितरौ च कर्म्म च स्वभावश्च ब्रह्मा च कालश्चेति । व्यापन्नाश्चैते तस्य नरस्य विविधान् व्याधीन् संजनयन्ति । न त्वव्यापन्न एषामेकैको भावो नरं संजनयति । व्यापन्नो वाप्येकैको व्याधीन् संजनयतीति । तत्रात्मनः सम्पत् खलु पर-लोकभोगावसानं जन्मकारणीभूतकर्म्मफलपरिणामश्च । ततो जातस्यात्मनो व्यापत् खल्वशुभकर्म्मफलाक्रमजातस्वभावविशेषः । ततश्च प्रज्ञापराधाद् धीधृति-

पारमार्थं पक्षान्तम्; तिलपीडकस्तैलार्थं यन्त्रोपरिस्थितो मनुष्यः, तिलपीडको यथा,—गतौ गमने सति गम्यदेशाप्राप्त्या चान्तं नासादयति, पुनस्तत्रैव भ्रमणात्; तथा—पक्षसंश्रयाद् वादिनोऽपीत्यर्थः; संघट्टोऽन्योन्यपीडको मेलकः; अध्यात्मं तत्त्वम्; स्कन्धः समूहः; पक्षरागाद्येव तत्त्वज्ञानप्रतिबन्धकत्वेन 'तमःस्कन्धः' उच्यते । सिद्धान्तमाह—येषामित्यादि । येषा-

स्मृतिभ्रंशादयथार्थमिच्छा भवतीत्येवमात्मनो व्यापदि मनोऽप्यापद्यथावत-प्रवृत्तिर्भवति। आत्मसम्पदि तु यथावत मनःप्रवृत्तिः स्यादिति मनसः सम्पत्। रसव्यापत पुनरसात्म्याहारकृतदोषः। षड्धातुकपुंसो व्यापत खल्वादिसर्गे हिंसाहिंसादिस्वभावयोगः परलोकभोगानवशेषप्रयुक्तगर्भानवक्रान्तिप्रभृतिः। मातृव्यापत्—दुष्टार्त्तवगर्भाशययोनिभावः। अपत्यजननकर्म्मफलस्याप्यभावा-सौष्ठवे। पितृव्यापच्च ते दुष्टशुक्रता च। कर्म्मणो व्यापत् तु—असम्यक्-कृतता पूर्व्वजन्मनि। स्वभावव्यापत—पूर्व्वकृततत्कर्म्मफलव्यापज्जात-स्वभावता। विधातुर्व्यापत्—अयथावत्कृतपूर्व्वजन्मकर्म्मफलायत्तता। काल-व्यापत पुनः—कृतयुगादिस्वभावात क्रमेण वस्तूनां रसवीर्य्यविपाकप्रभावह्रास-कृतस्वभावस्तत्स्वभाववैपरीत्यञ्च। ततः क्रमेण पुंसां बलवीर्य्यपराक्रम-शीलाचारशौचविद्याबुद्धिदेहेन्द्रियशक्तिप्रभृतीनां हानिर्भवति। अशुभक्षणता च कालव्यापत। इत्येवं व्यापन्नेष्वात्मादिषु व्यस्तेषु समस्तेषु यथार्हं व्याधयः स्युः। अव्यापन्नेषु तेषु सर्व्वसम्पदुपेतः पुरुषो जायते। समस्तेषु व्यस्तेषु तु यथातथं सम्पदुपेतः स्यादिति यज्जः पुरुषो न तज्जास्तस्य व्याधय इति सिद्धान्तः।

अथात्र वयमाशङ्कामहे। श्रूयते यद्यजुर्व्वेदीयतैत्तिरीयशाखायाम् उप-निषदि भृगुवल्ल्याम्—ईश्वरादेव खलु व्योमकेशात् परमात्मनो ब्रह्मणो भूतानां जन्मादि। न च तस्य व्यापदस्ति। कथम्? तर्हि येषां भावानां सम्पकारं संजनयेत् तेषां व्यापद्विविधान् व्याधीन् संजनयेदिति। तद्यथा भृगुवल्ल्यां श्रुतिः—"भृगुर्वै वारुणिर्वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मा एतत् प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। तं होवाच यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभि-संविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वाऽन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं

भिति यज्जातीयानां, ते च महाभूतादयः ; तेन महाभूतत्वेनैव भ्रातादीनां ग्रहणम् ; सम्पदिति

पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा मनो ब्रह्मेति व्यजानात्। मनसो ह्येव खल्विमानि भूतानि जायन्ते मनसा जातानि जीवन्ति। मनः प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा विज्ञानं ब्रह्मेति व्यजानात्। विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते। विज्ञानेन जातानि जीवन्ति। विज्ञानं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वानन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति। सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता। य एवं वेदेत्यादि।" अत्र परमे व्योमन् प्रतिष्ठितेत्युपसंहारवचनेन शुक्रशोणितारम्भकाकाशप्राणमनोविज्ञानानां भूतजन्मजीवनादिकारणत्वं निराकृत्य परव्योमरूपस्य परमात्मन ईश्वरस्य व्योमकेशस्योक्तेस्तस्य निर्विकारस्य व्यापन्नं सम्भवति। कथं यज्जः पुरुषस्तज्जा न तस्य व्याधय इति स्यात्। इति तस्याकमाशङ्केति।

अत्रोच्यते तत्त्वविद्भिः। उक्तं श्वेताश्वतरोपनिषदि—"न तस्य कार्य्यं करणञ्च विद्यते न तत्समश्चाप्यधिकश्च दृश्यते परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।" इति। तथा—"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्॥" शरणमहं प्रपद्ये इति पूर्व्वोक्तेनान्वयः। इति। तस्य परमव्योम्नः शिवस्य परमात्मनः खलु कार्य्याभावो निष्क्रियत्वात्। वाङ्मनःशरीरप्रवृत्तिरूपक्रियाभावात् तस्य कार्य्याभाव उक्तः। पुनश्चोक्तस्तत्रैव "स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकारोऽगुणी सर्व्वविद्यः। प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः॥" इति मन्त्रे विश्वकृदिति। तथा तत्रैव—"छन्दांसि यज्ञाः कवयो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति। यस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः"। इति मन्त्रेण मायाविशिष्ट

मन्दकगुरुत्वं ; नरमिति संयोगिपुरुषम्, विपदिति वैगुण्यं, ससुवीरयेदिति जनयेत्। एतेषाम् ऋषिवादानां कथनं पूर्व्वपक्षसिद्धान्तश्रवणेन शिष्यसन्देहनिवृत्त्यर्थम्॥ १३॥

एतद्विश्वं सृजते इति चोक्तम्। तस्मात् स्वयं किञ्चिदपि न करोतीति तस्य न कार्य्यमस्ति। ज्ञानबलक्रियाभिः शक्तिभिर्विश्वं क्रियत इति तच्छक्तिमत्त्वाद्विश्वकृदित्युक्तम्। तद्यथा—अतिपरमसूक्ष्मध्वन्यादिमभावगुणवती अतिपरमव्योमरूपा शक्तिरेव मूलं ब्रह्म। तत् प्राक् सर्गात् क्रियागुणव्यपदेशाभावादसदेव सत्। तत् तेजोऽसृजत्। तत्तेजोऽपोऽसृजत्। ता आपोऽन्नम् असृजन्त इति तिस्रो देवताः सृष्ट्वा ताभिर्विशिष्टाऽसावजा शक्तिर्लोहितशुक्लकृष्णवदाभासाऽतिसूक्ष्मध्वन्यवरुद्धाऽतिसूक्ष्मव्योमरूपा वाग्बभूव। सा खलु सर्व्वाणि गायति च त्रायते च संसारादिति गायत्री नाम महामाया शक्तिः। सा पुनः शान्तिर्विद्या प्रतिष्ठा निवृत्तिरिति चतस्रः शक्तयो भूत्वैकीभूय तच्चतुर्व्यूहः परमव्योमरूपः परमात्मा व्योमकेशः शिवो बभूव। स चानन्तशक्तिमान्। तस्य स्वाभाविक्यस्तिस्रः शक्तयो ज्ञानशक्तिरिच्छाशक्तिः क्रियाशक्तिश्चेति। ततः परमात्मा शिवः परमव्योमरूप आत्मयोनिर्ब्रह्मयोनिश्चेत्युक्तम्। तथा चोक्तं श्वेताश्वतरोपनिषदि—"ब्रह्मवादिनो वदन्ति। किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च सम्प्रतिष्ठिताः। अधिष्ठिताः केन सुखेतरेषु वर्त्तामहे ब्रह्मविदो व्यवस्थम्॥ कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुषेति चिन्त्या। संयोग एषां न तु आत्मभावादात्माप्यनीशः सुखदुःखहेतोः॥ ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्। यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः॥" इति कालादीनामेकैकस्य जन्मादिकारणत्वाभावेन ब्रह्मत्वं निराकृत्य देवस्य परमव्योम्नः शिवस्यात्मा या शक्तिस्तस्याः सर्व्वेषां जन्मादिकारणत्वाद्ब्रह्मत्वमुक्तम्। सैवाजा सर्व्वं ससर्ज्जेति चोक्तम्—"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः।" इति। छान्दोग्योपनिषदि चोक्तम्—"गायत्री वा इदं सर्व्वं भूतं यदिदं किञ्च। वाग्वै गायत्री वाग्वै सर्व्वंभूतं गायति च त्रायते चेति।" तद्यथा तदप्युक्तं तत्रैव—"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति। तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति च। सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्यकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति गायत्री शिवेनैकीभूय शिवेन सह सर्व्वं ससर्ज्जेति।" नन्वेवं तर्हि गायत्र्याः परमात्मादि सर्व्वं जातं कथं यतो वा इमानि भूतानि जायन्ते इत्यादि विधा परमे व्योम्नि

**आत्रेयस्य भगवतो वचनमनुनिशम्य पुनरपि वामकः काशिपतिरुवाच भगवन्तमात्रेयम्। भगवन्! सम्पत्तिनिमित्तजस्य पुरुषस्य विपत्तिनिमित्तजानाञ्च रोगाणां किमभिवृद्धिकरं भवतीति? तमुवाच भगवानात्रेयः—हिताहारोपयोग एक एव पुरुषस्याभिवृद्धिकरो भवति, अहिताहारोपयोगः पुनर्व्याधिनिमित्तमिति ॥ १४ ॥**

परमात्मनि प्रतिष्ठां गच्छतीति चेत्? न। परमव्योम्नो हि जन्मादिव्यवच्छेदाथस्य इमानीत्युक्तम्। इमानि हि भूतानि गायत्र्या विशिष्टात् परमव्योम्नः खिला-ज्जायन्ते। एतज्ज्ञापनार्थं पूर्व्वमुक्तम्। तस्मा एतत् प्रोवाच—अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। शक्तिब्रह्म हि अतिसूक्ष्मध्वन्यादिमद्रतिपरम-व्योमरूपत्वात् श्रोत्रं ब्रह्म तेजश्चक्षुरापः प्राणोऽन्नमन्नं गायत्री वाक् स्वयं मन इति संहतरूपं परमव्योम खल्वन्नेन सर्व्वं बिभ्रदन्नं विश्वम्भरः प्राणेन प्राणन् प्राणश्चक्षुषा पश्यंश्चक्षुः श्रोत्रेण शृण्वन् श्रोत्रं स्वयं मन्वानो मनो वाचा वदन् वाक् परमात्मनि। तस्य तेजोऽवन्नान्यंशाः परिणामिनस्तेषां वैगुण्य-मधर्म्माद्भवति सम्पत् पुनर्धर्म्मात्। तस्मात् यज्ञः पुरुषस्तज्जा न तस्य व्याधय इति ॥ १३ ॥

गङ्गाधरः—इत्येतद्वचनं भगवत आत्रेयस्य पुनर्व्वसोः श्रुत्वा काशिपति-र्वामकः पुनरप्युवाच भगवन्तमात्रेयं पुनर्व्वसुम्। भगवन् भोः पुनर्व्वसो तावदुत्पत्तिकारणानाम् सम्पत्तिनिमित्तजस्य पुरुषस्याभिवृद्धिकारणं किं भवति? तथा तावत् कारणानां व्यापत्तिनिमित्तजानाञ्च रोगाणामभि-वृद्धिकारणं किं भवति? इति।

एवं पृष्टवन्तं तं काशिपतिं वामकमात्रेय उवाच। तद् यथा—हिता-हारेत्यादि। एक एव हिताहारोपयोगः पुरुषस्याभिवृद्धिकरो भवति। एक एवाहिताहारोपयोगः पुनर्व्याधीनामुत्पत्त्यभिवृद्धिनिमित्तं भवतीति।

चक्रपाणिः—हिताहारोपयोग एक एवेत्यवधारणेनान्याप्राधान्यं दर्शयति, नान्यप्रतिषेधात्। आचारस्य स्वप्नादेः कारणत्वेन तथा शब्दादीनामपि कारणत्वात्; व्याधिनिमित्तमिति व्याध्यभि-वृद्धिनिमित्तं प्रकरणोपाज्ज्ञेयं, अभिवृद्धिकारणस्यैव पृष्टत्वात्, तथाहिताहारस्य यद् व्याधि-निमित्तत्वं, तस्य "तैरामेव विपद् व्याधीन् विविधान् समुदीरयेत्" इत्यनेनैवोक्तत्वात्; किंवा

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—कथमिह भगवन् हिताहितानामाहारजातानां लक्षणमनपवादमभिजानीयाम। हितसमाख्यातानाञ्चैव ह्याहारजातानामहितसमाख्यातानाञ्च मात्राकालक्रियाभूमिदेहदोषपुरुषावस्थान्तरेषु विपरीतकारित्वमुपलभामह इति॥ १५॥

तथा च गर्भिण्या हिताहारोपयोगादरोगमेव पुरुषोत्पत्तिरभिवृद्धिश्च। अहिताहारोपयोगात् सरोगं गर्भस्याभिवृद्धिर्भवति। एवं जातस्य हिताहारोपयोगादरोगं पुरुषोऽभिवर्द्धते रोगाश्चाहिताहारादुत्पद्यन्तेऽभिवर्द्धन्ते चेति॥१४॥

गङ्गाधरः—एवं वादिनं भगवन्तमात्रेयं गुरुं पुनरन्वेसुमग्निवेश उवाच। कथमित्यादि। भगवन् गुरो हिताहितानामाहारजातानामनपवादं लक्षणमपवादहीनं लक्षणं कथं वयमभिजानीयामेति। अथ येन हितं भवति तद्धितलक्षणं येनाहितं स्यात् तदहितलक्षणमिति।

कस्तत्र संशय इति? अत आह—हितसमाख्यातानाञ्चैवेत्यादि। हितसमाख्यातानाञ्चैवाहारसमूहानामहितसमाख्यातानाञ्च मात्रादिषु विपरीतकारित्वमहितकारित्वमुपलभामह इति। तद्यथा रक्तशाल्यादिमुद्गादीनाम् एकान्तहितानाञ्च हीनातिमात्राभ्यामुपयोगात्। कालान्तरेषु नवत्वातिपुराणत्वकालेषूपयोगात्। क्रियान्तरेषु विरेचनक्रियादिषूपयोगात्। भूम्यन्तरेष्वानूपदेशभूम्यूषरभूमिषु जातानामुपयोगात्। देहान्तरेषु लङ्घनीयदेहेषूपयोगात्। दोषान्तरेषु शूलाद्यारम्भकदोषेषूपयोगात्। पुरुषान्तरेषु लङ्घनीयादिषूपयोगात्। अवस्थान्तरेषु मुमूर्ष्वाद्यवस्थायामहितकारित्वमुप-

व्याधिनिमित्तशब्देन सामान्येन जनको वर्द्धकश्च हेतुरुच्यते। अनपवादमित्यव्यभिचारि। हिताहारदर्शनताहेतुमाह—हितसमाख्यातानामित्यादि। विपरीतकारित्वमिति पथ्यस्यापथ्यत्वं मात्रादिवशाद् भवति, तत्र पथ्या रक्तशाल्यादयोऽतिमात्रा हीनमात्रा वा मात्रादोषादपथ्या भवन्ति; तथा कालवशात् त एव शाल्यादयो लघुत्वाद् बलवदग्नीनां हेमन्ते न हिताः; कालशब्देन चेह नित्य एव कालो गृह्यते, आवस्थिकस्य पुरुषावस्थाशब्देन गृहीतत्वात्। क्रिया तु संस्करणं, तेन च रक्तशाल्यादिरसम्यक्सिद्धत्वात्प्रभूतत्वादिना भोजनदोषेणाहितो भवति; तथा स एव भूमिसम्बन्धाद्वानूपदेशजः सन् अपथ्यो भवति, तथा देहापेक्षया मेदस्विनो रक्तशाल्यादिकं गुरु तथा न हितो भवति, तदुक्तम्,—"गुरु चातर्पणञ्चेष्टं स्थूलानां कर्षणं प्रति"

तमुवाच भगवानात्रेयः—यदाहारजातमग्निवेश समांश्चैव शरीरधातून् प्रकृतौ स्थापयति विषमांश्च समीकरोत्येतद्धितं विद्धि। विपरीतमहितमेतद्धिताहितलक्षणमनपवादं भवति। एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—भगवन् न त्वेतदेवमुपदिष्टं भूयिष्ठकल्पाः सर्व्वभिषजो विज्ञास्यन्ति ॥ १६ ॥

लभामह इति। एवमहितसमाख्यातानाञ्चाहारजातानां मात्राकालाद्यन्तरेषूपयोगाद्विपरीतकारित्वं हितकारित्वमुपलभामह इति ॥ १५ ॥

गङ्गाधरः—एवमुक्तवन्तं तमग्निवेशं भगवानात्रेयो हिताहितानामाहार जातानामनपवादलक्षणमुवाच। तद्यथा—यदाहारेत्यादि। भो अग्निवेश ! यदेव आहारजातं सम्यगयुक्तं समान् शरीराधातून् प्रकृतौ साम्यावस्थायां स्थापयति विषमांश्च शरीरधातून् समीकरोति, तदाहारजातं हितं विद्धि। यच्चैतद्विपरीतमाहारजातं सम्यगसम्यक् च युक्तमपि समान् शरीरधातून विषमीकरोति विषमांश्च शरीरधातून् न समीकरोति तदहितं विद्धि। इत्येतद्धिताहितलक्षण मनपवादं भवति। नास्ति यं तदप वर्ज्जयित्वाऽन्यो वादोऽस्य कश्चिदित्यनपवादः। सामान्यतो विशेषवचनमपवादः। (एवमित्यादि। यदाहारजातमित्यादिनोक्तवन्तमात्रेय-पुनर्व्वसुमग्निवेश उवाच) नन्वेवमपि चोपदेशमात्रेण किमाहारजातं द्रव्यतो गुणतः कर्म्मतः सर्व्वावयवतश्च सर्व्वभिषगभिविदितं भवतीति ? अत उच्यते—न त्वेतदित्यादि। भूयिष्ठकल्पाः प्रायेण सर्व्वभिषज एतदाहारजातं हितमहितमेवंप्रकारेणोपदिष्टं न हिताहितं विज्ञास्यन्ति ॥ १६ ॥

इति; तथा स एव शोथे वातादिहितः, दोषशब्देन व्याधिरपि ग्रहीतव्यः। तथा पुरुषस्य बाल्यावस्थायां श्लेष्मप्रधानायां तिक्तादि पथ्यम्, तत् तु वार्द्धक्ये वृद्धवाते न पथ्यम्। अवस्थान्तराण्यत्र मात्रादिभिः प्रत्येकं सम्बध्यते; एवमहितस्यापि मात्रादिपरिग्रहेण हितत्वमुन्नेतव्यम् ॥ १४।१५ ॥

चक्रपाणिः—सिद्धान्तयति—यदाहारजातमित्यादि। अनेन च ग्रन्थेन हिताहितत्वं न स्वरूपेण भावानाम्, किन्तु मात्रादिसव्यपेक्षमिति दर्शितं स्यात्। न त्वित्यादि।—एतदिति हिताहितम्; एवमुद्दिष्टमिति "यदाहारजातम्" इत्यादिलक्षणोद्दिष्टम्; विज्ञास्यन्ति न त्विति सम्बन्धः; एतस्मिन् हिताहितलक्षणे मात्राद्यवस्थान्तरज्ञानं विना न हितत्वमहितत्वं वा हितानां रक्तशाल्यादीनामहितानां यवकादीनाञ्च ज्ञातुं पार्य्यते, मात्राद्यवस्थायाश्च दुर्ज्ञेयत्वेन सर्व्वथैवा ज्ञातुमशक्यमिति ॥ १६ ॥

तमुवाच भगवानात्रेयः। येषां हि विदितमाहारजातमग्निवेश गुणतो द्रव्यतः कर्म्मतः सर्व्वावयवशश्च मात्रादयो भावास्त एतदेवमुपदिष्टं विज्ञातुमुत्सहेरन्। यथा तु खल्वेतदेवमुपदिष्टं भूयिष्ठकल्पाः सर्व्वे एव भिषजो विज्ञास्यन्ति तथैव तदुपदेक्ष्यामः। मात्रादीन् सर्व्वानुदाहरन्तु *। तेषां हि बहुविधा विकल्पा भवन्ति ॥ १७ ॥

गङ्गाधरः—तर्हि चैवमुपदिष्टं के भिषजो हिताहितं विज्ञास्यन्तीति ? अत उच्यते—येषां हीत्यादि। येषां भिषजां गुणतो द्रव्यतः कर्म्मतः सर्व्वावयवशश्चाहारजातं विदितं, विदिताश्च येषां तस्य मात्रादयो भावा मात्राकालक्रियाभूमिदेहदोषपुरुषावस्थान्तराणि, ते भिषज एवंप्रकारेण समान् धातून् प्रकृतौ स्थापयति विषमांश्च समीकरोति यदाहारजातं तद्धितं तद्विपरीतमहितमित्येवंप्रकारेणोपदिष्टमेतद्धिताहितं विज्ञातुमुत्सहेरन्। येषां गुणादितो न विदितं ते कथं हिताहितं विज्ञास्यन्तीति ? अत उच्यते—यथा त्वित्यादि। भूयिष्ठकल्पा ये सर्व्वभिषजस्ते खल्वेवमुपदिष्टं यदाहारजातं समान् धातून् प्रकृतौ स्थापयति विषमांश्च समीकरोति तद्धितं तद्विपरीतमहितमित्येतत्प्रकारेणोपदिष्टमेव तद्धिताहितं ते गुणादितो यथा विज्ञास्यन्ति तथैव तद्धिताहितमुपदेक्ष्यामः। तर्हि किं तस्याहारजातस्य मात्राद्यवस्थान्तराण्यप्युपदेक्ष्यन्ते इति ? अत उच्यते—मात्रादीनित्यादि। ये सर्व्वभिषजो गुणतो द्रव्यतः कर्म्मतः सर्व्वावयवशश्चाहारजातं न विदन्ति ते भूयिष्ठकल्पाः मात्रादीन् सर्व्वान् मात्राकालक्रियाभूमिदेहदोषपुरुषावस्थाविशेषान् कर्म्मकाले दृष्ट्वा विविच्योदाहरन्तु। कस्मादिति ? अत उच्यते—तेषां हीत्यादि। हि यस्मात् तेषां

चक्रपाणिः—एतदेवासर्व्वभिषग्ज्ञेयत्वं लक्षणस्याह—येषामित्यादि। गुणत इतीह प्रकरणे गुरुलघुत्वादिगुणतः ; द्रव्यत इति कारणतः, यथा—"इदमाप्यमिदमाग्नेयम्" इत्यादि। किंवा द्रव्यत [illegible] रक्तशाल्यादेः ; कर्म्मतः कार्य्यतः, यथा—"इदं जीवनमिदं [illegible]" इत्यादि ; सर्व्वावयवशश्चेति रसवीर्य्यविपाकप्रभावेभ्यः ; मात्रा [illegible] ज्ञेयाः। आहारत [illegible] गुणादिभ्यो विदितम्, मात्रादयश्च विदिता इति [illegible] ; किंवा गुणशब्देन रसवीर्य्यादीनामपि ग्रहणम् ; सर्व्वावयवशश्चेति मात्रादिज्ञानेन [illegible] ; [illegible] एतदिति हिताहितम् ; भूयिष्ठकल्पा [illegible] इत्यर्थः,

* मात्रादीन् सर्व्वान् भावानुदाहरन्तः इति चक्रः।

आहारविधिविशेषांस्तु खलु लक्षणतः सर्व्वावयवतश्चानुव्याख्यास्यामः ; तद्‌यथा—आहारत्वमाहारस्यैकविधमर्थाभेदात् । पुनर्द्वियोनिः स्थावरजङ्गमात्मकत्वात् । द्विविधप्रभावो हिताहितोदर्कविशेषात् । चतुर्व्विधोपयोगः, पानाशनभक्ष्यलेह्योपयोगात् । षड़ास्वादः रसभेदतः षड्विधत्वात् ॥ १८ ॥

मात्रादीनां प्रतिपुरुषमवस्थाविशेषे बहुविधा न्यूनाधिक्यादयो विकल्पा भवन्ति । तानुपदेष्टुमपरिसङ्ख्यत्वान्न प्रभवामः ॥ १७ ॥

गङ्गाधरः—तस्मादाहारविधिविशेषांस्तु लक्षणतो गुणादितोऽवयवतश्च व्याख्यास्यामः । ततस्ते गुणादितो हिताहितं विचारयन्ति । तद्‌यथेत्यादि । आहारत्वमित्यादि आहारस्येति । आहार्य्यते जिह्वया दन्तैश्चाधो गलान्नीयते यः स आहारः । तस्याहारत्वं जिह्वया सह दन्तैश्च गलादधोनयनमेकविधम् । कस्मात् ? अर्थाभेदात् । अर्थस्य प्रवृत्तिनिमित्तस्य जिह्वादन्तकरणकगलाधोनयनव्यापारजन्यगलाधोगमनस्य भेदाभावात् । सर्व्वेष्वेव आहारेष्वपरिसङ्ख्येयेषु । स पुनराहारो द्वियोनिर्द्विप्रभवः । स्थावरजङ्गमात्मकत्वात् । स एवाहारो द्विविधप्रभावः, द्विविधः प्रभावो वीर्य्यं यस्य । कस्मात् ? हिताहितोदर्कविशेषात् । हितश्चाहितश्चोत्तरकालिको हि फलोदयो यस्ततस्तस्य विशेषात् । आहारेऽभ्यवहृते ह्युत्तरकालं विपाकादुत्तरं हितत्वाहितत्वभेदः प्रभावस्य । स पुनश्चतुर्व्विधोपयोगः । चतुर्व्विध उपयोगः प्रयोगो यस्य सः । कस्मात् ? पानाशनभक्ष्यलेह्योपयोगात् । पानं द्रवद्रव्यगलाधोनयनम् । अशनं गलाधोगमनजनकचर्व्वणव्यापारः । भक्षो भक्षणमिह तु

भूयिष्ठकल्पा इति कृत्वा सर्व्वग्रहणमुत्तमादीनामेव श्रेष्ठत्वेऽप्युत्तमादिभेदग्रहणार्थम् ; किंवा शास्त्रावधारणाभ्यासविधिग्रहणार्थम् ; किंवा भूयिष्ठकल्पा इति विज्ञातभूरिहिताहितोदाहरणाः ; अभ्यासविकारेण बहु हिताहितं वक्तव्यम्, तथाल्पबुद्धीनां व्यवहाराय भवति, प्रकृष्टबुद्धीनामनुज्ञानार्थेति भावः ॥ १७ ॥

चक्रपाणिः—लक्षणत इति, लक्षणम्—आहारत्वस्थावरजङ्गमादि, एतच्च "तद्‌यथाऽऽहारत्वम्" इत्यादिना "करणबाहुल्यात्" इत्यन्तेन वक्ष्यति ; अवयवत इत्येकदेशतः, एकदेशाश्च लोहितशाल्यादयः, ते तु "तद्‌यथा लोहितशाल्यादयः" इत्यादिना वक्ष्यन्ते । अर्थाभेदादित्यभ्यवह्रियमाणत्वार्थाभेदात् ; द्वियोनिरिति द्विप्रभवः ; हितरूपोऽहितरूपो वोदर्को हिताहितोदर्कः, स एव

विंशतिगुणः—गुरुलघुशीतोष्णस्निग्धरुक्षमन्दतीक्ष्णस्थिर-सरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवानु-गमात् ॥ १९ ॥

पिष्टकादिद्रव्यगलाधोगमनजनकचर्व्वणचूषणव्यापारः। लेहो जिह्वामात्रेण घनद्रवद्रव्यगलाधोगमनजनकचर्व्वणचूषणव्यापारः। इत्येवं चतुर्व्विधया यस्योपयोगः क्रियते स चतुर्व्विधोपयोगः। स पुनराहारः षडास्वादः। षडास्वादाः स्वादुताभजनानि यस्य सः। रसभेदतः षड्विधत्वादास्वादस्य। मधुरास्वादोऽम्लास्वादो लवणास्वादः कटुकास्वादस्तिक्तास्वादः कषायास्वाद-श्चेति षडास्वादाः ॥ १८ ॥

गङ्गाधरः—स पुनराहारो विंशतिगुणः। विंशतिगुणा यस्य सः गुरुलघुत्वाद्यनुगमात्। आहारस्य हि गुरुलाघवादयो गुणा अनुगता एकान्तेन। रूपादयो गुणास्तु नैकान्तेनानुगताः। संन्यासादौ मलिनाहार-योगस्य हेतुत्वात् गर्भस्य वर्णकरणार्थं तत्तद्वर्णद्रव्योपयोगाच्च सर्व्वत्रोप-योगाभावात्। एवमेव गुरुलाघवादीनां द्वन्द्वानामेकैकस्यैवानुगमो न द्वन्द्वानामिति चेन्? सत्यम्। स्वस्थानां हितोपयोगेऽहितवर्ज्जनेन मलिनाहारवर्ज्जनलाभे। तदुपयोगेऽनुगमाभावान्मलिनगुणस्य। गुरुश्च ते चेमे गुणा लक्षणतः प्रोक्ताः। तद्यथा—"अत ऊर्द्ध्वं प्रवक्ष्यामि गुणानां कर्म्म-विस्तरम्। कर्म्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणाः॥ ह्लादनः स्तम्भनः शीतो मूर्च्छातृट्स्वेददाहजित्। उष्णस्तद्विपरीतः स्यात् पाचनश्च विशेषतः॥ स्नेहमार्द्दवकृत् स्निग्धो बलवर्णकरस्तथा। रुक्षस्तद्विपरीतः स्याद्विशेषात् स्तम्भनः खरः॥ पिच्छिलो जीवनो बल्यः सन्धानः श्लेष्मलो गुरुः। विशदो विपरीतोऽस्मात् क्लेदाचूषणरोपणः॥ दाहपाककरस्तीक्ष्णः स्रावणो मृदु-रन्यथा। सादोपलेपबलकृद् गुरुस्तर्पणबृंहणः। लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा॥ दशाद्याः कर्म्मतः प्रोक्तास्तेषां कर्म्मविशेषणैः। दशैवान्यान् प्रवक्ष्यामि द्रव्यादींस्तान् निबोध मे॥ द्रवः प्रक्लेदनः सान्द्रः स्थूलः स्याद्बन्ध-कारकः। श्लक्ष्णः पिच्छिलवज्ज्ञेयः कर्कशो विशदो यथा॥ सुखानु-

विशेषः; स्वर्ग स्वरकालीनं फलम्। गुरुलाघवादयो गुणाः परस्परविरोधिनो ज्ञेयाः, अनु-गमास्तित्वमनुगतत्वादिति; आत्रेयभद्रकाप्यीये वक्ष्यमाणाः परत्वापरत्वादयो गुणा न तथात्र-

अपरिसंख्येयविकल्पो द्रव्यसंयोगसंस्कारादिकरणबाहुल्यात् । तस्य खलु ये ये विकारावयवा भूयिष्ठमुपकल्प्यन्ते भूयिष्ठकल्पनाश्च मनुष्याणाञ्च प्रकृत्यैव हिततमाश्चाहिततमाश्च तांस्तान् यथावदुपदेक्ष्यामः । तद्यथा—लोहितशालयः शूकधान्यानां पथ्यतमत्वेन श्रेष्ठतमा भवन्ति, मुद्गाः

बन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुः । दुर्गन्धो विपरीतोऽस्माद्हृल्लासारुचिकारकः ॥ सरोऽनुलोमनः प्रोक्तो मन्दो यात्राकरः स्मृतः । व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते ॥ विकाशी विकशन्नेव सन्धिबन्धान् विमोक्षयेत् । आशुकारी तथाशुत्वाद्धावत्यम्भसि तैलवत् ॥ सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः । गुणा विंशतिरित्येवं यथावत् परिकीर्त्तिताः ॥ इति ॥ १९ ॥

गङ्गाधरः—स पुनराहारोऽपरिसङ्ख्येयविकल्पः । अपरिसङ्ख्येयः संख्यातुमर्हस्तद्रहितो विकल्पो यस्य सः । द्रव्याणां संयोगस्य करणस्य संस्कारस्य च बाहुल्यात् । इति । तर्हि किमसंख्यविकल्पानां द्रव्याणां कात्स्न्र्येनोपदेशः करिष्यते इति ? अत उच्यते—तस्येत्यादि । तस्याहारस्य ये ये विकारा अवयवाश्च भूयिष्ठं प्रायेणोपकल्प्यन्ते, एवं ये ये भूयिष्ठकल्पना आहारस्य विकारा यवागवादयोऽवयवाश्च मनुष्याणां प्रकृत्यैव हिततमाश्चाथवाहिततमाश्च भवन्ति तांस्तानाहारस्य विकारानवयवान् यथावदुपदेक्ष्यामो न कृत्स्नान् ॥

तद्यथेत्यादि । लोहितेत्यादि । लोहितशालयः शूकधान्यानां पथ्यतमत्वेन श्रेष्ठतमा भवन्तीति । लोहितशालय इति रक्तशालयः । शूकधान्याना-

कारका इति नेहोच्यन्ते, ये तु तत्र संयोगकरणे आहारविधौ भूय्युपयोगिनी, ते बहुविधत्वेन त्वपरिसंख्येयविकल्पहेतुत्वेनैव निर्देशिते, परिमाणन्तु मात्रा, सा चेहानुदाहरणीयत्वेन प्रतिज्ञाता "मात्रादीन् भावाननुदाहरन्तः" इति वचनेन । द्रव्यसंयोगकरणबाहुल्यादिति—द्रव्यं शूकधान्यादिकं, संयोग आहारद्रव्याणां मेलनं, करणं संस्कारः । विकारावयवा इति प्रकारैकदेशाः, भूयिष्ठकल्पानामिति किञ्चिन्न्यूनवस्तूनां, कल्पशब्दो ह्यदमीषदसमाप्त्यर्थः, यथा—"राजकल्पः" इति ; एतेन प्रायशो वस्तूनां ये हिता अहिताश्च त उच्यन्त इत्यर्थः ; अन्ये तु भूयिष्ठकल्पानामिति समानधातुप्रकृतीनामिति ब्रुवते ; प्रकृत्यैवेति न संयोगकरणादिना, किन्तु स्वभावेन ।

लोहितशालौ रक्तशालिः, शूकधान्यानामित्यादी निर्धारणे षष्ठी ; पथ्यतमत्वेन इति तमप्प्रयोगः सजातीयेभ्यः प्रकृष्टत्वेन श्रेष्ठतमा इति तमप्ग्रहणं स्वार्थिकं, यथा—"युधिष्ठिरः

शमीधान्यानाम्, आन्तरीक्षमुदकानाम्, सैन्धवं लवणानाम्, जीवन्तीशाकं शाकानाम्, ऐणेयं मृगमांसानाम्, लावः पक्षिणाम्, गोधा बिलेशयानाम्, रोहितो मत्स्यानाम्, गव्यं सर्पिः सर्पिषाम्, गोक्षीरं क्षीराणाम्, तिलतैलं स्थावरस्नेहानाम्, वराहवसा आनूपमृगवसानाम्, चुलुकीवसा मत्स्यवसानाम्, पाकहंसवसा जलचरविहङ्गमवसानाम्, कुक्कुट-

मिति निर्द्धारणे षष्ठी। एवं वक्ष्यमाणेषु सर्व्वत्र बोध्यम्। पथ्यतमत्वेनेति पथ्यानां हितानां मध्येऽतिशयेन पथ्यास्तत्त्वेन तद्धर्म्मवत्त्वेन श्रेष्ठतमाः प्रशस्यातिशया ये तेषां मध्येऽतिशयेन प्रशस्यातिशया इति। एतत्सूत्रस्थं पथ्यतमत्वेन श्रेष्ठतमा इत्यधिकृतमुत्तरत्र सर्व्वत्रानुवर्त्तनीयम्। तथा च—मुद्गाः शमीधान्यानामित्यादौ पथ्यतमत्वेन श्रेष्ठतमा इत्येवमादि योजना कार्य्या। शमीधान्यानि सूपयोनयः। आन्तरीक्षमुदकमेकविधमैन्द्रकारकतौषारहैमनभेदेन चतुर्व्विधत्वेऽप्यान्तरीक्षत्वेनैक्यात्।

सैन्धवं लवणानां पथ्यतमत्वेन श्रेष्ठतममिति यथार्ह लिङ्गवचनविपरिणामादन्वयात्। जीवन्तीशाकं शाकानां स्वस्थातुरोभयत्र पथ्यतमत्वेनातुरहिततमकाकमाच्यादिभ्यः श्रेष्ठतमम्। ऐणेयं मृगमांसानामिति मांसजातितः पृथक्करणादेणस्य कृष्णसारस्य मांसं न तु चर्म्मादिकं पथ्यतमत्वेन श्रेष्ठम्। लावः पक्षिणामिति पक्षिणां मांसानामित्यनुवृत्त्या लावमांसं पक्षिमांसानां श्रेष्ठतमम्। एवं गोधा सुवर्णगोधामांसं बिलेशयानां मांसानां श्रेष्ठतमम्। रोहितो मत्स्यानामिति। मत्स्यानां मांसानां मध्ये रोहितमत्स्यमांसं श्रेष्ठतमम्। गव्यं सर्पिः सर्पिषाम्। गोक्षीरं क्षीराणाम्। तिलतैलं स्थावरस्नेहानाम्।

वराहवसानूपवसानाम्। चुलुकीवसा शिशुमारवसा, मत्स्येषु चुलुकी व्यवह्रियते शास्त्रे। हंसवसा जलचरविहङ्गवसानां न तु जलचराणां सर्व्वेषां

श्रेष्ठतमः कुरूणाम्" इति, तथा "अन्यतमं त्रिद्वाद्येपदिकम्" इति। श्रेष्ठतमा इति प्रशस्याः। यद्यपि काकमाची त्रिदोषघ्नी रसायनी च, तथापीह जीवन्ती स्वस्थहितत्वप्रकर्षादुच्यते, स्वस्थहितत्वप्रकर्षश्चेह वचनादेव लभ्यते; एवमन्यत्रापि व्याख्येयम्, काकमाच्यास्त्वयं विशेषः—यत्—काकमाची मध्वनुपिता मरणाय; यद्यपि गोधारोहितौ कफपित्तवर्द्धनौ, वचनं हि—"भूयश्च

वसा विष्किरशकुनिवसानाम्, अजमेदः शाखादमेदसाम्, शृङ्गवेरं कन्दानाम्, मृद्वीका फलानाम्, शर्करा इक्षुविकाराणाम्, इति प्रकृत्यैव हिततमानामाहारविकाराणां प्राधान्यतो द्रव्याणि व्याख्यातानि भवन्ति ॥ २० ॥

अत ऊर्द्ध्वमहिततमानप्युपदेक्ष्यामः। यवकाः शूकधान्यानामपथ्यतमत्वेन श्रेष्ठतमा भवन्ति, माषाः शमीधान्यानाम्, वर्षानादेयमुदकानाम्, ऊषरं लवणानाम्, सर्षपशाकं शाकानाम्, गोमांसं मृगमांसानाम्, काणकपोतः

मध्ये। कुक्कुटवसा विष्किरशकुनिवसानां श्रेष्ठतमा न तु सर्व्वेषां शकुनीनां वसानाम्। हृन्मेदस्तु वपावसेत्यभिधीयते। अजमेदः शाखादमेदसां श्रेष्ठतमम्। मेदः सर्व्वधातुस्नेहः। शृङ्गवेरं कन्दानाम्। मृद्वीका फलानाम्। शर्करा इक्षुविकाराणाम्। इति प्रकृत्या स्वभावेन हिततमानामाहारविकाराणां प्राधान्यतो द्रव्याणि व्याख्यातानि ॥ २० ॥

गङ्गाधरः—प्रकृत्यैव अहिततमान्यप्याहारविकाराणां प्राधान्यतो द्रव्याणि उपदेक्ष्यामः। अहिततमानीति प्रतिज्ञावचने निर्देशात्। पूर्व्वस्मादनुवृत्तेषु पथ्यतमत्वेन श्रेष्ठतमा भवन्तीति। एषु मध्ये पथ्यतमत्वेनेतिपदं प्रतियोगिपदमहिततमानीति दृष्ट्वा निवृत्तम्। तेनाहिततमत्वेन श्रेष्ठतमं भवतीति लब्धम्। स्फुटमाह—यवका इत्यादि। अपथ्यतमत्वेन श्रेष्ठतमा भवन्तीति परत्र सर्व्वत्रानुवर्त्त्यम्। यवका वेणुयवा। माषाः शमीधान्यानामपथ्यतमत्वेन श्रेष्ठतमाः। वर्षानादेयं वर्षासु नदीजलम्। ऊषरं लवणानामिति—ऊषरमृत्तिकासम्भवं लवणं लवणानामपथ्यतमत्वेन श्रेष्ठतमं भवति। सार्षपशाकं शाकानामपथ्यतमत्वेन श्रेष्ठतममतिशयेनापथ्यतमम्। गोमांसं मृग-

वारिजातास्र कफपित्तविवर्द्धनाः" इति, तथापीह सजातीयेषु पथ्यत्वप्रकर्षेणैवोच्यते, तथा किञ्चिद्दोषकरस्यापि धातुभेदेन पथ्यत्वं भवत्येव, किञ्चित् स्वस्थहितत्वं द्रव्यस्य पृथगेव गुणः दोषकर्त्तृत्वं दोषहर्त्तृत्वं चापेक्षते, यदुक्तम्—"किञ्चिद्दोषप्रशमनं किञ्चिद् धातुप्रदूषणम्। स्वस्थवृत्तौ मतं किञ्चित् द्रव्यं त्रिविधमुच्यते" ॥ कुलकी "शुशु" इति ख्यातः; पाकहंसः श्वेतहंस ॥१८—२०॥

चक्रपाणिः—प्रकृष्टतम इति तमप्प्रयोगः पूर्व्ववत् स्वार्थिकः; यद्यप्यपथ्यतम इति तमप्प्रयोगेणैव प्रकृष्टत्वं प्रतिपादितं, तथाप्यपथ्यतमानां बहूनां मध्ये प्रकर्षख्यापनार्थं "प्रकृष्टतमः"

पक्षिणाम्, भेको बिलेशयानाम्, चिलिचिमो मत्स्यानाम्, आविकं सर्पिः सर्पिषाम्, अविक्षीरं क्षीराणाम्, कुसुम्भ-स्नेहः स्थावरस्नेहानाम्, महिषवसा आनूपमृगवसानाम्, कुम्भीर-वसा मत्स्यवसानाम्, काकमद्‌गुवसा जलचरविहङ्गवसा-नाम्, चटकवसा विष्किरशकुनिवसानाम्, हस्तिमेदः शाखादमेदसाम्, मूलकं * कन्दानाम्, निकुचफलं फला-नाम्, फाणितमिक्षुविकाराणाम्। इति प्रकृत्यैवाहिततमाना-माहारविकाराणां प्रकृष्टतमानि द्रव्याणि व्याख्यातानि भवन्ति ॥ २१ ॥

मांसानाम्। काणकपोतः पक्षिणां मांसानां मध्ये काणकपोतमांसमपथ्य-तमत्वेन श्रेष्ठतमम्। काणकपोतः काणाकोया।

भेको बिलेशयानां मांसानां भेकमांसम्। चिलिचिमो मत्स्यानां मांसानां मध्ये वनरोहितमत्स्यमांसमपथ्यतमत्वेन श्रेष्ठतमम्। आविकं सर्पिः सर्पिषाम्। अविक्षीरं क्षीराणाम्। कुसुम्भस्नेहः स्थावरस्नेहानाम्। महिषवसानूपमृग-वसानाम्। कुम्भीरवसा मत्स्यवसानाम्। कुम्भीरोऽपि शास्त्रे मत्स्येषु व्यवह्रियते। काकमद्‌गुवसा जलचरविहङ्गवसानाम्, काकमद्‌गुः पानीयकाकः। चटकवसा विष्किरशकुनिवसानाम्। विष्किरसंज्ञा वक्ष्यते।

हस्तिमेदः शाखादमेदसां मध्येऽपथ्यतमत्वेन श्रेष्ठतमम्। मूलकं कन्दा-नाम्। निकुचफलं डहुफलं फलानाम्। फाणितमर्द्धावर्त्तित इक्षुरसः, इक्षु-विकाराणां मध्येऽपथ्यतमत्वेन श्रेष्ठतमं भवतीति।

इति प्रकृत्यैवाहिततमानामाहारविकाराणां प्राधान्यतो द्रव्याणि व्याख्या-तानि ॥ २१ ॥

इति पदम्; वर्षासु नादेयं वर्षानादेयम्; ऊषरदेशभवमूषरम्, काणकपोत इत्यत्र काणशब्दो-ऽल्पवचनः यथा—"काणो मेघः" इति। चिलिचिमो महाशल्की मत्स्यो रोहितभेदः, आत्रेय-भद्रकाप्यीयेऽपि रोहितभेदमेव चिलिचिमं वक्ष्यति; काकमद्‌गुः पानीयकाकिका; चटकः गृहचटकः ॥ २१ ॥

* आलुकमिति वा पाठः।

इति हिताहितावयवो व्याख्यातः आहारविकाराणाम् । अतो भूयः कर्म्मौषधानाञ्च प्राधान्यतः सानुबन्धानि द्रव्यादीन्यनुव्याख्यास्यामः । तद्यथा—अन्नं वृत्तिकराणां

गङ्गाधरः—इति हितेत्यादि । आहारविकाराणामित्येष हितोऽवयव एकदेशो रक्तशाल्यादिरहितोऽवयवो यवकादिर्व्याख्यातः । अतः परं भूयः पुनरपि कर्म्मौषधानाञ्च चिकित्सिते यानि कर्म्माणि यान्यौषधानि क्रियन्ते तेषां द्रव्यादीनि प्राधान्यतस्तत्तत्कर्म्मणि चौषधेषु प्रधानानि कर्म्मान्तरेऽप्यनौषधे चानुबन्धवन्ति अप्राधान्यरूपेणोपयोगीनि तानि अनुव्याख्यास्याम इति । नन्वेतदपृष्टं कथमनुव्याख्यास्यते इति चेत् ? न ; हिताहितस्यानपवादलक्षणस्य प्रश्नेनेवाहारातिरिक्तानाञ्च हिताहितत्वं पृष्टं, तदुत्तरमिदं—यथाहारजातं हिताहितं तथा कर्म्मसु चौषधेषु च हिताहितं द्रव्यं भवतीति नापृष्टमनुव्याख्यास्यते ।

तद्यथेत्यादि—अन्नमित्यादि । अन्नं वृत्तिकराणां श्रेष्ठतममित्यारभ्य माषाः श्लेष्मपित्तजननानामित्यन्तैः कर्म्मणां स्वस्थातुरोपयोगिद्रव्याणि । ततो मदनफलमित्यारभ्य तृष्णातियोगप्रशमनानामित्यन्तैरौषधानां द्रव्याणि व्याध्युपयोगीनि । ततोऽतिमात्राशनमित्यारभ्य एकरसाभ्यासो दौर्ब्बल्यकराणामित्यन्तैः कर्म्माणि । ततो गर्भशल्यमनाहार्य्याणामित्यारभ्य सर्व्वसंन्यासः सुखकराणामित्यन्तैः कर्म्मणां द्रव्याणि व्याख्यातानि । तथा च अन्नं वृत्तिकराणां श्रेष्ठतममिति यतो यत्किञ्चिद्द्रव्यं तद्धर्म्मवत्त्वेन तच्छ्रेष्ठतममिति सर्व्वत्र बोध्यम् । तेन वृत्तिकराणां वर्त्तनहेतूनां मध्येऽन्नं चतुर्व्विधं वृत्ति-

चक्रपाणिः—हिताहितावयवमित्यादि—अत्र इतिशब्दोऽध्याहार्य्यः, तेन इति हिताहितावयवमाहारविकाराणां व्याख्यातं भवतीति पूर्व्वेणैव योजनीयम् ; अतो भूय इति, अत इति हेतौ, यस्मात् हिताहिताद्युक्तम्, न तु तेषां कर्म्मेत्यर्थः ; भूयःशब्दः पुनरर्थे, कर्म्मेति कार्य्यम्, तेन अतो भूय आहारविकाराणां कर्म्म, यथा—"अन्नं वृत्तिकराणाम्" "उदकमाश्वासकराणाम्" इत्यादि, तथौषधानाञ्च कर्म्म, यथा—"त्रिवृत् सुखविरेचनानाम्" इत्यादि वक्ष्यामः । प्राधान्यत इत्यनेन सर्व्वेषामाहारविकाराणामौषधानाञ्च कर्म्माभिधातव्यम्, किन्तु, यथाप्रधानमिति दर्शयति ; सानुबन्धानीति सप्रयोजनानीति, यथा—"अजीर्णमुद्धार्य्याणाम्" इत्यादि ; अजीर्णज्वरादिकर्म्मकथनं हि चिकित्सोपयोगि वक्तव्यमेव ; द्रव्याणीति महाभूतानि, यथा—"जलं स्तम्भनानां" "वायुः संज्ञाप्रणाशहेतूनाम्" इत्यादि ; द्रव्याणीत्युपलक्षणम्, तत्र सानुबन्धानीत्यस्य विशेषणम्, तेन, अद्रव्यमपि सानुबन्धमुच्यते, यथा—"शास्त्रसहितस्तर्कः साधनानाम्" इति ; किंवा हिताहिता-

श्रेष्ठतमम्, उदकमाश्वासकराणाम्, सुरा श्रमहराणाम्, क्षीरं जीवनीयानाम्, मांसं बृंहणीयानाम्, रसस्तर्पणीयानाम्। लवणमन्नद्रव्यरुचिकराणाम्, अम्लं हृद्यानाम्। कुक्कुटो बल्यानाम्, नक्ररेतो वृष्याणाम्, मधु श्लेष्मपित्तप्रशमनानाम्, सर्पिर्वातपित्तप्रशमनानाम्, तैलं वातश्लेष्मप्रशमनानाम्।

करत्वेन श्रेष्ठतमं भवतीत्यर्थः। एवं सर्व्वत्र। श्रेष्ठतममित्यधिकारः। उदकं सर्व्वमेव माहेन्द्रनादेयादिकम्। आश्वासकराः सन्ति बहवो भावाः सान्त्वचनधनदानादयस्तेषां श्रेष्ठतममुदकम्। सुरा श्रमहराणां व्यजनानिलच्छायासनादीनां मध्ये सुरा श्रेष्ठतमेति लिङ्गविपरिणामेन।

जीवनीयानां शीतवातजलान्नजीवकर्षभकादीनां श्रेष्ठतमं क्षीरम्। बृंहणीयानां मधुरादीनां श्रेष्ठतमं मांसम्। तर्पणीयानां दध्यम्लकोलबदरादीनां मध्ये मांसस्य रसः श्रेष्ठतमस्तर्पणः। अन्नद्रव्यरुचिकराणां मरिचार्द्रकाम्लादीनां मध्ये लवणं श्रेष्ठतममन्नद्रव्यरुचिकरम्। हृद्यानां भोजनादिषु मनोज्ञानां दुग्धदधिशर्करादीनां षड्रसद्रव्याणां मध्येऽम्लरसद्रव्यं श्रेष्ठतमं हृद्यम्। बल्यानां बलहितानां घृतदुग्धादीनां मध्ये कुक्कुटो रसमांसादिविधया श्रेष्ठतमो बल्यः। वृष्याणां पुरुषत्वशक्तिजननानां दुग्धादीनां मध्ये नक्ररेतः श्रेष्ठतमं वृष्यम्। नक्रः कुम्भीरः।

श्लेष्मपित्तप्रशमनानां स्वस्थातुरयोः श्लेष्मपित्तप्रशमनानां यवगोधूमादीनां मध्ये मधु श्रेष्ठतमं श्लेष्मपित्तप्रशमनम्। दुरालभा त्वातुरस्य श्लेष्मपित्तप्रशमनानां श्रेष्ठतमा वक्ष्यमाणा नैतेन विरुध्यते। वातपित्तप्रशमनानां दुग्धादीनां मध्ये श्रेष्ठतमं वातपित्तप्रशमनं सर्पिः। वात-

वचनमिति कर्म्मविशेषणम्, तेन हिताहितैकदेशरूपं कर्म्माहारविकाराणामिति स्यात्; तत्र हितं कर्म्म—"अन्नं वृत्तिकराणाम्" इत्यादि, अहितं कर्म्म,—"आविकं सर्पिरहृद्यानाम्" इत्यादि, औषधानां कर्म्म,—"त्रिवृत् सुखविरेचनानाम्" इत्यादि व्याख्यानं पूर्ववदेव।

वृत्तिकराणामिति शरीरस्थितिकराणाम्, अन्नद्रव्यरुचिकराणामिति लवणमन्नेन संयुक्तं सदन्ने रुचिं करोतीत्यर्थः। अम्लं हृद्यानामिति हृद्यानामिति, अम्लमपि स्वयमेव रोचते। मधु श्लेष्मपित्तप्रशमनानामिति प्रधानद्रव्येषु, दुरालभा त्वौषधद्रव्येषु, तेन दुरालभाया

वमनं श्लेष्महराणाम्, विरेचनं पित्तहराणाम्, वस्तिर्वातहराणाम्, स्वेदो मार्द्दवकराणाम्, व्यायामः स्थैर्य्यकराणाम्, क्षारः पुंस्त्वोपघातिनाम्, तिन्दुकमनन्यद्रव्यरुच्चिकराणाम्। आमकपित्थम् अकण्ठ्यानाम् आविकं सर्पिरहृद्यानाम्, अजाक्षीरं शोषघ्न-स्तन्यसात्म्यदोषघ्न-सांग्राहिकशोणितपित्तप्रशमनानाम्,

श्लेष्मप्रशमनानां पक्वनिम्बिङ्गिकादीनां मध्ये श्रेष्ठतमं वातश्लेष्महरं सर्व्व तैलम्। इति स्वस्थातुरयोर्यथासम्भवं ग्रयादीनां कर्म्मणां द्रव्याणि व्याख्यातानि।

अथ स्वस्थातुरयोः कर्म्मणां कर्म्माण्याह वमनमित्यादि। श्लेष्महराणां कर्म्मणामुपवासादीनां मध्ये वमनं कर्म्म श्रेष्ठतमं श्लेष्महरम्। विरेचनं पित्तहराणां कर्म्मणां पानाशनादीनां मध्ये श्रेष्ठतमं पित्तहरम्। वातहराणां स्नेहनादिकर्म्मणां मध्ये वस्तिः कर्म्म श्रेष्ठतमं वातहरम्। मार्द्दवकराणां मर्द्दनादीनां मध्ये स्वेदः कर्म्म श्रेष्ठतमो मार्द्दवकरः। व्यायामः स्थैर्य्यकराणां शरीरदार्ढ्यकराणां पानाशनादीनां कर्म्मणां मध्ये व्यायामः कर्म्म श्रेष्ठतमः स्थैर्य्यकरः। इति।

कर्म्मणां कर्म्माण्युक्त्वा कर्म्मणां द्रव्याणि स्वस्थातुरयोरहितान्याह—क्षार इत्यादि। पुंस्त्वोपघातिनां चणकादीनां द्रव्याणां मध्ये क्षारः श्रेष्ठतमः पुंस्त्वोपघाती। तिन्दुकं तिन्दुकफलम्, अनन्यस्य स्वस्यैव रुचिकराणां जाम्बवादीनां मध्ये तिन्दुकफलं श्रेष्ठतमं स्वरुचिकरम्। अन्यद्रव्यारोचकं श्रेष्ठतमं तिन्दुकमिति। अकण्ठ्यानां कण्ठस्याहितानां कषायरसद्रव्याणां वकुलफलादीनां मध्ये आमकपित्थफलं श्रेष्ठतममकण्ठ्यम्। अहृद्यानामाहारद्रव्याणामुष्ट्रीक्षीरादीनां मध्ये आविकं मेषीसर्पिः श्रेष्ठतममहृद्यम्।

अथातुरस्य कर्म्मणां हितानि श्रेष्ठतमानि द्रव्याण्याह—अजाक्षीरमित्यादि। शोषघ्नानां स्तन्यानां सात्म्यानां सांग्राहिकाणां रक्तपित्तप्रशमनानाञ्च मध्येऽजाक्षीरं श्रेष्ठतमं शोषघ्नं स्तन्यहितं सात्म्यं सांग्राहिकं रक्तपित्तप्रशमनमिति।

मधुनश्च श्लेष्मपित्तप्रशमनस्य हृद्यत्वावधारणं न विरोधि। वस्तिरित्यविशेषादास्थापनानुवासने।

अविक्षीरं श्लेष्मपित्तजननानाम्, महिषीक्षीरं स्वप्नजननानाम्, मन्दकं दधि अभिष्यन्दकराणाम्, गवेधुकान्नं कर्षणीयानाम्, कोद्दालकान्नं रुक्षणीयानाम्, इक्षुर्मूत्रजननानाम्। यवाः पुरीषजननानाम्, जाम्बवं वातजननानाम्, शष्कुल्यः श्लेष्म-पित्तजननानाम्, कुलत्थोऽम्लपित्तजननानाम्, माषाः श्लेष्म-पित्तजननानाम्, मदनफलं वमनास्थापनानुवासनोपयोगि-

श्लेष्मपित्तजननानां द्रवद्रव्याणां मध्ये श्रेष्ठतमं श्लेष्मपित्तजननमविक्षीरं मेषीक्षीरम्, न तु कठिनानां द्रव्याणाम्। कठिनानां हि वक्ष्यतेऽत्र—माषाः श्लेष्मपित्तजननानामिति शष्कुल्यः श्लेष्मपित्तजननामिति च। महिषीक्षीरं स्वप्नजननानाम्। मन्दकं दध्यभिष्यन्दकराणामिति। शरीरधातुक्लेदकरण-पूर्व्वकस्रावकराणां मध्ये मन्दजातं दधि श्रेष्ठतममभिष्यन्दकरम्।

कर्षणीयानां द्रव्याणां मध्ये गवेधुकान्नं जूर्णान्नं श्रेष्ठतमं कर्षणीयम्। विरूक्षणीयानां मध्ये कोद्दालकान्नं वनकोद्रवान्नं श्रेष्ठतमं रूक्षणीयम्। मूत्र-जननानां मध्ये इक्षुः श्रेष्ठतमो मूत्रजननः। पुरीषस्य बहुमलस्य जननद्रव्याणां मध्ये यवाः श्रेष्ठतमा बहुपुरीषजननाः।

वातजननानां मध्ये जाम्बवफलं श्रेष्ठतमं वातजननम्। श्लेष्मपित्तजननानां भक्ष्याणां मध्ये शष्कुल्यः श्रेष्ठतमाः श्लेष्मपित्तजननाः। न तु कठिनानां द्रवाणां वा मध्ये। कठिनानां माषाः श्लेष्मपित्तजननानामिति वक्ष्यते। द्रवाणामविक्षीरं श्लेष्मपित्तजननानामित्युक्तम्। अम्लपित्तजननानां मध्ये कुलत्थः श्रेष्ठतमोऽम्लपित्तजननः। श्लेष्मपित्तजननानां कठिनानां मध्ये माषाः श्रेष्ठतमाः श्लेष्मपित्तजनना न तु द्रवाणां भक्ष्याणां वा मध्ये। तदुक्तम् अविक्षीरं श्लेष्मपित्तजननानां शष्कुल्यः श्लेष्मपित्तजननानामिति। 'श्रेष्ठ-तमत्वेनैकद्रव्योपदेशप्रतिभावेन त्रयाणां श्लेष्मपित्तजनने श्रेष्ठतमत्ववचनं न दोषावहम्' इति यो व्याचष्टे तद्व्याख्याने अविक्षीरशष्कुलीमाषाः श्लेष्मपित्त-जननानामित्येवं पाठापत्तिः।

इति कर्म्मणां द्रव्यादीन्युक्त्वा औषधानां द्रव्यादीन्याह—मदनफलमित्यादि।

अविक्षीरं पित्तश्लेष्मजननानामिति पेयेषु मध्ये, माषाः पित्तश्लेष्मजननानामिति भोज्येषु, शष्कुल्यः पित्तश्लेष्मजननानामिति भक्ष्येषु मध्ये; किंवा त्रयमप्येतत् पित्तश्लेष्मजननं प्रति समान-

नाम्, त्रिवृत् सुखविरेचनानाम्, चतुरङ्गुलं मृदुविरेचनानाम्, स्नुक्पयस्तीक्ष्णविरेचनानाम्, प्रत्यक्पुष्पी शिरोविरेचनानाम्, विडङ्गं क्रिमिघ्नानाम्, शिरीषो विषघ्नानाम्, खदिरः कुष्ठघ्नानाम्, रास्ना वातघ्नानाम्, आमलकं वयःस्थापनानाम्। हरीतकी पथ्यानाम्। एरण्डमूलं वृष्यवातहराणाम्। पिप्पलीमूलं दीपनीयपाचनीयानाहप्रशमनानाम्। उदीच्यं निर्व्वापणीयदीपनीयपाचनीयच्छर्द्यतीसारहराणाम्। कट्वङ्गं सांग्राहिकदीपनीयपाचनीयानाम्। अनन्ता सांग्राहिकदीप-

वमनादिकृतामौषधानामुपयोगीनि यानि द्रव्याणि तेषां मध्ये मदनफलं श्रेष्ठतमं वमनोपयोगि आस्थापनोपयोगि अनुवासनोपयोगि च। सुखविरेचनानां द्रव्याणां मध्ये त्रिवृन्मूलं श्रेष्ठतमं सुखविरेचनम्। मृदुविरेचनानां द्रव्याणां मध्ये चतुरङ्गुलवीजं शम्पाकवीजं श्रेष्ठतमं मृदुविरेचनम्।

तीक्ष्णविरेचनानां मध्ये स्नुक्पयः स्नुहीक्षीरं श्रेष्ठतमं तीक्ष्णविरेचनम्। शिरोविरेचनानां द्रव्याणां मध्ये प्रत्यक्पुष्पी अपामार्गवीजं श्रेष्ठतमा शिरोविरेचनी। विडङ्गं क्रिमिघ्नानां श्रेष्ठतमम्। शिरीषो विषघ्नानां श्रेष्ठतमम्। खदिरः कुष्ठघ्नानां श्रेष्ठतमः कुष्ठघ्नः। रास्ना वातहराणाम् श्रेष्ठतमा वातहरी। आमलकं वयःस्थापनानां श्रेष्ठतमं वयःस्थापनम्। हरीतकी पथ्यानां मध्ये श्रेष्ठतमा पथ्या। एरण्डमूलं वृष्यवातहराणाम्। वृष्याण्यथ च वातहराणि यानि तेषां मध्ये एरण्डमूलं श्रेष्ठं वृष्यवातहरम्। रास्ना तु न वृष्या। ततो न दोषः। पाचनीयानां दीपनीयानामानाहप्रशमनानाञ्च मध्ये श्रेष्ठतमं पिप्पलीमूलं दीपनीयं पाचनीयम् आनाहप्रशमनञ्च। उदीच्यं निर्व्वापणीयानां दीपनीयानां पाचनीयानां छर्द्दिहराणामतिसारहराणां मध्ये उदीच्यं बालकं श्रेष्ठतमम्। दीपनीयत्वपाचनीयत्वाभ्यां श्रेष्ठतममपि पिप्पलीमूलं न निर्व्वापणीयत्वादिभिस्तेन न दोषः। कर्म्मान्तरैः पृथक् श्रेष्ठतमत्वेनोक्तम्। कट्वङ्गं श्योनाकं सांग्राहिकदीपनीयपाचनीयानाम् मध्ये श्रेष्ठतमं। अनन्ता अनन्त-

मिति त्रितयमुच्यते; एवमन्यत्रापि तुल्यश्रेष्ठताभिधानं तत्कालीयश्रेष्ठताभिप्रायेण तुल्यत्वेन च

नीयरक्तपित्तप्रशमनानाम्। चित्रकमूलं दीपनीयपाचनीयगुदशूलशोथहराणाम् *। पुष्करमूलं हिक्काश्वासकासपार्श्वशूलहराणाम्। मुस्तं सांग्राहिकदीपनीयपाचनीयानाम्। अमृता सांग्राहिकदीपनीयवातहरश्लेष्मशोणितविबन्धप्रशमनानाम्। विल्वं सांग्राहिकदीपनीयवातकफप्रशमनानाम्। अतिविषा दीपनीयपाचनीयसांग्राहिकदोषहराणाम्। उत्पलपद्मकुमुदकिञ्जल्कः सांग्राहिकरक्तपित्तप्रशमनानाम्। दुरालभा पित्तश्लेष्मप्रशमनानाम्। गन्धप्रियङ्गुः शोणितपित्तातियोगप्रशमनानाम्। कुटजत्वक् श्लेष्मपित्तरक्तसांग्राहिकोपशोषणानाम्। काश्मर्य्यफलं † सांग्राहिकशोणितपित्तप्रशमनानाम्। पृश्निपर्णी सांग्राहिकदीपनीयवातहरवृष्याणाम्। विदारिगन्धा वृष्यसर्व्वदोषहराणाम्। बला सांग्राहिकबल्यवातहराणाम्।

मूलम्। चित्रकमूलं न तु पत्रादिकम्। पुष्करमूलम्—पुष्करं वृक्षविशेषस्तस्य मूलं न तु कुष्ठम्। मुस्तं भद्रमुस्तकम्। अमृता गुडूची। सांग्राहिकाणां दीपनीयानां वातहराणां श्लेष्मशोणितयोर्विबन्धप्रशमनानाञ्च। विल्वमामविल्वफलम्। न तु मूलादिकम्। अतिविषा घुणप्रिया। उत्पलस्य पद्मस्य कुमुदस्य किञ्जल्कः केशरः। दुरालभा यवासः। गन्धप्रियङ्गुः प्रियङ्गुरेव। शोणितपित्तस्य रक्तपित्तरोगस्य रक्तातिप्रवृत्तिप्रशमनानां श्रेष्ठतमः।

कुटजत्वक् श्लेष्मणः पित्तस्य रक्तस्य च सांग्राहिकाणामुपशोषणानाञ्च मध्ये श्रेष्ठतमा श्लेष्मादिसांग्राहिकी श्लेष्मादुरुपशोषणी च। काश्मर्य्यफलं सांग्राहिकाण्यथ च रक्तपित्तप्रशमनानि च यानि तेषां मध्ये श्रेष्ठतमम्। पृश्नीपर्णी सांग्राहिकाणां दीपनीयानां वातहराणां वृष्याणाञ्च मध्ये श्रेष्ठतमा। विदारिगन्धा शालपर्णी वृष्याणां सर्व्वदोषहराणाञ्च श्रेष्ठतमा। बला

श्रेष्ठम्; मन्दकमिति मन्दजातम्; उद्दालको वनकोद्रवः; गुदशोथोद्भवः; गन्धप्रियङ्गुः प्रियङ्गुरेव;

* दीपनीयपाचनीयगुदशोथार्शःशूलहराणामिति वा पाठः।

† रक्तसांग्राहिकेति वा पाठः।

गोक्षुरो मूत्रकृच्छ्रानिलहराणाम् । हिङ्गु निर्य्यासश्छेदनीयदीपनीयभेदनीयानुलोमिकवातकफप्रशमनानाम् । अम्लवेतसो भेदनीयदीपनीयानुलोमिकवातश्लेष्महराणाम् । यावशूकः स्रंसनीयपाचनीयार्शोघ्नानाम् । तक्राभ्यासो ग्रहणीदोषशोफार्शोघृतव्यापत्प्रशमनानाम् । क्रव्यादमांसाभ्यासो ग्रहणीदोषशोषार्शोघ्नानाम् । क्षीरघृताभ्यासो रसायनानाम् । समघृतसक्तुकाभ्यासो वृष्योदावर्त्तहराणाम् । तैलगण्डूषो दन्तबलरुचिकराणाम् । चन्दनोडुम्बरं दाहनिर्व्वापणानाम् । रास्नागुरुणी शीतापनयनप्रलेपनानाम् । लामज्जकोशीरे दाहत्वग्दोषस्वेदापनयनप्रलेपनानाम् । कुष्ठं

सांग्राहिकाणां बल्यानां वातहराणाञ्च श्रेष्ठतमा। गोक्षुरो मूत्रकृच्छ्रहराणामनिलहराणाञ्च श्रेष्ठतमः। हिङ्गुनिर्य्यासश्छेदनीयानां दीपनीयानां भेदनीयानामानुलोमिकानां वातकफप्रशमनानाञ्च श्रेष्ठतमः। अम्लवेतसो भेदनीयानां दीपनीयानामानुलोमिकानां वातश्लेष्महरणानाञ्च मध्ये श्रेष्ठतमः। यावशूकः स्रंसनीयानां पाचनीयानामर्शोघ्नानाञ्च मध्ये श्रेष्ठतमः। तक्राभ्यासो ग्रहणीदोषप्रशमनानामर्शःप्रशमनानां घृतव्यापत्प्रशमनानाञ्च मध्ये श्रेष्ठतमः। क्रव्यादमांसाभ्यासो ग्रहणीदोषघ्नानां शोषघ्नानामर्शोघ्नानाञ्च मध्ये श्रेष्ठतमः। क्षीरोत्थं घृतं न तु दध्युत्थम्, तस्य घृतस्याभ्यासो रसायनानामनौषधद्रव्याणां मध्ये श्रेष्ठतमः। न तु रसायनौषधानां सोमादीनाम्। सोमादयो ह्योषधय एकैकशो रसायनतमाः (औषधानि)। समघृतसक्तुकाभ्यासो वृष्याणामुदावर्त्तहराणां श्रेष्ठतमः। तैलगण्डूषो मुखे धृतो दन्तबलकराणां रुचिकराणाञ्च श्रेष्ठतमः। चन्दनमुडुम्बरत्वक् च व्यस्तं समस्तञ्च दाहनिर्व्वापणार्थं प्रलेपनानां श्रेष्ठतमम्। रास्ना चागुरु च व्यस्तसमस्ते द्वे शीतापनयनार्थप्रलेपनानां श्रेष्ठतमे भवतः। लामज्जकं सुगन्धि वीरणमूलम्। निर्गन्धवीरणमूलमुशीरम्। द्वे व्यस्तसमस्ते दाहत्वग्दोषस्वेदानामपनयनार्थं प्रलेपनानां श्रेष्ठतमे।

क्रव्यं मांसमश्नातीति क्रव्यादो व्याघ्रादिः। समघृत इत्यत्र समशब्दः सहार्थः; उद्वेपनमिति

वातहराभ्यङ्गोपनाहयोगिनाम् । मधुकं चक्षुष्यवृष्यकेश्य-कण्ठ्यवर्ण्यबल्यविरजनीयरोपणीयानाम् । वायुः प्राणसंज्ञा-प्रदानहेतूनाम् । अग्निरामस्तम्भशीतशूलोद्वेपनप्रशमना-नाम् । जलं स्तम्भनीयानाम् । मृद्भृष्टलोष्ट्रनिर्व्वापित-मुदकं तृष्णातियोगप्रशमनानाम् । अतिमात्राशनमाम-प्रदोषहेतूनाम् । यथाग्न्यभ्यवहारोऽग्निसन्धुक्षणानाम् । यथा-सात्म्यं चेष्टाभ्यवहारौ सेव्यानाम् । कालभोजनमारोग्य-कराणाम् । तृप्तिराहारगुणानाम् । वेगसन्धारणमनारोग्य-

कुष्ठं स्वनामख्यातं न तु पुष्करमूलम् । वातहरयोरभ्यङ्गोपनाहयोरुपयोगिनां श्रेष्ठतमम् । मधुकं चक्षुष्याणां वृष्याणां केश्यानां कण्ठ्यानां वर्ण्यानां बल्यानां विरजनीयानां रोपणीयानाञ्च श्रेष्ठतमम् । वायुर्बाह्यो व्यजनादिकृतश्च प्राण-प्रदानहेतूनां संज्ञाप्रदानहेतूनाञ्च श्रेष्ठतमः । अग्निर्बाह्य आमप्रशमनानां स्तम्भ-प्रशमनानां शीतप्रशमनानां शूलप्रशमनानामुद्वेपनप्रशमनानाञ्च श्रेष्ठतमः । जलं स्तम्भनीयानां श्रेष्ठतमम् । मृदो लोष्ट्रं भृष्टं सज्जले निक्षिप्तं तदुदकं तृष्णाया अतियोगप्रशमनानां श्रेष्ठतमम् । इत्यौषधानां द्रव्याण्युक्त्वा हिता-हितानि द्रव्याणां कर्म्माण्याह—अतिमात्रेत्यादि । आहारद्रव्याणामति-मात्राशनमामप्रदोषस्यालसकादेर्हेतूनामशनानां मध्ये श्रेष्ठतमम् । यथाग्न्य-भ्यवहारो मात्रयाऽभ्यवहारोऽग्निसन्धुक्षणानामभ्यवहाराणां श्रेष्ठतमः ।

यथासात्म्यं चेष्टा चाभ्यवहारश्च सेव्यानां क्रियाणां श्रेष्ठतमः । काल-भोजनं यस्य यः कालोऽभ्यस्त आहारे तस्य तत्कालभोजनमारोग्यकराणां कर्म्मणां श्रेष्ठतमम् । भोजनकालस्तु सार्द्धप्रहरद्वयाभ्यन्तरे प्रथमाहारस्य, द्वितीयस्याहारस्य कालस्ततः परं सार्द्धप्रहरद्वयाभ्यन्तरे रात्रावर्व्वागेकयामात् ।

वैषम्यम् । वत्सकमाभ्यासनस्तम्भनानामिति वक्तव्ये, यत् पृथक् "वत्सकमाभ्यासकराणां" तथा, "जलं स्तम्भनानाम्" इति करोति, तेन कर्म्मद्वयेऽपि जलस्यानन्यसाधारणतां दर्शयति । चिकित्सा गुणपाठे द्व्युभयकर्म्मकर्तृत्वे हेतुत्व प्राधान्यं स्यात् । एककर्म्मण्यप्यनेककर्म्मकर्तृत्वे यस्य प्राधान्य-मुक्तं पिप्पलीमूलादौ, तत्र तथाभूतानेककर्म्मकर्तृत्वे हेतुत्व प्राधान्यं ज्ञेयम्, न तु पृथक्-कर्म्मणि । [illegible] गृह्यते । [illegible]-

कराणाम्। मद्यं सौमनस्यजननानाम्। मद्याक्षेपो धीधृति-स्मृतिहराणाम्। गुरुभोजनं दुर्व्विपाकानाम्। एकभोजनं सुखपरिणामकराणाम्। शुक्रवेगनिग्रहः षाण्ड्यकराणाम्। स्त्रीष्वतिप्रसङ्गः शोषकराणाम्। परायतनम् * अन्नाश्रद्धाजननानाम्। अनशनमनायुष्कराणाम् †। प्रमिताशनं कर्षणीयानाम्। अजीर्णाशनं ग्रहणीदूषणानाम्। विषमाशनमग्निवैषम्यकराणाम्। विरुद्धवीर्य्याशनं निन्दितव्याधिकराणाम्। प्रशमः पथ्यानाम्। आयासः सर्व्वापथ्यानाम्।

यामादूर्द्ध्वं यामद्वयी रात्रिर्महानिशा। तृप्तिराहारगुणानामाहारस्य कर्म्मणां श्रेष्ठतमा। वेगसन्धारणं मूत्रपुरीषादीनामनारोग्यकराणां श्रेष्ठतमम्, न तु धार्य्याणां वेगानां सन्धारणम्। मद्यं यथामात्रं पीतं सौमनस्यस्य जननानां श्रेष्ठतमम्। मद्याक्षेपोऽतिमात्रमत्तता धीधृतिस्मृतिहराणां श्रेष्ठतमः। गुरुभोजनं गुरूणां द्रव्याणां मात्रया भोजनं दुर्व्विपाककराणां श्रेष्ठतमम्। एकं भोजनं सुखपरिणामकराणां भोजनानां श्रेष्ठतमम्। शुक्रवेगनिग्रहः शुक्रवेगधारणं पाण्ड्यकराणां श्रेष्ठतमम्। स्त्रीष्वतिप्रसङ्गोऽतिमैथुनं शरीरस्य शोषकराणां श्रेष्ठतमम्। परायतनं परगृहं भोजने कर्त्तव्येऽन्नेष्वश्रद्धाजननानां श्रेष्ठतमम्। अनशनमुपवासोऽनायुष्कराणां श्रेष्ठतमम्। प्रमिताशनमल्पमात्रयाऽशनं कर्षणीयानां श्रेष्ठतमं कर्षणीयम्। अजीर्णाशनं सति चाजीर्णे भोजनं ग्रहणीनाडीदूषणानां श्रेष्ठतमम्। विषमाशनं कदाचिदल्पमात्रं कदाचिदतिमात्रमशनं अग्निवैषम्यकराणां श्रेष्ठतमम्। विरुद्धवीर्य्याणां द्रव्याणामशनं निन्दितव्याधिकराणां पामाविचर्च्चिकादिकराणां श्रेष्ठतमम्। प्रशमो मनः-प्रहर्षिजकामादिभ्यो निवृत्तिः पथ्यानां श्रेष्ठतमः। आयासः परिश्रमः सर्व्वेषाम्

भोजनम्, अनेन सुखपरिणाममात्रमुच्यते, न द्वितीयान्नप्रतिषेधः क्रियते, एतेन द्विर्भोजनेऽपि अव्याहताग्निसाग्निप्रायः सुखपरिणामकारणं श्रेयाः; शोषकराणामिति शोषकारणानाम्; परायतनं परस्थानं, बध्यमानप्राणिदर्शनादि घृणया नान्ने श्रद्धा स्यात्। "अथ सितम्" इति केचित् पठन्ति, तन्नातिसाधु; प्रमिताशनमतीतकालभोजनम्, स्तोकभोजनं वा; विषमाशनं

* परायातनमिति चक्रः। † आयुषो ह्रासकराणामिति पाठान्तरम्।

मिथ्यायोगो व्याधिकराणाम्। रजस्वलाभिगमनमलक्ष्मीमुखानाम्। ब्रह्मचर्य्यमायुष्याणाम्। सङ्कल्पो वृष्याणाम्। दौर्म्मनस्यमवृष्याणाम्। अयथाबलमारम्भः प्राणोपरोधिनाम्। विषादो रोगवर्द्धनानाम्। स्नानं श्रमहराणाम्। हर्षः प्रीणनानाम्। शोकः शोषणानाम्। निर्वृत्तिः पुष्टिकराणाम्। तुष्टिः * स्वप्नकराणाम्। अतिस्वप्नस्तन्द्राकराणाम्। सर्व्वरसाभ्यासो बलकराणाम्। एकरसाभ्यासो दौर्ब्बल्यकराणाम्। गर्भशल्यमनाहार्य्याणाम्। अजीर्णमुद्धार्य्याणाम्। बाला मृदुभेषजीयानाम्। वृद्धा याप्यानाम्। गर्भिणी तीक्ष्णौषधव्यवायव्यायामवर्ज्जनीयानाम्।

अपथ्यानां श्रेष्ठतमः। मिथ्यायोगः स्नेहस्वेदादीनां सर्व्वेषां शोधनशमनादीनां कर्म्मणामयथावद्योगो व्याधिकराणां श्रेष्ठतमः। रजस्वलास्त्र्यभिगमनं व्यवायोऽलक्ष्मीमुखाणाम् अलक्ष्मीदोषकलिकलहाकालमरणादिदोषाणाम्। मुखानि साक्षात्कारणानि यानि तेषां मध्ये श्रेष्ठतमम्। ब्रह्मचर्य्यं वाक्कायमनोभिर्मैथुनवर्ज्जनमायुष्याणां श्रेष्ठतमम्। सङ्कल्पो मनसा व्यवायार्थं स्वाभीष्टकामिन्यादिचिन्तादिकर्म्म वृष्याणां श्रेष्ठतमः। दौर्म्मनस्यमवृष्याणां श्रेष्ठतमम्। अयथाबलमारम्भः प्राणोपरोधिनां श्रेष्ठतमः। विषादः सर्व्वदा मनःखेदः रोगवर्द्धनानां श्रेष्ठतमः। स्नानं श्रमहराणाम्। हर्षः प्रीणनानां श्रेष्ठतमः। शोकः शोषणानां श्रेष्ठतमः। निर्वृत्तिर्वाक्कायमनसां प्रवृत्तितो विरामः पुष्टिकरणानां श्रेष्ठतमा। तुष्टिः स्वप्नकराणाम्। पुष्टिरिति क्वचित् पठ्यते। अतिस्वप्नस्तन्द्राकराणाम्। सर्व्वरसाभ्यासो बलकराणां श्रेष्ठतमः। एकरसाभ्यासो दौर्ब्बल्यकरणानां श्रेष्ठतमः। गर्भशल्यमनाहार्य्यशल्यानां श्रेष्ठतमम्। अजीर्णमुद्धार्य्याणामुद्धरणीयानां श्रेष्ठतमम्। बालो मृदुभेषजीयानां श्रेष्ठतमः। वृद्धो याप्यानां कालयापनीयानां श्रेष्ठतमः। गर्भिणी

प्रकृतिविकरणादिविषमाशनम् ; निवृत्तव्याधिः क्लिष्टकुष्ठादिः ; अलक्ष्मीमुखानामलक्ष्मीकारणानाम् ; मिथ्यायोगः सम्यग्योगादन्यत्रिविधो योगः, सङ्कल्पः स्त्रीसङ्गसङ्कल्पः, ज्वरो रोगाणामिति हारा-

* तुष्टिरित्यत्र पुष्टिरिति वा पाठः।

सौमनस्यं गर्भधारणानाम् । सन्निपातो दुश्चिकित्स्यानाम् । आमो विषमचिकित्स्यानाम् । ज्वरो रोगाणाम् । कुष्ठं दीर्घरोगाणाम् । राजयक्ष्मा रोगसमूहानाम् । प्रमेहोऽनुषङ्गिणाम् । जलौकसः शस्त्राणाम् * । वस्तिस्तन्त्राणाम् । हिमवानोषधिभूमीनाम् । सोम ओषधीनाम् । मरुभूमिदेश आरोग्यदेशानाम् । अनूपोऽहितदेशानाम् । निर्देशकारित्वम् आतुरगुणानाम् । भिषक् चिकित्साङ्गानाम् । नास्तिकोऽवर्ज्यानाम् † । लौल्यं क्लेशकराणाम् । अनिर्देशकारित्वमरिष्टानाम् । अनिर्वेदोऽवार्त्तासारलक्षणानाम् ‡ । वैद्य-

तीक्ष्णौषधप्रयोगे व्यवायं व्यायामं च वर्ज्जनीयानां मध्ये श्रेष्ठतमा । सौमनस्यं स्त्रीणां गर्भधारणहेतूनां श्रेष्ठतमम् ।

सन्निपातनो व्याधिर्दुश्चिकित्स्यानां श्रेष्ठतमः । आमोऽलसकादिर्विषमचिकित्स्यानां श्रेष्ठतमः । ज्वरो रोगाणां श्रेष्ठतमः । कुष्ठं दीर्घरोगाणां श्रेष्ठतमम् । राजयक्ष्मा रोगसमूहानां श्रेष्ठतमः । रोगो धातुवैषम्यम् । तद्धातुवैषम्यनिमित्तो ज्वरादिर्व्याधिर्नानारोगात्मकलिङ्गत्वेन रोगसमूह उच्यते । न तु धातुवैषम्यं रोगसमूहः । अथवा रोगसङ्करकरत्वेन रोगसमूह उक्तः । प्रमेहोऽनुषङ्गिणां रोगाणां नित्यसंलग्नीभूतानां श्रेष्ठतमः । जलौकसः शस्त्राणां श्रेष्ठतमाः । वस्तिस्तन्त्राणां नियताधीनकर्म्मणां मध्ये वस्तिकर्म्म श्रेष्ठतमं तन्त्रम् । हिमवानोषधिभूमीनां श्रेष्ठतमः । सोमो विंशतिविध ओषधीनां श्रेष्ठतमः । मरुभूमिदेशः आरोग्यदेशानां श्रेष्ठतमः । अनूपो देशोऽहितदेशानां श्रेष्ठतमः । निर्देशकारित्वमातुरगुणानां श्रेष्ठतमम् । भिषक् स्वस्वशास्त्रायुर्वेदवित् चिकित्साङ्गानां चतुर्णां श्रेष्ठतमः । नास्तिकोऽवर्ज्यानामश्रेष्ठानां मध्ये श्रेष्ठतमः । लौल्यं क्लेशकराणां श्रेष्ठतमम् । अनिर्देशकारित्वमातुरस्यारिष्टानां श्रेष्ठतमम् । अनिर्वेदो वैराग्यादितो मनःखेदो

कर्म्मणाम् ; अनुषङ्गी पुनर्भावी, तन्त्राणामिति कर्म्मणां ; सोम ओषधिराजः पञ्चदशपर्व्वा ;

* जलौकसोऽनुशस्त्राणामिति द्वितीयः पाठः । † वर्ज्यानामिति पाठान्तरम् ।

‡ वार्त्तलक्षणानामिति वा पाठः ।

समूहो निःसंशयकराणाम्। योगो वैद्यगुणानाम्। विज्ञानमौषधानाम्। शास्त्रसहितस्तर्कः साधनानाम्। सम्प्रतिपत्तिः कालज्ञानप्रयोजनानाम्। * अव्यवसायः कालातिप्रतिपत्तिहेतूनाम्। दृष्टकर्म्मता निःसंशयकराणाम्। असमर्थता भयकराणाम्। तद्विद्यसम्भाषा बुद्धिवर्द्धनानाम्। आचार्य्यः शास्त्राधिगमहेतूनाम्। आयुर्व्वेदोऽमृतानाम्। सद्वचनमनुष्ठेयानाम्। असम्बन्धवचनमसंग्रहणसर्व्वाहितानाम् †। सर्व्व सन्न्यासः सुखकराणामिति ॥ २२ ॥

निर्व्वेदः, वैराग्यादितो मनःखेदाभावोऽशान्तेस्याधृतिभावस्य लक्षणानां श्रेष्ठतमः, असारलक्षणानाञ्च श्रेष्ठतमः, वैद्यसमूहोऽष्टाङ्गायुर्व्वेदविदां समूहश्चिकित्सायां रोगादितत्त्वज्ञाने निःसंशयकराणां श्रेष्ठतमः। योगो भेषजानां सम्यग्योगो वैद्यगुणानां श्रेष्ठतमः। विज्ञानं ( आयुर्व्वेदादिशास्त्रेषु ) तत्त्वज्ञानं शारीरमानसव्याधेरौषधानां मध्ये श्रेष्ठतममौषधम्।

शास्त्रसहितस्तर्क ऊहः साधनानां कर्म्मसिद्धिनिष्पत्तिकराणां श्रेष्ठतमं साधनम्। सम्प्रतिपत्तिः सम्यग् ज्ञानं कालज्ञानस्य प्रयोजनानां मध्ये श्रेष्ठतमं कालज्ञानप्रयोजनम्। अव्यवसायो व्यवसायाकरणं कालस्यातिप्रतिपत्तेः प्रतिपत्त्यतिक्रमस्य हेतूनां श्रेष्ठतमः कुव्यवसायातिप्रतिपत्तिहेतुः।

दृष्टकर्म्मता दृष्टं चिकित्सितकर्म्म येन तस्य भावो दृष्टकर्म्मता चिकित्साकर्म्मणि निःसंशयकराणां श्रेष्ठतमा निःसंशयकरी। असमर्थता भयकराणां श्रेष्ठतमा। तद्विद्यसम्भाषा समानशास्त्राधीलवतां परस्परवादो जल्पवितण्डे च बुद्धिवर्द्धनानां मध्ये श्रेष्ठतमा बुद्धिवर्द्धनी। आचार्य्यः शास्त्राणामर्थाधिगमहेतूनां श्रेष्ठतमोऽर्थाधिगमहेतुः। आयुर्व्वेदोऽमृतानां श्रेष्ठतमोऽमृतः। 'वेदा अमृता' इत्युक्तं छान्दोग्योपनिषदि। सद्वचनं साधुवाक्यमनुष्ठेयानां मध्ये श्रेष्ठतममनुष्ठेयम्। असम्बन्धवचनम् असंग्रहणानां बहुभाषणानां सर्व्वस्य

वातलक्षणानामित्यारोग्यलक्षणानाम्। ज्ञानमित्यौषधविज्ञानं, साधनानामिति ज्ञानसाधनानाम्, सम्प्रतिपत्तिः यथाकर्त्तव्यतानुष्ठानम्, तृप्तिराहारगुणानामित्यत्र गुणशब्दः प्रशस्तधर्म्मवचनः। एक-

* तृप्तिराहारगुणानामित्यधिकपाठः क्वचित्। † असत्प्रग्रहणं सर्व्वाहितानामिति पाठान्तरम्।

भवन्ति चात्र ।

अग्र्याणां शतमुद्दिष्टं यद्द्विपञ्चाशदुत्तरम् ।
अलमेतद्विकाराणां विघातायोपदिश्यते ॥ २३ ॥
समानकारिणो येऽर्थास्तेषां श्रेष्ठस्य लक्षणम् ।
ज्यायस्त्वं कार्य्यकर्तृत्वेऽवरत्वञ्चाप्युदाहृतम् ॥ २४ ॥

अहितानाञ्च श्रेष्ठतममसंग्रहणं सर्व्वाहितञ्च । सर्व्वसन्न्यासः सर्व्वेषामारम्भाणां प्रवृत्तीनां सम्यक् निक्षेपस्त्यागः सुखकराणां श्रेष्ठतमः सुखकर इति ॥ २२ ॥

गङ्गाधरः—एषां संग्रहश्लोकानाह—भवन्ति चात्रेत्यादि । अग्र्याणामित्यादि । इति अग्र्याणां श्रेष्ठतमानां यद् द्विपञ्चाशदुत्तरं शतमुद्दिष्टं संक्षेपेणोक्तं तदेतद्विकाराणां विघातायालं समर्थमुपदिश्यते । एषां विज्ञानतो जातसामर्थ्यः पुरुषोऽन्येषामपि कर्म्मगुणनिर्द्देशसमर्थो भवति । तेनानुक्तानामपि कर्म्मौषधानां द्रव्यादीनि ब्रूयात्र चैतावन्मात्रं श्रेष्ठतमं परिसमाप्तम् । ये ह्यर्थाः समानकर्म्मकारिणस्तेषां श्रेष्ठतमस्य लक्षणं ज्यायस्त्वं श्रेष्ठत्वमवरत्वञ्च

रसाभ्यासः कर्शनानामित्यपवादं वर्ज्जयित्वा, तेन घृताभ्यासो रसायनानामिति न विरुध्यते । अमृतानामिति जीवितप्रधानहेतूनाम्, सर्व्वसंन्यासः सर्व्वक्रियात्यागः, स हि परमसुखमोक्षहेतुः शारीरे वक्तव्यः ॥ २२ ॥

चक्रपाणिः—अग्र्याणामित्यादौ अग्र्यशब्दः श्रेष्ठवचनः, अलमिति समर्थम्, अत्र ज्वरप्रमेहादयोऽपि स्वरूपेणातिपीड़ाकरत्वानुषङ्गिकत्वादिना ज्ञाताः सन्तः चिकित्सायामुपयुक्ता भवन्ति, अतो ज्वरादिज्ञानमपि विकाराणां विघाताय समर्थं भवति, अग्र्याणाञ्च विकारशमकत्वाभिधानं प्राधान्यादुच्यते, स्तुत्यर्थं वा, तेन यदुच्यते—एत एव चेदग्र्याधिकारे विहिता विकारान् शमयन्ति, तत् किमपरचिकित्साभिधानेनेति तन्निरस्तं ; विकारविघातश्चेहोत्पन्नानामग्र्यौषधोपयोगेन तथानुत्पन्नानां स्वास्थ्यपरिपालनेन ज्ञेयः ॥ २३ ॥

चक्रपाणिः—अग्र्याधिकारोक्तं संग्रहेण कथयति—समानेत्यादि । कारिणः तुल्यकर्म्माणः ; श्रेष्ठस्य लक्षणमिति प्रशस्तस्य लक्षणम्, लक्षणन्त्विह पाठ एव, पाठेन हि श्रेष्ठं लक्ष्यते ज्ञाप्यते इत्यर्थः ; ज्यायस्त्वं वृहत्त्वम्, तच्च प्रशस्तगुणवृहत्त्वं ज्ञेयम्, अत एवाहिताधिकारकथने श्रेष्ठतमत्वं त्यक्त्वा "अपथ्यतमत्वे प्रकृष्टतमा भवन्ति" इत्युक्तम्, तेन, श्रेष्ठस्य लक्षणमिति रक्तशाल्यादीनां हिताहाराणां ज्ञेयम् ; ज्यायस्त्वञ्चाहिताहाराणां यवकादीनामपथ्यतमत्वे प्रकर्षशालित्वम ; कार्य्यकर्तृत्वे वरत्वञ्चेति कर्म्मणि चोत्कृष्टत्वं, तत्र "अन्नं वृत्तिकराणाम्" इत्यादिनोक्तं ज्ञेयम् ।

वातपित्तकफानाञ्च यद्यत् प्रशमने हितम्।
प्राधान्यतश्च निर्दिष्टं यद्व्याधिहरमुत्तमम् ॥ २५ ॥
एतन्निशम्य निपुणश्चिकित्सां संप्रयोजयेत्।
एवं कुर्व्वन् सदा वैद्यो धर्म्मकामौ समश्नुते ॥ २६ ॥
पथ्यं पथोऽनपेतश्च यच्चोक्तं मनसः प्रियम्।
यच्चाप्रियमपथ्यञ्च नियतं तन्न लक्ष्यते ॥ २७ ॥

काम्यकृत्तु तेऽप्युदाहृतम्। एवं वातपित्तकफानां प्रशमने यद्यद्धितं प्राधान्यतस्तन्निर्दिष्टम्। तथा व्याधिहरं यदुत्तमं तदपि निर्दिष्टम्। इति ॥ २३—२५ ॥

गङ्गाधरः—एषां विज्ञानप्रयोजनमाह—एतदित्यादि। निपुणो वैद्य एतदुक्तं द्विपञ्चाशदुत्तरं शतं निशम्य चिकित्सायां प्रयोजयेत्। एवञ्च कुर्व्वन् चिकित्सायामेषां प्रयोगं कुर्व्वन् वैद्यो धर्म्मञ्च कामञ्चाश्नुते ॥ २६ ॥

गङ्गाधरः—ननु हितं पथ्यमहितमपथ्यं कथमभिधीयते इति ? अत आह—पथ्यमित्यादि। पथः शारीराणां वातपित्तकफरसरक्तादीनां धातूनां सञ्चारमार्गात् स्रोतोरूपादनपेतमनपगतम्। सर्व्वस्रोतोगतमपायकरं न भवति। यच्च मनसः प्रियं सुखानुभवकरं तत् पथ्यं कट्वाद्यास्वादनेन मनसोऽप्रियत्वेऽपि परिणामे सुखजनकत्वात्र मनसोऽप्रियं भवति। यच्चापाततः परिणामे च नियतं मनसोऽप्रियमपथ्यञ्च तन्न लक्ष्यते ॥ २७ ॥

वातपित्तकफेभ्यश्चेत्यादौ "वस्तिर्वातहराणाम्" "विरेचनं पित्तहराणाम्" "वमनं श्लेष्महराणाम्" "आस्थापनं वातहराणाम्" इत्यादि ज्ञेयम्। यद्व्याधिहरमिति "खदिरं कुष्ठहराणाम्" "पुष्करमूलं हिक्काश्वासपार्श्वशूलानाहहराणाम्" इत्यादि ज्ञेयम्; किंवा, "अवरत्वम्" इति पाठः, तदा, अवरत्वम् अत्यर्थानभिप्रेतकर्त्तृत्वम्, तत्र "रजस्वलागमनमलक्ष्मीमुखानाम्" इत्यादि ज्ञेयम्, श्रेष्ठत्वाधमत्वाभ्यां प्रशस्ताप्रशस्तकर्म्मणामपि ग्रहणं व्याख्येयम् ॥ २४—२६ ॥

चक्रपाणिः—सम्प्रत्युक्तस्य पथ्यस्य हितापरनाम्नो लक्षणमाह—पथ्यमित्यादि। पथः शरीरमार्गात् स्रोतोरूपादनपेतम्, अपेतमपकारकमनपेतमनपकारकमित्यर्थः, पथिग्रहणेन पथो वाहस्रोतांसि धातवश्च, तथा पथो नियर्त्तका धातवो गृह्यन्ते; तेन कृत्स्नमेव शरीरं गृहीतं स्यात्, ततश्च शरीरानुपघाति पथ्यमिति स्यात्; किंवा स्वस्थस्वास्थ्यरक्षणमातुरव्याधिपरिमोक्षश्चेति पन्थाः, तस्मादनपेतं पथ्यम्। एवमपि मनोऽनुपघातित्वं न लभ्यत इत्याह—यच्चोक्तं मनसः प्रियमिति, मनसोऽतिप्रीत्याभिलषितं, तेन मनसो हितमिति प्रियार्थः; तेन मनसश्चानामीप्सितत्वादृयो गृह्यते; एतेन मन:शरीरानुपघाति पथ्यमिति पथ्यलक्षणमत्रपर्याप्तमुक्तं स्यात्; अन्ये तु पथ्यलक्षण-

मात्राकालक्रियाभूमि-देहदोषगुणान्तरम्।
प्राप्य तत्तद्धि दृश्यन्ते ते ते भावास्तथा तथा॥
तस्मात् स्वभावो निर्द्दिष्टस्तथा मात्रादिराश्रयः।
तदपेक्ष्योभयं कर्म्म प्रयोज्यं सिद्धिमिच्छता॥ २८॥

तदात्रेयस्य भगवतो वचनमनुनिशम्य पुनरपि भगवन्तमात्रेयमग्निवेश उवाच—यथोद्देशमभिनिर्द्दिष्टः केवलोऽयमर्थो भगवता श्रुतस्त्वस्माभिः। आसवद्रव्याणामिदानीमनपवादं लक्षणमनतिसंक्षेपेणोपदिश्यमानं शुश्रूषाम इति॥ २९॥

गङ्गाधरः—मात्रेत्यादि। ये ये लोहितशाल्यादयः श्रेष्ठत्वेनोक्तास्ते ते भावा मात्राकालक्रियाभूमिदेहदोषगुणावस्थान्तरं तत्तत् प्राप्य तथा तथा भवन्ति। न तु तत्तद्गुणान्तरव्यतिरिक्तापरभावमापन्ना हिता अहिता भवन्ति अहिता हिता भवन्ति। तस्माद्धिताहितत्वस्वभावो लोहितशाल्यादीनां निर्द्दिष्टः। तत्र तथा हितत्वाहितत्वयोराश्रयो मात्रादिर्मात्राकालक्रियाभूमिदेहदोषावस्थान्तरमिति तन्मात्राद्याश्रयं हिताहितमुभयमपेक्ष्य सिद्धिमिच्छता चिकित्सायां पानाशनादिकं कर्म्म प्रयोज्यमिति॥ २८॥

गङ्गाधरः—इत्येवमनपवादं हिताहितलक्षणं श्रुत्वाग्निवेशः पुनर्यदपृच्छत् तदाह—तदात्रेयेत्यादि। भगवता यथोद्देशमयं केवलः कृत्स्नोऽर्थोऽभिनिर्द्दिष्टः।

इयमेतत् पठन्ति, वदन्ति च—"यद्येवं लक्षणं स्यात्, तदा ज्वरादिषु तिक्तं भेषजं मनसोऽप्रियत्वेन न पथ्यं स्यात्, एतच्चानुमतमेव,—यद् ज्वरे तिक्तप्रयोगस्य तदात्वे न मनसोऽनुकूलत्वं, न चैतावता शरीरे प्रत्यपथ्यत्वं स्यात्, अतः यन्मात्रं मनोऽनुकूलत्वं मानसविकाराकर्तृ स्यात्, तत् व्यपदेश्यमेव; किंवा तावन्मात्रं मनोऽननुकूलत्वं मानसविकारकर्तृ स्यादव्यपदेश्यमेव; तदेतदपथ्यत्वं किमाहाराचाराणां नियतमस्ति? नेत्याह—तच्चेत्यादि। नियतं निश्चितमिदमप्रियमेव सर्व्वदेदमपथ्यमेव सर्व्वदेत्येवंरूपं किञ्चिन्नास्तीत्यर्थः। कुतो नास्तीत्याह—मात्रेत्यादि। गुणान्तरशब्दो मात्रादिभिः सम्बध्यते, तत्तदिति मात्रादिगुणान्तरम्, ते ते इति हिताहिताहाराचाराः, तथा तथेति हितोक्ता अपि हिता अहिताश्च, तथाऽहितोक्ताश्चाहिता हिताश्च; एवं प्रियमपि मधुरादि अप्रियम्, तिक्ताद्यप्रियमपि प्रियम्; अत्रोदाहरणं यथा—पथ्यं तावद् घृतम्, तदतिमात्रमपथ्यं स्यात् काले च वसन्तेऽपथ्यम्, संस्कारेण च विरुद्धद्रव्यसंस्कृतमपथ्यम्, भूमौ चानूपायामपथ्यम्, एवं देहेऽतिस्थूले, एवं दोषे कफेऽपथ्यम्; अपथ्यमपि विषं मात्रादिना हितं स्यात्, यथा 'ज्वरे

तमुवाच भगवानात्रेयः। धान्यफलमूलसारपुष्पकाण्ड-पत्रत्वचो भवन्त्यासवयोनयोऽग्निवेशाष्टौ संग्रहेण शर्करानव-मीकाः। तास्वेव द्रव्यसंयोगकरणतोऽपरिसंख्येयासु यथापथ्य-तमानामासवानां चतुरशीतिं निबोध ॥ ३० ॥

तद्यथा सुरासौवीरकतुषोदकमैरेयमेदकधान्याम्लाः षड् धान्यासवा भवन्ति। मृद्वीकाकाश्मर्य्यखर्ज्जूरधन्वनराजादन-

इदानीमासवद्रव्याणामनतिसंक्षेपेणोपदिश्यमानमनपवादं लक्षणं शुश्रूषाव इत्यग्निवेश उवाच ॥ २९ ॥

गङ्गाधरः—ततस्तमुवाचात्रेयः। धान्यफलेत्यादि। धान्यादयोऽष्टावासवानां योनयो भवन्ति। शर्करानवमीकाः शर्करा नवमी योनिर्यास्वष्टसु योनिषु ताः शर्करानवमीकाः। धान्यादिवदोषधिजात्यभावाच्छर्करायाः पृथक् अभिधानं, धान्यस्य तृणफलत्वेन फलस्य वृक्षजफलविवक्षाज्ञापनार्थं पृथग्वचनम्। तास्वेव नवस्वासवयोनिषु द्रव्यसंयोगकरणतः पुनरपरिसङ्ख्येयासु योनिषु पथ्यतमानामासवानां चतुरशीतिं योनीः निबोध ॥ ३० ॥

गङ्गाधरः—सुरेत्यादि। सुरादयः षड् धान्यासवाः। सुरा तन्डुलकृता, सौवीरकं निस्तुषयवकृतं, तुषोदकं सतुषयवकृतं, मैरेयं सुराकृतसुरा, मेदको जगलाख्या श्वेतसुरा, धान्याम्लं काञ्जिकमिति। मृद्वीकादीनां शङ्खिन्यन्तानां षड्विंशतेः फलानामेकैकेषामासवाः षड्विंशतिर्भवन्ति।

विषस्य तिलं दद्यात् इत्यादि; एवमन्यदप्यूह्यम्, यस्मादेवमेकान्तमपथ्यत्वमनिश्चितं, प्रायोवादपथ्यता तु निश्चिता, तस्मात् स्वभावो निर्दिष्ट इति,—पथ्यानां रक्तशाल्यादीनाम् अपथ्यानाञ्च यवकादीनामित्यर्थः, स्वभावः प्रकृत्या पथ्यताऽपथ्यता च, तथा मात्रादिराश्रय इति निर्दिष्ट इति सम्बन्धः, मात्रादिर्मात्राकालक्रियादिः; आश्रय इति पथ्यत्वापथ्यत्वयोः, मात्रादीन्याश्रित्य भावानां पथ्यत्वापथ्यत्वञ्च पारमार्थिकं भवतीत्यर्थः; उभयमिति स्वभावो मात्रादिश्च ॥ २७—२९ ॥

चक्रपाणिः—इदानीमपराधिकारादासवेष्वनन्तेषु ये आसवा अग्र्यास्त उच्यन्ते। धान्यादीन्येकत्वेन पठित्वा पृथक् शर्करां पठन्ति, धान्यादीनामवान्तरजातिमत्त्वात्, शर्करायास्त्ववान्तरजातिर्नेति; सा तु शर्करा नवस्यासवकारणतया श्रूयते; मधुशर्करा तु मध्वन्तरनिविष्टैव; मधु तु नासवयोनितया पृथक् पठितम्, येन तत्कृतस्यासवस्य धान्यसम्बन्धत्वात् धान्यासवेष्वेव ग्रहणम्; एवं गौडासवादिष्वपि बोद्धव्यम्। द्रव्यस्य संयोगश्च करणञ्च द्रव्यसंयोगकरणम्, ततो-

तृणशून्यपरूषकाभयामलकमृगलिण्डिकाजम्बीर-*कपित्थकुवल-बदरकर्कन्धूपीलुपियालपनसन्यग्रोधाश्वत्थप्लक्षकपीतनोडुम्बराजमोदाशृङ्गाटकशङ्खिनीफलासवाः षड्विंशतिर्भवन्ति । विदारिगन्धाश्वगन्धाकृष्णगन्धाशतावरीश्यामात्रिवृद्दन्तीद्रवन्ती-विल्वोरुबूकचित्रमूलैरेकादश मूलासवा भवन्ति । शालप्रियकचन्दन-स्यन्दन-खदिर-कदरसप्तपर्णाश्वकर्णार्ज्जुनाशनारिमेद-तिन्दुक-किणिहिशमीशुक्तिपत्रशिंशपाशिरीषवञ्जुलधन्वनमधूकसारासवा

धन्वनो वृक्षविशेषः। राजादनं पियालभेदः। तृणशून्या (न्यं) केतकी तस्याः फलासवः। मृगलण्डिका विभीतकी तस्याः फलम्। कुवलं वृहत्फलबदरी। बदरं स्वल्पफलबदरी। कर्कन्धूः शृगालकोली। पीलु उत्तरापथिकं गुडफलम्। प्लक्षः पर्कटी। अजमोदा यमानी। शङ्खिनी चोरपुष्पीति। विदारिगन्धेत्यादि। विदारिगन्धादिचित्रमूलान्तैरेकादशभिरेकैकस्य मूलेन कृत आसव इति मूलासवा एकादश भवन्ति। विदारिगन्धा शालपर्णी। कृष्णगन्धा शोभाञ्जनः। श्यामा श्याममूला त्रिवृत्। दन्ती नागदन्ती। द्रवन्ती क्षुद्रमूला दन्ती। एषां मूलानि। शालेत्यादि। शालादीनां मधूकान्तानां सारैरासवा विंशतिर्भवन्ति। शालस्त्रिविधः। तत्र वृहद्वृक्षः शाल इह विवक्षितः। प्रियकः प्रियङ्गुवृक्षः। चन्दनं रक्तचन्दनम्। स्यन्दनस्तिनिशवृक्षः। खदिरो बब्बोलः। कदरः श्वेतखदिरः। सप्तपर्णः सप्तच्छदः। अश्वकर्णो वृहत्पत्रह्रस्वशालवृक्षः। अर्ज्जुनः स्वनामख्यातः। असनः पीतशालः। अरिमेदो विट्खदिरः। किणिहिः स्वनामख्यातो वृक्षविशेषः सारवान् न त्वपामार्गः सारा-भावात्। शुक्तिपत्रं बदरीवृक्षः। वञ्जुलोऽशोकवृक्षः। धन्वनो धामनीवृक्षः।

ऽपरिसंख्येयाः स्युः; सौवीरं निस्तुषयवकृतं, मैरेयं सुरासवकृता सुरा, मेदकः श्वेतसुरा अनाख्या धान्याम्लं काञ्जिकं, तृणशून्यं केतकी, मृगलिण्डिका बिभीतकम्, कुवलमिति स्थूलबदरी, कर्कन्धूः शृगालबदरी, कदरः श्वेतखदिरः, अश्वकर्णः शालभेदः, अरिमेदो विट्खदिरः,

* जम्बीरेत्यत्र जाम्बवेति वा पाठः ।

विंशतिर्भवन्ति। पद्मोत्पलनलिनकुमुद-सौगन्धिकपुण्डरीकशत-पत्रमधूकप्रियङ्गुधातकीपुष्पैर्दश पुष्पासवा भवन्ति। इक्षुकाण्डे-क्षिक्षुवालिकापुण्ड्रकचतुर्थाः काण्डासवाः। पटोलताडकपत्रा-सवौ द्वौ भवतः। तिल्वकलोध्रैलवालुकक्रमुकचतुर्थास्त्वगा-सवा भवन्ति। शर्करासव एक एवेति॥ ३१॥

एवमेषामासवानां चतुरशीतिः परस्परेणासंसृष्टानामासव-द्रव्याणामुपदिष्टा भवन्ति। एषामासवानामासुतत्वादासवसंज्ञा।

पद्मोत्पलेत्यादि। पद्मादीनां धातक्यन्तानां दशानामेकैकस्य पुष्पैः कृता आसवाः पुष्पासवा दश। पद्ममरविन्दं कमलम्। उत्पलं नीलोत्पलम्। नलिनं स्वल्पदलपद्मम्। तच्चाष्टदलं द्वादशदलश्चारुणवर्णम्। कुमुदं श्वेत-पुष्पनालीपुष्पम्। सौगन्धिकं श्वेतपुष्पं कह्लारम् *। रक्तपुष्पञ्च। पुण्डरीकं श्वेतपद्मम्। शतपत्रमरुणवर्णशतदलपुष्पपद्मम्। प्रियङ्गु वृक्षस्य पुष्पम्। इक्ष्वित्यादि। इक्षुप्रभृतीनां चतुर्णां काण्डानामासवाश्चत्वारः। इक्षुः कृष्ण इक्षुः। बहुधा। काण्डेक्षुः कठिनोऽल्परस इक्षुः खागिया इति लोके। इक्षुवालिका लटा। पुण्ड्रकः श्वेतेक्षुः। पटोलेत्यादि। द्वौ पत्रासवौ। पटोलपत्रस्य ताडपत्रस्य च। ताडस्तालपत्रवद्बृहत्पत्रवृक्षः। तिल्वकेत्यादि। तिल्वकादीनां चतुर्णां त्वचा कृता आसवाश्चत्वारः। तिल्वकः श्वेतलोध्रः। लोध्रो रक्तलोध्रः। एलवालुक पैलेयवृक्षः। क्रमुको गुवाकवृक्षः। शर्करासव एक एवेति। इति चतुरशीतिरासवाः॥ ३१॥

गङ्गाधरः—एषामासवसंज्ञा खल्वासुतत्वात् कालान्तरेण सन्धानभावात्। नन्वेषां चतुरशीतेर्द्रव्याणामेव किमासवा भवन्ति नान्येषामिति? अत उच्यते एवमेषामित्यादि। परस्परेणासंसृष्टानामेषामेकैकेषामासवानां द्रव्याणां चतुर-

किणिही अपामार्गः, शुक्लिमञ्जरी पद्मं सरक्तमष्टदलपद्मम्, नलिनं श्वेतमष्टदलपद्मम्, पुण्डरीकं श्वेतशतपत्रपद्मम्, शतपत्रन्त्वरुणम्। इक्षुग्रहणप्राप्तस्यापि पुण्ड्रकस्य पुनरभिधानमासवं प्रति तस्य प्राधान्यख्यापनार्थम्; क्रमुकं गुवाकम्, तिल्वकः शावरलोध्रः। आसुतत्वादिति सन्धानकृतत्वात्। द्रव्यसंयोगविभाग इत्यादौ 'एषाम्' इतिपदेन प्रत्येकं धान्यादिद्रव्यकृता आसवा उक्ताः, तेषाञ्च विभागोऽनुपपन्न एकरूपत्वादिति, नन्न, तेषामपि स्वजातीयद्रव्यविभागाद्

* सौगन्धिकं नीलोत्पलाकारवर्णमुत्पलं सुगन्धियुक्तमिति डल्हणः।

द्रव्यसंयोगविभागविस्तरस्त्वेषां बहुविधविकल्पः संस्कारश्च । यथास्वं संयोगसंस्कारसंस्कृता ह्यासवाः स्वं स्वं कर्म्म कुर्व्वन्ति ॥ ३२ ॥

संयोगसंस्कारादौ देशकालमात्रादयश्च भावाः । तेषां तेषामासवानां ते ते समुपदिश्यन्ते तत्तत्कार्य्यमभिसमीक्ष्येति ॥ ३३ ॥

भवति चात्र ।

मनःशरीराग्निबलप्रदानाम्
अस्वप्नशोकारुचिनाशनानाम् ।
संहर्षणानां प्रवरासवानाम्
अशीतिरुक्ता चतुरुत्तरैषा ॥ ३४ ॥

शीतिरुपदिष्टा भवन्ति, तेषामासवानामुक्तानुक्तद्रव्यैः संयोगविस्तरो द्रव्यविभागविस्तरश्च बहुविधविकल्पः संस्कारश्च बहुविधविकल्पः । तत्र येन येन द्रव्येण संयोगात् यस्य यस्य द्रव्यस्यासवा ये भवन्ति, येन येन च द्रव्येण च संस्कारात् संस्कृताश्च भवन्ति तत्तद् यथास्वं द्रव्यस्य संस्कारस्य गुणकर्म्मभ्यां ते त आसवाः स्वं स्वं कर्म्म कुर्व्वन्ति ॥ ३२ ॥

गङ्गाधरः—तत्तद्द्रव्यसंयोगविभागादौ संस्कारे च असंस्कारे च यद्यत् कर्म्म कुर्व्वन्ति बुद्धिमद्भिस्तेषां तेषामासवानां तत्तत्कार्य्यमभिसमीक्ष्य विविच्य मात्रादयश्च भावास्तेषां तेषां ते ते मात्राकालक्रियाभूमिदेहदोषप्रकृत्यवस्थान्तरभावाः समुपदिश्यन्ते । इति ॥ ३३ ॥

गङ्गाधरः—भवति चात्रेत्यादि । मनःशरीरेत्यादिना श्लोकेनासवानाम् उपसंहारः ॥ ३४ ॥

नियमाभावात्, किञ्च संस्कारद्रव्यविभागस्यापि तत्र शक्यत्वात् ; न ह्येकेनैव द्रव्येण सुरादयः क्रियन्ते, प्राधान्यात् तु धान्यादयोऽभिधीयन्ते । संस्कारश्च बहुविधविकल्प इति योजना । संयोगसंस्कारकरणप्रयोजनमाह—यथास्वमित्यादि । यथास्वमिति यद् युज्यते ; देशो भस्मराशिधान्यराश्यादिः सन्धानेषु वक्ष्यमाणः ; कालस्तु पक्षमासादिः ; स्थापनमात्रा सन्धानद्रव्यमात्रा ;

तत्र श्लोकः।

शरीररोगप्रकृतौ मतानि तत्त्वेन चाहारविनिश्चयाय * ।
उवाच यज्जःपुरुषादिकेऽस्मिन् मुनिस्तथाग्र्याणि वरासवांश्च ॥३५

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
यज्जःपुरुषीयो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

गङ्गाधरः—तत्र श्लोक इत्यादि। शरीररोगेत्यादिनैकेनाध्यायार्थः शरीरप्रकृतौ रोगप्रकृतौ चोपादानकारणे तत्त्वेन मुनीनां मतानि आहार-विनिश्चयाय यानि हिताहितानि तथाग्र्याणि श्रेष्ठतमानि तथा वरासवांश्चास्मिन् यज्जःपुरुषादिकेऽध्याये मुनिरात्रेयपुनर्व्वसुरुवाचेति ॥ ३५ ॥

अग्रीत्यादि। सर्व्व पूर्व्ववत्।

इति श्रीगङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ सूत्रस्थानीय-
पञ्चविंशयज्जःपुरुषीयाध्यायजल्पाख्या पञ्चविंशी शाखा ॥२५॥

आदिग्रहणात् द्रव्यस्वभावेनैकर्त्तव्यतासंग्रहणम्, तत्तत्कार्य्यमिति देशकालशरीरदोषादिभिर्भिन्नं हितत्वम्। मनःशरीरेत्यादिना गुणकथनं युक्त्या पीतस्यासवस्य ज्ञेयम् ॥ ३०—३५ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-
व्याख्यायां यज्जःपुरुषीयो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

* आहारविनिश्चयो च इति पाठान्तरम्।

# षड्‌विंशोऽध्यायः ।

अथात आत्रेयभद्रकाप्यीयमध्यायं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

आत्रेयो भद्रकाप्यश्च शाकुन्तेयस्तथैव च ।
पूर्णाक्षश्चैव मौद्गल्यो हिरण्याक्षश्च कौशिकः ॥
यः कुमारशिरा नाम भरद्वाजः शठानघः * ।
श्रीमान् वार्य्योविदश्चैव राजा मतिमतां वरः ॥
निमिश्च राजा वैदेहो वडिशश्च महामतिः ।
काङ्कायनश्च वाह्लीको वाहीको भिषजां वरः † ॥

गङ्गाधरः—द्रव्यादीनां हिताहितत्वयोराहारादिविषयोपयोगापेक्षत्वेनाभ्यवहृतानि द्रव्याणि तानि तानि यद्यत् कर्म्म कुर्व्वन्ति तद्रसादिद्वारेणैवेत्यतस्तदुपदेशार्थमात्रेयभद्रकाप्यीयमध्यायमारभते—अथात इत्यादि । अध्यायस्यादौ आत्रेयो भद्रकाप्यश्चेति वाक्यार्थमात्रेयभद्रकाप्यमधिकृत्य कृतोऽध्याय इत्यात्रेयभद्रकाप्यीयोऽध्याय इति । शेषं सर्व्वं पूर्व्ववद्‌व्याख्येयम् ॥ १ ॥

गङ्गाधरः—आत्रेय इत्यादि । आत्रेयः पुनर्व्वसुः । भद्रकाप्यश्च शाकुन्तेयो ब्राह्मणः । मौद्गल्यः पूर्णाक्षः । कौशिको हिरण्याक्षः । कुमारशिरा भरद्वाजः शठानघः । मतिमतां वरो राजर्षिः श्रीमान् वार्य्योविदः । विदेहो मैथिलो निमिर्नाम राजर्षिः । महामतिर्व्वडिशो धामार्गवः । भिषजां वरो वाहीको

चक्रपाणिः—हिताहितैकदेशमभिधाय कृत्स्नद्रव्यहिताहितत्वज्ञानार्थं रसवीर्य्यविपाकाभिधायकात्रेयभद्रकाप्यीयोऽभिधीयते । तत्रापि विपाकादीनामपि रसेनैव प्रायो लक्षणीयत्वात्

* स चानघ इति वा पाठः ।
† वाहीको भिषजां वरः इत्यत्र वाह्लीकभिषजां वर इति पाठः ।

एते श्रुतवयोवृद्धा जितात्मानो महर्षयः।
वने चैत्ररथे रम्ये समीयुर्विजिहीर्षवः॥
तेषां तत्रोपविष्टानामियमर्थवती कथा।
बभूवार्थविदां सम्यग्रसाहारविनिश्चये॥ २॥

एक एव रस इत्युवाच भद्रकाप्यः। यं पञ्चानामिन्द्रियार्थानामन्यतमं जिह्वाविषयभावमाचक्षते कुशलाः। स पुनरुदकादनन्य इति॥ ३॥

बाह्लदेशवासी वाह्लीकदेशीयश्च काङ्कायनऋषिः। इति निमिवार्य्योर्विदयो राजर्षित्वादेते दश महर्षयः श्रुतेन वयसा च वृद्धा विजिहीर्षवो विहर्त्तुमिच्छवश्चैत्ररथे नाम्ना रम्ये वने समीयुः संगता बभूवुः। तत्र वने खलूपविष्टानां तेषां पुनर्व्वसुप्रभृतीनामर्थविदामियं वक्ष्यमाणा रसाहारविनिश्चयेऽर्थवती प्रयोजनवती कथा बभूव॥ २॥

गङ्गाधरः—का सा कथेति? अत उच्यते—एक एवेत्यादि। तेषां मध्ये भद्रकाप्य ऋषि एक एव रस इत्युवाच। कोऽसावेको रस इति? अत उच्यते—यं पुनरित्यादि। कुशलाः पण्डिता यं पञ्चानामिन्द्रियार्थानामन्यतममेकतमं जिह्वेन्द्रियवैषयिकं भावमाचक्षते स रस एक एव न तु द्विविधादिः जिह्वेन्द्रियविषयत्वसामान्यात्। जिह्वावैषयिको भावश्च शीतोष्णमृदुकठिनादिश्च भावस्तत्र प्रसक्तवारणाय। पञ्चानामिन्द्रियार्थानां मध्ये यो यो भावोऽन्य एकः परस्परविभिन्नः श्रोत्रादिग्राह्यत्वेन भिन्नभिन्नधर्म्मा तेषु मध्ये जिह्वेन्द्रियवैषयिको यो भावः स रसः। शीतोष्णादिस्तु स्पर्शनेन्द्रियग्राह्यत्वेन भिन्नः। जिह्वायां हि त्रीणीन्द्रियाणि वर्त्तन्ते। वागिन्द्रियं रसनेन्द्रियं स्पर्शनेन्द्रियञ्च

रसप्रकरणमादौ कृतम्। मुनिमतैः पूर्व्वपक्षं कृत्वा सिद्धान्तव्यवस्थापनं शिष्यबुद्धुत्पत्त्यर्थम्। रसेष्वाहारविनिश्चयो रसाहारविनिश्चयः, किंवा, "अयं रसविनिश्चयः तथापरश्चातो विपाकानाम्" इत्यादिराहारविनिश्चयः॥ १।२॥

चक्रपाणिः—एक एवेत्यादि। इन्द्रियार्थानामिति निर्द्धारणे षष्ठी। अन्यतममित्येकम्, अन्यशब्दो ह्ययमेकवचनः, यथा "अन्यो दक्षिणेन गतः, अन्य उत्तरेण," एक इत्यर्थः, तमशब्दः

इति। तत्र जिह्वास्थं त्वगिन्द्रियं शीतोष्णादिस्पर्शं गृह्णाति। मधुराम्लादिकं रसनेन्द्रियं गृह्णाति न शीतोष्णादिकम्। प्रागुत्पत्तौ हि यदा भूतादिसमाख्याततामसादहङ्कारात् पञ्चशब्दतन्मात्रादीनि गगनादीनि पञ्चमहाभूतानि जायन्ते, तदैव सहोदकेन भूतेन जातो रसः साधारणरूपः। तमेव भूतान्तरसंयोगेन संहते द्रव्ये जायमानेऽभिव्यक्तं जिह्वेन्द्रियविषयं भावं कुशला आचक्षते। तस्मादेक एव रसो नानेकः। तद्यदुदकं प्रागजातं तदुदकात् पुनः स रसोऽनन्यो नान्य इति। तथा च रसनार्थो रस इति प्रागभिहितम्। नातोऽतीन्द्रिये तस्मिन् रसे लक्षणाप्रसङ्गः। यो हि भावोऽभिव्यक्तः सन ग्राह्यो भवति स एवार्थसंज्ञो भवति नानभिव्यक्तो भावोऽथ उच्यते इन्द्रियस्य योऽभिव्यक्तो रसनेन इन्द्रियेण गृह्यते स रसनार्थो रस उच्यते। न चातिप्रसङ्गो लक्षणस्य रसत्वे रसाभावे च जिह्वेन्द्रियार्थत्वाभावात्। न हि रसनेन्द्रियेण रसत्वं रसाभावो वा प्रत्यक्षमुपलभ्यते। रसेनैव ह्यनुमीयते रसत्वम्। रसाभावश्च भावरूपो गन्धादिर्न रसनेन्द्रियार्थः। अवस्तुरूपश्चाभावस्तत्तद्रसस्यासत्ता। ( तस्याभावस्य भाव इति पदेन तद्व्यावृत्तिः ) स हि रसनेन्द्रियेणोपलभ्य रसमनुपलब्ध्याऽनुमीयते। नास्त्यत्र निम्बे मधुरो रस इति। तस्माद्रसनेन्द्रियग्राह्यवृत्तिगुणत्वावान्तरजातिमत्त्वं रसत्वमित्येवं न तल्लक्षणं व्याख्यातव्यम्। तस्मिन्नतीन्द्रियस्य रसस्य रसत्वं न जातिः साधारणैकरूपत्वात्। जातिर्ह्यनेकव्यक्तिसमवायिनी। स एवाभिव्यक्तो यदानेकरूपो भवति मधुरादिर्विशेषस्तदा विशेषे रसत्वं जातिर्भवति न त्वविशेषे। तस्मिन्नविशेष रसे रसत्वन्तु शब्दादितन्मात्रात्वापेक्षो विशेषः पदार्थः। तन्मात्रात्वं शब्दादीनां पञ्चानां सामान्यमाकाशादीनां हि शब्दादि, सा सा मात्रेति तन्मात्रा। सुश्रुते चोक्तम् 'आप्यो रस' इति। अनया रीत्या शब्दादीनामपि लक्षणान्यनुक्तानि वाच्यानि। श्रवणार्थः शब्दः। योऽभिव्यक्तः सन् श्रवणग्राह्योऽर्थो भवति सोऽर्थः शब्दः। स्पर्शनार्थः स्पर्शः। योऽभिव्यक्तः सन् स्पर्शनग्राह्यो भवति स स्पर्शनार्थः स्पर्शः। नेत्रार्थो रूपम्। योऽभिव्यक्तः सन् नेत्रग्राह्योऽर्थो भवति स नेत्रार्थो रूपम्। घ्राणार्थो गन्धः। योऽभिव्यक्तः सन घ्राणग्राह्योऽर्थो भवति स घ्राणार्थो गन्धः। इति ॥ ३ ॥

स्वार्थिकः। जिह्वावैषयिकमिति जिह्वाग्राह्यम्। रसाभावोऽपि जिह्वया गृह्यते, अत आह भावमिति; तदुदकादनन्य इति रसोदकयोरेकत्वस्थापनार्थं पूर्व्वपक्षत्वात्; इदः पूर्व्वपक्षश्च कापिलमतेन—

द्वौ रसाविति शाकुन्तेयो ब्राह्मणः । छेदनीय उपशमनीयश्चेति ॥ ४ ॥

त्रयो रसा इति पूर्णाक्षो मौद्गल्यः । छेदनीयोपशमनीयसाधारणाः ॥ ५ ॥

चत्वारो रसा इति हिरण्याक्षः कौशिकः । स्वादुर्हितश्च स्वादुरहितश्च अस्वादुर्हितश्चास्वादुरहितश्च ॥ ६ ॥

गङ्गाधरः—द्वावित्यादि । शाकुन्तेयो ब्राह्मणः खलु योऽभिव्यक्तः सन् रसनग्राह्योऽर्थो भवति स रस एक एवेति सत्यम् । अभिव्यक्तः संस्तु योऽर्थो भवति स पुनश्छेदनीय उपशमनीयश्चेति द्विधाऽभिव्यज्यते । तस्माद् द्वौ रसावित्युवाच । शरीरदोषादिच्छेदनेन वर्त्तत इति च्छेदनीयः । शरीरदोषादेरुपशमनेन वर्त्तत इत्युपशमनीय इति । अम्ललवणकटुभिः शारीरक्लेदादिदोषश्छिद्यत इति हि दृश्यते मधुरतिक्तकषायैरुपशाम्यत इति च दृश्यते । इति ॥ ४ ॥

गङ्गाधरः—त्रय इत्यादि । पूर्णाक्षो मौद्गल्यः खलु यो भावोऽभिव्यक्तः सन् रसनग्राह्योऽर्थो भवति स रस एक एवेति सत्यम् । अभिव्यक्तः सन् पुनर्योऽर्थो रसनग्राह्यो भवति स पुनश्छेदनीयोपशमनीयो साधारणश्चेति त्रिधाऽभिव्यज्यते तस्मात् त्रयो रसा इत्युवाच । तयोर्मिश्रीभावे च्छेदनोपशमने दृश्येते ॥ ५ ॥

गङ्गाधरः—चत्वार इत्यादि । हिरण्याक्षः कौशिकः खलु यो भावोऽभिव्यक्तः सन् रसनग्राह्योऽर्थो भवति स रस एक एवेति सत्यम् । अभिव्यक्तस्तु सन् योऽर्थो रसनग्राह्यो भवति स तु स्वादुर्हितश्च स्वादुरहितश्चास्वादुर्हितश्चास्वादुरहितश्चेति चतुर्द्धाऽभिव्यज्यते । तस्माच्चत्वारो रसा इत्युवाच । रक्तशालियवगोधूममुद्गादिः स्वादुश्च हितश्च । माषादिस्तु स्वादुश्चाहितश्च । चुक्रीवसादिरस्वादुर्हितश्च आविकघृतादिरस्वादुश्चाहितश्चेति ॥ ६ ॥

ते हि "रसतन्मात्रं गन्धतन्मात्रम्" इत्यादिवचनेन गुणव्यतिरिक्तद्रव्यमिति मन्यते । छेदनीय इत्यपकर्षणकारकः, उपशमनीय इति बृंहणः ; साधारण इत्याग्नेयसौम्यसामान्यादुभयोरपि कारक-

पञ्च रसा इति कुमारशिरा भरद्वाजः। भौमौदकाग्नेयवायव्यान्तरीक्षाः ॥ ७ ॥

षड्रसा इति वार्य्योविदो राजर्षिः। गुरुलघुशीतोष्णस्निग्धरुक्षाः ॥ ८ ॥

सप्त रसा इति निमिर्विदेहः। मधुराम्ललवणकटुतिक्तकषायक्षाराः ॥ ९ ॥

गङ्गाधरः—पञ्चेत्यादि। शढानयः कुमारशिरा भरद्वाजः खलु यो भावोऽभिव्यक्तः सन् रसनग्राह्योऽर्थो भवति स रस एक एवेति सत्यम्। अभिव्यक्तस्तु सन् यो रसनग्राह्योऽर्थो भवति स पुनर्भौमौदकाग्नेयवायव्यान्तरीक्षभेदेन पञ्चधाऽभिव्यज्यते। तस्मात् पञ्च रसा इत्युवाच। वक्ष्यते च सोमगुणातिरेकान्मधुरो रसः इति। पूर्व्वाध्याये चाभिहितम्—"रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा। निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः ॥" इति ॥ ७ ॥

गङ्गाधरः—षड़ित्यादि। अथ वार्य्योविदो राजर्षिः खलु यो भावोऽभिव्यक्तः सन रसनग्राह्योऽर्थो भवति स रस एक एवेति सत्यम। सोऽभिव्यक्तस्तु सन् यो रसनग्राह्योऽर्थो भवति स गुरुलघुशीतोष्णस्निग्धरुक्षभेदेन षड्धाऽभिव्यज्यते। तस्मात् षट् रसा इत्युवाच। कश्चिद्धि रसो गुरुश्चिरेण पच्यते, कश्चिल्लघुः शीघ्रं पच्यते, कश्चिच्छीतः शैत्यं जनयति, कश्चिदुष्ण औष्ण्यं जनयति, कश्चित् स्निग्धः स्नेहयति, कश्चिद् रुक्षो रुक्षयतीति ॥ ८ ॥

गङ्गाधरः—सप्तेत्यादि। अथ निमिविदेहो राजर्षिः खलु यो भावोऽभिव्यक्तः सन् रसनग्राह्योऽर्थो भवति स रस एक एवेति सत्यम्। स खलु अभिव्यक्तस्तु सन् यो रसनग्राह्योऽर्थो भवति स मधुराम्ललवणकटुतिक्तकषायक्षारभेदेन सप्तधाऽभिव्यज्यते। तस्मात् सप्त रसा इत्युवाच। इति ॥ ९ ॥

द्वंद्वयोः कर्त्ता, परस्परविरोधादकर्त्ता वा। स्वादुरित्यभीष्टः, हित इत्यायत्यनपकारी। आश्रीयत इत्याश्रयो द्रव्यम्; गुणाः स्निग्धगुर्व्वादयः, कर्म्म धातुवर्द्धनक्षपणादि; संस्कारो रसानामवान्तरभेदः, एषां विशेषाणां भेदानामित्यर्थः, तत्र द्रव्यभेदादाधारभेदेनाश्रितस्यापि रसस्य भेदो भवति, आश्रयो हि कारणं, कारणभेदाच्च कार्य्यभेदोऽवश्यं भवतीत्यर्थः, गुर्व्वादिगुणभेदात्तथा कर्म्मभेदाच्च रसकृता एव; ततश्च कार्य्यभेदादवश्यं कारणभेद इति पूर्व्वपक्षाभिप्रायः। संस्कार-

अष्टौ रसा इति वड़िशो धामार्गवः। मधुराम्ललवण-कटुकतिक्तकषायाश्चाव्यक्ताः ॥ १० ॥

अपरिसंख्येया रसा इति काङ्कायनो वाह्लीकभिषक्, आश्रयगुणकर्म्मसंस्कारविशेषाणामपरिसंख्येयत्वात् ॥ ११ ॥

षड़ेव रसा इत्युवाच भगवान् पुनर्व्वसुर्मधुराम्ललवण-कटुतिक्तकषायाः। तेषां षण्णां रसानां योनिरुदकम्।

गङ्गाधरः—अष्टावित्यादि। अथ वड़िशो धामार्गवः खलु यो भावो-ऽभिव्यक्तः सन् रसनग्राह्योऽर्थो भवति स रस एक एवेति सत्यम्। अभि-व्यक्तस्तु सन् यो रसनग्राह्योऽर्थो भवति स खलु मधुरादिपूर्व्वसप्तविधोऽव्यक्तश्च इत्यष्टधाऽभिव्यज्यते। तस्मादष्टौ रसा इत्युवाच ॥ १० ॥

गङ्गाधरः—अपरिसङ्ख्येया इत्यादि। अथ काङ्कायनो वाह्लीको भिषक् खलु यो भावोऽभिव्यक्तः सन् रसनग्राह्योऽर्थो भवति स रस एक एवेति सत्यम्। यस्तु अव्यक्तो रसनग्राह्योऽर्थः स आश्रयादिविशेषाणामपरिसङ्ख्येयत्वेन अपरिसंख्येयतयाभिव्यज्यते। अभिव्यक्ताश्चाश्रयगुणकर्म्मसंस्कारविशेषाणाम् अपरिसंख्येयत्वादपरिसंख्येया रसा इत्युवाच। रसानामाश्रया द्रव्याणि खलु अपरिसंख्येयानि न समानरसानि गुणास्तेषां समानाधिकरणा गुर्व्वादयस्तैश्च विभिन्नाः। कर्म्माणि च धातुवर्द्धनादीनि समानाधिकरणान्यपरिसंख्येयानि। संस्कारः पुनः करणं रसान्तरकरणद्रव्यक्रियान्तरेण रसान्तरभावा अपरि-सङ्ख्येया इति ॥ ११ ॥

गङ्गाधरः—षड़ेवेत्यादि। भगवानात्रेयः पुनर्व्वसुः खलु नवानां महर्षीणां वचनं श्रुत्वा यो ह्यव्यक्तो भावोऽभिव्यक्तः सन् रसनग्राह्योऽर्थो भवति स रस एक एवेति सत्यम्। अभिव्यक्तस्तु सन् रसनग्राह्यो योऽर्थो भवति स खलु मधुराम्ललवणकटुतिक्तकषायभेदेन षड़्विध एवाभिव्यज्यते। तस्मात् षड़ेव

भेदस्तु—एकस्यामपि मधुरजाताविक्षुगुड़ादिगतः प्रत्यक्षमेव भेदो दृश्यते, स तु संख्यातुमभेद्यः स्वसंवेद्य एव, यदुक्तं—"इक्षुक्षीरगुड़ादीनां माधुर्य्यस्यान्तरं महत्। भेदस्तस्यापि नाख्यातुं सरस्वत्यापि शक्यते" ॥ १—११ ॥

चक्रपाणिः—सिद्धान्तं पुनर्व्वसुवचनेनाह—षड़ेवेत्यादि। पूर्व्वपक्षोक्तरसैकत्वादिव्यवच्छेदा-माह—तेषां षण्णामित्यादि। योनिराधारकारणं, कार्य्यकारणयोश्च भेदात् सिद्ध एवायं रसभेदः

छेदनोपशमने द्वे कर्म्मणी। तयोर्मिश्रीभावात् साधारणत्वम्।

रसा इत्युवाच। न त्वभिव्यक्तः सन्नेको रसो न वा द्वौ रसौ न च त्रयो रसा न च चत्वारो रसा नैव पञ्च रसा न च गुरुत्वादयः षड् रसाः न च सप्त रसा नैवाष्टौ रसा नाप्यपरिसंख्येया रसाः। न च स पुनरुदकादनन्य इति। कस्मादिति ? अत उच्यते तेषामित्यादि। यो भावोऽभिव्यक्तः सन् रसनग्राह्यो यो योऽर्थो भवति रसनग्राह्यः स सोऽर्थो नोदकादनन्यः, तेषां षण्णां रसानां योनिरुत्पत्तिस्थानमुदकम्। वक्ष्यते ह्यत्र—"सौम्याः खल्वापोऽन्तरीक्षप्रभवाः प्रकृतिशीता लघ्व्यश्चाव्यक्तरसास्त्वन्तरीक्षाद्भ्रश्यमाना भ्रष्टाश्च पञ्चमहाभूतगुणसमन्विता जङ्गमस्थावराणां भूतानां मूर्त्तीरभिप्रीणयन्ति। तासु मूर्त्तिषु षड़भिमूर्च्छन्ति रसाः। तेषां षण्णां रसानां सोमगुणातिरेकात् मधुरो रसः। भूम्यग्निभूयिष्ठत्वादम्लः। तोयाग्निभूयिष्ठत्वाल्लवणः। वाय्वग्निभूयिष्ठत्वात् कटुकः। वाय्वाकाशातिरिक्तत्वात् तिक्तकः। पवनपृथिव्यतिरेकात् कषायः।" इत्येवमेषां षण्णां रसानामभिव्यक्तिः षट्त्वेनैव नातिरिक्तत्वेन। तस्मात् षट्त्वमुपपन्नं न्यूनातिरेकविशेषान्महाभूतानाम्। भूतानामिव स्थावरजङ्गमानां नानावर्णाकृतिविशेषः। षड़ृतुकत्वाच्च कालस्योपपन्नो महाभूतानां न्यूनातिरेकविशेष इति। तत्र पाञ्चभौतिकीषु मूर्त्तिषु यत् सोमगुणाद्यतिरिक्तत्वे मधुरादयोऽभिव्यज्यन्ते तत्र तेषु पञ्चसु महाभूतेषु खलु यदुदकमव्यक्तरसं तस्मादुदकादेव तस्याव्यक्तो रसो भूतान्तरसंयोगे सति स्थूलः सन् मधुरादिभावम् आपन्नोऽभिव्यज्यते इति तेषां रसानां योनिरुदकम्। (तेषां योन्यव्यक्तरसाश्रयत्वात्) न पुनरुदकादनन्यो रस इति।

अत एव द्वौ रसाविति यत् शाकुन्तेयेनोक्तं तन्न। कस्मात् ? यतस्तेषां षण्णां रसानां द्वे कर्म्मणी च्छेदनोपशमने। तत् षड्रसाश्रयद्रव्याणि हि अम्ललवणकटुभिः शारीरक्लेदादीनि छिन्दन्ति मधुरतिक्तकषायैरुपशमयन्तीति ते रसौ न भवतः।

नितरां त्रयो रसा इति यत् पूर्णाक्षेणोक्तं तन्न। साधारणत्वं हि तयोश्छेदनीयोपशमनीययोर्मिश्रीभावाद् भवति तदपि तेषां कर्म्म। तस्मात् न त्रयो रसा इति।

प्रत्यक्ष पूर्वेतिभावः। क्षितिव्यतिरिक्तमुदकमेव यथा रसयोनिस्तथा "रसनार्थो रसस्तस्य" इत्यादौ विवृतमेव चीवंजीवितीये, तयोर्मिश्रीभावादिति, कर्म्मणोरमूर्त्तयोर्मिश्रीभावानुपपत्तौ

**स्वादुः स्वादुताभक्तिः* द्वौ हिताहितौ च प्रभावौ। पञ्च-महाभूतविकारास्त्वाश्रयाः प्रकृतिविकृतिविचारणा देशकाल-वशाः ॥ १२ ॥**

हिरण्याक्षेणापि चत्वारो रसा इति यदुक्तं तत् न। कस्मात्? यतः स्वादुः हितश्च स्वादुरहितश्चास्वादुहितश्चास्वादुरहितश्चेत्येतेषु स्वादुः खलु तेषां मधुरादीनां षण्णां रसानां स्वादुता आस्वादनं भक्तिः। हिताहितौ द्वौ प्रभावौ तेषामचिन्त्यशक्तिविशेषौ तस्मात् न ते चत्वारो रसा इति।

कुमारशिरसा भरद्वाजेन च भौमादिभेदेन पञ्च रसा इति यदुक्तं तत् न। कस्मात्? यतः पञ्चभूतविकाराः खलु कार्य्यभूतद्रव्याणि भौमान्याप्यानि तैजसानि वायव्यान्यान्तरीक्षाणि। तेषां षण्णां रसानामाश्रया न तु रसा इति। ननु सोमगुणातिरेकात् मधुरो रसः। भूम्यग्निगुणभूयिष्ठत्वादम्ल इत्याद्युक्त्या कथमाश्रयाः पाञ्चभौतिकद्रव्याणीति? अत उच्यते—प्रकृतीत्यादि। प्रकृतिविकृतिविचारणा देशकालवशाः। प्रकृतेर्विकृतिविचारणा चेयम्—देशविशेषात् कालविशेषाच्च चेतनयोगात् सचेतनैः पञ्चभिर्महाभूतैन्यूनातिरेकांशेन संयुक्तैः कार्य्य द्रव्ये घटादावारभ्यमाणे वाय्वादीनां कर्म्मभिरन्योन्यानुप्रवेशादन्योन्यगुणमेलनादन्योन्यक्रियामेलनाच्च विक्रियमाणाः प्रकृतयः पञ्चभूततद्गुणान् सजातीयान् द्रव्यान्तरगुणान्तररूपान् विकारानारभन्ते। प्रकृतिराकाशः सुषिरादिकं विशिष्टमाकाशान्तरं वायुर्विशिष्टवाय्वन्तरं तेजो विशिष्टं तेजोऽन्तरमुदकं रसरक्तादिद्रवान्तरं पृथिवी मूर्त्तिम्। तेषाञ्च गुणाः शब्दादयो ये तेषां शब्दो दशविधं शब्दान्तरमारभते। षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादकष्टाकष्टसाधारणभेदात्। स्पर्शश्च स्पर्शान्तरं शीतोष्णश्लक्ष्णखरादिभेदात्। रूपञ्च विशिष्टं रूपान्तरं लोहितशुक्लकृष्णनीलपीतारुणादिभेदात्। रसश्च विशिष्टं रसान्तरं मधुराम्ललवणकटुतिक्तकषायभेदात्। गन्धश्च विशिष्टं गन्धान्तरं

तदाधारयोर्द्रव्ययोर्मिश्रीभावादिति बोद्धव्यम्। साधारणमिति साधारणकार्य्ययोगित्वम्; भक्तिरिति च्छेत्यर्थः, तेन, यो यमिच्छति स तस्य स्वादुरस्वादुरितर इति पुरुषापेक्षौ धर्म्मौ न रसभेदकारणाविरत्यर्थः। पञ्चमहाभूतेत्यादौ 'तु'शब्दोऽवधारणे, तेन आश्रया एव न रसा इत्यर्थः; किम्भूता भौमादयो भूतविकारा आश्रया इत्याह—प्रकृतिविकृतिविचारणा देशकालवशा इति,

* स्वादुरस्वादुरिति वा पाठः।

**तेष्वाश्रयेषु द्रव्यसंज्ञकेषु गुणा। गुरुलघुशीतोष्णस्निग्ध-रूक्षाः ॥ १३ ॥**

सौरभपूतिविस्रादिभेदात् । इत्येवं द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्म्यं द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् । कर्म्म च कर्म्मासाध्यं न विद्यते । विक्रियमाणं हि स्वतस्तत्तद्वाय्वादीनां कर्म्म च परस्परं मिश्रीभूतं स्वविरोधिकर्म्मान्तरं सजातीयं विजातीयं वा चिन्त्यमचिन्त्यमारभते, यत् उच्यते—प्रभाव इति । कणादेनोक्तं "तस्मिन् पञ्चमहाभूतविकारे द्रव्ये मधुरादयो रसा आश्रिता अतो न भौमो रस आप्यो वा तैजसो वाऽथ वायव्यो वान्तरीक्षो वेति" ॥ १२ ॥

गङ्गाधरः—तेष्वाश्रयेष्वित्यादि । अथ वार्य्योविदराजर्षिणा गुरुलघु-शीतोष्णस्निग्धरूक्षा इति षड् रसा इति यदुक्तं तदपि न । कस्मात् ? यतस्तेषु आश्रयेषु पञ्चमहाभूतविकारेषु द्रव्येषु गुणा गुरुलघ्वादयः । गन्धतन्मात्रादि-पृथिव्यादिस्था अनभिव्यक्ता ये गुर्व्वादयो रसातिरिक्ताः प्रकृतिभूता गुणास्तेषां पञ्चभूतान्योन्यानुप्रवेशात् कार्य्या अभिव्यक्ता गुर्व्वादयो गुणा न तु रसाः, रसानारब्धत्वात् । आदिशब्देन मन्दतीक्ष्णमृदुकठिनश्लक्ष्णखरविशदपिच्छिल-स्थूलसूक्ष्मास्थिरसरसान्द्रद्रवाः । शब्दादयश्च ॥ १३ ॥

वशशब्दोऽधीनार्थः, स च प्रकृत्यादिभिः प्रत्येकं योज्यः, प्रकृतिवशा यथा—मुद्गाः कषाया मधुराश्च सन्तः प्रकृत्या लघवः, एतद्धि लाघवं न रसवशं, तथा हि सति, कषायमधुरत्वाद् गुरुत्वं स्यात् ; विकृतिवशाश्च व्रीहेर्लाजानां लघुत्वं तथा सक्तुसिद्धपिण्डकानाञ्च गुरुत्वम्, विचारणा विचारो द्रव्यान्तरसंयोग इत्यर्थः । तेन, विचारणावशं यथा—मधुसर्पिषी संयुक्ते विषम्, तथा विषञ्चागदयुक्तं स्वकार्य्यव्यतिरिक्तकार्य्यकारि । देशो द्विविधो भूमिस्तनुश्च ;—तत्र भूमौ 'श्वेत-कपोती च वल्मीकाभिरूढा विषहरी', तथा "हिमवति भेषजानि महागुणानि भवन्ति" ; शरीर-देशो यथा—"सक्थि मांसाद् गुरुतरं स्कन्धक्रोडशिरस्पदाम्" इत्यादि ; कालवशन्तु यथा मूलक-मधिकृत्योक्तं—"तद्बालं दोषहरं वृद्धं त्रिदोषम्", तथा "यथर्त्तु पुष्पफलमाददीत" इत्यादि ; अत्र चैकप्रकरणोक्ता येऽनुक्तास्ते चकारात् स्वभावादेरन्तर्भावनीयाः, यदुक्तम्—"चरः शरीरावयवाः स्वभावो धातवः क्रियाः । लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते" । तत्र, चर-शरीरावयवधातूनां देशेन ग्रहणं, मात्रा विचारे प्रविशति, शेषं स्वभावे, तथा रसविमाने वक्ष्यमाणञ्च अत्राप्रविष्टमाहारविशेषायतनमन्तर्भावनीयं यथासम्भवम् ; स्निग्धरूक्षाद्या इत्यत्र आदि-

क्षरणात् क्षारः, नासौ रसः द्रव्यं हि। तदनेकरससमुत्पन्नमनेकरसं कटुकलवणभूयिष्ठमनेकेन्द्रियार्थसमन्वितं करणाभिनिर्वृत्तम् ॥ १४ ॥

गङ्गाधरः—क्षरणादित्यादि। अथ निमिना विदेहेन राजर्षिणा मधुराम्ललवणकटुतिक्तकषायक्षारा इति सप्त रसा इति यदुक्तं तच्च न। कस्मात्? यतः क्षरणात् क्षारः स्यान्नासौ रसो भवति। नहि किमिति? अत उच्यते—द्रव्यम्, भस्मीभूतद्रव्यारब्धत्वात्। यतस्तदनेकरसद्रव्यभस्मसमुत्पन्नमनेकरसम्। किं किं रसमिति? अत उच्यते—कटुलवणभूयिष्ठम्, कथं विज्ञायते? अनेकेन्द्रियार्थसमन्वितम् रूपरसस्पर्शगन्धादियुक्तम्, तस्माद् द्रव्यम्। नन्वेवं तत्रस्थस्तु कटुलवणभूयिष्ठो यो भावः स खलु मधुरादिभ्यः षड्भ्योऽतिरिक्तत्वादपरो रस एवेति। अत उच्यते—करणाभिनिर्वृत्तमिति। करणात् क्रियातोऽभिनिर्वर्त्तते तद्भस्मीभूतद्रव्यात् तस्मात् तत्रस्थोऽपि कटुलवणभूयिष्ठो यो भावः सोऽपि तत्करणादेवाभिनिर्वर्त्तते। न तु मधुरादिवत् प्रसिद्धद्रव्यप्रादुर्भावे। तस्मान्मधुरादिन्यूनकटुलवणभूयिष्ठानेकरसमेलनेन कृत्रिमो रसो मधुरादिभ्यः षड्भ्योऽतिरिक्तः। यथा सैन्धवनिम्बादिमेलनाद् रसो नातिरिक्त इति।

अथ धामार्गवेण वडिशेन मधुराम्ललवणकटुतिक्तकषायक्षाराव्यक्ता इत्यष्टौ रसा इति यदुक्तं तन्न। कस्मात्? क्षारो यथा नातिरिक्तो रसस्तद् दर्शितम्। अव्यक्तस्तु रसो यथा नातिरिक्तस्तथोच्यते ॥ १४ ॥

ग्रहणेनानुक्ता अपि तीक्ष्णमृद्वादयो न रसाः, किन्तु, द्रव्यगुणाः पृथगेवेति दर्शयति। क्षरणात् पृथोगमनक्रियायोगात् क्षारो द्रव्यं, नासौ रसः, रसस्य हि निष्क्रियस्य क्रियानुपपत्तेरित्यर्थः, क्षरणञ्च क्षारस्य पानीययुक्तस्याधोगमनेन, वदन्ति हि लौकिकाः—"क्षारं स्रावयामः" इति, शास्त्रञ्च "छित्त्वा छित्त्वाशयात् क्षारः क्षारत्वात् क्षारयत्यधः" इति। हेत्वन्तरमाह—द्रव्यं तदनेकरसोत्पन्नमिति, अनेकरसेभ्यो मुष्ककादिभ्य आगत्य उत्पन्नमनेकरसोत्पन्नम्, यतश्चानेकरसोत्पन्नमत एवानेकरसं, कारणगुणानुविधायित्वात् कार्य्यगुणस्येति भावः; अनेकरसत्वमाह—कटुकलवणभूयिष्ठमिति भूयिष्ठशब्देनाप्रधानरसान्तरसम्बन्धोऽस्तीति दर्शयति; हेत्वन्तरमाह—अनेकेन्द्रियार्थसमन्वितमिति,—क्षारो हि स्पर्शेन गन्धेन चान्वितः, तेन द्रव्यम्; रसे हि गुणे न स्पर्शो नापि गन्ध इति भावः; हेत्वन्तरमाह—करणाभिनिर्वृत्तमिति, करणेन भस्मस्रावणादिनाऽभिनिर्वृत्तं कृतमित्यर्थः, न रसोऽनेन प्रकारेण क्रियत इति भावः ॥ १२—१४ ॥

अव्यक्तीभावस्तु रसानां प्रकृतौ भवत्यणुरसेऽणुरस*समन्विते वा द्रव्ये ॥ १५ ॥

अपरिसंख्येयत्वं पुनर्न तेषामाश्रयादीनां भावानां विशेषापरिसंख्येयत्वाद् युक्तम्. एकैकोऽपि ह्येषामाश्रयादीनां भावानां

गङ्गाधरः—अव्यक्तीभावस्त्वित्यादि । रसानां मधुरादीनाम् अव्यक्तीभावस्तु खलु प्रकृतौ रसतन्मात्रासु अप्सु भवति वर्त्तते । ननु क्षीरेक्षुरसविकारादिषु माधुर्य्यविशेषोपलब्ध्याऽनुमीयते क्षीरेष्विक्षुरसविकाराणां माधुर्य्यान्माधुर्य्याल्पीभावोऽव्यक्तरसान्तरयोगादेवेति । अत उच्यते अणुरसे इति । अणुः सूक्ष्मो यो मधुराद्यन्यतम एव रसस्तस्मिन्नेवाव्यक्तीभावो न मधुरादिभ्योऽतिरिक्ते भावे । तदणुरससमन्विते स एवाणुरसोऽव्यक्तो रसो न मधुरादिभ्यः षड्भ्योऽतिरिक्तः ॥ १५ ॥

गङ्गाधरः—अपरिसङ्ख्येयेत्यादि । अथ काङ्कायनवाह्लीकभिषजा पुनः आश्रयाद्यपरिसङ्ख्येयत्वादपरिसङ्ख्येया रसा इति यदुक्तं तन्न युक्तम् । कस्मादिति ? अत उच्यते एकैकेत्यादि । हि यस्मादेषां मधुरादीनां षण्णां रसानामेकैकोऽपि रस आश्रयविशेषान् गुणविशेषान् कर्म्म

चक्रपाणिः—अव्यक्तरसपक्षं निषेधयति—अव्यक्तीत्यादि । अव्यक्तीभाव इत्यभूततद्भावे च्विप्रत्ययेन रसानां मधुरादीनां व्यक्तानामेव कचिदाधारेऽव्यक्तत्वं, नान्यो मधुरादिभ्योऽव्यक्तरस इत्यर्थः ; रसानामिति मधुरादीनां षण्णाम् ; प्रकृतावित्यादि प्रकृतौ कारणे जल इत्यर्थः ; अव्यक्तत्वञ्च रससामान्यमात्रोपलब्धिर्मधुरादिविशेषशून्या, सा च जले स्यात्, यत उक्तं जलगुणकथने सुश्रुते—"व्यक्तरसता रसदोषः" इति ; इहापि च "अव्यक्तरसञ्च" इति वक्ष्यति, लोकेऽपि चाव्यक्तरसं द्रव्यमास्वाद्य वक्तारो वदन्ति—"जलस्येवास्य रसो न कश्चिन्मधुरादियुक्तः" इति ; विशेषमधुराद्यनुपलब्धिश्चानुद्भूतत्वेन, यथा—दूरादविज्ञायमानविशेषवर्णे वस्तुनि रूपसामान्यप्रतीतिर्भवति, न शुक्लत्वादिविशेषबुद्धिरिति ; तथाऽनुरसेऽव्यक्तीभावो भवति, प्रधानं व्यक्तं रसमनुगतोऽव्यक्तत्वेनेत्यनुरसः, यथा—वेणुयवे मधुरे कषायोऽनुरसः, यदुक्तम्—"रूक्षः कषायानुरसो मधुरः कफपित्तहा" इति ; अनुरससमन्वित इति सर्व्वानुरसयुक्ते, यथा—विषे, वचनं हि—"व्यक्तमनिर्देश्यरसम्" इत्यादि ; किंवा, अणुरससमन्वित इति पाठः, तेन, अणुरसेनैकेन मरिचेन युक्ते शर्करापानके कटुत्वमव्यक्तं स्यात् । अपरिसंख्येयपक्षं दूषयति—अपरीत्यादि । तेषामिति रसानामपरिसंख्येयत्वं न युक्तम्, आश्रयादीनां भावानामित्याश्रयगुणकर्म्मसंस्वादानां,

* अनुरसेऽनुरसेति वा पाठः ।

विशेषानेवाश्रयते * न च तस्मादन्यत्वमुपपद्यते। परस्परसंसृष्टभूयिष्ठत्वात् ॥ १६।१७॥

न चैषामभिनिर्वृत्तेर्गुणप्रकृतीनामपरिसंख्येयत्वं भवति।

विशेषान् संस्कारविशेषानाश्रयते। यथा खल्वेको मधुरो रस इक्षुवंशबालिकाकाण्डेक्षुप्रभृतीनाश्रयविशेषानाश्रयते। एवमम्लो बदरदाडिमामलकादीन्। लवणः सैन्धवसौवर्च्चलादीन्। कटुकः पिप्पलीमरिचशुण्ठीचव्यादीन्। तिक्तो निम्बपटोलपत्रवेत्राग्रादीन्। कषायो हरीतकीविभीतकीप्रभृतीन्। न च तस्मान्मधुरादम्लादितो वाऽन्यत्वमन्यरसत्वमुपपद्यते उपगच्छति। कस्मात् तत्र तत्रेक्षुवंशबालिकादिषु मधुरभेद उपलभ्यते इति? अत उच्यते—परस्परेत्यादि। तत्र तत्रापररसस्य कस्यचित् कस्यचिदम्लादेः परस्परसंसृष्टे मधुरादिभूयिष्ठत्वान्मधुरादिरेव रस उच्यते न तस्मादन्यो भवतीति। एवं गुणकर्म्मविशेषानपि तद्रसान्तरसंसर्गादाश्रयते। संस्कारद्रव्यविशेषसंसर्गादपि न ततोऽन्यो भवति ॥ १६।१७॥

गङ्गाधरः—ननु चैवं चेत् तदा पुनरिक्षुकाण्डेक्षुप्रभृतीनामारम्भकाणां भावानामंशन्यूनाधिक्यादितस्तदुत्पत्तावेव तथा तथा मधुरादिभावोऽभिनिर्वर्त्तेत इति तथाविधस्तथाविधो रसः पृथक् पृथगेव भवति ततोऽपरिसंख्यया रसाः षट्त्वञ्चातिवर्त्तन्ते। इति। अत उच्यते—न चैषामित्यादि। एषां मधुरादीनां

विशेषापरिसंख्येयत्वादित्याश्रयादिभेदस्यापरिसंख्येयत्वात्, अत्र हेतुमाह—एकोऽपि हीत्यादि। एषामाश्रयगुणकर्म्मसंस्कारादीनां विशेषानेकोऽपि मधुरादिराश्रयते; न च तस्मादाश्रयादिभेदादन्यत्वमाश्रितस्य मधुरादेर्भवति; एवं मन्यते—यद्यपि शालिमुद्गक्षीरादयो मधुराश्रया भिन्नास्तथापि तत्र मधुरत्वजात्याक्रान्त एक एव रसो भवति बलाकाक्षीरकार्पासादिषु शुक्लवर्ण इवेति; तथा गुणानां गुरुपिच्छिलस्निग्धादीनाम् अन्यत्वेऽपि कर्म्मणां वा रसादिवर्द्धनायुर्जननवर्णकरणादीनां भिन्नत्वे सति न मधुररसस्यान्यत्वम्, यतः, एक एव मधुरत्वगुणयुक्तो भवति तत्तत्कर्म्मकारी चेति को विरोधः, तथा, मधुरस्याश्रयान्तरादिभेदेऽपि मधुरत्वजात्यनतिक्रमः, कृष्णवर्णावान्तरभेदे यथा कृष्णत्वानतिक्रमः। ननु मैवं भवत्वपरिसंख्येयत्वं रसानां परस्परसंयोगात् तु य आस्वादविशेषः स कार्य्यविशेषकरोऽपि, न हि तन्मधुराम्लेन क्रियते, तन्मधुरेण चाम्लेन वा शक्यम्, अतः, तेन परस्परसंयोगेनापरिसंख्येयत्वं भविष्यतीत्याह—परस्परेत्यादि। संसृष्टमिति भावे क्तः, तेन संसर्गभूयिष्ठत्वादेषां मधुरत्वादीनामभिनिर्वृत्तेर्भेदं च गुणप्रकृतीनाम् असंख्येयत्वमिति योजना। अयमर्थः—यद्यपि रसाः परस्परसंसर्गेणातिभूयसा युक्ताः सन्तोऽभि-

* विशेषापरिसंख्येयत्वात् इत्यधिकः पाठश्चक्रे।

तस्मान्न संसृष्टानां रसानां कर्म्मोपदिशन्ति बुद्धिमन्तः ॥ १८ ॥

तच्चैव कारणमवेक्षमाणाः षण्णां रसानां परस्परेणासंसृष्टानां लक्षणपृथक्त्वमुपदेक्ष्यामः । अग्रे तु तावद् द्रव्यभेदमभिप्रेत्य किञ्चिदभिधास्यामः ॥ १९ ॥

षण्णामभिनिर्वृत्तौ प्रधानभूतानां प्रकृतीनां सोमगुणातिरिक्तपञ्चभूतानां प्रधानत्वे तत्र तत्र गुणीभूतरसानां प्रकृतयो या अल्पांशभूता भूम्यग्निगुणबहुलादिभूतद्वन्द्वास्तासामपरिसंख्येयत्वं न भवति । पञ्चानामेव भूतानामंशन्यूनाधिक्यादिविशेषात् तथाविधापररसोत्पत्तेः । इति । तस्मात् संसृष्टानां रसानां कर्म्म बुद्धिमन्तो नोपदिशन्ति ॥ १८ ॥

गङ्गाधरः—तच्चेत्यादि । तच्च कारणं प्रधानरसानामुत्पत्तौ गुणीभूतरसानामपि प्रकृतय एवांशाल्पाधिक्यभावेन संसृष्टा गुणीभूतरसानुत्पादयन्ति । पञ्चैव भूतानि नापरिसंख्येयाः प्रकृतय इत्येवं कारणमवेक्षमाणा वयं परस्परेणासंसृष्टानां षण्णामेव रसानां लक्षणं पृथक्त्वेनोपदेक्ष्यामः । न परस्परेण संसृष्टानां पृथग्लक्षणेनैव तेषां गुणीभूतानामभिधानसिद्धेः । अग्रे तु तावत् द्रव्यभेदमभिप्रेत्य किञ्चिदभिधास्यामः पश्चाद्रसम् । इति ॥ १९ ॥

निम्बं वा घृतक्षीरादौ द्रव्ये भवन्ति, तथापि न तेषां गुणा गुरुलघ्वादयः प्रकृतयो वा मधुरादीनां या या आयुष्यत्वरसादिवर्द्धकत्वाद्यात्मानः असंख्येया भवन्ति किन्तु, य एव मधुरादीनां प्रत्येकं गुणाः प्रकृतयश्च उद्दिष्टाः, त एव मिश्रा भवन्ति ; किं वा गुणप्रकृतीनामिति मधुरादिषड्गुणस्वरूपाणाम् इत्यर्थः ; तेन रसस्य रसान्तरसंसर्गे दोषाणामिव दोषान्तरसंसर्गे रसानां नापरिसंख्येयत्वम् इत्यर्थः ; प्रकृतिशब्देन कर्म्म बोध्यते, तेन गुणकर्म्मणामित्यर्थः ; मधुरादीनामवान्तरांशत्वात् अविशेषोऽपि परस्परसंसर्गकृतो ज्ञेयः । यत एव हेतो रसानां संसृष्टानां नान्ये गुणकर्म्मणी भवतः, अत एव संसृष्टानां रसानां पृथक् कर्म्म शास्त्रान्तरेऽपि नोक्तमित्याह—तस्मादित्यादि । कर्म्मशब्देनेह गौरवलाघवादिकारकत्वादयो रसरक्तादिजननादयोऽपि बोद्धव्याः ; न केवलमन्यशास्त्रकारै रसानां संसृष्टानां कर्म्म नोपदिष्टं, किन्तु वयमपि नोपदेक्ष्याम इत्याह—तच्चैवेत्यादि । तच्चैव कारणमिति परस्परसंसर्गेऽपि रसानामनधिकगुणकर्म्मत्वं ; लक्षणेन पृथक् लक्षणपृथक् ; लक्ष्यते येन तल्लक्षणम्—"अतस्तु मधुरो रसः" इत्यादिना ग्रन्थेन, तथा "स्नेहनप्रीणनह्लादन" इत्यादिना यद् वाच्यं, तत् सर्व्वं गृह्यते ; किं वा, लक्षणशब्देन "मधुररस" इत्यादिग्रन्थवाच्यं लक्षणमुच्यते ; पृथक्त्वञ्च, रसे भेदज्ञानार्थं मवयवत्ते—

सर्व्वं द्रव्यं पाञ्चभौतिकमित्यस्मिन्नर्थे तच्चेतनावदचेतनञ्च। तस्य गुणाः शब्दादयो गुर्व्वादयश्च द्रवान्ताः। कर्म्म पञ्चविधमुक्तं वमनादि ॥ २० ॥

तत्र द्रव्याणि गुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूल-

गङ्गाधरः—तद्यथा सर्व्वमित्यादि। सर्व्वं पृथिव्यादिकार्य्यं द्रव्यं शरीरेन्द्रियविषयसंज्ञकम्। पाञ्चभौतिकं पञ्चभिर्भूतैर्निष्पादितं पञ्चभूतप्रकृतिकम्। अस्मिन् पाञ्चभौतिकेऽर्थे तत् सर्व्वं द्रव्यं चेतनावदचेतनञ्च। तत्र "सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम्" इति पूर्व्वाध्यायेऽभिहितम्। तत्र भूतानि पञ्च खल्वनभिव्यक्तशब्दमात्र आकाशोऽभिव्यक्तस्पर्शमात्रो वायुरभिव्यक्तरूपमात्रं तेजोऽभिव्यक्तरसमात्रा आपोऽभिव्यक्तगन्धमात्रा पृथिवीति। तस्य गुणा इति। तस्य पाञ्चभौतिकस्य चेतनावतोऽचेतनस्य च गुणाः कार्य्यभूताः शब्दादयस्ते दशविधशब्दशीतोष्णादिस्पर्श-लोहितादिरूप मधुरादिरससौरभादिगन्धाः। गुर्व्वादयश्च द्रवान्ताः कार्य्यगुणा यज्जःपुरुषीयेऽभिहिता गुरुलघुशीतोष्णस्निग्धरूक्षमन्द-तीक्ष्णस्थिरसरमृदुकठिनविशद-पिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवा इति। कर्म्म च कार्य्यभूतं वमनादि पञ्चविधमुक्तमग्र प्रथमाध्याये ॥ २० ॥

गङ्गाधरः—तत्रापरिसङ्ख्येयमपि पाञ्चभौतिकं द्रव्यं संग्रहेण परिसङ्ख्यातुमाह—

"स्नेहनप्रीणन इत्यादि, तद् गृह्यते। अग्र इत्यादि। रसेषु वाच्येषु द्रव्यभेदमभिधेयत्व प्रतिपाद्नीयतया परिगृह्य रसानां द्रव्यज्ञानाधीनज्ञानत्वात् द्रव्याभिधानमग्रे कृतमित्यर्थः। किञ्चिदिति आयुर्व्वेदोपयोगि द्रव्यस्वरूपं न सर्व्वमिति, अप्रसक्तदोषादिति भावः ॥ ११—१२ ॥

चक्रपाणिः—सर्व्वंद्रव्यमिति कार्य्यंद्रव्यम्, अस्मिन्नर्थेऽस्मिन् प्रकरणे। द्रवान्ता इति वचनेन पूर्व्वोक्तान् विंशतिगुणानाह; अत्र परत्वापरत्वादीनामिहानभिधानेन चिकित्सायां परत्वादीनामप्राधान्यं दर्शयति, येऽपि तत्रापि युक्तिसंयोगपरिमाणसंस्काराभ्यासा अत्यर्थचिकित्सोपयोगिनोऽपि, न ते पार्थिवादिद्रव्याणां शब्दादिवत् सांसिद्धिकाः, किं तर्हि, आधेयाः, अत इह नैसर्गिकगुणकथने नोक्ताः; तन्त्रमित्यपामार्गतण्डुलीये; एतच्च प्राधान्यादुच्यते, तेन, बृंहणाद्यपि बोद्धव्यम्; बहुलशब्दो गुर्व्वादिभिः प्रत्येकं सम्बध्यते, किंवा, गन्धेनैव; यतः, गन्धगुणबहुला पृथिव्येव भवति, अत एव द्रव्यान्तरलक्षणेऽपि वैशेषिकगुणोऽन्त एव पठ्यते—"रसगुणबहुलानि" इत्यादि, तेन, तत्रापि रसादिभिरेव बहुलशब्दो योज्यः; सर्व्वकार्य्यद्रव्याणां पाञ्चभौतिकत्वेऽपि पृथिव्याद्युत्कर्षेण पार्थिवत्वादि ज्ञेयम्, सङ्घातः काठिन्यं, स्थैर्य्यमविचाल्यम्,

गन्धगुणबहुलानि पार्थिवानि। तान्युपचयसङ्घातगौरवस्थैर्य्यकराणि स्युः ॥ २१ ॥

द्रवस्निग्धशीतमन्दसरसान्द्रमृदु-पिच्छिलरस-गुणबहुलानि आप्यानि । तान्युपक्लेदस्नेहबन्धविष्यन्दमार्दवप्रह्लादकराणि ॥ २२ ॥

उष्णतीक्ष्णसूक्ष्मलघुरूक्षविशदरूप-गुणबहुलानि आग्नेयानि। तानि दाहपाकप्रभाप्रकाशवर्णकराणि स्युः ॥ २३ ॥

लघुशीतरूक्षखरविशदसूक्ष्मस्पर्शगुणबहुलानि वायव्यानि। तानि रौक्ष्यग्लानिविचारवैशद्यलाघवकराणि ॥ २४ ॥

तत्रेत्यादि। तत्र पाञ्चभौतिकेषु द्रव्येषु चेतनावत्स्वचेतनेषु च मध्ये गुर्व्वादिनवगुणबहुलानि द्रव्याणि पार्थिवानि पृथिवीबहुलपञ्चभूतात्मकानि। शेषाणां भूतगुणानां द्रवादीनामबहुलत्वमेव पार्थिवेषु द्रव्येष्विति ख्यापितम्। तेषां पार्थिवानां कर्म्माण्याह—तान्युपचयेत्यादि। तानि पार्थिवद्रव्याणि स्वल्पयुक्तानि शरीरादीनामुपचयसंघातगौरवस्थैर्य्यकराणि भवन्ति ॥ २१ ॥

गङ्गाधरः—द्रवेत्यादि। तत्र द्रव्याणीत्यनुवर्त्तते। द्रवादिरसान्तनवगुणबहुलानि द्रव्याण्याप्यानि भवन्ति अब्बहुलपाञ्चभूतात्मकानि, तेनाब्बहुलभूतगुणा अपि गुर्व्वादयः शेषभूतगुणा अबहुलतया सन्तीति ख्यापितम्। तेषामाप्यानां कर्म्माण्याह—तान्युपेत्यादि। तान्याप्यानि द्रव्याणि स्वल्पयुक्तानि शरीरादीनामुपक्लेदस्नेहबन्धविष्यन्दमार्दवप्रह्लादान कुर्व्वन्ति ॥ २२ ॥

गङ्गाधरः—उष्णेत्यादि। अत्र द्रव्याणीत्यनुवर्त्तते। उष्णादिसप्तगुणबहुलानि द्रव्याण्याग्नेयानि तेजोबहुलपञ्चभूतात्मकानि। एतेनाबहुलभूतानां गुणा अपि शेषा ये तेऽप्यबहुलत्वेनाग्नेयेषु वर्त्तन्ते। इति ख्यापितम्। तेषामाग्नेयानां कर्म्माण्याह—तानीत्यादि। तान्याग्नेयानि द्रव्याणि उपयुक्तानि शरीरादीनां दाहपाकप्रभाप्रकाशवर्णान् कुर्व्वन्ति ॥ २३ ॥

गङ्गाधरः—लघुशीतेत्यादि। अत्र द्रव्याणीत्यनुवर्त्तते। लघ्वादिसप्त

बन्धनं परस्परयोजनसम्बन्धः, प्रह्लादः शरीरेन्द्रियसन्तर्पणं सूक्ष्मं सूक्ष्मस्रोतोऽनुसारि, प्रभा वर्णप्रकाशिनी दीप्तिः, यदुक्तम्,—"वर्णमाक्रामति च्छाया प्रभा वर्णप्रकाशिका" इत्यादि। विचारण

मृदुलघुसूक्ष्मश्लक्ष्णशब्दगुणबहुलान्याकाशात्मकानि। तानि मार्द्दवशौषिर्य्यलाघवकराणि॥ २५॥

गुणबहुलानि द्रव्याणि वायव्यानि वायुबहुलपञ्चभूतात्मकानि भवन्ति। बहुलेतिवचनेन तु खल्वबहुलभूतानां गुणा अपि ये शेषास्ते चात्राबहुलत्वेन वर्त्तन्त इति ख्यापितम्। एषां कर्म्माण्याह—तानीत्यादि। तानि वायव्यानि द्रव्याण्युपयुक्तानि शरीरादीनां रौक्ष्यग्लानिविचारवैशद्यलाघवानि कुर्व्वन्ति। विचारो विचरणं सर्पणम्॥ २४॥

गङ्गाधरः—मृद्वित्यादि। अत्र द्रव्याणीत्यनुवर्त्तते। मृद्वादिपञ्चगुणबहुलानि द्रव्याणि आकाशात्मकानि आकाशबहुलपञ्चभूतात्मकानि भवन्ति। अत्रापि बहुलवचनेनाबहुलभूतानां गुणा अपि ये शेषास्ते च अबहुलत्वेन वर्त्तन्ते इति ख्यापितम्। एषां कर्म्माण्याह—तानीत्यादि। तान्याकाशात्मकानि द्रव्याणि उपयुक्तानि शरीरादीनां मार्द्दवशौषिर्य्यलाघवानि कुर्व्वन्तीति। सुश्रुते चोक्तं—"पृथिव्यप्तेजोवाय्वाकाशानां समुदायाद् द्रव्याभिनिर्वृत्तिरुत्कर्षस्त्वभिव्यञ्जको भवति। इदं पार्थिवमिदमाप्यमिदं तैजसमिदं वायव्यमिदमाकाशीयमिति। तत्र स्थूलसारसान्द्रमन्दस्थिरखरगुरुकठिनगन्धबहुलमीषत्कषायं प्रायोमधुरमिति पार्थिवम्। तत् स्थैर्य्यबलसंघातोपचयकरं विशेषतश्चाधोगतिस्वभावमिति।०। शीतस्तिमितस्निग्धमन्दगुरुसरसान्द्रमृदुपिच्छिलरसबहुलमीषत्कषायाम्ललवणं मधुररसप्रायमाप्यम्। तत् स्नेहनप्रह्लादनक्लेदनबन्धनविष्यन्दनकरमिति।०। उष्णतीक्ष्णसूक्ष्मरूक्षखरलघुविशदरूपगुणबहुलमीषदम्ललवणं कटुकरसप्रायं विशेषतश्चोर्द्ध्वगतिस्वभावमिति तैजसम्। तत् दहनपचनदारणतापनप्रकाशनप्रभावर्णकरमिति।०। सूक्ष्मरूक्षखरशिशिरलघुविशदस्पर्शबहुलमीषत्तिक्तं विशेषतः कषायमिति वायवीयम्। तत् वैशद्यलाघवग्लपनविरूक्षणविचारणकरमिति।०। श्लक्ष्णसूक्ष्ममृदुव्यवायिविविक्ताव्यक्तरसशब्दगुणबहुलमाकाशीयम्। तन्मार्द्दवशौषिर्य्यलाघवकरमिति।०। तत्र य इमे गुणा वीर्य्यसंज्ञकाः शीतोष्णस्निग्धरूक्षमृदुतीक्ष्णपिच्छिलविशदास्तेषां तीक्ष्णोष्णौ आग्नेयौ शीतपिच्छिलावम्बुगुणभूयिष्ठौ। पृथिव्यम्बुगुणभूयिष्ठः स्नेहः। तोयाकाशगुणभूयिष्ठं मृदुत्वम्। वायुगुणभूयिष्ठं रौक्ष्यम्। क्षितिसमीरण-

विचारो गतिरित्यर्थः ; शौषिर्य्यं रन्ध्रबहुलता ; अत्राकाशबाहुल्यं द्रव्यस्य पृथिव्यादिभूतान्तराल-

गुणभूयिष्ठं वैशद्यमिति।" ननु सर्व्वं पाञ्चभौतिकमित्युक्तं तत्र पञ्चभिर्भूतैः आरभ्यमाणे कार्य्ये पार्थिवादीनि द्रव्ये कार्य्यगुणस्य कारणगुणपूर्व्वकत्वात् द्रव्यगुणयोः सजातीयारम्भकत्वस्वभावात् विजातीयारम्भकत्वाभावाच्च गुर्व्वादयो गुणाः किमुपादाना उत्पद्यन्ते ? न हि पञ्चसु भूतेषु क्वापि गुरुत्वादयः सन्ति। वर्त्तते च पृथिव्यां गन्धोऽप्सु रसो रूपं तेजसि स्पर्शो वायावाकाशे शब्दः। पञ्चैते स्वविशेषास्तेषां विशेषास्त्वेवं बभूवुः। तद्यथा—तच्छब्दैकगुण आकाशो दिक्कालयोगात् किञ्चित्स्थूलीभूयैकादशांशस्यैकांशेन स्पर्शमात्रं वायुमनुप्राविशत्। तद्द्वयमेकीभूतो द्व्यात्मको वायुरभवत् तत्र शब्दः किञ्चित्स्थूलोऽभवत् स्पर्शश्च शीतोऽभूत्। स च द्व्यात्मको द्विगुणो वायुरेकादशांशस्यैकांशेन अविशेषरूपगुणमात्रं तेजोऽनुप्राविशत्। तत्त्रयमेकीभूतं त्र्यात्मकं तेजोऽभूत्। तत्रापि शब्दः किञ्चित्स्थूलोऽभवत्। रूपञ्च साधारणं लोहितरूपमारभे। स्पर्शश्चौष्ण्यं कथमुत्पद्यते ? तच्च त्र्यात्मकं तेजस्त्रिगुणमेकादशांशस्यैकांशेन रसैकगुणा अपोऽनुप्राविशत्। तद्द्वयमेकीभूताश्चतुरात्मिका आपो बभूवुः। तत्रापि शब्दश्च रसश्च पूर्व्वतः किञ्चित्स्थूलोऽभूत्। स्पर्शश्च शीतः शुक्लश्च रूपं कथमुत्पद्यते ? अथैताश्चतुरात्मिकाश्चतुर्गुणा आप एकादशांशस्यैकांशेन पृथिवीं गन्धैकगुणामनुप्राविशत्। तद्द्वयमेकीभूता पञ्चात्मिका पञ्चगुणा पृथिवी बभूव। तत्रापि शब्दरसगन्धाः किञ्चित्स्थूला बभूवुर्न व्यक्ताः। स्पर्शश्च तत्र खरः कृष्णश्च रूपं कथमुत्पद्यते ? तथैषु पञ्चस्वपि भूतेषु न गुर्व्वादयो गुणाः सन्ति, तैरारब्धे द्रव्ये पार्थिवादिनि पाञ्चभौतिके किमुपादाना गुर्व्वादयो जायन्ते किं निरुपादानाः स्युः ? कर्म्माणि च कथं जायन्ते किमुपादानानि ? न हि भूतेषु पञ्चसु कर्म्म किञ्चिदुक्तमिति चेत् ? सत्यम्। तत्र ब्रूमः। पूर्व्वं प्रथमाध्यायेऽभिहितम्—सार्था गुर्व्वादय इति। तत्रार्था गुर्व्वादय इति नोक्त्वा सार्था इतिवचनेन ख्यापितम्। यदा भूतादेरहङ्कारादनभिव्यक्तशब्दमात्रमाकाशश्च सहैवाभूत् तदा तच्छब्दसहिता मृदुलघुसूक्ष्मश्लक्ष्णाश्चत्वारोऽप्यनभिव्यक्ता आकाशेऽजायन्त। एवं यदाभिव्यक्तस्पर्शश्च वायुश्च सहैवाभूत् तदा तत्स्पर्शसहिता अप्यनभिव्यक्ता लघुरुक्षखरविशदसूक्ष्माः पञ्च वायावजायन्त। तथाभिव्यक्तं साधारणं रूपं तेजश्च सहैवाभूत्। तदा तद्रूपसहिता अप्यनभिव्यक्ता उष्णतीक्ष्णसूक्ष्मलघुरुक्षविशदाः षड्गुणास्तेजस्यजायन्त। एवं रसोऽपि साधारणः आपश्च

त्वेन भूयिष्ठव्यक्ताकाशत्वेन च ज्ञेयम्, यदेव भूरिशुषिरं तन्नाभसम्, किंवा आकाशगुणबहुलत्वे नाभसं द्रव्यमित्युच्यते ॥ २०—२५ ॥

यदा सहैव बभूवुस्तदा तद्रससहिता अत्यनभिव्यक्तद्रवस्निग्धशीतमन्दसरसान्द्रमृदुपिच्छिलाः अष्टौ गुणाश्चाप्स्वजायन्त। तथा साधारणो गन्धश्च पृथिवी च यदा सहैवाभूत् तदा तद्गन्धसहिता अत्यनभिव्यक्ता गुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूलाश्चाष्टौ गुणाः पृथिव्यामजायन्त।

एवमेषामाकाशादीनां कर्म्माणि पञ्चात्यनभिव्यक्तानि तदैवाकाशादिषु अजायन्त। न चैतान्यत्यनभिव्यक्तत्वादाकाशादिषूपदिष्टान्याचार्य्यः। आचार्य्याणां हीयं रीतिः—आदुत्पत्तौ ये भावा नाभिव्यज्यन्ते न ते तदा निर्द्दिश्यन्ते नाप्युपदिश्यन्ते, यदाभिव्यज्यन्ते तदा निर्द्दिश्यन्ते। तथा च सगुणक्रियमेव द्रव्यमुत्पद्यते न तु निर्गुणक्रियमिति चोक्तम्। एवं सत्याकाशस्य भूतान्तरसंयोगे तत्क्रियाभिव्यक्तिस्वभावं कर्म्मात्यनभिव्यक्तं तदा बभूव, तस्मान्निष्क्रियमुच्यते स्थौल्येऽप्यभिव्यक्तकर्म्माभावात्। वायोः सर्व्वतोगतिस्वभावमत्यनभिव्यक्तं कर्म्म बभूव। तेजसश्चात्यनभिव्यक्तमूर्द्ध्वज्वलनस्वभावं कर्म्म बभूव। अपामधोगतिस्वभावमत्यनभिव्यक्तं कर्म्माभूत्। पृथिव्या धीरगतिस्वभावमत्यनभिव्यक्तं कर्म्माभूदिति। तथा च दिक्कालयोगात् स आकाशः किञ्चित्स्थूलो यथा स्यात् तथा शब्दादयश्च गुणाः किञ्चित्स्थूला भवन्ति। कर्म्म च किञ्चित्स्थूलं स्यान्न चाभिव्यज्यन्ते क्वापीति सर्व्वदैकांशोऽनभिव्यक्तशब्दश्च निष्क्रियश्चोच्यते। तस्यानुप्रवेशाद् द्व्यात्मके वायौ शब्दः किञ्चित्स्थूलः स्यात्। स्पर्शश्च शीतत्वेनाभिव्यज्यते नाभिव्यज्यन्ते लघ्वादयः। कर्म्म च सर्व्वतोगतिरूपेणाभिव्यज्यते। तस्य द्व्यात्मकस्य वायोरनुप्रवेशात् त्र्यात्मके तेजसि शब्दः किञ्चित्स्थूलो धक्धगिति रूपोऽव्यक्त एव भवति। स्पर्शश्च वायोः शीतो वायोः क्रिययाऽत्यनभिव्यक्तोष्णस्पर्शः प्रव्यक्तः प्रदीप्तः स चाभिव्यज्यते। एवं तीक्ष्णादयः किञ्चित्स्थूला भवन्ति न चाभिव्यज्यन्ते। साधारणश्च रूपं तदा लोहितं भवति। तस्यैव त्र्यात्मकस्य तेजसोऽप्स्वनुप्रवेशाच्चतुरात्मिकास्वप्सु शब्दः पूर्व्वतः किञ्चित्स्थूलः कलकलरूपः साधारणोऽव्यक्तः स्यात्। स्पर्शश्च शीतो वायोर्व्यक्तो जलस्यानभिव्यक्तः शीत इति द्वयमेकीभूतं तैजसमौष्ण्यमभिभूयाभिव्यज्यते शीत एव। द्रवादयो नाभिव्यज्यन्ते किञ्चित्स्थूलाश्च भवन्ति। रूपञ्चात्यनभिव्यक्तं शौक्ल्यं लोहितसंसर्गादभिव्यज्यते शौक्ल्यमेव। रसश्चाव्यक्तो वर्त्तते किञ्चित्स्थूल एव। एवं तासां चतुरात्मिकानामपां पृथिव्यामनुप्रवेशात् पञ्चात्मिकायां पृथिव्यां शब्दः पूर्व्वतः किञ्चित्स्थूलोऽव्यक्त एव जायते। स्पर्शश्च खरोऽभिव्यज्यते

अनेनोपदेशेन नानौषधीभूतं जगति किञ्चिद्द्रव्यमुपलभ्यते तां तां हि युक्तिमर्थञ्च तं तमभिप्रेत्य। न तु केवलं

नाभिव्यज्यन्ते गुर्व्वादयो गुणाः किञ्चित्स्थूलाश्च भवन्ति। रूपञ्च शुक्लमपां तद्गन्धमात्रपृथिव्या अत्यनभिव्यक्तकृष्णेन मिश्रीभूतं व्यक्तकृष्णत्वेनाभिनिर्व्वर्त्तते। रसश्चाव्यक्त एव किञ्चित्स्थूलो वर्त्तते। गन्धश्च किञ्चित्स्थूलो वर्त्तते। इत्येवमेकद्वित्रिचतुःपञ्चगुणानां पञ्चानां भूतानां कार्य्यारम्भे यथा पृथिव्यादिद्रव्यात् सजातीयद्रव्यान्तरं जायते तथा शब्दादिभ्यो गुणेभ्यः सजातीयं गुणान्तरमभिव्यज्यते। पञ्चानां शब्दादिदशविधः शब्दविशेषः। वाय्वम्बुनोः स्पर्शाभ्यां शीतस्तेजसः स्पर्शादुष्णः पृथिव्या वायोश्च अत्यनभिव्यक्तखरात् खरः आकाशस्यात्यभिव्यक्तश्लक्ष्णाद् व्यक्तः श्लक्ष्णः। भूजलयोरत्यनभिव्यक्तान्मान्द्यान्मान्द्यम्। सान्द्रात् सान्द्रः। जलाकाशयोरत्यनभिव्यक्तात् मार्द्दवात् मार्द्दवम्। भूतेजोवायूनामत्यनभिव्यक्ताद् विशदाद्विशदः। तेजोऽनिलयोरत्यनभिव्यक्ताद् रूक्षाद् रूक्षः। तेजोवाय्वाकाशानामत्यनभिव्यक्ताल्लघुत्वाल्लघुत्वम्। सौक्ष्म्यात् सौक्ष्म्यम्। इत्येवं पृथिव्या अत्यनभिव्यक्ताद् गुरुत्वाद् गुरुत्वम् काठिन्यात् काठिन्यम् स्थैर्य्यात् स्थैर्य्यम् वैशद्याद् वैशद्यम् स्थौल्यात् स्थौल्यमभिनिर्व्वर्त्तते। तथैवापामत्यनभिव्यक्ताद् द्रवत्वाद् द्रवत्वम् स्निग्धत्वात् स्निग्धत्वं सरत्वात् सरत्वं पिच्छिलत्वात् पैच्छिल्यमभिनिर्व्वर्त्तते। एवञ्च तेजसोऽत्यनभिव्यक्तात् तैक्ष्ण्यात् तैक्ष्ण्यमभिनिर्व्वर्त्तते। तथा वायोरत्यनभिव्यक्तादुक्ता लघ्वादयः। आकाशस्याप्युक्ता मृदुत्वादयः। इति पार्थिवादिषु पाञ्चभौतिकेषु द्रव्येषु गुरुत्वादयो गुणा विंशतिर्नानुपादाना अभिव्यज्यन्ते। तस्माद् द्रव्याणि सजातीयद्रव्यान्तरमारभन्ते गुणाश्च सजातीयगुणान्तरं न तु विजातीयम्। ततः कारणगुणपूर्व्वकः कार्य्यगुणो दृष्ट इति। कर्म्माणि तानि तानि चोत्क्षेपणावक्षेपणप्रसारणाकुञ्चनगमनान्यारभन्ते यथायथं सजातीयविजातीयानि। इति तत्त्वम्॥ २५॥

गङ्गाधरः—नन्वेवं पाञ्चभौतिकानां पार्थिवादीनामुपदेशेन किं स्यादिति? अत उच्यते—अनेनेत्यादि। अनेनोपदेशेन खल्वनौषधीभूतं किञ्चिदपि द्रव्यं जगति नास्तीत्युपलक्ष्यते। कस्मात्? अत आह—तां तामित्यादि। तं

चक्रपाणिः—अनेनेति प्रतिनियतद्रव्योपदेशेन यत् पार्थिवादि द्रव्यं यद्गुणं, तद्गुणे देहे सम्पाद्ये ऽौषधं भवतीत्यर्थः; तच्च पार्थिवादि द्रव्यं न सर्व्वथा न च सर्व्वस्मिन् व्याधौ भेषजम्

**गुणप्रभावादेव द्रव्याणि कार्म्मुकाणि स्युः। द्रव्याणि हि द्रव्यप्रभावाद् गुणप्रभावाद् द्रव्यगुणप्रभावाच्च तस्मिंस्तस्मिन् काले तत्तदधिकरणमासाद्य तां ताञ्च युक्तिमर्थञ्च तं तमभिप्रेत्य**

तमर्थं प्रयोजनं व्याधीनां कारणानाञ्च यस्य यद्यद्गुणादिमत्त्वं तत्तद्गुणादिविपरीतगुणं द्रव्यमुपयुज्यमानं साधयतीति तां तां युक्तिमभिप्रेत्य अनौषधीभूतं जगति किञ्चिन्नोपलक्ष्यते, सर्व्वमेव द्रव्यमौषधमुपलक्ष्यते। तर्हि किं द्रव्यं गुणप्रभावात् कर्म्म करोतीति चेत्? तदा उच्यते—न त्वित्यादि। द्रव्याणि न केवलं गुणप्रभावादेव कार्म्मुकाणि कर्म्मकारीणि भवन्ति। कस्मादिति? अत उच्यते—द्रव्याणि हीत्यादि। हि यस्मात् द्रव्याणि कचिद्द्रव्यप्रभावात् कचिद्गुणप्रभावात् कचिद्द्रव्यगुणोभयप्रभावाच्च तस्मिंस्तस्मिन् काले यत् काले यत् समर्थं स्यात् तत्तत् काले तत्तदधिकरणं यत्र यत्र व्याध्यादिषु यद् यत् प्रयोजनमभिप्रेत्य प्रयुक्तानि भवन्ति तत्तदधिकरणं व्याध्यादिकमासाद्य तं तमर्थं प्रयोजनं वमनविरेचनास्थापनसंशमनादिकम् अभिप्रेत्य तत्तद्व्याध्यादिविपरीतानि प्रयुक्तानि कर्म्म कुर्व्वन्तीति कार्म्मुकाणि भवन्ति। तत्र यत् कुर्व्वन्ति द्रव्याणि तां तां युक्तिमर्थञ्च तं तमभिप्रेत्य प्रयुक्तानि तस्मिंस्तस्मिन् काले तत्तदधिकरणमासाद्य द्रव्यप्रभावात् गुण-

इत्याह—तां तां युक्तिमित्यादि। युक्तिमित्युपायम्, अर्थमिति प्रयोजनम्, अभिप्रेत्योद्दिश्य कृत्य, तेन केनचिदुपायेन कचित् प्रयोजने किञ्चित् द्रव्यमौषधं स्यात्, न सर्व्वत्र; तेन, यदुच्यते—वैरोधिकानां सर्व्वदाऽपथ्यत्वेन "नानौषधं द्रव्यम्" इति वचोविरोधि, तन्न स्यात्; वैरोधिकानि संयोगसंस्कारदेशकालाद्यपेक्षाणि भवन्ति, वैरोधिकसंयोगाद्यभावे तु पथ्यान्यपि कचित् स्युः; यान्यपि सर्व्वदापि स्वभावादेव विषमन्दकादीन्यपथ्यानि, तान्यप्युपाययुक्तानि कचित् पथ्यानि स्युः, यथा—"उदरे विषस्य लिलं दद्यात्" इत्यादि। यत्, —तृणपांशुप्रभृतीनि नोपयुज्यन्ते,—अतो न तानि भेषजानीत्युच्यते, तन्न, तेषामपि भेषजत्वेदाद्युपायत्वेन भेषजत्वात्।

पार्थिवादिद्रव्याणां गुरुत्वरादिगुणयोगाद् भेषजत्वमुक्तं, तेन गुणप्रभावादेव भेषजं स्यादिति शङ्कां निरस्यन्नाह—न तु केवलमित्यादि। द्रव्यप्रभावाद् यथा—दन्त्या विरेकत्वं, तथा मणीनां विषादिहन्तृत्वमित्यादि, गुणप्रभावाद् यथा—ज्वरे तिक्तको रसः, शीतेऽग्निरित्यादि; द्रव्यगुणप्रभावाद् यथा—कृष्णाजिनस्योपरीति, अत्रापि कृष्णत्वं गुणोऽजिनञ्च द्रव्यमभिप्रेतम्; यथा च—मण्डलैर्जातरूपस्य तस्या एव पयः शृतं; तत्र मण्डलगुणयुक्तस्यैव जातरूपस्य कार्म्मुकत्वम्। कथं कुर्व्वन्तीत्याह—तस्मिंस्तस्मिन्नित्यादि। तां तां युक्तिमासाद्येति तां तां योजनां प्राप्य,

**यत् कुर्व्वन्ति तत् कर्म्म, येन कुर्व्वन्ति तद्वीर्य्यम्, यत्र कुर्व्वन्ति तदधिकरणम्, यदा कुर्व्वन्ति स कालः, यथा कुर्व्वन्ति स उपायः, यत् साधयन्ति तत् फलम् ॥ २६ ॥**

प्रभावादुभयप्रभावात् यत् कुर्व्वन्ति तत् कर्म्म, येन कुर्व्वन्ति तद्वीर्य्यम्, यत्र कुर्व्वन्ति तदधिकरणम्, यदा कुर्व्वन्ति स कालः, यथा कुर्व्वन्ति स उपायः, यत् साधयन्ति तत् फलमिति। तद्यथा द्रव्याणि स्वप्रभावात् कार्म्मुकाणि दृश्यन्ते—यथा दन्तीमूलं कटुकं रसे पाके च तथा चित्रकमूलम्। तयोश्चित्रकं न विरेचयति दन्तीमूलन्तु स्वभावाद्विरेचयति। तथा मण्यादयश्च विषं घ्नन्ति स्वप्रभावात्। गुणप्रभावात् तु घृतादिकं स्निग्धं रुक्षं वातं शमयति, स्वप्रभावादायुर्व्वर्द्धयति। गुणानां प्रभावास्तु सुश्रुतेनोक्ताः। तद्यथा—"अत ऊर्द्ध्वं प्रवक्ष्यामि गुणानां कर्म्मविस्तरम्। कर्म्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणाः॥ ह्लादनः स्तम्भनः शीतो मूर्च्छातृट्स्वेददाहजित्। उष्णस्तद्विपरीतः स्यात् पाचनश्च विशेषतः॥ स्नेहमार्द्दवकृत् स्निग्धो बलवर्णकरस्तथा। रुक्षस्तद्विपरीतः स्याद्विशेषात् स्तम्भनः खरः॥ पिच्छिलो जीवनो बल्यो सन्धानः श्लेष्मलो गुरुः। विशदो विपरीतोऽस्मात् क्लेदाचूषणरोपणः॥ दाहपाककरस्तीक्ष्णः स्रावणो मृदुरन्यथा। सादोपलेपबलकृद् गुरुस्तर्पणबृंहणः॥ लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा। दशाद्याः कर्म्मतः प्रोक्तास्तेषां कर्म्म विशेषणैः। दशैवान्यान् प्रवक्ष्यामि द्रवादींस्तान् निबोध मे॥ द्रवः प्रक्लेदनः सान्द्रः स्थूलः स्याद्बन्धकारकः। श्लक्ष्णः पिच्छिलवज्ज्ञेयः कर्कशो विशदो यथा॥ सुखानुबन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुः। दुर्गन्धो विपरीतोऽस्माद्धृल्लासारुचिकारकः। सरोऽनुलोमनः प्रोक्तो मन्दो यात्राकरः स्मृतः। व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते॥ विकाशी विकशत्येव

यत् कुर्व्वन्तीत्यादावुदाहरणं यथा—शिरोविरेचनद्रव्याणि यत् शिरोविरेचनं कुर्व्वन्ति, तत् शिरोविरेचनं कर्म्म; येनोष्णत्वादिकारणेन शिरोविरेचनं कुर्व्वन्ति, तद्वीर्य्यम्, वीर्य्यं शक्तिः, सा च द्रव्यस्य गुणस्य वा; यत्र शिरोविरेचनं कुर्व्वन्ति, तदधिकरणं शिरः; नान्यत्राधिकरणे शिरोविरेचनद्रव्यं स्यादित्यर्थः; यदेति वसन्तादौ शिरोगौरवादियुक्ते च काले, एतेन, अकाले शीतादौ शिरोविरेचनं साध्यत्वान्न कार्म्मुकं, किन्तु, स्वकाल एव; यथा येन प्रकारेण—प्रथममाषपीडनादिना तथा "प्रसारिताङ्गमुत्तानं शयने संस्तरास्तृते। ईषत्प्रलम्बशिरसं संवेश्य चातुरेऽव्यम॥" इत्यादिना विधिना कुर्व्वन्ति, स उपायः; यत् साधयन्ति शिरोगौरवशूलाद्युपरमं, तत्

भेदश्चैषां त्रिषष्टिविधरसविकल्पो द्रव्यदेशकालप्रभावाद् भवति। तमुपदेक्ष्यामः ॥ २७ ॥

स्वादुरम्लादिभिर्योगं शेषैरम्लादयः पृथक्।
यान्ति पञ्चदशैतानि द्रव्याणि द्विरसानि हि ॥

सन्धिबन्धं विमोक्षयन्। आशुकारी तथाशुत्वाद् धावत्यम्भसि तैलवत् ॥ सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः। गुणा विंशतिरित्येवं यथावत् परिकीर्त्तिताः ॥ २६ ॥

<u>गङ्गाधरः</u>—इत्येवं भौतिकत्वभेदेन द्रव्याणां पञ्चविधं भेदमुक्त्वाऽपरं भेदमाह—भेदश्चैषामित्यादि। एषामपरश्च भेदस्त्रिषष्टिविधरसविकल्पो द्रव्यप्रभावाद्भवति देशप्रभावात् कालप्रभावाच्च। द्रव्यप्रभावात् यथा—सोमगुणातिरेकान्मधुर इत्येवमादिः। देशप्रभावाद् यथा—आम्रफलादि देशविशेषे मधुरप्रायं देशविशेषेऽम्लप्रायम्। कालप्रभावाद् यथा—कदलफलादि ग्रीष्मे मधुरं हिमे सकषायम्। एवमावस्थिककालप्रभावाच्च यथा—बालमाम्रफलं सकषायाम्लं मध्यममम्लं पक्वं मधुराम्लमिति। एष त्रिषष्टिविधरसः सहज एव द्रव्याणां न तु द्रव्यान्तरसंयोगादिजः कारणत्वेन तत्संयोगादेवमुक्तत्वात्। तं त्रिषष्टिविधरसविकल्पाद् द्रव्याणां भेदमुपदेक्ष्यामः। इति प्रतिज्ञा ॥ २७ ॥

<u>गङ्गाधरः</u>—तद्यथा—स्वादित्यादि। द्विरसानि द्रव्याण्येतानि पञ्चदश भवन्ति। कस्मात्? हि यस्मात् स्वादुर्मधुरो रसः शेषैरम्लादिभिः पञ्चभिः

फलम्, फलमुद्देश्यम्; कर्म्म कार्य्यम्, उद्देश्यं फलं यथा,—योगनिष्पाद्यो धर्म्मः कार्य्यतया कर्म्म, तज्जन्यस्तु स्वर्गादिरुद्देश्यः फलम्, एवं वमनादिष्वपि कर्म्मवीर्य्याधिकरणादूहनीयम् ॥ २६ ॥

<u>चक्रपाणिः</u>—सम्प्रति द्रव्यमभिधाय विकृतानां रसानामेव भेदमाह—भेदश्चैषामित्यादि। प्रभावशब्दो द्रव्यदेशकालैः प्रत्येकं युज्यते, तत्र द्रव्यप्रभावात् यथा—"सोमगुणातिरेकान्मधुर" इत्यादि, देशप्रभावात् यथा—"हिमवति द्राक्षादाडिमादीनि मधुराणि अन्यस्यनत्राम्लानि" इत्यादि; कालप्रभावात् यथा—"बालाम्रं सकषायं तरुणमम्लं पक्वं मधुरं", तथा हेमन्ते "ओषध्यो मधुरा वर्षास्वम्लाः" इत्यादि। अग्निसंयोगादयो येऽन्ये रसहेतवः तेऽपि काले द्रव्ये वान्तर्भावनीयाः ॥ २७ ॥

<u>चक्रपाणिः</u>—भेदमाह—स्वादुरित्यादि। तत्र स्वादोरम्लादियोगात् पञ्च, शेषैरिति आदि-*लोपोपयुक्तान्यैः, तेनाम्लस्य लवणादियोगाच्चत्वारि; एवं लवणस्य कट्वादियोगात् त्रीणि, कटुकस्य तिक्तकषाययोगात् द्वे, तिक्तस्य कषाययोगादेकम्, एवं पञ्चदश द्विरसानि।

पृथगम्लादियुक्तस्य योगः शेषैः पृथग्भवेत् ।
मधुरस्य तथाम्लस्य लवणस्य कटोस्तथा ॥
त्रिरसानि यथासंख्यं द्रव्याण्युक्तानि विंशतिः ।
वक्ष्यन्ते च चतुष्केण द्रव्याणि दश पञ्च च ॥

एकैकशो योगं यान्ति। ततो द्विरसानि पञ्च भवन्ति। मधुराम्लो मधुरलवणो मधुरकटुको मधुरतिक्तो मधुरकषायश्चेति। अम्लादयः पञ्च चैकैकशो रसाः शेषैश्चतुस्त्रिद्व्येकैः सह योगं यान्ति। ततो द्विरसानि द्रव्याणि दश भवन्ति। तद्यथा—अम्ललवणोऽम्लकटुकोऽम्लतिक्तोऽम्लकषायश्चेति चत्वारः। लवणकटुको लवणतिक्तो लवणकषाय इति त्रयः। कटुतिक्तः कटुकषाय इति द्वौ। तिक्तकषाय इत्येकः। इति दश पूर्व्वैः पञ्चभिः सह पञ्चदश द्विरसद्रव्याणि।

त्रिरसान्याह—पृथगित्यादि। पृथगम्लादियुक्तस्य मधुरस्य शेषलवणादिभिश्चतुर्भिः पृथग् योगश्चतुर्व्विधः। मधुराम्ललवणो मधुराम्लकटुको मधुराम्लतिक्तो मधुराम्लकषायश्चेति। आदिना मधुरस्य लवणादियुक्तस्य शेषैः कट्वादिभिर्योग इति। यथा—मधुरलवणकटुकः मधुरलवणतिक्तः मधुरलवणकषायः। मधुरकटुतिक्तः मधुरकटुकषायः। मधुरतिक्तकषायः। इति मधुरयोगाद् दश। तथाम्लस्य पृथग्लवणादियुक्तस्य शेषैः कट्वादिभिः पृथग्योगः स्यादिति। यथा—अम्ललवणकटुकः अम्ललवणतिक्तः अम्ललवणकषायः। अम्लकटुतिक्तः अम्लकटुकषायः। अम्लतिक्तकषायः। इति अम्लस्य योगात् षट्। तथा लवणस्य पृथक् कट्वादियुक्तस्य शेषैस्तिक्तकषायाभ्यां योगो भवेत्। यथा—लवणकटुतिक्तः लवणकटुकषायः लवणतिक्तकषायः। इति त्रयः। कटोस्तथा तिक्तयुक्तस्य शेषेण कषायेण योगो भवेदिति। कटुतिक्तकषाय इत्येकः। इति दश। इति विंशतिर्द्रव्याणि त्रिरसानि यथासंख्यमुक्तानि।

त्रिरसमाह—पृथगित्यादि। मधुरस्याम्लादिरसचतुष्टयेन पृथगित्येकशो युक्तस्य शेषैर्लवणादिभिर्योगो भवति ; तत्र मधुरस्याम्लयुक्तस्य शेषलवणादियोगाच्चत्वारि, तथा मधुरस्य लवणयुक्तस्य कट्वादियोगात् त्रीणि, तथा कटुकयुक्तस्य तिक्तादियोगात् द्वे, तथा तिक्तयुक्तस्य कषाययोगादेकम्, एवं मधुरेणादिस्थितेन दश। एवमम्लस्यादिस्थितस्य लवणयुक्तस्य कट्वादियोगात् त्रीणि, तथा कटुकयुक्तस्य शेषाभ्यां योगात् द्वे, एवं तिक्तयुक्तस्य कषाययोगादेकं, एवमम्लस्य षट्। अनेनैव न्यायेन लवणस्य त्रीणि, कटोश्चैकमेव, एवं मिलित्वा त्रिरसानि विंशतिः।

स्वाद्वम्लौ सहितौ युक्तौ लवणाद्यैः पृथग्गतैः।
योगं शेषैः पृथग्यातश्चतुष्करससंख्यया॥
सहितौ स्वादुलवणौ तद्वत् कट्वादिभिः पृथक्।
युक्तौ शेषैः पृथग्योगं यातः स्वादूषणौ तथा॥
कट्वाद्यैरम्ललवणौ संयुक्तौ सहितौ पृथक्।
यातः शेषैः पृथग्योगं शेषैरम्लकटू तथा॥

अथ चतुष्केण रसेन दश पञ्च च द्रव्याणि वक्ष्यन्ते, तद्यथा—स्वाद्वम्लावित्यादि। स्वाद्वम्लौ सहितौ मिलितौ सन्तौ द्वौ रसौ पृथग्गतैर्लवणाद्यैः लवणकटुतिक्तकषायैर्युक्तौ पुनः शेषैः कटुतिक्तकषायैरेकैकशो योगं यातश्चतुष्करससंख्यया षड् द्रव्याणि भवन्ति। तद्यथा—मधुराम्ललवणकटुः मधुराम्ललवणतिक्तः मधुराम्ललवणकषायः मधुराम्लकटुतिक्तः मधुराम्लकटुकषायो मधुराम्लतिक्तकषायश्चेति षट्। सहितावित्यादि। सहितौ मिलितौ स्वादुलवणौ द्वौ रसौ तद्वत् पूर्ववत् कट्वादिभिः पृथगेकैकेन युक्तौ सन्तौ पुनः शेषैस्तिक्तादिभिः पृथगेकैकेन योगं यातः प्राप्नुतश्चतुष्करससंख्यया त्रीणि द्रव्याणि भवन्ति। तद्यथा—मधुरलवणकटुतिक्तः मधुरलवणकटुकषायः मधुरलवणतिक्तकषायः। इति त्रीणि। स्वादूषणौ तथेति। मधुरकटुतिक्तकषाय इत्येकं चतुष्करससंख्यया द्रव्यमिति चतुष्करसद्रव्याणि दश मधुरादिकानि। कट्वाद्यैरम्ललवणावित्ति। अम्ललवणौ द्वौ रसौ मिलितौ कट्वाद्यैः पृथक् एकैकशो युक्तौ सन्तौ शेषैस्तिक्तादैरेकैकशो योगं यात इति चतुष्करससंख्यया त्रीणि द्रव्याणि भवन्ति। यथा—अम्ललवणकटुतिक्तः अम्ललवणकटुकषायः अम्ललवणतिक्तकषाय इति त्रीणि। शेषैरम्लकटू तथा युज्येते इति। अम्लकटुतिक्तकषाय इत्येकम्। एवं युज्येते तु कषायेण सतिक्तौ लवणोषणौ। इति लवणकटुतिक्तकषाय इत्येकमिति पञ्च च। इत्येवं चतुष्करससंख्यया

चतुरसे स्वाद्वम्लादिस्थितौ लवणादिभिरेकैकद्वयेन युक्तौ शेषैः कट्वादिभिर्योगात् षड् भवन्ति ; स्वादुलवणौ सहितावादिस्थितौ, कट्वादिभिरिति कटुतिक्ताभ्यां पृथग्युक्तौ ; शेषैरिति तिक्तकषायाभ्याम्, तेन इह बहुवचनं आर्ती बोद्धव्यम्, एवं त्रीणि ; एवं स्वादूषणौ तथेत्यनेन स्वादुकटुकतिक्तकषायरूपमेकम् ; कट्वाद्यैरित्यादावपि बहुवचनं आर्ती, अम्ललवणौ संयुक्तौ कटुना

युज्येते तु कषायेण सतिक्तौ लवणोषणौ ।
षट् तु पञ्चरसान्याहुरेकैकस्यापवर्ज्जनात् ॥
षट् चैवैकरसानि स्युरेकं षड्रसमेव च ।
इति त्रिषष्टिर्द्रव्याणां निर्दिष्टा रससंख्यया ॥
त्रिषष्टिः स्यादसंख्येया रसानुरसकल्पनात् ।
रसास्तरतमाभ्यां तां * संख्यामतिपतन्ति हि ॥ २८ ॥

द्रव्याणि दश पञ्च चेति । षट् त्वित्यादि । पञ्चरसानि द्रव्याणि षट् खलु षण्णां रसानामेकैकस्य रसस्यापवर्ज्जनादाहुः । तद्यथा—मधुराम्ललवणकटुतिक्तः अम्ललवणकटुतिक्तकषायः लवणकटुतिक्तकषायमधुरः कटुतिक्तकषायमधुराम्लः तिक्तकषायमधुराम्ललवणः कषायमधुराम्ललवणकटुः । इति पञ्चरसानि द्रव्याणि षट् ।

षट् चेत्यादि । एकरसानि द्रव्याणि षड् भवन्ति । मधुरमम्लं लवणं कटुकं तिक्तकं कषायमिति षडेकरसद्रव्याणि । एकं षड्रसमेव च द्रव्यम् । मधुराम्ललवणकटुतिक्तकषायम् । इत्येवं त्रिषष्टिविधरसयोगात् त्रिषष्टिभेदा द्रव्याणां भवन्तीति । उपसंहरति—इतीत्यादि । रसानुरसकल्पनादसंख्येया रसाः स्युः, हि यस्मात् तरतमाभ्यां ते रसाः संख्यामतिपतन्ति ॥ २८ ॥

सहितौ शेषाभ्यां योगाद् द्वे, तथाम्ललवणौ तिक्तयुक्तौ शेषयोगादेकम्; अम्लकटू तथेत्यनेनाम्लकटुतिक्तकषायरूपमेकं, युज्येते त्वित्यादिना चैकम्; एवं पञ्चदश चतूरसानि । अपवर्ज्जनादिति त्यागात् । अत्र च रसानां गुणत्वेनैकस्मिन् द्रव्ये समवायो योगशब्देनोच्यते ।

रससंसर्गस्य प्रकारान्तरेणापरिसंख्येयतामाह—त्रिषष्टिः स्यादित्यादि । अनुरसोऽग्रे वक्ष्यमाणः । अत्र च त्रिषष्ट्यात्मकरसे रसानुरसकल्पना नास्ति केवलस्य मधुरादेरपवर्ज्जनात्, तेन यथासम्भवं सप्तपञ्चाशत्संयोगविशेषं रसानां रसकल्पनं ज्ञेयम्; किंवा एकरसेऽप्यनुरसोऽस्येवाव्यपदेश्यः । प्रकारान्तरेणाप्यसंख्येयतामाह—रसास्तरतमाभ्यस्ताः संख्यामित्यादि । मधुरमधुरतरमधुरतमादिभेदादसंख्येयता रसानां भवतीति भावः; किंवा, रसानुरसत्वेनैव वासंख्येयता, तत्रैवायं हेतुः—रसास्तरतमेत्यादिः ॥ २८ ॥

* रसास्तरतमाभ्यस्ताः इति पाठान्तरम् ।

संयोगाः सप्तपञ्चाशत् कल्पना तु त्रिषष्टिधा ।
रसानां तत्र योग्यत्वात् कल्पिता रसचिन्तकैः ॥ २९ ॥
क्वचिदेको रसः कल्प्यः संयुक्ताश्च रसाः क्वचित् ।
दोषौषधादीन् संचिन्त्य भिषजा सिद्धिमिच्छता ॥ ३० ॥
द्रव्याणि द्विरसादीनि संयुक्तांश्च रसान् बुधाः ।
रसानेकैकशो वापि कल्पयन्ति गदान् प्रति ॥ ३१ ॥

गङ्गाधरः—संयोगा इत्यादि । तेषु त्रिषष्टिविधेषु मध्ये सप्तपञ्चाशद्रससंयोगाद् द्वित्रिचतुःपञ्चषड्रसाः । पृथक् षट् चेति त्रिषष्टिधा कल्पना । तत्र योग्यत्वाद्रसानां वातादिकल्पना रसचिन्तकैः कल्पिता ॥ २९ ॥

गङ्गाधरः—कथमिति चेत् ? तदोच्यते—क्वचिदित्यादि । क्वचिद्दोषौषधादीन सञ्चिन्त्यावेक्ष्यावेक्ष्य तदेकदोषजादौ व्याधौ तद्दोषव्याधिविपरीत एको रसः कल्प्यः स्यात् सिद्धिमिच्छता । क्वचित् संयुक्तदोषादौ व्याधौ दोषौषधादीन् सञ्चिन्त्य तद्द्विदोषत्रिदोषन्यूनाधिकादिभावमवेक्ष्य संयुक्तास्तत्तद्दोषव्याधिविपरीताः संयुक्तरसाः कल्प्याः स्युः सिद्धिमिच्छता भिषजा ॥ ३० ॥

गङ्गाधरः—कस्मात् ? तत आह—द्रव्याणीत्यादि । यतो गदान् प्रति बुधा वैद्या द्विरसादीनि द्रव्याणि संयुक्तांश्च द्विरसादीन रसान एकैकशो वापि रसान् कल्पयन्ति ॥ ३१ ॥

चक्रपाणिः—एवमसंख्येयत्वेऽपि त्रिषष्टिविधैव कल्पना चिकित्साव्यवहारार्थमिहाचार्यैः कल्पिता इत्याह—संयोगा इत्यादि । तत्र योग्यत्वादिति, तत्र स्वस्थातुरहितचिकित्साप्रयोगेऽभिनिवृत्तिरूपतया हितत्वादित्यर्थः ॥ २९ ॥

चक्रपाणिः—तमेव चिकित्साप्रयोगमाह—क्वचिदित्यादि । अत्रादिग्रहणाद् देशकालबलादीनां ग्रहणम् । एतदेव संयुक्तासंयुक्तरसकल्पनं भिन्नरसद्रव्यमेलकाद्वानेकरसैकद्रव्यप्रयोगादेकरसद्रव्यप्रयोगाद् वा भवतीति दर्शयन्नाह—द्रव्याणीत्यादि । द्विरसादीन्युत्पत्तिसिद्धद्विरसत्रिरसादीनि—द्विरसं यथा—कषायमधुरो मुद्गः; त्रिरसं यथा—"मधुराम्लकषायञ्च विष्टम्भि गुरु शीतलम् । पित्तश्लेष्महरं भव्यम्" इत्यादि; चतूरसस्तिलः, यदुक्तम्—"स्निग्धोष्णमधुरस्तिक्तः कषायः कटुकस्तिलः ।" पञ्चरसन्त्वामलकं हरीतकी च "शिवा पञ्चरसा" इत्यादिवचनात्; षड्रसन्तु द्रव्यमिहानुक्तम्; विषन्त्वव्यक्तषड्रससंयुक्तम्; हारीते तु—एणमांसं

यः स्याद्रसविकल्पज्ञः स्याच्च दोषविकल्पवित्।
न स मुह्येद्विकाराणां हेतुलिङ्गोपशान्तिषु ॥ ३२ ॥
व्यक्तः शुष्कस्य चादौ च रसो द्रव्यस्य लक्ष्यते।
विपर्य्ययेणाणुरसो रसो नास्तीह सप्तमः ॥ ३३ ॥

<u>गङ्गाधरः</u>—एतेन किं स्यादिति? अत आह—यः स्यादित्यादि। यो वैद्यो रसविकल्पज्ञः स्यात् स्याच्च दोषविकल्पवित् स वैद्यो दोषं विकल्प्य न्यूनाधिकाद्यंशं प्रविविच्य रसं तदुपशान्तिहेतुं विकल्प्य प्रयुज्य विकाराणां हेतुलिङ्गोपशान्तिषु न मुह्येत् भ्रान्तिमान् न स्यादिति ॥ ३२ ॥

<u>गङ्गाधरः</u>—ननु रसाणुरसौ कथं विज्ञायेते इति? अत आह व्यक्त इत्यादि। मुखे क्षिप्तस्य शुष्कस्य द्रव्यस्य व्यक्तो रस आदौ लक्ष्यते। तस्य द्रव्यस्यार्द्रीभावे पुनस्तद्व्यक्तरसविपर्य्ययेणाणुरसो लक्ष्यते न तदतिरिक्तो रसो लक्ष्यते। तस्मादिह जगति सप्तमो रसो नास्ति। इति ॥ ३३ ॥

व्यक्तायद्रसमंयुक्तमुक्तम्, एवं द्विरसादिद्रव्ययोगाद् द्विरसादुरप्रयोगः; तथा संयुक्तांश्च रसानिति,—एकैकरसादिद्रव्यमेलकात् संयुक्तान् रसान् तथैकैकशः कल्पयन्ति प्रयोजयन्ति; गदान् प्रतीति प्राधान्येन, तेन स्वस्थवृत्तेऽपि योद्धव्यम्; किंवा, द्विरसादिभेदो गद एव, स्वस्थे तु सर्व्वरसप्रयोग एव, यदुक्तम् "समसर्व्वरसं सात्म्यं समधातोः प्रशस्यते"। एवञ्च व्याख्याने सति "क्वचिदेकरसः" इत्यादिना सममस्य न पौनरुक्त्यम्; किंवा, "क्वचिदेकरसः" इत्यादिना स्वमतमुक्तम्, अत्रैवार्थे "द्रव्याणि द्विरसादीनि" इत्यादिना आचार्य्यान्तरसम्मतिं दर्शयति; अत एवाचार्य्यान्तराभिप्रायेण "कल्पयन्ति" इत्युक्तम्, तेन न पौनरुक्त्यम् ॥ ३०।३१ ॥

<u>चक्रपाणिः</u>—रसज्ञानफलमाह—यः स्यादित्यादि। अत्र रसविकल्पज्ञानादेव व्याधिहेतु-द्रव्यज्ञानं कृत्स्नमवरुद्धम्, रसज्ञानेनैव प्रायः सकलद्रव्यगुणस्य वक्ष्यमाणत्वात्। दोषविकल्पज्ञानाच्च लिङ्गज्ञानम्, यावद्धि लिङ्गं, तत् सर्व्वं दोषविकल्पसम्बद्धम्; रसदोषविकल्पज्ञानात् तु भेषजज्ञानम्, यतः, रसतः स्वरूपज्ञानं भेषजद्रव्यस्य, दोषश्च भेषजप्रयोगविषयविज्ञानम्; किंवा, रसविकल्पाच्च तथा दोषविकल्पाच्च हेत्वादिज्ञानं पृथगेव वक्तव्यम्, रसभेदाद्धि तत् कार्य्यं लिङ्गमपि ज्ञायते; हेतुभेषजविज्ञानन्तु रसभेदविज्ञानादेव वक्तव्यम्, यतः रसभेदवद्द्रव्यमेव विकाराणां हेतुर्भेषजञ्च भवतीति, एवं रोगभेदं ज्ञात्वा च तस्य समानं हेतुं प्रत्येति, दोषविरोधि च द्रव्यं भेषजमिति; तद् एवमुक्तम् 'न स मुह्येद्विकाराणां हेतुलिङ्गोपशान्तिषु' इति ॥ ३२ ॥

<u>चक्रपाणिः</u>—पूर्व्वोक्तरसानुरसलक्षणमाह—व्यक्त इत्यादि। शुष्कस्य चेति चकारादार्द्रस्य च, आदौ चेति चकारादन्ते च; तेन शुष्कस्य वा आर्द्रस्य वा प्रथमजिह्वासम्बन्धे वा आस्वादावसाने वा यो व्यक्तत्वेन मधुरोऽयमम्लोऽयमित्यादिना विकल्पेन गृह्यते, स व्यक्तः। मस्तूकावस्थाचतुष्टये-

परापरत्वे युक्तिश्च संख्या संयोग एव च।
विभागश्च पृथक्त्वञ्च परिमाणमथापि च॥
संस्कारोऽभ्यास इत्येते गुणा ज्ञेयाः परादयः।
सिद्ध्युपायाश्चिकित्साया लक्षणैस्तान् प्रवक्ष्यते॥ ३४॥
देशकालवयोमान-पाकवीर्य्यरसादिषु।
परापरत्वे युक्तिस्तु योजना या तु युज्यते॥ ३५॥

गङ्गाधरः—नन्वेवं रसानां विकल्पने क उपाय इति? अत आह—परापरत्वे इत्यादि। इत्येते परादयो दश गुणाश्चिकित्सायाः सिद्धावुपायाः यथा कुर्व्वन्ति स उपाय इति ज्ञेयाः। तान् परादीन् लक्षणैः प्रवक्ष्यते व्याख्यास्यते॥ ३४॥

गङ्गाधरः—क्रमेण लक्षणमाह—देशेत्यादि। देशादिषु परापरत्वे युज्येते। परश्चापरश्च तयोर्भाव इति परापरत्वे परत्वापरत्वे। परत्वं प्रथमादुत्तरत्वम्। अपरत्वं तत्परतः परत्वमिति परं परस्य परम्। तच्च देशादिषु युज्यते। देशस्तु

ऽपि व्यक्तो नोपलभ्यते, किं तर्हि, अव्यक्तेऽव्यक्तया छायामात्रेण कार्य्यमात्रेण वा मीयते, सोऽनुरस इति वाक्यार्थः; यतश्च मधुरादय एव व्यक्तत्वाव्यक्तत्वाभ्यां रसानुरसरूपाः, अतः अव्यक्तनामा सप्तमो रसो नास्ति; अयमर्थः—पूर्व्वं प्रतिषिद्धोऽप्यनुगुणस्पष्टहेतुप्राप्त्या पुनर्निषिध्यते; अन्ये त्वाहुः—शुष्कस्य संत्यजनेन यस्य द्रव्यस्य शुष्कस्य चार्द्रस्य चोपयोगः, तत्र शुष्कावस्थायां यो व्यक्तः, स रस उच्यते, यस्त्वार्द्रावस्थायां व्यक्तः सन् शुष्कावस्थायां नानुयाति, नासौ रसः, किन्त्वनुरसः; यथा—पिप्पल्या आर्द्राया मधुरो रसो व्यक्तः, शुष्कायाः पिप्पल्याः कटुकः, तेन कटुक एव रसः पिप्पल्याः, मधुरस्त्वनुरसः; यस्तु द्राक्षादीनामार्द्रावस्थायां शुष्कावस्थायाञ्च मधुर एवेति, तत्र विप्रतिपत्तिरेव नास्ति, तेन, तत्र मधुर एव रसः। नित्यार्द्रप्रयोज्यानान्तु काञ्जिक-तक्रादीनामादौ व्यक्तो य उपलभ्यते, स रसः, अनु चोपलभ्यते यः सोऽनुरसः; युक्तिमत्त्वादि-त्वयार्द्रावस्थायां शुष्कावस्थाविपरीतो यः पिप्पल्या इव मधुरः, सोऽनुरस इति, किन्त्वार्द्रापि पिप्पली मधुररसैवेति पश्यामः, यतः वक्ष्यति—"श्लेष्मला मधुरा चार्द्रा गुर्व्वी स्निग्धा च पिप्पली" इति। मधुरस्य तत्रानुरसत्वे गुरुत्वश्लेष्मकर्तृत्वानुपपन्नानि; तेन आर्द्रा पिप्पली व्यक्तमधुररसैव, शुष्का तु मधुरानुरसेति युक्तम्॥ ३३॥

चक्रपाणिः—सम्प्रति पूर्व्वोक्तगुर्व्वादिगुणातिरिक्तान् परत्वापरत्वादीन् दश गुणान् रसधर्म्मत्वेनोपदेष्टुमाह—परेत्यादि। तत्र परत्वं प्रधानत्वम्, अपरत्वमप्रधानत्वम्; तद्विवरणं देशकालेत्यादि। तत्र देशो मरुः परः, अनूपोऽपरः; कालो विसर्गः परः, आदानमपरः; वय-

भौमः शारीरश्च। अयमस्मात् परो देशोऽयमस्मात् परतोऽपि परो देश इत्येवं लोके व्यवह्रियते। भौमदेशे शरीरदेशे च। तथा कालेऽपि व्यवह्रियतेऽयमस्मात् परः कालो वत्सर ऋतुर्वत्सरो वेत्येवमादिः प्रातरादिश्च कालो दृश्यते। तथायमस्मादपरः कालः परतः कालादपि परः काल इति। एवं वयसि च युज्येते। यथा इदमस्य वयसः शैशवात् परं पौगण्डं पौगण्डाच्चापरं कैशोरं यौवनञ्चापरमित्येवमादिः। नायं काले व्यवहारः। तस्मिन् हि काले कस्यचिच्छैशवं कस्यचित् पौगण्डं कस्यचित् कैशोरमिति। तथा मानेऽपि परत्वापरत्वे व्यवह्रियेते। यथा ह्रस्वदीर्घादिमानं पुरुषस्य बाल्ये ह्रस्वत्वात् परं दैर्घ्यं यौवनेऽपरञ्च ततः परमिति। अयमस्माद् ह्रस्वोऽयं दीर्घ इति। एवं पाकेऽपि परत्वापरत्वे युज्येते। अयमभ्यवहृतस्यान्नस्य जाठराग्निना पाकात् परो रसपाकस्तत्परश्चापरो रक्तपाक इति। एवमभ्यवहृताः पृथुकाः परं पच्यन्तेऽपरञ्च लड्डुका इति। तथा वीर्य्येऽपि परत्वापरत्वे व्यवह्रियेते। आमलककस्य शीतवीर्य्यात् परं शीतं वीर्य्यम्। आमनारिकेलोदकस्य ततश्चापरं शीतं वीर्य्यमितरेषामिति। एवं रसेऽपि परापरत्वे व्यवह्रियेते। आमे फले पूर्व्वम् आम्रः सकषायोऽम्लो रसः परश्चाम्लस्ततः पक्वस्यापरो रसः। इति। आदिना प्रभाववोत्पत्त्यादिषु सर्व्वेषु भावेषु परत्वापरत्वे व्यवह्रियेते। परत्वापरत्वयोस्तु परत्वापरत्वाभावः। कार्य्यगुणे कार्य्यगुणाभाववत्। प्रकृतिभूतौ हि गुणौ परत्वापरत्वे कार्य्यगुणेष्वपि वर्त्तेते। तस्मान्मानपाकवीर्य्यरसादिषु युज्येते। परापरत्वादयः प्रकृतिभूतगुणा न कार्य्यगुणकर्म्मसु प्रतिषिद्धा इति। "यत्राश्रिताः कर्म्मगुणाः कारणं समवायि यत्" इत्युक्त्वा कार्य्यद्रव्यस्यैव कर्म्मगुणाश्रयत्वम् उक्तम् न तु कार्य्यगुणस्य गुणाश्रयत्वमुक्तमिति। अथ युक्तिं लक्षयति—युक्तिस्त्वित्यादि। युक्तिस्तु योजना नाम सा या तु युज्यते, युज्यते इति योजना युक्तिरुच्यते। यत्र यद् याद्रूप्येण योग्यं भवति तत्र तस्य ताद्रूप्येण योगो युक्तिर्न तु तर्कः। तस्य प्रमाणत्वेन बुद्धिविशेषत्वात्। इयं हि तर्कपूर्व्विका योजना न बुद्धिः। न चैषा युक्तिः संयोगादिष्वन्तर्भवति। युक्त्या

सकर्णं परम्, अपरमितरत्; मानञ्च शरीरस्य यथा वक्ष्यमाणं शारीरे परं, ततोऽन्यदपरम्; पाकवीर्य्यरसास्तु ये यस्य यौगिकास्ते तं प्रति पराः, अयौगिकास्त्वपराः; 'आदि'ग्रहणात् प्रकृतिबलादीनां ग्रहणं; किंवा परत्वापरत्वे वैशेषिकोक्ते ज्ञेये, तत्र देशापेक्षया सन्निकृष्टदेशसम्बन्धिनमपेक्ष्य विप्रकृष्टदेशसम्बन्धिनः परत्वं, सन्निकृष्टदेशसम्बन्धिनि चापरत्वम् स्यात्; एवं सन्निकृष्टविप्रकृष्टकालापेक्षया च स्थविरे परत्वं यूनि चापरत्वं स्यात्; वयःप्रभृतिषु परत्वापरत्वं

संख्या स्याद्गणितं योगः सहसंयोग उच्यते।
द्रव्याणां द्वन्द्वसर्व्वैक-कर्म्मजोऽनित्य एव च॥

हि द्रव्यं संयुज्यते परिमीयते संस्क्रियते। न समवायेऽप्यन्तर्भवति। स ह्यपृथग्भावो भावानामियन्तु योजना न तथा। पृथग्भूतानामपि योजना पदानां दृश्यते। तस्मात् तेभ्यः पृथगुक्ता युक्तिः। योजनायान्तु युज्यते इति पाठान्तरम्॥ ३५॥

गङ्गाधरः—अथ सङ्ख्या—सङ्ख्येत्यादि। सङ्ख्या स्याद्गणितम्। गण्यते ह्येवं लोके। अयमेक इत्यभ्यासमनिरपेक्षा खल्वेकत्वं संख्या। सैवाभ्यासगुणवती द्वित्वादिश्च संख्याभिधीयते। यथा पुनरयमेकोऽपरश्चैक इति द्वौ। तथायमेकोऽपरश्चैकः परश्चैक इति त्रयः। इत्येवमभ्यासगुणः परापरत्ववती सैकत्वसङ्ख्या द्वित्वादिः संख्या। द्वावेतावेक एतौ चापरौ द्वावेक इति द्वौ। तौ द्वौ तथा चैते त्रय एकस्त्रयश्चापरे द्वे ते एक इति द्वौ त्रयः। एवं त्रयस्त्रयः। त्रयश्चत्वार एकश्चत्वार एतेऽपरे त्वेकश्चत्वार इति द्वौ चत्वारः। इत्येवं संख्यावर्त्ती च संख्या द्वित्वादिन त्वेक एक इति। एकत्वस्यैकत्वाभावात्। कणादेन चोक्तं—"पृथक्त्वैकत्वयोरेकत्वपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः" इति। पृथक्त्वस्यैकत्वपृथक्त्वाभावः। एकत्वस्य चैकत्वपृथक्त्वाभावो न तु पृथक्त्वस्य एकत्वाभाव एकत्वस्य पृथक्त्वाभाव इति यथासङ्ख्यम्। यथाणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः। अणुत्वस्याणुत्वमहत्त्वाभावो महत्त्वस्याणुत्वमहत्त्वाभाव इति। तथा चैवं न प्रतीयते द्वित्वात् पृथगेकत्वं न चैकत्वमेकमिति। तथा पृथगन्यतः

यथासम्भवं कालदेशकृतमेवेहोपयोगादुपचरितमप्यभिहितं, यतः गुणे मानादौ न गुणान्तरसम्भवः। युक्तिश्चेत्यादौ योजना दोषाद्यपेक्षया भेषजस्य समीचीनकल्पना, अत एवोक्तम्—'या तु युज्यते',—या कल्पना यौगिकी स्यात्, सा तु युक्तिरुच्यते, अयौगिकी तु कल्पनापि सती युक्तिर्नोच्यते पुत्रोऽप्यपुत्रवत्। युक्तिश्चेयं संयोगपरिमाणसंस्कारादयन्तर्गताप्यत्युपयुक्तत्वात् पृथगुच्यते॥ ३४।३५॥

चक्रपाणिः—संख्यां लक्षयति—संख्या स्याद्गणितमिति। गणितमिहैकद्वित्रीत्यादि। संयोगमाह—योग इत्यादि। सहेति मिलितानां द्रव्याणां योगः प्राप्तिरित्यर्थः, सहेत्यनेनैकाकिक्रियाकरं परस्परसंयोगं निराकरोति। तद्भेदमाह—द्वन्द्वेत्यादि। तत्र द्वन्द्वकर्म्मजो यथा—युध्यमानयोर्मेषयोः, सर्व्वकर्म्मजो यथा—भाण्डे प्रक्षिप्यमाणानां माषाणां बहुलमाषक्रियायोगजः, एककर्म्मजो यथा—वृक्षवायसयोः; अनित्य इति संयोगस्य कर्म्मजत्वेनानित्यत्वं दर्शयति।

विभागस्तु विभक्तिः स्याद्वियोगो भागशो ग्रहः ।
पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता ॥

पृथक्त्वमेकस्येति । यतः पृथगन्यदित्यनर्थान्तरमित्युक्तं कणादेन । तथा चैकत्वातिरिक्ता सङ्ख्यास्तु वर्त्तते सङ्ख्या । तथा च पाणिनीयसूत्रं "संख्यया-व्ययदूरासन्नाधिकसङ्ख्याः संख्येये ।" इति बहुव्रीहौ सङ्ख्येयेऽर्थे गम्येऽव्ययादयः संख्यया सह समस्यन्ते । इति । द्वौ त्रयो येषां ते द्वित्राः, षड् गावः, पञ्चषा-स्त्रिंशद्घटाः । त्रिपञ्चारे पीठे इति त्रयः पञ्च आराणि कोणाः यस्य पीठस्य तत् त्रिपञ्चारं पीठम् । पञ्चदशकोणं पीठमिति । लक्षाणां पञ्च लेभे चेत्यादयः प्रयोगा दृश्यन्ते । सहस्राणां दशैव तु । तस्मादा दशभ्यः संख्याः संख्येये ततः परं सङ्ख्याः संख्येये सङ्ख्याने चेति ममादिभिरुक्तं तदयुक्तमिति ।

अथ संयोगः । द्रव्याणां द्वन्द्वसर्व्वैककर्म्मजः सहयोगोऽव्यवधानेन मेलनं संयोग उच्यते । स चानित्य एव च । न तु गुणानां कर्म्मणां न वा गुणकर्म्मणोः कर्म्माभावात् । न च द्रव्यगुणयोर्द्रव्यकर्म्मणोर्वा तदेकस्य कर्म्मसद्भावे तद्व्यावृत्त्यर्थं द्रव्याणामिति । ततः समवायादस्य भेदः । समवायो हि द्रव्यगुणकर्म्मणां सहयोग उक्तः । द्रव्याणां द्वन्द्वस्य कर्म्मजः सर्व्वेषां संयोगाभिजातानां कर्म्मजः । एकस्य कर्म्मजः सहयोगो नैकस्य सम्भव-तीति द्विबहूनां द्रव्याणां सहयोगः । द्वन्द्वकर्म्मजो यथा—योधमानयोर्मेषयोः सहयोगः । सर्व्वकर्म्मजो यथा यन्त्रे पीड्यमानानां तिलानां सर्व्वेषां सहयोगः समकालस्तु । उत्तरकाले सहयोगस्तु संयोगजः संयोगो न प्रकृतिभूतः संयोगः । एकद्रव्यकर्म्मजो यथा—वृक्षपक्षिणोः सहयोगः । स च खल्वनित्य एव न तु नित्यः कर्म्मजत्वात् । यस्तु विदेशादागतस्य सुहृद्भिः संयोगः स नैष संयोगः व्यवधानात् परन्तु योजना नाम युक्तिगुणः । संयोगविभागयोश्च संयोग-विभागाभावः सुतरां द्रव्यत्वाभावात् ।

अथ विभागः । विभागस्तु विभक्तिर्द्रव्याणां द्वन्द्वसर्व्वैककर्म्मजोऽनित्य एव चेति योजना । तस्य पर्य्यायो वियोगो भागशो ग्रहश्च । द्रव्याणामिति

विभागमाह—विभागस्त्वित्यादि । विभक्तिर्विभजनम् । विभक्तिमेव विवृणोति—वियोग इति ; संयोगस्य विगमो वियोगः ; तत् किं संयोगाभाव एव वियोग इत्याह—भागशो ग्रह इति, भागशो विभक्तत्वेन ग्रहणं ततो भवतीति भावः, तेन विभक्तिरित्येषा भावरूपा प्रतीतिः, न संयोगाभावमात्रं स्यात्, किं तर्हि, भावरूपविभागगुणयुक्त इत्यर्थः ।

परिमाणं पुनर्मानं संस्कारः करणं मतम्।
भावाभ्यसनमभ्यासः शीलनं सततक्रिया॥

अनेन पृथक्त्वाद्भेदः। योगाद् विगमो वियोगो वियुक्तिर्भागशो ग्रह इति विभिन्नो भागः। द्वन्द्वकर्म्मजो यथा—युध्यमानयोः मेषयोरन्योन्यापसरणं वियोगः। सर्व्वकर्म्मजो यथा—पीड्यमानानां तिलानां संयोगोत्तरं वियोगः पुनर्योगः इत्येवमादिः। एककर्म्मजो यथा—वृक्षं त्यजति खग इत्यादि। इति। गुणानां कर्म्मणां गुणकर्म्मणोर्द्रव्यगुणयोर्द्रव्यकर्म्मणोश्च न विभागः स्याद् द्रव्याणामित्युक्तेः।

अथ पृथक्त्वम्। "पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता।" असंयोग इति संयोगविपरीतो द्रव्याणां विभागः, एष त्वसंयोगः सम्यग्योगाभावः संयोगसमवायविपरीतः। यथा मेषयोः संयोगात् पृथक्त्वयोर्विभागः सम्यग्योगरहितः। न हि संयोगविभागयोः सम्यग्योगोऽस्तीति पृथगुच्यते। संयोगात् पृथग् विभागः विभागात् पृथक् संयोगः। तयोश्च वैलक्षण्यं भेदः। तयोश्चानेकता च वर्त्तते। इति। त्रिविधं पार्थक्यमयोगो भेदोऽनेकत्वमिति द्रव्यगुणकर्म्मसु वर्त्तते। भेदमात्रमभिप्रेत्य कणादेनोक्तं—"पृथगन्यदित्यनर्थान्तरमिति। पृथक्त्वस्य पृथक्त्वैकत्वाभावः। यथा द्रव्यगुणकर्म्मणां मेलकः समवायेन तस्य तेषु समवायः स्वरूपेण वर्त्तनात् तथा रूपादिभ्यः पृथक् पृथक्त्वमिति पृथक्त्वे पृथक्त्वस्वरूपेण वर्त्तनाच्च पृथक्त्वस्य पृथक्त्वमिति। अनेकत्वस्वरूपादेकत्वञ्च नास्ति। द्वित्वादिनिष्ठं ह्यनेकत्वं सदैवानेकं न कदाप्येकं भवतीत्येकत्वाभावः पृथक्त्वस्य।

अथ परिमाणं—परिमाणं नाम पुनर्मानमिति। मीयतेऽनेनेति मानं पञ्च-

पृथक्त्वन्तु—इदं द्रव्यं पटलक्षणं घटात् पृथगित्याकारिका बुद्धिर्यतो भवति, तत् पृथक्त्वं स्यात्, तच्चाचार्यस्त्रैविध्येनाह—पृथक्त्वमित्यादि। तत्र यत् सर्व्वथाऽसंयुज्यमानयोरिव मेरुहिमाचलयोः पृथक्त्वम्, एतदसंयोग इत्यनेनोक्तम्; तथा संयुज्यमानानामपि पृथक्त्वं विजातीयानां महिषवराहादीनां, तदाह—वैलक्षण्यमिति, विशिष्टलक्षणयुक्तत्वेन क्वचित् विजातीयानां पृथक्त्वमित्यर्थः; तथैकजातीयानामप्यविलक्षणानां माषाणां पृथक्त्वं भवतीत्याह—अनेकतेति। एकजातीयेषु हि संयुक्तेषु न वैलक्षण्यं नाप्यसंयोगः, अथ चानेकता पृथक्त्वरूपा भवतीति भावः; किंवा पृथक्त्वं गुणान्तरमिच्छन् लोकव्यवहारार्थमसंयोगवैलक्षण्यानेकतारूपमेव।

यथोदाहृतं पृथक्त्वं दर्शयति मानं प्रस्थादकादि तुलादिमेयम्। करणं गुणान्तराधायकत्वं संस्करणमित्यर्थः, यद् वक्ष्यति—"संस्कारो हि गुणान्तराधानमुच्यते"। भावाभ्य

विधम्, महदणुह्रस्वदीर्घपरिमण्डलभेदात् । महतो विपरीतमणुः । अणुत्वमहत्त्वयोः अणुत्वमहत्त्वाभावः कर्म्मगुणैर्व्याख्यातः । कर्म्म हि द्रव्याश्रितं कर्म्मान्तरानपेक्षं संयोगविभागकारण समवायीत्युक्तम्, न तु कर्म्माश्रितं गुणाश्रितं वोक्तम् । गुणश्च द्रव्याश्रितोऽप्यगुणवानुक्तः । तेन व्याख्यातोऽणुत्वस्याणुत्वमहत्त्वाभावो महत्त्वस्याणुत्वमहत्त्वाभावः । यथा पञ्चाङ्गुलं दारु । दीर्घं महच्चतुरङ्गुलाद् दारुणः । पञ्चाङ्गुलादणु ह्रस्वञ्च चतुरङ्गुलमिति पञ्चाङ्गुलस्य दारुणो महत्त्वं दीर्घं द्विञ्यायङ्गुलस्य दारुणोऽणुत्वं ह्रस्वमिति । अणुत्वमहत्त्वयोरप्यह्रासपरिमाणमस्तीति उक्तमणुत्वमहत्त्वाभाव इति । एतेन दीर्घत्वह्रस्वत्वे व्याख्याते । यथाणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावो व्याख्यातस्तथा दीर्घत्वह्रस्वत्वयोर्दीर्घत्वह्रस्वत्वाभावो व्याख्यातः । यथा पञ्चाङ्गुलं दारु दीर्घं सच्च द्विञ्यायङ्गुलं ह्रस्वमणु चेति पञ्चाङ्गुलदारुणो दैर्घ्य महत् द्विञ्यायङ्गुलस्य दारुणो ह्रस्वत्वमणु भवतीति दीर्घत्वह्रस्वत्वयोर्दीर्घत्वह्रस्वत्वाभावः न तु महत्त्वाणुत्वाभाव इति । अत्र वात्स्यायन उवाच—भावानां स्वभावसिद्धिर्नापेक्षिकत्वात् । ह्रस्वापेक्षाकृतं दैर्घ्यं दीर्घापेक्षाकृतं ह्रस्वं न स्वेनात्मनावस्थितं किञ्चित् अपेक्षासामर्थ्यात् । तस्माञ्च स्वभावसिद्धिर्भावानामिति । व्याहतत्वादेतदयुक्तम् । यदि ह्रस्वापेक्षाकृतं दीर्घं किमिदानीमपेक्ष्य ह्रस्वमिति गृह्यते ? अथ दीर्घापेक्षाकृतं ह्रस्वं दीर्घं तर्हि चानापेक्षिकम् । एवमितरेतराश्रययोरेकाभावेऽन्यतराभावादुभयाभाव इति अपेक्षाव्यवस्थाऽनुपपन्ना । स्वभावसिद्धावसत्यां समयोः परिमण्डलयोर्द्रव्ययोः आपेक्षिके दीर्घत्वह्रस्वत्वे कस्मान्न भवतः ? अपेक्षायामनपेक्षायाञ्च द्रव्ययोः अभेदः । यावती द्रव्येऽपेक्ष्यमाणे तावती द्रव्ये एवानपेक्ष्यमाणे नान्यतरत्र भेदः । आपेक्षिकत्वे तु सति अन्यतरत्र तु विशेषोपजनः स्यादिति । किम् अपेक्षासामर्थ्यमिति चेत् ? द्वयोर्ग्रहणेऽतिशयग्रहणोपपत्तिः । द्वे द्रव्ये पश्यन्नेकत्र विद्यमानमतिशयं गृह्णाति तद्दीर्घमिति व्यवस्यति । यच्च हीनं गृह्णाति तद् ह्रस्वमिति व्यवस्यति । एवञ्चापेक्षासामर्थ्यमिति । एवमणुत्वमहत्त्वयोरपि बोध्यम् । इति । कणाद उवाच—अनित्येऽनित्यं नित्ये नित्यम् । नित्यं परिमण्डलमिति । अणुत्वमहत्त्वदीर्घह्रस्वमनित्ये वस्तुन्यनित्यं नित्ये नित्यं नित्यं परिमण्डलं नित्यं पूर्व्वतोऽनुवृत्तत्वात् । परिमण्डलमाकाशं

वधिकालेर्व्याघामादेश्चाभ्यसनमभ्यासः, अभ्यसनमेव लोकसिद्धाभ्यां पर्य्यायाभ्यां विवृणोति—शीलनं सततक्रियेति, यं लोकाः शीलनसततक्रियाभ्यामभिदधति, सोऽभ्यास इति भावः ;

इति स्वलक्षणैरुक्ता गुणाः सर्व्वे परादयः।
चिकित्सा यैरविदितैर्न यथावत् प्रवर्त्तते ॥ २६ ॥

सर्व्वतोमण्डलं तच्चाकाशनित्यत्वान्नित्यम्। तथा परिमण्डलं सर्षपं तत्रानित्यं पारिमाण्डल्यम्। न च परिमण्डलं महत्त्वाणुत्वविशेषः। परि सर्व्वतो मण्डलं परिमण्डलम्। सर्व्वतो वर्त्तुले द्रव्ये गगने महत् सर्षपे त्वणु। तस्मात् परिमण्डले परिमण्डलाभाव इति न त्वणुमहद्दीर्घह्रस्वत्वाभाव इति। अथ तर्हि वंशीसर्षपयवरक्तिमाषकशाणकोलकर्षशुक्तिपलप्रसृतकुडवादि-परिमाणं किं न परिमाणमिति चेत्? सत्यम्। तत् परिमाणं हि गुरुत्वनिबन्धनं तुल्यक्रिययानुमेयं गुरुत्वमेव सर्षपादिसंज्ञं परिमाणम्। न त्वेतत् प्रकृतिभूतं परिमाणम्। सर्षपादिकाणुमहत्परिमाणनिबन्धनत्वाद् गुरुत्वस्यैव परिमाण-संज्ञा बोध्येति।

अथ संस्कारः। संस्कारः करणं मत इति। वक्ष्यते च रसविमाने—करणं पुनः स्वाभाविकानां द्रव्याणामभिसंस्कारः। संस्कारो हि गुणाधान-मुच्यते। ते गुणास्तोयाग्निसन्निकर्षशौचमन्थनदेशकालवशेन भावनादिभिः कालप्रकर्षभाजनादिभिश्चाधीयन्ते। इति व्याख्यास्यते चैतद्विस्तरेण तत्रैवेति।

अथाभ्यासः। भावाभ्यसनमभ्यासः शीलनं सततक्रियेति। भावाना-मभ्यसनमभ्यास आवृत्तिः। शीलनं पुनःपुनरनुष्ठानं सततकरणं क्रियासातत्यम्। येन देहमनोभ्यामेकीभूयाहाराचारविशेषफलं चिरमवतिष्ठते सोऽभ्यासः। यथा यदभ्यवहृतं, प्रतिदिनमन्नमभ्यस्तं देहेन सहैकीभूतं तत्फलं चिरमवतिष्ठते। यथा च श्लोकादिकं सततमुच्चारितं वाचा मनसा सहैकीभूतस्तद्वर्णात्मकध्वनिश्चिरमवतिष्ठते इति तत् पुनरुच्चार्य्यते स्मृत्वेति। तत् संस्कारहेतुरभ्यास इति। यत आहाराभ्यासेन शरीरं संस्कृतं भवति, शास्त्रा-ध्ययनेन मनः संस्कृतं भवति बुद्धिश्च संस्कृता सती निर्म्मला भवतीति।

इतीत्यादि। इति परादयः सर्व्वेऽभ्यासान्ता दश गुणाः स्वलक्षणैरुक्ता यैर्दशभिर्गुणैरविदितैर्यथावत् चिकित्सा वैद्यानां प्रवर्त्तते। इत्येतैः विदितैरेव गुणैर्वैद्यानां चिकित्सा यथावत् प्रवर्त्तते। ननु व्यवायिविकाशिनौ द्वौ गुणौ नोक्ताविहेति चेत्? न। तीक्ष्णगुणविशेषत्वात् तयोस्तीक्ष्णेऽन्त-

अपरञ्च संयोगसंस्कारविशेषरूपोऽपि विशेषेण चिकित्सोपयुक्तत्वात् पृथगुच्यते। न यथावत् प्रवर्त्तेत इति। वचनेन अभ्यासेषु च गुर्व्वादिषु च परादीनामप्राधान्यं सूचयति ॥ २६ ॥

गुणा गुणाश्रया नोक्तास्तस्माद् रसगुणान् भिषक् ।
विद्याद् द्रव्यगुणान् कर्त्तुरभिप्रायाः पृथग्विधाः ॥

भावात् । ननु च कणादेन सप्त गुणाः परत्वादयः पठिताः, न तु युक्तिसंस्काराभ्यासास्त्रयः इति चेत् ? सत्यम् । परत्वादयः सप्त गुणाः प्रकृतिगुणा न तु कार्य्यगुणाः सर्व्वत्रैव द्रव्यगुणकर्म्मसु वर्त्तन्ते इत्यभिप्रायेण प्रकृतिगुणपाठे पठित्वोक्तम्—"पृथिव्या गन्धः, अपां रसः, तेजसो रूपम् । एतेन गुर्व्वादयो द्रवादय उष्णादयश्च व्याख्याताः" कारणगुणपूर्व्वकाः पृथिव्यादौ पाकजाः । पृथिव्यादिषु रूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याः । एतेन नित्येषु नित्या उक्ताः । "सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि" । "अरूपिष्वचाक्षुषाणि" संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः । गुणो विभाव्यते गुणेनापि । इति परत्वादिसप्तगुणेनापि प्रकृतिगुणः कार्य्यगुणोऽपि विभाव्यते । न तु पाकजगुणेन गुरुत्वादिना गुणो विभाव्यते । इति गुरुत्वादयः संस्काराभ्यासयुक्तयश्च कार्य्यगुणास्तस्मात् कणादेन नोक्ता गुणपाठे । इति ॥ ३६ ॥

गङ्गाधरः—अथ द्रव्यभेदानुक्त्वा रसान् वक्तुं यथा वक्तव्यास्तं प्रकारमाह—गुणा इत्यादि । गुणा इति प्रकरणादिह पार्थिवादीनां द्रव्याणां कार्य्यभूतानां कार्य्यगुणा गुरुत्वादयो "यत्राश्रिताः कर्म्मगुणाः कारणं समवायि यत् । तद्द्रव्यम्" इत्यनेन द्रव्याश्रिता एवोक्ताः । न तु कार्य्यगुणाश्रया उक्ताः । तस्मात् कार्य्यगुणगुरुत्वाद्याश्रयत्वेनोपदेक्ष्यमाणानां रसानां मधुरादीनां गुणान् गुरुत्वादीन्

चक्रपाणिः—सम्प्रति रसानां परस्परसंयोगो गुण उक्तः, तथा चाऽग्रे स्निग्धत्वादिगुणो वाच्यः, स च गुणरूपरसे न सम्भवतीति यथा रसानां गुणनिर्द्देशो बोद्धव्यः, तदाह—गुणा इत्यादि । गुणा गुणाश्रया नोक्ता इति । वैशेषिके "समवायी तु निश्चेष्टः कारणं गुणः" इत्यनेन, रसगुणानिति रसे स्निग्धत्वादीन् गुणान् निर्द्दिष्टान् तद् रसाधारद्रव्यगुणानेव विद्यात् । ननु, यदि द्रव्यगुणा एव ते, तत् किमिति रसगुणत्वेनोच्यन्त इत्याह—कर्त्तुरिति तन्त्रकर्त्तुः, अभिप्राया इति । तत्र तन्त्रोपचारेण तथा सामान्यशब्दादिप्रयोगेण तन्त्रकरणबुद्धयः, सामान्यशब्दोपचारादिप्रयोगश्च प्रकरणाद्विवक्षातेव स्फुटत्वात् तथा प्रयोजनवशाच्च क्रियते ; तच्च प्रकरणादि, "असद्य प्रकृतं बुधाः" इत्यादौ दर्शयिष्यामः ; इह च द्रव्यगुणानां रसेषु यदुपचरणं, तस्यायमभिप्रायः—यत्—मधुरादिनिर्द्देशेनैव स्निग्धत्वादिगुणा अपि प्रायो मधुराद्यव्यभिचारिणो द्रव्ये निर्द्दिष्टा भवन्तीति न मधुरत्वं निर्द्दिश्य स्निग्धत्वादिप्रतिपादनं पुनः पृथक् क्रियत इति ।

अतश्च प्रकृतिं* बुद्ध्वा देशकालान्तराणि च।
तन्त्रकर्तुरभिप्रायानुपायांश्चार्थमादिशेत्॥ ३७॥
षड् विभक्तीः प्रवक्ष्यामि रसानामत उत्तरम्।
षट् पञ्चभूतप्रभवाः संख्याताश्च यथा रसाः॥ ३८॥

कार्य्यगुणान् तद्रसाश्रयद्रव्यगुणान् विद्यात्। ननु किमर्थमेवमुपदेक्ष्यन्ति रसांस्तत्तद्द्रव्याणां तांस्तान् गुणान् रसांश्च तांस्तान् पृथक् पृथगेवोपदेष्टुं नेच्छेदिति? अत उच्यते—कर्त्तुरभिप्रायाः पृथग्विधाः। इति। यो यत्तन्त्रस्य कर्त्ता तस्य तस्याभिप्रायाः पृथक्पृथक्प्रकारा भवन्ति न त्वेकप्रकाराः। यो हि यथाकरणे तन्त्रस्य सुरचनां बुध्येत स तथा रचनां करोति। तस्मात् तन्त्रस्य प्रकृतिं प्रथममुपक्रमे या प्रकृतिर्भवति तां प्रकृतिं प्रकरणं यद्देशान्तरे यत् कालान्तरे तत्तन्त्रोपदेशस्तद्देशान्तरं कालान्तरञ्च बुद्ध्वा ततस्तत्तन्त्रकर्त्तुरभिप्रायानुपायांश्च तन्त्रयुक्तीः बुद्ध्वा तन्त्रस्यार्थं व्याख्याता बुध आदिशेत्। इति। तस्मादस्य तन्त्रस्य कर्त्तुरेवमेवाभिप्रायो बोध्यः। रसगुणोपदेशेन द्रव्यगुणा उपदेक्ष्यन्ते। इति। तथैव चोपदेक्ष्यमाणे रसे प्रतिज्ञाते प्राक् तच्चैव कारणमवेक्षमाणाः षण्णां रसानां परस्परेणासंसृष्टानां लक्षणं पृथक्त्वमुपदेक्ष्याम इति॥ ३७॥

गङ्गाधरः—तदुपदेष्टुमाह—षडित्यादि। रसानां विभक्तीर्विभागान् षट् प्रवक्ष्यामि। यथा च पञ्चभूतप्रभवाः षट् रसाः सङ्ख्याताः तत्प्रकारांश्च प्रवक्ष्यामि। इति॥ ३८॥

अभिप्रायपृथक्त्वे सति यथा ग्रन्थो बोद्धव्यस्तदाह—अतश्चेत्यादि। तत्र प्रकृतं बुद्ध्वा यथा—"आराः क्षीरं फलं पुष्पम्" इत्यत्र उद्भिद्गणस्य प्रकृतत्वात् 'क्षीरम्' इति स्नुह्यादिक्षीरमेव क्षीरशब्देन ग्रहीतव्यम्; देशान्तरं बुद्ध्वेति यथा—शिरसि बोध्येऽभिधीयमाने "क्रिमिव्याधौ" इति, तत् शिरोगतक्रिमिव्याधावेव भवति; कालान्तरे यथा—वमनकालेऽभिहितं "प्रतिग्रहांश्चोपहारयेत्" इति, तत्र प्रतिग्रहशब्देन पात्रमुच्यते, न तु ग्रहणं प्रतिग्रहः; तन्त्रकर्त्तुरभिप्रायानिति यथोक्तं रसेषु गुणारोपणे तद्बोद्धव्यम्; उपायानिति शास्त्रोपायान् तन्त्रयुक्तिरूपान् इति; अर्थमभिधेयम्; यद्यपि प्रकृतादयोऽपि तन्त्रकर्त्तुरभिप्राया एव, तथापि यत्र प्रकृतत्वादि न स्फुटं प्रतीयते, तत्र तन्त्रकर्त्तुरभिप्रायत्वेन बोद्धव्यम्॥ ३७॥

चक्रपाणिः—षड् विभक्तीरिति। मधुरादिषड् विभागानित्यर्थः; षट् पञ्चभूतप्रभवा इति

---

* प्रकृतमिति चक्रः।

सौम्याः खल्वापोऽन्तरीक्षप्रभवाः प्रकृतिशीता लघ्व्यश्च अव्यक्तरसास्त्वन्तरीक्षाद् भ्रश्यमानाः। भ्रष्टाश्च पञ्चमहाभूतविकारगुणसमन्वितजङ्गमस्थावराणां भूतानां मूर्त्तीरभिप्रीणयन्ति। तासु च मूर्त्तिषु षड़भिमूर्च्छन्ति रसाः। तेषां षण्णां रसानां सोमगुणातिरेकान्मधुरो रसः। भूम्यग्नि-

गङ्गाधरः—तद्यथा पञ्चभूतप्रभवत्वमादावाह—सौम्या इत्यादि। सोमश्चन्द्रमास्तस्येमा इति सौम्याः। आपः खल्वन्तरीक्षप्रभवा आकाशादाद्यप्रकाशाः प्रकृत्या स्वभावेन शीताः। लघ्व्यश्च प्रकृत्यैव गुरुत्वनिबन्धनतौलव्यवहारे यतो यतो यद् यद्गुरु ततस्ततस्तत्तद् यल्लघु भवति तौलव्यवहारे तथाविधा लघ्व्योऽन्त्या अपकृष्टगुरुत्ववत्यः। न तु वायुतेजोवल्लघ्व्य इति। एतदभिप्रायेण केचिज्जले गुरुत्वम् आहुः। अव्यक्तरसाः षण्णां रसानां साम्येन मेलनाद् यथाभूतो रसः स्यात् तथाभूताव्यक्तरसाः। ईदृशाः सौम्या आपोऽन्तरीक्षात् सोममण्डलात् प्रच्युता आकाशाद् भ्रश्यमानास्ततः क्रमेण भ्रष्टा भूमावपतन्त्य एवान्तरीक्षे स्थिताः पञ्चमहाभूतगुणविकारगुणसमन्विताः। तत्काले पञ्चमहाभूतानां विकारभूता एतदाकाशपवनार्कचन्द्रास्तथा सततमाकाशे समुड्डीयमाना भौमाश्चत्रसरेणवस्तेषां गुणगुरुत्वादिसमन्विताः सत्यस्तद्योगानां सेन्द्रियाणां प्राणिनां मनुष्यादीनां स्थावराणाञ्च वृक्षादीनां मूर्त्तीरभिप्रीणयन्ति। तासु च जङ्गमस्थावराणां मूर्त्तिषु ताभिरद्भिः प्रीयमाणासु ताभ्य एवाद्भ्यः षड्रसा अभिमूर्च्छन्ति व्यक्तीभावमापद्यन्ते। कथमिति? अत उच्यते—तेषामित्यादि। तेषां षण्णां रसानां मध्ये मधुरो रसः सोमभूतगुणातिरेकात् पञ्चमहाभूतगुणसमवाये सौम्योदकप्रीणने सति जलभूम्योः

पञ्चभूतप्रभवाः सन्तो यथोक्तेन प्रकारेण "सोमगुणातिरेकाद्" इत्यादिना संख्याताः षट्संख्यापरिच्छिन्ना भवन्ति, तथा वक्ष्यामीति योजना॥ ३८॥

चक्रपाणिः—सम्प्रति रसानामादिकारणमेव तावदाह—सौम्या इत्यादि। सौम्याः सोमदेवताकाः; भ्रश्यमाना इति वदता भूमिसम्बन्धव्यतिरेकेणान्तरीक्षेऽपि तैः पृथिव्यादिभिः परमाण्वादिभिः सम्बन्धो रसारम्भको भवतीति दर्श्यते; मूर्त्तीरिति व्यक्तीः, अभिप्रीणयन्तीति तर्पयन्ति, किंवा जनयन्ति; अभिमूर्च्छन्ति रसा इति व्यक्तिं यान्ति; अत्र चान्तरीक्षमुदकं रसकारणत्वे प्रधानत्वादुक्तम्, तेन क्षितिस्थमपि स्थावरजङ्गमोत्पत्तौ रसकारणं भवत्येव।

सोमगुणातिरेकादिति अतिरेकशब्देन सर्व्वेष्वेव रसेषु सर्व्वभूतस्य सान्निध्यमस्ति,

भूयिष्ठत्वादम्लः । तोयाग्निभूयिष्ठत्वाल्लवणः । वाय्वग्नि-

सौम्यपयोगुणाधिक्यादुदकभूमिस्थाद्रसाद्विक्रियमाणादभिव्यज्यते । प्राक्चाभिहितं—"रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा" इति जलभूम्यो रसानां योनित्वेनोक्त्या तयोर्द्वयोराधिक्ये शेषाणां त्रयाणां योगे मधुर एवाभिव्यज्यते । सुश्रुते चोक्तं—पृथिव्यम्बुगुणबाहुल्यान्मधुर इति । भूम्यग्निभूयिष्ठत्वादम्ल इति । या मूर्त्तिर्भूम्यग्निबहुलपञ्चभूतारभ्यमाणा सौम्योदकप्रीयमाणा भवति तत्र भूमिस्थानामपामेवाधिक्यादुदकस्य भूतस्याल्पत्वाच्छेषभूतयोगात् तदल्पोदकाधिकभूम्या रसाद्विक्रियमाणादम्लो रसो नाम विशेषोऽभिनिर्व्वर्त्तते । इति । सुश्रुते तु—तोयाग्निगुणबाहुल्यादम्ल इत्युक्तम् । तत्र तोयं भूम्यनुप्रविष्टमभिप्रेतं न तु तोयाख्यं भूतम् । अथवा रसस्योदकं योनिरित्यभिप्रेत्य सर्व्वत्रोदकं भूतं ग्राह्यमिति । भूम्यम्बुनोर्भूतयोर्यत्तोयगुणो रसोऽव्यक्तस्तस्याग्निगुणयोगेनाम्लीभावात् । न्यूनांशेन स्वादियोगाद्विशेषोऽम्लो रसोऽभिव्यज्यते । इति न विरोधः । तोयाग्निगुणभूयिष्ठत्वाल्लवण इति । तोयभूतं तेजोभूतञ्च यत्र बहुलं शेषास्त्रयो न्यूनास्तत्र मूर्त्तौ सौम्योदकप्रीयमाणायां पाञ्चभौतिक्यां तोयगुणोऽव्यक्तोऽधिकस्तथाग्निगुणोऽधिकः शेषाणामल्पो गुण इति तोयगुणोऽव्यक्तरसोऽग्निगुणाधिकयोगात् लवणभावमापद्यमानोऽभिव्यज्यते । सुश्रुते तु पृथिव्यग्निगुणबाहुल्याल्लवण इत्युक्तम् । तत्रापि रसस्य योनिरुदकम् । तस्यापि भूम्यनुप्रविष्टस्य गुणो योऽव्यक्तो रसः स एवारम्भकाणां शेषाणामम्बाय्वाकाशानां न्यूनत्वेनाग्निगुणस्याधिक्येन विक्रियमाणो लवणत्वेनाभिव्यज्यते । इति न विरोधः । तथा

क्वचित् कस्यचिद् भूतगुणस्यातिरेकात् रसविशेषो भवतीति दर्शयति, एतच्च मधुरं प्रति अप्गुणातिरिक्तत्वं विशेषोत्पत्तौ कारणत्वेन ज्ञेयम् ; यत्त्वाधारकारणत्वमपां, तत् सर्व्वसाधारणम् ; एवं लवणेऽप्यपां कारणत्वं ज्ञेयम् ; लवणस्तु सुश्रुते पृथिव्यतिरेकात् पठितः, अस्मिंश्च विरोधे कार्य्यविरोधो नास्त्येव । ननु, उष्णशीताभ्यामग्निसलिलाभ्यां कृतस्य लवणस्याप्युष्णशीतत्वेन भवितव्यम्, तल्लवणं कथमुष्णं स्यात् ? नैवम् ; यतः भूतानामयं स्वभावः—यत् केनचित् प्रकारेण सन्निविष्टानि कञ्चिद् गुणमारभन्ते, न सर्व्वम् ; यथा—मुकुष्टकेऽग्निर्मधुरो रसः क्रियते, न स्नेहः ; यथा सैन्धवे वह्निनापि नोष्णत्वमारभ्यते ; अयञ्च भूतानां सन्निवेशोऽदृष्टप्रभावकृत एव, स च सन्निवेशः कार्य्यदर्शनोन्नेयः ; तेन यत्र कार्य्यं दृश्यते, तत्र कल्प्यते, यथा—लवणे [illegible] अनुमीयते ; आगमैकसमधिगम्यमर्थं नास्मद्विधानां कल्पना प्रसरन्ति । एतेन यदुच्यते—तोयवत् पृथिव्यादयोऽपि किमिति पृथग् रसान्तरं न कुर्व्वन्ति, तथा

भूयिष्ठत्वात् कटुकः । वाय्वाकाशातिरिक्तत्वात् तिक्तकः ।

चाम्ले द्रव्येऽग्निगुणबाहुल्ये जलभूम्योः साम्येनोभयरसादम्लः । लवणे द्रव्येऽप्यग्निगुणबाहुल्ये भूमितनोयभूतगुणरसबाहुल्यादुदकरसस्याल्पत्वे लवणः स्यादिति भेदः । अत एवापामल्पत्वाद्रुक्ष्यते । उष्णानामुष्णत्वाल्लवणः परो मध्योऽम्लः कटुकश्चान्त्य इति । अम्लो द्विशोदकस्याधिक्यादग्निगुणस्य तत्-समत्वान्मध्योष्ण इति । वाय्वग्निभूयिष्ठत्वात् कटुक इति । रसस्य योनि-रुदकं तस्मात् भूम्याकाशन्यूनोदकमध्यवाय्वग्निगुणबाहुल्यादुदकभूमिगतरसः सौम्योदकप्रीयमाणो विक्रियमाणोऽल्पोष्णवीर्यत्वेन कटुक उत्पद्यते । सुश्रुते-ऽप्येवमुक्तम् । वाय्वाकाशातिरिक्तत्वात् तिक्तक इति । रसस्य योनिरुदकम् इत्युक्तम् । तस्मात् यस्यां पाञ्चभौतिक्यां मूर्त्तौ तदारम्भकाणां पञ्चानां भूतानां द्वे तेजोभूमी न्यूने उदकं मध्यमं वाय्वाकाशौ बहुलौ तस्यां जायमानायां सौम्योदकप्रीयमाण उदकस्याव्यक्तो रसो विक्रियमाणोऽभिव्यज्यते तिक्तक एव । सुश्रुतेऽप्येवमुक्तम् । पवनपृथिव्यतिरेकात् कषाय इति । अत्रापि रसस्य योनिरुदकमिति । यस्यां मूर्त्तौ पञ्चभिर्भूतैरारभ्यमाणायां सौम्यो-दकप्रीयमाणायाम् आकाशतेजसी न्यूने मध्यममुदकं पवनपृथिव्यावतिरिक्ते तस्यां जायमानायां तदुदकभूमिगतो रसो विक्रियमाणोऽभिव्यज्यते कषाय एव । सुश्रुतेऽप्येवमुक्तमिति । एतेन वाय्वे तोयाग्नियोगाल्लोष्ट्राग्नियोगाच्चाम्ल-लवणभावोपपत्तिर्न रसा आरम्भाभावात् सौम्योदकप्रीणनाभावाच्च ।

अथैवमन्तरीक्षप्रभवसौम्योदकस्य रसाभिव्यक्तौ यद् हेतुत्वमुक्तं तत्र गर्भे बालकशरीरस्य रसोत्पत्तौ । तत्र मातुराहारगतमुदकं कारणम् । अनयैव रीत्या व्याख्येयम् । विषादिष्वव्यक्तरसाभिनिर्वृत्तौ तथाणुरसाभिव्यक्तौ चैतया रीत्या भूतानां न्यूनाधिकतया संयोगे तदुदकस्य रसो हेतुरुन्नेयः । यथा प्राधान्येनाम्ले पक्वे मधुरो जायते सोमगुणातिरेकात् तथाम्लोऽपि न्यूनांश-भूम्यग्निगुणबाहुल्यादल्पो जायत इति । समानरूपेण षट्सु रसेषु जायमानेषु मेलनात् विषादावव्यक्तरूपेण वर्त्तन्ते षड् रसा न तु षड्भ्योऽतिरिक्त उक्तः । अव्यक्तीभावस्तु खलु रसानां प्रकृतौ भवति । अणुरसेऽणुरससमन्विते वा द्रव्ये इति । यत्र सोमगुणातिरेकान्मधुरो जायते तत्र चेन्न्यूनत्वेन भूम्यग्निगुणबाहुल्यं

सौवर्चलादिसंयोगादिभ्यः किमिति रसान्तराणि नोत्पद्यन्त इति, तदपि भूतस्वभावापर्य्यनु-योगादेव प्रत्युक्तम् ; इह च कारणत्वं भूतानां रसस्य मधुरत्वादिविशेष एव निमित्तकारणत्वम्

**पवनपृथिव्यतिरेकात् कषायः। एवमेषां षण्णां रसानां षट्त्वमुपपन्नं न्यूनातिरेकविशेषान्महाभूतानाम्। भूतानामिव स्थावरजङ्गमानां नानावर्णाकृतिविशेषः। षडृतुकत्वाच्च कालस्योपपन्नो महाभूतानां न्यूनातिरेकविशेषः॥ ३९॥**

वर्त्तते तदाम्लश्च जायते। यदि तोयाग्निगुणबाहुल्यमवराणां वर्त्तते तत्र लवणश्च जायते। तत्र चेद्वाय्वग्निगुणबाहुल्यं वर्त्तते तदाणुकटुको जायते। इत्येवं त्रिषष्टिधा रसः सम्पद्यते। इति। तदाह—एवमेषामित्यादि। एवमुक्तरूपेण महाभूतानामारम्भकाणां न्यूनातिरेकविशेषात् प्राधान्यमध्यमन्यूनादिविशेषात् षण्णां रसानां प्रधानाप्रधानानां षट्त्वमेवोपपन्नं भवति। तत्र दृष्टान्तः—भूतानामिवेत्यादि। यथा स्थावरजङ्गमानां भूतानां प्राणिनां महाभूतानां न्यूनातिरेकविशेषान्नानावर्णाकृतिविशेषो जायते तद्वत्। कुत एवं भूतानां न्यूनातिरेकविशेषः स्यादिति? अत उच्यते—षडृतुकत्वादित्यादि। कालस्य षडृतुकत्वात् तु महाभूतानां तत्र तत्र रसोत्पत्तौ न्यूनातिरेकविशेषः स्यात्। हेमन्तः सौम्यः शिशिरश्च सौम्यः। सौम्याग्नेयो वसन्तः। आग्नेयो ग्रीष्मः। वर्षाश्च सौम्याग्नेयवायव्याः। शरत् सौम्याग्नेयी। इति। तेषां विशेषश्च वाय्वर्कसोमेभ्यो भवति। तेषां बलाबले हेतुश्चक्रवद्भ्रमणस्वभावः काल इति प्रागुक्तं तस्याशितीये—तावेतावर्कवायू सोमश्च कालस्वभावमार्गपरिगृहीताः कालर्त्तुरसदोषदेहबलनिर्वृत्तिप्रत्ययभूताः समुपदिश्यन्ते। इति॥ ३९॥

उच्यते, तेन मधुरादीनामपि हि द्रव्याणां कारणत्वमुपपन्नमेव स्युःपादितम्। रसभेदं दृष्टान्तेन साधयन्नाह—एवमित्यादि। रसानां षट्त्वं महाभूतानां न्यूनातिरेकविशेषात् सोमगुणातिरेकपृथिव्यम्ब्वतिरेकादेः षट्त्वात् कारणादुपपन्नम्, षड्भ्यः कारणेभ्यः षट् कार्याणि स्युरिति युक्तमेवेति भावः। भूतानामित्यादि। भूतानां यथा नानाकृतिवर्णविशेषो महाभूतानां न्यूनातिरेकविशेषात् तथा रसानामपीति। भूतानां यथोक्तानामतिरेकविशेषहेतुमाह—षडृतुकत्वात् इत्यादि। षडृतुकत्वेन कालो नाना हेमन्तादिरूपतया किञ्चिद् भूतविशेषं कञ्चिद् वर्द्धयति, स तदात्मकार्यं रसं पुष्टं करोति, यथा—हेमन्तकाले सोमगुणातिरेको भवति, शिशिरे वाय्वाकाशातिरेकः, एवं तस्याशितीयोक्तरसोत्पादक्रमेण वसन्तादावपि भूतोत्कर्षो ज्ञेयः, षडृतुकत्वेति चकारेणाहोरात्रकृतोऽपि भूतोत्कर्षो ज्ञेयस्तथाऽप्यनुकृतश्च, तेन हेमन्तादावपि रसान्तरोत्पादः कश्चिद् वस्त्वन्तरोपपन्नो भवति, यत्रापि च ऋतुभेदेऽपि भूतोत्कर्षविशेष एव कारणं, यदुक्तम्—"तावेतावर्क-

तत्राग्निमारुतात्मका रसाः प्रायेणोर्द्ध्वभाजः । लाघवात् प्लवनत्वाच्च वायोरूर्द्ध्वज्वलनत्वाच्चाग्नेः । सलिलपृथिव्यात्मकास्तु प्रायेणाधोभागभाजः पृथिव्या गुरुत्वान्निम्नगत्वाच्च उदकस्य । व्यामिश्रात्मकाः पुनरुभयतोभागभाजः ॥४०॥

गङ्गाधरः—एवं रसवतां द्रव्याणां पाञ्चभौतिकानां मध्ये यत्र द्रव्य वर्त्तन्तेऽग्निमारुतात्मका रसाः कटुकाः प्रायेणोर्द्ध्वभाजः, कस्मात् ? वायोर्लाघवात् प्लवनत्वाच्च । प्लवनं य उपरि उद्गच्छति स प्लवनस्तत्त्वात्, अग्नेश्चोर्द्ध्वज्वलनत्वाच्च । प्रायेणेत्युक्त्या क्वचिद्द्रव्ये ऊर्द्ध्वभाजो न भवन्ति । सलिलेत्यादि । ये च सलिलपृथिव्यात्मका मधुरा रसास्ते तु प्रायेणाधोभाजो विरेचकाः कस्मात् ? पृथिव्या गुरुत्वादुदकस्य निम्नगत्वाच्च । प्रायेणेत्युक्त्या क्वचिन्नाधोभाजः । व्यामिश्रात्मकाः पुनरम्ललवणा भूम्यग्निभूयिष्ठतोयाग्निभूयिष्ठाः. तिक्तकषाया वाय्वाकाशभूयिष्ठवायुपृथिवीभूयिष्ठा उभयभागभाज ऊर्द्ध्वभागाधोभागभाजः । एतेन वायोः कर्म्म प्लवनं तेजस ऊर्द्ध्वज्वलनमपां निम्नगमनं पृथिव्याः शनैर्गमनमिति ख्यापितम् । ननु यथा सोमगुणातिरेकान्मधुरः भूम्यग्निगुणबाहुल्यादम्ल इत्येवमादयः षड्रसा द्विद्विभूतगुणाधिक्यात् तथान्येऽपि द्विद्विभूतगुणाधिक्यात् सम्भवन्ति रसाः । तद्यथा—भूम्यम्बुगुणबाहुल्यादेकः । वाय्वम्बुगुणबाहुल्यादेकः । तोयाकाशबाहुल्यादेकः । वह्न्याकाशबाहुल्यादेकः । भूम्याकाशबाहुल्यादेकः । भूमिवायुबाहुल्यादेकः । इत्येवं रसाः षड्भ्योऽधिकाः कथं न भवन्ति ? अत्रोच्यते भावस्वभावनित्यत्वान्मधुरादयः षडेव रसास्तथाभूतद्विद्विभूतगुणाधिक्याद्भवन्ति । न त्वन्यथा द्विद्वित्रित्रिचतुश्चतुर्भूतगुणाधिक्ये । इति ॥ ४० ॥

वायू इत्यादि, तथापि बीजाङ्कुरकार्य्यकारणभाववत् संसारानादित्वेनैव भूतविशेषरसयोः कार्य्यकारणभावो वाच्यः ॥ ३९ ॥

चक्रपाणिः—भूतविशेषकृतं रसानां धर्म्मान्तरमाह—तत्रेत्यादि । प्रायेणेति न सर्व्वे, रसा इति रसयुक्तानि द्रव्याणि ; प्लवनत्वादिति गतिमत्त्वात्, यद्यपि गतिरधोऽपि स्यात्, तथापि लघुत्वपरिणतिरिह वायोरूर्द्ध्वमेव गमनं करोति, यथा—शाल्मलीतूलानाम् । हेत्वन्तरमाह— ऊर्द्ध्वज्वलनत्वाच्चाग्नेरिति, अग्नेरप्यूर्द्ध्वं गतिस्वाभाविकीत्यर्थः ; निम्नगत्वमधोगमनमेव ॥ ४० ॥

तेषां षण्णां रसानामेकैकस्य यथाद्रव्यं गुणकर्म्माण्यनुव्याख्यास्यामः । तत्र मधुरो रसः शरीरसात्म्याद्रसरुधिरमांसमेदोऽस्थिमज्जौजःशुक्राभिवर्द्धन आयुष्यः षडिन्द्रियप्रसादनो बलवर्णकरः पित्तविषमारुतघ्नस्तृष्णाप्रशमनः त्वच्यः कण्ठ्यो केश्यः प्रीणनः जीवनस्तर्पणो बृंहणः स्थैर्य्यकरः क्षीणक्षतसन्धानकरो घ्राणमुखकण्ठोष्ठजिह्वाप्रह्लादनो दाहमूर्च्छा-

गङ्गाधरः—इत्येवं भौतिकभावेन रसानामूर्द्धाध उभयभागगमनकर्म्माण्युक्त्वा यथाद्रव्यं यस्य रसस्याश्रयो यद्द्रव्यं तद्द्रव्यस्य गुणकर्म्माण्यभिप्रेत्य षण्णां रसानामेकैकस्य रसस्य गुणकर्म्माण्यनुव्याख्यास्यामः इति प्रतिजानीते—तेषां षण्णामित्यादि । रसानामेकैकस्य गुणकर्म्माणि खलु तद्रसाश्रयद्रव्यस्य गुणकर्म्माणि ।

तत्रेत्यादि । तेषु षट्सु रसेषु मध्ये मधुरो रसः श्रेष्ठत्वादादौ कर्म्मत उच्यते । शरीरसात्म्यात् शरीररसस्य समानतया शरीरेण सहात्मीभावस्वभावाद्रसादिसप्तधात्वोजसां वर्द्धनः । येन रसेन द्रव्यमेतानि वर्द्धयति स रसो रसादिवर्द्धनः । आयुष्यः प्रभावात् । षडिन्द्रियप्रसादनः । मनस इन्द्रियत्वेनाप्रतिषेधादनुमतत्वादिह षडिन्द्रियेत्युक्तम् । बलवर्णकरः । पित्तविषमारुतघ्नः । तृष्णाप्रशमनः । प्रीणयतीति प्रीणनः प्राणकरः । जीवन इति जीवयतीत्यायुष्यत्वोक्त्या न पुनरुक्तम् । इह हि मूर्च्छाद्यभिभूतानां सद्यो जीवनरक्षणं जीवनमायुष्यत्वं कालप्रकर्षेणायुषो हितत्वम् । तर्पणस्तृप्तिकरः । क्षीणस्य क्षतस्य च सन्धानं करोति भग्नसंयोगं करोति । घ्राणादीनां प्रह्लादनः । दाहमूर्च्छाप्रशमन । षट्पदादीनामिष्टतमः इति (यदुक्तं तन्मूत्रशरीररसपरीक्षार्थम्)

चक्रपाणिः—यथाद्रव्यमिति । यद् यस्य रसस्य द्रव्यमाधारस्तदनतिक्रमेण, एतेन रसानां गुणकर्म्माणि रसाधारद्रव्ये बोद्धव्ये इति दर्शयति । तत्रेत्यादिना मधुर आदावुच्यते प्रशस्तायुष्यादिगुणतया प्रायः प्राणिप्रियतया च ; षडिन्द्रियाणि मनसा समम्, जीवनोऽभिघातादिमूर्च्छितस्य जीवनः ; आयुष्यस्त्वायुःप्रकर्षकारित्वेन, क्षीणस्य सन्धानकरो धातुपोषकत्वेन, किंवा क्षीणस्यासौ क्षतस्य चेति ; तेन क्षीणक्षतस्य उरःक्षतं सन्दधाति ; षट्पदाद्यभीष्टत्वगुणकथनं प्रमेहपूर्वरूपादि-

प्रशमनः षट्पदपिपीलिकानामिष्टतमः स्निग्धः शीतो गुरुश्च ॥ ४१ ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानः स्थौल्यमार्द्दवालस्यातिस्वप्नगौरवम् अनन्नाभिलाषम् अग्निदौर्ब्बल्यमास्यकण्ठयोर्मांसाभिवृद्धिम्, तथा श्वासकासप्रतिश्यायालसकविसूचिका-शीतज्वरानाहास्य-माधुर्य्य-वमथु-संज्ञा-स्वर-प्रणाश-गलगण्डगण्डमाला-श्लीपद-गलशोथ-वस्तिधमनी-गलोपलेपाक्ष्यामयाभिष्यन्दान् इत्येवंप्रभृतीन् कफजान् व्याधीन् आपादयति ॥ ४२ ॥

अम्लो रसो भक्तं रोचयति अग्निं दीपयति देहं बृंहयति

कर्म्माणि । गुणास्तु—स्निग्धः शीतो गुरुश्चेति । मधुररससमानाधिकरणाः स्निग्धादयस्त्रयो गुणा रसादिवर्द्धनादीनि च कर्म्माणि । तेन मधुररसद्रव्यगुणा ये ते गुणाः कर्म्माणि चतानि विद्यात् ॥ ४१ ॥

गङ्गाधरः—अस्यातियोगे दोषानाह—स एवंगुण इत्यादि । एवमुक्ता गुणा गुणकर्म्माणि यस्य स एवंगुणोऽपि मधुरो रसोऽत्यर्थमुपयुज्यमान एक एव स्थौल्यादीन् कफजान् व्याधीन् आपादयति । न तु सम्यग्योगेनायोगेन मिथ्यायोगेन वा, नवा अन्यरससहातिमात्रयोगेण । आस्यकण्ठयोर्मांसाभिवृद्धिम् । शीतज्वरः शीतयुक्तज्वरः । संज्ञास्वरयोः प्रणाशः । गलशोथो गले उत्सेधमात्रं गलशुण्ड्यादिकं न तु गलगण्डः । वस्त्यादुपलेपः । अक्ष्यामया अक्षिरोगाः । अभिष्यन्दो मुखनासादिस्रावो न तु नेत्राभिष्यन्दो नाम रोगविशेषोऽक्ष्यामयवचनेन तस्योक्तत्वादिति ॥ ४२ ॥

गङ्गाधरः—प्रह्लादसाधर्म्यात् हृदयतर्पणमम्लरसं कर्म्मगुणाभ्यामाह—अम्लो

शानोपयुक्तं, यदुक्तम् 'मूत्रेऽभिधावन्ति पिपीलिकाश्च" इति, तथा रिष्टे वक्ष्यति—"मक्षिकाकान्तम्" इति, अनेन च मधुरत्वं ज्ञायते ; अक्ष्यामयेनैवाभिष्यन्दे लब्धे विशेषोपादानार्थं पुनर्वचनं, किंवा, अभिष्यन्दो नासादिष्वपि ज्ञेयः ॥ ४१।४२ ॥

चक्रपाणिः—द्रुतं तर्दयतीति द्रवो भवति, गुरुरूपकं दशीति सारयति, क्लेदयति तथा

ऊर्ज्जयति मनो बोधयति इन्द्रियाणि दृढ़ीकरोति बलञ्च वर्द्धयति वातमनुलोमयति हृदयं तर्पयति आस्यमास्रावयति भुक्तमपकर्षयति क्लेदयति जरयति प्रीणयति लघुरुष्णः स्निग्धश्च ॥ ४३ ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो दन्तान् हर्षयति तर्षयति संमीलयत्यक्षिणी संवेजयति रोमाणि कफं विलाययति पित्तमभिवर्द्धयति रक्तं दूषयति मांसं विदहति कायं शिथिलीकरोति क्षीणक्षतदुर्व्वलानां * श्वयथुमापादयति। अपि च क्षताभिहतदष्टदग्धभग्नशूलप्रच्युतावमूत्रितपरिसर्पितच्छिन्न-

रस इत्यादि। ऊर्ज्जयति संन्यासादिभिरचेतनस्य मनसः प्रबोधनपूर्व्वकजीवनं स्थापयति। मनो बोधयति मूर्च्छादिभिरचेतनं मनो बोधयति। इन्द्रियाणि दृढ़। स्वेषु कर्म्मसु। बलञ्च वर्द्धयति मनोबोधकत्वात् पार्थिवत्वाच्च। वातमनुलोमयति पार्थिवत्वेन गुरुत्वात्। हृदयं तर्पयति हृदयस्थमनस्तर्पणात्। आस्यमास्रावयति आग्नेयत्वेन तीक्ष्णत्वात्। भुक्तमपकर्षयति स्वप्रभावादधस्तात् नयति, भुक्तं क्लेदयति भुक्तं जरयति। प्रीणयति प्रीणनं करोति। इत्येवं कर्म्म। अम्लो रसो लघुरुष्णः स्निग्धः। लघूष्णस्निग्धसमानाधिकरणः। लघ्वादयो गुणास्त्रयोऽम्लरसद्रव्ये वर्त्तन्ते। भक्तरोचनादीनि च कर्म्माणि ॥ ४३ ॥

गङ्गाधरः—अतिमात्रोपयोगे दोषमाह—स एवंगुण इत्यादि। सोऽम्लो रस. सम्यग्योगयुक्त एवंगुणोऽपि एक एवायमम्लरसोऽत्यर्थमुपयुज्यमानो दन्तान् हर्षयति। अक्षिणी संमीलयति मुद्रीकरोति। लोमानि संवीजयति उद्गमयति। कफं विलाययति गालयति। पित्तमभिवर्द्धयति। रक्तं दूषयति। मांसं विदहति। कायं शिथिलीकरोति। दुर्व्वलानां श्वयथुमापादयति। अपि च क्षतादीनि पाचयति आग्नेयस्वभावात्।

जरयति भुक्तमेव। अवमूत्रितं मूत्रविषैर्जन्तुभिः, परिसर्पितञ्च स्पर्शविषैः कणभादिभिः ॥ ४३।४४ ॥

* क्षीणक्षतकृशदुर्व्वलानामिति वा पाठः।

भिन्नविश्लिष्टोद्विद्धोत्पिष्टादीनि पाचयति, आग्नेयस्वभावात् परिदहति कण्ठमुरो हृदयञ्च ॥ ४४ ॥

लवणो रसः पाचनः क्लेदनो दीपनश्च्यवनश्छेदनो भेदनस्तीक्ष्णः सरो विकाश्यधःस्रंस्यवकाशकरो वातहरः स्तम्भबन्धसंघातविधमनः सर्व्वरसप्रत्यनीकभूत आस्यमास्रावयति कफं निष्यन्दयति मार्गान् विशोधयति सर्व्वशरीरावयवान् मृदूकरोति रोचयत्याहारयोगी नात्यर्थं गुरुः स्निग्ध उष्णश्च ॥ ४५ ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानः पित्तं कोपयति रक्तं वर्द्धयति तर्षयति मूर्च्छयति मोहयति तापयति दारयति

अवमूत्रितं मूत्रविप्राणिभिस्त्रातं यत्र गात्रप्रदेशे। परिसर्पितं सविषप्राणिभिः स्पृष्टं छिन्नं द्विधाभूतं शस्त्रेण। भिन्नं शङ्कुनाशये विद्धम्। विश्लिष्टमभिघातादिना विभक्तरूपम्। उद्विद्धमूर्द्धतो विद्धं कण्टकादिना। उत्पिष्टं शिलादिभिरुपरिघातात् पिष्टम्। तथाग्नेयस्वभावात् कण्ठं परिदहति हृदयञ्च परिदहतीत्ययमत्यर्थयोगनिमित्तं कर्म्म। समानहीनमिथ्यायोगेभ्यस्तु नैवम्, न वा रसान्तरसहितोपयोगाच्चेति ॥ ४४ ॥

गङ्गाधरः—आग्नेयत्वसाधर्म्म्याल्लवणस्य कर्म्मगुणानाह—लवणो रस इत्यादि। च्यवनः स्रावकरः। विकाशी तीक्ष्णप्रभेदः—"विकाशी विकशन्नेव सन्धिबन्धं विमोक्षयन्" इति। अधःस्रंसी विष्यन्दनशीलः। अवकाशकरः स्रावादिकरणादाकाशाशप्रकाशकरः। स्तम्भादिविधमनः विनाशनः। सर्व्वरसप्रत्यनीकभूतः सर्व्वेषां रसानां परिभवकरः। दृश्यते हि यत्र लवणोऽतिमात्रस्तत्र रसान्तरस्य न व्यक्तता। आहारयोगी आहारद्रव्यसंस्कारकत्वेन उपयोगशीलः। इति लवणरसद्रव्यस्य लवणरसद्वारा कर्म्माणि। गुणास्तु नात्यर्थं गुरुः स्निग्ध उष्णश्च ॥ ४५ ॥

गङ्गाधरः—अस्यात्यर्थोपयोगे दोषमाह—स एवंगुण इत्यादि। सम्यग्योगेनैवमुक्तप्रकारगुणकर्म्मापि स लवणो रस एक एवात्यर्थमुपयुज्यमानः पित्तं कोपयति। रक्तं वर्द्धयति। तर्पयति। मूर्च्छयति तमः प्रवेशयति। मोहयति

चक्रपाणिः—विकाशी श्लेष्मच्छेदनः, अधःस्रंसी विष्यन्दनशीलः, सर्व्वरसप्रत्यनीकभूत इति

कृष्णाति मांसानि प्रगालयति कुष्ठानि विषञ्च वर्द्धयति शोफान् स्फोटयति दन्तांश्च्यावयति पुंस्त्वमुपहन्ति इन्द्रियाण्युपरुणद्धि वलिपलितखालित्यमापादयति। अपि च लोहितपित्ताम्लपित्तविसर्पवातरक्तविचर्च्चिकेन्द्रलुप्तप्रभृतीन् विकारान् उपजनयति ॥ ४६ ॥

कटुको रसो वक्त्रं शोधयति अग्निं दीपयति भक्तं शोषयति घ्राणमास्रावयति चक्षुर्विरेचयति स्फुटीकरोतीन्द्रियाणि अलसकश्वयथूपचयोदर्द्दाभिष्यन्दस्नेहस्वेदक्लेदमलानुपहन्ति रोचयत्यशनम् कण्डूं विलालयति व्रणानवसादयति क्रिमीन् हिनस्ति मांसं विलेखयति शोणितसङ्घातं भिनत्ति बन्धान्

वैचित्त्यं जनयति। मांसानि कृष्णाति हिनस्ति। कुष्ठानि प्रगालयति। विषं भुक्तं शरीरस्थं वर्द्धयति। शोफान् स्फोटयति विदारयति। दन्तांश्च्यावयति च्युतान् करोति। वलिः शिथिलीभूतं चर्म्म। पलितं केशशुक्लता। खालित्यं केशोन्मूलीभावो नेन्द्रलुप्तं नाम। अपि च लोहितपित्तादीन विकारानुपजनयति। अम्लपित्तन्तु अष्टोदरीये यद्यपि नोक्तं तथापि महारोगाध्याये पित्तव्याधिष्ववगन्तव्यम्। इन्द्रलुप्तं खालित्यं नाम रोगविशेषो न तु केशोन्मूलनमिति ॥ ४६ ॥

गङ्गाधरः— लवणस्याग्नेयत्वसाधर्म्म्यात् कटुकमाह—कटुको रस इत्यादि। वक्त्रं शोधयति मुखगतक्लेदं छेदयति। भक्तं भुक्तं शोषयति। घ्राणं घ्राणेन्द्रियाधिष्ठानम्। इन्द्रियाणि स्फुटीकरोति प्रव्यक्तानीन्द्रियाणि करोति। अलसकादीनुपहन्ति। उपचयः सञ्चयः। स्नेहं शरीरादेः स्निग्धत्वम्। कण्डूं विलालयति विलीनां करोति। व्रणान् अवसादयति अवसन्नान् करोति। मांसं विलेखयति विलिखनं खननविशेषः। शोणितसंघातं भिनत्ति द्रवीकरोति।

यत्र मात्रातिरिक्तो लवणो भवति तत्र माध्यो रस उपक्रम्यते; आहारयोगीत्याहारे सदा युज्यते, मोहयति वैचित्त्यं कुरुते, मूर्च्छयतीति संज्ञानाशं करोति ॥ ४५।४६ ॥

छिनत्ति मार्गान् विवृणोति श्लेष्माणं शमयति लघुरुष्णो रुक्षश्च ॥ ४७ ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो विपाकप्रभावात् पुंस्त्वमुपहन्ति रसवीर्य्यप्रभावात् मोहयति ग्लपयति सादयति कर्षयति मूर्च्छयति नमयति तमयति भ्रमयति कण्ठं परिदहति शरीरतापमुपजनयति बलं क्षिणोति तृष्णाञ्चोपजनयति । अपि च वाय्वग्निगुणबाहुल्याद् भ्रममदवमथु-*-कम्पतोदभेदैश्चरणभुजपीलुपृष्ठपार्श्वप्रभृतिषु मारुतजान् विकारानुपजनयति ॥४८

बन्धान् परस्परसंश्लिष्टान् छिनत्ति विश्लेषं करोति। मार्गान् विवृणोति स्फुटीकरोति। श्लेष्माणं शमयति। इत्येवंकर्म्मा कटुको रसः खलु द्रव्याश्रितः सन् भवति। अस्य समानाधिकरणो गुणश्च लघुरुष्णो रुक्षश्च। इति ॥ ४७ ॥

गङ्गाधरः—एवंगुणकर्म्मा सम्यग्योगेन कटुको रसोऽत्यर्थयोगेन यथा स्यात् तदाह—स एवंगुण इत्यादि। सम्यग्योगयुक्तस्त्वेवंगुणः स कटुको रस एक एव रसान्तरयोगमन्तरेणात्यर्थमुपयुज्यमानः पुंस्त्वमुपहन्ति विपाकप्रभावात्। मोहयति रसवीर्य्यप्रभावात् कटुरसप्रभावात् रुक्षोष्णप्रभावाच्च। कटुरसस्य कटुविपाकस्तत्प्रभावात् पुंस्त्वोपघाती न तु रसप्रभावात् वीर्य्यप्रभावाद्वा। कणाशुण्ठ्योर्हि रसतः कटुत्वेऽपि विपाकतो माधुर्य्याद्वृष्यत्वम्। रसवीर्य्यप्रभावात् तु सर्व्वत्रैव द्रव्ये स्थितो मोहयति। सर्व्वत्रैवं विपाकप्रभावात् वृष्यत्वावृष्यत्वमवधार्य्यम्। ग्लपयति हर्षं नाशयति। सादयत्यवसादयति। कर्षयति शरीरधातूनपकृष्टान् करोति। मूर्च्छयति अन्धकारमिव दर्शयंश्चेतो हरति। नमयति गात्राणि। तमयति किञ्चिद्ग्लानिं जनयति। भ्रमयति शरीरम्। कण्ठं परिदहति। शरीरतापमुपजनयति। बलं क्षिणोति हिनस्ति। अपि च वाय्वग्निगुणबाहुल्यात् कटुको रसः पुनरत्यर्थमेक एवोपयुज्यमानः खलु भ्रमादिभिर्लिङ्गैश्चरणादिषु मारुतजान् रोगानुपजनयति। पीलु

चक्रपाणिः—विपाकस्य प्रभावो विपाकप्रभावः, विपाकश्च कटूनां कटुरेव, रसस्य वीर्य्यस्य च प्रभावो रसवीर्य्यप्रभावः; अयञ्च वक्ष्यमाणे सर्व्वत्र हेतुः; चरणादीनां साक्षाद् ग्रहणं, क्वचित्

* कम्पतोदमिति पाठः।

तिक्तो रसः स्वयमरोचिष्णुररोचकघ्नो विषघ्नश्च क्रिमिघ्नो मूर्च्छादाहकण्डुकुष्ठतृष्णाप्रशमनः त्वङ्मांसयोः स्थिरीकरणो ज्वरघ्नो दीपनः पाचनः स्तन्यशोधनो लेखनः क्लेदमेदोवसा-लसीका-पूयस्वेद-मूत्रपुरीष-पित्तश्लेष्मोपशोषणो रुक्षः शीतो लघुश्च ॥ ४९ ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो रौक्ष्यात् खरविशदस्वभावाच्च रसरुधिरमांसमेदोऽस्थिमज्जशुक्राणि उपशोषयति स्रोतसां खरत्वमुपपादयति बलमादत्ते कर्षयति ग्लपयति मोहयति भ्रमयति वदनमुपशोषयत्यन्यांश्च वातजान् विकारानुपजनयति ॥ ५० ॥

हरततत्त्वम्। अग्नेरपि रूक्षोष्णलघुगुणैर्वातगुणसामान्याद् वातवद्धकत्व-मिति ॥ ४८ ॥

गङ्गाधरः—अथ कटुकस्य वायवीयत्वसामान्यात् तिक्तरसमाह—तिक्तो रस इत्यादि। स्वयं तिक्तो रसो न रोचिष्णुर्न रोचतेऽथचारोचकं रोगं हन्ती-त्यरोचकघ्नः। शरीरस्थविषघ्नश्च क्रिमिघ्नश्च। मूर्च्छादिप्रशमनः। त्वङ्मांसयोः स्थिरीकरणः स्थैर्य्यकृत्। लेखनः किञ्चिद्दरणः। क्लेदादिशोषणः। इत्ये-तानि तिक्तरसद्रव्यस्य कर्म्माणि गुणाश्च तद्रससमानाधिकरणा रुक्षः शीतो लघुश्चेति त्रयः ॥ ४९ ॥

गङ्गाधरः—स एवमित्यादि। सम्यग्योगाद् एवंगुणकर्म्मापि स तिक्तो रसोऽत्यर्थमेक एव रसान्तरेणासंसृष्टः उपयुज्यमानः रौक्ष्यात् रौक्ष्यस्वभाव-स्थानाद् बलमादत्ते गृह्णाति। खरविशदस्वभावाच्च खरविशदस्वभावस्थान-स्वभावाच्च पुनः रसादीनुपशोषयति। ततश्च स्रोतसां खरत्वमुपपादयति। बलञ्चादत्ते गृह्णाति। कर्षयति शरीरम्। मोहयति चित्तम्। भ्रमयति गात्रम्। वदनमुपशोषयति। अपि चान्यान् वातजांश्च रोगानुप-जनयतीति ॥ ५० ॥

प्रायो वातविकारभावात्; कत्र च विपाकप्रभावादिकथनमुदाहरणार्थम्, तेन मधुरादपि विपा-

कषायो रसः संशमनः संग्राही संधारणः पीडनो रोपणः शोषणः स्तम्भनः श्लेष्मपित्तरक्तशमनः शरीरक्लेदस्योपयोक्ता रूक्षः शीतो गुरुश्च ॥ ५१ ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमान आस्यं शोषयति हृदयं पीडयत्युदरमाध्मापयति वाचं निगृह्णाति स्रोतांस्यवबध्नाति श्यावत्वमुपपादयति पुंस्त्वमुपहन्ति विष्टभ्य जरयति * वातमूत्ररेतःपुरीषाण्यवगृह्णाति बलमादत्ते कर्षयति ग्लापयति तर्पयति स्तम्भयति खरविशदरूक्षत्वात् पक्षवधग्रहापतानकार्दितप्रभृतींश्च वातजान् विकारानुपजनयति ॥५२॥

गङ्गाधरः—वायवीपलसाधर्म्म्यात् कषायरसमाह—कषायो रस इत्यादि। संशमन इति—"न शोधयति यद् दोषान समान् नोदीरयत्यपि। समीकरोति च क्रुद्धांस्तत् संशमनमुच्यते॥" इति। संग्राही चलद्रवधातुसंक्षेपकारी। सन्धारणश्चलत्स्तम्भनकारी। पीडन आकृष्य सङ्कोचकरः। रोपणः व्रणस्य मांसादिपूरणः। शोषणः क्लेदादीनां शुष्कताकरः। स्तम्भनः स्खलतां चलतां वा भावानां स्थिरीकरणः। श्लेष्मपित्तरक्तानां प्रशमनः। शरीरक्लेदस्योपयोक्ता आचूषणः। इत्येतानि कषायरसद्रव्यस्य कर्म्माणि। गुणाश्च तद्रससमानाधिकरणा रूक्षः शीतो गुरुश्चेति त्रयः॥ ५१ ॥

गङ्गाधरः—स एवमित्यादि। सम्यग् योगादेवंगुणकर्म्मापि कषायो रसः स एक एव रसान्तरयोगमन्तरेणात्यर्थमुपयुज्यमानः। आस्यं शोषयति। हृदयं पीडयति। वाचं निगृह्णाति कण्ठबन्धात्। स्रोतांस्यवबध्नाति रुणद्धि। श्यावत्वं शरीरादेरुपपादयति। पुंस्त्वमुपहन्ति कटुविपाकप्रभावात्। विष्टभ्य भुक्तान्तरं जरां गच्छति। वातादीनवगृह्णाति। बलमादत्ते गृह्णाति। कर्षयति शरीरधातून्। ग्लापयति कान्तिक्षयं करोति। स्तम्भयति द्रवचलान् भावान्। अपि च खरादित्वात् पक्षवधादीन् वातजान् विकारानुपजनयति। इति। इत्येवं

चक्रः—कार्य्यमुन्नेयम्। ग्लपयति हर्षक्षयं करोति। पीडनो व्रणपीडनः, शरीरक्लेदस्योपयोक्ते ति आचूषकः, शीतो लघुश्चेत्यकारप्रश्लेषाद्लघुः; अवगृह्णातीति बद्धानि करोति ॥ ४७—५२ ॥

* विष्टभ्य जरां गच्छतीति पाठान्तरम्।

एवमेते षड् रसाः पृथक्त्वेनैकत्वेन वा मात्रशः सम्यगुपयुज्यमाना उपकारका भवन्त्यध्यात्मलोकस्य, अपकारकाः पुनरतोऽन्यथा भवन्ति उपयुज्यमानाः, तान् विद्वानुपकारार्थमेव मात्रशः सम्यगुपयोजयेदिति ॥ ५३ ॥

भवन्ति चात्र।

शीतं वीर्य्येण यद् द्रव्यं मधुरं रसपाकयोः।
तयोरम्लं यदुष्णञ्च यच्चोष्णं कटुकं तयोः * ॥

द्विद्विभूताधिकद्रव्याणि पृथक् षड्रसभेदेनोक्तानि। एषु च शीतोष्णगुरुलघुस्निग्धरूक्षाः प्राधान्येनोक्ता यथारसं यथाभूतगुणाश्च प्राधान्येन खरविशदादयोऽनुक्ता अपि तत्तद्द्विद्विभूतगुणा उन्नेयाः। य उक्ता एकैकपृथिव्यादिभूतबहुलपञ्चभूतात्मकानां पार्थिवादीनां पञ्चानां द्विरसादीनां द्रव्याणाञ्च गुणा यथारसं भूतगुणा उन्नेयाः ॥ ५२ ॥

गङ्गाधरः—उपसंहरति—एवमेत इत्यादि। एवमुक्तप्रकारेणैते षड्रसाः पृथक्त्वेनैकैकशो मात्रया मात्रया खलूपयुज्यमाना एकत्वेन वा मिलितत्वेन वा मात्रश उपयुज्यमाना अध्यात्मलोकस्यात्मानमधिकृत्य वर्त्तमानस्य लोकस्योपकाराय भवन्ति। अपकारकाः पुनरतोऽन्यथा स्वल्पमात्रया सेकत्वेनातिमात्रादिना उपयुज्यमाना भवन्तीति तान् विद्वान् ज्ञात्वा उपकारार्थमेव मात्रशः सम्यगुपयोजयेदिति ॥ ५३ ॥

गङ्गाधरः—अथैषां द्रव्याणाम् आरम्भकभूतन्यूनमध्याधिकतरतमादिभेदेन अवान्तरद्रव्याणां गुणकर्म्मोपदेशो यथा कर्त्तव्यस्तत्राह श्लोकान्—भवन्ति चात्रेति। शीतमित्यादि। यद्द्रव्यं वीर्य्येण शीतं रसपाकयोर्मधुरं तस्य गुणसंग्रहो रसोप-

चक्रपाणिः—पृथक्त्वेनेति प्रत्येकशो मात्रशः; एकत्वेनेत्येकीकृत्य समुदयं मात्रशः इत्यर्थः; मात्रश इति मात्रया; तच्चैकीकरणं द्व्यादिभिः सर्व्वैर्वा; अध्यात्मलोकस्येति सर्व्वप्राणिजातस्य; अन्यथेति अमात्रया ॥ ५३ ॥

चक्रपाणिः—सम्प्रति रसद्वारेणैव द्रव्याणां वीर्य्यमाह—शीतमित्यादि। यद्द्रव्यं रसे पाके च मधुरम्, तच्छीतं वीर्य्येण ज्ञेयम्; तथा तयोरिति रसपाकयोर्यदम्लं द्रव्यम्, तदुष्णं वीर्य्येण; तथा यच्च द्रव्यं तयोरिति रसपाकयोः कटुकमुष्णम्, तच्चोष्णं वीर्य्येण; स्यादिति शेषः; किंवा यच्चोष्णं कटुकं तयोरिति पाठः; अत्र यद् रसतो मधुरं तद्वीर्य्यतः शीतमिति

* यद् द्रव्यं कटुकं तयोरिति चक्रसम्मतः पाठः।

तेषां रसोपदेशेन निर्देश्यो गुणसंग्रहः ।
वीर्य्यतो विपरीतानां * पाकतश्चोपदेक्ष्यते ॥

देशेन मधुरमित्युपदेशेन निर्देश्यो निर्देशः कर्त्तव्यो बुद्धिमद्भिः । सोमगुणातिरेकात् पञ्चभूतारब्धद्रव्ये मधुरो रसोऽभिव्यज्यते इत्युक्त्या तन्मधुररससहचरितास्तु नियता गुणाः स्निग्धगुरुशीताः । स्वादुर्मधुरं पच्यते इति च वक्ष्यते, तेन मधुररसोपदेशेन शीतवीर्य्यमधुरविपाकौ ज्ञेयौ । पृथिव्यामम्बुमवेते तदुभयाज्जाता गुणा गुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूलगन्धास्तथापां द्रवस्निग्धशीतमन्दसरसान्द्रमृदुपिच्छिला गुणा इत्येषां गुणानां संग्रहो निर्देश्यो भवति ।

तथा यद्द्रव्यं तयो रसपाकयोरम्लं वीर्य्येणोष्णं तस्यापि रसोपदेशेनाम्लरसोपदेशेन गुणसंग्रहो निर्देश्यः । भूम्यग्निगुणभूयिष्ठत्वादम्लः स च लघुरुष्णः स्निग्ध इत्युक्त्या तथा अम्लोऽम्लं पच्यते इत्युक्त्याम्ल इति रसमात्रोपदेशेनोष्णवीर्य्याम्लरसपाकलघुस्निग्धा ज्ञेयाः । तथापि भूम्यग्न्योरनभिभवाच्च शेषा गुणा ये भूमेर्गुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूलगन्धाः, अग्नेश्च ये उष्णतीक्ष्णसूक्ष्मलघुरूक्षविशदरूपाणि गुणास्तेषामपि गुणानां संग्रहो निर्देश्यः ।

एवं यच्च द्रव्यं वीर्य्येणोष्णं तयो रसपाकयोः कटुकं मरिचादिकं तस्यापि कटुरसोपदेशेन गुणानां संग्रहो निर्देश्यः । वाय्वग्निगुणभूयिष्ठत्वात् कटुकः, स च लघुरुष्णो रूक्षश्चेत्युक्त्या कटुतिक्तकषायाणां विपाकः प्रायशः कटुरित्युक्त्या च कटुकमितिमात्रोपदेशेन लघुरूक्षोष्णवीर्य्यकटुरसपाका ज्ञेयाः । तत्रापि शेषाणां वाय्वग्निगुणानां वायोर्लघुशीतरूक्षखरविशद-

वक्तव्ये यद् रसपाकयोरिति करोति, तन्मधुररसोचितपाकस्यैव द्रव्यस्य शीतवीर्य्यताप्राप्त्यर्थम्; एवमम्लकटुकयोरपि वाच्यम् ।

तेषामिति मधुरपाकादीनाम्, रसोपदेशेनेति रसमात्रकथनेनैव, यतः विपाकोऽपि रसत एव प्रायो ज्ञायते, यद् वक्ष्यति—"कटुतिक्तकषायाणां विपाकः प्रायशः कटुः" इत्यादि; एतच्च न सर्वत्रेत्याह—वीर्य्यत इत्यादि । वीर्य्यतोऽविपरीतानां रसद्वारा वीर्य्यज्ञानम्, न तु रसविरुद्धवीर्य्याणाम्, यथा—महापञ्चमूलादीनाम्; न केवलं रसेन, किं तर्हि पाकतः उपदेक्ष्यते । गुणसंग्रहः—"शुक्रहा बद्धविण्मूत्रो विपाको वातलः कटुः" इत्यादिना, स च वीर्य्यतोऽविपरीतानां विज्ञेयः, यदि तत्र वीर्य्यं विरोधि स्यात्, तदा विपाकोऽपि यथोक्तगुणकारी न स्यात्; किंवा, पाकतश्चाविपरीतानां रसोपदेशेन गुणसंग्रहः शीतोष्णलक्षणो निर्देश्यः;—अन्यास्तु विपरीताः

* वीर्य्यतोऽविपरीतानामिति पाठः ।

यथा पयो यथा सर्पिर्यथा वा चव्यचित्रकौ।
एवमादीनि चान्यानि निर्दिशेद्रसतो भिषक् ॥ ५४ ॥
मधुरं किञ्चिदुष्णं स्यात् कषायं तिक्तमेव च।
यथा महत् पञ्चमूलं यथा वानूपमामिषम् * ॥

सूक्ष्मस्वगुणानामग्नेरुष्णतीक्ष्णसूक्ष्मलघुरूक्षविशदरूपगुणानां मेलनेन यादृश-लघुत्वादयो भवन्ति तादृशानां तेषां गुणानां संग्रहो निर्देश्यः। विपरीतानां वीर्य्यतः पाकतश्च विपरीतानां मधुराम्लकटुकानां वीर्य्यतः पाकतश्चोपदेश्यते गुणसंग्रह इति। यत्तु व्याख्यायते—यद्द्रव्यं रसपाकयोर्मधुरं तद्वीर्य्येण शीतं, यच्च रसपाकयोरम्लं तद्वीर्य्येणोष्णं, यच्च रसपाकयोः कटुकं तद्वीर्य्येणोष्ण-मिति। तदयुक्तम्। तेषां रसोपदेशेन निर्देश्यो गुणसंग्रह इति वचन-स्यासङ्गतेः ॥ ५३ ॥

गङ्गाधरः—तथा च शीतवीर्य्यमधुररसमधुरपाकद्रव्याणां मधुररसोपदेशेन गुणसंग्रहः—यथा पयो यथा च सर्पिर्मधुरं स्निग्धगुरुशीतादिकम्, एवमुष्ण-वीर्य्याम्लरसाम्लपाकद्रव्याणामम्लरसोपदेशेन गुणसंग्रहो यथा—भव्यं चालिताफलमम्लं तेन लघूष्णस्निग्धत्वादिसंग्रहः, एवमुष्णवीर्य्य-कटुरसकटुपाकद्रव्याणां कटुरसोपदेशेन शेषगुणसंग्रहो यथा—चव्यचित्रकौ। तत्र चित्रकः—"कटुकः कटुकः पाके वीर्य्योष्णश्चित्रको मतः" इति वक्ष्यते। तेन लघूष्णरूक्षादीनामपि संग्रहः। एवमादीनि चान्यानि शीतवीर्य्यमधुररसमधुर-पाकाणि द्रव्याणि मधुररसतो यथा तथोष्णवीर्य्याम्लरसाम्लपाकानि द्रव्याणि चाम्लरसतस्तथोष्णवीर्य्यकटुरसकटुपाकानि द्रव्याणि कटुरसतो भिषग् गुणतो निर्दिशेत् ॥ ५४ ॥

गङ्गाधरः—वीर्य्यतो विपाकतश्च विपरीतानां मधुराम्ललवणकटुतिक्त-कषायाणां वीर्य्यतश्च पाकतश्चोपदेशो यथा तदाह—मधुरमित्यादि। किञ्चिद्द्रव्यं यथानूपमामिषं मधुरं वीर्य्येण उष्णं तद्वीर्य्यतो रसतश्च निर्देश्यम्। तथा

कटुकाया अपि विपरीतमधुरपाकित्वम्, न तत्र कटुकरसत्वेनोष्णत्वमित्यर्थः ; अस्मिंश्च पक्षे "रसवैकल्ये" इति "यथा पयः" इत्यादिना सम्बध्यते। तान्येवाविपरीतवीर्यविपाकान्याह— यथा पय इत्यादि। पयःप्रभृतीनि हि द्रव्यगुणकथनेनाविरुद्धवीर्यविपाकान्युपदेष्टव्यानि ॥ ५४ ॥

चक्रपाणिः—सम्प्रति यत्र विरुद्धवीर्यविपाकरसेनोष्णत्वादि निर्देश्यं तदाह—मधुरमित्यादि।

* यथा वानूपमामिषमिति चक्रधृतः पाठः।

लवणं सैन्धवं नोष्णमम्लमामलकं तथा ।
अर्कागुरुगुडूचीनां तिक्तानामौष्ण्यमुच्यते ॥ ५५ ॥
किञ्चिदम्लं हि संग्राहि किञ्चिदम्लं भिनत्ति च ।
यथा कपित्थं संग्राहि भेदि चामलकं तथा ॥
पिप्पलीनागरं वृष्यं कटु चावृष्यमुच्यते ।
कषायः स्तम्भनः शीतः सोऽभयायामतोऽन्यथा ॥ ५६ ॥

किञ्चित् द्रव्यं कषायं तिक्तमेव च किञ्चित् द्रव्य यथा बृहत्पञ्चमूलं वीर्य्येत उष्णं तद्वीर्य्येत उपदेक्ष्यते। कषायतिक्तौ शीतावुक्तौ। ननु तिक्तकषाययोः पाक एकान्तेन कटुस्तेन तयो रसोपदेशेन गुणसंग्रहो निर्द्देश्यः कुतो नोक्त इति चेत्? न; रसपाकवीर्य्याणामसामान्यात्। प्रायेण हि तिक्तकषाययोः शीतं वीर्य्य कटुः पाक इति। अपरमुदाहरति—लवणमित्यादि। सर्व्वं लवणमत्यर्थं गुरु स्निग्धमुष्णं सैन्धवन्तु लवणं नोष्णवीर्य्यम्। तथा सर्व्वमम्लमुष्णं लघुस्निग्धमामलकमम्लं नोष्णमिति वीर्य्यतो विपरीतं वीर्य्यतो निर्द्देश्यम्। तथार्कागुरुगुडूचीनां तिक्तानामौष्ण्यवीर्य्यं न शीतं सर्व्वं तिक्तं शीतमुक्तमिति। वीर्य्यतोऽर्कादय उपदेश्याः ॥ ५५ ॥

गङ्गाधरः—इति वीर्य्यतो विपरीतान्युदाहृत्य पाकतोऽमुमुदाहरति—किञ्चिदम्लमित्यादि। अम्लस्याम्लपाके सृष्टविण्मूत्रता कर्म्म। तत्र किञ्चिदम्लं द्रव्यं संग्राहि यथा कपित्थं फलं संग्राहि, तेनानुमीयते कपित्थ कटुपाकम्। वक्ष्यते हि—"शुक्रहा बद्धविण्मूत्रो विपाके वातलः कटुः" इति तस्मात् पाकत उपदेक्ष्यते द्रव्यम्। आमलकञ्चाम्लं भेदि शीतञ्च तस्मात् पाकतोऽविपरीतं वीर्य्यतो विपरीतं वीर्य्येत उपदेक्ष्यते। एवं सर्व्वं कटु द्रव्यं कटुपाकादुष्णशुक्रघ्नत्वादवृष्यम्। पिप्पलीनागरन्तु वृष्यम् तस्मान्मधुरपाकञ्च। पाकतो विपरीतं पाकत उपदेक्ष्यते। कषायः सर्व्वः स्तम्भनः शीतश्च।

किञ्चित्कषायमौष्ण्यं तिक्तमौष्ण्यमिति योजना, कषायतिक्तलवणादीनामुदाहरणमसूचितानामपि प्रकरणात् कृतम्; महत् पञ्चमूलं बिल्वादि पञ्चमूलमिह, एतच्च तिक्तस्य कषायस्य चोष्णतायां उदाहरणम्; अन्यानूपामिषन्तु मधुरस्योष्णवीर्य्यत्वेन ॥ ५५ ॥

चक्रपाणिः—वीर्य्यप्रसङ्गादन्यदप्यम्लकादीनां विरुद्धगुणमाह—किञ्चिदित्यादि। अभयायामतो-

तस्माद्र रसोपदेशेन न सर्व्वं द्रव्यमादिशेत्।
दृष्टं तुल्यरसेऽप्येवं द्रव्ये द्रव्ये गुणान्तरम् ॥ ५७ ॥
रौक्ष्यात् कषायो रूक्षाणामुत्तमो मध्यमः कटुः।
तिक्तोऽवरस्तथोष्णानामुष्णत्वाल्लवणः परः ॥

कटुपाकात् स्तम्भनः। सोमगुणः स्तम्भनश्च शीतश्च। अभयायां हरीतक्यां विपर्य्ययो रेचनश्चोष्णश्च। इति वीर्य्यतो विपरीता कषाया हरीतकी पाकतश्च विपरीता रेचनत्वात्। तस्मात् सर्व्वं द्रव्यं न रसोपदेशेनादिशेत्। यत्तु शीतवीर्य्यमधुररसमधुरपाकं तन्मधुररसोपदेशेन आदिशेत्। यच्चोष्णवीर्य्याम्लरसाम्लपाकं तदप्यम्लरसोपदेशेनादिशेत्। एवं यदुष्णवीर्य्यकटुरसकटुपाकं तदपि कटुरसोपदेशेनादिशेदिति निगमनम्। इति ॥ ५६।५७ ॥

गङ्गाधरः—अथैषां मधुरादीनां गुरुलघुशीतोष्णस्निग्धरूक्षाणां न्यूनमध्याधिक्यानि सन्ति न वेति? अत आह—रौक्ष्यादित्यादि। रूक्षाणाम् उक्तानां कषायकटुतिक्तानां मध्ये कषायो रसो रौक्ष्यादुत्तमो रूक्षः। पवनपृथिव्यतिरिक्तपञ्चभूतारब्धत्वात्। तत्र हि न्यूनैः स्वाग्न्यम्बुभिरधिकाभ्यां पवनपृथिवीभ्यामारभ्यमाणे कार्य्ये भूयसाल्पावजयात् भूयस्योश्च पवनपृथिव्योः पृथिव्या विरोधिगुणाभावात्, पवनस्य रौक्ष्यगुणस्यावजयाभावात् पौष्कल्याच्च रौक्ष्यमधिकं कषायरसद्रव्ये भवतीति। कटुस्तु तेषां रूक्षाणां कषायकटुतिक्तानां मध्ये रौक्ष्यान्मध्यमो रूक्षः, वाय्वग्निभूयिष्ठपञ्चभूतारब्धत्वात्। तत्र हि न्यूनैः पृथिव्यम्बुगगनैरधिकाभ्यां वाय्वग्निभ्यामारभ्यमाणे कटुरसद्रव्ये भूयिष्ठाभ्यां वाय्वग्निगुणाभ्यामल्पानां शेषाणां गुणावजये भूयिष्ठयोर्द्वयोरेव वाय्वग्न्यो रौक्ष्यगुणावेकीभूय मध्यमो रौक्ष्यगुणो भवति। कथं नाधिकः स्यात्? उच्यते भूयिष्ठयोर्वाय्वग्न्योरुभयो रौक्ष्येऽपि भूयस्त्वाभावेनाल्पबलात् स्निग्धगुणानामपाम् अंशत्वाच्च पृथिव्याकाशाभ्यामधिकस्य स्निग्धगुणस्य निःशेषेणावजये वाय्वग्न्यो रौक्ष्यं मध्यमं भवति। कषायद्रव्यारम्भे तु पवनपृथिवीभ्यां भूयसीभ्याम् अमूर्त्तमूर्त्ताभ्यां प्रबलाभ्यामपां स्नेहावजये शेषोऽधिक एव रौक्ष्यगुणो वर्त्तते। इति। तेषामेव रूक्षाणां कषायकटुतिक्तानां मध्ये तिक्तो रसो रौक्ष्यादवरः,

रूक्षकेति [illegible] कषायो रसो [illegible]र्थः। तैक्ष्ण्यादिति तैक्ष्ण्येन कषाय उत्तम इति

मध्योऽम्लः कटुकश्चान्त्यः स्निग्धानां मधुरः परः।
मध्योऽम्लो लवणश्चान्त्यो रसः स्नेहान्निरुच्यते॥

वाय्वाकाशातिरिक्तपञ्चभूतारब्धत्वात्। तत्र हि न्यूनैः पृथिव्यप्तेजोभिरधिकाभ्यां वाय्वाकाशाभ्याञ्चारभ्यमाणे तिक्तरसद्रव्ये भूयसा वायुनाल्पानां गणानवजयेऽप्यां स्नेहावजयशेषोऽल्पो रुक्षो वर्त्तते। तत्राकाशस्यामूर्त्तस्य साहाय्ये बत्वालत्वादिति। अथोष्णा लवणाम्लकटुका उक्तास्ते किं तुल्या उष्णा न्यूनाधिका वेति? अत उच्यते—तथोष्णानामुष्णत्वाल्लवणः परः। इति। उष्णानां लवणाम्लकटुकानां मध्ये लवण उष्णत्वात् परः श्रेष्ठः, तोयाग्निगुणभूयिष्ठपञ्चभूतारब्धत्वात्। तत्र हि न्यूनैः पृथिवीवाय्वाकाशैर्भूयिष्ठाभ्यां तोयाग्निभ्याम् आरभ्यमाणे लवणद्रव्ये भूयिष्ठाभ्यां तोयाग्निभ्यां न्यूनानां शेषाणाम् अनुष्णानामवजयादुष्णो गुणोऽधिको वर्त्तते। तोयगुणेनापि तुल्येन शीतगुणेन अवजयाभावात्। तेषामुष्णानां मध्येऽम्लस्तूष्णत्वान्मध्यमः। भूम्यग्निभूयिष्ठपञ्चभूतारब्धत्वात्। तत्रापि न्यूनैराकाशवायुतोयैरधिकाभ्यां भूम्यग्निभ्यामारभ्यमाणेऽम्लरसद्रव्ये भूम्यग्निभ्यां शेषाणामवजये तोयगुणावजयतो मध्यम उष्णोऽम्लेवर्त्तते नाधिक इति। कटुकश्चान्त्यः। तेषामुष्णानां लवणाम्लकटूनां मध्ये कटुकोऽन्त्य उष्णत्वादल्प उष्णः, वाय्वग्निभूयिष्ठपञ्चभूतारब्धत्वात्। तत्र हि न्यूनैराकाशाम्बुपृथिवीभूतैरधिकाभ्यां वाय्वग्निभ्यामारभ्यमाणे द्रव्ये कटुरसे वाय्वग्निभ्यां शेषाणामवजये तोयस्य शैत्येन सह वायोः शैत्यमग्निगुणोष्णस्य तुल्यमेकीभूतं प्रबलं भवति। तेन प्रबलेन शैत्येनाग्निगुणौष्ण्यं किञ्चिज्जितावशिष्टमल्पं वर्त्तते न त्वधिकम्। अथ तर्हि मधुराम्ललवणाः स्निग्धा उक्तास्तेऽपि किं तुल्या अथ किं न्यूनमध्याधिका वर्त्तन्त इति? अत उच्यते—स्निग्धानां मधुरः पर इति। स्निग्धानां मधुराम्ललवणानां मध्ये मधुरो रसः स्नेहात् परः उत्तमः स्निग्धः, सोमगुणातिरिक्तपञ्चभूतारब्धत्वात्। तत्र हि न्यूनैराकाशवाय्वग्निभूमिगुणैरारभ्यमाणे मधुररसद्रव्ये भूमिगततोयाधिकभूतगुणाभ्यामेकीभूताभ्यां प्रबलाभ्यामधिकस्निग्धाभ्यां शेषाणामवजये वाय्वादिरौक्ष्यस्याबलस्यावजयादधिकः स्नेहो वर्त्तते। मध्योऽम्लो रसस्तेषां स्निग्धानां मधुराम्ललवणानां मध्येऽम्लो रसः स्नेहगुणत्वान्मध्यः स्निग्धः। भूम्यग्निगुणभूयिष्ठपञ्चभूतारब्धत्वात्। तत्र हि न्यूनैराकाशवाय्वम्बुभिरधिकाभ्यां

रूक्षतमः, तिक्तो रूक्षः, कटुस्तु मध्यो रूक्षतर; एवमन्यत्रापि। कटुकश्चान्त्य इत्यवर इत्यर्थः।

तिक्तात् कषायो मधुरः शीताच्छीततरः परः * ।
स्वादुर्गुरुत्वादधिकः कषायाल्लवणोऽवरः ॥

भूम्यग्निभ्याश्चारभ्यमाणेऽम्लरसद्रव्येऽधिकाभ्यां भूम्यग्निभ्यां शेषाणामवजये भूमिगततोयस्नेहेन सह तोयभूतस्य न्यूनस्य च स्नेह एकीभूतोऽग्निभूतस्य भूयिष्ठस्य रूक्षगुणेन प्रबलेनाल्पावजये मध्यमः स्नेहो वर्त्तते। लवणस्त्वन्त्यो रसः स्नेहान्निरुच्यते। स्निग्धानां मधुराम्ललवणानां मध्ये लवणो रसः स्नेहात् अन्त्यो जघन्यः, तोयाग्निभूयिष्ठपञ्चभूतारब्धत्वात्। तत्र हि न्यूनैराकाशवायुपृथिवीभूतैरधिकाभ्याञ्च तोयाग्निभ्यामारभ्यमाणे लवणरसद्रव्ये तोयाग्निभ्यां शेषाणां न्यूनानामवजये तोयस्नेहोऽग्ने रूक्षस्य तुल्यत्वेन भूमिगततोयस्नेहेन युक्तोऽधिकबलः सन्नल्पः स्नेहो वर्त्तते इति।

अथ तिक्तकषायमधुराः शीता उक्तास्ते किं तुल्या न्यूनमध्याधिका वा स्युरिति? अत उच्यते—"तिक्तात् कषायो मधुरः शीताच्छीततरः परः" इति। शीतात् तिक्ताच्छीततरः कषायो मध्यमशीतः। परो मधुर उत्तमः शीतः। कस्मात्? सोमगुणातिरिक्तपञ्चभूतारब्धत्वान्मधुरस्य। भूवायुभूयिष्ठपञ्चभूतारब्धत्वात् कषायस्य। खवायुगुणभूयिष्ठपञ्चभूतारब्धत्वात् तिक्तस्य। तत्र हि सोमभूतगणशीलस्य तोयवायवोर्भूमिगततोयस्थस्याधिक्यान्मधुरद्रव्येऽधिकं शैत्यम्। कषायरसद्रव्ये पवनस्य शैत्यं प्रबलम् भूगततोयशैत्यं मध्यं तोयभूतस्य शैत्यमल्पमिति वह्नेरुष्णत्वावजये मध्यमशैत्यं वर्त्तते। तिक्तरसद्रव्ये तु वायोः शैत्यं प्रबलं तोयस्य भूगततोयस्य च शैत्यमल्पमेकीभूतमग्नेरुष्णावजये स्वल्पं शैत्यं शेषं स्यादिति। एवं तर्हि मधुराम्ललवणा गुरव उक्तास्तेऽपि किं तुल्या न्यूनमध्याधिका वा वर्त्तन्त इति? अत उच्यते—स्वादुर्गुरुत्वादधिक इति। गुरूणां मधुराम्ललवणानां मध्ये स्वादुर्मधुरो गुरुत्वादधिकः सोमातिरिक्तपञ्चभूतारब्धत्वात्। तत्र हि तोयस्य भूमितो लघोर्वाय्वग्न्याकाशेभ्यो गुरोः भूमेश्च गरोर्गौरवैक्यादधिकमेव गुरुत्वम्। कषायाल्लवणोऽवर इति—कषायो गुरुत्वान्मध्यमः पवनपृथिव्यतिरिक्तपञ्चभूतारब्धत्वात्। तत्र हि न्यूनभूतावजये भूमिगततोयस्याल्पगुरुत्वाद् गुरुत्वस्वल्पं गुरुत्वं भूमिगुरुत्वेन मिलितं प्रबलं

लवणोऽवर इति गुरुत्वेनेत्यर्थः। अम्लात् कटुरित्यादावम्लात् कटुर्लघुः, ततः कटुकात् लाघवेन अम्लात्तु लघुमात् तिक्तो कटुत्वेनोत्तमोत्तमः, कषायात् कटुकाद्युत्तमोत्तमः।

* "मध्वीक्ष्ण्यादावरः शीतात् कषायकात्तु तिक्तकः" इति पाठान्तरम्।

अम्लात् कटुस्ततस्तिक्तो लघुत्वादुत्तमोत्तमः।
केचिल्लघूनामवरमिच्छन्ति लवणं रसम्।
गौरवे लाघवे चैव सोऽवरस्तूभयोरपि॥ ५८॥

सत् खानिलानलानाममूर्त्तानां लघुत्वमवजित्य मध्यमं गुरुत्वं वर्त्तते। तस्मात् कषायादवरो गुरुर्लवणः तोयाग्न्यतिरिक्तपञ्चभूतारब्धत्वात्। तत्र हि न्यूनभूतानां लघुत्वावजये तोयस्याल्पगुरुत्वं भूमिगुरुत्वेनैकीभूतमप्यल्पं वर्त्तते। इति।

तर्हि चाम्लकटुतिक्ता; लघव उक्तास्ते किं तुल्याः न्यूनमध्याधिका वेति? अत उच्यते—"अम्लात् कटुस्ततस्तिक्तो लघुत्वादुत्तमोत्तमः" इति। अम्लो रसो लघुरवरः। तस्मादम्लाल्लघोरुत्तमो लघुः कटुः। उत्तमाल्लघोः कटुकादुत्तमो लघुस्तिक्त इत्युत्तमोत्तमो लघुस्तिक्तः। तत्र हि भूम्यग्निभूयिष्ठ-पञ्चभूतारब्धत्वादम्लरसद्रव्ये न्यूनभूतानां भूम्यग्निभ्यां जये भूमेर्गुरुत्वमग्ने-र्लघुत्वम्। तयोस्तुल्ययोरवजयाभावाल्लघुत्वमल्पम्। कटुरसद्रव्ये च वाय्वग्नि-भूयिष्ठपञ्चभूतारब्धत्वान्न्यूनभूतावजयेऽधिकाभ्यां वाय्वग्निभ्यां लघुभ्यां मध्यमं लघुत्वं वर्त्तते। यत आकाशात् स्थूलोऽग्निरिहारम्भकः। वाय्वाकाशातिरिक्त-पञ्चभूतारम्भात् तु तिक्तोऽतिलघुः। वह्निराकाशात् स्थूल इति वाय्वाकाशारब्ध-त्वादतिलघुस्तिक्त इति। अत्र केचिद् यदाहुस्तत् दर्शयति—केचिदित्यादि। अमूनां लघूनां मध्ये लवणमवरं लघुं केचिदिच्छन्ति न त्वम्लमवरं लघुमिच्छन्ति। ततो गुरूणामवरमम्लमिच्छन्तीति तथात्वेऽपि न विरोधः स्यात्॥ ५७॥

कस्मादिति? अत उच्यते—गौरवे इत्यादि। अस्माकं सोऽम्लो गौरवेऽवरः सन् लाघवे चैवावरो भवेदित्युभयोरपि सोऽम्लो लवणश्चावर इति। तथा च यथाम्लो गुरुस्तथा लवणो गुरुर्यथा चाम्लो लघुस्तथा लवणो लघुरिति गुरुलाघवे तुल्यौ भवतोऽम्ललवणाविति। तथा सति—कषायकटुतिक्त-लवणाम्लमधुरा उत्तरोत्तरं स्नेहाधिकाः पूर्व्वपूर्व्वं रूक्षाधिकाः। लवणाम्ल-कटुतिक्तकषायमधुराः उत्तरोत्तरं शीताः पूर्व्वपूर्व्वमुष्णा अधिका इत्येवं

एकीयमतमाह—केचिदित्यादि। एकीयमतं वचनभङ्ग्या स्वीकुर्व्वन्नाह—गौरव इत्यादि। एतेन गौरवे लाघवे चावरत्वं लवणस्य स्वीकुर्व्वन् गौरवेऽवर इत्यनेनाम्लकटुतिक्तेभ्यो गुरुत्वं स्वीकरोति लवणस्य, लाघवे चावर इत्यनेनाम्लादपि लघुत्वोऽल्पं लाघवं लवणस्य स्वीकरोति; न च बाधकम्,—अम्ले पृथिवी कारणं लवणे तु तोयं, ततः पृथिव्यपेक्षया तोयजन्यस्य

परश्चातो विपाकानां लक्षणं संप्रवक्ष्यते ।
कटुतिक्तकषायाणां विपाकः प्रायशः कटुः ।
अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा ॥ ५९ ॥

कस्मान्नोक्तमिति चेत् ? न । यथा हि लवणाम्लौ गुरुत्वलाघवे तुल्यौ तथा तिक्तलवणौ रूक्षस्निग्धाभ्यां तुल्यौ कटुतिक्तौ शीतोष्णाभ्यां तुल्यौ भवत इति तस्मात् क्रमभङ्गः । एवमपि कषायकटुतिक्तानामल्पात्यल्पस्निग्धत्वं प्रसज्यते । मधुराम्ललवणानामत्यल्पादिरूक्षत्वम् । लवणाम्लकटुकानामत्यल्पादिशीतत्वं प्रसज्यते । कटुतिक्तकषायाणामत्यल्पादुष्णत्वमिति । न च तत्तद्गुणस्तत्र तत्र वर्त्तते । तस्मादुक्तप्रकारेणोपदिष्टम् ॥ ५८ ॥

गङ्गाधरः—नन्वेते मधुरादयो यद्गुणकर्म्माण उक्ताः कथं तत्फलमभिनिष्पद्यत इति ? अतो विपाकमाह—परश्चात इत्यादि । अतः परञ्च विपाकानां लक्षणं सम्प्रवक्ष्यते यैः पाकैः फलमभिनिष्पद्यते । तद् यथा—कट्वित्यादि । विपाक इति पाकः पचनं द्रव्याणां स्वरूपरसयोः परा वृत्तिः । सा च स्वरूपान्तरत्वेन रसान्तरत्वेन च परिणतिः । तस्या विशेषो विपाकः । जाठराग्नियोगेन भुक्तानां द्रव्याणां पाकेन जायमाने किट्टसाररूपेण पृथक्त्वे यः सारभागो द्रवरूप आद्यो रसाख्यो धातुः किट्टभागश्च मूत्रपुरीषरूपो मलधातुश्च तद्रसमलधातुभूतरसान्तरवद्द्रव्यान्तरत्वेन भुक्तानां परिणतिविशेषोऽत्र विपाकः । उक्तञ्च—“जाठरेणाग्निना योगाद् यदुदेति रसान्तरम् । रसानां परिणामान्ते स विपाक इति स्मृतः ॥” इति । कस्य रसस्य किं रसान्तरत्वेनोदयः परिणामः स्यादिति ? अत आह—“कटुतिक्तकषायाणां विपाकः प्रायशः कटुः” इति । भुक्तानां द्रव्याणां यः कटुस्तिक्तः कषायो वा रसः स स रसः खलु जाठरेण अग्निना पच्यमानानां भुक्तानां द्रव्याणां रसाख्यधातुरूपेण परिणामे तत्पाकेन पच्यमानः सन् प्रायशः कटुविपाकः स्यात् । कटुश्च कटुविशेषेणाभिनिष्पन्नः संस्तत्र रसाख्ये धातौ वर्त्तते । तिक्तश्च रसः कटुविशेषरूपेणाभिनिष्पन्नः संस्तत्र रसधातौ वर्त्तते । कषायश्च कटुविशेषरूपेणाभिनिष्पन्नः संस्तत्र रसधातौ

लवणस्यैव लाघवमुचितमिति, यतः न भूतनिवेशेन गौरवलाघवे शक्ये अवधारयितुम्, तथा हि—तोयातिरेककृतो मधुरः पृथिव्यतिरेककृतात् कषायात् गुरुर्भवति ॥ ५६—५८ ॥

चक्रपाणिः—सम्प्रति विपाकस्यापि रसरूपत्वाल्लक्षणमाह—परमित्यादि । प्रायोग्रहणात्

वर्त्तते। प्रायश इत्यनेन कणाशुण्ठ्यादीनां कटूनां कटुरसस्य मधुरः पाकः। पटोलपत्रवेत्राग्रादीनाञ्च तिक्तानां तिक्तरसस्य च मधुरः पाकः। तथा हरीतक्यादीनां कषायद्रव्याणां कषायरसस्य मधुरः पाको न विरुध्यते। एवमम्लो रसोऽम्लं पच्यते। प्रायशोऽम्लो रसोऽम्लविशेषरूपेणाभिनिष्पन्नः संस्तत्र रसधातौ वर्त्तते। प्रायश इत्यनेनामलकस्याम्लस्याम्लो रसो मधुरः पच्यते। इति न विरुध्यते। तथा स्वादुमधुरं लवणस्तथा। स्वादुर्मधुरो रसः प्रायशो मधुरं यथा स्यात् तथा विपच्यते। मधुरविशेषरूपेणाभिनिष्पन्नः संस्तत्र रसाख्यधातौ वर्त्तते। तथा लवणश्च रसो मधुरं यथा स्यात् तथा प्रायशः पच्यते। मधुररसविशेषरूपेणाभिनिष्पन्नः संस्तत्र रसधातौ वर्त्तते। प्रायश इत्यनेनानसीतैलं मधुरमम्लं विपाके कटुकमिति। पांशुजं लवणं कटु। इति रसोपदेशेन कटुपाकश्चोक्त इति विरोधः। अथ सुश्रुते दृश्यते तद्यथा— "तत्राहुरन्ये प्रतिरसं पाक इति। केचित् त्रिविधमिच्छन्ति मधुरमम्लं कटुकञ्च इति। तत् तु न सम्यक्, भूतगुणादागमाच्च अम्लविपाको नास्ति। पित्तं हि विदग्धमम्लतामुपैति अग्नेर्मन्दत्वात्। स यद्येवं लवणोऽप्यन्यः पाको भविष्यति। श्लेष्मा हि विदग्धो लवणतामुपैति। मधुरो मधुररसस्याम्लोऽम्लस्य। एवं सर्व्वेषामिति केचिदाहुः। दृष्टान्तञ्चोपदिशन्ति यथा—तावत् क्षीरं स्थालीगतमभिपच्यमानं मधुरमेव स्यात् तथा शालियवमुद्गादयः प्रकीर्णाः स्वभावमुत्तरकालेऽपि न परित्यजन्तीति तद्वत्। केचिद्वदन्ति अबलवन्तो बलवतां वशमायान्तीत्येवमनवस्थितिस्तस्मादसिद्धान्त एषः। आगमे हि द्विविध एव पाको मधुरः कटुश्चेति। तयोर्मधुराख्यो गुरुः कटुकाख्यो लघुरिति। तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति गुणसाधर्म्यात् गुरुता लघुता च। पृथिव्यापश्च गुर्व्व्यः शेषाणि लघूनि। तस्मात् द्विविध एव पाक इति। भवन्ति चात्र। द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः। निर्व्वर्त्तन्तेऽधिकास्तत्र पाको मधुर उच्यते॥ तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु। निर्व्वर्त्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते॥ इति।" तत् कथमत्राम्लविपाकवचनं सङ्गच्छत इति? अत्रोच्यते केश्चित् व्रीहिकुलत्थादीनामम्लपाक उपलभ्यते पित्तकोपलिङ्गेन। तथाम्बुपृथिवीगुणानामाधिक्येनाभिनिर्वृत्त्या मधुरः पाको गुरुरुक्तः। तेजोवाय्वाकाशगुणानामाधिक्येनाभिनिर्वृत्त्या कटुकः पाको लघुः

पिप्पलीकुलत्थादीनां रसानुगुणपाकितां दर्शयति; कटुकादिपाकेन तदाधारं द्रव्यमुच्यते, यतः न रसाः पच्यन्ते, किन्तु द्रव्यमेव; लवणस्तु तथेति लवणोऽपि मधुरविपाकप्राय इत्यर्थः;

इति चेत् तर्हि कः पाकोऽम्लस्य तोयाग्निगुणभूयिष्ठस्य ? भूम्यग्निगुणबहुलस्य सुश्रुतोक्तस्य लवणस्य कषायस्य तु पवनपृथिवीगुणबहुलस्य च कः पाक इति। मधुरकटुपाकव्यतिरिक्तपाकस्वीकारमन्तरेण नोपपत्तिः स्यादिति। य एवाम्लपाकश्चरकेणोक्तः स सुश्रुतेनोष्णवीर्यमुच्यते ततस्तन्त्रकारयोर्न विरोधः। सुश्रुतेनाम्लपाको यत् खण्डितः पित्तं हि विदग्धमम्लतामुपैत्यग्नेर्मन्दत्वात्, तदनश्चापगमान्निरस्तमिति। एष सिद्धान्तो न मनोरमः स्यात्। यदि हे व्रीहिकुलत्थादीनामम्लपाक उपलभ्यते तदा पाकस्य त्रैविध्ये सिद्धे सुश्रुतोक्तद्वैविध्यं व्याहन्यते। तदर्थमम्लपाको वीर्यमुष्ण इति वचनमयुक्तम्। वीर्येण रसविपाकाभिभवात्। लवणकटुकद्रव्ययोरप्युष्णवीर्यमस्ति किमर्थं तद्विपाकः स्वीकृत इति ? अथात्र ब्रूमः। वह्निमान्द्येन विदग्धस्य पित्तस्य अम्लत्वे भुक्तानां षड्रसानामम्लः पाकः। स चेदिष्टस्तदा कफस्य विदग्धस्य लवणत्वे भुक्तानां षड्रसानां लवणः पाकश्चतुर्थ एव स्वीकार्यः स्यादिति वचनेन भूतगुणादागमाच्चेति वचनेन च तेषां त्रिविधपाकः प्रत्याख्यातः। ये केचित् षड्रसस्याहारस्य प्राकृतवैकारिकसाधारणत्वेन त्रिविधः पाको मधुरोऽम्लः कटुकश्चेत्याहुः ; ये चैके प्रतिरसं पाक इत्याहु ; न तु षड्रसस्याहारस्य भुक्तस्य षण्णां रसानां मध्ये कटुतिक्तकषायाणां प्रायशोऽवैकारिकः कटुविपाकोऽम्लस्य अम्लो मधुरलवणयोर्मधुर इति पाकत्रयं प्रत्याख्यानम्। जतूकर्णेनाप्युक्तकटादीनां कटुर्विपाकोऽम्लोऽम्लस्य शेषयोर्मधुर इति। तथा च षड्रसेषु द्रव्येषु भुक्तेषु येषु पच्यमानेषु अम्बुपृथिव्योर्गुणो व्यग्निणा गुरुत्वरादयो द्रवादयोऽधिका व्यक्तत्वेनाभिनिर्वर्त्तन्ते सजातीयरूपान्तरत्वेन निष्पद्यन्ते, तत्र द्रव्येषु स पाको मधुरो नामोच्यते स गुरुः पाक उच्यते, गुरुगुणसाधर्म्यादम्बुपृथिव्योः। तस्मादत्र मधुरशब्दो गुरुपाके पारिभाषिको न तु मधुररसारूपे पाके। त्रयो हि रसा मधुरकषायलवणा गुरव उक्ताः। उत्तममध्यमावरास्ते तत्तद्रसद्रव्याणि तथैव गुरूणि तथैव चिरमध्यावरकाले पच्यन्त इति गुरुपाक उक्त, न तु मधुरलवणयोः रसमात्रयोः पाको मधुर उक्तः। इह तु मधुररसद्रव्यलवणरसद्रव्ययोः पच्यमानयोर्मधुरो रसो लवणश्च रसो मधुरविशेषरूपेण पच्यते। तत्र मधुररससहचारिताः स्निग्धगुरुशीताश्च तद्विशेषेण नितरां पच्यन्ते। लवणरससहचारितास्तु गुरुः स्निग्ध उष्णश्चेति यथोऽपि

विपाकलक्षणन्तु जठराग्नियोगादाहारस्य निष्ठाकाले यो गुण उत्पद्यते, स विपाकः, वचनं हि "जाठरेणाग्निना योगाद् यदुदेति रसान्तरम्। आहारपरिणामान्ते स विपाक इति स्मृतः" इत्यत्र

मधुरत्वेन पाकान्मधुररससहचराः स्निग्धगुरुशीता विशेषेण पच्यन्ते, न तूष्णत्वम् औष्ण्यविशेषेण पच्यते। इति लवणस्य गुरौगुरुपाके पृथिवीगुणानां सजातीयतयाधिक्येनाभिनिर्वृत्तौ नोष्णगणसजातीय उष्णो न भवति मधुररसपाकात्। लवणारम्भकाग्निगुणविनाशे भूमितोयगुणोद्रेकात्। निःसारत्वाद् वह्नेः। भूमितोययोः ससारत्वादुद्रेके शेषाणां भूमितोयगुणानामाधिक्येनाभिनिर्वृत्तिभवतीति द्वयोः अविरोधः। एवं कषायरसद्रव्ये पच्यमाने कषायो रसः कटुरसविशेषरूपेण पच्यते। तत्र कषायरससहचरा रूक्षशीतगुरवस्तु गुणाः पाकात् अमूर्त्तस्य वायोरपगमे तद्गुणस्य शीतस्यापगमे पार्थिवगुणा अधिकत्वेनाभिनिर्वर्त्तन्ते। तस्मादयं गुरुः पाको रसपाके कटुरपि मधुर उच्यते। एवं लघुपाकस्य संज्ञा कटुरुक्तः—"तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु। निर्वर्त्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते॥" इति। तथा च—अम्लकटुतिक्ता अधममध्यमोत्तमा लघव उक्तास्ततस्तत्तद्रसद्रव्याणि तथैव लघूनि। तथैवावरमध्यमोत्तमकाले पच्यन्ते। इति लघुपाक उक्तो भूतगुणपाक एव। न तु अम्लकटुतिक्तरसानां पाक उक्तः। इह तु कटुतिक्तकषायाणां कटुरसपाकोऽम्लस्याम्लरसपाक उक्तः। तस्मादम्लकटुतिक्तद्रव्येषु पच्यमानेषु खल्वम्लरसद्रव्यपाकेऽत्राग्निगुणानामम्लरसव्यतिरिक्तानामाधिक्येन अभिनिर्वृत्तिभवति। अतोऽयमलघुपाक उक्तः। तत्राम्लो रसस्त्वम्ल एव पच्यते विशेषरूपेण तत्राम्लो रसो न तोयगुणो न वाग्निगुण उभयगुणयोगे हि तोयस्यावक्तरसः परिणम्याम्लः पूर्व्वं जातः पश्चादम्लविशेषरूपेण पच्यत इत्यतोऽयं लघुपाकरूपः कटुपाको भूतगुणानामम्ल रसस्य पुनरम्ल एव पाक इत्यविरोधः। कटुतिक्तद्रव्याणां पाके तिक्तस्य कटुरूपेणाभिनिर्वृत्तिः पाकतो हि तिक्तस्याकाशस्याप्रतिघाताभूर्त्तित्वेन तद्गुणपरिणामाभावेन प्रतिघातामूर्त्तिमतो वायोर्गुणपरिणामे तेजोगुणयोगात् कटुभावनिष्पत्तिरिति। इत्थञ्च रसपाकाभिप्रायेण त्रिधा पाक उक्तः। सुश्रुते भूतगुणपाकाभिप्रायेण द्विधा पाक उक्तो गुरुश्च लघुश्चेति क्रमेण मधुरसंज्ञः कटुसंज्ञः। इति। इत्येवं भूतगुणपाके रसपाके चाबलवन्तो बलवतां वशमापद्यमाना नाभिव्यज्यन्ते। बलवन्तश्चाबलवतोऽवजित्याधिक्येनाभिव्यज्यन्ते। इति सर्व्वमतानि साधूनि। वक्ष्यते हि "विरुद्धगुणसमवाये भूयसाल्पमवजीयते" इति। इमे मधुराम्लकटुरूपेण रसानां त्रयो विपाकाश्चरमपरिणामा रसाख्या आप्यातो गणा भवन्ति। न तु पाकारम्भ-

मधुरो लवणाम्लौ च स्निग्धभावात् त्रयो रसाः।
वातमूत्रपुरीषाणां प्रायो मोक्षे सुखा मताः॥
कटुतिक्तकषायाश्च रूक्षभावात् त्रयो रसाः।
दुःखाय मोक्षे दृश्यन्ते वातविण्मूत्ररेतसाम्॥ ६०॥
शुक्रहा बद्धविण्मूत्रो विपाको वातलः कटुः।
मधुरः सृष्टविण्मूत्रो विपाकः कफशुक्रलः॥

चरमपर्य्यन्तं पच्यमाने षड्रसद्रव्ये प्रथममध्यमचरमास्ववस्थासु मधुराम्लकटुरूपाः, ते च वक्ष्यन्ते ग्रहण्यध्याये—"अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः। मधुराख्यात् कफो भावात् फेनभाव उदीर्य्यते॥ परन्तु पच्यमानस्य विदग्धस्याम्लभावतः। आशयाच्च्यवमानस्य पित्तमच्छमुदीर्य्यते॥ पक्वाशयन्तु प्राप्तस्य शोष्यमाणस्य वह्निना। परिपिण्डितपक्वस्य वायुः स्यात् कफभावतः॥" इत्यादि। एवं पक्वस्याहारस्य प्रसादपाको रसो नाम धातुः। किट्टपाको मूत्रपुरीषकफपित्तवाता इति॥ ५९॥

<u>गङ्गाधरः</u>—अथ विपाकानां प्रभावमुपदिश्य तत्कारणरसानां प्रभावमाह—मधुर इत्यादि। स्निग्धभावादुत्तममध्यमाधमस्निग्धत्वाद्वातादीनां प्रमोक्षे प्रायः क्रमेणोत्तममध्यमाधमरूपेण सुखाः सुखकरा मताः। प्रायःपदेन कपित्थादीनामम्लादिरसा ग्राहिणः। कट्वित्यादि। कटुतिक्तकषाया इति कषायकटुतिक्तास्त्रयो रसा रूक्षभावादुत्तममध्यमाधमरूक्षत्वाद्वातादीनां मोक्षे क्रमेणोत्तममध्यमाधमरूपेण दुःखाय दृश्यन्ते। अतिग्राहिणः कषाया मध्यग्राहिणः कटुका अल्पग्राहिणस्तिक्ता इति॥ ६०॥

<u>गङ्गाधरः</u>—अत एव विपाकस्य प्रभावमाह—शुक्रहेत्यादि। कटुर्विपाकः

<u>चक्रपाणिः</u>—सम्प्रति वक्ष्यमाणविपाकलक्षणे मधुराम्लपाकयोर्वातमूत्रपुरीषानवरोधकत्वे तथा कटोर्विपाकस्य वातमूत्रपुरीषविबन्धकत्वे हेतुमाह—मधुर इत्यादि। अत्र मधुराम्ललवणा विपाकनिष्ठाः पाकं गता अपि स्वतः स्नेहगुणयोगात् वातमूत्रपुरीषाणां विसर्गं सुखेन कुर्वन्तीति वाक्यार्थः; तेन मधुराम्लपाकयोरेतत् समानं लक्षणम्; एवं कटुतिक्तकषायेष्वपि विपर्ययेऽपि वाक्यार्थः॥ ६०॥

<u>चक्रपाणिः</u>—सम्प्रति विपाकलक्षणं हेतुमुपपादितं शुक्रहत्वादिविशेषयुक्तं वक्तुमाह—शुक्रहा इत्यादि। अतोऽन्यथेति कटुः।

पित्तकृत् सृष्टविण्मूत्रः पाकोऽम्लः शुक्रनाशनः ।
तेषां गुरुः स्यान्मधुरः कटुकाम्लावतोऽन्यथा ॥
विपाकलक्षणस्याल्प-मध्यभूयिष्ठतां प्रति ।
द्रव्याणां गुणवैशेष्यात् तत्र तत्रोपलक्षयेत् ॥ ६१ ॥

शुक्रहा बद्धविण्मूत्रो वातलश्च । एवं कटुरसस्य ये पूर्व्वोक्ताः कर्म्मविशेषा वक्त्रं शोधयतीत्यारभ्य लघुरुष्णो रूक्षश्चेत्यन्ताः । मधुरो विपाकः श्रेष्ठस्नेहभावात् श्रेष्ठः सृष्टविण्मूत्रकफशुक्रलः पूर्व्वोक्तमधुररसगुणश्च ।

अथाम्लः पाकः स्नेहभावस्य मध्यत्वान्मध्यमरूपेण सृष्टविण्मूत्रः शुक्रनाशनश्च मध्यमः । पित्तकृच्च । एवं पूर्व्वोक्ताम्लरसगुणश्च बोध्यः । इति । ननु विपाकादेव यदि द्रव्यगुणोदयः स्यात् तदा षण्णां रसानां गुणः कथं स्यादिति चेत् ? न । प्राग्विपाकाद्धि रसकार्य्यं भवति पाकादुत्तरं विपाककार्य्यं भवति । अथैषां त्रयाणां विपाकानां संज्ञान्तरमाह—तेषामित्यादि । तेषां मधुराम्लकटुविपाकानां मध्ये मधुरः पाको गुरुः स्यादतो गुरुतोऽन्यथा लघुपाकौ कटुकाम्लौ । तथा हि सुश्रुतादविरोधः । एषां विपाकलक्षणस्य शुक्रहन्त्यादिकर्म्मणः स्वल्पमध्यभूयिष्ठतां प्रति द्रव्याणां

सम्प्रति यथोक्तविपाकलक्षणानां द्रव्यभेदे क्वचिदल्पत्वं क्वचिन्मध्यत्वं क्वचिद्बहुत्वं यथा स्यात्, तदाह—विपाकेत्यादि । विपाकलक्षणस्याल्पभूयिष्ठतामुपलक्षयेत्, प्रतिप्रतिद्रव्याणां गुणवैशेष्यात् हेतोरित्यर्थः, एतेन द्रव्येषु यथा वैशेष्यं मधुरत्वमधुरतरत्वमधुरतमत्वादि, ततो हेतोर्विपाकानामल्पत्वादयो विशेषा भवन्तीत्युक्तं भवति । अत्र केचित् ब्रुवते—प्रतिरसं पाको भवति, यथा— मधुरादीनां षण्णां षण्मधुरादयः पाका इति । कश्चित् ब्रुवते—बलवतां रसानामबलवन्तो रसा वशतां यान्ति, ततश्चानवस्थितः पाकः ; तत्रैतद्द्वितयपाकव्यवस्थाकरणमनादृत्य सुश्रुतेन द्विविधः पाकः 'मधुरः' 'कटु'श्चाङ्गीकृतः ; इह त्वियम्—पञ्चभूतात्मके द्रव्ये पृथिवीतोयातिरेकान्मधुरपाको भवति, शेषलघुभूतातिरेकात्तु कटुकः पाको भवति, यदुक्तम्—"द्रव्येषु पच्यमानेषु येषु स्युः पृथिवीगुणाः । निर्व्वर्त्तन्तेऽधिकास्तत्र पाको मधुर उच्यते ॥ तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु । निर्व्वर्त्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते ॥" इति ; प्रतिरसपाके तथाऽनवस्थितपाके च द्रव्यं रसगुणेनैव तुल्यं पाकावस्थायामपि स्यात्, तेन कश्चित् विशेषो विपाके न तत्र बुध्यत इति सुश्रुतेन तत् पक्षद्वयमुपेक्षितमिति साधु कृतम् ; तृतीयाम्लपाकनिरासं पुनर्दोषमावहति, यतः व्रीहिकुलत्थादीनामम्लपाकतया पित्तकर्तृत्वमुपलभ्यते । अथ मन्यसे—व्रीह्यादेरुष्णवीर्य्यत्वेन तत्र पित्तकर्तृत्वम् ; तत्र मधुरस्य व्रीहेरुष्णत्वे च मधुर-

गुणवैशेष्यादल्पमध्यश्रेष्ठत्वात् तत्र तत्र विपाककर्म्मसु स्वल्पमध्यमश्रेष्ठत्वमुपलक्षयेत्। तेन मधुररसविपाको मधुरः श्रेष्ठो विण्मूत्रमोक्षे कफशुक्रवृद्धौ च। लवणरसविपाको मधुरस्त्वल्पः सृष्टविण्मूत्रः कफशुक्रलश्चाल्पः। अम्लश्च मध्यमः सृष्टविण्मूत्रः शुक्रनाशनश्च मध्यमः। तिक्तकटुकषायाणां तिक्तरसविपाकः कटुरल्परूपेण शुक्रहा बद्धविण्मूत्रो वातलश्च। कटुरसविपाकः

विपाकस्योष्णवीर्य्यतायामपि सत्यां न पित्तकर्तृत्वमुपपद्यते रसविपाकाभ्यामेतस्य वीर्य्यस्य बाधनीयत्वात्; किञ्च, अम्लपाकत्वात् व्रीह्यादेः पित्तमम्लगुणमुपपद्यते, यदि तु तदुष्णवीर्य्यताकृतं स्यात्, तदा कटुगुणभूयिष्ठं पित्तं स्यात्। दृश्यते च व्रीहिभक्षणादम्लोद्गारादिना अम्लगुणभूयिष्ठतैवेति; किञ्च, पृथिवीसोमगुणातिरेकान्मधुरपाको भवति वाय्वग्न्याकाशातिरेकाच्च कटुर्भवतीत्यपेक्षया यदा व्यामिश्रगुणातिरेकता स्यात्, तदा सौम्याग्नेयात्मकस्याम्लस्योत्पादः कथं प्रतिक्षेपणीयः? अथवा तन्त्रकारयोः किमनयोरनेन वचनमात्रविरोधेन कर्त्तव्यम्? यतः यदम्लपाकं चरको ब्रूते, तत् सुश्रुतेन वीर्य्यमुष्णमिति कृत्वा समाधीयते, तेन न कश्चिद् द्रव्यगुणे विरोधः; यत्तु सुश्रुते अम्लपाकनिरासार्थं दूषणमुच्यते—"पित्तं हि विदग्धमम्लतामुपैति" इत्यादिना, तदनभ्युपगमादेव निरस्तम्। ननु लवणस्य मधुरपाकित्वे पित्तकर्तृत्वमनुपपन्नं, तथा तिक्तकषाययोः कटुपाकित्वे पित्तकर्तृत्वमनुपपन्नम्; नैवम्, यद्यपि लवणस्य मधुरपाकित्वं तत्र लवणे रस उष्णञ्च वीर्य्यं बलि तेन तु पित्तकर्तृत्वादिकारकत्वम्; विपाकस्तु तत्र पित्तरक्तहरणलक्षणे कार्य्ये बाधितः सन् "सृष्टविण्मूत्रः" इत्यादिना लक्षणेन लक्ष्यत एव। एतेन, यदुच्यते—लवणे मधुरो विपाकश्चेत्, रसवीर्य्याभ्यां बाधितः सन् स्वकार्य्यकरो न स्यात्, तत् किं तेनोपदिष्टेनेति तन्निरस्तं स्यात्, यतः अनेनैव सृष्टविण्मूत्रतादिना तत्र लवणे मधुरविपाकित्वं लक्षणीयम्; अनया दिशा तिक्तकषाययोरिति पूर्व्वपक्षपरिहारः। अन्ये तु दोषभयात् लवणोऽम्लं पच्यत इति व्याख्यानयन्ति "लवणस्तथा" इत्यत्र तथा पदेन विप्रकृष्टस्याम्लस्य कर्षणादिति; तच्च, "कट्वादीनां कटुको विपाकोऽम्लोऽम्लस्य शेषयोर्मधुरः" इति जतूकर्णवचनात्; न च वाच्यम्,—कस्मात् त्रय एव विपाका भवन्ति, न पुनस्तिक्तादयोऽपीति, यतः भूतस्वभाव एवैषः, येन मधुरादयस्त्रय एव भवन्ति, भूतस्वभावाश्चापर्य्यनुयोज्याः। ननु, यत्र रसविपरीतः पाकः—यथा—लवणस्य मधुरः, तिक्तकषाययोश्च कटुः, स उच्यताम्, यस्तु समानगुणो मधुरस्य मधुरोऽम्लस्य अम्लः कटुकस्य वा कटुकः, तत्कथने किं प्रयोजनम्; यतः रसगुणैरेव तत्र विपाकगुणोऽपि ज्ञास्यते; नैवम्, येन, लवणादिवत्तिक्तादावम्लादौ च पाकशङ्कानिरासार्थमपि तत्रानुगुणोऽपि विपाको वक्तव्य एव, विपाकजश्च रस आहारपरिणामान्ते भवति, प्राकृतस्तु रसो विपाकविरहः परिणामकालं वर्ज्जयित्वा ज्ञेयः तेन, पिप्पल्याः कटुकरसत्वमाद्यौ कफस्योल्लेखनछेदनगुणशोधनादिकर्तृत्वेन सप्रयोजनम्, मधुरविपाकत्वन्तु परिणामेन वृष्यत्वज्ञापनेन सप्रयोजनम्; यथा यत्र विपाकस्य रसाः समानगुणतयानुगुणा भवन्ति, तत्र बलवत् कार्य्यं भवति; विपर्य्यये तु दुर्ब्बलमिति ज्ञेयम्; एतच्च पाकत्रयं द्रव्यनियतं प्रतिद्रव्यव्याये वक्ष्यमाणाहारावस्था-

मृदुतीक्ष्णगुरुलघु-स्निग्धरूक्षोष्णशीतलम् ।
वीर्य्यमष्टविधं केचित् केचिद् द्विविधमास्थिताः ॥
शीतोष्णमिति वीर्य्यन्तु क्रियते येन या क्रिया ।
नावीर्य्यं कुरुते किञ्चित् सर्व्वा वीर्य्यकृता हि सा ॥

कटुमध्यमरूपेण । कषायरसविपाकः कटुकतमरूपेणेति । इत्येवं द्रव्याणां स्नेहरौक्ष्यादिगुणांशेनोत्पादल्पमध्यश्रेष्ठत्वादुपलक्ष्य ब्रूयात् ॥ ६१ ॥

गङ्गाधरः—ननु स्नेहादयो गुणाः किं कुर्व्वन्ति कदा चेति ? अत आह—मृद्वित्यादि । मृद्वादिकमष्टविधं वीर्य्यमास्थिताः केचिदपरे केचिच्छीतोष्णमित्येव द्विविधं वीर्य्यमास्थिताः । इति । सुश्रुते चोक्तं—"तत्र वीर्य्यं द्विविधम् उष्णं शीतञ्चाग्नीषोमीयत्वाज्जगतः । केचिदष्टविधमाहुः उष्णं शीतं स्निग्धं रूक्षं विशदं पिच्छिलं मृदु तीक्ष्णञ्च इत्येतानि वीर्य्याणि स्वबलगुणोत्कर्षात् रसमभिभूयात्मकर्म्म कुर्व्वन्ति । इति । "तत्र य इमे गुणा वीर्य्यसंज्ञकाः शीतोष्णस्निग्धरूक्षमृदुतीक्ष्णविशदपिच्छिलास्तेषां तीक्ष्णोष्णावाग्नेयौ शीतपिच्छिलावम्बुगुणभूयिष्ठौ पृथिव्यम्बुगुणभूयिष्ठः स्नेहः । वाय्वग्निभूयिष्ठं रौक्ष्यम् । तोयाकाशभूयिष्ठं मृदुत्वम् । क्षितिसमीरणभूयिष्ठं वैशद्यम् । गुरुलघुविपाकावुक्तगुणौ । तत्रोष्णस्निग्धौ वातघ्नौ । शीतमृदुपिच्छिलाः पित्तघ्नाः । तीक्ष्णरूक्षविशदाः श्लेष्मघ्नाः । गुरुपाको वातपित्तघ्नः । लघुपाकः श्लेष्मघ्नः । तेषां मृदुशीतोष्णतीक्ष्णाः स्पर्शग्राह्याः । पिच्छिलविशदौ चक्षुःस्पर्शाभ्याम् । स्निग्धरूक्षौ चाक्षुषौ । शीतोष्णौ सुखदुःखोत्पादनेनेति" । अत्र पिच्छिलविशदौ न वीर्य्यसंज्ञयोक्तौ गुरुलघू च वीर्य्यसंज्ञयोक्तौ । सुश्रुते विपाकावुक्ताविति । तत्र स्वमतमाह—वीर्य्यन्त्वित्यादि । क्रियते येन या क्रिया तस्यां क्रियायां तस्य सा क्रिया साधनं वीर्य्यं भवति । तर्हि किं द्रव्याणां गुणाः कर्म्माणि च चिन्त्यान्यचिन्त्यानि प्रभावाख्यानीति सर्व्वं वीर्य्यं भवतीति ? अत आह—नावीर्य्यमित्यादि । किञ्चिदप्यवीर्य्यं वस्तु न किञ्चित् कर्म्म

पाकात् भिन्नमेव, तत्र अविशेषेण सर्व्वेषामेव रसानामवस्थापाकात् त्रयः पाका वाच्याः "अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः" इत्यादिना ग्रन्थेन ॥ ६१ ॥

चक्रपाणिः—एकीयमतेन वीर्य्यलक्षणमाह—मृद्वित्यादि । पूर्व्वमेवोक्तमप्यत्र पारिभाषिकीं वीर्य्यसंज्ञां पुरस्कृत्य प्रवृत्तम् । केचिद्धि रसविपाकप्रभावव्यतिरिक्ते प्रभूतकार्य्यकारिणि गुणे "वीर्य्यम्" इति संज्ञा, तेन अष्टविधवीर्य्यवादिमते पिच्छिलविशदाख्यौ गुणौ न रसादिविपरीतं

रसो निपाते द्रव्याणां विपाकः कर्म्मनिष्ठया।
वीर्य्यं यावदधीवासान्निपाताच्चोपलभ्यते ॥ ६२ ॥

कुरुते। कस्मात्? सर्व्वा क्रिया हि यस्माद्वीर्य्यकृता द्रव्येष्वारोप्यते। सुश्रुतेऽप्येवम्। येन कुर्व्वन्ति तद्वीर्य्यमिति तथा द्विधा वीर्य्यमष्टधा वीर्य्यञ्चानयोर्द्वयोर्मतेऽन्तर्भूतं भवति। ननु सुश्रुते चोक्तम्—"तत् द्रव्यमात्मना किञ्चित् किञ्चिद्वीर्य्येण सेवितम्। किञ्चिद्रसविपाकाभ्यां दोषं हन्ति करोति वा॥" इति। स्वयञ्चात्राध्याये पूर्व्वमुक्तं—तत्र किञ्चिद्द्रव्याणि गुणप्रभावादेव कार्म्मुकाणि भवन्ति। द्रव्याणि हि द्रव्यप्रभावाद् गुणप्रभावात् यत् कुर्व्वन्ति तत् कर्म्म इत्यादि। तत् कथं नावीर्य्यं कुरुते किञ्चित् सर्व्वा वीर्य्यकृता हि सा इति सङ्गच्छते? उच्यते—तद्द्रव्यमात्मना किञ्चिदिति यदुक्तं तदात्मना स्ववीर्य्येण प्रभावेणेति च द्रव्यस्य वीर्य्येणेति ततो नानुपपत्तिः।

यद्यप्येवं द्रव्याणां स्वप्रभावो वीर्य्यं गुणाश्च रसादयः सर्व्वाणि वीर्य्याणि तत् कथं रसादीनां भेद उपलभ्यत इति? अत उच्यते—रसो निपात इत्यादि। द्रव्याणामभ्यवह्रियमाणानां मुखे रसनायां निपाते रसो मधुरादिः

---

कार्य्यं प्रायः कुर्व्वन्ति, तेन तेषां रसाद्युपदेशेनैव ग्रहणं। मृद्वादीनान्तु रसाद्यभिभावकत्वमस्ति, यथा—पिप्पल्यां कटुरसकार्य्यं पित्तकोपनमभिभूय तद्गतं मृदुशीतवीर्य्यं पित्तमेव शामयत इति, तथा कषाये तिक्तानुरसे महति पञ्चमूले रसकार्य्यं वातकोपनमभिभूय उष्णेन वीर्य्येण तद्विरुद्धं वातशमनमेव क्रियते, तथा मधुरे पयसि शीतवीर्य्यत्वेन वातवृद्धिरित्यादि; यदुक्तं सुश्रुते—"एतानि खलु वीर्य्याणि स्वबलगुणोत्कर्षात् रसमभिभूयात्मकर्म्म दर्शयन्ति" इत्यादि; शीतोष्ण-वीर्य्यवादिमतन्तु अग्नीषोमीयत्वाज्जगतः शीतोष्णयोरेव प्राधान्यात् ज्ञेयम्, यदुक्तं—नाना-रसात्मकमपि द्रव्यमग्नीषोमौ महाबलौ। व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित् ॥ एतच्च मतद्वयमप्याचार्य्यस्य परिभाषासिद्धमनुमतमेव, येन उत्तरत्र "रसवीर्य्यविपाकानां सामान्यं यत्र लक्ष्यते" इत्यादौ पारिभाषिकमेव वीर्य्यं निर्द्देक्ष्यति। पारिभाषिकवीर्य्यसंज्ञापरित्यागेन तु शक्तिपर्य्यायस्य वीर्य्यस्य लक्षणमाह—वीर्य्यमित्यादि। वीर्य्यमिति शक्तिः, येनेति रसेन वा विपाकेन वा प्रभावेण वा गुर्व्वादिपरत्वादिभिर्वा गुणैर्या क्रिया तर्पणह्लादनशमनादिरूपा क्रियते इत्युपदिश्यते, तस्यां क्रियायां तद्रसादि वीर्य्यम्, अत एवोक्तं सुश्रुते,—"येन कुर्व्वन्ति तद्वीर्य्यम्" इति। अत्रैव लोकप्रसिद्धामुपपत्तिमाह—नावीर्य्यमित्यादि। अवीर्य्यमशक्तिमित्यर्थः; वीर्य्यकृतेति वीर्य्येण कृता वीर्य्यकृता।

रसादीनामेकद्रव्यनिविष्टानां भेदेन ज्ञानार्थं लक्षणमाह—रसो निपात इत्यादि।

रसवीर्य्यविपाकानां सामान्यं यत्र लक्ष्यते।
विशेषः कर्म्मणाञ्चैव प्रभावस्तस्य स स्मृतः॥
कटुकः कटुकः पाके वीर्य्योष्णश्चित्रको मतः।
तद्वद् दन्ती प्रभावात् तु विरेचयति मानवम्॥

उपलभ्यते। न तु सर्व्वं वीर्य्यम्। नहि विपाकोऽपि वीर्य्यं निपाते द्रव्याणां नोपलभ्यते। कथमुपलभ्यते? तदाह—विपाकः कर्म्मनिष्ठयेति। द्रव्याणां भुक्तानां यावन्ति कर्म्माणि तावतां कर्म्मणां निष्ठया परिसमाप्त्या विपाक उपलभ्यते। नहि रसविपाकयोर्वीर्य्ययोरुपलब्धिकारणमुक्त्वा शेषं यावद्वीर्य्य संज्ञं तदुपलब्धिमाह वीर्य्यं यावदित्यादि। द्रव्याणां रसनायां निपातात् प्रभृति शरीरेऽधीवासात् यावदुपलभ्यते। कदाचित् कस्यचित् रसस्योपलब्धिः निपाते विपाकस्य कर्म्मनिष्ठया शेषाणां यथार्हमिति॥ ६२॥

गङ्गाधरः—ननु द्रव्याणां गुणाः कर्म्माणि च दृश्यन्ते पदार्थाः, द्रव्यप्रभावश्च कीदृश इति? अत उच्यते रसेत्यादि। यत्र वस्तुनि रसवीर्य्यविपाकानां सामान्यं यस्य रसस्य यत् कार्य्यं यस्य विपाकस्य च यत् कार्य्यं यस्य वीर्य्यस्य च यत् कार्य्यं ततस्य सामान्यं यत्र वस्तुनि लक्ष्यते तत्र कर्म्मणाञ्च यो विशेषो लक्ष्यते स कर्म्मणां विशेषस्तस्य वा वस्तुनः प्रभावः स्मृतः। तदुदाहरति—कटुक इत्यादि। चित्रकः कटुको रसे पाके च कटुकः। वीर्य्ये चोष्णः। तस्य

निपात इति रसनायोगे, कर्म्मनिष्ठयेति कर्म्मणो निष्ठा निष्पत्तिः कर्म्मनिष्ठा क्रियापरिसमाप्तिः रसोपयोगे सति योऽन्त्याहारपरिणामकृतः कर्म्मविशेषः कफशुक्राभिवृद्ध्यादिलक्षणः, तेन विपाको निश्चीयते. अधीवासः सहावस्थानं, यावदधीवासादिति यावच्छरीरनिवासात्, एतच्च पाकात् पूर्व्वं निपातात्चोर्द्ध्वं ज्ञेयम्। निपाताच्चेति शरीरसंयोगमात्रात्, तेन किञ्चिद् वीर्य्यमधीवासादुपलभ्यते, यथा—आनूपमांसादेरुष्णत्वम्, किञ्चिच्च निपातादेव लभ्यते यथा—मरीचादीनां तीक्ष्णत्वादि, किञ्चिच्च निपाताधीवासाभ्याञ्च यथा—मरीचादीनां दीपनीयादीनाम् एव, एतेन रसः प्रत्यक्षेणैव, विपाकस्तु नित्यपरोक्षत्वात्कार्य्येणानुमीयते, वीर्य्यन्तु किञ्चिदनुमानेन, यथा—सैन्धवगतं शैत्यम् आनूपमांसगतं वा औष्ण्यं, किञ्चिच्च वीर्य्यं प्रत्यक्षेणैव यथा—राजिकागतं तैक्ष्ण्यं घ्राणेन, पिच्छिलविशदस्निग्धरूक्षादयः चक्षुःस्पर्शनाभ्यां निश्चीयन्ते इति वाक्यार्थः। एतच्च वीर्य्यं सहजं कृत्रिमञ्च ज्ञेयम्, एतच्च यथासम्भवं गुरुत्वादिषु वीर्य्येषु लक्षणं ज्ञेयम्, द्रव्याणामिति उपयुज्यमानद्रव्याणाम्; एतच्च वीर्य्यलक्षणं पारिभाषिकमेव॥६२॥

चक्रपाणिः—प्रभावलक्षणमाह—रसवीर्य्येत्यादि। सामान्यमिति तुल्यता, विशेषः कर्म्मणाम् इति दन्त्याद्याश्रयाणां विरेचनत्वादीनां; सामान्यं लक्ष्यत इत्यनेन रसादिकार्य्यत्वेन यथाव-

विषं विषघ्नमुक्तं यत् प्रभावस्तत्र कारणम्।
ऊर्द्ध्वानुलोमिकं यच्च तत् प्रभावप्रभावितम्॥
मणीनां धारणीयानां कर्म्म यद् विविधात्मकम्।
तत् प्रभावकृतं तेषां प्रभावोऽचिन्त्य उच्यते॥ ६३॥

तस्य कार्य्यं सामान्यं कटुरसस्य यत् कार्य्यं कटुपाकस्य यत् कार्य्यमुष्णवीर्य्यस्य च यत् कार्य्यं तत्तल्लक्ष्यते न चाधिकं कर्म्म लक्ष्यते। तद्वद् दन्ती रसे कटुका पाके कटुका वीर्य्ये चोष्णा तत्तद्रसपाकवीर्य्याणां कर्म्माणि शुक्रहननविण्मूत्रबन्धादीनि यानि तेषु मध्ये सर्व्वं सामान्यं लक्ष्यते विशेषस्तु विरेचनं कर्म्म लक्ष्यते यत्तत् प्रभावान्मानवं विरेचयति। अपरञ्च—विषमित्यादि। विषं विषघ्नं यदुक्तं जङ्गमविषघ्नं स्थावरविषं, स्थावरविषघ्नं जङ्गमविषं विपरीतगतित्वात्। जङ्गमविषमूर्द्ध्वगं स्थावरविषमधोगममिति परस्परं गतिविपरीतत्वेन मिथो नाशकमपि यद्गतिविपर्य्ययः स प्रभावादेवेति। यच्चोर्द्ध्वानुलोमिकं द्रव्यं मदनादित्रिवृतादिकं तदपि प्रभावप्रभावितम्। एवं चन्द्रकान्तादीनां मणीनां ग्रहपीडादिशान्त्यर्थं मपामार्गमूलादीनां धारणीयानां यद्दाहविषादिग्रहपीडादिप्रशमनादिकं विविधात्मकं कर्म्म दृश्यते तेषां प्रभावकृतं तत्तत् कर्म्म न तु रसपाकवीर्य्यकृतं भवति। ननु येन या क्रिया क्रियते तस्यां क्रियायां तस्य तद्वीर्य्यमुक्तम्। ततो वीर्य्यमेव प्रभावः कथं वीर्य्यसामान्ये कर्म्मविशेष एव प्रभावोऽतिरिच्यत इति? अत आह—प्रभावोऽचिन्त्य उच्यते इति। येन कुर्व्वन्ति तद्वीर्य्यमिति

धारयितुं शक्यते कार्य्यं, तत् प्रभावकृतमिति सूचयति, अत एवोक्तम्—"प्रभावोऽचिन्त्य उच्यते"। रसवीर्य्यविपाकतयाऽचिन्त्य इत्यर्थः। अस्यैव दुरधिगमत्वादुदाहरणानि बहून्याह—कटुक इत्यादिना। तद्वद्दन्ती चित्रकसमानगुणा, विषघ्नमुक्तमिति 'तस्माद् दंष्ट्राविषं मौलम्' इत्यादिना; ऊर्द्ध्वानुलोमिकमिति युगपत् उभयभागहरम्; दिवा, ऊर्द्ध्वहरं तथानुलोमकरञ्च।

कर्म्म यद्विविधात्मकमिति विषहरणशूलहरणादि; एतच्चोदाहरणमात्रम्, तेन, जीवनमेध्यादिद्रव्यस्य रसाद्यचिन्त्यं सर्व्वं 'प्रभावः' इति ज्ञेयम्; प्रभावश्चेह द्रव्यशक्तिरभिप्रेता, सा च द्रव्याणां सामान्यविशेषः—दन्तीत्वादियुक्ता व्यक्तिरेव, यतः शक्तिर्हि स्वरूपमेव भावानाम्, नातिरिक्तं किञ्चिद्धर्मान्तरं भावानाम्; एवं प्रदेशान्तरोक्तगुणप्रभावेष्वपि वाच्यम्, यथोक्तं—'द्रव्याणि हि द्रव्यप्रभावात् गुणप्रभावात्' इत्यादि; न च वाच्यम्—दन्त्यादिरेव

किञ्चिद् रसेन कुरुते कर्म्म वीर्य्येण चापरम्।
द्रव्यं गुणेन पाकेन प्रभावेण च किञ्चन ॥

साधारणलक्षणेन रसपाकशब्दस्पर्शादिगुरुलाघवादीनि कर्म्माणि च सर्व्वाणि वीर्य्याणि भवन्ति। तत्र यस्य यत् कर्म्म तत् तस्य चिन्तया निर्व्वक्तुं शक्यं तद्व्यतिरिक्तं द्रव्यस्य यत् कर्म्मविशेषः सोऽचिन्त्यः तत्तद्रसपाकगुणकर्म्मभिः कार्य्यतया चिन्तयितुमशक्यस्ततः प्रभावः शक्तिविशेष उच्यते। प्रभवनं प्रभावः सामर्थ्यं स्वस्वारम्भकद्रव्यसंयोगे समवेतानां तेषां द्रव्यगुणकर्म्मणां द्रव्यगुणयोः सजातीयारम्भकत्वात् तत्र द्रव्यात् सजातीयद्रव्यान्तरं जायते गुणात् सजातीयगुणान्तरं जायते। कर्म्मणास्तु सजातीयकर्म्मारम्भकत्वनियमाभावात् कर्म्मासाध्यकर्म्माभावाच्च यत्र विजातीयं कर्म्म तदारम्भकद्रव्याणां कर्म्माण्यारभन्ते। तद्विजातीयं कर्म्म खल्वचिन्त्यं स प्रभाव उच्यते। कार्य्यभूतं कर्म्मेदं कर्म्मपदार्थः प्रभावः। कार्य्यद्रव्यं दन्त्यादिकं तत्कर्म्मविशेषेण स्वीयेन प्रभावेण विरेचनादि कर्म्म करोतीति ॥ ६३ ॥

गङ्गाधरः—तथा चोच्यते—किञ्चिदित्यादि। द्रव्यन्तु रसेन किञ्चित् कर्म्म कुरुते। अपरं किञ्चित् कर्म्म वीर्य्येण वीर्य्यसंज्ञकेन गुणाष्टकेन कुरुते। किञ्चन कर्म्म गुणेन रसवीर्य्यसंज्ञगुणव्यतिरिक्तेन गन्धादिस्थिरसरादिना कुरुते। किञ्चन कर्म्म पाकेन कुरुते। किञ्चन कर्म्म स्वस्य प्रभावेण कुरुते। इति प्राधान्याद्द्रव्यप्रभाव उदाहृतः। रसादीनां खलु मधुरादीनामपि यत् स्वस्वलक्षणं स्वभावसिद्धं तत् तस्य तस्य प्रभावकृतमुन्नेयम्। यथाग्ने रूपं प्रकाशयति भूमे रूपं तमो न प्रकाशयति। औष्ण्यं दहति शैत्यं शीतयतीत्येवमादि सर्व्वं प्रभावतदेव नाप्रभावं किञ्चिदस्ति द्रव्यं वा गुणो वा कर्म्म वेति।

स्वरूपत एव विरेचयति, तेन किमिति जलाद्युपहता दन्ती न विरेचयतीति ; प्रतिबन्धकाभावविशिष्टस्यैव प्रभावस्य कारणत्वात्, जलोपहतायां दन्त्यां जलोपघातः प्रतिबन्धक इत्याद्यनुसरणीयम् ; नैयायिकप्रक्रियाऽत्र—या च विषस्य विषघ्नत्वे उपपत्तिरुक्ता उद्र्ध्वाधोगामित्वविरोधलक्षणा, साप्यसम्भावितत्वात् प्रभावादेव स्यात् ; एवमुक्तानुलोमिकत्वादौ पार्थिवत्वादिलक्षणेऽपि वाच्यम् ॥ ६६ ॥

रसं विपाकस्तौ वीर्य्यं प्रभावस्तान्यपोहति।
गुणसाम्ये * रसादीनामिति नैसर्गिकं बलम्॥
सम्यग्विपाकवीर्य्याणि प्रभावश्चाप्युदाहृतः।
षण्णां रसानां विज्ञानमुपदेक्ष्याम्यतः परम्॥ ६८॥

ननु मृदुतीक्ष्णादयोऽष्टौ गुणाः कथं वीर्य्यसंज्ञया पृथगुपदिश्यन्ते इति? अत उच्यते—रसमित्यादि। द्रव्ये यो रसो वर्त्तते यदि पाकश्च स एव रसः स्यात् तदा न विरोधः स्यात्। यत्र द्रव्ये रसपाकयोर्विरोधो वर्त्तते यथा—तिक्तः पित्तशमनस्तस्य पाकः कटुः पित्तवर्द्धनस्तत्र विपाको रसमपोहति स्वबलगुणोत्कर्षात्। तिक्तस्तु प्राग्विपाकात् स्वकर्म्म करोति पाके तु कटुः सन् तिक्तकर्म्म न कृत्वा कटुककर्म्म करोतीति। वीर्य्यन्तु मृदुतीक्ष्णादिगुणाष्टकं तौ रसविपाकौ विरोधिनौ अपोहति स्वबलगुणोत्कर्षात्। यथार्कागुरुगुडूचीनां तिक्तं रसं कटुञ्च विपाकमुष्णवीर्य्यमपोहति। निपातावधि यावद्वीर्य्यं तिक्तकार्य्यकटुपाककार्य्यं न कुर्वाण्णवीर्य्यकार्य्यमर्कादीनि कुर्व्वन्ति। प्रभावस्तु तानि रसविपाकवीर्य्याण्यपोहति स्वबलगुणोत्कर्षात्। यथा दन्ती कटुरसकार्य्यं कटुपाककार्य्यमुष्णवीर्य्यकार्य्यञ्च निरस्य प्रभावकार्य्यं विरेचनं करोति। कुत एवं बलाबलं रसादीनामिति? अत उच्यते—गुणसाम्य इत्यादि। रसादीनां रसविपाकवीर्य्यप्रभावाणां गुणकर्म्मतया विशेषे सत्यपि द्रव्यस्य कार्य्यभूतस्य द्रव्यगुणकर्म्मसमुदायात्मकस्यारम्भकाणां द्रव्याणां प्राधान्यात् द्रव्यांशस्य प्राधान्यं गुणकर्म्मणामारम्भकाणामप्राधान्यात् तदारब्धगुणकर्म्मणामपि रसविपाकवीर्य्यसंज्ञप्रभावाणां गुणीभावात् गुणसंज्ञा तद्गुणभावसाम्येऽपि स्वस्वातिबलं रसादधिकं बलं विपाकस्य विपाकाद्वीर्य्यस्य वीर्य्यात् प्रभावस्य यत् तन्नैसर्गिकं स्वाभाविकं स्वभावसिद्धं न तु कारणजमिति। सुश्रुतेऽप्युक्तं—"एतानि वीर्य्याणि स्वबलगुणोत्कर्षात् रसमभिभूयात्मकर्म्म कुर्व्वन्ति। यथा—तावन्महत् पञ्चमूलं कषायं तिक्तानुरसं वातं शमयत्युष्णवीर्य्यत्वात्। तथा कुलत्थः कषायः कटुकः पलाण्डुः स्नेहभावाच्च। मधुर-

चक्रपाणिः—विज्ञायतेऽनेनेति विज्ञानं लक्षणमित्यर्थः॥ ६५॥

* बलसाम्ये इति वा पाठः।

स्नेहनप्रीणनाह्लाद-मार्द्दवैरुपलभ्यते।
मुखस्थो मधुरश्चास्यं व्याप्नुवन् लिम्पतीव च॥

इक्षुरसो वातं वर्द्धयति शीतवीर्य्यत्वात्। कटुका पिप्पली पित्तं शमयति मृदुशीतवीर्य्यत्वात्। अम्लमामलकं लवणं सैन्धवञ्च। तिक्ता काकमाची पित्तं वर्द्धयति उष्णवीर्य्यत्वात्। मधुरा मत्स्याश्च। कटुकं मूलकं श्लेष्माणं वर्द्धयति स्निग्धवीर्य्यत्वात्। अम्लं कपित्थं श्लेष्माणं शमयति रूक्षवीर्य्यत्वान्मधुरं क्षौद्रञ्च। तदेवं निदर्शनमात्रमुक्तम्। भवन्ति चात्र। ये रसा वातशमना भवन्ति यदि तेषु वै। रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम्॥ ये रसाः पित्तशमना भवन्ति यदि तेषु वै। तैक्ष्ण्यौष्ण्यलघुताश्चापि न ते तत्-कर्म्मकारिणः॥ ये रसाः श्लेष्मशमना भवन्ति यदि तेषु वै। स्नेहगौरवशैत्यानि बलासं वर्द्धयन्ति ते॥ तस्माद्वीर्य्यं प्रधानमिति। नेत्याहुरन्ये विपाकः प्रधान-मिति। कस्मात्? सम्यङ्मिथ्याविपाकत्वात्, इह सर्व्वद्रव्याण्यभ्यवहृतानि सम्यङ्मिथ्याविपक्वानि गुणं दोषं वा जनयन्तीति। पाको नास्ति विना वीर्य्याद्वीर्य्यं नास्ति विना रसात्। रसो नास्ति विना द्रव्यात् द्रव्यं श्रेष्ठमतः स्मृतम्॥ जन्म तु द्रव्यरसयोरन्योन्यापेक्षिकं स्मृतम्। अन्योन्यापेक्षिकं जन्म यथा स्याद् देहदेहिनोः॥ वीर्य्यसंज्ञा गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः। द्रव्ये द्रव्याणि यस्माद्धि विपच्यन्ते न षड्रसाः। श्रेष्ठं द्रव्यमतो ज्ञेयं शेषा भावा-स्तदाश्रयाः॥ अमीमांस्यान्यचिन्त्यानि प्रसिद्धानि स्वभावतः। आगमेनोप-योज्यानि भेषजानि विचक्षणैः॥ प्रत्यक्षलक्षणफलाः प्रसिद्धाश्च स्वभावतः। नौषधीर्हेतुभिर्विद्वान् परीक्षेत कथञ्चन। सहस्रेणापि हेतूनां नाम्बष्ठादि-र्विरेचयेत्। तस्मात् तिष्ठेत् तु मतिमानागमे न तु हेतुषु॥" इति।

अथोपसंहरति—सम्यगित्यादि। अतः परं विपाकवीर्य्यप्रभावाणामुदा-हरणात् परम्। विज्ञानं विज्ञानसाधनं स्वरूपतो लक्षणम्॥ ६४॥

गङ्गाधरः—तद्यथा—स्नेहनेत्यादि। मधुरो रसो मुखस्थः सन् स्नेहनादिभिः कर्म्मभिस्तु रसनेन्द्रियेणोपलभ्यते। अम्लोऽन्यैरुपलभ्यते। तद्व्याख्यानार्थम् आह—मुखस्थ इत्यादि। मुखस्थः सन्नास्यं व्याप्नुवन् लिम्पतीव मुखमुपलभ्यते। न ह्यन्ये रसा आस्यं व्याप्नुवन्त आस्यं लिम्पन्तीवोप-लभ्यन्ते।

दन्तहर्षान्मुखास्रावात् स्वेदनान्मुखबोधनात्।
प्राश्यैवाम्लरसं विद्याद् विदाहाच्चास्यकण्ठयोः॥
प्रीणयन्* क्लेदविष्यन्द मार्दवं कुरुते मुखे।
यः शीघ्रं लवणो ज्ञेयः स विदाहान्मुखस्य च॥
संवेजयेद् यो रसनां निपाते मुह्यतीव† च।
विदहन् मुखनासाक्षि-संस्रावी स कटुः स्मृतः॥
प्रतिहन्ति निपाते यो रसनं स्वदते न च।
स तिक्तो मुखवैशद्य-शोषप्रह्लादकारकः॥

अम्लविज्ञानमाह—दन्तेत्यादि। अम्लं रसं प्राश्यैव तद्रसद्रव्यं दन्तहर्षादितो विद्यात्। दन्तहर्षश्च मुखस्रावश्च स्वेदनश्च मुखप्रबोधनश्चास्यकण्ठविदाहश्चाम्लप्राशने स्यादिति। एवञ्च लवणप्राशनेऽपि स्यात् तद्व्यावृत्त्यर्थमाह—प्रीणयन्नित्यादि। यो रसः प्राश्यमानः खलु प्राशितारं जनं प्रीणयन् मुखे क्लेदादीनि कुरुते शीघ्रं न तु दन्तहर्षं कुरुते स रसो मुखस्य विदाहाच्च लवणो ज्ञेय इति। मधुरस्य मुखविदाहादिकर्म्माभावादम्ललवणाभ्यां भेदः, दन्तहर्षाभावाल्लवणस्याम्लतो भेदः।

तर्हि मुखविदाहश्च कटुकादपि भवतीति? अत आह—संवेजयेदित्यादि। यो रसो मुखे निपाते रसनं संवेजयेदुद्वेजयेत्। मुह्यतीव मोहयतीव यः। मुखनासाक्षि विदहन् यो मुखादिस्रावी स्यात् स कटुकः स्मृतः। इति पूर्व्वाभ्यां भेदः।

तिक्तरसविज्ञानमाह—प्रतिहन्तीत्यादि। यो रसो मुखे निपाते रसनं प्रतिहन्ति न च स्वदते। रसनस्य तदा स्वादनक्रियायामनुत्साहः प्रतिघातः। स्वदते हि न। लवणकटुकयोरेवं रसप्रतिघातकत्वे तद्वारणार्थं स्वदते न चेति। यथा मधुराम्लौ स्वदेते न तथा लवणकटुकाविति तत्-

चक्रपाणिः—प्रह्लीयमिति विलीनो भवन्, संस्रावयतीति संस्रावी। विकासीति हृदयविकसनशीलः, उक्तं हि सुश्रुते—"हृदयं पीडयति" इति॥ १५॥

* प्रीणयन्निति-अत्र प्रह्लीयन् इति पाठान्तरम्।

† मुह्यतीवेत्यत्र तुदतीवेति वा पाठः।

वैषम्य*स्तम्भजाड्यैर्यो रसनं योजयेद्रसः ।
बध्नातीव च यः कण्ठं कषायः स विकास्यथ ॥ ६५ ॥

एवमुक्तवन्तं भगवन्तमात्रेयं पुनरग्निवेश उवाच । भगवन् ! श्रुतमेतदवितथमर्थसम्पद्युक्तं भगवतो यथावद्‌द्रव्यगुणकर्म्माधिकारे वचः । परन्तु आहारविकाराणां वैरोधिकानां लक्षणमनतिसंक्षेपेणोपदेश्यमानं शुश्रूषामहे इति ॥ ६६ ॥

तमुवाच भगवानात्रेयः, देहधातुप्रत्यनीकभूतानि द्रव्याणि देहधातुभिर्विरोधमापद्यन्ते—परस्परगुणविरुद्धानि कानिचित्

व्याहृत्यर्थमाह—मुखेत्यादि । मुखस्य लेपस्त्रावविष्यन्दकरणमन्तरेणैवापच्छिल्यं वैशद्यम्, शोषः शुष्कीभावः, अप्रह्लादः आह्लादाभावः । स तिक्तो रसः स्मृतः ।

कषायविज्ञानमाह—वैषम्येत्यादि । यो रसस्तु मुखे निपतितः सन् रसनं वैषम्यस्तम्भजाड्यैर्योजयेत्, कण्ठञ्चातीव च बध्नाति, विकाशी च सन्धिबन्धं विमोक्षयन् विकशति स कषायो रसः स्मृतः । सुश्रुते तूक्तं हृदयं पीडयतीति ॥ ६५ ॥

गङ्गाधरः—एवमित्यादि । एवमित्याहारविनिश्चये द्रव्याणां रसविपाकवीर्य्यप्रभावानुक्तवन्तं भगवन्तमात्रेयं गुरुमग्निवेश उवाच । यदुवाच तदाह—भगवन्नित्यादि । भगवन् ! भगवतः श्रुतमेतद्‌द्रव्यगुणकर्म्माधिकारे यथावदवितथमर्थसम्पद्युक्तं वच उक्तम् । परन्तु खल्वाहारविकाराणामोदनव्यञ्जनादीनां वैरोधिकानामनतिसंक्षेपेण भगवतोपदिश्यमानं लक्षणं भगवतः शुश्रूषामहे वयमिति ॥ ६६ ॥

गङ्गाधरः—तमुवाचेति । तं तथा पृष्टवन्तमग्निवेशं भगवानात्रेय उवाच । यदुवाच तदाह—देहधात्वित्यादि । देहधातुप्रत्यनीकभूतानीति देहधातूनां

चक्रपाणिः—संप्रति विरुद्धाहारं वक्तुमाह—एवमित्यादि । शरीरधातुविरोधं कुर्व्वन्तीति वैरोधिकाः, लक्ष्यते वैरोधिकमनेनेति लक्षणं—वैरोधिकाभिधायको ग्रन्थ एव ; "यत् किञ्चिद्दोषमास्राव्यम्" इत्यादि वैरोधिकलक्षणं ज्ञेयम् ॥ ६६ ॥

चक्रपाणिः—देहधातुप्रत्यनीकभूतानीति देहधातूनां रसादीनां वातादीनाञ्च प्रकृतिस्थानां

* वैषम्येत्यत्र वैशद्येति पाठः साधीयान् ।

कानिचित् संयोगात् संस्कारादपराणि देशकालमात्रादिभिश्चापराणि तथा स्वभावादपराणि। द्रव्याणि तत्र यान्याहारमधिकृत्य भूयिष्टम् उपयुज्यन्ते तेषामेकदेशं वैरोधिकम् अधिकृत्य उपदेक्ष्यामः॥ ६७॥

न मत्स्यान् पयसा सहाभ्यवहरेत्, उभयं ह्येतन्मधुरं मधुरविपाकान्महाभिष्यन्दि, शीतोष्णत्वाद्विरुद्धवीर्य्यं विरुद्ध-

रसादीनां पुरीषमूत्रवातपित्तकफादीनां स्वेदादीनाञ्च प्रकृतिस्थानां प्रत्यनीकभूतानि गुणविपरीतगुणयोगेन नाशकभूतानि द्रव्याणि देहधातुभिः सह विरोधमापद्यन्ते न समानगुणानि। इत्याहारविकाराणां वैरोधिकानां लक्षणम्।

ननु देहधातुप्रत्यनीकानि कानि द्रव्याणि कथं भवन्तीति? अत उच्यते—परस्परेत्यादि। कानिचिद् द्रव्याणि देहधातुसमगुणान्यपि द्रव्यान्तरसंयोगात् परस्परं गुणतो विरुद्धानि भवन्ति। अपराणि कानिचिद् द्रव्याणि संस्कारात् परस्परगुणविरुद्धानि भवन्ति। एवमपराणि कानिचिद् द्रव्याणि देशकालमात्राप्रकृतिवयोऽवस्थादिभिर्योगेनैकशोऽपि विरुद्धगुणानि भवन्ति। तथा स्वभावादपराणि कानिचिद् द्रव्याणि स्वरूपत एव देहधातुविपरीतगुणतया गुणविरुद्धानि भवन्ति। तानि देहधातुप्रत्यनीकानि द्रव्याणि। तत्राहारमधिकृत्य यानि द्रव्याणि यथाभूयिष्ठं यथा स्यात् तथोपयुज्यन्ते तेषां द्रव्याणामेकदेशं कियद्द्रव्यं वैरोधिकमधिकृत्योपदेक्ष्यामः। इति प्रतिज्ञातम्॥ ६७॥

गङ्गाधरः—तद्यथा—न मत्स्यानित्यादि। मत्स्यान् निखिलान् पयसा सह नाभ्यवहरेत्। कस्मात्? उभयमित्यादि। हि यस्मादुभयं मत्स्याश्च पयश्चेत्युभयं रसे मधुरं मधुरविपाकाच्च महाभिष्यन्दि भवति। पयसः शीतवीर्य्यत्वान्मत्स्यस्योष्णवीर्य्यत्वात् विरुद्धवीर्य्यं तस्माच्छोणितदूषणाय तत् पयसा

प्रत्यनीकस्वरूपाणि, विरोधमापद्यन्त इति देहधातूनां विरोधमाचरन्ति दूषयन्तीति यावत्; यथाभूतानि द्रव्याणि देहधातुभिर्विरोधमापद्यन्ते तदाह—परस्परविरुद्धानि कानिचिदित्यादि। तत्र परस्परविरुद्धानि यथा—"न मत्स्यान् पयसाऽभ्यवहरेदुभयं ह्येतद्" इत्यादिनोक्तानि;

वीर्य्यत्वाच्छोणितदूषणाय महाभिष्यन्दित्वान्मार्गोपरोधाय चेति ॥ ६८ ॥

तदनन्तरमात्रेयवचनमनु भद्रकाप्योऽग्निवेशमुवाच । सर्व्वानेव मत्स्यान् पयसा सहाभ्यवहरेदन्यत्र कस्माच्चिलिचिमात् । स पुनः शकली सर्व्वतो लोहितराजी रोहिताकारः प्रायो भूमौ चरति । तं चेत् पयसा सहाभ्यवहरेन्निःसंशयं शोणितजानां विरुद्धजानाञ्च * व्याधीनामन्यतममथवा मरणमवाप्नुयात् ॥ ६९ ॥

सह मत्स्यभोजनं महाभिष्यन्दित्वान्मार्गोपरोधाय च तद्भवतीत्यनेन ज्ञापितम् । रसपाकतस्तुल्यानां संयोगेऽतिमात्रं तद्रसमानं भवति । रसतस्तुल्यानि पाकतश्चाभिन्नानि स्युस्तेषां संयोगान्न तथातिमात्रं विरुद्धत्वम् । पाकतस्तुल्यानां रसतो भिन्नानाञ्च संयोगेऽपि न तथातिमात्रं विरुद्धत्वमिति ॥ ६८ ॥

गङ्गाधरः—तदनन्तरमित्यादि । भद्रकाप्यो यदुवाच तदाह—सर्व्वानेव इत्यादि । एकं चिलिचिमं मत्स्यं विना सर्व्वानेव मत्स्यान् पयसाऽभ्यवहरेत् । कः पुनश्चिलिचिम इत्यत आह—स पुनः शकली नान्दोलिमत्स्य इति ख्यातो भवति । सर्व्वतः सर्व्वपार्श्वे लोहितवर्णराजी रोहितमत्स्याकारश्च प्रायो भूमौ चरति । तं चिलिचिमं चेत् पयसाभ्यवहरेत् तदा निःसंशयं

संयोगविरुद्धं यथा—"तदेव निकुचं पक्वं न माष" इत्यादिनोक्तम्, यत् संस्कारादिविरुद्धगुणकथनं विना साहित्यमात्रेण विरुद्धमुच्यते, तत् संयोगविरुद्धम् ; मत्स्यपयसोस्तु यद्यपि सहोपयोगो विरुद्धत्वेनोक्तः, तथाप्यसौ गुणविरुद्धत्वेन कथित इति गुणविरोधकस्यैवोदाहरणम् ; विरोधश्च विरुद्धगुणत्वे सत्यपि क्वचिदेव द्रव्यप्रभावात् स्यात्, तेन षड्रसाहारोपयोगे मधुराम्लयोर्विरुद्धशीतोष्णवीर्य्ययोर्विरोधो न भावनीयः ; संस्कारविरुद्धं यथा—"न कपोतान् सर्षपतैलभृष्टान्" इत्यादि । देशो द्विविधः—भूमिः शरीरञ्च ; तत्र भूमिविरुद्धं यथा—"तदेव भस्मपांशुपरिध्वस्तम्" किंवा "यत् किञ्चिद्गोचरभूतम्" तद्देशविरुद्धम् ; शरीरविरुद्धं यथा—"उष्णार्त्तस्य मधु मरणाय" ; कालविरुद्धं यथा—"पर्य्युषिता काकमाची मरणाय" ; मात्राविरुद्धं यथा—"समधृते मधुसर्पिषी मरणाय" ; आदिग्रहणात् दोषप्रकृत्यादिविरुद्धानां ग्रहणं ; स्वभावविरुद्धं यथा—विषम् ।

* विबन्धजानाञ्चेति पाठान्तरम् ।

नेति भगवानात्रेयः,—सर्व्वानेव मत्स्यान् न पयसा सहाभ्यवहरेद्विशेषतस्तु चिलिचिमम्* स हि महाभिष्यन्दित्वात्, स्थूललक्षणभवानेतान् व्याधीनुपजनयत्यामविषमुदीरयति च ग्राम्यानूपौदकानि पिशितानि च मधुगुडतिलपयमाष-मूलकमृणालविरूढ़धान्यैश्च नैकध्यमाददीत; तन्मूलं हि वाधिर्य्यान्ध्य†जाड्यविकलमूकतामैन्मिन्यमथवा मरण-मवाप्नोतीति। न कपोतान् सर्षपतैलभृष्टान् मधुपयोभ्यां शोणितजानां विरुद्धाहारजानाञ्च व्याधीनामन्यतमं व्याधिमाप्नुयात्। मरणं वाप्नुयात्॥ ६९॥

गङ्गाधरः—इति भद्रकाप्यवचनं निशम्य नेत्यात्रेय उवाच। कस्मान्नेत्युच्यते तत्राह—सर्व्वानेवेत्यादि। सर्व्वानेव मत्स्यान पयसा नाभ्यवहरेत्। विशेषतस्तु चिलिचिमं पयसा नाभ्यवहरेत्। कस्मात्? स हीत्यादि। हि यस्मात् स चिलिचिमो महाभिष्यन्दी यतस्ततः पयसा सह संयोगेऽतिमहाभिष्यन्दी भूत्वा स्थूललक्षणभवान स्थूलाहारजलक्षणैरूत्पन्नानेतान विरुद्धाहारजान शोणित-दुष्टिजान व्याधीनुपजनयति तथामविषमलसकमुदीरयति चेति तत्त्वम्। सुश्रुतेऽप्युक्तं—"सर्व्वांश्च मत्स्यान पयसा विशेषण चिलिचिमं नाऽश्नीयात्" इति। अथापरमाह—ग्राम्येत्यादि। ग्राम्याद्यन्यतममांसं मध्वाद्यन्यतमञ्च सहैकध्यं नाददीत, कस्मात्? तन्मूलं हीत्यादि। हि यस्मात् तद्ग्राम्यादिमांसमध्वादि-संयोगविरुद्धाहारमूलमान्ध्यादिकमथवा मरणञ्च। जाड्यमव्यक्तवचनं, विकलं मनसो वैकल्यं व्याकुलत्वं, मूकता वागरहितत्वं, मैन्मिन्यं सानुनासिकवचनत्व-मिति। सुश्रुते च—"न विरूढ़धान्यवसामधुपयोगुड़माषर्वा ग्राम्यानपौदक-पिशितादीन्यभ्यवहरेत्" इति। न कपोतानित्यादि। वनकपोतान

वैरोधिकमधिकृत्येति वैरोधिकमुद्दिश्य, शीतोष्णत्वादिति—पयः शीतम् उष्ण-वीर्य्याश्च मत्स्याः, शेषं मधुरत्वादि समानम्; एतच्च प्रभावादेव विरोधि। "स पुनः शकली" इत्यादिना नान्दिविशिति स्यातो मत्स्य उच्यते॥ ६७—६९॥

चक्रपाणिः—ग्राम्यपिशितादीनि मध्वादीनामन्यतमेनापि विरुद्धानि; कलमूकेति कल-

---

* महाभिष्यन्दित्वमत्स्वादिति वा पाठः।

† इत परं वैपथ्यमिति अधिक, तथा "विकलमूकता" इत्यत्र "कलमूकता" इति चक्रसम्मतः पाठः।

सहाभ्यवहरेत्। तन्मूलं हि शोणिताभिष्यन्दधमनीप्रविचयापस्मारशङ्खकगलगण्डरोहिणीनामन्यतमं प्राप्नोत्यथवा मरणम्। तथा न मूलकलशुनकृष्णगन्धार्ज्जकसुमुखसुरसादीनि भक्षयित्वा पयः सेव्यं कुष्ठाबाधभयात्। न जातुशाकं न च निकुचं पक्वं मधुपयोभ्यां सहोपयोज्यम्, एतद्धि मरणायाथवा बलवर्णतेजोवीर्य्योपरोधाय अलघुव्याधये षाण्ढ्याय चेति। तदेव निकुचं पक्वं न माषसूपगुड़सर्पिर्भिः सहोपभोज्यं वैरोधिकत्वात्। तथाम्राम्रातकमातुलुङ्गनिकुचकरमर्द्दमोचदन्तशठबदरकोषाम्रभव्यजाम्बवकपित्थतिन्तिड़ीपारावता-

सर्षपतैलभृष्टान् मधुपयोभ्यां सह नाभ्यवहरेत्। कस्मात्? तन्मूलं हीत्यादि। शोणिताभिष्यन्दनं धमनीप्रविचयः धमनीनां विस्तारभावः। एषामन्यतमं प्राप्नोत्यथवा मरणमिति। सुश्रुते चोक्तं—"न मधुपयोभ्यां कपोतान् सर्षपतैलभृष्टानद्यात्" इति। तथेत्यादि। मूलकादीनामन्यतमं भक्षयित्वा न पयः सेव्यम्। कृष्णगन्धा शोभाञ्जनम्। अर्ज्जकं पर्णासभेदः। सुमुखस्तुलसीभेदः। सुरसः पर्णासः। कस्मात्? कुष्ठाबाधभयात्। न जातुशाकमित्यादि। जातुशाकं वंशानिका। पक्वं निकुचं डहुः। पयोमधुभ्यां नोपयोज्यं नाश्नीयात्, एतद्धि यतस्तन्मरणायाथवा बलवर्णवीर्य्यतेजसामुपरोधाय, अलघुव्याधये गुरुव्याधये षाण्ढ्याय चेति। तदेवमित्यादि। एवं तन्निकुचं पक्वं माषादिभिः सह नोपयोज्यं वैरोधिकत्वात्। तथाम्रेत्यादि। आम्राद्यम्लं सर्व्वं द्रवमद्रवञ्च पयसा सह विरुद्धम्। अम्लञ्चेत्युक्त्या मधुराम्रादीनां न पयसा सह विरोधः। कोषाम्रं वान्याम्रम्। करमर्द्दः पानीयामलकम्। पारावतो जम्बीरविशेषः।

मूकता [illegible]; पौष्करादीनां मधुपयोभ्यां सहाभ्यवहारो विरुद्धः; पौष्करं पुष्करपत्ररूपं शाकं, रोहिणी कटुरोहिणी, धमनीप्रविचयः सिराग्रन्थिः; जातुशाकं वंशपत्रिका; वैरोधिकत्वादित्यनेन प्रकरणलब्धस्यापि वैरोधिकत्वस्य पुनरभिधानं सामान्योक्तवा[illegible]लोपदर्शनार्थम्, एवमन्यत्रापि सामान्येऽपि वैरोधिकत्वमात्राभिधाने बोद्धव्यम्; तथाम्रेत्यादौ 'अम्ल' ग्रहणेन [illegible] नामभिधानं विशेषविरोधसूचनार्थम्; सर्व्वग्रहणेनैव [illegible] पुनर्ग्रहणवचनं 'सर्व्वं' [illegible] प्रतिपादनार्थं, भवति हि प्रकरणात्

चोड़पनसनारिकेलदाड़िमामलकान्येवंप्रकाराणि चान्यानि सर्व्वञ्चाम्लं द्रवमद्रवञ्च पयसा सह विरुद्धम्, तथा कङ्गुवरकमुकुष्ठककुलत्थमाषनिष्पावाः पयसा सह विरुद्धाः ॥ ७० ॥

पद्मोत्तरिकाशाकं शार्करो मैरेयो मधु च सहोपयुक्तं विरुद्धं वातञ्चातिकोपयति। हारिद्रकः सर्षपतैलभृष्टो विरुद्धः पित्तञ्चातिकोपयति। पायसो मन्थानुपानो विरुद्धः श्लेष्माणञ्चातिकोपयति, उपोदिका तिलकल्कसिद्धा हेतुरतीसारस्य। बलाका वारुण्या सह कुल्माषैरपि विरुद्धा, सैव शूकरवसाभृष्टा सद्यो व्यापादयति। मयूरमांसम् एरण्डसीसकाग्निप्लुष्टमेरण्डतैलयुक्तं सद्यो व्यापादयति। हारीतकमांसं हरिद्राग्निप्लुष्टं*

आक्षोडः आखरोटः। तथेत्यादि। कङ्गुः कामनिस्तृणधान्यभेदः। वरको वनकोद्रवः ॥ ७० ॥

गङ्गाधरः—पद्मोत्तरिकेत्यादि। पद्मोत्तरिकाशाकं कुसुम्भशाकं, शार्करो मैरेयः शर्कराकृतो मैरेयः, मधु चेति त्रयं सहोपयुक्तम्। हारिद्रकः पक्षिविशेषः। पायस इति पायसं भुक्त्वा मन्थं द्रवणालोड़ितं सक्तुकमनुपिबति यस्तस्य स पायसो विरुद्धः। उपोदिका पुदिना तिलकल्कात्मा पक्कातिसारस्य हेतुः। बलाका काणबकी वारुण्या सह विरुद्धा, कुल्माषैः काञ्जिकैः सहापि विरुद्धा, सैवेति बलाकैव शूकरवसायां भृष्टा। मयूरमांसमेरण्डसीसकावसक्तमेरण्डपत्रवृन्तनालावलम्बमेरण्डकाष्ठाग्निना प्लुष्टं दग्धं पुनरेरण्डतैलयुक्तं भक्षितम्। सुश्रुते च—"कपिञ्जलमयूरलावतित्तिरिगोधाश्चैरण्ड-

एकदेशेऽपि सर्व्वव्यपदेशः, यथा—"सर्व्वान् भोजयेत्" इति, किंवा, सर्व्वग्रहणमम्लपाकानामपि व्रीह्यादीनां ग्रहणार्थम्; पयसेति तृतीययैव सहार्थे लब्धे पुनः 'सह' इत्यभिधानं केवलाम्लकादियुक्तस्यैव विरोधित्वोपदर्शनार्थम्, तेन अम्लपयःसंयोगे गुड़ादिसंयोगे सति विरुद्धत्वं न दुग्धाम्लादीनाम्; वरको वनकोद्रवः, पद्मोत्तरिका कुसुम्भः, शार्कर इति मैरेयविशेषणम्, अति वातं कोपयतीतिवचनेन पित्तकफावल्पं कोपयतीति बोधयति, एवं पित्तञ्चातिकोपयति कफञ्चातिकोपयतीत्येतयोरपि वाच्यम्; हारिद्रको हरिताल इति ख्यातः पक्षी; बलाका वारुण्या सह

* हारिद्रकमांसं हारिद्रसीसकावसक्तम् इति पाठान्तरम्।

सद्यो व्यापादयति । तदेव भस्मपांशुपरिध्वस्तं सक्षौद्रं मरणाय । मत्स्यनिस्तालनसिद्धाः पिप्पल्यस्तथा काकमाची मधु च मरणाय । मधु चोष्णमुष्णार्त्तस्य च मधु मरणाय, मधुसर्पिषी समधृते, मधु वारि चान्तरीक्षं समधृतं, मधु पुष्करबीजं, मधु पीत्वोष्णोदकं, भल्लातकोष्णोदकं, तक्रसिद्धः कम्पिल्लकः, पर्य्युषिता काकमाची, अङ्गारशूल्यो भासश्चेति विरुद्धानि इत्येतद् यथाप्रश्नमभिनिर्द्दिष्टं भवतीति ॥ ७१ ॥

दार्व्वग्निसिद्धा एरण्डतैलसिद्धा वा नाद्यात्" इति । हारीतकः पुनर्हारिद्रपक्षिविशेषस्तस्य मांसं हरिद्रानालादिकनाग्निप्लुष्टम् । पूर्व्वं सार्षपतैलभृष्टं विरुद्धमुक्तमिति न पुनरुक्तम् । तदेव हारीतकमांसं हरिद्राग्निप्लुष्टं भस्मपांशुपरिध्वस्तं क्षौद्रयुक्तं मरणाय भवति । मत्स्यनिस्तालनं मत्स्यभञ्जने क्रियमाणे निर्गतं यन्मत्स्यस्यैव तैलं तेन पक्वाः पिप्पल्यो भक्षिता मरणाय स्युः । तथा चोक्तं जतूकर्णे "मत्स्यवसासिद्धाः पिप्पल्यः" इति । तथाच काकमाची मत्स्यनिस्तालनसिद्धा मरणाय । तथाच सुश्रुते—"मत्स्यपरिपचने सिद्धां शृङ्गवेरपरिपचने वा सिद्धां काकमाचीं नाद्यात्" इति । तथाच मधु मत्स्यनिस्तालनयुक्तं मरणाय भवति । सुश्रुते तु "गुडेन काकमाचीं मधुना मूलकं गुडेन वाराहं मधुना च सह विरुद्धम्" इति । मधु चोष्णं कृतं मरणाय । अन्यातपादिना तृष्णेनार्त्तस्य नरस्य मधु पीतं मरणाय भवति । समधृते समानमानमिते मधुसर्पिषी मिलिते भक्षिते मरणाय भवतः । समधृतं मधु चान्तरीक्षजलञ्च मिश्रितं पीतं मरणाय भवति । मधुपुष्करबीजं पद्मबीजसहितं मधु पीतं मरणाय । मधु पीत्वोष्णजलं पीतं पीत्वा चोष्णजलं मधु पीतं मरणाय भवतीति । "मधु चोष्णोदकानुपानम्" इति सुश्रुतः । भल्लातकोष्णोदकं संयुक्तं मरणाय । तक्रसिद्धः काम्पिल्लो मरणाय, पर्य्युषिता पक्वा काकमाची

विरुद्धा, तथा कुक्कुटमांसेन बलाका विरुद्धा ; एरण्डसीसकावलम्बकमिति, सीसको हि भक्षिकारणकाष्ठमुच्यते ; तदेवेति हारीतकमांसम् ; मत्स्या निस्ताल्यन्ते पच्यन्ते यस्मिन् तन्मत्स्यनिस्तालनम्, किंवा निस्तालनं वसा, जतूकर्णेऽप्युक्तम्—"मत्स्यवसासिद्धाः पिप्पल्यः" इति ; काकमाची मधु चेति संयोगविरुद्धम् ; भासो गोष्ठकुक्कुटः ॥ ७०।७१ ॥

भवन्ति चात्र।

यत्किञ्चिद्दोषमुत्क्लिश्य * न निर्हरति कायतः।
आहारजातं तत्सर्व्वमहितायोपदिश्यते॥ †

पर्य्युषिता मरणाय, अङ्गारशूल्यो भासश्चेति भासो गोष्ठकुक्कुटः स चाङ्गाराग्निना शूलविद्धः पक्को मरणाय भवतीति॥ ७१॥

गङ्गाधरः—अनुक्तवैरोधिकसंग्रहार्थमाह—भवन्ति चात्रेत्यादि। यत्किञ्चिदित्यादि। आह्रियते जिह्वया गलाधः क्रियते इत्याहारस्तस्य जातं समूहः। औषधादीनामप्याहारत्वमतो बोध्यम्। यत्किञ्चिदाहारजातमशितखादितपीत-

चक्रपाणिः—अनुक्तवैरोधिकसंग्रहार्थमाह—यत् किञ्चिदित्यादि। आह्रियत इत्याहारो भेषजम्

* उत्क्लिश्येत्यत्र आस्थाप्य इति चक्रसम्मतः पाठः।

† इतः परं श्लोकाश्चैतेऽष्टादश क्वचिदधिका दृश्यन्ते। यथा—

यच्चापि देशकालाग्नि-सात्म्यासात्म्यानिलादिभिः। संस्कारतो वीर्य्यतश्च कोष्ठावस्थाक्रमैरपि॥
परिहारोपचाराभ्यां पाकात् संयोगतोऽपि च। विरुद्धं तच्च न हितं हृत्सम्पद्विधिभिश्च यत्॥
विरुद्धं देशतस्तावद् रूक्षतीक्ष्णादि धन्वनि। आनूपे स्निग्धशीतादि भेषजं यन्निषेव्यते॥
कालतोऽपि विरुद्धं यच्छीतरूक्षादिसेवनम्। शीते काले तथोष्णे च कटुकोष्णादिसेवनम्॥
विरुद्धमनले तद्वदन्नपानं चतुर्व्विधे। मधुसर्पिः समधृतं मात्रया तद्विरुध्यते॥
कटुकोष्णादिसात्म्यस्य स्वादुशीतादिसेवनम्। यत् तत् सात्म्यविरुद्धन्तु विरुद्धं त्वनिलादिभिः॥
या समानगुणाभ्यास-विरुद्धाहारौषधक्रिया। संस्कारतो विरुद्धं तद् यद्भोज्यं विषवद् भवेत्॥
एरण्डसीसकासक्तं शिखिमांसं तथैव हि। विरुद्धं वीर्य्यतो ज्ञेयं वीर्य्यतः शीतलात्मकम्॥
तत् संयोज्योष्णवीर्य्येण द्रव्येण सह सेव्यते। क्रूरकोष्ठस्य चात्यल्पं मन्दवीर्य्यमभेदनम्॥
मृदुकोष्ठस्य गुरु च भेदनीयं तथा बहु। एतत् कोष्ठविरुद्धन्तु विरुद्धं स्यादवस्थया॥
श्रमव्यवायव्यायाम-सक्तस्यानिलकोपनम्। निद्रालसस्यालसस्य भोजनं श्लेष्मकोपनम्॥
यच्चानुत्सृज्य विण्मूत्रं भुङ्क्ते यश्चाबुभुक्षितः। तच्च क्रमविरुद्धं स्याद् यच्चातिक्षुद्वशानुगः॥
परिहारविरुद्धन्तु वराहादीन् निषेव्य यत्। सेवेतोष्णं घृतादींश्च पीत्वा शीतं निषेवते॥
विरुद्धं पाकतश्चापि दुष्टदुर्दारुसाधितम्। अपक्वतण्डुलात्यर्थ-पक्वदग्धञ्च यद् भवेत्॥
संयोगतो विरुद्धं तद् यथाम्लं पयसा सह। अमनोरुचितं यच्च हृद्विरुद्धं तदुच्यते॥
सम्पद्विरुद्धं तद् विद्यादसंजातरसन्तु यत्। अतिक्रान्तरसं वापि विपन्नरसमेव वा॥
ज्ञेयं विधिविरुद्धन्तु भुज्यते निभृते न यत्। तदेवंविधमन्नं स्याद् विरुद्धमुपयोजितम्॥
सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च। स्नेहव्यायामबलिनो विरुद्धं वितथं भवेत्॥ इति

एतासां श्लोकानां चक्रसम्मता टीका तु—"यच्चापि देशकालाग्नि इत्यादिग्रन्थं केचित् पठन्ति; तत्र व्यक्तमेव॥" इति।

लीढं दोषमुत्क्लिश्य कायतो न निर्हरति न बहिः करोति, तत् सर्व्वमाहारजातम् अहितायोपदिश्यते। एतेनान्यत्रोक्तान्यनुमतानि। तथाच सुश्रुते यान्यधिकानि तद्यथा—"काकमाची पिप्पलीमरिचाभ्याम्। नाडीभक्तशाककुक्कुटदधीनि च नैकध्यम्। पित्तेन वा मांसानि। सुराकृशरापायसांश्च नैकध्यम्। सौवीरकेण सह तिलशष्कुलीम्। मत्स्यैः सहेक्षुविकारान्। कदलीफलं तालफलेन पयसा दध्ना तक्रेण वा। निकुचफलं पयसा दध्ना माषसूपेन वा मधुना घृतेन च। प्राक् पयसः पयोऽन्ते वा इति संयोगादहितानि।" संस्कारकर्म्मतो यथा—"कपिञ्जलमयूरलावतित्तिरिगोधाश्चैरण्डदार्व्वग्निसिद्धा एरण्डतैलसिद्धा वा नाद्यात्। कांस्यपात्रे दशरात्रपर्य्युषितं सर्पिः। मत्स्यपरिपचने शृङ्गवेरपरिपचने वा सिद्धां काकमाचीम्। नारिकेलेन वराहवसापरिभृष्टां बलाकाम्। मानविरुद्धौ यथा—स्नेहो मधुस्नेहो जलस्नेहो वा विशेषादान्तरीक्षोदकानुपानौ। अत ऊर्द्ध्वं रसद्वन्द्वानि रसतो वीर्य्यतो विपाकतश्च विरुद्धानि यथा—तत्र मधुराम्लौ रसवीर्य्यविरुद्धौ। मधुरलवणौ च मधुरकटुकौ च सर्व्वतः। मधुरतिक्तौ रसविपाकाभ्याम्। मधुरकषायौ चाम्ललवणौ रसतः। अम्लकटुकौ रसविपाकाभ्याम्। अम्लतिक्तौ अम्लकषायौ च सर्व्वतः। लवणकटुकौ रसवीर्य्याभ्याम्। लवणतिक्तौ लवणकषायौ च सर्व्वतः। कटुतिक्तौ रसवीर्य्याभ्याम्। कटुकषायौ तिक्तकषायौ च रसतः। तरतमयोगयुक्तांश्च भावानतिरूक्षानतिस्निग्धानत्युष्णानतिशीतानित्येवमादीनि विवर्ज्जयेत्। भवन्ति चात्र। विरुद्धान्येवमादीनि रसवीर्य्यविपाकतः। तान्येकान्ताहितान्येव शेषं विद्याद्धिताहितम्॥ सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च। स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत्॥ व्यायामशीलो बलवान् शिशुश्च स्निग्धोऽग्निमांश्चापि महाशनश्च। आप्नोति रोगान् न विरुद्धजानानभ्यासतश्चाल्पतया च जन्तुः॥" इति। अथैषु मध्ये पयसा मत्स्यादीन् संयोगात्। सार्षपतैलभृष्टकपोतादीन् संस्कारात्। भस्मपांशुपरिध्वस्तहारीतकमांसादीन् भूदेशतः। उष्णात्तस्य मधु चेत्यादीन् शरीरदेशतः। पर्य्युषितकम्पिल्लकादीन् कालतः। मधुसर्पिषी समधृते इत्यादिना मात्रातः। आदिना दोषव्याधिप्रकृतिभ्यस्तु वाते कषायरसादीन् रसतः। एवं प्रकृतितश्च। पिण्डालुकादीन् गुल्मादिव्याधितः। विषादीन् स्वभावतो विरुद्धान् विद्यादिति। यानि खलु द्विरसादीनि द्रव्याण्युक्तानि यथायथं द्विदोषादिषुपयोज्यानि तानि

अपि, दोषमात्राधिक्येति दोषानुत्क्लिश्यरूपान् जनयित्वा न निर्हरतीति; अनेन वमनविरेचनद्रव्याणि निराकरोति, तानि हि दोषानात्राय्य निर्हरन्ति।

पाण्ड्यान्ध्यवीसर्पदकोदराणां
विस्फोटकोन्मादभगन्दराणाम्।
मूर्च्छामदाध्मानगलग्रहाणां
पाण्डामयस्यामविषस्य चैव ॥
किलासकुष्ठग्रहणीगदानां
शोफाम्लपित्त-*-ज्वरपीनसानाम्।
सन्तानदोषस्य तथैव मृत्यो-
र्विरुद्धमन्नं प्रवदन्ति हेतुम् ॥ ७२ ॥

एषां खलु परेषाञ्च वैरोधिकनिमित्तानां व्याधीनामिमे भावाः प्रतीघातकरा भवन्ति। यथा वमनं विरेचनं

द्रव्यसहजान्येवोपयोज्यानि न संयोगादित उपयोक्तव्यानि रसद्वन्द्वादीनां विरुद्धत्वात् इति। न तु तत्र सर्व्वमहितायोपदिश्यत इति यदुक्तं, तत् कस्मै कस्मै अहितायेति? अत उच्यते—पाण्ड्यान्ध्येत्यादि। पाण्ड्यं क्लैव्यं चतुर्व्विधं वक्ष्यते। सन्तानदोषस्येति—मृतवत्सादिदोषस्य तथान्यविधदोषस्य। एषां वैरोधिकानां द्रव्यान्तरयोगात् न विरुद्धता भवति। यथा घृतमधुशर्करा इति त्रयं न विरुद्धम् ॥ ७२ ॥

गङ्गाधरः—ननु वैरोधिकाहारजव्याधीनां प्रतीकाराः के भवन्तीति? अत उच्यते—एषामित्यादि। एषां पाण्ड्यान्ध्यादीनामपरेषामनुक्तानाञ्च वैरोधिकाहारनिमित्तानां व्याधीनां प्रतीकारा इमे वक्ष्यमाणा भावा वमनादयो भवन्ति। इमे के भावा इति? अत उच्यते—तद्यथेत्यादि। संशोधनार्थं वमनं विरेचनञ्च।

पाण्ड्यं नपुंसकता, सन्तानदोषो मृतवत्सत्वादि। एतच्च वैरोधिककथनं विशेषवचनेन बाध्यते तेन लशुनस्य क्षीरेण पानं कुर्वन्न विरोधि, यदुक्तं—'साधयेच्छुद्धशुष्कस्य लशुनस्य चतुष्पलम्। क्षीरोदकेऽष्टगुणिते क्षीरशेषञ्च पाययेत्' ॥ तथा 'मूलकस्वरसं क्षीरम्' इत्यादिप्रयोगोऽप्यूह्यः; किंवा अनेकद्रव्यसंयोगादत्र विरोधिनामविरोधः, विरोधिमात्रसंयोग एव

* शोफाम्लपित्तेऽत्र शोषाम्लपित्तेति पाठः।

**तद्विरोधिनाञ्च द्रव्याणां संशमनार्थमुपयोगस्तथाविधैश्च द्रव्यैः पूर्व्वमभिसंस्कारः शरीरस्येति ॥ ७३ ॥**

भवति चात्र ।

**विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम् ।**
**वमनं शमनञ्चैव पूर्व्वं वा हितसेवनम् ॥ ७४ ॥**

तत्र श्लोकाः ।

**मतिरासीन्महर्षीणां या या रसविनिश्चये ।**
**द्रव्याणि गुणकर्म्मभ्यां द्रव्यसंख्या रसाश्रया ॥**

तद्विरोधिनाञ्च द्रव्याणां संशमनार्थमुपयोगः । यद्यद्विरुद्धं द्रव्यमुपयुक्तं भवति तद्विरुद्धद्रव्याणां विरोधीनि यानि द्रव्याणि भवन्ति तेषामुपयोगः प्रयोगः कर्त्तव्यः । तथाविधैश्च द्रव्यैस्तत्तद्विरुद्धद्रव्यविरोधिद्रव्यैरभ्यवहृतैः शरीरस्य अभिसंस्कारो भावविरुद्धद्रव्याहारजदोषहरगुणाधानमिति ॥ ७३ ॥

गङ्गाधरः—तत्र प्रमाणश्लोकः । भवति चात्र । विरुद्धेत्यादि । पूर्व्वं वा हितसेवनं शरीरस्य तत्तद्विरुद्धद्रव्यविरोधिद्रव्यसेवनेन पूर्व्वमभिसंस्कार इति व्याख्यातम् ॥ ७४ ॥

गङ्गाधरः—अथाध्यायार्थसंग्रहार्थमाह—तत्र श्लोका इति । मतिरिति रसविनिश्चये भद्रकाप्यादीनां रसस्यैकत्वादिमतिः एक एवेत्यारभ्य उपदेक्ष्याम इत्यन्तेन । ततोऽग्रे त्यारभ्य तत्फलमित्यन्तेन गुणकर्म्मभ्यां द्रव्याणि । ततो भेदश्चैषामित्यारभ्य संख्यामतिपतन्ति हीत्यन्तेन रसाश्रया त्रिषष्टिरसभेदेन

विरोधी भवति, यत्तु मधुन उष्णेन वमनेन संयुक्तस्य मदनफलादिद्रव्यसंयोगेऽविरोधार्थमुष्णमयमसमनादि, तन्मधुनो द्रव्यान्तरसंयोगेऽप्युष्णसम्बन्धविरोधित्वेन, यतः विषान्वयं मधु, विषस्य चोष्णं विरोधि; लशुनादीनान्तु दुग्धान्तरसंयोगे सत्येव मेलको विरुद्ध इति शास्त्रवचनात् बाध्यते । तद्विरोधिनामिति पाकक्रियादिहराणाम्, तथाविधैरिति विरुद्धाहारजन्यव्याधिविरुद्धैः, अभिसंस्कार इति सततोपयोगेन शरीरभावनम्; किंवा तथाविधैरिति रसायनप्रयोगैः; एतच्च अनागतव्याधिचिकित्सितं ज्ञेयम् ॥ ७२—७४ ॥

चक्रपाणिः—संग्रहे द्रव्यसंख्या रसाश्रया इति भेदश्चैषाम् इत्यादिना, रससंख्या हि पर-

कारणं रससंख्याया रसानुरसलक्षणम्।
परादीनां गुणानाञ्च लक्षणानि पृथक् पृथक्॥
पञ्चात्मकानां षट्त्वञ्च रसानां येन हेतुना।
ऊर्द्ध्वानुलोमभाजश्च यद्गुणातिशयाद् रसाः॥
षण्णां रसानां षट्त्वे च अतिभुक्ता विभक्तयः।
उद्देशश्चापवादश्च द्रव्याणां गुणकर्म्मणि॥
प्रवरावरमध्यत्वं रसानां गौरवादिषु।
पाकप्रभावयोर्लिङ्गं वीर्य्यं संख्याविनिश्चयः॥
षण्णामास्वाद्यमानानां रसानां यत् स्वलक्षणम्।
यद् यद्विरुध्यते यस्माद् येन यत्कारि चैव यत्॥

द्रव्यसंख्या त्रिषष्टिः। ततः संयोगाः सप्तपञ्चाशदित्यारभ्य हेतुलिङ्गोपशान्तिषु इत्यन्तेन रससंख्यायाः कारणम्। व्यक्त इत्यादिना रसो नास्तीह सप्तम इत्यन्तेन रसानामनुरसानाञ्च लक्षणम्। ततः परापरत्वे इत्यारभ्य प्रवक्ष्यते इत्यन्तेन परादीनां गुणानां सप्रयोजनानि स्वरूपनिर्द्देशलक्षणानि पृथक् पृथक्। चकारात् गुणागुणाश्रया नोक्ता इत्यारभ्याथर्मादिशेदित्यन्तेन तन्त्रव्याख्यानोपदेशः। षड्विभक्तीरित्यारभ्य न्यूनातिरेकविशेष इत्यन्तेन पञ्चात्मकानां रसानां भूतद्वयाधिक्येन पाञ्चभौतिकत्वं षट्त्वं तस्य हेतुश्च। ततस्तत्रेत्यादिना पुनरुभयतो भाज इत्यन्तेन यद्गुणातिशयाद्रसा ऊर्द्ध्वानुलोमभाजः। तेषां षण्णामित्यारभ्य सम्यगुपयोजयेदित्यन्तेन षण्णां रसानां षट्त्वे अतिभुक्तानाम् एकैकस्यातिमात्रभुक्तानां विभक्तयो विभागाः। शीतं वीर्य्येणेत्यारभ्य द्रव्याणां गुणकर्म्मणि उद्देशश्चापवादश्च। चकारात् तदुदाहरणानि। ततो रौक्ष्यादिति आरभ्य सोऽम्लरसस्तूभयोरपीत्यन्तेन रसानां गौरवादिषु प्रवरावरमध्यत्वम्, परश्चात इत्यारभ्य तत्रोपलक्षयेदित्यन्तेन पाकस्य लिङ्गम्, ततः परं मृदुतीक्ष्णेत्यारभ्य वीर्य्यसंख्या, वीर्य्यं त्वित्यारभ्य कृता हि सेत्यन्तेन वीर्य्यम्, रसो निपात इत्यारभ्य रसपाकादिज्ञानं, रसवीर्य्येत्यारभ्य उदाहृत इत्यन्तेन सोदाहरणं प्रभावलिङ्गम्। षण्णां रसानामित्यारभ्य सादिकाद्यथ इत्यन्तेन षण्णामास्वाद्यमानानां

भारतो द्रव्यसंख्यैव त्रिशुंश्चयात रसानामित्यर्थः। कारणं रससंख्याया इति "रसानां तत्र

वैरोधिकनिमित्तानां व्याधीनामौषधश्च यत् ।
आत्रेयभद्रकाप्यीये तत् सर्व्वमवदन्मुनिः ॥ ७५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
आत्रेयभद्रकाप्यीयो नाम षड्विंशोऽध्यायः ॥२६॥

रसानां स्वस्वलक्षणं यत्तत् । तत एवमुक्तमित्यारभ्य सर्व्वमहितायोपदिश्यत इत्यन्तेन यस्माद्धेतोर्यद्येन सह विरुध्यते यच्च करोति । ततः पाण्ड्वित्यारभ्य हेतुमित्यन्तेन वैरोधिकद्रव्यनिमित्ता व्याधयस्तेषाञ्च व्याधीनामौषधञ्च यत्तत् । एषां खल्वित्यारभ्य हितसेवनमित्यन्तेन तत्सर्व्वमस्मिन्नात्रेयभद्रकाप्यीयेऽध्याये मुनिरात्रेयः पुनर्व्वसुरवददिति ॥ ७५ ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि, पूर्व्ववत्, इत्यात्रेयभद्रकाप्यीयोऽध्यायः ॥ २६ ॥

इति श्रीगङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ सूत्रस्थानीय-
षड्विंशात्रेयभद्रकाप्यीयाध्यायजल्पाख्या षड्विंशी शाखा ॥२६॥

पाकयत्वाद् इत्यादिना ; विभक्तयो भेदाः "तत्र मधुरः" इत्यादिना ; उद्देशो द्रव्याणां, "शीतं वीर्य्येण" इत्यादिना, अपवादो द्रव्याणाम्, "मधुरं किञ्चिद्" इत्यादिना ॥ ७१ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-
व्याख्यायाम् आत्रेयभद्रकाप्यीयो नाम षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः।

### अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥

इष्टवर्णगन्धरसस्पर्शं विधिविहितमन्नपानं प्राणिनां प्राणि-

गङ्गाधरः—अथाहारद्रव्याणां प्रभेदरससहचरितगुणकर्म्मवीर्य्यविपाकप्रभावान् सामान्यत उक्त्वा प्रतिद्रव्यं विशेषेण उपयोगार्थं वक्तुमन्नपानविधिम् अध्यायमारभते—अथात इत्यादि। अन्नमशनखादनं चर्व्वणसामान्यात्। पानं पानलेहरूपं द्रव्याणां गलाधःकरणसामान्यात्। अन्नञ्च पानञ्चान्नपाने विधीयेते अस्मिन्ननेन वेति अन्नपानविधिरिति कश्चित्. तन्न, यतोऽस्मिन्नध्यायेऽन्नपानयोर्विधानमस्ति। तस्मादन्नपानयोर्विधियतः उपदेशतः सोऽन्नपानविध्युपदेशस्तमधिकृत्य कृतोऽध्याय इति। अन्नपानविधिमत्र तद्धित-लुक्। सर्व्वं पूर्व्ववद्व्याख्यातव्यम् ॥ १ ॥

गङ्गाधरः—कोऽसावन्नपानविधिरुपदेष्टव्य इति? अत उच्यते—इष्टेत्यादि। इष्टाः प्रायेण सर्व्वजनाभिमता वर्णगन्धरसस्पर्शा येषां द्रव्याणां तेषां विधिना इन्द्रियोपक्रमणीयोक्तेन नारत्नपाणिरित्यादिना वक्ष्यमाणरसविमानोक्तेन तदाहारविधानमित्यादिना विहितं कृतमन्नञ्च पानञ्च प्राणिनां स्थावर-

चक्रपाणिः—सम्प्रति सामान्येनोक्तानां गुणकर्म्मभ्यां प्रतिव्यक्त्यनुक्तानां प्रतिव्यक्तिप्रायोपयोगिद्रव्यस्य विशिष्टगुणकर्म्मकथनार्थमन्नपानविधिरध्यायोऽभिधीयते; अत्रोत्पन्नस्य छप्रत्ययस्य लुक्; अत्रान्ने काठिन्यसामान्यात् खाद्यम्, पाने च द्रवत्वसामान्यात् लेह्यमपवर्त्त्यं ज्ञेयम्; अन्नपानं विधीयते विशिष्टगुणकर्म्मयोगितया प्रतिपाद्यतेऽनेनेत्यन्नपानविधिः, द्रव्याणां गुणकर्म्मकथनमेव चान्नपानविधिः, यतः तद्धि शास्त्रादन्नपानं विधीयते ॥ १ ॥

चक्रपाणिः—किं तदन्नपानं करोतीत्याह—इष्टेत्यादि। इष्टमभिमतं हितञ्च, किंवा इष्टमिति प्रियं हितञ्च, तद्विरोधि त्वप्रियम्; हितन्तु विधिविहितशब्देनैव प्राप्यते; विधिर्वक्ष्यमाण-रसविमाने—"तत्रेदमाहारविधानम्" इत्यादिग्रन्थवाच्यः; तथेन्द्रियोपक्रमणीये च "नारत्नपाणिः" इत्यादिनोक्तं विधानं, तेन विधिना विहितं विधिविहितम्; अत्र वर्णादिषु शब्दाग्रहणमन्नपाने प्रायःशब्दस्याविद्यमानत्वात्; वर्णादिषु यद्यत् प्रथममन्नपाने गृह्यते, तत्तत् पूर्व्वमुक्तम्; रसस्तु सर्वस्य पश्चाद्गृह्यमाणोऽपि प्राधान्यख्यापनाय स्पर्शात् प्राक् कृतः; प्राणिनामित्यनेनैव [illegible]ऽपि

संज्ञकानां प्राणमाचक्षते कुशलाः । प्रत्यक्षफलदर्शनात् तदिन्धना ह्यन्तरग्नेः स्थितिस्तत् सत्त्वमूर्ज्जयति । तच्छरीर-

जङ्गमानां वृक्षादिमनुष्यादीनां चेतनाचेतनानां मध्ये प्राणिसंज्ञकानां चेतनानां प्राणं प्राणहेतुत्वात् । आयुर्घृतमितिवत् । वृक्षादयो हि प्राणिनोऽपि न लोके प्राणिसंज्ञयोच्यन्ते । तस्मादुक्तं प्राणिसंज्ञकानामिति । न च तेषाम् अपीष्टवर्णगन्धरसस्पर्शपृथिवीरसपानेनवाप्याय्यन्ते प्राणा न तु विहितान्नपानेन विधिर्हि शास्त्रेऽन्नपानयोरुपदिष्टः न तु यस्य यथान्नपानाभ्यां शरीरमविकलम् आप्याय्यते स तस्यान्नपानविधिः । भवतु वा न चास्ति वृक्षादीनामचेतनप्राणि-नाम् अन्नमिति । बुभुक्षमाणानां प्रथमतोऽन्नपानीययोरिष्टवर्णदर्शनेन मनसा श्रद्धेयत्वं स्यात् । श्रद्धापूर्व्वकान्नपानयोश्च तत् प्राणहेतुत्वमिति ख्यापितम् । एवं गन्धरसस्पर्शानामपि तत्रोपयोगित्वं ज्ञेयम् । पूर्व्वं खल्वन्नं पानं वा दृश्यते ततो गन्ध उपलभ्यते ततः स्पृश्यते ततश्च रस्यते रस इति क्रमेण वर्ण-गन्धस्पर्शरसमित्यानुपूर्व्विकं युज्यमानमपि स्पर्शस्य किञ्चिदनिष्टत्वेऽपि न प्राणहेतुत्वहानिराहारस्य भवति । रसस्य त्वनिष्टत्वे बहुतरप्राणहेतुहानिरन्न-पानयोरिति स्पर्शात् प्राधान्यख्यापनार्थं रसस्य पूर्व्वमुपादानं कृतमाचार्य्येण । पञ्चानां शब्दस्पर्शरूपरसगन्धानामर्थानामन्नपानीयद्रव्येषु वृत्तावपि शब्दस्य इष्टत्वानिष्टत्वयोरन्नपानस्य प्राणहेतुत्वे नुपयोगित्वाभावाच्चापादानं कृतमिति । ननु कुतो हेतोः कुशलास्तथाविधमन्नपानं प्राणमाचक्षते इति ? अत उच्यते, प्रत्यक्षफलदर्शनात् । अत्रान्नपानयोर्भुक्तपीतयोर्लोके प्रत्यक्षेण प्राणजनकत्वं दृष्ट्वा कुशलास्तथाविधान्नपानं प्राणमाचक्षते इति । ननु तथाविधान्नपानयोः प्राणवृद्धिः फलं कथं स्यादिति ? अत उच्यते । तदिन्धनत्वादि । तत्तथाविधान्न-पानं लौकिकाग्निस्थितिकारणमिन्धनमिवेन्धनं यस्या अन्तराग्निस्थितेः सा

'प्राणिसंज्ञकानाम्' इति वचनं स्थावरप्राणिप्रतिषेधार्थम्, वृक्षादयो हि वनस्पतिवर्गानुकारोपदेशात् शास्त्रे प्राणिन उक्ताः, न तु लोके प्राणिसंज्ञकाः, किं तर्हि ? जङ्गमा एव ; इह च मनुष्यस्यैव अधिकृतत्वेऽपि सामान्येन सकलप्राणिप्राणहेतुतया आहारकथनं मनुष्यव्यतिरिक्तेऽपि प्राणिनि आहारस्य प्राणजनकत्वोपदर्शनार्थम् ; प्राणमिति प्राणहेतुत्वात्, यथा—"आयुर्घृतम्" । अथ कथं तत् प्राणमाचक्षत इत्याह—प्रत्यक्षफलदर्शनादिति, प्रत्यक्षेणैव आहारं विधिना कुर्व्वतो प्राणा अनुवर्त्तन्त इति तथा निराहाराणां प्राणा न अवतिष्ठन्त इति दृश्यत इत्यर्थः, प्रत्यक्षशब्दश्चेह अलक्षणप्रमाणे वर्त्तते, यतः प्राणानामन्नकार्य्यत्वमनुमानगम्यमेव ; अन्नकार्य्यत्व एव प्राणानां हेतुम्

धातुव्यूहबलवर्णेन्द्रियप्रसादकरं यथोक्तमुपसेव्यमानं विपरीत-महिताय सम्पद्यते। तस्माद्धिताहितावबोधनार्थमन्नपान-विधिमखिलेनोपदेक्ष्यामोऽग्निवेश ॥ २ ॥

तथा। उक्तं हि "बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः" इति, एतेन तथा-विधान्नपानयोः प्राणहेतुत्ववदन्तरग्निस्थितिहेतुत्वं ज्ञापितं भवति। तयोः कर्म्मान्तरमाह—तदित्यादि। येन यथोक्तमुपसेव्यमानमन्नपानं तत्सत्त्वं तस्य मन ऊर्ज्जयति बलवत् करोति, चौरादिक ऊर्ज्ज बलजीवनयोरिति। कर्म्मान्तर-माह—तच्छरीरेत्यादि। तदन्नपानं येन पुंसा यथोक्तमुपसेव्यते तस्य तदन्न-पानं शरीरधातुव्यूहबलादिकरं शरीरस्य धातवो रसरक्तादयस्तेषां व्यूहं संघातं बलञ्च वर्णञ्च इन्द्रियप्रसादञ्च करोति। विपरीतं यथोक्तविधिविपर्य्ययेणोप-सेव्यमानमन्नपानमहिताय प्राणाग्निस्थितिसत्त्वबलशरीरधातुव्यूहबलवर्णे-न्द्रियप्रसादानां विपर्य्ययाय सम्पद्यते। तस्माद्धेतोर्हिताहितानामवबोधार्थम् अन्नपानयोर्विधिं विधायकमत्यन्तामाप्तस्योपयोगप्रकारस्य प्रापकं नियोगमुप-देक्ष्याम इति व्याचष्टे कश्चित् तन्न। विधिर्ह्यत्र प्रकारवचनो न विधायकवचनः। तस्मादखिलेनान्नपानप्रकारमुपदेक्ष्यामोऽग्निवेशेति। यद्यप्यत्र वक्ष्यते अन्न-पानैकदेशोऽयमुक्तः प्रायोपयोगिकः इति तथाप्यनुक्तानां द्रव्यगुणकर्म्मणामुप-संहारवचनेन निखिलेनोपदेशो नानुपपन्नः ॥ २ ॥

आह 'तदिन्धना' इत्यादिना ; अग्निहेतुश्च प्राणहेतुः, ततोऽन्नं प्राणा इति भावः, उक्तं हि—"बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः" ; किंवा पूर्वमन्नपानस्य प्राणहेतुत्वमुक्तम्, 'तदिन्धना हि' इत्यादिनाग्निहेतुत्वं वर्ण्यते ; सत्त्वमूर्ज्जयतीति मनोबलं करोति ; धातुव्यूहो धातुसङ्घातः ; विपरीतम् अविधिसेवितम्। अन्नपानं विधीयते येन ज्ञानेन तं विधिं द्रव्यगुण-कर्म्मरूपम्, तथा, चरशरीरावयवादिरूपञ्चाखिलेन कार्त्स्न्येनोपदेक्ष्यामः, यद्यपि चेह द्रव्यं प्रतिप्रतिगुणकर्म्मभ्यां न निर्देक्ष्यति वक्ष्यति हि—"अन्नपानैकदेशोऽयमुक्तः प्रायोपयोगिकः" इति, तथाप्यनुक्तानां द्रव्याणामपि चरशरीरावयवाद्युपदेशेन, तथा पूर्वाध्यायोक्तयाथिकादि-द्रव्यगुणकथनेन च तद्विधानामप्युक्तं स्यादित्यत उक्तम्—'अखिलेन' इति, वक्ष्यति हि—"यथा नानौषधं किञ्चिद्देशजानां वचो यथा। द्रव्यन्तु तत्तथा वाच्यमनुक्तमिह यद् भवेत् ॥" तथा, "चर-शरीरावयवाः" इत्यादि ; किंवा, विधिशब्दोऽशितपीतलीढखादितप्रकारवाची, तेन चाशितादयः सर्व्वे एवाखिलेन वाच्याः, तत्कारणभूतानि तु द्रव्याणि एकदेशेनोक्तानि, अत एव वक्ष्यति—"अन्नपानैकदेशोऽयमुक्तः" इति ॥ २ ॥

**तत्स्वभावादुदकं क्लेदयति, लवणं विष्यन्दयति, क्षारः पाचयति, मधु सन्दधाति, सर्पिः स्नेहयति, क्षीरं जीवयति, मांसं बृंहयति, रसः प्रीणयति, सुरा जर्ज्जरीकरोति, सीधुरव-**

गङ्गाधरः—तथान्नपानयोः साधारणयोर्गुणकर्म्माण्यभिधाय तदुपयोग प्राधान्यात् गुणकर्म्मभिर्द्रव्याण्युपदिश्यन्ते—तदित्यादि। तत्स्वभावादिति वक्ष्यमाणानामिहोदकादीनां यद्यत् कर्म्म वक्ष्यते तत्तत्कर्म्मकृदेव स्वभावः। स्वस्वतत्स्वभावात्। तथाच उदकं यत् क्लेदयति तत्तत्क्लेदकृद्-द्रव्यस्वस्वभावात्। इहान्नपानप्रकरणात् उदकस्यान्नपानसाधन यत् कर्म्मणः प्राधान्यं तदुपदेशेन श्रेष्ठतमोपदेशे यदुक्तम् उदकमाश्वासकराणां जलं स्तम्भनानामिति तन्न व्याहन्यते। यदि चान्नसाधने वह्नेरपि प्राधान्यमुदकवत् तुल्यं तथाप्याहारे वह्नेरुपयोगाभावादुदकस्याभ्यव-हृतानामपि क्लेदकत्वादादावुपदेशः। क्लेदोऽवयवसंयोगकाठिन्यविनाशजन्य-द्रवीभावस्तज्जनकव्यापार उदकस्येति। लवणं द्रव्यं विष्यन्दयति तत्-स्वभावात् स्रावयति स्रावजनकव्यापारो लवणस्य सैन्धवादेरिति अन्नोपकरण-व्यञ्जनद्रव्यसाधनोपयोगित्वेनोदकादप्राधान्यं लवणस्य। क्षारः पाचयतीति। क्षारो भस्मीभूतद्रव्यकृतविकारविशेषो यवक्षारादिः यत्किञ्चित् पचन्तम् उष्माणं प्रेरयति तत्स्वभावात्। सैन्धवादिभ्योऽप्राधान्यात् तदनुवचन क्वचिदुपयोगात्। मधु सन्दधाति संश्लेषं करोति तत्स्वभावात् मधु चाहारोपयोगित्वेनेहोक्तम्। सर्पिः स्नेहयति तत्स्वभावात्—दैवादिक ष्णिह ऌ प्रीतिस्नेहनयोः। प्रयोजके णिच्। सर्पिषोऽप्युपकरणं व्यञ्जनादि-संस्कारत्वेन वचनम्। क्षीरं जीवयति तत्स्वभावात्। आयुर्जीवनं तत् करोति। शरीरेन्द्रियसत्त्वात्मसंयोगं द्रढयति। मांसं बृंहयति तत्स्वभावात्। भौवादिको

चक्रपाणिः—अन्नपाने च वक्तव्ये यद्द्रव्यं प्राय उपयुज्यते, तस्य सामान्यगुणमभिधाय वर्गसंग्रहेण गुणमुपदेक्ष्यति ; उदकाभिधानञ्चाग्रे कृतमुदकस्यान्ने पाने च व्याप्रियमाणत्वात् ; तदित्युदाहरणम्, किंवा, स स्वभावो यस्य स तत्स्वभावस्तस्मात् क्लेदनस्वभावादित्यर्थः ; यद्यपि "उदकमाश्वास-कराणाम्" "जलं स्तम्भनानाम्" इत्युक्तं, तथापि इहानुक्तक्लेदकर्म्माद्यभिधानार्थं पुनरुच्यते ; इह अन्नलवणादीनां यत् कर्म्मोच्यते तत्तेषामितरकर्म्मभ्यः प्रधानं ज्ञेयम्, अग्र्याधिकारे तु तत्-कर्म्मकर्तृत्वमन्यद्रव्यान्तरप्रकर्षता ज्ञेया। क्षारः पचन्तमग्निं प्रेरयति, तेन पाचयतीति हेतौ णिच् ; स्नेहयतीत्यादौ तु "तत् करोति तदाचष्टे" इति णिच् ; सन्दधातीति विश्लिष्टानि

धमति, द्राक्षासवो दीपयति, फाणितमाचिनोति, दधि शोफं जनयति, पिण्याको * ग्लपयति, प्रभूतान्तर्मलस्तु माषसूपः, दृष्टिशुक्रघ्नः क्षारः, प्रायः पित्तलमम्लमन्यत्र दाड़िमामलकात्,

वृहि ध्वनिवृद्धयोरिति—मांसं वृंहत् प्रेरयति। रसो मांसस्य रसः प्रीणयति तत्स्वभावात्। प्रीञ तर्पणे। तर्पयति तृप्तिं जनयति। सुरा जर्ज्जरीकरोति तत्स्वभावात्। शरीरशैथिल्यं करोति रक्तमेदोबाहुल्यात्। तदुक्तं हारीतेन—सुरा जर्ज्जरकरोत्यसृङ्मेदो बाहुल्यात्। सीधुरवधमति तत्स्वभावात् अवधमति विलिखति शरीरं धातूनामनेकार्थत्वात्। सीधुरवधमति व्याधाग्नि-प्रबोधनादिति हारीत उवाच। द्राक्षासवो दीपयति तत्स्वभावादग्निं प्रज्वलयति। फाणितमाचिनोति तत्स्वभावाद्दोषाणामाचितिं करोति। दधि शोफं जनयति तत्स्वभावात्, दोषजं शोफम्। पिण्याको ग्लपयति तत्स्वभावात्, तिलकल्कः हर्षक्षयं करोति। प्रभूतान्तर्म्मलो माषसूपस्तत्स्वभावात्। प्रभूतो बहुलोऽन्तर्म्मलः पुरीषं भवति यस्मात्, स तथा माषसूपः। माषो बहुमल इति माषविकारसामान्यस्य बहुमलकरत्वात् तदेकस्य विकारस्य सूपस्यापि पुनरिहानुवादः। दृष्टिशुक्रघ्नः क्षारस्तत्स्वभावात्। पाचकत्वं कर्म्म प्रागुक्तम् अन्तर्बाह्यप्रयोगाभिप्रायेणेह पुनर्विपाके दृष्टिशुक्रहन्तृत्वमुक्तम्। प्रायः पित्तलम् अम्लमन्यत्र दाड़िमामलकात् तत्स्वभावात्। प्रायोऽम्लं द्रव्यं पित्तलं तत्स्वभावात्। पाके रसे वीर्य्ये चाम्लोष्णत्वात्। दाड़िमामलकन्तु वीर्य्येण

त्वङ्मांसादीनि संश्लेषयति ; रसो मांसरसः, प्रीणयतीति क्षीणान् पुष्णाति न त्वतिस्थूलं करोति, तेन मांसकर्म्मणा वृंहणेन समं नैकद्यम् ; जर्ज्जरीकरोति श्लथमांसाद्युपचयं करोति, यदुक्तम् हारीते—"सुरा जर्ज्जरीकरोत्यसृङ्मेदो बाहुल्याद्" इति, तथात्रेयोक्तम्—"सुरा कृशादीनां पुष्ट्यर्थम्" इति ; अवधमयतीति विलिखतीत्यर्थः, अनेकार्थत्वाद्धातूनाम्, वचनं हि—"लेखनः शीतरसिकः" इति, तथा हारीतेऽप्युक्तं—"सीधुरवधमयति वाय्वग्निप्रबोधनाद्" इति। आचिनोति दोषानिति शेषः, तन्त्रान्तरवचनं हि—"वातपित्तकफांस्तस्मादाचिनोति च फाणितम्" इति पिण्याकस्तिलकल्कः, निघण्टुकारस्त्वाह—"पिण्याको हरितशिग्रुः" ; ग्लपयति हर्षक्षयं करोति ; प्रभूतान्तर्मलस्य पुरीषस्य कर्त्ता प्रभूतान्तर्मलः, यद्यपि "माषो बहुमलः" इति वक्ष्यति, तथापि माषविकृतेः सूपस्येह गुणकथनम्, तेन न पुनरुक्तम्,—न चावश्यं प्रकृतिधर्म्मो विकृतिम् अनुगच्छति, यतः शकूनां सिद्धपिण्डिका गुरवः स्युः, तस्मान्माषविकृतावपि मलवृद्धिदर्शनार्थम्

* पिण्याक इत्यत्र पिण्याकशाकमिति क्वचित्।

प्रायः श्लेष्मलं मधुरमन्यत्र मधुनः पुराणाद् यवगोधूमाच्च, प्रायस्तिक्तकं वातलमवृष्यञ्च अन्यत्र वेत्राग्रपटोलपत्रात्, प्रायः कटुकं वातलमवृष्यञ्च अन्यत्र पिप्पलीविश्वभेषजात्, प्रायः कषायं वातलमवृष्यं स्तम्भनं शीतञ्चान्यत्र हरीतक्याः, प्रायो लवणं श्लेष्मलमवृष्यञ्चान्यत्र सैन्धवात् ॥ ३ ॥

शीतं स्वभावः। रसविपाकावपोह्य पित्तं शमयति न पित्तं वर्द्धयति। प्रायः श्लेष्मलं मधुरमन्यत्र मधुनः पुराणाद् यवगोधूमात् न स्वभावात्। प्रायो मधुरं द्रव्यं श्लेष्मलं तत्स्वभावात्। रसे हि मधुरं पाके च मधुरं वीर्य्ये च शीतम्। तत्र मधु तूष्णवीर्य्येण मधुररसविपाकावपोह्य श्लेष्माणं शमयति। पुराणश्च यवो गोधूमश्च न हिमः, नवस्य हिमत्वात्। विपाके च कटुस्तस्मान्न श्लेष्मलः। प्रायस्तिक्तं वातलमवृष्यञ्चान्यत्र वेत्राग्रपटोलपत्रात्। तिक्तद्रव्यं प्रायो वातलम् अवृष्यञ्च रसे तिक्तत्वात् पाके कटुत्वात् वीर्य्ये शीतत्वात्। वेत्राग्रं पटोलपत्रञ्च न वातलं नावृष्यं पाके हि मधुरं रसमपोह्य वातं शमयति वृष्यञ्च भवति। शीतं वीर्य्यञ्च पित्तं शमयति तर्पयति च। प्रायः कटुकं वातलमवृष्यञ्चान्यत्र पिप्पलीविश्वभेषजात्। कटुकं द्रव्यं मरिचादिकं प्रायो वातलमवृष्यञ्च रसे पाके कटुत्वाद्वीर्य्ये चोष्णत्वात्। पिप्पली विश्वभेषजञ्च मधुरपाकाच्छीतवीर्य्याच्च कटुरसमपोह्य न वातं वर्द्धयति नावृष्यत्वञ्च करोति। प्रायः कषायं वातलम् अवृष्यं स्तम्भनं शीतञ्चान्यत्र हरीतक्याः। कषायद्रव्यं प्रायो वातलमवृष्यं स्तम्भनं शीतञ्च। कटुपाकात् वातलमवृष्यं स्तम्भनञ्च शीतवीर्य्यादल्पवृष्यम्। हरीतकी तूष्णवीर्य्यात् प्रभावाच्च न स्तम्भनी वृष्या च। प्रायो लवणं श्लेष्मलम् अवृष्यञ्चान्यत्र सैन्धवादिति सैन्धवं हि नोष्णं पित्तं शमयति वृष्यञ्च प्रभावात्

एतदभिधानम्; आरस्य पाकवत्त्वगुणोऽभिहितः, इह तु, 'हरिशुक्लत्व'—दोष इति पृथगुच्यते। प्रायः पित्तलमिति विशेषेणान्येभ्यो लवणकटुकेभ्योऽम्लं पित्तलम्; एवमन्यत्रापि 'प्रायः'-शब्दो विशेषार्थो वाच्यः, किंवा, 'प्रायः'शब्दोऽम्लेन सम्बध्यते, अत्र पित्तमादावम्लजन्यत्वयोक्तं दोषप्राधान्यस्यानियतत्वात्, उक्तं हि—'न ते पृथक् पित्तकफानिलेभ्यः' इति, तथा, "समपित्तकफानिलाः" इति, किंवा पित्तोष्मा वह्निः, स चेहान्नपानपचने प्रधानम्, यदुक्तम्—"यदन्नं देहधात्वोजोबलवर्णादिपोषकम्। तत्राग्निर्हेतुराहारान् न ह्यपक्वाद् रसादयः ॥" इति; तेनेह वह्निकारणपित्तजनकमेवाऽऽशुच्यते, यतश्च पित्तजनकमप्यं वक्तव्यम्, अतो रसप्रधानमपि मधुरो नादौ उक्तः; मधुन इति विशेषपाठेन नवानवस्य मधुनः कफाकर्षत्वं दर्शयति; इह च मधुरसस्यैव

परमतो वर्गसंग्रहेणाहारद्रव्याण्यनुव्याख्यास्यामः ;—

शूकधान्यशमीधान्य-मांसशाकफलाश्रयान्।
वर्गान् हरितमद्याम्बु-गोरसेक्षुविकारकान् ॥
दश द्वौ चापरौ वर्गौ कृतान्नाहारयोगिणाम्।
रसवीर्य्यविपाकैश्च प्रभावैश्चोपदेक्ष्यते ॥ ४ ॥
रक्तशालिमहाशालिः कलमः शकुनाहृतः।
तूर्णको * दीर्घशूकश्च गौरः पाण्डुकलाङ्गुलौ ॥

कफं न वर्द्धयतीति। केचिदत्राम्लमधुरकटुकानि पठन्ति न तिक्तकषाय-लवणानि ॥ ३ ॥

गङ्गाधरः—इत्येतत् किञ्चित् साधारण्येनान्नपानविधावुपदिश्यातः परं यदुपदेक्ष्यति तत् प्रतिजानीते—परमत इत्यादि। वर्गतः संग्रहेण संक्षेपेणाहार-द्रव्याण्यतः परमुपदेक्ष्याम इति प्रतिज्ञा। तत्र वर्गान् निर्दिशति—शूकेत्यादि। शूकधान्यवर्गश्च शमीधान्यवर्गश्च मांसवर्गश्च शाकवर्गश्च फलवर्गश्च हरितवर्गश्च मद्यवर्गश्चाम्बुवर्गश्च गोरसवर्गश्च गोरसविकारवर्गश्च इक्षुवर्गश्च इक्षुविकारवर्गश्च इति दश वर्गा अपरौ च द्वौ वर्गौ कृतान्नाहारयोगिणां कृतान्नवर्गश्चाहार-योगिवर्गश्चेति द्वादशवर्गं रसवीर्य्यविपाकप्रभावैरुपदेक्ष्यते। इति ॥ ४ ॥

गङ्गाधरः—तत्र क्रमेण शूकधान्यवर्गादीनुपदिशति—रक्तशालिरित्यादि। अत्राहारविधौ शूकवतां धान्यानां प्राधान्यादादावुपदेशः कृतः, शेषाणां तदुप-

कथनमेतत्, सर्व्वेणैवानुक्तानां लवणतिक्तकषायाणामपि पाकद्वारा ग्रहणात्, यतः, लवणः पाकात् प्रायो मधुरः, तिक्तकषायौ कटुकौ पाकतो भवतः। 'प्रायः सर्व्वं तिक्तम्' इत्यादिस्तु ग्रन्थो हारीतीयः, इह केनापि प्रमादाल्लिखितः ॥ ३ ॥

चक्रपाणिः—वर्गेण शूकधान्यादीनां संग्रह आहारद्रव्याणां वर्गसंग्रहः। रसवीर्य्यैरित्यादौ प्रभावोऽल्पविषयतया पृथक् पठितः, रसादिनिर्देशश्च यथायोग्यतया ज्ञेयः, तेन, न सर्व्वद्रव्ये सर्व्वरसाद्यभिधानं भविष्यति ; अत्र शूकधान्यमादावाहारप्रधानत्वात्। शूकवन्ति धान्यानि शूकधान्यानि ॥ ४ ॥

चक्रपाणिः—इह च द्रव्यनामानि नानादेशप्रसिद्धानि। तेन नामज्ञाने सामर्थ्यं यथाभूतं नास्त्येवास्माकमपि टीकाकृताम्, तेन देशान्तरेभ्यो नाम ज्ञातव्यो ज्ञेयम्, यत्तु प्रचरति गौड़े,

* चूर्णक इत्यत्र तूर्णकलया वारीदाऽया इत्यत्र वारिदाख्या इति पाठान्तरमस्तकः।

सुगन्धकालोहवालाः शरीराख्याः प्रमोदकाः ।
पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः ॥
शीता रसे विपाकेऽत्र मधुराः स्वल्पमारुताः ।
बद्धाल्पवर्च्चसः स्निग्धा बृंहणाः शुक्रमूत्रलाः ॥
रक्तशालिर्वरस्तेषां तृष्णाघ्नस्त्रिमलापहः ।
महांस्तस्यानु कलमस्तस्याप्यनु ततः परे ॥

करणत्वात् । इहाभिहितानां शूकधान्यानां नामानि नानादेशप्रसिद्धानि । तानि सर्व्वाणि न सर्व्वे पुरुषा ज्ञातुं प्रभवन्ति । तस्माद् देशान्तरतो नामानि प्रायशोऽनुसन्धाय कुशलैः ज्ञातव्यानि भवन्ति । रक्तशालेः शूकधान्येषु श्रेष्ठत्वात् पूर्व्वमुपादानं, रक्तशालिः प्रसिद्धो रक्तवर्णो हैमन्तिको धान्यविशेषः । महाशालिर्मगधदेशे प्रसिद्धो हैमन्तिकः, कलमो गौड़देशे प्रसिद्धः । शकुनाहृतः आवन्तीदेशे प्रसिद्धः । एवं शेषाः ज्ञातव्याः । ये चान्ये शालयः शुभा इति हैमन्तिका येऽन्ये शुभाः शूकधान्यविशेषाः, कर्द्दमकपाण्डुकपुष्पाण्डकपुण्डरीकशीतभीरुक लोध्रपुष्पककाञ्चनकमहिषमस्तकहायनकदूषकमहादूषकप्रभृतयः ।

एषां सामान्यतो गुणकर्म्माण्याह—शीता इत्यादि । एते रक्तशाल्यादयः सर्व्वे वीर्य्येण शीताः रसे पाके च मधुरास्तस्मात् पित्तघ्नाः स्निग्धा बृंहणाः शुक्रमूत्रलाः सन्तोऽपि स्वल्पमारुता बद्धाल्पवर्च्चसश्च प्रभावात् । सुश्रुते तु लोहितशालीत्यारभ्य महादूषकप्रभृतयः शालयः,—मधुरा वीर्य्यतः शीता लघुपाका बलावहाः । पित्तघ्नाल्पानिलकफाः स्निग्धा बद्धाल्पवर्च्चसः । इति । अत्र लघुपाका इति न कटुकपाकाः किन्तु येऽन्ये मधुररसा यथा गुरुपाका न तथैते रक्तशाल्यादयो गुरुपाकास्ततो लघुपाका इत्यभिप्रायेणोक्ताः ।०। तत्र विशेषेणाह—रक्तशालिरित्यादि । तेषां रक्तशालि-महाशालिप्रभृतीनां मध्ये रक्तशालिर्वरः श्रेष्ठस्तत्तत्कर्म्मकरणे प्राधान्यं करोति एवं तृष्णाघ्नः । त्रिमलापह इति स्वल्पमारुता इत्युपसर्गस्यापवादः । सुश्रुते च—"तेषां लोहितकः श्रेष्ठो दोषघ्नः शुक्रमूत्रलः । चक्षुष्यो वर्णबलकृत् स्वर्य्यो हृद्यः श्रमापहः । व्रण्यो ज्वरहरश्चैव सर्व्वदोषविषा-

तत्कोषिनामा॰, अन्यदेशाप्रसिद्धश्च किञ्चित्, कलमो देशान्तरेषु स्वनामप्रसिद्धः, शकुनाहृतः अवन्त्यां शकुनाख्या प्रसिद्धः, रक्तशालिः प्रसिद्ध एव, महाशालिर्मगधे प्रसिद्धः ; अत्र शालि· हैमन्तं धान्यम्, षष्टिकाद्यश्च ग्रैष्मिकाः, व्रीहयः शारदा इति व्यवस्था ; रक्तशाल्यादीनां मधुर-

यवका हायनाः पांशु-वाप्यो नैषधकादयः।
शालीनां शालयः कुर्व्वन्त्यनुकारं गुणागुणैः॥ ५॥
शीतः स्निग्धोगुरुः * स्वादुस्त्रिदोषघ्नः स्थिरात्मकः।
षष्टिकः प्रवरो गौरः कृष्णगौरस्ततोऽनु च॥

पद्मः॥ तस्मादल्पान्तरगुणः कलमः शालयोऽपराः। इति। एतच्चाह—महांस्तस्यानु कलमस्तस्याप्यनु ततः परे। इति। रक्तशालितोऽनु अल्पान्तरगुणो महान् शालिस्तस्यानु अल्पान्तरगुणः कलमस्ततः परे शकुनाहृतादयः स्तपनीयान्ताः। इह रक्तशालितोऽल्पान्तरगुणो महाशालिः, सुश्रुते कलमः कलमादनन्तरकर्द्दमकादिभ्यः षड्भ्यः स्वल्पान्तरगुणो महाशालिरित्येवं यत्किञ्चिदल्पान्तरगुणवचनभेदो नाद्रियते कुशलैरिति।०। यवका इत्यादि। यवकाः शालिधान्यविशेषास्तथा हायनकाः वाप्या नैषधकाप्रभृतयः शालय एव शालीनां रक्तशाल्यादीनां गुणागुणैरनुकारं कुर्व्वन्ति। एते पूर्व्वपूर्व्वतोऽनुगुणाभावात् पृथगुक्ताः सर्व्वे हि शाल्यनुकारेण गुणागुणान् कुर्व्वन्तीति॥ ५॥

गङ्गाधरः—हैमन्तिकानां शूकधान्यानां गुणानुक्त्वा षाष्टिकानां गुणानाह शीत इत्यादि। द्विविधं शूकधान्यं सुधान्यकुधान्यभेदात्। तत्र सुधान्यं त्रिविधं शालिषष्टिकव्रीहिभेदात्। तत्र शालिगुणानन्तरं षाष्टिकजातिसामान्यादेष गुणसंग्रहः। षष्टिकः प्रवरः षष्टिकेषु मध्ये प्रवरः श्रेष्ठः षष्टिकनामा गौरः षष्टिकः। शीतश्च स्निग्धश्चागुरुश्च स्वादुश्च त्रिदोषघ्नश्च स्थिरात्मकश्च स्थैर्य्यकृच्च (ग्राही च)। यः प्रवरः षष्टिकः गौरः षष्टिकः शूकषष्टिकः। ततोऽनु

षाष्टिके यद्यवर्च्चस्त्वं प्रभावादेव, महांस्तस्यान्विति रक्तशालेरनु, तेन रक्तशालिगुणात् महाशालेर्मनागल्पाः, एवं तस्यानु कलम इत्यत्रापि व्याख्यम्, तस्येति महाशालेः, ततः पर इति शकुनाहृतादयः, इत्युत्तरोत्तरमल्पगुणा इत्यर्थः।

गुणागुणैरिति। शालीनां रक्तशाल्यादीनां ये गुणास्तृष्णाप्रशमत्रिमलापहत्वादयः, तेषामगुणैश्च गुणविपरीतैर्दोषैः यवकादयोऽनुकारं कुर्व्वन्ति, ततश्च यवकास्तृष्णाविमलादिकरा इति स्युः; गुणशब्दश्चेह प्रशंसायाम्, षष्टिकगुणोऽकारप्रश्लेषादगुरुरिति बोद्धव्यम्, मात्रा-

* स्निग्धोऽगुरुरिति चक्रदत्तपाठान्तरम्।

वरकोद्दालकौ चीन-शारदोद्दाल-*-दर्दुराः ।
गन्धलाः कुरुविल्लाश्च † षष्टिकाल्पान्तरा गुणैः ॥
मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः ।
बहुमूत्रपुरीषोष्णस्त्रिदोषस्त्वेव पाटलः ॥ ६ ॥

अल्पगुणः कृष्णगौरः षष्टिकः, वरक उद्दालकश्चीनः शारदोद्दालो दर्दुरः गन्धलाः कुरुविल्वाश्चेत्येते षष्टिकाः षष्टिकनामषष्टिकस्याल्पान्तरा गुणैरल्पभेदाः । अल्परूपाः शीताः स्निग्धा गुरवः स्वादवस्त्रिदोषघ्नाः स्थिरगात्रकाश्चेति । सुश्रुते चोक्तं—"षष्टिककाङ्गुकमुकुन्दकपीतक-प्रमोदक-काकलकासनपुष्पक-महाषष्टिक-चूर्णककुरवककेदारकप्रभृतयः षष्टिकाः । रसे पाके च मधुराः शमना वातपित्तयोः । शालीनाञ्च गुणैस्तुल्या बृंहणाः कफशुक्रलाः ॥ षष्टिकः प्रवरस्तेषां कषायानुरसो लघुः । मृदुः स्निग्धस्त्रिदोषघ्नः स्थैर्यकृद्बलवर्द्धनः ॥ विपाके मधुरो ग्राही तुल्यो लोहितशालिभिः । शेषाः स्वल्पान्तरगुणाः षष्टिकाः क्रमशो गुणैः ॥" इति ।

अथ व्रीहिगुणानाह—मधुरश्चेत्यादि । व्रीहिराशुधान्यस्य संज्ञा । व्रीहिः आशुधान्यजातिर्मधुरश्चाम्लपाकश्च पित्तकरश्च गुरुश्च बहुमूत्रश्च बहुपुरीषश्च बहूष्मा च भवति । तत्र पाटलः पाटलवर्णो व्रीहिस्त्रिदोषकृद्भवतीति । सुश्रुते च—कृष्णव्रीहि-शालामुख-जतुमुख-नन्दीमुख-लावाक्षक-त्वरितक-कुक्कुटाण्डक-पारावतक-पाटलप्रभृतयो व्रीहयः । कषायमधुराः पाके मधुरा वीर्यतोऽहिमाः । अल्पाभिष्यन्दिनस्तुल्याः षष्टिकैर्बद्धवर्च्चसः । कृष्णव्रीहिर्वरस्तेषां कषायानुरसो लघुः । तस्मादल्पान्तरगुणाः क्रमशो व्रीहयोऽपरे ॥ इति । इह पाके मधुरा इति अम्लपाकाश्चेत्यनेन विरोधो नाशङ्क्यः । सुश्रुतेऽम्लपाकं नोक्त्वा मधुरकटुपाकौ गुरुलघुपाकयोः संज्ञया तूक्तौ । तेन पृथिव्यम्बुगुणाधिक्याभिनिर्वृत्तिकपाको मधुरो नाम गुरुपाको न तु मधुररसे पाको मधुरपाकस्तस्मादम्ले रसे पाकस्तु भूमिगुणाधिक्याभिनिर्वृत्तिक इति न विरोध इति । एषां शालिषष्टिकव्रीहीणां क्षेत्रविशेषे जातानां गुणविशेषा उक्ताः सुश्रुते—दग्धायामवनौ जाताः शालयो लघुपाकिनः । कषाया बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षणाः ॥ स्थलजाः कफ-

त्रिदोषे षष्टिको लघुः षष्टिकः ; सतोऽनु चेति गौरषष्टिकादल्पान्तरगुणः । वरकोद्दालकादयः षष्टिकविशेषाः ; केचित् कुधान्यानि वरकादीनि वदन्ति । व्रीहिरिति शारदाशुधान्यस्य संज्ञा ।

* शारदोज्ज्वलेति वा पाठः । † गन्धनाः कुरुविन्दाश्च इति चक्रोक्तपाठः ।

सकोरदूषः श्यामाकः कषायमधुरो लघुः।
वातलः श्लेष्मपित्तघ्नः शीतसंग्राहिशोषणः॥
हस्तिश्यामाकनीवार-तोयपर्णीगवेधुकाः।
प्रशातिकाम्भःश्यामाक-लौहिताणुप्रियङ्गवः॥
मुकुन्दो भिन्टिरमुखो वरुकावरकास्तथा*।
शिविरोत्कटजूर्णाख्याः श्यामाकसदृशा गुणैः॥ ७॥

पित्तघ्नाः कषायाः कटुकान्वयाः। किञ्चित्सतिक्तमधुराः पवनानलवर्द्धनाः॥ कैदारा मधुरा वृष्या बल्याः पित्तनिवर्हणाः। ईषत्कषायाल्पमला गुरवः कफशुक्रलाः॥ रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः। अदाहिनो दोषहरा बल्या मूत्रविवर्द्धनाः॥ शालयश्छिन्नरूढ़ा ये रुक्षास्ते बद्धवर्च्चसः। तिक्ताः कषायाः पित्तघ्नाः लघुपाकाः कफापहाः। विस्तरेणायमुद्दिष्टः शालिवर्गो हिताहितः॥ इति। इह शालिशब्दः शालिषष्टिकव्रीहिवचनः, न केवलहैमन्तिकधान्यवचनः, शालिवर्गशब्दस्य शालिशब्देन शाल्यादीनां त्रयाणां संग्रहादिति॥ ६॥

गङ्गाधरः—अथ कुधान्यगुणानाह—सकोरदूष इत्यादि। कोरदूषः कद्रूः श्यामाकः श्यामाघासस्य बीजं, कषायमधुरः, कषायलघुत्वाद्वातलः, श्लेष्मघ्नः शीतकषायमधुरत्वात्, पित्तघ्नः, लघुवीर्यत्वाद्वातलः श्लेष्मघ्नः शीतवीर्यत्वात् पित्तघ्नः, कषायत्वात् ग्राही च शोषणश्च। हस्तिश्यामादयस्तु गुणैः श्यामाकसदृशा भवन्ति। हस्तिश्यामाको वृहच्छ्यामाघासबीजम्। नीवारः तोयपर्णी गवेधुकः प्रशातिका अम्भःश्यामाकः लौहिताणुः प्रियङ्गुः मुकुन्दः वाकसतृणः झिन्टिरमुखी वरुका वरकः शिविरः उत्कटः जूर्णाख्याः

पाटलो व्रीहिविशेषः तन्त्रान्तरे पठ्यते—'त्रिदोषघ्नश्चैव पाटलः' इति। सुश्रुते पाटलत्वेन एतद्व्यतिरिक्तो धान्यविशेषो ज्ञेयः, तेन तद्गुणकथनेन नेह विरोधः॥ ५।६॥

चक्रपाणिः—कोरदूषादयः कुधान्यविशेषाः, कोरदूषः कोद्रवः, कोरदूषस्य केवलस्य श्लेष्मपित्तघ्नत्वं, तेन, यदुक्तं रक्तपित्तनिदाने—"यदा जन्तुर्यवकोद्दालककोरदूषप्रायाण्यन्नानि भुङ्क्ते" इत्यादिना पित्तकर्तृत्वम् कोरदूषस्य, तत् सर्षपोत्कनिष्पावकाञ्जिकादियुक्तस्य संयोगमहिम्ना बोद्धव्यम्। श्यामाकादयोऽपि तृणधान्यविशेषाः। हस्तिश्यामाकः श्यामाकभेद एव, नीवार

* "मुकुन्दो झिण्टिगर्मुण्टी धाल्कवरकास्तथा" इति क्वचित् पाठान्तरं दृश्यते।

रूक्षः शीतो गुरुः स्वादुर्बहुवातशकृद् यवः ।
स्थैर्य्यकृत् सकषायश्च बल्यः श्लेष्मविकारजित् ॥

सर्व्वे तृणसम्भवाः । सुश्रुते च अथ कुधान्यवर्गः—कोरदूषकश्यामाक-नीवार-शान्तनु-तुवरोद्दालकप्रियङ्गु-मधूलिका-नान्दीमुखी-कुरुविन्द-गवेधुकवरुक-तोयपर्णीमुकुन्दक-वेणुयवप्रभृतयः । उष्णाः कषायमधुरा रूक्षाः कटु-विपाकिनः । श्लेष्मघ्ना बद्धनिष्यन्दा वातपित्तप्रकोपणाः ॥ कषायमधुरास्तेषां शीताः पित्तापहाः स्मृताः । कोद्रवश्च सनीवारः श्यामाकश्च सशान्तनुः ॥ कृष्णा रक्ताश्च पीताश्च श्वेताश्चैव प्रियङ्गवः । यथोत्तरं प्रधानाः स्यू रूक्षाः कफहराः स्मृताः ॥ मधूली मधुरा शीता स्निग्धा नान्दीमुखी तथा । विशोषी तत्र भूयिष्ठं वरुकः समुकुन्दकः ॥ रूक्षा वेणुयवा ज्ञेया वीर्य्योष्णाः कटु-पाकिनः । बद्धमूत्राः कफहराः कषाया वातकोपनाः ॥ इति ।७। शूकधान्येषु यवादीनामोदनकल्पनानहत्वादोदनकल्पनार्हान् शाल्यादीनुक्त्वा यवादीनाह—रूक्ष इत्यादि । यवो रूक्षश्च शीतश्च वीर्य्येण रसे स कषायः स्वादुमधुरः । बहु-वातशकृत् । अधोवायुसरणं बाहुल्येन भवति, शकृत्सरणञ्च बाहुल्येन प्रभावात् । बल्यश्च । विपाकोऽस्य मधुर एव कषायसहितत्वात् यथान्येषां केवलमधुराणां मधुरो विपाको न तथा, तेन मध्यलघुपाकः शीतवीर्य्यात् पित्तजित् । श्लेष्मविकारजयश्च प्रभावात् । उक्तञ्च सुश्रुते—यवः कषायो मधुरो हिमश्च कटुर्विपाके कफपित्तहारी । व्रणेषु पथ्यस्तिलवच्च नित्यं प्रबद्धमूत्रो बहुवात-वर्च्चाः ॥ स्थैर्य्याग्निमेधास्वरवर्णकृच्च सपिच्छिलः स्थूलविलेखनश्च । मेदो-मरुत्तृड्हरणोऽतिरूक्षः प्रसादनः शोणितपित्तयोश्च ॥ इति । अत्र कटुः पाके-ऽनतिलघुः ॥ ७ ॥

गङ्गाधरः—यवविशेषो वेणुयवो गुणकर्म्मभ्यामुच्यते—रूक्ष इत्यादि । रूक्षो-

ओड़िका, गवेधुको घुलुशः,—स ग्राम्यारण्यभेदेन द्विविधः, प्रशातिका ओड़िकैव रक्तजा रक्तशूका, अम्भःश्यामाका जलजा ओड़िका लोके भरा इत्युच्यते, प्रियङ्गुः काङ्गनीति प्रसिद्धा, मुकुन्दो बाकतूण इति, वाहकः सागरीजम्, वरकः सामरीजम्, त्रितिरश्लोरभुक्तौ सिङ्गक इत्युच्यते, जूर्णाह्वो जोनार इति व्याहतः ॥ ७ ॥

चक्रपाणिः—यवस्य गुरोरपि बहुवातत्वं रूक्षत्वात् । किंवा, सुश्रुते यवो लघुः पठितः,

रूक्षः कषायानुरसो मधुरः कफपित्तहा ।
मेदःक्रिमिविषघ्नश्च बल्यो वेणुयवो मतः ॥ ८ ॥
सन्धानकृद्वातहरो गोधूमः स्वादुशीतलः ।
जीवनो बृंहणो वृष्यः स्निग्धः स्थैर्य्यकरो गुरुः ॥
नान्दीमुखी मधुली च मधुरस्निग्धशीतले ।
इत्येवं शूकधान्यानां पूर्व्वो वर्गः समाप्यते ॥ ९ ॥

इति शूकधान्यवर्गः । १ ।

ऽतिरूक्षः । कषायानुमधुरो रसोऽस्य । पाके च मधुरः कफपित्तहा रूक्षवीर्य्यात् । मेदःक्रिमिविषघ्नः प्रभावात् । बल्यश्च । अपरे च यवा एतद्गुणानुसारेण गुणकर्म्मस्थामुन्नेया आन्यामप्राधान्यादनुक्तत्वेनाभ्यां किञ्चिन्न्यूनतरगुणा वाच्याः । उक्तश्च सुश्रुते एभिर्गुणैर्हीनतरांश्च किञ्चिद् विद्याद्यवेभ्योऽतियवान् विशेषैरिति ॥ ८ ॥

गङ्गाधरः—गोधूममाह—सन्धानकृदित्यादि । गोधूमः सन्धानकृत् भग्नानां संश्लेषकृत् । वातहरः प्रभावात् । स्वादुशीतलत्वाच्च पाके च मधुरः । तस्माज्जीवनश्च बृंहणश्च वृष्यश्च । स्थैर्य्यकरः स्थिरगुणत्वात् । गोधूमविशेषाणाञ्च गुणानाह—नान्दीमुखीत्यादि । गोधूमविशेषौ द्वे नान्दीमुखी-मधूलिके मधुरे स्निग्धशीतले भवतः । सुश्रुते तु कुधान्यमध्ये पठित्वा सामान्येन उक्ताः—उष्णाः कषायमधुरा रूक्षाः कटुविपाकिनः । श्लेष्मघ्ना बद्धनिष्यन्दा वातपित्तप्रकोपणाः ॥ इति । ततो विरोधः परिहारार्थः कुधान्यविशेषौ हित्वे नेमे द्वे गोधूमप्रकरणे पठितत्वादिति । वर्गं समापयति—इत्येवमित्यादि । पूर्व्वो वर्गः शूकधान्यवर्गः समाप्यते ॥ ९ ॥ इति शूकधान्यवर्गः । १ ।

तेन अग्नाप्यगुरुरिति मन्तव्यम्, बल्यश्च स्रोतःशुद्धिकरत्वात् प्रभावाद्वा । अस्य च शीतमधुरकषायत्वेनानुक्तमपि पित्तहन्तृत्वं लभ्यत एव, तेन सुश्रुते—"कफपित्तहन्ता" इत्युक्तमुपपन्नम् ॥ ८ ॥

चक्रपाणिः—गोधूमस्य स्वादुशीतस्निग्धादिगुणोपयोगात् श्लेष्मकर्तृत्वं भवत्येव, अत एव सुश्रुते—"श्लेष्मकरः" इत्युक्तम । यत्तु वसन्ते कफप्रधाने यवगोधूमभोजनम् इत्युक्तं, तत् पुराणगोधूमाभिप्रायेण ; पुराणश्च गोधूमः कफं न करोतीत्युक्तमेव "प्रायः श्लेष्मलं मधुरम्" इत्यादिना ग्रन्थेनाशीताध्याये । नान्दीमुखी यविका, मधुली गोधूमभेदः । इत्येवमत्र 'इति' प्रकारार्थः ।

कषायमधुरो रूक्षः शीतः पाके कटुर्लघुः ।
श्लेष्मपित्तप्रशमनो मुद्गः सूप्योत्तमो मतः ॥
वृष्यः परं वातहरः स्निग्धोष्णो मधुरो गुरुः ।
बल्यो बहुमलः पुंस्त्वं माषः शीघ्रं ददाति च ॥

गङ्गाधरः—क्रमिकत्वात् शमीधान्यवर्ग उच्यते । सूपयोनिः शमीधान्यमुच्यते । तत्र प्राधान्यादादौ मुद्गगुणानाह—कषायमधुर इत्यादि । सूप्योत्तमो मुद्गः कषायमधुरो रसे वीर्य्ये रूक्षो लघुश्च शीतश्च । पाके कटुः प्रभावात् । श्लेष्मपित्तप्रशमनश्च तस्माद्रक्तप्रशमनश्च । सूपस्यायं सूप्यः । सुश्रुते तु—मुद्गवनमुद्गकलायमकुष्ठकमसूरमङ्गल्यचणकसतीनत्रिपुटहरेण्वाढ़कीप्रभृतयो वैदलाः । कषायमधुराः शीताः कटुपाका मरुत्कराः । बद्धमूत्रपुरीषाश्च पित्तश्लेष्महरास्तथा ॥ नात्यर्थं वातलास्तेषु मुद्गा दृष्टिप्रसादनाः । प्रधाना हरितास्तत्र वन्या मुद्गसमाः स्मृताः ॥ इति । अन्यत्र च कृष्णमुद्गा महामुद्गा गौरहरितपीतकाः । श्वेता रक्ताश्च निर्दिष्टा लघवः पूर्व्वपूर्व्वतः ॥ इति । एवं गुणविशेषा अपि मुद्गजातितः किञ्चिद्भेदो नाद्रियते कुशलैः । तस्मान्मुद्गसामान्यगुणा इहोक्ता न विशेषाणाम् ।

वृष्य इत्यादि । परमुत्कृष्टं वृष्यो माषस्तस्मात् पुंस्त्वं शीघ्रं ददाति । परमुत्कृष्टं वातहरश्च स्निग्धोष्णमधुरत्वात् गुरुत्वाच्च । बल्यश्च तस्मात् । बहुमलश्च प्रभावात् । सुश्रुते च—"माषो गुरुर्भिन्नपुरीषमूत्रः स्निग्धोष्णवृष्यो मधुरोऽनिलघ्नः । सन्तर्पणस्तन्यकरो विशेषात् बलप्रदः शुक्रकफावहश्च" ॥ इति । शुक्रवृद्धिविरेककृदिति कश्चिदाह । परं वृष्य इत्युक्तया शुक्रसृतिवृद्धिकरवृष्यत्वं माषस्योक्तम् । वृष्यं हि त्रिविधमुक्तं तन्त्रान्तरे शुक्रसृतिकरं किञ्चित् किञ्चिच्छुक्रविवर्द्धनम् । सृतिवृद्धिकरं किञ्चित् त्रिविधं वृष्यमुच्यते ॥ इति ।८।

समाप्त इति वक्तव्ये समाप्यत इति यत् करोति, तेन ज्ञापयति—यत् बहुद्रव्यत्वान्नायं समाप्तो गुणः, किन्तु यथाकथञ्चित् प्रसिद्धगुणकथनेन समाप्यते, एवमन्यत्रापि पष्ठो वर्गः समाप्यत इत्यादौ व्याख्येयम् ॥ ९ ॥ इति शूकधान्यवर्गः । १ ।

चक्रपाणिः—धान्यत्वेन शमीधान्यवर्गं निरूपयितव्ये प्रधानत्वात् मुद्गो निरूप्यते, सूप्यं सूपयोग्यं शमीधान्यं, तत्रोत्तमः सूप्योत्तमः । वृष्य इत्यादिमाषगुणे, स्निग्धोष्णमधुरत्वादिगुणयोगादेव वातहरत्वे लब्धे पुनस्तदभिधानं विशेषवातहन्तृत्वप्रतिपादनार्थम् ; एवमन्यत्राप्येवंजातीये व्याख्येयम्, पुंस्त्वं शुक्रं ; शीघ्रमितिवचनेन शुक्रसृतिकरत्वलक्षणमपि वृष्यत्वं माषस्य

राजमाषः सरो रुच्यः कफशुक्राम्लपित्तकृत् ।
तत्स्वादुर्वातलो रूक्षः कषायो विशदो गुरुः ॥
उष्णाः कषायाः पाकेऽम्लाः कफशुक्रानिलापहाः ।
कुलत्था ग्राहिणः कास-हिक्काश्वासार्शसां हिताः ॥
मधुरा मधुराः पाके ग्राहिणो रूक्षशीतलाः ।
मुकुष्टकाः प्रशस्यन्ते रक्तपित्तज्वरादिषु ॥

माषजात्या राजमाषगुणमाह—राजमाषो वरवटीति लोकेऽल्पसाम्याभिधानान्तरम् । सरः सारकः । गुरुस्वादुत्वेऽपि रूक्षविशदवीर्याद्वातलः । द्वे हि वीर्ये गुरुवीर्यविरोधिनी वलवती । स्वादुकषायत्वान्मधुरपाकः । स्वल्प इतरमधुरद्रव्यापेक्षया । सुश्रुते तु—कषायभावान्न पुरीषभेदी न मूत्रलो नैव कफस्य हर्त्ता । स्वादुर्विपाके मधुरोऽल्पसारः सन्तर्पणः स्तन्यरुचिप्रदश्च । आरण्यमाषा गुणतः प्रदिष्टा रूक्षाः कषायाश्च विदाहिनश्च । इति । अल्पसारो राजमाषः ।

उष्णा इत्यादि—कुलत्था उष्णाः कषायरसाः पाके अम्लाः प्रभावात् । कफशुक्रानिलापहाः । ग्राहिणः । कासादिहिताः । सुश्रुते तु—उष्णः कुलत्थो रसतः कषायः कटुर्विपाके कफमारुतघ्नः । शुक्राश्मरीगुल्मनिसूदनश्च संग्राहकः पीनसकासहारी ॥ आनाहमेदोगुदकीलहिक्का-श्वासापहः शोणितपित्तकृच्च । कफस्य हन्ता नयनामयघ्नो विशेषतो वन्यकुलत्थ उक्तः ॥ इति ।

मधुरा इत्यादि । मुकुष्टकाः कृष्णमुद्गा न तु वनमुद्गाः । सुश्रुते—प्रधाना हरितास्तत्र वन्या मुद्गसमाः स्मृताः । मुकुष्टकाः क्रिमिकरा इति पृथक् पाठात् । मुकुष्टका रसपाकयोर्मधुरा अपि प्रभावाद्वीर्यतो रूक्षशीतलाः । तस्मात् ग्राहिणः । रक्तपित्तादिषु तस्मात्प्रशस्यन्ते ।

दर्शयति, शुक्रस्रुतिकरणञ्च वृष्यशब्देनोच्यत एव, वचनं हि—"शुक्रस्रुतिकरं किञ्चित् किञ्चिच्छुक्रविवर्द्धनम् । स्रुतिवृद्धिकरं किञ्चित् त्रिविधं वृष्यमुच्यते ॥" तदेवं सम्पूर्णवृष्यत्वं माषे बोद्धव्यम् । राजमाषगुणकथने तत्स्वादुरिति मात्रवत् स्वादुः, किंवा, कफशुक्रयोरित्यादि पाठान्तरम् । उष्ण इत्यादिना कुलत्थगुणः, कुलत्थश्च शुक्लकृष्णचित्रलोहितभेदेन चतुर्विधो भवति, तथा ग्राम्यवन्यभेदेन च द्विविधोऽपि, अत एव तन्त्रान्तरे—"वन्यकुलत्थस्तद्वच्च विशेषात् नेत्ररोगघ्नः" इत्युक्तम् ।

चणकाश्च मसूराश्च खण्डिकाः सहरेणवः ।
लघवः शीतमधुराः सकषाया विरूक्षणाः ॥
पित्तश्लेष्मणि शस्यन्ते सूपेष्वालेपनेषु च ।
तेषां मसूरः संग्राही कलायो वातलः परः ॥
स्निग्धोष्णो मधुरस्तिक्तः कषायः कटुकस्तिलः ।
त्वच्यः केश्यश्च बल्यश्च वातघ्नः कफपित्तकृत् ॥

चणका इत्यादि—खण्डीका वर्त्तुलककलायाः । हरेणवश्च वर्त्तुलककलायभेदा न तु सतीनः । स च वर्त्तुलककलायविशेषो न तु त्रिपुटकलायः । सुश्रुते सतीनहरेण्वोः पृथक्पाठात् । तद्यथा—वातलाः शीतमधुराः सकषाया विरूक्षणाः । कफशोणितपित्तघ्नाश्चणकाः पुंस्त्वनाशनाः ॥ हरेणवः सतीनाश्च विज्ञेया बद्धवर्च्चसः । सूपेष्वालेपनेषु च शस्यन्ते, आलेपनेषु व्रणादीनामिति । चणकादीनां मध्ये मसूरकलाययोर्विशेषमाह तेषामित्यादि । तेषां चणकखण्डीकमसूरहरेणूनां मध्ये मसूरः संग्राही, कलायः खण्डीको वातलः परः । सुश्रुते च —कषाया मधुराः शीताः कटुपाका मरुत्कराः । बद्धमूत्रपुरीषाश्च पित्तश्लेष्महरास्तथा ॥ मुद्गादिसामान्यगुणास्तत्र विशेषगुणाः । विपाके मधुराः प्रोक्ता मसूरा बद्धवर्च्चसः । मुकुष्ठकाः क्रिमिकराः कलायाः प्रचुरानिलाः । आढ़की कफपित्तघ्नी नातिवातप्रकोपणी ॥ इति ।

शमीधान्यत्वात् तिलगुणमाह स्निग्ध इत्यादि । तिलः कृष्णादिजातिः । स्निग्धश्चोष्णश्च वीर्य्यात्, रसतस्तु मधुरतिक्तकषायकटुकः । त्वच्यस्त्वचे हितः, केशाय हितो बलाय हितश्च प्रभावात् । तिक्तकषायकटुकत्वेऽपि स्निग्धोष्णवीर्य्याद्वातघ्नः । तथात्वेऽपि प्रभावात् पित्तकफकृत् । स्निग्धेन कफकृत्त्ववदुष्णत्वेन कफघ्नत्वापत्त्यास्तथोष्णत्वेन पित्तकरत्ववत् स्निग्धत्वेन पित्तघ्नत्वापत्त्याश्च । सुश्रुते तु—ईषत्कषायो मधुरः सतिक्तः संग्राहकः पित्तकरस्तथोष्णः । तिलो विपाके मधुरो बलिष्ठः स्निग्धो व्रणालेपन एव पथ्यः ॥

मुकुष्टको मोठ इति ख्यातः ; चणकः प्रसिद्धः ; खण्डिका त्रिपुटकलायः, हरेणुर्वर्त्तुलककलायः । कलायो वाताल इति त्रिपुटकलायः । तिलगुणो यद्यपि विशेषेण नोक्तः, तथापि प्रधाने कृष्णतिले ज्ञेयः, उक्तं हि सुश्रुते—"तिलेषु सर्व्वेष्वसितः प्रधानो, मध्यः सितो हीनतरास्ततोऽन्ये" इति ।

मधुराः शीतला गुर्व्व्यो बलघ्न्यो रुक्षणात्मिकाः।
सस्नेहा बलिभिर्भक्ष्या विविधाः शिम्बिजातयः॥
शिम्बी रुक्षा कषाया च कोष्ठवातप्रकोपनी।
न च वृष्या न चक्षुष्या विष्टभ्य च विपच्यते॥
आढ़की कफपित्तघ्नी वातला कफवातनुत्।
अवल्गुजः सैड़गजो निष्पावो वातपित्तलाः॥
काकाण्डोमात्मगुप्तानां माषवत् फलमादिशेत्।
द्वितीयोऽयं शमीधान्य-वर्गः प्रोक्तो महर्षिणा॥ १०॥

इति शमीधान्यवर्गः। २।

दन्त्योऽग्निमेधाजननोऽल्पमूत्रः त्वच्योऽथ केश्योऽनिलहा गुरुश्च। तिलेषु सर्व्वेष्वसितः प्रधानो मध्यः सितो हीनतरास्तथान्ये॥ इति।

शमीधान्यत्वाच्छिम्बगुणानाह—मधुरा इत्यादि। विविधाः शिम्बिजातयो मधुराश्च शीतलाश्च गुर्व्व्यश्च बलघ्नाश्च रुक्षणात्मिकाश्च। ताः सस्नेहाः स्नेहेन संस्कृता बलवद्भिर्भक्ष्या गुरुत्वाच्च। सुश्रुते च रुक्षः कषायो विषशोफशुक्र-बलाशदृष्टिक्षयकृद् विदाही। कटुर्विपाके मधुरस्तु शिम्बः प्रभिन्नविण्मारुत-पित्तलश्च॥ सितासिताः पीतकरक्तवर्णा भवन्ति येऽनेकविधास्तु शिम्बाः। यथादितस्ते गुणतः प्रधाना ज्ञेयाः कटूष्णा रसपाकयोश्च॥ सहाद्वयं मूलक-जाश्च शिम्बाः कुशिम्बवल्लीप्रभवास्तु शिम्बाः। ज्ञेया विपाके मधुरा रसे च बलप्रदाः पित्तनिबर्हणाश्च॥ विदाहवन्तश्च भृशञ्च रुक्षा विष्टभ्य जीर्य्यन्त्यनिल-प्रदाश्च। रुचिप्रदाश्चैव सुदुर्ज्जराश्च सर्व्वे स्मृता वैदलिकाश्च शिम्बाः॥ इति।

शिम्बीगुणमाह शिम्बी वैदलयोनिमुद्गादीनां शिम्बी अपरिणतावस्थिकी शिम्बीत्युच्यते। विदाहवन्तश्चेत्यादिना प्रोक्ताः।

शिम्बत्वादाढ़कीगुणमाह—आढ़कीत्यादि। कफवातयोर्मिलितयोर्नोदिनी, नातिवातला। अवल्गुजः सोमराजीशिम्बः। एड़गजस्य शिम्बः। निष्पावः शिम्बश्च। एते वातपित्तलाः।

काकाण्डेत्यादि। काकाण्डः कृष्णशिम्बः। उमा अतसी, आत्मगुप्ता

विविधाः शिम्बिजातय इति, कृष्णपीतरक्तश्वेतकुशिम्बिभेदा इत्यर्थः। शिम्बी रुक्षेत्यादि केचित् पठन्ति। आढ़की तुवरी, वातलेति च्छेदः, कफवातनुदित्ययमवल्गुजैडगजयोर्बीजस्य गुणः।

गोखराश्वतरोष्ट्राश्व-द्वीपिसिंहर्क्षवानराः ।
वृकव्याघ्रौ तरक्षुश्च बभ्रुमार्ज्जारमूषिकाः ॥
लोपाको जम्बुकः श्येनो वान्तादश्चापवायसौ ।

शूकशिम्बा । एषां फलं गुणकर्म्मभ्यां माषवदादिशेत्, सुश्रुते तु—माषैः समानं फलमात्मगुप्तमुक्तञ्च काकाण्डफलं तथैव । उष्णातसी स्वादुरसानिलघ्नी पित्तोल्वणा स्यात् कटुका विपाके । इति । कश्चित् स्वतन्त्रे काकाण्डोमात्मगुप्तयोरिति पठति । तत्र, सुश्रुते काकाण्डफलमित्युक्त्या काकाण्डोमाशब्दमाचक्षाणस्य भ्रान्तिः स्फुटीभवति । सुश्रुते शिम्बप्रकरणात् सिद्धार्थसर्षपकुसुम्भशिम्बगुणा उक्ताः । तद्यथा—पाके रसे चापि कटुः प्रदिष्टः सिद्धार्थकः शोणितपित्तकोपी । तीक्ष्णोष्णरूक्षः कफमारुतघ्नस्तथागुणश्चासितसर्षपोऽपि । कटुर्विपाके कटुकः कफघ्नो विदाहिभावादहितः कुसुम्भः । इति । शूकधान्यशमीधान्यानां नवत्वानवत्वे प्रशस्त्याप्रशस्त्यादिकमुत्तरकाले वक्ष्यते । वर्गं समापयति । द्वितीयोऽध्यायमित्यादि । महर्षिणा पुनर्वसुना ॥ १० ॥

इति शमीधान्यवर्गः । २ ।

क्रमिकत्वान्मांसवर्गमाह—गोखरेत्यादि । अस्मिंस्तन्त्रे व्यवहारार्थं गवादिकुररान्ता मृगपक्षिणः प्रसह्य भक्षयन्तीति प्रसहाख्या उच्यन्ते । तत्र खरो गर्द्दभः । अश्वतरः खच्चरः । द्वीपी चित्रव्याघ्रः, ऋक्षो भल्लूकः । वृको व्याघ्रविशेषः, वृहत्कुक्कुरसदृशः । पशुहिंसकः प्रायेण कश्चिन्मनुष्यं हिनस्ति । व्याघ्रो वृहद्व्याघ्रः । तरक्षुः प्रायेण मृगभक्षको व्याघ्रविशेषः । बभ्रुरतिलोमशः कुक्कुरः पर्व्वते भवति । लोपाकः क्षुद्रशृगालः । जम्बुकः शृगालः । वान्तादः कुक्कुरः । श्येनवर्ज्जमेतदन्ता मृगाः । श्येनः पक्षिविशेषः, बाज इति लोके शिकरापक्षीति द्वौ भेदौ । चासः किङ्गा इति लोके पक्षिविशेषः. वायसो द्विविधः काकः ।

निष्पावो बल्लः । काकाण्डः शूकरशिम्बिः, उमा अतसी, कःपाठे तस्यैवोक्तौ ; शमीधान्यवर्गं इति शमी शिम्बिस्तदन्तर्गतं धान्यम् ॥ १० ॥   इति शमीधान्यवर्गः । २ ।

चक्रपाणिः—शूकधान्यानन्तरं मांसस्य प्रधानत्वे प्राधान्यात् मांसवर्गाभिधानम् । खरो गर्द्दभः, अश्वतरो वेगसरः, स चाश्वायां खराज्जातः ; द्वीपी चित्रव्याघ्रः, ऋक्षो भल्लूकः, वृकः कुक्कुराकारो पशुघ्नः, तरक्षुर्व्याघ्रभेदस्तरक्ष इति ख्यातः ; बभ्रुरतिलोमशः कुक्कुरः पर्व्वतोपकण्ठे भवति, केचित् वृहन्नकुलमाहुः ; लोपाकः स्वल्पशृगालो महाकाकुलः, श्येनः पक्षी प्रसिद्धः,

शशघ्नी मधुहा भास-गृध्रोलूककुलिङ्गकाः ।
धूमिका कुररश्चेति प्रसहा मृगपक्षिणः ॥ ११ ॥
श्वेतः श्यामश्चित्रपृष्ठः कालकः काकुलीमृगः ।
कूर्च्चिका चिल्लिटो भेको गोधा शल्लकगण्डकौ ।
कदली नकुलः श्वाविदिति भूमिशयाः स्मृताः ॥ १२ ॥
सृमरश्चमरः खड्गो महिषो गवयो गजः ।
न्यङ्कुर्वराहश्चानूपा मृगाः सर्व्वे रुरुस्तथा ॥ १३ ॥

शशघ्नी पक्षिभेदो जाङ्गिरिति ख्यातः । मधुहा महुआ नाम पक्षिभेदः । भासो मत्स्यभक्षः चिल इति ख्यातः पक्षी । कुलिङ्गको वुयइ इति ख्यातः पक्षी हरिद्रावर्णमस्तको वनचटकः । धूमिका चटकः । कुररः कुरा पक्षी, यस्तु नखेन विद्ध्वा मत्स्यान् जलादुद्धरति । इति वान्तादवज्जं श्येनादयः पक्षिणः । इति प्रसहजातिः ॥ ११ ॥

गङ्गाधरः—श्वेतादयो भूमिशयसंज्ञाः, भूमौ गर्त्ते शेरते इति, उच्यन्ते बिलेशया इति । श्वेतवर्णः स्वनामख्यातः । श्यामः सामापक्षी । चित्रपृष्ठः स्वनामख्यातः, देशविशेषे ख्यातः । कालकः क्षुद्रचटकः । काकुलीमृगः काउनिमृगः । कूर्च्चिका कुँचियामत्स्यः । चिल्लिटो लोके चियाड़ इति । शल्लकः सेजारु इति लोके । गण्डकः स्वर्णगोधा । कदली कदलीहट्टः । नकुलः । श्वाविच्च शल्लकिभेदः वृहत्सेज्जरु इति । इत्येते भूमिशया बिलेशयाः गुहाशयाश्चोच्यन्ते । इति भूशयवर्गः ॥ १२ ॥

गङ्गाधरः—सृमर इत्यादि । सृमरादिरुरुपर्य्यन्ता मृगा आनूपाः, अनूपदेशे चरन्तीति आनूपसंज्ञा भवन्ति । तत्र सृमरः महाशूकरः, चमरः केशवल्लाङ्गूलः,

वान्तादः कुक्कुरः, भासः ( चाषः ) कनकवायस इति ख्यातः, शशघ्नी पाञ्जिरिति ख्याता, भासो भस्मवर्णपक्षी, शिखावान् प्रसहादः, कुलिङ्गः कालचटकः ॥ ११ ॥

चक्रपाणिः—काकुलीमृगो मालुयाकर्प इति ख्यातः, तस्य श्वेत इत्यादयश्चत्वारो भेदाः ; कूर्च्चीका सङ्कुचः ; चिल्लिटश्चियारः, शल्लको महाशल्लकः, साक इति ख्यातः ; गण्डको गोधाभेदः, कदली कदलीहट्ट इति ख्यातः, श्वाविद् सेजारु इति ख्यातः ॥ १२ ॥

चक्रपाणिः—सृमरो महाशूकरः, चमरः केशामृत्युः, खड्गो गण्डकः, गवयो गवाकारः, न्यङ्कुर्हरिणः, सर्व्वेषु न्यङ्कुर्हरिणः ॥ १३ ॥

कूर्म्मः कर्कटको मत्स्यः शिशुमारस्तिमिङ्गिलः।
शुक्तिशङ्खोद्रकुम्भीर-चुलुकीमकरादयः।
इति वारिशयाः प्रोक्ताः ——————————॥ १४॥
——————————वक्ष्यन्ते वारिचारिणः।
हंसः क्रौञ्चो बलाका च वकः कारण्डवः प्लवः॥
शरारी पुष्कराह्वश्च केशरी मणितुण्डकः।
मृणालकण्ठो मद्गुश्च कादम्बः काकतुण्डकः॥

खड्गो गण्डारः, गवयो गोसदृशः पशुः, न्यङ्कु हरिणः। रुरुर्बृहच्छृङ्गो हरिणः। इति सर्व्वे मृगा आनूपाः। इत्यानूपवर्गः॥ १३॥

गङ्गाधरः—कूर्म्म इत्यादि। कूर्म्मादयो वारिणि जायन्ते शेरते इति वारिशया उच्यन्ते। तत्र कूर्म्मो द्विविधस्त्रिविधो वा कमठक्षुद्रकपठकच्छपभेदात्। कर्कटकः कक्कटः। मत्स्यो रोहितादिः। तिमिङ्गिलः स्वनामख्यातः समुद्रजः। शुक्तिशङ्खौ प्रसिद्धौ। उद्र उद्रविड़ालः प्रायो मत्स्यभुक्। चुलुकी बृहच्छिशुमारः। आदिना ग्राहादयः। इति वारिशयाः प्रोक्ताः। इति वारिशयवर्गः॥ १४॥

गङ्गाधरः—अथ वारिचारिणो वक्ष्यन्ते हंस इत्यादि। हंसादयः खगा वारिणि चरन्तीति वारिचारिणो वारिचरसंज्ञा भवन्ति। तत्र हंसो राजहंसादिचतुर्व्विधः। क्रौञ्चो नाम बृहद्वकः कोँच इति ख्यातः। बलाका काणवकी। वकः श्वेतवकः। कारण्डवः पानीयकौड़ इति ख्यातः। प्लवो भेयापक्षी। शरारी पक्षी प्रसिद्धः। पुष्कराह्वो नारालीपक्षी। केशरी दीर्घालीति लोके पक्षी। मणितुण्डकः मातुण्डी पक्षी। मृणालश्च मद्गुश्च पानीयकौड़ीप्रकारपक्षिविशेषः।

चक्रपाणिः—शिशुमारो गोतुण्डनक्रः, तिमिङ्गिलः सामुद्रो महामत्स्यः, शुक्तिर्मुक्ताप्रभवो जन्तुः, उद्रो जलविड़ालः, कुम्भीरो घटिकावान्, चुलुकी शुशु इति ख्यातः। शिशुमारादीनां मत्स्येन ग्रहणे प्राप्ते विशेषख्यापनार्थं पुनरभिधानम्॥ १४॥

चक्रपाणिः—हंसश्चतुर्व्विधोऽपि राजहंसादिर्ग्राह्यः, क्रौञ्चः कोञ्च इति ख्यातः, बकः पाण्डुरपक्षः, बलाका शुक्ला, कारण्डवः काकबकः, प्लवः स्वनामप्रसिद्धः, शरारिः शरालीति लोके, मद्गुः

उत्क्रोशः पुण्डरीकाक्षो मेघरावोऽम्बुकुक्कुटी।
आरा नन्दीमुखी वाटी सुमुखाः सहचारिणः॥
रोहिणी कामकाली च सारसो रक्तशीर्षकः।
चक्रवाकस्तथा चान्ये खगाः सन्त्यम्बुचारिणः॥ १५॥
पृषतः शरभो रामः श्वदंष्ट्रो मृगमातृकः।
शशोरणौ कुरङ्गश्च गोकर्णः कोट्टकारकः॥
चारुष्को हरिणैणौ च सम्बरः कालपुच्छकः।
ऋष्यश्च वरपोतश्च विज्ञेया जाङ्गला मृगाः॥ १६॥

कादम्बस्तादृशपक्षी। काकतुण्डकः श्वेतपानीयकौड़ी। उत्क्रोश उच्चैःक्रोशकृत्, वृहद्बिल इति लोके। पुण्डरीकाक्षः पुण्डरियापक्षिभेदः। मेघरावो मेघनादपक्षी। अम्बुकुक्कुटी जलकुक्कुटः। आरा पक्षिविशेषः स्वनामख्यातः। नन्दीमुखी वाटी च पक्षिभेदौ स्वनामख्यातौ। सुमुखाः सहचारिणश्च रोहिणी च कामकाली च पक्षिभेदा देशविशेषे तत्तन्नामानः। सारसः प्रसिद्धः। रक्तशीर्षकः चक्रवाकप्रकारः चक्रवाकः प्रसिद्धः। तथान्ये कर्दमखचादयः। इति वारिचरपक्षिवर्गः॥ १५॥

गङ्गाधरः—पृषत इत्यादि। पृषतादयो मृगा जाङ्गलसंज्ञा भवन्ति। तत्र पृषत् हरिणविशेषः। शरभ उष्ट्रप्रमाणमहाशृङ्गपशुभेदः। रामो हिमालये महामृगः। श्वदंष्ट्रः चतुर्दंष्ट्रः कात्तिकपुरे प्रसिद्धमृगः। मृगमातृकः पृथूदरगवाकृति वृहद्धरिणः। शशः प्रसिद्धः। उरणः शशकविशेषः। कुरङ्गो हरिणविशेषः। गोकर्णः गोमुखाहरिणः। कोट्टकारश्च चारुष्कश्च हरिणश्च हरिणभेदाः।

पानीयकाकः, कादम्बः कलहंसः, काकतुण्डकः श्वेतकारण्डवः, उत्क्रोशः कुरल इति ख्यातः, पुण्डरीकाक्षः पुण्डरः, मेघरावो मेघनादः, मेघरावश्चातक इत्यन्ये, तन्न, तस्य वारिचरत्वाभावात्, अम्बुकुक्कुटी जलकुक्कुटी, आरा स्वनामख्याता, नन्दीमुखी पत्रारी सारसः प्रसिद्धः, रक्तशीर्षकः सारसभेदो लोहितशिराः; अम्बुचारिण इति जले प्लवन्त इत्यर्थः॥ १५॥

चक्रपाणिः—पृषतश्चित्रहरिणः; शरभोऽष्टपाद उष्ट्रप्रमाणो महाशृङ्गः पृष्ठगतचतुष्पादः काश्मीरे प्रसिद्धः, रामः हिमालये महामृगः, श्वदंष्ट्रा चतुर्दंष्ट्रा कार्त्तिकपुरे प्रसिद्धः, मृगमातृका स्वल्पा पृथूदरा हरिणजातिः, कुरङ्गो हरिणभेदः, गोकर्णो गोमुखहरिणविशेषः, हरिणस्ताम्रवर्णः,

लावो वर्त्तीरकश्चैव वार्त्तीकः सकपिञ्जलः ।
चकोरश्चोपचक्रश्च कुक्कुभो रक्तवर्त्मकः * ।
लावाद्या विष्किरास्त्वेते——————॥ १७ ॥
——————वक्ष्यन्ते वर्त्तकादयः ।
वर्त्तको वर्त्तिका चैव वर्हो तित्तिरिकुक्कुटौ ॥
कङ्कशारपदेन्द्राभ-गोनर्द्दगिरिवर्त्तकाः ।
क्रकरोऽवकरश्चैव + वारड़ाश्चेति विष्किराः ॥ १८ ॥

एणः कृष्णसारः । सम्बरः कालपुच्छकः ऋष्यश्च वरपोतश्च हरिणभेदाः । सुश्रुते शशो विलेशयत्वेनोक्तो गुणभेदार्थः । इति जाङ्गलमृगवर्गः ॥ १६ ॥

गङ्गाधरः—जाङ्गलपक्षिणां संज्ञान्तरमाह लाव इत्यादि । लावाद्या एते विष्किरा विष्किरसंज्ञा विकीर्य्य भक्षयन्तीति । विष्किरा द्विविधाः गुणविशेषार्थं भिद्यन्ते । लावाद्याश्च वर्त्तकादयश्च । तत्रैते लावाद्याः । लावश्च वर्त्तीरकश्चेत्यादयो रक्तवर्त्मकान्ताः । तत्र लावः प्रसिद्धः । वर्त्तीरः कपिञ्जलविशेषः । वार्त्तीकश्च कपिञ्जलभेदः । कपिञ्जलः श्वेततित्तिरिः । चकोरः प्रसिद्धः । उपचक्रश्चकोरविशेषः । कुक्कुभः कुक्कुपा । रक्तवर्त्मकः रक्तवर्णवटेर इति लोके । इत्येते लावाद्या विष्किरा उक्ताः ॥ १७ ॥

गङ्गाधरः वर्त्तकादयो विष्किरा अत ऊर्द्ध्वं वक्ष्यन्ते । तद्यथा । वर्त्तक इत्यादि । वर्त्तको वटेरः पक्षी । वर्त्तिका क्षुद्रवटेरः । वर्हो मयूरः । तित्तिरिः कृष्णतित्तिरिः । कुक्कुटो वन्यश्च ग्राम्यश्च । कङ्कः कोँक इति लोके । शारपदेन्द्राभो मल्लकङ्कः । गोनर्द्दो ढौँकङ्कः । गिरिवर्त्तकः पर्व्वतस्थवटेरः ।

एणः कृष्णसारः, ऋष्यो नीलाण्डो हरिणः, चारुष्कादयोऽपि हरिणभेदा एव । शशस्तु सुश्रुते बिलेशयेषु पठितः, तद् गुणान्तरार्थम् ॥ १६ ॥

चक्रपाणिः—लावः प्रसिद्धः, वर्त्तीरः कपिञ्जलभेदः, कपिञ्जलो गौरतित्तिरिः, वार्त्तीकश्चटकभेदः सङ्घातचारी, उपचक्रश्चकोरभेदः कुक्कुभः प्रसिद्धः, रक्तवर्णक इति कुक्कुभविशेषणम्, तेन स्थूलकुक्कुटो गृह्यते ॥ १७ ॥

चक्रपाणिः—वर्त्तकः बट्टई ख्याता, वर्त्तिका स्वल्पप्रमाणजात्यन्तरमेव ; केचित्तु वर्त्तकस्त्रियं वर्त्तिकां वदन्ति, अस्याश्च ग्रहणं स्त्रीलिङ्गभेदेऽपि विशेषलाघवप्रतिषेधार्थम्, अन्यथा, स्त्रीत्वेन

* रक्तवर्णक इति पाठान्तरम् । + विकरश्चैवेति वा पाठः ।

शतपत्रो भृङ्गराजः कोयष्टिर्जीवजीवकः।
कैरातः कोकिलोऽत्यूहो गोपपुत्रः प्रियानुजः॥
लट्टालट्टूषकौ बभ्रुर्वटहा डिण्डिमानकः।
जटी दुन्दुभिधाङ्कार-लौहपृष्ठकुलिङ्गकाः॥
कपोतशुकसारङ्गाश्चिरटीकङ्कुयष्टिकाः।
शारिकाः कलविङ्कश्च चटकोऽङ्गारचूड़कः।
पारावतः पानविक इत्युक्ताः प्रतुदा द्विजाः॥ १९॥

क्रकरः कयेर इति लोके। अयकरः क्रकरभेदः। वारडाश्च क्रकरविशेषाः। इति वर्त्तकादयो विष्किरसंज्ञा भवन्ति ॥ १८ ॥

गङ्गाधरः—शतपत्रेत्यादि। शतपत्रादयः पानविकान्ता द्विजाः प्रतुदसंज्ञा भवन्ति। तत्र शतपत्रः काष्ठकुठारिकः। भृङ्गराजः प्रसिद्धः शुकपक्षिसमवर्णाकृतिः। कोयष्टिः कोरुक् इति ख्यातः। जीवजीवकः विषदर्शने मृत्युः। कैरातकः कोकिलभेदः। कोकिलः प्रसिद्धः। अत्यूहः डाउकः। गोपपुत्रः स्वनामख्यातः। प्रियानुजो देशभेदे ख्यातः। लट्टा लटापक्षीति ख्यातः। लट्टूषकः लाटघा पक्षीति ख्यातः। बभ्रुः पिङ्गलपक्षी। वटहा बड़हा पक्षी। डिण्डिमानकः स्वनामख्यातः। जटी जटापक्षी। दुन्दुभिधाङ्कारः दुँधुयापक्षी। लोहपृष्ठश्च कुलिङ्गभेदः। कुलिङ्गकः वायइ इति लोके। कपोतो घुघुः। शुकः प्रसिद्धः। सारङ्गश्चातकः। चिरटी चिटाइ पक्षी। कङ्कुः काउन पक्षी। यष्टिका याइट् पक्षी। शारिका शालिक-मयना-गाङ्गशालिकभेदात् त्रिविधा। कलविङ्को गृहचटकः। चटको वनचटकः। अङ्गारचूड़कः बुल्बुल इति लोके। पारावतः कपोतः। पानविकः कपोतभेद इति। प्रतुद्य भक्षयन्तीति प्रतुदसंज्ञा द्विजाः पक्षिणः उक्ताः। इति प्रतुदवर्गः ॥ १९ ॥

वर्त्तिकाद् वर्त्तिकाया लाघवं स्यात्; बर्ही मयूरः; तारपक्षेश्वाभो महाकङ्कः, गोनर्दो क्रौञ्चभेद इति ख्यातः, क्रकरः प्रसिद्धः। लावादिवर्त्तिकादिगणद्वयकथनं गुणभेदार्थम् ॥ १८ ॥

चक्रपाणिः—शतपत्रः काष्ठकुट्टकः, भृङ्गराजः प्रसिद्धो भ्रमरवर्णः, कोयष्टिः कोड़ा इति ख्यातः, जीवञ्जीवको विषदर्शनमृत्युः, अत्यूहो दात्यूहः, दात्यूह इति प्रसिद्धः पाठः, लट्टा ... स्वल्पगुञ्जाचोभागः, लट्टूषकोऽपि तद्भेदः, डिण्डिमानक डिण्डिमवच्छब्दकारी, कुलिङ्ग इति वन-

प्रसह्य भक्षयन्त्येते प्रसहास्तेन संज्ञिताः ।
भूशया बिलशायित्वादानूपानूपसंश्रयात् ॥
जले निवासाज्जलजा जलेचर्य्याज्जलेचराः ।
स्थलजा जाङ्गलाः प्रोक्ता मृगा जङ्गलचारिणः ॥
विकीर्य्य विष्किराश्चैव प्रतुद्य प्रतुदास्तथा ।
योनिरष्टविधा त्वेषां मांसानां परिकीर्त्तिता ॥ २० ॥

गङ्गाधरः—अथ यथैषां प्रसहादिसंज्ञा कृता, तदाह—प्रसहेत्यादि । प्रसह्य हठादादाय भक्षयन्तीति गवादयस्तेन प्रसह्य भक्षणेन प्रसहाः संज्ञिताः ॥ १ ॥ भूशया बिले शायित्वादिति भुवि गर्त्ते शयितुं शीलमेषामिति बिलशायित्वं तस्माच्छागादयो भूशयाः संज्ञिताः ॥ २ ॥ आनूपोऽनूपसंश्रयात् । अनूपो जलसमीपदेशस्तत्र संश्रयाच्चरणस्थित्यादिकरणात् सृमरादिरानूपः संज्ञितः ॥ ३ ॥ जले निवासाज्जलजा इति, जले जाता निवसन्तीति कूर्म्मादयो वारिजा वारिशयाः संज्ञिताः ॥ ४ ॥ जले चर्य्याज्जलचरा इति । स्थले जाता एव जले चरन्तीति जले चरणशीलत्वात् हंसादयो जलेचरा वारिचारिणः संज्ञिताः ॥ ५ ॥ स्थलजा जाङ्गलाः प्रोक्ता इति । स्थले जायन्ते इति जाङ्गलसंज्ञिताः पृषतादयः प्रोक्ताः, यतस्ते मृगा जङ्गलचारिणः जङ्गले चरन्ति ॥ ६ ॥ विकीर्य्य विष्किराश्चैवेति । मण्डूकप्लुत्या भक्षयन्तीत्यनुवर्त्तते । विकीर्य्य चञ्चुचरणाभ्यां विक्षिप्य ये भक्षयन्तीति ते लावादयो वर्त्तकादयश्च विष्किराः संज्ञिताः । वर्णागमाद्विष्किरेति रूपसिद्धिः ॥ ७ प्रतुद्य प्रतुदास्तथेति भक्षयन्तीत्यनुवृत्त्या । प्रतुद्य बहुधा चञ्चुचरणाभ्याम् अभिहत्य ये भक्षयन्ति ते शतपत्रादयस्तेन प्रतुदाः संज्ञिताः ॥ ८ ॥ इति तेषां गवादीनां मांसानामष्टविधा प्रसहादिभेदेन योनिः परिकीर्त्तिता । सुश्रुते तु मांसवर्गश्चोपदिष्टः । तद्यथा—जलेशया आनूपा ग्राम्याः क्रव्यभुज एकशफा

चटकाकारः पीतमस्तकः बागे इति लोके, कलविङ्को ग्राम्यचटकः, चटकस्तु देवकुलचटकः स्वल्पप्रमाणः । यान्यत्रानुक्तान्यप्रसिद्धानि तानि तद्विधोपदेशान्तरेभ्यो ज्ञेयानि ॥ १९ ॥

चक्रपाणिः—प्रसहादिसंज्ञाभिधानार्थं लक्षणमाह—प्रसह्येति हठात्, आनूपानूपसंश्रयादिति पूर्व्वप्रसिद्धविधेर्नित्यत्वादानूपानूप इत्यत्र लोपस्य सिद्धत्वेनैव संज्ञिता ज्ञेया । जलेचर्य्यादिति जलवासित्वमेव हंसादीनां जले चरणमात्रत्वं बोद्धव्यम् । स्थलजा इत्युक्ते गोजादिष्वपि स्थल-

जाङ्गलाश्चेति षण्मांसवर्गाः, तेषां वर्गाणामुत्तरोत्तरं प्रधानतमाः। ते पुनः द्विविधाः—जाङ्गला आनूपाश्चेति। तत्र जाङ्गलवर्गोऽष्टविधः, तद् यथा—जङ्गाला विष्किराः प्रतुदा गुहाशयाः प्रसहाः पर्णमृगा बिलेशया ग्राम्याश्चेति। तेषां जङ्गालविष्किरौ प्रधानतमौ, तत्रैणहरिणर्क्ष्यकुरङ्गकरालकृतमालशरभश्वदंष्ट्रापृषतचारुष्करमृगमातृकाप्रभृतयो जङ्गाला मृगाः॥ १॥ लावतित्तिरिकपिञ्जलवर्त्तीरवर्त्तिकावर्त्तकनप्तृकावातीकचकोर-कलविङ्क-मयूरक्रकरोपचक्रक-कुक्कुटसारङ्गशतपत्रककुतित्तिरिकुररावयवलकप्रभृतयो जाङ्गला विष्किराः॥ २॥ कपोतपारावत-भृङ्गराज--परभृत-कोयष्टिककुलिङ्ग-गृहकुलिङ्ग-गोक्षोडक-डिण्डिमानकशतपत्रक-मातृनिन्दकभेदाशिशुकासारिकाभवल्गुलीगिरिशालकालमुण्डीखञ्जरीटकहारीतदात्यूहप्रभृतयः प्रतुदाः॥ ३॥ सिंहव्याघ्रवृकतरक्ष्वृक्षद्वीपिमार्ज्जारशृगालमृगेर्व्वारुकप्रभृतयो गुहाशयाः॥ ४॥ काककङ्ककुररचाषभास-शशघात्युलूकचिल्लिश्येनगृध्रप्रभृतयः प्रसहाः॥ ५॥ मद्गुमूषिकवृक्षशायिकाऽवकुशपूतिघासवानरप्रभृतयः पर्णमृगाः॥ ६॥ श्वाविच्छल्लकगोधा-शश-वृषदंश-लोपाक-लोमश-कर्णकदली-मृगप्रियकाजगरसर्पमूषिकनकुलमहाबभ्रुप्रभृतयो बिलेशयाः॥ ७॥ अश्वाश्वतरगोखरोष्ट्रवस्तोरभ्रमेदःपुच्छकप्रभृतयो ग्राम्याः॥ ८॥ जाङ्गलानामेवमष्टधाभेदकथनं वर्गशो गुणभेदोपदेशार्थम्। तद् यथा—जङ्गाला मृगाः कषाया मधुरा लघवो वातपित्तहराः तीक्ष्णा हृद्या वस्तिशोधनाश्च॥ १॥ विष्किरा लघवः शीतमधुराः कषाया दोषोपशमनाश्च॥ २॥ प्रतुदाः कषायमधुरा रूक्षाः फलाहारा मरुत्कराः। पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्च्चसः॥ ३॥ गुहाशयाः, मधुरा गुरवः स्निग्धा बल्या मारुतनाशनाः। उष्णवीर्य्या हिता नित्यं नेत्रगुह्यविकारिणाम्॥ ४॥ प्रसहाः, एते सिंहादिभिः सर्व्वे समाना वायसादयः। रसवीर्य्यविपाकेषु विशेषाच्छोषिणे हिताः॥ ५॥ पर्णमृगाः, मधुरा गुरवो वृष्याश्चक्षुष्याः शोषिणे हिताः। सृष्टमूत्रपुरीषाश्च कासार्शःश्वासनाशनाः॥ ६॥ बिलेशयाः, वर्च्चो मूत्रं संहतं कुर्य्युरेते, वीर्य्ये चोष्णाः पूर्व्ववत् स्वादुपाकाः। वातं हन्युः श्लेष्मपित्तञ्च कुर्य्युः, स्निग्धाः कासश्वासकार्श्यापहाश्च॥७॥ ग्राम्या वातहराः सर्व्वे बृंहणाः कफपित्तलाः। मधुरा रसपाकाभ्यां दीपना बलवर्द्धनाः॥ ८॥ इति। इत्यष्टविधा जाङ्गलाः। आनूपास्तु पञ्चविधा उक्ताः.

जातेषु प्रसक्तिः स्यादित्याह—जाङ्गलचारिण इति। विकीर्य्यैत्यत्र भक्षयन्तीति शेषः। पूर्वं प्रतुदं त्वत्र अपि, प्रतुदेति वहुधार्द्रामहत्व॥ २०॥

प्रसहा भूशयानूप-वारिजा वारिचारिणः ।
गुरूष्णस्निग्धमधुरा बलोपचयवर्द्धनाः ॥
वृष्याः परं वातहराः कफपित्तविवर्द्धनाः ।
हिता व्यायाममनित्येभ्यो नरा दीप्ताग्नयश्च ये ॥
प्रसहानां विशेषेण मांसं मांसाशिनां भिषक् ।
जीर्णार्शोग्रहणीदोष-शोषार्त्तानां प्रयोजयेत् ॥ २१ ॥

तत् यथा—आनूपवर्गस्तु पञ्चविधः । तत् यथा—कूलचराः प्लवाः कोशस्थाः पादिनो मत्स्याश्चेति । तत्र गजगवयमहिषरुरुचमरसृमररोहितवराहखड्गिगोकर्णकालपुच्छकोन्द्रन्यङ्कुरण्यगवयप्रभृतयः कूलचराः । ० । वातपित्तहरा वृष्या मधुरा रसपाकयोः । शीतला बलिनः स्निग्धा मूत्रलाः कफवर्द्धनाः ॥१॥ हंससारसक्रौञ्चचक्रवाक-कुररकादम्बकारण्डवजीवञ्जीवकवकबलाका-पुण्डरीक-प्लवशरारीनन्दीमुखीमद्गुतक्रोशकाचाक्षमल्लिकाक्षशुक्लाक्षपुष्करशायिकाकोनाल-काम्बुकुक्कुटिकामेघरावश्वेतचरणप्रभृतयः प्लवाः संघातचारिणः ।०। रक्तपित्त-हराः शीताः स्निग्धा वृष्या मरुज्जितः । सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः ॥२॥ शङ्खशङ्खनखशुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः ॥ ३ ॥ कूर्मकुम्भीरकर्कटक-कृष्णकर्कटकशिशुमारप्रभृतयः पादिनः ।०। शङ्खकूर्मादयः स्वादु-रसपाका मरुन्नुदः । शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्द्धनाः ॥४॥ मत्स्या वक्ष्यन्ते । इत्येवंगुणशेषकथनार्थं गणश एव सामान्येन विशेषतस्तु पुनरुपदेक्ष्यते । इति । अस्मिंस्तु तन्त्रे प्रसहभूशयजाङ्गलविष्किरप्रतुदवर्गभेदेनोक्तास्ते सुश्रुते जाङ्गलत्वसामान्यादपृथग् विशेषादुक्ता जाङ्गलादिभेदेन । ये चास्मिंस्तन्त्रे आनूपवारिशयवारिचरवर्गा उक्तास्ते सुश्रुते आनूपत्वसामान्यात् पञ्च विशेषाः कूल-चरादित्वसामान्येनोक्ता इति न विरोधः । तत्तत्सामान्येनैतत्सामान्येन ये केचिद् गुणकर्म्मभेदास्ते च यत्किञ्चिद्द्वलक्षण्यात्आद्रियन्ते कुशलैः ॥ २० ॥

गङ्गाधरः—तथा चाप्योनीनां वर्गशो गुणकर्म्माण्याह—प्रसहा इत्यादि । प्रसहादयः पञ्च वर्गाः । गुरूष्णस्निग्धमधुरा बलोपचयवर्द्धनाः । वृष्याश्च परमुत्कृष्टं वातहराः, कफपित्तविवर्द्धनाश्च । व्यायामानित्येभ्यो हिताः, ये च नरा दीप्ताग्नयस्तेभ्योऽपि हिताः । इति पञ्चवर्गसामान्यगुणकर्म्माणि ।

चक्रपाणिः—प्रसहा द्विविधा मांसादा व्याघ्रश्येनादयः, तथा अमांसादाश्च गवादयः ; तेन

लावाद्यो वैष्किरो वर्गः प्रतुदा जाङ्गला मृगाः।
लघवः शीतमधुराः सकषाया हिता नृणाम्।
पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ॥ २२ ॥
विष्किरा वर्त्तकाद्यास्तु प्रसहाल्पान्तरा गुणैः ॥
नातिशीतगुरुस्निग्धं मांसमाजमदोषलम्।
शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ॥
मांसं मधुरशीतत्वाद् गुरु बृंहणमाविकम्।

विशेषतस्त्वाह—प्रसहानामित्यादि। मांसाशिनां प्रसहानां द्वीपिसिंहवृक-व्याघ्रादीनां मांसं भिषक् जीर्णार्शोग्रहणीदोषशोषार्त्तानां विशेषेण प्रयोजयेत् ॥ २१ ॥

गङ्गाधरः—लावाद्य इत्यादि। लावाद्यो वैष्किरो वर्गो न तु वर्त्तकादिः। प्रतुदाश्च जाङ्गलाश्च मृगाः सर्व्वे लघवः शीताश्च मधुराश्च सकषायाः पित्तोत्तरे वातमध्ये कफानुगे सन्निपाते नृणां हिताः ॥ २२ ॥

गङ्गाधरः—विष्किरा इत्यादि। वर्त्तकाद्यास्तु विष्किराः प्रसहाल्पान्तरा गुणैरल्पभेदाः। गुरूष्णेत्यादिभिरुक्तैः प्रसहस्य गुणैः किञ्चिदल्पगुणाः।

अष्टानां वर्गाणां गुणानुक्त्वा छागगुणानाह—नातीत्यादि। आजं मांसं नातिशीतं नातिगुरु नातिस्निग्धमदोषलञ्च। नृणां शरीरधातुभिः सह सामान्यात् गुणसामान्यादनभिष्यन्दि च बृंहणञ्च। सुश्रुते तु—नातिशीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः। छगलस्त्वनभिष्यन्दी तेषां पीनसनाशनः ॥ इति। तेषां ग्राम्याणां मध्ये। मन्दपित्तकफत्वेऽपि दोषलत्वव्याघातो नेष्यते। प्रशस्तदोषं लानि इत्यर्थात्।

मांसमित्यादि। आविकं मांसं मधुरशीतत्वात् गुरु बृंहणमिति। सुश्रुते तेऽपि चोक्तम्—बृंहणं मांसमौरभ्रं पित्तश्लेष्मावहं गुरु। मेदःपुच्छोद्भवं वृष्यमौरभ्र-

मांसादानां विशेषमाह—प्रसहानामित्यादि। जीर्णत्वेनार्शःप्रभृतीनां चिरानुबन्धं दर्शयति। प्रतुदा इत्यत्र, तथा, जाङ्गला इत्यत्र चकारो लुप्तनिर्दिष्टः ; कफानुगे इति च्छेदः ॥ २१।२२ ॥

चक्रपाणिः—शरीरधातुसामान्यादिति मनुष्यमांससमानत्वात्, एतेन शीतगुरुस्निग्धत्वेन गुरुकमप्याजमांसं शरीरधातुसाम्यात् कफं न करोतीत्युक्तं स्यात्, आविकं मांसं मधुरशीतत्वेन

योनावजावी व्यामिश्र-गोचरत्वादनिश्चितौ ॥
सामान्येनोपदिष्टानां मांसानां स्वगुणैः पृथक् ॥ २३ ॥
केषाञ्चिद् गुणवैशेष्याद् विशेष उपदेक्ष्यते ।
गुरूष्णस्निग्धमधुराः स्वरवर्णबलप्रदाः ॥
बृंहणाः शुक्रलाश्चोक्ता हंसा मारुतनाशनाः ।
दर्शनश्रोत्रमेधाग्नि-वयोवर्णस्वरायुषाम् ।
बर्ही हिततमो बल्यो वातघ्नो मांसशुक्रलः ॥

सदृशं गुणैः । इति । मेदःपुच्छो मेषविशेषः, पुच्छे यस्य स्थूलमांसपिण्डं वर्त्तते । इति ।

नन्वष्टविधयोनिव्यतिरिक्तावेतावजावी किं भवत इति ? तत्राह—योनावित्यादि । द्वावजावी व्यामिश्रगोचरत्वाद् ग्राम्यारण्यचरणशीलत्वाद् योनावनिश्चितौ न ग्राम्यौ न जाङ्गला इत्यतः पृथगष्टभ्य उक्तौ ।

नन्वष्टयोनीनां गणशः सामान्येनोक्ता गुणा एव किं सन्ति न विशेषेणेति ? अत आह—सामान्येनेत्यादि ॥ २३ ॥

गङ्गाधरः—केषाञ्चित्तु सर्व्वेषां गुणैर्व्विशेष उपदेक्ष्यते । तत्रादौ वारिचरेष्वच्यते—गुरूष्णेत्यादि । गुरूष्णस्निग्धमधुरा इति बहुवचनात् राजहंसमल्लिकधार्त्तराष्ट्रक्षुद्रहंसभेदेन हंससामान्यस्यैवैते गुणाः ख्यापिताः । सुश्रुतेऽपि गुरूष्णमधुरस्निग्धः स्वरवर्णबलप्रदः । बृंहणः शुक्रलस्तेषां हंसो मारुतनाशनः ॥ इति आनूपवर्गे संघातचारिप्लवैरुक्तम् ।

दर्शनेत्यादि । वर्त्तकादिर्विष्किरेषु मध्ये बर्ही दर्शनादीनां हिततमः ।

पित्तहरमपि बोद्धव्यम्, अत एव शारदविधावप्युक्तम्—"उरभ्रशरभान्" इति । रक्तपित्तनिदाने तु "वराहमहिष" इत्यादिना द्रव्यान्तरसंयुक्तस्यैवाविकमांसस्य रक्तपित्तकर्तृत्वं ज्ञेयम् । योनाविति प्रसहाद्यष्टविधयोनौ ; मिश्रगोचरत्वादिति कदाचिदानूपसेवनात्, कदाचिद् धन्वसेवनात्, कदाचिदुभयसेवनात्, अजाव्योरनिश्चितयोनित्वमित्यर्थः ; अत्र 'अनिश्चिते' इति योनिविशेषणम्, किंवा, अजा च अवी च एते अनिश्चिते ; ननु यद्येवं, तदा तित्तिरिरपि धन्वानूपसेवनात् विष्किरगणे पठनीयः, नैवं, तित्तिरिजातिविशेषस्य धन्वानूपयोर्नियमेन निषेवणात् गुणनियमः पार्य्यते कर्तुम् ; अव्यजयोस्तु नियमोऽयं नास्ति, यतः, केचिदजावी धन्वमात्रचरे, केचिदानूपमात्रचरे, केचिच्चोभयमात्रचरे ; तेन, तयोर्नियमचरकृतो योनिभेदः कर्तुं न पार्य्यते ॥ २३ ॥

चक्रपाणिः—केषाञ्चिदिति वक्ष्यमाणमयूरादीनां ; गुणवैशेष्यादिति विशिष्टगुणकारित्वात् ।

स्निग्धाश्चोष्णाश्च वृष्याश्च बृंहणाः स्वरबोधनाः।
बल्याः परं वातहराः स्वेदनाश्चरणायुधाः॥
गुरूष्णो मधुरो नाति-धन्वानूपनिषेवणात्।
तित्तिरिः स जयेच्छीघ्रं त्रिदोषाननिलोल्वणान्॥
पित्तश्लेष्मविकारेषु सरक्तेषु कपिञ्जलाः।
मन्दवातेषु शस्यन्ते शैत्यमाधुर्य्यलाघवात्॥
लावाः कषायमधुरा लघवोऽग्निविवर्द्धनाः।
सन्निपातप्रशमनाः कटुकाश्च विपाकतः॥ २४॥

वातघ्नो मांसशुक्रलश्च। सुश्रुतेऽपि विष्किरवर्गे—मयूरः स्वरमेधाग्नित्वक्श्रोत्रेन्द्रियदार्ढ्यकृत्। स्निग्धोष्णोऽनिलहा वृष्यः स्वेदवर्णबलावहः॥ इति। अन्यत्र च। बर्ही दृक्श्रोत्रमेधाग्नि-वयोवर्णस्वरायुषाम्। हितो बल्यो गुरुश्चोष्णो वातघ्नो मांसशुक्रलः। इति। तथान्यत्र च। हेमन्तकाले शिशिरे वसन्ते सेव्यं हि मायूरमुशन्ति मांसम्। उष्णो हि बर्ही विषभोजनत्वाद्वर्षाशरद्ग्रीष्मसुखेष्वपथ्यम्। चरणायुधाः कुक्कुटाः आरण्याः ग्राम्याश्च। वर्त्तकादिविष्किरेषु मध्ये। सुश्रुते च विष्किरवर्गे—बृंहणः कुक्कुटो वन्यस्तद्वद्ग्राम्यो गुरुस्तु सः। वातरोगक्षयवमी-विषमज्वरनाशनः॥ इति।

तित्तिरिरित्यादि। वर्त्तकादिविष्किरेषु स तित्तिरिः। त्रिदोषान् वातोल्वणान् शीघ्रं जयेत्। सुश्रुतेऽपि—विष्किरेषु. ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्द्धनः। तित्तिरिः सर्व्वदोषघ्नो ग्राही वर्णप्रसादनः। हिक्काश्वासानिलहरो विशेषाद् गौरतित्तिरिः। पित्तश्लेष्मेत्यादि। लावादिविष्किरेषु मध्ये कपिञ्जलाः शैत्यमाधुर्य्यलाघवात् सरक्तेषु मन्दवातेषु पित्तविकारेषु श्लेष्मविकारेषु च शस्यन्ते बहुवचनात्। सुश्रुते च विष्किरवर्गे—रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः। कफोत्थेषु च रोगेषु मन्दवाते च शस्यते॥ इति।

लावा इत्यादि। लावादिविष्किरेषु लावाः कषायमधुरा अपि कटुपाकाः

मयूरस्य गुरुत्वस्निग्धत्वं वर्त्तकादिगणपठितत्वेनैव लब्धं सत् पुनरुच्यते विशेषार्थम्; एवमन्यत्रापि गणोक्तगुणकथनेन लब्धस्य पुनः कथने व्याख्येयम्। चरणायुधः कुक्कुटः; धन्वानूपनिषेवणादिति हेतुवचनेन च एव धन्वानूपनिषेवी तित्तिरिः स एव यथोक्तगुण इति ज्ञेयः; एकमन्येऽपि ये गवादयो धन्वानूपनिषेविणस्तेऽपि तित्तिरिसमानगुणाः स्युः,

गोधा विपाके मधुरा कषायकटुका रसे ।
वातपित्तप्रशमनी बृंहणी बलवर्द्धनी ॥
शल्लको मधुरोऽम्लश्च विपाके कटुकः स्मृतः ।
वातपित्तकफघ्नश्च श्वासकासहरस्तथा ॥
कषाया विशदाः शीता रक्तपित्तनिवर्हणाः ।
विपाके मधुराश्चैव कपोता गृहवासिनः ॥
तेभ्यो लघुतराः किञ्चित् कपोता वनवासिनः ।
शीताः संग्राहिणश्चैव स्वल्पं मूत्रकराश्च * ते ॥

प्रभावात् । सुश्रुते च—विष्किरमध्ये, संग्राही दीपनश्चैव कषायमधुरो लघुः । लावः कटुविपाकश्च सन्निपाते च पूजित ॥ इति ॥ २४ ॥

गङ्गाधरः—गोधेत्यादि । भूशयेषु मध्ये गोधा रसे कषायकटुका अपि विपाके मधुरा प्रभावान्न तु कटुका । सुश्रुते च—विलेशयेषु, गोधा विपाके मधुरा कषायकटुका रसे । वातपित्तप्रशमनी बृंहणी बलवर्द्धिनी । द्विधा गोधा, स्वर्णगोधिका वन्यगोधिका चेति, द्वयोरेवैते गुणाः । शल्लक इत्यादि । विलेशयेषु शल्लको रसे मधुराम्लश्च प्रभावाद्विपाके कटुकः । रक्तपित्तादिहरश्च । सुश्रुते च—विलेशयेषु, शल्लकः स्वादुपित्तघ्नो लघुः शीतो विषापहः । इति ।

कषाया इत्यादि । प्रतुदेषु मध्ये कपोताः पारावता गृहवासि-वनवासि-भेदाद् द्विविधाः । तत्र गृहवासिनः पारावताः कषाया विशदाश्च । कषाया रसेऽपि प्रभावाद्विपाके मधुराः । तेभ्यो गृहवासिपारावतेभ्यः किञ्चिल्लघुतरा वनवासिनः । पारावता ये कपोतास्तेभ्यो मूत्रतरास्ते शीताः स्वल्पं संग्राहिणश्चैव भवन्ति । सुश्रुते च—प्रतुदवर्गे, रक्तपित्तप्रशमनः कषायो विशदोऽपि च । विपाके मधुरश्चापि गुरुः पारावतः स्मृतः ॥ इति । पारावतसामान्यस्य गुणा उक्ताः । काणकपोतगुणाश्चोक्ताः, कषायस्वादुलवणो गुरुः काण-

तित्तिरिस्तु विशेषेणेति तित्तिरिः साध्वादुकः ; किंवा, तित्तिरेरेव एवंगुणत्वे धन्वानूपनिर्देशनं हेतुः, नान्यत्र गवादेरनूपदेशादेरिति शेषम् ॥ २४ ॥

चक्रपाणिः—कपोता गृहवासिन इति पारावताः । चटका मधुरा इति केचित् पठन्त्येव,

* स्वल्पमूत्रकराश्चेति चक्रसम्मतः पाठः ।

शुकमांसं कषायाम्लं विपाके कटु शीतलम्।
शोषकासक्षयहितं संग्राहि लघु दीपनम्॥
चटका मधुराः स्निग्धाः कफशुक्राभिवर्द्धनाः।
सन्निपातप्रशमनाः शमना मारुतस्य च॥
बलवीर्य्यकराश्चैते क्लीवत्वमुपहन्यते।
कषायो विशदो रुक्षः शीतः पाके कटुर्लघुः॥
शशः स्वादुः प्रशस्तश्च सन्निपातेऽनिलावरे।
मधुरा मधुराः पाके त्रिदोषशमनाः शिवाः।
लघवो बद्धविण्मूत्राः शीताश्चैणाः प्रकीर्त्तिताः॥

कपोतकः। इति। काणः क्षुद्रः कपोतो घुघुरिति ख्यातः। प्रतुदेषु भेदाशिनो गुणाश्चोक्ताः सुश्रुते—सर्वदोषकरस्तेषां भेदाशी मलदूषकः। इति। तेषामिति प्रतुदानां मध्ये। शुकमांसमित्यादि। प्रतुदेषु शुकमांसं विपाके यथासम्भवात् कटु तस्माच्च संग्राहि लघु चोपपद्यते। प्रतुदेषु सुश्रुते—कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्द्धनः। रक्तपित्तहरो वेश्म कुलिङ्गस्त्वतिशुक्रलः॥ इति। कुलिङ्गश्चटकः। तद्गुणमाह—चटका इत्यादि। चटका इति बहुवचनेन जातिमात्रं ख्यापितं, तेन कुलिङ्गचटकयोरेव गुणसंग्रहः। कफशुक्राभिवर्द्धना अपि मिलितत्रिदोषशमनाः प्रभावात्। मारुतस्य च शमनाः।

कषाय इत्यादि। जाङ्गलमृगेषु शशः स्वादुः कषायो रसे लघुरुक्षविशदशीतो वीर्य्ये पाके कटुः सन्निपाते वातावरे शस्यते। सुश्रुते—विलेशयेषु, कषायमधुरस्तेषां शशः पित्तकफापहः। नातिशीतलवीर्य्यत्वाद्वाते साधारणो मतः॥ इति।

मधुरा इत्यादि। जाङ्गलमृगेषु एणाः कृष्णसारा रसे मधुराः पाके च मधुराः, त्रिदोषशमनाः संसृष्टानां त्रयाणां दोषाणां शमनाः। शिवा मङ्गलाः। लघवो बद्धविण्मूत्राः शीताश्च वीर्य्येण। सुश्रुते च—जङ्गालानां, कषायो मधुरो हृद्यः पित्तासृक्कफरोगहा। संग्राही रोचको बल्यस्तेषामेणो ज्वरापहः॥ मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः। शीतलो बद्धविण्मूत्रः सुगन्धि-

वे तु न वदन्ति, तेषां मते चटकस्य प्रतुदसामान्यगुणकथं मूल्यर्थं "तृप्तिं" चटकमांसानां गन्धा

गव्यं केवलवातेषु पीनसे विषमज्वरे ।
शुष्ककासश्रमात्यग्नि-मांसक्षयहितञ्च तत् ॥
गुरूष्णा मधुरा बल्या बृंहणाः पवनापहाः ।
मत्स्याः स्निग्धाश्च वृष्याश्च बहुदोषाः प्रकीर्त्तिताः ॥

हरिणो लघुः ॥ एणः कृष्णस्तयोर्मध्ये हरिणस्ताम्र उच्यते । न कृष्णो न च ताम्रश्च कुरङ्गः सोऽभिधीयते ॥ इति ।

गव्यमित्यादि । प्रसहेषु गव्यं मांसं केवलवातादिषु हितम् । इति । सुश्रुते ग्राम्यवर्गे—श्वासकासप्रतिश्याय-विषमज्वरनाशनम् । श्रमात्यग्निहितं गव्यं पवित्रमनिलापहम् ॥ अश्वादिमांसानां गुणाश्चोक्ताः । औरभ्रवत् सलवणं मांसमेकशफोद्भवम् । अल्पाभिष्यन्दयं वर्गो जाङ्गलः समुदाहृतः ॥ दूरे जलान्तनिलया दूरे पानीयगोचराः । ये मृगाश्च विहङ्गाश्च तेऽल्पाभिष्यन्दिनो मताः ॥ अतीवासन्ननिलयाः समीपोदकगोचराः । ये मृगाश्च विहङ्गाश्च महाभिष्यन्दिनस्तु ते ॥ इति ।

गुरूष्णा इत्यादि । वारिशयवर्गेषु । मत्स्या गुरूष्णा मधुराश्च रसे पाके च मधुराः । उष्णाः प्रभावात् । पवनापहाः स्निग्धत्वात् । बहुदोषा नानाव्याधिकराः । सुश्रुते पञ्चविधा आनूपा उक्ताः—कूलचराः, प्लवाः कोशस्थाः पादिनो मत्स्याश्चेति । तत्र मत्स्यास्तु द्विविधाः नादेयाः सामुद्राश्च । तत्र नादेया रोहितपाठीनपाटलाराजीववर्म्मिगर्गरमत्स्यकृष्णमत्स्यवागुञ्जारमुरलसहस्रदंष्ट्रप्रभृतयः । नादेया मधुरा मत्स्या गुरवो मारुतापहाः । रक्तपित्तकराश्चोष्णा वृष्याः स्निग्धाल्पवर्च्चसः । कषायानुरसस्तेषां शष्पशैवालभोजनः । रोहितो मारुतहरो नात्यर्थं पित्तकोपनः । पाठीनः श्लेष्मलो वृष्यो निद्रालुः पिशिताशनः । दूषयत्यस्रपित्तन्तु कुष्ठरोगं करोत्यसौ ॥ मुरलो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा । सरस्तडागसम्भूताः स्निग्धाः स्वादुरसास्तथा । महाह्रदेषु बलिनः स्वल्पेऽम्भस्यबलाः स्मृताः ॥ इति । तथान्यत्र च । मत्स्यास्तु बृंहणाः सर्व्वे गुरवः शुक्रवर्द्धनाः । बल्याः स्निग्धोष्णमधुराः कफपित्तकराः स्मृताः । व्यायामाध्वरतानाञ्च दीप्ताग्नीनाञ्च शस्यते । मत्स्याशिनो न बाधन्ते प्रायशो वातजा गदाः । महाप्रमाणा गुरवः शुक्रला बद्धवर्च्चसः । क्षुद्रमत्स्यास्तु लघवो ग्राहिणो ग्रहणीहिताः । कृष्णमत्स्या लघुस्निग्धा वातघ्ना वह्निवर्द्धनाः ।

मोऽङ्कुषिकेव पयः कृष्यादिषुष्यप्रयोगादेव लभ्यते ; मयूरादीनान्तु बहवो गुणा गणोक्तगुणाधिका

पाण्डरा दीपलाः स्निग्धा गुरवो भिन्नवर्च्चसः । इल्लिशो मधुरः स्निग्धः पित्त-श्लेष्मप्रकोपणः । नृणां व्यायामनित्यानां हितो वह्निप्रदीपनः । एलङ्गः स्निग्धमधुरो गुरुर्विष्टम्भिशीतलः । अन्यत्र । एलङ्गो मधुरो वृष्यः संग्राही कफपित्तजित् । पव्वतो वातहा स्निग्धः शुक्रलो बलवर्द्धनः । तन्त्रान्तरे । पव्वतो मधुरः स्निग्धः कषायानुरसो गुरुः । शिलिन्दः श्लेष्मलो बल्यो विपाके मधुरो गुरुः । वातपित्तहरो वृष्य आमवातहरो मतः । शकुलो मधुरो वृष्यः कषायो विशदो लघुः । अन्यत्र च । शकुलो मधुरो ग्राही रूक्षः पित्तामजिद्गुरुः । भाकुटो मधुरो वृष्यः कषायानुरसो गुरुः । वम्मिमत्स्यस्तथा वृष्यो मधुरो रसपाकयोः । तन्त्रान्तरे तु । वम्मिमत्स्यो गुरुर्वृष्यः कषायो रक्तपित्तहा । वम्मु पो वातहा स्निग्धो ग्रहणीदोषनाशनः । कुलिशो मधुरो हृद्यः कषायो दीपनो मतः । शृङ्गी तु वातशमनी स्निग्धा श्लेष्म-प्रकोपिणी । अन्यत्र तु । शृङ्गी स्वादुरसा स्निग्धा वृंहणी कफकोपिनी । मद्गुरो मधुरो वृष्यो विपाके मधुरो गुरुः । अन्यत्र च । मद्गुरो मधुरः स्निग्धः संग्राही शुक्रलो गुरुः । कवय्यः स्निग्धमधुरा बल्या वातकफापहाः । चल्दङ्गोऽनभिष्यन्दी हितो वाते च रोचनः । गड़को मधुरो रूक्षः कषायः शीतलो लघुः । शकली रोहिताकारा प्रायो भूपो चरत्यसो । मत्स्य-शिलिचिमो नाम वल्लीगड़समो गुणैः । सव्र्ववातकरश्चैव कफनाशन उत्तमः । वल्लीगड़ो लघू रूक्षोऽनभिष्यन्दी च पुष्टनः । गुच्छमत्स्यो गुरुः स्निग्धः श्लेष्मलो वातनाशनः । आड़िमत्स्यो गुरुः स्निग्धो वातश्लेष्म-प्रकोपणः । वायुषो मधुरो वृष्यो वृंहणो धातुवर्द्धनः । भेकाटो मधुरः शीतो वृष्यः श्लेष्मकरो गुरुः । गर्गरो मधुरः स्निग्धो वातपित्तविनाशनः । चित्रफलो गुरुः स्वादुः स्निग्धो वृष्यो बलप्रदः । फली स्वादुर्गुरुः स्निग्धो बलकृच्छुक्र-वर्द्धनी । नन्द्यावत्तस्तु संग्राही कफपित्तविनाशनः । वाचः स्वादुर्गुरुः स्निग्धः श्लेष्मलो वातपित्तजित् । चिङ्गटस्तु गुरुर्ग्राही मधुरो बलवर्द्धनः । भेदः पित्तास्रजिद्वृष्यो रोचनश्च कफप्रदः । चिङ्गटी मधुरा हृद्या वातघ्नी श्लेष्मला गुरुः । स्निग्धास्यकफरोगघ्नी श्रेष्ठा मोष्ठी प्रकीर्त्तिताः । मोष्ठी तिक्ता कटुः स्वादुः शुक्रला कफवातजित् । चन्द्रकस्त्वनभिष्यन्दी मधुरो बलवर्द्धनः । दण्डिकः कफजित् तिक्तो वातपित्तहरो लघुः । चम्पकुन्दो गुरुर्वृष्यो मधुरो वात-पित्तजित् । त्रिकण्टः पित्तहा रूक्षो दीपनः कफजिल्लघुः । खलिशः कथितो

इति पृथक् पाठः कृतः । "मांसं वृंहणानाम्" इत्यनेनैवाग्रयाधिकारवचनेन मांसस्य वृंहणत्वे

बल्यो वातहरो वृष्यश्चक्षुष्यः श्लेष्मवर्द्धनः ।
मेधास्मृतिकरः पथ्यः शोषघ्नः कूर्म्म उच्यते ॥
स्नेहनं बृंहणं वृष्यं श्रमघ्नमनिलापहम् ।
वाराहं पिशितं बल्यं रोचनं स्वेदनं गुरु ॥

ग्राही कषायो वातकोपनः । रूक्षो लघुः शूलहरः किञ्चिद्दाम्र्मोविनाशनः । गरा चाजीर्णजननी गुर्व्वी श्लेष्मप्रकोपणी । गुर्व्वी पाके च मधुरा भोजिका दोषकोपनी । पोताशनास्तु सर्व्वेषां गुरुस्निग्धा गुरुरोचनाः । मत्स्यकूर्म्म-खगाण्डानि स्वादुवाजीकराणि च । कटूपाकीनि रूक्षाणि वातश्लेष्महराणि च । कुथिता दोषला मत्स्याः शुष्का विष्टम्भिदुर्ज्जराः । लवणैर्भाविता मत्स्याः कफपित्तकराः सराः । इति । सामुद्रास्तु सुश्रुते—तिमि-तिमिङ्गिल-कुलिशपाकमत्स्यनिरालकनन्दिवारलकमकरगर्गरकचन्द्रकमहामीनराजीवप्रभृतयः सामुद्राः । सामुद्रा गुरवः स्निग्धा मधुरा नातिपित्तलाः । उष्णा वातहरा वृष्या वर्च्चस्याः श्लेष्मवर्द्धनाः । बलावहा विशेषेण मांसाशित्वात् समुद्रजाः । समुद्रजेभ्यो नादेया बृंहणत्वात् गुरूत्तराः । तेषामप्यनिलघ्नत्वाचौण्ड्यकौप्यौ गुणोत्तरौ । स्निग्धत्वात् स्वादुपाकत्वात् तयोर्वाप्या गुणोत्तराः । नादेया गुरवो मध्ये यस्मात् पुच्छास्यचारिणः । सरस्तडागजानान्तु विशेषेण शिरो लघु । अदूरगोचरा यस्मात् तस्मादुत्सोदपानजाः । किञ्चिन्मुक्त्वा शिरोदेश-मत्यर्थं गुरवस्तु ते । अधस्ताद्गुरवो ज्ञेया मत्स्याः सरसिजास्तु ये । उरो-विचरणात् तेषां पूर्व्वमङ्गं लघु स्मृतम् । इति मत्स्याः ।

बल्य इत्यादि । वारिशयेषु कूर्म्मो जातिः, बल्यो वातहरः इत्येवमादि-गुणकर्म्माभावात् । शोषघ्नो राजयक्ष्मघ्नः । शोथघ्न इति भ्रान्ताः पठन्ति ग्राम्याब्जानूपं पिशितलवणमित्यादिना शोथे निदानतया वर्ज्जनवचनात् । सुश्रुते तु—जलकूर्म्मादयः स्वादु-रसपाका मरुन्नुदः । शीताः स्निग्धा हिताः पित्ते वर्च्चस्याः श्लेष्मवर्द्धनाः । कृष्णः कर्कटकस्तेषां बल्यः कोष्णोऽनिला-पहः । शुक्लः सन्धानकृत् सृष्ट-विण्मूत्रोऽनिलपित्तहा ॥ इति ।

स्नेहनमित्यादि । आनूपेषु वाराहं पिशितं बृंहणमित्यादिगुणम् ।

अत्रापि "शरीरबृंहणे नान्यद्" इत्यादिवचनं प्रकरणप्राप्तत्वेन तथा तस्यैवार्थस्य प्राधान्येन बोध्यम् ॥ २५ ॥

स्निग्धोष्णं मधुरं वृष्यं माहिषं गुरु तर्पणम्।
दार्ढ्यं बृंहत्वमुत्साहं स्वप्नञ्च जनयत्यपि॥
धार्त्तराष्ट्रचकोराणां दक्षाणां शिखिनामपि।
चटकानाञ्च यानि स्युरण्डानि च हितानि च॥
रेतःक्षीणेषु कासेषु हृद्‌रोगेषु क्षतेषु च।
मधुराण्यविदाहीनि सद्योबलकराणि च॥
शरीरबृंहणे नान्यदाद्यं मांसाद्विशिष्यते।
इति वर्गस्तृतीयोऽयं मांसानां परिकीर्त्तितः॥ २५॥

[ इति मांसवर्गः। ३। ]

स्निग्धोष्णमित्यादि। तर्पयति तर्पणं माहिषं मांसं प्रकरणात्। सुश्रुते च—गजगवयादयः कूलचरा आनूपाः पशवः। वातपित्तहरा वृष्या मधुरा रसपाकयोः। शीतला बलिनः स्निग्धा मूत्रलाः कफवर्द्धनाः॥ विरूक्षणो लेखनश्च वीर्य्योष्णः पित्तदूषणः। स्वाद्वम्ललवणस्तेषां गजः श्लेष्मानिलापहः॥ गवयस्य तु मांसं हि स्निग्धं मधुरकासजित्। विपाके मधुरश्चापि व्यवायस्य तु वर्द्धनम्॥ स्निग्धोष्णमधुरो वृष्यो महिषस्तर्पणो गुरुः। निद्रापुंस्त्वबलस्तन्य; वर्द्धनो मांसदार्ढ्यकृत्॥ रुरुमांसं समधुरं कषायानुरसं स्मृतम्। वातपित्तोपशमनं गुरु शुक्रप्रवर्द्धनम्। तथा चमरमांसन्तु स्निग्धं मधुरकासजित्। विपाके मधुरश्चापि वातपित्तप्रणाशनम्। सृमरस्य तु मांसञ्च कषायानुरसं स्मृतम्॥ वातपित्तोपशमनं गुरु शुक्रविवर्द्धनम्॥ स्नेहनं बृंहणं वृष्यं शीतलं तर्पणं गुरु। स्निग्धं श्रमानिलहरं वाराहं बलवर्द्धनम्॥ कफघ्नं खड्गिपिशितं कषायमनिलापहम्। पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम्॥ गोकर्णमांसं मधुरं स्निग्धं मृदु कफापहम्। विपाके मधुरश्चापि कफपित्तविनाशनम्॥ इति।

सर्व्वमांसस्य विशेषफलमाह—शरीरेत्यादि। शरीरबृंहणे मांसादन्यत् आद्यं खाद्यं न विशिष्यते इति। वर्गं समापयति, इतीत्यादि॥ २५॥

[ इति तृतीयो मांसवर्गः। ३। ]

पाठा शुषा शटीशाकं वास्तुकं सुनिषण्णकम्।
विद्याद् ग्राहि त्रिदोषघ्नं वर्च्चोभेदि च वास्तुकम्॥
त्रिदोषशमनी वृष्या काकमाची रसायनी।
नात्युष्णशीतवीर्य्या च भेदिनी कुष्ठनाशिनी॥
राजक्षवकशाकन्तु त्रिदोषशमनं लघु।
ग्राहि शस्तं विशेषेण ग्रहण्यर्शोविकारिणाम्॥
कालशाकञ्च कटुकं दीपनं गरशोफजित्।
लघूष्णं वातलं रूक्षं कालीयं * शाकमुच्यते॥

गङ्गाधरः—क्रमिकत्वान्मांसवर्गानन्तरं शाकवर्गमाह—पाठेत्यादि। वक्ष्यते वर्गसमाप्तौ। चतुर्थः शाकवर्गोऽयं पत्रकन्दफलाश्रय इति। तेन शाकं गुणकर्म्मभ्यां वक्तुं पाठादीनां यत्र पत्रादिविशेषेणोपदेक्ष्यते तत्र यथायोग्यं पत्रादिकं विद्यात्। यदप्यन्यत्रोक्तम्। पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा। शाकं षड्विधमुद्दिष्टं गुरु विद्याद् यथोत्तरमिति। तथापि सुश्रुते—पुष्पञ्च पत्रञ्च फलं तथैव यथोत्तरं ते लघवः प्रदिष्टाः इति वचनेन यथायथं फलपत्रपुष्पाणां पूर्व्वं पूर्व्वं लघु परं परं गुरु विद्यात् इह तु गुणकथनं सामान्यत एव बोध्यम्। पाठा आकनादिः। शुषा कासमर्दः। शटी हरिद्रापत्राकृतिः। वास्तुकं वथुयाशाकम्। सुनिषण्णकं निद्रालुः तेषां पत्राणां वास्तुकवर्ज्जं ग्राहित्वात् सर्व्वेषां त्रिदोषघ्नत्वं विद्यात्। वास्तुकन्तु वर्च्चोभेदि। त्रिदोषेत्यादि। कुष्ठनाशिनीत्यन्ताः काकमाचीगुणाः। नात्युष्णशीतवीर्य्या मध्यवीर्य्या। अस्याः पत्रमेव शाकम्। राजक्षवकेत्यादि। राजक्षवकं दुग्धिकापत्रम्। कालशाकमित्यादि। सुश्रुतेऽपि—दीपनं कालशाकन्तु गरदोषहरं कटु। लघूष्णमित्यादि। कालीयशाकं लघूष्णरूक्षत्वाद्वातलम्।

चक्रपाणिः—शाकानामपि व्यक्तत्वेनानन्तरमुपदेशः। शुषा कासमर्दः, शटी स्वनामप्रसिद्धा, वास्तुकं हक्कवास्तुकम्। नात्युष्णशीतवीर्य्येति नोष्णत्वं प्रकर्षप्राप्तमस्या नापि शीतत्वम् इत्यर्थः; यत्तु सुश्रुते "तिक्ता काकमाची वातं शमयत्युष्णवीर्य्यत्वात्" इत्युक्तं, तद्वीर्य्यबाधिकत्वेन, अत एव कृष्णगुणे सुश्रुतेऽपि नात्युष्णशीतत्वमेव पठितम्। राजक्षवको दुग्धिका, कालशाकं

* कालकमिति पाठान्तरम्।

दीपनी चोष्णवीर्य्या च ग्राहिणी कफमारुते ।
प्रशस्यतेऽम्लचाङ्गेरी ग्रहण्यर्शोहिता च सा ॥
मधुरा मधुरा पाके भेदिनी श्लेष्मवर्द्धिनी ।
वृष्या स्निग्धा च शीता च मदघ्नी चाप्युपोदिका ॥
रूक्षो मदविषघ्नश्च प्रशस्तो रक्तपित्तिनाम् ।
मधुरो मधुरः पाके शीतलस्तण्डुलीयकः ॥
मण्डूकपर्णी वेत्राग्रं कुचेला वनतिक्तकम् ।
कर्कोटकावल्गुजकौ पटोलं शकुलादनी ॥
वृषपुष्पाणि शार्ङ्गेष्टा केम्बुकं सकठिल्लकम् ।
नाड़ीकलायं गोजिह्वा वार्त्ताकं तिलपर्णिका ॥
कौलकं कार्कशं नैम्बं शाकं पार्पटकञ्च यत् ।
कफपित्तहरं तिक्तं शीतं कटु विपच्यते ॥

दीपनीत्यादि । अम्लचाङ्गेरी अम्लरोलीति ख्याता । मधुरेत्यादि । उपोदिका पुदिनापत्रम् । रूक्ष इत्यादि । तण्डुलीयकोऽल्पमारिषः । मण्डूकपर्णीत्यादि । मण्डूकपर्णी मन्युमणी । वेत्राग्रं वेत्रस्य कोमलाग्रम् । कुचेलापत्रम् । वनतिक्तकं श्वेतबहला । कर्कोटकं काँकरोलाख्यस्य फलम् । अवल्गुजं वागुजीपत्रबीजम् । पटोलं पत्रं फलञ्च । शकुलादनी कटुरोहिणीपत्रम् । वृषपुष्पाणि वासकपुष्पाणि । शार्ङ्गेष्टा काकतिक्तिका । केम्बुकं केउफलम् । कठिल्लकः कारवेल्लः । नाडी नाड़ीशाकं डाँटा इति लोके । कलायं वर्त्तुलकलायपत्रम् । गोजिह्वा दर्व्वीशाकम् । वार्त्ताकुः प्रसिद्धा । तिलपर्णी एडगजापत्रं फलञ्च । कौलकं पटोलफलम् । कार्कशं स्वल्पकर्कोटकफलम् । नैम्बं निम्बपत्रम् । पार्पटकञ्च शाकं क्षेत्रपर्पटीपत्रम् । सर्व्वमिदं कफपित्तहरमित्यादिगुणं तत्र विशेष उन्नेयः ।

कर्णिका इति ख्यातम्, काकाख्यमिति काकशाकमेवोच्यते पुनः, अन्ये तु "[illegible]" इति वदन्ति । मण्डूकपर्णी मणिमणि ख्याता, कुचेला [illegible] ; वनतिक्तकं [illegible], अवल्गुजो वागुजी, शकुलादनी कटुरोहिणी, शार्ङ्गेष्टा काकतिक्ता, कठिल्लकः पुनर्नवा, नाडी [illegible],

सर्व्वाणि सूप्यशाकानि फञ्जी चिल्ली कुतुम्बुकः।
आलुकानि च सर्व्वाणि सपत्राणि कठिञ्जरः॥
शणशाल्मलिपुष्पाणि कर्व्वुदारः सुवर्च्चला।
निष्पावः कोविदारस्य पत्तूरश्चुञ्चुपर्णिका॥
कुमारजीवो लोट्टाकः पालङ्क्यो मारिषस्तथा।
कलम्बुनालिकासूर्य्यः कुसुम्भवृकधूमकौ॥
लक्ष्मणा च प्रपुन्नाड़ो नलिनीका कुठेरकः।
लोणिका यवशाकञ्च कुष्माण्डकमवल्गुजम्॥

सर्व्वाणीत्यादि। सूप्यस्य सूपयोनिमुद्ग[illegible]कादेः शाकानि पत्राणि। फञ्जी ब्रह्मयष्टीपत्रम्। चिल्लिगो इवास्तुकम्। कुतुम्बुकः द्रोणपुष्पीपत्रम्। सर्व्वाण्यालुकानि पिण्डालुकमध्वालुकादीनि सपत्राणि तेषां पत्राणि। कठिञ्जरः कुठेरकपत्रम्। कर्व्वुदारपुष्पम्। सुवर्च्चला सूर्य्यभक्तापुष्पम्। कोविदारस्य काञ्चनस्य निष्पावः शिम्बाफलम्। पत्तूरः शालिञ्चः। चुञ्चुपर्णिका चेँचुयाशाकं लोके एरण्डपर्णीत्युच्यते। कुमारजीवो जीवशाकम्। लोट्टाको लुटियाशाकम्। पालङ्क्यः ख्यातो लोके। मारिषः डेँडालटिया। कलम्बुः कलमीशाकम्। नालिका गोलाड़चिः। सूर्य्यः सुरीः राजी तस्याः पत्रं राइशाकम्। कुसुम्भः प्रसिद्धः। वृकधूमकः भूमिमारिषः। लक्ष्मणा स्वनामख्याता तस्याः पत्रम्। प्रपुनाड़ एड़गजा तस्य पत्रं, फलन्तु शमीधान्ये प्रागभिहितम्। नलिनीका पद्ममृणालम्। नीलिनीकेति पाठे नीलीपत्रम्। कुठेरकः पर्णासभेदः। लोणिका लुणइशाकम्। यवशाकं क्षेत्रवास्तुकशाकम्।

[illegible] वर्त्तुकफलम्, तिक्तपर्णिका [illegible], गोजिह्वा दार्व्विपत्रिका, कुलकः कारवेल्लकः, केचित् तु कुलकं पटोलभेदमाहुः, कर्कशः स्वल्पकर्कोटकः।

सूप्यशाकानि माषपर्ण्यादीनि, फञ्जी ब्राह्मणयष्टिका, चिल्ली गौड़वास्तुकं, कुतुम्बुको द्रोणपुष्पिका, आलुकादीनि पिण्डालुकादीनि, कर्व्वुदारः काञ्चनः, सुवर्च्चला सूर्य्य-भक्तिका, केचित [illegible]माहुः, पत्तूरः शालिञ्चः, चुञ्चुपर्णिका नाड़ीचभेदः, कुमारजीवो जीवशाकं, लोट्टाको लोट्टमारिषः, नालिका गोनाड़ीचः, आसुरी राजिका मत्स्यक्षो वा, वृकधूमको भूमिशिरीषः, लक्ष्मणा स्वनामख्याता, नलिनी पद्ममृणालं, नीलिनीपाठपक्षे मुद्गा, यवशाकं क्षेत्रवास्तुकं,

यातुकः शालकल्याणी त्रिपर्णी पीलुपर्णिका।
शाकं गुरु च रुक्षञ्च प्रायो विष्टभ्य जीर्य्यति॥
मधुरं शीतवीर्य्यञ्च पुरीषस्य च भेदनम्।
स्विन्नं निष्पीड़ितरसं स्नेहाढ्यं तत् प्रशस्यते॥ २६॥
शणस्य कोविदारस्य कर्व्बुदारस्य शाल्मलेः।
पुष्पं ग्राहि प्रशस्तञ्च रक्तपित्ते विशेषतः॥
न्यग्रोधोडुम्बराश्वत्थ-प्लक्षपद्मादिपल्लवाः।
कषायाः स्तम्भनाः शीता हिताः पित्तातिसारिणाम्॥
वायुं वत्सादनी हन्यात् कफं गण्डीरचित्रकौ।
श्रेयसी विल्वपर्णी च विल्वपत्रञ्च वातनुत्॥
भण्डी शतावरीशाकं बला जीवन्तिकञ्च यत्।
पर्व्वण्याः पर्व्वपुष्प्याश्च वातपित्तहरं स्मृतम्॥

कुष्माण्डकं प्रसिद्धम्। अवल्गुजं सोमराजीपत्रम्। यातुकः शुक्लशाकपर्णीपत्रम्। शालकल्याणी शालिञ्चप्रभेदः। त्रिपर्णी हंसपदी। पीलुपर्णी मोरटकः। एषां सूष्यादीनां शाकं गुरु च रुक्षञ्च शीतवीर्य्यत्वात् कफकरम्। तत् सर्व्वं स्विन्नं कृत्वा निष्पीड़ितरसं स्नेहाढ्यं बहुस्नेहपक्वं चेत् तदा प्रशस्यते॥ २६॥

<u>गङ्गाधरः</u>—एषु शणादीनां पुष्पस्य विशेषगुणमाह—शणस्येत्यादि। शणादीनां पुष्पं गुरुकर्षमित्यादिगुणं विशेषतो ग्राहि रक्तपित्ते प्रशस्तञ्च। न्यग्रोधेत्यादि। आदिना कपित्थादेः पल्लवाः। वायुमित्यादि। वत्सादनी गुडूची पल्लवरूपा प्रकरणात्। गण्डीरः शमठस्तस्य पत्रम्। चित्रकश्च पत्ररूपः। श्रेयसी गजपिप्पली। विल्वपर्णी विलाज्जकं तेषां पत्रं विल्वपत्रञ्च वातनुत्। भण्डीत्यादि। भण्डी भाँटीति लोके। तस्याः पत्रं शतावर्य्याश्च पत्रं शाकम्। बला वाट्यालकस्य पत्रम्। जीवन्तिकञ्च यच्छाकं पत्रम्। पर्व्वणी

कुष्माण्डः सर्वप्रसिद्धम्, अवल्गुजमिन्दवल्गुजभेदः, यातुकः शुक्ला शाकपर्णी, शालकल्याणी शालिञ्ची-भेदः, त्रिपर्णी हंसपादिका, पीलुपर्णी मोरटकः॥ २६॥

चक्रपाणिः—गण्डीरः समठः, विल्वपर्णी विल्वार्जकम्। भण्डी [illegible], पर्वणी पर्व-

लघु भिन्नशकृत् तिक्तं लाङ्गलिक्युरुबूकयोः।
तिलवेतसशाकञ्च शाकं पञ्चाङ्गुलस्य च॥
वातलं कटुतिक्ताम्लमधोमार्गप्रवर्त्तनम्।
रूक्षाम्लमुष्णं कौसुम्भं कफघ्नं पित्तवर्द्धनम्॥ २७॥
त्रपुषैर्व्वारुके स्वादु-गुरुविष्टम्भिशीतले।
मुखप्रियञ्च रूक्षञ्च मूत्रलं त्रपुषन्त्वति॥
एर्व्वारुकञ्च संपक्वं दाहतृष्णाक्लमार्त्तिनुत्।
वर्च्चोभेदीन्यलावूनि रूक्षशीतगुरूणि च॥

पर्व्वशाकं पर्व्वपुष्पी कुक्कुटी पथ्यशाकं पत्रम्। लघ्वित्यादि। लाङ्गलिकी चित्रैरण्डपत्रम्। उरुबूक एरण्डपत्रं तिक्तम्। तिलस्य वेतसस्य च शाकं पञ्चाङ्गुलस्य क्षुद्रैरण्डस्य पत्रं शाकं वातलमित्यादिगुणम्। रूक्षाम्लमित्यादि। पूर्व्वं कुसुम्भपत्रगुण उक्त इह पुनस्तस्य फलं रूक्षाम्लमित्यादिगुणम्॥ २७॥

गङ्गाधरः—त्रपुषेत्यादि। त्रपुषमपक्वं मायाम्बुफलम्, एवमेर्व्वारुकमपक्वं फलम्। द्वे स्वादुनी गुरुणी विष्टम्भिनी शीतले च। तयोर्मध्ये त्रपुषन्तु संपक्वम् अतिमुखप्रियमित्यादिगुणम्। एर्व्वारुकञ्च संपक्वं दाहादिनुत्। एर्व्वारुकं कर्कटीफलम्। सुश्रुते च—त्रपुषैर्व्वारु-कर्कारु-शीर्णवृन्तप्रभृतीनि। गुरुविष्टम्भि-शीतानि स्वादूनि कफकृन्ति च। सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च॥ बालं सुनीलं त्रपुषं तेषां पित्तहरं स्मृतम्। तत् पाण्डु कफकृज्जीर्णमम्लं वात-कफापहम्॥ एर्व्वारुकं सकर्कारु सम्पक्वं कफवातकृत्। सक्षारं मधुरं रूच्य दीपनं नातिपित्तलम्॥ सक्षारं मधुरञ्चैव शीर्णवृन्तं कफापहम्। भेदनं दीपनं हृद्यमानाहाष्ठीलनुल्लघु॥ इति।

वर्च्चोभेदीनीत्यादि। अलाब्वाः फलानि वर्च्चोभेदीनि। अन्यत्र च। चिर्भ-टेत्यादि। चिर्भटो गोडुम्बाफलं द्विविधं क्षुद्रफलं बृहत्फलञ्च। एर्व्वारुकं

शाकं, पर्व्वपुष्पी कुक्कुटी, पञ्चाङ्गुलश्चित्रैरण्डः, एर्व्वारुकं राजकर्कटी, कुष्माण्डकं सुश्रुते वाल्यादि-[illegible] पठितं तद्व्यविरुद्धमेव, यतः, बालमध्यमोत्तम [illegible] पित्तहरत्वं कफकरत्वमथोक्तं, तद्यदि[illegible] पित्तोत्तरे कफोत्तरे सन्निपाते बोद्धव्यम्॥ २७॥

चिर्भटर्व्वारुके तद्वद् वर्च्चोभेदहिते तु ते।
कुष्माण्डपक्वं सक्षारं मधुराम्लं तथा लघु॥
सृष्टमूत्रपुरीषञ्च सर्व्वदोषनिवर्हणम्।
केलुटञ्च कदम्बञ्च नदीमाषकमैन्दुकम्॥
विशदं गुरु शीतञ्च समभिष्यन्दि चोच्यते॥ २८॥
उत्पलानि कषायाणि पित्तरक्तहराणि च।
पौष्करन्तु भवेद्वीजं रक्तपित्तप्रसादनम्॥
तथा तालप्रलम्बञ्च उरःक्षतरुजापहम्।
खर्ज्जूरं तालशस्यञ्च रक्तपित्तक्षयापहम्॥

क्षुद्रकर्कटीफलं कर्कारुर्नाम। तद्वत्। रूक्षशीतगुरुणी। वर्च्चोभेदे अहिते तु ते।

कुष्माण्डमित्यादि। पूर्व्वं कुष्माण्डकमवल्गुजमिति वचनेन कुष्माण्डस्य गुण उक्त इह तु तस्य फलं सक्षारादिगुणम्। सुश्रुते तु—पुष्पफलालाबुकलिन्दक प्रभृतीनि। पित्तघ्नान्यनिलं कुर्य्यु स्तथा मन्दकफानि च। सृष्टमूत्रपुरीषाणि स्वादुपाकरसानि तु॥ पित्तघ्नं तेषु कुष्माण्डं बालं मध्यं कफावहम्। पक्वं लघूष्णं सक्षारं दीपनं वस्तिशोधनम्। सर्व्वदोषहरं हृद्यं पथ्यं चेतोविकारिणाम्॥ इति।

केलुटञ्चेत्यादि। केलुटं स्वादुविटपं तत्कन्दः स्वादुशीतकः इति हारीत वचनम्। कदम्बं कलम्बिकामिति केचित्, स्वल्पकदम्बमित्यन्ये। नदीमाषक वर्द्धमानकः। ऐन्दुकं निस्वाद इति लोके॥ २८॥

<u>गङ्गाधरः</u>—उत्पलानीत्यादि। उत्पलानां कन्दानि बीजानि। पौष्करमित्यादि। पौष्करं पद्मबीजम्। तालप्रलम्बं तालाङ्कुरः। खर्ज्जूरं तालशस्यञ्च फलम्। सुश्रुते च—तालनारिकेलखर्ज्जूरप्रभृतीनां मस्तकमज्जानः—स्वादुपाकरसानाहु रक्तपित्तहरांस्तथा। शुक्रलाननिलघ्नांश्च कफवृद्धिकरानपि॥ अन्यत्र तु। गुवाकस्य शिरस्त्वह्य दर्कं मदकारकमिति।

<u>चक्रपाणिः</u>—केलुटे हारीतवचनं—"केलुटं स्वादुविटपं तत्कन्दः स्वादुशीतकः" इति। कदम्बं कलम्बिकां वदन्ति, केचित् तु स्वल्पकदम्बिकमाहुः, नदीमाषकः वर्द्धमानक इति व्याख्या, ऐन्दुकं

तरूटं बिसशालूकं क्रौञ्चादनकसेरुकम् ।
शृङ्गाटकाङ्कलोड्यञ्च गुरु विष्टम्भि शीतलम् ॥
कुमुदोत्पलनालाश्च सपुष्पाः सफलाः स्मृताः ।
शीताः स्वादुकषायाश्च कफमारुतकोपनाः ॥ *
बल्यः शीतो गुरुः स्निग्धस्तर्पणो बृंहणात्मकः ।
वातपित्तहरः स्वादुर्वृष्यो मुञ्जातकः परः ॥
जीवनो बृंहणो वृष्यः कण्ठ्यः शस्तो रसायने ।
विदारीकन्दो बल्यश्च मूत्रलः स्वादुशीतलः ॥

तरूटबिसेत्यादि । तरूटं कह्लारकन्दः । बिसं पद्मादीनां क्षुद्रमृणालम् । शालूकं पद्मादीनां कन्दः । क्रौञ्चादनं घेञ्चुलिका । कसेरुकं द्विविधं—क्षुद्रं चिञ्चोटकं, बृहत् तु राजकशेरुकम् । शृङ्गाटकं पानीयफलम् । अङ्कलोड्यं ह्रस्वोत्पलकन्दः । सर्व्वं गुरु विष्टम्भि शीतलम् । कुमुदेत्यादि । कुमुदोत्पलयोर्नालाः पुष्पाणि च फलानि च शीतादिगुणानि । बल्य इत्यादि । मुञ्जातक औत्तरापथिकः कन्दः । बल्य इत्यादिगुणः । जीवन इत्यादि । विदारीकन्दो जीवन इत्यादिगुणः । सुश्रुते तु—मधुरो बृंहणो वृष्यः शीतः स्वर्य्योऽतिमूत्रलः । विदारिकन्दो बल्यस्तु पित्तवातहरस्तु सः ॥ इति । विदारिकन्दो द्विविधः स्वल्पबहुक्षीरभेदात् । तत्राल्पक्षीरो हस्तिपाद इति लोके, बहुक्षीरस्तु दीर्घकन्दः, भूमिकुष्माण्ड इति लोके । († तथा सुश्रुते—वातपित्तहरी वृष्या स्वादुतिक्ता शतावरी । महती चैव हृद्या च मेधाग्निबलवर्द्धिनी । ग्रहण्यर्शोविकारघ्नी वृष्या शीता रसायनी ॥ इति । )

निबारः । ताकम्भकमस्ताकाङ्कुरः, शस्यमस्तकेनेह मस्तकमज्जा गृह्यते । तरूटः कह्लारकन्दः, क्रौञ्चादनं चिञ्चुलिका, कसेरुकशब्देन चिञ्चोटका राजकसेरुकञ्च गृह्यते, अङ्कलोड्यं ह्रस्वोत्पल-

* इतः परं श्लोकोऽयं केषुचित् पुस्तकेषु दृश्यते—
कषायमीषद् विष्टम्भि रक्तपित्तहरं स्मृतम् ।
पौष्करन्तु भवेद्वीजं मधुरं रसपाकयोः ॥

† सुश्रुतीयस्वयं शतावरीविषयकः श्लोकः हस्तलिखितादर्शपुस्तके दृश्यमानात् अत्रैव निविवेशितोऽस्माभिः ।

अम्लीकायाः स्मृतः कन्दो ग्रहण्यर्शोहितो लघुः।
नात्युष्णः कफवातघ्नो ग्राही शस्तो मदात्यये॥
त्रिदोषं बद्धविण्मूत्रं सार्षपं शाकमुच्यते।
तद्वत् पिण्डालुकं विद्यात् कन्दत्वाच्च मुखप्रियम्॥
सर्पच्छत्रकवर्ज्यास्तु बह्वयोऽन्याश्छत्रजातयः।
शीताः पीनसकर्त्र्यश्च मधुरा गुर्व्य एव च॥
चतुर्थः शाकवर्गोऽयं पत्रकन्दफलाश्रयः॥ २६॥

[ इति शाकवर्गः। ४।

अम्लीकाया इत्यादि। अम्लीकाया अम्लाद्रकस्य कन्दः। त्रिदोषमित्यादि। सार्षपं शाकं सर्षपपत्रम्। तद्वदित्यादि। पिण्डालुकः पिण्डाकारः कन्दः तं, तद्वत् त्रिदोषं बद्धविण्मूत्रं विद्यात्। कन्दत्वाच्च मुखप्रियं विद्यात्। अत्रापरेषां कन्दानां गुणाः उन्नेयाः। तत्र यथा सुश्रुते—स्थूलशूरणमाणकप्रभृतयः कन्दाः ईषत्कषायाः कटुका रूक्षा विष्टम्भिनो गुरवः कफवातलाः पित्तहराश्च। माणकं स्वादु शीतञ्च गुरु चापि प्रकीर्त्तितम्। स्थूलकन्दस्तु नात्युष्णः शूरणो गुदकीलहा॥ कुमुदोत्पलपद्मानां कन्दा मारुतकोपनाः। कषायाः पित्तशमनाः विपाके मधुरा हिमाः॥ वाराहकन्दः श्लेष्मघ्नः कटुको रसपाकतः। मेहकुष्ठक्रिमिहरो बल्यो वृष्यो रसायनः॥ इति।

सर्पच्छत्रकेत्यादि। सर्पच्छत्रकं मृतसर्पदेहभूतभूभागे जातमुद्भिज्जं छत्राकृतिकं छत्रं, सर्पच्छत्रकं वर्ज्जयित्वा अन्या बह्वयश्छत्रजातयः उद्भिज्जाः शीताः पीनसकर्त्र्यश्च मधुराश्च गुर्व्यश्चेति। सुश्रुते च—उद्भिदानि पलालेक्षुकरीषवेणुक्षितिजानि। तत्र पलालजातं मधुरं मधुरविपाकं रूक्षं दोषप्रशमनञ्च। इक्षुजं मधुरं कषायानुरसं कटुकं शीतलञ्च। तद्वदेवोष्णं

कन्दः। सुश्रुतोक्त [illegible]कन्दः। अम्लीका [illegible] प्रायः कामरूपादौ भवति। सर्पच्छत्रं सर्पफणाकारं छत्रकम्; अन्याश्छत्रजातयः करीषपलालादिजा बहुला ज्ञेयाः। पत्रकन्दफलाश्रय इति प्राधान्येन, तेन पुष्पाश्रयत्वमपि शाकवर्गस्य ज्ञेयम्॥ २८।२९॥

[ इति शाकवर्गः। ४।]

तृष्णादाहज्वरश्वास-रक्तपित्तक्षतक्षयान् ।
वातपित्तमुदावर्त्तं स्वरभेदं मदात्ययम् ॥
तिक्तास्यतामास्यशोषं कासञ्चाशु व्यपोहति ।
मृद्वीका बृंहणी वृष्या मधुरा स्निग्धशीतला ॥
मधुरं बृंहणं वृष्यं खर्ज्जूरं गुरु शीतलम् ।
क्षयेऽभिघाते दाहे च वातपित्ते च तद्धितम् ॥
तर्पणं बृंहणं फल्गु गुरु विष्टम्भि शीतलम् ।
परूपकं मधूकञ्च वातपित्ते च शस्यते ॥
मधुरं बृंहणं बल्यमाम्रातं तर्पणं गुरु ।
सस्नेहं श्लेष्मलं शीतं वृष्यं विष्टभ्य जीर्य्यति ॥

कारीषं कषायं वातकोपनञ्च । वेणुजातं कषायं वातकोपनञ्च । भूमिजं गुरु नातिवातलं भूमितश्चास्यानुरसः । इति ।

वर्गं समापयति—चतुर्थ इत्यादि । पत्रकन्दफलाश्रय इति प्रायेण तत्-पुष्पगुणकथनं नानुपपन्नमिति ॥ २९ ॥

इति शाकवर्गश्चतुर्थः । ४ ।

गङ्गाधरः—अथ शाकफलाश्रया इति वर्गक्रमनिर्देशाच्छाकवर्गानन्तरं फल-वर्गमाह—तत्र प्रथमतो द्राक्षागुणमाह—तृष्णेत्यादि । मृद्वीका द्राक्षाफलं पक्वं न सामं मधुरत्वाभावात् । मधुरमित्यादि । खर्ज्जूरं खर्ज्जूरस्य पक्वं फलं स्वल्प-शस्यं बहुशस्यञ्च द्विविधम् । तर्पणमित्यादि । फल्गु कोठोडम्बुरफलं पक्वम् । तत्सामं शाकत्वान्नात्राभिहितम् । परूपकमित्यादि । परूषफलं पक्वं, पक्वमेव च मधूकफलं न सामम् । सुश्रुते च—द्राक्षाकाश्मर्य्यमधूकखर्ज्जूरप्रभृतीनि । रक्त-पित्तहराण्याहुर्गुरूणि मधुराणि च । तेषां द्राक्षा सरा स्वर्य्या मधुरा स्निग्ध-शीतला । रक्तपित्तज्वरश्वास-तृष्णादाहक्षयापहा ॥ हृद्यं मूत्रविबन्धघ्नं पित्ता-सृग्वातनाशनम् । केश्यं रसायनं मेध्यं काश्मर्य्यं फलमुच्यते ॥ इति । मधुर-मित्यादि । आम्रातमाम्रातकस्य पक्वं फलं मधुरमामन्तु अम्लं शाकत्वात् तस्य

चक्रपाणिः—फलानामपि केषाञ्चिच्छाकवदुपयोगात् फलवर्गमाह । मृद्वीकाऽत्रेऽभिधीयते श्रेष्ठगुणत्वात् । फल्गु श्रीडुम्बरम् । मधूकस्यानेन समानगुणत्वात् फलं कुसुमञ्च ज्ञेयम् । परूषकमिह

तालशस्यानि सिद्धानि नारिकेलफलानि च।
बृंहणस्निग्धशीतानि बल्यानि मधुराणि च॥
मधुराम्लकषायञ्च विष्टम्भि गुरु शीतलम्।
श्लेष्मपित्तकरं भव्यं ग्राहि वक्त्रविशोधनम्॥
अम्लं परूषकं द्राक्षा बदराण्यारुकाणि च।
पित्तश्लेष्मप्रकोपीणि कर्कन्धूनिकुचान्यपि॥
नात्युष्णं गुरु संपक्वं स्वादुप्रायं मुखप्रियम्।
संबृंहणं शीघ्रजरं नातिदोषलमारुकम्॥
द्विविधं शीतमुष्णञ्च मधुरञ्चाम्लमेव च।
गुरु पारावतं ज्ञेयमरुच्यत्यग्निनाशनम्॥

गुण इह नोक्तः। तालशस्यानीत्यादि। सिद्धानि पक्वतालफलानि सिद्धान्येव पक्वानि नारिकेलफलानि। अत्र च, विशेषतः कोमलनारिकेलं निहन्ति पित्तज्वरदाहमोहम्। इति। मधुराम्लेत्यादि। भव्यं पक्वं कर्म्मरङ्गफलम्। अन्ये तु त्वक्संघातरूपं चालितफलं पक्वमाहुः। श्लेष्मपित्तकरमम्लत्वात्। अम्लमित्यादि। द्विधा परूषकं द्राक्षा च मधुराम्लभेदात्; तत्र मधुरयोर्गुणा उक्ता अम्लयोरिह वचनमिदम्। आरुकाणि कार्त्तिकपुरे प्रसिद्धानि। बदराणि कोलानि बृहत्फलानि। कर्कन्धूस्तु क्षुद्रफलबदरम्। तत्रारुकस्य विशेषमाह। नात्युष्णमित्यादि। आरुकम् आलुबोखरमिति लोके। तच्च द्विविधं शीतमुष्णञ्च मधुरं शीतमम्लमुष्णमिति। सुश्रुते—कर्कन्धुकोलबदरमामं पित्तकफापहम्। पक्वं पित्तानिलहरं स्निग्धं समधुरं सरम्॥ पुरातनं तृट्शमनं श्रमघ्नं दीपनं लघु। सौवीरं बदरं स्निग्धं मधुरं वातपित्तजित्॥ इति। गुर्वित्यादि। पारावतं कामरूपे प्रसिद्धम्। तदपि द्विविधं, मधुरं

मधुरपरूषकं ज्ञेयम्। आम्रातम् आमड़ा इति ख्यातम्, आम्रफलसदृशमिति चान्द्रका, पुनश्च द्विविधं—मधुरमम्लञ्च, अत्र मधुरस्यैव गुणः, अम्लस्य वक्ष्यमाणत्वात्। तालशस्यानीति तालफलानि, यथा—"हरीतक्यादीनां शस्यानि" इति फलमेव शस्यमुच्यते। सिद्धानि पक्वानि, तेन पक्वतालस्य ग्रहणम्। भव्यं कर्म्मरङ्गं फलं, केचित् त्वक्संहतिफलं वदन्ति। आरुकं कार्त्तिकपुरे प्रसिद्धं; कर्कन्धुः शृगालबदरी, कर्कन्धुनिकुचयोर्विशेषेण पाके न नित्यं पित्तश्लेष्मकर्तृत्वं

भव्यादल्पान्तरगुणं काश्मर्य्यफलमुच्यते ।
तथैवाल्पान्तरगुणं तूदमम्लं परूषकात् ॥
कषायं मधुरं टङ्कं वातलं गुरु शीतलम् ।
कपित्थमामं कण्ठघ्नं विषघ्नं ग्राहि शीतलम् ॥
मधुराम्लकषायत्वात् सौगन्ध्याच्च रुचिप्रदम् ।
तदेव सिद्धं दोषघ्नं विषघ्नं ग्राहि गुर्व्वपि ॥
विल्वन्तु दुर्ज्जरं सिद्धं दोषलं पूतिमारुतम् ।
स्निग्धोष्णतीक्ष्णं तद्बालं दीपनं कफवातजित् ॥
रक्तपित्तकरं * बालमापूर्णं पित्तवर्द्धनम् ।
पक्वमाम्रं जयेद्वायुं मांसशुक्रबलप्रदम् ॥
कषायमधुरप्रायं गुरु विष्टम्भि शीतलम् ।

शीतमम्लमुष्णम् । रसनिर्द्देशे वीर्य्यप्राप्तौ त्वामलकस्याम्लस्य शीतवीर्य्यदर्शनाद् वीर्य्यान्तराशङ्कानिवारणार्थं पुनः शीतमुष्णमित्युक्तम् । भव्यादित्यादि । भव्यफलस्य ये गुणाः उक्ता मधुराम्लकषायविष्टम्भित्वगुरुशीतत्वश्लेष्मपित्तकरत्वग्राहित्ववक्त्रशोधनत्वानि, तेभ्योऽल्पान्तरा अल्पभेदा गुणा यस्य तत् । हृद्यमित्यादिना सुश्रुतोक्तगुणाः पूर्व्वं दर्शिताः । तथैवेत्यादि । तूदफलमुत्तरापथे प्रसिद्धं परूषकादल्पान्तरगुणम् । परूषकस्य गुणाः पूर्व्वमुक्ताः पित्तश्लेष्मप्रकोपित्वाम्लत्वादयस्तेभ्योऽल्पान्तरा अल्पभेदा गुणा यस्य तत् । कषायमधुरमित्यादि । टङ्कं काश्मीरदेशे प्रसिद्धम् । कपित्थमित्यादि । आममपक्वं कपित्थफलम् । तदेव सिद्धं पक्वं कपित्थफलम् । बिल्वन्त्वित्यादि । सिद्धं पक्वं बिल्वफलम् । तद्बालमामं स्निग्धोष्णादिगुणम् । रक्तपित्तेत्यादि । आम्रमाम्रफलं बालं रक्तपित्तकरमसम्पूर्णमामं मध्यममपक्वं पित्तवर्द्धनम् ।

तयोर्व्वर्जयति, परूषकादीनान्तु मधुराम्लभेदेन द्विरूपाणां य एव परूषकादयोऽम्लास्त एव पित्तश्लेष्मकरा इति । पारावतः कामरूपप्रसिद्धः, अत्र यो मधुरः स शीतः, यश्चाम्लः स उष्णः इति क्षेमम्, एवं रसनिर्द्देशेनैव वीर्य्ये लब्धेऽपि पुनः वीर्य्याभिधानम् अम्लस्य आमलकस्य शीतता-

* वातपित्तकरमिति पाठः ।

जाम्ववं कफपित्तघ्नं ग्राहि वातकरं परम् ॥
मधुरं बदरं स्निग्धं भेदनं वातपित्तजित्।
तच्छुष्कं कफवातघ्नं पित्ते न च विरुध्यते।
कषायमधुरं शीतं ग्राहि सिम्बितिकाफलम् ॥ ३० ॥
गाङ्गेरुकं करीरञ्च बिम्बी तोदनधन्वनम्।
मधुरं सकषायञ्च शीतं पित्तकफापहम् ॥
संपक्वं पनसं मोचं राजादनफलानि च।
स्वादूनि सकषायाणि स्निग्धशीतगुरूणि च ॥

पक्वं वायुं जयेदित्यादिगुणम्। जाम्ववमित्यादि। जाम्ववमिति सामान्यात् बृहत्फलजाम्ववं राजजाम्ववं क्षुद्रफलजाम्ववं भूजाम्ववं वनजाम्ववं काकजाम्ववं सर्व्वं कफपित्तघ्नमित्यादि। मधुरमित्यादि। मधुरं बदरं सौवीरबदरं, सुवीरा यमुना नदी, तस्या यस्मिन् देशे स्थितिः, तद्देशजं बदरं सौवीरमिति सुश्रुतोक्तं दर्शितम्। सौवीरं बदरं स्निग्धमित्यादिगुणम्। तच्छुष्कमिति तद्बदरमिहानुवर्त्तते न तु सविशेषणमनुवर्त्तते। तेन सर्व्वं बदरं शुष्कं कफवातघ्नं न तु पित्ते च विरुध्यते। कषायेत्यादि। सिम्बितिकाफलं स्वनामख्यातम्। सुश्रुते च—कषायं स्वादु संग्राहि शीतं सिम्बितिकाफलम्, इति ॥३०

गङ्गाधरः—गाङ्गेरुकमित्यादि। गाङ्गेरुकी नागबला तस्याः फलम्। करीरो मरुजद्रुमस्तस्य फलम्। बिम्बी ओष्ठोपमफलम्। तोदनं फलविशेषः। धन्वनं धन्वनवृक्षस्य फलम्। मधुरमित्यादिगुणम्। संपक्वमित्यादि। पनसं कण्टकिफलम्। मोचं कदलीफलम्। राजादनफलं पियालफलम्। पक्वान्येतानि स्वादूनीत्यादिगुणानि। सुश्रुते तु—पनसं सकषायन्तु स्निग्धं स्वादुरसं गुरु। मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम्। रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु। स्निग्धं स्वादुकषायञ्च राजादनफलं गुरु। इति।

वर्त्तनात् बोद्धव्यम्। तूदम् औत्तरापथिकफलम्। टङ्कं काश्मीरप्रसिद्धम्। सिद्धमिति कालवशात् पक्वं; कपित्थबिल्वाम्रादीनामवस्थाभेदेन गुणकथनं सर्व्वावस्थासु तेषामुपयोगित्वात्। बदरं मध्यप्रमाणं तदपि मधुरमेव स्यात्। गाङ्गेरुकं नागबलाफलम्, करीरो मरुजो द्रुमः, तोदनं

कषायविशदत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ।
अवदंशक्षमं हृद्यं * वातलं लवलीफलम् ॥
नीपं शतारुकं पीलु तृणशून्यं विकङ्कतम् ।
प्राचीनामलकञ्चैव दोषघ्नं गरहारि च ॥
ऐङ्गुदं तिक्तमधुरं स्निग्धोष्णं कफवातजित् ।
तिन्दुकं कफपित्तघ्नं कषायं मधुरं लघु ॥
विद्यादामलके सर्व्वान् रसान् लवणवर्ज्जितान् ।
स्वेदमेदःकफोत्क्लेद-पित्तरोगविनाशनम् ॥ †
अम्लं कषायमधुरं वातघ्नं ग्राहि दीपनम् ।
स्निग्धोष्णं दाडिमं हृद्यं कफपित्ताविरोधि च ॥

कषायेत्यादि। लवलीफलम् कषायविशदसौगन्ध्याद्रुचिकरम्। अवदंशक्षमं भोज्यद्रव्यान्तरभक्षणे रोचकत्वक्षमम्। नोयाल्लीति ख्यातम्। नीपमित्यादि। नीपं पक्वं कदम्बफलम्। शतारुकं स्वनामख्यातम्। पीलुफलम् गुड़फलम्। तृणशून्यं केतकीफलम्। विकङ्कतं वैंइच इति ख्यातम्। प्राचीनेत्यादि। प्राचीनामलकं पानीयामलकफलम्। ऐङ्गुदमित्यादि। ऐङ्गुदं पुत्रञ्जीवफलम्। तिन्दुकं तिंदु इति ख्यातम्। विद्यादित्यादि। लवणवर्ज्जितान् पञ्च रसान्। तदामलकं स्वेदादिनाशनम्। अम्लमित्यादि। द्विधा दाड़िमं मधुरफलमेकमपरमम्लफलम्। तत्राम्लावरं कषायमधुरमम्लमवरं कषायमधुरम्। स्निग्धोष्णमित्यादिगुणम्। सुश्रुते च—कषायानुरसं तेषां

धन्वनभेदः। राजादनं क्षीरि। अवदंशक्षममिति लवलीफलं प्राश्य द्रव्यान्तरे रुचिर्भवति। नीपं कदम्बकम्, शतारुकफलं शारुका इति ख्यातम्, पीलु औत्तरापथिकम्, तृणशून्यं केतकीफलम्, प्राचीनामलकं पानीयामलकम्। ईङ्गुदं पत्रजीवकफलम्। तिन्दुकं केन्दुः। दाडिमगुणे कफपित्ताविरोधीत्यम्लदाडिमं पित्ताविरोधि, मधुरन्तु कफाविरोधि, तेन त्रिदोषहरत्वमस्योपपन्नम्, यदुक्तं सुश्रुते— द्विविधं तत् तु विज्ञेयं मधुरञ्चाम्लमेव च। त्रिदोषघ्नन्तु मधुरमम्लं वातकफापहम्॥" इति।

* कफलमिति क्वचित् पाठः।

† इतः परं श्लोकोऽयं ग्रन्थान्तरेषु दृश्यते—
रूक्षं स्वादु कषायाम्लं कफपित्तहरं परम्। रसासृङ्मांसमेदोजान् दोषान् हन्ति विभीतकम्॥

रुक्षाम्लं दाड़िमं यत् तु तत् पित्तानिलकोपनम् ।*
वृक्षाम्लं ग्राहि रुक्षोष्णं वातश्लेष्मणि शस्यते ॥
अम्लीकायाः फलं पक्वं तस्माच्चाल्पान्तरं गुणैः ।
गुणैस्तैरेव संयुक्तं भेदनन्त्वम्लवेतसम् ॥
शूलेऽरुचौ विबन्धे च मन्देऽग्नौ मद्यविप्लवे ।
हिक्काश्वासे च कासे च च्छर्द्दिवर्च्चोगदेषु च ॥
वातश्लेष्मसमुत्थेषु सर्व्वेष्वेवोपदिश्यते ।
केशरं मातुलुङ्गस्य लघु शेषमतोऽन्यथा ॥ †

दाड़िमं नातिपित्तलम् । दीपनीयं रुचिकरं हृद्यं वर्च्चोविबन्धनम् ॥ द्विविधं तत् तु विज्ञेयं मधुरञ्चाम्लमेव च । त्रिदोषघ्नञ्च मधुरमम्लं वातकफापहम् ॥ इति । वृक्षाम्लमित्यादि । वृक्षाम्लं तिन्तिड़ीकं, सुश्रुते च—वातापहं तिन्तिड़ीकमामं पित्तबलासकृत् । ग्राह्युष्णं दीपनं रुच्यं सम्पक्वं कफवातनुत् ॥ अम्लीकाया इत्यादि । द्विविधं तिन्तिड़ीकं वृक्षाम्लमम्लीका च । तत्र यस्य वृक्षोऽप्यम्लः स वृक्षाम्लः, यस्य फलमम्लं साम्लीका । तस्याः पक्वं फलं तस्मात् किञ्चिद्गुणैरन्तरं भिन्नम् । तस्या आमफलमपि तिन्तिड़ीकामफलवत् । तदुक्तं सुश्रुते—अम्लीकायाः फलं पक्वं तद्वद् भेदि तु केवलम् । तस्मादल्पान्तरगुणं कोषाम्रफलमुच्यते । इति । गुणैरित्यादि । वृक्षाम्लस्य गुणै रुक्षोष्णवातश्लेष्महरत्वैः संयुक्तं ग्राहित्ववर्ज्जं भेदनञ्चाम्लवेतसं थैकर इति ख्यातम् । शूलेऽरुचावित्यादि । मद्यविप्लवे मद्यविक्षेपे, शूलादिवातश्लेष्मसमुत्थसर्व्वगदेषु मातुलुङ्गस्य केशरमुपदिश्यते, लघु चोपदिश्यते । शेषं केशरातिरिक्तं त्वगादिकमतोऽन्यथा गुणान्तरमुपदिश्यते । तद्यथा सुश्रुते—लघ्वम्लं दीपनं हृद्यं मातुलुङ्गमुदाहृतम् । त्वक् तिक्ता दुर्ज्जरा तस्य वातक्रिमिकफापहा । स्वादु शीतं गुरु स्निग्धं मांसं मारुतपित्तजित् । मेध्यं शूलानिलच्छर्द्दि-कफारोचक-

वृक्षाम्लं महार्द्रकम्, अम्लीका तिन्तिड़ी । शेषमिति त्वङ्मांसम्, अतोऽन्यथेति

* "मधुरं पित्तनुत् तेषां पूर्व्वं दाड़िममुत्तमम्" इत्यधिकः पाठः क्वचित् ।

† इतः परं श्लोकोऽयमादर्शान्तरे दृश्यते—

रोचनो दीपनो हृद्यः सुगन्धस्त्वग्विवर्ज्जितः ।
कर्च्चूरः कफवातघ्नः श्वासहिक्कार्शसां हितः ॥

सुगन्धि मधुरं साम्लं विशदं भक्तरोचनम्। *
दुर्ज्जरं वातशमनं नागरङ्गफलं गुरु ॥
वातामाभिषुकाक्षोड़-मुकूलकनिकोचकाः।
गुरूष्णास्निग्धमधुराः सोरुमाणा बलप्रदाः ॥
वातघ्ना वृंहणा वृष्याः कफपित्ताभिवर्द्धनाः।
पियालमेषां सदृशं विद्यादौष्ण्यं विना गुणैः ॥
श्लेष्मलं मधुरं शीतं श्लेष्मातकफलं गुरु।
श्लेष्मलं गुरु विष्टम्भि चाङ्कोटफलमग्निजित् ॥

नाशनम्। दीपनं लघु संग्राहि गुल्मार्शोघ्नन्तु केशरम्। शूलाजीर्णविबन्धेषु मन्दाग्नौ कफमारुते। अरुचौ च विशेषेण रसस्तस्योपदिश्यते। इति। सुगन्धीत्यादि। नागरङ्गफलं कमलालिम्बाकं साम्लं मधुरं सुगन्धि च विशदश्च। सुश्रुते च अम्लं समधुरं हृद्यं विशदं भक्तरोचनम्। वातघ्नं दुर्ज्जरं प्रोक्तं नारङ्गस्य फलं गुरु ॥ इति।

वातामेत्यादि। वातामस्य फलम्, अभिषुकस्य अभिषुकनाम्ना ख्यातस्य फलम्। आक्षोड़स्य आखरोट इति ख्यातस्य फलं, मुकूलकस्य फलं, निकोचकस्य पर्व्वतीयाखरोटस्य फलम्, उरुमाणस्य च फलम्। फलरूपा एते वातामादयो गुरूष्णस्निग्धमधुरा इत्यादिगुणाः। सुश्रुते च वातामाक्षोड़ाभिषुकनिचूलपिचुनिकोचकोरुमाणप्रभृतीनि। पित्तश्लेष्मकराण्याहुः स्निग्धोष्णानि गुरूणि च। वृंहणान्यनिलघ्नानि बल्यानि मधुराणि च ॥ इति। पियालमित्यादि। पियालस्य फलं द्विविधं, राजादनं पियालश्च। तत्र राजादनगुणा उक्ताः। पियालस्य वचनमिदम्। एषां वातामादीनाम् औष्ण्यं विना शेषैर्गुणैः सदृशं पियालफलं विद्यात्। सुश्रुते—पियालमज्जा मधुरो वृष्यः पित्तानिलापहः। इति। श्लेष्मलमित्यादि। श्लेष्मातकं शेलुफलम्।

गुरु, किंवा, शूलेऽरुच्यादिष्वपुष्टकेसरगुणविपरीतम्। वातामादय औत्तरापथिकाः। पियालोऽयं मगधप्रसिद्धः।

* मधुरं किञ्चिदम्लञ्च हृद्यं भक्तप्ररोचनमिति चक्रधृतः पाठः।

गुरूष्णं मधुरं रुक्षं * केशघ्नञ्च शमीफलम्।
विष्टम्भयति कारञ्जं पित्तश्लेष्माविरोधि च॥
आम्रातकं दन्तशठमम्लं सकरमर्द्दकम्।
रक्तपित्तकरं विद्यादैरावतकमेव च॥
वातघ्नं दीपनञ्चैव वार्त्ताकं कटु तिक्तकम्।
वातलं कफपित्तघ्नं विद्यात् पर्कटकीफलम्॥
पित्तश्लेष्मघ्नमम्लञ्च वातलञ्चाक्षिकीफलम्।
मधुराण्यम्लपाकीनि पित्तश्लेष्महराणि च। †
अश्वत्थोडुम्बरप्लक्ष-न्यग्रोधानां फलानि च॥ ३१॥

श्लेष्मलमित्यादि। अक्षोटफलम् आखरोटविशेषः। गुरूष्णमित्यादि। शमीफलं पक्वं रुक्षं गुरूष्णञ्च। केशघ्नं केशानामुपघातकरम्। विष्टम्भयतीत्यादि। कारञ्जं कण्टकिफलमिति कश्चित्, करमर्द्दफलमित्यन्ये। पित्तश्लेष्मविरोधित्वं प्रभावात्। आम्रातकमित्यादि। आम्रातकं द्विविधं मधुरञ्चाम्लञ्च। तयोर्मधुरं पूर्व्वमुक्तं मधुराम्लमुच्यते। दन्तशठं जम्बीरफलं कागजीतिख्यातम्। करमर्द्दम् अम्लकरञ्जफलमैरावतकमम्लनागरङ्गफलञ्चाम्लं रक्तपित्तकरं विद्यात्। सुश्रुते च—आम्रातकफलं वृष्यं सस्नेहं श्लेष्मवर्द्धनम्। तृष्णाशूलकफोत्क्लेश-च्छर्द्दिश्वासनिवारणम्॥ वातश्लेष्मविबन्धघ्नं जम्बीरं गुरु पित्तकृत्। अम्लं तृष्णापहं रुच्यं पित्तकृत् करमर्द्दकम्॥ वातघ्नमित्यादि। वार्त्ताकं दक्षिणापथे फलवत् खाद्यते। तच्च कटु तिक्तकम्। वातलमित्यादि। पर्कटकीफलं पर्कटस्य पक्वं फलम्। पित्तश्लेष्मघ्नमित्यादि। अक्षिकी लता तस्याः फलम् आक्षिकं पक्वं फलम्। मधुराणीत्यादि। अश्वत्थादीनां पक्वानि

दन्तशठो जम्बीरः, केचिदम्लोटं वदन्ति। इह आम्रातकमम्लं ग्राह्यम्; पूर्व्वन्तु मधुरमाम्रातकमुक्तम्; करमर्द्दं द्विविधं ग्रामजं वनजञ्च, ऐरावतमम्लातकम्, किंवा, नागरङ्गम्।

वार्त्ताकं दक्षिणापथे फलवत् खाद्यते, यत्तोष्ठवार्त्ताकसंज्ञकं, तस्येह गुणः; किंवा

---

* रुक्षमित्यत्र शीतमिति वा पाठः।

† मधुराण्यनुपाकीनि वातपित्तहराणि च इति चक्रसम्मतः पाठः।

कषायमधुराम्लानि वातलानि गुरूणि च ।
भल्लातकास्थ्यग्निसमं* त्वङ्मांसं स्वादुशीतलम् ।
पञ्चमः फलवर्गोऽयमुक्तः प्रायोपयोगिकः ॥ ३२ ॥

इति फलवर्गः । ५ ।

रोचनं दीपनं वृष्यमार्द्रकं विश्वभेषजम् ।
वातश्लेष्मविबन्धेषु रसस्तस्योपदिश्यते ॥
रोचनो दीपनस्तीक्ष्णः सुगन्धिमुखबोधनः ।
जम्बीरः कफवातघ्नः क्रिमिहा भुक्तपाचनः ॥

फलानि मधुराणीत्यादीनि प्रभावात् अम्लपाकीनि । कषायेत्यादि । भल्लातकानि फलानि कषायमधुराम्लानि पकान्येव । तेषां फलानां त्वङ्मांसं त्वग्गतं शस्यमग्निसमं स्वादु च, शीतलन्तु वीर्य्येण, स्पर्शे तु वह्निसमं दाहकरमिति । वर्गं समापयति—पञ्चम इत्यादि । प्रायोपयोगिक एव न तु कृत्स्नः ॥३१।३२ ॥

[ इति पञ्चमः फलवर्गः । ५ । ]

गङ्गाधरः—क्रमिकलाद्धरितवर्ग उच्यते—रोचनमित्यादि । आर्द्रकम् अशुष्कं विश्वभेषजमिति, तदेव रोचनादिगुणम् । तस्यार्द्राद्रकस्य रसो वातश्लेष्मविबन्धेषूपदिश्यते । सुश्रुते तु—कफानिलहरं स्वर्य्यं विबन्धानाहशूलनुत् । कटूष्णं रोचनं हृद्यं वृष्यञ्चैवार्द्रकं स्मृतम् ॥ शुष्कस्य गुण आहारसंयोगवर्गे वक्ष्यते । रोचन इत्यादि । जम्बीरः पर्णासभेदः पुंस्त्वात् । कफवातघ्नः क्रिमिहा भुक्तपाचनश्च । सुश्रुते च—जम्बीरः पाचनस्तीक्ष्णः क्रिमिवात-

फलवदसिद्धस्यैव प्रार्ताकस्योपयोज्यस्यायं गुणः । आक्षिकी लता तस्याः फलमाक्षिकम् । अनुपाकि अनुया इति ख्याता । अग्निसममिति स्फोटादिजनकत्वात् ॥ ३०—३२ ॥

[ इति फलवर्गः । ५ । ]

चक्रपाणिः—हरितानामप्यार्द्रकादीनां फलवदग्निपाकमन्तरेण भोजनस्य प्राक् पश्चाच्चोपयोगात् फलमनु हरितकथनं, फलेषु पश्चादभिधानं हरितस्य तृप्त्यनाधायकत्वात् । आर्द्रकमिति विशेषणं शुण्ठीव्यावृत्त्यर्थम्, शुण्ठीगुणश्चाहारसंयोगवर्गे भविष्यति ; जम्बीरः पर्णासभेदः, जम्बीरफल

*भल्लातकास्थ्यग्निसममिति पाठान्तरम

बालं दोषहरं वृद्धं त्रिदोषं मारुतापहम्।
स्निग्धस्विन्नं विशुष्कञ्च मूलकं कफवातजित्॥
हिक्काकासविषश्वास-पार्श्वशूलविनाशनः।
पित्तकृत् कफवातघ्नः सुरसः पूतिगन्धहा॥
यमानी चार्ज्जकश्चैव शिग्रु शालेयमृष्टकम्*।
हृद्यान्यास्वादनीयानि पित्तमुत्क्लेशयन्ति तु॥

कफापहः। सुरभिर्दीपनो रुच्यो मुखवैशद्यकारकः॥ इति। बालमित्यादि। मूलकं बालं दोषहरं, वृद्धं मूलकं त्रिदोषं, तदेव स्निग्धं स्नेहेन पक्वं स्विन्नं मारुतापहम्। तदेव विशुष्कं कफवातजित्। सुश्रुते च—सर्व्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिका। महत् तत् गुरु विष्टम्भि तीक्ष्णमामं त्रिदोषकृत्॥ तदेव स्निग्धस्विन्नन्तु पित्तनुत् कफवातजित्। त्रिदोषशमनं शुष्कं विषदोषहरं लघु॥ विष्टम्भि वातलं शाकं शुष्कमन्यत्र मूलकात्॥ इति। हिक्केत्यादि। सुरसः पर्णासः हिक्कादिनाशनादिगुणः। सुश्रुते कफानिलविषश्वास-कासदौर्गन्ध्य नाशनः। पित्तकृत् पार्श्वशूलघ्नः सुरसः समुदाहृतः। यमानीत्यादि। यमानी वनयमानी। आर्ज्जकः श्वेतपर्णासः। शिग्रु वीजम्, शालेयं चाणक्य-मूलं मगधे प्रसिद्धम्। मृष्टकं राजिका। एतानि हृद्यादीनि। सुश्रुते च—कफघ्ना लघवो रूक्षाः स्निग्धोष्णाः पित्तवर्द्धनाः। कटुपाक-रसाश्चैव सुरसार्ज्जकभूस्तृणाः। कटुः सक्षारो मधुरः शिग्रु स्तिक्तोऽथ

सुगन्धि। बालं दोषहरमिति तरुणावस्थायामव्यक्तरसायां त्रिदोषहरम्; तन्त्रान्तरवचनं हि—"यावद्धि चाव्यक्तरसान्वितानि नवप्ररूढ़ानि च मूलकानि। भवन्ति तावल्लघुदीपनानि पित्तानिलश्लेष्महराणि चैव॥" वृद्धं त्रिदोषमिति, तदेव प्रवृद्धम्, एतामेव मूलकावस्थामभिप्रेत्य चोक्तं,—"मूलकं कन्दानामपथ्यतमं प्रकृष्टतमम्" इति। मारुतापहं स्निग्धस्विन्नमिति सामान्येन वाक्यं बृहत्त्व; "शुष्काणि कफवातघ्नान्येतानि" इति वक्ष्यमाणग्रन्थेनैव शुष्कमूलकस्य कफवातघ्नत्वे लब्धे पुनर्वचनं प्रकर्षप्राप्त्यर्थम्।

पूतिगन्धहेति शरीरस्य तथा व्यञ्जनाद्यमांसस्य पूतिगन्धतां हन्ति। अर्ज्जकः श्वेतपर्णासः, शिग्रु शिग्रुः शोभाञ्जनम्; शालेयश्चाणक्यमूलं मरौ प्रसिद्धम्, किंवा शालेयमिति मिश्रेयं पाठप्रसिद्धम्, वचनं हि—"चाणक्यमूलमिश्रेये शालेयाभिख्यया मताः" इति; मृष्टकं

* मृष्टकमिति पाठः।

जलपिप्पलिगण्डीर-शृङ्गवेर्य्यथ तुम्बुरु ।
तीक्ष्णोष्णकटुरूक्षाणि कफवातहराणि च ॥
पुंस्त्वघ्नः कटुरूक्षोष्णो भूस्तृणो रक्तशोधनः ।
खराश्वा कफवातघ्नी वस्तिरोगरुजापहा ॥
धान्यकञ्चाजगन्धा च सुमुखाश्चेति रोचनाः ।
सुगन्धा नातिकटुका दोषानुत्क्लेदयन्ति च ॥
ग्राही गृञ्जनकस्तीक्ष्णो वातश्लेष्मार्शसां हितः ।
स्वेदनेऽभ्यवहारे च योजयेत् नमपित्तिनाम् ॥

पित्तलः । मधुशिग्रुः सरास्तक्तः शोफघ्नो दीपनः कटुः । जलेत्यादि । जले पिप्पल्याकारा जलपिप्पली । गण्डीरः समष्ठीला. स च शुक्लो रक्तश्चेति द्विविधः, तत्र शुक्लो जलजः शाकवर्गे पठितोऽकटुत्वात् । कटुत्वात् तु रक्तोऽत्र हरितवर्गे पठित इति न द्विरुक्तः । शृङ्गवेरी शृङ्गवेराकृतिः । उक्तञ्च— शृङ्गवेरवदाकृत्या शृङ्गवेरीति भाष्यते । कुस्तुम्बुरुसमाकृत्या तुम्बुरूणि वदन्ति हि । पुंस्त्वेत्यादि । भूस्तृणो गन्धतृणः । पुंस्त्वघ्नः । खराश्वेत्यादि । खराश्वा पारसीययमानी खराशिनीति लोके । धान्यकमित्यादि । धान्यकं कुस्तुम्बुरुः । सश्रुते च— आर्द्रा कुस्तुम्बुरुः कुर्य्यात् स्वादुसौगन्ध्यहृद्यताम् । सा शुष्का मधुरा पाके स्निग्धा तृड्दाहनाशिनी । दोपघ्नी कटुका किञ्चित्तिक्ता स्रोतोविशोधनी । इति । अजगन्धा क्षेत्रयमानी । सुमुखा पर्णासभेदः । सुश्रुते च— कफानिलविषश्वास-कासदौर्गन्ध्यनाशनः । पित्तकृत् पार्श्वशूलघ्नः सुरसः समुदाहृतः । तद्वत् तु सुमुखो ज्ञेयो विशेषाद् गरनाशनः ॥ इति । एवं तत्रैव चोक्तं—तीक्ष्णोष्णं कटुकं पाके रूक्षं पित्ताग्निवर्द्धनम् । कटु श्लेष्मानिलहरं गन्धाढ्यं जीरकद्वयम् । कारवी करवी तद्वद्विज्ञेया सोपकुञ्चिका । भक्ष्यव्यञ्जन-भोज्येषु विविधेष्ववचारिता । इति । ग्राहीत्यादि । गृञ्जनको गाँजोर इति लोके । तं गृञ्जनकमपित्तिनां स्वेदनेऽभ्यवहारे च योजयेत्त तु पित्तिनाम् ।

राजिका । गण्डीरो द्विविधो रक्तः शुक्लश्च, तत्र यो रक्तः, स कटुत्वेन हरितवर्गे पठ्यते, यस्तु शुक्लो जलजः, स शाकवर्गे पठित इति नैकस्य वर्गद्वये पाठः ; जलपिप्पली जले पिप्पल्या-कारा स्यात् ; शृङ्गवेरी गोजिह्विका, किंवा शृङ्गवेरी आर्द्रकाकृतिः यदुक्तं—"शृङ्गवेरवदाकृत्या शृङ्गवेरीति भाषिता । कुस्तुम्बुरुसमाकृत्या तुम्बुरूणि वदन्ति च ॥" भूस्तृणो गन्धतृणः, खराश्वा

श्लेष्मलो मारुतघ्नश्च पलाण्डुर्न च पित्तकृत् ।
आहारयोगे बल्यश्च गुरुर्वृष्योऽथ रोचनः ॥
क्रिमिकुष्ठकिलासघ्नो वातघ्नो गुल्मनाशनः ।
स्निग्धश्चोष्णश्चवृष्यश्च लशुनः कटुको रसः ॥
शुष्काणि कफवातघ्नान्येतान्येषां फलानि च ।
हरितानामयञ्चैषां षष्ठो वर्गः समाप्यते ॥ ३३ ॥

इति हरितवर्गः । ६ ।

श्लेष्मल इत्यादि । पलाण्डुः श्लेष्मलो मारुतघ्नश्च ईषत्पित्तलत्वाल्पार्थत्वात् नञः । स च द्विविधः, पलाण्डुः क्षीरपलाण्डुश्चाहारयोगे बल्यश्च गुरुश्च वृष्यश्च रोचनश्च । सुश्रुते च—नात्युष्णवीर्य्योऽनिलहा कटुश्च तीक्ष्णो गुरुर्नातिकफावहश्च । बलावहः पित्तकरोऽथ किञ्चित् पलाण्डुरग्निञ्च विवर्द्धयेच्च ॥ स्निग्धोऽरुचिघ्नः स्थिरधातुकर्त्ता बल्योऽथ मेधाकफपुष्टिकृच्च । स्वादुर्गुरुः शोणितपित्तशस्तः स पिच्छिलः क्षीरपलाण्डुरुक्तः ॥ इति । क्रिमीत्यादि । लशुनो रसोनः क्रिम्यादिनाशनादिगुणः । सुश्रुते च—स्निग्धोष्णतीक्ष्णः कटुपिच्छिलश्च गुरुः स्थिरः स्वादुरसश्च बल्यः । वृष्यश्च मेधा-स्वरवर्णचक्षुर्भग्नास्थिसन्धानकरो रसोनः ॥ हृद्रोगजीर्णज्वर कुक्षिशूल-विबन्धगुल्मारुचिकासशोफान् । दुर्नाम-कुष्ठानलसादजन्तु-समीरणश्वासकफांश्च हन्ति ॥ इति । शुष्काणीत्यादि । एतानि गृञ्जनकादीनि शुष्काणि कन्दानि कफवातघ्नानि भवन्ति । एषां गृञ्जनकादीनां फलानि च कफवातघ्नानि भवन्ति । इति केचित् । परे त्वेतानि हरित-वर्गोक्तान्याद्रविश्वभेषजादीनि । शुष्काणि कफवातघ्नानि, फलानि चैषां कफ-वातघ्नानि । एवमादिगुणा द्रष्टव्याः तत्र यथा सुश्रुते—कटून्युष्णानि रुच्यानि वातश्लेष्महराणि च । कृतान्नेषूपयुज्यन्ते संस्कारार्थमनेकधा ॥ इति वर्गं समापयति—हरितानामित्यादि । एषां हरितानामयं षष्ठो वर्गः समाप्यते ॥३३

[ इति षष्ठो हरितवर्गः । ६ । ]

कृष्णजीरकम् । अजगन्धा यमानी. सुमुखः पर्णासभेदः, अत्र आम्लकाद्रीणाम् आर्द्रकाणां गुणः, शुष्काणाञ्च आहारयोगिवर्गे "कारव्योपकुञ्चिका" इत्यादिना गुणं निर्देक्ष्यति । गृञ्जनकः स्वल्प-नालपत्रः पलाण्डुरेव । एतानीति हरितवर्गोक्तानि ; शुष्काणीत्यादिना यद्यपि शुष्काणामपि शुण्ठीप्रभृतीनां गुण उक्तो भवति, तथापि विशेषगुणकथनार्थं पुनस्तद्विधानमाहारयोगिवर्गे भविष्यतीति न पौनरुक्त्यम् ॥ ३३ ॥ [ इति हरितवर्गः । ६ । ]

प्रकृत्या मद्यमम्लोष्णमम्लञ्चोक्तं विपाकतः।
सर्व्वं सामान्यतस्तस्य विशेष उपदेक्ष्यते ॥
कृशानां सक्तमूत्राणां ग्रहण्यर्शोविकारिणाम्।
सुरा प्रशस्ता वातघ्नी स्तन्यरक्तक्षयेषु च ॥
हिक्काश्वासप्रतिश्याय-कासवर्च्चोग्रहारुचौ।
छर्द्यानाहविबन्धेषु वातघ्नी मदिरा हिता ॥
शूलप्रवाहिकाटोप-कफवातार्शसां हितः।
जगलो ग्राहिरूक्षोष्णः शोथघ्नो भुक्तपाचनः ॥

गङ्गाधरः—अथान्नतदुपकरणानन्तरं पानं वक्तुं क्रमिकत्वान्मद्यवर्ग उच्यते—प्रकृत्येत्यादि। प्रकृत्येति स्वभावात्। सर्व्वं मद्यं सामान्यतो रसेऽम्लमुष्णन्तु वीर्य्ये विपाकतश्चाम्लमुक्तम्। तस्य मद्यस्य विशेष उपदेक्ष्यते। यद्यपि रसपाकयोरम्लत्वं वीर्य्येण उष्णं लभ्यते तथापि पुनरुष्णमिति वचनेन तीक्ष्णत्वादयो गुणाः ख्यापिताः। सुश्रुते चोक्तं—सर्व्वं पित्तकरं मद्यमम्लं दीपनरोचनम्। भेदनं कफवातघ्नं हृद्यं वस्तिविशोधनम्। पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम्। विकाशि सृष्टविण्मूत्रं शृणु तस्य विशेषणम् ॥ इति। कृशानामित्यादि। सुरा पैष्टिकी अनुद्धृतमण्डा कृशादीनां प्रशस्ता, स्तन्यादिक्षयेषु च प्रशस्ता। सुश्रुते च—कासार्शोग्रहणीदोष-मूत्राघाता-निलापहा। स्तन्यरक्तक्षयहिता सुरा वृंहणदीपनी ॥ इति। हिक्केत्यादि। मदिरा श्वेतवर्णा सुरा हिक्कादिषु हिता वातघ्नी च। सुश्रुते च—कासार्शोग्रहणीश्वास-प्रतिश्यायविनाशिनी। श्वेता मूत्रकफस्तन्य-रक्तमांस-करी सुरा ॥ इति। शूलेत्यादि। जगलो भक्तकिण्वभूता सुरा शूलादीनां हिता। शोथघ्नः ग्राही च वीर्य्यतो रूक्षश्चोष्णश्च भक्तपाचनश्च। सुश्रुते च—ग्राह्युष्णो जगलः पक्ता रूक्षस्तृट्कफशोफहृत्। हृद्यः प्रवाहिकाटोप-दुर्नामानिल-

चक्रपाणिः—मद्यमभिधाय पानं वक्तव्यम्, अत्रापि पानप्रधानमपि पानीयमुल्लङ्घ्य हर्षादिकर्तृत्वात् जनानां मुख्यपेयत्वाच्च मद्यमाह। प्रकृत्येति स्वभावात्, यद्यपि च मद्ये पीयमाने नानारसता प्रतीयते व्यक्ता, तथापि दृष्टत्वतुष्टमुपलब्धादम्लकार्य्यकर्तृत्वादम्लमेव, वचनं हि—"अम्लानि चाम्लप्रभावाणि चाम्लमेव कृत्वोपदेक्ष्यामः" इति, तेन अम्लप्रभावत्वादम्लरसत्वमेव, अत एवोक्तम्—"सर्व्वेषां मद्यमम्लानामुपर्य्युपरि वर्त्तते" इति; विपाकत इति तृतीयायां

शोषार्शोग्रहणीदोष-पाण्डुरोगारुचिज्वरान् ।
हन्त्यरिष्टः कफकृतान् रोगान् दीपनपाचनः * ॥
सुखप्रियः सुखमदः सुगन्धिर्वस्तिदोषनुत् ।
जरणीयः परिणतो हृद्यो वर्ण्यश्च शार्करः ॥
रोचनो दीपनो हृद्यः शोषशोफार्शसां हितः ।
स्नेहश्लेष्मविकारघ्नो वर्ण्यः पक्वरसो मतः ॥
जरणीयो विबन्धघ्नः स्वरवर्णविशोधनः ।
कर्षणः शीतरसिको हितः शोफोदरार्शसाम् ॥
सृष्टभिन्नशकृद्वातो गौडस्तर्पणदीपनः ।
पाण्डुरोगव्रणहिता दीपनी चाक्षिकी मता ॥

शोथहृत् ॥ अपरञ्च—छर्द्यरोचकहृत्कुक्षि-शूलतोदप्रमर्दनी । प्रसन्ना कफवातार्शो-विबन्धानाहनाशिनी ॥ इति । शोषेत्यादि । औषधिकाथादिः सन्धानेन काले जातरस एवारिष्टस्तस्य सामान्येन एष गुणसंग्रहः । शोषादीन् कफकृतान् रोगान् हन्ति दीपनः पाचनश्च । इति । तद्विशेषमाह । सुखप्रिय इत्यादि । शार्करोऽरिष्टः सुखप्रियादिगुणः । सुश्रुते च—शार्करो मधुरो हृद्यो दीपनो बस्तिशोधनः । वातघ्नो मधुरः पाके हृद्य इन्द्रियबोधनः ॥ तद्वत् पक्वरसः सीधुर्बलवर्णकरः परः । शोफघ्नो दीपनो हृद्यो रुच्यः श्लेष्मार्शसां हितः ॥ इति । अस्य पक्वरसस्य गुणमाह—रोचन इत्यादि । पक्वरसो नाम सीधुः इक्षुरसं पक्त्वा कालेन जातरसः सीधुर्भवति । स च रोचनादिगुणः । जरणीय इत्यादि । शीतरसिक इक्षोः शीतेनापक्वेन रसेन निर्वृत्तोऽरिष्टः जरणीयादिगुणः । कर्षणः शरीरस्य । सुश्रुते च—कर्षणः शीतरसिकः श्वयथूदरनाशनः । वर्णकृज्जरणः स्वर्य्यो विबन्धघ्नोऽर्शसां हितः ॥ इति । सृष्टेत्यादि । गौड इति गुडकृत एवारिष्टः । सुश्रुते च—दीपनः सृष्टविण्मूत्रो विशदोऽल्पमदो गुरुः । कषायो मधुरः सीधुर्गौडः पाचनदीपनः ॥

तसिः । सुरा अनुद्धतमण्डा, मदिरा तु सुरामण्डः, जगलो [illegible]कृता सुरा, अरिष्ट [illegible] वक्ष्यमाणौ [illegible], शार्करः शर्कराप्रकृतिक आसवः, पक्वरसो

* दीपनपाचनेत्यत्र रोचनदीपन इति क्वचित् पाठः ।

सुरासवस्तीव्रमदो वातघ्नो वदनप्रियः ।
छेदी मध्वासवस्तीक्ष्णो मैरेयो मधुरो गुरुः ॥
धातक्यभिषुतो रुच्यो हृद्यो रोचनदीपनः ।
मार्द्वीक-*-वच्च चाऽत्युष्णो मृद्वीकेक्षुरसासवः ॥

पाण्डुरोगेत्यादि । आक्षिकी विभीतककल्ककृता सुरा । सुश्रुते च— आक्षिकः पाण्डुरोगघ्नो व्रण्यः संग्राहको लघुः । कषायमधुरः सीधुः पित्तघ्नोऽसृक्प्रसादनः ॥ जाम्बवो बद्धनिष्यन्दस्तुवरो वातकोपनः ॥ इति । सुरासव इत्यादि । सुरासवः सुरया द्रवकार्य्यं यत्रासवे क्रियते स सुरासवः, सुतरां तीव्रमदः । सुश्रुते च—तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत् । मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः ॥ इति । छेदीत्यादि । मध्वासवो मधुकृत आसवः । सुश्रुते च लघुर्मध्वासवश्छेदी मेहकुष्ठविषापहः । तिक्तः कषायः शोफघ्नस्तीक्ष्णः स्वादुरवातकृत् ॥ तीक्ष्णः कषायो मदकृद् दुर्नामकफगुल्महृत् । क्रिमिमेदोऽनिलहरो मैरेयो मधुरो गुरुः । इति । मध्वासवमैरेययोस्तीक्ष्णत्ववचनादिह तीक्ष्णशब्दो मध्वासवेऽन्वितः पुनराक्षुप्तमैरेयेऽप्यन्वेतव्य इति । मैरेयो यथा— आसवस्य सुरायाश्च द्वयोरेकत्र भाजने । सन्धानं तद्विजानीयान्मैरेयमुभयाश्रयम् । इति । धातक्यभिषुत इत्यादि । धातकीपुष्पकृत आसवो धातक्यभिषुतः । मार्द्वीकवदित्यादि । मृद्वीकाकृतमद्यं मार्द्वीकं तद्वन्नात्युष्णो मृद्वीकारससहितेक्षुरसासवश्च भवति । मृद्वीकारसेक्षुरसयोर्मिलितयोरासवो मृद्वीकेक्षुरसासव इत्येक आसव इति न पुनरुक्तम् । मार्द्वीकमधुगुण एतेन ख्यापितः । सुश्रुते च—मार्द्वीकमविदाहित्वान्मधुरान्वयतस्तथा । रक्तपित्तेऽपि सततं बुधैर्न प्रतिषिध्यते ॥ मधुरं तद्धि रूक्षञ्च कषायानुरसं लघु । लघुपाकि सरं शोष-विषमज्वरनाशनम् ॥ मार्द्वीकाल्पान्तरं किञ्चित् खार्ज्जूरं वातकोपनम् । तदेव विशदं रुच्यं कफघ्नं कर्षणं लघु ॥ इह खार्ज्जूरमधुगुणो-

यः कथितेनेक्षुरसेन क्रियते ; शीतरसिकस्तु शीतेक्षुरसकृतः । गौडो गुडप्रकृतिकः । सुरासवो यत्र सुरैव तोयकार्य्यं क्रियते । मधूकपुष्पकृतो मध्वासवः । मैरेयलक्षणं यथा— "आसवस्य सुरायाश्च द्वयोरेकत्र भाजने । सन्धानं तद् विजानीयात् मैरेयमुभयाश्रयम् । इति । धातक्याऽभिषुतो धातकीकृतासवः, माध्वीकं मधुप्रधानम्,—रोचनं दीपन-

* माध्वीकवदिति पाठान्तरम् ।

रोचनं दीपनं हृद्यं बल्यं पित्ताविरोधि च ।
विबन्धघ्नं कफघ्नञ्च मधु लघ्वल्पमारुतम् ॥
सुरा समण्डा रूक्षोष्णा यवानां वातपित्तला ।
गुर्व्वी जीर्य्यति विष्टभ्य श्लेष्मला तु मधूलिका ॥
दीपनं जरणीयञ्च हृत्पाण्डुक्रिमिरोगनुत् ।
ग्रहण्यर्शोहितं भेदि सौवीरकतुषोदकम् ॥

ऽनभिहितोऽप्युन्नेयः । रोचनमित्यादि । मध्विति । मधुकृतं मद्यं माध्वीकं रोचनादिगुणम् । सुरेत्यादि । सुरा पैष्टिकी, सा तु समण्डा रूक्षोष्णा, पूर्व्वन्तु मण्डहीना सुरा कृशानामित्यादिनोक्ता न ततः पुनरुक्ता । यवानां सुरा यवकृता सुरा वातपित्तला । सुश्रुते च—पित्तलाल्पकफा रूक्षा यवैर्वातप्रकोपणी इति । गुर्व्वीत्यादि । मधूलिका सुरा मधूलककल्ककृता गुर्व्वी विष्टभ्य च जीर्य्यति श्लेष्मला च । सुश्रुतेऽपि—विष्टम्भिनी सुरा गुर्व्वी श्लेष्मला तु मधूलिका । रूक्षा नातिकफा वृष्या पाचनी चाक्षिकी स्मृता । त्रिदोषो भेदनो हृद्यश्च कोहलो वदनप्रियः । बक्सो हृतसारत्वाद्विष्टम्भी वातकोपनः । सीधुर्मधूक-पुष्पोत्थो विदाह्यग्निबलप्रदः । रूक्षः कषायः कफहृद्वातपित्तप्रकोपणः । निर्दिशेद्रसतश्चान्यान् कन्दमूलफलासवान् । अरिष्टो द्रव्यसंयोग-संस्कारादधिको गुणैः । बहुदोषहरश्चैव दोषाणां शमनश्च सः । दीपनः कफवातघ्नः सरः पित्ताविरोधनः । शूलाध्मानोदरप्लीह ज्वराजीर्णार्शसां हितः । पिप्पल्यादि-कृतो गुल्म-कफरोगहरः स्मृतः । चिकित्सितेषु वक्ष्यन्तेऽरिष्टा रोगहराः पृथक् । अरिष्टासवसीधूनां गुणान् कर्म्माणि चादिशेत् । बुद्धा यथास्वं संस्कार-मवेक्ष्य कुशलो भिषक् । इति ।

दीपनमित्यादि । सौवीरं काञ्जिकं शूकक्रुतं तुषोदकं सतुषयवकृतं काञ्जिकम् । सुश्रुते च—ग्रहण्यर्शोविकारघ्नं भेदि सौवीरकं तथा । तुषाम्बु दीपनं हृद्यं हृत्पाण्डुक्रिमिरोगनुत् । इति ।

मित्यादि वक्ष्यमाणं, तद्रूप्यद्राक्षेक्षुरसाभ्यां चिकित्साभ्यां कृत आसवो ज्ञेयः । मध्विति मधु-प्रधान आसवः । सुरा समण्डेति यवतण्डुलकृता कोहला, विष्टभ्येति विष्टभ्य, मधूलको

दाहज्वरापहं स्पर्शात् पानात्तु वातकफापहम् ।
विबन्धघ्नमवस्रंसि दीपनञ्चाम्लकाञ्जिकम् ॥
प्रायशोऽभिनवं मद्यं गुरु दोषसमीरणम् ।
स्रोतसां शोधनं जीर्णं दीपनं लघु रोचनम् ॥
हर्षणं प्रीणनं वर्ण्यं भयशोकश्रमापहम् ।
प्रागल्भ्यवीर्य्यप्रतिभा-तुष्टिपुष्टिबलप्रदम् ॥

दाहेत्यादि । अम्लकाञ्जिकं धान्याम्लं धान्यकृतं भक्तकाञ्जिकञ्च दाहादिहरम् । सुश्रुते च धान्याम्लं धान्ययोनित्वाद् दीपनं दाहनाशनम् । स्पर्शात् पानात् तु पवन-कफतृष्णाहरं लघु । तैक्ष्ण्याच्च निहरेदाशु कफं गण्डूष-धारणात् ॥ मुखवैरस्यदौर्गन्ध्य-मलशोषक्लमापहम् । दीपनं जरणं भेदि हित-मास्थापनेषु च । समुद्रमाश्रितानाञ्च जनानां सात्म्यमुच्यते ॥ इति । इह शुक्तादिगुणा उन्नेयाः । तद् यथा सुश्रुते—रक्तपित्तकरं शुक्तं छेदि भुक्त-विपाचनम् । वैस्वर्य्यं जरणं श्लेष्म-पाण्डुक्रिमिहरं लघु ॥ तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च । तद्वत् तदासुतं सर्व्वं रोचनञ्च विशेषतः ॥ गौडानि रसशुक्तानि मधुशुक्तानि यानि च । यथापूर्व्वं गुरुतराण्यभिष्यन्दकराणि च ॥ इति ।

अथेदानीं मद्यानां नवत्वाद्यवस्थायां गुणविशेषमाह—प्रायश इत्यादि । दोषसमीरणं दोषत्रयप्रकोपणम् । सुश्रुते च—नवं मद्यमभिष्यन्दि गुरु वातादि-कोपनम् । अनिष्टगन्धं विरसमहृद्यञ्च विदाहि च ॥ जीर्णमद्यगुणमाह—स्रोतसा-मित्यादि । जीर्णं पुराणं मद्यं स्रोतसां शोधनं स्फुटीकरणमित्यादिगुणम् । सुश्रुते च—सुगन्धि दीपनं हृद्यं रोचिष्णु क्रिमिनाशनम् । स्फुटस्रोतस्करं जीर्णं लघुवातकफापहम् ॥ इति । प्रागल्भ्येत्यादि । सात्त्विकैर्मानवैर्युक्त्या मात्रया विधिवत् सभक्तादिकं पीतं तज्जीर्णं मद्यं प्रागल्भ्यादिमदं स्याद् यथा चामृतं तथा स्याच्च । तदुक्तं सुश्रुते—सात्त्विके शौचदाक्षिण्य-हर्षमण्डनलालसः । गीताध्ययनसौभाग्य-सुरतोत्साहकृन्मदः । राजसे दुःखशीलत्वमात्मत्यागंससाह-सम् । कलहं सानुबन्धन्तु करोति पुरुषे मदः ॥ अशौचनिद्रामात्सर्य्यागम्यागमन-लोलताः । असत्यभाषणञ्चापि कुर्य्याद्धि तामसे मदः ॥ तस्यानेकप्रकारस्य

सात्त्विकैर्विधिवद् युक्त्या पीतं स्यादमृतं यथा।
वर्गोऽयं सप्तमो मद्यमधिकृत्य प्रकीर्त्तितः॥ ३४॥

इति मद्यवर्गः। ७।

जलमेकविधं सर्व्वं पतत्यैन्द्रं नभस्तलात्।
तत् पतत् पतितञ्चैव देशकालावपेक्षते॥

मद्यस्य रसवीर्य्यतः। सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकाशित्वाच्च वह्निना। समेत्य हृदयं प्राप्य धमनीरूर्द्ध्वमागतम्। विक्षोभ्येन्द्रियचेतांसि वीर्य्यं मदयतेऽचिरात्। चिरेण श्लैष्मिके पुंसि पानतो जायते मदः। अचिराद् वातिके दृष्टः पैत्तिके शीघ्रमेव तु। सान्द्रं विदाहि दुर्गन्धि विरसं क्रिमिलं गुरु। अहृद्यं तरुणं तीक्ष्णमुष्णं दुर्भाजनस्थितम्। अल्पौषधं पर्य्युषितमत्यच्छं पिच्छिलञ्च यत्। तद् वर्ज्ज्यं सर्व्वदा मद्यं किञ्चिच्छेषन्तु यद्भवेत्। तत्र यत् स्तोकसम्भारं तरुणं पिच्छिलं गुरु। कफप्रकोपि तन्मद्यं दुर्ज्जरञ्च विशेषतः। पित्तप्रकोपि बहुलं तीक्ष्णमुष्णं विदाहि च। अहृद्यं फेनिलं पूति क्रिमिलं विरसं गुरु। तथा पर्य्युषितञ्चापि विद्यादनिलकोपनम्। सर्व्वदोषैरुपेतन्तु सर्व्वदोषप्रकोपणम्। चिरस्थितं जातरसं दीपनं कफवातजित्। रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम्। इति। वर्गं समापयति—वर्गोऽयमित्यादि। मद्यमधिकृत्यारिष्टादीनामपि गुणाश्रय एष सप्तमो वर्गः प्रकीर्त्तितः॥ ३४॥

इति सप्तमो मद्यवर्गः। ७।

गङ्गाधरः—पानविशेषत्वादम्बुवर्ग उच्यते—जलमित्यादि। सर्व्वं जलमेकविधं धारकारकहैमनतौषारभेदेन चतुर्व्विधमपि ऐन्द्रत्वसामान्यादेकविधं नभस्तलान्नभस उपरिष्टात् सोममण्डलात् पतति। तदैन्द्रं जलं पतत् पतितञ्च

गोधूमभेदः, तत्कृतं मद्यं मधूलकम्; अन्ये तु मेदकमाहुः। दीपनमित्यादि—सौवीरतुषोदक-गुणः; अम्लकाञ्जिकमिति काञ्जिकमेवाम्लगुणम्॥ ३४॥ इति मद्यवर्गः। ७।

सम्प्रति पानप्रधानस्य जलस्य गुणमाह—जलमित्यादि। सर्वमिति सुश्रुतप्रतिपादित-धारकारहैमतौषारमपि, एकविधमिति "शिवाः स्वस्वापः" इत्यादिनोक्तगुणम्, तथा 'शीतं शुचि' इत्यादिवक्ष्यमाणगुणम्, ऐन्द्रमिति प्राप्यदशवशोऽनेकत्वं दर्शितम्; एकविधत्वेऽपि तस्य भेदमाह—तत् पतदित्यादि। पतद्देशमाकाशगतरूक्षरूपं, कालञ्च शीतोष्णादिरूपं, तथा पतितञ्च

खात् पतत् सोमवाय्वर्कैः स्पृष्टं कालानुवर्त्तिभिः ।
शीतोष्णस्निग्धरूक्षाद्यैर्यथासन्नं महीगुणैः ॥
शीतं शुचि शिवं मृष्टं विमलं लघु षड्गुणम् ।
प्रकृत्या दिव्यमुदकं भ्रष्टं पात्रमपेक्षते ॥

देशकालावपेक्षते । तत्र पतत् तु यथा—खादित्यादि । दिव्यं द्युलोकीयम् उदकं प्रकृत्या शीतादिषड्गुणं खात् सोममण्डलात् पतदेव तत्रैवान्तरीक्षे सोमवाय्वर्कैः कालानुवर्त्तिभिः शीताद्यृतुदिनरात्र्यनुवर्त्तिभिः गुणविशेषं दधद्भिः स्पृष्टं सत् भ्रष्टं यथासन्नं पात्रं यत्र देशे पतितं स्यात् तद्देशं भूमिगुणैः शीतोष्णस्निग्धरूक्षाद्यैरपेक्षते । जलन्तु खलु शीतं शुचि मृष्टं शुद्धं विमलं लघु च इति षड्गुणं स्वभावात् । ततः खात् पतनकाले यथाकालानुवर्त्ति सोमवाय्वर्कगुणस्पृष्टं गुणवैशेष्यमापद्य भूमौ पतितं तद्भूमिगुणमापद्यते ।

भूमिविशेषरूपं देशं, कालञ्च तथैवापेक्षते ; गुणदोषसम्बन्धे इति शेषः । पुनरेव देशकालसम्बन्धमाह—खादित्यादि । सौम्यत्वात् पृथिव्या अपि गगनागतधूलीरूपायास्तथा मेघसहचरितलूतादिविषादिरूपायाश्च ग्रहणं वक्तव्यम्, किंवा वायुग्रहणादेव वायुना नीयमानाया पृथिव्या ग्रहणम्, स्पृष्टं भवतीति शेषः । कालानुवर्त्तिभिरिति कालपराधीनैः कालप्रधानैरिति यावत्, एतेन कालकृतसोमादिसम्बन्धविशेषो जले विशेषं करोति, तेन न कालस्याकिञ्चित्करता ; पतितजलस्य देशकालसम्बन्धमाह—शीतोष्णेत्यादि । यथासन्नमिति यस्मिन् काले यस्यां मह्यां ये गुणाः शीताद्य उद्रिक्ता भवन्ति, तैः स्पृष्टं जलं भवति ; एतेन सुश्रुते प्रतिपादितगाङ्गसामुद्रभेदो गुणदोषसम्बन्धमात्रकृत एव दिव्यजलस्येति दर्शयति ; तेन यत् विषादिजुष्टं तत् सामुद्रसमानगुणत्वात् सामुद्रम्, यद् धूल्यादिना विषादिना च रहितं, तत् तद्गुणत्वाद् गाङ्गमित्युक्तं सुश्रुते ; आश्विने तु मासि दिव्यजलस्य धूलीविषादिसम्बन्धो न भवत्येव, कालमहिम्ना, भवन्नपि वा न जलं तथा दूषयति, अत उक्तं सुश्रुते—"सामुद्रं तन्न पातव्यं मासादाश्वयुजाद् विना" इति, अतः हारीतवचनात् कार्त्तिकाग्रहायणयोरप्यान्तरीक्षं जलं ग्राह्यमेव भवति, यदाह—"प्रवृत्तायां शरद्यस्मात् पश्चाद् जाते प्रवात्यपि । हेमन्ते वापि गृह्णीयात् तज्जलं मृन्मयैर्घटैः ॥" इति ; तेन "आश्वयुजाद् विना" इति वचनं आश्वयुजात् प्रभृति जलोपादेयत्वोपदर्शनार्थम्, न त्वाश्विन एवोपादेयत्वोपदर्शनपरम् ; अन्ये त्वाहुः—"आश्विन एव परमान्तरीक्षं ग्राह्यम्" इति ; जतूकर्णवचनन्तु—'वर्षासु चरन्ति घनैः सहोरगा विषाणि च कीटलूताश्च । तादृग्जुष्टमपेयं खजलमगस्त्योदयात् पूर्वम्" ।

दिव्यजलस्य प्राकृतगुणमाह—शीतमित्यादि । शिवमिति कल्याणकरत्वेन, मृष्टमिति वक्तप्रियत्वेन ; वक्ष्यमाणगुणविशेषहेतुमाह—भ्रष्टमित्यादि । पात्रमपेक्षते इति भूम्यादि-

श्वेते कषायं भवति पाण्डुरे स्यात् तु तिक्तकम्।
कपिले क्षारसंसृष्टमूषरे लवणान्वितम्॥
कटु पर्व्वतविस्रावे * मधुरं कृष्णमृत्तिके।
एतत् षाड़्गुण्यमाख्यातं महीस्थस्य जलस्य तु।
तथाऽव्यक्तरसं विद्यादैन्द्रं कारं हिमञ्च यत्॥ ३५॥
यदन्तरीक्षात् पततीन्द्रसृष्टञ्चोक्तैश्च पात्रैः परिगृह्यतेऽम्भः।
तदैन्द्रमित्येव वदन्ति धीरा नरेन्द्रपेयं सलिलप्रधानम्॥ ३६॥

तद् यथा। अत्र केचित् पठन्ति। श्वेत इत्यादि। श्वेते भूमिदेशे पतितं तज्जलं कषायं भवति, पाण्डुरे भूमिदेशे भ्रष्टं तिक्तकं भवति, कपिले भूमिदेशे भ्रष्टं क्षारसंसृष्टं भवति, ऊषरे भूमिदेशे भ्रष्टं लवणान्वितं भवति। पर्व्वतविस्रावे भूमिदेशे पतितं कटु भवति, कृष्णमृत्तिके देशे पतितं मधुरं भवति। इत्येतत् षाड़्गुण्यं महीस्थस्य जलस्य व्याख्यातम्। तत्रैन्द्रं जलं यद्देवो वर्षति, यत् कारं करकासम्भवं जलं, हिमञ्च यद् द्विविधं हैमं हिमानीसम्भवं, तौषारं तुषारसम्भवं तत्सर्व्वमव्यक्तरसं विद्यात्। तत्रैन्द्रं जलमाह—यदन्तरीक्षादित्यादि। इन्द्रसृष्टं यज्जलमन्तरीक्षात् पतति तदम्भ ऐन्द्रमित्येवं धीरा वदन्ति। तच्चोक्तैः पात्रैः परिगृह्यते तत् सलिलप्रधानं नरेन्द्रपेयमिति। अपरे चैतत् श्वेत इत्यादिकं न पठन्ति। न हि तत् सम्यगिति। सुश्रुते च—पानीयमान्तरीक्षमनिर्द्देश्यरसममृतं जीवनं तर्पणं धारणमाश्वासजननं श्रमघ्नं क्लमपिपासामदमूर्च्छातन्द्रानिद्रादाहप्रशमनमेकान्ततः पथ्यतमञ्च। तदेवावनीपतितमन्यतमं रसमुपलभते। स्थानविशेषान्नदीनदसरस्तड़ागवापीकूपचुण्डीप्रस्रवणोद्भिदविकिरकेदारपल्वलादिषु स्थानेष्ववस्थितमिति। तत्र लोहितकपिलपाण्डुपीतनीलशुक्लेष्ववनिप्रदेशेषु मधुराम्ललवणकटुतिक्तकषायाणि यथासंख्यमुदकानि सम्भवन्तीत्येके भाषन्ते। तत् तु न सम्यक्। तत्र पृथिव्यादीनामन्योन्यानुप्रवेशकृतः सलिलरसो भवत्युत्कर्षापकर्षेण। तत्र स्वगुणभूयिष्ठायां भूमावम्लं लवणञ्च, अम्बुगुणभूयिष्ठायां मधुरं, तेजोगुण-

पात्रविशेषसम्बन्धमपेक्ष्य गुणविशेषवद् भवति, एतच्च, यद्यपि 'देशकालावपेक्षते' इत्यनेन पूर्व्वम्

* विस्रावे इत्यत्र विस्तारे इति क्वचित् पाठः।

ईषत्कषायमधुरं सुसूक्ष्मविशदं लघु ॥
अरुक्षमनभिष्यन्दि सर्व्वं पानीयमुत्तमम् ।
गुर्व्वभिष्यन्दि पानीयं वार्षिकं मधुरं नवम् ॥
तनु लघ्वनभिष्यन्दि प्रायः शरदि वर्षति ।
तत् तु ये सुकुमाराः स्युः स्निग्धभूयिष्ठभोजनाः ।
तेषां भक्ष्ये च भोज्ये च लेह्ये पेये च शस्यते ॥

भूयिष्ठायां कटुकं तिक्तञ्च, वायुगुणभूयिष्ठायां कषायञ्च, आकाशगुणभूयिष्ठायामव्यक्तरसम्, अव्यक्तं ह्याकाशमित्यतस्तत्प्रधानमव्यक्तरसत्वात् तत्पेयमान्तरीक्षालाभे। तत्रान्तरीक्षं चतुर्व्विधं, तद्यथा—धारं कारं तौषारं हैमनमिति। तेषां धारं प्रधानं लघुत्वात्। तत् पुनर्द्विविधं गाङ्गं सामुद्रञ्चेति। तत्र गाङ्गमाश्वयुजे मासि प्रायो वर्षति। तयोर्द्वयोरपि परीक्षणं कुर्व्वीत। शाल्योदनपिण्डमक्कथितमविदग्धं रजतभाजनोपहितं वर्षति देवे बहिष्कुर्व्वीत, स यदि मुहूर्त्तस्थितस्तादृश एव भवति तदा गाङ्गं पततीत्यवगन्तव्यम्, वर्णान्यत्वे सिक्थक्लेदे च सामुद्रमिति विद्यात्, तन्नोपादेयम्। सामुद्रमप्याश्वयुजे मासि गृहीतं गाङ्गवद्भवति। गाङ्गं पुनः प्रधानं तदुपाददीताश्वयुजे मासि शुचिशुक्लविततपटैकदेशच्युतमथवा हर्म्म्यतलपरिभ्रष्टमन्यैर्वाशुचिभिर्भाजने गृहीतं सौवर्णे राजते मृन्मये वा पात्रे निदध्यात् तत् सर्व्वकालमुपयुञ्जीत तस्यालाभे भौमं, तच्चाकाशगुणबहुलं; तत् पुनः सप्तविधं, तद्यथा—कौपं नादेयं सारसं ताड़ागं प्रास्रवणमौद्भिदं चौण्ड्यमिति। तत्र वर्षास्वान्तरीक्षमौद्भिदं वा सेवेत महागुणत्वात्, शरदि सर्व्वं प्रसन्नत्वात्, हेमन्ते सारसं ताड़ागं वा, वसन्ते कौपं प्रास्रवणं वा ग्रीष्मेष्वेवं, प्रावृषि चौण्ड्यमनवमनभिवृष्टं संस्कृतं वा सर्व्वञ्चेति॥ २५।३६॥

गङ्गाधरः—अथोत्तमजलमाह ईषदित्यादि। ईषत्कषायमधुरादिकं सर्व्वं भौममैन्द्रञ्च पानीयमुत्तमं भवति। सुसूक्ष्मं सुतनुकम्। गुर्व्वित्यादि। वार्षिकं वर्षाकाले सर्व्वं पानीयमभिष्यन्दि च गुरु च। शरदि तु प्रायस्तनु लघ्वनभिष्यन्दि पानीयं वर्षति। तत् तु शरदि वृष्टं पानीयं ये सुकुमारादयस्तेषां

मुक्तोक्तम्, तथापि कालापेक्षया देशविशेषस्य प्रकर्षेण गुणविशेषे हेतुताप्रदर्शनार्थं पुनरुक्तम्। केचित् तु "श्वेते कषायं भवति" इत्यादिग्रन्थं पठन्ति, स तु नातिप्रसिद्धः॥ ३५—३७॥

हेमन्ते सलिलं स्निग्धं वृष्यं बलहितं गुरु ।
किञ्चित् ततो लघुतरं शिशिरे कफवातजित् ॥
कषायमधुरं रुक्षं विद्याद् वासन्तिकं जलम् ।
ग्रैष्मिकन्त्वनभिष्यन्दि जलमित्येव निश्चयः ॥
विभ्रान्तेष्वृतुकालेषु यत् प्रयच्छन्ति तोयदाः ।
सलिलं तत् तु दोषाय युज्यते नात्र संशयः ॥
राजभी राजमात्रैर्वा सुकुमारैश्च मानवैः ।
सुगृहीताः शरद्यापः प्रयोक्तव्या विशेषतः ॥
ऋतावृताविहाख्याताः सर्व्व एवाम्भसां गुणाः ॥ ३७ ॥
नद्यः पाषाणविच्छिन्न-विक्षुब्धविमलोदकाः ।
हिमवत्प्रभवाः पथ्याः पुण्या देवर्षिसेविताः ।

भक्ष्यादौ शस्यते। हेमन्त इत्यादि। हेमन्ते सर्व्वं सलिलं स्निग्धादिगुणम्। शिशिरे ततः किञ्चिल्लघुतरं सर्व्व सलिलम्। वासन्तिकं जलं सर्व्वं कषाय-मधुरादिगुणं विद्यात्। ग्रैष्मिकं सर्व्व जलमनभिष्यन्दीत्येव निश्चयः। विभ्रान्तेष्वित्यादि। षट्स्वृतुषु कालेषु विभ्रान्तेषु विपरीतलक्षणेषु तोयदा यत् सलिलं प्रयच्छन्ति वर्षन्ति, तत् तु सलिलं त्रिदोषाय नानादोषाय च युज्यते तत्र न संशयः। राजभिरित्यादि। राजादिभिः शरदि गृहीतास्तान्त-रीक्षा आपो विशेषतः सर्व्वेष्वृतुषु प्रयोक्तव्याः। अताहृतौ चाम्भसां सर्व्वे एव गुणा इहाख्याताः। इति ॥ ३७ ॥

गङ्गाधरः—तदलाभे तैरपरैश्च यत् तोयं प्रयोक्तव्यं तदर्थमाह—नद्य इत्यादि। पाषाणविच्छिन्नं स्रोतोवेगेन चलज्जलं यासां नदीनां गर्भस्थैः पाषाणैर्विच्छिद्यते च क्षुभ्यते चोत्प्लुत्योत्प्लुत्य गच्छति विमलञ्च ताः पाषाणविच्छिन्नविक्षुब्धविमलोदका नद्यः। हिमवत्प्रभवाश्च या गङ्गा-

चक्रपाणिः—आधारविशेषे गुणविशेषमाह—नद्य इत्यादि। पाषाणैर्विच्छिन्नं विक्षुब्धम् अभिहतमोदकं यासां तास्तथा, एतेन, आवश्यकाप्रभवा एव हिमालये नद्यः पथ्या उक्ता भवन्ति,

नद्यः पाषाणसिकता-वाहिन्यो विमलोदकाः ॥
मलयप्रभवा याश्च जलं तास्वमृतोपमम् ।
पश्चिमाभिमुखा याश्च पथ्यास्ता निर्म्मलोदकाः ॥
प्रायो मृदुवहा गुर्व्वी याश्च पूर्व्वसमुद्रगाः ।
पारिपात्रभवा याश्च विन्ध्यसह्यभवाश्च याः ।
शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च ॥

यमुनादयो नद्यः । ता देवर्षिसेविताः पुण्याः पथ्यास्तासां जलं पथ्यम् । याश्च हिमवत्प्रभवा नद्यो न पाषाणविच्छिन्नविक्षुब्धविमलोदकास्ता हृद्रोगादीन जनयन्तीत्यभिप्रायेण सुश्रुत उवाच—हिमवत्प्रभवा हृद्रोगश्वयथुशिरोरोग-श्लीपदगलगण्डान जनयन्ति इति न विरोधः । पुनर्नद्य इत्यादि । पाषाण-सिकतावाहिन्यो नद्यो विमलोदका निर्दोषा भवन्ति । मलयेत्यादि । मलय-प्रभवा याश्च नद्यः पाषाणसिकतावाहिन्यो विमलोदकास्तासु जलममृतोपमं, तदन्यास्तु या मलयप्रभवास्ताः क्रिमीन जनयन्तीत्यभिप्रायेण सुश्रुत उवाच—मलयप्रभवाः क्रिमीन जनयन्तीति । तत्रासामपवादश्चोवाच—नद्यः शीघ्रवहा लघ्व्यः प्रोक्ता याश्चामलोदकाः । इति । पश्चिमेत्यादि । या नद्यः पूर्व्वस्या दिशः पश्चिमां गच्छन्ति ताः पश्चिमाभिमुखाः पथ्याः, यतो निर्म्मलोदकाः । शेषा-स्त्वपथ्याः । सुश्रुते च—तत्र नद्यः पश्चिमाभिमुखाः पथ्या लघूदकत्वात्, पूर्व्वाभि-मुखास्तु न प्रशस्यन्ते गुरूदकत्वात् । दक्षिणाभिमुखा नातिदोषलाः साधारणत्वात् इति । मृदुवहा नद्यस्तु गुर्व्व्य इत्यनेन शीघ्रवहा लघ्व्य इत्यर्थादापद्यते । याश्च पूर्व्वसमुद्रगा नद्यस्ताश्च गुर्व्व्य इत्यर्थादापद्यते । दक्षिणाभिमुखा उत्तराभिमुखाश्च नद्यः साधारणत्वान्नातिदोषलाः इति । पारिपात्रेत्यादि । पारिपात्रपर्व्वतप्रभवा या नद्यः पूर्व्वसमुद्रगा याश्च विन्ध्यपर्व्वतभवाः सह्यपर्व्वतप्रभवा नद्यस्ताः शिरोरोगादीनां हेतुरिति । याः

मोपत्यकाप्रभवाः ; यतः, अधित्यकाप्रभवास्त्वेव पाषाणविच्छिन्नत्वादि, अतः, सुश्रुते यदुक्तम्—"हिमवत्प्रभवा हृद्रोगादीन् जनयन्ति," तदुपत्यकाप्रभवाभिप्रायेणेति न विरोधः ; यत् तु, अन्य-त्रोक्तं—"मलयप्रभवाः क्रिमीन् जनयन्ति" तदपाषाणसिकतावाहिनद्यभिप्रायेण, इह "पाषाण-सिकतावाहिनदीष्वमृतोपमम्" इति न विरोधः ; यत् तु, पारिपात्रभवाणां शिरोरोगादिकर्तृत्वम्, तत् पारिपात्रदरीभवनदीजलाभिप्रायेण, सुश्रुते तु पारिपात्रतडागभवनदीजलाभिप्रायेणोक्तम्—

बहुधा * कीटसर्पाखु-मलसंदूषितोदकाः।
वर्षाजलवहा नद्यः सर्व्वदोषसमीरणाः॥ ३८॥
वापीकूपतड़ागोत्स-सरःप्रस्रवणादिषु।
आनूपधन्वशैलानां गुणदोषैर्विभावयेत्॥

पारिपात्रभवा न पूर्व्वसमुद्रगास्ताः पथ्या बलारोग्यकार्य्यं इत्युक्तं सुश्रुते— विन्ध्यभवाश्च सर्व्वा नद्यः कुष्ठं पाण्डुरोगञ्च जनयन्ति, सह्यभवास्तु कुष्ठं जनयन्ति, महेन्द्रप्रभवाः श्लीपदोदराणि जनयन्तीति प्रायिकत्वाभिप्रायेण सुश्रुतेनोक्तम्। बहुधेत्यादि। बहुधा कीटादिदूषितोदका नद्यस्तथा वर्षाकाले जलवहा नद्यः सर्व्वदोषसमीरणाः॥ ३८॥

गङ्गाधरः—वापीत्यादि। वापी दीर्घिका पुष्करिणी च। कूपः प्रसिद्धः। तड़ागस्तटादागच्छति पर्व्वतव्यतिरिक्ततटादिस्थलप्रभवः सर्व्वो जलाशयः। स पुनरुच्चदेशात् पतज्जलवेगेन जातः। सरो देवखातम्। प्रस्रवणं निर्झरः। आदिपदेन उद्भिद्चुण्डविकिरकेदारनदीनदादीनां यज्जलम्। तथानूपधन्वदेशचन्द्रकान्तादिमणिशैलानां जलाशयेषु यज्जलं तद्गुणदोषैस्तत्तद्देशस्य गुणदोषैर्विभावयेत्। सुश्रुते चोक्तम्—वातश्लेष्महरं वाप्यं सक्षारं कटु

"पारिपात्रभवाः पथ्याः" इति; तदुक्तम् विश्वामित्रेण—"तड़ागजं दरीजञ्च तड़ागाद् यत् सरिज्जलम्। बलारोग्यकरं तत् स्यात् दरीजं दोषलं मतम्"॥ प्रायोग्रहणात् "पूर्व्वसमुद्रगाः" इति, पूर्व्वसमुद्रगमनेऽपि गाङ्गं पथ्यं भवति, किंवा, यथोक्तलक्षणहिमालयभवत्वादेव गाङ्गं पथ्यम्; पारिपात्रादयः पर्व्वताः स्वनामप्रसिद्धाः। वर्षासु जलं वहन्तीति वर्षाजलवहाः, यदुक्तमग्राधिकारे— "वर्षानादेयमुदकानाम्" इति, तस्येवापथ्यत्वे उपपत्तिवर्णनमिति न पौनरुक्त्यम्। प्रस्रवणादिष्विति जलमिति शेषः, वाप्यादयोऽनूपदेशधन्वदेशहिमालयादिपर्व्वतादिषु भवन्त्यतश्चानूपादिजलगुणैरेव तद्गुणनिर्देशः कर्त्तव्यः। पश्चिमाभिमुखनदीजलपूर्व्वाभिमुखनदीजलानूपजलधन्वजलपर्व्वतजलगुणाश्चोक्ता एव, तेन, तद् गुणातिदेशो वाप्यादिषु बोद्धव्यः, उक्तञ्च हारीतेन—"आनूपदेशे यत् वारि गुरु तत् श्लेष्मवर्द्धनम्। विपरीतमतो मुख्यं आङ्गलं लघु चोच्यते॥" सुश्रुतेऽपि वाप्यादीनां पृथगेवोक्ता गुणाः। स चेह कूपादीनां संस्कारादिः प्रयत्नकृतो ग्रन्थविस्तरभयान्नोक्त एवेति मन्तव्यम्। वापी इष्टकादिबद्धतीर्था दीर्घिका, कूपः प्रसिद्धः, तटात् आगतो गर्त्तिर्यस्य स तड़ागः, स पुनरुच्चदेशादागच्छज्जलबन्धनाद् भवति, अन्ये तु पुष्करिणीं तड़ागम् आहुः; उत्सा निम्नाद्गलिज्जलस्थानम्; सरो दिव्यखातं पुरुषव्यापारं विना, तत् पुनः पद्मादि;

* बहुधेत्यत्र वसुधेति चक्रोक्तः पाठः।

पिच्छिलं क्रिमिलं क्लिन्नं पर्णशैवालकर्द्दमैः।
विवर्णं विरसं सान्द्रं दुर्गन्धि न हितं जलम्॥

पित्तलम्। सक्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु। ताड़ागं वातलं स्वादु कषायं कटुपाकि च। तृष्णाघ्नं सारसं बल्यं कषायं मधुरं लघु। कफघ्नं दीपनं हृद्यं लघु प्रस्रवणोद्भवम्। मधुरं पित्तशमनमविदाह्यौद्भिदं स्मृतम्। चौण्ड्यमग्निकरं रूक्षं मधुरं कफकृन्न च। वैकिरं कटु सक्षारं श्लेष्मघ्नं लघु दीपनम्। कैदारं मधुरं प्रोक्तं विपाके गुरु दोषलम्। तद्वत् पाल्वलमुद्दिष्टं विशेषात् दोषलन्तु तत्। नादेयं वातलं रूक्षं दीपनं लघु लेखनम्। नदेऽभिष्यन्दि मधुरं सान्द्रं गुरु कफावहम्। अनेकदोषमानूपं वार्य्यभिष्यन्दि गर्हितम्। एभिर्दोषैरसंयुक्तं निरवद्यन्तु जाङ्गलम्। पाके विदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्द्धनम्। दीपनं स्वादु शीतञ्च तोयं साधारणं लघु। रक्षोघ्नं शीतलं ह्लादि ज्वरदाहविषापहम्। चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम्। मूर्च्छापित्तोष्ण्यदाहेषु विषे रक्ते मदात्यये। भ्रम-क्लमपरीतेषु तमके वमथौ तथा। ऊर्द्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते। पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे। आध्माते स्तिमिते कोष्ठे सद्यःशुद्धे नवज्वरे। हिक्कायां स्नेहपीते च शीताम्बु परिवर्ज्जयेत्। कफमेदोऽनिलामघ्नं दीपनं वस्तिशोधनम्। श्वासकासज्वरहरं पथ्यमुष्णोदकं सदा। यत् क्वाथ्यमानं निर्व्वेगं निष्फेनं निर्म्मलं लघु। चतुर्भागावशेषन्तु तत् तोयं गुणवत् स्मृतम्। न च पर्य्युषितं देयं कदाचित् वारि जानता। अम्लीभूतं कफोत्क्लेशि न हितं तत् पिपासवे। मद्यपानात् समुद्भूते रोगे पित्तोत्थिते तथा। सन्निपातसमुत्थे च शृतशीतं प्रशस्यते। शृतशीतं जलं शस्तं तृष्णार्च्छर्द्दिभ्रमेषु च। अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये। मन्दाग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा। व्रणे च मधुमेहे च पानीयं मन्दमाचरेत्। इति।

पिच्छिलमित्यादि। क्रिमिलं कीटयुक्तं जलं, क्लिन्नं कर्द्दमादिक्लेदेन क्लेदयुक्तम्। इत्यादिदोषवत् जलं न हितं भवति। सुश्रुते च—कीटमूत्र-पुरीषाण्ड-शवकोथप्रदूषितम्। तृणपर्णोत्करयुतं कलुषं विषसंयुतम्। योऽवगाहेत

प्रस्रवणो निर्झरः। अन्ये तु ह्रदधाराजलानीति पठन्ति, तत्र ह्रदो नद्यांस्वजलप्रवेशो गम्भीरो जलाशयः; धारा तु पर्व्वतादेव जलधारारूपा पतन्ती; आदिग्रहणात् केदारकुण्डादीनां ग्रहणम्।

विस्रं त्रिदोषं लवणमम्बु यद् वारुणालयम्।
इत्यम्बुवर्गः प्रोक्तोऽयमष्टमः सुविनिश्चितः॥ ३९॥

[ इत्यम्बुवर्गः। ८। ]

वर्षासु पिबेद्वापि नवं जलम्। स बाह्याभ्यन्तरान् रोगान् प्राप्नुयात् क्षिप्रमेव तु। इति। विस्रमित्यादि। वारुणालयं सामुद्रं यत् तोयं तच्च विस्रं त्रिदोषं लवणञ्च न हितमिति। सुश्रुते च—सामुद्रमुदकं विस्रं लवणं सर्व्वदोषकृत्। इति। अत्र जलानां व्यापत्सम्पच्चानुक्ताप्युन्नेया। तद् यथा—सुश्रुते—तत्र यच्छैवालपङ्कहटतृणपद्मपत्रप्रभृतिभिरवच्छन्नं शशिसूर्य्यकिरणानिलैर्नाभिजुष्टम् गन्धवर्णरसोपसृष्टञ्च तद्व्यापन्नमिति विद्यात्। तस्य स्पर्शरूपरसगन्धवीर्य्यविपाकदोषाः षट् संभवन्ति। तत्र खरता पैच्छिल्यमौष्ण्यं दन्तग्राहिता च स्पर्शदोषाः। पङ्कसिकताशैवलबहुवर्णता रूपदोषाः। व्यक्तरसता रसदोषः। अनिष्टगन्धता गन्धदोषः। यदुपयुक्तं तृष्णागौरवशूलकफप्रसेकानापादयति स वीर्य्यदोषः। यदुपयुक्तं चिराद्विपच्यते विष्टभ्नाति वा स विपाकदोषः। इति। न एते आन्तरीक्षे न सन्ति। व्यापन्नानामग्निक्वथनं सूर्य्यातपतापनं तप्तायःपिण्डसिकतालोष्ट्राणां वा निर्व्वापणं प्रसादनञ्च कर्त्तव्यम्। नागचम्पकोत्पलपाटलापुष्पप्रभृतिभिश्चाधिवासनमिति। तत्र सप्त कलुषस्य प्रसादनानि भवन्ति। तद् यथा—कतकगोमेदकबिसग्रन्थिशैवालमूलवस्त्राणि मुक्तामणिश्चेति। पञ्च निक्षेपणानि भवन्ति। तद् यथा—फलकं त्र्यष्टकं मुञ्जवलय उदकमञ्चिका शिक्यञ्चेति। सप्त शीतीकरणानि भवन्ति। प्रवातस्थापनमुदकप्रक्षेपणं यष्टिकाभ्रामणं व्यजनं वस्त्रोद्धरणं बालुकाप्रक्षेपणं शिक्यावलम्बनञ्चेति। सौवर्णे राजते ताम्रे कांस्ये मणिमये तथा। पुष्पावतंसं भौमे वा सुगन्धि सलिलं पिबेत्। व्यापन्नं वर्ज्जयेन्नित्यं तोयं यच्चाप्यनार्त्तवम्। दोषसञ्जननं ह्येतन्नाददीताहितन्तु तत्। व्यापन्नं सलिलं यस्तु पिबतीहाप्रसाधितम्। श्वयथुं पाण्डुरोगञ्च त्वग्दोषमविपाकताम्। श्वासकासप्रतिश्याय-शूलगुल्मोदराणि च। अन्यान् वा विषमान् रोगान् प्राप्नुयात् क्षिप्रमेव च। दिवार्ककिरणैर्जुष्टं निशायामिन्दुरश्मिभिः। अरूक्षमनभिष्यन्दि तत् तुल्यं गगनाम्बुना। गगनाम्बु त्रिदोषघ्नं गृहीतं यत्

छिन्नं पर्णादिभिर्युक्तं सदित्यर्थः, वरुणालये समुद्रे, विस्रमामगन्धि। सुविनिश्चित इति सर्व्वजलगुणकथनात्॥ १८।३९॥ [ इत्यम्बुवर्गः। ८। ]

स्वादु शीतं मृदु स्निग्धं बहलं श्लक्ष्णपिच्छिलम्।
गुरु मन्दं प्रसन्नञ्च गव्यं दशगुणं पयः॥

सुभाजने। बल्यं रसायनं मेध्यं पात्रापेक्षि ततः परम्॥ तत्र सर्व्वेषां भौमानां ग्रहणं प्रत्यूषसि, तत्र ह्यमलत्वं शैत्यञ्चाधिकं भवति ; स एव चापां परो गुण इति। निर्गन्धमव्यक्तरसं तृष्णाघ्नं शुचि शीतलम्। अच्छं लघु च हृद्यञ्च तोयं गुणवदुच्यते॥ इति। तथा। कालेन पक्वं निर्दोषमगस्त्येनाविषीकृतम्। हंसोदकमिति ख्यातं शारदं विमलं जलम्॥ जतूकर्णे च। वर्षासु चरन्ति घनैः सहोरगा वियति कीटलूताश्च। तद्विषजुष्टमपेयं खजलमगस्त्योदयात् पूर्व्वम्॥ शुक्लागस्त्यत्रयोदश्यां भाद्रस्यान्ते शरत्यथ। अर्घ्यं दत्वा त्वगस्त्याय गृह्णीयाद् गगनोदकम्॥ इति। अत्र पानीयसाधर्म्याज्जलत्वाच्च नारिकेलादि-जलगुणा उन्नेयाः। तद् यथा सुश्रुते—स्निग्धं स्वादु हिमं हृद्यं दीपनं वस्ति-शोधनम्। वृष्यं पित्तपिपासाघ्नं नारिकेलोदकं गुरु॥ इति। अन्यत्र च। नारिकेलोदकं वृष्यं स्वादु स्निग्धं हिमं गुरु। हृद्यं पित्तपिपासाघ्नं दीपनं वस्तिशोधनम्। नारिकेलजलं जीर्णं विष्टम्भि गुरु पित्तकृत्। बालक्रमुक-तोयञ्च तृष्णापित्तास्रजिद् गुरु। तालाम्बु पित्तजिच्छुक्र-स्तन्यवृद्धिकरं गुरु॥ इति। वर्गं समापयति—इत्यम्बुवर्ग इत्यादि॥ ३९॥

इत्यष्टमोऽम्बुवर्गः। ८।

गङ्गाधरः—अथ द्रवत्वसामान्याज्जीवनीयत्वादिसाधर्म्याच्च जलानन्तरं तत्रोद्देशक्रमिकत्वाच्च क्षीरवर्गमारभते। तत्र पूर्व्वाध्याये तूक्तम् ; अथ क्षीराणि वक्ष्यन्ते कर्म्म चैषां गुणाश्च ये। अवीक्षीरमजाक्षीरं गोक्षीरं माहिषञ्च यत्। उष्ट्रीणामथ नागीनां वड़वायास्तथा स्त्रियाः। प्रायशो मधुरं स्निग्धं शीतं स्तन्यं पयो मतम्। प्रीणनं बृंहणं वृष्यं मेध्यं बल्यं मनस्करम्। जीवनीयं श्रमहरं श्वासकासनिवर्हणम्। हन्ति शोणितपित्तञ्च सन्धानं विहतस्य च। सर्व्वप्राणिभृतां सात्म्यं शमनं शोधनं तथा। तृष्णाघ्नं दीपनीयञ्च श्रेष्ठं क्षीणक्षतेषु च। पाण्डुरोगेऽम्लपित्ते च शोषे गुल्मे तथोदरे। अतिसारे ज्वरे दाहे श्वयथौ च विशेषतः। योनिशुक्रप्रदोषेषु मूत्रेषु प्रदरेषु च। पुरीषे ग्रथिते पथ्यं वातपित्तविकारिणाम्। नस्यालेपावगाहेषु वमना-

चक्रपाणिः—जीवनीयसामान्याज्जलमनु क्षीरमुच्यते ; क्षीरजत्वाद् दध्यादय उच्यन्ते ; प्रसन्न-मिति निर्दोषम्, तन्निर्दोषता तु प्रसन्नत्वेन गुण इत्युच्यते, किंवा, गुणानामसंख्येयत्वेन प्रसन्नत्वं

तदेवंगुणमेवौजः सामान्यादभिवर्द्धयेत्।
प्रवरं जीवनीयानां क्षीरमुक्तं रसायनम्॥
महिषीणां गुरुतरं गव्याच्छीततरं पयः।
स्नेहान्यूनमनिद्राणामत्यग्निभ्यो हितञ्च तत्॥

स्थापनेषु च। विरेचने स्नेहने च पयः सर्व्वत्र युज्यते। यथाक्रमं क्षीरगुणानेकैकस्य पृथक् पृथक्। अन्नपानादिकेऽध्याये भूयो वक्ष्याम्यशेषतः॥ इति।

तदुद्दिष्टं खल्ववीक्षीरादिकं गुणतः कर्म्मतश्च पृथक् पृथग् वक्तुं प्राधान्यात् आदौ गोक्षीरमाह—स्वाद्वित्यादि। गव्यं पयः स्वादुत्वादिदशगुणं, कर्म्म चास्याह—तदेवमित्यादि। तत् दशगुण गव्य पय एवंगुणश्च स्वादुत्वादिदशगुणमोजश्च सामान्यात् गुणसाम्यादभिवर्द्धयेत्। जीवनीयानां मध्ये प्रवरं जीवनीयं क्षीरं पूर्व्वमुक्तं रसायनञ्च। इति। सुश्रुते च—गव्यमाजं तथा चौष्ट्रमाविकं माहिषञ्च यत्। अश्वायाश्चैव नार्य्याश्च करेणूनाञ्च यत् पयः। तत् त्वनेकौषधिरस-प्रसादं प्राणदं गुरु। मधुरं पिच्छिलं शीतं स्निग्धं शीतं सरं मृदु। सर्व्वप्राणभृतां तस्मात् सात्म्यं क्षीरमिहोच्यते। तत्र सर्व्वमेव क्षीरं प्राणिनाम् अप्रतिषिद्धं जातिसात्म्यात्। वातपित्तशोणितमानसविकारेष्वविरुद्धं जीर्णज्वर-कासश्वासशोषक्षयगुल्मोन्मादोदरमूर्च्छा-भ्रममददाहपिपासा-हृद्वस्ति-पाण्डुरोग-ग्रहणीदोषार्शः-शूलोदावर्त्तातिसारप्रवाहिकायोनिरोगगर्भस्रावरक्तपित्तश्रमक्लमहरं पाप्मापहं बल्यं वृष्यं वाजीकरणं रसायनं मेध्यं सन्धानमास्थापनं वयःस्थापनमायुष्यं जीवनं बृंहणं वमनविरेचनञ्च तुल्यगुणत्वाच्चौजसो वर्द्धनम् इति बालवृद्धक्षतक्षीणानां क्षुद्व्यवायव्यायामकर्षितानाञ्च पथ्यतमम्। गोक्षीरम् अनभिष्यन्दि स्निग्धं गुरु रसायनम्। रक्तपित्तहरं शीतं मधुरं रसपाकयोः। जीवनीयं, तथा वात-पित्तघ्नं परमं स्मृतम्॥ इति। यद्यपीह सर्व्वदुग्धकर्म्म ओजसो वर्द्धनमुक्तम्, अत एव गव्यस्यापि तद्वचनं न विरुद्धमिति माहिषादिष्वप्यनुक्तमपि वक्तव्यमिति। महिषीणामिति। महिषीणां पयो गव्यात् पयसः शीततरं गुरुतरञ्च स्नेहान्यूनञ्च तथा नष्टनिद्राणां हितं निद्राकरम्

गुर्व्वोक्तपठितमपि गुण एवेति ज्ञेयम्। एवंगुणमेवेति स्वाद्वादिदशगुणं; सामान्यादिति सामान्यत्वात्। महिषीक्षीरगुणे स्नेहोनमिति महिषीक्षीरं गव्यक्षीरात् स्नेहोनं, गौरवशैत्यान्यान्तु तदधिकमिति केचित् प्रपठते, तन्न, प्रत्यक्षमेव हि महिषीक्षीरादधिकमेव घृतं दृश्यते, तथा, अनूकर्णेऽप्युक्तम्,—"गुरु शीतं स्निग्धतरं माहिषमतिमधुरं बृंहणमामकम्" सुश्रुतेऽप्युक्तं "गव्यात्

रुक्षोष्णं क्षीरमुष्ट्रीणामीषत् सलवणं लघु ।
शस्तं वातकफानाह-क्रिमिशोफोदरार्शसाम् ॥
बल्यं स्थैर्य्यकरं सर्व्वमुष्णमेकशफं पयः ।
साम्लं सलवणं रुक्षं शाखावातहरं लघु ॥
छागं कषायमधुरं शीतं ग्राहि पयो लघु ।
रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् ॥

अत्यग्निभ्यश्च हितं तत् । सुश्रुते च—महाभिष्यन्दि मधुरं माहिषं वह्निनाशनम् । निद्राकरं शीततरं गव्यात् स्निग्धतरं गुरु ॥ इति । रुक्षोष्णमित्यादि । उष्ट्रीणां क्षीरं रुक्षोष्णमीषत्सलवणं मधुरं लघु च । वातकफादीनां शस्तम् । सुश्रुते च—रुक्षोष्णं लवणं किञ्चिदौष्ट्रं स्वादुरसं लघु । शोफगुल्मोदरार्शोघ्नं क्रिमिकुष्ठविषापहम् ॥ इति । बल्यमित्यादि । एकशफमेकशफानामश्वादीना-मेकखुराणां सर्व्वासां पय इति सर्व्वमिति विशेषणेन ख्यापितम् । यद्यप्युद्देशे वड़वाया इत्युक्तं तथापि च सामान्यात् गुणवचनं अधिकत्वदोषो न भवतीति । उष्णमिति गव्यादिक्षीरापेक्षया । साम्लं सलवणं मधुरमेव सामान्यवचनात् । रुक्षञ्च गव्यादिक्षीरापेक्षया न तु निःस्नेहम् । शाखावातहरं रक्तादिधातु-गतवातहरं, लघु गव्याद्यपेक्षया । इति । सुश्रुते—उष्णञ्चैकशफं बल्यं शाखावातहरं पयः । मधुराम्लरसं रुक्षं लवणानुरसं लघु ॥ इति । छाग-मित्यादि । छागं पयः कषायमधुरादिगुणम् । सुश्रुते च—गव्यतुल्यगुणन्त्वाजं विशेषाच्छोषिणां हितम् । दीपनं लघु संग्राहि श्वासकासास्रपित्तनुत् । अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् । नात्यम्बुपानात् व्यायामात्

स्निग्धतरम्" इति, तेन "स्नेहान्न्यूनम्" इति पाठः ; तेन, स्नेहादधिकमित्यर्थः, किंवा, 'स्नेहान्न्यूनम्' इति स्नेहपूर्णमित्यर्थः । उष्ट्रीक्षीरादीनां सलवणत्वादि मधुरानुरसत्वेन बोद्धव्यम्, मधुरस्तु रसः प्रधान एव, दीर्घञ्जीवितीये—"प्रायशो मधुरम्" इत्युक्तम्, न तु सर्व्वथा मधुरमेव । ऐकशफमिति वड़वायाः ; केचित् तु सर्व्वशब्देन खरवेगसरयोरपि क्षीरस्यायं गुण इत्यपि वदन्ति ; उष्णमिति क्षीरान्तरापेक्षया, तेन, सामान्यगुणे शीतत्वमुक्तमविरुद्धं भवति, यतः लघुत्वमात् तिक्तरसात् गुरुत्वपि कटुर्लघुरेवोच्यते मधुराद्यपेक्षया, एवं शीततमात् इतरक्षीरादुष्णमिति ; वड़वायाः क्षीरं शीतमेव मूत्राद्यपेक्षया भवति ; एवं रुक्षमित्येतदपि

हिक्काश्वासकरन्तूष्णं पित्तश्लेष्मलमाविकम्।
हस्तिनीनां पयो बल्यं गुरु स्थैर्य्यकरं परम् ॥
जीवनं वृंहणं सात्म्यं स्नेहनं मानुषं पयः।
नावनं रक्तपित्ते च तर्पणञ्चाक्षिशूलिनाम् ॥ ४० ॥

सर्व्वव्याधिहरं पयः ॥ इति। हिक्केत्यादि। आविकं मेषीदुग्धम्। सुश्रुते च—आविकं मधुरं स्निग्धं गुरु पित्तकफावहम्। पथ्यं केवलवातेषु कासे चानिलसम्भवे। इति। हस्तिनीनामित्यादि। हस्तिनीनां पयो बल्यादिगुणम्। सुश्रुते च—हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु। स्निग्धं स्थैर्य्यकरं शीतं चक्षुष्यं बलवर्द्धनम् ॥ इति। जीवनमित्यादि। मानुषं पयो जीवनादिगुणं रक्तपित्ते नावनं नस्यम्। अक्षिशूलिनां नेत्रे तर्पणम्। सुश्रुते—नार्य्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम्। नस्याऽश्च्योतनयोः पथ्यं जीवनं लघु दीपनम् ॥ इति। इत्यष्ट क्षीराण्युक्त्वा कालविशेषे गृहीतानां तेषां गुणानाह, सुश्रुते—प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम्। रात्रौ सोमगुणत्वाच्च व्यायामाभावत स्तथा। दिवाकराभितप्तानां व्यायामानिलसेवनात्। वातानुलोमि श्रान्तिघ्नं चक्षुष्यञ्चापराह्णिकम्। पयोऽभिष्यन्दि गुर्व्वामं प्रायशः परिकीर्त्तितम्। तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम्। वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम्। धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा। तदेवातिशृतं सर्व्व गुरु वृंहणमुच्यते। अनिष्टगन्धमम्लञ्च विवर्णं विरसञ्च यत्। वर्ज्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत्। इति। अन्यत्र च। गवां मत्स्यपसि क्षीरं गुरु विष्टम्भि दुर्ज्जरम्। तस्मादभ्युदिते सूर्य्ये यामं यामार्द्धमेव वा। समुत्तीर्य्य पयो ग्राह्यं तत् पथ्यं दीपनं लघु। विवत्सावालवत्सानां पयो दोषलमीरितम्। शस्तं वत्सैकवर्णाया धवलीकृष्णयोरपि। इक्ष्वाद्या माषपर्णाद्या ऊर्द्ध्वशृङ्गी च या भवेत्। तासां गवां हितं क्षीरं शृतं वाऽशृतमेव वा। क्षीरं पय्युषितं सर्व्वं गुरु विष्टम्भि दुर्ज्जरम्। प्रायोऽभिष्यन्दि गुर्व्वामं शृतोष्णं कफवातजित्। शृतशीतञ्च पित्तघ्नं धारोष्णममृतं पयः। इति ॥ ४० ॥

व्याख्येयम्। यद्यपि च हस्तिक्षीरादीनि शास्त्रे प्रयोगेषु नोक्तानि तथापि कथितगुणं बुद्धा तत्र तत्र प्रयोक्तव्यानि ॥ ४० ॥

रोचनं दीपनं वृष्यं स्नेहनं बलवर्द्धनम् ।
पाकेऽम्लमुष्णं वातघ्नं मङ्गल्यं वृंहणं दधि ॥
पीनसे चातिसारे च शीतके विषमज्वरे ।
अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते ॥

गङ्गाधरः—इत्यष्टक्षीरमुक्त्वा तद्विकारमाह—रोचनमित्यादि। सर्व्वेषां क्षीराणां सुजातं सर्व्वं दधि रोचनादिगुणम्। सत्यपि रुचिमत्त्वे पुरुषेभ्योऽभ्यवह्रियमाणं रोचयतीति रोचनमरुचौ च रोगे शस्यते। उष्णवीर्य्यत्वात् स्नेहनत्वाच्च वातघ्नं तस्मात् पीनसादौ शस्यते। सुश्रुते च—दधि तु मधुरमम्लमत्यम्लञ्चेति। तत् कषायानुरसं स्निग्धमुष्णं पीनसविषमज्वरातिसारारोचकमूत्रकृच्छ्रकार्श्यापहं वृष्यं प्राणकरं मङ्गल्यञ्च। महाभिष्यन्दि मधुरं कफमेदोविवर्द्धनम्। कफपित्तकृदम्लं स्यादत्यम्लं रक्तदूषणम्॥ स्निग्धं विपाके मधुरं दीपनं बलवर्द्धनम्। वातापहं पवित्रञ्च दधि गव्यं रुचिप्रदम्॥ दध्याजं रक्तपित्तघ्नं लघु वातक्षयापहम्। दुर्नामश्वासकासेषु हितमग्नेः प्रदीपनम्॥ विपाके मधुरं वृष्यं वातपित्तप्रसादनम्। बलासवर्द्धनं स्निग्धं विशेषाद् दधि माहिषम्॥ विपाके कटु सक्षारं गुरु भेद्यौष्ट्रिकं दधि। वातमर्शांसि कुष्ठानि क्रिमीन् हन्त्युदराणि च॥ कोपनं कफवातानां दुर्नाम्नाञ्चाविकं दधि। रसे पाके च मधुरमत्यभिष्यन्दि दोषलम्॥ दीपनीयमचक्षुष्यं वाड़वं दधि वातलम्। रूक्षमुष्णं कषायञ्च कफमूत्रापहञ्च तत्॥ स्निग्धं विपाके मधुरं बल्यं सन्तर्पणं गुरु। चक्षुष्यमग्र्यं दोषघ्नं दधि नार्य्या गुणोत्तरम्॥ लघु पाके बलासघ्नं वीर्य्योष्णं पक्तिनाशनम्। कषायानुरसं नाग्या दधि वर्च्चोविवर्द्धनम्॥ दधीन्युक्तानि यानीह गव्यादीनि पृथक् पृथक्। विज्ञेयमेषु सर्व्वेषु गव्यमेव गुणोत्तरम्॥ वातघ्नं कफकृत् स्निग्धं वृंहणं न च पित्तकृत्। कुर्य्याद् भक्ताभिलाषञ्च दधि यत् सुपरिस्रुतम्॥ शृतात् क्षीरात् तु यज्जातं गुणवद् दधि तत् स्मृतम्। वातपित्तहरं रुच्यं धात्वग्निबलवर्द्धनम्॥ इति।

चक्रपाणिः—दधिगुणमाह—रोचनमित्यादि। अत्र रोचनमित्युक्तेऽपि "अरुचौ" इति वचनमरुचिहरत्वेन, रोचनता तूपयोगकाल एव वास्तवरुचिकरत्वेनोक्ता। बृंहणमिति रोगादिकृशस्य बृंहणम्, कार्श्ये चेति सहजकार्श्ये शस्यते इति बोद्धव्यम्, तेन न पौनरुक्त्यम्। पीनसे चातुर्थिकेऽपि प्रभावाद्धितम्, किंवा, पीनसपाचकत्वात् सर्व्वत्र हितम्; यत्र—सुष्यशीत-

शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम्।
रक्तपित्तकफोत्थेषु विकारेष्वहितञ्च तत्॥
त्रिदोषं मन्दकं जातं वातघ्नं दधि शुक्रलम्।
सरः श्लेष्मानिलघ्नस्तु मस्तु स्रोतोविशोधनम्॥ ४१॥

शरदित्यादि। प्रायश इति गव्यस्य पित्तकरत्वाभावाच्छरद्ग्रीष्मयोर्न गर्हितत्वम्। वसन्ते तु वाड़वं दधि न गर्हितं कफहरत्वादिति। रक्तपित्तकफोत्थेषु विकारेषु तद् दधि न हितमिति। ततोऽर्थादापद्यते हिमशिशिरवर्षासु न दधि गर्हेत इति। सुश्रुते च—शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम्। हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते॥ इति। त्रिदोषमित्यादि। मन्दकमल्पजातं दधि त्रिदोषं मिलितत्रिदोषकरमिति। सुश्रुते च—विदाहि सृष्टविण्मूत्रं मन्दजातं त्रिदोषकृत्। इति। यदा क्षीरं विक्रियमाणं न सम्यगदधिभावं याति तदा मन्दकं जातमुच्यते। यदा तु सम्यग् दधिभावं गच्छति क्षीरं स्वरूपमुत्सृज्य मधुरमीषदम्लञ्च घनञ्च भवति तदा जातमुच्यते। तज्जातं दधि वातघ्नं शुक्रलं भवतीति। तस्य सारहीनक्षीरजातस्य दध्नस्तु गुण उक्तः सुश्रुते—दधि त्वसारं रूक्षञ्च ग्राहि विष्टम्भि वातलम्। दीपनीयं समधुरं सकषायं रुचिप्रदम्॥ इति। सर इत्यादि। प्रकरणाद् दध्न एव सरः श्लेष्मानिलघ्नो न तु क्षीरस्य. तथा दध्न एव मस्तु ततो निःसृतं जलवद् द्रवं स्रोतोविशोधनं भवति। उक्तञ्च सुश्रुते—दध्नः सरो गुरुर्वृष्यो विज्ञेयोऽनिलनाशनः। वह्निविधमनश्चापि कफशुक्रविवर्द्धनः॥ तृष्णाक्लमहरं मस्तु लघु स्रोतोविशोधनम्। अम्लं कषायं

कफत्वहितत्वादि दधिगुणपर्य्यालोचनयाऽनुपपद्यमानमिह दृश्यते, तत् प्रभावाद् बोद्धव्यम्; यत्र गुणान्तरादेवाम्लत्वोष्णत्वस्निग्धत्वालभ्यमानमपि वातघ्नत्वं पुनरुच्यते, तत् प्रकर्षार्थं, तथा, अम्लत्वादियुक्तस्यापि वातहन्तृताव्यभिचारदर्शनादिति बोद्धव्यम्; व्यभिचारोदाहरणानि च मन्दकमन्दजातमण्डादीन्यनुसर्त्तव्यानि; न्यायश्चायं सर्व्वोऽन्नपानगुणकथने यथासम्भवं वर्णनीयः; ग्रन्थप्रचुरतरताभीत्या सर्व्वं वस्तु वयं नोन्नाययामः। प्रायश इति वचनात् कालान्तरेऽपि गर्हितत्वं शरदादावपि प्रकृत्याभ्यासाद् गर्हितत्वं दर्शयति।

मन्दकं यदा क्षीरं विक्रियामापन्नं घनत्वं याति, तदा तन्मन्दकम्; जातं वातघ्नमिति यदा तु मन्दकावस्थामुत्सृज्य घनतया जातं सत् मधुरमीषदम्लञ्च भवति, तदा वातघ्नं विशेषेण भवतीत्यर्थः; पूर्व्वे तु दधिगुणाः सुजातस्य व्यक्ताम्लस्य बोद्धव्याः। शुक्रलः

शोफार्शोग्रहणीदोष-मूत्रग्रहोदरारुचौ ।
स्नेहव्यापदि पाण्डुत्वे तक्रं दद्याद् गरेषु च ॥ ४२ ॥
संग्राहि दीपनं हृद्यं नवनीतं नवोद्धृतम् ।
ग्रहण्यर्शोविकारघ्नमर्दितारुचिनाशनम् ॥

मधुरमवृष्यं कफवातनुत् ॥ प्रह्लादनं प्रीणनञ्च भिनत्त्याशु मलञ्च तत् । बलमावहते चापि भक्तच्छन्दं करोति च ॥ इति ॥ ४१ ॥

गङ्गाधरः—शोफेत्यादि । अथ दधिभवत्वेन तक्रं गुणकर्म्मभ्यामाह । शोफादिषु तक्रं दद्यात् तत्तद्धरत्वमेतेनापद्यते तक्रस्येति । सुश्रुते च—तक्रं मधुरमम्लं कषायानुरसमुष्णवीर्य्यं लघु रूक्षमग्निदीपनं गरशोफातिसारग्रहणीपाण्डुरोगार्शः-प्लीहगुल्मोदरारोचक-विषमज्वर-तृष्णाच्छर्द्दिप्रसेक-शूलमेदःश्लेष्मानिलहरं मधुरविपाकं हृद्यं मूत्रकृच्छ्रस्नेहव्यापत्प्रशमनमवृष्यञ्च । मन्थनादिपृथग्भूत-स्नेहमर्द्धोदकन्तु यत् । नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे ॥ यत् तु सस्नेहमजलं मथितं घोलमुच्यते । इति । अन्यत्र तु—ससारं निर्ज्जलं घोलं तक्रं पादजलान्वितम् । अर्द्धोदकमुदश्वित् स्यान्मथितं सारवर्ज्जितम् । घोलं पित्तानिलहरं तक्रं दोषत्रयापहम् । उदश्वित् श्लेष्मलञ्चैव मथितं कफपित्तनुत् । इति । वक्ष्यते चात्र चिकित्सिते । रूक्षमर्द्धोद्धृतस्नेहं यत-श्चानुद्धृतं घृतम् । तक्रं दोषाग्निबलवित् त्रिविधं सम्प्रयोजयेत् । इति । त्रिविधं ससारक्षीरजातदधिमन्थनजं कटुकमुच्यते । असारदुग्धजातदधिमन्थनजं तक्रं नैवंगुणमुच्यते । सुश्रुते तु द्विविधमन्यथा चोक्तम् । तत् तु पुनर्मधुरं श्लेष्मप्रकोपणं पित्तप्रशमनञ्च. अम्लं वातघ्नं पित्तकरञ्च । वातेऽम्लं सैन्धवोपेतं स्वादु पित्ते सशर्करम् । पिबेत् तक्रं कफे चापि व्योषक्षारसमायुतम् ॥ तक्रं नैव क्षते दद्यान्नोष्णकाले न दुर्ब्बले । न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥ इति ॥ ४२ ॥

गङ्गाधरः—क्षीरविकारतया गोरसत्वान्नवनीतमाह—संग्राहीत्यादि । नवोद्धृतं मन्थनादुत्थितमात्रं नवनीतं सामान्यतो गव्यादि सर्व्वं संग्राहीत्यादिगुणम् ।

सर इति मलेदः ; सरो दध्युपरिस्नेहः, शुक्रलः शुक्रस्रुतिवृद्धिकरः, अत एव सुश्रुते सरगुणे—"वृष्यः शुक्रविवर्द्धनः" इति पदद्वयोपादानं कृतम् । मण्ड इति प्रकरणाद् दधिमण्डो मस्त्वित्यर्थः ॥ ४१ ॥

चक्रपाणिः—शोफेत्यादि तक्रगुणाः, मूत्रग्रहो मूत्रकृच्छ्राणि, गरोऽकृत्रिमविषम् । संग्राहीत्यादि

स्मृतिबुद्ध्यग्निशुक्रौजः-कफमेदोविवर्द्धनम्।
वातपित्तविषोन्माद-शोषालक्ष्मीज्वरापहम्॥ ४३॥
सर्व्वस्नेहोत्तमं शीतं मधुरं रसपाकयोः।
सहस्रवीर्य्यं विधिवद् घृतं कर्म्मसहस्रकृत्॥
मदापस्मारमूर्च्छाय-शोषोन्मादगरज्वरान्।

अलक्ष्मीदोषापहं प्रभावात्। द्विविधमेतत् किञ्चिदल्पान्तरगुणं दध्युत्थं क्षीरोत्थञ्च। तदुक्तं सुश्रुते—नवनीतं पुनः सद्यस्कं लघु सुकुमारं मधुरं कषायमीषदम्लं शीतलं मेध्यं दीपनं हृद्यं संग्राहि पित्तानिलहरं वृष्यम् अविदाहि क्षयकासश्वासव्रणार्शोऽर्द्दितापहं गुरु कफमेदोविवर्द्धनं बलकरं बृंहणं शोषघ्नं विशेषतो बालानां प्रशस्यते। क्षीरोत्थं पुनर्नवनीतमुत्कृष्टस्नेहं माधुर्य्ययुक्तमतिशीतं सौकुमार्य्यकरं चक्षुष्यं संग्राहि रक्तपित्तनेत्ररोगहरं प्रसादनञ्च। इति॥ ४३॥

<u>गङ्गाधरः</u>—गोरसत्वाद् घृतमाह। सर्व्वस्नेहोत्तममित्यादि। घृतं सामान्यत एतद्गव्यादि सर्व्वं सर्व्वेषु स्थावरजङ्गमेषु स्नेहेषूत्तमं विधिवत् तत्तद्व्याधिहरत्वोपहरौषधिसंस्कृतं सहस्रमसङ्ख्यवीर्य्यं भवत् कर्म्मसहस्रकृद् भवति। शुद्धन्तु जीर्णं पुरातनं घृतं मदापस्मारादीन् रोगानपोहति। जीर्णं वक्ष्यते चोन्मादचिकित्सिते—उग्रगन्धं पुराणं स्याद् दशवर्षस्थितं घृतम्। लाक्षारससमं शीतं प्रपुराणमतः परम्॥ इति। संवत्सरातीनमपि जीर्णमुच्यते। तथा चोक्तं हारीतेन—यथा यथा जरां याति गुणवत् स्यात् तथा तथा। इति। तथा कौम्भं सर्पिः शताब्दिकमिति। सुश्रुते च—घृतन्तु सौम्यं शीतवीर्य्यं मृदु मधुरमल्पाभिष्यन्दि स्नेहनमुदावर्त्तोन्मादापस्मारशूलज्वरानाह-वातपित्तप्रशमनम् अग्निदीपनं स्मृतिमतिमेधाकान्तिस्वरलावण्यसौन्दर्य्यौजस्तेजोबलकरमायुष्यं

नवनीतगुणः; नवोद्धृतं सद्यस्कं, नवोद्धृतमिति वचनाद्भिन्नवस्थैव नवनीतस्य यथोक्तगुणाः प्रकर्षवन्तो भवन्तीति, पुराणस्य तु नैते बलवन्तो गुणा भवन्तीति॥ ४२।४३॥

<u>चक्रपाणिः</u>—उत्पादक्रमागतस्य घृतस्य गुणमाह—स्मृतीत्यादि।—सहस्रवीर्य्यमिति भूरिशक्तिकम्; कथं सहस्रवीर्य्यमित्याह—विधिवदिति, विधिवद् विधियुक्तं सदित्यर्थः, विविधनानाकर्म्मकारिभिर्द्रव्यैः संस्कारात् संयोगाच्च, अत एवोक्तम्—"नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते", तथा तन्त्रान्तरे "घृतं योगवाहि" इति, तस्मात् सहस्रवीर्य्यंतः कर्म्मसहस्रकृदिति योज्यम्; मत तु सुश्रुतटीकाकृतः सुश्रुतोक्तघृतगुणेषु त्रिदोषापकर्षणमिति पठन्ति, तत्संस्कारेण

योनिकर्णशिरःशूलं घृतं जीर्णमपोहति।
सर्पींष्यजाविमहिषी-क्षीरवत् स्वादु * निर्द्दिशेत्॥ ४४॥

वृष्यं मेध्यं वयःस्थापनं गुरु चक्षुष्यं श्लेष्माभिवर्द्धनं पाप्मालक्ष्मीप्रशमनं विषहरं रक्षोघ्नञ्च। क्षीरघृतं पुनः संग्राहि रक्तपित्तभ्रममूर्च्छाप्रशमनं नेत्ररोगेहितञ्च। सर्पिः पुराणं सरं कटुविपाकं त्रिदोषापहं मूर्च्छामदउन्मादोदरज्वरगरशोफापस्मारयोनिश्रोत्राक्षिशूलघ्नं दीपनं वस्तिनस्याक्षिपूरणेषूपदिश्यते। भवन्ति चात्र। पुराणं तिमिरश्वास-पीनसज्वरकासनुत्। मूर्च्छाकुष्ठविषोन्माद-ग्रहापस्मारनाशनम्। एकादशशतञ्चैव वत्सरानुषितं घृतम्। रक्षोघ्नं कुम्भसर्पिः स्यात् परतस्तु महाघृतम्। पेयं महाघृतं भूतैः कफघ्नं पवनाधिकैः। बल्यं पवित्रं मेध्यञ्च विशेषात् तिमिरापहम्। सर्व्वभूतहरञ्चैव घृतमेतत् प्रशस्यते॥ इति।

ननु दध्यादिकं सर्व्वं क्षीरविकारभूतं क्षीरन्त्वष्टविधमुक्तं पृथग्गुणं दध्यादिकन्तु किं न पृथग्गुणं भवतीत्यत आह—सर्पीषीत्यादि। सर्पीषि इति बहुवचनात् दधितक्रनवनीतघृतानीति अजाविमहिषीतिपदत्रयोपादानात् पूर्व्वोक्ताष्टधा क्षीरयोनिः स्थापिता। गव्याद्यष्टविधक्षीरवत् तत्तत्क्षीरसम्भवदधितक्रनवनीतघृतेषु स्वादु स्वाद्वादिकं निर्द्दिशेत्। तदुक्तं पृथग्घृतगुणादिकं सुश्रुते—विपाके मधुरं शीतं वातपित्तविषापहम्। चक्षुष्यमग्र्यं बल्यञ्च गव्यं सर्पिर्गुणोत्तरम्॥ आजं घृतं दीपनीयं चक्षुष्यं बलवर्द्धनम्। कासे श्वासे क्षये चापि पथ्यं पाके च तल्लघु॥ मधुरं रक्तपित्तघ्नं गुरु पाके कफावहम्। वातपित्तप्रशमनं सुशीतं माहिषं घृतम्॥ औष्ट्रं कटुरसं पाके शोफक्रिमिविषापहम्। दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम्॥ पाके लघ्वाविकं सर्पिर्न च पित्तप्रकोपणम्। कफेऽनिले योनिदोषे शोफे कम्पे च तद्धितम्। पाके लघूष्णवीर्य्यञ्च कषायं कफनाशनम्। दीपनं बद्धमूत्रञ्च विद्यादैकशफं घृतम्॥ चक्षुष्यमग्र्यं स्त्रीणान्तु सर्पिः स्यादमृतोपमम्। वृद्धिं करोति

कफहरणादिति ज्ञेयम्। मदेत्यादि।—जीर्णन्तु दशवर्षातीतम्, वचनं हि—"पुराणं दशवर्षं स्यात् प्रपुराणमतः परम्" इति; यथा यथा च जीर्णत्वप्रकर्षः तथा तथा गुणोत्कर्षो ज्ञेयः, यदुक्तं हि हारीते—"यथा यथा जरां याति गुणवत् स्यात् तथा तथा" इति। अनुक्तसर्पिर्गुणानतिदिशति सर्पींषीत्यादि।—सर्पींषि स्वादूनीति सम्बन्धः, तेन अजाक्षीरवदजासर्पिर्निर्द्दिश्यतेति; एवं

* स्वाद्वित्यत्र स्वादूनीति साधीयान् पाठश्चकसम्मतः।

पीयूषो मोरटञ्चैव किलाटा विविधाश्च ये।
दीप्ताग्नीनामनिद्राणां सर्व्व एव सुखप्रदाः।
गुरवस्तर्पणा वृष्या वृंहणाः पवनापहाः॥
विशदा गुरवो रुक्षा ग्राहिणस्तक्रपिण्डकाः।
गोरसानामयं वर्गो नवमः परिकीर्त्तितः॥ ४५॥

इति दुग्धवर्गः। ९।

देहाग्नयोर्ल्लघुपाकं विषापहम्॥ कषायं बद्धविण्मूत्रं तिक्तमग्निकरं लघु। हन्ति कारेणवं सर्पिः कफकुष्ठविषक्रिमीन॥ इति॥ ४४॥

गङ्गाधरः—पीयूष इत्यादि। क्षीरं सद्यःप्रसूतायाः पीयूषमिति संज्ञितम्। सप्तरात्रात् परं क्षीरमप्रसन्नञ्च मोरटम। किलाटा इति नष्टक्षीरपिण्डा इति कश्चित् तन्न तक्रपिण्डिकास्वन्तर्भावात्। नहि किलाटा घनावर्त्तितदुग्धकृताः क्षीरसा इति ख्याता। विविधा इत्युक्ता। दुग्धस्य सरः घृतस्य मण्ड इत्यादयो ज्ञापिताः। दीप्ताग्नीनां सुखप्रदा यतो गुरव इत्यादिगुणाः। सुश्रुते च—गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राप्रदः स्मृतः। मधुरौ वृंहणौ वृष्यौ तद्वत् पीयूषमोरटौ। सन्तानिका पुनर्वातघ्नी तर्पणी बल्या वृष्या स्निग्धा रुच्या मधुरा मधुरविपाका रक्तपित्तप्रसादनी गुर्व्वी च। इति। विशदा इत्यादि। तक्रपिण्डकास्तक्रकूर्च्चिका विशदादिगुणाः। सुश्रुते च—ग्राहिणी वातला रूक्षा दुर्ज्जरा तक्रकूर्च्चिका। तक्राल्लघुतरो मण्डः कूर्च्चिका दधितक्रजा। इति। अत्रैव तक्रपिण्डिकायां दधिकूर्च्चिका स्वतो नष्टक्षीरपिण्डयोरन्तर्भावः। तप्ते पयसि तक्रस्य संयोगात् तक्रकूर्च्चिका। दध्ना सह पयः पक्वं सा भवेद् दधिकूर्च्चिका। सुश्रुते—सर्पिर्मण्डस्तु मधुरो योनिश्रोत्राक्षिशिरसां शूलघ्नो वस्तिनस्याक्षिपूरणेषूपदिश्यते। विकल्प एष दध्यादिः श्रेष्ठो गव्योऽभिवर्णितः। विकल्पानत्रशिष्टांस्तु क्षीरवीर्य्यात् समा-

ज्ञेययोरपि वाच्यम्; अनेन च न्यायेन हस्त्यादिसर्पिरपि बोद्धव्यम्, हस्त्यादिसर्पिर्व्यवहारा-भावात् साक्षान्नोक्तम्॥ ४४॥

चक्रपाणिः—पीयूषः सद्यःप्रसूतायाः क्षीरं; तदेव यावत् न परतोऽप्रसन्नतां याति, तावन्मोरट इत्युच्यते। किलाटो नष्टक्षीरभागः, यं लोकाः क्षीरसामित्याहुः। विशद इत्यादि

वृष्यः शीतः सरः स्निग्धो बृंहणो मधुरो रसः।
श्लेष्मलो भक्षितस्येक्षोर्यान्त्रिकस्तु विदह्यते।
शैत्यात् प्रसादान्माधुर्य्यात् पौण्ड्रकाद् वंशको वरः ॥४६॥

दिशेत् ॥ इति। वर्गं समापयति—गोरसानामित्यादि। गोरसानामिति प्राधान्यादुपलक्षणाद् गवादिरसानामयं नवमो वर्गः परिकीर्त्तितः ॥ ४५ ॥

इति नवमो गोरसवर्गः। ९।

<u>गङ्गाधरः</u>—क्रमिकत्वादिक्षुविकारकवर्गमाह। तत्र श्रेष्ठत्वाच्चर्व्वितस्येक्षो रसगुणमाह—वृष्य इत्यादि। भक्षितस्य दन्तचर्व्वितस्य पौण्ड्रकादिजातिविशेषेण परिगृहीतस्य सामान्यस्येक्षो रसो वृष्यादिगुणः। यान्त्रिकस्तु खल्विक्षोर्यन्त्रनिष्पीड़ितो रसो विदह्यते। सुश्रुते च—इक्षवो मधुरा मधुरविपाका गुरवः शीताः स्निग्धा बल्या वृष्या मूत्रला रक्तपित्तप्रशमनाः क्रिमिकफकराश्चेति। ते चानेकविधाः। तद् यथा—पौण्ड्रको भीरुकश्चैव वंशकः शतपोरकः। कान्तारस्तापसेक्षुश्च काण्डेक्षुः सूचिपत्रकः। नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोशकृत्। इत्येता जातयः स्थौल्यात् गुणान वक्ष्याम्यतः परम् ॥ सुशीतो मधुरः स्निग्धो बृंहणः श्लेष्मलः सरः। अविदाही गुरुर्वृष्यः पौण्ड्रको भीरुकस्तथा। आभ्यां तुल्यगुणः किञ्चित् सक्षारो वंशको मतः। वंशवच्छतपोरस्तु किञ्चिदुष्णः स वातहा। कान्तारतापसाविक्षू वंशकानुगुणौ मतौ। एवंगुणस्तु काण्डेक्षुः स तु वातप्रकोपणः। सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः। वातलाः कफपित्तघ्नाः सकषाया विदाहिनः। कोशकारो गुरुः शीतो रक्तपित्त-

तक्रपिण्डगुणः, तक्रपिण्डस्तक्रकूर्च्चिकाया एव स्रुतद्रवो घनो भागः। गोरसानामित्यत्र 'आदि'-शब्दो लुप्तनिर्द्दिष्टो द्रष्टव्यः, तेन, महिषीक्षीरादीनामपि ग्रहणम्, किंवा, प्राधान्यात् गोरसनिर्द्देशाद् गोरसतया गोरसनिष्पन्नाः सर्व्व एव क्षीरदधितक्रादयो गृह्यन्ते, लोके हि सर्व्वेष्वेवैषु गोरससंज्ञा माधुर्य्यसामान्यात् ॥ ४५ ॥ इति गोरसवर्गः। ९।

<u>चक्रपाणिः</u>—इक्षुविकृतिप्रायो वर्ग उच्यते;—भक्षितस्येति दन्तपीड़ितस्य; यान्त्रिक इति यन्त्रपीड़ितः; विदाहश्चास्य प्रायशस्त्वग्ग्रन्थियुक्तस्य यन्त्रेण पीड़नात्, तथा कालान्तरमवस्थानाच्च, वचनं हि—"त्वग्ग्रन्थिसंयोगात् यान्त्रिकस्तु विदह्यते" उक्तञ्च हारीते—"व्यापित्वात् सुकुमारो हि रसो यन्त्रनिपीड़ितः। सौक्ष्म्यात् स्रुतोऽनिलार्काभ्यां भृशं काये विदह्यते ॥" तत्र व्यापित्वादिति त्वगादियुक्तभुक्तावयवत्वात्, यदुच्यते—विदाहित्वे यान्त्रिकस्य रक्तपित्तहन्तृत्वमुक्तं विरुध्यते, यथा—"मधूकस्येक्षुरसस्य चैव पानात्क्षयं गच्छति रक्तपित्तम्।" तन्न, यतः,

प्रभूतक्रिमिमज्जासृङ्-मेदोमांसकरो गुडः।
क्षुद्रो गुडश्चतुर्भागत्रिभागार्द्धावशेषितः।
रसो गुरुर्यथा पूर्व्वं धौतस्वल्पमलो गुडः ॥ ४७ ॥
ततो मत्स्यण्डिका खण्डः शर्करा विमला परम्।
यथा यथैषां वैमल्यं भवेच्छैत्यं तथा तथा ॥

क्षयापहः। अतीव मधुरो मूले मध्ये मधुर एव च। अग्रे ष्वक्षिषु विज्ञेय इक्षूणां लवणो रसः। अविदाही कफकरो वातपित्तनिवारणः। वक्त्रप्रह्लादनो वृष्यो दन्तनिष्पीडितो रसः। गुर्व्विदाही विष्टम्भी यान्त्रिकस्तु प्रकीर्त्तितः। इति ॥ ४६ ॥

गङ्गाधरः—इक्षुरसविकारानाह—प्रभूतेत्यादि। गुड इति प्रसिद्धः। प्रभूत-क्रिम्यादिकरः। पाकादतिसान्द्रत्वमापन्न इक्षुरसो गुडः। स च त्रिविधः चतुर्थभागावशेषित इक्षुरसस्तु गुड उच्यते। त्रिभागावशेषित इक्षुरसः क्षुद्र उच्यते। अर्द्धावशेषित इक्षुरसस्तगुडः फाणितमित्युच्यते। तेषु यथापूर्व्वं पूर्व्वः पूर्व्वो गुरुः। तत्राल्पमलः पाककालेऽथवोत्तरकाले मलापहरणेन यो गुडोऽल्पमलः स्यात् स धौत इत्युच्यते। ततो धौताद्विमला मत्स्यण्डिका नाम्नाभिधीयते। ततः पुनर्मत्स्यण्डिकातो विमलः खण्ड उच्यते। खण्डाद्विमला शर्करा नामाभिधीयते। परं यथा यथा चैषां वैमल्यं भवेत् तथा तथा शैत्यं शीतगुणत्वमेषां भवेत्। सुश्रुते च—गुडः सक्षारमधुरो नातिशीतः स्निग्धो मूत्र-रक्तशोधनो नातिपित्तजिद्वातघ्नो मेदःक्रिमिकफकरो बल्यो वृष्यश्च। पित्तघ्नो

दन्तनिष्पीडितस्यैवाविदाहित्वाद्रक्तपित्ते ग्रहणं भविष्यति; किंवा, यान्त्रिकोऽपि विदाहकारक-त्वादिसंयोगस्य तथा कालान्तरावस्थानस्य च त्यागं कृत्वोपयोगः कर्त्तव्यः; "यान्त्रिकस्तु विदह्यते" इतिवचनं प्रायोवादमाश्रित्य बोद्धव्यम्; अन्ये तद्दोषभयात् विदह्यत इति वीर्ये पठन्ति इति व्याख्यानयन्ति ॥ ४६ ॥

चक्रपाणिः—प्रभूतक्रिम्यादिकारणत्वात् प्रभूतक्रिम्यादिकरो गुड उच्यते। क्षुद्रगुडस्तथा चतुर्भागत्रिभागार्द्धावशेषितः; रस इत्यत्र चकारलोपो द्रष्टव्यः, तेन, क्षुद्रगुडश्चतुर्भागाव-शेषितात्रसात्, गुडस्तथा त्रिभागाच्चतुर्भागावशेषितो गुड इत्यादि ज्ञेयम्; अत्र क्षुद्रगुडोऽमितपाक इत्युच्यते; फाणितञ्च तनुलीभावात् भवति। धौतः स्वल्पमल इति मलापकर्षेण धौतोऽल्प-मलो भवति, तेनाल्पक्रिम्यादि करोतीति भावः। तत इति धौतगुडात्, मत्स्यण्डिका स्वच्छ-

वृष्या क्षीणक्षतहिता सस्नेहा गुड़शर्करा ।
कषायमधुरा शीता सतिक्ता यासशर्करा ॥
रूक्षा च्छर्द्यतिसारघ्नी च्छेदनी मधुशर्करा ।
तृष्णासृक्पित्तदाहेषु प्रशस्ताः सर्व्वशर्कराः ॥ ४८ ॥

मधुरः शुद्धो वातघ्नोऽसृक्प्रसादनः । स पुराणोऽधिकगुणो गुड़ः पथ्यतमः स्मृतः ॥ (पक्वो गुरुः सरः स्निग्धः स तीक्ष्णः कफवातनुत्, फाणितं गुरु मधुरमभिष्यन्दि वृंहणमवृष्यं त्रिदोषकृच्च । ) मत्स्यण्डिकाः खण्डशर्करा विमलजाता उत्तरोत्तरं शीताः स्निग्धा गुरुतरा मधुरतरा वृष्या रक्तपित्तप्रसादनाः तृष्णाप्रशमनाश्च । यथा यथैषां वैमल्यं मधुरत्वं तथा तथा । स्नेहगौरवशैत्यानि सरत्वञ्च तथा तथा ॥ यो यो मत्स्यण्डिकाखण्डशर्कराणां स्वको गुणः । तेन तेनैव निर्द्दिश्यस्तेषां विस्रावणो गुणः । सारस्थिता सुविमला निःसारा च यथा यथा । तथा तथा गुणवती विज्ञेया शर्करा बुधैः ॥ इति । अस्याः शर्करायाः गुणमाह—वृष्येत्यादि । गुड़शर्करा खण्डान्निर्म्मला शर्करा यथा यथा निर्म्मला तथा तथैव शैत्यादियुक्ता वृष्यादिगुणा भवति । खण्डगुणश्चान्यत्रोक्तः, खण्डो वृष्यतमो बल्यश्चक्षुष्यो वृंहणस्तथा । शर्कराप्रसङ्गादपरशर्करामाह—कषायेत्यादि । यासशर्करा दुरालभारसकृतशर्करा । सुश्रुते च—यवासशर्करा मधुरकषाया तिक्तानुरसा श्लेष्महरी सरा चेति । रूक्षेत्यादि । मधुशर्करा काले स्वत एव मधुनः शर्करा भवति, सा रूक्षादिगुणा । सुश्रुते च—मधुशर्करा पुनश्छर्द्यतीसारहरी रूक्षा च्छेदनी प्रह्लादनी कषायमधुरा मधुरविपाका च । इति । सर्व्वासां शर्कराणामासां सामान्यतो गुणानाह—तृष्णासृगित्यादि । सर्व्वशर्करा गुड़शर्करा यासशर्करा मधुशर्करा चेति । सुश्रुते च—यावत्यः शर्कराः प्रोक्ताः सर्व्वा दाहप्रणाशनाः । रक्तपित्तप्रशमनाश्छर्द्दिमूर्च्छातृषापहाः । रूक्षं मधूकपुष्पोत्थं फाणितं वातपित्तकृत् । कफघ्नं मधुरं पाके कषायं वस्तिदूषणम् ॥ इति ॥ ४९।४८ ॥

मध्ये पाकात् घनीभूता मत्स्याण्डनिभा भवति ; विमलाः परमित्युत्तरोत्तरं विमलाः , भवेच्छैत्यं तथा तथेति मत्स्यण्डिकापाश्च खण्डः शीततरः, ततश्च शर्करा शीततमेत्यर्थः ।

गुड़शर्करेति यासमधुशर्करयोर्व्यवच्छेदार्थम् ; यासशर्करा दुरालभाकाथकृता शर्करा ; मधुशर्करा तु मधुमध्येषु शर्करा भवति ॥ ४७।४८ ॥

माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं मधुजातयः।
माक्षिकं प्रवरं तेषां विशेषाद् भ्रामरं गुरु॥
माक्षिकं तैलवर्णं स्याद् घृतवर्णन्तु पौत्तिकम्।
क्षौद्रन्तु कपिलं वर्णं श्वेतं भ्रामरमुच्यते॥
वातलं गुरु शीतञ्च रक्तपित्तकफापहम्।
सन्धानं छेदनं रूक्षं कषायं मधुरं मधु॥

गङ्गाधरः—मधुशर्करामसङ्गादिह पुनर्मधुभेदादीनाह—माक्षिकमित्यादि। माक्षिकादयश्चतस्रो मधुजातयः। मक्षिकादिप्राणिसम्भवत्वाज्जाङ्गमत्वाच्चेहोपदिष्टाऽछात्रार्घ्यौद्दालदालानां स्थावरत्वादिह नोपदेशः कृतः। तत्र मक्षिकाः पिङ्गलवर्णास्तत्कृतं मधु माक्षिकम्। भ्रमरास्तु बृहन्मक्षिकास्तत्कृतं मधु भ्रामरम्। क्षुद्रा मक्षिकास्तत्कृतं मधु क्षौद्रम्। महत्यः पिङ्गलास्तु मक्षिकाः पुत्तिकास्तत्कृतं मधु पौत्तिकम्। तेषां मधूनां मध्ये माक्षिकं मधु प्रवरं, भ्रामरन्तु विशेषात् गुरु. सर्व्वेषां लघुत्वेऽपि तत्र भ्रामरस्य गुरुत्वम्। तेन क्षौद्रपौत्तिकयोर्मध्यगुरुत्वं ख्यापितम्। माक्षिकादीनां ज्ञानार्थं लक्षणान्याह—माक्षिकमित्यादि। तैलवर्णं तिलतैलवर्णं माक्षिकं, गव्यघृतवर्णं पौत्तिकं, कपिलवर्णं क्षौद्रं, श्वेतवर्णं भ्रामरमिति। एषां सामान्यतो गुणानाह वातलमित्यादि। सर्व्वं मधु वातलादिगुणं भवति। सुश्रुते चोक्तम्—मधु तु मधुरं कषायानुरसं रूक्षं शीतमग्निदीपनं वर्ण्यं बल्यं लघु सुकुमारं लेखनं हृद्यं सन्धानं शोधनं रोपणं वाजीकरणं संग्राहि चक्षुःप्रसादनं सूक्ष्ममार्गानुसारि पित्तश्लेष्ममेदोमेहहिक्काश्वासकासातिसारच्छर्द्दितृष्णाक्रिमिविषप्रशमनं ह्लादि त्रिदोषप्रशमनञ्च। तत्तु लघुत्वात् कफघ्नं पैच्छिल्यान्माधुर्य्यात् कषायभावाच्च वातपित्तघ्नम्। पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव च। आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः॥ विशेषात् पौत्तिकं तेषु रूक्षोष्णं सविषयान्वयात्। वातासृक्पित्तकृच्छेदि विदाहि मदकृन्मधु। पैच्छिल्यात् स्वादुभूयस्त्वाद् भ्रामरं गुरुसंज्ञितम्। क्षौद्रं विशेषतो

चक्रपाणिः—मधुशर्करामसङ्गेन मध्वभिधानम्—मक्षिका पिङ्गलाः, तत्कृतं माक्षिकम्; भ्रमरः प्रसिद्धः; क्षुद्रमक्षिकाभवं क्षौद्रम्; पिङ्गलामक्षिका महत्यः पुत्तिकाः, तत्कृतं पौत्तिकम्; छात्रादयश्चत्वारो मधुभेदाः सुश्रुतोक्ताः सामान्यमधुगुणा एव ज्ञेयाः, किंवा, अप्रधानत्वादिह नोक्ताः;

हन्यान्मधूष्णमुष्णार्त्तमथवा सविषान्वयात्।
गुरुरूक्षकषायत्वाच्छैत्याच्चाल्पहितं मधु॥

ञेयं शीतलं लघु लेखनम्। तस्माल्लघुतरं रूक्षं माक्षिकं प्रवरं स्मृतम्। श्वासादिषु च रोगेषु प्रशस्तं तत् विशेषतः। स्वादुपाकं गुरु हिमं पिच्छिलं रक्तपित्तजित्। श्वित्रमेहक्रिमिहरं विद्यात्छात्रं गुणोत्तरम्। आर्घ्यं मध्वति-चक्षुष्यं कफपित्तहरं परम्। कषायं कटु पाके च बल्यं तिक्तमवातकृत्। औद्दालकं रुचिकरं स्वर्य्यं कुष्ठविषापहम्। कषायमुष्णमम्लञ्च पित्तकृत् कटुपाकि च। छर्द्दिमेहप्रशमनं मधु रूक्षं दलोद्भवम्। इति। अन्यत्र चोक्तम्—कीर्त्त्यते तन्मधु च्छात्रं वरटीच्छत्रसम्भवम्। तपोवने जरत्कारोरार्घ्यं मधु तदुद्भवम्। औद्दालकन्तु वल्मीक-कीटकारिविनिर्म्मितम्। दालमित्यभिनिर्द्दिष्टं वृक्ष-कोटरकीटजम्। इति। अथ मधूपयोगानर्हमाह—हन्यादित्यादि। मधु शीत-वीर्य्यमपि सविषान्वयात् सविषप्राणिसम्भूतत्वादुष्णविरोधि प्रकृत्यैवोष्णं पुरुषमथवा स्वेदातपादिभिरुष्णार्त्त पुरुषं सेव्यमानं हन्यात्। उष्णोष्णार्त्ताभ्याम् अन्यत्र पुरुषे तु मधु गुरुत्वादित्वात् शैत्याच्चाल्पहितं भवति। सुश्रुते च—तत् तु नानाद्रव्यरसगुणवीर्य्यविपाकविरुद्धानां पुष्परसानां सविषमक्षिकासम्भव-त्वाच्चानुष्णोपचारम्। उष्णैर्व्विरुध्यते सर्व्वं विषान्वयतया मधु। उष्णार्त्तमुष्णै-रुष्णे वा तन्निहन्ति यथा विषम्। तत् सौकुमार्य्याच्च तथैव शैत्यान्नानौषधीनां रससम्भवाच्च। उष्णविरुध्येत विशेषतश्च तथान्तरीक्षेण जलेन चापि॥ उष्णेन मधु संयुक्तं वमनेष्ववचारितम्। अपाकादनवस्थानान्न विरुध्येत पूर्व्ववत्॥ इति।

केचित् 'माक्षिकं तैलवर्णं स्यात्' इत्यादि श्लोकं पठन्ति। उष्णार्त्तमथवेति भाषया यथा उष्णं मधु हिंस्यात्, न तथा उष्णार्त्तमिति सूचयति; तत्रैव हेतुमाह—सविषान्वयादिति, सविषप्रायाणि नानापुष्पाणि, किंवा, सविषा एव मक्षिकादयोऽन्वया उत्पत्तिस्थानानि यस्य तत् सविषान्वयं मधु, तेन, सविषान्वयात् विषानुगतस्योष्णविरोधित्वस्यैव मधुनोऽनुगमो भवति, न तु सविषत्वस्य; तथा सत्युष्णमपि मारकं स्यात्. किंवा, 'अथवा' इति सविषान्वयादित्यनेन सम्बध्यते, तेन, सविषान्वयादन्यतश्च शैत्यात् सौकुमार्य्याच्च उष्णेन मधु विरुध्यत इत्यर्थो भवति, उक्तं हि हारीते—'नानापुष्पप्रकाराणां रससारात्मकं मधु। तच्छैत्यात् सौकुमार्य्याच्च सर्व्वैरुष्णैर्विरुध्यते'॥ सुश्रुतेऽप्युक्तम्—'तत् सौकुमार्य्याच्च तथैव शैत्यात्' इत्यादि। अहितस्य मधुनो हितत्वे हेतुमाह—गुर्व्वित्यादि। गुरुत्वात् मन्दाग्निकारकं भवति, रूक्षं कषायं शैत्यञ्च महात्ययं वातकरमिति भावः।

नातः कष्टतमं किञ्चिन्मध्वामं तद्धि मानवम्।
उपक्रमविरोधित्वात् सद्यो हन्याद् यथा विषम्॥
नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु।
इतीक्षुविकृतिप्रायो वर्गोऽयं दशमो मतः॥ ४९॥

इतीक्षुवर्गः। १०।

नात इत्यादि। आममपक्वं मधु यथा कष्टतममतः कष्टतमं न किञ्चिदाममस्ति। कस्मात्? तद्धीत्यादि। हि यस्मात् तदामं मधु उपक्रमविरोधित्वात् सद्यो यथा विषं हन्ति तथा सद्यो मानवं हन्ति। सर्व्वं ह्याममुष्णभेषजसाध्यं मधुनि तु तदुष्णं विरुद्धं नोपयोक्तुं युज्यते इत्यत उपक्रमे चिकित्सारम्भे त्वाममधु पीतवत उष्णक्रिया विरुद्धा भवतीत्युपक्रमविरुद्धत्वम्। आमन्तु मधु तदुच्यते यन्मधुकोषेऽल्पकालमारब्धमम्लं भवति भूरिकालेन परिणतन्तु कषायानुमधुरं पक्वमुच्यते। तथाविधन्तु कोषाद् ग्रहणकाले परीक्षितव्यं कालान्तरे त्वम्लत्वेनामत्वाभावात्। उक्तञ्च सुश्रुते—दोषत्रयहरं पक्वमाममम्लं त्रिदोषकृत्। मध्वामात् परतस्त्वन्यदामं कष्टं न विद्यते। विरुद्धोपक्रमत्वात् तत् सर्व्वं हन्ति यथा विषम्॥ इति। इहाममम्लमिति वचनेन तद्भ्रान्तव्याख्यानं विज्ञायते येनोच्यतेऽग्निसम्पर्केण पक्वं मधु पक्वमन्यदाममिति, मधुनश्चोष्णविरोधित्वाच्च।

मधुनो योगवाहित्वमाह—नानेत्यादि। मधु योगवाहि, येन सह युज्यते तद्गुणमावहति। कस्मात्? नानाद्रव्यात्मकत्वादिति। सुश्रुते चोक्तम्—तद् युक्तं विविधैर्योगैर्निहन्यादामयान् बहून्। नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु॥ इति। वर्गं समापयति—इतीत्यादि। इति एष इक्षुविकृति-

मध्वामस्य महात्ययतामाह—नात इत्यादि। उपक्रमविरोधित्वं मध्वामे यथा—आमे तूष्णं पथ्यं, तन्मधुनो विरुद्धम्, यत् तु मधुहितं शीतम्, तदामे विरुद्धम्। मधुनो योगवाहित्वमाह—नानेत्यादि। यस्मान्नानारसादिवीर्यादिभ्यः पुष्पेभ्य उत्पन्नं तन्मधु, तेन अनभिव्यक्तनानाशक्तिकमेव; ततश्च, येन द्रव्येण वामनीयेनास्थापनीयेन वा द्रव्येण कार्य्यान्तरकारकेण वा युज्यते, तस्यैव कर्म्म करोति समानानुकारिद्रव्यप्रबोधितशक्तित्वादिति भावः; चकारोऽत्र हेत्वन्तरसमुच्चये, तेन प्रभावाच्चेति बोद्धव्यम्; तेन, सत्यपि नानौषधिसम्भवत्वे प्रभावात् न क्षीरमद्यादयो योगवाहिनः, तथा, अनानात्मका अपि शिलाजतुतैलादयो योगवाहिनो भवन्ति; योगवाहित्वेऽपि मधु स्नेहने न प्रयुज्यते, वाते रूक्षादिगुणयुक्तत्वात्; नानाद्रव्यात्मकत्वे-

क्षुत्तृष्णाग्लानिदौर्ब्बल्य-कुक्षिरोगज्वरापहा ।
स्वेदाग्निजननी पेया वातवर्च्चोऽनुलोमनी ॥
तर्पणी ग्राहिणी लघ्वी हृद्या चापि विलेपिका ।
मण्डस्तु दीपयत्यग्निं वातञ्चाप्यनुलोमयेत् ॥

प्राय इक्षुविकारः प्रायो यत्र वर्ग स इक्षुविकारप्रायोऽयं दशमो वर्गो मत इति ॥ ४९ ॥

इति दशम इक्षुविकारको वर्गः । १० ।

गङ्गाधरः—अथाहारार्थं शूकधान्यादीनि द्रव्याणि गुणतः कर्म्मतश्चोक्त्वा शूकधान्यादीनि यथाकृतान्यन्नानि यद्गुणानि भवन्ति, तथाकृतानामन्नानां गुणकर्म्माणि वक्तुं कृतान्नवर्गमारभते। तत्रातुरहितत्वादादौ द्विविधेष्वन्नेषु यवाग्वोदनभेदेन भिन्नेषु यवागूगुणानाह : त्रिविधा खलु यवागूर्भवति पेया-विलेपी-मण्डभेदात् । यवागूमुचिताद् भक्ताच्चतुर्भागकृतां वदेत् । यवागूस्त्रिविधा ज्ञेया द्रवसिक्थसमन्विता । सिक्थकै रहितो मण्डः पेया सिक्थ-समन्विता । यवागूर्बहुसिक्था तु विलेपी विरलद्रवा । अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे । मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि । इति प्रसिद्धत्वात् तत्रादौ पेयागुणमाह क्षुत्तृष्णेत्यादि । पेया नाम यवागूः क्षुदाद्यपहा स्वेदाग्निजननी वातवर्च्चोऽनुलोमनी च । सुश्रुते च—स्वेदाग्निजननी लघ्वी दीपनी वस्तिशोधनी । क्षुत्तृट्श्रमग्लानिहरी पेया वातानुलोमनी ॥ इति । तर्पणीत्यादि । विलेपिका नाम यवागूः तर्पणीत्यादि-गुणा । सुश्रुते च—विलेपी तर्पणी हृद्या ग्राहिणी बलवर्द्धिनी । तृप्या स्वादुरसा लघ्वी दीपनी क्षुत्तृषापहा ॥ इति । मण्डस्त्वित्यादि । मण्डोऽग्निं

ऽपि मधु रूक्षकषायाभ्यां गुणाभ्यामेवाविर्भूतं स्यात्, प्रायेण रूक्षकषायगुणाधिकानामेव मधुमक्षिकाणाञ्च करणादिति बोद्धव्यम् ; अनेन न्यायेन, नानाद्रव्यात्मकत्वेन सर्व्वगुणता मधुनो निरस्ता भवति ; सुश्रुतेऽप्येवमेव योगवाहित्वं "तच्च नाना" इत्यादिना ग्रन्थेन मधुन उक्तम् । इक्षुविकृतिप्राय इति इक्षुविकृतिप्रधानः, तेन यासशर्करादिकथनमप्यत्राविरुद्धमिति भावः ॥ ४९ ॥

[ इतीक्षुवर्गः । १० ।

चक्रपाणिः—सम्प्रति शूकधान्यादिवर्गैर्यथासम्भवं सम्पादितस्य कृतान्नस्य पेयादेर्गुणान् वक्तुं कृतान्नवर्गं उच्यते ; ते च पेयादीनां गुणाः केचित् संस्कारसंयोगादिजाः, केचित् प्राकृता अपि ज्ञेयाः ; न च वाच्यम् — पेयादीनामेव गुणेन वाचितत्वात् शूकधान्यादीनां पृथग्गुणो न

मृदूकरोति स्रोतांसि स्वेदं संजनयत्यपि।
लङ्घितानां विरिक्तानां जीर्णे स्नेहे च तृष्यताम्॥
दीपनत्वाल्लघुत्वाच्च मण्डः स्यात् प्राणधारणः।
तृष्णातिसारशमनो धातुसाम्यकरः शिवः॥
लाजमण्डोऽग्निजननो दाहमूर्च्छानिवारणः।
मन्दाग्निविषमाग्नीनां बालस्थविरयोषिताम्॥
देयः स्यात् सुकुमाराणां लाजमण्डः सुसंस्कृतः।
क्षुत्पिपासापहः * पथ्यः शुद्धानान्तु मलापहः॥
शृतः पिप्पलिशुण्ठीभ्यां युक्तो लाजोऽम्लदाडिमैः। †

दीपयतीत्यादिकर्म्मा लङ्घितादीनां दीपनत्वादिधर्म्मेण प्राणधारणः। एवं तृष्णातिसारशमनः धातुसाम्यकरः शिवश्च। सुश्रुते च— हृद्यः सन्तर्पणो वृष्यो बृंहणो बलवर्द्धनः। माण्डस्तृष्णातिसारघ्नो धातुसाम्यकरः स्मृतः। शाकमांसफलैर्युक्ता यवाग्वस्ताश्च दुर्ज्जराः। इति। यवाग्वस्ताः पेयाविलेपीमण्डात्मिकाः। इति। लाजमण्ड इत्यादि। अग्निजननादिगुणो लाजमण्डो मन्दाग्न्यादीनां देयः स्यात्। सुकुमाराणान्तु सुसंस्कृतो लाजमण्डो देयः स्यात्। शुद्धानान्तु वमनविरेचनादिना शुद्धकोष्ठानां क्षुत्पिपासापहः पथ्यो भवति। पिप्पलीशुण्ठीभ्यां शृतो लाजः पुनरम्लदाडिमैर्युक्तो मलापहः स्यादिति। सुश्रुते च—लाजमण्डो विशुद्धानां पथ्यः पाचनदीपनः। वातानुलोमनो हृद्यः पिप्पली-

वाच्य इति, यतः, पेयादयो हि प्रकृतिगुणानुविधायिनः सन्तः स्वगुणमावहन्ति, तेन कृतान्नस्य गुण उच्यते, स यदि रक्तशाल्यादिप्रकृतावपि भवति, तदा बलवान् भवति, अथ प्रकृतौ विपरीतो गुणो भवति, तदा कृतान्नगुणस्याल्पत्वं भवतीति मन्तव्यम्। अत्र सिक्थातुरहितत्वेनाद्री पेयोच्यते; पेया बहुद्रवा यवागूः, विलेपी विरलद्रवा यवागूः। पेयादिक्रमेणान्ने वक्तव्ये प्रथमोत्पद्यमानत्वेन मण्डगुणकथनम्; दीपनलघुत्वाभ्यामग्निं यस्मात् करोति, तस्माल्लङ्घितादीनां प्राणधारण इति ज्ञेयम्, सुसंस्कृत इति धन्याकपिप्पल्यादिसुसंस्कृतः; शुद्धानां मलापह इति सम्यक् शुद्धानामपि कोष्ठोपलेपकदोषापहरत्वेन, यदुच्यते— शुद्धानामिति ईषच्छुद्धानाम्; तेन ईषच्छुद्धया दोषदोषसम्बन्धान्मलापह इत्युपपन्नम्, तथा

* क्षुत्पिपासासह इति चक्रोक्तः पाठः।

† मण्डः सन्दीपयत्यग्निं वातं चाप्यनुलोमयेत् इत्यधिकः पाठः क्वचित् दृश्यते।

सुधौतः प्रस्रुतः स्विन्नः सन्तप्तश्चौदनो लघुः ॥
भृष्टतण्डुलमिच्छन्ति गरश्लेष्मामयेष्वपि ।
अधौतोऽप्रस्रुतोऽस्विन्नः शीतश्चाप्योदनो गुरुः ॥ ५० ॥
मांसशाकवसातैल-घृतमज्जफलौदनाः ।
बल्याः सन्तर्पणा हृद्या गुरवो बृंहयन्ति च ॥

नागरायुतः । इति । तथा सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता । विलेपी बहुसिक्था स्याद् यवागूर्विरलद्रवा । इति । यवागूः सिक्थैर्विरहितो मण्डः, सिक्थसमन्विता यवागूः पेया, बहुसिक्था विरलद्रवा यवागूर्विलेपीति त्रिधैव यवागूर्न तु मण्डादिभ्योऽतिरिक्ता यवागूः पृथक्तद्गुणवचनाभावात् । इति । यवागूमुक्त्वा ओदनमाह—सुधौत इत्यादि । सुधौततण्डुलः पक्वः स्विन्नः प्रस्रुतो निःशेषेण गालितमण्डः सन्तप्तः सुतप्त ओदनो नाम लघुर्भवति । भृष्टतण्डुलकृतमोदनं गरादिष्विच्छन्ति । अधौततण्डुलकृत ओदनो गुरुः । धौततण्डुलकृतोऽप्योदनोऽप्रस्रुतश्चेत् तदा गुरुः स्यात्, धौततण्डुलकृतो निःशेषेण प्रस्रुतोऽपि चेदस्विन्नः स्यात् तदा गुरुः स्यादेवं धौततण्डुलकृतः प्रस्रुतश्च सुस्विन्नश्च सन्नपि शीतश्चेद्भवति तदा गुरुः स्यादिति ॥ ५० ॥

<u>गङ्गाधरः</u>—अस्यौदनस्याभ्यवहारे तूपकरणैः सह गुणमाह—मांसेत्यादि । मांसादिसहिता ओदना बल्या इत्यादिगुणाः ।

सृष्टेऽपि, "लाजमण्डो विशुद्धानाम्" इत्यत्रोक्त विशोधनीयक्लृप्तानामिति बोध्यम्; तत्र सत्, ईषद्विशुद्धे पेया निषिद्धैव, वचनं हि—"कफपित्ते विशुद्धेऽल्पे मद्यपे वातपैत्तिके । तर्पणादिक्रमः कार्यः पेयाभिष्यन्दयेद्धितान्" ।

स्विन्न इत्युत्स्विन्नधान्यतण्डुलकृतः, किंवा, सम्यक्स्विन्नत्वेन मृदूभूतः, सन्तप्त इति सहजेनोष्मणा, न तु पुनस्तापनेन, वचनं हि—"विवर्जयेत् स्थिरं शीतमन्नमुष्णीकृतं पुनः" इति । भृष्टतण्डुलकृतमोदनं भृष्टतण्डुलम् । अधौतोऽधौततण्डुलकृतः । अत्र सुधौतत्वादिगुणविशिष्टस्यौदनस्य लघुत्ववचनेन तद्विपरीतानामधौतादीनां गुरुत्वमर्थतः सिद्धमपि यत् पुनरुच्यते, तत् स्पष्टार्थम् ॥ ५० ॥

<u>चक्रपाणिः</u>—सन्तर्पणा इति तदात्वेऽपि बलकरा मांसादिसंयोगसाधिताश्च ओदना एव बोध्याः; तत्र रूक्षाभ्यां शाकमुकुष्ठकाभ्यामपि संयुक्तस्यौदनस्य बल्यत्वादि संयोगमहिम्ना तथा घृतादिसंस्कारात्तत्र लोकव्यवहारक्रियमाणत्वात् बोद्धव्यम् । यद्यपि च मुष्णोदकसिक्त-

तद्वन्माषतिलक्षीर-मुद्गसंयोगसाधिताः।
कुल्माषा गुरवो रुक्षा वातला भिन्नवर्च्चसः॥
स्विन्नभक्ष्यास्तु ये केचित् सौप्यगौधूमयावकाः।
भिषक् तेषां यथाद्रव्यमादिशेद्‌ गुरु लाघवम्॥
अकृतं कृतयूषञ्च तनु संस्कारितं रसम्।
सूपमम्लमनम्लञ्च गुरु विद्यात् यथोत्तरम्॥ ५१॥

तद्वदित्यादि। माषादिभिर्व्यस्तैः समस्तैर्वा सह संयोगात् साधिता ओदनास्तद्वद्बल्याः सन्तर्पणा हृद्या गुरवो बृंहयन्ति च। कुल्माषा माषविदल-सहिततण्डुलाः पक्वा ओदना गुरवो रुक्षा वातला भिन्नवर्च्चसश्च। सुश्रुते च—धौतस्तु विमलः शुद्धो मनोज्ञः सुरभिः समः। स्विन्नः सुप्रस्रुतस्तूष्णो विशदस्त्वोदनो लघुः। अधौतोऽप्रस्रुतोऽस्विन्नः शीतश्चाप्योदनो गुरुः। लघुः सुगन्धिः कफहा विज्ञेयो भृष्टतण्डुलः। स्नेहैर्मांसैः फलैः कन्दैर्वैदलाम्लैश्च संयुताः। गुरवो बृंहणा बल्या ये च क्षीरोपसाधिताः। विष्टम्भी पायसो बल्यो मेदःकफकरो गुरुः। कफपित्तकरी बल्या कृशरानिलनाशिनी। स्विन्नेत्यादि। सौप्या मुद्गमाषादयः गोधूमाश्च यवाश्च स्विन्नाः पुनर्ये भक्ष्याः क्रियन्ते ते सौप्या गोधूमा यावका भक्ष्यास्तेषां यथाद्रव्यं गुरु लाघवं भिषग्बुद्ध्यादिशेत्। अथ सूपमाह—अकृतमित्यादि। सस्नेहलवणं सर्व्वमकृतं कटुकैर्विना। लवणस्नेहकटुकैः संस्कृतं कृतमुच्यते। चतुर्दशगुणे तोये अष्टादशगुणेऽथवा। ईषद्भृष्टन्तु विदलं पक्त्वा यूषोऽर्द्धशेषितः। पादशिष्टो भवेत् सूपः साम्लोऽनम्लश्च स द्विधा। तत्र पुनरकृतं यूषं कृतयूषं तनु च संस्कारितञ्च मांसरसं साम्लं सूपमनम्लं सूपञ्च यथोत्तरं गुरु विद्यात्। सुश्रुते च—सुस्विन्नो निस्तुषो भृष्ट ईषत्सूपो लघुर्हितः। इति। मांसरसश्च त्रिविधः। तनुरसस्तनुः सान्द्रश्च। तदुक्तं—पलानि द्वादशप्रस्थे घनेऽथ तनुके च षट्। मांसस्य वट्कं कुर्य्यात् पलमच्छतरे रसे॥ सुश्रुते तु—मांसं स्वभावतो वृष्यं स्नेहनं बलवर्द्धनम्। स्नेहगोरसधान्याम्ल-फलाम्लकटुकैः सह। सिद्धं मांसं हितं बल्यं रोचनं बृंहणं गुरु। तदेव गोरसादानं सुरभिद्रव्यसंस्कृतम्। विद्यात् पित्त-

मीष्टर्द्धस्विन्नमपूपीकृतं कुल्माषमाहुः। स्विन्नभक्ष्या इत्युत्तरत्रैव भक्ष्यकृता इण्डरिकादयः; यथाद्रव्यमिति अद्रव्यान्तर प्रकृतिगुणोपमर्दकसंस्काराभावे न गुणान्तरोदय इति गुरुलघुत्वमिति;

कफोद्रेकि बलमांसाग्निवर्द्धनम् । परिशुष्कं स्थिरं स्निग्धं हर्पणं प्रीणनं गुरु । रोचनं बलमेधाग्नि-मांसौजःशुक्रवर्द्धनम् । तदेवोल्लुप्तपिष्टलादुल्लुप्तमिति पाचकाः । परिशुष्कगुणैर्युक्तं वह्नेः पक्वमतो लघु । तदेव शूलिकाप्रोत-मङ्गारे परिपाचितम् । ज्ञेयं गुरुतरं किञ्चित् प्रदिग्धं गुरुपाकतः । उल्लुप्तं भर्जितं पिष्टमतप्तं कन्दुपाचितम् । परिशुष्कं प्रदिग्धञ्च शूल्यं यच्चान्यदीदृशम् । मांसं यत् तैलसिद्धन्तु वीर्य्योष्णं पित्तकृद् गुरु । लघ्वग्निदीपनं हृद्यं रुच्यं दृष्टिप्रसादनम् । अनुष्णवीर्य्यं पित्तघ्नं मनोज्ञं घृतसाधितम् । प्रीणनः प्राणजननः श्वासकासक्षयापहः । वातपित्तश्रमहरो हृद्यो मांसरसः स्मृतः । स्मृत्योजःस्वरहीनानां ज्वरक्षीणक्षतोरसाम् । भग्नविश्लिष्टसन्धीनां कृशाना-मल्परेतसाम् । आप्यायनः संहननः शुक्रौजोबलवर्द्धनः । स दाड़िमयुतो वृष्यः संस्कृतो दोषनाशनः । यन्मांसमुद्धृतरसं न तत् पुष्टिबलावहम् । विष्टम्भि दुर्ज्जरं रूक्षं विरसं मारुतावहम् । दीप्ताग्नीनां सदा पथ्यः खानिष्कस्तु परं गुरुः । मांसं निरस्थि सुस्विन्नं पुनर्दृषदि चूर्णितम् । पिप्पलीशुण्ठिमरिच-गुड़सर्पिः-समन्वितम् । ऐकध्यं पाचयेत् सम्यक् वेशवार इति स्मृतः । वेशवारो गुरुः स्निग्धो बल्यो वातरुजापहः । प्रीणनः सर्व्वधातूनां विशेषान्मुखशोषिणाम् । क्षत्तृष्णापहरः श्रेष्ठः सौरावः स्वादुशीतलः । कफघ्नो दीपनो हृद्यः शुद्धानां व्रणिनामपि । ज्ञेयः पथ्यतमश्चापि मुद्गयूषः कृताकृतः । स तु दाड़िममृद्वीका युक्तः स्याद् रागषाड़वः । चक्षुष्यो लघुपाकश्च दोषाणामविरोधकृत् । मसूर-मुद्गगोधूम-कुलत्थलवणैः कृतः । कफपित्ताविरोधी स्याद् वातव्याधौ च शस्यते । मृद्वीकादाड़िमैर्युक्तः स एवोक्तोऽनिलार्दिते । रोचनो दीपनो हृद्यो लघु-पाक्युपदिश्यते । पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ । पित्तघ्नौ दीपनौ हृद्यौ क्रिमिकुष्ठज्वरापहौ । श्वासकासप्रतिश्याय-प्रसेकारोचकज्वरान् । हन्ति मूलकयूषस्तु कफमेदोगलामयान् । कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः । तूणीप्रतूणीकासार्शो-गुल्मोदावर्त्तनाशनः । दाड़िमामलकैर्यूषो हृद्यः संशमनो लघुः । प्राणाग्निजननो मूर्च्छा-मेदोघ्नः पित्तवातजित् । मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः । यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः । सर्व्व-धान्यकृतस्तद्वद् बृंहणः प्राणवर्द्धनः । खड़काम्बलिकौ हृद्यौ तथा वातकफे

अकृतकृतयूषलक्षणम्—"अस्नेहलवणं सर्वमकृतं कटुकैर्विना । विज्ञेयं लवणस्नेहकटुकैः संस्कृतं कृतम्" ॥ इति । ससुमिति स्वरमांसत्वेनाघनम्, संस्कारिकमिति बहुमांसादि-संस्कृतत्वात् घनम् ॥ ५१ ॥

शक्तवो वातला रुक्षा बहुवर्च्चोऽनुलोमिनः।
तर्पयन्ति नरं शीघ्रं पीताः सद्योबलाश्च ते॥
मधुरा लघवः शीताः शक्तवः शालिसम्भवाः।
ग्राहिणो रक्तपित्तघ्नास्तृष्णाच्छर्दिज्वरापहाः॥

हितो। बल्यः कफानिलौ हन्ति दाडिमाम्लोऽग्निदीपनः। दध्यम्लः कफकृद्बल्यः स्निग्धो वातहरो गुरुः। तक्राम्लः पित्तकृत् प्रोक्तो विषरक्तप्रदूषणः। खड़ाः खड़यवागवश्च षाड़वाः पानकानि च। एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः। अस्नेहलवणं सर्व्वमकृतं कटुकैर्विना। विज्ञेयं लवणस्नेहकटुकैः संस्कृतं कृतम्। अथ गोरसधान्याम्ल-फलाम्लैरन्वितश्च यत्। यथोत्तरं लघु हितं संस्कृतासंस्कृतं रसे। दधिमस्त्वम्लसिद्धस्तु यूषः काम्बलिकः स्मृतः। तिलपिण्याकविकृतिः शुष्कशाकं विरूढ़कम्। शिण्डाकी च गुरूणि स्युः कफपित्तकराणि च। तद्वच्च वटकान्याहुर्विदाहीनि गुरूणि च। लघवो बृंहणा वृष्या हृद्या रोचनदीपनाः। तृष्णामूर्च्छाभ्रमच्छर्दि श्रमघ्ना रागषाड़वाः। रसाला बृंहणी वृष्या स्निग्धा बल्या च रोचनी॥ इति॥ ५१॥

गङ्गाधरः—शक्तव इत्यादि। शक्तव इति सामान्यतः सर्व्वे वातलादिगुणाः। तेषु शालिसम्भवाः शक्तवो मधुरा लघवः शीताश्च ग्राहिणश्च रक्तपित्तादिहराश्च। सुश्रुते च—शक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः। नातिद्रवा नातिसान्द्रा मन्थ इत्युपदिश्यते। मन्थः सद्योबलकरः पिपासाश्रमनाशनः। साम्लस्नेहगुड़ो मूत्र-कृच्छ्रोदावर्त्तनाशनः। शर्करेक्षुरसद्राक्षा-युक्तः पित्तविकारनुत्। द्राक्षामधुकसंयुक्तः कफरोगनिवर्हणः। वर्गत्रयेणोपहितो मलदोषानुलोमनः। सक्तवो बृंहणा वृष्यास्तृष्णापित्तकफापहाः। पीताः सद्योबलकरा भेदिनः पवनापहाः। गुर्व्वी पिण्डी खरात्यर्थं लघ्वी सैव विपर्य्ययात्। शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका। लाजाश्छर्द्यतिसारघ्ना दीपनाः कफनाशनाः। बल्याः कषायमधुरा लघवस्तृड्मलापहाः। तृट्छर्दिदाहघर्म्मार्त्ति-नुदस्तत्सक्तवो मताः। रक्तपित्तहराश्चैव दाहज्वरविनाशनाः॥ इति।

चक्रपाणिः—सक्तूनां रूक्षत्वेऽपि वातकत्वाभिधानं तत्कस्य रूक्षस्यापि वातकारित्वदर्शनात्, पीताः द्रवत्वेन सक्तूनां पिण्डीभावे निषेधं दर्शयति; तर्पयन्ति तृप्तिं जनयन्ति, सद्योबलाः

हन्याद्‌ व्याधीन् यवापूपो यावको वाट्य एव च ।
उदावर्त्तप्रतिश्यायकासमेहगलग्रहान् ॥
धानासंज्ञाश्च ये भक्ष्याः प्रायस्ते लेखनात्मकाः ।
शुष्कत्वात् तर्पणाश्चैव विष्टम्भित्वाच्च दुर्जराः ॥
विरूढधानाः शष्कुल्यो मधुक्रोडाः सपिण्डकाः ।
पूपाः पूपलिकाद्याश्च गुरवः पैष्टिकाः परम् ॥

हन्यादित्यादि । यवापूपो यवकृतोऽपूपः, यावको यवकृतो मण्डः, वाट्यो भृष्टयवमण्डः, उदावर्त्तादीन् व्याधीन् हन्यात् । सुश्रुते च—उदावर्त्तहरो वाट्यः कासपीनसमेहनुत् । इति । धानेत्यादि । धाना भृष्टयवस्तत्कृता ये भक्ष्या लेखनात्मका इषद्विदारणस्वभावाः । शुष्कत्वात् तर्पणात्तृष्णाजननाः । सुश्रुते च—धानोल्लुम्बास्तु लघवः कफमेदोविशोषणाः । इति । विरूढधानेत्यादि । विरूढा अङ्कुरिता यवा भृष्टा विरूढधानाः । शष्कुल्यः प्रसिद्धाः पिष्टपिण्डगर्भे तिलकल्कादिकं दत्त्वा वेष्टयित्वा पक्वाः । सपिण्डका मधुक्रोडा गोधूमपिण्डमध्ये मधु पूरयित्वा घृते पक्वाः सपिण्डका मधुक्रोडाः । पूपा माषादिपिष्टकृता वटकाः । पूपलिका तु—विमृद्य समिताचूर्णं मृदुपाकं गुडान्वितम् । घृतावगाढे गुडिकां पक्वां भाण्डे सशर्करे । क्षिपेत् सौगन्धिवासाश्च कुर्य्यात् पूपलिकां बुधः ॥ इति । एषा संयावश्चोच्यते । समितामम्बुदुग्धेन मर्दयित्वा सुशोभनाम् । पचेद् घृते क्षिपेत् खण्डान्विते भाण्डे नवे च ताम् । संयावोऽसौ पुनश्चूर्णैस्त्वगेलामरिचार्द्रकैः ॥ इति । आद्यशब्देन घृतपूरादीनां ग्रहणम् । तदुक्तं सुश्रुते—भक्ष्याः क्षीरकृता बल्या वृष्या हृद्याः सुगन्धयः । अदाहिनः पुष्टिकरा दीपनाः पित्तनाशनाः । तेषां प्राणकरा हृद्या घृतपूराः कफावहाः । वातपित्तहरा वृष्या गुरवो रक्तमांसलाः । मर्दिता

गवाक्षेनैव वाजीकरणवद् बलकराः, पूलेन, परिणामेन बलापहत्वमप्युक्तं भवति । यवकृतो वाट्यो यावको वाट्यः, वाट्यो भृष्टयवौदनः । धाना भृष्टयवाः अङ्कुरितस्य यवस्य धाना विरूढधानाः । शष्कुल्यः शालिपिष्टाः सतिलास्तैलपक्वाः क्रियन्ते । मधुक्रोडाः पाकयनीमूलमधुगर्भाः । सपिण्डका इति मधुक्रोडा एव सपिण्डकपिण्डाः, अतस्त्वाह—'विमर्द्य समिताचूर्णं मृदुपाकं गुडान्वितम् । घृतावगाढे गुडिकां वृत्तां पक्वां सशर्कराम् । सौगन्धिकाधिवासाश्च कुर्य्यात् पूपलिकां बुधः । स एव खण्डसंयावः सिताघ्रातकपूरितः ।

फलमांसवसाशाक-पललक्षौद्रसंस्कृताः।

भक्ष्या हृद्याश्च बल्याश्च गुरवो बृंहणात्मकाः।

वेशवारो गुरुः स्निग्धो बलोपचयवर्द्धनः॥

समिता क्षीर-नारिकेलसितादिभिः। अवगाह्य घृते पक्वा घृतपूरोऽयमुच्यते। बृंहणा गौडिका भक्ष्या गुरवोऽनिलनाशनाः। अदाहिनः पित्तहराः शुक्रलाः कफवर्द्धनाः। मधुमस्तकसंयावाः पूपा बले विशेषतः। गुरवो बृंहणाश्चैव मोदकास्तु सुदुर्ज्जराः। रोचनो दीपनः स्वर्य्यः पित्तघ्नः पवनापहः। गुरुर्वृष्य-तमश्चैव सट्टकः प्राणवर्द्धनः। हृद्यः सुगन्धिर्मधुरः स्निग्धः कफहरो गुरुः। वातापहस्तृप्तिकरो बल्यो विष्यन्दनः स्मृतः। बृंहणा वातपित्तघ्ना भक्ष्या बल्यास्तु सामिताः। हृद्याः पथ्यतमास्तेषां लघवः फेनकादयः। मुद्गादिवेस-वाराणां पूर्णा विष्टम्भिनो मताः। वेसवारैः सपिशितैः सम्पूर्णा गुरुबृंहणाः। पाललाः श्लेष्मजननाः शष्कुल्यः कफपित्तलाः। वीर्य्योष्णाः पैष्टिका भक्ष्याः कफपित्तप्रकोपणाः। विदाहिनो नातिबला गुरवश्च विशेषतः। वैदला लघवो भक्ष्याः कषायाः सृष्टमारुताः। विष्टम्भिनः पित्तसमाः श्लेष्मघ्ना भिन्नवर्च्चसः। बल्या वृष्यास्तु गुरवो विज्ञेया माषसाधिताः। कूर्च्चिका-विकृता भक्ष्या गुरवो नातिपित्तलाः। विरूढककृता भक्ष्या गुरवोऽनिल-पित्तलाः। विदाहोत्क्लेशजनना रूक्षा दृष्टिप्रदूषणाः। हृद्याः सुगन्धयो वृष्या लघवो घृतपाचिताः। वातपित्तहरा बल्या वर्णदृष्टिप्रसादनाः। विदाहिन-स्तैलकृता गुरवः कटुपाकिनः। उष्णा मारुतदृष्टिघ्नाः पित्तलास्त्वक्प्रदूषणाः। फलमांसेक्षुविकृति-तिलमाषोपसंस्कृताः। भक्ष्या बल्यास्तु गुरवो बृंहणा हृदयप्रियाः। कपालाङ्गारपक्वास्तु लघवो वातकोपनाः। सुपक्वास्तनवश्चापि भूयिष्ठं लघवो मताः। सकिलाटादयो भक्ष्या गुरवः कफवर्द्धनाः। कुल्माषा वातला रूक्षा गुरवो भिन्नवर्च्चसः। इति। पैष्टिकाः तण्डुलपिष्टकृता भक्ष्याः परं गुरवो भवन्ति। फलेत्यादि। फलादिभिः संस्कृता यावन्तो भक्ष्या हृद्याश्च बल्या-श्चेत्यादिगुणाः। वेशवार इत्यादि। निरस्थि पिशितं पिष्टं स्विन्नं गुडघृता-न्वितम्। कणामरिचसंयुक्तं वेशवार इति स्मृतः। एवं स्विन्नश्च पिष्टश्च मुद्गादि

"मातुलुङ्गत्वचा चैव वेष्टितो मधुशीर्षकः" इति ; मधुशीर्षक एव मधुक्रोडः। पूपाः पिष्टिकाः। पूपलिका आपूपिकेति ख्याता। पललं तिलचूर्णम्। वेशवारः—सुश्रुतोक्ते—"मांसं निरस्थि सुस्विन्नं पुनर्दृषदि पेषितम्। पिप्पलीशुण्ठमरिच-गुडसर्पिःसमन्वितम्। एकध्यं विपचेत् सम्यग्

गुरवस्तर्पणा वृष्याः क्षीरेक्षुरसपूपकाः ॥
सगुडाः सतिलाश्चैव सक्षीरक्षौद्रशर्कराः ।
भक्ष्या वृष्याश्च बल्याश्च परन्तु गुरवः स्मृताः ॥
सस्नेहाः स्नेहसिद्धाश्च भक्ष्या विविधलक्षणाः ।
गुरवस्तर्पणा वृष्या हृद्या गौधूमिका मताः ॥
संस्कारात्लघवः सन्ति भक्ष्या गोधूमपैष्टिकाः ।
धानापर्पटपूपाद्यास्तान् बुद्ध्वा निर्दिशेत् तथा ॥ ५२ ॥
पृथुका गुरवो भृष्टान् भक्षयेदल्पशस्तु तान् ।
या वा विष्टभ्य जीर्य्यन्ति सरसा भिन्नवर्च्चसः ॥

चैव गुडान्वितम् । कणामरिचाज्ययुक्तं वेसवारः स चापरः ॥ तद्वेसवारगर्भास्तु भक्ष्या उक्ताश्च सुश्रुते । गुरव इत्यादि । क्षीरेक्षुरसाभ्यां मर्द्दिता समिता वा पिष्टं वान्यद्वा घृते पक्त्वा पूपाः कृताः गुरवस्तर्पणा वृष्याश्च भवन्ति । सगुडा इत्यादि । समिता तण्डुलपिष्टं वान्यद्वा गुडतिलपिष्टक्षीरक्षौद्रशर्कराभिः सह मेलयित्वा घृते पक्त्वा कृता भक्ष्या गुरवश्च बल्याश्च वृष्याश्च स्मृताः । सस्नेहा इत्यादि । सस्नेहा घृतादिस्नेहयुक्ता एवं स्नेहसिद्धाः घृतादिषु पक्वा विविधलक्षणा भक्ष्याः, गौधूमिका गोधूममया गुरव इत्यादिगुणाः । ते च संस्कारात्लघवश्च सन्ति गौधूमिकाः पैष्टिकाश्च भक्ष्याः । धानेत्यादि । धाना भृष्टयवाः पर्पटाः पूपाद्यास्ते यद्द्रव्यमयाः क्रियन्ते तान् बुद्ध्वा निर्दिशेत् ॥ ५२ ॥

गङ्गाधरः—पृथुका इत्यादि । पृथुकाश्चिपिटा गुरवस्तान् भृष्टानल्पशो भक्षयेत् । याः पृथुका वा सरसा अपरिणताद्रधान्यकृतास्ता विष्टभ्य

वेशवार इति स्थूलम् । क्षीरप्रधानाः पूपाः क्षीरपूपाः । सगुडा इत्यादौ 'सक्षीराः' इति क्षीरयोगमात्रम्, न क्षीरप्रधानतेति न पौनरुक्त्यम् । सस्नेहा इति पिष्टावस्थायामेव स्नेहयोगात् गुरुत्वेनोक्तानामपि भूर्य्यग्निसंयोगादिना संस्काराल्लघव इति । बुद्ध्वा निर्दिशेदिति संस्कारगुणं तथा प्रकृतिगुणञ्च बुद्ध्वा यथोचितं गुणं निर्दिशेत् ॥ ५२ ॥

चक्रपाणिः—पृथुकाश्चिपिटाः । धाना इति यवविपिटाः, अन्ये तु गान्धारदेशप्रसिद्धान्

सूप्यान्नविकृता भक्ष्या वातला रूक्षशीतलाः।
सकटुस्नेहलवणान् भक्षयेदल्पशस्तु तान् ॥
मृदुपाकाश्च ये भक्ष्याः स्थूलाश्च कठिनाश्च ये।
गुरवस्तेऽप्यतिक्रान्तपाकाः पुष्टिबलप्रदाः ॥
द्रव्यसंयोगसंस्कारं द्रव्यमानं पृथक् तथा।
भक्ष्याणामादिशेद् बुद्ध्वा यथास्वं गुरुलाघवम् ॥
नानाद्रव्यसमायुक्तः पक्वो वह्निषु भर्ज्जितः।
विमर्दको • गुरुर्हृद्यो वृष्यो बलवतां हितः ॥ ५३ ॥

जीर्य्यन्ति भिन्नवर्च्चसश्च भवन्ति इति। सुश्रुते च—पृथुका गुरवः स्निग्धा बृंहणाः कफवर्द्धनाः। बल्याः सक्षीरभावात् तु वातघ्ना भिन्नवर्च्चसः ॥ इति। सक्षीरभावादपरिणतात्धान्यकृताः पृथुकाः सक्षीरत्वात् वातघ्ना भिन्नवर्च्चसश्च भवन्ति। सूप्यान्नेत्यादि। ये सूप्यविकृताः शमीधान्यविकृता भक्ष्या भृष्टमुद्गचणकादयो भृष्टतण्डुलादयश्च अन्नविकृताः शूकधान्यविकृताः भक्ष्याश्च ते वातला रूक्षशीतलाश्च। तान् मरिचादिकटुतैलादिस्नेहसैन्धवादिलवणयुक्तानल्पशो भक्षयेत्। मृदुपाकाश्चेत्यादि। ये सूप्यान्नविकृता भक्ष्याः स्थूलाः कठिना मृदुपाकाश्च भवन्ति ते गुरवः। अतिक्रान्तपाकाः खरपाकाः स्थूलाः कठिनाश्च ते पुष्टिबलप्रदा भवन्ति। उपसंहरति—द्रव्येत्यादि। यैर्द्रव्यैर्ये भक्ष्या भवन्ति तेषां भक्ष्याणां द्रव्यसंयोगं संस्कारं द्रव्यमानञ्च पृथक् बुद्ध्वा यथास्वं गुरुलाघवञ्च बुद्ध्वा गुरुलाघवमादिशेत्। सुश्रुते च—द्रव्यसंयोगसंस्कारविकारान् समवेक्ष्य तु। यदा कारणमासाद्य भोक्तृणां छन्दतोऽपि वा। अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान् विनिर्दिशेत्। इति ॥ ५३ ॥

सविष्टसंज्ञानाहुः, सरसा अनुष्टाः। सूप्यविकृता इति मुद्गमाषादिविकाराः। मृदुपाकाः स्तोकाग्निसंयोगपाक्याः; अतिक्रान्तपाका इति चिरेण जरां गच्छन्ति। अनुक्तगुणातिदेशार्थमाह—द्रव्यसंयोगेत्यादि। द्रव्यमानं पृथगिति भक्ष्यकरणे संयुक्तानां मध्ये कस्य क्रियन्मानमिति बुद्ध्वा; यथास्वमिति यस्य द्रव्यस्य गौरवं लाघवं वा यथावद्भवति तं निर्दिशेत् ॥ ५३ ॥

• "नानाद्रव्यैः समायुक्तः पक्वमञ्जिन्नमर्ज्जितैः। निमर्दकः" इति चक्रधृतः पाठः।

रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा।

स्नेहनं तर्पणं हृद्यं वातघ्नं सगुडं दधि॥

द्राक्षाखर्ज्जूरकोलानां गुरु विष्टम्भि पानकम्।

परुषकाणां क्षौद्रस्य यच्चेक्षुविकृतिं प्रति॥

तेषां कट्वम्लसंयोगात् पानकानां पृथक् पृथक्।

द्रव्यं मानञ्च विज्ञाय गुणकर्म्माणि निर्द्दिशेत्॥ ५४॥

कट्वम्लस्वादुलवणा लघवो रागषाड्वाः।

मुखप्रियाश्च हृद्याश्च दीपना भक्तरोचनाः॥

गङ्गाधरः—रसालेत्यादि। रसाला नाम शिखरिणी। तदुक्तम्—सचातुर्जातकाजाजि सगुडार्द्रकनागरम्। रसाला स्याच्छिखरिणी सुघृष्टं ससरं दधि। सुश्रुते च—रसाला बृंहणी बल्या स्निग्धा वृष्या च रोचना। इति। स्नेहनमित्यादि। सगुडं दधि स्नेहनादिगुणं स्यात्। सुश्रुते च—स्नेहनं गुडसंयुक्तं हृद्यं दध्यनिलापहम्। इति। द्राक्षेत्यादि। द्राक्षादीनां व्यस्तसमस्तानां कृतं पानकं गुरु विष्टम्भि च। द्राक्षादीनि पिष्ट्वा जले गालयित्वा वस्त्रपूतं कृत्वा यत् पानाह करोति तत् पानकम्। एवं सर्व्वत्र। एवं परूषकाणां पानकं यच्च क्षौद्रस्य पानकं यच्च पानकमिक्षुविकृतिं प्रति शर्करादिकृतं तेषां पानकानां कट्वम्लसंयोगाल्लिम्पाकदाडिमाद्यम्लमरिचादिकटुद्रव्यसंयोगात् पृथक् पृथक् द्रव्यं मानञ्च तत्तद्द्रव्याणां विज्ञाय गुणकर्म्माणि तेषां पानकानां निर्द्दिशेत्। सुश्रुते च—गौडमम्लमनम्लं वा पानकं गुरु मूत्रलम्। तदेव खण्डमृद्वीकाशर्करासहितं पुनः। साम्लं सुतीक्ष्णं सुहिमं पानकं स्यान्निरत्ययम। मार्द्वीकन्तु श्रमहरं मूर्च्छादाहतृषापहम्। परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम्। द्रव्यसंयोगसंस्कारं ज्ञात्वा मात्राञ्च सर्व्वत। पानकानां यथायोगं गुरु लाघवमादिशेत्॥ इति॥ ५४॥

गङ्गाधरः—कट्वम्लेत्यादि। रागषाड्वा इति। कथितन्तु गुडोपेतं सहकारफलं नवम्। तैलनागरसंयुक्तं विज्ञेयो रागषाड्वः॥ इति नलः। अथवा,

चक्रपाणिः—रसालालक्षणम्,—"सचातुर्जातकाजाजि सगुडार्द्रकनागरम्। रसाला स्याच्छिखरिणी संघृष्टं ससरं दधि॥" रसालाप्रसङ्गेन सगुडदधिगुणमाह—स्नेहनमित्यादि। पानकानामपि कृतान्नभेदात् तद्गुणमाह—द्राक्षेत्यादि। यच्चेक्षुविकृतिं प्रति पानकमिति सम्बन्धः।

आम्रामलकलेहाश्च बृंहणा बलवर्द्धनाः।
रोचनास्तर्पणाश्चोक्ताः स्नेहमाधुर्य्यगौरवात् ॥
बुद्ध्वा संयोगसंस्कारान् द्रव्यमानञ्च तत् स्मृतम्।
गुणकर्म्माणि लेहानां तेषां तेषां तथा वदेत् ॥ ५५ ॥
रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम्।
कन्दमूलफलाद्यञ्च तद्वद् विद्यात् तदासुतम् ॥
शिण्डाकी चासुतञ्चान्यत् कालाम्लं रोचनं लघु।
विद्याद् वर्गं कृतान्नानामेकादशमिमं भिषक् ॥ ५६ ॥

( इति कृतान्नवर्गः। ११। )

सिताारुचकसिद्धार्थैः सवृक्षाम्लपरूषकैः। जम्बूफलरसैर्युक्तो रागो राजिकयान्वितः ॥ इति। षाड़वस्तु मधुराम्लद्रव्यकृत इति कश्चित्, तन्न। रागशब्देन रागषाड़वस्य अभिधानात्। आम्रेत्यादि। आम्रामलकलेहाश्चेत्यादि। आम्रामलकयोः पृथक् स्वरसेन सशर्करेण घनाः क्रियन्ते ये ते तल्लेहाः। स्नेहमाधुर्य्यगौरवात् बृंहणादिगुणा इति। बुद्ध्वेत्यादि। लेहानां तेषां तेषां द्रव्याणां संयोगसंस्कारान् प्रत्येकं बुद्ध्वा मानञ्च तत् स्मृतं कृत्वा यथा गुणकर्म्माणि तथा गुणकर्म्माण्यादिशेत् ॥ ५५ ॥

गङ्गाधरः—रक्तपित्तेत्यादि। शुक्तं नाम चुक्रं सन्धानविशेषः। यन्मस्त्वादि शुचौ भाण्डे सगुड़क्षौद्रकाञ्जिकम्। धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥ इति। कन्देत्यादि। यत् कन्दं यन्मूलं यत् फलं यच्च पुष्पादिकं यद्गुणं तदासुतं तत्कन्दादिकृतासवं तद्वत् तद्गुणं विद्यात्। शिण्डाकीत्यादि। शिण्डाकी स्वनामख्याता। अन्यच्चासुतं यत् किञ्चनकालाम्लं कालेन जातरसमम्लं

रागषाड़वं केचिदेवं वदन्ति—"कपित्थन्तु गुड़ोपेतं सहकारफलं नवम्। तैलनागरसंयुक्तं विज्ञेयो रागषाड़वः ॥" इति। किंवा, "सिताारुचकसिद्धार्थैः सवृक्षाम्लपरूषकैः। जम्बूफलरसैर्युक्तो रागो राजिकयान्वितः ॥ षाड़वस्तु मधुराम्लद्रव्यकृतः। आम्रामलकलेहास्तु तयोः पृथक् क्वाथेन सशर्करेण घनाः क्रियन्ते। अनुक्तानामपि गुणातिदेशार्थम् आह—बुद्ध्वेत्यादि। अस्य "द्रव्यसंयोग" इत्यादिवद् व्याख्यानम् ॥ ५४।५५ ॥

चक्रपाणिः—शुक्तलक्षणम्, "यन्मस्त्वादि शुचौ भाण्डे सगुड़क्षौद्रकाञ्जिकम्। धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥" तदासुतमिति शुक्तमध्यस्थितं मूलककुष्माण्डादि।

कषायानुरसं स्वादु सूक्ष्ममुष्णं व्यवायि च ।
पित्तलं बद्धविण्मूत्रं न च श्लेष्माभिवर्द्धनम् ॥
वातघ्नमुत्तमं बल्यं त्वच्यं मेधाग्निवर्द्धनम् ।
तैलं संयोगसंस्कारात् सर्व्वरोगापहं मतम् ॥
तैलप्रयोगादजरा निर्व्विकारा जितश्रमाः ।
आसन्नतिबलाः संख्ये दैत्याधिपतयः पुरा ॥ ५७ ॥

भवति तत् सर्व्वं रोचनं लघु च। सुश्रुते च—शिण्डाकी गुरुरुक्ताऽत्र तु लघुः। तेन नातिगुरुर्नातिलघुरिति विद्यात्। वर्गं समापयति—विद्यादित्यादि। इमं कृतान्नानां वर्गमेकादशं भिषग् विद्यात् ॥ ५६ ॥

इत्येकादशः कृतान्नवर्गः । ११ ।

गङ्गाधरः—अथ क्रमिकत्वादाहारयौगिकवर्गमाह—तत्र संस्कारे तैलस्य प्राधान्यादादावाह गुणकर्म्माणि। कषायेत्यादि। तैलं तिलप्रभवस्नेहः। कषायानुरसं व्यवायीति व्यवायी देहमखिलं व्याप्य पाकाय कल्पते। स च कार्य्यगुणस्तीक्ष्णगुणसम्भूतो नातिरिक्तः। संयोगसंस्कारादिति। तैलस्याभ्यवहार्य्यद्रव्येण संयोगः, संस्कारो भेषजद्रव्येण पाकादितो गुणान्तराधानम्। ततः सर्व्वरोगापहं तैलं मतम्।

तत्र पुरावृत्तमाह तैलेत्यादि। यहत्रो दैत्याधिपतयः पुरा तैलप्रयोगात् तैलाभ्यङ्गादितः अजरादयो भूत्वा सङ्ख्ये युद्धेऽतिबला आसन्। सुश्रुते च—तैलन्त्वाग्नेयमुष्णं तीक्ष्णं मधुरं मधुरविपाकं बृंहणं प्रीणनं व्यवायि सूक्ष्मं विशदं गुरु सरं विकाशि वृष्यं त्वक्प्रसादनं मेधामार्द्दवमांसस्थैर्य्यवर्णबलकरं चक्षुष्यं बद्धमूत्रं लेखनं तिक्तकषायानुरसं पाचनमनिलबलाशक्षयकरं क्रिमिघ्नमशीतपित्तजननं योनिशिरःकर्णशूलप्रशमनं गर्भाशयशोधनञ्च। तथा छिन्नभिन्न-विद्धोत्पिष्टच्युतमथित-क्षतपिच्चितभग्नस्फुटित-क्षाराग्निदग्धविश्लिष्ट-

शिण्डाकी स्वनामप्रसिद्धा तीव्रशुक्ती। आसुतत्वान्यदिति सन्धानान्तरं; कालाम्लमिति चिरकालावस्थानादम्लं न त्वम्लद्रव्यसंयोगात्। कृतान्नानामिति करणनिष्पादितमण्डपेयादीनाम् ॥५६॥

इति कृतान्नवर्गः । ११ ।

चक्रपाणिः—आहारमभिधाय तद्योगिद्रव्यमुच्यते; तत्र सर्पिष उक्तत्वात् तैलमेवासव-संस्कारप्रधानत्वादाह—कषायेत्यादि। संयोगश्च संस्कारश्चेति संयोगसंस्कारात्, संस्कारः

एरण्डतैलं मधुरं गुरु श्लेष्माभिवर्द्धनम्।
वातासृग्गुल्महृद्रोग-जीर्णज्वरहरं परम्॥
कटूष्णं सार्षपं तैलं रक्तपित्तप्रदूषणम्।
कफशुक्रानिलहरं कण्डूकुष्ठविनाशनम् * ॥
आतस्यं मधुराम्लन्तु विपाके कटुकं तथा।
उष्णवीर्य्यं हितं वाते रक्तपित्तप्रकोपणम्॥
कुसुम्भतैलमुष्णञ्च विपाके कटुकं गुरु।
विदाहि च विशेषेण सर्व्वरोगप्रकोपणम्॥

दारिताभिहतदुर्भग्नमृगव्यालविदष्टप्रभृतिषु च परिषेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते। तद्वस्तिषु च पाने च नस्ये कर्णाक्षिपूरणे। अन्नपानविधौ चापि प्रयोज्यं वातशान्तये॥ इति। एरण्डतैलमित्यादि। सुश्रुते च—एरण्डतैलं मधुरमुष्णं तीक्ष्णं दीपनं कटुकषायानुरसं सूक्ष्मं स्रोतोविशोधनं त्वच्यं वृष्यं मधुरविपाकं वयःस्थापनं योनिशुक्रविशोधनमारोग्यमेधाकान्तिस्मृतिबलकरं वातकफहरमधोभागदोषहरञ्च। इति। कटूष्णमित्यादि। कण्डूकुष्ठविनाशनमिति प्रभावात्। सुश्रुते च—निम्बातसीकुसुम्भमूलकजीमूतकवृक्षककृतवेधनार्क-कम्पिल्लकहस्तिकर्ण-पृथ्वीकापीलुकरञ्जेङ्गुदीशिग्रु सर्षपसुवर्च्चल विडङ्गज्योति-ष्मतीफलतैलानि तीक्ष्णानि लघून्युष्णवीर्य्याणि कटूनि कटुविपाकानि सराण्यनिलकफक्रिमिकुष्ठप्रमेहशिरोरोगहराणि चेति। क्रिमिघ्नं सार्षपं तैलं कण्डूकुष्ठापहं लघु। कफमेदोऽनिलहरं लेखनं कटु दीपनम्॥ इति।

आतस्यमित्यादि। अतसीभवमातस्यं तैलमित्यनुवर्त्तते। सुश्रुते च—वातघ्नं मधुरं तेषु क्षौमं तैलं बलावहम्। कटुपाकमचक्षुष्यं स्निग्धोष्णं गुरु पित्तलम्॥ इति। कुसुम्भेत्यादि। कुसुम्भवीजस्य तैलं विशेषण सर्व्वरोग-प्रकोपणमिति प्रभावात्। सुश्रुते च—विपाके कटुकं तैलं कौसुम्भं सर्व्वदोषकृत्। रक्तपित्तकरं तीक्ष्णमचक्षुष्यं विदाहि च॥ क्रिमिघ्नमीङ्गुदीतैलमीषत्तिक्तं

तैलस्य भेषजैः पाकः, संयोगस्तदनुवारणायां ज्ञेयः। संल्ये युद्धे। आतस्यं अतसीतैलम्।

* कण्डूकोठनिवारणम् इति पाठान्तरम्।

पियालतैलं मधुरं गुरु श्लेष्माभिवर्द्धनम् ।
हितमिच्छन्ति नात्यौष्ण्यात् संयोगे वातपित्तयोः ॥
फलानां यानि चान्यानि तैलान्याहारसन्निधौ ।
युज्यन्ते गुणकर्म्मभ्यां तानि ब्रूयाद् यथा फलम् ॥ ५८ ॥

तथा लघु । कुष्ठामयक्रिमिहरं दृष्टिशुक्रबलापहम् ॥ इति । पियालेत्यादि । पियालवीजस्य तैलं मधुरादिगुणं नात्यौष्ण्याद्वातपित्तयोः संयोगे हितमिच्छन्ति तज्ज्ञाः इति । सुश्रुते च—किराततिक्तकातिमुक्तकविभीतकनारिकेल-कोलाक्षोड़जीवन्ती-पियालकव्नु दार-सूर्य्यवल्ली-त्रपुषैर्व्वारुक-कर्कारु-कुष्माण्ड-प्रभृतीनां तैलानि मधुराणि । मधुरविपाकानि वातपित्तप्रशमनानि शीतवीर्य्याण्यभिष्यन्दीनि सृष्टविण्मूत्राणि अग्निप्रसादनानि चेति ।

अनुक्तफलतैलान्युपसंहरति—फलानामित्यादि । यानि च अन्यानि फलानि तेषां यानि तैलानि आहारादिविधौ युज्यन्ते तानि तस्य तस्य फलस्य यानि गुणकर्म्माणि ताभ्यां तानि तैलानि ब्रूयादिति । तथा च सुश्रुते—मधूककाश्मर्य्यपलाशतैलानि मधुरकषायाणि कफपित्तप्रशमनानि च । तुवरकभल्लातकतैले उष्णे मधुरकषाये तिक्तानुरसे वातकफकुष्ठमेदो-मेहक्रिमिहरे उभयतोभागदोषहरे च । सरलदेवदारुगण्डीरशिंशपागुरुसार-स्नेहास्तिक्तकटुकषाया दुष्टव्रणशोधनाः क्रिमिकफकुष्ठानिलहराश्च । तुम्बी-कोशाम्र-दन्ती-द्रवन्तीश्यामा-सप्तलानीलिका-कम्पिल्लक-शङ्खिनीस्नेहास्तिक्तकटु-कषाया अधोभागदोषहराः क्रिमिकफकुष्ठानिलहरा दुष्टव्रणविशोधनाश्च । यवतिक्तातैलं सर्व्वदोषप्रशमनमीषत्तिक्तमग्निदीपनं लेखनं मेध्यं पथ्यं रसायनञ्च । एकैपिकातैलं मधुरमतिशीतं पित्तहरमनिलप्रकोपणं श्लेष्माभि-वर्द्धनञ्च । सहकारतैलमीषत्तिक्तमतिसुगन्धि वातकफहरं रूक्षं कषायं रसवन्नातिपित्तकरञ्च । फलोद्भवानि तैलानि यान्यनुक्तानि कानिचित् । गुणान् कर्म्म च विज्ञाय फलवत् तानि निर्दिशेत् ॥ यावन्तः स्थावराः स्नेहाः समासात् परिकीर्त्तिताः । सर्व्वे तैलगुणा ज्ञेयाः सर्व्वे चानिलनाशनाः ॥ सर्व्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं प्रशस्यते । निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि ॥ ५७।५८ ॥

अनुक्ततैलगुणनिर्देशार्थमाह—फलानामित्यादि । फलानामित्युपलक्षणम्, तेन, सारस्नेहा अपि सुश्रुतोक्ता बोद्धव्याः ; यथाफलमिति यादृशगुणं फलम्, तादृश एव तत्स्नेहोऽपीत्यर्थः ॥५७।५८॥

मधुरो बृंहणो वृष्यो बल्यो मज्जा तथा वसा।
यथासत्त्वन्तु शैत्योष्णे वसामज्ज्ञोर्विनिर्दिशेत् ॥५९॥
स्नेहनं दीपनं वृष्यमुष्णं वातकफापहम्।
विपाके मधुरं हृद्यं रोचनं विश्वभेषजम् ॥
श्लेष्मला मधुरा चार्द्रा गुर्व्वी स्निग्धा च पिप्पली।
सा शुष्का कफवातघ्नी कटूष्णा वृष्यसम्मता ॥

गङ्गाधरः—इति तैलमुक्त्वा मज्जानं वसाञ्चाह—मधुर इत्यादि। मज्जा मधुरादिगुणः तथा वसा च मधुरादिगुणा। तयोर्वसामज्ज्ञोः शैत्योष्ण्ये यथासत्त्वं यस्य सत्त्वस्य जन्तोर्यो मज्जा या वा वसा तस्य शैत्यं चेच्छैत्यं विनिर्दिशेदौष्ण्यं चेदौष्ण्यं विनिर्दिशेत्। सुश्रुते च—ग्राम्यानूपौदकानाञ्च वसामेदोमज्जानो गुरूष्णमधुरा वातघ्नाः। जाङ्गलैकशफक्रव्यादादीनां लघुशीतकषाया रक्तपित्तघ्नाः। प्रतुदविष्किराणां श्लेष्मघ्नाः। तत्र घृततैलवसामेदोमज्जानो यथोत्तरं गुरुविपाका वातहराश्च। इति ॥ ५९ ॥

गङ्गाधरः—आहारयोगिस्नेहानुक्त्वा शेषानाह—स्नेहनमित्यादि। विश्वभेषजं शुण्ठी। सुश्रुते च—नागरं कफवातघ्नं विपाके मधुरं कटु। वृष्योष्णं रोचनं हृद्यं सस्नेहं लघु दीपनम् ॥ इति। श्लेष्मलेत्यादि। आर्द्रा पिप्पली श्लेष्मलेत्यादिगुणा। सा पिप्पली शुष्का कफवातघ्नीत्यादिगुणा। सुश्रुते च—पिप्पली-मरिच-शृङ्गवेरार्द्रक-हिङ्गु-जीरक-कुस्तुम्बुरु-जम्बीरक-सुमुख-सुरसार्ज्जक-भूस्तृण-सुगन्धक-कासमर्दक-कालमालकुठेरकक्षवक-खरपुष्प-शिग्रु-मधुशिग्रु-फणिज्झक-सर्षप-राजिका-कुलाहलवेणु-गण्डीर-तिलपर्णिक-वर्षाभू-चित्रकमूलकपोतिका-लसुन-पलाण्डुकलायप्रभृतीनि। कट्वन्युष्णानि रुच्यानि वातश्लेष्महराणि च। कृतान्नेषूपयुज्यन्ते संस्काराद्यमनेकधा। तेषां गुर्व्वी स्वादुशीता पिप्पल्यार्द्रा

चक्रपाणिः—यथासत्त्वमिति, यः प्राणी आनूपादिरुष्णसत्त्वोष्णः, यस्तु प्राणी जाङ्गलादिः शीतसत्त्वस्य शीत इत्यर्थः ; सामान्येन तु वसामज्ज्ञोर्गुरुत्वादीनत्वं यथा भवति तथा स्नेहाध्याये एवम् प्रोक्तं ॥ ५९ ॥

नात्यर्थमुष्णं मरिचमवृष्यं लघु रोचनम्।
छेदित्वाच्छोषणत्वाच्च दीपनं कफवातजित्॥
वातश्लेष्मविबन्धघ्नं कटूष्णं दीपनं लघु।
हिङ्गु शूलप्रशमनं विद्यात् पाचनरोचनम्॥ ६० ॥
दीपनं रोचनं वृष्यं चक्षुष्यमविदाहि च।
त्रिदोषघ्नं समधुरं सैन्धवं लवणोत्तमम्॥
सौक्ष्म्यादौष्ण्याल्लघुत्वाच्च सौगन्ध्याच्च रुचिप्रदम्।
सौवर्च्चलं विबन्धघ्नं हृद्यमुद्गारशोधि च॥

कफावहा। शुष्का कफानिलघ्नी सा वृष्या पित्ताविरोधिनी॥ इति। नात्यर्थमित्यादि। शुष्कमेव मरिचं नात्यर्थमुष्णमवृष्यादिगुणञ्च छेदित्वाच्छोषणत्वाच्च कफवातजित्। सुश्रुते—स्वादुपाक्यार्द्रमरिचं गुरु श्लेष्मप्रसेकि च। कटूष्णं लघु तच्छुष्कमवृष्यं कफवातजित्। नात्युष्णं नातिशीतञ्च वीर्य्यतो मरिचं सितम्। गुणवन्मरिचेभ्यश्च चक्षुष्यञ्च विशेषतः। जम्बीरः पाचनस्तीक्ष्णः क्रिमिवातकफापहः। सुरभिर्दीपनो रूच्यो मुखवैशद्यकारकः। कफानिलविषश्वास-कासदौगन्ध्यनाशनः। पित्तकृत् पार्श्वशूलघ्नः सुरसः समुदाहृतः। तद्वत् तु सुमुखो ज्ञेयो विशेषाद् गरनाशनः। कफघ्ना लघवो रूक्षाः तीक्ष्णोष्णाः पित्तवर्द्धनाः। कटुपाकरसाश्चैव सुरसार्ज्जकभूस्तृणाः। मधुरः कफवातघ्नः पाचनः कण्ठशोधनः। विशेषतः पित्तहरः सतिक्तः कासमर्दकः॥ इति। वातश्लेष्मेत्यादि। हिङ्गु हिङ्गुनिर्य्यासः। सुश्रुते च—लघूष्णं पाचनं हिङ्गु दीपनं कफवातजित्। कटु स्निग्धं सरं तीक्ष्णं शूलाजीर्णविबन्धनुत्॥ इति॥ ६० ॥

गङ्गाधरः—दीपनमित्यादि। सैन्धवं लवणेषूत्तमम्। सुश्रुते च—सैन्धवसामुद्रविड़सौवर्च्चलरोमकौद्भिदप्रभृतीनि लवणानि यथोत्तरमुष्णानि वातहराणि कफपित्तकराणि यथापूर्व्वं स्निग्धानि स्वादूनि सृष्टमूत्रपुरीषाणि चेति। चक्षुष्यं सैन्धवं हृद्यं रुच्यं लघ्वग्निदीपनम्। स्निग्धं समधुरं वृष्यं शीतं दोषघ्नमुत्तमम्॥ इति। सौक्ष्म्यादित्यादि। सौवर्च्चलं नाम लवणं सौक्ष्म्यात्

चक्रपाणिः—सौक्ष्म्यादित्यादि सौवर्च्चलगुणः। तैक्ष्ण्यादित्यादि विड़गुणः। औद्भिदमुत्-

तैक्ष्ण्यादौष्ण्याद्व्यवायित्वाद् दीपनं शूलनाशनम्।
ऊर्द्धं चाधश्च वातानामानुलोम्यकरं विड़म् ॥
सतिक्तकटु सक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम्।
न काललवणे गन्धः सौवर्च्चलगुणाश्च ते ॥
सामुद्रकं समधुरं सतिक्तं कटु पांशुजम्।
रोचनं लवणं सर्व्वं पाकि स्रंस्यनिलापहम् ॥ ६१ ॥
हृत्पाण्डुग्रहणीरोग-प्लीहानाहगलग्रहान्।
कासं कफजमर्शांसि यावशूको व्यपोहति ॥

औष्ण्याल्लघुत्वाच्च सौगन्ध्याच्च रुचिप्रदम्। सुश्रुते च—लघु सौवर्च्चलं पाके वीर्य्योष्णं विशदं कटु। गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रोचनम्। इति। तैक्ष्ण्यादित्यादि। विड़ं नाम लवणं तैक्ष्ण्यादौष्ण्याद् व्यवायित्वाच्च दीपनत्वादिगुणम्। सुश्रुते च—सक्षार दीपनं रूक्षं शूलहृद्रोगनाशनम्। रोचनं तीक्ष्णमुष्णञ्च विड़ं वातानुलोमनम् ॥ सतिक्तेत्यादि। औद्भिदं नाम लवणं तीक्ष्णमुत्क्लेदि च। सुश्रुते च—लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम्। सतिक्तं कटु सक्षारं विद्याल्लवणमौद्भिदम् ॥ इति। न कालेत्यादि। सौवर्च्चलस्य ये गुणास्ते तु गुणाः सर्व्वे काललवणे वर्त्तन्ते न तु गन्धः, सौवर्च्चलस्य यो गन्धः, स न काललवणे वर्त्तते इति। सामुद्रकमित्यादि। सामुद्रकं करकचं नाम लवणं सतिक्तकं समधुरञ्च। पांशुजञ्च लवणं सतिक्तं कटु। सर्व्वलवणमुपसंहरति—रोचनमित्यादि। सर्व्वमुक्तमनुक्तञ्च लवणं रोचनं पाकि च स्रंसि चानिलापहञ्च। सुश्रुतेऽपराणि लवणान्युक्तानि। तद् यथा—रोमकं तीक्ष्णमत्युष्णं व्यवायि कटुपाकि च। वातघ्नं लघु विष्यन्दि सूक्ष्मं विड्भेदि मूत्रलम्। कफवातक्रिमिहरं लेखनं पित्तकोपनम्। दीपनं पाचनं भेदि लवणं गुटिकाह्वयम्। ऊषसूतं वालुकैलं शैलमूलाकरोद्भवम्। लवणं कटुकं छेदि विहितं कटु चोच्यते ॥ इति ॥ ६१ ॥

गङ्गाधरः—हृदित्यादि। यावशूको यवक्षारः हृद्ग्रहादीन कफजं कासम्

कालिकालवणम्। काललवणं सौवर्च्चलविशेषः दक्षिणसमुद्रसमीपे भवतीति। सामुद्रं करकचम्, पांशुजं पूर्व्वसमुद्रजम् ॥ ६०।६१ ॥

चक्रपाणिः—क्षाराणामपि लवणरसत्वात् क्षारगुणमाह—हृदित्यादि यवक्षारगुणः। लव-

तीक्ष्णोष्णो लघुरुक्षश्च क्लेदी पक्ता विदारणः ।
दहनो दीपनश्छेत्ता सर्व्वक्षारोऽग्निसन्निभः ॥
कारव्यः कुञ्चिकाजाजी-यमानीधान्यतुम्बुरु ।
रोचनं दीपनं वात-कफदौर्गन्ध्यनाशनम् ॥
आहारयोगिणां भक्ति-निश्चयो न तु विद्यते ।
पूर्य्यते द्वादशश्चायं वर्ग आहारयोगिणाम् ॥ ६२ ॥

इति द्वादश आहारयोगी वर्गः । १२ ।

अर्शांसि च व्यपोहति । सुश्रुते च—यवक्षारस्वर्जिकाक्षारपाक्यिमटङ्कणक्षाराः । गुल्मार्शोग्रहणीदोष-शर्कराश्मरिनाशनाः । क्षारास्तु पाचनाः सर्व्वे रक्तपित्तकराः स्मृताः ॥ यो वह्निसमो क्षारो स्वर्जिकायावशूकजो । शुक्रश्लेष्मविबन्धार्शो-गुल्म-प्लीहविनाशनो ॥ उष्णोऽनिलघ्नः प्रक्लेदी ऊषक्षारो बलापहः । मेदोघ्नः पाक्यिमः क्षारो मूत्रवस्तिविशोधनः ॥ विरूक्षणोऽनिलकरः श्लेष्मघ्नः पित्त-दूषणः । अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणः क्षार उच्यते ॥ इति । सर्व्वक्षार-मुपसंहरति—तीक्ष्णोष्ण इत्यादि । सर्व्वक्षारो यो यो द्रव्यभस्मकृतः क्षारः सर्व्व एव तीक्ष्णादिगुणः । दहनो दाहकरः । अग्निसन्निभ इति । कारवीत्यादि । कारवी कृष्णजीरकम्, कुञ्चिका स्वल्पकृष्णजीरकम् । अजाजी जीरकम् । यमानी द्विविधा, धान्यं धन्याकं, तुम्बुरु धन्याकसदृशम्, रोचनादिगुणम् । आहारयोगिणां द्रव्याणां भक्तिनिश्चयो नास्ति युक्तितस्तूपयोजयेदिति भावः । सुश्रुते च—तीक्ष्णोष्णं कटुकं पाके रूक्षं पित्ताग्निवर्द्धनम् । कटु श्लेष्मानिल-हरं गन्धाढ्यं जीरकद्वयम् । कारवी करवी तद्वत् विज्ञेया सोपकुञ्चिका । भक्ष्यव्यञ्जनभोज्येषु विविधेष्ववचारिता । आर्द्रा कुस्तुम्बुरी कुर्य्यात् स्वादु-सौगन्ध्यहृद्यताम् । या शुष्का मधुरा पाके स्निग्धा तृड्दाहनाशनी । दोषघ्नी कटुका किञ्चित्-तिक्ता स्रोतोविशोधिनी । इति । वर्गं समापयति—पूर्य्यत इत्यादि । आहारयोगिणामयं द्वादशवर्गः पूर्य्यते इति ॥ ६२ ॥

इति द्वादश आहारयोगी वर्गः । १२ ।

क्षार इति सर्जिकाक्षारटङ्कणक्षारादिः । कारवी कृष्णजीरकं, कुञ्चिका स्थूलजीरकम्, अजाजी सूक्ष्मजीरकम् । इदानीं तैलादेरुपयुज्याहारसंस्कारकत्वेनाहारयोगि भवतीत्याह—आहारेत्यादि । भक्तिर्विभागः द्रव्यस्येति यावत्, किंवा, भक्तिरिच्छा, तेन पुरुषेच्छानामनियमादुक्तमपि किञ्चित्

शूकधान्यं शमीधान्यं समातीतं प्रशस्यते।
पुराणं प्रायशो रूक्षं प्रायेणाभिनवं गुरु ॥
यद् यदागच्छति क्षिप्रं तत् तल्लघुतरं स्मृतम्।
निस्तुषं युक्तिभृष्टञ्च सूप्यं लघु विपच्यते ॥ ६३ ॥

गङ्गाधरः—अथैषां शूकधान्यादीनामवस्थाभेदेन गुणविशेषानाह—शूकधान्यमित्यादि। शूकधान्यं रक्तशाल्यादिकमुक्तं यत्, यच्च शमीधान्यं मुद्गादिकमुक्तं तत् सर्व्वं समातीतं संवत्सरातीतं प्रशस्यते। तत ऊर्द्ध्वं द्विवर्षातीतं पुराणं शूकधान्यं शमीधान्यञ्च प्रायशो रूक्षं शेषगुणकर्म्म तु नातिवर्त्तते। प्रायेणाभिनवं षण्मासानतीतं शूकधान्यं शमीधान्यं गुरु वर्त्तते शेषगुणकर्म्म तु वर्त्तत एव। सुश्रुते च—अनार्त्तवं व्याधिहतमपर्य्यागतमेव च। अभूमिजं नवञ्चापि न धान्यं गुणवत् स्मृतम् ॥ नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम्। विदाहि गुरु विष्टम्भि विरूढं दृष्टिदूषणम् ॥ इति। यद्यदित्यादि। यद् यच्छूकधान्यं शमीधान्यञ्च क्षिप्रमागच्छति जायते तत्तद्धान्यं लघुतरं स्मृतम्। सुश्रुते च—रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः। अदाहिनो दोषहरा बल्या मूत्रविवर्द्धनाः ॥ शालयश्छिन्नरूढ़ा ये ये रूढ़ा बद्धवर्च्चसः। तिक्ताः कषायाः पित्तघ्ना लघुपाकाः कफापहाः ॥ इति। निस्तुषमित्यादि। सूप्यं सूपयोनि मुद्गादिकं युक्तितो भृष्टं निस्तुषं पक्वं लघु शीघ्रं विपच्यते। सश्रुते च—सुस्विन्नो निस्तुषो भृष्ट ईषत्सूपो लघुर्हितः। इति ॥ ६३ ॥

प्राय आहारयोगि न भवति, तथा अनुक्तमपि रसोनात्रपर्पिकाद्याहारसंयोगि भवतीत्युक्तं भवति ॥ ६२ ॥ [ इत्याहारयोगी वर्गः। १२।]

चक्रपाणिः—सम्प्रत्युक्तानां शूकधान्यादीनां यदनुक्तगुणं तद् वक्तुमाह—शूकधान्यमित्यादि।—समातीतमित्येकवर्षातीतम्, प्रशस्यत इति लाघवात्, हेमन्ते नवधान्यविधानस्यापवादः। आगच्छति क्षिप्रमिति वस्तु सत् शीघ्रं भवति; तेन षष्टिकाः सर्व्वधान्येषु लघवः, ते हि षष्टिरात्रेण भवन्ति; अस्मिंश्च व्याख्याने, व्रीहेः शारदस्य च हैमन्तं शालिं प्रत्यल्पकालत्वेन लघुत्वं प्राप्नोति, तस्मात् सजातीय एव शीघ्रागमनं लाघवहेतुरिति वाच्यम्; किंवा, आगच्छति क्षिप्रमिति शुष्कं सत् क्षिप्रं पच्यते। युक्तिभृष्टमीषद्भृष्टमिति यावत्। सूप्यं सूपाय योग्यं मुद्गमाषादि ॥ ६३ ॥

मृतं कृशममेध्यञ्च * वृद्धं बालं विषैर्हतम् ।
अगोचरभृतं व्याड़-सूदितं मांसमुत्सृजेत् ॥
ततोऽन्यथा हितं मांसं वृंहणं बलवर्द्धनम् ।
प्रीणनः सर्व्वधातूनां हृद्यो मांसरसः परः ॥
शुष्यतां व्याधियुक्तानां कृशानां क्षीणरेतसाम् ।
बलवर्णार्थिनाञ्चैव रसं विद्याद् यथामृतम् ॥
सर्व्वरोगप्रशमनं यथास्वं विहितं रसम् ।
विद्यात् स्वर्य्यं बलकरं वयोबुद्धीन्द्रियायुषाम् ॥

गङ्गाधरः—मृतमित्यादि । मृतं काले स्वयं मृतस्य मांसं. कृशं निराहारादितः कृशस्य मांसम् । अमेध्यं न मेधाहितम् अमेदुरम् । वृद्धस्य मांसं बालस्य मांसं विषविषलिप्तशरादिहतस्य मांसम् अगोचरे भृतम् असात्म्यदेशादिषु पुष्टं व्याड़क्षुदितं सर्पादिदष्टं मांसं त्यजेत् । तत इत्यादि । ततो मृतादिभ्यो-ऽन्यथा मांसं हितमित्यादिगुणम् । सुश्रुते च—तत्र शुष्कपूतिव्याधितविष-सर्पहतदिग्धविद्धजीर्णकृशबालानामसात्म्यचारिणां मांसान्यभक्ष्याणि । यस्माद विगतव्यापन्नापहतपरिणताल्पासम्पूर्णवीर्य्यत्वात् दोषकराणि भवन्ति । अरोचकं प्रतिश्यायं गुरु शुष्कं करोति तत् । विषव्याधिहतं बाल्यं मृतं छर्दिं प्रकोपयेत् । कासश्वासकरं वृद्धं त्रिदोषं व्याधिदूषितम् । क्लिन्न-मुत्क्लेशजननं कृशं वातप्रकोपणम् ॥ एभ्योऽन्येषामुपादेयं मांसमिति । प्रीणन इत्यादि । स्वयंमृतादिव्यतिरिक्तानां मांसरसः प्रीणन इत्यादि-गुणः । शुष्यदादीनां पुंसां मांसस्य रसं यथामृतं तथा विद्यात् । सर्व्व-रोगाणां यथास्वं यस्मिन् व्याधौ यद् विहितं तथा यथास्वमौषधैर्विहितं साधितं मांसस्य रसं प्रशमनं विद्यात् । वयोबुद्धीन्द्रियायुषां बलकरं वृद्धिकरञ्च विद्यात् ।

चक्रपाणिः—मृतमिति स्वयं मृतम्, मेध्यं मेदुरम्, कृशग्रहणेन शुष्कमपि ग्राह्यम् ; अगो-चरभृतम्, यथा—आनूपं धन्वदेशे पुष्टम् ; व्याड़ा व्याघ्रादयः, किंवा व्याड़ः सर्पः ; विषहतन्तु विषदिग्धशस्त्रविद्धम् । मांसरसगुणः—प्रीणन इत्यादि । सर्व्वरोगप्रशमनमिति सर्व्वशब्दो

* कृशममेध्यञ्चेत्यत्र कृशातिमेध्यमिति क्वचित् पाठः ।

१३४

व्यायामनित्याः स्त्रीनित्या मद्यनित्याश्च ये नराः।
नित्यं मांसरसाहारा नातुराः स्युर्न दुर्ब्बलाः ॥ ६४ ॥
क्रिमिवातातपहतं शुष्कं जीर्णमनार्त्तवम्।
शाकं निस्नेहसिद्धञ्च वर्ज्ज्यं यच्चापरिस्रुतम् ॥
पुराणमामं संक्लिष्टं क्रिमिव्याड़हिमातपैः।
अदेशाकालजं क्लिन्नं जह्यात् फलमसाधु तत्।
हरितानां यथा शाकं निर्द्देशः साधनादृते ॥ ६५ ॥

व्यायामेत्यादि। व्यायामनित्यादयो ये नरास्ते नित्यं मांसरसाहाराश्चेद् भवन्ति तदा नातुराः न वा दुर्ब्बलाः स्युः ॥ ६४ ॥

गङ्गाधरः—क्रिमीत्यादि। क्रिमिः कीटः, कीटवातातपहतादिकं शाकं वर्ज्ज्यं वर्ज्जयेत्। स्विन्नं निष्पीड़ितरसं बहुस्नेहं शाकं ग्राह्यम्। सुश्रुते च—पुष्पं पत्रं फलं नालं कन्दाश्च गुरवः क्रमात्। कर्कशं परिजीर्णञ्च क्रिमिजुष्टमदेशजम्। वर्ज्जयेत् पत्रशाकं तद् यदकालविरोहि च॥ स्विन्नं निष्पीड़ितं शाकं हितं स्यात् स्नेहसंस्कृतम्। इति

पुराणमित्यादि। पुराणं बहुकालस्थितं फलमाममपक्वञ्च फलं संक्लिष्टं क्रिम्यादिभिः अदेशजमकालजञ्च फलं क्लिन्नं क्लेदीभूतं फलं जह्याद् यथा पुमानसाधुं जनं त्यजेत्। सुश्रुते च—फलेषु परिपक्वं यद् गुणवत् तदुदाहृतम्। बिल्वादन्यत्र विज्ञेयमामं तद्धि गुणोत्तरम्। ग्राह्युष्णं दीपनं तद्धि कषायकटुतिक्तकम्। व्याधितं क्रिमिजुष्टञ्च पाकातीतमकालजम्। वर्ज्जनीयं फलं सर्व्वमपर्य्यागतमेव च॥ इति। अपर्य्यागतमपरिणतमिति। हरितानामित्यादि। यथा शाकं वर्ज्ज्यमुक्तं तथा हरितानां वर्ज्जने निर्द्देशः कार्य्यः साधनादृते

भूरिबलनः, एतेन उन्मादादौ मांसनिषेधो न विरोधवान् भवति. उक्तं हि—उन्मादे "विशुद्धानि[illegible] ..." इत्यादि। यथात्म्यमिति यस्य व्यायामो विहित इति, तादृशं रसम् ॥ ६४ ॥

चक्रपाणिः—स्नेहेन विना सिद्धं निःस्नेहसिद्धम्। आममित्यपक्वम्, एतच्च बिल्वादीन् विहाय बोद्धव्यम्, अदेशजमित्यनुचितदेशसम्भवम्, अकालजमनार्त्तवम्। साधनादृत इति हरितानामार्द्रकपलाण्डुप्रभृतीनां निःस्नेहसिद्धानामपि तथा परिस्रुतानामपि निर्द्दोषत्वमित्यर्थः।

मद्याम्बुगोरसादीनां स्वे स्वे वर्गे विनिश्चयः।
यदाहारगुणैः पानं विपरीतं तदिष्यते।
अन्नानुपानं धातूनां दृष्टं यन्न विरोधि च ॥
आसवानां समुद्दिष्टामशीतिं चतुरुत्तराम्।
जलं पेयमपेयञ्च परीक्ष्यानुपिबेद्धितम् ॥

शाकसाधनं हि स्विन्नं निष्पीडितरसं प्रभूतस्नेहसाधितमुक्तं, हरितानान्तु तथा साधनं न कार्य्यमिति। अत्र कन्दानामपि वर्ज्जनमुन्नेयम्। तद्यथा सुश्रुते—बालं ह्यनार्त्तवं जीर्णं व्याधितं क्रिमिभक्षितम्। कन्दं विवर्ज्जयेत् सर्व्वं यो वा सम्यङ् न रोहति ॥

कृतान्ने वर्ज्ज्यधान्यादीन्युक्त्वा भोजनादनु यत् पेयं तदाह—मद्येत्यादि। मद्यादीनां द्रव्याणां स्वे स्वे वर्गे यस्य यद्गुणस्य विनिश्चयः कृतः, तत्र यत् पुनराहारद्रव्यगुणैर्विपरीतगुणं स्यात् तत् तस्याहारस्यानु पानमिष्यते। यच्च धातूनामविरोधि स्यात् तदप्यन्नानुपानमिष्यते। इत्यनुपानं सामान्यतोऽभिहितम्। अपरञ्च—आसवानामित्यादि। आसवानां चतुरुत्तरामशीतिं समुद्दिष्टां जलञ्चोद्दिष्टं, तत्र पेयमपेयञ्च परीक्ष्य हितमनुपिबेत्। सुश्रुते च—अम्लेन केचिद्विहता मनुष्या माधुर्य्ययोगे प्रणयीभवन्ति। तथाम्लयोगे मधुरेण तृप्तास्तेषां यथेष्टं प्रवदन्ति पथ्यम् ॥ शीतोष्णतोयासवमद्ययूष-फलाम्लधान्याम्लपयोरसानाम्। यस्यानुपानन्तु हितं भवेद् यत् तस्मै प्रदेयन्त्विह मात्रया तत् ॥ व्याधिञ्च कालञ्च विभाव्य धीरैर्द्रव्याणि भोज्यानि च यानि तानि। सर्व्वानुपानेषु परं वदन्ति मेध्यं यदम्भः शुचिभाजनस्थम्। लोकस्य जन्मप्रभृति प्रशस्तं तोयात्मकाः सर्व्वरसाश्च दृष्टाः। संक्षेप एषोऽभिहितोऽनुपानेष्वतः परं

विनिश्चयः कृत इति शेषः, तथा च मद्यानाम्—"प्रायशोऽभिनवम्" इत्यादिना गुणदोषकथनं कृतमेव, एवं जलेऽपि "पिच्छिलं क्रिमिलम्" इत्यादिना ; गोरसकृताकाहारानुसंयोगिवर्गेषु तु यथोक्तगुणवत् विपरीते विपरीतगुणमनुमेयमिति भावः ॥ ६५ ॥

चक्रपाणिः—सम्प्रत्येषां यदनुपानं कर्त्तव्यं तदेवाह—मद्येत्यादि। आहारगुणैरिति शीतस्नेहगुरुत्वादिभिः, विपरीतमिति विपरीतगुणमनुपेयम् ; एवं रूक्षोऽम्लस्य मधुरं क्षीरं तथा पायसस्य काञ्जिकानुपानं स्यादित्याह—धातूनां यच्च विरोधि चेति ; एवञ्चाम्ले पयोऽनुपीयमानं विरुद्धत्वात् धातुविरोधेन प्रत्युक्तं भवति, एवमन्यदपि विरुद्धं बोद्धव्यम् ; समुद्दिष्टमिति प्रकृ-

स्निग्धोष्णं मारुते शस्तं पित्ते मधुरशीतलम्।
कफेऽनुपानं रूक्षोष्णं क्षये मांसरसः परम्॥
उपवासाध्वभाष्यस्त्री-मारुतातपकर्म्मभिः।
क्लान्तानामनुपानार्थं पयः पथ्यं यथामृतम्॥
सुरा कृशानां पुष्ट्यर्थमनुपानं विधीयते।
कार्श्यार्थं स्थूलदेहानामनु शस्तं मधूदकम्॥
अल्पाग्नीनामनिद्राणां तन्द्राशोकभयक्लमैः।
मद्यमांसोचितानान्तु मद्यमेवानु शस्यते॥ ६६॥

अथोदकानुपानकर्म्म प्रवक्ष्यामि। अनुपानं तर्पयति प्रीणयति

विस्तरतोऽभिधास्ये॥ इति। स्निग्धोष्णमित्यादि। स्निग्धञ्च यदुष्णं यत् पेयं द्रवद्रव्यं तन्मारुते व्याधौ शस्तम्। मधुरञ्च यच्छीतलं तत् पित्ते व्याधौ शस्तम्। रूक्षञ्च यदुष्णं तत् पेयं द्रवद्रव्यं कफेऽनुपातुं शस्तम्। क्षये धातुक्षयेऽनुपानं मांसरसः परं श्रेष्ठं भवति। सुश्रुते च—स्निग्धोष्णं मारुते पथ्यं कफे रूक्षोष्णमिष्यते। अनुपानं हितञ्चापि पित्ते मधुरशीतलम्॥ इति। उपवासेत्यादि। उपवासादिकर्म्मभिः क्लान्तानां यथामृतं तथानुपानार्थं पयः पथ्यं भवति। उक्तञ्च सुश्रुते—क्षीरं घर्म्माध्वभाष्यस्त्रीक्लान्तानाममृतोपमम्। इति। सुरेत्यादि। सुरा कृशानां पुष्ट्यर्थमनुपानं विधीयते। स्थूलदेहानां मेदस्विनां कार्श्यार्थं मधूदकमनुपानं शस्तमिति। तदुक्तं सुश्रुते—सुरा कृशानां स्थूलानामनुपानं मधूदकम्। इति। अल्पाग्नीनामित्यादि। ये मद्यमांसोचिता मद्यमांसाभ्यासयुक्तास्तेषां ये चाल्पाग्नयस्तेषां ये चानिद्रास्तेषां ये च तन्द्राशोकभयक्लमैर्युक्तास्तेषाञ्च मद्यमेवानुपानं शस्यते। सुश्रुते च—मद्यं मद्योचितानान्तु सर्व्वमांसेषु पूजितम्। इति॥ ६५।६६॥

गङ्गाधरः—अथेत्यादि। अन्नपानस्य भोजनादनु जलादिपानं कर्म्म वक्ष्यामीति प्रतिज्ञा। जलमनुपानं, तत् पीतवन्तं तर्पयति तृप्तं करोति। प्रीणयति

पुष्टीदे। पेयमपेयञ्च रूक्षगुणतोऽल्पत्वात् तथा उपयुक्तभोजनापेक्षया। स्निग्धोष्णमित्यादिनापि अनुपानमाह। अनु पश्चात् पीयमनुपानम्। अनुपानगुणमाह—अथेत्यादि। पथ्यमिति स्मृतिः॥६५।६६॥

उर्ज्जयति पर्य्याप्तिमभिनिर्व्वर्त्तयति भुक्तमवसादयति अन्न-संघातं भिनत्ति मार्द्दवमापादयति क्लेदयति जरयति सुख-परिणामितामाशु व्यवायितामाहारस्य जनयतीति ॥ ६७ ॥

भवन्ति चात्र ।

अनुपानं हितं युक्तं तर्पयत्याशु मानवम् ।
सुखं पचति चाहारमायुषे च बलाय च ॥
नोर्द्धाङ्गमारुताविष्टाः न हिक्काश्वासकासिनः ।
न गीतभाष्याध्ययन-प्रसक्ता नोरसि क्षताः ॥
पिबेयुरुदकं भुक्त्वा तद्धि कण्ठोरसि स्थितम् ।
स्नेहमाहारजं हत्वा भूयो दोषाय कल्पते ॥ ६८ ॥

प्रीतं करोति । ऊर्ज्जयति जीवयति बलवन्तं वा करोति । ऊर्ज्ज बलजीवनयोश्चौरादिकः । भुक्त्वा जलादिकमनुपिबतोऽनुपानं तज्जलादिकं भुक्तमासादयत् पर्य्याप्तिं शरीरेण सहैकीभावमभिनिर्व्वर्त्तयति । अन्नसंघातं भिनत्ति । तदन्नस्य मार्द्दवमापादयति । तदन्नं क्लेदयति जरयति सुखपरिणामताञ्चाशु-व्यवायितामखिलदेहव्यापिताञ्च आहारस्य जनयति । इति ॥ ६७ ॥

गङ्गाधरः—तत्र श्लोका वर्त्तन्ते. भवन्ति चात्रेत्याह—अनुपानमित्यादि । उदकमनुपानं हितं युक्तमाशु मानवं तर्पयति । आहारं सुखं पाचयति । आयुषे बलाय च भवति । ये तूर्द्धाङ्गमारुताविष्टा ये हिक्काश्वासकासिनः ये गीतभाष्याध्ययनप्रसक्ता ये चोरसि क्षतास्ते सर्व्वे भुक्त्वा नोदकं पिबेयुः । कस्मात्? तद्धीत्यादि । हि यस्मात् तत् भुक्त्वा पीतमुदकं कण्ठोरसि तेषां कण्ठे वक्षसि च स्थितमाहारजं स्नेहं हत्वा भूयो भूयिष्ठं दोषाय कल्पते कल्पं स्यादिति ।

चक्रपाणिः—यैरनुपानं न कर्त्तव्यम्, तानाह—नोर्द्धाङ्गेत्यादि । कण्ठोरसि स्थितमित्यादिना तदुक्तं भाष्यादीनामनुपानं कण्ठोरसि स्थितमेव भवति नाधो यातीति दर्शयति ; स्नेहमाहारजं हत्वाभिभूय, भूयो दोषाय कल्पते. वातलक्षणं दोषं करोतीत्यर्थः, आहारस्नेहेन यो वातप्रशमः कर्त्तव्यस्तं स्नैग्ध्यप्रकर्षात् प्रागीयमनभिभवतीत्यर्थः ; एतेन यदुच्यते—अपां स्निग्धत्वेन स्नेह-

सुश्रुते चोक्तं—सर्व्वानुपानेषु वरं वदन्ति मेध्यं यदम्भः शुचिभाजनस्थम्। लोकस्य जन्मप्रभृति प्रशस्तं तोयात्मकाः सर्व्वरसाश्च दृष्टाः॥ उष्णोदकानुपानन्तु स्नेहानामथ शस्यते। ऋते भल्लातकस्नेहात् स्नेहात् तौवरकात् तथा॥ अनुपानं वदन्त्येके तैले यूषाम्लकाञ्जिके। शीतोदकं माक्षिकस्य पिष्टान्नस्य च सर्व्वशः। दधिपायसमद्यार्त्तिविषजुष्टे तथैव च। केचित् पिष्टमयस्याहुरनुपानं सुखोदकम्। पयो मांसरसो वापि शालिमुद्गादिभोजिनाम्। युद्धाध्वातपसन्ताप-विषमद्यरुजासु च। माषादेरनुपानन्तु धान्याम्लं दधिमस्तु वा। निरामयाणां चित्रन्तु भक्तमध्ये प्रकीर्त्तितम्। हितं शोणितपित्तेभ्यः क्षीरमिक्षुरसस्तथा। अर्कश्लेष्मशिरीषाणामासवास्तु विषार्त्तिषु॥ भवन्ति चात्र। सर्व्वेषामनुपानानां माहेन्द्रं तोयमुत्तमम्। सात्म्यं यस्य तु यत् तोयं तत् तस्मै हितमुच्यते। उष्णं वाते कफे तोयं पित्ते रक्ते च शीतलम्। दोषवद् गुरु वा भुक्तमतिमात्रमथापि वा। यथोक्तेनानुपानेन सुखमन्नं प्रजीर्य्यति। रोचनं बृंहणं वृष्यं दोषसंघातभेदनम्। तर्पणं मार्द्दवकरं श्रमक्लमहरं सुखम्। दीपनं दोषशमनं पिपासाच्छेदनं परम्। बल्यं वर्णकरं सम्यगनुपानं सदोच्यते। तदादौ कर्शयेत् पीतं स्थापयेन्मध्यसेवितम्। पश्चात् पीतं बृंहयति तस्मात् वीक्ष्य प्रयोजयेत्। स्थिरतां गतमक्लिन्नमन्नमद्रवपायिणाम्। भवत्याबाधजननम् अनुपानमतः पिबेत्। न पिबेच्छ्वासकासार्त्तो रोगे चाप्यूर्द्ध्वजत्रुगे। क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः। पीत्वाध्वभाष्याध्ययन-गेयस्वप्नान् न शीलयेत्। प्रदूष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितम्। स्यन्दाग्निसादच्छर्द्यादीन् आमयान् जनयेद् बहून्। गुरुलाघवचिन्तेयं स्वभावं नातिवर्त्तते। तथा संस्कारमात्रान्न-कालांश्चाप्युत्तरोत्तरम्। मन्दकर्म्मानलारोग्याः सुकुमाराः सुखोचिताः। जन्तवो ये तु तेषां हि चिन्तेयं परिकीर्त्तिता। बलिनः खरभक्ष्या ये ये च दीप्ताग्नयो नराः। कर्म्मनित्याश्च ये तेषां नावश्यं परिकीर्त्यते॥ इति॥ ६८॥

मुपपन्नमिति, यत्तु श्रूयते—हन्त हिं [illegible] वचनात् स्नेहं [illegible] स्नेहं [illegible]र्थः, तदपि न भवति, यतः, स्नेहगुणत्वेन [illegible]मिदमुक्तम्, तत् [illegible]; किंवा, स्नेहमिति सारम्, "यस्मात् देहस्नेहपरिक्षयात् इति देहसारपरिक्षयादित्यर्थः, [illegible] [illegible] गृहीत्वा [illegible] क्रियते॥ ६८॥

अनुपानैकदेशो-*-ऽयमुक्तः प्रायोपयोगिकः।
द्रव्यन्तु न हि निर्द्देष्टुं शक्यं कात्स्न्येन नामभिः॥
यथानामौषधं † किञ्चिद्द देशजानां वचो यथा।
द्रव्यं तत् तत् तथा वाच्यमनुक्तमिह यद्भवेत्॥ ६८॥

गङ्गाधरः—उपसंहरति—अनुपानेत्यादि। कस्मात् प्रायोपयोगिकोऽनुपानैकदेश उक्तो न कृत्स्न इत्यत उच्यते—द्रव्यन्त्वित्यादि। हि यस्माद् द्रव्यं कात्स्न्येन नामभिर्निर्द्देष्टुं न शक्यं कैरपि भवति। यथानाम किञ्चिदौषधन्तु शक्यं स्यात्। देशजानां वचो यथा। यथा कृत्स्नं वचो निर्द्देष्टुं न कैरपि शक्यं देशजानामेकैकदेशजानां वचस्तु शक्यं निर्द्देष्टुमिति, तस्मादिह यदनुक्तं द्रव्यं भवेत् तत् द्रव्यं तथा वाच्यमिति॥ ६९॥

चक्रपाणिः—अन्नपानद्रव्यैकदेशकथनं सहेतुकमाह—अन्नेत्यादि। अन्नपानैकदेशः प्रायोपयोगिक इति बाहुल्येन यदुपयुज्यते, एतेन यद् बाहुल्येनोपयुज्यते तस्य अङ्गप्राहिकतया कथनम्, प्रायोपयुज्यमानानां अङ्गप्राहिकतयाऽल्पकथनमल्पदोषमिति दर्शयति, तथा अल्पदोषस्यापि परिहारार्थम्; तदपि किमिति नोच्यत इत्याह—द्रव्याणीत्यादि। द्रव्याणि कात्स्न्येनेति साकल्येन, निर्द्देष्टुं नामभिरिति नामभिरपि न शक्यं, कैनचिदिति शेषः, हि शब्दो यस्मादर्थे; एतेन सर्व्वाणि द्रव्याणि नाममात्रेणापि वक्तुं कश्चिन्न पारयत्यतिबहुत्वात्, तत् का कथा अशेषान्नपानद्रव्यस्य अङ्गप्राहिकतया गुणकथने प्रतीति भावः, किंवा, नामभिर्युक्तानि तानि कात्स्न्येन निर्द्देष्टुमिति गुणतः कथयितुं न शक्यं केनचिदिति योजना। अथ कथं हि अत्र अकीर्त्तितान्नपानस्य सहि गुणा निर्द्देष्टव्या इत्याह—यथेत्यादि। यथा येन प्रकारेण नानौषधं किञ्चिदिति पूर्व्वाध्याये प्रोक्तं तथा तेन प्रकारेणानुक्तं द्रव्यं वाच्यं, गुणत इति शेषः। पूर्व्वाध्याये हि "तत्र द्रव्याणि गुरुखर" इत्यादिना ग्रन्थेन पार्थिवादिभेदेन विशिष्टेन च कर्म्मणा प्रोक्तानि द्रव्याणि, ततश्चानुक्तं द्रव्यं तेनैव गुरुखरादिना गुणेन पार्थिवत्वादि प्रतिपद्य यथोपयत्वादिकर्म्मकर्तृकतया व्यपदेष्टव्यमित्यर्थः; तदेवानिर्द्दिष्टस्य द्रव्यस्य गुरुखरत्वादि कथं ज्ञेयमित्याह—देशजानां वचो यथेति, देशजा देशान्तरीयाः, तद्देशीयवचनात् ते ते गुरुखरादयो ज्ञेया इत्यर्थः; किंवा, देशजा यथा तत्तद्द्रव्यं व्यवहरन्ति—'इदं मधुरमम्लम्' इत्यादि, तत् प्रतिपद्य, मधुरत्वाम्लत्वादिप्रतिपन्नपृथिव्याद्यात्मकत्वं कारणमिति पृथिव्यादीनां गुर्व्वादिगुणगणेन कर्म्मणा च रसोक्तेन तद् वक्तव्यमित्यर्थः॥ ६९॥

* अन्नपानैकदेश इति चक्रपाणिसम्मतः पाठः।

† यथानामौषधमित्यत्र यथा नानौषधमिति क्वचित् पाठः।

चरः शरीरावयवाः स्वभावो धातवः क्रिया।
लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते ॥
चरोऽनूपजलाकाश-धन्वाद्यो भक्ष्यसंविधिः।
जलजानूपजाश्चैव जलानूपचराश्च ये ॥
गुरुभक्ष्याश्च ये सत्त्वाः सर्व्वे ते गुरवः स्मृताः।
लघुभक्ष्यास्तु लघवो धन्वजा धन्वचारिणः ॥

अथ मांसयोनीनां मृगपक्षिप्रभृतीनामुक्तगुणतो विशेषगुणहेतुमाह—चर इत्यादि। चर इति भक्षणार्थं चरत्यस्मिन् इति चरश्चरणशीलदेशः भक्षणञ्च अनूपजलजाङ्गलादिः। शरीरावयवाः शिरःस्कन्धादयः। स्वभाव इति मांसाशिनामाशिलादिने तु गुरुलाघवादिः स्वस्वगुणनिर्देशेपूक्तत्वात्। धातवः शोणितादयः। क्रिया सततगमनागमनादिरूपा। लिङ्गं पुंस्त्वादि। प्रमाणं ह्रस्वदीर्घादि। संस्कारः पाकादिषु भर्ज्जनादिकरणम्। मात्राऽग्निबलापेक्षिणी द्रव्यपरिमाणभूता चास्मिन्ननुपानविधौ परीक्ष्यते।

तत्र चरमाह—चर इत्यादि। अनूपजलाकाशधन्वाद्यो देशस्तत्र कङ्कर-मांसफलादीनां भक्षसंविधानञ्च चर उच्यते। तन् परीक्ष्यते, किमर्थ? गुरु-लाघवज्ञानार्थम्। कथं विज्ञायते? तदाह—जलजेत्यादि। ये सत्त्वाः प्राणिनो जलजा अनूपजाश्च ये च सत्त्वा जलचराः स्थलजा अनूपदेशचराश्च गुरुद्रव्य-भक्षास्ते गुरवो भवन्ति। ये सत्त्वा धन्वदेशजाः, ये च धन्वदेशचरास्ते लघुद्रव्यभक्षा लघवः स्मृताः। इति चरपरीक्षाप्रयोजनम्।

चक्रपाणिः—अपरमप्यनुक्तान्नपानगुणज्ञानकारणमाह—चर इत्यादि। चरत्यत्र इति चरो देशः, भक्ष्यञ्च सामान्येन गृह्यते; क्रिया व्यापारः, प्रमाणं मानम्, अत्रेत्यन्नपानगुणाधिकरणे।

चरं विवृणोति चरोऽनूपेत्यादि। भक्ष्यस्य संविधिः भक्ष्यभक्षणम्, तत्र अनूप-जलाकाशधन्वाद्य इत्यनेन गतिरूपश्चर इत्युच्यते, भक्ष्यसंविधिवचनेन च भक्ष्यरूपश्चर उच्यते; अत्रैवोदाहरणमाह—जलजेत्यादि। अत्र जलजत्वेनानूपजत्वेन च जले वानूपे वा गतिरेव दृश्यते, न हि जलादौ ये जातास्ते प्रायोऽन्यत्रावतिष्ठन्ते, ये स्थलजा जाता अप्यनूपदेश तिष्ठन्ते प्रायः काकमद्गुप्रभृतयः, तद्ग्रहणार्थमाह—'जलानूपचराश्च ये' इति, एतेन सामान्येन जले प्रायोऽवस्थानादिह जलचरत्वम्, एवमनूपचरत्वाद्यपि ज्ञेयम्। भक्ष्यरूपचरकृतं गुणमाह—गुरुभक्ष्या इत्यादि। धन्वजा धन्वचारिण इत्यत्र चकारो लुप्तनिर्दिष्टो द्रष्टव्यः, तेन आकाश-

शरीरावयवाः सक्थि-शिरःस्कन्धादयस्तथा ।
सक्थि मांसाद् गुरुतरं स्कन्धक्रोड़शिरस्पदम् ॥
वृषणौ चर्म्म मेढ्रञ्च श्रोणीवृक्के यकृद् गुदम् ।
मांसाद् गुरुतरं विद्याद् यथास्वं मध्यमस्थि च ॥ ७० ॥
स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः ।
स्वभावाद् गुरवो माषा वराहमहिषास्तथा ॥

अथ शरीरावयवानाह—शरीरेत्यादि । सक्थिशिरःस्कन्धादयः शरीरावयवास्तेषां परीक्षा किमर्थंस्यत आह—सक्थीत्यादि । सक्थिमांसात् गुरुतरं क्रमेण स्कन्धक्रोड़शिरस्पदम् ।

एवं मांसादपि गुरुतरत्वं येषां तदाह—वृषणावित्यादि । मांसात् गुरुतरं क्रमेण वृषणादिकं विद्यात् । मांसाद् गुरु वृषणौ ततो गुरु चर्म्म ततो गुरु मेढ्रं ततो गुरुः श्रोणी ततो वृक्कं ततो यकृत् प्लीहा च । ततो गुदमिति । अस्थि च यथास्वं यस्य गुरोर्वा गुर्व्वीर्वास्थि मध्यगुरु मध्यलघु । गुरोः सत्त्वस्यास्थि नातिगुरु नातिलघु । लघोः सत्त्वस्यास्थि नातिलघु नातिगुरु ।

स्वभावः किमर्थं परीक्ष्यत इत्यत उच्यते—स्वभावादित्यादि । स्वो भावः स्वभावः स्वरूपं निसर्गः प्रकृतिरित्येकोऽर्थः । तस्मात् स्वरूपत एव मुद्गा लघवः । तथा लघवो लावादयः स्वभावादेव । स्वभावादेव च माषा वराहादयो गुरव इति । स्वभावं परीक्ष्य तत्र चरादितो गुरुलाघवं विविच्य प्रयुञ्जीत ।

चारिणामपि श्येनादीनामनुक्तं लाघवं स्वजातिप्रसहान्तरापेक्षया बोद्धव्यमाकाशस्य लघुत्वात्; यत्तु ब्रूते—आकाशचारिणां गौरवलाघवानियमादकथनमिति, तन्न, तथा सत्याकाशस्याप्रयोजकत्वात् "चरोऽनूपजलाकाशधन्वाद्यः" इत्यत्राकाशकथनं निष्प्रयोजनं स्यात् । मांसाद् गुरुतरं विद्यादिति गुरुत्वेन प्रतिपादनं, सक्थ्यादिमांसात् वृषणादि गुरुतरं विद्यादिति ; यथास्वमित्यत्र शरीरसक्थ्यादीनामेवैतद् गौरवादि, न स्वस्वस्य शरीरापेक्षयेति ज्ञेयम् ; मध्यमित्यन्तरार्थिकं, अस्थि इति अस्थिस्थितं मांसम् । अन्ये तु मध्यमित्यस्थिमध्यगतं मज्जानं ब्रुवते, तच्चातिसुन्दरम्, तस्योत्तरोत्तरधातुत्वेनैव लाघवत्वात् ॥ ७० ॥

धातूनां शोणितादीनां गुरुं विद्याद् यथोत्तरम्।
अलसेभ्यो विशिष्यन्ते प्राणिनो ये बहुक्रियाः॥
गौरवं लिङ्गसामान्ये पुंसां स्त्रीणान्तु लाघवम्।
महाप्रमाणा गुरवः स्वजातौ लघवोऽन्यथा॥

अथ धातवः किमर्थं परीक्ष्यन्ते इत्यत आह—धातूनामित्यादि। रसधातोराहारोपयोगासम्भवादुक्तं शोणितादीनामिति। यथोत्तरं शोणितादिकं गुरु विद्यात्। किमर्थं क्रिया परीक्ष्यते इत्यत आह—अलसेभ्य इत्यादि। अलसा अत्यल्पक्रियास्ते सजातीयेष्वपि लघवः सन्तोऽपि तेभ्यो विशिष्टा लघवो ये बहुक्रिया भवन्ति। तथा ये स्वभावतो गुरवोऽलसास्तेभ्यो विशिष्टा ये बहुक्रिया गुरवः क्रियाबाहुल्याच्च तथा गुरव स्युरिति।

अथ लिङ्गं किमर्थं परीक्ष्यते इत्यत आह—गौरवमित्यादि। लिङ्गसामान्ये पुंसां गौरवं लिङ्गविशेषात् स्त्रीणां लाघवमिति तर्हि किं वराहादीनां गुरूणां स्त्रीणां लावादिभ्यः पुंभ्यो लाघवमिति ? नैवं, लिङ्गं हि पुंस्त्वादिकं सामान्यं सति वा लिङ्गे सामान्ये स्वजातौ पुंसां गौरवं स्त्रीणां लाघवमिति। एतच्च चतुष्पादाभिप्रायेण बोध्यं, यत उक्तं हारीतेन। चतुष्पादेषु लघ्वी स्त्री विहगेषु लघुः पुमानिति। किमर्थं प्रमाणं परीक्ष्यते इत्यत उच्यते—महेत्यादि। स्वजातौ महाप्रमाणा गुरवः स्वल्पप्रमाणा लघवो यथा बृहच्चिङ्गटा गुरवः क्षुद्रचिङ्गटा लघवः। स्वजातिरिहान्तर्यविशेषादन्यत्र जातिविशेषो वराहत्वादिर्लावत्वादिर्न तु यत् सामान्यञ्च विशेषश्च पशुत्वादि पक्षित्वादिः। प्रमाणन्तु द्विविधं स्वभावकृतं वयःकृतञ्च। स्वभावाद्धस्ती महान् वयसा तु प्रथमतः क्षुद्रदेहो मध्ये महादेहः शेष पक्वदेह इति वयसः प्रमाणेऽन्तर्भावः।

चक्रपाणिः—स्वभावादिति प्रकृत्या। क्रियोदाहरणम्—अलसेभ्य इत्यादि, अलसेभ्य इत्यल्पक्रियेभ्यः। विशिष्यन्त इति विशिष्टा भवन्ति लघवो भवन्तीत्यर्थः। लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्गं जातिः, तेन, लिङ्गसामान्ये जातिसामान्ये, एतच्च चतुष्पादाद्यभिप्रायेण बोद्धव्यम्, पक्षिषु विपर्ययः, यदाह हारीतः—"चतुष्पादेषु लघ्वी स्त्री विहगेषु लघुः पुमान्" इति, अन्यत्राप्युक्तम्—"स्त्रियश्चतुष्पदे प्राज्ञाः पुमांसो विहगेषु च"। पुंसाञ्च गौरवे [illegible]

गुरूणां लाघवं विद्यात् संस्कारात् सविपर्य्ययम् ।
व्रीहेर्लाजा यथा च स्युः शक्तूनां सिद्धपिण्डकाः ॥ ७१ ॥

अथ किमर्थं संस्कारः परीक्ष्यते इत्यत उच्यते—गुरूणामित्यादि । यथा संस्कारात् गुरूणां लाघवं विद्यात् तथा सविपर्य्ययं लघूनां संस्काराद् गौरवं विद्यात् । उदाहरति—व्रीहेरित्यादि । व्रीहेर्गुरोर्भर्ज्जनेन संस्काराल्लाजा लघवः स्युः । यथा च लघूनां शक्तूनां पिण्डीकरणात् संस्कारात् सिद्ध-पिण्डिका गुर्व्यः स्युरिति । सुश्रुते चैवमुक्तं तत् यथा—स्त्रियश्चतुष्पादेषु पुमांसो विहङ्गेषु महाशरीरेष्वल्पशरीरा अल्पशरीरेषु महाशरीरा विशिष्टतमा एवमेकजातीयानां महाशरीरेभ्यः कृशशरीरा विशिष्टतमाः । स्थानादिकृतं मांसस्य गुरुलाघवमुपदेक्ष्यामः । तत् यथा—रक्तादिषु शुक्रान्तेषु धातुषु उत्तरोत्तरास्तु गुरुतरास्तथा सक्थिस्कन्धक्रोडशिरस्पादकरकटीपृष्ठचर्म्म-काल्यकयकृदन्त्राणि । शिरः स्कन्धं कटीपृष्ठं सक्थिनी चात्मपक्षयोः । गुरुपूर्व्वं विजानीयात् धातवस्तु यथोत्तरम् । सर्व्वस्य प्राणिनो देहे मध्यो गुरुरुदाहृतः । पूर्व्वभागो गुरुः पुंसामधोभागस्तु योषिताम् । उरोग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम् । पक्षोत्क्षेपात् समो दिष्टो मध्यभागस्तु पक्षिणाम् । अतीव रूक्षं मांसन्तु विहङ्गानां फलाशिनाम् । वृंहणं मांसमत्यर्थं खगानां पिशिताशिनाम् । मत्स्याशिनां पित्तकरं वातघ्नं धान्यचारिणाम् । जलजानूपजा ग्राम्याः क्रव्यादैकशफास्तथा । प्रसहा बिलवासाश्च ये च जङ्गालसंज्ञिताः । प्रतुदा विष्किराश्चैव लघवः स्युर्यथोत्तरम् । अल्पाभिष्यन्दिनश्चैव यथापूर्व्व-मतोऽन्यथा । प्रमाणाधिकास्तु स्वजातौ चाल्पसारा गुरवश्च । सर्व्वप्राणिनां सर्व्वशरीरेभ्यो ये प्रधानतमा भवन्ति यकृत्प्रदेशवर्त्तिनस्तानाददीत । प्रधानलाभाभावे मध्यमवयस्कं सद्यस्कमक्लिष्टमुपादेयं मांसमिति । भवति चात्र ॥ चरः शरीरावयवाः स्वभावो धातवः क्रियाः । लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते ॥ इति ॥ ७०।७१ ॥

मूकत्वं हेतुं न ब्रूते ; किन्तु, स्वभावस्तत्र हेतुः अपवाद इति पश्यामो विहङ्गेषु । सविपर्य्यय-मिति संस्काराल्लघूनामपि गौरवं विद्यादित्यर्थः ; तदेव संस्कारजन्यं लाघवं गौरवञ्चाह—व्रीहे-रित्यादि । गुरोरपि व्रीहेः संस्काराल्लाजा लघव इत्यर्थः, सक्तूनाञ्च लघूनां सिद्धपिण्डिका गुरवः, सिद्धपिण्डिका अग्निपाचिताः पिण्डाः ॥ ७१ ॥

अल्पादाने गुरूणाञ्च लघूनाञ्चातिसेवने ।
मात्राकारणमुद्दिष्टं द्रव्याणां गुरुलाघवे ॥
गुरूणां स्वल्पमादेयं लघूनां तृप्तिरिष्यते ।
मात्रां द्रव्याण्यपेक्षन्ते मात्रा चाग्निमपेक्षते ॥
बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः ।
अन्नपानेन्धनैश्चाग्निर्दीप्यते शाम्यतेऽन्यथा * ॥
गुरुलाघवचिन्तेयं प्रायेणाल्पबलान् प्रति ।
मन्दक्रियाननारोग्यान् सुकुमारान् सुखोचितान् ॥

गङ्गाधरः—अथ किमर्थं मात्रा परीक्ष्यते इत्यत आह—अल्पादान इत्यादि । गुरूणामल्पादाने च लघूनामतिसेवने च द्रव्याणां गुरुलाघवेऽपि सति मात्राकारणं मात्राशितीयेऽध्याये पूर्व्वमुपदिष्टम् । गुरूणां स्वल्पमादेयं लघूनां तृप्तिरिष्यते तत्र द्रव्याणि मात्रामपेक्षन्ते मात्रा चाग्निम् अपेक्षतेऽग्निबलापेक्षिणी हि मात्रा, बलञ्चाग्नौ प्रतिष्ठितमारोग्यञ्चाग्नौ प्रतिष्ठितमायुश्चाग्नौ प्रतिष्ठितं प्राणाश्चाग्नौ प्रतिष्ठिता इति । अग्निश्चान्नपानै-रिन्धनैर्दीप्यतेऽन्यथान्नपानेन्धनैर्विना शाम्यते । तिङोऽपि तङ्कमिच्छन्ति परस्मैपदिनां क्वचिदित्युक्तेस्तङ् । ननु किमेवं चरादिकृतगुरुलाघवचिन्ता किं सर्व्वेष्वेव पुरुषेष्वाहारविधौ कर्त्तव्या भवति ? इत्यत आह—गुरुलाघवेत्यादि । इयं मांसस्य चरादिकृतगुरुलाघवचिन्ता प्रायेणाल्पबलान् मन्दक्रियान् अनारो-

चक्रपाणिः—अल्पादान इत्यादि मात्राविवरणम्,—गुरूणामपि द्रव्याणाम् अल्पस्य सेव-मात्रयादाने यल्लाघवं, तस्मिन् लाघवे मात्रामात्रकारणम्, न द्रव्यं, तस्य गुरुत्वात् ; एवं लघूनामतिसेवने गौरवं मात्राकृतम् ; इदञ्चमिति मात्राशितीये पुनरुक्तम् ; द्रव्याणि मात्राम् अपेक्षन्त इति यथोचितमात्रावन्ति सुखं पच्यन्त इत्यर्थः ; मात्रा चाग्निमपेक्षत इति प्रतिपुरुषं प्रतिदिनञ्चाग्निभेदमपेक्ष्य मात्रा महती स्वल्पा वा भवति, न प्रतिनियतमात्रा क्रियत इति भावः । कुतः पुनरग्न्यपेक्षया मात्रा क्रियत इत्याह—बलमित्यादि । अग्निमपेक्ष्य मात्रया प्रयुक्तया अन्नपानादानात् बलादयो भवन्तीति भावः, अग्नौ प्रतिष्ठिता इति अग्न्यधीनाः, यथा—राजाश्रिताः प्रजा इति ; प्राणा इति वायवः, किंवा, प्राणा आशयाः शङ्खादयो दश प्राणाः ; इन्धनं काष्ठम्, इन्धनमिवेन्धनं, तैः, किंवा, अग्निदाह इन्धनमुच्यते । अन्नपानेन्धनम् । एवं

* ज्वलति श्चेति चान्यथा इति चक्रोक्तः पाठः ।

दीप्ताग्नयः खराहाराः कर्म्मनित्या महोदराः।
ये नराः प्रति तांश्चिन्त्यं नावश्यं गुरुलाघवम् ॥ ७२ ॥
हिताभिर्जुहुयान्नित्यमन्तरग्निं समाहितः।
अन्नपानसमिद्भिर्ना मात्राकालौ विचारयन् ॥
आहिताग्निः सदा पथ्यान्यन्तरग्नौ जुहोति च।
दिवसे दिवसे ब्रह्म जपत्यथ ददाति च ॥
नरं निःश्रेयसे युक्तं सात्म्यज्ञं पानभोजने।
भजन्ते नामयाः केचिद्‌ भाविनोऽप्यन्तरादृते ॥

ग्यान् सुकुमारान् सुखोचितान् पुरुषान् प्रति क्रियते। ये च नरा दीप्ताग्न्यादय-स्तान् प्रति मापादेर्गुरुलाघवं नावश्यं चिन्त्यं भवतीति ॥ ७२ ॥

गङ्गाधरः—ननु ते किं यथेष्टमाहारमश्नीयुरित्यत आह—हिताभिरित्यादि। समाहितः समाधिमान् पुरुषः खलु मात्राकालौ विचारयन् हिताभिरन्न-पानात्मिकाभिः समिद्भिर्नित्यमन्तरग्निं जाठराग्निं जुहुयात्। ताभिर्हिताभि-रन्नपानसमिद्भिः आहिताग्निः सन्नपि सदा प्रतिदिनं पथ्यान्यन्तरग्नौ जुहोति च न खल्वेकवारं हिताभिरन्नपानसमिद्भिरन्तरग्निं जुहुयान्नित्यमेव जुहुयात् एवं सदैवाहिताग्निः अन्तरग्नौ दिवसे दिवसे पथ्यानि जुहोति च ब्रह्म चाजपामन्त्रं जपति च निश्वासोच्छ्वासाभ्यां हंस इति मन्त्रं जपति च ददाति च ब्रह्मैव हंस इमं मन्त्रं निश्वासेन त्यजति। एवं पानभोजने निःश्रेयसे युक्तं सात्म्यज्ञं नरं

बलादिकृता गुरुलाघवचिन्ता अल्पाग्निं प्रति प्राय इति दर्शयन्नाह—गुर्वित्यादि। अत्राप्यबलत्वेन मन्दकार्यैरपि वह्निमान्द्यमेव लक्षणीयम्। खराहारा इति कठिनाहारसामर्थ्याः, महोदरत्वेनापि मेदसोऽवरोधात् महाग्नित्वं दर्शयति, नावश्यं चिन्त्यमित्यनेन दीप्ताग्नीनामपि प्रतिलोमप्रयोजनाय गुरुलाघवचिन्ता विधेय इति दर्शयति, यतः, दीप्ताग्न्यादीनामपि गुरुद्रव्यमग्नेः प्रतिपक्षमावहत्येव, स्वभावतोऽग्निविकृतत्वात् ॥ ७२ ॥

चक्रपाणिः—समिध इव समिधः, आहिताग्निरिति सादृश्येन स्थापिताग्निः, किंवा, आहिताग्निरिवाहिताग्निः, तेन, आहिताग्निर्यथा प्रातः सायं जुहोति, तथायमपि प्रातः सायञ्च पथ्यान्यन्तराग्नौ जुहोति। ब्रह्म जपतीति प्रणवादिमन्त्रमावर्त्तयति; ददाति चेति यथाशक्ति दानमाचरति, तं नरं निःश्रेयसे कल्याणे युक्तमामया न भजन्ते, भाविनोऽपीति जन्मान्तरेऽपि, यथैव जन्मनि पथ्यासेवित्वात् भवन्ति तथा जन्मान्तरेऽपि तदुपशमोपायानाम् प्रवर्त्तकधर्म्मप्रभावात्

षट्त्रिंशतं सहस्राणि रात्रीणां हितभोजनः ।
जीवत्यनातुरो जन्तुर्जितात्मा सम्मतः सताम् ॥ ७३ ॥

भाविनोऽपि केचिदामया अन्तराहते विनान्तरमवकाशं विना न भजन्ते यदा त्वन्तरमहितपानभोजनं प्राप्नुवन्ति तदा भजन्ते इति ।

एवं हितान्नपाने यावन्तं कालं जीवति तदाह—षट्त्रिंशतमित्यादि । रात्रीणां षट्त्रिंशतं सहस्राणि खल्वन्तरेण दिनानि सम्भवन्तीत्यतोऽहोरात्राणां षट्त्रिंशत्सहस्राणि । त्रिंशद्दिनमासानां द्वादशभिर्वर्षमेकं, तेषां वर्षाणां शतं भवति, तावत्कालं हितभोजनो जन्तुरनातुरः सन जितात्मा च सन् सतां सम्मतः सन् जीवतीति । नन्वेवं हितमन्नपानं केन प्रकारेणाभ्यवहरेदिति चेदुच्यते, तदा तदुन्नेयम् । सश्रुते तु तदुक्तम्—अथाहारविधिं वत्स विस्तरेणाखिलं शृणु । आप्तान्वितमसङ्कीर्णं शुचि कार्य्यं महानसम् । तत्राप्तैर्गुणसम्पन्नमन्नं भक्ष्यं सुसंस्कृतम् । शुचौ देशे सुसंगुप्तं समुपस्थापयेद् भिषक् । विषघ्नैरगदैः स्पृष्टं प्रोक्षितं व्यजनोदकैः । सिद्धैर्मन्त्रैर्हतविषं सिद्धमन्नं निवेदयेत् । वक्ष्याम्यतः परं कृत्स्नामाहारस्योपकल्पनाम् । घृतं कार्ष्णायसे देयं पेया देया तु राजते । फलानि सर्व्वभक्ष्यांश्च प्रदद्याद् वैदलेषु च । परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत् । प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् । कट्वराणि खडांश्चैव सर्व्वान् शैलेषु दापयेत् । दद्यात् ताम्रमये पात्रे सुशीतं सुशृतं पयः । पानीयं पानकं मद्यं मृन्मयेषु प्रदापयेत् । काचस्फटिकपात्रेषु शीतलेषु शुभेषु च । दद्याद् वैदूर्य्यपात्रेषु रागषाडवसट्टकान् । पुरस्ताद् विमले पात्रे सुविस्तीर्णे मनोरमे । सूदः सूपौदनं दद्यात् प्रदेहांश्च सुसंस्कृतान् । फलानि सर्व्वभक्ष्यांश्च परिशुष्काणि यानि च । तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् । प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः । खडान् यूषांश्च पेयाश्च सव्ये पार्श्वे प्रदापयेत् । सर्व्वान् गुडविकारांश्च रागषाडवसट्टकान् । पुरस्तात् स्थापयेत् प्राज्ञो द्वयोरपि च मध्यतः । एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम् । भोक्तारं विजने रम्ये निःसम्बाधे शुभे शुचौ ।

एव न भवन्ति; अत एवाह—अन्तराहते इति, अन्तरादिति कारणात् ऋते विना, अवश्यकर्तव्य तथा अवश्यंभाविरोगकरणाभावात् यदा भवन्तीति भावः । वर्षशतायुष्ट्वमपि हितादिभोजनाद् भवतीत्याह—षट्त्रिंशतमित्यादि । एतावतीभी रात्रिभिर्वर्षशतमेव भवतीति, जितात्मा जितेन्द्रियः, सम्मतः पूजितः ॥ ७३ ॥

सुगन्धिपुष्परचिते समे देशेऽथ भोजयेत्। विशिष्टमिष्टसंस्कारैः पथ्यैरिष्टै रसादिभिः। मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम्। पूर्व्वं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ। पश्चाच्छेषान् रसान् वैद्यो भोजनेष्ववचारयेत्। आदौ फलानि भुञ्जीत दाड़िमादीनि बुद्धिमान। ततः पेयांस्ततो भोज्यान् भक्ष्यांश्चित्रांस्ततः परम्। घनं पूर्व्वं समश्नीयात् केचिदाहुर्विपर्य्ययम्। आदावन्ते च मध्ये च भोजनस्य तु शस्यते। निरत्ययं दोषहरं फलेष्वामलकं नृणाम्। मृणालबिसशालूक-कन्देक्षुप्रभृतीनि च। पूर्व्वं भोज्यानि भिषजा न तु भुक्ते कथञ्चन। सुखमुच्चैः समासीनः समदेहोऽन्नतत्परः। काले सात्म्यं लघु स्निग्धं क्षिप्रमुष्णं द्रवोत्तरम्। बुभुक्षितोऽन्नमश्नीयात् मात्रावद् विदितागमः। काले भुक्तं प्रीणयति सात्म्यमन्नं न बाधते। लघु शीघ्रं व्रजेत् पाकं स्निग्धोष्णं बलवह्निदम्। क्षिप्रं भुक्तं समं पाकं यात्यदोषं द्रवोत्तरम्। सुखं जीर्य्यति मात्रावत् धातुसाम्यं करोति च। अतोवायतयामास्तु क्षपा येष्वृतुषु स्मृताः। तेषु तत्प्रत्यनीकाढ्यं भुञ्जीत प्रातरेव तु। येषु चापि भवेयुश्च दिवसा भृशमायताः। तेषु तत्कालविहितमपराह्णे प्रशस्यते। रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः। कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम्। नाप्राप्तातीतकालं वा हीनाधिकमथापि वा। अप्राप्तकाले भुञ्जानः शरीरे ह्यलघौ नरः। तांस्तान् व्याधीनवाप्नोति मरणं वा स गच्छति। अतीतकाले भुञ्जानो वायुनोपहतेऽनले। कृच्छ्राद् विपच्यते भुक्तं द्वितीयञ्च न काङ्क्षति। हीनमात्रमसन्तोषं करोति च बलक्षयम्। आलस्यगौरवाटोप-सादांश्च कुरुतेऽधिकम्। तस्मात् सुसंस्कृतं युक्त्या दोषैरेतैर्विवर्ज्जितम्। यथोक्तगुणसम्पन्नमुपसेवेत भोजनम्। विभज्य कालदोषादीन् कालयोरुभयोरपि। अचोक्षं दुष्टमुच्छिष्टं पाषाणतृणलोष्ट्रवत्। द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्ज्जयेत्। चिरसिद्धं स्थिरं शीतमन्नमुष्णीकृतं पुनः। अशान्तमुपदग्धञ्च तथा स्वादु न लक्ष्यते। यद् यत् स्वादुतरं तत्र विदध्यादुत्तरोत्तरम्। प्रक्षालयेदद्भिरास्यं भुञ्जानस्य मुहुर्म्मुहुः। विशुद्धरसने तस्मिन् रोचतेऽन्नमपूर्व्ववत्। स्वादुना तस्य रसनं प्रथमेनापि तर्पितम्। न तथा स्वादयेदन्यत् तस्मात् प्रक्षाल्यमन्तरा। सौमनस्यं बलं पुष्टिमुत्साहं हर्षणं सुखम्। स्वादु सञ्जनयत्यन्नमस्वादु च विपर्य्ययम्। भुक्त्वा च यत् प्रार्थयते भूयस्तत् स्वादु भोजनम्। अशितश्चोदकं युक्त्या भुञ्जानश्चान्तरा पिबेत्। दन्तान्तरगतञ्चान्नं शोधनेन हरेच्छनैः। कुर्य्यादनाहृतं तद्धि मुखस्यानिष्ट-

भवतश्चात्र।

प्राणाः प्राणभृतामन्नमन्नं लोकोऽभिधावति।
वर्णप्रसादः सौन्दर्य्यं जीवितं प्रतिभा सुखम्॥
तुष्टिः पुष्टिर्बलं मेधा सर्व्वमन्ने प्रतिष्ठितम्।
लौकिकं कर्म्म यद्द वृत्तौ सद्वृत्तं * यच्च वैदिकम्।
कर्म्मापवर्गे यच्चोक्तं तच्चाप्यन्ने प्रतिष्ठितम्॥ ७८॥

गन्धताम्। जीर्णेऽन्ने वर्द्धते वायुर्विदग्धे पित्तमेव तु। भुक्तमात्रे कफश्चापि तस्माद् भुक्ते हरेत् कफम्। धूमेनापोह्य हृद्यैर्वा कषायकटुतिक्तकैः। पूगककोल-कर्पूर-लवङ्गसुमनःफलैः। कटुतिक्तकषायैर्वा मुखवैशद्यकारकैः। ताम्बूलपत्र-सहितैः सुगन्धैर्वा विचक्षणः। भुक्त्वा राजवदासीत यावदन्नक्लमो गतः। ततः पदशतं गत्वा वामपार्श्वे तु संविशेत्। शब्दरूपरसान् गन्धान् स्पर्शांश्च मनसः प्रियान्। भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति। शब्दरूपरसस्पर्श-गन्धाश्चापि जुगुप्सिताः। अशुच्यन्नं तथा भुक्तमतिहास्यञ्च वामयेत्। शयनञ्चासनञ्चापि नेच्छेद्वापि द्रवोत्तरम्। नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम्। न चैक-रससेवायां प्रसज्येत कदाचन। शाकावराक्भूयिष्ठमम्लञ्च न समाचरेत्। एकैकशः समस्तान् वा नाप्यश्नीयाद् रसान् सदा। प्राग्भुक्ते त्वविरिक्तेऽस्मो द्विरन्नं न समाचरेत्। पूर्व्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम्। मात्रागुरु परिहरेदाहारं द्रव्यतश्च यः। पिष्टान्नं नैव भुञ्जीत मात्रया वा बुभुक्षितः। द्विगुणञ्च पिबेत् तोयं सुखं सम्यक् प्रजीर्य्यते। पेयलेह्याद्यभक्षाणां गुरु विद्याद् यथोत्तरम्। गुरूणामर्द्धसौहित्यं लघूनां तृप्तिरिष्यते। द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते। द्रवाढ्यमपि शुष्कन्तु सम्यगेवोपपद्यते। विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति। पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति। स्रोतस्यन्न-वाहे पित्तं पक्तौ वा यस्य तिष्ठति। विदाहि भुक्तमन्यद् वा तस्याप्यन्नं विदह्यते। शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत्॥ इति॥ ७३॥

गङ्गाधरः—अधिकार्थमाह—भवतश्चात्रेत्यादि। प्राणा इत्यादि। प्राणभृताम् अन्नं प्राणास्तस्माल्लोकोऽन्नं धावति। वर्णप्रसादादिमेधान्तं सर्व्वमन्ने प्रति-

चक्रपाणिः—किमर्थं प्रयत्नादन्नविधिरेतावत् परीक्ष्यमित्याह—प्राणा इत्यादि। अभिधावतीति प्रार्थयति, प्रतिभा प्रज्ञा, मेधा धारणावती धीः, लौकिकमित्यपरीक्षकलोके प्रवृत्तम्, अपरीक्षका पुन

* वार्त्तौ इति चक्रसम्मतः पाठः।

तत्र श्लोकौ ।

अन्नपानगुणाः साग्र्या वर्गा द्वादश निश्चिताः ।
सगुणान्यनुपानानि गुरुलाघवसंग्रहः ।
अन्नपानविधावुक्तं तत् परीक्ष्यं विशेषतः ॥ ७५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽन्नपान-
चतुष्केऽन्नपानविधिर्नाम सप्तविंशोऽध्यायः ॥ २७ ॥

ष्ठितम् । तत्र प्रतिभा श्रुतमात्रमर्थतत्त्वावबोधः । एवं वृत्तौ देहयात्रायां यत् कर्म्म यच्च सद्वृत्तमुक्तं यच्च वैदिकं कर्म्म यच्चापवर्गे मोक्षे कर्म्मयोगादिसाधनमुक्तं तत्रापि सर्व्वमन्ने प्रतिष्ठितमिति ॥ ७४ ॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोकावित्यादि । साग्र्याः श्रेष्ठगुणसहिता अन्नपानगुणाः शूकधान्यादीनां द्वादश वर्गाः । अनुपानानि तेषां गुणाश्च गुरुलाघवयोः संग्रहः सक्त्वादीनां क्रमेण । चरः शरीरावयवा इत्यादिना तयोर्गुरुलाघवयोः परीक्ष्यमस्मिन्नन्नपानविधावुक्तमिति ॥ ७५ ॥

अध्यायं समापयति—अग्नीत्यादि । पूर्व्ववद् व्याख्येयम् ।

इति श्रीगङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ सूत्रस्थानीय-
सप्तविंशान्नपानादिकाध्यायजल्पाख्या सप्तविंशी शाखा ॥ २७ ॥

हि वर्त्तमानमात्रे प्रवर्त्तन्ते, परीक्षकास्तु जन्मान्तरोपकारिण्येव प्रायः, कर्म्म यद् वृत्ताविति वर्त्तमाने साध्ये यत् कृष्यादि कर्म्म, स्वर्गतायेति स्वर्गगमने, वैदिकमिति यज्ञादि; अपवर्ग इति मोक्षे; एतात्र निमित्तसप्तमी; यच्चोक्तमिति मोक्षशास्त्रे सत्यं ब्रह्मचर्य्यादि अत्र प्रतिष्ठितम् इति, अन्नविकारजनदेहस्थित्यभावेन सर्व्वारम्भाभावात्, यस्मादन्नं सर्व्वत्र कारणं, तस्मात्तत्र भातव्यमिति ॥ ७४ ॥

चक्रपाणिः—संग्रहेऽन्नपानगुणा इति द्वव्वर्गम् इत्यादिनोक्ताः, साग्र्या इति "वर्क्कं कृशयति" इत्यादिना, वर्क्कादयो हि कृशनादिषु अग्र्याः श्रेष्ठा इत्यर्थः ॥ ७५ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-
व्याख्यायाम् अन्नपानविधिर्नाम सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः ।

अथातो विविधाशितपीतीयमध्यायं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

विविधमशितं पीतं लीढं खादितं जन्तोर्हितमन्तरग्नि-

गङ्गाधरः—अथान्ने यथा वर्णप्रसादादिकं प्रतिष्ठितं तदुपदेष्टुमाह—अथात इत्यादि । सर्व्वं पूर्व्ववद् व्याख्येयम् । विविधाशितपीतीयमिति—अस्मिन् अध्याये प्रथमं विविधमशितपीतमित्यादि अत ऊर्द्ध्वं वक्ष्यते तत्र यत्तत्पदार्थं विविधाशितपीतं तदधिकृत्य कृतोऽध्याय इति विविधाशितपीतीय इति । वक्ष्यते ह्यर्थे दशमहामूलीये । अधिकृत्याथमध्यायमिति ॥ १ ॥

गङ्गाधरः—विविधमित्यादि । विविधमशितं शाल्यपष्टिकादि नानाविध शूकधान्यकृतनानाद्रव्यविकारभूतं प्रधानतयाभ्यवहृतमन्नम् । तथा विविधं पीतमान्तरीक्षादि जल-दुग्धदधिघृतमधुमद्यासवकाञ्जिकारिष्टचुक्रतक्रपानकादिकं पानार्थं द्रवभूतम् । विविधं लीढमिति नानाविधशूकशमीधान्यविकार-पायसक्षीरसमूपव्यञ्जनगुडादिरूपं नातिद्रवं नातिसान्द्रं द्रवद्रव्यमुपकरण-रूपेणावचारितम् । एवं विविधं खादितमिति शूकशमीधान्य मांसशाक-फलादि-विकार विशेष पिष्टकापूप घृतपूरादि-फलादि कठिन-द्रव्यमवचारणया कल्पितमभ्यवहृतम् । तच्चतुष्कं जन्तोर्द्विविधं हितमहितञ्च. तत्राहितवर्ज्जं हितमेव यद् भवति तच्चेदशितं पीतं लीढं खादितं भवति तदा तद्विविध-मशितादिकं चतुष्कं द्रव्यं तस्य जन्तोरन्तरग्निना पक्वमापं रससंज्ञतानुभूतं

चक्रपाणिः—पूर्व्वाध्याये अन्नं प्राणा इत्युक्तम्, येन प्रकारेणान्नं प्राणहेतुर्भवति तदभि-धानार्थं विविधाशितपीतीयोऽभिधीयते, इयमन्यर्थसंज्ञा ॥ १ ॥

चक्रपाणिः—विविधमित्यादि । विविधमित्यनेनाशितादीनामवान्तरभेदं दर्शयति, अशितादिषु यो यः प्राय उपयुज्यते, स पूर्व्वमुक्तः ; जन्तोर्हितमिति वचनम् अहितस्याशितादेर्वक्ष्यमाणदि-

सन्धुक्षितबलेन यथास्वेनोष्मणा सम्यग्विपच्यमानं कालवदनवस्थितसर्व्वधातुपाकम् अनुपहतसर्व्वधातूष्ममारुतस्रोतः केवलं शरीरमुपचयबलवर्णसुखायुषा योजयति धातूनूर्ज्जयति ।

तदन्तरग्निना सन्धुक्षितबलेन स्वेन स्वेनोष्मणा स्वस्वस्थितेनाग्निना सम्यग्विपच्यमानः खलु कालवदविरतगमनशीलो यथा कालस्तथाविरतत्वेनानवस्थितः सर्व्वधातूनामनन्तरावस्थामारभ्य पूर्व्वावस्थानाशात्मकः यथास्वेनैवोष्मणा पाको यस्मिंस्तत् केवलं कृत्स्नं शरीरमनुपहतानि सर्व्वधातूष्ममारुतस्रोतांसि यस्मिंस्तत् । तथाविधं सदेव उपचयबलवर्णसुखायुषा सह योजयति । अविरतसर्व्वधातुपाकमपि शरीरं नोपहतसर्व्वधातूष्ममारुतस्रोतो भवति । यतः सर्व्वान् शरीरधातूनूर्ज्जयति । प्रतिदिनं यथाकालमभ्यवहृतं कर्म्मणाविरतं रसादीन् धातून् जनयित्वा सर्व्वधातूष्ममारुतस्रोतांसि पोषयद्बलं जनयति ।

कर्त्तृत्वाभावात् ; अन्तरग्निना जाठरेण वह्निना सन्धुक्षितं बलं यस्य तेनान्तरग्निसन्धुक्षितबलेनोष्मणा, यथास्वेनोष्मणेति पृथिव्यादिरूपाशितादेर्यस्य य ऊष्मा पार्थिवाग्न्यादिकरूपस्तेन, वचनं हि — "भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः । पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्ति हि ॥" इति । सम्यग्विपच्यमानमित्यशितादि ; किंवा, यथास्वेनोष्मणेति यस्य रसादेर्य ऊष्मा धात्वग्निरूपस्तेन सम्यग्विपच्यमानमशितादि रसतामापन्नम्, यथा कालो निरन्तरत्वेनानवस्थितः, तथानवस्थितोऽविश्रान्तः सर्व्वधातूनां पाको यस्मिन् शरीरे तत् तथा, तेन, अग्निपाकक्षीयमाणधातोः शरीरस्याशितादिना उपचयादियोजनमुपपन्नमिति दर्शयति । यदि हि पाकक्षीयमाणं शरीरं न स्यात् तदा स्वतः सिद्धे उपचयादौ किमशितादि कुर्य्यादिति भावः ; किंवा, कालवदित्यशितादिविशेषणम्, तेन, यथोक्तकालकृतमशितादीत्यर्थः, अकालभोजनस्योपचयाकारकत्वात्, तथा, अनवस्थितः सर्व्वधातुषु पाको यस्य तदशितादि, तेन तथा, एतेन, कश्चित्त्वशितादे रसरूपस्य पाकविगमनात् नोपचयादिर्भवतीति दर्शयति ; एतच्च व्याख्यानं नातिसुन्दरम्, अस्यार्थस्य 'अनुपहत' इत्यादिशरीरविशेषणेनैव लब्धत्वात् पुनः शरीरविशेषणमनुपपन्नम् । अनुपहतेत्यादि । अनुपहतानि सर्व्वधातूनाम् ऊष्ममारुतस्रोतांसि यस्य तत् तथा, यदा हि एकोऽपि धातुपाचकोऽग्निरुपहतो मारुतो वा धातुपोषकरसवाही व्यानरूपः कश्चिदुपहतो भवति, तथा स्रोतो वा धातुपोषकरसवहमुपहतं स्यात्, तदाशितादिकं धातूनामवर्द्धकत्वान्नोपचयादिकारकमिति भावः ; केवलमिति कृत्स्नं शरीरम्, किंवा, केवलमित्यधर्म्मरहितम्, अधर्म्मयुक्ते हि शरीरे विफलमशितादि भवतीति ।

**धातवो हि धात्वाहाराः प्रकृतिमनुवर्त्तन्ते। तत्राहारः प्रसादाख्यं रसं * किट्टञ्च मलाख्यमभिनिर्व्वर्त्तयति।**

**किट्टात् स्वेदमूत्रपुरीषवातपित्तश्लेष्माणः कर्णाक्षि-**

कस्मादित्यत आह—धातवो हीत्यादि। हि यस्मात् धातवो रसादयः सर्व्वे ये प्रसादाख्या मलाख्या उपधात्वाख्याश्च ते धात्वाहाराः पूर्व्वपूर्व्वधातुराहारो येषां ते धात्वाहाराः प्रकृतिमनुवर्त्तन्ते पूर्व्वपूर्व्वधातुमाहरन्तस्ते प्रथमधातोराहारमशितादिकमलभमानाः प्रकृतिस्थमेव पूर्व्वपूर्व्वधातूनाहरन्तः प्रकृतिक्षयमुत्पादयन्ति। न तु प्रकृतिमनुवर्त्तन्ते।

तत्राद्यो रसधातुर्यदाहृत्य पुष्यति तदाह—तत्राहार इत्यादि। आहारोऽशिताद्यः पक्वो जाठराग्निना प्रसादाख्यो रसनामानमाद्यं धातुमभिनिर्व्वर्त्तयति। किट्टन्तु मूत्रपुरीषं मलाख्यमभिनिर्व्वर्त्तयति। सर्व्वेषामेव पाके पाकव्यापाराद् द्विधा फलमभिनिर्व्वर्त्तते प्रसादभागश्च मलभागश्च। तत्राहारपाके फलं प्रसादाख्यो रसो मलाख्यं किट्टं मूत्रपुरीषम्। यथा तण्डुलपाके प्रसादाख्य ओदनः मलाख्यं फेनमण्डम् इति। स खल्वाद्यो रसधातुरिमं रसमाहृत्य पुष्यति। किट्टञ्च मूत्रमाहृत्य मूत्रं पुरीषमाहृत्य पुरीषं पुष्यति। तस्मात् पुनर्यद्यत् पुष्यति तदाह—किट्टादित्यादि। किट्टात् तदाहारजातकिट्टात् स्वेदादयः पुष्यन्ति। किट्टात् प्रथमं सस्नेहद्रवांशः स्वेदस्तमाहृत्य स्वेदः पुष्यति निःस्नेहद्रवांशमाहृत्य मूत्रं पुष्यति निर्द्रवांशमाहृत्य पुरीषं पुष्यति। पक्वाशयगतस्य पुरीषस्य वायुना शोष्यमाणस्य परिपिण्डितरूपस्य परिणामेन जाताद्वायोर्वायुः पुष्यति। पच्यमानादन्नादम्लीभूतात् स्वच्छभागात्मकं पित्तमाहृत्य पित्तं पुष्यति। भुक्तान्नपाकारम्भे यः फेनभाग उदीर्य्यते स श्लेष्मा, तमाहृत्य श्लेष्मा पुष्यति। इति आहारज-

ननु शरीरधातूनां प्रकृतिस्थितानां स्वत एवोपचयात्, तत् किमशितादिना क्रियत इत्याह—धातवो हीत्यादि। धातुराहारो येषां ते धात्वाहाराः, धातवो रसादयो नित्यं क्षीयमाणा अशितादिजनितधात्वाहारा एव सन्तः परं साम्यमनुवर्त्तन्ते, नान्यथेत्यर्थः। योऽसौ धातूनामाहारस्तमाह—तत्रेत्यादि। तत्रेत्यशिताहारो रसं किट्टञ्चाभिनिर्वर्त्तयति इत्यन्वयः; आहारप्रसाद इत्याख्या यस्य स तथा, प्रसादः सारः; किट्टमसारभागः; किट्टादिति मलाख्यात्, तेन अन्नाद् यः किट्टांशस्तस्मात् मूत्रपुरीषे भवतो वायुश्च, रसात् पच्यमानात् मलः कफः; इमानि ग्रहण्यध्याये वक्ष्यमाणान्यनुसर्त्तव्यानि, वक्ष्यति हि—किट्टमन्नस्य विण्मूत्रं रसस्य तु

* तत्राहारप्रसादाख्यो रसः, इति चक्रधृत-पाठः।

नासास्यलोमकूपप्रजननमलाः केशश्मश्रुलोमनखादयश्चावयवाः पुष्यन्ति । पुष्यन्ति त्वाहाररसाद् रसरुधिरमांसमेदोऽस्थिमज्ज-शुक्रौजांसि पञ्चेन्द्रियद्रव्याणि धातुप्रसादसंज्ञकानि, शरीर-

किट्टादेते पुष्यन्ति । यथा जाठराग्निनान्नस्य पाकारम्भे समुदीरितफेन-भागमाहृत्य श्लेष्मा पुष्यति तथा रसस्य मलमाहृत्य श्लेष्मा पुष्यति । यथा च पच्यमानादन्नात् स्वच्छभाग उदीर्य्यते यस्तमाहृत्य पित्तं पुष्यति तथा रक्त-स्यापि पच्यमानस्य किट्टात् पित्तं पुष्यति । मांसस्य पच्यमानस्य किट्टात् किट्टमाहृत्य यथायथं कर्णाक्षिनासास्यरोमकूपोपस्थमलाः पुष्यन्ति । मेदसः पच्यमानस्य किट्टात् किट्टमाहृत्य पुनः स्वेदः पुष्यति । अस्थ्नां पच्यमानानां किट्टात् किट्टमाहृत्य केशश्मश्रुलोमनखदन्तादयः पुष्यन्ति । मज्ज्ञस्तु पच्य-मानस्य किट्टात् किट्टमाहृत्य देहस्य स्नेहः पुष्यति । ततः पच्यमानायाः किट्टात् किट्टमाहृत्याक्षिविट् पुष्यतीति । मलाख्यः पाकक्रमः । वक्ष्यते च चिकित्सिते ग्रहणीचिकित्सिते । अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः । मधुराख्यात् कफो भावात् फेनभाव उदीर्य्यते । परन्तु पच्यमानस्य विदग्ध-स्याम्लभावतः । आशयाच्च्यवमानस्य पित्तमच्छमुदीर्य्यते । पक्वाशयन्तु प्राप्तस्य शोष्यमाणस्य वह्निना । परिपिण्डितपक्वस्य वायुः स्यात् कटुभावतः । सप्तभिर्देहधातारो धातवो द्विविधं पुनः । यथास्वमग्निभिः पाकं यान्ति किट्ट-प्रसादतः । किट्टमन्नस्य विण्मूत्रं रसस्य तु कफोऽसृजः । पित्तं मांसस्य स्वमला मलः स्वेदस्तु मेदसः । स्यात् किट्टं केशलोमास्थ्नो मज्ज्ञः स्नेहोऽक्षि-विट्त्वचः इति ।

प्रसादाख्यान्तु पोषणमाह पुष्यन्ति त्वित्यादि । आहाररसात् तु रस-रुधिरादीनि पुष्यन्ति । एवमुक्तं ग्रहण्यध्याये । रसाद्रक्तं ततो मांसं मांसान्मेद-स्ततोऽस्थि च । अस्थ्नो मज्जा ततः शुक्रं शुक्राद् गर्भः प्रसादजः । इति । ओजस्तु सर्व्वधातुसारम् । एवम् आहाररसादेव प्रसादसंज्ञानि पञ्चेन्द्रियद्रव्याणि

कफोऽसृजः । पित्तं मांसस्य स्वमलो मलः स्वेदस्तु मेदसः । स्यात् किट्टं केशलोमास्थ्नो मज्ज्ञः स्नेहोऽक्षिविट्त्वचः ; आदिग्रहणात् स्नेहादि ग्राह्यम् । यद्यपि वालोऽनवतारादप्युपलभ्यते तथापि रक्तकिट्टादिभिरेवाभिमलोत्पत्तेरप्युपपद्यत एवेति किट्टात् वातोत्पत्तिरुक्तैव, न चायं नियमः, यत्—मलादेवोत्पद्यत एवेति ध्यायामादुपकाहारेरपि वातादिसद्भावात् ; प्रजननं लिङ्गम् ।

रसपोषणमाह—पुष्यन्ति त्वित्यादि । पञ्चेन्द्रियद्रव्याणीति पृथिव्यादीनि घ्राणादीन्द्रिय-

खवायुज्योतिरम्भूमयः पुष्यन्ति। आहारजरसे हि यानि विकृतीभूतानि पञ्च खादीनि तानि पक्वानि मलविकारं विहाय प्रसन्नानि भूत्वा शब्दाद्यैकैक-गुणानि भवन्ति ताहृत्य गर्भारम्भे सात्मकृतानि पञ्चेन्द्रियारम्भकाणि खादीनि पञ्चमहाभूतानि शब्दाद्यैकैकगुणानि पुष्यन्ति। वायुपोषणेन प्राणपोषणं ख्यापितम्। इह शरीरपोषणप्रकरणादात्मनः पोषणं नोक्तम्। तदप्युन्नेयम्। तदुक्तं छान्दग्योपनिषदि त्रिवृत्करणप्रकरणे, तद्यथा—यथानु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवन्ति, तन्मे विजानीहीति। अन्नमशितं त्रेधा विधीयन्ते। तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति। यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः। आपः पीतास्त्रेधा विधीयन्ते। तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति, यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः। तेजोऽशितं त्रेधा विधीयते। तस्य यः स्थविष्ठो धातुस्तदस्थि भवति। यो मध्यमस्तन्मज्जा, योऽणिष्ठः सा वाक्। अन्नमयं हि सोम्य मनः आपोमयः प्राण-

कराणि, धातुप्रसादसंज्ञकानीति अत्यर्थंशुक्लत्वेनैव धातुप्रसादत्वेनेन्द्रियाण्यारभन्त इति दर्शयति। शरीरं बध्नातीति शरीरबन्धः स्नायुशिरादिः, आदिग्रहणादार्त्तवस्तन्यादिग्रहणम्, अत्राहारेण रसादिपोषणमेवं केचिद् ब्रुवते, यद्—रसो रक्तरूपतया परिणमति, रक्तञ्च मांसरूपतया, एवं मांसादयोऽप्युत्तरोत्तरधातुरूपतया परिणमन्ति; अत्रापि च मध्ये केचिद् ब्रुवते—क्षीराद् यथा सर्वात्मना दधि भवति, तथा कृत्स्नाद् रसाद् रक्तं भवति, एवं रक्तादयो मांसादिरूपा भवन्तीति, अन्ये त्वाहुः,—केदारीकुल्यान्यायेन रसस्य धातुपोषणम्, तत्राद्यकेदारस्थानीयो रसो धातुरूपं रसम् अभिगम्य कियताप्यंशेन रसं वर्द्धयति, अपरश्च रसराशिरग्रे च गतः सन् शोणितगन्धवर्णयुक्तत्वात् शोणितमिव भूत्वा कियतापि शोणितसमानेनांशेन धातुरूपं शोणितं पुष्णाति, शेषश्च भागो मांसं याति, तत्रापि शोणितवद्व्यवस्था; तथा मेदःप्रभृतिष्वपीति; अत एव च मुख्यार्थोऽयं ग्रन्थो भवति, यथा—"रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च। अस्थ्नो मज्जा ततः शुक्रं शुक्राद् गर्भः प्रसादजः॥" इति; तथा हारीतेऽप्युक्तं—"रसः सप्ताहादूर्ध्वं परिवर्त्तमानः श्वेतकपोतहरितहारिद्रपद्मकिंशुकालक्तकरसप्रकाशश्चायं यथाक्रमं दिवसपरिवर्त्तनाद् वर्णं परिवर्त्तमानः पित्तोष्मोपरागाच्छोणितत्वमापद्यते" इति; तथा, सुश्रुतेऽप्युक्तम्—"स खल्वाप्यो रस एकैकस्मिन् धातौ त्रीणि त्रीणि कलासहस्राणि पञ्चदश कला अवतिष्ठन् एवं मासेन रसः शुक्रीभवति"। अन्ये त्वाहुः—खलेकपोतन्यायेन अयमन्नरसः पृथक् पृथक् धातुमार्गं गतः सन् रसादीन् पोषयति, न त्वस्य धातुपोषको रसभागो धात्वन्तरेण समं सम्बन्धमप्यनुभवति; रसादिपोषकाणि स्रोतांसि उत्तरोत्तरं सूक्ष्ममुखानि दीर्घाणि च, तेनैव रसपोषकरसभागो रसमार्गचारित्वाद् रसं पोषयति, एवं रसपोषणकालादुत्तरकालं रक्तपोषकमार्गचारित्वात् रक्तपोषको रसभागो रक्तं पोषयति, तथा शोणितपोषणकालादुत्तरकालं मांसपोषकरसभागो मांसं पोषयति चिरसूक्ष्म-

**सन्धिबन्धनपिच्छादयश्चावयवाः। ते सर्व्व एव धातवो मलाख्याः प्रसादाख्याश्च रसमलाभ्यां पुष्यन्तः स्वं मानम्**

**स्तेजोमयी वागिति। एवं रसादेव च शरीरस्य सन्धिबन्धनपिच्छादयश्चावयवाः पुष्यन्ति। ते सर्व्वे एव मलाख्याः प्रसादाख्याश्च धातव रस-**मार्गचारित्वात्, एवं मेद प्रभृतिपोषणेऽपि ज्ञेयम् ; तेन, "रसाद् रक्तं ततो मांसम्" इत्यादेरयम् अर्थः,—यत्—रसपुष्टिकालादुत्तरकालं रक्तं जायते, तथा रक्तकालादुत्तरकालं मांसं प्रजायते इत्यादि। यच्च "रक्तं विबद्धमार्गत्वात् मांसादीन् न प्रपद्यते" इति राजयक्ष्मणि वक्ष्यति तत् हृदय-चारिशोणिताभिप्रायेण, न तु पोषकशोणिताभिप्रायेण। किञ्च, परिणामपक्षे, वृष्यप्रयोगस्य रक्तादि-रूपापत्तिक्रमेणातिचिरेण शुक्रं भवतीति ; क्षीरादयश्च सद्य एव वृष्या दृश्यन्ते ; खलेकपोतपक्षे तु वृष्योत्पन्नो रसः प्रभावात् शीघ्रमेव शुक्रेण सम्बद्धः सन् तत्पुष्टिं करोतीति युक्तम्, तथा रस-दुष्टौ सत्यां परिणामपक्षे तज्जन्मनां शोणितादीनां सर्व्वेषामेव दुष्टिः स्यात् दुष्टकारणजातत्वात् ; खलेकपोतपक्षे तु यदानुपोषको रसभागो दुष्टः, स एव दूषयति न सर्व्वं, तदितरेषामदुष्टकारण-त्वात् ; तथापि मेदोवृद्धौ सत्यां वृद्धिकारणत्वेनास्थ्नापि भूयसा भवितव्यम्, दृश्यते च भूरि-मेदस इतरधातुपरिक्षयः, वचनञ्च—मेदस्विनो मेद एवोपचीयते, न तथेतरे धातवः इति, एवमादिपरिणामवादे दूषणम् ; एषु पक्षेषु सर्व्वात्मपरिणामवादो विरुद्ध एव, येन, सर्व्वात्म-परिणामे त्रिचतुरोपवासात् शरीरस्य मरणं स्यात्, मासोपवासे च केवलं शुक्रमयं स्यात् ; केदारीकुल्यान्यायस्तु तुल्यवत् एव खलेकपोतन्यायेन, यतः, यदुक्तं वृष्यप्रभावं प्रति तत् केदारी-कुल्यापक्षेऽपि प्रभावादेव शीघ्रं रक्तादिधातूनधिगम्य शुक्रं जनयिष्यति वृष्यं, यथा खलेकपोत-पक्षेऽपि 'प्रभावाद्' इति ; यत् तु रसदुष्टौ शोणितदूषणं, तन्न भवति, धातुभूतशोणितांशपोषकस्य रसभागस्यादुष्टत्वादिति समानं पूर्व्वेण ; अत्रापि हि पक्षे न सर्व्वो रसो धातुरूपशोणिततामापद्यते, किं तर्हि, कश्चिदेव शोणितसमानभागः, शेषस्तु शोणितस्थानगतत्वेन किञ्चिच्छोणितसमान-वर्णादित्वाच्च शोणितमुच्यते, अनेन न्यायेन—मेदोवृद्धौ सत्याम् अस्थिवृद्धिरपि निरस्ता, यतः, मेदसा सह अस्थि पोष्यते, अपि तर्हि मेदःस्थानगतेनैव रसेन मेदोऽनुकारिणा ; एवमनयोः पक्षयो-र्महाजनादृतत्वेन तुल्यन्यायत्वेन च नैकमपि निश्चितं ब्रूमः, बुद्धिविभवान्न पक्षबलाबलम्, तत्र न कश्चित् कार्य्यविरोध इत्युपरम्यते।

नन्वाहाररसाद् रसादयः पुष्यन्तीति वदता धातुरसादाहाररसोऽन्यः पृथक् स्वीक्रियते, तच्च, तस्य किं स्थानं, किंवा प्रमाणमिति नोच्यते? न तस्याहारोत्कर्षापकर्षाभ्यामनियतोत्कर्षापकर्षस्य निश्चितप्रमाणत्वाभावात्, तत्स्थानं तु धमन्य एव पोषकाहाररसस्य तस्य च पृथक् रसादिधातुभ्यः प्रदेशान्तरग्रहणं न क्रियते, रसादिकारणरूपतया रसादिग्रहणेनैव ग्रहणात्। अत्र यद्यप्योजः सर्व्वधातुसाररूपम्, तेन धातुग्रहणेनैव लभ्यते, तथापि प्राणधारणकर्तृत्वेन पृथक् पठति ; ये तु शुक्रमष्टममोज इच्छन्ति, तेषामष्टमो धातुरोजः स्यादिति पक्षे चातिदेशं कृत्वा वक्ष्यति— 'रसादीनां शुक्रान्तानां यत् परं तेजस्तत् खल्वोजः' इति।

अनुवर्त्तयन्ते यथावयः शरीरम् । एवं रसमलौ स्वप्रमाणावस्थितावाश्रयस्य समधातोर्धातुसाम्यमनुवर्त्तयतः ॥ २ ॥

मलाभ्यामाहारजाभ्यां पुष्यन्तो यथावयः शरीरं स्वं मानं प्रकृतिमानमनुवर्त्तयन्ते । वयोऽनुरूपं यथावयस्तु शरीरं जन्मावधिप्रत्यग्रस्वभावधातुसमुदायात्मकम् । धातूनां हि प्रत्यग्रता खल्वग्रमग्रमिति प्रत्यग्रं वर्त्तते प्रत्यग्रभावस्तु स्वभावात् त्रिंशद्वर्षं यावद्वर्त्तते । तत्र षोड़शवर्षं यावदसम्पूर्णभावेन प्रत्यग्रभावः, षोड़शे तु सम्पूर्णसर्व्वधातुशरीरं भवति । उक्तञ्च सुश्रुते । यथा हि पुष्पमुकुलस्थो गन्धो न शक्यमिहास्तीति वक्तुं नैवास्तीति । अथवास्ति सतां भावानाम् अभिव्यक्तिरिति कृत्वा केवलं सौक्ष्म्यान्नाभिव्यज्यते । स एव गन्धो विवृतपत्रकेशरे कुसुमे कालान्तरेणाभिव्यक्तिं गच्छति, एवं बालानामपि वयःपरिणामाच्छुक्रप्रादुर्भावो भवति । रोमराज्यादयोऽथार्त्तवादयश्च विशेषा नारीणां रजसि चोपचीयमाने शनैः शनैः स्तनगर्भाशययोन्यभिवृद्धिर्भवति । स एवान्नरसो वृद्धानां जरापरिपक्वशरीरत्वान्न प्रीणनो भवति । त एते शरीरधारणाद्धातव उच्यन्ते इति । बालानामिति वचनेन षोड़शवर्षपर्य्यन्तं ख्यापितमिति । ततस्तु त्रिंशद्वर्षं यावत् सम्पूर्णसर्व्वधातूनां प्रत्यग्रभावस्तेनाहाररसात् क्रमेण शरीरं वर्द्धते धातुवृद्ध्या । त्रिंशद्वर्षादूर्द्ध्वं धातूनां स्थैर्य्यस्वभावः षष्टिवर्षं यावत् । तेन समभावः शरीरस्य न क्षयो न वृद्धिश्च स्यात् । षष्टिवर्षादूर्द्ध्वं सप्ततिवर्षं यावत् ह्रासारम्भस्वभावस्तेन ह्रासारम्भमात्रं शरीरस्य भवति । सप्ततिवर्षादूर्द्ध्वं क्षयः क्रमेण भवति वार्द्धक्यं तदोच्यते । इति यथावयः शरीरं बोध्यमिति । एवमनेन प्रकारेण रसश्च मलश्चेति द्वौ स्वप्रमाणावस्थितौ तद्रसमलयोराश्रयस्य समधातोः शरीरस्य धातुसाम्यमनुवर्त्तयत इति । रसतो रसादुत्तरोत्तरपोषणमुक्तं सुश्रुते शोणितवर्णनीये । तद् यथा— तत्र पाञ्चभौतिकस्य चतुर्व्विधस्य षड्रसस्य द्विविधवीर्य्यस्याष्टविधवीर्य्यस्य वानेकगुणस्योपयुक्तस्याहारस्य सम्यक्परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते । तस्य च हृदयं स्थानं, स हृदयाच्चतुर्व्विंशतिं

रसपाद्विलपोषणानां धातुमलानां प्रकृत्यनुविधानमुपसंहरति—ते सर्व्व इत्यादि ।—मलाख्या अपि स्वेदमूत्रादयः स्वमानावस्थिता देहधारणात् धातवो भवन्तीत्युक्तं—"धातवो मलाख्याः" इति ; यथावयः शरीरमिति यस्मिन् वयसि यादृशी यादृशं मानं धातूनां, तादृशं पुष्यन्तः ; तथा यस्मिन् शरीरे प्रकृत्या दीर्घे ह्रस्वे कृशे वा स्थूले वा यादृशं मानं धातूनां, तादृशं पुष्यन्ती

धमनीरनुप्रविश्योर्द्ध गा दश दश चाधोगाश्चतस्त्रस्तिर्य्यग्गाः कृत्स्नं शरीरमहरहः तर्पयति वर्द्धयति धारयति यापयति जीवयति चादृष्टहेतुकेन कर्म्मणा। तस्य शरीरमनुधावतोऽनुमानाद् गतिरुपलक्षयितव्या क्षयवृद्धिवैकृतैः; तस्मिन् सर्व्वशरीरावयवदोषधातुमलाशयानुसारिणि रसे जिज्ञासा; किमयं सौम्यः तैजसो वेति ? अत्रोच्यते—स खलु द्रवानुसारी स्नेहनजीवनतर्पणधारणादिभिः विशेषैः सौम्य इत्यवगम्यते। स खल्वाप्यो रसो यकृत्प्लीहानौ प्राप्य रागमुपैति। भवतश्चात्र। रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम्। अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते। रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्त्तते। तद्वर्षाद् द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम्॥ आर्त्तवं शोणितन्तु आग्नेयमग्नीषोमीयत्वाद् गर्भस्य. पाञ्चभौतिकञ्चापरे जीवरक्तमाहुराचार्य्याः। विस्रता द्रवता रागः स्पन्दनं लघुता तथा। भूम्यादीनां गुणा ह्येते दृश्यन्ते चात्र शोणिते। रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते। मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः॥ तत्रैषां धातूनामन्नपानरसः प्रीणयिता। रसजं पुरुषं विद्याद् रसं रक्षेत् प्रयत्नतः। अन्नात् पानाच्च मतिमानाचाराच्चाप्यतन्द्रितः। तत्र रस गतौ धातुः, अहरहर्गच्छतीत्यतो रसः। स खलु त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला एकैकस्मिन धाताववतिष्ठते एवं मासेन रसः शुक्रीभवति, स्त्रीणाञ्चार्त्तवमिति। भवति चात्र। अष्टादश सहस्राणि संख्या चास्मिन् समुच्चये। कलानां नवतिः प्रोक्ताः स्वतन्त्रपरतन्त्रयोः॥ सशब्दार्च्चिर्जलसन्तानवदणुना विशेषेणानुधावत्येवं शरीरं केवलम्। वाजीकरण्यस्त्वोषधयः स्वबलगुणोत्कर्षाद् विरेचनवदुपयुक्ताः शुक्रं शीघ्रं विरेचयन्तीति। अत्र कला त्रिंशत्काष्ठारूपा मतान्तरे दशमुहूर्त्तरूपा। तेन पञ्चाहोरात्रात् परं रक्तं भवतीत्येवमेकैकधातुपरिवर्त्तनेन त्रिंशद्दिनात् परं शुक्ररूपेण प्रत्यज्यते रसः पुंसः स्त्रिया आर्त्तवरूपेणेति। हारीतमते सप्तदिनादर्व्वागितिवचनेन कस्यचित् कदाचित् पञ्चाहेन षडहेन वा रसपरिवर्त्तनं भवति न तत ऊर्द्धमिति ख्यापितम्। षट्त्रिंशद्दिनात् परमिति नार्व्वाक् शुक्रं भवतीति॥ २॥

इति योजना; पवनिरवादौ प्रप्रमाणावस्थितौ इति अवनिरिवावस्थूतौ च; आश्रयस्येति शरीरस्य, यथा पक्वं सर्व्वाश्रयं पश्चादममोभिः प्रपद्यते सर्व्वशरीरमित्यर्थः; समधातोरिति समरसादेः समस्त्वेतमुक्तार्थश्च॥ २॥

निमित्ततस्तु क्षीणाभिवृद्धानां प्रसादाख्यानां धातूनां वृद्धिक्षयाभ्यामाहारमूलाभ्यां रसः साम्यमुत्पादयत्यारोग्याय किट्टञ्च मलानामेव। स्वमानातिरिक्ताः पुनरुत्सर्गिणः शीतोष्णपर्य्यायगुणैश्च उपचर्य्यमाणा मलाः शरीरधातुसाम्यकराः

गङ्गाधरः—ननु समधातोर्धातुसाम्यमनुवर्त्तयतो रसमलौ विषमधातुश्च पुरुषो यदभ्यवहरति तत् किं व्यर्थं स्यादित्यत उच्यते—निमित्ततस्त्वित्यादि। निमित्तविशेषात् क्षीणातिवृद्धधातूनां प्रसादाख्यानां रसादीनामाहारमूलाभ्यां वृद्धिक्षयाभ्यां साम्यमुत्पादयति रस आरोग्याय। निमित्ततो हि क्षीणानां धातूनां वृद्धिकराहारेण रसो वृद्धिं कृत्वा साम्यमुत्पादयति आरोग्याय। तथा निमित्ततो वृद्धानां धातूनां क्षयकराहारेण रसक्षयं कृत्वारोग्याय साम्यमुत्पादयतीति। किट्टञ्चाहारस्य निमित्ततः हि क्षीणवृद्धानां मलानामेव वृद्धिक्षयाभ्यामाहारमूलाभ्यां साम्यमुत्पादयत्यारोग्यायेति चकारेणानुवर्त्तते। आहारो मूलं ययोस्ताभ्यां वृद्धिक्षयाभ्यामिति। क्षीणे वृद्धिकारणाहारेण वृद्धे क्षयकारणेनाहारेण किट्टं मलधातूनां साम्यमुत्पादयत्यारोग्यायेति।

प्रसादाख्यधातुभ्यो मलानां विशेषमाह—स्वमानेत्यादि। स्वमानादतिरिक्ता वृद्धा मलधातव उत्सर्गिणः शरीरान्निःसरणशीलाः। स्वेदमूत्रपुरीषादयस्ते च शीतोष्णपर्य्यायगुणैः शीतगुणमलवृद्धावुष्णगुणैर्द्रव्यैः संशोधनैरुपचर्य्यमाणा उष्णगुणमलवृद्धौ शीतगुणद्रव्यैरुपचर्य्यमाणा उत्सृष्टा बहिर्निःसृताः शरीरधातुसाम्यकराः समुपलभ्यन्ते।

चक्रपाणिः—निमित्तत इत्यादि। निमित्तत इत्यनेन अनिमित्तऽविरूपे क्षयवृद्धी निराकरोति ; वृद्धिक्षयाभ्यामिति यथासंख्यं वृद्धक्षीणाहारकृताभ्याम्, एतेन आहारविशेषकृतवृद्धिक्षयौ रसः साम्यं करोतीत्यर्थः ; धातुसाम्यस्यारोग्यत्वे सिद्धेऽपि यदारोग्यायेति ब्रूते, तेन प्राकृतधातूनां क्षयेण वातिवृद्ध्या वा साम्यं निराकरोति, अस्य साम्यस्य रोगकर्तृत्वादेव। किट्टञ्च मलानामेवमेवेति, यथा रसस्तथा किट्टमप्यारोग्याय मलानां साम्यं प्रतिपादितं रसक्रमेण करोति। वृद्धमलानां चिकित्सान्तरमाह—स्वमानेत्यादि। उत्सर्गो बहिर्निःसरणं संशोधनरूपमेषां शास्त्रोक्तमस्ति, उत्सर्गो वा वहन्तीत्युत्सर्गिणः ; वृद्धानां मलानां चिकित्सान्तरमाह—शीतोष्णेत्यादि। पर्य्ययो विपर्य्ययः, तेन शीतोष्णविपरीतगुणैरित्यर्थः, तेन शीतसमुत्थे मले उष्णं तथोष्णसमुत्थे शीतमुपचारो भवति, आदिशब्दश्चात्र लुप्तनिर्दिष्टः, तेन स्निग्धरूक्षादीनामपि विपरीतगुणानां ग्रहणम्, किंवा, पर्य्ययगुणाःगुणाः शीतोष्णस्निग्धरूक्षादयः, तैश्च

समुपलभ्यन्ते । तेषां मलप्रसादाख्यानां धातूनां स्रोतांस्ययनमुखानि, तानि यथाविभागेन यथास्वं धातून् पूरयन्ति । एवमिदं शरीरम् अशितलीढ़पीतखादितप्रभवम् अशितखादितपीतलीढ़प्रभवाश्च शरीरेऽस्मिन् व्याधयो भवन्ति । हिताहितोपयोगविशेषास्तत्र शुभाशुभकरा भवन्तीति ॥ ३ ॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच । दृश्यन्ते हि

केन पथा ते पोषकाः स्युरिति ? अत उच्यते—तेषामित्यादि । तेषां मलाख्यानां प्रसादाख्यानाञ्च धातूनामयनस्य गमनस्य मुखानि स्रोतांसि, तानि स्रोतांसि यथास्वं यस्य धातोर्यत् स्रोतस्तद्धि खलु यथाविभागेन पूर्व्वपूर्व्वधातुना परपरधातून् पूरयन्ति । एवमित्यादि । अनेन प्रकारेणाशितपीतलीढ़खादिताहारप्रभवमिदं शरीरं यथा, तथैवाशितादिप्रभवाश्च व्याधयोऽस्मिञ्छरीरे भवन्ति । कथमित्यत आह—हिताहितेत्यादि । तत्र हिताहारोपयोगविशेषाः शुभकरा आरोग्यकरा भवन्ति । अहिताहारोपयोगविशेषा अशुभकरा व्याधिकरा भवन्ति । इति ॥ ३ ॥

अथात्र संशयानस्याग्निवेशस्य प्रश्नमुपन्यस्तुमाह—एवंवादिनमित्यादि । तत्प्रश्नं दर्शयति—दृश्यन्ते हीत्यादि । हि यस्माद्धो भगवन् गुरो हित-

यथार्थोऽवसत्योपचर्य्यमाणा इति ज्ञेयम् ; एतेन वृद्धमलानां त्रिविधोऽप्युपक्रमो निदानवर्ज्जनशोधनशमनरूप उक्तो भवति, अत्र निदानवर्ज्जनं वृद्धमले मलवृद्धिहेत्वाहारपरित्यागादल्पमलाहारोपयोगाद् वा बोद्धव्यम्, संशोधनञ्च उत्सर्गिणः इत्यनेनोक्तम्, शमनञ्च शीतोष्ण इत्यादिग्रन्थेनोक्तम् ।

अयनानि च तानि मुखानि चेत्ययनमुखानि, अत्रायान्त्यनेनायनानि, स्वनामस्रोतोमुखञ्चायनञ्च ; किंवा अयनस्यागमनस्य मुखानि मार्गाणि, तेन अयनमुखानि गतिमार्गाणीत्यर्थः ; तानि च स्रोतांसि मलप्रसादपूरितानि । धातून् यथास्वमिति यद् यस्य पोष्यं तस्य तत् पूरयति ; यथाविभागेनेति—यस्य धातोर्यो विभागः प्रमाणं तेनैव प्रमाणेन पूरयति, तावत्प्रमाणान्येव पुष्यन्ति, नाधिकानीत्यर्थः ; एतच्च प्रकृतिस्थानां कर्म्म ; विकृतानान्तु न्यूनातिरिक्तधातुकरणमप्येवेति बोद्धव्यम् ; उक्तञ्चान्यत्र—"स्रोतसा च यथास्वेन धातुः पुष्यति धातुना" इति ।

उपसंहरति—एवमित्यादि । कथमशितादेर्व्विरुद्धयोः शरीरतदुपघातकरोगयोरुत्पाद इत्याह—हिताहितेत्यादि । हितरूपोऽशितादिविशेषः शुभरूपविशेषकारकः, अहितरूपस्त्वशितादिविशेषोऽशुभरूपविशेषकरो भवतीति । तेन नैकरूपात् कारणात् विरुद्धकार्य्योदय इति भावः ॥ ३ ॥

भगवन् हितसमाख्यातमप्याहारमुपयुञ्जाना व्याधिमन्तश्चैव अगदास्तथैवाहितसमाख्यातम्। एवं दृष्टे कथं हिताहितोपयोगविशेषात्मकं शुभाशुभविशेषमुपलभामहे इति ॥ ४ ॥

तमुवाच भगवानात्रेयः। न हिताहारोपयोगिनामग्निवेश तन्निमित्ता व्याधयो हि जायन्ते। न च केवलं हिताहारोपयोगादेव सर्वव्याधिभयमतिक्रान्तं भवति। सन्ति ह्यतेऽप्याहारोपयोगात् * अन्या रोगप्रकृतयः; तद् यथा—कालविपर्य्ययः परिणामः प्रज्ञापराधः शब्दस्पर्शरूपरसगन्धाश्च असात्म्याः। इत्येता रोगप्रकृतयो रसान् सम्यगुपयुञ्जानमपि पुरुषमशुभेन

समाख्यातमप्याहारमुपयुञ्जाना नरा व्याधिमन्तश्चागदाश्च दृश्यन्ते, तथा चाहितसमाख्यातञ्चाहारमुपयुञ्जाना नरा व्याधिमन्तश्चैवागदाश्च दृश्यन्ते। एवं दृष्टे सति कथं हिताहितोपयोगविशेषकृतं शुभाशुभविशेषं जानीमः? इति ॥ ४ ॥

एवं पृष्टस्तु भगवानात्रेयस्तमग्निवेशमुवाच नेत्यादि। हे अग्निवेश न खलु हिताहारोपयोगिनां तन्निमित्तव्याधय आहारनिमित्ता व्याधयो जायन्ते। तर्हि च तेषां हिताहारोपयोगिनां ये व्याधयो दृश्यन्ते न च ते व्याधय आहारनिमित्ताः, यतो हिताहारोपयोगादेव केवलं सर्वव्याधिभयमतिक्रान्तं न भवति। कस्मादित्यत आह सन्तीत्यादि। हि यस्मादाहारोपयोगादृतेऽप्यन्या रोगाणां प्रकृतयः कारणानि सन्ति, तन्निमित्तास्ते व्याधयस्तेषामिति। काः पुनस्ता आहारोपयोगादन्या रोगप्रकृतय इति? तदाह—तद् यथेत्यादि। कालविपर्य्ययः परिणामो नाम, प्रज्ञापराध एवमसात्म्याश्च शब्दादय इति। इत्येता रोगप्रकृतयः खलु रसान् हिताहारान् सम्यगुपयुञ्जानमपि पुरुषं

चक्रपाणिः—दृश्यन्ते हि भगवन्नित्यादौ तथैवाहितसमाख्यातम् उपयुञ्जाना व्याधिमन्त- श्चागदाश्चेति सम्बन्धः, विशेषात्मकमिति विशेषोत्थम् ॥ ४ ॥

चक्रपाणिः—तन्निमित्ता इति हिताहारनिमित्ताः; न केवलमिति न परम्; रोगप्रकृतय इति

* अहिताहारोपयोगादिति चक्रसम्मतः पाठः साधीयान्।

व्याधिनोपपादयन्ति। तस्माद्धिताहारोपयोगिनोऽपि दृश्यन्ते च व्याधिमन्तः। अहिताहारोपयोगिनां पुनः कारणतः न सद्यो दोषवान् भवत्यपचारः। न हि सर्व्वाण्यपथ्यानि तुल्यदोषाणि, न च सर्व्वे दोषास्तुल्यबलाः, सर्व्वाणि शरीराणि न व्याधिक्षमित्वे समर्थानि भवन्ति। तदेव ह्यपथ्यञ्च देशकाल-संयोगवीर्य्यप्रमाणातियोगाद् भूयस्तरमपथ्यं सम्पद्यते। स एव

व्याधिरूपेणाशुभेनोपपादयन्ति। तस्माद्धिताहारोपयोगिनोऽपि पुरुषा व्याधिमन्तो दृश्यन्ते। अथाहितसमाख्यातमाहारमुपयुञ्जाना ये चागदा दृश्यन्ते तत्र ब्रूमः। अहिताहारोपयोगिनां पुंसान्तु सोऽपचारो न सद्यो दोषवान् भवति कारणतः प्रतिबन्धककारणान्तरतः न सद्योऽशुभकरो भवति यावद्दोषवान् न भवति सोऽपचारस्तावत् ते ह्यगदा दृश्यन्ते यदा दोषवान् स्यात् तदा व्याधिमन्तो भवन्ति। कस्मान्न सद्यो दोषवान् भवति सोऽपचारः? इत्यत आह—न हीत्यादि। हि यस्मात् सर्व्वाण्यपथ्यानि न तुल्यदोषाणि भवन्ति। कानिचित् सद्योदोषवन्ति कानिचित् कालान्तरदोषवन्ति भवन्ति ततस्वभावात्। ये च तेषामपथ्यानां दोषास्तेऽपि सर्व्वे दोषा न तुल्यबलाः, केचिदल्पबलाः केचिन्मध्यबलाः केचित् प्रबलबलाः। एवं चेत् तथापि पुंसां शरीराणि सर्व्वाणि न व्याधिक्षमित्वे समर्थानि भवन्ति। कानिचिच्छरीराणि व्याधिसहानि व्याधिमन्त्यपि चाव्याधीनीव भान्ति व्याधिक्षमित्वे समर्थत्वात्। कानिचिच्छरीराणि यत्-किञ्चिद्व्याधिमन्त्यपि प्रबलव्याधिमन्तीव भान्ति व्याधिक्षमित्वे सामर्थ्या-भावात्। तथाचाह—तदेवेत्यादि। यदपचारादगदाः पुरुषा दृश्यन्ते हि यस्मात् तत् अपथ्यमल्पबलं न सद्योदोषवद्भवति देशकालाद्यतियोगाद् भूयस्तरं बलव-

रोगकारणानि; अहिताहारोपयोगिनामित्यादि। कारणत इति निमित्तान्तरात् प्रतिबन्धकात्, तच्च कारणम्,—"तदेव ह्यपथ्य"मित्यादिवक्ष्यमाणग्रन्थविपरीतं बोद्धव्यम्। सद्य इति तत्कालम्, अनेनापथ्यस्य रोगजननं प्रति कालान्तरविकारकर्त्तृत्वं प्रायो भवतीति दर्शयति, अन्यथा सद्य इत्यनर्थकं स्यात् कालान्तरेऽपि दोषाकर्त्तृत्वात्; दोषवानिति व्याधिजनकः, अपचार इति अहिताहारोपयोगः; उक्तकारणमाह—न हीत्यादि। तुल्यदोषाणीति तुल्यदोषकराणि; व्याधि-क्षमित्वं व्याधिबलविरोधित्वं व्याध्युत्पादप्रतिबन्धकत्वमिति यावत्; तदेवापथ्यतुल्यदोषादि विवृणोति—तदेवेत्यादि। अत्र यद्यपि प्रस्तुतत्वादपथ्यप्रतिबन्धकानि कारणानि वक्तव्यानि,

दोषः संसृष्टयोनिर्विरुद्धोपक्रमो गम्भीरानुगतश्चिरस्थितः प्राणायतनसमुत्थो मर्म्मोपघाती भूयान् कष्टतमः क्षिप्रकारितमश्च सम्पद्यते । शरीराणि चातिस्थूलान्यतिकृशान्यनिविष्टमांसशोणितादीनि दुर्ब्बलान्यसात्म्याहारोपचितान्यल्पाहाराणि अल्पसत्त्वानि भवन्ति व्याध्यसहानि, विपरीतानि पुनर्व्याधि-

दपथ्यं सम्पद्यते । तद्बलवदपथ्यकृतः स एव दोषः खलु यथादेशकालाद्यतियोगात् भूयस्तरत्वापन्नापथ्यकृतो भवति । तथाविधः सन् कश्चित् संसृष्टयोनिर्द्वन्द्वसन्निपातव्याधेर्योनिर्भवति. कश्चित् तथा विरुद्धोपक्रमहेतुर्भवति. कश्चित् गम्भीरधात्वनुगः स्यात्. कश्चिच्चिरस्थितः स्यात्. कश्चित् प्राणायतनसमुत्थव्याधिहेतुर्भवति. कश्चिन्मर्म्मोपघाती स्यात् । कश्चित् भूयान् कष्टतमः स्यात् । कश्चित् क्षिप्रकारितमश्च सम्पद्यते इति ।

ननु कीदृशानि शरीराणि व्याधिक्षमित्वे समर्थासमर्थानि भवन्ति ? इत्यत आह—शरीराणि चेति । अतिस्थूलादीनि शरीराणि व्याध्यसहानि भवन्ति । अतिस्थूलादिविपरीतानि तु शरीराणि व्याधिसहानि भवन्ति ।

तथापि सामान्यन्यायतयाऽपथ्यत्वाभिधानं ज्ञातव्यमिति वाक्यार्थः ;—तत्र देशादीनां योगादिति अननुगुणदेशादियोगात्, यथा—व्रीहिः विदाहित्वेनापथ्यः,—स चानूपदेशयोगाद् भूयस्तरमपथ्यो भवति, धन्वदेशे तु हीनबलो भवति, तथा शरत्कालस्यानुगुणस्य योगात् बलवान् भवति, हेमन्ते दुर्बलः, संयोगात् यथा—दधिक्षौद्रादियुक्तो बलवान्, मध्वादियुक्तश्च दुर्बलः ; वीर्य्याद् यथा—संस्कारोष्णीकृतो बलवान्, शीतस्तु दुर्बलः ; स एव च प्रमाणातियोगात् बली, हीनमात्रस्त्वबल इत्याद्यनुसर्त्तव्यम् । दोषतुल्यबलतामाह—स एव दोष इत्यादि । संसृष्टा मिलिता बहवो योनयः कारणानि यस्य स तथा ; किंवा, संसृष्टयोनिरित्यननुगुणरूपो यथा—पित्तस्य रक्तं दूष्यम्, असाध्यकरत्वं क्षिप्रकारित्वञ्च भवति ; विरुद्धोपक्रमो यथा—पित्तं मेहारम्भकम्, वचनं हि—'त्वङ्मांसाश्रयमुत्तानं गम्भीरन्त्वन्तराश्रयम्' इति ; गम्भीरानुगत इति गम्भीरमज्जादिधात्वनुगत इत्यर्थः ; चिरस्थित इति देहे चिरकालावस्थानेन कृतमूलत्वात् कष्टतमोऽसाध्यः ; प्राणायतनसमुत्थ इत्यग्रताध्याये वक्ष्यमाणशङ्खादिदशप्राणायतनाश्रयी ; मर्म्मोपघाती इति प्राणायतनव्यतिरिक्तक्षिप्रकारितमो हृदयादिमर्म्मोपघातकारी ; मर्म्मघातित्वेनैव मर्म्मविशेषप्राणायतनसमुत्थत्वे लब्धे पुनरुक्तवचनं प्राणायतनमर्म्माश्रयिणो विशेषेण कष्टत्वप्रतिपादनार्थम् ; कष्टतम इति बहुदुःखकर्तृत्वेनासाध्यत्वेन च ; क्षिप्रकारितम इत्याशुविकारकारितमः ; चकारात् संसृष्टयोनित्वादिहेतूनामल्पत्वेन कष्टकष्टतरक्षिप्रकारिव्याधिकारित्वं दर्शयति ; व्याध्यक्षमित्वमाह—शरीराणि चेत्यादि । अनिविष्टानि अघनमांसादीनि येषां शरीराणां तानि तथा,

सहानि । एभ्यश्चैवापथ्याहारदोषशरीरविशेषेभ्यो व्याधयो मृदवो दारुणाः क्षिप्रसमुत्थाश्चिरकारिणो भवन्ति । अत एव वातपित्तश्लेष्माणः स्थानविशेषे प्रकुपिता व्याधिविशेषान् अभिनिर्व्वर्त्तयन्त्यग्निवेश । तत्र रसादिषु स्थानेषु प्रकुपितानां दोषाणां यस्मिन् यस्मिन् स्थाने ये ये व्याधयः सम्भवन्ति तांस्तान् व्याधीन् यथावत् अनुव्याख्यास्यामः ॥ ५ ॥

तर्हि कुतो व्याधयो मृदुदारुणादयो भवन्ति ? इत्यत उच्यते—एभ्यश्चैवेत्यादि । अपथ्याहारश्च देशकालसंयोगवीर्य्यप्रमाणातियोगकृतोऽपथ्याहारजो दोषविशेषश्चातिस्थूलादिशरीरविशेषश्चेत्येभ्य एव हेतुभ्यो मृदवो व्याधयो भवन्ति । तद्विशेषेभ्यो दारुणाश्च व्याधयो भवन्ति । तद्विशेषे क्षिप्रसमुत्थाश्च चिरकारिणश्च व्याधयो भवन्तीति ।

के पुनरेषां विशेषेभ्यो मृदुदारुणादीन् व्याधीन् जनयन्ति ? इत्यत उच्यते—अत एवेत्यादि । अत एवापथ्याहारादोषशरीरविशेषेभ्य एव वातादयः कुपिताः स्थानविशेषे व्याधिविशेषानभिनिर्वर्त्तयन्ति । स्थानविशेषेण यद्व्याधिविशेषान् दर्शयितुं प्रतिजानीते । तत्रेत्यादि । रसादिषु स्थानेषु कुपिता यस्मिन् यस्मिन्नपरस्मिन् स्थाने ॥ ५ ॥

किंवा, अतिविशालानि विषमाणि ; उपचितानीति संवर्द्धितानि ; आमाशयपुष्टं हि शरीरमनुभूतदोषभावितमेव भवतीति भावः, विपरीतानामित्यनतिस्थूलत्वादियुक्तानि, व्याधिसहानीति व्याध्युत्पादकप्रतिबन्धकानि ; एतच्च शरीरमधिकृत्य वैपरीत्यं व्याधिसहत्वे उदाहरणार्थम् उपन्यस्तम्, तेन यथोक्तं पथ्यबलवैपरीत्यं दोषबलवैपरीत्यञ्च न सद्यो व्याधिकारकं भवतीत्येतदप्युक्तं बोद्धव्यम् ; एतदेवापथ्याहारदोषशरीराणामबलत्वबलवत्त्वेन लक्षणविशेषं यथायोग्यतया मृद्वादिव्याधिकारणत्वेन उपसंहरन्नाह—एभ्यश्चैवेत्यादि । विशेषा यथोक्ता बलविपरीताश्च, तत्र, उक्तविपरीतानां विशेषात् मृदवस्तथा चिरकारिणश्च भवन्ति, यथोक्तापथ्यादिविशेषाद् दारुणाः क्षिप्रकारिणश्च भवन्तीति मन्तव्यम् । अनेन प्रसङ्गेन वातादीनां रसादिस्थानविशेषेषु कुपितानां ये व्याधयो भवन्ति, तान् दर्शयितुमाह—अत एवेत्यादि । तत्र रसेत्यादौ कुपितानां दोषाणामित्यनियमेन रसे कुपितो वायुः पित्तं वा श्लेष्मा वा, अश्रद्धादीनि कुर्वन्ति, सत्यपि दोषभेदे आश्रयस्याभेदात् आश्रयप्रभावेणैवाऽश्रद्धादयो भवन्ति, एवं दोषभेदे अश्रद्धादावेव वातादिलिङ्गं विशिष्टं भवति ; किंवा यथायोग्य-

अश्रद्धा चारुचिश्चास्य-वैरस्यमरसज्ञता।
अङ्गमर्दो ज्वरस्तन्द्रा हृल्लासो गौरवं तमः॥
पाण्डुत्वं स्रोतसां रोधः क्लैब्यं सादः कृशाङ्गता।
नाशोऽग्नेरयथाकालं वलयः पलितानि च॥
रसप्रदोषजा रोगाः ——————————।
——————————वक्ष्यन्ते रक्तदोषजाः।
कुष्ठवीसर्पपिडका रक्तपित्तमसृग्दरः॥
गुदमेढ्रास्यपाकश्च प्लीहा गुल्मोऽथ विद्रधी।
नीलिका कामला व्यङ्गः पिप्लवस्तिलकालकाः॥
दद्रुश्चर्म्मदलं श्वित्रं पामा कोठास्रमण्डलम्।
रक्तप्रदोषाज्जायन्ते——————————॥
——————————शृणु मांसप्रदोषजान्।
अधिमांसार्ब्बुदं कीलं गलशालूकशुण्डिका॥
पूतिमांसालजीगण्ड-गण्डमालोपजिह्विकाः।
विद्यान्मांसाश्रयान् ——————————॥

गङ्गाधरः—तत् यथा अश्रद्धेत्यादि। अश्रद्धादयो रसप्रदोषजा रोगा भवन्ति। १। वक्ष्यन्ते रक्तदोषजा इति। कुष्ठादयो रक्तप्रदोषजा जायन्ते। २। अथ मांसप्रकोपजान् शृणु। अधिमांसादीन् मांसाश्रयान्

रसाश्रयिणा वातादिनाश्रद्धादिकरणं बोद्धव्यम्, यतः—न गौरवं वातदुष्टत्वे भवितुमर्हति, एतच्च नातिसुन्दरम्, तेन पूर्वपक्षो ज्यायान् ॥ ५ ॥

चक्रपाणिः—अश्रद्धायां मुखप्रविष्टस्याप्यन्नस्याभ्यवहरणं भवत्येव परमनिच्छा, अरुचौ तु मुखप्रविष्टं नाभ्यवहरतीति भेदः। आस्यवैरस्यमुखविरसताऽऽस्यस्य रसादुष्टत्वाद्यम्, अरसज्ञता रसानवबोधः, सादोऽवसादः। रक्तप्रदोषजेषु कुष्ठग्रहणेन चर्मकीलादि [illegible] ग्रहणे सिद्धे पुनरत्र वचनं विशेषप्रादुर्भावप्रदर्शनार्थम्, तिलकालकास्तिलाकृतयः, असृग्दरः लोहितप्रदरः।

——————————मेदःसंश्रयांस्तु प्रवक्ष्यते ।
निन्दितानि प्रमेहाणां पूर्वरूपाणि यानि च ॥
अध्यस्थिदन्तदन्तास्थि-भेदशूलं विवर्णता ।
केशलोमनखश्मश्रु-दोषाश्चास्थिप्रकोपजाः ॥
मूर्च्छाभ्रमोऽस्तमसो दर्शनं पर्वणाञ्च रुक् ।
अरुषां स्थूलमूलानां पर्वजानाञ्च दर्शनम् ॥
मज्जप्रदोषात् ——————————॥
——————शुक्रस्य दोषात् क्लैब्यमहर्षणम् ।
रोगिणं क्लीबमल्पायुर्विरूपं वा प्रजायते ॥
न चास्य जायते गर्भः पतति प्रस्रवत्यपि ।
शुक्रं हि दुष्टं सापत्यं सदारं बाधते नरम् ॥ ६ ॥

रोगान् विद्यात् । ३ । मेदःसंश्रयांस्तु रोगान् यानि निन्दितानि अतिस्थूललिङ्गानि यानि च प्रमेहाणां पूर्वरूपाणि तान् विद्यात् । ४ । अस्थिप्रकोपजा अध्यस्थ्यादयः; अध्यस्थि अधिकास्थि; अधिदन्तश्च । दन्तभेदो दन्तशूलम् अस्थिभेदोऽस्थिशूलं केशादीनां दोषश्चेति । ५ । मज्जप्रदोषात् तु मूर्च्छा च भ्रमश्चासत्तमोदर्शनञ्च पर्वणां रुक् च पर्वजानां स्थूलमूलानामरुषां व्रणानां दर्शनञ्च भवति । ६ । शुक्रस्य दोषात् क्लैब्यञ्च अहर्षणञ्च व्यवायार्थं चेतसोऽनुद्गमः स्यात् । यदि वा व्यवायशक्तिर्वर्त्तते तदा स शुक्रदोषाद्रोगिणं क्लीबमल्पायुर्विरूपं वापत्यं प्रजायते । न चास्य शुक्रात् गर्भो जायते, जातो वा गर्भः पतति प्रस्रवत्यपि । कुत एवं स्यादत उच्यते । शुक्रं हीत्यादि । हि यस्मात् दुष्टं शुक्रं सापत्यं सदारं पुमांसं बाधते ॥ ६ ॥

भौतिकवर्णेनाङ्ग्याख्यां व्याख्यते । निन्दितानि प्रमेहपूर्वरूपाणीति केशजटिलत्वादीनि तेषामेव निन्दितत्वात्, न त्वास्यपैच्छिल्यमधुरत्वादीनि, किंवा निन्दितानीति अतिस्थूलगात्रत्वादुर्बलत्वादीनि अष्टौनिन्दितीयोक्तानि, तेषाञ्च निन्दितत्वं निन्दितातिस्थूलत्वेन, एवं पूर्वस्मिन् व्याख्याने 'यानि च' इति 'च'कारो नियमे, उत्तरव्याख्याने च समुच्चये । अध्यस्थिदन्तमध्यदन्तेन अस्थ्यधिकत्वं दन्ताधिक्यमेव बोद्धव्यम् । मूर्च्छेत्यादि मज्जदोषात् ज्ञेयम् । रुक्'पीति व्रणानि । क्लैब्यमिति ध्वजानुच्छ्रायः, अहर्षणञ्च सत्यपि ध्वजोत्थाने मैथुनासमर्थता,

इन्द्रियाणि समाश्रित्य प्रकुप्यन्ति यदा मलाः।
उपतापोपघाताभ्यां योजयन्तीन्द्रियाणि तु॥
स्नायुशिराकण्डराभ्यो दुष्टाः क्लिश्नन्ति मानवम्।
स्तम्भसङ्कोचखल्लीभिर्ग्रन्थिस्फुरणसुप्तिभिः॥
मलानाश्रित्य कुपिता भेदशोषप्रदूषणम्।
दोषा मलानां कुर्व्वन्ति सङ्गोत्सर्गावतीव च॥ ७॥
विविधादशितात् पीतादहिताज्जोद्धखादितात्।
भवन्त्येते मनुष्याणां विकारा य उदाहृताः॥
तेषामिच्छन्ननुत्पत्तिं सेवेत मतिमान् सदा।
हितान्येवाशितादीनि न स्युस्तज्जास्तथामयाः॥ ८॥

गङ्गाधरः—अथेन्द्रियदोषानाह—इन्द्रियाणीत्यादि। प्रकुप्यन्तीत्यपथ्याहारप्रकरणादपथ्याहारात् न सात्म्येन्द्रियार्थयोगात्। स्नायुशिरेत्यादि। अपथ्याहारेण दूषितेभ्यः स्नाय्वादिभ्यो हेतुभ्यो दुष्टा मलाः स्तम्भनादिभिर्मानवं क्लिश्नन्ति क्लेशयन्ति। अपथ्याहाराद् दुष्टान् मलान् मूत्रपुरीषादीन् आश्रित्य कुपिता दोषा वातादयो मलानां मूत्रपुरीषादीनां भेदादिकं कुर्व्वन्ति। अतीव सङ्गोत्सर्गों च कुर्व्वन्ति॥ ७॥

गङ्गाधरः—विविधादित्यादि। य एते विकारा उदाहृतास्ते विविधादहिताशितादिकात् मनुष्याणां भवन्ति। तेषामनुत्पत्तिमिच्छन् पुमान

शुक्रं हि दुष्टं सापत्यं सदारं बाधते नरमित्यत्रापत्यबाधा रोगित्वाबाधपत्यजनकत्वेन, दारबाधा तु व्याधिप्रादुर्भावजनकत्वेन॥ ६॥

चक्रपाणिः—उपघातेत्यादौ उपघातो विनाशः, उपतापस्तु किञ्चिद् वैकल्यम्, कण्डराभ्य इति सप्तम्यर्थे पञ्चमी। खल्ली करपादावमोटनम्, ग्रन्थिः स्नाय्वादिष्वग्रन्थिरेव। मलानित्यादौ भेदशोषप्रदूषणमिति यथासम्भवं ज्ञेयम्, तत्र भेदः पुरीषस्य, शोषस्तु विशेषेण सर्व्वमलेषु भवति, प्रदूषणन्तु प्रदुष्टवर्णादियुक्तत्वेन प्राकृतवर्णाद्युपघातः, सङ्गोत्सर्गावतीव चेति अतीवाप्रवृत्तिप्रवृत्ती॥ ७॥

चक्रपाणिः—सम्प्रत्यहिताहारजनितान् दोषान् दर्शयन् यथा कर्त्तव्यमुपदिशति—विविधादित्यादि।—मित्वाश्रितमुक्तमिति शेषः। पञ्चकर्म्मोपनीतमभिधायापि अत्र च हितसेवनं विशेष-

रसजानां विकाराणां सर्व्वं लङ्घनमौषधम्।
विधिशोणितकेऽध्याये रक्तजानां भिषग्जितम्॥
मांसजानान्तु संशुद्धिः शस्त्रक्षाराग्निकर्म्म च।
अष्टौनिन्दितसंख्याने मेदोजानां चिकित्सितम्॥
अस्थ्याश्रयाणां व्याधीनां पञ्च कर्म्माणि भेषजम्।
वस्तयः क्षीरसर्पींषि तिक्तकोपहितानि च॥
मज्जशुक्रसमुत्थानामौषधं स्वादुतिक्तकम्।
अन्नं व्यवायव्यायामौ शुद्धिः काले च मात्रया॥
शान्तिरिन्द्रियजानान्तु त्रिमर्म्मीये प्रवक्ष्यते।
स्नाय्वादिजानां प्रशमो वक्ष्यते वातरोगिके॥
नवेगान्धारणेऽध्याये चिकित्सासंग्रहः कृतः।
मलजानां विकाराणां सिद्धिश्चोक्ता क्वचित् क्वचित्॥ ९॥

हितान्येवाशनादीनि सदा मतिमान् सेवेत, तथा तेन प्रकारेण तज्जा आमया न स्युरिति॥ ८॥

गङ्गाधरः एषां रसादिजानां व्याधीनां चिकित्सामाह—रसजानामित्यादि। सर्व्वं लङ्घनं दशविधमुक्तं यत् तदौषधम्। रक्तजानां व्याधीनां भिषग्जितं विधिशोणितकाध्याये प्रोक्तम्। मांसजानां व्याधीनां भिषग्जितं संशुद्धिः वमनादिः शस्त्रादिकर्म्म च। मेदोजानां व्याधीनां चिकित्सितमष्टौनिन्दितीये स्थौल्यचिकित्सितमुक्तम्। अस्थ्याश्रयाणां व्याधीनां भेषजं पञ्चकर्म्माणि वस्तयः तिक्तद्रव्योपहितानि क्षीराणि च सर्पींषि चेति। मज्जशुक्रसमुत्थानां व्याधीनामौषधं स्वादु च तिक्तश्चान्नं व्यवायव्यायामौ शुद्धिर्वमनादिश्च मात्रया काले च। इन्द्रियजानां व्याधीनां शान्तिः त्रिमर्म्मीये प्रवक्ष्यते। स्नाय्वादिजानां व्याधीनां प्रशमो वातरोगाध्याये वक्ष्यते। मलजानां विका-

हितभक्तेर्विशेषेण हितत्वोपदर्शनार्थम्। शुद्धिरिति वमनादिना सिद्धिः प्रोक्ता। क्वचिदिति अतीसारग्रहण्यादौ॥ ९॥

व्यायामादूष्मणस्तैक्ष्ण्याद्धितस्यानवचारणात्।
कोष्ठाच्छाखां मला यान्ति द्रुतत्वान्मारुतस्य च॥
तत्रस्थाश्च विलम्बन्ते कदाचिन्न समीरिताः।
नादेशकाले कुप्यन्ति भूयो हेतुप्रतीक्षिणः॥
वृद्ध्या विष्यन्दनात् पाकात् स्रोतोमुखविशोधनात्।
शाखां मुक्त्वा मलाः कोष्ठं यान्ति वायोश्च निग्रहात्॥१०॥

राणां चिकित्सासंग्रहो नवेगान्धारणीये कृतः। अन्यत्र कचित् कचिच सिद्धिरुक्ता॥९॥

गङ्गाधरः—स्थानात् स्थानान्तरगतिकारणान्याह—व्यायामादित्यादि। मला वातादयः पुनः कोष्ठस्था व्यायामादिनो मारुतस्य द्रुतत्वाच कोष्ठात् शाखां रक्तादिधातून् यान्ति। तत्रस्थाः शाखास्थाः पुनः समीरिताश्चेत तदा न कदाचिद् विलम्बन्ते पुनः स्थानान्तरं यान्ति। नेत्यादि। अदेशे अकाले वा न मलाः कुप्यन्ति भूयो हेतुप्रतीक्षिणो हेत्वान्तरं लब्ध्वा देशे काले च भूयः कुप्यन्ति। शाखास्थास्तु मलाः पुनर्वृद्ध्या विष्यन्दनाद्वा पाकाद्वा स्रोतोमुखविशोधनादनावरणात् शाखां मुक्त्वा कोष्ठं यान्ति वायोश्च निग्रहात् प्रतिकारात्। स्वस्थानगमनं स्वभावात्॥१०॥

चक्रपाणिः—सम्प्रति रसादीनां शाखारूपत्वात् कोष्ठाश्रयिणो दोषा यथा शाखां यान्ति, तदाह—व्यायामेत्यादि। व्यायामक्षोभात् कोष्ठं परित्यज्य शाखां मला यान्ति, ऊष्मणो वह्नेस्तीक्ष्णत्वात् विलायिता दोषाः शाखां यान्तीति। हितस्यानवचारणमहितसेवयातिमात्र-वृद्धो दोषो जलापूरवत् वृद्धः स्वस्थानमाप्लाव्य स्थानान्तरं यातीति युक्तम्। द्रुतत्वान्मारुतस्येति चलत्वात् वायोर्वायुनाक्षिप्तो यातीत्यर्थः, वाय्वन्तरेण च वायोराक्षेपणमुपपन्नमेवेति, अन्यथा 'मला' इति बहुवचनमसाधु; अथ शाखां गताः किं कुर्वन्तीत्याह—तत्रस्था इत्यादि। विलम्बन्ते कदाचिदिति कदाचित् व्याधिकरणे विलम्बं कुर्वन्ति; कुतो विलम्बन्त इत्याह—न समीरिताः, ये दोषा अदग्धत्वेनावलम्बन्ते, ते हेत्वन्तरेण समीरिताः सन्तः कुप्यन्ति, तथा च तत्र नादेश इत्यननुगुणदेशे तथा नाकाल इत्यननुगुणकाले कुप्यन्तीति योजना; तत्रैव हेतुमाह—भूय इत्यादि। यस्माद् भूयो हेतुप्रतीक्षिणस्तेऽल्पबला दोषाः कारणान्तराण्यपेक्षन्ते, एतेन च भूयो-हेतुप्रतीक्षिणो भवन्ति, बलवत्त्वाच ते हेत्वन्तरमपेक्षन्ते, अत एवोक्तम् 'कदाचित्' इति।

सम्प्रति शाखाभ्यः कोष्ठागमनहेतुं दोषाणामाह—वृद्ध्येत्यादि। विष्यन्दनादिति विलयनात्, विलीनश्च द्रवत्वादेव कोष्ठं निम्नं याति; पाकादिति पक्वो दोषोऽबद्धत्वेनैव

अजातानामनुत्पत्तौ जातानां विनिवृत्तये।
रोगाणां यो विधिर्दिष्टः सुखार्थी तं समाचरेत्॥
सुखार्थाः सर्व्वभूतानां मताः सर्व्वाः प्रवृत्तयः।
ज्ञानाज्ञानविशेषात् तु मार्गामार्गप्रवृत्तयः॥
हितमेवानुरुध्यन्ते प्रपरीक्ष्य परीक्षकाः।
रजोमोहावृतात्मानः प्रियमेव तु लौकिकाः॥
श्रुतं बुद्धिः स्मृतिर्दाक्ष्यं * धृतिर्हितनिषेवणम्।
वाग्विशुद्धिः शमो धैर्य्यमाश्रयन्ति परीक्षकम्॥

गङ्गाधरः—इत्यश्च सुखार्थी आरोग्यार्थी पुमान् तं विधिं समाचरेत्;—यो विधिरजातानां व्याधीनामनुत्पत्तौ दृष्टो यश्च विधिर्जातानां रोगाणां विनिवृत्तये दृष्टः। कस्मादित्यत आह—सुखार्था इत्यादि। सर्व्वभूतानां सर्व्वाः प्रवृत्तयः सुखार्था एव मता न तु दुःखार्थाः। ननु दृश्यन्ते बह्वाः प्रवृत्तयो दुःखहेतव इति, कथं सुखार्थाः सर्व्वाः प्रवृत्तयो मताः? इत्यत उच्यते—ज्ञानेत्यादि। मार्गामार्गप्रवृत्तयस्तु सुखासुखहेतुप्रवृत्तयस्तु ज्ञानाज्ञानविशेषाद्भवन्तीति; ज्ञानविशेषात् प्रकृतमार्गेण प्रवृत्तयो भवन्ति ताः सुखार्थाः, अज्ञानविशेषात् तु अमार्गेण अविधिपथेन प्रवृत्तयो भवन्ति ता दुःखार्था इति। याः प्रवृत्तयो दुःखार्था दृश्यन्ते ता अज्ञानादेव न तु ज्ञानादिति परीक्षकाः पुरुषाः हितमेव प्रपरीक्ष्यानुरुध्यन्ते कामयन्ते। दैवादिकोऽनुदात्तेतमित्यनुपूर्व्वकः रुध कामे।

ननु कस्याज्ञानं ज्ञानं वा कस्य भवति? इत्यत आह—रज इत्यादि। मोहस्तमः। रजोमोहावृतात्मानो लौकिकाः पुरुषाः प्रियमेवानुरुध्यन्ते न तु हिताहितं परीक्षन्ते। हितमेव कुतः परीक्षका इच्छन्तीत्यत आह—श्रुतिः

कोष्ठं याति; स्रोतोमुखविशोधनादिति अवरोधकापगमात्; वायोर्निग्रहादिति श्लेष्मणो वायोर्निग्रहात् प्राकृतं स्थानं कोष्ठं याति॥ १०॥

चक्रपाणिः—इदानीं सङ्क्षेपेणाखिलव्याधिप्रतीकारं सूचयति—अजातानामित्यादि। यो विधिर्दिष्ट इति शास्त्रे तन्त्रे। ननु यदि सुखार्था सर्व्वप्राणिनां प्रवृत्तिस्तत् कथं कोऽपि अमार्गे प्रवर्त्तेत इत्याह—ज्ञानेत्यादि। अज्ञानादेव सुखसाधनमिदमिति कृत्वापरीक्षका प्रवर्त्तन्ते, न तु

* दार्ढ्यमिति वा पाठः।

लौकिकं नाश्रयन्त्येते गुणा मोहरजःश्रितम् * ।
तन्मूला बहवश्चैव रोगाः शारीरमानसाः ॥ ११ ॥
प्रज्ञापराधाद्ध्यहितानर्थान् पञ्च निषेवते ।
संधारयति वेगांश्च सेवते साहसानि च ॥
तदात्वसुखसंज्ञेषु भावेष्वज्ञोऽनुरज्यते ।
रज्यते न तु विज्ञाता विज्ञाने ह्यमलीकृते ॥
न रागान्नाप्यविज्ञानादाहारानुपयोजयेत् ।
परीक्ष्य हितमश्नीयाद् देहो ह्याहारसम्भवः ॥

इत्यादि । श्रुत्यादयो हि परीक्षकम् आश्रयन्ति परीक्षको हि ज्ञानवान् भवति न तज्ज्ञः । तस्मादेते श्रुत्यादयो गुणा मोहरजःश्रितं लौकिकं ज्ञानं नाश्रयन्ति । तन्मूलाद्धिताहितपरीक्षामन्तरेण प्रियद्रव्यसेवनमूला बहवश्च रोगाः शारीरमानसास्तं मोहरजःश्रितं लौकिकं जनमाश्रयन्तीति ॥११॥

गङ्गाधरः—कथमिन्द्रियगता व्याधयश्च स्युरिति ? अत आह—प्रज्ञेत्यादि । हि यस्मात् अज्ञः पुमान् प्रज्ञापराधादेवाहितान् पञ्चार्थान् निषेवते, वेगांश्च सन्धारयति, साहसानि च सेवते तदात्वसुखसंज्ञेषु तात्कालिकमात्रसुखकरेषु भावेषु अनुरज्यते ज्ञानाभावात् न तु विज्ञाता तेष्वनुरज्यते । कस्मात् ?—विज्ञाने हीत्यादि । हि यस्मात् विज्ञानेऽमलीकृते स आहारान् प्रियान् रागान् नोपयोजयेन्नाप्यज्ञानादुपयोजयेत् । कथमुपयोजयेदिति ? अत उच्यते—परीक्ष्येत्यादि । विज्ञाता विज्ञानेन हिताहितं परीक्ष्य हितमश्नीयान्नाहितम् ।

दुःखकरं तात्कालिकानामिति भावः । हितमेवेत्यायतिविशुद्धमेव तदात्वे दुःखकरम्, प्रियमेव तदात्वे सुखकरमायतिविरुद्धम् ; लौकिका अपरीक्षकाः । परीक्षकं स्तौति—श्रुतमित्यादि । परीक्षकमाश्रयन्त इति परीक्षके भवन्ति ; किंवा श्रुतादिरेवतः परीक्षकमाश्रयन्ते, यदुक्तम्,—"विशुद्धं ज्ञानदेवताः" इति ॥ ११ ॥

चक्रपाणिः—रजस्तमोमूला रोगा भवन्ति, तदाह—प्रज्ञापराधादित्यादि । अहितार्थसेवादि च रोगं करोतीति भावः । तदात्वे सुखोऽपि विसुखो यत "सुखसंज्ञेषु" इति करोति, तत तदात्वसुखमल्पमायत्यां दुःखानुबन्धसुखकरं तदा परमार्थतस्तदात्वेऽप्यसुखकरं दर्शयति, यथा "सुख

* मोहरजस्तमश्रितमिति वा पाठः ।

आहारस्य विधावष्टौ विशेषा हेतुसंज्ञकाः।
शुभाशुभसमुत्पत्तौ तान् परीक्ष्य प्रयोजयेत्॥ १२॥
परिहार्य्याण्यपथ्यानि सदा परिहरन् नरः।
भवत्यनृणतां प्राप्तः साधूनामिह पण्डितः॥
यत् तु रोगसमुत्थानमशक्यमिह केनचित्।
परिहर्त्तुं न तत् प्राप्य शोचितव्यं मनीषिभिः॥ १३॥

कुतोऽभीयात्। देहो आहारसम्भवः। यत् आहारसम्भवो देहो वर्त्तते। कथं तर्हि परीक्ष्यत इति? अत उच्यते—आहारस्येत्यादि। अष्टौ विशेषाः प्रकृतिकरणसंयोगकालदेशराश्युपयोगसंस्थोपयोक्तारः। तानष्टावाहारविधौ परीक्ष्य पथ्यं प्रयोजयेत्। परिहार्य्याणि चापथ्यानि सदा परिहरन् नरोऽरोगी भवति। यथा पण्डितः साधूनामुत्तमर्णानामनृणतां प्राप्तो यादृशो भवति।

ननु रोगोत्पत्तिहेतुं सर्व्वन्तु न परिहर्त्तुं शक्यते, तत् कथमरोगी स्यादिति? अत उच्यते—यत्त्वित्यादि। यत् तु रोगाणां कारणं केनापि जनेन परिहर्त्तुं न शक्यं, तत् प्राप्य मनीषिभिः पण्डितेन शोचितव्यमिति॥ १२।१३॥

संज्ञकमारोग्यम्' इत्यत्रोक्तम्; विज्ञातेति परीक्षकः। न रागादित्यादौ अहितत्वेन जानन्नपि रागादेव कश्चित्पुरुषः प्रवर्तते, अज्ञानाच्चाहिताज्ञानादेव कश्चिद्धिताव्यवसायेन प्रवर्तते, पुरुषद्वयमपि निषिध्यते। कथमाहारः परीक्ष्य इत्याह—आहारस्येत्यादि। आहारस्य विधौ विधानेऽष्टौ विशेषाः प्रकृतिकरणसंयोगादयो रसविमाने वक्ष्यमाणा हेतुसंज्ञकाः, के हेतुसंज्ञका इत्याह—शुभेत्यादि। शुभाशुभसमुत्पत्तौ ते च प्रकृत्यादयः शुभाशुभकरा इति ज्ञेयम्॥ १२॥

चक्रपाणिः—ननु पथ्यसेवायां क्रियमाणायामपि बलवत्प्राक्तनाधर्मवशादपि व्याधयो भवन्ति, तत् किमनेन पथ्यसेवनेनेत्याह—परिहार्याणीत्यादि। अनृणतामिव प्राप्तोऽनृणतां प्राप्तः, एतेन परिहार्यपरिहारेण पुरुषकारेऽनपराधः पुरुषो भवतीति दर्शयति; यस्तु दैवागतस्तस्य व्याधिकस्य साधवो नैवं पथ्यसेविनं गर्हयन्ति, एतदेवाह—यत्त्वित्यादि। अशक्यं परिहर्तुमिति बलवत्कर्मजन्यत्वादित्यर्थः, न शोचितव्यमिति पुरुषकारस्य दैवजन्यत्वे अवश्यम्भाविकर्माणो अकिञ्चित्करत्वादित्यर्थः॥ १३॥

तत्र श्लोकाः ।

आहारप्रभवं वस्तु रोगाश्चाहारसम्भवाः ।
हिताहितविशेषाच्च विशेषः सुखदुःखयोः ॥
सहत्वे चासहत्वे च दुःखानां देहसत्त्वयोः ।
विशेषो रोगसङ्घाश्च धातुजा ये पृथक् पृथक् ॥
तेषाञ्चैव प्रशमनं कोष्ठाच्छाखा उपेत्य च ।
दोषा यथा प्रकुप्यन्ति शाखाभ्यः कोष्ठमेत्य च ॥
प्राज्ञाज्ञयोर्विशेषश्च स्वस्थातुरहितञ्च यत् ।
विविधाशितपीतीये तत् सर्व्वं सम्प्रकाशितम् ॥ १४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽन्नपान-
चतुष्के विविधाशितपीतीयो नामाष्टाविंशोऽध्यायः ॥२८॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोका इति । आहारप्रभवमित्यादि स्फुटार्थम् ॥ १४ ॥
अध्यायं समापयति—अग्नीत्यादि । पूर्व्ववत् ।

इत्यन्नपानचतुष्कः सप्त चतुष्काश्च ॥

इति श्रीगङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ सूत्रस्थानीया-
ष्टाविंशान्नपानविध्यध्यायजल्पाख्या अष्टाविंशी शाखा ॥ २८ ॥

चक्रपाणिः—संग्रहे वसिष्यति शरीरम् । सहत्वे चासहत्वे चेत्यादिना 'शरीराणि चाति स्थूलानीत्यादि विपरीतानि पुनरत्यर्थाभिसंहतानि' इत्यन्तं ग्रन्थं ज्ञापयति ॥ १४ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्वेददीपिकायां सूत्रस्थान-
व्याख्यायां विविधाशितपीतीयो नाम अष्टाविंशोऽध्यायः ॥ २८ ॥

# एकोनत्रिंशोऽध्यायः ।

अथातो दशप्राणायतनीयमध्यायं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः ।
शङ्खौ मर्म्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम् ॥
तानीन्द्रियाणि विज्ञानं चेतनाहेतुमामयान् ।
जानीते यः स वै विद्वान् प्राणाभिसर उच्यते ॥

गङ्गाधरः—ननु भो अन्नमुक्तं, तत्र चोक्तं प्राणाः प्राणभृतामन्नमिति, प्राणास्तु कुत्र प्रतिष्ठिता भवन्तीत्यतो यत्र प्राणाः प्रतिष्ठितास्तदुपदेष्टुं दशप्राणायतनीयमारभते—अथात इत्यादि । सर्व्वं पूर्व्ववद् व्याख्येयम् । अध्यायस्यादौ दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिता इति तदर्थं दशप्राणायतनमधिकृत्य कृतोऽध्याय इति दशप्राणायतनीयः ॥ १ ॥

गङ्गाधरः—दशैवेत्यादि । आयुर्व्वेदविदः खलु प्राणा येषु प्रतिष्ठिताः, तानि प्राणानां प्रतिष्ठाधिकरणानि स्वायतनानि दशैवाहुः नातिरिक्तानि । इहायतनं प्रतिष्ठास्थानं न तु स्थितिस्थानम् ; प्राणा येषु प्रतिष्ठिता इत्युक्तेः । स्थितिस्थानं हि हृदि प्राणो गुदेऽपानः समानो नाभिदेशगः । उदानः कण्ठदेशस्थो व्यानः सर्व्वशरीरगः ॥ इत्येवमादावुक्तम् । प्रतिष्ठास्थानन्तु तदेवोच्यते,—यदुपघातेन प्राणोपघातः स्यादिति । बहुवचनात् पञ्च प्राणा इति ख्यापिताः । तानि दशायतनानि—द्वौ शङ्खौ, मर्म्मत्रयं—शिरो हृदयं वस्तिश्च, कण्ठप्रदेशश्च रक्तं शुक्रमोजश्च गुदञ्चेति दश ।

ननु किमर्थमेतदुपदिश्यत इत्यत आह—तानीत्यादि । तानि शङ्खादीनि

चक्रपाणिः—सम्प्रति प्राणवृद्धेऽभिहिते तत्रये पूर्व्वाध्याये 'प्राणायतनसमुत्थः' इति प्राणायतनशब्दकीर्त्तनात् दशप्राणायतनीय उच्यते, किंवा, अयं दशप्राणायतनीयः सूत्रस्थानसंग्रहः, शेषाध्यायस्तु सर्व्वतन्त्रसंग्रह इति पश्चादुच्यते । इयमर्थपरा संज्ञा, न शब्दानुकारिणी । प्राणायतनानीवायतनानि तदुपघाते प्राणोपघातात् तदाधारात् प्राणनाशादित्यर्थः, न पुनः प्राणस्य जीवितापरपर्य्यायस्य शरीरेन्द्रियसत्त्वात्मसंयोगरूपस्य शङ्खादय एव परमाश्रयाः । कृत्स्नशरीराश्रयत्वात् । मर्म्मत्रयमिति हृदयवस्तिशिरांसि । तानीति शङ्खादीनि, विज्ञानं बुद्धिः;

द्विविधाः खलु भिषजो भवन्त्यग्निवेश! प्राणानामेकेऽभिसरा हन्तारो रोगाणाम्, रोगाणामेकेऽभिसरा हन्तारः प्राणानामिति ॥ २ ॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—भगवंस्ते कथमस्माभिर्वेदितव्या इति ॥ ३ ॥

प्राणायतनानि दश। इन्द्रियाणि इन्द्रलिङ्गान्यात्मनो जीवनलिङ्गानि यद् वक्ष्यत्यरिष्टं किंवा श्रोत्रादीनि। विज्ञानमायुर्व्वेदादिशास्त्रं येन तत्त्वार्थौ विशेषेण ज्ञायते। चेतना नाम मूलं ब्रह्म यदेव प्राक् सर्गादेकमेवासीत्, सर्व्वेषां चैतन्यहेतुः। हेतुं त्रिविधं रोगस्यारोग्यस्यैकमिति चतुर्व्विधम्। कालबुद्धीन्द्रियार्थानां योगम्। आमयान् शारीरमानसान् यो जानीते स एव विद्वान् प्राणाभिसर इत्याख्यो भिषगुच्यते।

ननु य एतान न विजानीते स किं न भिषगिति? अत आह द्विविधा इत्यादि। तिस्रैषणीये त्रिविधा भिषज इति। भिषक्छद्मचराः सन्ति सन्त्येके सिद्धसाधिताः। सन्ति वैद्यगुणैर्युक्तास्त्रिविधा भिषजो भुवीति यत् त्रिविधं वैद्यमुवाच, तत्र वैद्यगुणयुक्तो भिषक् प्राणायतनादिज्ञानवान् भिषक् प्राणाभिसर उच्यते, नेतरो। कस्मादिति अत उच्यते प्राणानामित्यादि। एके वैद्याः प्राणानामभिसरा रोगवतां प्राणानामानेतारो रोगाणां हन्तारस्ते प्राणाभिसरा उच्यन्ते। अपरे चैके भिषजो रोगवतां रोगाणामभिसरा आनेतारः प्राणानां हन्तार इति। ते द्विविधाः सिद्धसाधिताः केचित् केचिद्भिषक्छद्मचरा इति। त्रिविधा भिषजो भवन्त्यग्निवेश ॥ २ ॥

<u>गङ्गाधरः</u>—एवंवादिनमात्रेयमग्निवेश उवाच भगवन्नित्यादि ॥ ३ ॥

चेतनाहेतुरात्मा चेतनासमवायिकारणत्वात्, किंवा चेतनाशब्देनात्मा, हेतुशब्देन तु व्याधीनां जनकहेतुर्निदानरूपस्तथा शमकहेतुर्भेषजरूप उच्यते; आमयशब्देन च लिङ्गमुच्यते; तेन, आध्यात्मिकानि इन्द्रियार्थानि बाह्यानि च हेतुलिङ्गौषधानि यो जानीते इत्युक्तं भवति; एतावच्च एतच्छास्त्रं, यदाध्यात्मिकानीन्द्रियाणि तथा हेतुलिङ्गौषधानि च प्राणाभिसरा महाननुष्ठाते नतः सर्व्वचिकित्साया वैद्याधीनत्वेन यादृशो वैद्य उपादेयो यादृशश्चानुपादेयस्तद्दर्शनाय चौखकात् सूत्रस्थानार्थसंग्रह इति दर्शयति। द्विविधा इत्यादि। रोगाणामभिसरा इति रोगाणामानेतारः ॥१—३

भगवानुवाच—य इमे कुलीनाः पर्य्यवदातश्रुताः परिदृष्टकर्म्माणो दक्षाः शुचयो जितहस्ता जितात्मानः सर्व्वोपकरणवन्तः सर्व्वेन्द्रियोपपन्नाः प्रकृतिज्ञाः प्रतिपत्तिज्ञास्ते ज्ञेयाः प्राणानामभिसरा हन्तारो रोगाणाम्। तथाविधा हि केवले शारीरज्ञाने शरीराभिनिर्वृत्तिज्ञाने प्रकृतिविकारज्ञाने च निःसंशयाः, सुखसाध्यकृच्छ्रसाध्ययाप्यप्रत्याख्येयानाञ्च रोगाणां समुत्थानपूर्व्वरूपलिङ्गवेदनोपशयविशेषज्ञाने व्यपगतसन्देहाः, त्रिविधस्यायुर्व्वेदसूत्रस्य

गङ्गाधरः—तं भगवानात्रेय उवाच य इम इत्यादि। कुलीनाः सत्कुलजाः स्वकुलाचारसम्परताः। पर्य्यवदाता अधीतशास्त्रेऽर्थसंशयाभावेन निर्म्मलाः श्रुता अर्था येषां ते। परिदृष्टकर्म्माणः परि सर्व्वतोभावेन दृष्टानि चिकित्सितकर्म्माणि यैस्ते। दक्षाः कर्म्मसु कुशलाः। शुचयः। जितहस्ताः यस्य यस्य क्रियां कुर्व्वन्ति तस्य तस्यैव रोगजयो भवति ते जितहस्ताः। जितात्मानः जितकामादिमानसधर्म्माणः। सर्व्वोपकरणवन्तः शस्त्रयन्त्रवस्तिनेत्राद्युपकरणवन्तः। सर्व्वेन्द्रियोपपन्नाः। प्रकृतिज्ञा आतुरादीनाम्। प्रतिपत्तिज्ञा या क्रिया येन प्रकारेण क्रियमाणा तेषामातुरादिषु प्रतिपत्तिर्भवति तज्ज्ञाः। ईदृशा ये भिषजस्ते प्राणाभिसराः प्राणानामभिसरा हन्तारो रोगाणामिति।

कस्मादिति अत आह—तथाविधा हीत्यादि। हि यस्मात् तथाविधा भिषजः केवले कृत्स्ने शारीरज्ञाने शरीराभिनिर्वृत्तिज्ञाने च प्रकृतिज्ञाने विकारज्ञाने च निःसंशयाः, सुखसाध्यादीनां रोगाणां निदानादिविशेषज्ञाने व्यपगतसन्देहाः। त्रिविधस्येति—य इम इत्यादिनायुर्व्वेदस्य सर्व्वतन्त्राणामेकैकतन्त्रविद्यावन्तः सर्व्वे भिषजः प्राणाभिसरा भवन्तीति ख्यापयित्वा स्वतन्त्रविदुषां प्राणाभिसरत्वं वक्तुमेतदादिभिर्वाक्यैः स्वतन्त्राभिधेयान्याह। त्रिविधस्य

चक्रपाणिः—प्रतिपत्तिज्ञा इति तदात्वे कर्त्तव्यज्ञाः, शरीराभिनिर्वृत्तिज्ञानं—यथा शरीरं शुक्रशोणितसंयोगादिभ्य उपजायते, तथा ज्ञानम्; प्रकृतिविकारज्ञानं सांख्यनयेन शारीरे वक्ष्यमाणम्; त्रिविधस्यायुर्व्वेदसूत्रस्येति हेतुलिङ्गौषधज्ञानमित्यर्थः। इतः प्रभृति "तन्त्रोद्देश-

ससंग्रहव्याकरणस्य सत्रिविधौषधग्रामस्य प्रवक्तारः, पञ्चत्रिंशतो मूलफलानां चतुर्णाञ्च महास्नेहानां पञ्चानाञ्च लवणानामष्टानाञ्च मूत्राणामष्टानाञ्च क्षीराणां क्षीरत्वग्वृक्षाणाञ्च षण्णाम् शिरोविरेचनादेश्च पञ्चकर्म्माश्रयस्यौषधगणस्याष्टाविंशतेश्च यवागूनां द्वात्रिंशच्चूर्णप्रदेहानां षण्णाञ्च विरेचनशतानां पञ्चानाञ्च पञ्चकानाम्*, स्वस्थवृत्तावपि च भोजन-पान-नियमस्थानचंक्रमणशयनासनमात्राद्रव्याञ्जनधूमनावनाभ्यञ्जन-परिमार्ज्जन-वेगाविधारण†व्यायामसात्म्येन्द्रियपरीक्षणोपक्रमणसद्वृत्तकुशलाः, चतुष्पादोपगृहीते च भेषजे षोड़शकले सविनिश्चये सत्रिपर्य्येषणे सवातकलाकलज्ञाने व्यपगतसन्देहाः, चतुर्व्विधस्य च स्नेहस्य चतुर्व्विंशत्युपनयनस्योपकल्पनीयस्य चतुःषष्टिपर्य्यन्तस्य व्यवस्थापयितारः,

स्वस्थातुरपरायणहेतुज्ञानसूत्रलिङ्गज्ञानसूत्रौषधज्ञानसूत्रस्य संग्रहः संक्षेपवचनं व्याकरणं तद्विस्तरवचनं ताभ्यां सहितस्य, त्रिविधमौषधं दैवव्यपाश्रययुक्तिव्यपाश्रयसत्त्वावजयभेदात् तेषां ग्रामः समूहस्तत्सहितस्य, प्रवक्तारो व्याख्यातारः। सत्रिविधौषधस्य ग्राम इह तन्त्रे पञ्चत्रिंशतो मूलफलानां मूलिन्यः षोड़श फलिन्य एकोनविंशतिः क्षीरत्वग्वृक्षाणां षण्णामित्यन्तानां प्रथमाध्यायोक्तानां प्रवक्तारः। द्वितीयाध्यायोक्तस्य शिरोविरेचनादेः प्रवक्तारः। तृतीयाध्यायोक्तस्य चौषधगणस्य। चतुर्थाध्यायोक्तानां षड़्विरेचनशतादीनां प्रवक्तारः। स्वस्थचतुष्कोक्तभोजनपानादीनां प्रवचने कुशलाः। निर्देशचतुष्कोक्तेषु षोड़शकलभेषजतद्विनिश्चययोस्तिस्रैषणीयोक्तार्थे वातकलाकलीयोक्तार्थज्ञाने व्यपगतसन्देहाः। कल्पनाचतुष्के। स्नेहस्येत्यादुरुक्तस्य

लक्षणस्य इत्यन्तेन सूत्रस्थानार्थसंग्रहो यथाक्रममनुसारणीयः; ससंग्रहव्याकरणस्येति "सामान्यञ्च विशेषञ्च इत्यादि दीर्घञ्जीवितीये संग्रहः, व्याकरणञ्च "सामान्यमेकत्वकरम्" इत्यादि; सत्रिपर्य्येषण इति एषणात्रययुक्ते; त्रिविधस्येति "त्वक् शारीरावयवाः" इत्यादेः; आमाशयगतेति

* कषायशतानामिति अन्योक्तः पाठः। † विधारणविधारणेति वा पाठः।

बहुविधविधानयुक्तानाञ्च * स्नेहस्वेदवमनविरेचनविविधौषधोपचाराणाञ्च कुशलाः, शिरोरोगादेश्च दोषांशविकल्पजस्य व्याधिसंग्रहस्य संक्षयपिडकाविद्रधीनां त्रयाणाञ्च शोफानां बहुविधशोफानुबन्धानामष्टचत्वारिंशतश्च रोगाधिकरणानां चत्वारिंशदुत्तरस्य नानात्मकस्य व्याधिशतस्य, तथा विगर्हितातिस्थूलकृशानां सहेतुलक्षणोपक्रमाणां स्वप्नस्य च हिताहितस्यास्वप्नातिस्वप्नस्य च सहेतूपक्रमस्य षण्णाञ्च लङ्घनादीनामुपक्रमाणाम्, सन्तर्पणापतर्पणजानाञ्च रोगाणां सरूपप्रशमनानाञ्च शोणितजानाञ्च व्याधीनां मदमूर्च्छायसंन्यासानाञ्च सकारणरूपौषधानाञ्च कुशलाः, कुशलाश्चाहारविधिविनिश्चयस्य प्रकृत्या च हिताहितानामाहारविकाराणां साग्र्यसंग्रहस्यासवानां चतुरशीतेर्द्रव्यगुणविनिश्चयस्य रसानुरससंश्रयस्य सविकल्पवैरोधिकस्य द्वादशवर्गाश्रयस्य चान्नपानगणस्य सगुणप्रभावस्य सानुपानगुणस्य नवविधस्यार्थसंग्रहस्याहारगतेश्च हिताहितोपयोगविशेषात्मकस्य च शुभाशुभविशेषस्य धात्वाश्रयाणाञ्च रोगाणां सौषधसंग्रहाणाम्, दशानाञ्च प्राणायतनानां यञ्च वक्ष्यामि मानार्थमर्थेदशमहामूलीयं त्रिंशत्तममध्यायम्; तत्र च कृत्स्नस्य तन्त्रोद्देश-

व्यवस्थापयितारः। तथा स्नेहाद्यौषधोपचाराणाञ्च कुशलाः। रोगचतुष्के शिरोरोगादीनां व्याधिशतस्येत्यन्तानां कुशलाः। योजनाचतुष्के विगर्हिताष्टकातिस्थूलादीनां विज्ञाने कुशलाः। अन्नपानचतुष्के त्वाहारविधिविनिश्चयादिसौषधसंग्रहाणामित्यन्तानां कुशलाः। अस्मिन्नध्याये दशानां प्राणायतनानां

"विविधमशितपीतम्" इत्यादिना, तन्त्रोद्देशलक्षणस्येति, तत्र तन्त्रोद्देशः "अष्टौ स्थानानि" इत्यादिना, तन्त्रलक्षणन्तु आयुषो वेदस्य च यन्निरुक्तौ लक्षणं वक्ष्यति, अत्र स्थानार्थज्ञाने

* बहुविधानामुक्तानामिति पाठान्तरम्।

लक्षणस्य*, ग्रहणधारणविज्ञान-प्रयोग-कर्म्म-कार्य्यकालकर्त्तृ-करणकुशलाः, कुशलाश्च स्मृतिमतिशास्त्रयुक्तिज्ञानस्य, आत्मनः शीलगुणैरविसंवादनेन सम्पादनेन च सर्व्वप्राणिषु चेतसो मैत्रस्य मातृपितृभ्रातृबन्धुवत्। एवमुक्ता भवन्त्यग्निवेश प्राणानामभिसरा हन्तारो रोगाणामिति ॥ ४ ॥

अतो विपर्य्ययेणाभिसरा रोगाणाञ्च हन्तारः प्राणानाम्। भिषक्छद्मसु प्रतिच्छन्नाः कण्टकभूता लोकस्य प्रतिरूपेण इत्युक्तधर्म्माणो राज्ञां प्रमादादेव चरन्ति राष्ट्राणि।

तेषामिदं विशेषविज्ञानं भवति। अत्यर्थं वैद्यवेशेन

यश्च मानार्थमर्थदशपदामूलीयं वक्ष्यामि त्रिंशत्तममध्यायं तत्रोक्तस्य कृत्स्नस्य तन्त्रोद्देशलक्षणस्य कुशलाः। ग्रहणादिकुशलाश्च स्मृत्यादिकुशलाश्च। आत्मनः शीलगुणैर्विसंवादनाभावेन सर्व्वप्राणिषु मातृभ्रातृपितृबन्धुवत् चेतसो मैत्रस्य सम्पादनेन च कुशलास्ते प्राणाभिसरा अग्निवेश ॥ ४ ॥

गङ्गाधरः—अतो विपर्य्ययेण भिषजो रोगाणाञ्चाभिसराः प्राणानां हन्तारः। ते च द्विविधास्तत्र भिषक्छद्मसु भिषग्वेशेषु प्रतिरूपेण छन्ना लोकस्य कण्टकभूताः प्रतिरूपेण। इत्येवम् उक्तधर्म्माणः पुरुषा राज्ञां प्रमादादनवधानाद्राष्ट्राणि चरन्ति। राजभिस्तु वैद्यं परीक्ष्य राष्ट्रे चिकित्सार्थं नियुक्ताश्चिकित्सेयुर्भिषक्छद्मसु प्रतिच्छन्नास्तु राजभिरज्ञानाश्चिकित्सार्थं राष्ट्राणि चरन्ति प्राणांश्च बहूनां घ्नन्ति।

कथमेते विज्ञायन्त इति? अत आह—तेषामित्यादि। अत्यर्थमित्यादि। ये वैद्यवेशेनात्यर्थं श्लाघमानाः कर्म्मलोभाच्चिकित्साकर्म्माणि धनलाभार्थं लोभात्

कौशलमभिधायान्यथाप्याह—तन्त्रस्येत्यादि। गृहीतस्योत्तरकालस्मरणं धारणम्; विज्ञानम् अर्थतो ज्ञानम्; प्रयोगश्चिकित्साप्रयोग; कर्म्म अनेकधा चिकित्साकरणम्; कार्य्यं धातुसाम्यम्; कालः क्रियाकालः; कर्त्तेह भिषक्; करणं भेषजम्; शास्त्रसंयुक्तिः शास्त्रयोजना; युक्तिज्ञानस्येति कुशलसंयोगात् करणे षष्ठी। आत्मन इत्यादि।—आत्मनः शीलगुणैः करणभूतैः मातृपितृबन्धुवत् सर्व्वप्राणिषु चेतसो मैत्रस्य सम्पादनेन तथाऽविसंवादनेन कुशला इति प्रन्थसम्बन्धो बोद्धव्यः। भिषक्छद्म वञ्चनार्थकृतभिषग्वेशाः, प्रतिरूपकः अन्यथारूपकारी द्रोहकारक

* इतं परं तन्त्रस्येति पदमधिकं क्वचित्।

श्लाघमाना विशिखान्तरमनुचरन्ति कर्म्मलोभात्, श्रुत्वा च कस्यचिदातुर्य्यमभितः परिपतन्ति, संश्रवणे चास्यात्मनो वैद्यगुणानुच्चैर्वदन्ति, ते च यस्य प्रतिकर्म्म कुर्व्वन्ति तस्य च दोषान् मुहुर्म्मुहुरुदाहरन्ति, आतुरमित्राणि प्रहर्षणोपजल्पोपसेवादिभिरिच्छन्त्यात्मीकर्त्तुम्, अल्पेच्छुताञ्च आत्मनः ख्यापयन्ति । कर्म्म चासाद्य मुहुर्म्मुहुरवलोकयन्ति दाक्ष्येणाज्ञानमात्मनः प्रच्छादयितुकामाः, व्याधिञ्चापावर्त्तयितुमशक्नुवन्तो व्याधितमेवानुपकरणमपचारिकमनात्मवन्तमुपदिशन्ति, अन्तगतञ्चैनमभिसमीक्ष्यान्यमाश्रयन्ति देशमपदेशमात्मनः

विशिखान्तरं रथ्यां रथ्यां गत्वा रथ्यान्तरमनुचरन्ति । तत्र कुत्रचित् कस्यचिदातुर्य्यं शृणोति, श्रुत्वा च तदातुर्य्यमभितस्तस्य गृहस्य चतुर्षु पार्श्वेषु परिपतन्ति परिभ्रमन्ति । संश्रवणे च तेषामातुरस्यात्मनां श्रवणं यथा स्यात् तथात्मगुणान् स्वस्य वैद्यगुणान् चिकित्सायां दाक्ष्यादिगुणानुच्चैर्वदन्ति । यथोत्तरमातुरस्यामात्यो वा तद्वाक्यं श्रोतुमर्हति । ते च वैद्या यदि कस्यचित् व्याधितस्य चिकित्साकर्म्म प्राप्य कुर्व्वन्ति यदि पतितकर्म्मसिद्धिं न कर्त्तुं प्रभवन्ति तदा तस्यातुरस्य दोषान् दोषाभावेऽप्युदाहरन्ति । नायमात्मवान् कुपथ्यसेवी चाथवा कृपणोऽर्थव्यये भेषजविधानार्थमित्येवमादीन् । एवं तस्यातुरस्य मित्राणि प्रहर्षणकर्म्मणा उपजल्पनकर्म्मणोपसेवनकर्म्मणा चैवमादिभिस्तोषापोदसम्बृंहनात्मीकर्त्तुमिच्छन्ति । चिकित्साविधाने चाथ मात्रावल्पार्थकाङ्क्षाञ्च ख्यापयन्ति । ते च यस्य चिकित्साकर्म्म प्राप्नुवन्ति प्राप्य कर्म्म खलु निजस्य तत् कर्म्मण्यज्ञानं प्रच्छादयितुकामा गोपायितुकामा दाक्ष्येण तत्कर्म्मणि दक्षताव्यञ्जकेन चतुरताधर्म्मेण मुहुर्म्मुहुरितस्ततोऽवलोकयन्ति । केऽपि तस्य तत्कर्म्मण्यज्ञानं बोद्धुं न यथा प्रभवेयुः । यदि तस्य व्याधिम् अपावर्त्तयितुं न शक्नुवन्ति तदा तं व्याधितमनुपकरणमर्थव्ययासमर्थं भेषजकरणाक्षममपचारकारिणमनात्मवन्तमित्येवमन्यत्रोपदिशन्ति । यदि चायमातुरोऽन्तं गच्छति तदैनं मृतं दृष्ट्वात्मनो निजस्यापदेशं तद्देशमपवर्ज्जनं

इत्युच्यते लोके ; राज्ञो प्रमादादिति राज्ञा हि ते कुवैद्याः शासनीयाः । विशिखा रथ्या, किंवा कर्म्ममात्रम् ; संश्रवणे श्रावयेदातुरस्य श्रवणयोग्ये प्रदेशे ; अन्तगतमिति मुमूर्षुम् ; अपदेश-

कृत्वा, प्राकृतजनसन्निपाते चात्मनः कौशलमकुशलवत् उन्नयन्ति अधीरवच्च धैर्य्यमपवदन्ति धीराणाम्, विद्वज्जन-सन्निपातं प्रतिभयमिव कान्तारमध्वगाः परिहरन्ति दूरात्।

यश्चैषां कश्चित् क्षुद्रावयवे * भवत्युपयुक्तस्तमप्रकृते प्रकृतान्तरे वा सततमुदाहरन्ति, न चानुयोगमिच्छन्त्यनुयोक्तुं वा, मृत्योरिवानुयोगादुद्विजन्ते।

न चैषामाचार्य्यः शिष्यो ब्रह्मचारी वैदिको वापि कश्चित् प्रज्ञायत इति ॥ ५ ॥

कृत्वान्यं देशमाश्रयन्ति; यत्र प्राकृता अज्ञा जना वर्त्तन्ते तं देशं गच्छन्ति। तत्प्राकृतजनसन्निपाते चात्मनो निजस्य चिकित्साकर्म्मणि कौशलमकुशलवदुन्नयन्ति। अधीरवच्चापण्डितवच्च धीराणां पण्डितानां धैर्य्यं पाण्डित्यमपवदन्ति पण्डितवैद्यानामपवादं कुर्व्वन्ति। न च पण्डितसमाजं गच्छन्ति। दूरादेव विद्वज्जनसन्निपातं परिहरन्ति यथाऽध्वगाः पथिकाः कान्तारं दुर्गमं पन्थानं प्रतिभयं भयङ्करं परिहरन्ति तद्वत्। यश्चेत्यादि। अथैषां भिषक्छद्मचराणां भिषजां चिकित्सया कश्चित् क्षुद्रावयवे रोगे यः कश्चिद् यदुपयुक्तो भवत्यारोग्यं प्राप्नोति, तदा तं प्रतिकारमप्रकृते प्रकृतान्तरे वा स्थाने यत्र प्रतिकारो न प्रकृतः, यत्र वान्यत्र कस्यचित् प्रतिकारः प्रकृतस्तं सततमुदाहरन्ति वयमस्य प्रतिकारमकुर्म्मेत्येवं संलपन्ति। न चानुयोगं परः कर्त्तव्यमनुयोगमिच्छन्ति। अनुयोक्तुं वा परैरनुयोक्तुं नेच्छन्ति। मृत्योर्यथा लोका उद्विजन्ते तथा तेऽनुयोगादुद्विजन्ते। न चैषामित्यादि। एषां भिषक्छद्मचराणां भिषजां क आचार्य्यः शिक्षकः को वा शिष्यः को वा स ब्रह्मचारी समाध्यायी को वा वैदिकः कश्चिदपि न कैरपि विज्ञायते इति ॥ ५ ॥

सम्पातम्, अकुशलवदिति यथा अकुशलाः परस्परविरुद्धमात्मकौशलं वर्णयन्ति तद्वदित्यर्थः; अधीरवदिति अधीरवत् मन्दाः, उपयुक्त इति ज्ञातः, अनुयोगो प्रश्नम् ॥ ४।५ ॥

* यश्चैषां कश्चित् सूत्रावयवो भवत्युपयुक्तः इति चक्रपाणिसम्मतः पाठः।

भवन्ति चात्र ।

भिषक्छद्म प्रविश्यैवं व्याधितांस्तर्कयन्ति ये ।
वीतंसमिव संश्रित्य वने शाकुनिका द्विजान् ॥
श्रुतदृष्टक्रियाकाल-*-मात्रास्थानवहिष्कृताः ।
वर्ज्जनीया हि मृत्योस्ते चरन्त्यनुचरा भुवि ॥
वृत्तिहेतोर्भिषङ्मान-पूर्णान् मुखविशारदान् ।
वर्ज्जयेदातुरो विद्वान् सर्पास्ते पीतमारुताः ॥
ये तु शास्त्रविदो दक्षाः शुचयः कर्म्मकोविदाः ।
जितहस्ता जितात्मानस्तेभ्यो नित्यं कृतं नमः ॥ ६ ॥

गङ्गाधरः—अत्र भवन्ति श्लोकाः । भिषगित्यादि । भिषक्छद्म प्रविश्य भिषग्वेशं धृत्वा ये भिषजः खल्वेवमुक्तप्रकारेण व्याधितांस्तर्कयन्ति, यथा शाकुनिकाः पक्षिघातिनो व्याधा वने वीतंसं पक्षिबन्धनधारणजालसम-नलिकादिकं संश्रित्य गृहीत्वा द्विजान् पक्षिणस्तर्कयन्ति अन्वेषणां कुर्व्वन्ति तथा ये भिषक्छद्म प्रविश्य व्याधितानुक्तरूपेण तर्कयन्ति ते श्रुतादिवहिष्कृता विज्ञैर्वर्ज्जनीयाः । कस्मात् ? यतः श्रुतादिवहिष्कृताः । गुरुमुखाच्चिकित्सा-शास्त्रं न हि तैः श्रुतं, न च चिकित्साक्रिया दृष्टा, न च भेषजप्रयोगकालज्ञानं मात्राज्ञा नापि स्थानज्ञा एभ्यो वहिष्कृता यस्मात् तस्मात् ते वर्ज्जनीयाः । हि यस्मात् ते तथाविधश्रुतादिवहिष्कृता भिषजो मृत्योरनुचराः सन्तो भुवि चरन्ति । ते तर्हि किमर्थं राष्ट्राणि चरन्ति तदाह वृत्तिहेतोरित्यादि । वृत्तिहेतोर्धनहेतोस्ते भिषङ्मानपूर्णा मुखविशारदाः स्वमुखेनैव स्ववैशारद्यं वदन्तो नानाविधालापं विज्ञवत् कुर्व्वन्तो राष्ट्राणि चरन्ति न त्वातुरप्राणाभिसरणहेतोः । तस्मात् विद्वानातुरस्तान् वैद्यान् वर्ज्जयेत् । ते हि पीतमारुताः सर्पाः सद्यःप्राणघातिनः शून्योदरा अर्थमात्रलोभिन आतुरस्य भद्राभद्रानाकाङ्क्षिणः । इति भिषक्छद्मचर-प्रभेदमभिप्रेत्य सिद्धसाधिता वैद्या इह न पृथगुदाहृता इति बोध्यम् ।

ननु तर्हि कीदृशान् वैद्यानुपसेवेरन्निति ? अत आह—ये त्वित्यादि । ये तु वैद्याः शास्त्रविदादिलक्षणास्तेभ्यो नित्यं नमस्कृतं विज्ञैरिति ॥ ६ ॥

चक्रपाणिः—वीतंसः पक्षिबन्धनम्; श्रुतं शास्त्रे श्रवणम्; दृष्टं कर्म्मदर्शनम्; क्रिया

* मात्राज्ञानवहिष्कृत इति क्वचित् पाठः ।

तत्र श्लोकः।

दशप्राणायतनिके श्लोकस्थानार्थसंग्रहः।
द्विविधा भिषजश्चोक्ताः प्राणस्यायतनानि च ॥ ७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
दशप्राणायतनीयो नामैकोनत्रिंशोऽध्यायः ॥२९॥

गङ्गाधरः—अथाध्यायार्थमाह—तत्र श्लोक इति। दशेत्यादि। स्पष्टार्थ एष श्लोकः ॥ ७ ॥

अध्यायं समापयति—अग्नीत्यादि। पूर्व्ववत् व्याख्येयम्।

इति श्रीगङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ सूत्रस्थानीय-
कोनत्रिंशदशप्राणायतनीयाध्यायजल्पाख्या
एकोनत्रिंशी शाखा ॥ २९ ॥

चिकित्साज्ञानम्; ज्ञानं शास्त्रजन्यम्, श्रुतन्तु श्रवणमात्रम्। तेभ्यो नित्यं कृतं नम इत्यनेन प्राणाभिसरं स्तौति ॥ ६।७ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां सूत्रस्थान-
व्याख्यायां दशप्राणायतनीयो नाम एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

# त्रिंशोऽध्यायः ।

अथातोऽर्थेदशमहामूलीयमध्यायं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

अर्थे दश महामूलाः सिराः सक्ता * महाफलाः ।
महच्चार्थश्च हृदयं पर्य्यायैरुच्यते बुधैः ॥
षडङ्गमङ्गं विज्ञानमिन्द्रियाण्यर्थपञ्चकम् ।
आत्मा च सगुणश्चेतश्चिन्त्यञ्च हृदि संस्थितम् ॥

गङ्गाधरः—अथ प्राणायतनेषु दशसु हृदयस्य प्राधान्यं ख्यापयितुं तथा यञ्च वक्ष्यामि मानार्थमर्थेदशमहामूलीयं तत्र च कृत्स्नतन्त्रोद्देशलक्षणस्येत्युक्तं तदुद्देशकरणार्थमर्थेदशमहामूलीयमारभते—अथात इत्यादि। पूर्ववद्व्याख्येयम्। अध्यायस्यास्यादिवाक्यमर्थेदशमहामूला इति अधिकृत्य कृतोऽध्याय इत्यर्थेदशमहामूलीयस्तम् ॥ १ ॥

गङ्गाधरः—अर्थे दशेत्यादि। अर्थे हृदये दश सिराः सक्ताः, कथं सक्ताः ? महामूला हृदये महति मूलानि यासां ता महामूलास्ताश्च महाफला महत्पदेन हृदयं तात्स्थ्यादोजश्चोच्यते। महदोजः फलन्तीति महाफला इति। एतदर्द्धश्लोकं व्याचष्टे—महच्चेत्यादि। बुधैः पर्य्यायैर्महदर्थौ हृदयमुच्यते। हृदयमिति शब्दं व्युत्पादयति—षडङ्गमित्यादि। अङ्गं कृत्स्नं शरीरं तदवयवश्च। तत्राङ्गं सर्व्वात्मकत्वज्ञापनायाह—षडङ्गमिति। षडङ्गान्यवयवा यस्य तत् षडङ्गमङ्गं शरीरं विज्ञानं प्रमाणाप्रमाणभूतं ज्ञानम् इन्द्रियाणि दश अर्थपञ्चकं पञ्च शब्दादयोऽर्थाः तदर्थाश्रयपञ्चमहाभूताभिमान् भूतात्मा द्विविधस्तैजसः स्वप्न-

चक्रपाणिः—पारिशेष्यात्, किंवा, सूत्रस्थानमभिधाय तन्त्रसंग्रहं वक्तुम् अर्थेदशमहामूलीय उच्यते ; अत्र 'अधिकृत्य कृते ग्रन्थे' इत्यनुवर्त्तमाने अध्यायानुवाकयोर्लुग् इति छः ॥ १ ॥

चक्रपाणिः—अर्थे इति हृदये, महामूला इति महत् हृदयं मूलं यासां धमनीनां तास्तथा, समासक्ता इत्याश्रिताः ; अथ हृदयस्य पर्य्यायानाह—महच्चेत्यादि। महत्संज्ञा तथाऽर्थसंज्ञा च हृदयस्य। वैद्यव्यवहारविज्ञानसर्वशास्त्रेषु हृदयस्य यन्महत्त्वमर्थत्वञ्च, तद्धृदयस्याभ्यर्हितत्वात्, हृदयस्याभ्यर्हितत्वमाह—षडङ्गमित्यादि। षडङ्गानि बाहुद्वयजङ्घाद्वयशिरोऽन्तराधिरूपाणि

* समासक्ता इति क्वचित् पाठः ।

प्रतिष्ठार्थं हि भावानामेषां हृदयमिष्यते।
गोपानसीनामागार-कर्णिकेवार्थचिन्तकैः॥

स्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुख एवमेव सप्ताङ्ग एकोनविंशतिमुखो वहिःप्रज्ञो जागरितस्थानो वैश्वानरः सुषुप्तिस्थानश्चेतोमुखः प्राज्ञो जीवात्म-महत्तत्त्वोपाधिमान्। तुरीयः परमात्मा शिव इति चतुष्पादात्मा स एव सगुण इति आत्मगुणा इच्छाद्वेषसुखदुःखप्रयत्नचेतनाधृतिबुद्धिस्मृत्यहङ्काराः। सहात्राधिकार्थं साद्धद्रोण इत्यादिवत्। चेतो मनः सत्त्वसंज्ञकम्। चिन्त्यं तेन चेतसा यावच्चिन्तयितुं शक्यते तत्सर्व्वं हृदि संस्थितमिति। अथ शारीरे— हृदये द्व्यङ्गुलं वक्ष्यते षडङ्गानि हस्तौ द्वौ द्वौ च पादौ शिरश्चान्तराधिश्चेत्येतानि वृहन्ति वाह्यानि तत्र हृदये स्थातुं नाहन्तीति मत्वा विज्ञानादीनि चिन्त्यान्तानि षडङ्गानि यस्याङ्गस्य तत् सूक्ष्मशरीरमथवा पञ्चमहाभूतान्यात्मा चेति षडङ्गानि यस्य तदङ्गं सूक्ष्मशरीरमेव विज्ञानादीनि चेति सत्त्व हृदि संस्थितमिति।

कस्मादित्यत आह—प्रतिष्ठार्थं हीत्यादि। हि यस्मात् खल्वेषामुक्तानां भावानां प्रतिष्ठार्थं प्रतिनियमेन स्थित्यर्थं हृदयमिष्यतेऽर्थचिन्तकैः। ननु कथमेषां प्रतिष्ठा हृदये सम्भवति चिन्त्यं हि जगदेव सर्व्वं मनसः सुमेरुप्रभृति वृहत् क्षुद्रं वा। हृदयन्तु द्व्यङ्गुलमित्यतो दृष्टान्तेन प्रतिष्ठाप्रकार-माह—गोपानसीनामित्यादि। गोपानसी तु वडभी गृहाच्छादनावयववक्र-

यस्य तत् षडङ्गमङ्गम्; अङ्गञ्च षडङ्गातिरिक्तं समुदायरूपम् अवयविरूपं वा; अङ्गमिति वक्तव्ये षडङ्गविशेषणं षण्णामङ्गानामपि हृदयाश्रितत्वप्रतिपादनार्थम्; किंवा अङ्गशब्दस्यावयव-वाचिनो निषेधार्थम्; विज्ञानञ्च यद्यपि "आत्मा च सगुणः" इति वचनादेव आत्मगुणत्वेन लब्धम्, तथाप्यात्मगुणेषु प्राधान्यात् पुनः पृथगुच्यते, यथावं हि—"सुखं समग्रं विज्ञानं विसर्गौ च प्रतिष्ठितम्" इति। इन्द्रियाणि चक्षुरादीनि; अर्थपञ्चकं शब्दादि; सगुण इत्यनेन सुखादि-ग्रहणम्; चेतो मनः; चिन्त्यं मनोविषयः, एते च षडङ्गविज्ञानादयः श्रुतिप्रतिपन्नाः प्रत्येकमेवोपादेयत्वेन, तेन, अत्र कस्यचिदपि छन्दोऽनुपादानं कर्त्तव्यमिति बोद्धव्यम्, अर्थवशो ह्यर्थः साक्षादनभिधीयमानत्वादप्रधानं भवति।

अथ कथममी षडङ्गादयो हृदयाश्रयाः, "यावता हृदयं द्व्यङ्गुलम्" इति वक्ष्यति, अङ्गञ्च षडङ्गा-श्रयं महत्, इन्द्रियाण्यपि च स्वाश्रयचक्षुरादिस्थितानि, अर्थाश्च बाह्यद्रव्याश्रयिणः आत्मा चाकाशवत् एव व्यापकः, तद्गुणश्च विज्ञानञ्चात्मन्येवाश्रितम्, मनोऽप्यणुत्वाश्रितमात्मगतम्, चिन्त्यञ्च ध्येयादि न हृदीत्याशङ्क्याह—प्रतिष्ठेत्यादि। प्रतिष्ठा कार्य्यकारणाविरोधेनावस्थानम्। भावानामेषा-मिति षडङ्गादीनाम्, हृदयमिष्यत इति हृदयमिष्यते कारणमिति शेषः; अत्रैव दृष्टान्तमाह—

तस्योपघातान्मूर्च्छायान् भेदान्मरणमृच्छति ।
यद्धि तत् स्पर्शविज्ञानं धारि तत् तत्र संस्थितम् ॥

काष्ठानि तेषामागारकर्णिका, तत्तद्गृहकाष्ठानां मूलानि यस्यामेकस्यां गृहमध्यस्थकाष्ठमय्यां कर्णिकायां संनिबद्धानि प्रतिष्ठितानि वर्त्तन्ते तथा षडङ्गाङ्गादीनि हृदये प्रतिष्ठितानि सन्ति लक्षीकृत्य वर्त्तन्ते। तेन बाह्यानि चिन्त्यानि चिन्ताहेतुत्वेन हृदि वर्त्तन्ते न तु स्वरूपमूर्त्त्या। यतो नाधाराधेयभावेणैषामाश्रयो भवति। कुतस्तर्हि प्राणायतनमिति ? अत उच्यते—तस्येत्यादि। तस्य हृदयस्योपघातात् पुरुषो मूर्च्छायामृच्छति, तस्य भेदात् तु मरणमृच्छतीत्यत उक्तं प्राणायतनं हृदयमिति। कस्मान्मरणमृच्छति ? तद्भेदादित्यत उच्यते—यद्धीत्यादि। हि यस्मात् तत् स्पर्शविज्ञानं तस्य हृदयस्य स्पर्शो विज्ञानं यस्य धारिणो जीवितस्य तत्तत् स्पर्शविज्ञानं यद्धारि यज्जीवितमायुस्तदायुः शरीरेन्द्रियसत्त्वात्मसंयोगस्तत्र हृदये संस्थितं तस्मात् तदुपघातान्मूर्च्छायांस्तद्भेदान्मरणमृच्छतीति।

गोपानसीनामित्यादि। गोपानस्यो गृहाच्छादनाधारकाष्ठानि; आगारकर्णिका गृहाच्छादनमध्ये गृहाच्छादनकाष्ठनिबन्धनी; लोके आड़कमित्युच्यते; अर्थचिन्तकैरिति हृदयचिन्तकैः; तेन, षडङ्गादीनां हृदयाश्रितत्वं नाधाराधेयभावेन, किं तर्हि, तदन्वयव्यतिरेकानुविधायित्वेनेति दर्शितं भवति; हृदयाश्रितत्वं हृदये प्रकुपिते षडङ्गादिभावानां प्रकृतिस्थत्वं हृदयोपघाते तदुपघात इत्यर्थः, यद्यपि च आत्मविज्ञानमनसां हृदयाश्रितत्वमाधाराधेयभावादपि कथमपि वक्तुं पार्य्यते, तथापि सर्वव्यापकत्वात्तोपादेयमाधाराधेयत्वम्; नैवम्, आत्मा यश्च संसारी भोगायतनत्वेनाभिप्रेतः, स च हृदयप्रदेश एव सुखदुःखादुपपद्यत इत्यनुभवसिद्धम्, तेन हृदयाश्रित इवात्मा, तथापि प्रायेण हृद्येव तिष्ठति, यतः उपरतक्रियं मनो हृद्येव तिष्ठति, तथा अध्ययने योगे च हृदिस्थमेव मनो भवति, यदप्युक्तम्—आत्मस्थे मनसि स्थिरे इति, तदप्यात्मस्थमनसो हृदयस्थत्वमेव; एवं ज्ञानसुखदुःखानि च हृदयस्थान्येव लक्ष्यन्ते, तथा चातिचिन्तनात् तथा दुःखावेशनाच्च हृदयमेव पीड्यते, नान्यदङ्गम्, अतमात्मना व्यापकेनाश्रयाश्रयिभावेन चक्षुरादिना, यथात्मा संसारी हृदयाश्रितो भवति तस्यैव हृदयनाशान्नाश इति भावः।

कथमेतद् भवतीत्याह—यद्धीत्यादि। स्पर्शो विज्ञायतेऽनेनेति स्पर्शो वा विजानातीति स्पर्शविज्ञानम्, तस्यैव विशेषणं धारीति, धारि तु शरीरेन्द्रियसत्त्वात्मसंयोगः, यदुक्तम्—"शरीरेन्द्रियसत्त्वात्म-संयोगो धारि जीवितम्" इति; एतेन यः शरीरादिसंयोगः स्पर्शनेन विजानाति सर्वं ज्ञेयम्, यश्चायं शरीरधारणाद्धारीत्युच्यते, स हृदि स्थितः; तेन तदुपघातान्मूर्च्छा तथा तद्भेदान्मरणं चैतन्यावच्छेदकनिलक्षणमुपपन्नम्। स्पर्शो हि द्विविधः—ऐन्द्रियको मानसश्च, एतत् स्पर्शद्वयं विना च न किञ्चित् ज्ञानञ्च भवति, यदुक्तम्—"वध्यैवेन्द्रियकः स्पर्शः स्पर्शो

तत् परस्यौजसः स्थानं तत्र चैतन्यसंग्रहः।
हृदयं महदर्थश्च तस्मादुक्तं चिकित्सितै॥

कुतो मूर्च्छायानृच्छति न मृत्वेत्यत आह—तदित्यादि। तद्धृदयं परस्य श्रेष्ठस्यौजसस्त्वष्टबिन्दुरूपस्य स्थानं यदोजो बलमुच्यते तद्बलस्थानस्योपघातान्न मृत्वा मूर्च्छायानृच्छति चैतन्याभावरूपान। यतस्तत्र हृदये चैतन्यसंग्रहः। चेतनायाः समासः परं ब्रह्मस्थितम्। तदुपघातात् परमब्रह्मणः स्थित्युपघातादचेतनत्वं भवतीति। तस्माच्चिकित्सिते शास्त्रे हृदयं महच्चार्थश्च पर्य्यायेण

मानस एव च। द्विविधः सुखदुःखानां वेदनानां प्रवर्त्तकः" इति। मानसञ्च स्पर्शनं शारीरे यथास्थानमेव दर्शयिष्यामः। स्पर्शो विज्ञायत इति निरुक्तिपक्षे तु स्पर्शशब्देन लक्षणया स्पृश्यमानोऽर्थोऽभिप्रेतः, तेन सर्व्वज्ञेयार्थरोधः, यं प्राप्येवार्थमिन्द्रियाण्यस्मद्दर्शनार्थं प्रकाशयन्ति, यदुक्तम्—"स्पृश्यते नानुपादानो नास्पृष्टो वेत्ति वेदनाः" इति। यद्यपि शारीरेन्द्रियमनआत्मसंयोगः शरीरप्रदेशान्तरेऽप्यस्ति तथापि नासौ शरीरधारणे तथा ज्ञानोत्पत्तौ वा प्रधानम्, तदुपघातेऽपि शरीरधारणज्ञानयोर्दर्शनात्। हृद्गतस्तु संयोगः प्रधानं तदन्वयव्यतिरेकानुविधायित्वात् स्पर्शज्ञानशरीरधारणयोः; तेन सूक्तम्—"तत् तत्र संश्रितम्" इति। हृदयाभ्यर्हितत्वे धर्म्मान्तरमाह—तत्परस्येत्यादि। परस्य श्रेष्ठस्य, एतेन द्विविधमोजो दर्शयति परमपरञ्च, तत्र अञ्जलिपरिमाणमपरम्, यदुक्तम्—"तावदेव परिमाणं श्लेष्मणश्चौजसः" इति; अष्टप्रमाणन्तु परम्, यदभिप्रेत्योक्तम्—"हृदि तिष्ठति यच्छुद्धं रक्तमीषत् सपीतकम्" इति। तन्त्रान्तरेऽप्युक्तम् "प्राणाश्रयस्यौजसोऽष्टौ बिन्दवो हृदयमाश्रिताः" इति। किञ्च, सति हि परे चापरे चौजसि परस्य इति विशेषणं सार्थकं भवति, न त्वेकरूपे। अष्टाञ्जलिपरिमितस्यौजसो धमन्य एव हृदयाश्रिताः स्थानम्, तथा प्रमेहेऽर्द्धाञ्जलिपरिमितमेवौजः क्षीयते, नाष्टबिन्दुकम्, अस्य हि किञ्चित्क्षयेऽपि मरणं भवति, प्रमेहे तु ओजःक्षये जीवत्येव तावत्; ओजःक्षयलक्षणमप्यर्द्धाञ्जल्योजःक्षय एव बोद्धव्यम्; ओजःशब्दश्च यद्यपि रसेऽपि वर्त्तते, यदुक्तम्—"रसश्चौजःसंख्यातः" इति, तथा, "मक्षी भवति तद् प्रायः कल्पते किञ्चिदोजसे" इति। तथापि इह सर्व्वधातुसारमोजोऽभिधीयते; एतच्चैव रसधातुरूपं केचिदाहुः। धातुर्हि धारणपोषणयोगात् भवति, ओजस्तु देहधारकं सदपि न देहपोषकम्, तेन नाष्टमो धातुरोजः; केचित् तु शुक्रविशेषमोजः प्राहुः, तच्च न मनः प्रीणाति; ये तु ब्रुवते—सर्व्वधातूनां सारसमुदयभूतमोजः, ते रसादिसाररूपतया रसादिभ्यो भिन्नमोज इति पृथग्धातुत्वेन रूपधातुत्वेन वा निर्द्देश्यमिति पश्यन्ति; वचनञ्च—भ्रमरैः फलपुष्पेभ्यो यथा सम्भ्रियते मधु। तद्वदोजः शरीरेभ्यो गुणैः सम्भ्रियते नृणाम्॥ अत्र शरीरेभ्य इति धातुभ्यः, गुणैरिति सारभागैः। तत्र चैतन्यसंग्रह इति,—तत्र हृदि चैतन्यविषये प्रवृत्तस्य संग्रहं संवरणं करोति, तेन प्रसृतं मनो हृदये निगृह्य योगाभ्यो भवतीत्यर्थेन इत्युक्तं भवति, ततश्च योगस्य मोक्षसाधनत्वेनोपादेयस्यापि हृदयमेव स्थानमिति हृदयमभ्यर्हितं भवति; यस्मादेवंगुणं हृदयम्, ततः 'महत्' इति च, तथा

तेन मूलेन महता महामूला मता दश ।
ओजोवहाः शरीरेऽस्मिन् विधम्यन्ते समन्ततः ॥ २ ॥
येनौजसा वर्त्तयन्ति प्रीणिताः सर्व्वजन्तवः ।
यदृते सर्व्वभूतानां जीवितं नावतिष्ठते ॥
यत्सारमादौ गर्भस्य यत्तद्गर्भरसाद्रसः ।
संवर्त्तमानं हृदयं समाविशति यत् पुरा ॥

उक्तम्। तत्र सक्तानां सिराणां महामूलत्वं व्युत्पादयति—तेनेत्यादि। तेन महता हृदयेन मूलेन मूलस्थानेन दश सिरा महामूला मताः। महद्धृदयं मूलं यासां ता महामूला हृदयमूला दश सिराः सक्ताः संलग्नाः सन्ति। महतस्तकारस्याकारो न केवलं महत्त्वार्थं तद्धात्वर्थेषु सर्व्वत्रैवार्थेषु भवति, तल्लक्षणेऽर्थानियमात्।

ननु महामूला दशेति विरुध्यते। सुश्रुते ह्युक्तं—पाञ्चभौतिकस्य चतुर्व्विधस्य षड्रसस्य द्विविधवीर्य्यस्याष्टविधवीर्य्यस्य वानेकगुणस्योपयुक्तस्याहारस्य सम्यक् परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते। तस्य च हृदयं स्थानं स हृदयाच्चतुर्व्विंशतिधमनीरनुप्रविश्योर्द्धगा दश दश चाधोगामिनीश्चतस्रश्च तिर्य्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयतीति। तदाशङ्कां वारयितुमाह—ओजोवहा इति। महामूला दश शिरा ओजोवहा अस्मिञ्छरीरे समन्ततो विधम्यन्ते ॥ २ ॥

गङ्गाधरः—नन्वोजो नाम किं तावदित्यत आह—येनेत्यादि। येनौजसा सर्व्वजन्तवः प्रीणिताः सन्तो वर्त्तयन्ति जीवन्ति। यदोज ऋते सर्व्वभूतानां जीवितमायुर्नावतिष्ठते। गर्भस्यादौ यच्छुक्रं शोणितञ्च यत्सारं यदोजः सारं यस्य तत् यत्सारं तदोजः ओजःसारं शुक्रं शोणितञ्च गर्भस्यादौ तदोजो यत्तत् गर्भरसाद्रस उच्यते। यावत्कालं शुक्रस्य सारं शुक्रात् परिणामान्न पृथग्भूतं

'अर्थे' इति वोच्यते चिकित्सकैः। सम्प्रति धमनीनां महामूलत्वं प्रतिपादयति—तेनेत्यादि। तेनेति महता हृदयेनेति शेषः; विधम्यन्ते विसर्प्यन्ते ॥ २ ॥

चक्रपाणिः—सम्प्रति धमनीनामुक्तं महाफलत्वं व्युत्पादयन्नाह—येनौजसेत्यादि। सामान्येन द्विविधमप्योजो ग्राह्यम्; वर्त्तयन्ति जीवन्ति, चौरादिको णिच्; प्रीणिता इति तर्पिताः; यत्सारमादौ गर्भस्येति शुक्रशोणितसंयोगे जीवाधिष्ठितमात्रे यत्सारभूतम्, तत्रापि तिष्ठति; यद्-

यस्यानाशान्न * नाशोऽस्ति धारि यद्ध हृदयाश्रितम्।
यच्छरीररसस्नेहः प्राणा यत्र प्रतिष्ठिताः॥
तत्फला बहुधा वा ताः फलन्तीति महाफलाः।
ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात् सिराः॥ ३॥

हृदये वर्त्तते तावत्कालं तदोजःसारं शुक्रं गर्भमारब्धुं प्रभवति। पृथग्भूते त्वोजसि शुक्रप्रसारं भवति न च तद्गर्भरस उच्यते। सर्व्वधातुसारभूतं ह्योजः। तदुक्तं सुश्रुते—तत्र रसादीनां शुक्रान्तानां धातूनां यत् परं तेजस्तत् खल्वोजस्तदेव बलमित्युच्यते इति। तदोजःसारेण शुक्रेण जातस्य गर्भस्य क्रमेण वर्द्धमानं यदोजः पुरा हृदयं गर्भस्य हृदयं समाविशति, पश्चाद्देहावयवं कृत्स्नं व्याप्नोति। उक्तञ्च सुश्रुते—ओजः सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं सरम्। विविक्तं मृदु मृत्स्नञ्च प्राणायतनमुत्तमम्। देहस्यावयवस्तेन व्याप्तो भवति देहिनामिति।

यस्यानाशादित्यादि। यस्यौजसस्त्वनाशात् पुंसो न नाशोऽस्ति। उक्तञ्च सुश्रुते—तदभावाच्च शीर्य्यन्ते शरीराणि शरीरिणामिति। हृदयाश्रितं यद्धारि जीवितं तत्स्थापनहेतुत्वात् तद् यद्धारीत्युच्यते। यदोजः शरीररसस्याद्यधातोः स्नेहः यत्रौजसि प्राणाः प्रतिष्ठिताः, तदोजः खलु येनौजसा वर्त्तयन्तीत्यादिभिरुक्तप्रभावमोजः फलं यासां तास्तत्फला इत्यतो महाफला दश सिरा अर्थे हृदये सक्ताः। अथवा ता दश हृदये सक्ताः सिरा बहुधा फलन्तीति महाफला उक्ताः।

गर्भरसाद्रस इति गर्भरसात् शुक्रशोणितसंयोगपरिणामेन कललरूपात्, रस इति सारभूतं, संवर्त्तमानं हृदयं समाविशति। यत् पुरेति—यदा हृदयं निष्पाद्यमानं तदैव व्यक्तलक्षणं सत् हृदयमधितिष्ठति यदित्यर्थः, एतेन गर्भावस्थायामेऽपि तदोजस्तिष्ठतीत्युच्यते, परं गर्भादौ शुक्रशोणितसाररूपतया, रसावस्थायान्तु रससाररूपतया, अवयवनिष्पत्तौ स्वलक्षणयुक्तमेव भवत्योज इत्योजसः सर्व्वावस्थाव्यापकत्वेन महत्त्वमुच्यते; यस्य नाशात् तु नाशोऽस्तीति पाठान्तरात्मकेऽपि तस्यौजसःक्षये मरणमित्यर्थः; धारीति जीवधारकसंयोगिभ्यः प्रधानत्वात्, शरीररसस्नेह इति शरीररसस्य स्नेहवत् स्नेहरूपश्च सारवचनः, तेन शरीररसानां धातूनामपि सार इत्यर्थः, एतच्च प्रकारान्तरेणार्थाद्धृदयाभिकथनं कथनमोजसोऽर्थहृदयाश्रयत्वकथनार्थम्। तत्फला ओजःफला ओजोवहा इति यावत्, एतेन यथोक्तगुणशालित्वेनौजो महत्, एतद्वहने फलन्तीति महाफला धमन्य उक्ताः; विपरीताः।

* यस्य नाशात् तु इति वा पाठः।

तन्महत्ता महामूलास्तच्चौजः परिरक्षता।
परिहार्य्या विशेषेण मनसो दुःखहेतवः॥
हृद्यं यत् स्याद् यदौजस्यं स्रोतसां यत् प्रसादनम्।
तत्तत् सेव्यं प्रयत्नेन प्रशमज्ञानमेव च॥ ४॥

अथ खल्वेकं प्राणवर्द्धनानामुत्कृष्टतममेकं बलवर्द्धनानामेकं बृंहणानामेकं नन्दनानामेकं हर्षणानामेकमयनानामिति। तत्राहिंसा प्राणिनां प्राणवर्द्धनानामुत्कृष्टतमा, वीर्य्यं

सिरा किं धमनीभ्यः पृथगित्यत आह—ध्मानादित्यादि। ध्मानान्मध्ये शुषिरभावात् धमन्य उच्यन्ते। स्रवणाद्रसादिस्रावपथत्वात् स्रोतांस्युच्यन्ते। सरणाद्रसादीनां गमनात् सिरा इत्युच्यन्ते। इत्येवं प्राणायतनत्वात् तन्महत् खलु हृदयं ता महामूला ओजोवहा दश सिरास्तच्चौजः परिरक्षता पुंसा मनसो दुःखहेतवो विशेषेण परिहार्य्याः, यच्च हृद्यं हृदयस्य हितं स्यात् यदोजस्यमोजोहितं स्यात् यच्च स्रोतसां प्रसादनं प्रशमज्ञानमेव यत् तत्सर्व्वं प्रयत्नेनौजः परिरक्षता सेव्यमिति॥ ३।४॥

गङ्गाधरः—प्रशमज्ञानं त्रिगुणोति अथेत्यादि। एकं प्राणवर्द्धनानामुत्कृष्टतममिति उत्कृष्टतममुत्तरोत्तरमनुवर्त्तनीयम्। प्राणवर्द्धनबलवर्द्धनबृंहणनन्दनहर्षणायनानां षण्णामेकैकमुत्कृष्टतमं क्रमेण दर्शयति। तत्राहिंसा प्राणिनां प्राणवर्द्धनानामुत्कृष्टतमा। सर्व्वत्रैव अहिंसाशब्देन स्वेतरेषां प्राण्यप्राणिनामपकारक्रिया। यथा परेषां नरादीनां धनग्रहणार्थमनिष्टकरणम्, पृथिव्यादीनां

निरुक्तिमाह—बहुधा वा ताः फलन्तीति, ता हृदयाश्रिता दश धमन्यो बहुधाऽनेकप्रकारं फलन्तीति निष्पद्यन्ते; एतेन मूले हृदये दशरूपाः सत्यो महासंख्याः शरीरे प्रतानभेदा भवन्तीत्युक्तम्। धमनीशब्दादिनिरुक्तिं करोति—ध्मानादित्यादि। ध्मानात् पूरणात् वायुना रसादिनेत्यर्थः; स्रवणादिति रसादेरेव पोष्यस्य स्रवणात्, सरणात् देशान्तरगमनात्॥ ३॥

चक्रपाणिः—सम्प्रति हृदिस्थस्य मनसः परिपालनहेतुमाह—तन्महदित्यादि। तन्महदिति षडङ्गादिस्थानं हृदयं; ता महामूला इत्योजोवहा धमन्यः; तच्चौज इति "येनौजसा" इत्यादिनोक्तगुणमोजः। प्रशमः शान्तिः। ज्ञानं तत्त्वज्ञानम्॥ ४॥

चक्रपाणिः—सेव्यप्रसङ्गेन प्राणवर्द्धनोत्कृष्टान्यहिंसादीन्यप्याह—अथ खल्वित्यादि। एकमित्येकमेव, न द्वितीयमुत्कृष्टतममस्तीत्यर्थः; अयनानामिति मार्गाणाम्; यद्यप्यन्नं प्राणवर्द्धने

बलवर्द्धनानां, विद्या बृंहणानाम्, इन्द्रियजयो नन्दनानां, तत्त्वावबोधो हर्षणानाम्, ब्रह्मचर्य्यम् अयनानामित्येवमायुर्व्वेदविदो मन्यन्ते ॥ ५ ॥

तत्रायुर्व्वेदविदस्तन्त्रस्थानाध्यायप्रश्नानां पृथक्त्वेन वाक्यशो वाक्यार्थशोऽर्थावयवशश्च प्रवक्तारो मन्तव्याः ॥ ६ ॥

तत्राह कथं तन्त्रादीनि वाक्यशो वाक्यार्थशोऽर्थावयवशश्च

गन्धादिग्रहणादि ; तत्राप्यप्राणिनां हिंसाव्यवच्छेदार्थं प्राणिनामित्युक्तम्। प्राणिनामहिंसा प्राणवर्द्धनानामन्नपानादीनां सर्व्वेषां मध्ये श्रेष्ठतमा। अस्य पदस्य लिङ्गविपरिणामेनोत्तरोत्तरं योजना कार्य्या। वीर्य्यं शक्तिः पराक्रमः। विद्या द्विविधा—परा चापरा च। यया तदक्षरमधिगम्यते यददृश्यमग्राह्यमगोत्रम् अवर्ण यदपाणिपादमचक्षुःश्रोत्रमित्येवमादि सा परा। अथापरा शिक्षा कल्पो व्याकरणं छन्दो निरुक्तं ज्योतिषमित्येवमादिसंहिताश्चत्वारो वेदा इति। इन्द्रियजयो मनोनिग्रहः। नन्दयन्तीति नन्दना आनन्दजनका ये भावाः तेषां मध्ये मनोजयः श्रेष्ठतमो नन्दनः। तत्त्वावबोधो येषां केषाञ्चिदपि भावानां याथार्थ्येनावबोधो हर्षजननानां भावानां मध्ये श्रेष्ठतमो हर्षजननः। ब्रह्मचर्य्यमुपस्थनिग्रह, कायवाङ्मनोभिर्मैथुनान्निवृत्तिः अयनानां परलोकहितपथानां मध्ये श्रेष्ठतमं परलोकहितमयनमिति मनोदुःखहेतुवर्ज्जनमायुर्व्वेदविदो मन्यन्ते ॥ ५ ॥

गङ्गाधरः—ननु कीदृशा भवन्त्यायुर्व्वेदविद इत्यत आह—तत्रेत्यादि। आयुर्व्वेदस्य तन्त्रतत्स्थानाध्यायप्रश्नानां पृथक्त्वेन वाक्यशो वाक्यार्थशोऽर्थावयवशश्च प्रवक्तारः पुरुषा आयुर्व्वेदविदो मन्तव्या इति। आयुर्व्वेदस्य बहूनि तन्त्राणि सन्ति, अग्निवेश-भेल-जतूकर्ण-पराशर-हारीत-क्षारपाणि-कणाद-नागार्जुन-व्यास-चरक-सुश्रुत-पुष्कलावत-गोपुर-रक्षितादिप्रणीतानि ॥ ६ ॥

गङ्गाधरः—तत्र जिज्ञासावचनमाह—तत्राहेत्यादि। कथं तन्त्रादीनि

तथाप्यहिंसैवोत्कृष्टा, अहिंसया हि धर्म्मजननात् तयायुर्व्वर्द्धनं भवति ; यद्यपि मांसं बृंहणप्रधानं, तथापि तच्छरीरमात्रबृंहणं, विद्या तु शरीरमनोबृंहणीयाऽतिरिच्यते ॥ ५ ॥

चक्रपाणिः—आयुर्व्वेदश्रवणप्रसङ्गेनायुर्व्वेदविदमायुर्व्वेदस्य च निरूपकं प्रकरणं ब्रूते—तत्रेत्यादि। वाक्यश इत्यादि स्वयमेव व्याकरिष्यति, तन्त्रं शास्त्रम्, आर्षमृषिकृतम्,

उक्तानि भवन्तीति ? अत्रोच्यते। तन्त्रमार्षं कार्त्स्न्येन यथाम्नायमुच्यमानं वाक्यशो भवत्युक्तम्। बुद्ध्या सम्यगनुप्रविश्यार्थतत्त्वं वाग्भिर्व्याससमासप्रतिज्ञाहेतूदाहरणैर्युक्ताभिस्त्रिविधपुरुषाणां बुद्धेरवगम्याभिः* उच्यमानं वाक्यार्थशो भवत्युक्तम्। तन्त्रनियतार्थानामर्थदुर्गाणां पुनर्विभावनैरुक्तमेवार्थावयवशो भवत्युक्तम्॥ ७॥

वाक्यादिक्रमेणोक्तानि भवन्तीत्याह चेत् तदात्रोच्यते। तन्त्रमार्षं यदृषीनमग्निवेशाद्यन्यतमर्षिप्रणीतं तदुच्यते। तत् तन्त्रमुक्त्वा तस्य यावन्ति स्थानानि तानि ब्रूयात् षट्स्थानं सौश्रुतं तदर्थानवाद्भिर्वक्तव्यं—सूत्र-निदान-शारीर-चिकित्सा-कल्पोत्तरतन्त्राणीति षट् स्थानानि ; तत्र यावन्तोऽध्यायास्तान् ब्रूयात्। एवं सर्व्वतन्त्राणां स्थानाध्याया वक्तव्याः। अर्थतस्यानुपूर्व्व्या यथाम्नायं कार्त्स्न्येन यदुच्यते पाठात् तद्वाक्यशो भवत्युक्तं तत् तन्त्रम्। अथ वाक्यार्थशो यथा भवत्युक्तं तत्तन्त्रं तदाह—बुद्ध्येत्यादि। तस्याधीतस्य तन्त्रस्य पुनरेकैकस्य वाक्यस्यार्थतत्त्वं बुद्ध्या सम्यगनुप्रविश्य व्यासादियुक्ताभिर्वाग्भिस्त्रिविधानाम् अल्पबुद्धिमध्यबुद्धितीव्रबुद्धीनां पुरुषाणां त्रिविधबुद्धेः अवगम्याभिरुच्यते यत् तद्वाक्यार्थशो भवत्युक्तमिति। अथार्थावयवशश्च यथा वक्तव्यं तदाह—तन्त्रेत्यादि। तत्र तत्र तन्त्रे नियता ये अर्था येषां वाक्यानां तेषां मध्ये यानि वाक्यान्यर्थतो दुर्गाणि तेषां पुनर्विभावनैरुक्तं वाक्यमर्थावयवशो भवत्युक्तमिति॥ ७॥

यथाम्नायमुच्यमानमिति यथापाठक्रमेणोच्यमानम् ; उदाहरणं दृष्टान्तः, उपनयः सिद्धान्तोपपादितस्य साधनधर्म्मस्य साध्ये पुनः कथनम्, यथा तथा चायं धूमवानिति ; निगमनं हेतुसाधितसाध्यधर्म्मकथनम्, यथा—तस्मादग्निमानिति ; तन्त्रनियतानामिति तन्त्रगतानाम् ; विभावनैरुक्तमिति व्याख्यानैः कथनम्, उक्तमिति भावे क्तः ; अस्योदाहरणम्, यथा—"शरीरचेष्टा या चेष्टा स्थैर्य्यार्था बलवर्द्धिनी" इत्यत्र 'दृष्टा या चेष्टा' इत्येतावन्मात्रमुच्यते, तेन द्वितीयचेष्टापदस्य दुर्गस्य व्याकरणपरं भवति॥ ६।७॥

* व्याससमासप्रतिज्ञाहेतूदाहरणोपनयनिगमनयुक्ताभिस्त्रिविधशिष्यबुद्धिगम्याभिरिति पाठान्तरम्।

तत्र चेत् प्रष्टारः स्युः चतुर्णामृक्सामयजुरथर्व्ववेदानां कं वेदमुपदिशन्त्यायुर्व्वेदविदः, किमायुश्च कस्मादायुर्व्वेदः किमर्थमायुर्व्वेदः शाश्वतोऽशाश्वतो वा कति चास्याङ्गानि कैश्चायमध्येतव्यः कैः किमर्थमिति ॥ ८ ॥

अत्र भिषजा पृष्टेनैवमुच्यते—चतुर्णामृक्-साम-यजुरथर्व्ववेदानामात्मनोऽथर्व्ववेदेऽस्योक्तिः *। वेदो ह्यथर्व्वा दान-स्वस्त्ययनबलिमङ्गल-होमनियमप्रायश्चित्तोपवासमन्त्रादि-परिग्रहाच्चिकित्सां प्राह। चिकित्सा चायुषो हितायोप-

गङ्गाधरः—एवं तन्त्रस्थानाध्यायानां प्रश्नानामुत्तरे कृते सति तत्र चेत् केऽपि प्रष्टारः स्युरेवम्। तद् यथा। चतुर्णाम् ऋग्वेदादीनां कं वेदमायुर्व्वेदविद उपदिशन्त्यायुर्व्वेदम्। किञ्चायुरुपदिशन्ति। कस्मात् कारणादायुर्व्वेद इत्युच्यते। किमर्थं किं प्रयोजनमायुर्व्वेदः। स आयुर्व्वेदः शाश्वतोऽशाश्वतो वा। अस्यायुर्व्वेदस्य कति चाङ्गानि। कैश्च वर्णैरयमायुर्व्वेदोऽध्येतव्यः। कैश्च किमर्थमध्येतव्यः इत्येवं चेत् प्रष्टारः स्युरित्यन्वयः ॥ ८ ॥

गङ्गाधरः—अथ यथाप्रोत्तरं वक्तव्यं तदाह—अत्रेत्यादि। एवं पृष्टेन भिषजा वेदश्चोपदिश्य यं वेदमायुर्व्वेदं तं वेदमुपदिश्यायुर्वाच्यम्। कं वेदमुपदिश्य इत्यत आह—चतुर्णामित्यादि। ऋग्वेदादीनां चतुर्णां वेदानां मध्येऽथर्व्ववेदे, तस्यैवाथर्व्ववेदस्यात्मन आयुर्व्वेदस्योक्तिः। अथर्व्ववेदान्तर्गत आयुर्व्वेद इत्युपदेष्टव्यम्। कस्मादित्यत आह—वेदो हीत्यादि। हि यस्मात् अथर्व्वा नाम वेदो दान-स्वस्त्ययनबलिमङ्गल-होम-नियम-प्रायश्चित्तोपवास-मन्त्रादीनां व्याधिनिवृत्त्यर्थानां परिग्रहाच्चिकित्सां प्राह। तर्हि कथमायुर्व्वेदः सोऽथर्व्ववेदः स्यादित्यत आह—यतः स खल्वथर्व्ववेदो दानस्वस्त्ययनादिभिश्चिकित्सामुवाच। सा चिकित्सा पुनरायुषो हितायोपदिश्यते, तस्मात् स एवाथर्व्ववेद-

चक्रपाणिः—इदानीमायुर्व्वेदविद् प्रश्नेनैव निर्णेतव्या इत्यतः प्रश्नानाह—तत्र चेदित्यादि। कं वेदमुपदिशन्त्यायुर्व्वेदमिति शेषः ॥ ८ ॥

चक्रपाणिः—अथर्व्ववेदे भक्तिः सेवेत्यर्थः, एतेन भिषक् सेव्यत्वेनाथर्व्ववेदस्यायुर्व्वेदत्वमुक्तं भवति। आयुर्व्वेदस्याथर्व्ववेदाभेदहेतुमाह—वेदो हीत्यादि। एतेनैकप्रयोजनत्वादथर्व्ववेदैकदेश

---

* भक्तिरित्यत्र भक्तिरिति पाठः।

**दिश्यते। वेदञ्चोपदिश्य आयुर्वाच्यम्। तत्रायुश्चेतनानुवृत्ति-र्जीवितमनुबन्धो धारि चेत्येकोऽर्थः। तत्रायुर्वेदयतीत्यायुर्व्वेदः, कथमिति चेदुच्यते, तत्र च वाच्यं—स्वलक्षणतः सुखासुखतो हिताहिततः प्रमाणाप्रमाणतश्च। यतश्चायुष्याण्यनायुष्याणि च द्रव्यगुणकर्म्माणि वेदयत्यतोऽप्यायुर्व्वेदः ॥ ९ ॥**

भाग आयुर्व्वेदः ; इति चतुर्भ्यो वेदेभ्यो नातिरिक्त आयुर्व्वेदो न चावेदो नापि वेदाङ्गम्। किन्त्वथर्व्वणोऽधिकमङ्गमित्यत उपाङ्गमुच्यते केनचित्। इत्येवं चतुर्णां वेदानां कं वेदमायुर्व्वेदमुपदिशन्त्यायुर्व्वेदविद इति प्रश्नोत्तरमुपदिश्य किमायुश्चेति प्रश्नविषयमायुर्वाच्यम्। तत्रेत्यादि। तत्रायुर्व्वेदे त्वायुरुक्तम्। चेतनानुवृत्तिर्जीवितमनुबन्धो धारि चेति पर्य्याय एकार्थ इति। चेतनानु-वर्त्तते यत्र येन वेति चेतनानुवृत्तिरायुः, जीवितं जीव प्राणधारणे इति जीवति अस्मिन्निति जीवितमायुरधिकरणे क्तः। अनुबन्ध इति। पूर्व्वपूर्व्वमाना-पायादनु पश्चादुत्तरोत्तरमानेन बध्नाति यः सोऽनुबन्ध आयुः शरीरेन्द्रियसत्त्वात्म-संयोगः। पचादित्वादच् पुंलिङ्गः। धारि चायुः, धारयितुं शीलमस्येति धारि, चौरादिको धृ धारणे, धृञ् धारणे भौवादिको वा तौदादिको धृङ् स्थिति-धारणयोर्वेति। इत्यायुरुक्त्वा कस्मादायुर्व्वेद इत्यस्योत्तरमाह—तत्रेत्यादि। आयुर्वेदयतीत्यस्मादायुर्व्वेदो नामोच्यते। सुश्रुते तु आयुर्वेत्ति वेदयति विन्दत्यस्मादस्मिन् वेत्यायुर्व्वेद इत्युक्तम्। तत्र कथमायुर्वेदयतीति चेत् पृच्छति, तदोच्यते। स्वलक्षणतः स्वरूपलक्षणतः सुखतोऽसुखतो हिततोऽहिततश्च प्रमाणतोऽप्रमाणतश्चेति। आयुर्वेदयतीत्यायुर्व्वेदः। अथ किमर्थमायुर्व्वेद इत्यस्योत्तरमायुषो हिताहितार्थमायुर्व्वेद इत्येतमाह—यतश्चेत्यादि। यतो

एवायुर्व्वेद इत्युक्तं भवति। प्रश्नक्रमेण वेदं प्रतिपाद्यायुरेव प्रतिपादनीयं भवतीत्याह—वेदञ्चोप-दिश्येत्यादि। चेतनानुवृत्तिरिति चैतन्यसन्तानः; एतच्च गर्भाद्यवधिमरणपर्य्यन्तं बोद्धव्यम्, तत्पूर्वं चेतनानुवृत्तेः, साक्षादनुपलभ्यत्वेनैवाननुवृत्तिरिति भावः; न च वाच्यम्—प्रसुप्तस्य चैतन्यविच्छेदो भवति; यतस्तत्रापि 'सुखमहमस्वाप्सम्' इत्युत्तरकालीनप्रतिसन्धानदर्शनात् सूक्ष्म-ज्ञानमस्त्येव। यद्यपि दीर्घञ्जीवितीये 'शरीरादिसंयोग आयुः' इत्युक्तम्, तथापि तत्कार्य्यत्वादिह चैतन्यानुवृत्तिः कार्य्यकारणयोरभेदविवक्षयायुरुच्यते; अनुबन्धधारिशब्दौ प्रथमाध्याये व्याकृतौ। 'कस्मादायुर्व्वेदः' इत्यस्योत्तरम्,—तत्रायुरित्यादि। वेदयति बोधयति; ये त्वत्र तन्त्रान्तरे विचारलाभादयोऽर्था व्याख्याताः, ते साक्षात्तु तदर्थजन्या इतीह नोक्ताः; स्वलक्षणतः इत्यादि

तत्रायुष्याण्यनायुष्याणि च द्रव्यगुणकर्म्माणि केवलेनोपदेक्ष्यन्ते तन्त्रेण। तत्रायुरुक्तं स्वलक्षणतो यथा यदिहैव पूर्व्वाध्याये। यच्च सुखादितस्तत्र शारीरमानसाभ्यां रोगाभ्यामनभिद्रुतस्य विशेषेण यौवनवतः समर्थानुगतबलवीर्य्य-यशःपौरुषपराक्रमस्य ज्ञानविज्ञानेन्द्रियार्थबलसमुदाये वर्त्तमानस्य परमर्द्धिरुचिरविविधोपभोगस्य समृद्धसर्व्वारम्भस्य यथेष्टविचारिणः सुखमायुरुच्यते। असुखमतो विपर्य्ययेण। हितैषिणः पुनर्भूतानां परस्वादुपरतस्य सत्यवादिनः शामपरस्य

हेतोर्वायुष्याण्यनायुष्याणि द्रव्यादीनि वेदयति अतोऽपि कारणादायुर्व्वेद इति संज्ञा। एतेनायुर्व्वेदस्य प्रयोजनमुक्तमायुषो हिताहितम् ॥ ९ ॥

गङ्गाधरः—कानि तानीह वेदयतीति? अत आह—आयुष्याण्यनायुष्याणि द्रव्यादीनि केवलेन कृत्स्नेन तन्त्रेणोपदेक्ष्यन्ते। तत्रायुः स्वलक्षणतः कुत्र प्रोक्तमिति? अत आह—तत्रेत्यादि। स्वलक्षण आयुरुक्तं पूर्व्वाध्याये यथा तथैवेह चेतनानुवृत्तिरित्यादिना। सुखासुखतो हिताहिततश्चेहोच्यते। तत्र शारीरमानसाभ्यां रोगाभ्यामनभिद्रुतस्य अभिद्रवाभाववतः अनभिभूतस्याभिभवाभाववतश्च। विशेषेण बाल्यवार्द्धक्याभ्यां विशेषेण यौवनवतः समर्थानुगतबलादिकस्य ज्ञानादिसमुदाये वर्त्तमानस्य परमर्द्धिरुचिरादुपभोगयुक्तस्य समृद्धसर्व्वारम्भस्य—समृद्धिमन्तः सर्व्वकर्म्मणामारम्भा यस्य। यथेष्टविचारिणः स्वस्वाभिलाषानुरूपविशेषचरणशीलस्य जनस्य सुखमायुरुच्यते। असुखमायुस्तो विपर्य्ययेणाभिधीयते।

अथ हितायुर्यस्य तदाह—हितैषिण इत्यादि। भूतानां हितैषिणः

स्वयमेवोदाहरिष्यति। आयुष्यानायुष्ये 'आयुः'शब्देन ग्रहणे, तेन आयुष्यानायुष्यवेदकत्वे गौणी निरुक्तिः 'आयुर्वेदः' इति। अत एवात्र 'अपि'शब्दः—'अतोऽप्यायुर्वेदः' इति; अनायुष्यमपि च ज्ञातमनेन व्यपदेशेनायुर्वृद्धिकारणमायुःकारणं भवत्येव, तेनानायुष्यमप्यायुःकारणतयायुःशब्दवाच्यं, नात्रापराधः। इहैवेति तत्रायुः 'चेतनानुवृत्तिः' इत्यादिना। तत्र 'शारीर'-इत्यादिना सुखमायुरभिधत्ते; पौरुषमुत्कृष्टं कर्म, ज्ञानविज्ञानेन्द्रियैर्बलशब्दः, इन्द्रियार्थैश्च समुदायशब्दः सम्बध्यते; किंवा ज्ञानादिभिः सर्वैरेव समुदायशब्दः सम्बध्यते। किंवा ज्ञानादिभिः सर्वैरेव 'बलसमुदाये' इति योज्यम्, बलस्य समुदायो बलसमुदायः; परमा आढ्यर्द्धिर्यस्य स परमर्द्धिः;

समीक्ष्यकारिणोऽप्रमत्तस्य त्रिवर्गं परस्परेणानुपहतमुपसेव्य पूजार्हसम्पूजकस्य ज्ञानादुपशमशीलस्य * वृद्धोपसेविनः सुनियतरागरोषेर्ष्यामदमानवेगस्य सततं विविधप्रदानपरस्य तपोज्ञानप्रशमनित्यस्याध्यात्मविदस्तत्परस्य लोकमिमञ्च अमुञ्च अवेक्षमाणस्य स्मृतिमतिमतो हितमायुरुच्यते । अहितमतो विपर्य्ययेण ॥ १०।११ ॥

प्रमाणमायुषस्त्वर्थेन्द्रियमनोबुद्धिचेष्टादीनां स्वेनाभिभूतस्य विकृतिलक्षणैरुपलभ्यते ऽनिमित्तैः । अयमस्मात्

पुरुषस्य परस्वात् परधनाहरणादुपरतस्य निवृत्तस्य सत्यवादिनः शमपरस्य शान्तिषु तत्परस्य समीक्ष्य कर्त्तव्ये गुणदोषान् समालोच्य कारिणः । अप्रमत्तस्य प्रमादशून्यस्य । त्रिवर्गं धर्म्मार्थकामं परस्परेणानुपहतञ्चोपसेव्य पूजार्हपूजकस्य । ज्ञानादुपशमशीलस्य ज्ञानविज्ञानाभ्यां प्रशंसाशीलस्य । वृद्धोपसेविनः वृद्धानां धर्म्माधर्म्मनीतिव्यवहारादिकुशलानां सेवनेन तत्सर्व्वाभिज्ञस्य । सुनियतः स्वाधीनीकृतो रागादिवेगो येन तस्य । सततं विविधानां गोहिरण्यभूम्यादीनां दाने तत्परस्य कुशलस्य । तपोज्ञानेन प्रशमो नित्यं यस्य तस्य तथा । अध्यात्मविदः आत्मानमधिकृत्य ये भावा आत्मादितत्त्वानि तानि विदन्तीति । तत्परस्याध्यात्मतत्त्वकर्म्मसु तत्परस्य । लोकञ्चेममुञ्चावेक्षमाणस्य लोकद्वये यदविरुद्धं कर्म्म तत्कारिणः । स्मृतिमतो मतिमतश्च हितमायुरुच्यते हितफललाभात् । अहितमतो विपर्य्ययेणायुरुच्यते ॥ १०।११ ॥

गङ्गाधरः—इति सुखमायुरसुखमायुर्हितमायुरहितमायुश्चोक्त्वा प्रमाणतोऽप्रमाणतश्चायुराह प्रमाणमित्यादि । आयुषः प्रमाणं स्वार्थादीनां स्वेनाभिभूतस्य विकृतिलक्षणैरुपलभ्यतेऽनिमित्तैरकारणैः । कीदृशं प्रमाणमित्यत

सम्भूता शिष्टादिसमाख्याः सर्व्वारम्भा यस्य स तथा । हितैषिणो भूतानामिति शेषः ; तत्परस्येत्यध्यात्मपरस्य, अध्यात्ममात्मादिस्वरूपम्, अमुञ्चेति परलोकम् ॥ ९—११ ॥

चक्रपाणिः—विकृतिरूपैर्लक्षणैः तेषामेव विशेषणम्—अनिमित्तैराकस्मिकैररिष्टैरित्यर्थः, अनिमित्ता हि विकृतिरर्थेन्द्रियाणामरिष्टम्, तत्रार्थविकृतिर्यथा—"नानापुष्पोपमगन्धो यस्य

* ज्ञानविज्ञानोपशमशीलस्येति चक्रसम्मतः पाठः ।

क्षणमुहूर्त्ताद्दिवसात् त्रिपञ्चदशद्वादशाहात् पक्षात् मासात् षण्मासात् संवत्सराद्वा स्वभावमापत्स्यते । तत्र स्वभावः प्रवृत्तेरुपरमो मरणमनित्यता निरोध इत्येकोऽर्थः । इत्यायुषः प्रमाणम् । अतो विपरीतमप्रमाणमरिष्टाधिकारे देहप्रकृतिलक्षणमधिकृत्य चोपदिष्टमायुषः प्रमाणाप्रमाणमायुर्वेदे ॥१२

प्रयोजनञ्चास्य स्वस्थस्य स्वास्थ्यरक्षणमातुरस्य विकार-

आह—अयमित्यादि । अयं पुमानस्मादियन्मानात् क्षणान्मुहूर्त्ताद्वा दिवसाद्वा त्र्यहात् पञ्चाहात् दशाहात् द्वादशाहाद्वा पक्षान्मासात् संवत्सराद्वा स्वभावं मरणमापत्स्यते, इत्येवं प्रमाणमायुषः स्वार्थादिविकृतिलक्षणैरकारणैरुपलभ्यते इति । तत्स्वभावमाह—तत्रेत्यादि । स्वभावः प्रवृत्त्युपरमः मरणमनित्यता निरोध इत्येकोऽर्थः पर्य्यायशब्दात् । इत्यायुषः प्रमाणमतो विपर्य्ययेण यद्वक्ष्यते मरिष्यति जन्मादित्यादिमात्रं न कालप्रमाणं तदायुषोऽप्रमाणमित्येवमायुर्वेदेऽरिष्टाधिकारे देहप्रकृतिलक्षणमधिकृत्यायुषः प्रमाणाप्रमाणमुपदिष्टमिति ॥ १२ ॥

<u>गङ्गाधरः</u>—अथ किमर्थमायुर्वेद इति प्रश्नस्योत्तरमाह—प्रयोजनञ्चेत्यादि । अस्यायुर्वेदस्य प्रयोजनं स्वस्थस्य स्वास्थ्यरक्षणं धातुसाम्यरक्षणमातुरस्य व्याधिप्रशमनं धातुवैषम्यप्रशमनं धातुसाम्यकरणमिति ॥ १३ ॥

वाति द्विर्वानिवाम्" इत्यादि ; इन्द्रियविकृतिर्यथा—"यश्च पश्यत्यदृश्यान्" इत्यादि ; मनोविकृतिर्यथा—"यैः पुरा विन्दते भावैः समेतैः परमां रतिम् । तैरेवारभ्यमाणस्य ग्लास्नोर्मरणमादिशेत्" इति ; बुद्धिविकृतिर्यथा—"बुद्धिर्बलमहेतुकम्" इत्यादि ; चेष्टाविकृतिर्यथा—"विकर्षन्निव यः पादौ मृत्युं स परिधावति" इत्यादि ; आदिग्रहणात् परिक्रमविकृत्यादयो ज्ञेयाः ; अत्र रिष्टप्रस्तावे क्षणादिपर्य्यन्तकालकथनं यत्तदृ" रिष्टजन्यमरणभावात् ; अतो विपरीतमप्रमाणम्, रिष्टहीनं न निश्चितप्रमाणमायुररिष्टाधिकार इत्यर्थः ; अन्यदपि चायुःप्रमाणज्ञानमाह—देहप्रकृतीत्यादि । देहश्च प्रकृतिश्च लक्षणञ्च देहप्रकृतिलक्षणम् ; तत्र देहमधिकृत्यायुःप्रमाणे यथा—"सर्वैः सारैरुपेताः" इत्यारभ्य यावत् 'चिरं जीविनो भवन्ति" इति , प्रकृतितो यथा—"श्लैष्मिका बलवन्तो वसुमन्तश्च भवन्ति" इति ; लक्षणतो यथा—"आयुष्मतां कुमाराणां लक्षणान्युपदेक्ष्यामः" इत्यादि ; किं वा, देहस्य सहजलक्षणं देहप्रकृतिलक्षणम्, तच्च सर्वसारप्रकृत्यादिलक्षणं बोध्यम् ॥ १२ ॥

प्रशमनम्। सोऽयमायुर्व्वेदः शाश्वतो निर्द्दिश्यतेऽनादित्वात्

गङ्गाधरः—अथायुर्व्वेदः शाश्वतोऽशाश्वतो वेति प्रश्नस्योत्तरमाह—सोऽयमायुर्व्वेद इत्यादि। स य आयुर्व्वेदयति स्वलक्षणतः सुखासुखतो हिताहिततश्च तस्य हिताहितञ्च यत्रोपदिश्यते स तथाविधायुष उपदेशोऽयमायुर्व्वेदः शाश्वतो निर्द्दिश्यते नित्य उच्यते। कस्मात्? अनादित्वात्। आदिः कारणमुत्पत्तौ कारणाभावादुत्पत्तिविनाशाभावात्। शाश्वतः शश्वद्भवतीति। अनादित्वादादिमत्त्वाभावात्। ननु श्रूयते वेदस्यादिः गायत्री तद्विशिष्टश्च परः पुरुषः। तद् यथा तैत्तिरीयोपनिषदि असद्वा इदमग्र आसीत् ततो वै सदजायत। तदात्मानं स्वयमकुरुत तस्मात् तत् सुकृतमुच्यते। अस्यानुवाकस्तत्रैव। स सोऽकामयत बहु स्यां प्रजायेयेति, स तपोऽतप्यत स तपस्तप्त्वा सर्व्वमसृज्यत यदिदं किञ्च। तत्सर्व्वं सृष्ट्वा तदेवानुप्राविशत्। सच्च त्यच्च निलयनञ्च निरुक्तञ्च अनिरुक्तञ्च विज्ञानञ्चाविज्ञानञ्च सत्यञ्चानृतञ्च सत्यमभवत्। यदिदं किञ्च तत्सर्व्वं सत्यमित्याचक्षत इति। तत्र प्राक् सर्गादेका शक्तिरासीत् तद्ब्रह्म तदा क्रियागुणव्यपदेशाभावात् तत् सदेवासदुच्यते। तदसत् प्रथमं तेजोऽसृजत तदपस्ता अन्तर्मति तेजोऽन्तर्विशिष्टा सा शक्तिः प्रथमं लोहितशुक्लकृष्णवर्णाभासाऽतिसूक्ष्मपञ्चव्यक्तरूपातिसूक्ष्मपरव्योमरूपा गायत्री बभूव सा सत्। ततः परव्योमरूपः पर आत्मा शिवो बभूव। स एवाकामयत। स सत् त्यत् सृष्ट्वा तदनुप्राविशदिति। अत्र सत्-त्यत् पदार्थविवरणम्। निलयनं यस्य यत् स्थानं सत्। यस्य यदस्थानं तदनिलयनं तत् त्यत्। निरुक्तं प्रणवः अकार उकारः मकारोऽर्द्धमात्रा इति निर्व्वचनं सत्। तदोङ्कारविजृम्भिता अकारादयो मातृकावर्णाः अनिरुक्तं त्यत् निर्व्वचनाभावात्। विज्ञानं विद्या विद्याश्रयः सदाशिवः पञ्चमो ब्रह्मपुरुषः। सत्। अपरा विद्या तदाश्रयाश्चत्वारः साङ्गा वेदा अविज्ञानमविद्या तत् त्यत्। तत्र विद्या त्रिधा भूत्वा अथर्व्ववेदञ्च त्रिधा भूत्वा ऋग्यजुःसामसु प्राविशत् ततस्त्रयी बभूव। सा सद्रूपं भूत्वैकांशे कालो नाम महाविष्णुर्बभूवापरांशेन विद्बभूव तस्य चित्तः सम्प्रसादांशः स्वयं आत्मा पुरुषो विष्णुर्गुणांशः प्रधानं नाम ब्रह्मा, त्रयमेतत् सत्यं तत् सत्। तत एतत्त्रयमेकीभवद्गुणाभिव्यक्तौ तद्गुणस्य प्रसादांशः सत्त्वगुणो मलिनांशस्तमोगुणो मध्यमांशो रजोगुणो बभूवेति, समसत्त्वरजस्तमो-

चक्रपाणि—अनादित्वादिति हेतुप्रसमाधानात्; प्रथमस्य विवरणम्—'न हि' इत्यादि।

स्वभावसिद्धलक्षणत्वात् भावस्वभावनित्यत्वाच्च। न हि नैव

विशिष्टक्षेत्रज्ञः कालानुप्रविष्ट एकं सदव्यक्तं नाम बभूव। ततोऽव्यक्तान्महदादित्रयोविंशतिस्तत्त्वानि जातानि, तदव्यक्तादिचतुर्विंशतितत्त्वमयमिदं जगद्भूदित्यव्यक्ताद्यं तदन्तं सर्व्वमनृतं सत्यं त्यदुच्यते। परमार्थतोऽनृतं लोके सत्यमित्यनृतसत्यमिति निलयनादेतदन्तं सर्व्वं सत् परमात्मानुप्रवेशात् सत्यमित्याचक्षते तत्त्वविदः, इत्येवं व्याख्यातं वायवीये। तत् यथा— शक्तिः प्रथमसम्भूता गायत्री सा पदोत्तमा। चतुर्व्यूहस्ततो देवः प्रोच्यते परमेश्वरः। तच्छिवस्य शिवायाश्च साम्यञ्चैतत् स्वभावतः। शिवयोर्न वशे विश्वं न विश्वस्य वशे शिवौ। यथा शिवस्तथा देवी यथा देवी तथा शिवः। नानयोरन्तरं विद्याच्चन्द्रचन्द्रिकयोर्यथा। चन्द्रो न खलु भात्येष यथा चन्द्रिकया विना। न भाति विद्यमानोऽपि तथा शक्त्या विना शिवः। शक्तौ यया शिवो नित्यं शक्तौ मुक्तौ च देहिनाम्। आद्या सैका परा शक्तिश्चिन्मयी शिवसंश्रया। यामाहुरखिलैस्तस्य तैस्तैरनुगुणैर्गुणैः। समानधर्म्मिणीमेव शिवस्य परमात्मनः। शिवेच्छया परा शक्तिः शिवतत्त्वैकतां गता। ततः परिस्फुरत्यादौ सर्गे तैलतिलादिवत्। ततः शिवाख्या या शक्तिः शक्त्या शक्तिसमुत्थया। तस्यां वै क्षोभ्यमाणायामादौ नादः समुद्गतः। नादाद् विनिःसृतो बिन्दुर्बिन्दोर्देवः सदाशिवः। ओङ्कारमूर्त्तिस्तत्रासीदोमित्येव ध्वनिस्तु यः। सैव माहेश्वरी देवी शुद्धविद्या महोदया। सा वाचामीश्वरी शक्तिर्वागीशाख्या तु शूलिनः। या सा वर्णस्वरूपेण मातृकेति विजृम्भते। अथानन्तसमायोगान्मायां कल्पमवासृजत्। नियतिश्च कलाविद्या कालश्च गुणपूरुषौ। मायातः पुनरेवाभूदव्यक्तं त्रिगुणात्मकम्। त्रिगुणात्ततोऽव्यक्ताद् विविक्ताः स्युस्त्रयो गुणाः। सत्त्वं रजस्तमश्चेति यैर्व्याप्तमखिलं जगत्। गुणेभ्यः क्षोभ्यमाणेभ्यो गुणेशात् तु त्रिशूलिनः। अभवन्महदादीनि तत्त्वानि तु यथाक्रमम्।) इत्यादि। इत्येवं गायत्रीपरमात्मभ्यां मिलिताभ्यां विद्यादीनामुत्पत्तिश्रवणाद् वेदो न नित्य आदिमत्त्वादिति। तत्रोच्यते। स्वभावसंसिद्धलक्षणत्वात्। इति। सोऽयमायुर्व्वेदः शाश्वत एव चतुर्थपादगायत्रीविशिष्टत्रिपाद्ब्रह्मणश्चतुष्पाद्ब्रह्मणः प्रादुर्भूतोऽपि वेदो नाशाश्वतः स्वभावसंसिद्धलक्षणत्वात्। लक्षणं ह्यायुर्व्वेदस्य हिताहितसुखदुःखायुषस्तत्प्रमाणाप्रमाण-

इह व्यवहारनित्यत्वमायुर्व्वेदे साध्यम्, तत्त्वार्थरूपस्यायुर्व्वेदस्य, न शब्दरूपस्य, किंवा

हिताहितानाञ्चोपदेश आयुर्व्वेद इति। तत्र स्वभावतः स्वरूपतः सम्यक् प्रसिद्धम्। शक्त्यवशेषे महानिर्व्वाणे पुनः सर्गे तेजोऽवन्नानि सृष्ट्वा गायत्री भूत्वा सा शक्तिर्ब्रह्म स्वयमेव परमात्मानं परमव्योमरूपं व्योमकेशं शिवं कृत्वा तेनैकीभूय प्रथमं विद्या तदाश्रयब्रह्मपुरुषसदाशिवं परमविद्या शास्त्रं वेदं तथा पुनरपरविद्याश्रयाँश्चतुरो वेदान् साङ्गानृग्वेदादीन् यदा स्रक्ष्यति तदापि खल्वेतल्लक्षणत्वेनैव स्रक्ष्यतीति स्वभावसंसिद्धलक्षणत्वादादिमत्त्वेऽप्यनादित्वात् शाश्वतः शश्वद्वृत्तेत इति नित्यतः। न हि कदाप्यन्यादृशलक्षणत्वेन विद्याविद्याशास्त्रमयान् वेदादीन स्रक्ष्यति। यथा देवनरतिर्य्यग्योनिजान् यथास्वलक्षणत्वेनैव स्रक्ष्यति नान्यादृशलक्षणत्वेन। न हि केनापि दृश्यते नरलक्षणो गौर्गोलक्षणो वा नरः। यथा च तत्तद्यथास्वकारणादपि यथास्वलक्षणत्वेन देवनरतिर्य्यग्योनिजानां पुनःपुनरुत्पत्तावपि च नश्वरत्वेऽप्यनादित्वात् शाश्वतत्वं तथा गायत्रीविशिष्टत्रिपात्पुरुषादेव चतुष्पाद्ब्रह्मणः पुनः पुनर्विद्याविद्याशास्त्रमयवेदानां साङ्गेतिहासपुराणानां प्रादुर्भावेण नश्वरत्वेऽपि चानादित्वाच्छाश्वतत्वमिति। अथ कस्मादेवं नियमो यतोऽन्यादृशलक्षणत्वेन न कदाप्येषां सर्गः स्यादिति ? अत उच्यते—भावस्वभावनित्यत्वादिति। भावा ये भवन्ति सन्ति च, तेषां स्वभावः स्वरूपं नित्यं स्वीयरूपस्य नित्यत्वात्। स्वीयं लक्षणं तेन संसिद्धम्। न च साङ्ख्याविशिष्टं स्वं हि रूपं न लक्षणं समुदायो हि रूपं प्रत्येकन्तु लक्षणम्। यो भावो यदानुपूर्व्वीकसमुदायस्तदेव तस्य रूपमेकावयवादिन्यूनाधिक्ये तु स न सम्पूर्णलक्षणः स्यादधिकलक्षणो वा स्यात्। तत्र स्वं रूपं स्वो धर्म्मः। यो यतः कारणात् यथा यत्प्रभवो यद्गुण इत्येवमादि सर्व्वत्र वोच्यते तथा स्वभावो नित्यः। नियतिकृतनियमाश्रियत एवेति। नियतिस्तु परमात्मनो यदृच्छाशक्तिकृता। परमात्मनो ह्यचिन्त्यानन्ताः शक्तयस्तासु प्रधानास्तिस्रः शक्तयो ज्ञानशक्तिर्यदृच्छाशक्तिः क्रियाशक्तिश्चेत्युक्तम् श्वेताश्वतरोपनिषदि—न तस्य कार्य्यं करणञ्च विद्यते न तत्समश्चाप्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥ इति। तद्व्याख्यातं वायवीये—ज्ञानक्रियाचिकीर्षाभिस्तिसृभिः स्वीयशक्तिभिः। शक्तिमानीश्वरः शश्वद्विश्वं व्याप्यावतिष्ठते। ज्ञानशक्तिस्तु कार्य्यं यत् कारणं करणं तथा। प्रयोजनञ्च तत्त्वेन बुद्धिरूपाध्यवस्यति। इदमित्थमिदं नेत्थं भवेदित्येवमात्मिका। इच्छाशक्ति

व्यवहारनिरामुत्वं प्राप्तोभिधायकस्तायुर्व्वेदस्य पारम्पर्य्यं मोनानित्यत्वं साध्यते ; तथायुपस्तावायु-

अभूत् कदाचिदायुषः सन्तानो बुद्धिसन्तानो वा शाश्वतश्चायुषो वेदिता । अनादिमच्च* सुखदुःखं सद्रव्यहेतुलक्षणमपरापर-

नित्या कार्य्यनियामिका । अथेच्छया क्रियाशक्तिर्यथाऽध्यवसितश्च यत् । कल्पयत्यखिलं कार्य्यं क्षणात् सङ्कल्परूपिणी ॥ इति ।

नन्वेवमेव सत्यनिनायुर्व्वेदो नित्यः, यदायुर्वेदनादायुर्व्वेदः, तदायुश्चोक्तं शरीरेन्द्रियसत्त्वात्मसंयोगः, स चानित्यद्रव्याणां द्वन्द्वसर्व्वैककर्म्मत्वात् इत्याशङ्कायामाह न हीत्यादि । हि यस्मात् । आयुषः शरीरेन्द्रियसत्त्वात्म-संयोगस्य शरीरादिकर्म्मजस्य सन्तानः प्रवाहो वृद्धिसन्तानो वा नाभूत् नासीत् नाभिरन्वासीदेव । यो यावन्तं कालं वर्त्तते तद्वर्त्तनं जीवनं तत् गायत्र्या अप्यस्ति तेजोऽबन्नसंयोगाद्धि शक्तिर्गायत्री भवतीत्येवमादि, यत् यस्मात् महानिर्व्वाणात् परं भविष्यति ततसर्व्वमायुष्मदेव भविष्यतीत्यायुषः सन्तानोऽभूदेवमायुषो वृद्धिसन्तानोऽप्यभूदेव हितसेवनादहितसेवनात् ह्रासमन्तानश्च कथमन्यथा न स्यात् हितासेवनेनायुषो ह्रासोऽहितसेवनेन वृद्धिरिति ? तस्मादायुषः प्रमाणाप्रमाणमपि चाभूदेव । सर्व्वेषामायुषो वेदयिता परमात्मा च शाश्वतः । सुखासुखञ्चायुरिति यस्यायुषि सुखं वा दुःखं तत् सुखञ्च दुःखञ्चानादिमत् । यद्यदेव महानिर्व्वाणात् परमपि पुनर्भविष्यति तत्तदपि सुखदुःखवद्भविष्यति नासुखं नादुःखं वा । सद्रव्यहेतुलक्षणं सुखं दुःखञ्चानादिमत् । यस्मिन् द्रव्ये सुखमसुखञ्च तदनादि । युक्त्यान्नपानं सुखमयुक्त्यान्नपानं दुःखं कथम् अन्यथा न भवति युक्त्यान्नपानं दुःखमयुक्त्यान्नपानं सुखमित्येवमादि । प्रीति-लक्षणं सुखं विषादलक्षणं दुःखं कथमन्यथा न स्यात् विषादलक्षणं सुखं प्रीतिलक्षणं दुःखमिति । सद्रव्यहेतुलक्षणं सुखदुःखमनादिमत् । कस्मादेवम् अनादिमत् ? अपरापरयोगात् । अपरस्य अपरेण योगोऽपरस्यापरेण योग

र्व्वेदस्यानित्यायुषो नित्यत्वम्,—'न हि नाभूत् कदाचिदायुःसन्तानः',— सर्व्वैरेवायुरपरापरसन्तान-न्यायेन विद्यते, आयुष्मतां प्राणिनामनुच्छेदादित्यर्थः ; एवं बुद्धिसन्तानानामपि न हि नाभूत् कदाचिद्, इति योजना ; एतेन तस्यापि सन्तानेन नित्यस्यायुषो वेदनमपि नित्यम् ; 'शाश्वत-श्चायुषो वेदिता' इत्यनेनायुर्व्वेदवेदितॄनित्यत्वमुक्तम् ; एतेन वेदवेदवेदितॄणामनादित्वादायु-र्व्वेदस्य नित्यत्वम् ।

न चायुःस्वरूपेणैवायुर्व्वेदविषय उक्तः, किं तर्हि, रोगादिरपीत्याह—अनादि वेत्यादि । सुखदुःखमिति, आरोग्यं सुखं व्याधिर्दुःखम् । सद्रव्यहेतुलक्षणमिति, सद्रव्य-

* अनादि च इति वा पाठः ।

**योगात्। एष चात्मसंग्रहो* विभाव्यते। आयुर्व्वेदलक्षणमिति तु यत् तत् पुनर्गुरुलघुशीतोष्णस्निग्धरूक्षादीनाञ्च द्रव्याणां† सामान्यविशेषाभ्याञ्च वृद्धिह्रासौ यथोक्तम्। गुरुभिरभ्यस्य-**

इत्येवमुत्तरोत्तरयोगादिति सर्व्वं नित्यमनादित्वात् स्वभावसंसिद्धलक्षणत्वात् भावस्वभावनित्यत्वात्। इत्यनादित्वप्रकारं दर्शयित्वा स्वभावसिद्धलक्षणत्वप्रकारं दर्शयति एष चेत्यादि। एष चात्मसंग्रहो लक्षणसमुदायरूपस्य स्वस्य संग्रहः संक्षेपो विभाव्यते चिन्त्यते। तद् यथा—आयुर्व्वेदलक्षणमिति। हिताहितसुखदुःखायुस्तद्धिताहितप्रमाणाप्रमाणोपदेश आयुर्व्वेद इत्यायुर्व्वेदलक्षणमिति। एवमृग्वेदादीनां यथास्वलक्षणं स्वरूपेण एव सिद्धं न कदाप्यन्यादृशलक्षणतया स्यात्।

इति स्वभावसंसिद्धलक्षणत्वप्रकारं दर्शयित्वा भावस्वभावनित्यत्वं दर्शयति गुर्व्वित्यादि। गुरुत्वादयो द्रव्याणां गुणाः स्वभावाः गुरुत्वादिगुणानां द्रव्याणां सामान्यविशेषाभ्यां वृद्धिह्रासौ। यथा गुरूणां सामान्येन गुरुत्वादिगुणेन वृद्धिरिति सामान्यस्य स्वभावो विशेषेण गुरूणां लघुना

चिकित्सितलिङ्गम्। हेतुशब्दस्य हि द्रव्यशब्देनैव व्याधिकारणत्वेनोक्तत्वात् प्रशमहेतुत्वमाह; केचित् तु—सहेतुलक्षणमिति पठन्ति, तत्रापि हेतुशब्देन जनकः शमकश्च रोगहेतुर्व्याख्यातः; यदि वा सुखहेतुर्भेषजं दुःखहेतुश्च निदानमिति ज्ञेयम्, लक्षणञ्च व्याध्यारोग्ययोरुभयोरपि, एतेन दुःखं तावत् कदाचिदप्यजिहासितं न भवति, जिहासितस्यानुपायो न भवति, उपायश्चायुर्व्वेदो दुःखपरिहारार्थमुपादेयः; तस्मात् दुःखप्रशमनोपायोपदेशरूपायुर्व्वेदस्यानादितेति भावः। एवं सुखस्य नित्योपादेयत्वं सिद्धम्, तदुपायस्यायुर्व्वेदस्य च, कथमनादि सुखदुःखमित्याह—अपरापरयोगादिति सन्तानादित्यर्थः।

स्वभावसंसिद्धलक्षणत्वं द्वितीयं हेतुमाह—एष चेत्यादि। एष इति सुखदुःखाद्यर्थसंग्रहोऽभिधेयसंग्रहः एतेन आयुरादिरायुर्व्वेदप्रतिपाद्य इति दर्शयति; अयञ्चायुरादिरायुर्व्वेदलक्षणमिति विभाव्यते ज्ञायत इत्यर्थः, आयुरादिभिरभिधेयैरायुर्व्वेदो लक्ष्यते, वचनं हि—"हिताहितं सुखं दुःखम्" इत्याद्यायुर्व्वेदलक्षणम्; एतेन आयुरादेस्तदायुर्व्वेदलक्षणस्यानादितया यथोक्तया स्वभावसंसिद्धलक्षणत्वं व्याकृतं भवति; स्वभावसंसिद्धमिति सर्व्वदा सन्तानन्यायेन सिद्धत्वमभिप्रेतम्।

भावस्वभावनित्यत्वादिति तृतीयं हेतुं व्याकरोति,—गुर्व्वित्यादि। गुरुलघुस्निग्धरूक्षशीतोष्णानां द्रव्याणां सामान्यविशेषाभ्यां यथाक्रमं वृद्धिह्रासौ भवतः; सदैव

* अर्थसंग्रह इति वा पाठः। † द्रव्याणामिति पाठान्तरम्।

**मानैर्गुरूणामुपचयो भवत्यपचयो लघूनामेवमितरेषामिति। एष भावस्वभावो नित्यः, स्वस्वलक्षणञ्च द्रव्याणां पृथिव्यादीनाम्। सन्ति तु द्रव्याणि गुणाश्च नित्यानित्याः।**

ह्रासः लघूनां गुरुणा ह्रास इति विशेषस्य स्वभावः। एष भावस्वभावो नित्यः, न हि सामान्येन समानां ह्रासो न विशेषेणासमानां वृद्धिः। एवं सर्व्वत्र। स्वलक्षणञ्च पृथिव्यादिद्रव्याणां खरद्रवोष्णचलत्वाप्रतिघात-लक्षणानि क्रमेण पृथिव्यादीनां नित्यानि। न हि द्रवोष्णचलाप्रतिघातलक्षणा पृथिवी कदाच स्याद्द्रवलक्षणाश्चापोऽनुष्णलक्षणं तेजोऽचललक्षणो वायुः प्रति-घातलक्षण आकाशः स्यादिति।

तर्हि किं सर्व्वं नित्यं नास्त्यनित्यमिति अत आह—सन्तीत्यादि। द्रव्याणि नित्यानि चानित्यानि च सन्ति। पृथिव्यादिद्रव्यकार्य्याणि द्रव्याणि हि अनित्यानि पृथिव्यादीनि च नित्यानि। गुणाश्च नित्यानित्याः। पृथिव्यादीनां ये गुणाः सामान्यभूताः गन्धादयस्ते नित्याः, कार्य्यद्रव्याणां पार्थिवादीनां शरीरेन्द्रियविषयसंज्ञानां कार्य्यभूताः पूतिविस्रादयो गन्धादयोऽनित्या विस्रादिगन्धा मधुरादिरसपीतादिरूपशीतादिस्पर्शोदात्तादिशब्दा अभूतोत्-पन्नाः पृथिव्यादीनां कारणभूतगन्धादिजाः। अपूर्व्वाः। न हि पूर्व्वभूताः तिरोभूत्वा वर्त्तन्ते पुनश्चोत्पद्यन्ते। तस्मादनित्याः।

पूर्व्वोक्तं स्फुटयति गुरुभिरित्यादिना एवमेवेतरेषामित्यन्तेन, एवमेवेतरेषामिति लघुभिरभ्यस्यमानैः लघूनामुपचयो भवति, अपचयो गुरूणामित्यादि द्रष्टव्यम्. एष इत्येवंप्रकारभावस्वभावो नित्य इति नैव सामान्यविशेषाभ्यां वृद्धिह्रासरूपो भावस्वभावः कदाचिदन्यथा भवतीत्यर्थः। न केवलमयं भावस्वभावो नित्यः, किं तर्हि अन्योऽपीत्याह—स्वलक्षणञ्चेत्यादि। स्वलक्षणं पृथिव्यादीनां खरद्रवत्वादि, कथं पृथिव्यादिस्वलक्षणं नित्यमित्याह—सन्ति नित्यादि। द्रव्याणि यस्मात् सर्व्वदा सन्ति, गुणाश्च नित्याः सर्व्वदा, चकारात् द्रव्याणि चानित्यानि सन्ति, तत्राकाशादि द्रव्यं नित्यं, पृथिव्यादिकञ्चानित्यम्, एवं गुणा आकाशपरिमाणादयो नित्याः, अनित्याश्च कार्य्यगुणा रसादयः, अनित्या अपि च स्वजातीयापरापरसन्तानन्यायेन सर्व्वदा तिष्ठन्तीति युक्तम्; अनित्यानामपि सन्तानतो नित्यत्वमिति भावः। अत्र भावस्वभावनित्यत्वेन हेतुना भावस्वभावस्य व्याधिजनकस्य तथा व्याधिशमनकस्य नित्यत्वेन तत्प्रतिपादकस्यायुर्वेदस्य नित्यत्वमुक्तं भवतीति मन्तव्यम्।

**न ह्यायुर्व्वेदस्याभूतोत्पत्तिः* उपलभ्यतेऽन्यत्रावरोधो†पदेशाभ्याम्। एतच्च द्वयमधिकृत्योत्पत्तिमुपदिशन्त्येके। स्वाभाविकञ्चास्य लक्षणमकृतकम्, यदुक्तमिहाद्येऽध्याये। यथाग्नेरौष्ण्यम्**

ननु तर्हि चायुर्व्वेदादि शास्त्रमपि चानित्यं ब्रह्मण उत्पन्नमिति चेत् तदोच्यते—न ह्यायुर्व्वेदस्येत्यादि। हि यस्मादायुर्व्वेदस्य खल्वन्येषामपि वेदादीनां शास्त्राणामुपदेशस्वरूपाणामभूतानामुत्पत्तिर्नोपलभ्यते। यत्र ह्यायुर्व्वेद एव खल्वन्योऽपि वेदादिः पूर्व्वं भूतः स एव ब्रह्मणो मुखात् ततस्तल्लक्षणत एवोत्पन्न इति भूतोत्पन्नः। स्वभावसंसिद्धलक्षणो यत्र ह्यायुर्व्वेदोऽन्यो वा वेद आसीत् स एव यदि ब्रह्मणो मुखादुत्पन्नस्तदानश्वरश्च काले भवतीति अशाश्वत इति चेत् तदोच्यते—अन्यत्रेत्यादि। अवरोधोपदेशाभ्यामन्यत्र ह्यायुर्व्वेदस्याभूतस्योत्पत्तिर्ब्रह्मणो मुखादुपलभ्यते। उपलभ्यते तु ब्रह्मणो मुखादुपदेशः पूर्व्वभूतस्यायुर्व्वेदस्य तथान्यस्य वेदादिशास्त्रस्येति काले चावरोधः स्यान्न च विनाशः स्यादिति। एकत्र तद्द्वयमुपदेशावरोधावधिकृत्योत्पत्तिम् आयुर्व्वेदस्योपदिशन्ति। यथा—अथात आयुर्व्वेदोत्पत्तिमध्यायं व्याख्यास्याम इत्युवाच। यदि ब्रह्मणो मुखादुपदेशस्तदैवानित्य इति चेन्न, कस्मात्? यतः स्वाभाविकञ्चास्य लक्षणमकृतकं, यदुक्तमिह चाद्ये अध्याये। आद्ये दीर्घञ्जीवितीयाध्याये खल्विह तन्त्रे—हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्। मानञ्च तच्च यत्रोक्तमायुर्व्वेदः स उच्यते इति यल्लक्षणमुक्तं तदस्यायुर्व्वेदस्य अकृतकं स्वाभाविकं स्वभावसंसिद्धलक्षणं न ब्रह्मणा कृतम्। यथाग्नेरौष्ण्यमपां

अथायुर्व्वेदस्य यत्र तत्रोत्पत्तिश्रवणेन कथं नित्यत्वमित्याह—न ह्यायुर्व्वेदस्येत्यादि। अभूत्वोत्पत्तिः पूर्व्वमसत्त्वदुत्पत्तिः, अन्यत्रावबोधोपदेशाभ्यामिति यत्र यत्रायुर्व्वेदस्योत्पत्तिरुक्ता, तत्र तत्रावबोधादुपदेशाद् वा, अवबोधादुत्पत्तिर्यथा ब्रह्मण आयुर्व्वेदोत्पत्तिः, उपदेशाच्चोत्पत्तिर्यथा—इन्द्रोपदेशाद् भरद्वाजेन मर्त्यलोके आयुर्व्वेद उत्पादित इत्यादि; एतद्द्वयमित्यवबोध उपदेशश्च; ननु स्वभावसंसिद्धलक्षणत्वादिति यो हेतुरुक्तः, तत्र स्वाभाविकञ्च लक्षणं भविष्यति अनित्यञ्च, यथा—घटे कम्बुग्रीवाकारतादि, न हि तत् स्वाभाविकमपि घटस्य नित्यतां साधयतीत्याह—स्वाभाविकञ्चेत्यादि। अकृतकमिति नाम्नसरादिना कृतम्; यदुक्तमिह "स्वलक्षणतः सुखदुःखतः" इत्यादिना, आद्ये चाध्याये दीर्घञ्जीवितीये "हिताहितं सुखं दुःखम्" इत्यादिना। अत्रैवाकृतकत्वे दृष्टान्तमाह—यथाग्नेरौष्ण्यमित्यादि; एतेनास्य लक्षणस्य

* अभूत्वोत्पत्तिरिति वा पाठः। † अवरोध इत्यत्र अवबोध इति चक्रसम्मतः पाठः।

**अपां द्रवत्वं भावस्वभावनित्यत्वमपि चास्य यथोक्तं गुरुभिरभ्यस्यमानैर्गुरूणामुपचयो ह्यपचयो लघूनामिति ॥ १३।१४ ॥**

द्रवत्वं स्वाभाविकं न ब्रह्मणा कृतम्। यदि हि ब्रह्मणा कृतं स्यात् तदान्यथापि कदाचित् कृतो न कुर्य्यादग्निः शीतो जलमुष्णमिति। इत्यग्नेरुष्णत्वस्वभावो जलस्य द्रवत्वस्वभावो यथा नित्यस्तथा सर्व्वेषां भावानां स्वभावनित्यत्वमपि चास्यायुर्व्वेदस्य स्वभावस्य नित्यं यथोक्तम्। गुरुभिरित्यादि। गुरुभिर्द्रव्यैरभ्यस्यमानैर्गुरूणां शारीरधातूनामुपचयः स्यादपचयो लघूनामित्येवमादिरुपदेशस्वभावो नित्यः। न हि कदाचिदुपदेशः करिष्यते गुरुभिरभ्यस्यमानैरुपचयो लघूनामपचयो गुरूणामित्येवमादिः। इति।

गौतमन्यायभाष्ये च वात्स्यायनेनोक्तम्। मन्वन्तरयुगान्तरेषु चातीतानागतेषु सम्प्रदानाभ्यासप्रयोगाविच्छेदो वेदानां नित्यत्वमाप्तप्रामाण्याच्च प्रामाण्यमिति। सांख्ये च कापिलेनाप्युक्तम्। तत्र पूर्व्वपक्षसूत्रम्। न नित्यत्वं वेदानां कार्य्यत्वश्रुतेः। वेदा न नित्याः कार्य्यत्वश्रुतेः। श्रूयते हि मुण्डकोपनिषदि। तस्मादृचः सामयजूंषीत्यादिवेदेन विश्वरूपस्य आत्मनः कार्य्या वेदा इति। बृहदारण्यके च श्रूयते। तथास्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद इति। तस्माद् वेदानां पौरुषेयत्वादनित्यत्वं न त्वपौरुषेयत्वात् नित्यत्वमिति। तत्रोत्तरमाह—न पौरुषेयत्वं तत्कर्त्तुः पुरुषस्याभावात्। मुण्डकादिषु विश्वरूपादात्मतो वेदानामभिव्यक्तिश्रुतावपि न पौरुषेयत्वं कस्यचित् पुरुषस्योपदेशक्रियातो जातत्वम्। कस्मात्? तत्कर्त्तुः पुरुषस्य अभावात्। वेदकर्त्ता हि पुरुषः कश्चिन्न विद्यते। उक्तञ्च पराशरेण स्मृतिशास्त्रे। न कश्चिद् वेदकर्त्तास्ति वेदस्मर्त्ता प्रजापतिः। तथैव धर्म्मं स्मरति मनुः कल्पान्तरान्तरे। इति। तस्मादपौरुषेयत्वाद् वेदा नित्याः। कस्माद् वेदकर्त्तुः पुरुषस्याभावः? योग्यायोग्ययोरयोग्यत्वात्। तत्कर्त्तुः पुरुषस्य अभावो योग्यायोग्ययोरयोग्यत्वात्। योग्यो भवति कोऽथः कोऽर्थो वाप्ययोग्यः तदुभयोः कार्त्स्न्येनोपदेशे योग्यत्वाभावात्। तत्राह वादी, नापौरुषेयत्वान्नित्यत्वम् अङ्कुरादिवत्। वेदानामपौरुषेयत्वान्नित्यत्वं न, अङ्कुरादिवत्। यथाङ्कुरादि-

अकृतकत्वे व्यवहारनित्यत्वात् तत्प्रतिपादकस्यायुर्व्वेदस्यापि व्यवहारनित्यत्वमिति भावः, न केवलं स्वाभाविकं ब्रह्मणाकृतत्वम्, किं तर्हि भावस्वभावनित्यत्वमपि; यदि कर्मनिरीश्वरादिना कृतमित्याह भावस्वभावनित्यत्वमपि चेति, अकृतकमपि चकारेणानुकर्षति; तदेव भाव-

कारणं बीजमपौरुषेयं तस्माच्च बीजादङ्कुरो जायते बीजञ्चोपमृद्नन्नङ्कुरोऽभिव्यज्यते, तथा वेदोऽपौरुषेयोऽपि यदाभिव्यज्यते तदा तमपौरुषेयं वेदमुपमृद्नन् प्रजापतिमुखादभिव्यज्यते, इति बीजभूतवेदस्योपमर्द्दनेनाभिव्यक्तवेदरूपत्वेऽभावादभिव्यक्तवेदनान्नाशोऽङ्कुरनाशे बीजाभाववदिति, तस्मात् वेदोऽपौरुषेयोऽप्यनित्यः । अत्र चेदुच्यते—न बीजादङ्कुरप्रादुर्भाववद्वीजभूतात् वेदमात्रात् वेदप्रादुर्भावः स्थौल्यहेतूपादानान्तरानुप्रविशतो वेदाद्वेदाभिव्यक्तेस्तदुपादानान्तरनाशात् पूर्व्वभावेण वेदावस्थानादिति । तत्र ब्रूमः—तेषामपि हि तद्योगे दृष्टबाधादिप्रसक्तिः । हि यस्मात् । तेषामङ्कुरादीनामपि तदुपादानबीजस्य नित्यस्य तदुपादानान्तरक्षेत्रमृज्जलादियोगे यथा प्रादुर्भावस्तथा बीजभूतात् वेदात् उपादानान्तरसत्त्वरजस्तमोगुणप्रधानेऽपि प्रव्यक्तरूपेण ब्रह्मणो मुखात् प्रादुर्भावेऽपि वेदानां दृष्टस्य प्रत्यक्षेण बीजादङ्कुरोत्पादस्य ततः प्रदानग्रहणादेश्च बाधादिप्रसङ्गः स्यात् तस्मादपौरुषेयत्वान्न नित्यत्वं वेदानामिति । तत्राह कपिलः । यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत् पौरुषेयम् । यस्मिन् अदृष्टेऽपि सूक्ष्मे नित्ये भावे कारणतः स्थूलरूपेणाभिव्यक्तौ कृतोऽयं भाव इति बुद्धिरुपजायते यस्य तन्मते तत् पौरुषेयमुच्यते, विश्वरूपस्य निश्वासात् प्रजापतिमुखाद् वेदोत्पत्तेरिति । सतस्तु कारणान्तरयोगेणाभिव्यक्तिरिति नोच्यते । तन्न प्रमाणम् । किं पुनः प्रमाणमित्यत आह—निजशक्त्याभिव्यक्तेः सतः प्रामाण्यम् । सतो नित्यस्य सूक्ष्मस्य बीजभूतस्य निजशक्त्या स्वप्रभावेण कारणान्तरमादाय स्थूलरूपेणाभिव्यक्तेः सतः प्रामाण्यम् । कुतः ? यतः नासतः ख्यानं नृशृङ्गवत् । असतोऽविद्यमानस्य खल्ववस्तुनः ख्यानमभिव्यक्त्यनभिव्यक्त्युत्पत्त्यादिवचनं नास्ति । नृशृङ्गवत् । यथा नृणां शृङ्गमुत्पद्यते नोत्पद्यते वेति नोच्यते । उपादानाभावात् । तर्हि किं सतः ख्यानमित्यत आह—न सतो बाधदर्शनात् । सत उत्पत्तेः ख्यानं न बाधदर्शनात् । यत् प्रागेवास्तीति सत् । तस्य पुनरुत्पत्तिः कथं सम्भवतीति बाधदर्शनात् । तर्हि किमनिर्व्वचनीयस्योत्पत्तिख्यानमित्यत आह—नानिश्चितवचनीयस्य तदभावात् । अनिश्चितवचनीयस्य खल्वस्ति वा नास्तीति निर्वचनानर्हस्य नोत्पत्तौ ख्यानं, तदभावात् । किमुपादानं जायत इति निर्वचनाभावात् । तर्हि कस्य ख्यानं भवतीत्यत उच्यते—

स्वभावनित्यत्वं दर्शयति—यथोक्तमित्यादि । सामान्यविशेषकृतवृद्धिह्रासकारकोऽपि भावस्वभावो न केनचित् कृत इत्यर्थः, ततश्चायुर्व्वेदोऽपि नित्यः ॥ १३।१४ ॥

तस्यायुर्व्वेदस्याङ्गान्यष्टौ तद् यथा—कायचिकित्सा शालाक्यं शल्यापहर्त्तृकं विषगरवैरोधिकप्रशमनं भूतविद्या कौमारभृत्यं रसायनानि वाजीकरणमिति ॥ १५ ॥

सदसत्ख्यातिर्बाधाबाधात्। प्रागेव यत् सत् तदेव कारणत उत्पद्यते रूपविशेषेणेत्यसत्। तस्य ख्यातिर्यथा वीजं सत् तस्माज्जातोऽङ्कुरो नङ्कुरति काले ततोऽसन्निति ख्यायते। कस्मात्? बाधाबाधात् बाधस्याबाधात्। बाधाभावाच्च। सत उत्पत्तिख्यातेर्बाधादसत उत्पत्तिख्यातेरबाधात्। सदेव कारणत उत्पद्यते इति ख्यातेरबाधादिति॥ १३।१४ ॥

गङ्गाधरः—इत्येवमायुर्व्वेदस्य शाश्वतत्वमुपदिश्य कति चास्याङ्गानीति प्रश्नस्योत्तरमाह—तस्य आयुर्व्वेदस्येत्यादि। कायचिकित्सेति कायस्यान्तरग्नेश्चिकित्सा। सुश्रुते तु—कायचिकित्सा नाम सर्व्वाङ्गसंसृतानां व्याधीनां ज्वरातिसार-रक्तपित्तशोषोन्मादापस्मार कुष्ठ मेहादीनामुपशमनार्थमिति ॥ ० ॥ शालाक्यमिति शलाका नेत्रपटलवेधार्थं शस्त्रविशेषः, किंवा नेत्ररोगशमनार्थं भेषजविशेषोऽञ्जनशलाका तदुपलक्षितभेषजमधिकृत्योर्द्ध्वजत्रुगतानां रोगाणामुपशान्त्यर्थम्। सुश्रुतेऽप्युक्तम्। शालाक्यं नाम—ऊर्द्ध्वजत्रुगतानां रोगाणां श्रवणनयनवदनघ्राणादिसंश्रितानामुपशमनार्थमिति ॥०॥ शल्यापहर्त्तृकमिति शल्य गतौ शल्यं कण्टकादिकं तस्य अपहर्त्ताऽरमधिकृत्य व्रणादिचिकित्सितम्। सुश्रुतेऽप्युक्तम्—तत्र शल्यं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्ट्रास्थिबालनखपूयास्रावान्तर्गर्भशल्योद्धरणार्थं यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थञ्चेति ॥०॥ विषेत्यादि। विष-गर-वैरोधिकप्रशमनमिति—विषं स्थावरजङ्गमात्मकं, गरः संयोगजविषं, वैरोधिकं विरोधे सति यद्दुष्टं विदाहेन नखादिभिः कृत्रिमं स्त्रीशत्रुप्रभृतिकम्; तेषां प्रशमनमगदतन्त्रं नाम चिकित्सितम्। सुश्रुते चोक्तम्—अगदतन्त्रं नाम सर्पकीटलूतावृश्चिकमूषिकादिदष्टविषव्यञ्जनार्थं विविधविषसंयोगविषोपहतोपशमनार्थमिति ॥०॥ भूतविद्येति। भूता देवासुरादयस्तेषां ज्ञानार्था प्रशमनार्था च विद्या

चक्रपाणिः—सम्प्रति कानि चेत्यादिप्रश्नोत्तरं तस्येत्यादि। कायस्यान्तरग्नेश्चिकित्सा, पटलवेधशलाकाप्रधानमङ्गं शालाक्यम्, गरः कालान्तरप्रकोपि विषम्, वैरोधिकं संयोगविरुद्धम्, भूतानां राक्षसादीनां ज्ञानार्था प्रशमनार्था च विद्या भूतविद्या, कुमारभरणमधिकृत्य कौमारभृत्यम् ॥ १५ ॥

**स चाध्येतव्यो ब्राह्मणराजन्यवैश्यैः, तत्रानुग्रहार्थं प्रजानां॰**

भूतविद्या। सुश्रुते च—भूतविद्या नाम देवासुरगन्धर्व्वयक्षरक्षःपितृपिशाच-नागग्रहाद्युपसृष्टचेतसां शान्तिकर्म्मबलिहरणादिग्रहोपशमनार्थमिति ॥०॥ कौमारभृत्यमिति। कुमाराणां भृतिं धारणपोषणमधिकृत्य चिकित्सितम्। सुश्रुते चोक्तम्—कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानाञ्च व्याधीनामुपशमनार्थमिति ॥०॥ रसायनानीति। रसस्य समानेनाहरहरयनं येन तद्रसायनम्, अव्यापन्नरसस्य सर्व्वदा गमनेनोत्तरोत्तरधातूनामव्यापत्त्या वयःस्थापनादिकं भवतीति। सुश्रुते-नाप्युक्तम्—रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगापहरण-समर्थञ्चेति ॥०॥ वाजीकरणमिति। वाजः शुक्रं तत् प्रशस्तत्वेन यस्या-स्तीति वाजी, अवाजिनं वाजिनं करोत्यनेनेति वाजीकरणम्। सुश्रुते च—वाजीकरणतन्त्रं नाम अल्पदुष्टविशुष्कक्षीणरेतसामाप्यायनप्रसादोपचयजनन-निमित्तं प्रहर्षजननार्थञ्चेति। तत्र चिकित्सास्थाने चोक्तम्—सेवमानो यदौचित्याद् वाजीवात्यर्थवेगवान् नारीस्तर्पयते तेन वाजीकरणमुच्यते। इति। इत्यष्टाङ्गान्यायुर्व्वेदस्य ॥ १५ ॥

गङ्गाधरः—अथ कैरध्येतव्य इति प्रश्नोत्तरमाह—स चेत्यादि। स चायुर्व्वेदो ब्राह्मणराजन्यवैश्यैरध्येतव्यः। ब्राह्मणाद् ब्राह्मण्यां जातो ब्राह्मण-स्तथा ब्राह्मणाद् विधिना (स्वोढ़ायां क्षत्रियकन्यायाञ्च ब्राह्मण्यां पत्न्यां जातो मूर्द्धाभिषिक्तो नाम सुवर्णको भिषक् च ब्राह्मणः। तथा ब्राह्मणाद् विधिना स्वोढ़ायां वैश्यकन्यायाञ्च ब्राह्मण्यां जातोऽम्बष्ठः भिषक् ब्राह्मणः क्षत्रियाज्जातो माहिष्यश्चेति वैश्यावैश्यश्च। एतेन शूद्राणां शूद्रयोनीनाञ्च ब्राह्मणक्षत्रिय-वैश्येभ्यो जातानां शूद्रायामायुर्व्वेदाध्ययनाधिकारः प्रतिषिद्धः। यत् तु सुश्रुते प्रोक्तम्—शूद्रमपि कुलगुणसम्पन्नमनुपनीतं मन्त्रवर्ज्जमध्यापयेदित्येके इति, तच्छल्यतन्त्रप्रधानतन्त्राभिप्रायेणैके वदन्ति न सर्व्वतन्त्राभिप्रायेणेति।

अथ कैः किमर्थमध्येतव्य इति प्रश्नस्योत्तरमाह—तत्रेत्यादि। अनुग्रहार्थं

चक्रपाणिः—आरक्षार्थं राजन्यैरिति क्षत्रियस्य परिपालनधर्म्मकत्वात्; अनुध्यायतीति मनसा

• प्राणिनामिति क्वचित् पाठः।

ब्राह्मणैः, आत्मरक्षार्थं* राजन्यैः, वृत्त्यर्थं वैश्यैः, सामान्यतो वा धर्म्मार्थकामपरिग्रहार्थं सर्व्वैः ; तत्र च यदध्यात्मविदां धर्म्मपथ-

प्रजानां ब्राह्मणैरिति। वक्ष्यमाणेन सामान्यतो वेत्यादिना ज्ञापितत्वात् ब्रह्मचर्य्याश्रमं यथाविधि ये ब्राह्मणा आयुर्व्वेदं नाधीयते। अथ तैर्गृहाश्रमं यथाविधि प्रजानामनुग्रहार्थमेव। धर्म्मार्थमायुर्व्वेदोऽध्येतव्यो न तूपजीवनार्थम्। ब्रह्मचर्य्याश्रमो ह्यध्ययनकालस्तत्र यदधीते तद्धर्म्म्यं सर्व्वं यत् कर्त्तुमर्हन्ति। गृहाश्रमस्तु क्रियाकालो न त्वध्ययनकालस्तत्र यदधीते यथाविधि तदपि धर्म्मार्थं धर्म्म्यं न जीविकार्थं धर्म्म्यम्। तत्र यदि जीविकां करोति याजनाध्यापन-प्रतिग्रहैस्तदा पातकभाग् भवतीत्यभिप्रायेण मनुसंहितायामुक्तम्। चिकित्सकान् देवलकानित्यादिना श्राद्धे भोजने पङ्क्तिदूषका ब्राह्मणाश्चिकित्सकस्य मृगयोरित्यादिना चाभोज्यान्ना ब्राह्मणाः। आत्मरक्षार्थं राजन्यैरिति। ब्रह्मचर्य्याश्रमे ये च राजन्या यथाविधि नायुर्व्वेदमधीयतेऽथ तैरात्मरक्षार्थं गृहाश्रमे यथाविधि आयुर्व्वेदोऽध्येतव्यो न जीविकार्थं धर्म्मकामार्थं वा। गृहाश्रमे तत्काले अध्ययनात् तेष्वनधिकारात्। वृत्त्यर्थं वैश्यैरिति। ब्रह्म-चर्य्याश्रमे ये च वैश्या यथाविधि चायुर्व्वेदं नाधीयतेऽथ तैर्गृहाश्रमे वाणिज्य-वत् वृत्त्यर्थं यथावदायुर्व्वेदोऽध्येतव्यः। सामान्यतो वा धर्म्मार्थकामपरिग्रहार्थं सर्व्वैरिति। सर्व्वैः ब्राह्मणराजन्यवैश्यैः सामान्यतः खलु ब्रह्मचर्य्याश्रमे यथा-वदायुर्व्वेदाध्ययनस्य धर्म्म्यत्वाद्धर्म्मार्थकामपरिग्रहार्थमायुर्व्वेदोऽध्येतव्य इति। पूर्व्वकाले हि दक्षेन्द्रभरद्वाजादिभिर्गृहाश्रम एवायुर्व्वेदोऽधीतस्तेषां ब्रह्मचर्य्या-श्रमकाले त्वायुर्व्वेदस्य प्रकाशो नाभूत्। यदा तु ब्रह्मणायुर्व्वेदः प्रकाश्य प्रजापतये दत्तस्ततोऽनन्तरं जातावश्विनौ ब्रह्मचर्य्याश्रमे प्रजापतेरायुर्व्वेद-मधिजगाते। तौ वैद्यशब्दं लेभाते। चिकित्साजीविनौ चाभूतां न प्रजा-पतीन्द्रादयः। एवमेव मर्त्यलोके भरद्वाजमरीच्यादयो ब्रह्मचर्य्याश्रमे आयुर्व्वेदस्य प्रकाशाभावादध्ययनं न चक्रुर्वैद्यशब्दञ्च न लेभिरे न चिकित्सा-जीविनो बभूवुः। ततोऽनन्तरकाले जाताश्चान्ये ब्राह्मणा ब्रह्मचर्य्याश्रमे यथावदायुर्व्वेदमधिजगिरे, वैद्यशब्दञ्च लेभिरे। चिकित्सितञ्च तेषां प्रजीवनं धर्म्म्यमित्यतो न पङ्क्तिदूषका न चाभोज्यान्नाः। इत्यभिप्रायेणोक्तं

चिकित्सति, वेदयति इत्यन्यस्य प्रतिपादयति, अनुतिष्ठति इति तदनुगुणान् वैद्येनानुतिष्ठति ;

* आत्मार्थमिति चक्रसम्मतः पाठः।

स्थानां धर्म्मप्रकाशिनां* वा मातृपितृभ्रातृबन्धुगुरुजनस्य वा विकारप्रशमने यः प्रयत्नवान् भवति। यच्चायुर्व्वेदोक्त-मध्यात्ममनुध्यायति वेदयत्यनुविधीयते वा सोऽस्य परो धर्म्मः। या पुनरीश्वराणां वसुमतां वा सकाशात् सुखोपहारनिमित्ता भवत्यर्थानामवाप्तिरात्मरक्षणञ्च†, या च स्वपरिगृहीतानां प्राणिनामातुर्य्यादात्मरक्षा‡ सोऽस्यार्थः। यत् पुनरस्य च विद्वद्ग्रहणं यशः शरण्यत्वञ्च, या च सम्मानशुश्रूषा यच्चेष्टानां

च मनुना—अम्बष्ठानां चिकित्सितमिति)§। अथ कथमायुर्व्वेदाध्ययनेन धर्म्मार्थकामपरिग्रहो भवतीति अत उच्यते—तत्रेत्यादि। अध्यात्मविदां पुरुषाणां तथा धर्म्मपथस्थानां धार्म्मिकाणां तथा धर्म्मप्रकाशिनां वा पुरुषाणां मात्रादिगुरुजनस्य वा विकारप्रशमने यत् प्रयत्नवान् भवति भिषक् सोऽस्य भिषज आयुर्व्वेदाध्ययनस्य फलं परो धर्म्म आयुर्व्वेदोक्तक्रियाकरणान्निष्पद्यते। यच्चायु-र्व्वेदस्याध्यात्ममनुध्यायति वेदयति परान् ज्ञापयति अनुविधीयते तत्तदध्याय-स्यानुरूपेण विधानं रचनाकरणं वा सोऽप्यस्यायुर्व्वेदाध्ययनस्य परो धर्म्मः।

अथ अर्थपरिग्रहमाह—या पुनरित्यादि। ईश्वराणां राज्ञां वसुमतां धनाढ्यानां कृतचिकित्सानां सकाशात् या त्वर्थानामव्याप्तिः सुखोपभोगार्थं भवति, सोऽस्यायुर्व्वेदाध्ययनस्यार्थः फलम्। एवमात्मरक्षणञ्च चिकित्सया यत् सोऽप्यर्थः। तथा स्वपरिगृहीतानां स्वेन प्रतिपालितानां प्राणिना-मातुर्य्याद्रोगादात्मनो या च रक्षा सोऽप्यस्यार्थः फलमिति। अथ कामं दर्श-

आरक्षणमात्मादिरक्षणम्, स्वपरिगृहीतानामिति भृत्यादीनाम्, विद्वद्ग्रहणमेव यशः, विद्वद्भुपादेयताऽन्यं यश इत्यर्थः, इष्टानामिति वनितादीनाम् ॥ १६ ॥

* धर्म्मप्रकाशानामिति पाठान्तरम्। † आरक्षणमिति वा पाठः।

‡ आत्मरक्षेत्यत्र आरक्षेति क्वचित् पाठः।

§ श्रीमद्गङ्गाधरस्य स्वीयहस्तलिखितादर्शपुस्तके "स्वोदायाम्" इत्यादि—"अम्बष्ठानां चिकित्सितम्" इत्यन्तं स्थानं केनापि हरितालेन प्रच्छाद्य अपराक्षरेण तट्टीका अभिनवटीका विरचिता, मुद्रितपुस्तके च तथैव दृश्यते। अतोऽस्माभिरपि अनन्यगतिकैः सैव टीका सुगृहीता। परन्तु अध्यात्माध्यायोक्तगङ्गाधरवचनेन एतत्स्थानस्थवचनस्य परस्परविरोधात् एषा टीका नैव सङ्गच्छते।

विषयाणामारोग्यमाधत्ते, सोऽस्य काम इति यथाप्रश्न-मुक्तमशेषेण ॥ १६ ॥

अथ स भिषगादित एव प्रष्टव्यो भिषजाष्टविधं भवति, तन्त्रं, तन्त्रार्थान्, स्थानं, स्थानार्थान्, अध्यायम्, अध्यायार्थान् प्रश्नं प्रश्नार्थांश्चेति । पृष्टेन चैतद्वक्तव्यमशेषेण, वाक्यशो वाक्यार्थशोऽर्थावयवशश्चेति । तत्रायुर्व्वेदः शाखा विद्यासूत्रं ज्ञानं शास्त्रलक्षणं तन्त्रमित्यनर्थान्तरम् । तन्त्रार्थः पुनः स्वलक्षणैरुपदिष्टः, स चार्थः प्रकरणैर्विभज्यमानो भूय एव शरीरवृत्तिहेतुव्याधिकर्म्मकालकार्य्यकर्त्तकरणविधिविनिश्चयाद्

यति—यत् पुनरित्यादि । यदस्य विद्वद्ग्रहणं विपश्चितो यद् गृह्यतेऽध्ययनेन तदायुर्व्वेदग्रहणं यच्च यशः यच्च शरण्यमातुराः शरणागता भवन्ति सोऽस्य कामः । या च सम्मानशुश्रूषा यच्चेष्टानामभीप्सितानां विषयाणामारोग्य-माधत्ते सोऽप्यस्य काम इति यथाप्रश्नमशेषेणोक्तं भवति ॥ १६ ॥

अपरान् प्रश्नान् दर्शयति—अथेत्यादि । स एवंविधमुत्तरं कृतवान् भिषक् पुनरपि भिषजा अपरेणादित एवाष्टविधं प्रष्टव्यो भवति । तन्त्रमिति । तन्त्रञ्च तन्त्रार्थांश्च स्थानञ्च स्थानार्थांश्चाध्यायमध्यायार्थांश्च, प्रश्नञ्च प्रश्नार्थां-श्चेति । पृच्छतेः कर्म्माणीमानि स भिषक् चेति द्विकर्म्मकत्वात् । एवं पृष्टेन तेन भिषजा वाक्यशो वाक्यार्थशोऽर्थावयवशश्चाशेषेण प्रतिवक्तव्यः । इति । तत्र यथा—तत्रायुर्व्वेद इत्यादि । तत्रायुर्व्वेदः शाखाविद्यासूत्रमित्यादिस्तन्त्रस्य पर्य्यायः । इति तन्त्रप्रश्नस्योत्तरम् ।

अथ तन्त्रार्थप्रश्नोत्तरमाह—तन्त्रार्थः पुनरित्यादि । स्वलक्षणैस्तन्त्रस्य लक्षणै-रायुर्व्वेद इत्यादिभिः पर्य्यायार्थैरुक्तः । आयुर्व्वेदशब्दार्थ उक्तः । शाखा पुनरथर्व्ववेदस्योपाङ्गभूता वृक्षस्येव, विद्यासूत्रं परापरविद्याद्वयस्य सूत्रं सूचनम्, ज्ञानं ज्ञायतेऽनेनेति ज्ञानं, शास्त्रलक्षणं शास्त्राणि लक्ष्यन्तेऽनेनेति शास्त्रलक्षणम् । तन्त्रं तन्त्र्यते नियम्यते विधौ वा प्रतिषेधे वा कर्म्म येन तत् तन्त्रमिति । एष संक्षेपतोऽर्थः । स चार्थो भूय एव बहुतरं प्रकरणैर्विभाज्यमानः शरीरादि-

चक्रपाणिः—भिषक्परीक्षार्थं पृच्छाविधिमाह—अथेत्यादि । स्वलक्षणैरिति "तत्रायु

दशप्रकरणः, तानि च प्रकरणानि केवलेनोपदेक्ष्यन्ते तन्त्रेण ॥ १७ ॥

तन्त्रस्यास्याष्टौ स्थानानि, तद्यथा—श्लोकनिदानविमानशारीरेन्द्रियचिकित्सितकल्पसिद्धिस्थानानि। तत्र त्रिंशदध्यायं श्लोकस्थानम्, अष्टाष्टाध्यायकानि निदानविमानशारीर-

विनिश्चयात् दशप्रकरणो वक्तव्यः। तानि प्रकरणानि कृत्स्नेऽस्मिंस्तन्त्रे उपदेक्ष्यन्ते। यत्र यत्सङ्गतिमद्भवति तत्र तदुपदेक्ष्यते। तत्र शरीरं चेतनाधिष्ठानभूतं पञ्चमहाभूतविकारसमुदायात्मकमवयवभेदेनानेकप्रकारं तच्च प्रायेण शारीरस्थाने दशप्राणायतनीयेऽस्मिन्नध्याये स्रोतोविमाने च वक्ष्यते। तद्विभाव्यम्। वृत्तिराहारविहारौ, अशितपीतादिभेदेन भिन्नौ। हेतुर्व्याधीनामसात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामभेदेनोक्तः। स्वास्थ्यस्य तु कालबुद्धीन्द्रियार्थसमयोगश्च। व्याधिर्धातुवैषम्यं, तज्जं दुःखञ्च। कर्म्म क्रिया धातुसाम्यरक्षणं स्वस्थस्य धातुवैषम्यस्य प्रशमनमातुरस्येति। कालस्तु शारीरवयोऽवस्थाव्याधिपक्वापचय प्रकोपप्रशम-हेतुवृद्धिह्रासहेतूत्पत्ति-हेतुहेमन्तादिप्रातरादिरूपस्तथा क्रियाहकालश्चेति। कार्य्यं धातुसाम्यं व्याधेः पुनर्भववारणञ्च। कर्त्ता भिषग् गुणवान्। करणं द्रव्योपस्थातृव्याधितपुरुषस्वस्थपुरुषा इति। विधिर्विनियायकमुपकल्पनं भेषजार्थं क्रियार्थमाहारार्थं विहारार्थञ्चेति यावत्। तेषां विनिश्चयात निर्णयेनोपदेशात् दशप्रकरणस्तन्त्रार्थः ॥ १७ ॥

गङ्गाधरः—तन्त्रस्येत्यादि। तत्रास्य तन्त्रस्याष्टौ स्थानानि। तन्त्रान्तरस्य यथायथं वाच्यम्। तानि विवृणोति तद्यथेति—श्लोकेत्यादि। श्लोकादीनां अष्टानामष्टौ स्थानानि। स्थानं श्लोकादीनामधिकरणमिति। स्थानार्थं प्रश्नस्योत्तरमाह। तत्र क्रमेण श्लोकादिस्थानार्थानाह—तत्रेत्यादि। त्रिंशदध्यायं श्लोकस्थानमिति श्लोकस्थानार्थः, श्लोकस्थाने त्रिंशत्

वेदयतीत्यायुर्वेदः' इत्यादिना हिताहितायुरूवैरित्यर्थः; प्रकरणैरित्यायुर्वेदप्रदेशैः; दश प्रकरणानि दश भेदाः,ते च शरीरादयो दश। तत्र शरीरं पञ्चमहाभूतविकारसमुदयात्मकमवयवादिभेदाद्बहुप्रकारम्; वृत्तिराहारोऽशितपीतादिभिन्ना; हेतुस्तु व्याधिहेतुरसात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामलक्षणः; व्याधिश्च धातुवैषम्यरूपः; कर्म चिकित्सा; कार्य्यमारोग्यम्; काल

स्थानानि, द्वादशकमिन्द्रियाणां, त्रिंशकं चिकित्सितानां, द्वादशके कल्पसिद्धिस्थाने भवतः ॥ १८ ॥

भवन्ति चात्र।

द्वे त्रिंशके द्वादशकं त्रयञ्च त्रीण्यष्टकान्येषु समाप्तिरुक्ता।
श्लोकौषधारिष्टविकल्पसिद्धि-निदानमानाश्रयसंज्ञकेषु ॥१९॥
स्वे स्वे स्थाने यथास्वञ्च स्थानार्थ उपदेक्ष्यते।
सविंशमध्यायशतं शृणु नाम क्रमागतम् ॥ २० ॥

अध्याया अभिधेयाः। निदान-विमान-शारीरस्थानानि अष्टाष्टाध्यायानि; अष्टाध्यायं निदानस्थानञ्च विमानस्थानञ्च शारीरस्थानञ्चेति। शेषं स्पष्टम् ॥ १८ ॥

गङ्गाधरः—एतदर्थकश्लोकमाह भवन्ति चात्रेति। द्वे त्रिंशके। द्वे श्लोक-स्थानचिकित्सास्थानेषु त्रिंशके त्रिंशत् त्रिंशदध्याये भवतः। त्रयञ्च स्थानम् इन्द्रियस्थानं कल्पस्थानं सिद्धिस्थानञ्चेति त्रयं द्वादशकं द्वादशद्वादशाध्यायम्। त्रीणि स्थानानि खलु निदानस्थान-विमानस्थान-शारीरस्थानानि अष्टकानि अष्टाष्टाध्यायानि भवन्तीति, एषु श्लोकस्थानौषधस्थानारिष्टस्थानविकल्पस्थान-सिद्धिस्थाननिदानस्थानविमानस्थानाश्रयस्थानसंज्ञकेषु अष्टसु तन्त्रस्यास्य समाप्तिरुक्ता तन्त्रकर्त्रा ॥ १९ ॥

गङ्गाधरः—स्थानार्थविस्तरमाह स्वे स्वे इत्यादि। स्वे स्वे स्थाने तेषां तेषाम् अध्यायाः स्थानार्थस्तत्तन्नामभिर्विस्तरेणात ऊर्द्ध मुपदेक्ष्यते। तत्र नाम क्रमागतं सविंशमध्यायशतं मे शृणु। अध्यायानां शतमिति संख्या गुणमात्रवचनं शतमिति, तस्य विशेषणं सविंशमिति, विंशत्या संख्यया सह वर्त्तते यत् तत्

ऋत्वादिः, क्रियाकालश्च। कर्त्ता भिषक्। करणं भेषजम्। विधिर्विधानमुपकल्पना, सा च कालव्याधिद्रव्याद्यपेक्षया बोद्धव्या, यथा—'हेमन्तेऽभ्यवहृत्तोयमुष्णमायुर्न हीयते' इत्यादि; देशस्त्वत्राऽहितो हेतुग्रहणेन, हितस्तु देशः करणग्रहणेन गृहीतो मन्तव्यः; शारीरइत्यादिभेदाश्च बहवः कृत्स्नतन्त्रे बुद्धिमता बोद्धव्याः; केवलेनेति समग्रेण; इन्द्रियाणां चिकित्सितानाञ्चेत्यु-भयत्रापि स्थानमिति शेषः ॥ १७।१८ ॥

चक्रपाणिः—त्रिंशकं सूत्रं चिकित्सितं च। आश्रयसंज्ञकं शारीरस्थानम्, आश्रयो हि शरीर-मुच्यते। सविंशमिति विंशतिसम्बन्धात् स्वार्थे 'ड', यतः स्वार्थिकस्य डप्रत्ययो भवति,

दीर्घञ्जीवोऽप्यपामार्ग-तण्डुलारग्वधादिकौ ।
षड्विरेकाश्रयश्चेति चतुष्को भेषजाश्रयः ॥
मात्राशितीयौ च नवेगान्धारणं तथा ।
इन्द्रियोपक्रमश्चेति चत्वारः स्वास्थ्यवृत्तकाः ॥
खुड्डाकश्च चतुष्पादो महांस्तिस्रैषणस्तथा ।
सह वातकलाख्येन विद्यान्नैर्देशिकान् बुधः ॥

ध्यायशतमिति ; विंशतिसंख्याविशिष्टमध्यायानां शतं नामसंख्ये चात्र संख्येया, सविंशेति बहुव्रीहिर्वाच्या ; तत्र गम्यायां संख्याया विंशत्या सह अव्ययस्य सहशब्दस्य बहुव्रीहिः समासः—"संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये" इति पाणिनीयसूत्रेण । बहुव्रीहिणा वाच्ये संख्येये संख्याविशिष्टे सति संख्यया संख्यागुणमात्रार्थकपदेन सहाव्ययसन्नकादयः समस्यन्ते, स समासो बहुव्रीहिः इत्युच्यते । कथं गुणो गुणे वर्त्तते इति चेत् ? न, गुणलक्षणे कार्य्यगुणाश्रयो न गुण इत्युक्त्या कारणगुणाश्रयत्वाबाधात् कार्य्यगुणानां कारणगुणानाञ्च । यथा षट् रसा मधुरादयः कार्य्यगुणाः ; त्रीणि रूपाणि लोहितशुक्लकृष्णाख्यानि । दुग्धमाधुर्य्यादिक्षुमाधुर्य्यमधिकं परिमाणेन । रूपात् पृथग्रसः । तथा द्वे विंशती घटानां, दशदशं शतं घटानां, पञ्चपञ्चं घटानां, त्रिपञ्चाः पञ्चदश घटाः । अत एव आ दशभ्यः संख्याः संख्येये ततः परं संख्याने संख्येये चेति प्रमादिनां वचनम् असाधु । विंशत्यादिसंख्यासु संख्यावरवचनात् संख्यायां संख्या-स्वीकारात् । आदशसंख्याशब्दानां संख्यानार्थानङ्गीकारस्यार्षानुशासनाभावात् लक्षाणां पञ्च लोभ इति प्रयोगदर्शनाच्च त्रिपञ्चारे पीठे इति कर्पूरादिस्तोत्रे महाकालकृतप्रयोगाच्च । एतदभिप्रायेण कणादेनोक्तं वैशेषिकशासने गुणोऽपि विभाव्यते गुणेनापि इति ॥ २० ॥

गङ्गाधरः—तत्प्रपञ्चेन स्थानार्थानध्यायान् क्रमेणाह—दीर्घञ्जीव इत्यादि ।

तेन कविशेखरे च "चतुर्विंशाधिकम्" इति प्रयोगः सिद्धो भवति, वचनं हि—"चतुर्विंशाधिकं शतं भुवनानां शतत्रयम्" इति ; एवं प्रस्तुतेऽपि "सविंशम्" इति व्याख्येयम् ॥ १९ । २० ॥

चक्रपाणिः—'दीर्घञ्जीव' इत्यादयः श्लोकास्तु रोगादेकदेशलक्षणा बोद्धव्याः, प्राणदेहार्थौ

स्नेहनस्वेदनाध्यायावुभौ यश्चोपकल्पनः ।
चिकित्साप्राभृतश्चैव सर्व्व एव प्रकल्पनाः ॥
कियन्तःशिरसीयश्च त्रिशोफाष्टोदरादिकौ ।
रोगाध्यायो महांश्चैव रोगाध्यायचतुष्टयम् ॥
अष्टौनिन्दितसंख्यातस्तथा लङ्घनतर्पणौ ।
विधिशोणितिकश्चैव व्याख्यातास्तत्र योजनाः ॥
यज्जःपुरुषसंख्यातो भद्रकाप्यान्नपानिकौ ।
विविधाशितपीतीयश्चत्वारोऽन्नविनिश्चयाः ॥
दशप्राणायतनिकास्तथार्थेदशमूलिकः ।
द्वावेतौ प्राणदेहार्थौ प्रोक्तौ वैद्यगुणाश्रयौ ॥
औषधस्वस्थनिर्द्देश-कल्पनारोगयोजनाः ।
चतुष्काः षट् क्रमेणोक्ताः सप्तमश्चान्नपानिकः ॥
द्वौ चान्त्यौ संग्रहाध्यायाविति त्रिंशकमर्थवत् ।
श्लोकस्थानं समुद्दिष्टं तन्त्रस्यास्य शिरः शुभम् ॥
चतुष्काणां महार्थानां स्थानेऽस्मिन् संग्रहः कृतः ।
श्लोकार्थः संग्रहार्थश्च श्लोकस्थानमतः स्मृतम् ॥ २१ ॥

दीर्घञ्जीव इत्यादिना द्वौ चान्त्यौ संग्रहाध्यायावित्यन्तेन त्रिंशदध्यायं श्लोकस्थानं समुद्दिष्टम् । अस्य तन्त्रस्य शिरो मस्तकम् । अस्मिन् स्थाने चतुष्काणां सप्तानां महार्थानां संग्रहः कृत इति श्लोकः, श्लोक सङ्घाते इत्यनुदात्तेत् भ्वादिः । तेन श्लोकार्थः संग्रहार्थः सङ्घार्थ इत्यतः श्लोकस्थानं संघातस्थानं संग्रहस्थानमित्येकोऽर्थः ॥ २१ ॥

इत्यादौ वैद्यशब्देनौषधोऽभिधीयते । शिरः शुभमित्यत्र शिर इव शिरः । श्लोकार्थं इत्यादौ श्लोकार्थः संग्रहार्थ इति, चकारात् सूत्रस्थानोक्तसूत्रणादिकम्, यथा—"सूत्रणात् सूचनाच्चैव धारणाद्‌र्थसन्ततेः । सूत्रस्थानं समुद्दिष्टम् इत्येतदपि गृहीतं भवति ।

ज्वराणां रक्तपित्तस्य गुल्मानां मेहकुष्ठयोः।
शोषोन्मादनिदाने च स्यादपस्मारिणाञ्च यत्।
इत्यध्यायाष्टकमिदं निदानस्थानमुच्यते॥ २२॥
रसेषु त्रिविधं कुक्षौ ध्वंसे जनपदस्य च।
त्रिविधे रोगविज्ञाने स्रोतःस्वपि च वर्त्तने॥
रोगानीके व्याधिरूपे रोगाणाञ्च भिषग्जिते।
अष्टौ विमानान्युक्तानि मानार्थानि महर्षिणा॥॥ २३॥
कतिधापुरुषीयञ्च गोत्रं णातुल्यमेव च।
खुड्डीका महती चैव गर्भावक्रान्तिरुच्यते॥
पुरुषस्य शरीरस्य विचयौ द्वौ विनिश्चितौ।
शरीरसंख्या सूत्रञ्च जातेरष्टम उच्यते।
इत्युद्दिष्टानि मुनिना शारीराण्यत्रिसूनुना॥ २४॥
वर्णस्वरीयः पुष्पाख्यस्तृतीयः परिमर्षणः।
तथा चैवेन्द्रियानीकः पूर्व्वरूपक एव च॥

गङ्गाधरः—अथ निदानस्थानार्थमाह—ज्वराणामित्यादि। ज्वराणामित्यादिना स्यादपस्मारिणाञ्च यदित्यन्तेनाध्यायाष्टकं निदानस्थानमुच्यते इति॥ २२॥

गङ्गाधरः—अथ विमानस्थानार्थमाह—रसेष्वित्यादि। रसेषु विमानं त्रिविधे कुक्षौ विमानं जनपदस्य ध्वंसे विमानं त्रिविधे रोगविज्ञाने विमानं स्रोतःसु वर्त्तने विमानं रोगानीके विमाने व्याधिरूपं विमानं रोगाणां भिषग्जिते विमानम् इत्यष्टौ विमानान्युक्तानि विमानस्थाने महर्षिणात्रेयेणेति॥ २३॥

गङ्गाधरः—अथ शारीरस्थानार्थमाह—कतिधेत्यादि। कतिधापुरुषीयमित्यादिना सूत्रञ्च जातेरित्यन्तेन शारीराण्यत्रिसूनुना मुनिनोद्दिष्टानि॥ २४॥

गङ्गाधरः—इन्द्रियस्थानार्थमाह—वर्णस्वरीय इत्यादि। वर्णस्वरीय इत्या-

कतमानिशरीरीयः पन्नरूपोऽप्यवाक्शिराः।
यस्य श्यावनिमित्तश्च सद्योमरण एव चा॥
अनुज्योतिरिति* ख्यातस्तथा गोमयचूर्णवान्।
द्वादशाध्यायकं स्थानमिन्द्रियाणामिदं स्मृतम्॥ २५॥
अभयामलकीयञ्च प्राणकामीयमेव च।
करप्रचितिकं वेद-समुत्थानं रसायनम्॥
संयोगशरमूलीयमासिक्तक्षीरकं तथा।
माषपर्णभृतीयञ्च पुमान् जातबलादिकम्॥
चतुष्कद्वयमप्येतदध्यायद्वयमुच्यते।
रसायनमिति ज्ञेयं वाजीकरणमेव च॥
ज्वराणां रक्तपित्तस्य गुल्मानां मेहकुष्ठयोः।
शोषोन्मादेऽप्यपस्मारे क्षते शोफोदरार्शसाम्॥
ग्रहणीपाण्डुरोगाणां श्वासकासातिसारिणाम्।
छर्दिवीसर्पतृष्णानां विषमद्यविकारयोः†॥

दिना गोमयचूर्णवानित्यन्तेन द्वादशाध्यायकमिन्द्रियाणां स्थानमिदमुच्यते॥ २५॥

गङ्गाधरः—अथ चिकित्सास्थानार्थमाह—अभयामलकीयञ्चेत्यादिभिश्चतुर्भिः पादैः रसायनमध्यायः। संयोगशरमूलीयमित्यादिभिश्चतुर्भिः पादैर्वाजीकरणमध्यायः. इति चतुष्कद्वयं चतुश्चतुःपादैरध्यायद्वयमुच्यते। रसायनं वाजीकरणञ्चेति। एतदध्यायद्वयादनन्तरं ज्वराणामित्यादिना

मानार्थानीति ज्ञानार्थानि। इन्द्रियाणामिति इन्द्रियादिविविधरोगाणाम्। चतुष्कद्वयमिति रसायनपादचतुष्क एकः, वाजीकरणपादचतुष्क एकः, चतुष्पादद्वयाध्यायो भवतीति युक्तमेवाध्यायत्वम्।

---

* अनुज्योतिरिति पाठान्तरम्।

† हिक्कायां श्वासकासे च ग्रहणीपाण्डुरोगयोः।
छर्दिवीसर्पतृष्णानां विषमद्यविकारिणाम्॥ इति पाठान्तरम्।

द्विव्रणीयं त्रिमर्म्मीयमूरुस्तम्भिकमेव च ।
वातरोगे वातरक्ते योनिव्यापदि चैव यत् ॥
त्रिंशच्चिकित्सितान्युक्तान्यतः कल्पान् परं शृणु ।
फलजीमूतकेक्ष्वाकुकल्पो धामार्गवस्य च ॥
पञ्चमो वत्सकस्योक्तः षष्ठश्च कृतवेधने ।
श्यामात्रिवृतयोः कल्पस्तथैव चतुरङ्गुले ॥
तिल्वकस्य सुधायाश्च सप्तलाशङ्खिनीषु च ।
दन्तीद्रवन्त्योः कल्पश्च द्वादशोऽयं समाप्यते ॥
कल्पना पञ्चकर्म्माख्या वस्तिसूत्री तथैव च ।
स्नेहव्यापत्तिकी सिद्धिर्नेत्रव्यापत्तिकी तथा ॥
सिद्धिः शोधनयोश्चैव वस्तिसिद्धिस्तथैव च ।
प्रासृती मर्म्मसंख्याता सिद्धिर्वस्त्याश्रया च या ॥
फलमात्रा तथा सिद्धिः सिद्धिश्चोत्तरसंज्ञिता ।
सिद्धयो द्वादशैवैतास्तन्त्रञ्चासु समाप्यते ॥ २६।२७ ॥
स्वे स्वे स्थाने तथाध्याये चाध्यायार्थः प्रवक्ष्यते ।
तं ब्रूयात् सर्व्वतः सर्व्वं यथार्थोद्धारानुसंग्रहात् ॥ २८ ॥

योनिव्यापदि चैव यदित्यन्तेनाष्टाविंशत्यध्यायमिति त्रिंशदध्यायाश्चिकित्सितान्युक्तानि ।

अतः परं कल्पस्थानार्थान् कल्पान् शृणु—फलेत्यादि । फलेत्यादिना दन्तीद्रवन्त्योः कल्पश्चेत्यन्तेनायं द्वादशाध्यायं कल्पस्थानं समाप्यते । अथ सिद्धिस्थानार्थमाह—कल्पनेत्यादिना सिद्धिश्चोत्तरसंज्ञितेत्यन्तेन । एते द्वादशाध्यायाः सिद्धयः सिद्धिस्थानमिति । इत्येवं स्थानार्थानध्यायानुक्त्वा अध्यायार्थमाह—स्वे स्वे इत्यादि । स्वे स्वे स्थाने तथा स्वे स्वे अध्यायेऽध्यायार्थः

तन्त्रञ्चासु समाप्यत इति ; आसु समाप्तासु तन्त्रं समाप्यत इत्यर्थः । 'चाध्यायार्थः' इति चकारो भिन्नक्रमे, तेन अध्यायार्थश्चाध्यायान्ते तथा स्थानार्थश्च स्थानान्ते कृतसंग्रहः, यद्यपि

पृच्छा तन्त्राद् यथाम्नायं विधिना प्रश्न उच्यते।
प्रश्नार्थो युक्तिमांस्तस्य तन्त्रेणैवार्थनिर्णयः॥ २९॥
निबन्धं तन्त्रणात् तन्त्रं स्थानमर्थप्रतिष्ठया।
अधिकृत्यार्थमध्यायो नाम संज्ञा प्रतिष्ठिता॥

प्रवक्ष्यते। तत्र श्लोका इति कृत्वा प्रत्येकाध्यायार्थः प्रत्येकाध्याये प्रवक्ष्यते। तत्सर्व्वं यथार्थादनुसंग्रहाद्धि यस्मात् सर्व्वतो ब्रूयात् इति॥ २६—२८॥

गङ्गाधरः—अथ प्रश्नमाह—पृच्छा तन्त्रादित्यादि। यस्य यत् तन्त्रमग्निवेश भेलजतूकर्ण पराशर हारीतक्षारपाणि-चरकसौश्रुत पुष्कलावतौरभ्रगोपुररक्षित-नागार्ज्जुनकणादाद्यन्यतमं तस्मात् यत्किञ्च यथाम्नायं यथोक्तं विधिना यत् पृच्छति परस्तस्य स उत्तरवचनप्रयोजकः स्वसंशयादिनिवारणोद्देश्यकज्ञानेच्छा-प्रकाशकवचनव्यापारः प्रश्न उच्यते। प्रश्नार्थमाह—प्रश्नार्थ इत्यादि। तस्य प्रश्नस्य तन्त्रेणैव तेन युक्तिमानात्मनस्तत्प्रश्नस्य निर्णयः प्रश्नार्थ उच्यते। यथा—भो भिषगसि। ब्रूहि किमायुर्व्वेद इति प्रश्नः। तस्यार्थः। आयुर्वेदयति इत्यायुर्व्वेदस्तत् किमिति प्रश्नार्थः॥ २९॥

गङ्गाधरः—अथ कस्मात् तन्त्रमुच्यते इत्यत आह—निबन्धमित्यादि। तन्त्रणान्नियमान्निबध्यते यत् तन्निबन्धं तन्त्रम्। तस्य स्थानं कस्मात् अर्थस्य प्रतिष्ठया स्थित्या स्थानमुच्यते. कस्मात् तदध्याया इत्यत आह—अधीयते यो ग्रन्थस्य परिच्छेदः सोऽध्यायः। तेषामध्यायानां नाम संज्ञा दीर्घञ्जीवितीयादिः संज्ञा अर्थमधिकृत्य कृतोऽध्याय इति प्रतिष्ठिता तेन कृते ग्रन्थे इति सूत्रेण निष्पादिता।

शारीरं यथार्थो न व्यक्तः, तथापि शारीरप्युपपत्त्या बोद्धव्यः, तन्त्रान्तराद् वा—यथा शरीरं चिन्त्यते सर्व्वं दैवमानुषसम्पदा। सर्व्वभावेषु यतस्माच्छारीरं स्थानमुच्यते॥ २१—२८॥

चक्रपाणिः—विधिना प्रश्न इत्यत्र विधिनेति पूर्व्वापराविरोधात् दोषशून्येन वाक्येन। तन्त्रणादिति धारणात्; अर्थप्रतिष्ठयेति प्रधानभूतार्थावस्थानात्, एताश्च योगरूढाः संज्ञाः, तेन अतिप्रसङ्गो न वाच्यः। अधिकृत्येति अधिकारिणं कृत्वा; अर्थं दीर्घञ्जीवितादिकम्, अध्यायनामसंज्ञा अध्यायरूपनामसंज्ञा, नामसंज्ञा च योगरूढादिरूपोच्यते, किंवा अध्यायो नामेति पाठः, तदा नामशब्दः प्रकाशने, तेन अधिकार इत्यर्थः। अर्थं शब्दोऽत्राभिधेये, तेन

इति सर्व्वं यथाप्रश्नमष्टकं सम्प्रकाशितम् ।
कार्त्स्न्येन चोक्तं तन्त्रेण संग्रहः सुविनिश्चितः ॥ ३० ॥
सन्ति पाल्लविकोपेताः संक्षोभं जनयन्ति ये ।
वर्त्तिकानामिवोत्पाताः सहसैव विभाविताः ॥
तस्मात् तु पूर्व्वकं जल्पे सर्व्वत्राष्टकमादिशेत् ।
परावरपरीक्षार्थं तत्र शास्त्रविदां वरः ॥

उपसंहरति—इतीत्यादि । अष्टकम् । तन्त्रं तन्त्रार्थः स्थानं स्थानार्थः अध्यायोऽध्यायार्थः प्रश्नः प्रश्नार्थ इत्यष्टकम् । कार्त्स्न्येन तन्त्रेण चोक्तं तस्य सुविनिश्चयः संग्रहः संक्षेपश्लोक इति । इत्येवं कृत्स्नं तन्त्रं यो भिषक् ब्रवीति स प्राणाभिसरो भिषगुक्तः ॥ ३० ॥

गङ्गाधरः—ननु किमर्थमेतदष्टकं तन्त्रादिकं प्रष्टव्यमिति ? अत आह—सन्तीत्यादि । त्रिविधा भिषज इति यत् पूर्व्वमुक्तं प्राणाभिसराः सिद्धसाधिता भिषक्छद्मचराश्च, तत्र केचिद्भिषजः पाल्लविकोपेतास्तन्त्रस्यैकदेशविदः सन्तो निखिलशास्त्रपण्डितमानिनो दाम्भिकाः प्रौढोक्तिकारिण इत्येवमादिवृक्षपल्लववदतिविस्तरश्लाघादुपेताः सन्ति ये लोकानां संक्षोभं वागाडम्बरादिवाचालतादम्भाभिमानादिभिर्मनोविक्षोभणमितस्ततो भ्रान्तिं जनयन्ति । यथा वर्त्तिकानां चटकविशेषाणां सहसा पततामुत्पाता विभाविता विशेषेण भाविता मनोविक्षोभणं जनयन्ति । चटकोत्पातैर्लोका व्यस्तचित्ता भवन्ति तद्वत् पाल्लविकोपेताः सिद्धसाधिता भिषक्छद्मचरा उत्पातं कुर्व्वन्तीति । तस्माद्धेतोः परावरपरीक्षार्थं श्रेष्ठाश्रेष्ठभिषक्परीक्षार्थं शास्त्रविदां वरः पण्डितश्रेष्ठोऽत्र सर्व्वत्रैव जल्पे पक्षाश्रितयोर्द्वयोः शास्त्रार्थकथने पूर्व्वमेवाष्टकं तन्त्रं तन्त्रार्थमित्यादुक्तमष्टप्रश्नमादिशेत् ।

सुखाध्यायसंज्ञा, सा च अधिकरणसाधना वा करणसाधना वा कर्म्मसाधना वा बोद्धव्या, अधीयतेऽस्मिन्नधीयतेऽनेन वा अधीयते वा अध्यायः ॥ २९ । ३० ॥

चक्रपाणिः—प्रश्नाष्टकस्योक्तस्य निराकरणीयसंशं दैवमाह—सन्तीत्यादि । पाल्लविकाः प्रातिभिकाः, वर्त्तिका अकस्मादुत्पतन्तः क्षोभं सहसा जनयन्तीति ; लोकसिद्धमष्टकमिदं यथोक्तं प्रश्नाष्टकम् ; परावरौ श्रेष्ठाश्रेष्ठौ, तत्र शास्त्रविदां श्रेष्ठमिति शास्त्रविद एव प्रश्नाष्टकं जानन्ति, न पाल्लविकाः ।

शब्दमात्रेण तन्त्रस्य केवलस्यैकदेशिकाः।
भ्रमन्त्यल्पबलास्तन्त्रे ह्यनल्पे नैव * वर्त्तकाः॥
पशुः पशूनां दौर्ब्बल्यात् कश्चिच्चापि वृकायते।
स सत्यं वृकमासाद्य प्रकृतिं भजते पशुः॥
तद्वदज्ञोऽज्ञमध्यस्थः कश्चिन्मौखर्य्यसाधनः।
स्थापयत्याप्तमात्मानमाप्तन्त्वासाद्य भिद्यते॥
बभ्रुर्गूढ़ः† इवोर्णाभिरबुद्धिरबहुश्रुतः।
किं वै वक्ष्यति संजल्पे कुण्डभेदी जड़ो यथा॥

ततः किं परीक्षणं स्यादिति? अत आह—शब्देत्यादि। ऐकदेशिका स्तन्त्रैकदेशमात्रं विद्वांसो ये पाल्लविकोपेता भिषजस्ते यतस्तन्त्रेऽल्पबला-स्तस्मात् केवलस्य सम्पूर्णस्य तन्त्रस्य शब्दमात्रात् शब्दमात्रं संश्रुत्य भ्रमन्ति। कस्मात्? ह्यनल्पे नैव वर्त्तकाः। हि यस्मादनल्पे सम्पूर्णे कृत्स्ने तन्त्रे न वर्त्तन्ते न कृत्स्ने तन्त्रेऽधीतिनो भवन्ति।

पाल्लविकोपेता ऐकदेशिका यथा लोकानां मनःसंक्षोभं जनयन्ति, तदपर-दृष्टान्तेन दर्शयति—पशुरित्यादि। कश्चिच्च पशुरपरेषां पशूनां दौर्ब्बल्यात् तेषां मध्ये स्वसावल्याद् वृकायते वृक इवाचरति। वृकः क्षुद्रव्याघ्रः। स पशूनां दुर्ब्बलानां मध्ये प्रबलो वृकायमाणः पशुः सत्यं वृकमासाद्य प्राप्य प्रकृतिं तत्-पशुभावमेव भजते वृकायमाणतां जहाति। तद्वत् कश्चिदज्ञो भिषक्सिद्धसाधितो भिषक्छद्मचरो वाप्यज्ञजनमध्यस्थः सन् स्वस्य मौखर्य्यं मुखरतां दम्भमोक्तोक्ति-पण्डितश्रेष्ठमानितादिविविधवाचालतां साधयन् स्वमात्मानमाप्तं प्रमाणपुरुषं स्थापयति, निज एव प्रमाणपुरुषो यद् वदति तदेव प्रामाणिकं नान्यः कोऽपि तदधिकस्तत्समो वा पण्डितो भिषग् वास्तीति तदज्ञेषु मध्ये ब्रूते। स सत्य-माप्तमासाद्य भिद्यते प्रकृतभिषक्पण्डितनिकटे तन्मौखर्य्यसाधनं स्वस्याप्तता-ख्यानं सर्व्वं तस्य दूरीभवति। तत्रापरदृष्टान्तमाह—बभ्रुरित्यादि। बभ्रुः वृद्धनकुलो यथा चोर्णाभिर्बहुवचनाद् बहुभिर्मेषलोमभिर्गूढ़ः संवृतो मेष इव

प्रकृतिः स्वभावः। बभ्रुः कृष्णोवान् कश्चित् पशुः, स यथा मेषं न ज्ञात्वा आत्मीयामिव

* व्याप्तवन्तेनैवेति पाठान्तरम्। † मूढ़ इति वा पाठः।

सद्वृत्तैर्न विगृह्णीयाद् भिषगल्पश्रुतैरपि ।
हन्यात् प्रश्नाष्टकेनादावितरान् ये प्रमादिनः * ॥
दम्भिनो मुखरा ह्यज्ञाः प्रभूतबहुभाषिणः ।
प्रायः प्रायेण सुमुखाः सन्तो युक्ताल्पभाषिणः ॥

भातो न किमपि नदति, तथा चाबुद्धिः भिषक्छद्मचरः भिषग्वेशेन गूढः संवृतः सन् संजल्पे वादिप्रतिवादिवादे किं वक्ष्यति ? किमपि न वक्ष्यति । एवमबहुश्रुतोऽल्पश्रुतस्तन्त्रैकदेशिकः सिद्धसाधितो भिषक् संजल्पे किमेव वक्ष्यति न किञ्चिद्वक्ष्यति ।

दृष्टान्तान्तरं दर्शयति कुण्डभेदी जड़ो यथेति । यथा जड़ो निर्बुद्धिः कुण्डभेदी भ्रष्टयोनिः खलु नीचजातिः स्वस्य जातिं गोपयित्वा विशुद्धजातिः सन् संजल्पे तस्य जातिकुलगोत्रादिपरिचयं किं वं वक्ष्यति ? किमपि न वक्ष्यति ; तथा भिषक्छद्मचरः सिद्धसाधितश्च भिषक् संजल्पे वादप्रतिवादे किं व वक्ष्यति ? किमपि न वक्ष्यतीति । इत्यसद्वृत्ताभ्यां भिषक्छद्मचर-सिद्धसाधिताभ्यां भिषग्भ्यां विगृह्य वादमुक्त्वा सद्वृत्तेन सह जल्पमाह—सद्वृत्तैरित्यादि । सद्वृत्तैर्भिषग्भिरपरैर्वा अल्पश्रुतैर्बहुश्रुतैरपि भिषग् जल्पकाले न विगृह्णीयात् विगृह्य जल्पं न कुर्यात् ।

तर्हि कैर्विगृह्य जल्पं कुर्यादिति ? अत आह—हन्यादित्यादि । आदौ प्रश्नाष्टकेन तन्त्रं तन्त्रार्थमित्यादिना प्रश्नेन तेभ्यः सद्वृत्तेभ्य इतरान् हन्यात् । सद्वृत्तेभ्य इतरे के इत्यत आह—ये प्रमादिनः दम्भिनश्च मुखराश्चाज्ञाश्च प्रभूत-बहुभाषिणः, प्रभूतानि पुनर्बहु भाषितुं शीलं येषामिति । तान् प्रश्नाष्टकेन आदौ हन्यादिति ।

नन्विमे किं न सद्वृत्ता इत्यत आह—प्राय इत्यादि । वीप्सायां द्विर्भावात् । प्रायः प्रायेण सन्तो जनाः सर्व्वत्र सुमुखा न विमुखा एव युक्तञ्च अल्पञ्च भाषितुं शीलं येषां ते युक्ताल्पभाषिणो भवन्ति । तद्वत् तादृशा

कर्णौ दृष्ट्वा वपगुप्त्याऽभङ्गमाप्नोति, तद्वदश भासं प्राप्य भिषस इत्यर्थः ; किंवा बभ्रुर्वनकुल कर्णाशाविभण्गो यथा किञ्चिन प्रतिपद्यते, तथाबुद्धिरपि संजल्पे वादिप्रतिवादि-कथायाम् । कुण्डभेदी भ्रष्टयोनिः ; तेन पृष्टाविनात्मीयमविज्ञातजातिर्यथावद्ज्ञातजातिः सन्

* त्वात्ममानिन इति पाठान्तरम् ।

तत्त्वज्ञानप्रकाशार्थमहङ्कारमनाश्रिताः।
स्वल्पाधाराज्ञमुखरान् मर्षयेन्न विवादिनः॥ ३१॥
परो भूतेष्वनुक्रोशस्तत्त्वज्ञानपरा दया।
येषां तेषामसद्वाद-निग्रहे निरता मतिः॥
असत्पक्षाः क्षणिकशाद्धि दम्भपारुष्यसाधनाः।
भवन्त्यनाप्ताः स्वे तन्त्रे प्रायः परिविकल्पनाः *॥
तान् कालदेशसदृशान् † वर्ज्जयेच्छास्त्रदूषकान्।
सेवेत समभिज्ञान-ज्ञानपूर्व्वान् भिषक्तमान् ‡॥ ३२॥

एव ये ज्ञानप्रकाशार्थमहङ्कारमनाश्रितास्ते सद्वृत्तवदिति, तैः सह न विगृह्णीयात्। स्वल्पाधारा अल्पश्रुता अज्ञा मुखराश्च ये विवादिनस्तान् न मर्षयेन्न क्षमेत॥ ३१॥

गङ्गाधरः—पर इत्यादि। येषां भूतेषु प्राणिषु परः श्रेष्ठोऽनुक्रोशः करुणा सा दया च तत्त्वज्ञानपरा तत्त्वज्ञाने तात्पर्य्यवती न तु तत्त्वज्ञानादृतेऽन्यभावे दया। तेषां सद्वृत्तानामसद्वादस्य निग्रहे निग्रहो मतिर्बुद्धिः निरता निश्चयेन रता इति। कस्मादित्यत आह—असदित्यादि। हि यस्मादसत्पक्षा जनाः क्षणिकात् एकं पक्षमाश्रित्य वदन्तः परेण प्रत्युक्ताः पुनरपरं पक्षमाश्रयन्तीत्येवं क्षणिकात् दम्भं साधयन्ति पारुष्यं वदन्तः साधयन्ति, प्रायः स्वे तन्त्रे स्वाधीते तन्त्रे परि विकल्पनाः परि सर्व्वतोभावेन विशेषेण श्लाघन्ते तेऽनाप्ताश्च भवन्ति तान् कालदेशसदृशान् यथाकालं यथादेशं शास्त्रदूषकान् वर्ज्जयेत्। ये भिषक्तमाः समविज्ञानज्ञानपूर्व्वास्तान् सेवेतेति॥ ३२॥

कश्चिद् ब्रूते, तथाबुद्धिरपि संजल्पे, विगृह्णीयात् विगृह्य सम्भाषां कुर्य्यात्। इतरानसद्वृत्तान्। स्वल्पाधाराः स्वल्पश्रुताः, न मर्षयेदिति नोपेक्षेत॥ ३१॥

चक्रपाणिः—भजनीयसंवादप्रतिषेधमाह—परो भूतेष्वित्यादि। निरता इति तत्परा। अत्र-वैधर्म्यमाह—असत्पक्षेत्यादि। असत्पक्षादिसाधनं येषां ते तथा, असत्पक्षोऽनागमपक्षसिद्धः

* परविकल्पकाः इति पाठान्तरम्। † कालपाशसदृशान् इति वा पाठः।
‡ प्रशमज्ञानविज्ञान-पूर्णाः सेव्या भिषक्तमाः॥ इत्यधिकः पाठः क्वचित्।

समग्रदुःखमायत्तमविज्ञाने द्वयाश्रयम् ।
सुखं समग्रं विज्ञाने विमले च प्रतिष्ठितम् ॥
इदमेवमुदारार्थमज्ञानार्थप्रणाशकम् ।
शास्त्रं दृष्टिप्रनष्टानां यथैवादित्यमण्डलम् ॥ ३३ ॥

तत्र श्लोकाः ।

अर्थेदशमहामूलाः संज्ञा चैषां यथा कृता ।
अयनान्ताः षड्ग्र्याश्च रूपं वेदविदाञ्च यत् ॥

गङ्गाधरः—अथैवमविज्ञानामविज्ञानफलमाह—समग्रेत्यादि। जनानामविज्ञाने खलु आयत्तमधीनं द्वयाश्रयं मनःशरीराश्रयं समग्रदुःखम् आधिभौतिकाधिदैविकाध्यात्मिकं तथा जनानां विज्ञाने विमले च द्वयाश्रयं मनःशरीराश्रयं समग्रं सुखं प्रतिष्ठितमिति। एतच्चरकशास्त्रस्य प्रभावमाह—इदमित्यादि। एवमनेन प्रकारेणोदारमर्थं लोकद्वयहितार्थमिदं चरकप्रोक्तं शास्त्रमज्ञानार्थप्रकाशकम् अज्ञानानां सम्बन्धेऽर्थप्रकाशकम् यथादित्यमण्डलं दृष्टिप्रनष्टानां लौकिकतमसा दृष्ट्या चक्षुषा प्रनष्टा ये रात्रौ तेषामर्थस्य दृश्यस्य प्रकाशकं तथा; न तु प्रनष्टदृशां न ह्यन्धतैमिरिकादीनां सम्बन्धेऽर्थप्रकाशकमादित्यमण्डलमिति ॥ ३२ ॥

गङ्गाधरः—अथाध्यायार्थसंग्रहार्थमाह—तत्र श्लोका इति। अर्थेदशेत्यादि। अर्थे दश महामूलाः सिराः सक्ता महाफला इति। एषां हृदयस्यार्थसंज्ञा,

…म:, अभ्रजिकत्थं—पृष्ठार्थमनुयुक्तस्य 'साम्प्रति वक्तु' अणो नास्ति' इति भाषणम्, …र्षिः—पृष्टार्थमनुयुक्तस्य विरोध्यभाविकम् उच्चार्यं श्लाघमानं भाषणम्, दम्भः पुस्तक…सम्भाण्डादिभिः स्वार्थोत्कर्षप्रतिपादनम्, पारुष्यं कृच्छ्रतोऽपि न वाच्यत्वादि परुषभाषणम्। अनाप्ताः स्वे तन्त्र इति स्वतन्त्रानभिज्ञत्वात्, परविकत्थकाः परदूषणाः। द्वयाश्रयमिति मनःशारीराश्रयम्; समग्रमिति शारीरं मानसञ्च, सुखमारोग्यादिरूपम्, विज्ञाने विमल इति विशुद्धज्ञाने, किंवा विज्ञाने विमल इति मोक्षे, मोक्षे हि सुखं समग्रं दुःखाभिभवत्वात्, किंवा अदृष्टार्थावाद्याभाकृत्योक्तम्, इदमिति शास्त्रम्, एवमुदारार्थमिति लोकद्वयहितार्थाभिधायकम्, दृष्टिप्रनष्टानामिति प्रनष्टदृशाम् ॥ ३२ । ३३ ॥

चक्रपाणिः—संग्रहे संज्ञा चैषां यथा कृतेति "तेन मूलेन महता महामूलाः" इत्यादिना;

सप्तकश्चाष्टकश्चैव परिप्रश्नः सनिर्णयः ।
यथा वाच्यं यदर्थञ्च षड्विधाश्चैकदेशिकाः ॥
अर्थेदशमहामूले सर्व्वमेतत् प्रकाशितम् ।
संग्रहश्चायमध्यायस्तन्त्रस्यास्यैव केवलः ॥
यथा सुमनसां सूत्रं संग्रहार्थं विधीयते ।
संग्रहार्थं तथार्थानामृषिणा संग्रहः कृतः ॥ ३४ ॥

महामूलसंज्ञा सिराणां, धमनी सिरास्रोतःसंज्ञा । एकं प्राणवर्द्धनानामित्यादिना एकमयनानां तेषां विवरणञ्च. ब्रह्मचर्य्यमयनानामित्यन्ताः षड्प्रश्नाः श्रेष्ठाः षट् । वेदविदामायुर्व्वेदविदां त्रिधा रूपं प्राणाभिसर सिद्धसाधिन भिषक्छद्मचररूपं तेषां विशेषरूपञ्च । सप्तक इति । किमायुश्चेत्यादिना सप्तकः सनिर्णयः परिप्रश्नः । तथा तन्त्रं तन्त्रार्थानित्यादिना चाष्टकः सनिर्णयः परिप्रश्नः । यथा वाच्यं येन प्रकारेण यस्य प्रश्नस्योत्तरं वाच्यं तत् । यदर्थञ्च तदुत्तरं वाच्यं तत् । एकदेशिकाः षड्विधा भिषजः, षाड्गुणिकोपेताः प्रमादिनो दम्भिनो मुखरा अज्ञाः प्रभूतबहुभाषिणश्चेति षट् । एतत् सर्व्वमस्मिन् अर्थेदशमहामूलीये मुनिनात्रेयेण प्रकाशितम् । अयमध्यायश्चास्य चरकप्रोक्तस्य तन्त्रस्य केवलः कृत्स्नः संग्रहः । तत्र दृष्टान्तः यथेत्यादि । सुमनसां पुष्पाणां संग्रहार्थं यथा सूत्रं ग्रन्थनेन संग्रहो भवति, तथार्थानां संग्रहार्थमेष संग्रहाध्याय ऋषिणा कृत इति ॥ ३४ ॥

अयनान्ताः षट्प्रश्नाश्चेति 'एकं प्राणवर्द्धनानाम्' इत्यादिनोक्ताः । एते चाहिंसादयोऽध्यायाधिकारे यज्जःपुरुषीये उक्तास्तानुल्लङ्घ्य गृहीताः अध्यायप्रतिपाद्यत्वेन, पूर्व्वोक्तास्त्वध्यायरोगाधिकारिणाम्, सप्तकः "किमायुश्च कस्मादायुर्व्वेदम्" इत्यादि, अष्टकः प्रश्नः "तन्त्रं तन्त्रार्थम्" इत्यादि ॥ ३४ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तकृतायामायुर्व्वेददीपिकायां चरकतात्पर्य्य-
टीकायामर्थेदशमहामूलीयो नाम त्रिंशोऽध्यायः ॥ ३० ॥

सूत्रस्थानं समाप्तम् ॥ १ ॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते ।
इयतावधिना सर्व्वं सूत्रस्थानं समाप्यते ॥ ३५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
अर्थेदशमहामूलीयो नाम त्रिंशोऽध्यायः ॥ ३० ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि । सर्व्वं पूर्व्ववद् व्याख्यातव्यम् । स्थानं समापयति—अग्निवेशेत्यादि । अग्निवेशेन कृतं यत् तन्त्रं तदेव चरकेण प्रतिसंस्कृतं संस्कृत्यन्तरेण कृतं, तत्र तन्त्रे इयता खल्ववधिना एतदध्यन्तं सर्व्वं सूत्रस्थानं समाप्यते ॥ २५ ॥

गङ्गाधरः—अत्र श्लोकस्थाने द्वात्रिंशदक्षरात्मकश्लोकसंख्या तु अथातो दीर्घञ्जीवितीयमित्यारभ्यैतदन्तमिदं श्लोकस्थानमेकापिण्डेनैकीकरणेन श्लोकानां पञ्चविंशत्युत्तर-षट्शताधिक-सहस्रत्रयमिति (३६२५) श्लोकाः ।

इति श्रीगङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ श्लोकस्थाने
प्रथमस्कन्धे त्रिंशत्तमार्थेदशमहामूलीयाध्यायजल्पाख्या
त्रिंशत्तमी शाखा ॥ ३० ॥

श्लोकस्थानजल्पाख्यः प्रथमस्कन्धश्च
समाप्तः ॥ १ ॥

॥ श्रीः ॥

# छन्दोनियमः।

वेदो वेदान्तः आर्षग्रन्थाश्च सर्वे छान्दसच्छन्दोनिबद्धाः। अष्टाध्यायि-पाणिनीयसूत्र-सांख्यसूत्र-गौतमसूत्रादयो विष्णुसंहितागौतमसंहिता-वसिष्ठसंहिताप्रभृतयश्च ग्रन्थाश्छान्दसच्छन्दसैव संग्रथिताः। छान्दसच्छन्दोव्यतिरेकेण संहिता भवितुं नार्हति। छान्दसच्छन्दोऽविज्ञानात् पद्यांशोऽपि गद्यरूपेणैव व्यवह्रियते जनैः। नात्र च्छन्दसि गुरुलघुवर्णानां नियमः, केवलम् अक्षरसंख्ययैव तत् पद्यते। चरकसंहितायामस्यां गद्यांशः छान्दसच्छन्दसा लिखितः। अत्र यानि च्छन्दांसि वर्त्तन्ते तेषां पादसंख्या अक्षरसंख्याश्च कौतुकिनामवगमार्थं लिख्यन्ते।

गायत्री नवधा।

| छन्दोनाम | अक्षरसंख्या १पादे | २पादे | ३पादे | ४पादे |
|---|---|---|---|---|
| गायत्री | ६ | ६ | ६ | ६ |
| पादनिचृत् | ७ | ७ | ७ | ० |
| अतिपादनिचृत् | ६ | ८ | ७ | ० |
| नागी | ९ | ९ | ६ | ० |
| वाराही | ६ | ९ | ९ | ० |
| वर्द्धमाना | ६ | ७ | ८ | ० |
| प्रतिष्ठा | ८ | ७ | ६ | ० |
| त्रिपाद् विराट् | 11 | 11 | 11 | ० |
| विराड् गायत्री | १२ | ८ | ० | ० |

१

उष्णिक् चतुर्विधा।

| छन्दोनाम | १पादे | २पादे | ३पादे | ४पादे |
|---|---|---|---|---|
| उष्णिक् | ७ | ७ | ७ | ७ |
| परोष्णिक् | ८ | ८ | १२ | ० |
| ककुबुष्णिक् | ८ | १२ | ८ | ० |
| पुरोष्णिक् | १२ | ८ | ८ | ० |

२

अनुष्टुप् पञ्चधा।

| छन्दोनाम | अक्षरसंख्या १पादे | २पादे | ३पादे | ४पादे |
|---|---|---|---|---|
| अनुष्टुप् | ८ | ८ | ८ | ८ |
| त्रिपादनुष्टुप् | ८ | ८ | ८ | ० |
| पुरानुष्टुप् | ८ | १२ | १२ | ० |
| मध्येऽनुष्टुप् | १२ | ८ | १२ | ० |
| अन्तेऽनुष्टुप् | १२ | १२ | ८ | ० |

३

बृहती सप्तधा।

| छन्दोनाम | १पादे | २पादे | ३पादे | ४पादे |
|---|---|---|---|---|
| पुरस्ताद्बृहती | १२ | ८ | ८ | ८ |
| पथ्याबृहती | ८ | ८ | १२ | ८ |
| न्यङ्कुसारिणी | ८ | १२ | ८ | ८ |
| उपरिष्टाद्बृहती | ८ | ८ | ८ | १२ |
| कश्चिद्बृहती | ९ | ९ | ९ | ९ |
| कश्चिद्बृहती | १० | १० | ८ | ८ |
| महाबृहती | १२ | १२ | १२ | ० |

४

